बन्धसंक्रमादिकारणभूतं करणानां वीर्यविशेषरूपाणामष्टकं करणाष्टकं बन्धनादि वक्ष्यमाणम्। तथा कर्मपुद्गलानां यथास्थितिबद्धानामबाधाकालक्षयेणापवर्तनादिकरणविशेषतो वा उदयसमयप्राप्तानामनुभवनमुदयः। तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावे सति सद्भावः सत्ता। इह करणाष्टकोदयसत्ता अभिधेयाः। तत्परिज्ञानं श्रोतृणामनन्तरं प्रयोजनं, आचार्यस्य त्वनन्तरं प्रयोजनं परानुग्रहः। परम्पराप्रयोजनं तूभयोरपि निःश्रेयसावाप्तिः। संबन्धस्तूपायोपेयभावलक्षणः। तथाहि–वचनरूपापन्नं प्रकरणमुपायः, तत्परिज्ञानाद्यु (नं चो) पेयमिति ॥ १ ॥

(३-उपा०)–सिद्धं वन्दित्वेति क्रियायोगः। स च नामतोऽपि कश्चिद्भवतीति तद्व्यवच्छेदार्थं विशेषणमाह–'निर्धौतसर्वकर्ममलं' नितरामपुनर्भावेन धौतो ज्ञानदर्शनचारित्रसलिलेन प्रक्षालितः सर्व एव कर्ममलो येन स तथा तम्। विशेष्यमाह–'सिद्धार्थसुतं सिद्धार्थनरेन्द्रापत्यं वर्द्धमानमित्यर्थः। यद्वा सिद्धमित्येव विशेष्यं, सिद्धत्थसुअमिति विशेषणं, तत्र च सिद्धार्थं सिद्धप्रयोजनं संसारनिस्तारकरणेन श्रुतं प्रवचनं यस्येत्यर्थाद्वचनातिशयो लभ्यते। स्वकीयानन्तज्ञानाकलितभावावबोधात्सिद्धार्थाः सिद्धप्रयोजनाः सुता इव सुताः शिष्या गणधरादयो यस्य स तथा तमित्यर्थादावृत्त्या ज्ञानातिशयो लभ्यते। सिद्धार्थ इति भावप्रधाननिर्देशादमरनरेन्द्रादिपूजार्हत्वगुणेन सिद्धार्थतया श्रुतं प्रसिद्धमित्यर्थाच्चावृत्त्या पूजातिशयो लभ्यते। अपायापगमातिशयस्तु निर्धौतसर्वकर्ममलमित्यनेनावेदित एवेति भगवतोऽतिशयचतुष्टयं निष्टङ्कितं भवति। तमित्थंभूतं वन्दित्वा 'वक्ष्यामि' कथयिष्यामि कर्माष्टकस्य बन्धसङ्क्रमादिहेतुभूतं करणाष्टकमुदयसत्ते च। तत्र कर्माष्टकस्वरूपमिह बहूपयोगीति सप्रभेदं पञ्चसङ्ग्रहानुसारेण लिख्यते—

ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायाख्याः कर्मणोऽष्टौ मूलप्रकृतयः। तत्र सामान्यविशेषात्मके वस्तुनि

विशेषग्रहणात्मको बोधो ज्ञानं, तदाव्रियते आच्छाद्यतेऽनेनेति ज्ञानावरणम् । सामान्यग्रहणात्मको बोधो दर्शनं, तदाव्रियतेऽनेनेति
दर्शनावरणम्। वेद्यते आह्लादादिरूपेण यत्तद्वेदनीयम् । यद्यपि सर्वं कर्म वेद्यते तथापि पङ्कजादिपदवद्वेदनीयपदस्य रूढिविषयत्वात्सा-
तासातरूपमेव कर्म वेदनीयमुच्यते, न शेषम् । मोहयति सदसद्विवेकविकलं करोत्यात्मानमिति मोहनीयं, 'कृद् बहुल'मिति ( सि०
५-१-१, २ ) कर्तर्यनीयः । एत्यागच्छति प्रतिबन्धकतां कुगतिनिर्यियासोर्जन्तोरित्यायुः, यद्वा समन्तादेति गच्छति भवान्तरस-
ङ्क्रान्तौ जन्तूनां विपाकोदयमित्यायुः, उभयत्राप्यौणादिक उस् प्रत्ययः। नामयति गत्यादिपर्यायानुभवनं प्रति प्रवणयति जीवमिति
नाम । गूयते शब्द्यते उच्चावचैः शब्दैरात्मा यस्मात्तद्गोत्रमुच्चनीचकुलोत्पत्त्यभिव्यङ्ग्यः पर्यायविशेषः, तद्विपाकवेद्यं कर्मापि गोत्रम्।
यद्वा गूयते शब्द्यते उच्चावचैःशब्दैरात्मा यस्मात्तद्गोत्रम् । जीवं दानादिकं चान्तरा व्यवधानापादनायैति गच्छतीत्यन्तरायम् ।

पञ्च नव द्वे अष्टाविंशतिश्चतस्रो द्विचत्वारिंशत् द्वे पञ्च च यथाक्रममुत्तरप्रकृतयः । तत्र मतिश्रुतावधिमनःपर्यायकेवलज्ञानावर-
णभेदात् पञ्च ज्ञानावरणोत्तरप्रकृतयः । मतिश्रुतादिस्वरूपं च सुव्यक्तम् ।

चक्षुर्दर्शनावरणावधिदर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणकेवलदर्शनावरणनिद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्द्धिभे-
दान्नव दर्शनावरणोत्तरप्रकृतयः । तत्र चक्षुषा दर्शनं चक्षुर्दर्शनं तदावरणं चक्षुर्दर्शनावरणम् । शेषेन्द्रियमनोभिर्दर्शनमचक्षुर्दर्शनं तदावर-
णमचक्षुर्दर्शनावरणम् । अवधिरेव दर्शनमवधिदर्शनं तदावरणमवधिदर्शनावरणम् । केवलमेव दर्शनं तदावरणं केवलदर्शनावरणम्। 'द्रा
कुत्सायां'नियतं द्राति अविस्पष्टतया कुत्सितत्वं गच्छति चैतन्यं यस्यां स्वापावस्थायां सा निद्रा नखच्छोटिकामात्रसाध्यप्रबोधस्वा-
पावस्थेत्यर्थः । निद्रातोऽतिशायिनी निद्रा निद्रानिद्रा, मध्यमपदलोपी समासः,तस्यां ह्यत्यन्तमस्फुटीभूतं चैतन्यं बहुभिर्यत्नैः प्रबोध-

मुपयाति । उपविष्ट ऊर्ध्वस्थितो वा प्रचलति घूर्णते यस्यां स्वापावस्थायां सा प्रचला । प्रचलातोऽतिशायिनी ( प्रचला ) प्रचलाप्रचला, इयं हि चङ्क्रमणादि कुर्वतोऽप्युदयमागच्छतीति प्रचलातोऽस्या अतिशायिनीत्वम् । स्त्याना पिण्डीभूता ऋद्धिरात्मशक्तिरूपा यस्यां स्वापावस्थायां सा स्त्यानर्द्धिः, तद्भावे हि प्रथमसंहननस्यार्द्धचक्रयर्द्धबलसदृशी शक्तिरुपजायते । अत्र 'निद्रादयः समधिगतायां एव दर्शनलब्धेरुपघाते वर्त्तन्ते, दर्शनावरणचतुष्टयं तूद्गमोच्छेदित्वात्समूलघातं हन्ति दर्शनलब्धि'मिति गन्धहस्ती । तथा च प्राप्तस्य दर्शनस्य नाशकत्वेनाप्राप्तस्य च प्रतिबन्धकत्वेन नवानामपि प्रकृतीनां दर्शनावरणत्वं परिभाषितं भवति ।

वेदनीयस्य द्वे प्रकृती सातमसातं च । तत्र यदुदयादारोग्यविषयोपभोगादिजनितमाह्लादलक्षणं सातं वेद्यते तत्सातवेदनीयं, तद्विपरीतमसातवेदनीयम् ।

मिथ्यात्वं सम्यग्मिथ्यात्वं सम्यक्त्वं षोडश कषाया नव नोकषायाश्चेत्यष्टाविंशतिर्मोहनीयप्रकृतयः । तत्र यदुदयाज्जिनप्रणीततत्त्वाश्रद्धानं तन्मिथ्यात्वं, यदुदयाज्जिनप्रणीततत्त्वं न सम्यक् श्रद्धत्ते नापि निन्दति तत्सम्यग्मिथ्यात्वं, यदुदयवशाज्जिनप्रणीततत्त्वं सम्यक् श्रद्धत्ते तत्सम्यक्त्वम् । एतच्च प्रकृतित्रयं दर्शनमोहनीयमुच्यते । कषस्य संसारस्यायो लाभो येभ्यस्ते कषायाः क्रोधमानमायालोभाः, ते च प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदाच्चतुर्धेति षोडश । तत्रानन्तं संसारमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनः, एषां च संयोजना इति द्वितीयमप्यस्ति नाम, संयोज्यन्ते संबध्यन्तेऽनन्तैर्भवैर्जन्तवो यैस्ते संयोजना इति व्युत्पत्तेः । न विद्यते स्वल्पमपि प्रत्याख्यानं येषामुदयात्तेऽप्रत्याख्यानाः । प्रत्याख्यानं सर्वविरतिरूपमाव्रियते यैस्ते प्रत्याख्यानावरणाः । परीषहोपसर्गनिपाते सति चारित्रिणमपि सं इषज्ज्वलयन्तीति संज्वलनाः । नोकषाया इत्यत्र नोशब्दः साहचर्ये, ततः कषायैः

सहचारिणः सहचारिणो ये ते नोकषायाः, कैः कषायैरिति चेदाद्यैर्द्वादशभिः। तथाहि—नाद्येषु द्वादशसु कषायेषु क्षीणेषु नोकषाया अवतिष्ठन्ते, तदनन्तरमेव तेषामपि क्षपणाय क्षपकस्य प्रवृत्तेः। यद्वैते समुज्जृम्भमाणा अवश्यं कषायानुद्दीपयन्ति ततः कषायसहचारिणः। उक्तं च—"कषायसहवर्त्तित्वात्कषायप्रेरणादपि। हास्यादिनवकस्योक्ता नोकषायकषायता ॥ १ ॥" ते च नोकषाया नव—वेदत्रिकं हास्यादिषट्कं च। तत्र वेदत्रिकं स्त्रीवेदः पुरुषवेदो नपुंसकवेदश्च। तत्र यदुदये स्त्रियाः पुंस्यभिलाषः पित्तोदये मधुराभिलाषवत्स स्त्रीवेदः, यदुदयात्पुंसः स्त्रियामभिलाषः श्लेष्मोदयादम्लाभिलाषवत्स पुरुषवेदः, यदुदयात्स्त्रीपुंसयोरुपर्यभिलाषः पित्तश्लेष्मोदये मज्जिकाभिलाषवत्स नपुंसकवेदः। हास्यादिषट्कं—हास्यरत्यरतिभयशोकजुगुप्सालक्षणम्। तत्र यदुदयात्सनिमित्तमनिमित्तं वा हसति तद्धास्यमोहनीयं, यदुदयाद्बाह्याभ्यन्तरेषु वस्तुषु प्रीतिस्तद्रतिमोहनीयं, यदुदयात्तेष्वप्रीतिस्तदरतिमोहनीयं, प्रीत्यप्रीती सातासातात्मके एवेति वेदनीयकर्मणैवानयोरन्यथासिद्धिरिति नाशङ्कनीयं, तदुपनीतसुखदुःखहेतुसंनिधानेऽपि चित्तान्यथाभावस्यैतद्व्यापारत्वात्, यदुदयात् प्रियविप्रयोगादावाक्रन्दति भूपीठे लुठति दीर्घं निःश्वसिति तच्छोकमोहनीयं, यदुदयात्सनिमित्तमनिमित्तं वा स्वसङ्कल्पतो बिभेति तद्भयमोहनीयं, यदुदयाच्छुभमशुभं वा वस्तु जुगुप्सते तज्जुगुप्सामोहनीयम्। एते षोडश कषाया नव च नोकषायाश्चारित्रमोहसंज्ञाः।

सुरायुर्नरायुस्तिर्यगायुर्निरयायुश्चेति चतस्र आयुषः प्रकृतयः।

चतुर्दशपिण्डप्रकृतयोऽष्टावप्रतिपक्षाः प्रत्येकप्रकृतयस्त्रसाद्या दश च सप्रतिपक्षा विंशतिरिति द्विचत्वारिंशन्नामकर्मप्रकृतयः। तत्र गतिजातिशरीराङ्गोपाङ्गबन्धनसङ्घातनसंहननसंस्थानवर्णगन्धरसस्पर्शानुपूर्वीविहायोगतयश्चतुर्दशपिण्डप्रकृतयः, पिण्डत्वमवान्तरभेदयुक्तत्वम्। तत्र गम्यते तथाविधकर्मसचिवैर्जीवैः प्राप्यते इति गतिः, नारकत्वादिपर्यायपरिणतिः, सा चतुर्धा—नरकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिश्च,

तद्विपाकवेद्या कर्मप्रकृतिरपि गतिः, साऽपि चतुर्द्धा। एकेन्द्रियादीनामेकेन्द्रियादिशब्दप्रवृत्तिनिबन्धनं तथाविधसमानपरिणतिलक्षणं सामान्यजातिः, तद्विपाकवेद्या कर्मप्रकृतिरपि जातिः। अयमत्र पूर्वसूरीणामभिप्रायः—द्रव्यरूपमिन्द्रियमङ्गोपाङ्गनामेन्द्रियपर्याप्तिनामसामर्थ्यात्सिद्धं, भावरूपं तु स्पर्शनादीन्द्रियावरणक्षयोपशमसामर्थ्यात्, "क्षायोपशमिकानीन्द्रियाणीति" वचनात्, यत्पुनरेकेन्द्रियादिशब्दप्रवृत्तिनिमित्तंसामान्यं तदन्यासाध्यत्वाज्जातिनामनिबन्धनमिति। अत्र कश्चिदाह—'शब्दप्रवृत्तिनिमित्ततया न जातिसिद्धिः, अन्यथा हर्यादिपदप्रवृत्तिनिमित्ततया हरित्वादिकमपि जातिः सिद्ध्येत्, ततः एकेन्द्रियादिव्यवहार उपाधिविषय एवास्त्विति कृतं जातिनाम्ना। यदि चैवमप्येकेन्द्रियादिव्यवहारहेतुतयैकेन्द्रियत्वादिजातिरभ्युपगम्यते तदा नारकत्वादिकमपि नारकादिव्यवहारनिमित्तपञ्चेन्द्रियत्वादिव्याप्या जातिरेवास्त्विति कृतं गतिनाम्नेति'। तत्र ब्रूमः—अपकृष्टचैतन्यादिनियामकतयैकेन्द्रियत्वादिजातिसिद्धिस्तदेव चैकेन्द्रियादिव्यवहारनिमित्तं लाघवात्तन्निबन्धनतया च जातिनामसिद्धिः। नारकत्वादिकं च न जातिरूपं, तिर्यक्त्वस्य पञ्चेन्द्रियत्वादिना साङ्कर्यात्, किं तु सुखदुःखविशेषोपभोगनियामकपरिणामविशेषरूपं तन्निबन्धनतया च गतिनामसिद्धिरिति कृतं प्रसङ्गेन। जातिः पञ्चधा—एकेन्द्रियजातिर्द्वीन्द्रियजातिस्त्रीन्द्रियजातिश्चतुरिन्द्रियजातिः पञ्चेन्द्रियजातिरिति, तद्विपाकवेद्यं जातिनामकर्मापि पञ्चधा। शीर्यत इति शरीरं, तच्च पञ्चधा—औदारिकं वैक्रियमाहारकं तैजसं कार्मणं च। एतद्विपाकवेद्यं कर्मापि शरीरनाम पञ्चधा। तत्र यदुदयादौदारिकशरीरयोग्यान् पुद्गलानादायौदारिकशरीररूपतया परिणमयति, परिणमय्य च जीवप्रदेशैः सहान्योऽन्यानुगमरूपतया संबन्धयति तदौदारिकशरीरनाम, एवं शेषशरीरनामान्यपि भावनीयानि। अङ्गान्यष्टौ शिरःप्रभृतीनि। उक्तं च—"सिसमुरोयरपिट्ठी दो बाहू ऊरुया य अट्ठंगा"। तदवयवभूतान्यङ्गुल्यादीन्युपाङ्गानि। शेषाणि तु तत्प्रत्यवयवभूतान्यङ्गुलिपर्वरेखादीन्यङ्गोपाङ्गानि। ततोऽङ्गानि चोपाङ्गानि चाङ्गोपाङ्गानि,

अङ्गोपाङ्गानि चाङ्गोपाङ्गानि चाङ्गोपाङ्गानि, “स्याद्वावसङ्ख्येयः” (सि० ३–१–११९) इत्येकशेषः, तन्निमित्तं कर्माङ्गोपाङ्गं, तन्नि-
धा-औदारिकोपाङ्गं वैक्रियोपाङ्गमाहारकोपाङ्गं च। तत्र यदुदयवशादौदारिकशरीरत्वेन परिणतानां पुद्गलानामङ्गोपाङ्गविभागपरिणतिरुप-
जायते तदौदारिकोपाङ्गनाम। एवं वैक्रियाहारकोपाङ्गनाम्नी अपि भावनीये। तैजसकार्मणयोस्तु जीवप्रदेशसमानसंस्थानत्वान्नास्त्यङ्गो-
पाङ्गसंभवः। बध्यतेऽनेनेति बन्धनं, यदुदयादौदारिकादिपुद्गलानां गृहीतानां गृह्यमाणानां च परस्परमेकत्वमुपजायते काष्ठद्वयस्येव ज-
तुसम्बन्धात्, तच्चौदारिकबन्धनादिभेदेन पञ्चप्रकारम्। सङ्घात्यन्ते गृहीत्वा पिण्डीक्रियन्ते औदारिकादिपुद्गला येन तत्सङ्घातनं, तदप्यौ-
दारिकसङ्घातनादिभेदेन पञ्चविधम्। ‘अथ कोऽस्य व्यापारः? पुद्गलसंहतिमात्रमिति चेन्न, पुद्गलसंहतिमात्रस्य ग्रहणमात्रादेव सिद्धत्वात्
तत्र सङ्घातननामकर्मणोऽनुपयोगात्, औदारिकादिशरीररचनाकारिसङ्घातविशेषस्तद्व्यापार इति संप्रदायमतं, तदपि न, तन्तुसंहतेः पट-
वदौदारिकादिवर्गणाप्रभवपुद्गलसंहतेरेवौदारिकशरीरादौ हेतुत्वात् तत्राभिमतविशेषानभ्युपगमादिति चेत्?’ सत्यं, प्रतिनियतप्रमाणौदारिकादि-
शरीररचनार्थं संहतिविशेषस्यावश्याश्रयणीयत्वात्तन्निमित्ततारतम्यभागितया सङ्घातननामकर्मसिद्धिरिति संप्रदायाभिप्रायस्यैव युक्तत्वात्।
संहननं नामास्थिरचनाविशेषः, तत् षोढा–वज्रर्षभनाराचं, ऋषभनाराचं, नाराचं, अर्द्धनाराचं, कीलिका, सेवार्तं च। तत्र वज्रं कीलिका,
ऋषभः परिवेष्टनपट्टः, नाराचमुभयतो मर्कटबन्धः, ततश्च द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवे-
ष्टितयोरुपरि तदस्थित्रयभेदिकीलिकाख्यवज्रनामकमस्थि यत्र भवति तद्वज्रर्षभनाराचसंज्ञमाद्यं संहननं, यत्पुनः कीलिकारहितं तदृषभना-
राचं द्वितीयं, यत्रास्थ्नोर्मर्कटबन्ध एव केवलस्तन्नाराचसंज्ञं तृतीयं, यत्र पुनरेकपार्श्वे मर्कटबन्धो द्वितीयपार्श्वे च कीलिकाबन्धस्तदर्द्धना-
राचं चतुर्थं, यत्रास्थीनि कीलिकामात्र बद्धान्येव भवन्ति तत्कीलिकाख्यं पञ्चमं, यत्र पुनः परस्परं पर्यन्तस्पर्शमात्रलक्षणां सेवामागतान्य-

स्थीनि भवन्ति नित्यमेव स्नेहाभ्यङ्गादिरूपां सेवां प्रतीच्छन्ति वा तत्सेवार्त्ताख्यं षष्ठम्। एतन्निबन्धनं संहनननामापि षोढा। संस्थानमाकारविशेषः, सङ्गृहीतसङ्घातितबद्धेष्वौदारिकादिपुद्गलेषु यदुदयाद् भवति तत्संस्थाननाम, तच्च षोढा—समचतुरस्रं न्यग्रोधपरिमण्डलं सादि कुब्जं वामनं हुंडं चेति। तत्र यदुदयात्समचतुरस्रं संस्थानं स्यात्तत्समचतुरस्रसंस्थाननाम, एवमग्रेऽपि भावनीयम्। समाः सामुद्रिकशास्त्रोक्तप्रमाणलक्षणाविसंवादिन्यश्चतस्रोऽस्रयश्चतुर्दिग्भागोपलक्षिताः शरीरावयवा यस्य तत्समचतुरस्रम्। नाभेरुपरि संपूर्णप्रमाणत्वादधस्तु तथात्वादुपरिसंपूर्णप्रमाणाधोहीनन्यग्रोधवत्परिमंडलत्वं यस्य तन्न्यग्रोधपरिमंडलम्। आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, ततः सह आदिना नाभेरधस्तनभागेन यथोक्तप्रमाणलक्षणेन वर्तत इति सादि, विशेषणान्यथानुपपत्त्या विशिष्टार्थलाभः। अपरे तु साचीति पठन्ति, तत्र साचीति—समयविदः शाल्मलीतरुमाचक्षते, ततः साचीव यत्संस्थानं तत्साचि, यथा शाल्मलीतरोः स्कन्धकाण्डमतिपुष्टमुपरि च न तदनुरूपा महाविशालता तद्वदस्यापि संस्थानस्याधोभागः परिपूर्णो भवति उपरिभागस्तु न तथेति भावः। यत्र शिरोग्रीवं हस्तपादादिकं च यथोक्तप्रमाणलक्षणोपेतं उरउदरादि च मडभं तत्कुब्जम्, यत्र पुनरुरउदरादि प्रमाणलक्षणोपेतं हस्तपादादिकं च हीनं तद्वामनम्। यत्र तु सर्वेऽप्यवयवाः प्रमाणलक्षणात् परिभ्रष्टास्तत् हुंडम्। वर्ण्यतेऽलङ्क्रियते शरीरमनेनेति वर्णः, स च पञ्चधा—श्वेतपीतरक्तनीलकृष्णभेदात्, तन्निबन्धनं नामापि पञ्चधा। तत्र यदुदयाज्जन्तूनां शरीरे श्वेतवर्णः प्रादुर्भवेत् यथा बलाकादीनां तच्छ्वेतवर्णनाम, एवमग्रेऽपि भावनीयम्। "गन्ध अर्दने"—गन्ध्यते आघ्रायते इति गन्धः, स द्विधा—सुरभिगन्धो दुरभिगन्धश्च, तन्निबन्धनं नामापि द्विधा। तत्र यदुदयाज्जन्तूनां शरीरेषु सुरभिगन्ध उपजायते यथा शतपत्रादीनां तत्सुरभिगन्धनाम, एतद्विपरीतं दुरभिगन्धनाम भावनीयम्। "रस आस्वादनस्नेहनयोः"—रस्यते आस्वाद्यते इति रसः, स च पञ्चधा—तिक्तकटुकषायाम्लमधुरभेदात्, तन्निबन्धनं नामापि पञ्चधा। तत्र

यदुदयाज्जन्तूनां शरीरेषु तिक्तो रसो भवति यथा मरिचादीनां तत्तिक्तरसनाम। एवमग्रेऽपि भावनीयम्। "स्पृश संस्पर्शे"–स्पृश्यते इति स्पर्शः, स च कर्कशमृदुलघुगुरुस्निग्धरूक्षशीतोष्णभेदादष्टप्रकारः, तन्निबन्धनं नामाप्यष्टभेदम्। तत्र यदुदयाज्जन्तूनां शरीरेषु पाषाणादीनामिव कार्कश्यं भवति तत्कर्कशस्पर्शनाम। एवमग्रेऽपि भावनीयम्। विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाट्यानुपूर्वी, तद्विपाकवेद्या कर्मप्रकृतिरप्यानुपूर्वी, सा चतुर्धा–नरकगत्यानुपूर्वी तिर्यग्गत्यानुपूर्वी मनुष्यगत्यानुपूर्वी देवगत्यानुपूर्वी चेति। विहायसा गतिर्विहायोगतिः, प्रथमप्रकृतिव्यवच्छेदाय विहायसेति विशेषणं, सा प्रशस्ताऽप्रशस्ता च। (तत्र) प्रशस्ता हंसगजवृषभादीनां, अप्रशस्ता खरोष्ट्रमहिषादीनां, तद्विपाकवेद्या कर्मप्रकृतिरपि द्विप्रकारा विहायोगतिः। उक्ताः पिण्डप्रकृतयः, एतासां चावान्तरभेदाः पञ्चषष्टिः। अथ प्रत्येकप्रकृतयो वक्तव्याः, ताश्च सप्रतिपक्षा अप्रतिपक्षाश्चेति द्विधा। तत्र पूर्वमल्पवक्तव्यत्वादप्रतिपक्षा उच्यन्ते, ताश्चागुरुलघूपघातपराघातोच्छ्वासातपोद्योतनिर्माणतीर्थकरनामभेदादष्ट। यदुदयात्प्राणिनां शरीराणि न गुरूणि न लघूनि नापि गुरुलघूनि किं त्वगुरुलघुपरिणामपरिणतानि भवन्ति तदगुरुलघुनाम। यदुदयात्स्वशरीरावयवैरेव प्रतिजिह्वागलवृन्दलंबकचौरदन्तादिभिर्जन्तुरुपहन्यते स्वयं कृतोद्बन्धनभैरवप्रपातादिभिर्वा तदुपघातनाम। यदुदयादोजस्वी दर्शनमात्रेण वाक्सौष्ठवेन वा महासभागतः सभ्यानामपि त्रासमुत्पादयति प्रतिवादिनश्च प्रतिभां प्रतिहन्ति तत्पराघातनाम। यदुदयादुच्छ्वासनिःश्वासलब्धिरुपजायते तदुच्छ्वासनाम। यदुदयाज्जन्तुशरीराणि स्वरूपेणानुष्णान्यप्युष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम, तद्विपाकश्च भानुमण्डलगतभूकायिकेष्वेव, न वह्नौ, प्रवचने निषेधात्, तत्रोष्णत्वमुष्णस्पर्शोदयादुत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वमिष्यत इति। यदुदयाज्जन्तुशरीराण्यनुष्णप्रकाशरूपमुद्योतं कुर्वन्ति

५

यथा यतिदेवोत्तरवैक्रियचन्द्रग्रहनक्षत्रताराविमानरत्नौषधयस्तदुद्योतनाम । यदुदयाज्जन्तुशरीरेष्वङ्गप्रत्यङ्गानां प्रतिनियतस्थानवर्त्तिता भवति तन्निर्माणनाम सूत्रधारकल्पं, तदभावे हि तद्भृतककल्पैरङ्गोपाङ्गनामादिभिर्निर्वर्त्तितानामपि शिरउरउदरादीनां स्थानप्रवृत्तेरनियमः स्यात् । यदुदयादष्टमहाप्रातिहार्याद्यतिशयाः प्रादुर्भवन्ति तत्तीर्थकरनाम । उक्ता अप्रतिपक्षाः प्रत्येकप्रकृतयः । अथ सप्रतिपक्षास्ता उच्यन्ते,ताश्च त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुस्वरसुभगादेययशःकीर्त्तयः स्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुःस्वरदुर्भगानादेयायशःकीर्त्तिरूपप्रतिपक्षसहिता विंशतिः। तत्र त्रसन्त्युष्णाद्यभितप्ताः स्थानान्तरं गच्छन्तीति त्रसाः–द्वीन्द्रियादयः, तद्विपाकवेद्या कर्मप्रकृतिरपि त्रसनाम । तद्विपरीतं स्थावरनाम, यदुदयादुष्णाद्यभितापेऽपि स्थानपरिहारासमर्थाः पृथिव्यादयः स्थावरा भवन्ति । यदुदयाद् जीवानां चक्षुर्ग्राह्यशरीरत्वलक्षणं बादरत्वं भवति तद्बादरनाम, पृथिव्यादेरेकैकशरीरस्य चक्षुर्ग्राह्यत्वाभावेऽपि बादरत्वपरिणामविशेषाद्बहूनां समुदाये चक्षुषा ग्रहणं भवति । तद्विपरीतं सूक्ष्मनाम, यदुदयाद्बहूनां समुदितानामपि जन्तुशरीराणां चक्षुर्ग्राह्यता न भवति। यदुदयात्स्वयोग्यपर्याप्तिनिर्वर्त्तनसमर्थो भवति तत्पर्याप्तनाम । तद्विपरीतमपर्याप्तनाम, यदुदयात्स्वयोग्यपर्याप्तिनिर्वर्त्तनसमर्थो न भवति। यदुदयात्प्रतिजीवं भिन्नशरीरमुपजायते तत् प्रत्येकनाम । ननु कपित्थाश्वत्थपीलुप्रभृतीनां मूलस्कन्धत्वक्छाखादयः प्रत्येकमसङ्ख्येयजीवाः प्रवचने प्रोच्यन्ते, मूलादयश्च देवदत्तशरीरवदखण्डैकशरीराकारा उपलभ्यन्त इति कथं तेषां प्रत्येकशरीरत्वं ? प्रतिजीवं शरीरभेदाभावात्, इति चेन्मैवं, तन्मूलादिष्वसङ्ख्येयानामपि जीवानां भिन्नभिन्नशरीराभ्युपगमात्, केवलं श्लेषद्रव्यमिश्रितसकलसर्षपवर्त्तिवत्प्रबलरागद्वेषोपचितविचित्रप्रत्येकनामकर्मपुद्गलोदयात्तेषां परस्परविमिश्रशरीरसंभवात् । यदुदयादनन्तानां जीवानामेकं शरीरं भवति तत्साधारणनाम । यदुदयाच्छिरोऽस्थिदन्तादीनां शरीरावयवानां स्थिरता भवति तत् स्थिरनाम । तद्विपरीतमस्थिरनाम, यदुद-

याशिरआदीनां शरीरावयवानामस्थिरता । यदुदयान्नाभेरुपरितना अवयवाः शुभा जायन्ते तच्छुभनाम । तद्विपरीतमशुभनाम, यदुदया-न्नाभेरधस्तनाः पादादयोऽवयवा अशुभा भवन्ति, तथाहि—शिरसा स्पृष्टस्तुष्यति मनुष्यः पादेन तु रुष्यति, कामिन्याः पादस्पर्शेनापि न यत्तोषः स मोहनिबन्धनो न तु वास्तव इति न तेन व्यभिचारः । यदुदयाज्जीवस्वरः श्रोतृप्रीतिहेतुर्भवति तत्सुस्वरनाम । तद्विप-रीतं दुःस्वरनाम, यदुदयात्स्वरः श्रोतृणामप्रीतिहेतुर्भवति । यदुदयादनुपकृदपि सर्वस्य मनः प्रियो भवति तत्सुभगनाम । तद्विपरीतं दुर्भगनाम, यदुदयादुपकारकृदपि जनस्य द्वेष्यो भवति । यच्च तीर्थकरोऽप्यभव्यानां द्वेष्यो भवति तत्र न तीर्थकरगतदुर्भगत्वं निमित्तं, किं तु तद्गतमिथ्यात्वदोष एवेत्यवधेयम् । यदुदयाल्लोको यत्तदपि वचनं प्रमाणीकरोति दर्शनसमनन्तरमेव चाभ्युत्थानाद्याचरति तदादे-यनाम । तद्विपरीतमनादेयनाम, यदुदयादुपपन्नमपि ब्रुवाणो नोपादेयवचनो भवति, नाप्यभ्युत्थानादियोग्यः । तपःशौर्यत्यागादिना समुपार्जितेन यशसा कीर्त्तनं यशःकीर्तिः, यद्वा यशः सामान्येन ख्यातिः कीर्त्तिर्गुणोत्कीर्त्तनरूपा प्रशंसा, अथवा "एकदिग्गामिनी कीर्त्तिः सर्वदिग्गामुकं यशः । दानपुण्यभवा कीर्त्तिः पराक्रमकृतं यशः ॥ १ ॥" ते यशःकीर्त्ती यदुदयाद्भवतस्तद्यशःकीर्त्तिनाम । तद्विपरीतमयशःकीर्त्तिनाम, यदुदयान्मध्यस्थस्यापि जनस्याप्रशस्यो भवति । उक्ताः सप्रतिपक्षाः प्रत्येकप्रकृतयः । अत्र त्रसादयो दश प्रकृतयस्त्रसादिदशकं, स्थावरादयश्च दश स्थावरादिदशकमिति संज्ञा ग्राह्या ।

गोत्रस्य द्वे उत्तरप्रकृती—उच्चैर्गोत्रं नीचैर्गोत्रं च । यदुदयादुत्तमजातिकुलबलतपोरूपैश्वर्यश्रुतसत्काराभ्युत्थानासनप्रदानाञ्जलिप्रग्रहादिसं-भवस्तदुच्चैर्गोत्रम् । यदुदयात् पुनर्ज्ञानादिसंपन्नोऽपि निन्दां लभते हीनजात्यादिसंभवं च तन्नीचैर्गोत्रम् ।

अन्तरायस्य दानलाभभोगोपभोगवीर्यान्तरायभेदात् पञ्चोत्तरप्रकृतयः । तत्र यदुदयात् सति विभवे समागते च गुणवति पात्रे

दत्तमस्मै महाफलमिति जानन्नपि दातुं नोत्सहते तद्दानान्तरायम् । यदुदयाद्दातुर्गृहे विद्यमानमपि देयं गुणवानपि याचमानोऽपि न लभते तल्लाभान्तरायम् । यदुदयाद्विशिष्टाहारादि प्राप्तावप्यसति च प्रत्याख्यानादिपरिणामे कार्पण्यान्नोत्सहते भोक्तुं तद्भोगान्तरायम् । एवमुपभोगान्तरायमपि भावनीयं, नवरं भोगोपभोगयोरयं विशेषः—सकृद्भुज्यत इति भोगः, पुनः पुनरुपभुज्यत इत्युपभोगः । यदुदयात्सत्यपि नीरुजि शरीरे यौवनेऽपि वर्त्तमानोऽल्पप्राणो भवति तद्वीर्यान्तरायम् ।

अत्र च पिण्डप्रकृतीनां पञ्चषष्ट्याऽवान्तरभेदैस्त्रिनवतिर्नामकर्मप्रकृतयो भवन्ति । तत्र बन्धे उदये च बन्धनसंघातनानि स्वशरीरान्तर्गतान्येव विवक्ष्यन्ते, तथा च बन्धचिन्तायां नाम्नस्त्रिनवतेर्बन्धनपञ्चकसङ्घातनपञ्चकवर्णादिषोडशकापनयनात् सप्तषष्टिः परिगृह्यते । मोहनीये च सम्यक्त्वसम्यग्मिथ्यात्वे बन्धे नाधिक्रियेते, मिथ्यात्वपुद्गलानामेव सम्यक्त्वानुगुणविशोधिविशेषेण त्रिधा कृतानां शुद्धयर्द्धविशुद्धिसर्वाविशुद्धिभिः सम्यक्त्वसम्यग्मिथ्यात्वमिथ्यात्वव्यपदेशसंभवात् । ततो बन्धे विंशत्युत्तरं प्रकृतीनां शतं भवति । उदये च द्वाविंशं शतमधिक्रियते सम्यक्त्वसम्यग्मिथ्यात्वयोरप्युदयसंभवात् । सत्तायां च पूर्वापनीतषड्विंशतिप्रकृतीनामपि ग्रहणादष्टचत्वारिंशं शतं ग्रन्थकारमते । गर्गर्षिप्रभृतिमते च बन्धनपञ्चदशकग्रहणादष्टपञ्चाशं शतम् । अथ कथं पञ्चदश बन्धनानि भवन्तीति चेदुच्यते—औदारिकवैक्रियाहारकाणां स्वकतैजसकार्मणैः प्रत्येकं सहितानां नव बन्धनानि, तैजसकार्मणद्वययुक्तानां च तेषां त्रीणि, तैजसतैजसबन्धनं तैजसकार्मणबन्धनं कार्मणकार्मणबन्धनं चेति त्रीणि चेत्येवं पञ्चदश भवन्ति । तत्र पूर्वगृहीतानामौदारिकपुद्गलानामौदारिकपुद्गलैरेव गृह्यमाणैः सह यः सम्बन्धः स औदारिकौदारिकबन्धनम् । तेषामेवौदारिकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्ध औदारिकतैजसबन्धनम् । तेषामेवौदारिकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च

सह सम्बन्ध औदारिककार्मणबन्धनम् । पूर्वगृहीतवैक्रियपुद्गलानां स्वैरेव वैक्रियपुद्गलैर्गृह्यमाणैः सह सम्बन्धो वैक्रियबन्धनं, तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह सम्बन्धो वैक्रियतैजसबन्धनं, तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृहीतैर्गृह्यमाणैश्च सह सम्बन्धो वैक्रियकार्मणबन्धनम् । पूर्वगृहीतानामाहारकपुद्गलानां स्वैरेवाहारकपुद्गलैर्गृह्यमाणैः सह सम्बन्ध आहारकाहारकबन्धनं, तेषामेवाहारकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृहीतैर्गृह्यमाणैश्च सह सम्बन्ध आहारकतैजसबन्धनं, तेषामेवाहारकपुद्गलानां गृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैर्गृहीतैश्च सह सम्बन्ध आहारककार्मणबन्धनम्।औदारिकपुद्गलानां तैजसपुद्गलानां कार्मणपुद्गलानां च गृहीतगृह्यमाणानां यो मिथःसम्बन्धस्तदौदारिकतैजसकार्मणबन्धनम् । एवं वैक्रियतैजसकार्मणाहारकतैजसकार्मणबन्धने अपि भावनीये। तैजसपुद्गलानां पूर्वगृहीतानां गृह्यमाणैः स्वैरेव तैजसपुद्गलैः सह सम्बन्धस्तैजसतैजसबन्धनम्। तेषामेव गृहीतानां गृह्यमाणानां च तैजसपुद्गलानां कार्मणपुद्गलैर्गृह्यमाणैर्गृहीतैश्च सह सम्बन्धस्तैजसकार्मणबन्धनम् । कार्मणपुद्गलानां प्राग्गृहीतानां स्वैरेव गृह्यमाणैः कार्मणपुद्गलैः सह सम्बन्धः कार्मणकार्मणबन्धनम्। ननु ये पञ्च बन्धनानीच्छन्ति परस्परपुद्गलसंयोगरूपस्य बन्धनस्य सतोऽप्यविवक्षणात्तन्मते सङ्घातनान्यपि पञ्च संभवन्ति। ये तु पञ्चदश बन्धनानीच्छन्ति तन्मते "नासंहतस्य बन्धनमिति" न्यायात्सङ्घातनान्यपि पञ्चदश प्राप्नुवन्तीत्युक्तसङ्ख्याविप्लव इति चेन्न, न हि तन्मते बन्धानुगुणपुद्गलैकीकरणमात्रलक्षणं सङ्घातनं, किं त्वौदारिकादिरचनानुगुणपुद्गलैकीकरणलक्षणमित्यदोषात्। तदेवमुक्ताः सर्वकर्मोत्तरप्रकृतयः।

अथैतासां ध्रुवबन्धित्वध्रुवोदयत्वध्रुवसत्ताकत्वसर्वघातित्वपरावर्तमानत्वाशुभत्वैः सप्रतिपक्षैः पुद्गलविपाकित्वभवविपाकित्वक्षेत्रविपाकित्वजीवविपाकित्वभेदैः स्वानुदयबन्धिस्वोदयबन्ध्युभयबन्धिसमकव्यवच्छिद्यमानबन्धोदयक्रमव्यवच्छिद्यमानबन्धोदयोत्क्रम-

ऽव्यवच्छिद्यमानबन्धोदयसान्तरबन्धसान्तरनिरन्तरबन्धनिरन्तरबन्धोदयसंक्रमोत्कृष्टानुदयसङ्क्रमोत्कृष्टोदयबन्धोत्कृष्टानुदयबन्धोत्कृष्टोदयवत्यनुदयवतीसंज्ञाभिश्च(३१)यो विशेषः स विभाव्यते–

तत्र निजहेतुसंभवे यासामवश्यंभावी बन्धस्ता ध्रुवबन्धिन्यः, ताश्च ज्ञानावरणपञ्चकमन्तरायपञ्चकं दर्शनावरणनवकं षोडश कषाया मिथ्यात्वभयजुगुप्सा इत्यष्टात्रिंशद् घातिप्रकृतयोऽगुरुलघु उपघातं निर्माणं तैजसं वर्णादिचतुष्कं कार्मणं चेति नव नामप्रकृतय इति सर्वसङ्ख्यया सप्तचत्वारिंशत्। एतासां ह्याबन्धकालव्यवच्छेदाद्ध्रुवो बन्धः। तत्र मिथ्यात्वं मिथ्यादृष्टिगुणस्थानं यावत् निरन्तरं बध्यते, परतस्तूदयाभावान्न तद्बन्धः, तद्धि यावद्वेद्यते तावदेव बध्यते "जे वेयइ से बज्झइ त्ति" वचनात्। अनन्तानुबन्धिचतुष्टयं स्त्यानर्द्धित्रिकं च सासादनं यावत्, परतोऽनन्तानुबन्ध्यनुदयेन तद्बन्धाभावात्। एवमप्रत्याख्याना अविरतसम्यग्दृष्टिं यावत्। प्रत्याख्यानावरणा देशविरतिं यावत्। निद्राप्रचले अपूर्वकरणप्रथमभागं यावत्, परतस्तद्बन्धयोग्याध्यवसायाभावात्। एवं नवनामध्रुवबन्धिन्योऽपूर्वकरण(षष्ठभागं यावत्, भयजुगुप्से च)चरमसमयं यावत्। संज्वलनक्रोधमानमायालोभा अनिवृत्तिबादरं यावत्, परतो बादरकषायोदयाभावेन तद्बन्धासंभवात्। ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्कानि सूक्ष्मसम्परायं यावत्, परतः कषायोदयाभावेन तद्बन्धायोगात्।

निजबन्धहेतुसंभवेऽपि भजनीयबन्धा अध्रुवबन्धिन्यः, ताश्चोक्तशेषा औदारिकवैक्रियाहारकविहायोगतिगोत्रवेदनीययुगलद्विकवेदत्रिकायुर्गत्यानुपूर्वीचतुष्टयजातिपञ्चकसंस्थानसंहननषट्कत्रसादिविंशत्युच्छ्वासतीर्थकरातपोद्योतपराघातरूपास्त्रिसप्ततिः, एता हि स्वबन्धहेतुसाम्राज्येऽपि नावश्यं बन्धमायान्ति। पराघातोच्छ्वासनाम्नोरविरत्यादिस्वहेतुसत्त्वेऽप्यपर्याप्तनामकाले[1] बन्धाभावात्पर्याप्तनामबन्ध[2]

१ अपर्याप्तप्रायोग्यबन्धकाले. २ पर्याप्तप्रायोग्यबन्धकाले.

एव तद्बन्धात्, आतपनाम्नोऽप्येकेन्द्रियप्रायोग्यप्रकृतिबन्ध एव बन्धात्, उद्योतस्यापि तिर्यग्गतिप्रायोग्यप्रकृतिबन्ध एव बन्धात्, जिननाम्न आहारकद्विकस्य च सम्यक्त्वे संयमे च निजबन्धहेतौ विद्यमानेऽपि कदाचिदेव बन्धात्, शेषाणां च औदारिकद्विकादीनां सप्रतिपक्षत्वादिति। यद्यपि यत्किञ्चिद्बन्धहेतुसत्त्वे बन्धाभावोऽतिप्रसक्तो, यावद्बन्धहेतुसत्त्वे बन्धाभावश्चासंभवी, तथापि मिथ्यात्वादिपरिगणितसामान्यबन्धहेतुसत्त्वेऽवश्यं बन्धेन ध्रुवबन्धित्वं वैपरीत्ये चाध्रुवबन्धित्वमिति परिभाषारहस्यम्।

उदयकालव्यवच्छेदादर्वाग्ध्रुवो निरन्तर उदयो यासां ता ध्रुवोदयास्ताश्च निर्माणस्थिरास्थिरतैजसकार्मणवर्णादिचतुष्कागुरुलघुशुभाशुभरूपा नामकर्मणो द्वादश, ज्ञानावरणान्तरायदशकं दर्शनावरणचतुष्टयं मिथ्यात्वं चेति घातिप्रकृतयः पञ्चदशेति सर्वसङ्ख्यया सप्तविंशतिः। तत्र मिथ्यात्वं मिथ्यादृष्टिगुणस्थानं यावत् ध्रुवोदयं, शेषा घातिप्रकृतयः क्षीणमोहचरमसमयं यावत्, नामप्रकृतयश्च द्वादश सयोगिकेवलिचरमसमयं यावत्।

व्यवच्छिन्नोदया अपि सत्यो याः प्रकृतयो हेतुसंपत्त्या भूयोऽप्युदयमायान्ति ता अध्रुवोदयाः, ताश्च स्थिरास्थिरशुभाशुभरहिता अध्रुवबन्धिन्यः ६९, मिथ्यात्वं विना च मोहनीयध्रुवबन्धिन्यः १८, निद्राः ५, उपघातनाम, मिश्रं, सम्यक्त्वं चेति पञ्चनवतिः। नन्वेवं मिथ्यात्वमपि किं नाध्रुवोदयं?, सम्यक्त्वलाभे व्युच्छिन्नस्यापि तदुदयस्य मिथ्यात्वगमने पुनः संभवात्, उच्यते—यासां प्रकृतीनां गुणप्रत्ययादुदयव्युच्छेदो येषु गुणस्थानेषु नास्ति द्रव्यक्षेत्राद्यपेक्षया तेष्वेव कदाचिदसौ भवति कदाचिच्च न ता अध्रुवोदयाः, यथा क्षीणमोहं यावदविच्छिन्नोदया अपि निद्राः कादाचित्कोदया मिथ्यात्वं तु स्वोदयाविच्छेदं यावत्सततोदयमेवेति नाध्रुवोदयम्। नन्वेवं मिश्रमपि मिश्रगुणस्थाने सततोदयमिति ध्रुवोदयं स्यात्, न, गुणप्रत्ययोदयविच्छेदात् प्रागुदयभावाभावाभ्यां

तस्याध्रुवोदयत्वपरिभाषणात्। यद्येकगुणस्थानावच्छेदेनोदयभावाभावप्रतियोगित्वमध्रुवोदयत्वं परिभाष्येत तदैव हि स दोषः स्यात्।

विशिष्टगुणप्राप्तिं विना ध्रुवा निरन्तरा सत्ता यासां ता ध्रुवसत्ताकाः, ताश्च त्रसविंशतिर्वर्णादिविंशतिस्तैजसकार्मणतैजसतैजसबन्धनतैजसकार्मणबन्धनकार्मणकार्मणबन्धनतैजससंघातनकार्मणसंघातनरूपं तैजसकार्मणसप्तकं वर्णचतुष्कतैजसकार्मणानामुक्तत्वाच्छेषा एकचत्वारिंशद् ध्रुवबन्धिन्यो वेदत्रिकं संस्थानषट्कं संहननषट्कं जातिपञ्चकं सातासातवेदनीयं हास्यरत्यरतिशोकरूपं युगलद्वयमौदारिकाङ्गौदारिकाङ्गोपाङ्गौदारिकसंघातनौदारिकौदारिकबन्धनौदारिकतैजसबन्धनौदारिककार्मणबन्धनौदारिकतैजसकार्मणबन्धनरूपमौदारिकसप्तकं उच्छ्वासोद्योतातपपराघातचतुष्कं विहायोगतिद्विकं तिर्यग्द्विकं नीचैर्गोत्रं चेति त्रिंशं शतम्। एता हि सम्यक्त्वलाभादर्वाक् सर्वजन्तूनां सदैव संभवन्तीति।

कदाचिद्भवन्ति कदाचिन्न भवन्तीत्येवमनियता सत्ता यासां ता अध्रुवसत्ताकाः, ताश्च उच्चैर्गोत्रं तीर्थकरनाम सम्यक्त्वं सम्यग्मिथ्यात्वं देवगतिदेवानुपूर्वी नरकगतिनरकानुपूर्वी वैक्रियशरीरवैक्रियाङ्गोपाङ्गलक्षणं वैक्रियषट्कं चत्वार्यायूंषि मनुजगतिमनुष्यानुपूर्वीलक्षणं मनुजद्विकं आहारकशरीराहारकाङ्गोपाङ्गलक्षणमाहारकद्विकं चेत्यष्टादश। तथाहि—उच्चैर्गोत्रं वैक्रियषट्कं चेत्येताः सप्त त्रसत्वाप्राप्तौ न भवन्ति, तत्प्राप्तौ च भवन्ति। यद्वा त्रसत्वावस्थायां लब्धा अपि स्थावरभावं गतेनावस्थाविशेषं प्राप्योद्वलयन्त इत्यध्रुवसत्ताकाः। सम्यक्त्वं सम्य-

१ पञ्चसंग्रहतृतीयद्वारे त्रयस्त्रिंशद्गाथाचतुर्थपादे "अट्ठारस अधुवसत्ताओ" एतदनुसारेणात्राध्रुवसत्तायामष्टादश गृहीता। मूलवृत्तौ "चतुरुत्तरशतं ध्रुवसत्कर्म" इति प्रोक्तं, अत्र बन्धनसंघातनसत्त्वेऽपि विवक्षा न कृता। मलयगिरिवृत्तौ तु गर्गर्षिमतानुसारेण "त्रिंशदुत्तरशतसंख्याकाः प्रकृतयो ध्रुवसत्ताकाः" कथिताः। एतदनुसृत्यात्र त्रिंशं शतं ध्रुवसत्तात्वेन प्रोक्तं विज्ञायते।

२ येन जीवेनैकेन्द्रियत्वे यद्बद्धमपि सदुद्वलितं त्रसत्वं गतेन बद्धं तदपेक्ष्य ज्ञेयम्।

मिश्रत्वं च यावत्तथाभव्यत्वपरिपाकं नायाति तावन्न भवति, तथाभव्यत्वपरिपाकेन प्राप्तं वा सन्मिथ्यात्वगतेन भूयोऽप्युद्वलयते, अभव्यानां न तत्सर्वथा न भवतीत्यध्रुवसत्ताकम् । तीर्थंकरनाम विशुद्धसम्यक्त्वे सति भवति, नान्यदा । आहारकद्विकमपि तथाविधसंयमे सति बन्धमायाति, न तदभावे, बद्धमपि च तदविरतिप्रत्ययत उद्बलयते। मनुष्यद्विकमपि तेजोभवं वायुभवं वा गतेनोद्बल्यते। तथा देवनारकायुषी स्थावराणां, तिर्यगायुष्कं त्वहमिन्द्राणां, मनुष्यायुष्कं च तेजोवायुसप्तमपृथिवीनारकाणां सर्वथा बन्धाभावात्सत्तायां न लभ्यते, अन्येषां तु संभवत्यपीति तीर्थंकरनामादीनामध्रुवसत्ताकता । नन्वेता आयुश्चतुष्टयतीर्थंकरनामवर्जा अनन्तानुबन्धिसहिताः मतान्तरेण श्रेण्यारोहाभावेऽप्युद्वलनयोग्या अभिहिताः, तथा चानन्तानुबन्धिनामप्युद्वलनासंभवात्कथं ध्रुवसत्कर्मतेति चेन्मैवं वादीः, सम्यक्त्वादिगुणानवाप्तौ कदाचिद्भावित्वस्यैवाध्रुवसत्कर्मलक्षणत्वाद् , उत्तरगुणप्राप्तौ सत्तोपरमादध्रुवसत्ताकत्वोक्तौ तु सर्वा अपि प्रकृतयस्तथा भवेयुरित्युक्तलक्षणस्यैव युक्तत्वात् सम्यक्त्वगुणेनोद्वल्यमानानामप्यनन्तानुबन्धिनां तदनवाप्तौ कादाचित्कत्वाभावेन ध्रुवसत्ताकत्वानपायात् ।

स्वविषयं कार्त्स्न्येन घ्नन्ति यास्ताः सर्वघातिन्यः, ताश्च केवलज्ञानावरणमाद्यद्वादशकषाया मिथ्यात्वं निद्राश्च पञ्चेति विंशतिः। एता हि प्रकृतयो यथायोगमात्मघात्यं गुणं सम्यक्त्वं ज्ञानं दर्शनं चारित्रं वा सर्वात्मना घातयन्तीति । उक्तशेषा घातिकर्मप्रकृतयः पञ्चविंशतिर्देशघातिन्यः, तासां ज्ञानादिगुणैकदेशविघातित्वात् । इयमत्र भावना—इह यद्यपि केवलज्ञानावरणीयं कर्म ज्ञानलक्षणं गुणं सर्वात्मना हन्तुं प्रवर्तते तथापि न तत्तेन समूलं हन्तुं शक्यते तथास्वभावत्वात्, यथा महीयसापि घनपटलेन रविचन्द्र-

१ उपलक्षणाद्दानलाभादीनामपि ।

किरणावरणप्रवृत्तेनापि तत्प्रभा, अन्यथा दिनरजनीविभागानुभवानुपपत्तेः, ततः केवलज्ञानावरणीयेनावृतेऽपि सर्वात्मना केवलज्ञाने यः कोऽपि तद्गतमन्दविशिष्टविशिष्टतरप्रकाशरूपो ज्ञानैकदेशो मतिज्ञानादिसंज्ञितस्तं यथायोगं मतिश्रुतावधिमनःपर्यायज्ञानावरणानि घ्नन्ति, ततस्तानि देशघातीनि। एवं केवलदर्शनावरणीयेनावृतेऽपि सर्वात्मना केवलदर्शने या तद्गता मन्दमन्दतमविशिष्टादिरूपा प्रभा चक्षुर्दर्शनादिसंज्ञा तां यथायोगं चक्षुरचक्षुरवधिदर्शनावरणान्यावृण्वन्ति, ततस्तान्यपि दर्शनैकदेशघातित्वाद्देशघातीनि। निद्राद्यश्च पञ्च प्रकृतयो यद्यपि केवलदर्शनावरणावृतकेवलदर्शनगतप्रभामात्रं दर्शनैकदेशमुपघ्नन्ति, तथापि ताश्चक्षुर्दर्शनावरणादिकर्मक्षयोपशमसमुत्थां दर्शनलब्धिं समूलकापं कषन्तीति सर्वघातिन्य उक्ताः। संज्वलनकषाया नोकषायाश्चाद्यद्वादशकषायक्षयोपशमसमुत्थां चारित्रलब्धिं देशतो घ्नन्ति, तेषामतीचारमात्रसंपादनार्थत्वात्। उक्तं च—"सव्वेऽविय अइआरा संजलणाणं तु उदयओ हुंति। मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं ॥१॥" तथा—"खाइखओवसमेणं सम्मचरित्ताइं जाइं जीवस्स। ताणं हणंति देसं संजलणा णोकसाया य ॥ २ ॥" ततस्तेऽपि देशघातिनः। तथा इह यद्वस्तु जीवो ग्रहणधारणादियोग्यं न ददाति न लभते न भुङ्क्ते नोपभुंक्ते न करोति वा तद्दानान्तरायादिविषयः। तच्च सर्वद्रव्याणामनन्ततमो भागः, ततस्तथारूपसर्वद्रव्यैकदेशविषयदानादिविघातकारित्वाद्देशघाति दानान्तरायादीति। इह च देशघातिलक्षणं सर्वघात्यन्यत्वगर्भं द्रष्टव्यं, तेन न चारित्रैकदेशरूपदेशविरतिप्रतिबन्धकानामप्रत्याख्यानानां देशघातित्वम्। यद्वा चारित्रापेक्षया देशघातित्वं चारित्रगतापकर्षजनकत्वमेव, तच्च नाप्रत्याख्यानानामित्यदोषः। तदेवं घातिकर्मप्रकृतयः काश्चित्सर्वघातिन्यः काश्चिच्च देशघातिन्य इति स्थितम्। नामगोत्रवेदनीयायुरन्तर्गतास्तु प्रकृतयो हन्तव्याभावान्न किमपि घ्नन्तीति ता अघातिन्यो द्रष्टव्याः।

सर्वघातिनीनां हि रसस्ताम्रभाजनवदच्छिद्रो घृतवदतिस्निग्धो द्राक्षावत्तनुप्रदेशोपचितः स्फटिकाभ्रवच्चातीव निर्मलः सकलस्वविषयघातित्वेन सर्वघाती भवति। देशघातिनीनां तु रसः कश्चिद्वंशदलनिर्मापितकटवदतिस्थूलच्छिद्रशतसंकुलः, कश्चित्कम्बलवन्मध्यमविवरशतसंकुलः, कोऽपि मसृणवासोवदतिसूक्ष्मविवरसंवृतोऽल्पस्नेहो विमलश्च स्वविषयैकदेशघातित्वाद्देशघाती भवति । अघातिनीनां नोभयविलक्षणत्वादघाती रसः। केवलमघातिनीनामपि प्रकृतीनां घातिप्रकृतिसंपर्कतस्तद्रसविपाकोपदर्शकत्वं भवति, स्वयमचौराणामपि चौरसंपर्कत इव चौरत्वम्।

याः प्रकृतयः प्रकृत्यन्तरस्य बन्धमुदयं वा विनिवार्य बन्धमुदयं वाऽऽगच्छन्ति ताः परावर्त्तमानाः, इतरा अपरावर्त्तमानाः। तत्र ज्ञानावरणपञ्चकमन्तरायपञ्चकं दर्शनावरणचतुष्टयं पराघाततीर्थंकरोच्छ्वासमिथ्यात्वभयजुगुप्सा नामध्रुवबन्धिनवकं चेत्येकोनत्रिंशत्प्रकृतयो बन्धमुदयं नाश्रित्यापरावर्त्तमानाः। आसां बन्धस्योदयस्य वा शेषप्रकृतिभिर्बध्यमानाभिर्वेद्यमानाभिर्वा हन्तुमशक्यत्वात्। शेषा बन्धमधिकृत्य नवतिसङ्ख्याः, उदयमधिकृत्य च ता एव सम्यक्त्वसम्यग्मिथ्यात्वसहितास्त्रिनवतिः परावर्त्तमानाः।

जीवप्रमोदहेतुरसोपेताः प्रकृतयः शुभाः। नास्ति शुभो रसो यासु ता अशुभाः। तत्र मनुजत्रिकं देवत्रिकं तिर्यगायुरुच्छ्वासनाम शरीरपञ्चकमङ्गोपाङ्गत्रयं शुभविहायोगतिः शुभं वर्णादिचतुष्कं त्रसादिदशकं तीर्थंकरनाम निर्माणमाद्यसंस्थानसंहनने आतपनाम पराघातनाम पञ्चेन्द्रियजातिरगुरुलघु सातवेदनीयमुच्चैर्गोत्रमुद्योतनाम चेत्येता द्विचत्वारिंशत्प्रकृतयः शुभाः शेषाश्च द्व्यशीतिप्रकृतयोऽशुभाः। वर्णादिचतुष्कं हि शुभप्रकृतिसङ्ख्यायामशुभप्रकृतिसङ्ख्यायां च परिगृह्यते, तस्य द्विधा संभवादिति, शेषा द्व्यशीतिरशुभाः संभवन्ति। सम्यक्त्वसम्यग्मिथ्यात्वे तूदयमाश्रित्यैवाशुभे, न बन्धमाश्रित्य, तद्बन्धासंभवादिति ते पृथक्कृते।

पुद्गले पुद्गलविपये विपाकः फलदानाभिमुख्य यासां ताः पुद्गलविपाकिन्यः, ताश्च षट्त्रिंशत्, तद्यथा—आतपनाम उद्योतनाम संहननषट्कं संस्थानषट्कं द्वादशनामध्रुवोदयप्रकृतयः त्रीण्याद्यशरीराणि त्रीण्यङ्गोपाङ्गानि उपघातं पराघातं प्रत्येकं साधारणमिति। एता हि स्वविपाकं पुद्गलेषु दर्शयन्ति तथास्पष्टलक्षणत्वादतः पुद्गलविपाकिन्यः। ननु रत्यरत्योरप्युदयः पुद्गलान् संप्राप्य भवति। तथाहि—कण्टकादिस्पर्शादरतेर्विपाकोदयः, स्रक्चन्दनादिसंस्पर्शाच्च रतेः, ततस्ते अपि पुद्गलविपाकिन्यौ किं नोक्ते? इति चेन्मैवं, कण्टकादिस्पर्शव्यतिरेकेऽपि प्रियाप्रियदर्शनस्मरणादिना रत्यरत्योर्विपाकोदयदर्शनेन पुद्गलव्यभिचारात्तयोः पुद्गलविपाकित्वासिद्धेः। एवं क्रोधादावपि प्रश्नसमाधाने भावनीये।

भवे नारकादिरूपे स्वयोग्ये विपाकः फलदानाभिमुख्यं यासां ता भवविपाकिन्यः, ताश्चायुश्चतुष्टयप्रकृतयः, तथाहि—बद्धमप्यायुर्यावन्नाद्यापि पूर्वभवक्षयेण स्वयोग्यो भवः प्राप्तो भवति तावन्नोदयमायाति, ततो भवविपाकीति। नन्वायूंषीव गतयोऽपि स्वयोग्यभवप्राप्तावेवोदयमागच्छन्तीति ता अपि कथं न भवविपाका व्यपदिश्यन्ते? सत्यं, आयुषां परभवे संक्रमेणाप्युदयो नास्तीति सर्वथा स्वभवव्यभिचाराभावादायूंषि भवविपाकानि व्यपदिश्यन्ते, गतीनां पुनः परभवेऽपि संक्रमेणोदयोऽस्ति, ततस्ताः स्वभवव्यभिचारान्न भवविपाकिन्यः।

क्षेत्रे गत्यन्तरसंक्रमणहेतुनभःपथे विपाकफलदानाभिमुख्यं यासां ताः क्षेत्रविपाकिन्यः, ताश्च नरकानुपूर्व्याद्याश्चतस्र आनुपूर्व्यः। एता हि पूर्वस्या गतेरुद्धृत्य गत्यन्तरे संक्रामतोऽपान्तराले उदयमायान्ति, न शेषकाले। यद्यपि स्वयोग्यक्षेत्रव्यतिरेकेणान्यत्राप्यासां संक्रमोदयः संभवति तथापि यथाऽऽसां क्षेत्रहेतुकः स्वविपाकोदयप्रादुर्भावस्तथा नान्यासामिति प्रकृत्यन्तरासंस्पर्शिनाऽसाधारणक्षेत्रहेतुकत्वेनासां क्षेत्रविपाकिनीत्वव्यपदेशः।

जीवे जीवगते ज्ञानादिलक्षणे स्वरूपे विपाकस्तदनुग्रहोपघातादिसंपादनाभिमुख्यलक्षणो यासां ता जीवविपाकिन्यः, ताश्चेमाः—ज्ञानावरणपञ्चकं दर्शनावरणनवकं सातासातवेदनीये सम्यक्त्वसम्यग्मिथ्यात्ववर्जाः षड्विंशतिर्मोहनीयप्रकृतयोऽन्तरायपञ्चकं गतिचतुष्टयं जातिपञ्चकं विहायोगतिद्विकं त्रसत्रिकं स्थावरत्रिकं सुस्वरदुःस्वरसुभगदुर्भगादेयानादेयायशःकीर्त्त्ययशःकीर्त्तितीर्थकरनामोच्छ्वासनामानि नीचैर्गोत्रमुच्चैर्गोत्रं चेति षट्सप्ततिर्बन्धयोग्या उद्दिश्य पञ्चसङ्ग्रहे उक्ताः। अन्यत्र तूदययोग्या अधिकृत्य सम्यक्त्वसम्यग्मिथ्यात्वयोरपि ग्रहादष्टसप्ततिः। एता हि जीव एव स्वविपाकमादर्शयन्ति नान्यत्र। तथाहि—ज्ञानावरणपञ्चकं जीवस्य ज्ञानगुणमुपहन्ति। दर्शनावरणनवकं दर्शनगुणं, मिथ्यात्वमोहनीयं सम्यक्त्वगुणं, चारित्रमोहनीयप्रकृतयश्चारित्रगुणं, दानान्तरायादयो दानादिलब्धीः, सातासातवेदनीये सुखदुःखे जनयतः, गतिचतुष्टयादिकास्तु गत्यादिपर्यायानिति। ननु भवविपाकादयोऽपि तत्त्वतो जीवविपाका एव, यत आयूंषि स्वयोग्यभवे विपाकं दर्शयन्ति तद्भवधारणलक्षणं, तच्च जीवस्यैव, न तद्व्यतिरिक्तस्य। आनुपूर्व्योऽपि क्षेत्रे विपाकं दर्शयन्त्यो जीवस्यानुश्रेणिगमनविषयं स्वभावमादधति। पुद्गलविपाकिन्योऽप्यातपसंस्थाननामाद्या उदयप्राप्तास्तथारूपां जीवस्य शक्तिं जनयन्ति यया स जीवस्तथारूपानेव पुद्गलान् गृह्णाति, गृहीतानां च रचनाविशेषं करोति, ततो जीवविपाका एव सर्वाः, सत्यमेतत्, केवलं भवादिप्राधान्यविवक्षया भवविपाकादन्यत्वेन जीवविपाकत्वं परिभाष्यत इति।

विपाकमाश्रित्यायमन्योऽप्यस्त्यनुयोगः, तथाहि—द्विविधा विपाकतः प्रकृतयो—हेतुविपाका रसविपाकाश्च। तत्र हेतुमधिकृत्य विपाको निर्दिश्यमानो यासां ता हेतुविपाकाः, ताश्च पुद्गलक्षेत्रभवजीवहेतुभेदाच्चतुर्विधाः प्रागेवोक्ताः। रसं मुख्यीकृत्य विपाको निर्दिश्यमानो यासां ता रसविपाकाः, ताश्चतुर्धा—एकस्थानकरसा द्विस्थानकरसास्त्रिस्थानकरसाश्चतुःस्थानकरसाश्चेति। तत्र रसः शुभप्रकृतीनां

क्षीरखण्डादिरसोपमोऽशुभप्रकृतीनां तु निम्बघोषातक्यादिरसोपमः स्वाभाविक एकस्थानक उच्यते। द्वयोः कर्षयोरावर्त्तितयोर्य एकः कर्षोऽवशिष्यते तदुपमो द्विस्थानकः। त्रयाणां कर्षाणामावर्त्तितानां य एकः कर्षोऽवशिष्यते तदुपमस्त्रिस्थानकः। चतुर्णां कर्षाणामावर्त्तने कृते सत्युद्धरितैककर्षोपमश्चतुःस्थानकः। एकस्थानकादिरसा द्विस्थानकादिरसा इह यथोत्तरमनन्तगुणा द्रष्टव्याः। अत्र च मतिश्रुतावधिमनःपर्यायज्ञानावरणानि चक्षुरचक्षुरवधिदर्शनावरणानि पुरुषवेदश्चत्वारः संज्वलनाः पञ्चविधमन्तरायं चेति सप्तदश प्रकृतय एकद्वित्रिचतुःस्थानकपरिणताः प्राप्यन्ते बन्धमधिकृत्य। तत्र यावन्न श्रेणिप्रतिपत्तिस्तावदासां सप्तदशप्रकृतीनां यथाध्यवसायं द्विस्थानकस्य त्रिस्थानकस्य चतुःस्थानकस्य वा रसस्य बन्धः। श्रेणिप्रतिपत्तौ त्वनिवृत्तिबादराद्धायाः सङ्ख्येयेषु भागेषु गतेषु तदनन्तरमेतासामशुभत्वादत्यन्तविशुद्धाध्यवसाययोगेनैकस्थानकस्यैव रसस्य बन्ध इत्येता बन्धमधिकृत्य चतुःस्थानपरिणताः प्राप्यन्ते। शेषास्तु शुभा अशुभा वा द्विस्थानकरसास्त्रिस्थानकरसाश्चतुःस्थानकरसाश्च प्राप्यन्ते, न तु कदाचनाप्येकस्थानकरसाः। यत उक्तसप्तदशव्यतिरिक्तानां हास्याद्यानामशुभप्रकृतीनामेकस्थानकरसबन्धयोग्या शुद्धिरपूर्वकरणप्रमत्ताप्रमत्तानां न भवत्येव, यदा त्वेकस्थानकरसबन्धयोग्या परमप्रकर्षप्राप्ता शुद्धिरनिवृत्तिबादराद्धायाः सङ्ख्येयेभ्यो भागेभ्यः परतो जायते तदा बन्धमेव न ता आयान्तीति न तासामेकस्थानको रसः। न च यथा श्रेण्यारोहेऽनिवृत्तिबादराद्धायाः सङ्ख्येयेषु भागेषु गतेषु परतोऽतिविशुद्धत्वान्मतिज्ञानावरणादीनामेकस्थानकरसबन्धस्तथा क्षपकश्रेण्यारोहे सूक्ष्मसंपरायस्य चरमद्विचरमादिसमयेषु वर्त्तमानस्यातीव विशुद्धत्वात्केवलद्विकस्य संभवद्बन्धस्यैकस्थानकरसबन्धसंभवः कथं न भवतीति शङ्कनीयं, स्वल्पस्यापि केवलद्विकरसस्य सर्वघातित्वात्, सर्वघातिनां च जघन्यपदेऽपि द्विस्थानकरसस्यैव संभवात्। शुभानामपि प्रकृतीनां मिथ्यादृष्टिः संक्लिष्टो नैकस्थानकरसं बध्नाति, मनाग्विशुध्यमान एव तद्बन्धसं-

भवात्, अतिसंक्लिष्टे मिथ्यादृष्टौ नरकगतिप्रायोग्या वैक्रियतैजसाद्याः शुभप्रकृतयो बन्धमायान्ति, तासामपि तथास्वाभाव्यात् जघन्यतोऽपि द्विस्थानक एव रसो बन्धमायाति, नैकस्थानक इति। ननूत्कृष्टस्थितिमात्रं संक्लेशोत्कर्षेण भवति, ततो यैरेवाध्यवसायैः शुभप्रकृतीनामुत्कृष्टा स्थितिर्भवति तैरेवैकस्थानकोऽपि रस किं न स्यादिति चेत्, शृणु—इह हि प्रथमस्थितेरारभ्य समयवृद्ध्याऽसङ्ख्येयाः स्थितिविशेषा भवन्ति, एकैकस्यां च स्थितावसङ्ख्येया रसस्पर्द्धकसङ्घातविशेषाः, तत उत्कृष्टस्थितौ बध्यमानायां प्रतिस्थितिविशेषमसङ्ख्येया ये रसस्पर्द्धकसङ्घातविशेषास्ते तावन्तो द्विस्थानकरसस्यैव घटन्ते, नैकस्थानकस्येति न शुभप्रकृतीनामुत्कृष्टस्थितिबन्धेऽप्येकस्थानकरसबन्धः। उक्तं च—"उक्कोसठिईअज्झवसाणेहिं एगठाणिओ होही। सुभियाण तं न जं ठिइअसङ्खगुणियाओ अणुभागा॥१॥" अत्र सर्वघातिनीनां देशघातिनीनां वा प्रकृतीनां यानि चतुःस्थानकरसानि त्रिस्थानकरसानि वा स्पर्द्धकानि तानि नियमतः सर्वघातीनि भवन्ति। द्विस्थानकरसानि तु सर्वघातिनीनां सर्वघातीन्येव, देशघातिनीनां तु कानिचित्सर्वघातीनि कानिचिद्देशघातीनीत्येवं मिश्राणि। एकस्थानकरसानि च देशघातिनीनामेव भवन्ति, तानि च देशघातीन्येव। अत्र च देशघातिनामवधिज्ञानावरणादीनां सर्वघातिरसस्पर्द्धकेषु विशुद्धाध्यवसायतो देशघातिरूपतया परिणमनेन निहतेषु, देशघातिरसस्पर्द्धकेषु चातिस्निग्धेष्वल्परसीकृतेषु तदन्तर्गतकतिपयरसस्पर्द्धकभागस्योदयावलिकाप्रविष्टस्य क्षये शेषस्य च विपाकोदयविष्कम्भलक्षणे उपशमे जीवस्यावधिमनःपर्यायज्ञानचक्षुर्दर्शनादयो गुणाः क्षायोपशमिकाः प्रादुर्भवन्ति, तदाऽवधिज्ञानावरणादीनां कतिपयदेशघातिरसस्पर्द्धकक्षयोपशमात्कतिपयदेशघातिरसस्पर्द्धकानां चोदयात् क्षयोपशमानुविद्ध औदयिको भावः केवलः प्रवर्तते। मतिश्रुतावरणाचक्षुर्दर्शनावरणान्तरायप्रकृतीनां तु सदैव देशघातिनामेव रसस्पर्द्धकानामुदयो न सर्वघातिनां, ततः सर्वदैव तासामौदयिकक्षायोपशमिकौ भावौ संमिश्रौ प्राप्येते, न केवल औदयिकः।

तदेवं ज्ञानावरणदर्शनावरणान्तरायाणामुदयेऽपि क्षयोपशमोऽविरुद्ध इति स्थितम् । मोहनीयस्य तु अनन्तानुबन्ध्यादिप्रकृतीनां प्रदेशोदये क्षायोपशमिको भावोऽविरुद्धो न विपाकोदये, यतोऽनन्तानुबन्ध्यादिप्रकृतयः सर्वघातिन्यः, सर्वघातिनीनां च रसस्पर्द्धकानि सर्वाण्यपि सर्वघातीन्येवेति तेषां विपाकोदये न क्षयोपशमसंभवः, किं तु प्रदेशोदये । न च सर्वघातिरसस्पर्द्धकप्रदेशा अपि सर्वस्वघात्यगुणघातनस्वभावा इति तत्प्रदेशोदयेऽपि कथं क्षायोपशमिकभावसंभव इति वाच्यं, तेषां सर्वघातिरसस्पर्द्धकप्रदेशानामध्यवसायविशेषेण मनाग्मन्दानुभावीकृतविरलवेद्यमानदेशघातिरसस्पर्द्धकेष्वन्तःप्रवेशितानां यथास्थितस्वबलप्रकटनासमर्थत्वात् । मिथ्यात्वाद्यद्वादशकषायरहितानां शेषमोहनीयप्रकृतीनां तु प्रदेशोदये विपाकोदये वा क्षयोपशमोऽविरुद्धस्तासां देशघातित्वात्, परं ताः प्रकृतयोऽध्रुवोदया इति तद्विपाकोदयाभावे क्षायोपशमिकभावे विजृम्भमाणे प्रदेशोदयवत्योऽपि ता न मनागपि देशविघातिन्यः । विपाकोदये तु प्रवर्त्तमाने क्षायोपशमिकभावसंभवे मनाग्मालिन्यमात्रकारित्वाद्देशघातिन्यो भवन्तीति कृतं प्रसङ्गेन ।

स्वस्यानुदय एव बन्धो यासां ताः स्वानुदयबन्धिन्यस्ताश्च देवायुर्नरकायुर्देवगतिर्देवानुपूर्वी नरकगतिर्नरकानुपूर्वी वैक्रियशरीरं वैक्रियाङ्गोपाङ्गमाहारकद्विकं जिननाम चेत्येकादश । तथाहि–देवगतित्रिकस्य देवगतावुदयः, नरकत्रिकस्य नरकगतौ, वैक्रियद्विकस्योभयत्र । न च देवा नारका वा एताः प्रकृतीर्बध्नन्ति, तथाभवस्वाभाव्यात्, तीर्थकरनामापि केवलज्ञानप्राप्तावुदययोग्यं, न च तदा तद्बन्धोऽपूर्वकरण एव तद्बन्धव्यवच्छेदात् । आहारककरणकाले लब्ध्युपजीवनप्रमादात्, तदुत्तरकालं च मन्दसंयमस्थानवर्त्तित्वान्नाहारकद्विकोदये तद्बन्ध इत्येताः सर्वा अपि स्वानुदयबन्धिन्यः । स्वोदय एव बन्धो यासां ताः स्वोदयबन्धिन्यः, ताश्च ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकमिथ्यात्वनिर्माणतैजसकार्मणस्थिरास्थिरवर्णादिचतुष्कागुरुलघुशुभाशुभलक्षणाः सप्तविंशतिः, ध्रुवोदयतया

नामां सर्वदोदयभावात्। उभयस्मिन्नुदयेऽनुदये वा बन्धो यासां ता उभयबन्धिन्यः, ताश्च निद्रापञ्चकजातिपञ्चकसंस्थानषट्कसंहननषट्कखगगणोडशकनोकषायनवकपराघातोपघातातपोद्योतोच्छ्वाससातासातवेदनीयोच्चनीचैर्गोत्रमनुष्यत्रिकतिर्यक्त्रिकौदारिकद्विकप्रशस्ताप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थावरसूक्ष्मापर्याप्तसाधारणसुस्वरसुभगादेययशःकीर्त्तिदुःस्वरदुर्भगानादेयायशःकीर्त्तिरूपा द्व्यशीतिः, एतासां तिरश्चां मनुष्याणां वा यथायोगमुदयेऽनुदये वा बन्धसंभवात्।

समकमेककालं व्यवच्छिद्यमानौ बन्धोदयौ यासां ताः समकव्यवच्छिद्यमानबन्धोदयाः, ताश्च संज्वलनलोभहीनपञ्चदशकषायमिथ्यात्वभयजुगुप्साहास्यरतिमनुजानुपूर्वीसूक्ष्मत्रिकातपपुरुषवेदलक्षणाः षड्विंशतिः, तथाहि—सूक्ष्मत्रिकातपमिथ्यात्वानां मिथ्यादृष्टौ, अनन्तानुबन्धिनां सासादने, मनुष्यानुपूर्वीद्वितीयकषायाणामविरते, प्रत्याख्यानावरणानां देशविरते, हास्यरतिभयजुगुप्सानामपूर्वकरणे, संज्वलनत्रिकपुंवेदयोरनिवृत्तिबादरे बन्धोदयौ समकमेव व्यवच्छिद्येते। तत एताः समकव्यवच्छिद्यमानबन्धोदयाः। क्रमेण पूर्वं बन्ध पश्चादुदय इत्येवंरूपेण व्यवच्छिद्यमानौ बन्धोदयौ यासां ताः क्रमव्यवच्छिद्यमानबन्धोदयाः, ताश्चोक्तवक्ष्यमाणव्यतिरिक्ताः षडशीतिः, तथाहि—ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयानां सूक्ष्मसंपरायचरमसमये बन्धव्यवच्छेदः, उदयव्यवच्छेदः क्षीणकषायचरमसमये। निद्राप्रचलयोर्बन्धव्यवच्छेदोऽपूर्वकरणप्रथमभागे, उदयव्यवच्छेदः क्षीणकषायद्विचरमसमये। असातवेदनीयस्य प्रमत्ते सातवेदनीयस्य सयोगिचरमसमये बन्धव्यवच्छेदः, उदयव्यवच्छेदः पुनरुभयोरपि सयोगिकेवलिचरमसमयेऽयोगिचरमसमये वा। तथा चरमसंस्थानस्य मिथ्यादृष्टौ मध्यमसंस्थानचतुष्टयाप्रशस्तविहायोगतिदुःस्वरनाम्नां सासादने, औदारिकद्विकप्रथमसंहननयोरविरते, अस्थिराशुभयोः प्रमत्ते, तैजसकार्मणसमचतुरस्रवर्णादिचतुष्कागुरुलघुचतुष्टयप्रत्येकस्थिरशुभसुस्वरशुभविहायोगतिनिर्माणानामपूर्वकर-

णपष्ठभागे बन्धव्यवच्छेदः, उदयव्यवच्छेदः पुनरासामेकोनत्रिंशत्सङ्ख्यानां सयोगिचरमसमये। तथा मनुजगतिमनुजायुषो बन्धव्यवच्छेदोऽविरते, पञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेयतीर्थकरनाम्नामपूर्वकरणपष्ठांशे, यशःकीर्त्युच्चैर्गोत्रयोः सूक्ष्मसंपरायचरमसमये, उदयव्यवच्छेदः पुनरासां एकादशानामप्ययोगिचरमसमये। तथा स्थावरैकद्वित्रिचतुरिन्द्रियजातीनां नरकत्रिकस्यान्त्यसंहननस्य नपुंसकवेदस्य च मिथ्यादृष्टौ बन्धव्यवच्छेदः, उदयव्यवच्छेदः पुनर्यथाक्रमं सासादनेऽविरतेऽप्रमत्तेऽनिवृत्तिबादरे च। तथा स्त्रीवेदस्य सासादने बन्धव्यवच्छेदः, उदयव्यवच्छेदः पुनरनिवृत्तिबादरे। तथा तिर्यगानुपूर्वीदुर्भगानादेयानां तिर्यग्गतितिर्यगायुरुद्योतनीचैर्गोत्राणां स्त्यानर्द्धित्रिकस्य तुर्यपञ्चमसंहननयोर्द्वितीयतृतीयसंहननयोश्च बन्धव्यवच्छेदः सासादने, उदयव्यवच्छेदः पुनर्यथासङ्ख्यमविरते देशविरते प्रमत्तेऽप्रमत्ते उपशान्तमोहे च। तथाऽरतिशोकयोर्बन्धव्यवच्छेदः प्रमत्ते, उदयव्यवच्छेदोऽपूर्वकरणे संज्वलनलोभस्य बन्धव्यवच्छेदोऽनिवृत्तिबादरचरमसमये, उदयव्यवच्छेदः सूक्ष्मसंपरायान्त्यसमये। तत एताः षडशीतिः क्रमव्यवच्छिद्यमानबन्धोदयाः। पूर्वमुदयः पश्चाद्बन्ध इत्येवमुत्क्रमेण व्यवच्छिद्यमानौ बन्धोदयौ यासां ता उत्क्रमव्यवच्छिद्यमानबन्धोदयाः, ताश्चायशःकीर्त्तिसुरत्रिकवैक्रियद्विकाहारकद्विकरूपा अष्टौ, येनायशःकीर्त्तेः प्रमत्ते, देवायुषोऽप्रमत्ते, देवद्विकवैक्रियद्विकयोरपूर्वकरणे बन्धव्यवच्छेदः, उदयव्यवच्छेदस्तु षण्णामप्यविरते। आहारकद्विकस्य पुनरपूर्वकरणे बन्धस्योदयस्य चाप्रमत्तसंयते व्यवच्छेद इति।

यासां प्रकृतीनां जघन्यतः समयमात्रं बन्धः, उत्कर्षतः समयादारभ्य यावदन्तर्मुहूर्त्तं, न परतः, ताः सान्तरबन्धाः, अन्तर्मुहूर्त्तमध्येऽपि सान्तरो विच्छेदलक्षणान्तरसहितो बन्धो यासां ताः सान्तरा इति व्युत्पत्तेः। अन्र्मुहूर्त्तोपरि विच्छिद्यमानबन्धावृत्तिजातिमत्यः सान्तरबन्धा इति फलितार्थः। ताश्चासातवेदनीयस्त्रीवेदनपुंसकवेदहास्यरत्यरतिशोकनरकद्विकाहारकद्विकाद्यरहितसंस्थानसंह-

ननपञ्च कागजातिनतुष्टयातपोद्योताप्रशस्तविहायोगतिस्थिरशुभयशःकीर्त्तयः स्थावरदशकं च। एता हि(४१)जघन्यतः समयमात्रं बध्य-
न्ते, उत्कर्षतोऽन्तर्मुहूर्त्तं, परतस्तु निजबन्धहेतुसद्भावेऽपि तथास्वाभाव्यात्तद्योग्याध्यवसायपरावृत्त्या नियमात्प्रतिपक्षप्रकृतयो बध्यन्त
इति सान्तरा उच्यन्ते। यासां जघन्यतः समयमात्रं बन्ध उत्कर्षतस्तु समयादारभ्य नैरन्तर्येणान्तर्मुहूर्त्तस्योपर्यपि कालमसङ्ख्येयं
यावत्ताः सान्तरनिरन्तरबन्धाः, अन्तर्मुहूर्त्तमध्येऽपि सान्तराश्च निरन्तराश्चेतिकृत्वाऽन्तर्मुहूर्त्तमध्यविच्छिन्नबन्धतदुपरिविच्छिन्नबन्धोभय-
वृत्तिजातिमत्य इति यावत्, ताश्च समचतुरस्रं वज्रर्षभनाराचं पराघातोच्छ्वासौ पुरुषवेदः पञ्चेन्द्रियजातिः सातवेदनीयं शुभविहा-
योगतिर्वैक्रियौदारिकसुरमनुजतिर्यग्गोत्रद्विकानि सुस्वरसौभाग्यादेयलक्षणत्रिकं त्रसचतुष्कं चेति सप्तविंशतिः। एता हि जघन्यतः
समयमात्रं बध्यन्त इति सान्तराः, उत्कर्षतस्तु अनुत्तरसुरादिभिरसंख्येयमपि कालं बध्यन्त इत्यन्तर्मुहूर्त्तमध्ये व्यवच्छेदाभावान्नि-
रन्तरा इति। जघन्येनापि या अन्तर्मुहूर्त्तं यावन्नैरन्तर्येण बध्यन्ते ता निरन्तरबन्धाः, निर्गतमन्तरमन्तर्मुहूर्त्तमध्ये व्यवच्छेदलक्षणं यस्य
तादृशो बन्धो यासामिति व्युत्पत्तेः, अन्तर्मुहूर्त्तमध्याविच्छिन्नबन्धवृत्तिजातिमत्य इति यावत्, ताश्च ज्ञानावरणपञ्चकान्तरायपञ्चकदर्श-
नावरणनवकषायषोडशकमिथ्यात्वभयजुगुप्साऽगुरुलघुनिर्माणतैजसकार्मणोपघातवर्णादिचतुष्टयरूपाः सप्तचत्वारिंशद्ध्रुवबन्धिन्यो जि-
ननामायुश्चतुष्टयं चेति द्विपञ्चाशत्। एतासां बन्धो ह्यन्तर्मुहूर्त्तमध्ये न विच्छिद्यत इति।

यासां विपाकोदये प्रवर्त्तमाने सङ्क्रमत उत्कृष्टं स्थितिसत्कर्म लभ्यते, न बन्धतः, ता उदयसङ्क्रमोत्कृष्टाः, ताश्च मनुजगतिः सात-
वेदनीयं सम्यक्त्वं स्थिरादिषट्कं हास्यादिषट्कं वेदत्रिकं शुभविहायोगतिराद्यानि पञ्च संहननानि पञ्च संस्थानानि उच्चैर्गोत्रं चेति
त्रिंशत्। आसां हि प्रकृतीनामुदयप्राप्तानां या विपक्षभूता नरकगत्यसातवेदनीयमिथ्यात्वाद्याः प्रकृतयस्तासामुत्कृष्टां स्थितिं बद्ध्वा

भूय आसामेवोदयप्राप्तानां बन्धमारभते, बध्यमानासु चैतासु पूर्वबद्धनरकगत्यादिविपक्षप्रकृतिदलिकं संक्रमयति, शुभप्रकृतीनां स्थितिः स्वबन्धेन स्तोकैव भवतीति सङ्क्रमत आसामुत्कृष्टा स्थितिः प्राप्यते। यासां प्रकृतीनामनुदये सङ्क्रमत उत्कृष्टस्थितिलाभस्ता अनुदयसङ्क्रमोत्कृष्टाः, ताश्च मनुजानुपूर्वीसम्यग्मिथ्यात्वाहारकद्विकदेवद्विकविकलत्रिकसूक्ष्मत्रिकतीर्थकरनामलक्षणास्त्रयोदश। यत एतासां स्वबन्धत उत्कृष्टा स्थितिर्नावाप्यते, किंतु सङ्क्रमतः। सङ्क्रमतोऽप्युत्कृष्टा स्थितिस्तदाऽवाप्यते यदैतद्विपक्षप्रकृतीरुत्कृष्टस्थितीर्बद्ध्वा तदुत्तरमेव तासु बध्यमानासु तद्दलिकं सङ्क्रमयति। एतद्विपक्षप्रकृतीनामुत्कृष्टस्थितिबन्धकश्च प्रायो मिथ्यादृष्ट्यादिर्मनुष्यः। न च तदानीमासामुदयोऽस्तीत्यनुदयसङ्क्रमोत्कृष्टा एताः। यासां प्रकृतीनां विपाकोदये सति बन्धादुत्कृष्टं स्थितिसत्कर्मावाप्यते ता उदयबन्धोत्कृष्टाः। यासां तु विपाकोदयाभावे बन्धादुत्कृष्टस्थितिसत्कर्मावाप्तिस्ता अनुदयबन्धोत्कृष्टाः। तत्र नरकद्विकतिर्यग्द्विकौदारिकद्विकसेवार्त्तसंहननैकेन्द्रियजातिस्थावरातपनामानि निद्राश्च पञ्चेत्येताः पञ्चदश प्रकृतयोऽनुदयबन्धोत्कृष्टाः। शेषाः पुनरायुश्चतुष्टयरहिताः पञ्चेद्रियजातिर्वैक्रियद्विकं हुण्डं पराघातोच्छ्वासोद्योताप्रशस्तविहायोगतयोऽगुरुलघुतैजसकार्मणनिर्माणोपघातवर्णादिचतुष्काणि अस्थिरादिषट्कं त्रसादिचतुष्कमसातवेदनीयं नीचैर्गोत्रं षोडश कषाया मिथ्यात्वं ज्ञानावरणपञ्चकमन्तरायपञ्चकं दर्शनावरणचतुष्टयमित्येताः षष्टिः प्रकृतय उदयबन्धोत्कृष्टाः। एतासां ह्युदयप्राप्तानां स्वबन्धत उत्कृष्टा स्थितिरवाप्यत इति। आयुषां तु नान्योऽन्यं सङ्क्रमो, नापि बध्यमानमायुर्दलिकं पूर्वबद्धायुष उपचयायालम्। ततस्तिर्यग्मनुष्यायुषोरुत्कृष्टा स्थितिर्न कथमपीति ते अनुदयबन्धोत्कृष्टादिसंज्ञाचतुष्टयातीते। देवनारकायुषी त्वनुदयबन्धोत्कृष्टे अपि प्रयोजनाभावात् पूर्वाचार्यैः संज्ञाचतुष्टयातीते विवक्षिते।

यासां प्रकृतीनां दलिकं चरमसमयेऽन्यासु प्रकृतिषु स्तिबुकसङ्क्रमेण सङ्क्रमय्यान्यप्रकृतिव्यपदेशेनानुभवेत्, न स्वोदयेन, ता

अनुदयवत्संज्ञाः । यासां च दलिकं चरमसमये स्वविपाकेन वेदयते ता उदयवत्यः । ताश्च ज्ञानावरणपञ्चकमन्तरायपञ्चकमायुश्चतुष्टयं दर्शनचतुष्टयं सातासातवेदनीये स्त्रीवेदनपुंसकवेदौ मनुष्यगतिः पञ्चेन्द्रियजातिस्त्रसबादरपर्याप्तसुभगयशःकीर्त्यादेयजिननामलक्षणं चरमोदयसंज्ञं नामनवकमुच्चैर्गोत्रं वेदकसम्यक्त्वं संज्वलनलोभ इति चतुस्त्रिंशत् । तथाहि—ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाणां चतुर्दशप्रकृतीनां क्षीणकषायचरमसमये, उक्तनामनवकस्य सातासातवेदनीययोरुच्चैर्गोत्रस्य चायोगिचरमसमये, संज्वलनलोभस्य सूक्ष्मसंपरायान्त्यसमये, वेदकसम्यक्त्वस्य स्वक्षपणपर्यवसानसमये, स्त्रीनपुंसकवेदयोः क्षपकश्रेण्यामनिवृत्तिबादराद्धायाः सङ्ख्येयेषु भागेष्वतिक्रान्तेषु तदुदयान्त्यसमये, आयुषां च स्वस्वभवचरमसमये, स्ववेदनमस्ति, तत एता उदयवत्योऽभिधीयन्ते । यद्यपि सातासातवेदनीययोः स्त्रीनपुंसकवेदयोश्चानुदयवतीत्वमपि सम्भवति, तथापि 'प्राधान्येनैव व्यपदेशा' इत्युदयवत्य एता उक्ता इति संज्ञाः, उदयवत्यश्रुतिजातित्वलक्षणमनुदयवतीत्वं तासु नास्तीति तदभिप्रायः । उक्तशेषाश्चतुर्दशोत्तरशतसङ्ख्या अनुदयवत्यस्तासां दलिकस्य चरमसमयेऽन्यत्र संक्रमणध्रौव्येण स्वविपाकवेदनाभावात् । तथाहि—चरमोदयसंज्ञनामनवकनरकद्विकतिर्यग्द्विकैकद्वित्रिचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणातपोद्योतवर्जा नाम्न एकसप्ततिप्रकृतयो नीचैर्गोत्रं चेत्येता द्विसप्ततिप्रकृतीः सजातीयासु परप्रकृतिषूदयमानासु चरमसमये स्तिबुकसंक्रमेण प्रक्षिप्य परप्रकृतिव्यपदेशेनानुभवत्ययोगिकेवली । एवं निद्राप्रचले क्षीणकषायः । मिथ्यात्वं सम्यग्मिथ्यात्वे, तच्च सम्यक्त्वे प्रक्षिप्य सप्तकक्षयकालेऽनुभूयते । अनन्तानुबन्धिनां क्षपणसमये तद्दलिकं बध्यमानासु चारित्रमोहनीयप्रकृतिषु गुणसंक्रमेण संक्रमय्योदयावलिकागतमुदयवतीषु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमय्य तद्व्यपदेशेनानुभवति । स्थावरसूक्ष्मसाधारणातपोद्योतैकद्वित्रिचतुरिन्द्रियजातिनरकद्विकतिर्यग्द्विकरूपा नामत्रयोदशप्रकृतीर्बध्यमानायां यशःकीर्तौ गुणसंक्रमेण

संक्रमय्य तासामुदयावलिकागतं दलिकं नाम्न उदयमागतासु प्रकृतिषु स्तिबुकसंक्रमेण प्रक्षिप्य तद्व्यपदेशेनानुभवति । स्त्यानर्द्धित्रिकमप्यादौ दर्शनावरणचतुष्टये गुणसंक्रमेण संक्रमयति । तत उदयावलिकागतं स्तिबुकसंक्रमेण संक्रमयति । एवमष्टौ कषायान् हास्यादिषट्कं पुरुषवेदं संज्वलनक्रोधादित्रिकमुत्तरोत्तरप्रकृतिमध्ये प्रक्षिपति, तत एताः सर्वा अप्यनुदयवत्यः ॥

वक्ष्यमाणगभीरार्थनीरराशिप्रवेशकृत् । कर्माष्टकस्वरूपस्य, नौरिवेयं प्ररूपणा ॥

तदेवमुक्तं सप्रपञ्चं कर्माष्टकम् । तस्य बन्धसंक्रमादिकारणभूतं करणानां वीर्यविशेषरूपाणामष्टकं 'करणाष्टकं'–बन्धनादि वक्ष्यमाणम्, तथा कर्मपुद्गलानां यथास्थितिबद्धानामबाधाकालक्षयात्संक्रमापवर्त्तनादिकरणविशेषाद्वोदयसमयप्राप्तानामनुभवन'मुदयः', तेषामेव बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावः 'सत्ता' । इह करणाष्टकोदयसत्ता अभिधेयाः । तत्परिज्ञानं श्रोतुरनन्तरप्रयोजनं ग्रन्थकर्तुश्च परानुग्रहः, परम्परप्रयोजनं तूभयोरपि मोक्षावाप्तिः । सम्बन्धस्तु हेतुहेतुमद्भावलक्षणः–प्रकरणमिदं करणादिज्ञानहेतुः, तज्ज्ञानं च हेतुमदिति । अधिकारी चात्र तत्त्वबुभुत्सुर्मुमुक्षुर्वा ॥१॥

(चू०अवत०)—पुव्वं करणाणि उद्दिट्ठाणि, ताणि णिद्दिसिज्जंति, तं जहा—

(म०अवत०)—तत्र 'यथोद्देशं निर्देश' इतिन्यायात्प्रथमतः करणाष्टकमभिधित्सुराह—

(उ०अवत०)—तत्र 'यथोद्देशं निर्देश' इत्यादौ करणाष्टकं प्रतिपिपादयिषुराह—

**बंधण १ संकमणु २ व्वट्टणा य ३, अववट्टणा ४ उदीरणया ५ ।**
**उवसामणा ६ निधत्ती ७ निकायणा ८ च त्ति करणाइं ॥२॥**

(चू०)—एयाणि अट्ठकरणाणि।। करणसद्दो एत्थ पत्तेयं भाणियव्वो। तं जहा—बंधणकरणं संकमकरणं, एवं पत्तेयं पत्तेयं भाणियव्वाणि। बंधणपुव्वुत्ताओ सेसाणं पढमं बंधणं उद्दिट्ठं, तहा सेसाणि वि उत्तरोत्तरपुव्वगाणित्ति कमणिद्देसो। पुव्वं सामण्णेण करणलक्खणं भणितं, इयाणिं बंधणादीणं पत्तेयं पत्तेयं करणलक्खणं भण्णइ, सामण्णवुत्तं विसेसे अवतिट्ठतित्ति वयणाओ। 'बंधनकरणं'ति बंधनक्रिया–पगतिठितिअणुभागपएसनया पुग्गलाण परिणामणक्रिया, तब्भावेण तं बंधणकरणं। जोगकसाएहिं सा बंधणक्रिया भवति। 'जोगा पगतिपदेसं ठितिअणुभागं कसायतो कुणति" त्ति वयणातो। तम्हा ते चेव करणं ति वुच्चंति। संकमणाओवट्टणउदीरणाकरणाणं पि कसायजोगा एव करणं। उवट्टणाउवसामणानिधत्तिनिकायणा उ संकिलेसमहिएणं वीरिएण भवंति। तम्हा तेसिं तं करणं वुचति। भणितं करणलक्खणं। तत्थ 'बंधणकरणं' ति–कम्मपोग्गलाण जीवप्पतेसाण य परोप्परं संबंधणं बंधणकरणं। तं च मुलुत्तरपगतिठितिअणुभागपदेसभिण्णं, मोदकवत्, जहा–मोदके पगती अविसेसितरसवीरियविवागा सामन्नसत्ती वातपित्तसंभविणासणोपसमादिया तहा पगतिरिति, ठियत्ति–तेण भावेण एत्तियं कालं अविणट्ठं अच्छति सा ठिति, अनुभागो–जो तस्सेव कटुकसायादिरसविसेसो तिव्वमंदमज्झिमएगट्ठाणदुट्ठाणतिट्ठाणचउट्ठाणदेसघातिसव्वघातिभेदेण भिण्णो जहा मोदके बुद्धिपसायका(को)वुससइदित्तजड्डपाडवातिगुणा तहा इहं पि, पदेसो णाम–जंणाणं कम्मखंधाणं समुदायो सिद्धाणं अणंतभागो अभवसिद्धिएहिं अणंतगुणोत्ति परिच्छिण्णपरिमाणो,

जहा मोदगे परिच्छिण्णं पलपरिमाणमेव सभियगुडकडुभण्डाइदव्वाणं मोदगत्तेण बंधो ण ऊणाहिगत्ति। एवं संकमणादिकरणजोग्गपोग्गलेसु वि जहाजोग्गं भावेयव्व, पतिणिययविसयत्तातो जोगसंकिलेसविसोहीणं। तत्थ पगतिट्ठितिअणुभागपदेसाणं अण्णहाभावपरिणामणं अण्णपगतिपरिणामणं इइ वा संकमणकरणं। तव्विसेसा एव उव्वट्टणोवट्टणातो, ठितिअणुभागाणं वड्ढावणं उवट्टणा, हस्सीकरणमोवट्टणाकरणं। अपत्तकालफलाणं कम्माणं उदए ठावणं उदीरणा, सा य उदयविसेसा एव,जहा उवरिं भणिणहित्ति–'जं करणेणोकड्ढिय'त्ति सविगप्पं। उदयउदीरणाणिहत्तिणिकायणाणं अजोगत्तेण कम्मणो ववत्थावणं उवसामणाकरणं। उव्वट्टणओवट्टणावज्जकरणाणं अजोगत्तेण ववत्थावणं णिहत्तीकरणं। अहवा पुव्वपुट्ठस्स कम्मस्स तत्तसंमेलियलोहसलागासंबंधसरिसकिरिया णिहत्ती। तस्सेव तत्तसंकोट्टियलोहसलागासंबंधसरिसकिरिता णिकायणा, संघरिसेणं विणा दुम्मोयत्तातो। बंधणादिकरणादिं सुत्तमेत्तबद्धलोहसलागासंबंधो इव जाणियव्वात्ति उद्दिट्ठा दस वि पयत्था सह लक्खणणिद्देसेण। अप्पप्पाण विसेसलक्खणाणि सत्थाणे भण्णहित्ति ॥२॥

इदाणिं उद्देसकमेणागयं बंधणकरणं आदीए भण्णति। तस्स य जोगा कसाया य कारणं ति वुत्तं। तत्थ पुव्व जोगस्स परूवणा कीरइ। किं कारणं? भण्णइ–कसायरहिते कसायसहिते य बंधे सव्वत्थ जोगा कारणं ति काउं। तस्स णिमित्तं, विगप्पो, सरूवं, अहिगारो य भाणियव्वाणि। तत्थ इमा गाहा—

(म०)–'बंधणेत्ति'–इह करणशब्देन सह पर्यन्ते सामानाधिकरण्याभिधानात्प्रत्येकं करणशब्दोऽभिसंबन्धनीयः। तद्यथा–बन्धनकरणं संक्रमकरणमित्यादि। तत्र बन्धो नाम कर्मपुद्गलानां जीवप्रदेशैः सह वह्न्ययःपिण्डवदन्योऽन्यानुगमः (१)। संक्रमः प्रकृतिस्थि-

त्यनुभागप्रदेशानामन्यकर्मरूपतया स्थितानामन्यकर्मस्वरूपेण व्यवस्थापनम् (२)। स्थित्यनुभागयोर्बृहत्करणमुद्वर्त्तना (३)। तयोरेव ह्रस्वीकरणमपवर्त्तना(४)। कर्मपुद्गलानामकालप्राप्तानामुदयावलिकायां प्रवेशनमुदीरणा(५)। कर्मपुद्गलानामुदयोदीरणानिधत्तिनिकाचनाकरणायोग्यत्वेन व्यवस्थापनमुपशमना(६)। उद्वर्त्तनापवर्त्तनावर्जशेषकरणायोग्यत्वेन व्यवस्थापनं निधत्तिः(७)। समस्तकरणायोग्यत्वेन व्यवस्थापनं निकाचना(८)। उक्तस्वरूपबन्धादिनिबन्धनभूताश्च जीववीर्यविशेषा बन्धनादीनीत्युच्यन्ते, तथाव्युत्पत्तिभावात्। तथाहि—बध्यतेऽष्टप्रकारं कर्म येन तद्बन्धनम्। संक्रम्यतेऽन्यप्रकृत्यादिरूपतया व्यवस्थाप्यते येन तत्संक्रमणम्। उद्वर्त्यते प्राबल्येन प्रभूतीक्रियते स्थित्यादि यया जीववीर्यविशेषपरिणत्या सोद्वर्तना। अपवर्त्यते ह्रस्वीक्रियते स्थित्यादि यया साऽपवर्तना। अनुदयप्राप्तं सत्कर्मदलिकमुदीर्यत उदयावलिकायां प्रवेश्यते यया सोदीरणा। उपशम्यते उदयोदीरणानिधत्तिनिकाचनाकरणायोग्यत्वेन व्यवस्थाप्यते कर्म यया सोपशमना। निधीयत उद्वर्तनापवर्तनावर्जकरणायोग्यत्वेन व्यवस्थाप्यते यया सा निधत्तिः—पृषोदरादित्वाच्छब्दरूपनिष्पत्तिः। तथा 'कच' बन्धने, नितरां कच्यते स्वयमेव बन्धमायाति कर्म जीवस्य तथाविधसंक्लिष्टाध्यवसायपरिणतस्य, तत्प्रयुङ्क्ते जीव एव तथानुकूल्येन भवनात्, ततः 'प्रयोक्तृव्यापारे णिञ्'(श्रीमल०आ०६–५) ततो निकाच्यतेऽवश्यवेद्यतया व्यवस्थाप्यते कर्म जीवेन यया सा निकाचना। अथवा 'कच' बन्धने इति चौरादिकोऽप्यस्ति, ततो निकाच्यतेऽवश्यवेद्यतया निबध्यते यया कर्म सा निकाचना जीववीर्यविशेषपरिणतिः। 'चः' समुच्चये। 'इतिः' परिसमाप्तौ। एतावन्त्येव करणानि, नाधिकानीति ॥ २ ॥ करणानि नामूनि जीववीर्यविशेषरूपाणीति प्रथमतो वीर्यमेव प्ररूपयति—

(उ०)-बध्यते जीवप्रदेशैः सहान्योऽन्यानुगतीक्रियतेऽष्टप्रकारं कर्म येन वीर्यविशेषेण तद्बन्धनम्। संक्रम्यन्तेऽन्यकर्मरूपतया व्यवस्थिताः प्रकृतिस्थित्यनुभागप्रदेशा अन्यकर्मरूपतया व्यवस्थाप्यन्ते येन तत्सङ्क्रमणम्। तद्भेदावेवोद्वर्त्तनापवर्त्तने, ते च कर्मणां

स्थित्यनुभागाश्रये । तत्रोद्वर्त्त्येते प्रभूतीक्रियेते स्थित्यनुभागौ यया वीर्यपरिणत्या सा उद्वर्त्तना । अपवर्त्त्येते ह्रस्वीक्रियेते तौ यया साऽपवर्त्तना । उदीर्यतेऽनुदयप्राप्तं कर्मदलिकमुदयावलिकायां प्रवेश्यते यया सा उदीरणा । उपशम्यते उदयोदीरणानिधत्तिनिकाचनाकरणायोग्यत्वेन व्यवस्थाप्यते कर्म यया सोपशमना । निधीयते उद्वर्त्तनापवर्त्तनान्यशेषकरणायोग्यत्वेन व्यवस्थाप्यते यया सा निधत्तिः, पृषोदरादित्वादिष्टरूपसिद्धिः । "कच बन्धने" नितरां कच्यते-स्वयमेव बन्धमायाति तथाविधसंक्लिष्टाध्यवसायस्य जीवस्य कर्म, तत्प्रयुङ्क्ते जीव एव तथानुकूल्येन भवनादिति प्रयोक्तृव्यापारे 'णिग्' (प्रत्ययः), ततो निकाच्यते सकलकरणायोग्यत्वेनावश्यवेद्यतया व्यवस्थाप्यते कर्म जीवेन यया सा निकाचना । अथवा "कच बन्धने" इति चौरादिकोऽप्यस्तीति तस्येदं रूपम् । 'चः' समुच्चये । 'इतिः' परिसमाप्तौ । एतावन्त्येव करणानि, नाधिकानि, बन्धसङ्क्रमादीनां कार्याणामष्टविधत्वेन करणमप्यष्टविधमेवेति भावः ॥ २ ॥ करणानि चामूनि जीववीर्यविशेषरूपाणीति प्रथमतो वीर्यं प्ररूपयति—

विरियंतरायदेसक्खएण सव्वक्खएण वा लद्धी ।
अभिसंधिजमियरं वा, तत्तो विरियं सलेसस्स ॥ ३ ॥

(चू०)—तत्थ णिमित्तं वीरियंतरायस्स कम्मस्स खयोवसमेणं वीरियलद्धी छउमत्थाणं उप्पज्जइ, खततो केवलीणं वीरियलद्धी उप्पज्जइ । तं चउविहं-बादरसुहुमए य इइणा सहितं इयरं च । तत्थ पढमं जोगसण्णं लभते, मणजोग्गादिदव्वसंजोगातो । तस्स इमाणि एगट्ठिताणि-"जोगो विरियं थामो उच्छाह परक्कमो तहा चिट्ठा । सत्ती सामत्थं ति य जोगस्स भवंति पज्जाया ॥ १ ॥" तं च दुविहं-अभिसंधिजमियरं वत्ति । आहारातिनिमित्तं संवेयणापुव्वगं अभिसंधिजं विरियं, असंवेइया खलरसातिपरिणामणा सत्ती अणभिसंधिजं वीरितं ।

कतरेण कयरेण वीरिएण अहिगारो कस्स वा जीवस्स वीरिएण इति, अतो वुत्तं–'तत्तो वीरियं सलेसस्सत्ति,' ततो दुविहातो खयोवसमितखइयातो णिवाहेतु सलेसस्स वीरिएण अहिगारो। सह लेसाए सलेसो–जाव सजोगी केवली ताव एयं भवति। एतेन वीरिएण अहिगारो दुविहेण वि अभिसंधिजअणभिसंधिजेण सामण्णेणं। अहवा 'तत्तो'त्ति–लद्धीतो–खयोवसमियखातियातो, दुविहं पि समुग्घायजोगणिरोधोपयोगाइसु वीरियं भवति, अभिसंधिजमणभिसंधिजं च वीरियं उप्पज्जति। तत्थ जं सलेसस्स–सकम्मबंधणस्सत्ति भणितं भवति, किं कारणं? भण्णइ–अकसातीणं संपरातिगबंधाभावातो। भणितं निमित्तं–सा य लद्धित्ति। विगप्पो अभिसंधिजं अणभिसंधिजं ति। सरूवं णाम–मणजोगादिदव्वसंजोगेण परिफंदो वीरियं जोगत्ति। अहिगारो सलेसस्सेति ॥ ३ ॥ इयाणिं तस्स जोगस्स साधणं, भेदो, पदेसविसमया, कारणं च भणणति—

(म०)–'विरियमि'ति–वीर्यान्तरायस्य देशक्षयेण सर्वक्षयेण वा 'लब्धि' वीर्यलब्धिरसुमतामुपजायते। तत्र देशक्षयेण छद्मस्थानां सर्वक्षयेण च केवलिनां। तस्याश्च वीर्यलब्धेः सकाशादुपजायमानं वीर्यं सलेश्यस्यापि भवति, अलेश्यस्यापि च। केवलमिह सलेश्यवीर्येणाधिकार इति तदेवोपदर्शयति–'अभिसंधिजमियरं वा तत्तो विरियं सलेसस्स'–ततस्तस्याः क्षायिकक्षायोपशमिकरूपाया वीर्यलब्धेः सकाशात् सलेश्यस्य वीर्यमभिसन्धिजमितरद्वा भवति। तत्र यद्बुद्धिपूर्वकं धावनवल्गनादिक्रियासु नियुज्यते तदभिसन्धिजं, इतरदनभिसन्धिजम्–यद्भुक्तस्याहारस्य धातुमलत्वरूपपरिणामापादनकारणमेकेन्द्रियाणां वा तत्तत्क्रियानिबन्धनम्। एतच्चाभिसन्धिजमनभिसन्धिजं वा वीर्यमवश्यं यथासंभवं सूक्ष्मबादरपरिस्पन्दरूपक्रियासहितं, योगसंज्ञमप्येतदेव। एकार्थिकानि चास्यामूनि–"जोगो विरियं थामो, उच्छाह परक्कमो तहा चिट्ठा। सत्ती सामत्थं चिय, जोगस्स हवंति पज्जाया ॥ १ ॥" इति ॥ ३ ॥

सम्प्रत्यस्यैव योगस्य परिणामादिहेतुतां, भेदं च, तथा जीवप्रदेशेष्वस्य वैषम्येणावस्थाने कारणं च प्रतिपिपादयिषुरिदमाह—

(उ०)—वीर्यान्तरायस्य देशक्षयेण सर्वक्षयेण वा लब्धिर्भवतीति शेषः । तत्र देशक्षयेण छद्मस्थानां सर्वक्षयेण च केवलिनां वीर्यलब्धिराविर्भवति । "तत्तो" त्ति—तस्याः क्षायिकक्षायोपशमिकरूपाया वीर्यलब्धेः सकाशादुपजायमानं यत्सलेश्यस्य वीर्यमभिसन्धिजं बुद्धिपूर्वकं धावनवल्गनादिक्रियासु नियुज्यमानं, इतरद्वाऽनभिसन्धिजं भुक्ताहारस्य धातुमलत्वादिपरिणामापादकं, एकेन्द्रियादीनां वा तत्तत्क्रियानिबन्धनं, तदिहाधिकृतमिति सोपस्कारं व्याख्येयम् ।

वीर्यभेदस्थापना

- वीर्यम्
  - अलेश्यम् (अयोगीनां सिद्धानां च)
  - सलेश्यम्
    - क्षायोपशमिकम् ( छद्मस्थानाम् )
      - अकाषायिकम् (उपशान्तमोहिक्षीणमोहीनां)
        - अभिस०
        - अनभिसं०
      - सकाषायिकम् (सू०संपरायपर्यन्तानाम्)
        - अभिस०
        - अनभिसं०
    - क्षायिकम् ( सयोगीनाम् )
      - अभिसंधिजम्
      - अनभिसंधिजम्

द्विविधं द्वीर्यं छाद्मस्थिकं कैवलिकं च । उभयमपि प्रत्येकमकषायि सलेश्यं च भवति । तत्र छाद्मस्थिकमकषायि सलेश्यमुपशान्त-
क्षीणमोहानां, कैवलिकं च सयोगिकेवलिनां, छाद्मस्थिकं सूक्ष्मसंपरायान्तानां कषायिकमपि भवति । कैवलिकं चायोगिकेवलिनां
सिद्धानां चालेश्यमपि, परमिह यत् सलेश्यं तदेव परिगृह्यते, तस्यैव बन्धादिहेतुत्वात् । तच्च सूक्ष्मबादरपरिस्पन्दरूपक्रियात्मकं योगसं-
ज्ञमुच्यते । एकार्थिकान्यस्य चामूनि–"जोगो विरियं थामो उच्छाह परिक्कमो तहा चेट्ठा। सत्ती सामत्थं चिय जोगस्स हवंति पज्जाया"
इति ॥ ३ ॥ अथास्य कार्यभेदेन संज्ञाभेदं जीवप्रदेशेषु तारतम्येनावस्थाने कारणं चाह—

परिणामालंबणगहणसाहणं तेण लद्धनामतिगं । कज्जब्भासण्णोण्णप्पवेसविसमीकयपएसं ॥ ४ ॥

(चू०)–परिणामालंबणगहणस्स साहणं जं वीरियं तं परिणामालंबणगहणसाहणं । साहणं ति वा करणं ति
वा एगट्ठं । साहेति अणेण त्ति साहणं । जेण वीरिएण पंचण्हं सरीराणं पातोग्गे पोग्गले घेत्तुण सरीरत्ताते परि-
णामेति तं वीरियं परिणामगहणसाहणं ति वुच्चति । जेण वीरिएण आणापाणभासमणाणं पाउग्गपोग्गले
कायजोगेण घेत्तुण आणपाणभासमणत्ताए आलंबित्ता णिसिरति तं वीरियं आलंबणगहणसाहणं ति वुच्चति।
एत्थ वीरियं साहणं । जस्स वा वीरियस्स परिणामा य आलंबणा य जं घेप्पते दव्वं तं परिणामालंबणगहणं
तं साहणं जस्स वीरितस्स तं परिणामालंबणगहणसाहणं । दव्वणिमित्तं वीरियं उप्पज्जइ त्ति काउं घेप्पतित्ति
गहणं । एत्थ दव्वं साहणं । अहवा वीरियमेव गहणं । तं दुविहं–परिणामगहणं आलंबणगहणं च । तस्स दुवि-
हस्स वि साहणं तदंतरायक्खयक्खयोवसमलद्धी परिणामालंबणगहणाणं साहणं लद्धी । तेण लद्धिणामएण

साहणेण लद्धं मणवतिकायजोगतिगं। एत्थ लद्धी साहणं। अहवा तेण वीरिएण तिविहग्गहणविभत्तेण 'लद्धणामतिगं'त्ति मणवतिकायजोगणामतिगं। एस मूलिल्लेण अत्थेण संवत्तो। अहवा मणवइकायजोगदव्वेण उप्पण्णत्तातो लद्धं मणआदिणामतिगं, सव्वत्थ वीरियमेव विसेसियं भवति। मणसा जोगो मणजोगो, वायाए जोगो वतिजोगो, कायेण जोगो कायजोगो। जोगो वावारो। अह सव्वजीवपएसेसु तुल्लखतोवसमजलद्धिस्स तुल्लमणमादिउवट्ठंभदव्वस्स केण हेउणा विसरिसो वावारो उवलब्भतित्ति? भण्णइ–'कज्जब्भासण्णोण्णप्पवेसविसमीकयपएस'त्ति, जदत्थं चेट्ठते तं कज्जं, तस्सब्भासो आसण्णता, अण्णोण्णस्स पवेसो पदेसाणं, कज्जब्भासेण य अण्णोण्णपवेसेण य वीरितं पति विसमीकता पदेसा भवंति। कहं? भण्णति–जे कज्जभासत्थापदेसा तेसिं तिव्वयरी चेट्ठा भवति, ततो दूरत्थाणं मंदा, ततो दूरतरत्थाणं मंदतरा भवति। सा अण्णोण्णसंबंधत्तातो पदेसाणं लब्भइ। जहा संखला परोप्परबद्धा एक्कंमि वि पदेसे चालिज्जमाणे सव्वे चलंति, चलंता वि विसमप्फंदा दिट्ठा, एवं पदेसाण वि अणादिगसंबंधबद्धाणं जाणियव्वं। जति अण्णोण्णपविट्ठा न होज्जा तो कज्जब्भासत्तणेण वि विसमीकतपदेसत्तण्णं पि ण होज्ज, जहा गोपुरिसाणं। तम्हा कज्जब्भासेण अण्णोण्णपवेसेण य विसमीकयप्पदेसवीरियं पुव्वुत्तकारणेण लद्धणामतिगं चेति संबज्झति। एतेण कारणेण सव्वपदेसेसु तुल्लखयोवसमलद्धिस्स जीवस्स तुल्लमणादिविगप्पस्स वि विसमो परिफंदो जीवपदेसेसुत्ति णत्थि दोसोत्ति। जहा लोगे लोट्ठगादिणा अभिहतस्स सव्वंगेसु जुगवं वेयणा होति तहावि अभिघात-

पदेसेसु तिव्वतरा वेदणा कज्जब्भासत्तातो सेसेसु मंदतरा। एवं सव्वसरिएसु वि जीवप्पदेसेसु वीरियविसमता। जहा वा समाणलद्धियाणं इंदियाणं कम्हि वि उवउत्तस्स तंमि चेव तिव्वं विण्णाणं होति ण सेसेसु इंदिएसु विज्जमाणक्खयोवसमलद्धिएसु वि तहेहावि समाणलद्धियाणं पदेसाणं विसमपरिप्फंदत्ता दिट्ठा। तेण कारणेण परोप्परसंबद्धाणं सव्वचलियाणं कज्जब्भासत्ताए विसमचेट्ठा पदेसाणं ति णत्थि कोवि विरोधो ॥ ४॥

(म०)—'परिणामेति'—परिणमनं परिणामः, अन्तर्भूतणिजन्तात् घञ्प्रत्ययः (श्रीमल० कृ० ५—३) परिणामापादनमित्यर्थः। आल-म्ब्यत इत्यालम्बनम्, भावेऽनट् (श्रीमल० कृ० ६—२)। गृहीतिर्ग्रहणम्। तेषां साधनं-साध्यतेऽनेनेति साधनं योगसंज्ञं वीर्यम्, कर-णेऽनट् (श्रीमल० कृ० ६—४)। तथाहि—तेन वीर्यविशेषेण योगसंज्ञकेनौदारिकादिशरीरप्रायोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा चौदारिकादिरूपतया परिणमयति। तथा प्राणापानभाषामनोयोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा च प्राणापानादिरूपतया परिणमयति। परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तानेव पुद्गलानवलम्बते। यथा मन्दशक्तिः कश्चिन्नगरे परिभ्रमणाय यष्टिमवलम्बते। ततस्तदवष्टम्भतो जातसामर्थ्यविशेषः सन् तान् प्राणापानादिपुद्गलान् विसृजतीति परिणामालम्बनग्रहणसाधनं वीर्यम्। 'तेन' च वीर्येण योगसंज्ञकेन मनोवाक्कायावष्टम्भतो जायमानेन। 'लद्धनामतिग' ति लब्धं नामत्रिकम्। तद्यथा—मनोयोगो वाग्योगः काययोग इति। तत्र मनसा करणभूतेन योगो मनोयोगः, वाचा योगो वाग्योगः, कायेन योगः काययोगः। स्यादेतत्—सर्वेषु जीव-प्रदेशेषु तुल्यक्षायोपशमिकस्यादिलब्धिभावेऽपि किमिति क्वचित्प्रभूतं क्वचित् स्तोकं क्वचित्स्तोकतरमित्येवं वैषम्येण वीर्यमुपलभ्यत इत्यत आह—'कज्जे'त्यादि, यदर्थं चेष्टते तत्कार्यम्, तस्याभ्याशः, अभ्यशनमभ्याशः, 'अशूङ्' व्याप्तावित्यस्याभिपूर्वस्य घञन्तस्य

प्रयोगः, कार्याभ्याशः—कार्यस्यासन्नता निकटीभवनमित्यर्थः, तथा जीवप्रदेशानां 'अन्योऽन्यं'—परस्परं 'प्रवेशः'—शृङ्खलावयवानामिव परस्परं संबन्धविशेषः, ताभ्यां कृत्वा 'विषमीकृताः'—प्रभूताल्पाल्पतरसद्भावतो विसंस्थुलीकृताः 'प्रदेशा' जीवप्रदेशा येन जीववीर्येण तत्कार्याभ्याशान्योऽन्यप्रवेशविषमीकृतप्रदेशम् । तथाहि—येषामात्मप्रदेशानां हस्तादिगतानामुत्पाद्यमानघटादिलक्षणकार्यनैकट्यं तेषां प्रभूततरा चेष्टा, दूरस्थानामंसादिगतानां स्वल्पा, दूरतरस्थानां तु पादादिगतानां स्वल्पतरा, अनुभवसिद्धं चैतत् । अपि च लोष्टादिनाऽभिघाते सति यद्यपि सर्वप्रदेशेषु युगपद्वेदनोपजायते तथापि येषामात्मप्रदेशानामभिघातकलोष्टादिद्रव्यनैकट्यं तेषां तीव्रतरा वेदना, शेषाणां तु मन्दा मन्दतरा, तथेहापि जीवप्रदेशेषु परिस्पन्दात्मकं वीर्यमुपजायमानं कार्यद्रव्याभ्याशवशतः केषुचित्प्रभूतमन्येषु मन्दमपरेषु तु मन्दतमं भवति । एतच्चैवं जीवप्रदेशानां परस्परं संबन्धविशेषे सति भवति, नान्यथा, यथा शृङ्खलावयवानाम् । तथाहि—तेषां शृङ्खलावयवानां परस्परं संबन्धविशेषे सति एकस्मिन्नवयवे परिस्पन्दमानेऽपरेऽप्यवयवाः परिस्पन्दन्ते, केवलं केचित् स्तोकमपरे स्तोकतरमिति, संबन्धविशेषाभावे त्वेकस्मिन् चलति नापरस्यावश्यंभावि चलनम्, यथा गोपुरुषयोः, तस्मात्कार्यद्रव्याभ्याशवशतो जीवप्रदेशानां परस्परं संबन्धविशेषतश्च वीर्यं जीवप्रदेशेषु केषुचित्प्रभूतमन्येषु स्तोकतरमित्येवं वैषम्येणोपजायमानं न विरुध्यत इति ॥४॥

(उ०)—तद्वीर्यं परिणामालम्बनग्रहणसाधनं, तेन हेतुना लब्धं नामत्रिकमन्वर्थं येन तत्तथा सिद्धम् । तथाहि—तेन योगसंज्ञकेन वीर्यविशेषेणौदारिकादिशरीरप्रायोग्यान् पुद्गलान् जीवः प्रथमतो गृह्णाति, गृहीत्वा चौदारिकादिरूपतया परिणमयति । तथा प्राणापानभाषामनोयोग्यान् पुद्गलान् जीवः प्रथमतो गृह्णाति गृहीत्वा च प्राणापानादिरूपतया परिणमयति, ततो मन्दशक्तिः परिभ्रमणाय यष्टिमिव तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तानेव पुद्गलानवलम्बते, ततो ग्रहणपरिणामालम्बनसाधनं तद्ग्रहणादिसंज्ञमिष्यते ।

तदुक्तं—'[illegible] ति' । तत्परिणामालम्बनग्रहणसाधनमित्यन्वयेन परिणामादिहेतुता प्रतिपादिता । तेन मनोवाक्कायकर्मणा आत्मनो योगसंज्ञेन वीर्येण लब्धं नामत्रिकम् । मनसा करणभूतेन योगो मनोयोगः, वाचा योगो वाग्योगः, कायेन योगश्च काययोग इत्यन्वयानुरोधेन संज्ञाभेदः प्रतिपादित इति तु प्राचीनव्याख्यानम् । ननु सर्वेषु जीवप्रदेशेषु क्षायोपशमिक्यादिलब्धिसत्त्वे किमिति कश्चित्स्तोकः कश्चित्स्तोकतरमित्येवं वैषम्येण वीर्यमुपलभ्यत इत्यत आह—'कार्ये'त्यादि । यदर्थं चेष्टते तत्कार्यं तस्याभ्यास आसन्नता, तथा जीवप्रदेशानामन्योऽन्यं परस्परं प्रवेशः शृङ्खलावयवानामिव सम्बन्धविशेषस्ताभ्यां कृत्वा विषमीकृताः प्रभूताल्पाल्पत्वसम्पादनेनतया विसंस्थुलीकृताः प्रदेशा जीवप्रदेशा येन तत्तथा । तथाहि—येषामात्मप्रदेशानां हस्तादिगतानामुत्पाट्यमानघटादिकार्यनैकट्यं तेषां प्रभूततरा चेष्टा, दूरस्थानामंसादिगतानां स्वल्पा, दूरतरस्थानां तु पादादिगतानां स्वल्पतरेत्यनुभवसिद्धमेतत् । तथाहि लोष्टाद्यभिघाते सति सर्वप्रदेशेषु युगपद्वेदनोदयेऽपि येषामात्मप्रदेशानामभिघातकलोष्टादिद्रव्यनैकट्यं तेषां तीव्रतरा वेदना इतरेषां तु मन्दा मन्दतरा, तथेहापि कार्यद्रव्याभ्यासानभ्यासविशेषादात्मप्रदेशेषु वीर्यवैषम्यं भावनीयम् । एतच्च जीवप्रदेशानां मिथः सम्बन्धविशेषे सति भवति, नान्यथा, यथा शृङ्खलावयवानां, ते हि मिथः सम्बन्धविशेषादेकस्मिन्नवयवे परिस्पन्दमानेऽपरेऽपि परिस्पन्दन्ते, किन्तु केचित् स्तोकमपरे स्तोकतरमिति । सम्बन्धविशेषाभावे त्वेकस्मिंश्चलति नापरस्य चलनावश्यंभावो यथा गोपुरुषयोरिति तदुक्तं 'कार्याभ्यासान्योऽन्यप्रवेशविषमीकृतप्रदेश'मिति । ननु यत्प्रदेशावच्छेदेन लोष्टाद्यभिघातस्तत्प्रदेशावच्छेदेन वेदनोत्कर्ष इति संभवति, तस्य तद्धेतुत्वात्, यत्प्रदेशावच्छेदेन घटाद्युत्पाटनक्रिया तत्प्रदेशावच्छेदेन तद्वीर्योत्कर्ष इति तु न संभवति, तस्यास्तद्धेतुत्वात्. प्रत्युत घटोत्पाटनेच्छाजनितघटोत्पाटनप्रवृत्त्यात्मकवीर्येणैव घटोत्पाटनक्रियोत्पत्तेरिति कार्यद्रव्यनैकट्याद्वीर्योत्कर्ष इत्यायुक्त-

मिति चेन्न, औदारिकादिवर्गणाग्रहणाद्याश्रयस्य वीर्यस्यैवात्राधिकृतत्वात्, तदुत्कर्षे च कार्यद्रव्यनैकट्यस्यैव हेतुत्वात्, एकप्रदेशा हि ता ग्रहणादिगोचरमायान्ति, ततो येषु प्रदेशेषु ताः साक्षात्सन्निहितास्तेषु तद्ग्रहणादिवीर्योत्कर्षः, परम्परासन्निहितेषु तु तदपकर्षो, बाह्यप्रयत्नस्य तदवयवावच्छिन्नोत्कर्षे तु तदवयवावच्छिन्नक्रियाविशेषेच्छादिनियामकं, प्रदेशान्तरेषु तद्वैषम्ये च तत्सम्बन्धवैषम्यमिति न कोऽपि दोष इति यथागमं भावनीयम्, कृतं प्रसङ्गेन ॥ ४ ॥

**सजोगिस्स करणवीरियं भवतीति तस्स परूवणा कीरइत्ति। किं कारणं? भण्णइ–संसारत्थाणं सव्वजीवाणं जहण्णुक्कोसजोगजाणणत्थं भण्णति। तस्स इमे अत्थाहिगारा, तं जहा—**

**अविभागवग्गफड्डगअंतरठाणं अणंतरोवणिहा। जोगे परंपरावुड्ढिसमयजीवप्पबहुगं च ॥ ५ ॥**

**(चू०)–अविभागपलिच्छेयपरूवणा, वग्गणापरूवणा, फड्डगपरूवणा, अंतरपरूवणा, जोगट्ठाणपरूवणा, अणंतरोवणिहा, परंपरोवणिहा, वुड्ढिपरूवणा, समयपरूवणा, जीवसमुद्दाहारो(रे) दोण्ह वि अप्पाबहुगं ति। अविभागपलिच्छेओ णाम नत्थि विभागो जस्स सो अविभागपलिच्छेओ, सजोगिस्स करणवीरियं बुद्धीए छिज्जमाणं २ जाहे विभागं णो हव्वमागच्छति ताहे अविभागपलिच्छेदोत्ति वा वीरियपरमाणुत्ति वा भावपरमाणुत्ति वा एगट्ठा ॥५॥**

(म०)–तदेवं वीर्यं प्रतिपाद्य सम्प्रत्यस्यैव जघन्याजघन्योत्कृष्टानुत्कृष्टत्वपरिज्ञापनाय प्ररूपणां चिकीर्षुरिमानर्थाधिकारानाह— 'अविभागे'ति। योगे–योगविषये प्रथमतोऽविभागप्ररूपणा कार्या १। ततो वर्गणाप्ररूपणा २। ततः स्पर्धकस्य प्ररूपणा ३। तदनन्तरमन्तरप्ररूपणा ४। ततः स्थानप्ररूपणा ५। ततोऽनन्तरोपनिधा ६। ततः परम्परोपनिधा ७। तदनन्तरं वृद्धिप्ररूपणा ८। ततः समयप्ररू-

पणा १। ततो जीवानामल्पबहुत्वप्ररूपणेति १०।तत्र यस्यांशस्य प्रज्ञाच्छेदनकेन विभागः कर्तुं न शक्यते सोंऽशोऽविभाग उच्यते। किमुक्तं भवति? इह जीवस्य वीर्यं केवलिप्रज्ञाच्छेदनकेन छिद्यमानं छिद्यमानं यदा विभागं न प्रयच्छति तदा सोऽन्तिमोंऽशोऽविभाग इति ॥५॥

(उ०)-तदेवं वीर्यं प्रतिपाद्यास्य जघन्याजघन्योत्कृष्टानुत्कृष्टत्वबोधनाय प्ररूपणां चिकीर्षुरिमानर्थाधिकारानाह—'योगे'। योगविषये प्रथममविभागप्ररूपणा कर्त्तव्या। ततो 'वग्ग'त्ति-वर्गणाप्ररूपणा। ततः स्पर्द्धकप्ररूपणा। तदनन्तरमन्तरप्ररूपणा। ततः स्थानप्ररूपणा। ततोऽनन्तरोपनिधा। ततः परम्परोपनिधा। ततो वृद्धिप्ररूपणा। ततः समयप्ररूपणा। ततो जीवानामल्पबहुत्वप्ररूपणेति ॥ ५ ॥

तारिसा वीरियअविभागपलिच्छेया एक्केक्कंमि जीवप्पदेसे केवतिता तं णिरूवणत्थं भणणति—

पण्णाछेयणछिन्ना लोगासंखेज्जगप्पएससमा। अविभागा एक्केक्के होंति पएसे जहन्नेणं ॥ ६ ॥

(चू०)-एतेसु छेयणेसु पण्णाच्छेदणचिण्णाणं गहणं। 'पण्ण'त्ति-बुद्धी णाणं वा। ताए पण्णाए छिज्जमाणा छिण्णा वीरियअविभागा। ते किं पमाणा तं णिरूवणत्थं भण्णइ-'लोगासंखेज्जगप्पदेससम'त्ति। असंखेज्जाणं लोगाणं जावतिया आगासपदेसा तेत्तिया वीरियअविभागपलिच्छेया 'अविभागा एक्केक्के होंत्ति पएस'त्ति-एक्केक्के जीवपएसे भवंति जहण्णेणं, उक्कोसेण वि णियमादेव असंखेज्जलोगागासपदेसमेत्ता भवंति। एगम्मि जीवप्पदेसे जे जहण्णगा वीरियअविभागपलिच्छेया तेहिंतो वीरियअविभागपलिच्छेएहिंतो एगंमि चेव जीवपदेसे उक्कोसगा वीरियअविभागपलिच्छेया असंखेज्जगुणा। अविभागपलिच्छेदपरूवणा भणिया ॥ ६ ॥

(म०)-ते चाविभागा एकस्मिन् जीवप्रदेशे यावन्तो भवन्ति तावत आह—'पण्णे'ति। प्रज्ञाच्छेदनकेन छिन्नाः सन्तो ये वीर्य-

स्याविभागा जातास्ते एकैकस्मिन् जीवप्रदेशे चिन्त्यमाना जघन्येनाप्यसंख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति, उत्कर्षतोऽप्यसंख्येयलोकाकाशप्रदेशप्रमाणा एव, किन्तु ते जघन्यपदभाविवीर्याविभागापेक्षयाऽसंख्येयगुणा द्रष्टव्या इति ॥६॥

(उ०)–तत्रादौ अविभागप्ररूपणामाह—इह हि जीवस्य वीर्यं केवलिप्रज्ञाच्छेदनकेन च्छिद्यमानं यदा विभागं न दत्ते तदा योऽशो विश्राम्यति स वीर्याविभाग उच्यते। ते च प्रज्ञाच्छेदनकेन च्छिन्ना वीर्याविभागा एकैकस्मिन् जीवप्रदेशे चिन्त्यमाना जघन्येनाप्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति, उत्कर्षतोऽप्येतत्सङ्ख्या एव, किन्तु ते जघन्यपदभाविवीर्याविभागेभ्योऽसङ्ख्येयगुणा द्रष्टव्याः। 'लोकासङ्ख्येयकप्रदेशसमा' इत्यत्र लोकानां यदसङ्ख्येयकं तावत्प्रदेशसमा इत्यक्षरव्याख्या कार्या। उक्तं च–"पन्नाए अविभागं जहन्नविरियस्स वीरियं छिन्नं। एक्केक्कस्स पएसस्सऽसंखलोगप्पएससमं" इति ॥ ६ ॥

इदाणिं ते विरियअविभागपलिच्छेया किं सव्वजीवपदेसेसु सरिसा उयाहु विसरिसा तं णिरूवणत्थं वग्गणापरूवणा भण्णति—

**जेसिं पएसाण समा अविभागा सव्वतो य थोवतमा। ते वग्गणा जहन्ना अविभागहिया परं परओ॥७॥**

(चू०)–जेसिं जीवप्पदेसाणं सरिसा वीरियअविभागपलिच्छेया 'सव्वतो य थोवतम'त्ति–सव्वजीवपदेसेहिंतो जे अप्पवीरियतरा जीवप्पदेसा 'ते वग्गणा जहण्ण'त्ति–ते जीवप्पदेसा जहण्णिता वग्गणा वुच्चति। कम्हा? भण्णइ–सरिसवीरियत्तातो सव्वेसिं सरिसवीरियाणं जीवप्पदेसाणं एगा वग्गणा। ते केत्तिया सरिसवीरिया जीवप्पदेसा एगा वग्गणा भवन्ति? भण्णइ–असंखेज्जाणं लोगपत्तराणं जावतिया आगासपदेसा ताव-

त्तियाणं जीवपदेसाणं समुदाएणं पढमा एगा वग्गणा भवति, ते पतरा लोगस्स असंखेज्जतिभागो। 'अविभागहिया परंपरओ' त्ति–पढमवग्गणाजीवप्पदेसेहिंतो जे एगेण वीरीयअविभागपलिच्छेदेण अहिगा जीवप्पदेसा तेसिं समुदाएण बितिया वग्गणा भवति, ते वि जीवप्पदेसा असंखिज्जपतरमेत्ता चेव, बीयवग्गणाजीवप्पदेसेहिंतो जे एगेण वीरियअविभागपलिच्छेदेण अहिगा जीवप्पदेसा तेसिं समुदाएण ततिया वग्गणा, एवं एएण कमेणं एगुत्तरवड्डियाओ वग्गणाओ णेयव्वातो ॥ ७ ॥

(म०)–उक्ताऽविभागप्ररूपणा, सम्प्रति वर्गणाप्ररूपणामाह—'जेसिमिति'। येषां जीवप्रदेशानां 'समाः'–तुल्यसंख्या वीर्याविभागा भवन्ति सर्वतश्च–सर्वेभ्योऽपि चान्येभ्योऽपि जीवप्रदेशगतवीर्याविभागेभ्यः स्तोकतमाः ते जीवप्रदेशा घनीकृतलोकासंख्येयभागवर्त्यसंख्येयप्रतरगतप्रदेशराशिप्रमाणाः समुदिता एका वर्गणा, सा च जघन्या, स्तोकाऽविभागयुक्तत्वात्। 'अविभागाधिका परंपरत' इति–ततः परा वर्गणा एकैकेनाविभागेनाधिका वक्तव्या। तद्यथा–जघन्यवर्गणातः परे ये जीवप्रदेशा एकेन वीर्याविभागेनाभ्यधिका घनीकृतलोकासंख्येयभागवर्त्यसंख्येयप्रतरगतप्रदेशराशिप्रमाणा वर्तन्ते तेषां समुदायो द्वितीया वर्गणा। ततः परं द्वाभ्यां वीर्याविभागाभ्यामधिकानामुक्तसंख्याकानामेव जीवप्रदेशानां समुदायस्तृतीया वर्गणा। ततोऽपि त्रिभिर्वीर्याविभागैरधिकानां तावत्संख्याकानामेव जीवप्रदेशानां समुदायश्चतुर्थी वर्गणा। एवमेकैकवीर्याविभागवृद्ध्या वर्धमानानां तावतां तावतां जीवप्रदेशानां समुदायरूपा वर्गणा असंख्येया वक्तव्या इति ॥ ७ ॥

(उ०)–उक्ता अविभागप्ररूपणा, अथ वर्गणाप्ररूपणामाह—येषां जीवप्रदेशानां समाः–तुल्यसङ्ख्या वीर्याविभागाः सर्वतः–सर्वेभ्य-

श्चाल्येभ्यो जीवप्रदेशगतवीर्याविभागेभ्यः स्तोकतमास्ते जीवप्रदेशा घनीकृतलोकासङ्ख्येयभागवर्त्यसङ्ख्येयप्रतरगतप्रदेशराशिप्रमाणाः समुदिता एका वर्गणा, सा च जघन्या, सर्वस्तोकाविभागयुक्तत्वात् । परतः—तस्तदनन्तरं वर्गणा परं—केवलं अविभागाधिका—एकैकेनाविभागेनाधिका वाच्या । तथाहि—जघन्यवर्गणातः परे ये जीवप्रदेशा एकेन वीर्याविभागेनाभ्यधिका घनीकृतलोकासङ्ख्येयभागवर्त्यसङ्ख्येयप्रतरगतप्रदेशराशिप्रमाणा वर्त्तन्ते तेषां समुदायो द्वितीया वर्गणा, तदनन्तरं द्वाभ्यां वीर्याविभागाभ्यामधिकानामुक्तसङ्ख्यानामेव जीवप्रदेशानां समुदायस्तृतीया वर्गणा । एवमेकैकवीर्याविभागवृद्ध्या वर्द्धमानानां तावतां जीवप्रदेशानां समुदायरूपा वर्गणा असङ्ख्येया वाच्याः ॥ ७ ॥

भणिआ वग्गणपरूपणा । तातो केवतियातो एगुत्तरवग्गणातो गताओ तं णिरूवणत्थं फड्डगपरूवणा भण्णति—

**सेढिअसंखिअमित्ता फड्डगमेत्तो अणंतरा णत्थि । जाव असंखा लोगा तो बीयाई य पुव्वसमा ॥ ८ ॥**

(चू०)—सरिसुत्तरवड्ढीए वड्ढियाणं वग्गाणं समुदाओ फड्डगं वुच्चति । तातो णं वग्गणाओ 'सेढी' त्ति—सेढिअसंखेज्जतिभागमेत्तिओ होउण एगं फड्डगं वुच्चति । किं कारणं? भण्णइ—सरिसवड्ढिसमुदायत्ताओ एयासिं वग्गणाणं सरिसि अण्णासिं वग्गणाणं वड्ढी णत्थित्ति काउं । भणिया फड्डगपरूवणा । इदाणिं अंतरपरूवणा भण्णति—'एत्तो अणंतरा णत्थि' त्ति—तस्स फड्डगस्स चरिमवग्गणाओ अण्णस्स फड्डगस्स आदिवग्गणाए एगेणं वीरियअविभागपलिच्छेदेणं अब्भहिगा जीवप्पदेसा णत्थि, एवं दोहिं अब्भहिगा णत्थि, एवं जाव संखेज्जेहिं वीरियअविभागपलिच्छेदेहिं अब्भहिगा णत्थि, असंखज्जेहिं वीरियअविभागपलिच्छेदेहिं अब्भहिगा

'जाव असंखा लोग त्ति'। एवं असंखिज्जा लोगा अंतरं।
अत्थि। तस्स असंखज्जस्स पमाणावधारणत्थं भण्णइ– पढमफड्डगचरिमवग्गणाओ
असंखज्जाणं लोगाणं जत्तिया आगासपदेसा तत्तिएहिं वीरियअविभागपलिच्छेदेहिं पढमवग्गणाओ बितिबितियफड्डगआदिवग्गणा अब्भहिया। 'तो वीयाई पुव्वसम'त्ति–ततो बितियफड्डगस्स एगो वीरियअविभागपगवग्गणा एगेणं वीरियाविभागपलिच्छेदेणं अब्भहिगा। एवं वग्गणाए वग्गणाए
लिच्छेओ उत्तरं णेयव्वो जाव सेढिअसंखज्जतिभागमित्ताओ वग्गणाओ सरिसुत्तराओ गंतूणं बितियं फड्डगं।
[बितियफड्डगस्स] एवं जा बितीयफड्डगस्स परूवणा भणिया सा ततियफड्डगस्स वि अहीणमणतिरित्ता भाणियव्वा। अंतरगव्वा जाव चरिमस्स उक्कोसवीरियस्स फड्डगस्स बितियफड्डगस्स सरिसा एव परूवणा भाणि-
परूवणा भणिया ॥ ८ ॥

(म०)–तान्न कियत्य इति तन्निरूपणार्थं स्पर्धकप्ररूपणामाह—'सेढी'ति। इह घनीकृतस्य लोकस्य या एकैकप्रदेशपङ्क्तिरूपा श्रेणिस्तस्याः श्रेणेरसंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्मात्राः–तावत्प्रमाणा यथोक्तस्वरूपा वर्गणाः समुदिता एकं स्पर्धकं, स्पर्धन्ते इवोत्तरोत्तरवृद्ध्या वर्गणा अत्रेति स्पर्धकम् "कृद्बहुलमिति" (श्रीम० कृ० १–११) वचनादधिकरणे 'वुञ्'। उक्ता स्पर्धकप्ररूपणा। साम्प्रतमन्तरप्ररूपणामाह–'एत्तो अणंतरा नत्थि'। इतः–पूर्वोक्तस्पर्धकगतचरमवर्गणायाः परतो जीवप्रदेशा अनन्तरा न सन्ति। किमुक्तं भवति? इत ऊर्ध्वमेकैकवीर्याविभागवृद्ध्या निरन्तरं वर्धमाना जीवप्रदेशा न लभ्यन्ते किन्तु सान्तरा एव, तथाहि–पूर्वोक्तस्पर्धकगतचरमवर्गणायाः परतो जीवप्रदेशा नैकेन वीर्याविभागेनाधिकाः प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि चतुर्भिः,

यावन्नापि सङ्ख्येयैः, किन्त्वसङ्ख्येयैरेव–असङ्ख्येयलोकाकाशप्रदेशप्रमाणैरभ्यधिकाः प्राप्यन्ते। ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य प्रथमा वर्गणा। 'तो बीयाई य पुव्वसम' त्ति–ततो द्वितीयस्पर्धकप्रथमवर्गणातः परतो द्वितीयादयो वर्गणाः पूर्वसमाः–पूर्वस्पर्धकस्येव वक्तव्या इत्यर्थः, तथाहि–प्रथमवर्गणायाः परतो जीवप्रदेशानामेकेन वीर्याविभागेनाधिकानां समुदायो द्वितीया वर्गणा। द्वाभ्यां वीर्याविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा। एवं तावद्वाच्यं यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा वर्गणा भवन्ति। तासां च समुदायो द्वितीयं स्पर्धकम्। ततः परं पुनरप्येकेन वीर्याविभागेनाधिका जीवप्रदेशा न लभ्यन्ते, नापि द्वाभ्याम्, नापि त्रिभिः, यावन्नापि सङ्ख्येयैः, किं त्वसङ्ख्येयैरेव–असङ्ख्येयलोकाकाशप्रदेशप्रमाणैरभ्यधिकाः प्राप्यन्ते। ततस्तेषां समुदायस्तृतीयस्य स्पर्धकस्य प्रथमा वर्गणा। तत एकैकवीर्याविभागवृद्धया द्वितीयादयो वर्गणास्तावद्वाच्या यावच्छ्रेण्यसङ्ख्येयभागगतप्रदेशराशिप्रमाणा भवन्ति। तासां च समुदायस्तृतीयं स्पर्धकम्। एवमसङ्ख्येयानि स्पर्धकानि वाच्यानीति॥ ८ ॥

(उ०)–ताश्च कियत्य इति तन्निरूपणाय स्पर्धकप्ररूपणामाह––श्रेणिर्घनीकृतलोकस्यैकैकप्रदेशपङ्क्तिरूपा तस्या असङ्ख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्मात्रा उक्तस्वरूपा वर्गणा एकं स्पर्द्धकं, स्पर्द्धन्त इवोत्तरोत्तरतुल्यवृद्धया वर्गणा अत्रेति व्युत्पत्तेः। उक्ता स्पर्द्धकप्ररूपणा। अथान्तरप्ररूपणामाह–इतः पूर्वोक्तस्पर्द्धकगतचरमवर्गणायाः परतो जीवप्रदेशा अनन्तरा न सन्ति–एकैकवीर्याविभागवृद्धया निरन्तरं वर्द्धमाना न लभ्यन्ते इत्यर्थः, किन्तु यावदसङ्ख्येया लोकास्तावत्सान्तरा एव भवन्ति। न हि पूर्वोक्तस्पर्द्धकगतचरमवर्गणायाः परतो जीवप्रदेशा एकद्वित्रादिवीर्याविभागैरधिकाः प्राप्यन्ते, नापि सङ्ख्येयैः, नाप्यसङ्ख्येयैः, किन्त्वसङ्ख्येयलोकाकाशप्रदेशप्रमाणैरेवाधिकाः प्राप्यन्त इति। ततस्तेषां समुदायो द्वितीयस्पर्द्धकस्य प्रथमा वर्गणा। 'तो' त्ति–ततो

द्वितीयस्पर्द्धकप्रथमवर्गणायाः परतो द्वितीयाद्या वर्गणाः पूर्वसमाः–पूर्वस्पर्द्धकवद्वक्तव्याः । तथाहि–प्रथमवर्गणायाः परतो जीवप्रदेशानामेकेन वीर्याविभागेनाधिकानां समुदायो द्वितीया वर्गणा, द्वाभ्यामधिकानां तृतीया, एवं तावद्वाच्यं यावच्छ्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा वर्गणा भवन्ति। तासां च समुदायो द्वितीयं स्पर्द्धकम्। ततः पुनरप्येकद्वित्रादिभिः संख्येयैरसंख्येयैर्वा वीर्याविभागैरधिका जीवप्रदेशा न लभ्यन्ते, किं त्वसंख्येयलोकाकाशप्रदेशप्रमाणैरेवाधिकाः प्राप्यन्ते, तेषां समुदायस्तृतीयस्पर्द्धकस्य प्रथमवर्गणा। तत एकैकवीर्याविभागवृद्ध्या द्वितीयाद्या वर्गणाः श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा वक्तव्याः, तासां समुदायस्तृतीयं स्पर्द्धकम्। एवमसंख्येयानि स्पर्धकानि वाच्यानि ॥ ८ ॥

इदाणिं ठाणपरूवणा। ताइं फड्डाइं केवतिताइं ? भण्णइ—

सेढिअसंखियमित्ताइं फड्डगाइं जहन्नयं ठाणं । फड्डगपरिवुड्ढि अओ अंगुलभागो असंखतमो ॥९॥

(चू०)'सेढिअसंखिज्जमेत्ताणि फड्डगाणि जहण्णगं ठाणं'ति–तासिं सेढीए असंखिज्जतिभागमित्ताणि फड्डगाणि, एसा एगजीवस्स जहण्णवीरियस्स फड्डगपरूवणा भणिया। एवं जहण्णगं जोगठाणं भवति। ततो अण्णस्स जीवस्स अहिगतरवीरियस्स अप्पतरा जीवप्पदेसा होतूणं पढमवग्गणा णिप्पज्जति। बितियवग्गणा ततो एगेणं वीरियअविभागेण अब्भहिगा, जीवप्पदेसेहिं हीणतरगा लब्भति। एवं एगुत्तरियाए वीरियअविभागपलिच्छेयवुड्ढीए जीवप्पदेसहाणीए य फड्डगं णिप्पातिज्जति। एवं जाव सेढीए असंखेज्जतिभागमेत्ताणि फड्डगाणि। एसा पढमं अजहण्णवीरियठाणं पत्तस्स जीवस्स फड्डगपरूवणा भणिया। एवं बितीतं जोगठाणं। एवं जहा जहा

वीरियं परिवड्ढति तहा तहा फड्डगेहिं परिवुड्ढाणि जोगठाणाणि होन्ति, ताणि सेढिअसंखिज्जतिभागमेत्ताणि। एतेसु जोगट्ठाणेसु करणवीरियसहिता सव्वजीवा वट्टंति। भणिता ठाणपरूवणा। इदाणिं ताणि जोगट्ठाणाणि काए फड्डगस्स परिवुड्ढीए वड्ढिताणि त्ति तं णिरुवणत्थं अणंतरोवणिहिता भण्णति। 'अणंतरोवणिहि'त्ति– उवणिहाणं उवणिहा, अणंतरेण उवणिहा अणंतरोवणिहा, अणंतरं जोगट्ठाणं पडुच्च मग्गणा–ताए अणंतरोवणिहाए पढमातो जोगट्ठाणातो बितियं जोगठाणं केवतिएहिं फड्डगेहिं अब्भहिगं? 'फड्डगपरिवुड्ढि'त्ति–फड्डगाणं परिवुड्ढी फड्डगपरिवुड्ढी। 'अतो'त्ति–पढमातो जोगठाणातो बितियं जोगट्ठाणं 'अंगुलभागो असंखतमो'त्ति– अंगुलस्स असंखेज्जतिभागे जत्तिया आगासपएसा तत्तिएहिं फड्डगेहिं पढमजोगट्ठाणातो बितीयं जोगट्ठाणं अब्भहिगं। किं कारणं? भण्णइ–पढमे जोगट्ठाणे बहुगा जीवप्पदेसा एगं फड्डगं हवति। बितिए जोगट्ठाणे वीरियबहुत्तणाओ थोवप्पदेसा फड्डगं लब्भति। एतेण कारणेणं पढमजोगठाणातो बितितं जोगठाणं अंगुलअसंखेज्जतिभागमेत्तेहिं अब्भहियं। पढमजोगठाणस्स चरिमफड्डगस्स चरिमाए वग्गणाए जे वीरियअविभागपलिच्छेदा तेहिंतो बितियस्स जोगठाणस्स आदिफड्डगस्स आदिवग्गणाते वीरियअविभागपलिच्छेया असंखेज्जेहिं वीरियअविभागपलिच्छेएहिं अब्भहिगा। एवं बितितातो ततितस्स, ततितातो चउत्थस्स, एवं जाव उक्कोसगं दुचरिमातो उक्कोसगचरिमजोगठाणस्स आदिफड्डगस्स आदिवग्गणाए वीरियअविभागपलिच्छेया असंखेज्जेहिं वीरियअविभागपलिच्छेदेहिं अब्भहिगा। भणिया अणंतरोवणिहा ॥ ९ ॥

बन्धनकरणे योगप्ररूपणा.

(मलय०)-तदेवं कृताऽन्तरप्ररूपणा, संप्रति स्थानप्ररूपणां करोति—'सेढी'त्ति। इह पूर्वोक्तानि स्पर्धकानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि जघन्यं योगस्थानं भवति। एतच्च सूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य भवप्रथमसमये वर्तमानस्य प्राप्यते। ततोऽन्यस्य किञ्चिदधिकतरवीर्यस्य येऽल्पतरवीर्या जीवप्रदेशास्तेषां समुदायः प्रथमा वर्गणा। तत एकेन वीर्याविभागेन वृद्धानां समुदायो द्वितीया वर्गणा। द्वाभ्यां वीर्याविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा। त्रिभिर्वीर्याविभागैरधिकानां समुदायश्चतुर्थी वर्गणा। एवं तावद्वाच्यं यावच्छ्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा भवन्ति। तासां समुदायः प्रथमं स्पर्धकम्। ततः प्राक्तनयोगस्थानप्रदर्शितप्रकारेण द्वितीयादीन्यपि स्पर्धकानि वाच्यानि। तानि च तावद्वाच्यानि यावच्छ्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि भवन्ति, ततस्तेषां समुदायो द्वितीयं योगस्थानम्। ततोऽन्यस्य जीवस्याधिकतमवीर्यस्योपदर्शितप्रकारेण तृतीयं योगस्थानं वाच्यम्। एवमन्यान्यजीवापेक्षया तावद्योगस्थानानि वाच्यानि, यावत्सर्वोत्कृष्टं योगस्थानं भवति। इह द्वितीये योगस्थाने प्रथमे स्पर्धके प्रथमवर्गणायां जीवप्रदेशाः प्रथमयोगस्थानचरमस्पर्धकचरमवर्गणागतवीर्याविभागापेक्षया असंख्येयैर्वीर्याविभागैरधिकाः प्राप्यन्ते। तृतीयेऽपि योगस्थाने प्रथमस्पर्धके प्रथमवर्गणायां जीवप्रदेशा द्वितीययोगस्थानचरमस्पर्धकचरमवर्गणागतवीर्याविभागापेक्षयाऽसंख्येयैर्वीर्याविभागैरधिकाः प्राप्यन्ते। एवं सर्वेष्वपि द्रष्टव्यम्। तानि च योगस्थानानि सर्वाण्यपि कियन्ति भवन्तीतिचेद्, उच्यते—श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि। ननु जीवानामनन्तत्वात्प्रतिजीवं च योगस्थानस्य प्राप्यमाणत्वादनन्तानि योगस्थानानि प्राप्नुवन्ति, कथमुच्यते श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानीति ? नैष दोषः, यत एकैकस्मिन् योगस्थाने सदृशे सदृशे वर्तमानाः स्थावरजीवा अनन्ताः प्राप्यन्ते। ततः सर्वजीवापेक्षयापि सर्वाणि योगस्थानानि केवलिप्रज्ञया परिभाव्यमानानि यथोक्तप्रमाणान्येव प्राप्यन्ते, नोनाधिकानीति। कृता

स्थानप्ररूपणा। साम्प्रतमनन्तरोपनिधावसरः। तत्रोपनिधानमुपनिधा, धातूनामनेकार्थत्वान्मार्गणमित्यर्थः। अनन्तरेणोपनिधा अनन्तरोपनिधा, अनन्तरं योगस्थानमधिकृत्योत्तरस्य योगस्थानस्य स्पर्धकविषये मार्गणमित्यर्थः। तदेवाह—'फड्डग'इत्यादि। अतः प्रथमाद्योगस्थानात् द्वितीयादिषु योगस्थानेषु प्रत्येकं स्पर्धकानां परिवृद्धिरंगुलभागोऽसंख्येयतमः—अङ्गुलमात्रक्षेत्रसत्केऽसंख्येयतमे भागे यावान् प्रदेशराशिस्तावत्प्रमाणानि पूर्वपूर्वयोगस्थानगतस्पर्धकापेक्षयोत्तरस्मिन्नुत्तरस्मिन् योगस्थाने स्पर्धकान्यधिकानि भवन्तीत्यर्थः। कथमेवं ज्ञायत इति चेद्, उच्यते—इह प्रथमयोगस्थानगतवर्गणापेक्षया द्वितीययोगस्थानगतवर्गणा मूलत एव सर्वा अपि हीनहीनतरजीवप्रदेशा भवन्ति, प्रभूतप्रभूततरवीर्याणां जीवप्रदेशानां स्तोकस्तोकतरतया प्राप्यमाणत्वात्। ततोऽत्र विचित्रवर्गणाबाहुल्यसंभवतो यथोक्तं स्पर्धकबाहुल्यमुपपद्यत एव। एवमुत्तरोत्तरेष्वपि योगस्थानेषु पूर्वपूर्वयोगस्थानगतस्पर्धकापेक्षया स्पर्धकबाहुल्यं परिभावनीयमिति ॥ ९ ॥

(उ०)—तदेवं कृताऽन्तरप्ररूपणा, अथ स्थानप्ररूपणां करोति—श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि पूर्वोक्तस्पर्द्धकानि जघन्यं योगस्थानं भवति। एतच्च सूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य भवप्रथमसमये वर्त्तमानस्य प्राप्यते। ततोऽन्यस्य जीवस्याधिकतरवीर्यस्य येऽल्पतरवीर्या जीवप्रदेशास्तेषां समुदायः प्रथमा वर्गणा। तत एकैकवीर्याविभागवृद्ध्या श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा वर्गणा वाच्याः। तासां समुदायः प्रथमं स्पर्द्धकम्। ततः प्रागुपदर्शितदिशा द्वितीयादीन्यपि स्पर्द्धकानि वाच्यानि, यावच्छ्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि भवन्ति। तेषां समुदायो द्वितीयं योगस्थानम्। ततोऽन्यस्य जीवस्याधिकतमवीर्यस्योपदर्शितनीत्या तृतीयं योगस्थानं वाच्यम्। एवमन्यान्यजीवापेक्षया तावद्योगस्थानानि वाच्यानि यावत्सर्वोत्कृष्टं योगस्थानमायाति। एतानि च सर्वाणि श्रेण्यसंख्येयभागगतप्रदेशप्रमाणानि भवन्ति। ननु जीवानामनन्तत्वादनन्तानि योगस्थानानि भवन्ति प्रतिजीवं योगस्थानसंभवादिति

नोनसंख्या युक्तेति चेद्, मैवं, एकैकस्मिन् सदृशयोगस्थाने वर्तमानानां स्थावरजीवानामनन्तानां प्राप्यमाणत्वात्सर्वजीवापेक्षया सर्वयोगस्थानानामुक्तसंख्यानामेव केवलिप्रज्ञया परिदृष्टत्वात्। कृता स्थानप्ररूपणा, अथानन्तरोपनिधावसरः। तत्रोपनिधानमुपनिधा, धातूनामनेकार्थत्वान्मार्गणमित्यर्थः, अनन्तरेणोपनिधाऽनन्तरोपनिधा, अनन्तराद्योगस्थानादुत्तरयोगस्थाने स्पर्धकसंख्यामार्गणमित्यर्थः। तदेवाह- अतः प्रथमाद्योगस्थानाद् द्वितीयादिषु योगस्थानेषु प्रत्येकं स्पर्द्धकानां परिवृद्धिरङ्गुलभागोऽसंख्येयतमः-अङ्गुलमात्रक्षेत्रसम्बन्धिन्यसंख्येयभागे यावन्तः प्रदेशास्तावन्मानानि पूर्वपूर्वयोगस्थानगतस्पर्द्धकापेक्षयोत्तरोत्तरयोगस्थाने स्पर्द्धकान्यधिकानि भवन्तीत्यर्थः। इयमत्र भावना-इह प्रथमयोगस्थानवर्गणातः सर्वा अपि द्वितीययोगस्थानगतवर्गणा मूलत एव हीनहीनतरजीवप्रदेशा भवन्ति, बहुबहुतरवीर्याणां जीवप्रदेशानां स्तोकस्तोकतरतयैवोपलम्भात्। ततोऽत्रादित एव वर्गणानामल्पप्रदेशतया महावकाशत्वेन विचित्रवर्गणाबाहुल्यसंभवाद्यथोक्तं स्पर्धकबहुत्वं सङ्गच्छते। एवमुत्तरोत्तरेष्वपि योगस्थानेषु स्पर्धकबाहुल्यं भावनीयम् ॥ ९ ॥

इदाणिं एतेसिं जोगठाणाणं दुगुणदुगुणवड्डियाणि जोगठाणाणि किं अत्थि णत्थित्ति तं णिरूवणत्थं परंपरोवणिहा भण्णइ। परंपरेण उवणिहा परंपरोवणिहा, जहा जहण्णातो जोगठाणातो कत्तियाणि जोगठाणाणि गतूणं (गंतूणं) दुगुणवड्डित्ताणि जोगठाणाणि फड्डगेहिं भवंति, तं निरूवणत्थं भण्णति—

**सेढिअसंखियभागं गंतुं गंतुं हवंति दुगुणाइं। पल्लासंखियभागो णाणागुणहाणिठाणाणि ॥ १० ॥**

(चू०)—सेढिअसंखेज्जतिभागे जत्तिया आगासपदेसा तत्तियाणि जोगट्ठाणाणि गंतूणं पढमातो जोगट्ठाणातो दुगुणवुड्ढियं जोगठाणं लब्भति फड्डगाणि पडुच्च। ततो पुणो तत्तियातिं चेव जोगट्ठाणातिं गंतूणं वितियं दु-

गुणवड्ढियं जोगठाणं लब्भति। एवं जाव उक्कोसगं जोगठाणं। तातिं दुगुणवड्ढिताइं जोगट्ठाणातिं केवतियातिं तं णिरूवणत्थं भण्णइ–'पल्लासंखियभागो'त्ति। सुहमस्स अद्धापलिओवमस्स जत्तिया समया तेसिं असंखेज्जतिभागमेत्ताणि दुगुणवुड्ढिट्ठाणाणि। 'णाणागुणहाणिट्ठाणाणि'त्ति–उक्कोसातो जोगट्ठाणातो आरब्भ जाव जहण्णगं जोगठाणं एतितं अब्भंतरे जाणि चेव दुगुणवड्ढिठाणाणि ताणि चेव दुगुणहाणिठाणाणि वि भवंति। इदाणिं एगंमि दुगुणवड्ढिहाणंतरे जाणि जोगट्ठाणाणि सव्वदुगुणवड्ढिहाणिट्ठाणाणि य कतराणि? अप्पाणि वा बहुताणि वा भण्णइ–सव्वत्थोवाणि दुगुणवड्ढिट्ठाणाणि। एगंमि दुगुणवड्ढिठाणंतरे जोगठाणाणि असंखेज्जगुणाणि। परंपरोपणिहा भणिता ॥१०॥

(मलय०)–तदेवं कृताऽनन्तरोपनिधा। साम्प्रतं परम्परोपनिधाया अवसरः। तत्र परम्परया उपनिधा–मार्गणं परम्परोपनिधा। तां चिकीर्षुराह—'सेढि'त्ति। प्रथमाद्योगस्थानादारभ्य श्रेणेरसंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्मात्राणि योगस्थानानि गत्वा गत्वा–अतिक्रम्यातिक्रम्य यद्यत्परं योगस्थानं तत्र तत्र पूर्वयोगस्थानापेक्षया॰ स्पर्धकानि द्विगुणानि भवन्ति। एतदुक्तं भवति–प्रथमे योगस्थाने यावन्ति स्पर्धकानि भवन्ति तदपेक्षया श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरे योगस्थाने द्विगुणानि स्पर्धकानि भवन्ति। ततः पुनरपि ततो योगस्थानात्परतस्तावन्ति योगस्थानान्युल्लङ्घ्यापरस्मिन् योगस्थाने द्विगुणानि स्पर्धकानि प्राप्यन्ते। एवं भूयो भूयस्तावद्वाच्यं यावदन्तिमं योगस्थानम्। कियन्ति पुनर्योगस्थानानि पूर्वपूर्वयोगस्थानापेक्षया द्विगुणद्विगुणस्पर्धकानि भवन्त्यत आह–'पल्लासंखियभागो'त्ति सूक्ष्मस्याद्धापल्योपमस्यासंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि

द्विगुणवृद्धिस्थानानि भवन्ति । 'नाणागुणहाणिठाणाणि' त्ति-नानारूपाणि यानि गुणहानिस्थानानि-द्विगुणहानिस्थानानि तान्यपि पल्योपमासंख्येयभागगतसमयप्रमाणानि भवन्ति । तथाहि-उत्कृष्टाद्योगस्थानादारभ्याधोऽधोऽवतरणे सति यदा श्रेण्यसंख्येयभागगत-प्रदेशराशिप्रमाणानि योगस्थानान्युल्लङ्घितानि भवन्ति तदाऽनन्तरेऽधस्तने योगस्थानेऽन्तिमयोगस्थानगतस्पर्धकापेक्षयाऽर्धानि स्पर्ध-कानि प्राप्यन्ते । ततः पुनरपि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणेषु योगस्थानेष्वतिक्रान्तेष्वधस्तने योगस्थानेऽर्धानि प्राप्यन्ते । एवं तावद्वाच्यं यावज्जघन्यं योगस्थानमिति द्विगुणवृद्धिस्थानतुल्यानि द्विगुणहानिस्थानानि । यानि चामूनि द्विगुणवृद्धिस्थानानि द्विगुणहानिस्थानानि वा तानि सर्वस्तोकानि । तेभ्यः पुनरेकस्मिन् द्विगुणवृद्धिस्थानयोर्द्विगुणहानिस्थानयोर्वाऽन्तरे यानि योगस्था-नानि तान्यसंख्येयगुणानि इति ॥ १० ॥

(उ०)-तदेवं कृताऽनन्तरोपनिधा। अथ परम्परया मार्गणरूपां परम्परोपनिधां चिकीर्षुराह—प्रथमाद्योगस्थानाच्छ्रेण्यसंख्येयभागं ग-त्वा गत्वोत्तरोत्तरयोगस्थाने द्विगुणानि स्पर्धकानि भवन्ति । अयं भावः-प्रथमे योगस्थाने यावन्ति स्पर्द्धकानि भवन्ति तदपेक्षया श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि योगस्थानान्यतिक्रम्यानन्तरयोगस्थाने द्विगुणानि स्पर्द्धकानि भवन्ति । ततो योगस्थानात् परतस्तावन्ति योगस्थानान्यतीत्यापरस्मिन् योगस्थाने द्विगुणानि प्राप्यन्ते । एवमन्तिमयोगस्थानपर्यन्तं वक्तव्यम्। तानि च द्विगुण-द्विगुणस्पर्द्धकानि पल्यासंख्येयभागः-सूक्ष्माद्धापल्योपमस्यासंख्येयतमे भागे यावन्तः समयास्तावन्ति द्विगुणवृद्धिस्थानानि भवन्तीत्यर्थः। 'नानागुणहाणिठाणाणि' त्ति-नानारूपाणि यानि गुणहानिस्थानानि-द्विगुणहानिस्थानानि तान्यपि पल्यासंख्येयभागगतसमयप्रमाणा-न्येव, ऊर्ध्वारोहणेन वृद्धिस्थानानामधोऽवतरणेन हानिस्थानानां च तौल्यात्। तथाहि-उत्कृष्टयोगस्थानादधोऽवतरणे श्रेण्यसंख्येयांश-

प्रदेशप्रमाणयोगस्थानोल्लङ्घनेऽधस्तनयोगस्थाने चरमयोगस्थानस्पर्द्धकापेक्षयाऽर्द्धानि स्पर्द्धकानि प्राप्यन्ते । ततः पुनरपि तावत्सु योगस्थानेष्वतिक्रान्तेष्वधस्तने योगस्थानेऽर्द्धानि प्राप्यन्ते । एवं तावद्वाच्यं यावज्जघन्यं योगस्थानमिति । ननु द्विगुणानां हानिर्द्विगुणहानिरित्यर्थोऽर्द्धहानावनुपपन्न इति चेत्, सत्यं तत्तद् द्विगुणवृद्ध्यवधिसमाप्त्यवच्छिन्नहानेरेवेह द्विगुणहानेर्विवक्षितत्वात्, एतत्सूचार्थमेव ग्रन्थे 'नाने'त्ति पदम् । अमूनि च यानि द्विगुणवृद्धिस्थानानि वा द्विगुणहानिस्थानानि वा तानि सर्वस्तोकानि, तेभ्यः पुनरेकस्मिन् द्विगुणवृद्धिस्थानयोर्द्विगुणहानिस्थानयोर्वाऽन्तराले यानि योगस्थानानि तान्यसंख्येयगुणानि ॥ १० ॥

इदाणिं एतेसु जोगट्ठाणेसु जीवाणं कतिविहा वुड्ढी वा हाणी वा केवतियं वा कालं वड्ढंति वा हातंति वा तं णिरूवणत्थं भण्णति वुड्ढिपरूपणा—

वुड्ढीहाणिचउक्कं तम्हा कालोत्थ अंतिमल्लाणं । अंतोमुहुत्तमावलिअसंखभागो य सेसाणं ॥११॥

(चू०)-अत्थि असंखेज्जतिभागवड्ढी, संखेज्जतिभागवड्ढी, संखेज्जगुणवड्ढी, असंखेज्जगुणवड्ढी । हाणिठाणेसु त एवं हाणी वि । 'तम्हा कालोत्थ अंतिमल्लाणं'-तेसु चउसु वड्ढीठाणेसु हाणिठाणेसु त 'अंतमल्लाणं' ति-असंखेज्जगुणवड्ढीअसंखिज्जगुणहाणिठाणाणं अंतोमुहुत्तकालं वड्ढी वा हाणी वा । आवलियअसंखेज्जभागो य 'सेसाणं' ति—असंखेज्जभागवड्ढीसंखेज्जभागवड्ढीसंखेज्जगुणवड्ढीअसंखेज्जभागहाणीसंखेज्जभागहाणीसंखेज्जगुणहाणीठाणाणं आवलियाए असंखेज्जतिभागमेत्तं कालं वड्ढी वा हाणी वा। एवं ताव उक्कोसेण । जहन्नेण एक्कं वा दो वा समया वड्ढी वा हाणी वा। एवं सव्वत्थ वड्ढीहाणी परूपणा भणिता ॥ ११ ॥

(२) योगस्थानचित्रम्

(१) योगस्पर्धकस्य चित्रम्



प्रदेशाग्रप्रमाणयोगस्थानोल्लङ्घनेऽधस्तनयोगस्थाने चरमयोगस्थानस्पर्द्धकापेक्षयाऽर्द्धानि स्पर्द्धकानि प्राप्यन्ते । ततः पुनरपि तावत्सु योगस्थानेष्वतिक्रान्तेष्वधस्तने योगस्थानेऽर्द्धानि प्राप्यन्ते । एवं तावद्वाच्यं यावज्जघन्यं योगस्थानमिति । ननु द्विगुणानां हानिर्द्विगुणहानिरित्यर्थोऽर्द्धहानावनुपपन्न इति चेत्, सत्यं तत्तद् द्विगुणवृद्ध्यवधिसमाप्त्यवच्छिन्नहानेरेवेह द्विगुणहानेर्विवक्षितत्वात्, एतत्सूचार्थमेव सूत्रे 'नाने'त्ति पदम् । अमूनि च यानि द्विगुणवृद्धिस्थानानि वा द्विगुणहानिस्थानानि वा तानि सर्वस्तोकानि, तेभ्यः पुनरेकस्मिन् द्विगुणवृद्धिस्थानयोर्द्विगुणहानिस्थानयोर्वाऽन्तराले यानि योगस्थानानि तान्यसंख्येयगुणानि ॥ १० ॥

इदाणिं एतेसु जोगट्ठाणेसु जीवाणं कतिविहा वुड्ढी वा हाणी वा केवतियं वा कालं वड्ढंति वा हातंति वा तं णिरूवणत्थं भण्णति वुड्ढिपरूवणा—

**वुड्ढीहाणिचउक्कं तम्हा कालोत्थ अंतिमल्लाणं । अंतोमुहुत्तमावलिअसंखभागो य सेसाणं ॥११॥**

(चू०)-अत्थि असंखेज्जतिभागवड्ढी, संखेज्जतिभागवड्ढी, संखेज्जगुणवड्ढी, असंखेज्जगुणवड्ढी । हाणिठाणेसु न एवं हाणी चि । 'तम्हा कालोत्थ अंतिमल्लाणं'-तेसु चउसु वड्ढीठाणेसु हाणिठाणेसु त 'अंतमल्लाणं' ति-असंखेज्जगुणवड्ढीअसंखिज्जगुणहाणिठाणाणं अंतोमुहुत्तकालं वड्ढी वा हाणी वा । आवलियअसंखेज्जभागो य 'सेसाणं' ति—असंखेज्जभागवड्ढीसंखेज्जभागवड्ढीसंखेज्जगुणवड्ढीअसंखेज्जभागहाणीसंखेज्जभागहाणीसंखेज्जगुणहाणीठाणाणं आवलियाए असंखेज्जतिभागमेत्तं कालं वड्ढी वा हाणी वा । एवं ताव उक्कोसेण । जहन्नेण एक्कं वा दो वा समया वड्ढी वा हाणी वा । एवं सव्वत्थ वड्ढीहाणी परूपणा भणिता ॥ ११ ॥

(मलय०)–तदेवं कृता परम्परोपनिधा, साम्प्रतं वृद्धिप्ररूपणां चिकीर्षुराह—'वुड्ढी'त्ति। क्षयोपशमो हि वीर्यान्तरायस्य क्वचित्कदाचित्कथंचिद्भवतीति तन्निबन्धनानि योगस्थानानि कदाचित्प्रवर्धमानानि भवन्ति कदाचिद्धीयमानानि। तत्र वृद्धिश्चतुर्धा, तद्यथा–असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः। एवं हानिरपि चतुर्धा, तद्यथा–असंख्येयभागहानिः, संख्येयभागहानिः, संख्येयगुणहानिः, असंख्येयगुणहानिः। यस्मादेवं वृद्धिहान्योश्चतुष्कं वर्तते तस्मादत्र प्रत्येकं कालो नियतो वक्तव्यः। तत्रान्तिमयोर्वृद्धिहान्योरसंख्येयगुणलक्षणयोः प्रत्येकं कालोऽन्तर्मुहूर्तम्। शेषाणां त्वाद्यानां तिसृणां वृद्धीनां हानीनां चावलिकाया असंख्येयभागमात्रः। एतदुक्तं भवति–तथाविधक्षयोपशमभावतो विवक्षितात् योगस्थानात् प्रतिसमयमपरस्मिन्नपरस्मिन्नसंख्येयगुणवृद्धे योगस्थाने यद्वर्तते जीवः साऽसंख्येयगुणवृद्धिः। यत्पुनः क्षयोपशमस्य मन्दमन्दतमभावतः प्रतिसमयमपरस्मिन्नपरस्मिन्नसंख्येयगुणहीने योगस्थाने वर्तते साऽसंख्येयगुणहानिः। सा चासंख्येयगुणवृद्धिरसंख्येयगुणहानिर्वोत्कर्षतोऽन्तर्मुहूर्तं कालं

योगस्थानानां जीवं प्रति वृद्धेर्वा हानेर्वा कालस्थापना।

| संख्या | वृद्धिर्हानिर्वा (योगानाम्) | जघन्यकालः | उत्कृष्टकालः |
|---|---|---|---|
| १ | असंख्येयभागवृद्धेः | १–२ समयौ | आवल्यसंख्येयभागः |
| २ | संख्येयभागवृद्धेः | ,, | ,, |
| ३ | संख्येयगुणवृद्धेः | ,, | ,, |
| ४ | असंख्यगुणवृद्धेः | ,, | अन्तर्मुहूर्त्तम् |
| १ | असंख्येयभागहानेः | ,, | आवल्यसंख्येयभागः |
| २ | संख्येयभागहानेः | ,, | ,, |
| ३ | संख्येयगुणहानेः | ,, | ,, |
| ४ | असंख्यगुणहानेः | ,, | अन्तर्मुहूर्त्तम् |

यावन्निरन्तरं भवति। आद्याः पुनस्तिस्रो वृद्धयो हानयो चोत्कर्षत आवलिकाया असङ्ख्येयभागमात्रं कालम्। जघन्यतस्तु चतस्रोऽप्येकं द्वौ वा समयौ यावद्भवन्ति ॥११॥

वीर्यान्तरायक्षयोपशमः क्वचित्कदाचित्कथञ्चिद्भवतीति तन्निबन्धनानि

(उ०)-कृता परम्परोपनिधा। अथ वृद्धिप्ररूपणां कुर्वन्नाह—योगस्थानान्यपि कदाचिद्वर्द्धन्ते कदाचिच्च हीयन्ते। तत्र वृद्धिश्चतुर्द्धा—असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिरिति। एवं हानिरपि चतुर्द्धा। यस्मादेवं वृद्धिहान्योश्चतुष्कं वर्त्तते तस्मात् कालोऽत्र नियतो वक्तव्य इति सोपस्कारमन्वयः। प्रतिविधानमेवाह—अन्तिमयोरसंख्येयगुणलक्षणयोर्वृद्धिहान्योः प्रत्येकं कालोऽन्तर्मुहूर्त्तं,शेषाणाम्—आद्यानां तिसृणां वृद्धीनां हानीनां चावलिकाऽसंख्येयभागमात्रः कालः। इयमत्र भावना—क्षयोपशमप्रकर्षाद्विवक्षितयोगस्थानात्प्रतिसमयमपरस्मिन्नपरस्मिन्नसङ्ख्येयगुणवृद्धे योगस्थाने जीवस्य यदारोहणं साऽसङ्ख्येयगुणवृद्धिः। यत् पुनः क्षयोपशमापकर्षात्प्रतिसमयमपरस्मिन्नपरस्मिन्नसङ्ख्येयगुणहीने योगस्थानेऽवतरणं साऽसङ्ख्येयगुणहानिः। इमे द्वे हानिवृद्धी उत्कर्षतोऽन्तर्मुहूर्त्तकालं यावन्निरन्तरं भवतः। आद्यास्तु तिस्रो वृद्धयो हानयो चोत्कर्षत आवलिकाया असङ्ख्येयं भागम्। जघन्यतस्तु चतस्रोऽप्येकं द्वौ वा समयौ यावद् भवन्ति ॥ ११ ॥

इदाणिं एतेसु वुड्ढिहाणिठाणेसु परिणया जीवा केच्चिरं कालं तब्भावेण अच्छंति? तेण समयपरूवणा भण्णति—

**चउराई जावट्ठगमित्तो जावं दुगं ति समयाणं। पज्जत्तजहन्नाओ जावुक्कोसं ति उक्कोसो ॥१२॥**

(चू)—'चउरादी जावट्ठगमेत्तो जावं दुगंतिसमयाणं' ति—चउरो समया आदि जेसिं ठाणाणं ते चउरादीयट्ठी 'जावट्ठग' त्ति—चउसमतिगाणि जोगट्ठाणाणि सेढीए असंखेज्जतिभागमेत्ताणि सुहुमपज्जत्तगस्स जहन्नतो

जोगट्ठाणातो आढवेत्तु । ततो पंचसमतिगाणि जोगट्ठाणाणि सेढीए असंखेज्जतिभागमेत्ताणि । ततो छस्समयिगाणि एवं चेव । ततो सत्तसमतिगाणि एवं चेव । ततो अट्ठसमतिगाणि जोगट्ठाणाणि सेढीए असंखेज्जतिभागमेत्ताणि । 'इत्तो जावं दुगं ति समयाणं'ति–अट्ठसमतिगाणं अंतातो पुणो सत्तसमतिगाणि जोगट्ठाणाणि भवंति सेढीए असंखेज्जतिभागमेत्ताणि । ततो पुणो छसमतिगाणि एवं चेव । ततो पुणो पंचसमतिगाणि एवं चेव । ततो पुणो चतुसमतिगाणि जोगट्ठाणाणि सेढीए असंखेज्जतिभागमेत्ताणि। एवं तिसमतिगाणिवि। एवं दु समइगाणि-परिवाडीए ओप्परुप्परिं घेतव्वाणि। एते चतुसमतिगादि जोगट्ठाणा कतो आढत्ता भवंति तन्निरूवणत्थं भण्णति—'पज्जत्तजहन्नाओ' त्ति–सुहुमएगिंदियपज्जत्तगस्स जहन्नगं जोगट्ठाणं आदिं काऊणं जाव उक्कोसठाणं ताव एते चतुसमतिगादी दुसमइगपज्जवसाणा परिवाडीए घेत्तव्वा। 'उक्कोसो' त्ति–एसो सव्वजोगट्ठाणाणं उक्कोसो कालो भणितो ॥ १२ ॥

(मलय०)–स्यादेतत्,कियन्तं कालं यावत्पुनर्यथोक्तवृद्धिहानिरहिता जीवा योगस्थानेष्ववस्थिताः प्राप्यन्त इति प्रश्नावकाशमाशङ्क्य-समयप्ररूपणामाह—'चउराई'ति–चत्वार आदिर्यस्याः सा चतुरादिः समयानाम्–अवस्थितिकालनियामकानां वृद्धिः,सा च तावद्वाच्या यावदष्टकम्। इत ऊर्ध्वं पुनः समयानां हानिर्वक्तव्या, सा च तावद्यावद्द्विकम्। सा च चतुरादिका वृद्धिः'पर्याप्तजघन्यात्'–पर्याप्तसूक्ष्मनिगोदसत्कजघन्ययोगस्थानादारभ्य तावदवसेया यावदष्टकम्। ततः परं हानिः,सापि तावद्यावदुत्कृष्टं योगस्थानम्। एष उत्कृष्टोऽवस्थितिकालः । 
एतदुक्तं भवति–पर्याप्तसूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य सत्काज्जघन्याद्योगस्थानादारभ्य क्रमेण यानि योगस्थानानि श्रेण्यसंख्येयभाग-

गतप्रदेशराशिप्रमाणानि तान्युत्कर्षतश्चतुरः समयान् यावदवस्थितानि प्राप्यन्ते । ततः परं यानि योगस्थानानि श्रेण्यसंख्येयभागगत-प्रदेशराशिप्रमाणानि तान्युत्कर्षतः पञ्च समयान् । ततः पर यानि योगस्थानानि पूर्वोक्तप्रमाणानि तान्युत्कर्षतः षट् समयान् । ततोऽपराणि यानि योगस्थानानि पूर्वोक्तप्रमाणानि तान्युत्कर्षतः सप्त समयान् । ततोऽपि पराणि यानि क्रमेण योगस्थानानि पूर्वोक्तसंख्यानि तान्युत्कर्षतोऽष्टौ समयान् । ततः पराणि पुनर्यानि क्रमेण योगस्थानानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणान्येव तान्युत्कर्षतः सप्त समयान् यावदवस्थितानि प्राप्यन्ते । तदनन्तरं यथोक्तसंख्याकान्येव योगस्थानान्युत्कर्षतः षट् समयान् । ततोऽपि पराणि यथोक्तप्रमाणान्येव योगस्थानानि पञ्च समयान् । एवं तावद्वाच्यं यावदन्तिमानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणान्युत्कर्षतो द्वौ समयौ यावदवस्थितानि प्राप्यन्ते ॥ १२ ॥

(उ०)–अथ कियन्तं कालमुक्तवृद्धिहानिरहिता जीवा योगस्थानेष्ववस्थिताः प्राप्यन्त इति जिज्ञासायां समयप्ररूपणामाह—समयानागतस्थितिकालनियामकानां चत्वार आदिर्यस्याः सा चतुरादिवृद्धिर्भवतीति शेषः, सा च तावद्वाच्या यावदष्टकम् । 'इत्तो' त्ति इत ऊर्ध्वं समयानां हानिर्वक्तव्येति सम्पूर्य योजनीयं, सा च तावद्यावद्द्विकम् । सा च चतुरादिका वृद्धिः पर्याप्तजघन्यात्पर्याप्तसूक्ष्मनिगोदसत्कजघन्ययोगस्थानादारभ्य तावदवसेया यावदष्टकं, ततः परं हानिः, सापि तावद्यावदुत्कृष्टयोगस्थानम् इत्येष उत्कृष्टोऽवस्थितिकालः । इयमित्थमेवार्थवशादक्षरयोजना विधेया । अयमिह भावार्थः–पर्याप्तसूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य जघन्याद्योगस्थानादारभ्य क्रमेण यानि योगस्थानानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि तान्युत्कर्षतश्चतुरः समयान् यावदवस्थितानि प्राप्यन्ते । ततः परं यानि तावन्ति योगस्थानानि तान्युत्कर्षतः पञ्च समायान् यावत् । ततः परं यानि तावन्ति तान्युत्कर्षतः षट् समयान् ।

ततोऽपि पराणि तावन्ति तान्युत्कर्षतः सप्त समयान् । ततोऽपि पराणि तावन्ति तान्युत्कर्षतोऽष्टौ समयान् यावदवस्थितानि लभ्यन्ते। ततः पराणि यानि क्रमेण योगस्थानानि श्रेण्यसंख्येयांशगतप्रदेशप्रमाणानि तान्युत्कर्षतः सप्त समयान् यावदवस्थितानि । तदनन्तरमुक्तसंख्याकानि तान्युत्कर्षतः षट् समयानवस्थितानि । एवं तावत्प्रतिलोमतया वाच्यं यावदन्तिमानि श्रेण्यसंख्येयांशगतप्रदेशप्रमाणान्युत्कर्षतो द्वौ समयौ यावदवस्थितानि प्राप्यन्ते ॥ १२ ॥

इदाणिं तेसिं चेव जोगट्ठाणाणं जहन्नगकालणिरूवणत्थं भण्णति—

**एगसमयं जहन्नं ठाणाणप्पाणि अट्ठ समयाणि । उभओ असंखगुणियाणि समयसो ऊण ठाणाणि ॥१३॥**

(चू०)—'एगसमयं जहण्णं' ति–सव्वजोगट्ठाणेसु जहन्नेणं एगं समयं अवट्ठाणं । इदाणिं सुहुमणिगोयपज्जत्तगस्स जहण्णं जोगट्ठाणं आदिं काऊणं चउसमतिगादी जोगट्ठाणा वुत्ता, ततो हेट्ठतो अपज्जत्तगपातोग्गा जोगट्ठाणा ते एगसमतिगा असंखेज्जा । कहं ? भण्णइ–सव्वो अपज्जत्तगो अपज्जत्तगद्धाए वट्टमाणो असंखेज्जाए जोगवड्ढीए वड्ढतित्ति काऊणं णत्थि अवट्ठाणं, तम्हा सव्वाहिं पज्जत्तीहिं पज्जत्तस्स अवट्ठाणं भवति। समयपरूवणा भणिता । चतुसमतिगादी जोगट्ठाणा सव्वे किं तुल्ला ? अतुल्ला ? तन्निरूवणत्थं भण्णति अप्पाबहुत्तं–ठाणाणप्पाणि अट्ठसमयाणि उभओ असंखगुणियाणि' त्ति–सव्वत्थोवाणि अट्ठसमतिगाणि जोगट्ठाणाणि । किं कारणं ? भण्णति–अतिचिरकालट्ठातिणि ठाणा थोवा भवंतित्ति काउं । उभयो पासिं सत्तसमतिगा जोगट्ठाणा दोवि तुल्ला, असंखेज्जगुणा । सत्तसमतिगेहिंतो उभयो पासिं छस्समतिगा जोगट्ठाणा दोवि तुल्ला, असंखे-

ज्जगुणा। एवं उभतो पासिं पंचसमतिगाणि दोवि तुल्ला, असंखेज्जगुणा। ततो उभतो पासिं चतुसमतिगाणि दोवि तुल्ला, असंखेज्जगुणाणि। ततो उवरि तिसमतिगाणि जोगट्ठाणाणि असंखिज्जगुणाणि। ततो बिसमइगाणि जोगठाणाणि असंखिज्जगुणाणि। 'समयसो ऊणठाणाणि' त्ति—अट्ठसमयगेहिंतो सत्तसमइगाणि समएणं ऊणाणि, एवं जावतिसमइगेहिंतो दुसमइगाणि समएणूणाणि ॥१३॥

(मलय०)—तदेवमुक्तमुत्कृष्टमवस्थानकालमानम्। साम्प्रतं जघन्यमवस्थानकालमानमाह—'एगे'त्ति—सर्वेषामुक्तस्वरूपाणां योगस्थानानां जघन्यत एकसमयं यावदवस्थानम्। तथा यान्यप्यपर्याप्तसूक्ष्मनिगोदयोग्यान्यसंख्येयानि योगस्थानानि पूर्वमनुक्तकालनियमानि तेषां जघन्यत उत्कर्षतो वा एकं समयं यावदवस्थानम्। यतः सर्वोऽप्यपर्याप्तोऽपर्याप्तावस्थायां वर्तमानः प्रतिसमयमसंख्येयगुणरूपया योगवृद्ध्या वर्धते, ततस्तद्योगस्थानानामजघन्योत्कृष्टमेकमेव समयं यावदवस्थानम्। तदेवमुक्ता समयप्ररूपणा। साम्प्रतमेतेषामेव चतुरादिसमयानां योगस्थानानामल्पबहुत्वमाह—'ठाणाणि' इत्यादि। अष्टसामयिकानि स्थानानि—योगस्थानानि, शेषसप्तसामयिकादियोगस्थानानि प्रतीत्य अल्पानि—स्तोकानि, अतिचिरकालावस्थायीनि हि योगस्थानानि स्तोकान्येव प्राप्यन्त इति कृत्वा। तेभ्यः प्रत्येकसमयमसंख्येयगुणानि पूर्वोत्तररूपोभयपार्श्ववर्तीनि सप्तसामयिकानि, अल्पतरस्थितिकत्वात्, स्वस्थाने तु तानि द्वयान्यपि परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि उभयपार्श्ववर्तीनि षट्सामयिकानि, स्वस्थाने तु परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि पञ्चसामयिकानि उभयपार्श्ववर्तीनि, स्वस्थाने तु परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि, चतुःसामयिकानि उभयपार्श्ववर्तीनि, स्वस्थाने तु परस्परं तुल्यानि। तेभ्योऽप्यसंख्येयगुणानि त्रिसामयिकानि। तेभ्योऽप्यसंख्येयगुणानि द्विसामयिकानि। 'समसो ऊण ठाणाणि त्ति'—समयशः समयेन

विन्दवो योगस्थानानि ।

यवमध्यचित्रकम्



अपर्याप्त-प्रत्येकयानि

अङ्काः स्थितिसमयरूपा ज्ञेयाः । उत्तरोत्तरं योगस्थानानि स्पर्धकापेक्षया बृहद्भवन्ति यथाल्पबहुत्वमेकैकबिन्दुवृद्धया भाव्यानि ।

समयेन ऊनानि अष्टसामयिकेभ्यो व्यतिरिक्तानि सप्तसामयिकादीनि स्थानानि–योगस्थानानि ॥ १३ ॥

(उ०)–तदेवमुक्तमुत्कृष्टमवस्थानकालमानम् ,अथ जघन्यावस्थानकालमानमाह—सर्वेषामुक्तयोगस्थानानां जघन्यमेकसमयं यावदवस्थानम् । यान्यप्यपर्याप्तसूक्ष्मनिगोदसम्बन्धीन्यसङ्ख्येयानि योगस्थानानि तेषां जघन्यत उत्कर्षतो वा एकं समयं यावदवस्थानम् । उत्कर्षतोऽपि तेषां समयमात्रावस्थाने किं बीजमिति चेत् "सव्वो वि अपज्जत्तगो पइखणमसंखगुणाए जोगवुड्ढीए वड्ढइ" त्ति वचनात् । द्विर्तीयसमयेऽसङ्ख्येयगुणवृद्धिरेव । उक्ता समयप्ररूपणा । अथ तेषामेव चतुरादिसमयानां योगस्थानानामल्पबहुत्वमाह–'ठाणाणीत्यादि'। अष्टसामयिकानि स्थानानि–योगस्थानानि अल्पानि–सर्वस्तोकानि । तेभ्यः समयशः–समयेन समयेनोनानि सप्तसामयिकादीनि स्थानानि, उभयोः पूर्वोत्तररूपयोर्द्वयोः पार्श्वयोरसङ्ख्येयगुणानि । तथाहि–अष्टसामयिकानि चिरकालस्थायित्वात्स्तोकान्येव प्राप्यन्ते । तेभ्य उभयपार्श्ववर्तीनि सप्तसामयिकानि अल्पस्थितिकत्वादसंख्येयगुणानि, स्वस्थाने तु तानि द्वयान्यपि परस्परं तुल्यानि । तेभ्योऽसंख्येयगुणान्युभयपार्श्ववर्तीनि षट्सामयिकानि, स्वस्थाने तु तुल्यानि । तेभ्योऽप्यसङ्ख्येयगुणानि पञ्चसामयिकान्युभयपार्श्वगानि, स्वस्थाने तु तुल्यानि । तेभ्योऽप्युभयपार्श्वस्थानि चतुःसामयिकान्यसङ्ख्येयगुणानि, स्वस्थाने तु तुल्यानि । तेभ्योऽप्यसंख्येयगुणानि त्रिसामयिकानि । तेभ्योऽप्यसंख्येयगुणानि द्विसामयिकानि ॥ १३ ॥

जोगट्ठाणपरूवणा भणिया । इयाणिं एएसु वट्टमाणाणं जीवाणं एगिंदियसुहुमबादरबेइंदियतेइंदियचउरिंदियअसन्निपंचिंदियसन्निपंचिंदियाणं अपज्जत्तपज्जत्तगाणं जहन्नुक्कोसजोगअप्पाबहुगनिरूवणत्थं सुत्तं भण्णइ—

सव्वत्थोवो जोगो साहारणसुहुमपढमसमयम्मि । बायरवियतियचउरमणसन्नपज्जत्तगजहण्णो ॥ १४ ॥

(चू०)—साहारणस्स सुहुमस्स लद्धीए अपज्जत्तगस्स पढमसमए वट्टमाणस्स अप्पावीरियलद्धिस्स जहन्नतो जोगो सव्वत्थोवो। 'बादरबियतियचउरमणसण्णअपज्जत्तगजहन्नो'त्ति—ततो बादरएगिंदियस्स अपज्जत्तगस्स जहण्णओ जोगो असंखेज्जगुणो। बेइंदियस्स अपज्जत्तगस्स जहन्नओ जोगो असंखेज्जगुणो। एवं तेइंदियस्स चउरिंदियस्स असन्निपंचिंदियस्स सन्निपंचिंदियस्स अपज्जत्तगस्स जहन्नओ जोगो असंखेज्जगुणो ॥१४॥

(मलय०)—तदेवमुक्तं चतुरादिसमयानां योगस्थानानामल्पबहुत्वं, सम्प्रति तेषु योगस्थानेषु वर्तमानानां सूक्ष्मबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसञ्ज्ञिपञ्चेन्द्रियाणां पर्याप्तापर्याप्तानां जघन्योत्कृष्टयोगविषयेऽल्पबहुत्वमभिधित्सुराह—'सव्व'त्ति—इहासङ्ख्येयगुण इति उत्तरगाथातः संबध्यते। साधारणस्य सूक्ष्मस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगः सर्वस्तोकः। ततो बादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसङ्ख्येयगुणः। ततो द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततश्चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततोऽसंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्तमानस्य जघन्यो योगोऽसंख्येयगुणः॥१४॥

(उ०)—उक्तं चतुरादिसमयानां योगस्थानानामल्पबहुत्वं, सम्प्रति जीवस्थानानां जघन्योत्कृष्टयोगविषयमल्पबहुत्वमाह—इहासंख्येयगुण इत्यग्रिमगाथातः सम्बध्यते। ततः साधारणस्य सूक्ष्मस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्त्तमानस्य जघन्यो योगः सर्वस्तोकः। बादरैकेन्द्रियस्य लब्ध्यपर्याप्तस्य प्रथमसमये वर्त्तमानस्य जघन्यो योगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्य

प्रथमसमयवृत्तेर्जघन्यो योगोऽसंख्येयगुणः । ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमयवृत्तेर्जघन्यो योगोऽसंख्येयगुणः । ततश्चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्याद्यसमयस्थस्य जघन्यो योगोऽसंख्येयगुणः । ततोऽसंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमयवृत्तेर्जघन्यो योगोऽसंख्येयगुणः । ततः संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्य प्रथमसमये वर्त्तमानस्य जघन्यो योगोऽसंख्येयगुणः ॥ १४ ॥

**आइदुगुक्कोसो सिं पज्जत्तजहन्नगेयरे य कमा । उक्कोसजहन्नियरो असमत्तियरे असंखगुणो ॥ १५ ॥**

(चू०)—'आदिदुगुक्कोसो'त्ति–आदिदुगं–सुहुमबादरएगिंदिया अपज्जत्तगा, सिं उक्कोसो ततो परिवाडीए असंखेज्जगुणो । सुहुमस्स अपज्जत्तगस्स उक्कोसो जोगो असंखेज्जगुणो । बादरस्स अपज्जत्तगस्स उक्कस्सगो जोगो असंखेज्जगुणो । 'सिं पज्जत्तजहन्नगेयरे य कमा' इति–तेसिं चेव सुहुमबादराणं पज्जत्तगाणं करणं पडुच्च जहण्णुक्कस्सगा जोगा कमेण असंखेज्जगुणा । ततो सुहुमस्स पज्जत्तगस्स जहन्नओ जोगो असंखेज्जगुणो । ततो बादरस्स पज्जत्तगस्स जहन्नो जोगो असंखेज्जगुणो । ततो सुहुमस्स पज्जत्तगस्स उक्कस्सगो जोगो असंखेज्जगुणो । बादरपज्जत्तग(स्स) उक्कस्सगो जोगो असंखेज्जगुणो । 'उक्कोसजहन्नियरो असमत्तियरे असंखगुणो'त्ति । 'उक्कोस्सगं'ति–बेइंदियाईणं अपज्जत्तगाणं उक्कोसो । 'जहन्नितरो'त्ति–तेसिं चेव पज्जत्तगाणं जहन्नगो, 'इयरो' त्ति–उक्कोसो । 'असमत्तियरेसु' त्ति–अपज्जत्तपज्जत्तगेसु असंखेज्जगुणो णेयव्वो । बादरएगिंदियपज्जत्तगउक्कसगातो बेतिंदियस्स अपज्जत्तगस्स उक्कस्सगो जोगो असंखेज्जगुणो । तेइंदियस्स अपज्जत्तगस्स उक्कसगो जोगो असंखेज्जगुणो । चउरिंदियस्स अपज्जत्तगस्स उक्कसगो जोगो असंखेज्जगुणो । असन्निपंचिंदियस्स अपज्जत्तगस्स उक्कस्स-

जोगो असंखेज्जगुणो। सन्निपंचेंदियअपज्जत्तगस्स उक्कस्सजोगो असंखेज्जगुणो। एते सव्वे लद्धीए अपज्जत्तगा गदिता। बेंदिंदियस्स पज्जत्तजहन्नजोगो असंखगुणो करणपज्जत्तगस्स। ततो हिट्ठिल्ला ठाणा लद्धिपज्जत्तगस्स करणेण अ पज्जत्तगस्स भवंति। ततो बेतिंदियपज्जत्तगस्स जहन्नओ जोगो असंखगुणो। तेतिंदियपज्जत्तगस्स जहन्नओ जोगो असंखगुणो। चउरिंदियपज्जत्तगस्स जहन्नओ जोगो असंखगुणो। असन्निपंचिंदियस्स पज्जत्तगस्स जहन्नओ जोगो असंखेज्जगुणो। सन्निपंचिंदियस्स पज्जत्तगस्स जहन्नओ जोगो असंखगुणो। सव्वे करणपज्जत्तीए पज्जत्तगा। ततो बेतिंदियपज्जत्तगस्स उक्कस्सजोगो असंखगुणो। तेतिंदिय पज्जत्तगस्स उक्कस्सजोगो असंखगुणो। चउरिंदियपज्जत्तगस्स उक्कस्सजोगो असंखगुणो। असन्निपंचिंदियपज्जत्तगस्स उक्कस्सजोगो असंखगुणो ॥ १९ ॥

(मलय०)—'आइदुग'त्ति—आदिद्विकम्—अपर्याप्तसूक्ष्मबादरैकेन्द्रियलक्षणं, तस्योत्कृष्टो योगः परिपाट्याऽसंख्येयगुणो वक्तव्यः। तद्यथा—लब्ध्यपर्याप्तकसंज्ञिपञ्चेन्द्रियजघन्ययोगात् सूक्ष्मनिगोदस्य लब्ध्यपर्याप्तकस्यैवोत्कृष्टो योगोऽसंख्येयगुणः। ततोऽपि बादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टोऽसंख्येयगुणः। 'सिं पज्जत्तजहन्नगेयरे य कमा'—अनयोः सूक्ष्मबादरैकेन्द्रिययोः पर्याप्तयोर्जघन्य इतरश्चोत्कृष्टः क्रमात्—क्रमेणासंख्येयगुणो वक्तव्यः। तद्यथा—लब्ध्यपर्याप्तकबादरैकेन्द्रियोत्कृष्टयोगात् सूक्ष्मनिगोदस्य पर्याप्तस्य जघन्यो योगोऽसंख्येयगुणः। ततो बादरैकेन्द्रियस्य पर्याप्तकस्य जघन्ययोगोऽसंख्येयगुणः। ततः सूक्ष्मनिगोदस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽपि बादरैकेन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः। 'उक्कोसजहन्नियरो असमत्तियरे असंखगुणो' त्ति—अस-

मासोऽपर्याप्तो द्वीन्द्रियादिस्तस्मिन्नुत्कृष्ट इतरस्मिंश्च पर्याप्ते द्वीन्द्रियादौ जघन्य इतरश्चोत्कृष्टः परिपाट्याऽसंख्येयगुणो वक्तव्यः। तद्यथा—पर्याप्तकबादरैकेन्द्रियोत्कृष्टयोगात् द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततश्चतुरिन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽसंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽपि संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः। ततस्त्रीन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः। ततश्चतुरिन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः। ततोऽसंज्ञिपञ्चेन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः। ततः संज्ञिपञ्चेन्द्रियस्य पर्याप्तकस्य जघन्यो योगोऽसंख्येयगुणः। ततो द्वीन्द्रियस्य पर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततस्त्रीन्द्रियस्य पर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। ततोऽपि चतुरिन्द्रियस्य पर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः। पर्याप्तकाश्च सर्वत्रापि करणपर्याप्ता वेदितव्याः ॥ १५ ॥

(उ०)—ततः आदिद्विकस्यापर्याप्तसूक्ष्मबादरैकेन्द्रियलक्षणस्योत्कृष्टो योगः क्रमेणासङ्ख्येयगुणो वाच्यः। तथाहि—लब्ध्यपर्याप्तकसंज्ञिपञ्चेन्द्रियजघन्ययोगात्सूक्ष्मनिगोदस्य लब्ध्यपर्याप्तकस्यैवोत्कृष्टो योगोऽसङ्ख्येयगुणः। ततो बादरैकेन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसङ्ख्येयगुण इति। ततः 'सि' त्ति—अनयोः सूक्ष्मबादरैकेन्द्रिययोः पर्याप्तयोर्जघन्य इतरश्चोत्कृष्टो योगः क्रमादसङ्ख्येयगुणो वाच्यः। तथाहि—लब्ध्यपर्याप्तकबादरैकेन्द्रियोत्कृष्टयोगात्सूक्ष्मनिगोदस्य पर्याप्तस्य जघन्यो योगोऽसङ्ख्येयगुणः। ततो बादरैकेन्द्रियस्य पर्याप्तस्य जघन्ययोगोऽसङ्ख्येयगुणः। ततः सूक्ष्मनिगोदस्य पर्याप्तस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततोऽपि बादरैकेन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततोऽसमाप्तोऽपर्याप्तो द्वीन्द्रियादिरिति परिशेषाल्लभ्यते, तस्मिन्नुत्कृष्ट इतरस्मिंश्च पर्याप्ते

द्वीन्द्रियादौ जघन्य इतर उत्कृष्टश्च परिपाट्याऽसङ्ख्येयगुणो वाच्यः। तथाहि—पर्याप्तबादरैकेन्द्रियोत्कृष्टयोगाद् द्वीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततस्त्रीन्द्रियस्य लब्ध्यपर्याप्तकस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततश्चतुरिन्द्रियस्य लब्ध्यपर्याप्तस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततोऽसंज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततोऽपि संज्ञिपञ्चेन्द्रियस्य लब्ध्यपर्याप्तस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततो द्वीन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसङ्ख्येयगुणः। ततस्त्रीन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसङ्ख्येयगुणः। ततश्चतुरिन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसङ्ख्येयगुणः। ततोऽसंज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसङ्ख्येयगुणः। ततः संज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्यो योगोऽसङ्ख्येयगुणः। ततो द्वीन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसङ्ख्येयगुणः। ततस्त्रीन्द्रियस्य पर्याप्तस्योत्कृष्टयोगोऽसङ्ख्येयगुणः। ततोऽपि चतुरिन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसङ्ख्येयगुणः ॥ १५ ॥

**अमणाणुत्तरगेविज्जभोगभूमिगयतइयतणुगेसु। कमसो असंखगुणिओ सेसेसु य जोग उक्कोसो ॥ १६ ॥**

(चू०)—'अमणाणुत्तरगेवेज्जभोगभूमिगततइयतणुगेसु कमसो असंखगुणो' त्ति—ततो असन्निपंचिंदियस्स उक्कस्सगातो जोगाओ अणुत्तरोववाइयाणं देवाणं उक्कस्सजोगो असंखगुणो। ततो गेवेज्जयाणं देवाणं उक्कस्सजोगो असंखगुणो। ततो भोगभूमिगाणं तिरियमणुयाणं उक्कस्सजोगो असंखगुणो, 'ततियतणु' त्ति—आहारसरीरं, ततो आहारगसरीरीणं उक्कस्सजोगो असंखगुणो। 'सेसेसु य जोग उक्कोसो' त्ति—सेसाणं देवणेरतियतिरियमणुयाणं उक्कस्सजोगो असंखेज्जगुणो। एवं एक्केक्कस्स जीवस्स जोगगुणागारो सुहुमखेत्तपलिओवमस्स असंखेज्जतिभागो। पदेसअप्पाबहुयंपि सव्वथोवं सुहुमस्स अपज्जत्तगस्स जहन्नगं पदेसग्गं। ए-

बन्धनकरणे योगप्ररूपणा.

यं जहा जोगे अप्पाबहुगं भणियं तहा पदेसअप्पबहुअंपि भाणियव्वं । एक्केक्कस्स जीवस्स पदेसगुणगारो प-
लितोवमस्स असंखेज्जतिभागो । जोगा परूविता ॥ १६ ॥

(मलय०)—'अमण' त्ति–अमना–असंज्ञी, पर्याप्तचतुरिन्द्रियोत्कृष्टयोगात् असंज्ञिपञ्चेन्द्रियपर्याप्तकस्योत्कृष्टो योगोऽसंख्येयगुणः । ततो ग्रैवेयकाणां देवानामुत्कृष्टो योगोऽसंख्येयगुणः । ततो भोगभूमिजानां
ततोऽनुत्तरोपपातिनां देवानामुत्कृष्टो योगोऽसंख्येयगुणः । ततोऽप्याहारकशरीरिणामुत्कृष्टो योगोऽसंख्येयगुणः । ततः शेषाणां देवनारकतिर्यङ्मनु-
तिर्यङ्मनुष्याणामुत्कृष्टो योगोऽसंख्येयगुणः । असंख्येयगुणकारश्च सर्वत्रापि सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगतप्रदेशराशिप्रमाणो द्रष्टव्यः । 'तइयत-
ष्याणामुत्कृष्टो योगोऽसंख्येयगुणः । असंख्येयगुणकारश्च सर्वत्रापि सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगतप्रदेशराशिप्रमाणो द्रष्टव्यः ।
णुगेसु' त्ति–तृतीया तनुराहारकशरीरम् ॥ १६ ॥

(उ०)—अमना–असंज्ञी । ततः पर्याप्तचतुरिन्द्रियोत्कृष्टयोगादसंज्ञिपञ्चेन्द्रियस्य पर्याप्तस्योत्कृष्टो योगोऽसंख्येयगुणः । ततोऽनुत्तरो-
पपातिनां देवानामुत्कृष्टो योगोऽसंख्येयगुणः । ततो ग्रैवेयकाणां देवानामुत्कृष्टो योगोऽसंख्येयगुणः । ततो भोगभूमिजानां तिर्यङ्मनु-
ष्याणामुत्कृष्टो योगोऽसंख्येयगुणः । ततस्तृतीया तनुराहारकं शरीरं येषां ते तृतीयतनुकास्तेषूत्कृष्टो योगोऽसंख्येयगुणः । ततः शेषाणां
देवनारकतिर्यङ्मनुष्याणामुत्कृष्टो योगोऽसंख्येयगुणः । असंख्येयगुणकारोऽत्र सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगतप्रदेशराशिप्रमाणो द्रष्ट-
व्यः । पर्याप्ताश्च सर्वत्रापि करणपर्याप्ता द्रष्टव्याः ॥ १६ ॥

इदाणिं तेहिं जोगेहिं पोग्गले घेत्तूण पंचण्हं सरीराणं जोगे सरीरत्ताए परिणामेति, आणापाणूभासमणत्ताए
य अवलंबति, तेसिं परिणावणअवलंबणाणं के पोग्गला जोग्गा ? के वा अजोग्गा ? तं णिरूवणत्थं भणति—

**जोगेहिं तयणुरुवं परिणमइ गिण्हिऊण पंच तणू । पाउग्गे चालंबइ भासाणुमणत्तणे खंधे ॥ १७ ॥**

(चू०)—'जोगेहिं'–पुव्वुत्तेहिं 'तयणुरूवं'ति–तेसिं अणुरुवंति भण्णमाणा उरालिगादयो संवज्झंति। अहवा जोगेहिं 'तदणुरुवो' त्ति–उक्कोसाणुक्कोसजहण्णजोगजोग्गे पोग्गले वा। किं भणियं होति? भन्नइ–जहन्नजोगजोगिस्स थोवा पोग्गला गहणमेनि, उक्कोसजोगिस्स बहुता पोग्गला गहणमेतित्ति भणितं होति। 'परिणमयति गेण्हेतूण पंचतणु'त्ति, परिणमयति–तब्भावत्ताए परिणामेति, जोगेहिं तेसिं अणुरूवे पोग्गले घेत्तूण ओरालिगादीहिं सरीरेहिं परिणामेति। जहा अगणिं इंधणं पक्खित्तं अगणित्ताए परिणामेति तहा जीवो जोगेहिं तप्पाओग्गे पोग्गले घेत्तूणं उरालादियसरीरत्ताए परिणामेति। 'पाओग्गे चावलंबति' त्ति–भासादिपातोग्गे पोग्गले अवलंबति, जहा पादादिविगलो उट्ठाणचंकमणादीणि कत्तुकामो लट्ठिं अवलंबेति मुयति य कारणं पडुच्च. एवं जीवो वि। 'भासाणुमणत्तणे खंधे'त्ति–भासाआणापाणुमणजोग्गे च खंधे अवलंबित्ता भासाआणापाणुमणत्तणेण परिणामिय मुंचति य। किं कारणं? भण्णति–पोग्गलाणं सामत्थेणं जीवाणं वीरियसामत्थं उप्पज्जतित्ति काउं। तेण जोगेहिं तदणुरूवं गेण्हिऊणं परिणमयति आलंबेति च त्ति भणियं ॥ १७ ॥

(मलय०)—तदेवं कृता सप्रपञ्चं योगप्ररूपणा, सांप्रतमेभिर्योगैर्यत्करोति तदाह—'जोगेहिं'ति–योगैरनन्तरोक्तस्वरूपैः प्रायोग्यान् 'स्कन्धान्' पुद्गलस्कन्धान् गृहीत्वा यथायोगं 'पंचतणु'त्ति पञ्च शरीराणि परिणमयति–औदारिकादिपञ्चशरीरतया परिणमयतीत्यर्थः। कथं पुनर्गृह्णातीति चेत्, अत आह–'तदनुरूपं' योगानुरूपं, तथाहि–जघन्ययोगे वर्तमानः स्तोकान् पुद्गलस्कन्धान् गृह्णाति, मध्यमे मध्य-

मान, उत्कृष्टे च योगे वर्तमानः प्रभूतानिति। उक्तं चान्यत्रापि–"जोगणुरूवं जीवा परिणामंतीह गेण्हिउं दलियं" त्ति। अथवा तन्कर्मेन पञ्च शरीराणि संबध्यन्ते। ततश्च तदनुरूपं–पञ्चशरीरानुरूपं शरीरपञ्चकप्रायोग्यतयेत्यर्थः, पुद्गलस्कन्धान् गृह्णाति। तथा भाषाप्राणापानमनस्त्वप्रायोग्यान् पुद्गलस्कन्धान् प्रथमतो गृह्णाति, गृहीत्वा च भाषादित्वेन परिणमयति, परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तान् पुद्गलस्कन्धानालम्बते, ततस्तदवष्टम्भतो जातसामर्थ्यविशेषः सन् विसृजति नान्यथा। तथाहि–यथा वृषदंशः स्थान्यङ्गान्यूर्ध्वं गमनाय प्रथमतः संकोचव्याजेनावलम्बते, ततस्तदवष्टम्भतो जातसामर्थ्यविशेषः सन् तान्यङ्गान्यूर्ध्वं प्रक्षिपति, नान्यथा शक्नोति, "व्यनिमित्तं वीर्यं संसारिणामुपजायते" इति वचनप्रामाण्यात्, तथेहापि भावनीयमिति ॥ १७ ॥

(उ०)—तदेवं सप्रपञ्चं कृता योगप्ररूपणा, साम्प्रतमेभिर्योगैर्यत्करोति जीवस्तदाह—योगैः–अनन्तरोक्तलक्षणैः, तदनुरूपं योगानुरूपं, जघन्ययोगे वर्तमानः स्तोकान्मध्यमे मध्यमानुत्कृष्टे च प्रभूतान् पुद्गलस्कन्धान् गृह्णातीति क्रमेणेत्यर्थः। प्रायोग्यान्–औदारिकादियोग्यान्, स्कन्धान्–पुद्गलस्कन्धान्, गृहीत्वा परिणमयति। 'पंचतणु'त्ति–भावप्रधाननिर्देशादौदारिकादिपञ्चशरीरतयेत्यर्थः। तथा भाषाप्राणापानमनस्त्वप्रायोग्यान् पुद्गलस्कन्धान् प्रथमतो गृह्णाति, गृहीत्वा च भाषादित्वेन परिणमयति, परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तान् पुद्गलस्कन्धानालम्बते, ततस्तदवष्टम्भतो जातसामर्थ्यविशेषः सन् विसृजति, नान्यथा। यथा हि वृषदंशः स्थान्यङ्गान्यूर्ध्वं जिगमिषुः संकोचवशादवलम्बते–स्थिरतया धारयतीत्यर्थः, ततस्तदवष्टम्भाज्जातशक्तिविशेषस्तान्यङ्गान्यूर्ध्वं प्रक्षेप्तुं शक्नोति नान्यथा, 'व्यनिमित्तं वीर्यं संसारिणामुपजायते' इति वचनप्रामाण्यात्, तथेहापि भावनीयम् ॥ १७ ॥

के ते गहणजोग्गा के वा अग्गहणजोगत्ति तं णिरूवणत्थं वग्गणाणं भेदो दरिसिज्जति। 'परमाणुसंखसंखा'-

तिन्नि गाहातो वग्गणा परूवणा—

परमाणुसंखऽसंखाऽणंतपएसा अभव्वणंतगुणा । सिद्धाणणंतभागो आहारगवग्गणा तितणू ॥ १८ ॥

अग्गहणंतरियाओ तेयगभासामणे य कम्मे य । धुवअधुवअच्चित्तासुन्नाचउअंतरेसुप्पिं ॥ १९ ॥

पत्तेयगतणुसु बायरसुहुमनिगोए तहा महाखंधे । गुणनिप्फन्नसनामा असंखभागंगुलवगाहो ॥ २० ॥

(चू०)—अत्थि परमाणुपोग्गलदव्ववग्गणा, दुपदेसियदव्ववग्गणा, एवं तिपदेसिता, चतु-पंच-छ-सत्त-अट्ठ-णव दस-संखेज्जपदेसिताणं संखेज्जाओ वग्गणातो । असंखेज्जपदेसिआणं असंखेज्जातो वग्गणाओ । अणंतपदेसिताणं अणंतातो वग्गणाओ । अणंताणंतप्पदेसिताणं अणंताणंतातो वग्गणाओ । अणंताणंतपदेसितवग्गणाणं अणंताओ वग्गणाओ गंतूणं उवरि आहारदव्ववग्गणा नाम । आहारदव्ववग्गणाणं उवरि अग्गहणवग्गणा नाम । अग्गहणवग्गणाणं उवरिं तेजोदव्ववग्गणाणाम । तेजइगदव्ववग्गणाणं उवरिं अग्गहणवग्गणा णाम । तेजतिगअग्गहणदव्ववग्गणाणं उवरिं भासादव्ववग्गणा णाम । भासादव्ववग्गणाणं उवरिं भासाअग्गहणवग्गणा । भासाअग्गहणवग्गणाणं उवरिं (आणपाणुदव्ववग्गणा, आणपाणुदव्ववग्गणाणं उवरिं आणपाणुअग्गहणवग्गणा, आणपाणुअग्गहणवग्गणाणं उवरिं) मणोदव्ववग्गणा । मणोदव्ववग्गणाणं उवरिं मणोअग्गहणवग्गणा । मणोअग्गहणवग्गणाणं उवरिं कम्मतिगदव्ववग्गणा । कम्मतिगदव्ववग्गणाणं उवरिं धुव-

अनित्तदव्ववग्गणा। धुवअचित्तदव्ववग्गणाणं उवरिं सांतरणिरंतरदव्ववग्गणा। सांतरणिरंतरदव्ववग्गणाणं उ-
रिं धुवसुन्नदव्ववग्गणाओ। तो धुवसुन्नदव्ववग्गणाणं उवरिं पत्तेयसरीरदव्ववग्गणाओ । पत्तेयसरीरदव्ववग्ग-
णाणं उवरिं धुवसुन्नदव्ववग्गणाओ। धुवसुन्नदव्ववग्गणाणं उवरिं बादरणिगोतदव्ववग्गणाओ । बादरणिगोदद-
व्ववग्गणाणं उवरिं धुवसुण्णदव्ववग्गणाओ। धुवसुण्णदव्ववग्गणाणं उवरिं सुहुमणिगोददव्ववग्गणातो। सुहुम-
निगोददव्ववग्गणाणं उवरिं धुवसुण्णदव्ववग्गणातो । धुवसुण्णदव्ववग्गणाणं उवरि महाखंधदव्ववग्गणातो ।
एतातो दव्ववग्गणाओ भणिआओ समासेणं ।

इदाणिं एयासिं विसेसेण एगेगाए परूवणा भण्णइ–परमाणुपोग्गलाणं दव्ववग्गणा एगा। सा अग्गहणपाउग्गा
। एवं दुपदेसिताण वि, तिपदेसिताण वि, जाव दसपदेसिताण वि। एवं चेव संखेज्जपदेसियाणं संखेज्जातो वग्गणातो
सव्वातो अग्गहणपातोग्गाओ, असंखेज्जपदेसिताणं असंखेज्जातो वग्गणातो सव्वाओ अग्गहणपातोग्गातो। अ-
णंतपदेसिताणं अणंताओ दव्ववग्गणाओ सव्वातो अग्गहणपातोग्गाओ। अणंताणंतपदेसियाणं अणंताणंतातो
दव्ववग्गणातो। ताओ किं गहणपातोग्गातो अग्गहणपातोग्गातो? भण्णइ–काओ वि गहणपातोग्गा, कातो वि अ-
ग्गहणपातोग्गा। तासिं अणंताणंतपदेसिताणं दव्ववग्गणाणं अग्गहणपातोग्गाणं उवरिं आहारगदव्ववग्गणा।
आहारगदव्ववग्गणा णाम ओरालियवेउव्वियआहारगाणं तिण्हं सरीराणं गहणं पवत्तति, जाणि दव्वाणि घेत्तू-
ण जीवा उरालितवेउव्वियआहारगसरीरत्ताए परिणामेति ताणि सिद्धाणणंतभागो अभवसिद्धिताणंतगुणो एव-

तिताणं परमाणूणं समुदाओ एगो खंधो साऽऽहारगदव्ववग्गणा भण्णति जहण्णा। ततो पदेसुत्तरा वितिता वग्गणा। एवं पदेसुत्तराओ अणंतातो दव्ववग्गणातो जाव उक्कोसा आहारदव्ववग्गणा। जहण्णातो उक्कोसा विसेसाहिता। को विसेसो ? तस्सेवणंतिमो भागो। तस्सुवरिं एगे रूवे वूढे आहारअग्गहणदव्ववग्गणा जहण्णा। आहारअग्गहणदव्ववग्गणा णाम आहारगदव्ववग्गणं अतिच्छिता तेयगदव्ववग्गणाणं अपत्ता। तासिं जहण्णादीणि पदेसुत्तराणि अणंताणंताणि वग्गणाठाणाणि जाव उक्कोसा आहारणअग्गहणदव्ववग्गणा। जहण्णातो उक्कोसा अणंतगुणा। को गुणगारो ? अभवसिद्धितेहिं अणंतगुणो सिद्धाणं अणंतिमो भागो। तस्सुवरिं एगे रूवे वड्ढे तेअगदव्ववग्गणा जहण्णा। तेअगदव्ववग्गणा णाम तेअगसरीरस्स तारिसेहिं पोग्गलेहिं गहणं पवत्तति, ताणि दव्वाणि घेत्तूणं तेजगसरीरत्ताए परिणामेंति जीवा। तासिं अणंताणंतातो वग्गणातो पदेसुत्तराओ जहण्णा तेजोदव्ववग्गणा जाव उक्कोसा तेजोदव्ववग्गणा। जहण्णातो उक्कोसा केवतिया ? भण्णइ–विसेसाहिता। को विसेसो? भण्णइ–तस्सेव अणंतिमो भागो। तस्सुवरि एगे रूवे वूढे तेजोसरीरअग्गहणदव्ववग्गणा जहण्णा। तेजोअग्गहणदव्ववग्गणा णाम तेजोसरीरदव्ववग्गणं अतिच्छिता भासादव्ववग्गणं अपत्ता। तासि जहण्णादीणि पदेसुत्तराणि अणंताणंताणि वग्गणाठाणाणि जाव उक्कोसा तेजोअग्गहणदव्ववग्गणा। जहण्णातो उक्कोसा अणंतगुणा। को गुणगारो? भण्णइ–अभवसिद्धिएहिं अणंतगुणो सिद्धाणं अणंतिमो भागो। तस्सुवरिं एगे रूवे वूढे भासादव्ववग्गणा जहण्णा। भासादव्ववग्गणा णाम चउव्विहाए

भासाए गहणं पवत्तति। तंजहा-सच्चाए, मोसाए, सच्चामोसाए, असच्चामोसाए। जाइं दव्वाइं घित्तूणं सच्चादिभासत्ताए परिणामेउ णिस्सरंति जीवा ताणि दव्वाणि भासादव्ववग्गणा। तासिं जहण्णादीणि पदेसुत्तराणि अणंताणि ठाणाणि जाव उक्कोसा। जहण्णातो उक्कोसा विसेसाहिता। को विसेसो? तस्सेवाणंतिमो भागो। तस्सुवरिं एगे रूवे वूढे भासाअग्गहणदव्ववग्गणा जहण्णा। भासाअग्गहणदव्ववग्गणा णाम भासादव्वंपि अतिच्छिता मण(आणपाण)दव्वगहणं पि अपत्ता। तासिं जहण्णादीणि पतेसुत्तराणि अणंताणंताणि भासाअग्गहणदव्ववग्गणाठाणाणि जाव उक्कोसा भासाअग्गहणदव्ववग्गणा। जहण्णातो उक्कोसा अणंतगुणा। को गुणगारो? भण्णइ-अभवसिद्धिएहिं अणंतगुणो जहा आहारअग्गहणवग्गणा। तस्सुवरि एगे रूवे वूढे (आणपाणुदव्ववग्गणा जहण्णा। आणपाणुदव्ववग्गणा णाम आणपाणुदव्वाणि घेत्तूण आणपाणुत्ताए परिणामेंति जीवा। तासिं जहण्णादीणि पतेसुत्तराणि अणंताणंताणि ठाणाणि जाव उक्कोसा। जहण्णाओ उक्कोसा विसेसाहिया। को विसेसो? तस्सेवाणंतिमो भागो। तस्सुवरिं एगे रूवे वूढे आणपाणुअग्गहणदव्ववग्गणा जहण्णा। आणपाणुअग्गहणदव्ववग्गणा णाम आणपाणुदव्वंपि अतिच्छिता मणदव्वगहणंपि अपत्ता। तासिं जहण्णादीणि पदेसुत्तराणि अणंताणंताणि आणपाणुअग्गहणदव्ववग्गणाठाणाणि जाव उक्कोसा आणपाणुअग्गहणदव्ववग्गणा।[1] 'भासामणे य' इयेत्थ च सद्दाओ एसा गहिया। तस्सुवरि एगे रूवे वूढे) मणदव्ववग्गणा जहण्णा।

---

१ एषा वर्गणामूलेऽनुक्तत्वेन चूर्णौ न लिखिता तथापि 'भासामणे य' इत्यत्र चशब्देनोक्तत्वेन स्थानाशून्यार्थं संपूरिता कोष्ठकेऽवधार्या।

जहा भासा (आणपाणु) दव्ववग्गणा परूविता तहा मणदव्ववग्गणा वि परूवेयव्वा जाव जहण्णातो उक्कोसा विसेसाहिता। को विसेसो? भण्णइ–तस्सेवाणंतिमो भागो। तस्सुवरिं एगे रूवे वूढे मणअग्गहणदव्ववग्गणा जहण्णा। मणअग्गहणदव्ववग्गणा णाम मणदव्ववग्गणं अतिच्छिता कम्मतिगदव्वं पि अपत्ता। तासिं जहण्णादीणि जहा आहारअग्गहणदव्ववग्गणा तहा भाणियव्वा जाव तस्सुवरिं एगे रूवे वूढे कम्मतिगदव्ववग्गणा जहण्णा। कंमतिगसरीरदव्ववग्गणा णाम अट्ठविहस्स कंमस्स गहणं पवत्तति। तं जहा–णाणावरणस्स जाव अंतरातिगस्स। जाणि दव्वाणि घेत्तूण णाणावरणीयत्ताए जाव अंतरातियत्ताए परिणामेंति जीवा ताणि दव्वाणि कम्मतिगसरीरदव्ववग्गणा। कम्मतिगसरीरदव्ववग्गणा जहण्णादि पदेसुत्तरा जाव उक्कोसा। जहण्णातो उक्कोसा विसेसाहिता। को विसेसो? भण्णइ–तस्सेवाणंतिमो भागो। इयाणिं तासिं चेव गहणपातोग्गाणं दव्ववग्गणाणं वग्गणाईभेयदरिसणत्थं भण्णइ–उरालियसरीरदव्ववग्गणातो अणंताणंतपदेसियातो पंचवन्नाओ पंचरसाओ दुगंधातो अट्ठफासातो। एवं वेउव्वियाओ आहारगसरीराण वि। तेयोदव्ववग्गणातो अणंताणंतपदेसिताओ पंचवण्णातो पंचरसाओ दुगंधातो चउफासातो। एवं भासा(आणपाण)मणकम्मतिगदव्ववग्गणाओत्ति। एत्थ अप्पाबहुगं पदेसट्ठताए–सव्वत्थोवाओ उरालियसरीरदव्ववग्गणाओ पदेसट्ठयाए, वेउव्वियसरीरवग्गणाओ पदेसट्ठताए असंखेज्जगुणाओ, आहारग जाव असंखेज्जगुणातो। तेयासरीरदव्ववग्गणाओ पदेसट्ठताए अणंतगुणानो। भासादव्ववग्गणाओ पएसट्ठताए अणंतगुणाओ। (आणपाणुदव्ववग्गणाओ-

गपमट्ठताए अणंतगुणाओ) मणोदव्व जाव अणंतगुणातो । कम्मसरीरदव्ववग्गणा पदेसट्ठताए अणंतगुणा ।
कम्मतिगसरीरदव्ववग्गणाए उक्कसिताए उवरिं एगे रूवे वूढे धुवअचित्तदव्ववग्गणा जहण्णा । धुवअचि-
त्तदव्ववग्गणा जहण्णा णाम तहाविहपरिणामपरिणएहिं अचित्तखंधेहिं सव्वकालं अविरहितो लोगो अण्णे
उप्पज्जंति अण्णे विगच्छंति । अचित्तधुववग्गणाओ पदेसुत्तराओ अणंतातो जाव उक्कोसा धुवअचित्तद-
व्ववग्गणा । जहण्णा उक्कोसा केवतिता ? भण्णइ–सव्वजीवेहिं अणंतगुणा । तस्सुवरि एगे रूवे वूढे सां-
तरणिरंतरदव्ववग्गणा जहण्णा । सांतरणिरंतरदव्ववग्गणत्ति वा अधुवअचित्तदव्ववग्गणाति वा एगट्ठं । सां-
तरणिरंतरदव्ववग्गणा णाम जहण्णाओ सांतरणिरंतरदव्ववग्गणाओ आढवेत्तु पतेसुत्तरातो वग्गणातो अणंता-
तो । तासिं कासिंचिदव्ववग्गणाहिं लोगो कंचिकालं विरहिज्जइ कयाति कंचि कालं ण विरहिज्जति । ण पुण सव्व-
हा एव सांतरणिरंतरवग्गणाहिं लोगो विरहिज्जति । सांतरणिरंतरवग्गणातो पदेसुत्तरातो अणंतातो । जहण्णा-
तो उक्कोसा अणंतगुणा । को गुणगारो ? सव्वजीवेहिं अणंतगुणो । तस्सुवरिं एगे रूवे वूढे पढमा धुवसुण्ण-
वग्गणा । एवंविहपदेसपरिणता पोग्गला णत्थि, केवलं वग्गणापण्णवणा पण्णविज्जति । धुवसुण्णवग्गणापण्ण-
वणाए जहण्णादीणि अणंताणि ठाणाणि पदेसुत्तराणि जाव उक्कोसा पढमा धुवसुण्णवग्गणा । जहण्णातो उ-
क्कोसा अणंतगुणा । को गुणगारो ? भण्णइ–सव्वजीवेहिं अणंतगुणो । तस्सुवरिं एगे रूवे वूढे पत्तेयसरीरद-
व्ववग्गणा जहण्णा । पत्तेयसरीरदव्ववग्गणा णाम पत्तेयसरीराणं उरालादीणं उरालियवेउव्वितआहारगतेयकम्म-

तिगेसु विस्ससापरिणामोपचिता पोग्गला एक्केक्कंमि सरीरकम्मप्पदेसे सव्वजीवाणं अणंतगुणाओवचितातो। ताओ पत्तेयसरीरदव्ववग्गणातो वुच्चंति। जत्थ सरीरकम्मपदेसपोग्गला बहुगा तत्थ विस्ससापरिणामोपचिता वि बहुगा, जत्थ सरीरकम्मपदेसपोग्गला थोवा तत्थ विस्ससापरिणामोपचितावि पोग्गला थोवा। तेण जत्थ सव्वथोवा सरीरकम्मपदेसपोग्गला सा जहण्णिया पत्तेयसरीरदव्ववग्गणा। ततो पदेसुत्तरातो अणंताओ वग्गणाओ जाव उक्कोसितापत्तेयसरीरदव्ववग्गणा। जहण्णाओ उक्कोसा असंखेज्जगुणा। को गुणगारो? भण्णइ—खेत्तपलितोवमस्स असंखेज्जतिभागो। किं कारणं? भण्णइ-जहण्णातो सरीरकम्मपदेसाओ उक्कोसो सरीरकम्मपदेसो पलितोवमस्स असंखेज्जतिभागगुणोत्ति काउं। तस्सुवरिं एगे रूवे वूढे बितिया धुवसुण्णवग्गणा जहण्णा। तीए निरुत्ती पुव्वुत्ता। सा कप्पणाए जहण्णादी पदेसुत्तरा जाव उक्कोसा असंखेज्जगुणा। को गुणगारो? भण्णति-असंखेज्जाणं लोगाणं असंखेज्जतिभागो। सोवि असंखेज्जतिभागो असंखेज्जा लोगा। तस्सुवरिं एगे रूवे वूढे बादरणिओददव्ववग्गणा जहण्णा। बादरणिओददव्ववग्गणा णाम बादरणियोदाणं जीवाणं उरालियतेयाकम्मतिगेसु विस्ससापरिणामोपचिता पोग्गला एक्केक्कस्स जीवस्स एक्केक्कंमि सरीरकम्मप्पदेसे सव्वजीवाणं अणंतगुणउवचिता तातो बादरणियोयदव्ववग्गणातो वुच्चंति। जत्थ बायरणितोताणं जीवाणं सव्वत्थोवा सरीरकम्मपदेसा तत्थ विस्ससा परिणामोपचितावि थोवा, जत्थ सरीरकम्मपदेसपोग्गला बहुगा तत्थविस्ससापरिणामोपचिता वि बहुगा। तेण जत्थ सव्वत्थोवा सरीरकम्मपदेसपोग्गला सा जहण्णा बादरणिओयदव्ववग्गणा।

बन्धनकरणे वर्गणाप्ररूपणा.

तनो पदेसुत्तरा जाव उक्कोसा। जहण्णातो उक्कोसा असंखेज्जगुणा। को गुणगारो? भण्णति-पलिओवमस्स असंखेज्जतिभागो। कारणं जहा पत्तेयाणं। तस्सुवरि एगे रूवे वूढे ततिता धुवसुण्णवग्गणा जहण्णा। एतीते णिरुत्तं पुव्वुत्तं। तनो वि पदेसुत्तराओ अणंताओ जाव उक्कोसा। जहण्णाओ उक्कोसा केयतिया? भण्णति-अंगुलअसंखेज्जतिभागमेत्तस्स खेत्तस्स जावतिया आवलियाए असंखेज्जतिभागे समया तावतियाइं वग्गमूलाइं घेप्पंति तत्थ चरिमवग्गमूलस्स असंखेज्जत्तिभागे जावतिया आगासपदेसा तेसिं असंखेज्जतिभागो गुणगारो। तस्सुवरिं एगे रूवे वूढे सुहुमणिगोददव्ववग्गणा जहण्णा। सेसं जहा बादरणिगोददव्ववग्गणाए जाव जहण्णाओ उक्कोसा असंखेज्जगुणा। को गुणगारो? आवलियाए असंखेज्जतिभागो। तस्सुवरिं एगे रूवे वूढे चउत्था धुवसुण्णवग्गणा जहण्णा। एतीए वि अत्थो पुव्वुत्तो। तातो वि पदेसुत्तरातो जाव जहण्णाओ उक्कोसा असंखेज्जगुणा। को गुणगारो? असंखेज्जाओ सेढीओ पयरस्स असंखेज्जतिभागो। तस्सुवरिं एगे रूवे वूढे महाखंधवग्गणा जहण्णा। महाखंधवग्गणा णाम टंकपव्वयकूडादीणं अस्सिया पोग्गला महाखंधा वुचंति। ताओ पदेसुत्तरातो जहण्णाद्धि जाव उक्कोसा। जहण्णाओ उक्कोसा असंखेज्जगुणा। को गुणगारो? पलितोवमस्स असंखेज्जति भागो। कहं? भण्णति-जदा तसकायरासी बहुतो तदा महाखंधवग्गणातो थोवातो, जदा तसकायरासी थोवातो तदा महाखंधवग्गणातो बहुगातो।

इदाणिं सुत्तत्थो विवरिज्जति-'परमाणुसंखसंखाणंतपदेस'त्ति-परमाणुवग्गणा, संखेज्जपएसियवग्गणा, असं-

खेज्जपएसियवग्गणा, अणंतप्पएसियअणंतवग्गणा य गहणपाउग्गा ण भवंति। केरिसा गहणपातोग्गा? अभव्वणंतगुणा सिद्धाणंतभागो। 'आहारगवग्गण'त्ति–अभवसिद्धितेहिं अणंतगुणा सिद्धाणमणंतभागो एवतिताणं परमाणूणं समुदाओ खंधो, तारिसा आहारवग्गणा जहण्णा गहणपातोग्गा। कहं तस्स गहणं? भण्णति–'तितणु'त्ति–उरालियवेउव्वियआहारसरीराणं गहणजोग्गा। 'अग्गहणंतरितातो तेजगभासामणे य कम्मे य'त्ति। तेजगवग्गणा, अग्गहणवग्गणा, भासावग्गणा, अग्गहणवग्गणा, (आणपाणूवग्गणा, अग्गहणवग्गणा), मणोवग्गणा, अग्गहणवग्गणा, कम्मसरीरवग्गणा। 'धुव अधुव अचित्त'त्ति–धुवअचित्तवग्गणा, अधुवअचित्तवग्गणा–सांतरणिरंतरवग्गणा वि भण्णति। 'सुण्णा चउ'त्ति–चत्तारि धुवसुण्णवग्गणाओ। 'अंतरेसुप्पि'ति–तासिं धुवसुण्णवग्गणाणं अंतरंतरे। 'उप्पिं' च त्ति–एतातो उवरिल्लातो वग्गणातो भवंति 'पत्तेगतणुसु बादरसुहुमणिगोदे तहा महाखंधे'त्ति–पढमसुण्णवग्गणाणं उवरिं पत्तेयसरीरवग्गणा, पुणो सुण्णा, बादरणिगोदवग्गणा, पुणो सुण्णा, सुहुमणिगोदवग्गणा, पुणो सुण्णा, उवरिं महाखंधवग्गणा। 'गुणणिप्फण्णसणामे'त्ति–गुणणिप्पण्ण सणामातो वग्गणातो। किं भणितं होति? भण्णति–'परमाणु'त्ति–गुणणिप्पण्णं णाम, एवं दुपदेसितादीण वि पुव्वुत्ता वा णिरुत्ती। इदाणिं एते भण्णमाणा महंता महंततरत्ति दीसंति, तदवगाहप्पमाणावधारणत्थं भण्णति–'असंखभागंगुलवगाहो'त्ति–अंगुलस्स असंखेज्जतिभागे खेत्ते अवगाहंति, कम्मतिगसरीरवग्गणातो आढत्तं जाव उरालियसरीरदव्ववग्गणा ताव असंखेज्जगुणा ओग्गाहणट्ठाते भाणियव्वातो ॥१८-१९-२०॥

(मलय०)—ननु जीवो योगैस्तदनुरूपपुद्गलस्कन्धान् गृह्णाति आलम्बते चेत्युक्तम्, तत्र के पुद्गला ग्रहणप्रायोग्याः, के चाग्रहणप्रायोग्या इति विनेयजनप्रश्नावकाशमाशङ्क्य ग्रहणाग्रहणप्रायोग्याः पुद्गलवर्गणाः प्ररूपयति—'परमाणु'त्ति। एकैकपरमाणुरूपास्तथा संख्यातानां परमाणूनामसंख्यातानामनन्तानां च परमाणूनां समुदायरूपा वर्गणा भवन्ति। तत्रैकैकपरमाणवः परमाणुवर्गणा। इह वर्गणाशब्दः समुदायवाची, तत एकैकस्मिन् परमाणौ वर्गणाशब्दोऽनेकपर्यायोपनिपातापेक्षया द्रष्टव्यः। यदि पुनः परमाणूनां वर्गणा परमाणुवर्गणेत्युच्येत तर्हि जगति ये केचन परमाणवस्तेषां समुदायः परमाणुवर्गणेत्यापद्येत। तथा च सति 'असंखभागंगुलवगाहो' इति विरुध्येत, एकैकपरमाणूनां सर्वलोकगतत्वात्। तथा द्वयोः परमाण्वोः समुदायो द्विप्रदेशस्कन्धवर्गणाः। त्रयाणां परमाणूनां समुदायस्त्रिप्रदेशस्कन्धवर्गणाः। चतुर्णां परमाणूनां समुदायश्चतुःप्रदेशस्कन्धवर्गणाः। एवं तावद्वाच्यं यावत्संख्येया वर्गणा भवन्ति। असंख्यातानां च परमाणूनां समुदायरूपा असंख्येया वर्गणा वाच्याः, असंख्यातस्यासंख्यातभेदात्मकत्वात्। ततोऽनन्तानां परमाणूनां समुदायरूपा अनन्ता वर्गणा वाच्याः, अनन्तस्यानन्तभेदात्मकत्वात्। एताश्च मूलत आरभ्य सर्वा अपि जीवानामल्पपरमाणुतया स्थूलपरिणामत्वेन चाग्रहणप्रायोग्याः। अनन्तानन्तानां च परमाणूनां समुदायरूपाः काश्चिद् ग्रहणप्रायोग्याः काश्चिदग्रहणप्रायोग्याः। तत्राभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा ये परमाणवस्तत्समुदायात्मकाः स्कन्धाः 'आहारगवग्गण'त्ति—आहरणमाहारः—ग्रहणमित्यर्थः, आहार एवाहारकः तत्प्रायोग्या वर्गणा आहारकवर्गणा भवन्ति, ग्रहणप्रायोग्या वर्गणा भवन्तीत्यर्थः। किं विषया इत्यत आह- 'तिगणू' इति। औदारिकवैक्रियाहारकरूपतनुत्रयविषये ग्रहणप्रायोग्या वर्गणा 'अग्रहणान्तरिता'—अग्रहणप्रायोग्यवर्गणान्तरिताः। तथा तैजसभाषाप्राणापानमनःकर्मणि च विषयेऽग्रहणप्रायोग्यवर्गणान्तरिता ग्रहणप्रायोग्या वर्गणा भवन्ति। तथाहि—अभव्यानन्तगुण-

सिद्धानन्तभागकल्पपरमाणुसमुदायरूपा वर्गणा औदारिकशरीरनिष्पादनाय ग्रहणप्रायोग्या भवति । सा च जघन्या । तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया ग्रहणप्रायोग्या वर्गणा। द्विपरमाण्वधिकस्कन्धरूपा तृतीया ग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टा औदारिकशरीरग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा विशेषाधिका । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः । औदारिकशरीरग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा वर्गणाऽग्रहणप्रायोग्या, सा जघन्या । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा अनन्तगुणा । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । एतासां चाग्रहणप्रायोग्यता औदारिकं प्रति प्रभूतपरमाणुनिष्पन्नत्वात् सूक्ष्मपरिणामत्वाच्च वेदितव्या । वैक्रियं प्रति पुनः स्वल्पपरमाण्वात्मकत्वात् स्थूलपरिणामत्वाच्चावसेया। एवमुत्तरत्रापि भावना कार्या। अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा वर्गणा वैक्रियशरीरप्रायोग्या जघन्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया वैक्रियशरीरस्य ग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणा वैक्रियशरीरविषये ग्रहणप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। वैक्रियशरीरोत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा। जघन्यायाश्चोत्कृष्टा वर्गणा अनन्तगुणा। गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो

द्रष्टव्यः। तत उत्कृष्टाग्रहणप्रायोग्यवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा वर्गणा आहारकशरीरप्रायोग्या जघन्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया आहारकशरीरविषये ग्रहणप्रायोग्या वर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा आहारकशरीरविषये ग्रहणप्रायोग्या वर्गणास्तावद्वाच्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका। विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः। आहारकशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपाऽग्रहणप्रायोग्या जघन्यवर्गणा, ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टाऽनन्तगुणा। गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। इह चूर्णिकृदादयः औदारिकवैक्रियाहारकशरीरप्रायोग्याणां वर्गणानामपान्तरालेऽग्रहणवर्गणा नेच्छन्ति परं जिनभद्रगणिक्षमाश्रमणादिभिरिष्यन्त इति तन्मतेनोक्ताः। आहारकशरीराग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा वर्गणा तैजसशरीरप्रायोग्या जघन्या वर्गणा भवति। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तैजसशरीरप्रायोग्या वर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपास्तैजसशरीरविषये ग्रहणप्रायोग्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका। विशेषश्च तस्या एव जघन्याया अनन्ततमो भागः। तैजसशरीरप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा। जघन्यायाश्चोत्कृष्टाऽनन्तगुणा। गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्या भाषाप्रायोग्या वर्गणा।

यानि पुद्गलद्रव्याणि गृहीत्वा जन्तवः सत्यादिभाषारूपतया परिणमय्यालम्ब्य च विसृजन्ति तानि भाषाप्रायोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया भाषाप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा भाषाप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टा भाषाप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका। विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः उत्कृष्टभाषाप्रायोग्यवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा। जघन्यायाश्चोत्कृष्टाऽनन्तगुणा। गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । अग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्या प्राणापानयोग्या वर्गणा। यानि पुद्गलद्रव्याणि गृहीत्वा जन्तवः प्राणापानरूपतया परिणमय्यालम्ब्य च विसृजन्ति तानि प्राणापानयोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया प्राणापानयोग्या वर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्राणापानयोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा प्राणापानयोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टा विशेषाधिका। विशेषश्च तस्या एव जघन्याया अनन्ततमो भागः। प्राणापानयोग्योत्कृष्टवर्गणापेक्षया चैकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या वर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा भवति। जघन्यायाश्चोत्कृष्टाऽनन्तगुणा। गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः। ततोऽग्रहणप्रायोग्योत्कृष्टवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा मनःप्रायोग्या जघन्या वर्गणा। इह यानि पुद्गलद्रव्याणि जन्तवः सत्यादिमनोरूपतया परिणमय्यालम्ब्य च विसृजन्ति तानि मनःप्रायोग्या वर्गणा। ततो द्वि-

बन्धनकरणे वर्गणाप्ररूपणा.

॥ ४५ ॥

परमाण्वधिकस्कन्धरूपा द्वितीया मनःप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा मनःप्रायोग्या वर्गणास्तावद्वाच्या यावदुत्कृष्टा
मनःप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या एव जघन्याया वर्गणाया अनन्ततमो भागः । तत
उत्कृष्टमनःप्रायोग्यवर्गणापेक्षया एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्याऽग्रहणप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा
द्वितीयाऽग्रहणप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्या वर्गणास्तावद्वाच्या यावदुत्कृष्टाऽग्रहणप्रायोग्या
वर्गणा । जघन्यायाश्चोत्कृष्टाऽनन्तगुणा । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । ततोऽग्रहणप्रायोग्योत्कृ-
ष्टवर्गणापेक्षयैकपरमाण्वधिकस्कन्धरूपा कर्मप्रायोग्या जघन्या वर्गणा । इह यानि पुद्गलद्रव्याणि जन्तवो ज्ञानावरणीयादिरूपतया
परिणमयन्ति तानि कर्मप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया कर्मप्रायोग्या वर्गणा । एवमेकैकपरमाण्वधिकस्कन्ध-
रूपाः कर्मप्रायोग्या वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा कर्मप्रायोग्यवर्गणा भवति । जघन्यायाश्चोत्कृष्टा विशेषाधिका । विशेषश्च तस्या
एव जघन्याया वर्गणाया अनन्ततमो भागः । 'भासामणे य' इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वाद् भाषावर्गणानन्तरमग्रहण-
वर्गणान्तरिताः प्राणापानवर्गणा द्रष्टव्याः । ताश्च भाविता एव । 'कम्मे य' इत्यत्र चशब्दः समुच्चये । इदानीमेतासामेवौदारिका-
दिप्रायोग्यवर्गणानां वर्णादि निरूप्यते–तत्रौदारिकशरीरप्रायोग्या वर्गणा अनन्तानन्तपरमाण्वात्मकाः पञ्चवर्णा द्विगन्धाः पञ्चरसा
अष्टस्पर्शाश्च । एवं वैक्रियाहारकशरीरप्रायोग्या अपि वर्गणा द्रष्टव्याः । तैजसशरीरप्रायोग्या वर्गणाः पञ्चवर्णा द्विगन्धाः पञ्चरसाश्चतुः-
स्पर्शाः । तत्र मृदुलघुरूपौ द्वौ स्पर्शाववस्थितौ, अन्यौ तु द्वौ स्पर्शौ स्निग्धोष्णौ स्निग्धशीतौ रूक्षोष्णौ रूक्षशीतौ वा । एवं भाषाप्रा-
णापानमनःकर्मप्रायोग्या अपि वर्गणा द्रष्टव्याः । तथौदारिकवर्गणाः प्रदेशार्थतया सर्वस्तोकाः । ताभ्यो वैक्रियशरीरप्रायोग्या वर्गणा

अनन्तगुणाः । ताभ्य आहारकशरीरप्रायोग्या वर्गणा अनन्तगुणाः । ताभ्योऽपि तैजसशरीरप्रायोग्या वर्गणा अनन्तगुणाः । एवं भाषाप्राणापानमनःकर्मप्रायोग्या अपि वर्गणा यथोत्तरमनन्तगुणा वाच्याः । 'धुवअधुव' इत्यादि–कर्मप्रायोग्योत्कृष्टवर्गणानन्तरं ध्रुवाचित्तद्रव्यवर्गणाः, तदनन्तरं चाध्रुवाचित्तवर्गणाः, ततः 'सुन्ना चउ' त्ति–चतस्रो ध्रुवशून्यवर्गणाः । तासां च चतसृणां ध्रुवशून्यवर्गणानामन्तरे उपरिष्टात् प्रत्येकतनुषु बादरसूक्ष्मनिगोदे महास्कन्धे च वर्गणा यथासंख्यं भवन्ति । तद्यथा–प्रथमध्रुवशून्यवर्गणाया उपरि प्रत्येकशरीरवर्गणा, द्वितीयध्रुवशून्यवर्गणाया उपरि बादरनिगोदवर्गणा, तृतीयध्रुवशून्यवर्गणाया उपरि सूक्ष्मनिगोदवर्गणा, चतुर्थध्रुवशून्यवर्गणाया उपरि महास्कन्ध वर्गणा । तत्र कर्मप्रायोग्योत्कृष्टवर्गणानन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या ध्रुवाचित्तद्रव्यवर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया ध्रुवाचित्तद्रव्यवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा ध्रुवाचित्तद्रव्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा ध्रुवाचित्तद्रव्यवर्गणा । ध्रुवाचितद्रव्यवर्गणा नाम याः सर्वदैव लोके प्राप्यन्ते । तथाहि–एतासां मध्येऽन्या उत्पद्यन्तेऽन्या विनश्यन्ति, न पुनरेताभिः कदाचनापि लोको विरहितो भवति । अचित्तत्वं चासां जीवेन कदाचनापि अग्रहणादवसेयम् । जीवसंबन्धाद्धि सचित्तत्वमपि कथञ्चित् स्यात्, यथौदारिकादिशरीराणामिति । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणा अनन्तगुणा । गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्याऽध्रुवाचित्तद्रव्यवर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽध्रुवाचित्तद्रव्यवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा अध्रुवाचित्तद्रव्यवर्गणास्तावद्वाच्या यावदुत्कृष्टाऽध्रुवाचित्तद्रव्यवर्गणा भवति ।अध्रुवाचित्तद्रव्यवर्गणा नाम यासां मध्ये काश्चिद्वर्गणाः कदाचिल्लोके भवन्ति कदाचिच्च न भवन्ति । अत एवैताः सान्तरनिरन्तरा अप्युच्यन्ते । जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणाऽनन्तगुणा । गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा

बन्धनकरणे वर्गणाप्ररूपणा.

जघन्यप्रथमध्रुवशून्यवर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया प्रथमध्रुवशून्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्रथमध्रुवशून्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा प्रथमध्रुवशून्यवर्गणा भवति। ध्रुवशून्यवर्गणा नाम याः कदाचनापि लोके न भवन्ति। केवलमुपरितनवर्गणानां बाहुल्यपरिज्ञानार्थं प्ररूपणामात्रमेव क्रियते। जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टा वर्गणाऽनन्तगुणा। गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्रत्येकशरीरिद्रव्यवर्गणा। अथ केयं प्रत्येकशरीरिद्रव्यवर्गणा नाम? उच्यते—प्रत्येकशरीरिणां यथासंभवमौदारिकवैक्रियाहारकतैजसकार्मणेषु शरीरनामकर्मसु ये प्रत्येकं विश्रसापरिणामेनोपचयमापन्नाः सर्वजीवानन्तगुणाः पुद्गलास्ते प्रत्येकशरीरिद्रव्यवर्गणा। तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया प्रत्येकशरीरिद्रव्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपाः प्रत्येकशरीरिद्रव्यवर्गणास्तावद्वाच्या यावदुत्कृष्टा प्रत्येकशरीरिद्रव्यवर्गणा भवति। जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा। गुणकारश्च सूक्ष्मक्षेत्रपल्योपमासंख्येयभागलक्षणः। कथमेतदवसीयत इति चेद्,उच्यते—इह सर्वोऽपि कर्मप्रदेशोपचयो योगाद्भवति, 'जोगा पयडिपएसं' इति वचनात्। ततो जघन्ये योगे सति जघन्यः कर्मप्रदेशोपचयो भवति, उत्कृष्टे चोत्कृष्टः। जघन्याच्च योगस्थानादुत्कृष्टं योगस्थानं सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणितमेव प्राप्यते, नाधिकम्। ततः कर्मप्रदेशोपचयादपि जघन्यादुत्कृष्टः कर्मप्रदेशोपचयः सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणित एव भवति, नाधिकः। तदाश्रिता च प्रत्येकशरीरिद्रव्यवर्गणा। ततः प्रत्येकशरीरिद्रव्यवर्गणाऽप्युत्कृष्टा जघन्यप्रत्येकशरीरिद्रव्यवर्गणापेक्षया सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणितैव भवति। ततोऽनन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या द्वितीयध्रुवशून्यवर्गणा। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया द्वितीयध्रुवशून्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा द्वितीयध्रुवशून्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा द्वितीयध्रुवशून्यवर्गणा। जघन्यायाश्चोत्कृष्टाऽसंख्येय-

गुणा । गुणकारश्चासंख्येयलोकाकाशप्रदेशराशिप्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या बादरनिगोदवर्गणा । अथ केयं बादरनिगोदद्रव्यवर्गणा नाम ? उच्यते—बादरनिगोदजीवानामौदारिकतैजसकार्मणेषु प्रत्येकं ये सर्वजीवानन्तगुणाः पुद्गला विश्रसापरिणामेनोपचयमायान्ति ते बादरनिगोदद्रव्यवर्गणा । तत्र बादरनिगोदजीवानां यद्यपि केषाञ्चित् कियत्कालं वैक्रियाहारकशरीरनामकर्मणी अपि संभवतः तथापि ते प्रथमसमयादेव निरन्तरमुद्वल्यमानत्वादत्यन्तमसारे इति न विवक्ष्येते। ततो द्विपरमाण्वधिकस्कन्धरूपा वर्गणा द्वितीया बादरनिगोदद्रव्यवर्गणा। एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा बादरनिगोदद्रव्यवर्गणा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा। गुणकारश्च क्षेत्रपल्योपमासंख्येयभागलक्षणः। अत्र युक्तिः प्रत्येकशरीरिद्रव्यवर्गणायामिव परिभावनीया। तत एकपरमाण्वधिकस्कन्धरूपा जघन्या तृतीयध्रुवशून्यवर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तृतीयध्रुवशून्यवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा तृतीयध्रुवशून्यवर्गणा भवति । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्चाङ्गुलमात्रे क्षेत्रे आवलिकाया असंख्येयतमे भागे यावन्तः समयास्तावन्ति वर्गमूलानि गृह्यन्ते, गृहीत्वा च चरमस्य वर्गमूलस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या सूक्ष्मनिगोदद्रव्यवर्गणा। सा च सूक्ष्मनिगोदवर्गणा बादरनिगोदद्रव्यवर्गणावदविशेषेणावगन्तव्या यावदुत्कृष्टा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्चावलिकाया असंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणो द्रष्टव्यः, यतः सूक्ष्मनिगोदजीवानां जघन्याद्योगस्थानादुत्कृष्टं योगस्थानं आवलिकाऽसंख्येयभागगुणितमेव प्राप्यते नाधिकम् । योगाधीना च कर्मप्रदेशोपचयवृद्धिः, तदधीना च सूक्ष्मनिगोदवर्गणेति । तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या तुरीयध्रुवशून्यवर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया तुरीयध्रुवशून्यवर्गणा। एव-

मेकैकरूपपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा तुरीयध्रुवशून्यवर्गणा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्च प्रतरासंख्येयभागवर्त्यसंख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणो द्रष्टव्यः। तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या महास्कन्धवर्गणा। महास्कन्धवर्गणा नाम ये पुद्गलस्कन्धा विश्रसापरिणामेन टङ्ककूटपर्वतादिसमाश्रिताः । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया महास्कन्धवर्गणा । एवमेकैकरूपपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वक्तव्या यावदुत्कृष्टा भवति । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्च पल्योपमासंख्येयभागरूपो द्रष्टव्यः । इमाश्च महास्कन्धवर्गणा यदा भूयान् त्रसकायो भवति तदा स्तोकाः प्राप्यन्ते यदा त्वल्पस्तदा प्रभूता इति वस्तुस्वभाव एषः । एताश्च परमाणुवर्गणाद्या महास्कन्धवर्गणापर्यवसानाः 'गुणणिप्फणसनाम'त्ति–गुणैः कृत्वा निष्पन्नं स्वं–स्वकीयं नाम यासां ता गुणनिष्पन्नस्वनामानः । तथाहि–एकैके परमाणवः परमाणुवर्गणा, द्वयोः परमाण्वोर्वर्गणा द्विपरमाणुवर्गणाः, इत्येवं नाम्नां यथार्थता विद्यते एव। तथा 'असंखभागंगुलवगाहो'त्ति–सर्वासामपि वर्गणानामवगाहोऽङ्गुलस्यासंख्येयो भागः। तथाहि–एता वर्गणाः सर्वा अपि सर्वोत्कृष्टमहास्कन्धवर्गणापर्यवसानाः प्रदेशापेक्षया यथोत्तरं महत्यः महत्तरा अपि भवन्त्यः प्रत्येकमेकैकाः सत्योऽङ्गुलासंख्येयभागमात्रक्षेत्रावगाहा एव विद्यन्ते । यदा पुनः सामस्त्येन प्रत्येकं विवक्ष्यन्ते तदा सर्वा अप्येताः परमाणुवर्गणाद्याः सर्वोत्कृष्टमहास्कन्धवर्गणापर्यवसानाः प्रत्येकमनन्तानन्ताः सकललोकाश्रिता अवगन्तव्याः । तथा कार्मणशरीरप्रायोग्यवर्गणात आरभ्यार्वाक् यावदौदारिकशरीरप्रायोग्या वर्गणास्तावत् क्षेत्रावगाहोऽसंख्येयगुणो द्रष्टव्यः, तद्यथा–कर्मवर्गणावगाहक्षेत्रान्मनोवर्गणावगाहक्षेत्रं प्रदेशतोऽसंख्येयगुणम् , ततोऽप्यानप्राणावगाहक्षेत्रं प्रदेशतोऽसंख्येयगुणमित्यादि ॥१८–१९–२० ॥

(उ०)—ननु प्रायोग्यान् पुद्गलान् गृह्णात्यालम्बते चेत्युक्तं तत्र के पुद्गला ग्रहणप्रायोग्याः के चाग्रहणप्रायोग्या इति शिष्यजिज्ञा-

सायां ग्रहणाग्रहणप्रायोग्याः पुद्गलवर्गणाः प्ररूपयति—एकैकपरमाणुरूपाः तथा संख्यातप्रदेशा असंख्यातप्रदेशा अनन्तप्रदेशाश्च वर्गणा भवन्ति। तत्रैकैके परमाणवः परमाणुवर्गणाः। इह च वर्गणाशब्दः समुदायवाची वर्गणायोग्यत्वमादाय समर्थनीयः। एकैकस्मिन् परमाणौ वर्गणाशब्दोऽनेकपर्यायोपनिपातापेक्षया द्रष्टव्य इत्यप्याहुः। यदि च परमाणूनां वर्गणा परमाणुवर्गणेत्युच्येत तदा जगति ये केऽपि परमाणवस्तत्समुदायः परमाणुवर्गणा प्रसज्येत, तथा च तस्यां वक्ष्यमाणाङ्गुलासंख्यभागावगाहनाविरोधः, समुदितानां सर्वलोकगतत्वात्, तत एकैके परमाणव एव परमाणुवर्गणाः, एताश्चानन्ताः, सर्वाग्रेण लोकव्यापिन्यश्च। परमाणुद्वयसमुदायरूपा द्विपरमाणुवर्गणाः, ता अप्यनन्ताः सकललोकव्यापिन्यश्च। एवं सर्वा अपि वर्गणाः प्रत्येकमनन्ताः सकललोकव्यापिन्यश्चावगन्तव्याः। त्रिपरमाणुसमुदायरूपास्त्रिपरमाणुवर्गणाः। एवमुत्तरोत्तरवृद्ध्या संख्येयपरमाण्वात्मकाः संख्येयवर्गणा वाच्याः। असंख्येयपरमाण्वात्मका असंख्याताः, असंख्यातस्यासंख्यातभेदात्मकत्वात्। अनन्तपरमाण्वात्मका यथोत्तरवृद्ध्याऽनन्ताः, अनन्तस्यानन्तभेदात्मकत्वात्। एताश्च मूलत आरभ्य सर्वा अपि जीवानामल्पपरमाणुतया स्थूलपरिणामत्वेन चाग्रहणप्रायोग्याः, अनन्तपरमाण्वात्मका अप्यर्वाक्तन्यो न ग्रहणप्रायोग्याः। यास्त्वभव्येभ्योऽनन्तगुणानां सिद्धानन्तभागकल्पानां परमाणूनां समुदायात्मकास्ताः 'आहारवग्गण'त्ति—आहारणमाहारो ग्रहणमित्यर्थः, आहार एव आहारकः, तत्प्रायोग्या वर्गणा भवन्ति, ग्रहणप्रायोग्या वर्गणा भवन्तीत्यर्थः। किं विषया इत्याह—'तितणू' इति। औदारिकवैक्रियाहारकरूपतनुत्रयविषया इत्यर्थः। एतास्तथा तैजसभाषाप्राणापानमनःकर्मणि विषयेऽग्रहणप्रायोग्यवर्गणान्तरिता ग्रहणप्रायोग्या वर्गणा भवन्ति। तथाहि—अभव्यानन्तगुणसिद्धानन्तभागकल्पपरमाणुसमुदायरूपा वर्गणौदारिकशरीरनिष्पादनाय ग्रहणप्रायोग्या भवति, सा च जघन्या। तत एकपरमाण्वधिकस्कन्ध-

बन्धनकरणे वर्गणाप्ररूपणा.

रूपा द्वितीया ग्रहणप्रायोग्या । द्विपरमाण्वधिकस्कन्धरूपा तृतीया । एवमेकैकपरमाण्वधिकस्कन्धरूपास्तावद्वाच्या यावदुत्कृष्टा औदारिकशरीरप्रायोग्या वर्गणा । जघन्याया औदारिकग्रहणप्रायोग्यायाः सकाशादुत्कृष्टा वर्गणा विशेषाधिका । विशेषश्च तस्या एव वर्गणाया अनन्ततमो भागः । औदारिकप्रायोग्योत्कृष्टवर्गणात एकपरमाण्वधिकस्कन्धरूपा वर्गणाऽग्रहणप्रायोग्या, सा च जघन्या । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या भवन्ति । ताश्च जघन्यायाः सकाशादनन्तगुणाः । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणो द्रष्टव्यः । एतासां चाग्रहणप्रायोग्यतौदारिकं प्रति प्रभूतपरमाणुनिष्पन्नत्वात् सूक्ष्मपरिणामत्वाच्च, वैक्रियं प्रति तु स्वल्पपरमाण्वात्मकत्वात्स्थूलपरिणामत्वाच्चावसेया । एवमुत्तरत्रापि भावनीयम् । उक्ताग्रहणप्रायोग्योत्कृष्टवर्गणात एकपरमाण्वधिकस्कन्धरूपा वैक्रियशरीरप्रायोग्या जघन्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणा वैक्रियग्रहणप्रायोग्यास्तावद्वाच्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा आयान्ति । ताश्च जघन्याया विशेषाधिकाः । विशेषश्च तस्या एव वर्गणाया अनन्ततमो भागः । वैक्रियशरीरग्रहणप्रायोग्योत्कृष्टवर्गणात एकपरमाण्वधिकस्कन्धरूपा जघन्याऽग्रहणप्रायोग्या वर्गणा । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीयाऽग्रहणप्रायोग्या । एवमेकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्यास्तावद्वाच्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा । ताश्च जघन्याया अनन्तगुणाः । गुणकारश्चाभव्यानन्तगुणसिद्धानन्तभागकल्पराशिमानः । तत उत्कृष्टाग्रहणप्रायोग्यवर्गणात एकपरमाण्वधिकस्कन्धरूपा वर्गणाऽऽहारकशरीरप्रायोग्या । सा च जघन्या । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया । एवमेकैकपरमाण्वधिकस्कन्धरूपा आहारकग्रहणप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टाहारकग्रहणप्रायोग्या वर्गणा भवति । जघन्यायाश्चोत्कृष्टास्तदनन्ततमभागेन

विशेषाधिकाः । आहारकशरीरप्रायोग्योत्कृष्टवर्गणात एकपरमाण्वधिकस्कन्धरूपाऽग्रहणप्रायोग्या जघन्या वर्गणा । तत एकैकपरमाण्वधिकस्कन्धरूपा अग्रहणप्रायोग्यास्तावद्वक्तव्या यावदुत्कृष्टा । जघन्यायाश्चोत्कृष्टाऽभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणेनानन्तगुणा । इह चूर्णिकृत्प्रभृतय औदारिकवैक्रियाहारकशरीरग्रहणप्रायोग्यवर्गणानामन्तरालेऽग्रहणवर्गणा नेच्छन्ति परमावश्यकभाष्यादावेता इष्यन्त इति तन्मतेनोक्ताः । आहारकशरीरप्रायोग्योत्कृष्टवर्गणात एकपरमाण्वधिकस्कन्धरूपा तैजसशरीरप्रायोग्या जघन्या वर्गणा । तत एकैकपरमाण्वधिकस्कन्धरूपास्तावद्वक्तव्या यावदुत्कृष्टा तैजसप्रायोग्या वर्गणा । तत एकपरमाण्वाधिक्ये जघन्याऽग्रहणवर्गणा । तत एकैकपरमाण्वधिकस्कन्धरूपास्तावद्वाच्या यावदुत्कृष्टा अग्रहणवर्गणाः । तत उत्कृष्टाग्रहणवर्गणात एकपरमाण्वधिकस्कन्धरूपा जघन्या भाषाप्रायोग्या वर्गणा, यत्पुद्गलान् गृहीत्वा जन्तवः सत्यादिभाषारूपतया परिणमय्यालम्ब्य च विसृजन्ति । तत एकैकपरमाण्वधिकस्कन्धरूपा भाषाप्रायोग्या वर्गणास्तावद्वाच्या यावदुत्कृष्टा । तत एकपरमाण्वाधिक्ये जघन्याऽग्रहणप्रायोग्या । तत एकैकपरमाण्वधिकस्कन्धरूपास्ताचद्वाच्या यावदुत्कृष्टा अग्रहणप्रायोग्या वर्गणा । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्राणापानयोर्वर्गणा, यत्पुद्गलान् गृहीत्वा जन्तवः प्राणापानरूपतया परिणमय्यालम्ब्य च विसृजन्ति । तत एकैकपरमाण्वधिकस्कन्धरूपास्तावद्वाच्या यावदुत्कृष्टा ग्रहणप्रायोग्या वर्गणा । प्राणापानयोग्योत्कृष्टवर्गणात एकपरमाण्वाधिक्ये जघन्याऽग्रहणप्रायोग्या । तत एकैकपरमाण्वधिकस्कन्धरूपास्तावद्वक्तव्या यावदुत्कृष्टा अग्रहणप्रायोग्या । ततोऽग्रहणप्रायोग्योत्कृष्टवर्गणात एकपरमाण्वधिकस्कन्धरूपा मनःप्रायोग्या जघन्या वर्गणा, यत्पुद्गलान् गृहीत्वा जन्तवः सत्यादिमनोरूपतया परिणमय्यालम्ब्य च विसृजन्ति । तत एकैकपरमाण्वधिकस्कन्धरूपास्तावद्वाच्या यावदुत्कृष्टा मनःप्रायोग्या वर्गणा । उत्कृष्टमनःप्रायोग्यवर्गणात एकपरमाण्वाधिक्ये जघन्याऽग्रहणप्रायोग्या । तत एकैकपरमाण्वधिक-

स्कन्धरूपास्तावद्वाच्या यावदुत्कृष्टाऽग्रहणप्रायोग्या वर्गणा । ततोऽग्रहणप्रायोग्योत्कृष्टवर्गणात एकपरमाण्वधिकस्कन्धरूपा जघन्या कर्मप्रायोग्या वर्गणा, यत्पुद्गलान् गृहीत्वा जीवा ज्ञानावरणादिरूपतया परिणमयन्ति । तत एकैकपरमाण्वधिकस्कन्धरूपास्तावद्वाच्या यावदुत्कृष्टा कर्मप्रायोग्या वर्गणा । सर्वत्रोत्कृष्टा ग्रहणप्रायोग्यवर्गणा स्वजघन्यवर्गणानन्ततमभागरूपेण विशेषेण स्वस्वजघन्यवर्गणातोऽधिका, अग्रहणप्रायोग्योत्कृष्टवर्गणा च स्वजघन्यवर्गणाऽपेक्षयाऽभव्यानन्तगुणसिद्धानन्तभागकल्पराशिप्रमाणेनानन्तगुणा द्रष्टव्या । 'भासामणे य' इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वाद् भाषावर्गणानन्तरमग्रहणवर्गणान्तरिताः प्राणापानवर्गणा द्रष्टव्याः । ताश्च व्याख्याता एव । 'कम्मे य' इत्यत्र चशब्दः सर्वसमुच्चये । अथैतासामौदारिकादिवर्गणानां वर्णादि प्रसङ्गतो निरूप्यते—तत्रौदारिकवैक्रियाहारकवर्गणाः पञ्चवर्णाः द्विगन्धाः पञ्चरसा अष्टस्पर्शाश्च । यद्यपि परमाणोरेक एव वर्ण एक एव रस एक एव गन्धो द्वावेव चाविरुद्धौ स्पर्शौ भवतस्तथापि समुदाये कोऽपि परमाणुः केनापि वर्णादिना युक्तो भवतीति समुदाये पञ्चवर्णादित्वप्रतिपादनमविरुद्धम् । तैजसप्रायोग्याद्याश्च वर्गणाः पञ्चवर्णाः पञ्चरसा द्विगन्धाश्च ज्ञातव्याः, स्पर्शचिन्तायां तु चतुःस्पर्शाः । तत्र मृदुलघुरूपौ द्वौ स्पर्शाववस्थितौ, अन्यौ तु द्वौ स्निग्धोष्णौ स्निग्धशीतौ रुक्षोष्णौ रूक्षशीतौ वाऽनियतौ । तदिदमुक्तं—"पंचरसपंचवण्णेहिं परिणया अट्ठफासदोगंधा । जावाहारगजोग्गा चउफासविसेसिया उवरिं ॥ १ ॥" तथौदारिकवर्गणाः प्रदेशार्थतया सर्वस्तोकाः, ताभ्यो वैक्रियशरीरप्रायोग्या अनन्तगुणाः, ताभ्य आहारकप्रायोग्या अनन्तगुणाः । एवं तैजसभाषाप्राणापानमनःकर्मप्रायोग्या अपि वर्गणा यथोत्तरमनन्तगुणा वाच्याः । 'धुवअधुव' इत्यादि । कर्मप्रायोग्योत्कृष्टवर्गणानन्तरं ध्रुवाचित्तद्रव्यवर्गणाः, तदनन्तरं चाध्रुवाचित्तद्रव्यवर्गणाः । ततः 'सुन्ना चउ' त्ति—चतस्रो ध्रुवशून्यवर्गणाः । तासां चतसृणां ध्रुवशून्यवर्गणानामन्तरे उपरिष्टात् प्रत्येकतनुषु बादरसूक्ष्मनिगोदे तथा महास्कन्धे वर्गणा यथासंख्यं

भवन्ति । तथाहि—प्रथमध्रुवशून्यवर्गणाया उपरि प्रत्येकशरीरिवर्गणा। द्वितीयध्रुवशून्यवर्गणाया उपरि बादरनिगोदवर्गणा। तृतीयध्रुवशून्यवर्गणाया उपरि सूक्ष्मनिगोदवर्गणा । चतुर्थध्रुवशून्यवर्गणाया उपरि महास्कन्धवर्गणा । तत्र कर्मप्रायोग्योत्कृष्टवर्गणानन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या ध्रुवाचित्तद्रव्यवर्गणा। तत एकैकपरमाण्वधिकस्कन्धरूपा ध्रुवाचित्तद्रव्यवर्गणास्तावद्वाच्यां यावदुत्कृष्टा ध्रुवाचित्तद्रव्यवर्गणा । ध्रुवाचित्तद्रव्यवर्गणा नाम याः सदैव लोके प्राप्यन्ते । तथाहि—एतासां मध्येऽन्या उत्पद्यन्तेऽन्या विनश्यन्ति, न पुनरेतासां यथास्थितसंख्यानामन्यतमयाऽपि कदाचनापि लोको विरहितो भवति, अचित्तत्वं चासां जीवेन कदाचिदप्यग्रहणादवसेयं, जीवेन ग्रहणे त्वौदारिकादीनामिव कथञ्चित्सचित्तत्वमपि स्यादिति । जघन्यायाश्च सकाशादुत्कृष्टा वर्गणाऽनन्तगुणा । गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा जघन्याऽध्रुवाचित्तद्रव्यवर्गणा । तत एकैकपरमाण्वाधिक्येनाध्रुवाचित्तवर्गणास्तावद्वाच्या यावदुत्कृष्टाऽध्रुवाचित्तद्रव्यवर्गणा भवति । अध्रुवाचित्तद्रव्यवर्गणा नाम यासां मध्ये काश्चिद्वर्गणाः कदाचिल्लोके भवन्ति। अत एवैताः सान्तरनिरन्तरा अप्युच्यन्ते । जघन्यायाश्च सकाशादुत्कृष्टा वर्गणा सर्वजीवानन्तगुणराशिप्रमाणेनानन्तगुणा । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्रथमध्रुवशून्यवर्गणा । तत एकैकपरिमाण्वाधिक्येन प्रथमध्रुवशून्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा प्रथमध्रुवशून्यवर्गणा भवति। ध्रुवशून्यवर्गणा नाम याः कदाचनापि लोके न भवन्ति, केवलमुपरितनवर्गणानां बाहुल्यपरिज्ञानार्थं प्ररूपणामात्रमेव क्रियते। जघन्यायाश्च वर्गणायाः सकाशादुत्कृष्टाऽनन्तगुणा। गुणकारश्च सर्वजीवानन्तगुणराशिप्रमाणः। तत एकपरमाण्वधिकस्कन्धरूपा जघन्या प्रत्येकशरीरिद्रव्यवर्गणा। केयं प्रत्येकशरीरिद्रव्यवर्गणा नाम? उच्यते—प्रत्येकशरीरिणां यथासंभवमौदारिकवैक्रियाहारकतैजसकार्मणेषु शरीरनामकर्मसु ये प्रत्येकं विश्रसापरिणामेनोपचयमापन्नाः सर्वजीवानन्तगुणाः पुद्गलास्ते प्रत्येकशरीरिद्रव्यवर्गणाः ।

उक्तं च शतकबृहच्चूर्णौ—"पत्तेयवग्गणा इह पत्तेयाणंतउरलमाईणं । पंचण्हसरीराणं तणुकम्मपएसगा जे उ ॥ १ ॥ तत्थेक्केक्कपएसे वीससापरिणामउवचिया हुंति । सव्वजियाणंतगुणा पत्तेया वग्गणा ताओ ॥ २ ॥" तत एकपरमाण्वधिकस्कन्धरूपा द्वितीया प्रत्येकशरीरिद्रव्यवर्गणा । एवमेकैकपरमाण्वाधिक्येन प्रत्येकशरीरिद्रव्यवर्गणास्तावद्वक्तव्या यावदुत्कृष्टा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्च सूक्ष्मक्षेत्रपल्योपमासंख्येयभागलक्षणः । कथमेतदवगम्यते ? इति चेत् ,उच्यते—जघन्ये कर्मप्रदेशोपचये जघन्या तत्र वैश्रसिकी प्रत्येकशरीरिद्रव्यवर्गणा,उत्कृष्टे चोत्कृष्टा । जघन्यश्च कर्मप्रदेशोपचयो जघन्ययोगाद्भवति, उत्कृष्टश्चोत्कृष्टात् । जघन्याच्च योगस्थानादुत्कृष्टं योगस्थानं सूक्ष्मक्षेत्रपल्योपमासंख्येयभागगुणितमेव प्राप्यते, ततो जघन्याद् कर्मप्रदेशोपचयादुत्कृष्टः कर्मप्रदेशोपचयस्तावन्मात्र एव, जघन्यायाः सकाशादुत्कृष्टा प्रत्येकशरीरिद्रव्यवर्गणाऽपि च तावत्प्रमाणैव सिध्यतीति । ततोऽनन्तरमेकपरमाण्वधिकस्कन्धरूपा जघन्या द्वितीयध्रुवशून्यवर्गणा, द्विपरमाण्वधिकस्कन्धरूपा द्वितीया । एवमेकैकपरमाण्वधिकस्कन्धरूपद्वितीयध्रुवशून्यवर्गणास्तावद्वाच्या यावदुत्कृष्टा द्वितीयध्रुवशून्यवर्गणा । जघन्यायाश्चोत्कृष्टाऽसंख्यगुणा । गुणकारश्चासंख्येयलोकाकाशप्रदेशप्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या बादरनिगोदद्रव्यवर्गणा । अथ केयं बादरनिगोदद्रव्यवर्गणा नाम ? उच्यते—बादरनिगोदजीवानामौदारिकतैजसकार्मणेषु शरीरनामकर्मसु ये प्रत्येकं सर्वजीवानन्तगुणाः पुद्गला विश्रसापरिणामेनोपचयमायान्ति ते बादरनिगोदद्रव्यवर्गणाः । यद्यपि केषांचिद्बादरनिगोदजीवानां वैक्रियाहारकशरीरनामकर्मणी अपि संभवतस्तथापि ते प्रथमसमयादेव निरन्तरमुद्वल्यमानत्वादत्यन्तमसारे इति न विवक्ष्येते । ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया बादरनिगोदद्रव्यवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टा । जघन्यायाश्चोत्कृष्टा क्षेत्रपल्योपमासंख्येयभागलक्षणेन गुणकारेणासंख्येयगुणा । अत्र युक्तिः प्रत्ये-

कशरीरिद्रव्यवर्गणायामिव भावनीया । तत एकपरमाण्वधिकस्कन्धरूपा जघन्या तृतीयध्रुवशून्यवर्गणा । तत एकैकपरमाण्वधिकस्कन्धरूपा वर्गणास्तावद्वाच्या यावदुत्कृष्टा तृतीयध्रुवशून्यवर्गणा। जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा। गुणकारश्चाङ्गुलमात्रक्षेत्रे आवलिकाऽसंख्येयतमभागस्थयावत्समयप्रमाणेषु वर्गमूलेषु गृहीतेषु यत् चरमं वर्गमूलं तदसंख्येयतमभागे यावन्त आकाशप्रदेशास्तावत्प्रमाणो द्रष्टव्यः । तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या सूक्ष्मनिगोदवर्गणा । सा च तदौदारिकशरीराद्याश्रितविश्रसोपचितपुद्गलरूपा वादरनिगोदवर्गणावदविशेषेणावगन्तव्या, यावदुत्कृष्टा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा । गुणकारश्चावलिकाया असंख्येयतमभागे यावन्तः समयास्तावत्प्रमाणो द्रष्टव्यः । सूक्ष्मनिगोदजीवानां ह्युत्कृष्टं योगस्थानं जघन्यादावलिकासंख्येयभागगुणितमेव प्राप्यते, नाधिकम् । योगाधीना च कर्मप्रदेशोपचयवृद्धिः, तदधीना च सूक्ष्मनिगोदवर्गणेति । तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या तुरीयध्रुवशून्यवर्गणा । तत एकैकपरमाण्वधिकस्कन्धरूपास्तावद्वाच्या यावदुत्कृष्टा तुरीयध्रुवशून्यवर्गणा । जघन्यायाश्चोत्कृष्टाऽसंख्येयगुणा। गुणकारश्च प्रतरासंख्येयभागवृत्त्यसंख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणः। तत एकपरमाण्वधिकस्कन्धरूपा वर्गणा जघन्या महास्कन्धवर्गणा। महास्कन्धवर्गणा नाम ये पुद्गलस्कन्धा विश्रसापरिणामेन टङ्ककूटपर्वताद्याश्रिताः। ततो द्विपरमाण्वधिकस्कन्धरूपा द्वितीया महास्कन्धवर्गणा । एवमेकैकपरमाण्वधिकस्कन्धरूपा महास्कन्धवर्गणास्तावद्वाच्या यावदुत्कृष्टा । जघन्यायाश्चोत्कृष्टाऽसङ्ख्येयगुणा । गुणकारश्च पल्योपमासङ्ख्येयभागलक्षणो द्रष्टव्यः । इमाश्च महास्कन्धवर्गणास्त्रसकायभूयस्त्वे स्वल्पाः तदल्पत्वे तु प्रभूताः प्राप्यन्त इति वस्तुस्वभाव एषः । तदुक्तं शतकबृहच्चूर्णौ—"महखंधवग्गणा टंककूड तह पव्वयाइठाणेसु । जे पोग्गला समसिया महखंधा ते उ वुच्चंति ॥ १ ॥ तत्थ तसकायरासी जम्मि य कालम्मि होंति वहुगो अ । महखंधवग्गणाओ तम्मि य काले भवे थोवा ॥ २ ॥ जं पुण होइ अ काले रासी

बन्धनकरणे वर्गणाप्ररूपणा.

## पुद्गलवर्गणानां यंत्रम्

| [illegible] | वर्गणानां नामानि | उत्तरवर्गणागत-परमाणूनां संख्या | एकैकस्मिन्नुत्तरवर्गणाया प्रदेशाः | उत्तरवर्गणाया एतस्या अवगाहना | स्वजघन्यवर्गणागतप्रदेशा-पेक्षया स्वोत्कृष्टवर्गणा-गतप्रदेशा |
|---|---|---|---|---|---|
| १ | एकाणुकादिः | अभव्यादनंतगुणा | एकादानन्तात् | अंगुलाऽसंख्येयभागप्रमाणा | अभव्यानन्तगुणाः |
| २ | औदारिकव० | ,, | अभव्यादनन्तगुणाः | ,, | स्वजघन्यानन्तभागो अधिकः |
| ३ | अग्राह्या | ,, | औदारिकादेकाद्यनन्तपर्यन्ताधिकाः | ततोंगुलासंख्येय भागहीना | अभव्यानन्तगुणाः |
| ४ | वैक्रियव० | ,, | औदारिकादनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| ५ | अग्राह्या | ,, | वैक्रियादेकाद्यनन्तपर्यन्ताधिकाः | ,, | अभव्यानन्तगुणाः |
| ६ | आहारकव० | ,, | वैक्रियादनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| ७ | अग्राह्या | ,, | आहारकादेकाद्यनन्तपर्यन्ताधिकाः | ,, | अभव्यानन्तगुणाः |
| ८ | तैजसव० | ,, | आहारकादनन्तगुणाः | ,, | अनन्तभागाधिकाः |
| ९ | अग्राह्या | ,, | तैजसादेकाद्यनन्तपर्यन्ताधिकाः | ,, | अभव्यानन्तगुणाः |

| | | | | | |
|---|---|---|---|---|---|
| १० | भाषाव० | ” | तैजसादनन्तगुणाः | ” | अनन्तभागाधिकाः |
| ११ | अग्राह्या | ” | भाषाया एकाद्यनन्तपर्यन्ताधिकाः | ” | अभव्यानन्तगुणाः |
| १२ | उच्छ्वासव० | ” | भाषाया अनन्तगुणाः | ” | अनन्तभागाधिकाः |
| १३ | अग्राह्या | ” | उच्छ्वासादेकाद्यनन्तपर्यन्ताधिकाः | ” | अभव्यानन्तगुणाः |
| १४ | मनोव० | ” | उच्छ्वासादनन्तगुणाः | ” | अनन्तभागाधिकाः |
| १५ | अग्राह्या | ” | मनस एकाद्यनन्तपर्यन्ताधिका | ” | अभव्यानन्तगुणाः |
| १६ | कार्मणव० | ” | मनसोऽनन्तगुणाः | ” | अनन्तभागाधिकाः |
| १७ | ध्रुवाचित्तद्रव्यव० | सर्वजीवादनंतगु० | कार्मणादेकाद्यधिकासर्वजीवानन्तगुणाधिकाश्च | अंगुलाऽसख्येयभागप्रमाणा | सर्वजीवानन्तगुणाः |
| १८ | अध्रुवाचित्तद्रव्यव० | ” | ध्रुवाचित्तादेकाद्यधिका शेषं पूर्ववत् | ” | ” |
| १९ | प्रथम ु वशून्यव० | ” | पूर्वादेकाद्यधिका शेषं पूर्ववत् | ” | ” |
| २० | प्रत्येकशरी रिव० | ” | ” अनन्ताधिकाश्च | ” | असङ्ख्येयगुणाः |

बन्धन-करणे वर्गणाप्ररूपणा.

| | | | | | | |
|---|---|---|---|---|---|---|
| २१ | द्वितीय ध्रुवशून्यव० | ” | ” | ” | ” | ” |
| २२ | बादरनिगोदव० | ” | ” | ” | ” | ” |
| २३ | तृतीया ध्रुवशून्यव० | ” | ” | ” | ” | ” |
| २४ | सूक्ष्मनिगोदव० | ” | ” | ” | ” | ” |
| २५ | चतुर्थध्रुवशून्यव० | ” | ” | ” | ” | ” |
| २६ | अचित्तमहास्कन्धव० | ” | ” | ” | ” | ” |

नमस्काइयाण थोवो उ । महखंधवग्गणाओ तहिँ काले होंति बहुगाओ ॥ ३ ॥” एताश्च परमाणुवर्गणाद्या महास्कन्धवर्गणान्ताः 'गुणणिप्फणणसनाम' त्ति–गुणैः कृत्वा निष्पन्नं स्वनाम यासां ताः । तथाहि—एकैकपरमाणवः परमाणुवर्गणा, द्वयोः परमाण्वोर्वर्गणा द्विपरमाणुवर्गणा इत्येवं तन्नाम्नामन्वर्थता विद्यत एवेति । तथा 'असंखभागंगुलवगाहो' त्ति–सर्वासामपि वर्गणानामवगाहोऽङ्गुलस्यासंख्येयो भागः । यद्यपि सामस्त्येनैताः प्रत्येकमनन्ताः सकललोकाश्रिताश्च प्रागुक्तास्तथापि एकैकाः सत्योऽङ्गुलासंख्येयभागमात्रक्षेत्रावगाहा एव भवन्तीत्यर्थः । तथा कार्मणशरीरप्रायोग्यवर्गणात आरभ्यार्वाग् यावदौदारिकशरीरप्रायोग्या वर्गणास्तावत्क्षेत्रावगाहः पश्चानुपूर्व्याऽसंख्येयगुणो द्रष्टव्यः ॥ १८–१९–२० ॥

इयाणिं परिणामालंबणगहणेण घेप्पमाणो पोग्गले किं देसेण गिण्हति सव्वेण गिण्हितित्ति तण्णिरूवणत्थं भण्णाति—

**एगमवि गहणदव्वं सव्वप्पणयाइ जीवदेसम्मि । सव्वप्पणया सव्वत्थ वा वि सव्वे गहणखंधे ॥२१॥**

(चू०)—'एगमवि'त्ति–जइवि एगं दव्वं गेण्हति तं पि 'सव्वप्पणयाए'त्ति–सव्वेहिं जीवपदेसेहिं गेण्हति। जेण सव्वे जीवप्पदेसा परोप्परं संबंधेण संबद्धा। जहा य हत्थेण बाहिरदव्वं गेण्हमाणस्स परोप्परं संबंधत्तातो सव्वे जीवप्पदेसा उवगारे वट्टंति एवं गहणजोग्गं दव्वं सव्वप्पणताए गेण्हति। 'सव्वत्थ वा वि'त्ति–सव्वजीवप्पदेसेसु ठितं गेण्हति। 'सव्वे गहणखंधे'त्ति–सव्वे गहणजोग्गा खंधा गेण्हइ जीवो ॥२१॥

(मलय०)—इह योगैस्तदनुरूपपुद्गलस्कन्धान् गृहीत्वा शरीरादिरूपतया परिणमयतीत्युक्तम्, तत्र तान् पुद्गलान् किं जीवो देशेन गृह्णाति उत सर्वात्मनेत्येवं प्रश्नावकाशमाशङ्क्योत्तरं वितितीर्षुराह—'एग' त्ति। इह जीवः स्वप्रदेशावगाढमेव कर्मदलिकं गृह्णाति, न त्वनन्तरपरम्परप्रदेशावगाढम्। तत्रैकस्मिन् 'जीवदेशे'–जीवप्रदेशे यदवगाढं 'ग्रहणद्रव्यं'–ग्रहणप्रायोग्यं दलिकं तदेकमपि गृह्णाति। 'सव्वप्पणयाए'त्ति–सर्वात्मना गृह्णाति सर्वैरेवात्मप्रदेशैर्गृह्णातीत्यर्थः। जीवप्रदेशानां सर्वेषामपि शृङ्खलावयवानामिव परस्परं संबंधविशेषभावात्। तथाहि–एकस्मिन् जीवप्रदेशे स्वक्षेत्रावगाढग्रहणप्रायोग्यद्रव्यग्रहणाय व्याप्रियमाणे सर्वेऽप्यात्मप्रदेशा अनन्तरपरम्परतया तद्द्रव्यग्रहणाय व्याप्रियन्ते। यथा हस्ताग्रेण कस्मिंश्चिद् बाह्ये घटादिके गृह्यमाणे मणिबन्धकूर्परांसादयोऽपि तद् ग्रहणायानन्तरपरम्परतया व्याप्रियन्ते। तथा 'सव्वत्थ वा वि'त्ति–सर्वत्रापि सर्वेष्वपि जीवप्रदेशेषु येऽवगाढा ग्रहणप्रायोग्याः स्कन्धाः तानपि ग्रहणप्रायोग्यान् स्कन्धान् सर्वान्

गृह्णाति जीवः, 'सर्वात्मना' सर्वैरेवात्मप्रदेशैः, एकैकस्कन्धग्रहणं प्रति सर्वजीवप्रदेशानामनन्तरपरम्परतया व्याप्रियमाणत्वाद् इति ॥२१॥

(उ०)—अथ तान् पुद्गलान् जीवो देशेन गृह्णाति सर्वात्मना वेति प्रश्नावकाशे सत्याह–इह जीवः स्वप्रदेशावगाढमेव दलिकं गृह्णाति, न त्वनन्तरपरम्परप्रदेशावगाढम् । इत्येकस्मिन् जीवप्रदेशे यदवगाढं ग्रहणद्रव्यं तदेकमपि सर्वात्मना सर्वैरेवात्मप्रदेशैर्गृह्णाति । जीवप्रदेशानां सर्वेषामपि शृङ्खलावयवानामिव परस्परं सम्बन्धविशेषादेकस्मिन् प्रदेशे स्वक्षेत्रावगाढग्रहणप्रायोग्यद्रव्यग्रहणाय व्याप्रियमाणे सर्वेषामप्यनन्तरपरम्परतया तद्ग्रहणव्यापारसंभवाद्धस्ताग्रेण गृह्यमाणे घटादाविव मणिबन्धकूर्परांसाद्यवयवानां । तथा "सव्वत्थ वा वि"त्ति–सर्वेष्वपि जीवप्रदेशेषु येऽवगाढा ग्रहणप्रायोग्याः स्कन्धास्तानपि सर्वान् गृह्णाति जीवः सर्वात्मना एकैकप्रदेशस्थस्कन्धग्रहणे सर्वव्यापारसिद्धौ सर्वत्र सर्वव्यापारस्य न्यायप्राप्तत्वात् ॥२१॥

इदाणिं बहिरोवट्टंभा विस्ससापरिणामोपचिता हेट्ठा भणिता ते णेहगुणेण अण्णमण्णबद्धा । तेसिं णेहविसेसेणं बद्धाणं फड्डगाणं परूवणा णेहपच्चयफड्डगपरूवणा। तदणंतरं णामपच्चयफड्डगपरूवणा। सरीरणामकम्मस्स उदएणं परोप्परं बद्धाणं पोग्गलाणं फड्डगपरूवणा णामपच्चयफड्डगपरूवणा । तदणंतरं पओगपच्चयफड्डगस्स परूवणा । पओगपच्चयफड्डगस्स परूवणा णाम वीरितकारणत्ताए चेट्ठंतस्स कज्जाभासातिणा विसमवीरितप्परिणामबद्धाणं जीवप्पदेसाणं परूवणा पयोगपच्चयफड्डगपरूवणा । एते तिण्णि वि बंधणा परिवाडीए भण्णति—

णेहपच्चयफड्डगमेगं अविभागवग्गणा णंता । हस्सेण बहू बद्धा असंखलोगे दुगुणहीणा ॥२२॥

(चू०)–'णेहपचय'त्ति–णेहणिमित्तं फड्डगं णाम एगेगरूवेणं वड्ढिताणं वग्गणाणं समुदाओ 'फड्डग'त्ति–एगमेव

फड्डगं 'अविभागवग्गणाणंत'त्ति–अविभागाणं वग्गणाणं अणंताणंतसमुदाओ फड्डगं ।'हस्सेणबहु बद्धा'त्ति–जत्थ अप्पो णेहो तत्थ बहुगा पोग्गला । 'असंखलोगे दुगुणहीण'त्ति–आइवग्गणाओ असंखेज्जलोगागासपदेसमेत्तातो वग्गणातो गंतूण दुगुणहीणा पोग्गला भवन्ति। एवं जाव उक्कस्सगं णेहफड्डगं । एवं समासेण सुत्तत्थो भणितो। इदाणिं तस्स वित्थरो कीरति ।णेहपच्चइयस्स फड्डगस्स परूवणा–अत्थि एगेण णेहगुणेण जुत्ता पोग्गला,अत्थि बिहिं णेहगुणेहिं जुत्ता पोग्गला, एवं तिहिं जुत्ता पोग्गला, एवं जाव अत्थि सव्वजीवेहिं अणंतगुणेण णेहगुणेण जुत्ता पोग्गला ।सेढी दुविहा–अणंतरोवणिहिता परंपरोवणिहिता य। तत्थ अणंतरोवणिहिताए एगेण णेहगुणेण जुत्ता बहुता पोग्गला,सा एगा वग्गणा। एगेण णेहगुणेण जुत्तेहिंतो विहि णेहगुणेहिं जुत्ता पोग्गला असंखेज्जतिभागहीणा बीया वग्गणा। एवं बितियवग्गणातो तिहि णेहगुणेहिं जुत्ता पुग्गला असंखिज्जतिगेण भागेण हीणा सा य ततिता वग्गणा। एवं असंखिज्जतिभागहाणीए अणंतातो वग्गणातो गतातो। ततो अणंतरातो वग्गणातो असंतरा वग्गणा संखेज्जतिभागहीणा ।संखेज्जतिभागहाणिए वि अणंतातो वग्गणाओ। ततो संखेज्जगुणहाणीए अणंतातो वग्गणातो गतातो । ततो असंखेज्जगुणहाणीए अणंतातो वग्गणातो गतातो । अणंतरोवणिहिता गता । परंपरोवणिहिताए एगेण णेहगुणेण जुत्ताए वग्गणाते बहुगा पोग्गला, विहि जुत्ताए विसेसहीणा, तिहिं जुत्ताए विसेसहीणा एवं असंखेजतिभागहाणिवग्गणाए असंखेज्जा लोगा गंतूण आदिवग्गणातो दुगुणहीणा वग्गणा होति । ततो पुणो अण्णे असंखेज्जे लोगे गंतूणं दुगुणहीणा। एवं जाव चरिमा असंखेज्जतिभागहाणिवग्गणा । ततो संखेज्जति

भागहाणिवग्गणा। ततो संखेज्जतिभागहाणिवग्गणाणं संखेज्जातो संखेज्जतिभागहाणिवग्गणातो गंतूण दुगुणहीणा वग्गणा, एवं जाव चरिमा संखेज्जतिभागहाणी वग्गणा ताव दुगुणहीणातो मग्गितव्वातो। अणंतरा णं [नरातो] दुगुणहाणिठाणातो,(ततो)एस मग्गणा–असंखेज्जतिभागहाणिआदिवग्गणं पडुच्च असंखेज्जतिभागहाणीए चेव असंखेज्जभागसंखेज्जभागसंखेज्जगुणअसंखेज्जगुणअणंतगुणहाणीतो व लब्भंति। एवं संखेज्जतिभागहाणीए वि, णवरं असंखेज्जतिभागहाणी णत्थि। संखेज्जगुणहाणीए आदिवग्गणातो संखेज्जातो वग्गणातो संखेज्जगुणहीणातो, ततो उवरिं आदिवग्गणातो असंखेज्जतिगुणहीणातो वग्गणातो जाव अणंतगुणहाणिट्ठाणं ण पावंति ततो अणंतगुणहीणातो वग्गणातो। एवं असंखेज्जगुणहाणिए वि असंखेज्जगुणहीणअणंतगुणहीणातो भाणियव्वातो। अणंतगुणहाणीए अणंतगुणआदिवग्गणातो उवरिमातो सव्वातो वग्गणातो अणंतगुणहीणाओ चेव। अप्पाबहुगं–असंखेज्जतिभागहाणिवग्गणातो थोवातो। संखेज्जतिभागहाणिवग्गणातो अणंतगुणातो। संखेज्जगुणहाणिवग्गणातो अणंतगुणातो। असंखेज्जतिगुणहाणिवग्गणातो अणंतगुणाओ। अणंतगुणहाणिवग्गणातो अणंतगुणाओ। अणंतगुणहाणिवग्गणाते दव्वार्दि थोवाति, असंखिज्जगुणहाणिवग्गणाते दव्वातिं अणंतगुणातिं, संखेज्जगुणहाणिवग्गणाए दव्वातिं अणंतगुणातिं, संखेज्जतिभागहाणिवग्गणाए दव्वार्दि अणंतगुणातिं। असंखेज्जतिभागहाणिवग्गणाए दव्वातिं अणंतगुणातिं। एवं पदेसट्ठयाते वि। दव्वत्थपदेसट्ठताते अणंतगुणहाणिवग्गणातो दव्वट्ठयाए थोवाओ, ततो चेव पदेसट्ठयाए असंखेज्जगुणातो, (ताहिं) असंखेज्जगुणहाणिवग्गणाहिं(ए)

दव्वाणि अणंतगुणाणि ताहिं चेव पदेसाऽसंखेज्जगुणा । एवं सव्वातो णायव्वातो ॥ २२ ॥

(मलय०)—इह पुद्गलद्रव्याणां परस्परं संबन्धः स्नेहतो भवति, ततोऽवश्यं स्नेहप्ररूपणा कर्तव्या । सा च त्रिधा, तद्यथा—स्नेहप्रत्ययस्पर्धकप्ररूपणा, नामप्रत्ययस्पर्धकप्ररूपणा, प्रयोगप्रत्ययस्पर्धकप्ररूपणा च । तत्र स्नेहप्रत्ययस्य—स्नेहनिमित्तस्य स्पर्धकस्य प्ररूपणा स्नेहप्रत्ययस्पर्धकप्ररूपणा । तथा शरीरबन्धननामकर्मोदयतः परस्परं बद्धानां शरीरपुद्गलानां स्नेहमधिकृत्य स्पर्धकप्ररूपणा नामप्रत्ययस्पर्धकप्ररूपणा । शब्दार्थश्चायं—नामप्रत्ययस्य—बन्धननामनिमित्तस्य शरीरप्रदेशस्पर्धकस्य प्ररूपणा नामप्रत्ययस्पर्धकप्ररूपणा । तथा प्रकृष्टो योगः प्रयोगः, तेन प्रत्ययभूतेन—कारणभूतेन ये गृहीताः पुद्गलास्तेषां स्नेहमधिकृत्य स्पर्धकप्ररूपणा प्रयोगप्रत्ययस्पर्धकप्ररूपणा । तत्र प्रथमः स्नेहप्रत्ययस्पर्धकप्ररूपणार्थमाह—'नेह' त्ति । स्नेहप्रत्ययं—स्नेहनिमित्तं एकैकस्नेहाविभागवृद्धानां पुद्गलवर्गणानां समुदायरूपं स्पर्धकं स्नेहप्रत्ययस्पर्धकम् । तच्चैकमेव भवति, अपान्तराले वर्गणानामेकोत्तरवृद्ध्या व्यवच्छेदाभावात् । तस्मिंश्च स्पर्धकेऽविभागवर्गणा एकैकस्नेहाविभागाधिकपरमाणुसमुदायरूपा वर्गणा अनन्ता द्रष्टव्याः । तत्र 'ह्रस्वेन'—अल्पेन स्नेहेन ये 'बद्धा'—युक्ताः पुद्गलास्ते बहवः, अर्थाच्च प्रभूतेन स्नेहेन बद्धाः स्तोकाः । तथा 'असंखलोगे दुगुणहीण' त्ति—आदिवर्गणायाः परतोऽसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्य याऽनन्तरा वर्गणा तस्यां पुद्गलाः प्रथमवर्गणागतपुद्गलापेक्षया द्विगुणहीना भवन्ति । पुनरपि ततोऽसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्यानन्तरायां वर्गणायां पुद्गला द्विगुणहीना भवन्ति । एवं तावद्वाच्यं यावद्वक्ष्यमाणा संख्येयभागहानिगता चरमा वर्गणा । इयमत्र भावना—इह यः सर्वोत्कृष्टः स्नेहः स केवलिप्रज्ञाच्छेदनकेन छिद्यते, छित्त्वा छित्त्वा च निर्विभागा भागाः पृथक् पृथक् व्यवस्थाप्यन्ते । तत्र जगति ये केचित् परमाणव एकेन स्नेहस्य निर्विभागेन भागेन युक्ताः सन्ति तेषां समुदायः प्रथमा

स्नेहप्रत्ययप्ररूपणा.

वर्गणा । ये पुनर्द्वाभ्यां स्नेहाविभागाभ्यां युक्ताः परमाणवः सन्ति तेषां समुदायो द्वितीया वर्गणा । एवं त्रिभिः स्नेहाविभागैर्युक्तानां समुदायस्तृतीया वर्गणा । एवं संख्येयैः स्नेहाविभागैर्युक्तानां संख्येया वर्गणा वाच्याः । असंख्येयैः स्नेहाविभागैर्युक्तानां पुनरसंख्येया वर्गणाः । अनन्तैः स्नेहाविभागैर्युक्तानां त्वनन्ता वर्गणाः । द्विधा चात्र प्ररूपणा, तद्यथा—अनन्तरोपनिधया परम्परोपनिधया च । तत्र तावत्प्रथमतोऽनन्तरोपनिधया प्ररूपणा क्रियते—प्रथमायां वर्गणायामेकस्नेहाविभागयुक्तपुद्गलसमुदायरूपायां यावन्तः पुद्गलास्तदपेक्षया द्वितीयस्यां वर्गणायां स्नेहाविभागद्वययुक्तपुद्गलसमूहरूपायां पुद्गला असंख्येयभागहीना भवन्ति । ततोऽपि तृतीयस्यां वर्गणायामसंख्येयभागहीनाः । एवं प्रतिवर्गणमसंख्येयभागहान्या पुद्गलास्तावद्वाच्या यावदनन्ता वर्गणा गता भवन्ति । ततोऽनन्तरायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षया संख्येयभागहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गलाः संख्येयभागहीनाः । एवं संख्येयभागहान्यापि वर्गणा अनन्ता वाच्याः । ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षया संख्येयगुणहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गलाः संख्येयगुणहीनाः । एवं संख्येयगुणहान्याप्यनन्ता वर्गणा वाच्याः । ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षयाऽसंख्येयगुणहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गला असंख्येयगुणहीनाः । एवमसंख्येयगुणहान्याप्यनन्ता वर्गणा वक्तव्याः । ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षयाऽनन्तगुणहीना भवन्ति । ततोऽग्रेतन्यामपि वर्गणायां पुद्गला अनन्तगुणहीनाः । एवमनन्तगुणहान्याप्यनन्ता वर्गणा वाच्या यावत्सर्वोत्कृष्टा वर्गणाः । तदेवं कृताऽनन्तरोपनिधया प्ररूपणा । सम्प्रति परम्परोपनिधया क्रियते—तत्र प्रथमवर्गणायाः परतोऽसंख्येयलोकाकाशप्रदेशप्रमाणा वर्गणा अतिक्रम्य या पराऽन्या वर्गणा तस्यां पुद्गलाः प्रथमवर्गणागतपुद्गलापेक्षया द्विगुणहीना भवन्ति, अर्धा भवन्तीत्यर्थः । ततः पुनरप्यसंख्येयलोका-

काशप्रदेशप्रमाणा वर्गणा अतिक्रम्य या पराऽनन्तरा वर्गणा तस्यां पुद्‌गला अर्धा भवन्ति । एवं भूयो भूयस्तावदवगन्तव्यं यावदसंख्येयभागहानिगता चरमा वर्गणा, ततः परं संख्येयभागहानिगता वर्गणाः संख्येया अतिक्रम्यानन्तरायां वर्गणायां पुद्‌गला असंख्येयभागहानिगतचरमवर्गणापुद्‌गलापेक्षयाऽर्धा भवन्ति । ततः पुनरपि संख्येया वर्गणा अतिक्रम्यानन्तरायां वर्गणायां पुद्‌गला अर्धा भवन्ति । एवं भूयो भूयस्तावद्वक्तव्यं यावत्संख्येयभागहानावपि चरमा वर्गणा । उपरितनीषु च तिसृषु हानिषु इयं परम्परोपनिधा न संभवति । यतः प्रथमायामपि संख्येयगुणहानिवर्गणायां पुद्‌गलाः संख्येभागहानिसत्कचरमवर्गणान्तर्गतपुद्‌गलापेक्षया संख्येयगुणहीनाः प्राप्यन्ते । संख्येयगुणहीनाश्च जघन्यतोऽपि त्रिगुणहीनाश्चतुर्गुणहीना वा गृह्यन्ते, न तु द्विगुणहीनाः, यतः संख्येयं प्रायः सर्वत्राप्यजघन्योत्कृष्टं त्रिप्रभृत्येव गृह्यते, न तु द्वौ, नापि सर्वोत्कृष्टम्, तदुक्तमनुयोगद्वारचूर्णौ—"सिद्धंते य जत्थ जत्थ संखेज्जगगहणं तत्थ तत्थ अजहण्णमणुक्कोसयं दट्ठव्वं" ति । तत इत ऊर्ध्वं द्विगुणहीना न प्राप्यन्ते किंतु त्रिगुणचतुर्गुणादिहीना इति नेयं द्विगुणहान्या परम्परोपनिधा संभवति । तस्मान्मूलत आरभ्यान्यथाऽत्र परम्परोपनिधया प्ररूपणा क्रियते—असंख्येयभागहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणा असंख्येयभागहीनाः, काश्चित्संख्येयभागहीनाः, काश्चित्संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः, एवमसंख्येयभागहानौ प्रथमवर्गणापेक्षया पञ्चापि हानयः संभवन्ति । संख्येयभागहानौ पुनरसंख्येयभागहानिवर्जाः शेषाश्चतस्रोऽपि हानयः संभवन्ति । तद्यथा—संख्येयभागहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयभागहीनाः, काश्चित्संख्येयगुणहीनाः, काश्चिदसंख्येयगुणहीनाः, काश्चिदनन्तगुणहीनाः । संख्येयगुणहानौ पुनरसंख्येयभागहानिसंख्येयभागहानिवर्जाः शेषास्तिस्रो हानयः संभवन्ति । तद्यथा—संख्येयगुणहानौ प्रथमान्तिमवर्गणयोरपान्तराले प्रथमवर्गणापेक्षया काश्चिद्वर्गणाः संख्येयगुणहीनाः, काश्चिदसंख्येय-

वर्गणाः । तदेवं कृतानन्तरोपनिधया प्ररूपणा । अथ परम्परोपनिधया क्रियते–तत्राद्यवर्गणायाः परतोऽसंख्येयलोकाकाशप्रदेशप्रमाणवर्गणातिक्रमे या वर्गणाऽऽगच्छति, तस्यां पुद्गला आद्यवर्गणागतपुद्गलापेक्षया द्विगुणहीना भवन्ति, अर्धा भवन्तीत्यर्थः । ततः पुनरपि तावद्वर्गणातिक्रमे याऽनन्तरवर्गणा तस्यां पुद्गला अर्धा भवन्ति । एवं भूयो भूयस्तावद्वाच्यं यावदसङ्ख्येयभागहानिगता चरमा वर्गणा। ततः परं सङ्ख्येयानां सङ्ख्येयभागहानिगतानां वर्गणानामतिक्रमे याऽनन्तरवर्गणा तस्यां पुद्गला असङ्ख्येयभागहानिगतचरमवर्गणापुद्गलापेक्षयाऽर्धा भवन्ति । ततः पुनरपि संख्येया वर्गणाऽतिक्रम्यानन्तरायां वर्गणायां पुद्गला अर्धा भवन्ति । एवं भूयो भूयस्तावद्वाच्यं यावत्संख्येयभागहानावपि चरमा वर्गणा । उपरितनीषु तिसृषु हानिष्वियं द्विगुणहानिमार्गणलक्षणा परम्परोपनिधा न संभवति, यतः प्रथमायामपि संख्येयगुणहानिवर्गणायां पुद्गलाः प्राक्तनवर्गणातः संख्येयगुणहीनाः प्राप्यन्ते । संख्येयगुणहीनाश्च जघन्यतोऽपि त्रिगुणचतुर्गुणहीना गृह्यन्ते, न तु द्विगुणहीनाः, "सिद्धंते जत्थ जत्थ संखेज्जगगहणं तत्थ तत्थ अजहण्णमणुक्कोसयं दट्ठव्वं" इत्यनुयोगद्वारचूर्णिवचनात्, संख्येयस्य प्रायः सर्वत्राप्यजघन्योत्कृष्टस्यैव ग्रहणात् । तस्मादादित आरभ्यान्यथा परम्परोपनिधया प्ररूपणा क्रियते–असंख्येयभागहानौ प्रथमान्तिमवर्गणयोरन्तराले प्रथमवर्गणापेक्षया काश्चिदसंख्येयभागहीनाः, काश्चित्सङ्ख्येयभागहीनाः, काश्चित्संख्येयगुणहीनाः, काश्चिदसङ्ख्येयगुणहीनाः, काश्चिदनन्तगुणहीना इत्येवमसङ्ख्येयभागहानौ प्रथमवर्गणापेक्षया पञ्चापि हानयः संभवन्ति । सङ्ख्येयभागहानावसङ्ख्येयभागहानिवर्जाः प्रथमवर्गणापेक्षया शेषाश्चतस्रो हानयः । सङ्ख्येयगुणहानौ पुनरसङ्ख्येयभागहानिसङ्ख्येयभागहानिवर्जाः शेषास्तिस्रो हानयः । असङ्ख्येयगुणहानौ काश्चिदसङ्ख्येयगुणहीनाः काश्चिदनन्तगुणहीना इति द्वे एव हानी । अनन्तगुणहानौ त्वनन्तगुणहानिरेवैकेति । कृता परम्परोपनिधया प्ररूपणा । सम्प्रत्यल्पबहुत्वमुच्यते–असंख्येयभागहानौ वर्गणाः सर्वस्तोकाः,

ग्रिमवर्गणायां पुद्गला द्विगुणहीनाः। एवं तावद्वाच्यं यावद्वक्ष्यमाणासंख्येयभागहानिगता चरमा वर्गणेति। इयमत्र भावना—ये खलु सर्वोत्कृष्टस्नेहस्य केवलिप्रज्ञाच्छेदनकेन छित्त्वा निर्विभागा भागाः क्रियन्ते ते स्नेहाविभागाः। तत्र केचित् परमाणवो जगत्येकेन स्नेहाविभागेन युक्ताः सन्ति, तेषां समुदायः प्रथमा वर्गणा, द्वाभ्यां स्नेहाविभागाभ्यां युक्ता ये परमाणवः सन्ति तेषां समुदायो द्वितीया। एवं स्नेहाविभागैः संख्येयैर्युक्तानां संख्येया वर्गणा वाच्याः, असंख्येयैर्युक्तानामसंख्येयाः, अनन्तैर्युक्तानां चानन्ताः। सर्वाभिश्चाभिरेकमेव स्पर्धकं भवति, अपान्तराले एकैकाविभागवृद्धिव्यवच्छेदाभावात्। एकैकाविभागवृद्धिव्यवच्छेदो हि स्पर्धकपर्यवसानम्। उक्तं च—'रूवुत्तरवुड्ढीए छेओ फड्डगाणं' ति। द्विधा चैतासु वर्गणाप्ररूपणा—अनन्तरोपनिधया परम्परोपनिधया च। तत्रादावनन्तरोपनिधया प्ररूपणा क्रियते—प्रथमायां वर्गणायामेकस्नेहाविभागाणुसमुदायरूपायां यावन्तः पुद्गलास्तदपेक्षया द्वितीयस्यामसंख्येयभागहीनाः। ततोऽपि तृतीयस्यामसंख्येयभागहीनाः। एवं प्रतिवर्गणमसंख्येयभागहान्या पुद्गलास्तावद्वाच्या यावदनन्ता वर्गणा गच्छन्ति। ततोऽनन्तरायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षया संख्येयभागहीनाः, ततोऽग्रेतन्यामपि पुद्गलाः संख्येयभागहीनाः, एवं संख्येयभागहान्याऽप्यनन्ता वर्गणा वाच्याः। तत उपरितन्यां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षया संख्येयगुणहीनाः, ततोऽग्रेतन्यामपि वर्गणायां पुद्गलाः संख्येयगुणहीनाः, एवं संख्येयगुणहान्याप्यनन्ता वर्गणा वाच्याः। ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षयाऽसंख्येयगुणहीना भवन्ति, ततोऽग्रेतन्यामपि वर्गणायां पुद्गला असंख्येयगुणहीनाः, एवमसंख्येयगुणहान्याऽप्यनन्ता वर्गणा वाच्याः। ततोऽनन्तरायां वर्गणायां पुद्गलाः प्राक्तनवर्गणागतपुद्गलापेक्षयाऽनन्तगुणहीना भवन्ति, ततोऽग्रेतन्यामपि वर्गणायां पुद्गला अनन्तगुणहीना वाच्याः, एवमनन्तगुणहान्याऽप्यनन्ता वर्गणा वाच्या यावत् सर्वोत्कृष्टा

ताभ्यः संख्येयभागहानावनन्तगुणाः, ताभ्योऽपि संख्येयगुणहानावनन्तगुणाः, ताभ्योऽप्यसंख्येयगुणहानावनन्तगुणाः, ताभ्योऽप्यनन्तगुणहानौ वर्गणा अनन्तगुणाः । तथाऽनन्तगुणहानौ पुद्गलाः सर्वस्तोकाः, तेभ्योऽसंख्येयगुणहानावनन्तगुणाः, तेभ्योऽपि संख्येयगुणहानावनन्तगुणाः, तेभ्योऽपि संख्येयभागहानौ पुद्गला अनन्तगुणाः, तेभ्योऽप्यसंख्येयभागहानौ पुद्गला अनन्तगुणाः । उक्तं च—"थोवा उ वग्गणाओ पढमहाणीइ उवरिमासु कमा। होंति अणंतगुणाओ अनन्तभागो पएसाणं" इति ॥ २२ ॥

भणिता णेहपच्चयपरूवणा। इदाणिं धणिया देसपरूवणा । धणिता नाम णिधि(चि)ता णेहगुणा ।

**णामप्पओगपच्चयगेसु वि णेया अणंतगुणणाए । धणिया देसगुणा सिं जहन्नजिट्ठे सगे कट्टु ॥२३॥**

(चू०)–णामपच्चइयस्स उद्देसत्थो वुत्तो, इदाणिं विवरणा कीरति–णामपच्चइअस्स अत्थि अविभागपलिच्छेदपरूवणया, वग्गणापरूवणया, फड्डगपरूवणया, अंतरपरूवणया, धणिया देसपरूवणया, ठाणपरूवणता । अविभागपलिच्छेदपरूवणा णाम सरीरपदेसाण गुणग्गं चुण्णितं चुण्णितं विभज्जंतं जं विभागं ण देति सो अविभागपलिच्छेओ वुचति, गुणपरमाणुत्ति वुचति, भावपरमाणुत्ति वुचति। एगेण गुणअविभागपलिच्छेदेण जुत्ता णत्थि केवि सरीरपदेसा, विहिं वि, जाव संखेज्जेहिं अविभागपलिच्छेदेहिं जुत्ता णत्थि केति सरीरपदेसा, असंखेज्जेहिं गुणविभागपलिच्छेदेहिं जुत्ता णत्थि केइ सरीरप्पदेसा। जहण्णजुत्तस्स वि सरीरप्पदेसस्स अविभागपलिच्छेदेहिं सव्वजीवेहिं अणंतगुणेहिं एसा पढमिल्लिया वग्गणा । ततो एकेणं अविभागपलिच्छेदेणं अब्भहिता वितिता वग्गणा । एवं एगुत्तरियाणं णिरंतरं ताव गता जाव अणंतातो वग्गणातो अभ-

वसिद्धिएहिं अणंतगुणातो सिद्धाणं अणंतभागो । एयं एगं फड्डं । ततो पढमफड्डगस्स चरिमवग्गणातो बितियफड्डगस्स आदिवग्गणाए य अंतरं अणंतं–सव्वजीवेहिं अणंतगुणं । एवं ताव गतं जाव आदिवग्गणातो दुगुणअविभागपलिच्छेदेण जुत्ता बितियफड्डगस्स आदिवग्गणाते अत्थि सरीरप्पदेसा । ततो रूवुत्तराए अत्थि । एवं एगुत्तरियाए णिरंतरं ताव गतं जाव अणंतातो वग्गणातो अभवसिद्धिएहिं अणंतगुणातो सिद्धाणं अणंतभागो। जिणदिट्ठस्स प्पमाणस्स उवरिं रूवुत्तरा णत्थि काति वग्गणा, दुरूवुत्तरा नत्थि, अंतरं अणंतं–सव्वजीवेहिं अणंतगुणं। जिणदिट्ठस्स अंतरस्स रूवुत्तराए वग्गणाए सरीरप्पएसा अत्थि। ते पुण अविभागपलिच्छेदा केत्तिया? भण्णइ–आदिफड्डगस्स आदिवग्गणाए अविभागपलिच्छेदेहिं तिगुणं अविभागपलिच्छेदग्गं । ततो पुणो एगुत्तरियाए फड्डगं । ततो पुणो तहा चेव अंतरं। ततो पुणो अण्णस्स फड्डगस्स आदिवग्गणा आदिफड्डगस्स आदिवग्गणाए चतुगुणेणं अविभागपलिच्छेदग्गेण जुत्ता अत्थि । एवं जतिमं फड्डगं उदिस्सति ततिगुणा अण्णस्स अण्णस्स फड्डगस्स आदिवग्गणाए । फड्डगं केण कारणेणं णिप्पज्जइ ? भण्णइ–सरीरप्पदेसाणं अप्पत्ताए गुणअविभागपलिच्छेदाणं पहुत्ताए फड्डगं जायति । फड्डगाति केत्तियाति ? भण्णइ–अभवसिद्धिएहिं अणंतगुणाति सिद्धाणं अणंतभागे । अंतराति केत्तियाइं? भण्णइ–फड्डगाइं रूवूणगाइं अंतराति होति। फड्डगस्स परूवणया अंतरपरूवणता य भणिता । धणिया देसपरूवणया–पढमाए वग्गणाए धणिया देसगुणा थोवा । बितियस्स सरीरठाणस्स आदिवग्गणाए धणिया ततोऽणंतगुणा, एवं अणंतगुणाए सेढीए णेयव्वं जाव अंतिमं सरीरट्ठाणं।

बंधणणामाणं अप्पाबहुगं पण्णरसण्हं भण्णति—तंजहा–उरालियउरालियसरीरबंधणणामत्ताए बद्धा पोग्गला थोवा। उरालियतेयसरीरबंधणणामत्ताए बद्धा पोग्गला अणंतगुणा। उरालियकम्मइगसरीरणामत्ताए बद्धा पुग्गला अणंतगुणा। उरालियतेयकम्मतिगसरीरबंधणणामत्ताए बद्धा पोग्गला अणंतगुणा। एवं वेउव्वितेवि चत्तारि आलावगा, आहारए वि चत्तारि आलावगा। अधस्तनतेजतिगतेजइगबंधणणामत्ताए अणंतगुणा, तेजतिगकंमतिगबंधणणामाए अणंतगुणा, कम्मतिगकम्मतिगसरीरबंधणणामाए बद्धा पोग्गला अणंतगुणा। इदाणिं ठाणपरूवणया–एगातिओ अणंताणि फड्डगाइं पढमं सरीरट्ठाणं। ततो अणंतभागब्भहियं वितियं सरीरट्ठाणं। ततो अणंतभागब्भहियं ततियं सरीट्ठाणं। एवं णिरंतरं अणंतभागब्भहियातिं अंगुलस्स असंखेज्जतिभागमेत्तातिं ठाणातिं। एत्तो एक्कं असंखेज्जतिभागब्भहियं। ततो अणंतभागुत्तरं कंडगं। ततो असंखिज्जइभागब्भहियं। ततो अणंतभागुत्तरं कंडगं। ततो पुणो असंखिज्जइभागब्भहितं एक्कं ठाणं। [एवं जाव अणंतभागुत्तरं कण्डगं]। एवं असंखेज्जभागब्भहियं ताव गतं जाव असंखेज्जभागब्भहिगाणि कंडगमेत्ताणि। ततो एक्कं संखेज्जतिभागब्भहियं ठाणं। ततो संखेज्जतिभागसंखेज्जगुणअसंखेज्जगुणणंतगुणब्भहिगाणि वि णेयव्वाणि जहा असंखेज्जतिभागब्भहियं। एवं एतेण कमेण छट्ठाणवुड्ढाणि फड्डगातिं असंखेज्जलोगागासप्पदेसमेत्ताणि सरीरट्ठाणातिं। णामपच्चइगफड्डुगपरूवणा भणिता। इदाणिं पयोगपच्चतिगं फड्डुगं भण्णइ–'पयोगपच्चइगेसु वि' त्ति। पयोगपच्चतिगो–जोगपच्चइगो बंधो तस्स पंच(छ) अणुओगदाराणि,। तंजहा–अविभागपलिच्छेदपरूव

णा, वग्गणपरूवणा, फड्डगपरूवणा, अंतरपरूवणा,(ठाणपरूपणा) धणिया देसगुणपरूवणा। एत्थ अविभागवग्गणाफड्डगाअंतर(ठाण)परूवणाओ जहा जोग(नाम)परूवणाए तहा चेव परूवेयव्वातो। इदाणिं धणियादेसगुणपरूवणा–[अणंतगुणणाए संभवति, ठाणं,] 'धणिया देसगुणा सिं'ति। [एयं आतिल्लाणं दोण्ह वि फड्डगाणं सरिसगं] धणिता–णिचिता, देसगुणा [सिंति] पदेसाणं गुणा। ते पढमाए वग्गणाए थोवा। बितियट्ठाणस्स आदिवग्गणाए अणंतगुणा। एवं णेयव्वं अणंतगुणणाए [दोण्ह वि] णेहणाम(पओग)पच्चयगाणं अप्पप्पणो जाव अंतिमाए वग्गणातोत्ति। [जोगट्ठाणाणं जोगट्ठाणादिवग्गणातो बितियातिजोगट्ठाणाणं आइवग्गणा असंखेज्जगुणा णेयव्वा]। इदाणिं तिण्हवि जहण्णुक्कोसाणं तिव्वमंदपरूवणा भण्णइ–'जहण्णजिट्ठे सगे कट्टु'त्ति, अणंतगुणाहिगारो अणुवत्ततित्ति, अप्पप्पणो जहण्णुक्कोसाणं अप्पाबहुगयं णायव्वं, तंजहा–णेहपच्चतिगस्स धणियदेसगुणा जहण्णाए वग्गणाए थोवा। तस्सेव उक्कसाए वग्गणाए अणंतगुणा। ततो णामपच्चइगस्स जहण्णाए वग्गणाए अणंतगुणा। तस्सेव उक्कसाए वग्गणाए अणंतगुणा। ततो पओगपच्चइगस्स जहण्णाए वग्गणाए धणियादेसगुणा अणंतगुणा। तस्सेव उक्कसाए वग्गणाए धणियादेसगुणा अणंतगुणा ॥ २३ ॥

(मलय०)—तदेवमुक्तं सप्रपञ्चं स्नेहप्रत्ययं स्पर्धकम्, इदानीं नामप्रत्ययस्पर्धकप्रयोगप्रत्ययस्पर्धकप्ररूपणां चिकीर्षुरिदमाह—'नाम'त्ति। इह नामप्रत्ययस्पर्धकप्ररूपणायां षडनुयोगद्वाराणि, तद्यथा—अविभागप्ररूपणा १, वर्गणाप्ररूपणा २, स्पर्धकप्ररूपणा ३, अन्तरप्ररूपणा ४, वर्गणागतपुद्गलस्नेहाविभागसकलसमुदायप्ररूपणा ५, स्थानप्ररूपणा ६ चेति। तत्र प्रथमतोऽविभागप्ररूपणा

क्रियते—औदारिकादिशरीरपञ्चकप्रायोग्यानां परमाणूनां यो रसः स केवलिप्रज्ञाछेदनकेन छिद्यते, छित्त्वा छित्त्वा च निर्विभागा भागाः क्रियन्ते, ते च निर्विभागा भागा गुणपरमाणवो वा भावपरमाणवो वा प्रोच्यन्ते, एषाऽविभागप्ररूपणा। तत्रैकेन स्नेहाविभागेन युक्ताः शरीरयोग्याः पुद्गला न भवन्ति, किमुक्तं भवति ? औदारिकौदारिकवन्धनादीनां पञ्चदशानां वन्धनानामन्यतमस्यापि वन्धनस्य विषया न भवन्तीत्यर्थः, नापि द्वाभ्यां स्नेहाविभागाभ्यां युक्ताः, नापि त्रिभिर्नापि संख्येयैर्नाप्यसंख्येयैर्नाप्यनन्तैः, किं त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः, ततस्तेषां पुद्गलानां समुदायः प्रथमा वर्गणा, सा च जघन्या। तत एकेन स्नेहाविभागेनाधिकानां पुद्गलानां समुदायो द्वितीया वर्गणा। द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा। एवमेकैकाविभागवृद्ध्या निरन्तरं तावद्वर्गणा वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति। एतासां च समुदाय एकं स्पर्धकम्। तत इत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किन्त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते, ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य प्रथमा वर्गणा। तस्यां कियन्तः स्नेहाविभागा इति चेद्, उच्यते—यावन्तः प्रथमस्पर्धकप्रथमवर्गणायां स्नेहाविभागास्तावन्तो द्विगुणाः। तत एकेन स्नेहाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा। द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा। एवमेकैकस्नेहाविभागवृद्ध्या निरन्तरं वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति। ततस्तासां समुदायो द्वितीयं स्पर्धकम्। ततः पुनरप्यत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्याम्, नापि त्रिभिः, यावन्नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किन्त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः, ततस्तेषां परमाणूनां समुदायस्तृतीयस्पर्धकस्य प्रथमा वर्गणा।

तस्यां कियन्तः स्नेहाविभागा इति चेद्, उच्यते—यावन्तः प्रथमस्पर्धकसत्कप्रथमवर्गणायां तावन्तस्त्रिगुणाः। तत एकेन स्नेहाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा। द्वाभ्यां स्नेहाविभागाभ्यामधिकानां समुदायस्तृतीया वर्गणा। एवमेकैकस्नेहाविभागवृद्ध्या निरन्तरं वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति। ततस्तासां समुदायस्तृतीयं स्पर्धकम्। ततः पुनरप्यत ऊर्ध्वमेकेन स्नेहाविभागेनाधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्याम्, नापि त्रिभिः, यावन्नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः किन्त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते, ततस्तेषां समुदायश्चतुर्थस्य स्पर्धकस्य प्रथमा वर्गणा। तस्यां कियन्तः स्नेहाविभागा इति चेद्, उच्यते—प्रथमस्पर्धकसत्कप्रथमवर्गणायां यावन्तः स्नेहाविभागास्तावन्तश्चतुर्गुणाः। एवं यतिसंख्यं यतिसंख्यं स्पर्धकं चिन्तयितुमारभ्यते, तद्यथा—पञ्चमं दशमं विंशतितमं सहस्रतमं लक्षतमं वा तत्तत्संख्यागुणिताः प्रथमस्पर्धकसत्कप्रथमवर्गणागताः स्नेहाविभागास्ततिसंख्यस्य ततिसंख्यस्य स्पर्धकस्यादिवर्गणायां द्रष्टव्याः। तानि च स्पर्धकानि कियन्ति भवन्तीति चेद्, उच्यते—अभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानि। अन्तराणि कियन्ति भवन्तीति चेद्, उच्यते—रूपोनस्पर्धकतुल्यानि, तथाहि—चतुर्णामन्तराणि त्रीण्येव भवन्ति, नोनाधिकानि, एवमत्रापि भावनीयम्। वर्गणास्वानन्तर्येण द्वे वृद्धी भवतः, तद्यथा—एकैकाविभागवृद्धिः, अनन्तानन्ताविभागवृद्धिश्च। तत्रैकैकाविभागवृद्धिः स्पर्धकगतानां वर्गणानां यथोत्तरम्, अनन्तानन्ताविभागवृद्धिः पाश्चात्यस्पर्धकगतचरमवर्गणापेक्षयोत्तरस्पर्धकस्यादिवर्गणायाम्, पारम्पर्येण पुनः प्रथमस्पर्धकसत्कप्रथमवर्गणापेक्षया षडपि वृद्धयोऽवगन्तव्याः। तद्यथा—अनन्तभागवृद्धिः, असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः, अनन्तगुणवृद्धिश्चेति। तदेवं कृता अविभागप्ररूपणा वर्गणाप्ररूपणा स्पर्धकप्ररूपणा अन्तरप्ररूपणा च। सांप्रतं वर्गणागत-

पुद्गलस्नेहाविभागसमुदायप्ररूपणा क्रियते–तत्र प्रथमस्य शरीरस्थानस्य प्रथमायां वर्गणायां स्नेहाविभागाः स्तोकाः, ततो द्वितीयस्य शरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः, तेभ्योऽपि तृतीयशरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः, एवमनन्तगुणया श्रेण्या सर्वाण्यपि स्थानानि नेतव्यानि। शरीरस्थानानि च वक्ष्यमाणस्पर्धक(कण्डक)संख्याप्रमाणानि। संप्रति शरीरपरमाणूनामेव तत्तद्बन्धनयोग्यानामल्पबहुत्वमभिधीयते—तत्रौदारिकौदारिकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः, तेभ्य औदारिकतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽप्यौदारिककार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽप्यौदारिकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः। तथा वैक्रियवैक्रियबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः। तेभ्योऽपि वैक्रियतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि वैक्रियकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि वैक्रियतैजसकार्मणबन्धनयोग्या अनन्तगुणाः। तथा आहारकाहारकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः, तेभ्योऽप्याहारकतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽप्याहारककार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योप्याहारकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि तैजसतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि तैजसकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि कार्मणकार्मणबन्धनयोग्या अनन्तगुणा इति। सांप्रतं स्थानप्ररूपणावसरः। तत्र प्रथमं स्पर्धकमादौ कृत्वाऽभव्येभ्योऽनन्तगुणैः सिद्धानन्तभागकल्पैरनन्तैः स्पर्धकैरेकं प्रथमं शरीरप्रायोग्यं स्थानं भवति। ततस्तावद्भिरेव स्पर्धकैरनन्तभागवृद्धैर्द्वितीयं शरीरस्थानं भवति। पुनस्तावद्भिरेव स्पर्धकैरनन्तभागवृद्धैस्तृतीयं शरीरस्थानम्। एवं निरन्तरं पूर्वस्मात् पूर्वस्मादुत्तरोत्तराणि अनन्तभागवृद्धानि शरीरस्थानान्यङ्गुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणानि वाच्यानि। एतानि च समुदितानि एकं कण्डकमभिधीयते। तस्माच्च कण्डकादुपरि यदन्यच्छरीरस्थानं तत्प्रथमकण्डकगतचरमशरीरस्थानापेक्षयाऽसंख्येयभागवृद्धम्। तस्मात्पराणि पुनर्यान्यन्यानि शरीरस्थानानि

अङ्गुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणानि तानि सर्वाण्यपि यथोत्तरमनन्तभागवृद्धान्यवसेयानि । ततो भूयोऽप्येकमसंख्येयभागाधिकं शरीरस्थानं भवति । एवमनन्तभागाधिकैः कण्डकप्रमाणैः शरीरस्थानैर्व्यवहितानि असंख्येयभागाधिकानि शरीरस्थानानि तावद्वक्तव्यानि यावत्तान्यपि कण्डकमात्राणि । एतानि च समुदितानि द्वितीयं कण्डकम् । तस्माच्च द्वितीयात् कण्डकादुपरि यदन्यच्छरीरस्थानं तत्पुनरपि द्वितीयकण्डकगतचरमशरीरस्थानापेक्षयाऽनन्तभागवृद्धम् । ततः पराणि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि शरीरस्थानानि वाच्यानि । ततः परमेकं संख्येयभागवृद्धं स्थानम् । ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तावन्ति तथैवाभिधाय पुनरप्येकं संख्येयभागवृद्धं स्थानमभिधानीयम् । एवं वक्ष्यमाणक्रमेण षट्स्थानकवृद्ध्या शरीरस्थानानि तावद्वक्तव्यानि यावदसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति । उक्ता नामप्रत्ययस्पर्धकप्ररूपणा ।

सांप्रतं प्रयोगप्रत्ययस्पर्धकप्ररूपणा क्रियते–तत्र प्रयोगो योगः, तत्स्थानवृद्ध्या यो रसः कर्मपरमाणुषु केवलयोगप्रत्ययतो बध्यमानेषु परिवर्धते स्पर्धकरूपतया तत्प्रयोगप्रत्ययस्पर्द्धकम् । उक्तं च–"होइ पओगो जोगो तट्ठाणविवड्ढणाए जो उ रसो । परिवड्ढेइ जीवे पयोगफड्डं तयं बेंति" तस्य पञ्चानुयोगद्वाराणि, तद्यथा–अविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्धकप्ररूपणा, अन्तरप्ररूपणा, स्थानप्ररूपणा चेति । एताश्च यथा नामप्रत्ययस्पर्धके प्रागभिहितास्तथैवात्राप्यवगन्तव्याः । तथाऽत्र प्रथमस्थानसत्कप्रथमवर्गणायां सकलपुद्गलस्नेहाविभागाः सर्वस्तोकाः । तेभ्यो द्वितीयस्थानसत्कप्रथमवर्गणायामनन्तगुणाः । तेभ्योऽपि तृतीयस्थानसत्कप्रथमवर्गणायामनन्तगुणाः । एवं तावन्नेयं यावदन्तिमं स्थानम् । तथा च प्रयोगप्रत्ययस्पर्धकमेवाधिकृत्यान्यत्राप्युक्तं– "अविभागवग्गफड्डुगअंतरठाणाइ एत्थ जहपुव्विं । ठाणाइ वग्गणाओ अणंतगुणणाउ गच्छंति ॥" अत्रादिशब्दात्कण्डकादिपरिग्रहः । इदानीमल्पबहुत्वमुच्यते–स्नेहप्रत्ययस्पर्धकस्य जघन्यवर्गणायां सक-

लपुद्गलगताः स्नेहाविभागाः सर्वस्तोकाः। ततस्तस्यैव स्नेहप्रत्ययस्पर्धकस्योत्कृष्टवर्गणायामनन्तगुणाः, तेभ्योऽपि नामप्रत्ययस्पर्धकस्य जघन्यवर्गणायामनन्तगुणाः, तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः, तेभ्योऽपि प्रयोगप्रत्ययस्पर्धकस्य जघन्यवर्गणायामनन्तगुणाः, तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः । उक्तं च—"तिण्हं पि फड्डगाणं जहण्णउक्कोसगा कमा ठविउं । णेया णंतगुणाओ वग्गणा णेहफड्डाओ" ॥ सम्प्रति गाथार्थो विव्रियते—नामप्रत्ययेषु प्रयोगप्रत्ययेष्वपि च स्पर्धकेषु अविभागवर्गणादयः प्राग्वद् भेयाः । तथाहि—स्नेहप्रत्ययस्पर्धक इवात्रापि अविभागवर्गणा एकैकस्नेहाविभागवृद्धपरमाणुवर्गणा अनन्ताः । तथा स्तोकेन स्नेहेन बद्धाः पुद्गला बहव इतरे स्तोकाः स्तोकतराः । यच्च 'असंखलोगे दुगुणहीणा' इति तदत्रासंभवान्न संबध्यते । स्नेहप्रत्ययस्पर्धकेऽपि हि तद् यथासंभवं स्तोकमेव कालं यावद् योजितम्, न पुनः सर्वत्रापि । तथा 'सिं' ति—एषां स्नेहप्रत्ययनामप्रत्ययप्रयोगप्रत्ययस्पर्धकानां प्रत्येकं स्वके—आत्मीये जघन्योत्कृष्टे वर्गणे बुद्ध्या पृथक् कृत्वा ततः क्रमेण तासु 'धणिया देसगुण' त्ति—धणिया निचिता देशगुणा निर्विभागभागरूपाः सकलपुद्गलगतस्नेहाविभागा इत्यर्थः, तेऽनन्तगुणनया अनन्तगुणिततया ज्ञातव्याः । तदेवं कृता पुद्गलानां परस्परं संबन्धहेतुभूतस्य स्नेहस्य प्ररूपणा ॥ २३ ॥

(उ०)—तदेवं कृता स्नेहप्रत्ययस्पर्धकप्ररूपणा, अथ नामप्रत्ययस्पर्धकप्रयोगप्रत्ययस्पर्धकप्ररूपणां कर्तुमाह—इह नामप्रत्ययस्पर्द्धकप्ररूपणायां षडनुयोगद्वाराणि—अविभागप्ररूपणा, वर्गणाप्ररूपणा, स्पर्धकप्ररूपणा, अन्तरप्ररूपणा, वर्गणापुद्गलस्नेहाविभागसकलसमुदायप्ररूपणा, स्थानप्ररूपणा चेति । तत्रौदारिकादिशरीरपञ्चकप्रायोग्यानां परमाणूनां यो रसः केवलिप्रज्ञाच्छेदनकेन च्छिद्यते छित्त्वा च निर्विभागा भागाः क्रियन्ते तेऽविभागा गुणपरमाणवो भावपरमाणवो वाऽभिधीयन्ते । एषाऽविभागप्ररूपणा । तत्रैकेन स्नेहाविभागेन

युक्ताः पुद्गलाः शरीरयोग्या न भवन्ति–पञ्चदशान्यतमबन्धनयोग्या न भवन्तीत्यर्थः। नापि द्वाभ्यां स्नेहाविभागाभ्यां युक्ताः, नापि संख्येयैर्नाप्यसंख्येयैर्नाप्यनन्तैः, किं तु सर्वजीवानन्तगुणैरनन्तानन्तैरेव, तेषां समुदायः प्रथमा वर्गणा, सा च जघन्या। तत एकैकाविभागवृद्ध्या निरन्तरं तावद्वर्गणा वाच्या यावदभव्यानन्तगुणसिद्धानन्तभागकल्पा भवन्ति। एतासां समुदाय एकं स्पर्धकम्। इत ऊर्ध्वमेकादिस्नेहाविभागाधिकाः परमाणवो न प्राप्यन्ते, किं तु सर्वजीवानन्तगुणैरनन्तानन्तैरेवाधिकाः प्राप्यन्ते। तेषां समुदायो द्वितीयस्पर्धकस्य प्रथमा वर्गणा। तस्यां च स्नेहाविभागाः प्रथमस्पर्धकप्रथमवर्गणागतस्नेहाविभागेभ्यो द्विगुणा भवन्ति। तत एकैकस्नेहाविभागवृद्ध्या निरन्तरं वर्गणास्तावद्वाच्या यावदभव्यानन्तगुणसिद्धानन्तभागकल्पा भवन्ति। तासां समुदायो द्वितीयं स्पर्धकम्। तत एकादिस्नेहाविभागवृद्धाः परमाणवो न प्राप्यन्ते, किं तु सर्वजीवानन्तगुणैरनन्तानन्तैः स्नेहाविभागैर्वृद्धाः प्राप्यन्ते। तेषां समुदायस्तृतीयस्पर्धकस्य प्रथमा वर्गणा। तस्यां स्नेहाविभागाः प्रथमस्पर्धकसत्कप्रथमवर्गणातस्त्रिगुणाः। तत एकैकस्नेहाविभागवृद्ध्या प्रागुक्तप्रमाणा वर्गणा वाच्याः। तासां समुदायस्तृतीयं स्पर्धकम्। एवं यतिसंख्यं स्पर्धकं चिन्त्यते तदादिवर्गणायां प्रथमस्पर्धकप्रथमवर्गणागतस्नेहाविभागास्तत्तत्संख्यगुणिता लभ्यन्ते। स्पर्धकानि च तान्यभव्येभ्योऽनन्तगुणानि सिद्धानन्तभागकल्पानि भवन्ति। अन्तराणि चैतेषां रूपोनस्पर्धकतुल्यानि, यतश्चतुर्णामन्तराणि त्रीण्येव भवन्तीति। तथा वर्गणास्वानन्तर्येण द्वे वृद्धी भवतः एकैकाविभागवृद्धिरनन्तानन्ताविभागवृद्धिश्च। तत्रैकैकाविभागवृद्धिरेकस्पर्धकस्थानां वर्गणानां यथाक्रमं, अनन्तान्ताविभागवृद्धिश्च पाश्चात्यस्पर्धकगतचरमवर्गणापेक्षयाऽग्रिमस्य स्पर्धकस्यादिवर्गणायाः। पारम्पर्येण तु प्रथमस्पर्धकप्रथमवर्गणापेक्षया षडपि वृद्धयो ज्ञेयाः। तदेवं कृता वर्गणास्पर्धकान्तरप्ररूपणाः। अथ वर्गणागतपुद्गलस्नेहाविभागसमुदायप्ररूपणा क्रियते–तत्र प्रथमशरीरस्थानस्य प्रथमायां वर्गणायां सर्वस्तोकाः स्नेहावि-

भागाः । ततो द्वितीयशरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः । तेभ्योऽपि तृतीयशरीरस्थानस्य प्रथमवर्गणायामनन्तगुणाः । एवमनन्तगुणया श्रेण्या सर्वाण्यपि स्थानानि नेतव्यानि । अत्रान्तरे शरीरपरमाणूनामेव तत्तद्बन्धनयोग्यानामल्पबहुत्वमुच्यते—तत्रौदारिकौदारिकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः, तेभ्य औदारिकतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽप्यौदारिककार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽप्यौदारिकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तथा वैक्रियवैक्रियबन्धनयोग्याः सर्वस्तोकाः, तेभ्योऽपि वैक्रियतैजसबन्धनयोग्याः पुद्गला अनन्तगुणाः, तेभ्योऽपि वैक्रियकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि वैक्रियतैजसकार्मणबन्धनयोग्या अनन्तगुणाः । तथा आहारकाहारकबन्धनयोग्याः पुद्गलाः सर्वस्तोकाः, तेभ्य आहारकतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽप्याहारककार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽप्याहारकतैजसकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि तैजसतैजसबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि तैजसकार्मणबन्धनयोग्या अनन्तगुणाः, तेभ्योऽपि कार्मणकार्मणबन्धनयोग्या अनन्तगुणा इति । साम्प्रतं स्थानप्ररूपणावसरः—तत्र प्रथमस्पर्धकादारभ्याभव्यानन्तगुणसिद्धानन्तभागकल्पैरनन्तैः स्पर्धकैरेकं प्रथमं शरीरप्रायोग्यं स्थानं भवति । ततस्ततिभिरेव स्पर्धकैरनन्तभागवृद्धैर्द्वितीयं शरीरस्थानं, भूयस्ततिभिरेव स्पर्धकैरनन्तभागवृद्धैस्तृतीयं शरीरस्थानं, एवं निरन्तरमनन्तभागवृद्धानि शरीरस्थानान्यङ्गुलमात्रक्षेत्रासंख्येयभागगतप्रदेशराशिप्रमाणानि वाच्यानि । एतानि समुदितान्येकं कण्डकमभिधीयते, उक्तप्रमाणसंख्याया एव समये कण्डकत्वेन परिभाषणात् । तस्माच्च कण्डकादुपरि यच्छरीरस्थानं तत्कण्डकगतचरमशरीरस्थानापेक्षयाऽसंख्येयभागवृद्धम् । तस्मात् पराण्यन्यानि शरीरस्थानानि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि वाच्यानि । एतानि च समुदितानि द्वितीयकण्डकम् । तस्मादुपरि यदन्यच्छरीरस्थानं तद्द्वितीयकण्डकगतचरमशरीरस्थानापेक्षयाऽसंख्येयभागवृद्धम् । ततः पुन-

रपि कण्डकमात्राण्यनन्तभागवृद्धानि वाच्यानि । तत्समुदायस्तृतीयं कण्डकम् । एवमसंख्येयभागान्तरितानि अनन्तभागवृद्धानि कण्डकानि तावद्वाच्यानि यावदन्तरालभाविनामसंख्येयभागवृद्धानामपि स्थानानां कण्डकं परिसमाप्यते । ततश्चरमादसंख्येयभागाधिकात्स्थानात् पराणि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि शरीरस्थानानि वाच्यानि । ततः परमेकं संख्येयभागवृद्धं स्थानम् । ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तानि तथैवाभिधाय पुनरप्येकं संख्येयभागाधिकं स्थानं वक्तव्यम् । एतानि चैवं संख्येयभागाधिकानि तावद्वाच्यानि यावत् कण्डकं परिपूर्यते । तत उक्तक्रमेण भूयोपि संख्येयभागाधिकस्थानप्रसङ्गे संख्येयगुणाधिकं स्थानमेकं वाच्यम् । ततो भूयोऽपि मूलादारभ्य तावन्ति शरीरस्थानानि वाच्यानि । ततः पुनरप्येकं संख्येयगुणाधिक स्थानं वाच्यम् । अमून्यप्येवं संख्येयगुणाधिकानि स्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति । ततः पूर्वपरिपाट्या संख्येयगुणाधिकस्थानप्रसङ्गेऽसंख्येयगुणाधिकं स्थानं वक्तव्यम् । ततः पुनरपि मूलादारभ्य प्रागतिक्रान्तान्यभिधेयानि । ततो भूयोऽप्येकमसंख्येयगुणाधिकं वक्तव्यम् । एवममून्यसंख्येयगुणाधिकानि स्थानानि कण्डकमात्राणि वक्तव्यानि । ततः पूर्वपरिपाट्याऽसंख्येयगुणाधिकस्थानप्रसङ्गेऽनन्तगुणाधिकमेकं वक्तव्यम् । ततः प्रागतिक्रान्तसर्वाभिधानादिक्रमेणानन्तगुणाधिकान्यपि कण्डकमात्राणि वक्तव्यानि । तेषामुपरि पञ्चवृद्ध्यात्मकानि स्थानानि भूयोऽपि वक्तव्यानि । यत्त्वनन्तगुणवृद्धं स्थानं तन्न प्राप्यते, षट्स्थानकस्य परिसमाप्तत्वात् । एवमसंख्येयानि षट्स्थानकानि शरीरस्थानेषु भवन्ति । सर्वाण्यपि च शरीरस्थानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति । उक्ता नामप्रत्ययस्पर्धकप्ररूपणा । अथ प्रयोगप्रत्ययस्पर्धकप्ररूपणा क्रियते—तत्र प्रयोगो योगः प्रकृष्टो योग इति व्युत्पत्तेः, तत्स्थानवृद्ध्या यो रसः कर्मपरमाणुषु केवलयोगप्रत्ययतो बध्यमानेषु परिवर्धते स्पर्धकरूपतया तत्प्रयोगप्रत्ययं स्पर्धकम् । उक्तं च पञ्चसंग्रहे—" होइ पओगो जोगो तट्ठाणविवड्ढणाइ

णो य रसो । परियडंई जीवे पओगफड्डं तयं विंति ॥ एतत्प्ररूपणापि नामप्रत्ययस्पर्धकप्ररूपणावदवसेया । तदुक्तं—" अविभागवग्गफड्डगअंतरठाणाइ एत्थ जहपुव्विं । ठाणाइवग्गणाओ अणंतगुणणाइ गच्छंति ॥" अस्या अर्थः—अविभागवर्गणास्पर्धकान्तरस्थानादिप्ररूपणा यथा पूर्वं नामस्पर्धके कृता तथात्रापि प्रयोगप्रत्यये स्पर्धके कर्त्तव्या । स्थानानामाद्या वर्गणा अनन्तगुणनयाऽऽगच्छन्ति । तथाहि—प्रथमस्थानगतप्रथमवर्गणायां सकलपुद्गलगतस्नेहाविभागाः सर्वस्तोकाः, ततो द्वितीयस्थानगतप्रथमवर्गणायामनन्तगुणाः, ततोऽपि तृतीयस्थानगतप्रथमवर्गणायामनन्तगुणाः, एवं तावन्नेयं यावदन्तिमं स्थानमिति । 'अन्तरठाणाइ' इत्यत्रादिशब्दात् कण्डकषट्स्थानकपरिग्रहः । अत एवैतदाधिक्यान्नामप्रत्ययस्पर्धकप्ररूपणायां प्रयोगप्रत्ययस्पर्धकप्ररूपणायां च प्रत्येकमष्टावप्यनुयोगद्वाराणि भण्यन्ते । इदानीमल्पबहुत्वमुच्यते—स्नेहप्रत्ययस्पर्धकस्य जघन्यवर्गणायां सकलपुद्गलगताः स्नेहाविभागाः सर्वस्तोकाः, ततस्तस्यैवोत्कृष्टवर्गणायां तेऽनन्तगुणाः, तेभ्योऽपि नामप्रत्ययस्पर्धकस्य जघन्यवर्गणायामनन्तगुणाः, तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः, तेभ्योऽपि प्रयोगप्रत्ययस्पर्धकस्य जघन्यवर्गणायामनन्तगुणाः, तेभ्योऽपि तस्यैवोत्कृष्टवर्गणायामनन्तगुणाः । अथ गाथाक्षरार्थ उच्यते—नामप्रत्ययेषु प्रयोगप्रत्ययेष्वपि च स्पर्धकेषु अविभागवर्गणादयः प्राग्वज्ज्ञेयाः । तथाहि—स्नेहप्रत्ययस्पर्धक इवात्राप्यविभागवर्गणा एकैकस्नेहाविभागवृद्धा अनन्ताः । तथा स्तोकेन स्नेहेन बद्धाः पुद्गला बहव इतरे स्तोकाः । यच्चासंख्यलोके द्विगुणहीना इत्युक्तं तदत्रागमवचान्न संबध्यते, स्नेहप्रत्ययस्पर्धकेष्वपि हि तन्न व्याख्या योजितं, यथासंभवमेव तद्योजनस्य तत्राभिप्रेतत्वात् । तथा 'सि' त्तितेषां स्नेहप्रत्ययनामप्रत्ययप्रयोगप्रत्ययस्पर्धकानां प्रत्येकं स्वके–आत्मीये जघन्यज्येष्ठे वर्गणे बुद्ध्या पृथक्कृत्वा क्रमेण तासु 'धणिय' त्तिनिचिताः,देशगुणाः–निर्विभागभागरूपाः सकलपुद्गलगतस्नेहाविभागा अनन्तगुणनया ज्ञातव्या इत्युचिताध्याहारेण व्याख्येयम् ॥ २३ ॥

## शरीरस्थानम्



वंधनविषया योग्याः सर्वेजीवानंतगुणा वर्गणाः
सर्वजीवानंतगुणस्नेहाणवः
प्रथमस्पर्द्धकाद्यवर्गणातो द्विगुणाः स्नेह०
प्रथमस्पर्द्धकाद्यवर्गणातस्त्रिगुणाः स्ने०
प्रथमस्पर्द्धकाद्यवर्गणातश्चतुर्गुणाः स्ने०
प्रतिवर्गणं पुद्गला अनंताः क्रमेण हीना हीनतराश्च
अन्तरम्
अन्तरम्
अन्तरम्
प्रतिपरमाणुगतस्नेहाणव
प्रथमस्पर्द्धकम्
द्वितीयस्प०
तृतीयस्प०
चतुर्थस्प०

भणितं बंधणं। इदाणिं पगइप्पदेसअणुभागट्ठितीणं विभागो दरिसिज्जइ। तेसिं लक्खणं पुव्वुत्तं। मूलपगतिउत्तरपगतीणं विगप्पसामित्तभेदेण य जहा बंधसयगे भणिता तहा चेव इहा वि भाणियव्वा। वत्थुलक्खणमेत्तं भण्णति—

**मूलुत्तरपगतीणं अणुभागविसेसतो पगइभेदो। अविसेसियरसपगई उ पगइबंधो मुणेयव्वो ॥२४॥**

(चू०)—मूलपगतीउत्तरपगतीणं भेदो अणुभागविसेसतो भवति। अणुभागो सभावो। जहा वातहरपित्तहरसिंभहरा मोतगविसेसा दिस्संति मोतगसामण्णत्ते वि विसेसित्ते तहा कम्मसामण्णत्ते वि णाणं आवरेतित्ति णाणावरणिज्जं एवमादिभेदो। तासिं मूलपगइउत्तरपगतीणं 'अविसेसितरसपगती उ'त्ति–रसो अणुभागो, तस्स सब्भावो पगती, सा अविसेसिया वि सुभा असुभा तिव्वा मंदा वत्ति जम्मि बंधे सो अविसेसितरसपगती, तुसद्दो विसेसणत्थो, किं विसेसेति? भण्णइ–रसवीरियाविभागविसेसमंतरेण सामण्णमेत्तणिद्दिट्ठोत्ति विसेसेति। 'पगतिबंधो मुणेयव्वो'त्ति–सो एसो पगतिबंधो वुच्चति। [पगतिबंधो भणितो]। जोगा पगइपदेसबंधा भवंति। जोगा भणिता। पगइबंधो भणितो ॥ २४॥

(मलय०)–सम्प्रति बन्धनकरणसामर्थ्यतो बध्यमानकर्मपुद्गलानां प्रकृतिस्थित्यनुभागप्रदेशविभागो मन्दमतीनां सुखावबोधाय मोदकदृष्टान्तेन विभाव्यते। यथा किल कश्चिन्मोदको वातविनाशिद्रव्यनिष्पन्नः प्रकृत्या वातमुपशमयति, पित्तोपशमकद्रव्यनिष्पन्नः पित्तम्, कफापहारिद्रव्यनिष्पन्नः कफमित्येवंस्वरूपा प्रकृतिर्मोदकस्य। तथा तस्यैव स्थितिः कस्यचिद्दिनमेकम्, अपरस्य दिनद्वयम्, अन्यस्य

मासादिकं कालं यावत्। तथा तस्यैव यो रसः स्निग्धमधुरादिः कस्यचिदेकस्थानकोऽपरस्य द्विस्थानक इत्यादि । तथा तस्यैव प्रदेशाः कणिकादिरूपाः कस्यचिदेकप्रसृतिप्रमाणाः कस्यचिद् द्विप्रसृतिप्रमाणा इत्यादि। तथा कर्मणोऽपि किञ्चिज्ज्ञानमावृणोति, किञ्चिद्दर्शनम्, किञ्चित्सुखदुःखे जनयति, किञ्चित् मोहयतीत्येवंस्वरूपा प्रकृतिः। तथा स्थितिस्तस्यैव कर्मणः कस्यचित् त्रिंशत्सागरोपमकोटीकोटीप्रमाणा, अपरस्य सप्ततिसागरोपमकोटीकोटीप्रमाणा इत्यादि । तथा रसः कस्यचिदेकस्थानकोऽपरस्य द्विस्थानक इत्यादि । तथा प्रदेशाः कस्यचिद्बहुतराः, कस्यचिच्च बहुतमा इति । तत्र प्रकृतिभेदत एव कर्मणां मूलोत्तरविभागो भवति नान्यथेत्यावेदयन्नाह— 'मूलु' त्ति–इह प्रकृतिशब्दो भेदपर्यायोऽप्यस्ति । तथा चाह भाष्यकृत्–"अहवा पयडी भेओ" इति । ततो 'मूलोत्तरप्रकृतीनां'–मूलोत्तरभेदानां कर्मणः संबन्धिनां 'अनुभागविशेषतः'–स्वभावविशेषतो ज्ञानावारकत्वादिलक्षणाद् भेदो भवति नान्यथा । अनुभागशब्दश्चात्र स्वभावपर्यायोऽवगन्तव्यः ।तदुक्तं चूर्णौ–"अनुभागो त्ति सहावो" इति । इह बन्धनकरणे प्रकृतिबन्धादयः प्रत्येकमुपरि सप्रपञ्चं वक्तव्याः । प्रकृत्यादयश्च प्रतिकर्म संकीर्णा इति कश्चिद्व्यामुह्येत अतस्तन्मोहापनोदाय प्रकृतिबन्धं तुशब्दोपलक्षणद्वारेण अन्यांश्च स्थितिबन्धादीन् वैविक्त्येन स्पष्टयन्नाह–'अविसेसिय' इत्यादि । रसः स्नेहोऽनुभाग इत्येकार्थः । तस्य प्रकृतिः स्वभावः । अविशेषिताऽविवक्षिता रसप्रकृतिः, उपलक्षणत्वात् स्थित्यादयोऽपि यस्मिन्नविवक्षिताः स बन्धोऽविशेषितरसप्रकृतिः प्रकृतिबन्धो ज्ञातव्यः । तुशब्दस्याधिकार्थसंसूचनात् अविवक्षितरसप्रकृतिप्रदेशः स्थितिबन्धः, अविवक्षितप्रकृतिस्थितिप्रदेशो रसबन्धः, अविवक्षितप्रकृतिस्थितिरसः प्रदेशबन्ध इत्यपि द्रष्टव्यम् । प्रकृतिबन्धे च यावन्त्यः प्रकृतयो बन्धमायान्ति यश्च यासां बन्धं प्रति स्वामी तदेतत्सर्वं शतकादवसेयम् । प्रकृतिप्रदेशबन्धौ च योगतो भवतः "जोगा पयडिपएसं" इति वचनात् । तत्र प्रकृतिबन्ध उक्तः। साम्प्रतं प्रदेशबन्धो वक्तुमवसरप्राप्तः।

तथाष्टविधबन्धकेन जन्तुना यदेकेनाध्यवसायेन चित्रतागर्भेण गृहीतं दलिकं तस्याष्टौ भागा भवन्ति, सप्तविधबन्धकस्य तु सप्त भागाः, षड्विधबन्धकस्य षड्भागाः, एकविधबन्धकस्य एको भागः ॥ २४ ॥

(३०)–तदेवं कृता पुद्गलानां मिथः संबन्धहेतुभूतस्य स्नेहस्य प्ररूपणा । अथ बन्धनकरणसामर्थ्याद्बध्यमानानां मूलोत्तरप्रकृतीनां विभागकारणमुपदर्शयन् नविकल्पेन स्पष्टयन्नाह—मूलोत्तरप्रकृतीनां 'अहवा पयडी भेउ' त्ति भाष्यकृद्वचनात् प्रकृतिशब्दस्य भेदपर्यायत्वान्मूलोत्तरभेदानां कर्मसम्बन्धिनामनुभागविशेषतो ज्ञानावरकत्वादिस्वभाववैचित्र्याद् भेदो भवति। अनुभागशब्दोऽत्र स्वभावपर्यायः "अणुभागो त्ति सहावो" इति चूर्णिकृद्वचनात् । भवति हि स्वभावभेदाद्वस्तुभेदो यथा तृणदुग्धादीनां, तथेह दलिकस्य कर्मरूपतया तुल्यस्यापि स्वभावभेदाद् भेद इति । तथाऽविशेषिता–अविवक्षिता रसप्रकृतिः, उपलक्षणात् स्थित्यादयोऽपि यस्मिन् स प्रकृतिबन्धो ज्ञातव्यः । तुशब्दस्याधिकार्थसंसूचकत्वादविवक्षितरसप्रकृतिप्रदेशः स्थितिबन्धः, अविवक्षितप्रकृतिस्थितिप्रदेशो रसबन्धः, अविवक्षितप्रकृतिस्थितिरसः प्रदेशबन्ध इत्यपि द्रष्टव्यम् । अत्र च कर्मणां प्रकृत्यादयो मोदकदृष्टान्तेन लक्षणीयाः । तथाहि–मोदकस्य यथा वातविनाशकत्वादिस्वभावः प्रकृतिस्तथा कर्मणां ज्ञानावरकत्वादिस्वभावः प्रकृतिः, यथा च तस्य स्थितिरेकद्वित्रिदिनाद्यवस्थानरूपा तथा कर्मणां स्थितिः प्रतिनियतकालावस्थानरूपा, यथा च तस्य रसः स्निग्धमधुरादिस्तथा कर्मणामपि शुभाशुभादिः, यथा च तस्य प्रदेशा एकद्विप्रसृत्यादिप्रमाणास्तथा कर्मणामपि बहुतरबहुतमादिविभागरूपाः । यत्तु–"ठिइबंधु दलस्स ठिई पएसबंधो पएसगहणं जं । ताण रसो अणुभागो तस्समुदाओ पगइबंधो" ॥ इति पञ्चसङ्ग्रहे प्रकृतिबन्धलक्षणमुक्तं, तत्कापायिककर्म प्रतीत्य संभवदपि नेहोपयुज्यते, स्थित्यादिसमुदायरूपप्रकृतिबन्धचिन्तने स्थित्याद्यंशाविवक्षणस्य कर्तुमशक्यत्वादिति । प्रकृतिबन्धे च विंशत्यधिकं शतमधिक्रियते ।

भूयस्कारादिविशेषश्चात्रत्योऽग्रे वक्ष्यते । अयं च प्रकृतिबन्धश्चतुर्धा–जघन्योऽजघन्य उत्कृष्टोऽनुत्कृष्टश्च । तत्र जघन्यः प्रकृतिबन्ध उपशान्तमोहादिगुणस्थानत्रये, तत्रैकस्या एव प्रकृतेर्बन्धात्, प्रकृतिबन्धमाश्रित्य चैकप्रकृतिबन्धस्यैव सर्वस्तोकत्वेन जघन्यत्वात् । उपशान्तमोहाद् भ्रष्टस्याजघन्यो बन्धः,मूलप्रकृतीरधिकृत्य षडादीनामुत्तरप्रकृतीरधिकृत्य सप्तदशादीनां बन्धसंभवात्। संज्ञिनि मिथ्यादृष्टावुत्कृष्टः, मूलप्रकृतीनामष्टानामुत्तरप्रकृतीनां चतुःसप्ततेर्बन्धात् । ततः स्तोकस्तोकतराणां मूलप्रकृतीनामुत्तरप्रकृतीनां वा यो बन्धः सोऽनुत्कृष्टः । उत्कृष्टबन्धात् परिणामह्रासेन पततोऽनुत्कृष्टो बन्धः सादिः । जघन्यबन्धाद्वा प्रतिपततोऽजघन्यो बन्धः सादिः । इत्येवं सादित्वविशेषादजघन्यानुत्कृष्टयोर्भेदो भावनीयः । यद्वा पूर्वपश्चिमदिशोरिवावधिभेदाज्जघन्यमवधीकृत्य हि यावदुत्कृष्टस्तावदजघन्यः, उत्कृष्टमवधीकृत्य च यावज्जघन्यस्तावदनुत्कृष्ट इति । अनेनैव विशेषहेतुना सादित्वविशेषाभावेऽप्यजघन्यानुत्कृष्टभेद उपलक्ष्यते । यत्तु–"उक्कोसा परिवडिए साइ अणुक्कोसओ जहन्नाओ । अव्वंधाओ वियरो तदभावे दो वि अविसेसा ॥" इत्युक्तं तत्सादित्वकृतस्फुटविशेषोपलम्भभावाभिप्रायेण । तत्राध्रुवबन्धिनीनां सातवेदनीयादीनां जघन्यादयश्चत्वारोऽपि भेदाः सादयोऽध्रुवाश्च भवन्ति । ध्रुवबन्धिनीनां तु संभविनावजघन्यानुत्कृष्टावनादी ध्रुवौ साद्यध्रुवावपि च भवतः । जघन्योत्कृष्टौ तु ध्रुवबन्धिनीनामपि कादाचित्कत्वेन साद्यध्रुवावेव भवतः । तथा मूलप्रकृतिष्वायुषो बन्धः सादिरध्रुव एव च, अध्रुवबन्धित्वात् । वेदनीयस्यानादिरध्रुवो ध्रुवश्च, तत्रानादित्वं सार्वदिकत्वात्, ध्रुवोऽभव्यानां कदापि व्यवच्छेदाभावात्, अध्रुवो भव्यानां अयोगिनि व्यवच्छेदात् । शेषकर्मणां साद्यादिश्चतुर्विधः । तत्रोपशान्तमोहगुणस्थानात् पततः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया । उत्तरप्रकृतिषु ध्रुवबन्धिनीनां सर्वासामपि (४७) साद्यादिश्चतुर्विधः । तत्र स्वस्वाबन्धस्थानभ्रष्टानां सादिः, अबन्धस्थानं च तासां मध्ये मिथ्यात्वस्य (सास्वाद-

प्रकृतिबन्धप्ररूपणा.

प्रकृतिबन्धे मूलप्रकृतिनां साद्यादिबन्धयन्त्रकम् ।

| मूलप्रकृतिः | सादिः कथं वा कस्य ? | अध्रुवः कथं वा कस्य ? | अनादिः कथं वा कस्य ? | ध्रुवः कथं वा कस्य ? |
|---|---|---|---|---|
| आयुषः | अध्रुवत्वात् | अध्रुवत्वात् | — | — |
| वेदनीयस्य | — | भव्यानाम् | सार्वदिकत्वात् | अभव्यानाम् |
| ज्ञानावरणीयस्य | उपशान्तात् पतितस्य | भव्यानाम् | सादिस्थानाप्राप्तस्य | ” |
| दर्शनावरणीयस्य | ” | ” | ” | ” |
| मोहनीयस्य | ” | ” | ” | ” |
| नाम्नः | ” | ” | ” | ” |
| गोत्रस्य | ” | ” | ” | ” |
| विघ्नस्य | ” | ” | ” | ” |

प्रकृतिबन्धे उत्तरप्रकृतीनां साद्यादिबन्धयन्त्रकम् ।

| उत्तरप्रकृतिः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| मिथ्यात्वस्य | मिथ्यात्वप्रारंभे | भव्यानाम् | स्वाबंधस्थानाप्राप्तानाम् | अभव्यानाम् |
| स्त्यानर्द्धित्रिकस्य | सास्वादनप्रारंभे | ,, | ,, | ,, |
| अनंता० चतुष्कस्य | ,, | ,, | ,, | ,, |
| अप्रत्या० ,, | अविरतसम्यग्दृष्टीनाम् | ,, | ,, | ,, |
| प्रत्या० ,, | देशविरतानाम् | ,, | ,, | ,, |
| निद्रा-प्रच०-अगु० निर्मा० तैजस० | अपूर्वगुणस्थानाम् | ,, | ,, | ,, |
| उप० वर्णादि ४ | ,, | ,, | ,, | ,, |
| कार्मणस्य | ,, | ,, | ,, | ,, |
| भयस्य | ,, | ,, | ,, | ,, |

| | | | | |
|---|---|---|---|---|
| कुत्साया | ” | ” | ” | ” |
| संज्व० चतुष्कस्य | अनिवृत्तिगुणस्थानाम् | ” | ” | ” |
| ज्ञाना० ५ | सूक्ष्मसंपरायानाम् | ” | ” | ” |
| विघ्न० ५ | ” | ” | ” | ” |
| दर्शना० ४ | ” | ” | ” | ” |
| अध्रुवबंधिनीनाम् ७३ | अध्रुवबंधत्वात् | अध्रुवबंधत्वात् | — | — |

नादि) स्त्यानर्द्धित्रिकानन्तानुबन्धिनां मिश्रादिगुणस्थानजातं,द्वितीयकषायाणां देशविरतादि, तृतीयकषायाणां प्रमत्तादि, निद्राप्रचलागुरुलघुनिर्माणतैजसोपघातवर्णादिचतुष्टयकार्मणभयजुगुप्सानामनिवृत्तिबादरादि, संज्वलनानां सूक्ष्मसंपरायादि, ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयानामुपशान्तमोहगुणस्थानमिति । सादित्वे चानादित्वं ध्रुवम्। तथा स्वस्वाबन्धस्थानमप्राप्तानामनादिः, ध्रुवोऽभव्यानां, भव्यानां ध्रुवः । अध्रुवबन्धिनीनां तु (७३) साद्यध्रुव एवेत्युक्तमेव । तथा नरकत्रिकदेवत्रिकवैक्रियद्विकमित्यष्टानां प्रकृतीनां बन्धे विकलेन्द्रियैकेन्द्रिया न योग्या इति तदितरासामेव ते बन्धस्वामिनः । तथा मनुष्यत्रिकमुच्चैर्गोत्रं प्रागुक्ताश्चाष्टाविति द्वादशानां बन्धे तेजस्कायिकवायुकायिका अयोग्याः । आहारकद्विकजिननामबन्धे सर्वेऽपि तिर्यञ्चोऽयोग्याः । वैक्रियद्विकाहारकद्विकनरकत्रिकदेव-

त्रिकसूक्ष्मत्रिकविकलजातित्रिकरूपाणां षोडशप्रकृतीनां बन्धे देवा अयोग्याः। एतासामेवातपस्थावरैकेन्द्रियजातिसहितानां बन्धे नारका अयोग्याः। तथा च तेजस्कायिकवायुकायिकाः पञ्चोत्तरशतप्रकृतीनां बन्धस्वामिनः। शेषैकेन्द्रियविकलेन्द्रिया नवोत्तरशतप्रकृतीनां, पञ्चेन्द्रियतिर्यञ्चः सप्तदशोत्तरशतप्रकृतीनां, देवाश्चतुरुत्तरशतसङ्ख्यानाम्, नारकाश्चैकोत्तरशतसंख्यानामिति स्थितम्। अन्योऽपि विशेषो ग्रन्थान्तरादभ्यूह्यः, विस्तरभयान्नेह तन्यते ॥२४॥

इदाणिं पदेसबंधो तस्स णिरूवणा कीरति—

जं सव्वघातिपत्तं सगकम्मपएसणंतमो भागो। आवरणाण चउद्धा तिहा य अह पंचहा विग्घे ॥२५॥

(चू०)—जं दलियं कम्मत्ताए गहितं तं अट्ठविहबंधगस्स अट्ठभागा भवंति, सत्तविहबंधगस्स सत्त भागा भवंति, छव्विहबंधगस्स छभागा भवंति। तत्थ चउसु घातिकम्मेसु तिण्हं णाणावरणदंसणावरणमोहणिज्जाणं अत्थि देसघातिणी सव्वघातिणी य। तासिं सव्वघातिपातोग्गं किं पमाणं दव्वं तण्णिरूवणत्थं 'जं सव्वघाइपत्तं'त्ति—जं दलितं सव्वघातिजोग्गं 'सगकम्मपएसणंतिमो भागो'त्ति—अप्पप्पणो कम्मपएसाणंतिमो भागो सव्वघाती भवति। कहं? भण्णइ—सव्वकम्मदव्वपएसाणं जे णिद्धयरा पोग्गला ते थोवा, सव्वकम्मदव्वाणं अणंतिमो भागो, ते च सव्वघातिजोग्गा। अणंतिमे भागे फिट्टे सेसस्स कम्मदलियस्स सेसकम्मेहि भागो। 'आवरणाण चउद्धा-तिहा य'त्ति—णाणावरणदंसणावरणाणं जहक्कमेण चत्तारि तिन्नि य भागा। णाणावरणस्स जं दलितं ततो केवलणाणावरणीयस्स अणंतिमो भागो फेडिज्जति सेसं चत्तारिभागा कीरति आभिणिबोहियणाणावरणादीणं च-

उण्हं । दंसणावरणीयस्स जं भागलद्धं तस्स अणंतिमो भागो णिद्दापणग(केवल)दंसणावरणीयाणं छब्भागा भवंति, सेसं तिहा कीरति चक्खुदंसणअचक्खुदंसणओहिदंसणावरणीयाणं । 'अह पंचहा विग्घ'त्ति—जं अंतराइयस्स भागलद्धं दलियं तं सव्वघातिअभावातो पंचभागो कीरति दानांतरादीण पंचण्हं ॥२५॥

(मलय०)—सम्प्रत्युत्तप्रकृतीनां भागविभागोपदर्शनार्थमाह—'जं'ति ।—यत् कर्मदलिकं सर्वघातिप्राप्तं केवलज्ञानावरणीयादिरूपसर्वघातिप्रकृतिषु गतं तत् स्वकर्मप्रदेशानामनन्ततमो भागः, स्वकीयाया ज्ञानावरणादिरूपाया मूलप्रकृतेर्यो मौलो भागस्तस्यानन्ततमो भाग इत्यर्थः। काऽत्र युक्तिरिति चेद्, उच्यते—इहाष्टानामपि मूलप्रकृतीनां प्रत्येकं ये स्निग्धतराः परमाणवस्ते स्तोकाः । ते च स्वस्वमूलप्रकृतिपरमाणूनामनन्ततमो भागः । त एव च सर्वघातिप्रकृतियोग्या इति यत्सर्वघातिप्राप्तं तत् स्वमूलप्रकृतिप्रदेशानामनन्ततमो भागः । तस्मिंश्चानन्ततमे भागेऽपसारिते शेषं यद्दलिकं तत्सर्वघातिप्रकृतिव्यतिरिक्तेभ्यः तत्कालबध्यमानेभ्यः स्वस्वमूलप्रकृत्यवान्तरभेदेभ्यो विभज्य विभज्य दीयते । तथा चाह—'आवरण' इत्यादि । 'आवरणयोः' ज्ञानावरणदर्शनावरणयोः प्रत्येकं मूलभागस्य सर्वघातिप्रकृतिनिमित्तेऽनन्ततमे भागेऽपसारिते सति शेषस्य दलिकस्य यथाक्रमं चतुर्धा त्रिधा च विभागः क्रियते, कृत्वा च शेषदेशघातिप्रकृतिभ्यो दीयते। तथा 'विघ्ने'—अन्तराये यो मूलभागः स समग्रोऽपि पञ्चधा कृत्वा दानान्तरायादिभ्यो दीयते । इयमत्र भावना—ज्ञानावरणीयस्य स्थित्यनुसारेण यो मूलभाग आभजति, तस्यानन्ततमो भागः केवलज्ञानावरणाय दीयते, शेषस्य चत्वारो भागाः क्रियन्ते, ते च मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यवज्ञानावरणेभ्यो दीयन्ते । दर्शनावरणीयस्यापि यो मूलभाग आभजति तस्यानन्ततमं भागं षोढा कृत्वा निद्रापञ्चककेवलदर्शनावरणाभ्यां सर्वघातिभ्यां प्रयच्छति, शेषस्य च त्रयो भागाः क्रियन्ते, ते च चक्षुरच-

क्षुरवधिदर्शनावरणेभ्यो दीयन्ते । अन्तरायस्य पुनर्यो मूलभाग आभजति स समग्रोऽपि सर्वघात्यवान्तरभेदाभावात् पञ्चधा कृत्वा दानान्तरायादिभ्यो दीयते ॥ २५ ॥

(उ०)—उक्तः प्रकृतिबन्धः, अथ प्रदेशबन्धोऽवसरप्राप्तः । तत्राष्टविधबन्धकेन चित्रतागर्भाध्यवसायेन गृहीतं यद्दलिकं तस्याष्टौ भागा भवन्ति, सप्तविधबन्धकस्य तु सप्तभागाः, ष विधबन्धकस्य तु षड्भागाः, एकविधबन्धकस्य चैक एवेत्येप मूलप्रकृतिभागविभागः । अथोत्तरप्रकृतीनां भागविभागमुपदिदर्शयिषुराह—यत्कर्मदलिकं सर्वघातिप्राप्तं केवलज्ञानावरणादि सर्वघातिप्रकृतिगतं तत्स्वकर्मप्रदेशानामनन्ततमो भागः—स्वकीयज्ञानावरणादिरूपाया मूलप्रकृतेर्यो मौलो भागस्तस्यानन्ततमो भाग इत्यर्थः । कुत इति चेत्? स्वस्वमूलप्रकृतिपरमाणुषु स्निग्धतराणां परमाणूनामनन्ततमभागमात्रत्वात्, तेपामेव च सर्वघातिप्रकृतियोग्यत्वात् । तस्मिँश्चानन्ततमे भागेऽपसारिते यच्छेपं दलिकं तत्सर्वघातिप्रकृतिव्यतिरिक्तेभ्यस्तत्कालबध्यमानेभ्यः स्वस्वमूलप्रकृत्यवान्तरभेदेभ्यो विभज्य दीयते । तथा चाह—आवरणयोर्ज्ञानावरणदर्शनावरणयोः प्रत्येकं सर्वघातिप्रकृत्यर्हेऽनन्ततमे भागेऽपसारिते शेषस्य दलिकस्य यथाक्रमं चतुर्धा त्रिधा च भागः क्रियते, कृत्वा च शेपदेशघातिप्रकृतिभ्यो दीयते । ज्ञानावरणमूलप्रकृतावाभजतो भागस्यानन्ततमे केवलज्ञानावरणाय दत्ते दर्शनावरणमूलप्रकृतावाभजतश्च भागस्यानन्ततमे भागे षोढा कृत्वा निद्रापञ्चककेवलदर्शनावरणाभ्यां दत्ते प्रत्येकं चतुर्णां त्रयाणामेव देशघातिभेदानां भागदानस्य शिष्यमाणत्वात् । अथ विघ्ने—अन्तराये यो मूलभाग आभजति स समग्रोऽपि पञ्चधा कृत्वा दानान्तरायादिभ्यो दीयते, तत्र सर्वघात्यवान्तरभेदाभावात् ॥२५॥

**मोहे दुहा चउद्धा य पंचहा वावि बज्झमाणीणं । वेयणिआउयगोएसु बज्झमाणीण भागो सिं ॥२६॥**

(चू०)—मोहणिज्जस्स जं भागलद्धं दलियं तस्स अणंतिमो भागो सव्वघाती। सो दुहा कीरति–दंसणमोहस्स एक्को भागो चरित्तमोहस्स एक्को भागो। दंसणमोहस्स एक्को भागो दंसणमोहस्स जं भागलद्धं तं मिच्छत्तस्स भवति। चरित्तमोहस्स जं भागलद्धं तं बारसविहं भवति–अणंताणुबंधि (४) अपचक्खाणावरणा (४) पचक्खाणावरणाणं (४)। इदाणिं सेसस्स देसघातिस्स विधा भण्णइ–'मोहे दुहं' त्ति-मोहणिज्जस्स सेसं देसघातिदलितं दुहा कीरति–कसायवेयणिज्जस्स णोकसायवेयणिज्जस्स। 'चउद्धा य पंचधा वावि' त्ति–कसायवेदणिज्जस्स दलियं पुणो चतुद्धा कीरति–कोहादिसंजलणाणं (४)। जं णोकसायाणं भागलद्धं तं पंचहा कीरति, 'बज्झमाणीण' त्ति–बज्झमाणिगाणं, तं जहा–तिण्हं वेदाणं एक्कयरो बज्झति तस्स एक्को भागो, हासरतिअरतिसोगाणं दोण्हं जुयलाणं एक्कतरं बज्झति तेसिं दोण्णि भागा, भयदुगंछाणं एक्किक्को भागो एवं पंच भागा। 'वेयणियाउयगोएसु बज्झमाणीण भागो' त्ति–वेयणियआउयगोत्ताणं जं भागलद्धं (स 'सिं'–एतेसिं,) वेदणिजस्स सातासाताणं अण्णतरस्स बज्झमाणस्स भवति, एवं चउण्हं आउगाणं बज्झमाणस्स भागो भवति, उच्चानीयगोत्ताणं बज्झमाणस्स भागो भवति। सव्वेसिं जुगवं बंधो णत्थित्ति काउं ॥२६॥

(मलय०)–'मोहे' त्ति। मोहे–मोहनीये स्थित्यनुसारेण यो मूलभाग आभजति तस्यानन्ततमो भागः सर्वघातिप्रकृतियोग्यो द्विधा क्रियते, अर्धं दर्शनमोहनीयस्य, अर्धं चारित्रमोहनीयस्य। तत्रार्धं दर्शनमोहनीयस्य सत्कं समग्रमपि मिथ्यात्वमोहनीयस्य ढौकते। चारित्रमोहनीयस्य तु सत्कमर्धं द्वादशधा क्रियते, ते च द्वादशभागा आद्येभ्यो द्वादशकषायेभ्यो दीयन्ते। सम्प्रति शेषदलिकभागविधिरुच्यते–'मोहे दुह' इ-

त्यादि। शेषस्य च मूलभागस्य द्वौ भागौ क्रियेते, एकः कषायमोहनीयस्य, अपरो नोकषायमोहनीयस्य। तत्र कषायमोहनीयस्य भागः पुनश्चतुर्धा क्रियते, ते च चत्वारोऽपि भागाः संज्वलनक्रोधादिभ्यो दीयन्ते। नोकषायमोहनीयस्य तु भागः पञ्चधा क्रियते, ते च पञ्चापि भागा यथाक्रमं त्रयाणां वेदानामन्यतमस्मै वेदाय बध्यमानाय हास्यरतियुगलारतिशोकयुगलयोरन्यतरस्मै युगलाय भयजुगुप्साभ्यां च दीयन्ते, नान्येभ्यः,बन्धाभवात्, न हि नवापि नोकषाया युगपद् बन्धमायान्ति किन्तु यथोक्ताः पञ्चैव। तथा वेदनीयायुर्गोत्रेषु यो मूलभाग आभजति स एतेषामेव एकैकस्याः प्रकृतेर्बध्यमानाया ढौकते, द्विप्रभृतीनाममीषां युगपद्बन्धाभावात् ॥ २६ ॥

(उ०)—मोहे-मोहनीये स्थित्यनुसारेण यो मूलभाग आभजति तस्य सर्वघात्यर्होऽनन्ततमो भागो द्विधा क्रियते—तदर्धं दर्शनमोहनीयस्यार्धं च चारित्रमोहनीयस्यायेति। तत्र दर्शनमोहनीयसत्कं समग्रमप्यर्धं मिथ्यात्वमोहनीयस्य दीयते। चारित्रमोहनीयसत्कं त्वर्धं द्वादशधा कृत्वाऽऽद्यद्वादशकषायेभ्यो दीयते। ततः शेषदलिकं द्विधा कृत्वा बध्यमानानां कषायनोकषायप्रकृतीनां दीयते। तत्रैको भागः कषायमोहनीयस्य, एकश्च नोकषायमोहनीयस्य। तत्र कषायमोहनीयस्य भागः पुनश्चतुर्धा क्रियते, ते च चत्वारोऽपि भागाः संज्वलनक्रोधादिभ्यो दीयन्ते। नोकषायमोहनीयस्य तु भागः पञ्चधा क्रियते, ते च पञ्चापि भागा यथाक्रमं त्रयाणां वेदानामन्यतमस्मै वेदाय बध्यमानाय हास्यरत्यरतिशोकयोरन्यतरस्मै युगलाय भयजुगुप्साभ्यां च दीयते, नान्येभ्यः, बन्धाभावात्, नोकषायेषु मध्ये यथोक्तानामेव युगपद्बन्धसंभवात्। तथा वेदनीयायुर्गोत्रेषु यो मूलभाग आभजति स एषां स्वस्वैकप्रकृतेर्बध्यमानाया उपढौकते, द्व्याद्यानामेतत्प्रकृतीनां युगपदबन्धात् ॥ २६ ॥

**पिंडपगतीसु बज्झंतिगाण वन्नरसगंधफासाणं। सव्वासिं संघाए तणुम्मि य तिगे चउक्के वा ॥२७॥**

(चू०)—'पिंडपगतीसु वज्झंतिगाण'त्ति। पिण्डपगडीतो—नामपगडीतो,तासिं 'वज्झंतिगाण'त्ति—गतिजातिसरीरसंघायवंधणसंठाणअंगोवंगसंघयणवण्णगंधरसफासआणुपुव्विअगुरुलहुगं उवघातं(पराघायं) उस्सासं णिम्माणतित्थगरणामाणं विहायगतितसथावरबादरसुहुमपज्जत्तापज्जत्तगपत्तेयसाहारणाथिराथिरसुभासुभसुभगदुभगसुस्सरदुस्सराआदेज्जअणादिज्जजसकित्तिअजसकित्तीआयवुज्जोयाणं एक्कतरं एतेसिं वज्झमाणगाणं भागो भवति। एत्थ विसेसो भण्णइ—'वण्णगंधरसफासाणं सव्वासिं'ति—जं वण्णणामाए भागलद्धं तं पंचहा कीरइ पंचण्हं वण्णाणं। एवं गंधरसफासाण जस्स जत्तिता भेदा तस्स तत्तिया भागा कीरंति। 'संघाते तणुम्मि य तिगे चउगे व'त्ति—संघातणामाणं सरीरनामाणं च जं भागलद्धं दलितं तं तिहा कीरति चउद्धा वा कीरति। कहं? भण्णइ—तिण्णि वंधंतस्स तिण्णि भागा, चत्तारि वंधंतस्स चत्तारि भागा, उरालियतेजाकम्मतिगस्स वेउव्वियतेजाकम्मतिगस्स वा, जति चत्तारि वंधंति तो विउव्वियआहारगतेजाकम्मतिगस्स भवति॥ २७॥

(मलय०)—'पिंड'त्ति। पिण्डप्रकृतयो नामप्रकृतयः। यदाह चूर्णिकृत्—"पिंडपगईओ नामपगईओ"त्ति। तासु मध्ये वध्यमानानामन्यतमगतिजातिशरीरबन्धनसंघातनसंहननसंस्थानाङ्गोपाङ्गानुपूर्वीणां वर्णगन्धरसस्पर्शागुरुलघूपघातपराघातोच्छ्वासनिर्माणतीर्थकरानामातपोद्योतप्रशस्ताप्रशस्तविहायोगतित्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तप्रत्येकसाधारणस्थिरास्थिरशुभाशुभसुस्वरदुःस्वरसुभगदुर्भगादेयानादेययशःकीर्त्ययशःकीर्त्यन्यतराणां च मूलभागो विभज्य समर्पणीयः। अत्रैव विशेषमाह—'वण्ण' इत्यादि। वर्णगन्धरसस्पर्शानां प्रत्येकं यद्भागलब्धं दलिकमायाति तत्सर्वेभ्यस्तेषामवान्तरभेदेभ्यो विभज्य विभज्य दीयते। तथाहि—वर्णनाम्नो यद्भागलब्धं दलिकं

तत्पञ्चधा कृत्वा शुक्लादिभ्योऽवान्तरभेदेभ्यो विभज्य प्रदीयते । एवं गन्धरसस्पर्शानामपि यस्य यावन्तो भेदास्तस्य संबन्धिनो भागस्य ताति भागाः कृत्वा तावद्भ्योऽवान्तरभेदेभ्यो दातव्याः । तथा संघातने तनौ च प्रत्येकं यद्भागलब्धं दलिकमायाति तत्त्रिधा चतुर्धा वा कृत्वा त्रिभ्यश्चतुर्भ्यो वा दीयते। तत्रौदारिकतैजसकार्मणानि वैक्रियतैजसकार्मणानि वा त्रीणि शरीराणि संघातनानि वा युगपद्बध्नता त्रिधा क्रियते, वैक्रियाहारकतैजसकार्मणरूपाणि चत्वारि शरीराणि संघातनानि वा बध्नता चतुर्धा क्रियते ॥ २७ ॥

(उ०)—पिण्डप्रकृतयोऽजहत्स्वार्थलक्षणया नामप्रकृतयः। यदाह चूर्णिकृत्—"पिंडपगईओ णामपगईओ"त्ति। तासु मध्ये बध्यमानानामन्यतमगतिजातिशरीरबन्धनसङ्घातनसंहननसंस्थानाङ्गोपाङ्गानुपूर्वीणां वर्णगन्धरसस्पर्शागुरुलघुपराघातोपघातोच्छ्वासनिर्माणतीर्थकरनाम्नामातपोद्योतप्रशस्ताप्रशस्तविहायोगतित्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तप्रत्येकसाधारणस्थिरास्थिरशुभाशुभसुस्वरदुःस्वरसुभगदुर्भगादेयानादेययशःकीर्त्ययशःकीर्त्त्यन्यतराणां च मूलभागो विभज्य समर्पणीयः। विशेषश्चायं—यदुत वर्णगन्धरसस्पर्शानां प्रत्येकं यद्भागलब्धं दलिकमायाति तत्सर्वासां तदवान्तरप्रकृतीनां विभज्य विभज्य दीयते। यथा—वर्णनाम्नो भागलब्धं दलिकं पञ्चधा कृत्वा शुक्लादिभ्योऽवान्तरभेदेभ्यो देयम्। एवं गन्धरसस्पर्शानामपि यथाभेदं विभज्य विभज्य देयमिति। तथा सङ्घाते तनौ च प्रत्येकं यद्भागलब्धं दलिकं तत्त्रिधा चतुर्धा वा कृत्वा त्रिभ्यश्चतुर्भ्यो वा दीयते। तत्रौदारिकतैजसकार्मणानि वैक्रियतैजसकार्मणानि युगपत्त्रीणि शरीराणि सङ्घातनानि वा बध्नता त्रिधा क्रियते, वैक्रियाहारकतैजसकार्मणरूपाणि चत्वारि शरीराणि सङ्घातनानि वा बध्नता चतुर्धा क्रियते॥२७॥

**सत्तेक्कारविगप्पा बंधणणामाणं मूलपगईणं । उत्तरसगपगईण य अप्पबहुत्ता विसेसो सिं ॥२८॥**

(चू०)—बंधणणामाणं आगतं दलितं सत्त वा भागा एक्कारस वा भागा भवंति। तंजहा—उरालितणामा च-

त्तारि तेजाकम्मतिगेण तिण्णि एते सत्तभागा। अहवा वेउव्विएण चत्तारि तेजतिगकम्मतिगेण तिण्णि एवं वा मत्त। वेउव्विगेण चत्तारि आहारएण चत्तारि तेजतिगकम्मतिगेण तिण्णि एते एक्कारस। अवसेसाणं वज्झमाणिगाणं भागो भवति। इदाणिं एतेसिं दलिताणं कस्स केत्तियं दलियं ति तण्णिरूवणत्थं भण्णति–'मूलपगतीणं उत्तरसगपगतीण य अप्पबहुत्ता विसेसो सिं'ति।मूलपगतीणं अप्पबहुगं भण्णइ–अट्ठविह बंधगस्स आउयभागो थोवो, णामगोत्ताणं तुल्लो विसेसाहिगो, णाणावरणदंसणावरणअंतरातियाणं तिण्ह वि तुल्लो विसेसाहितो, मोहणिज्जस्स विसेसाहितो, वेदणिज्जस्स विसेसाहितो भागो। सुहदुक्खकारणत्ताओ वेदणिज्जस्स सव्वमहंतो भागो, सेसाणं कम्माणं ठितीविसेसेणं भागविसेसो।

इदाणिं अप्पप्पणोत्तरपगतीणं उक्कस्सपदेण जहण्णपदेण य अप्पाबहुगं भण्णति–तस्स उक्कस्सपदे सव्वत्थोवं केवलणाणावरणियस्स उक्कसगं पदेसग्गं,मणपज्जवणाणावरणस्स उक्कस्सगं पदेसग्गं अणंतगुणं,ओहिणाणावरणस्स उक्कस्सगं पदेसग्गं विसेसाहितं,सुतणाणावरणस्स उक्कस्सग्गं पदेसग्गं विसेसाहितं,आभिणिबोहियणाणावरणस्स उक्कस्सपदे पदेसग्गं विसेसाहितं। सव्वथोवं पयलाए उक्कस्सगं पदेसग्गं, णिद्दाए उक्कस्सगं पदेसग्गं विसेसाहियं, पयलापयलाए उक्कस्सगं विसेसाहियं, निद्दानिद्दाए उक्कस्सग्गं विसेसाहियं, थीणगिद्धीए उक्कस्सगं विसेसाहियं, केवलदंसणावरणियस्स उक्कस्सगं विसेसाहियं, ओहिदंसणावरणस्स उक्कस्सगं अणंतगुणं, अचक्खुदंसणावरणस्स उक्कस्सग्गं विसेसाहियं, चक्खुदंसणावरणियस्स उक्कस्सगं विसेसा-

हियं। सव्वथोवं असायस्स उक्कस्सपदेसग्गं, सातस्स उक्कस्सपदेसग्गं विसेसाहियं। सव्वत्थोवं अपच्चक्खाणमाणस्स उक्कस्सपदेसग्गं, कोहस्स उक्कोसगं पदेसग्गं विसेसाहियं, मायाए उक्कस्सगं पदेसग्गं विसेसाहियं, लोभस्स उक्कस्सगं पदेसग्गं विसेसाहियं। पच्चक्खाणावरणमाणस्स उक्कस्सपएसग्गं विसेसाहियं, कोहस्स उक्कसगं विसेसाहियं, मायाए उक्कसग्गं विसेसाहियं, लोभस्स उक्कस्सग्गं विसेसाहियं। अणंताणुबंधिमाणस्स उक्कसग्गं विसेसाहियं कोहस्स उक्कसग्गं विसेसाहियं, मायाए उक्कस्सग्गं विसेसाहियं, लोभस्स उक्कसग्गं विसेसाहियं। मिच्छत्तस्स उक्कसग्गं विसेसाहियं, दुगंछाए उक्कस्सगं अणंतगुणं, भयस्स उक्कसग्गं विसेसाहियं, हाससोगाणं दोण्ह वि तुल्लं उक्कसग्गं विसेसाहियं, रतिअरतीणं दोण्ह वि तुल्लं उक्कस्सग्गं विसेसाहियं, इत्थिवेदस्स णपुंसगवेदस्स दोण्ह वि उक्कस्सग्गं तुल्लं विसेसाहियं। कोहसंजलणाए उक्कस्सगं विसेसाहियं, माणसंजलणाए उक्कस्सगं विसेसाहियं, पुरिसवेयस्स उक्कस्सगं विसेसाहियं, मायासंजलणाए उक्कस्सगं विसेसाहियं, लोभसंजलणाए उक्कस्सग्गं संखेज्जगुणं। चउण्हं आउआणं उक्कस्सग्गं पदेसग्गं तुल्लं। निरयगतिदेवगतीणं दोण्हवि तुल्लं उक्कस्सगं पदेसग्गं सव्वत्थोवं, मणुयगतीए उक्कस्सगं विसेसाहियं, तिरितगतीए उक्कस्सगं विसेसाहियं। चउण्हं जातीणामाणं उक्कस्सग्गं पदेसग्गं तुल्लं सव्वत्थोवं, एगिंदियजातीए उक्कस्सगं विसेसाहियं। सव्वत्थोवं आहारसरीरस्स उक्कसग्गं पदेसग्गं, विउव्वितस्स उक्कस्सगं विसेसाहियं, उरालियस्स उक्कसग्गं विसेसाहियं, तेजतिगसरीरगस्स उक्कस्सग्गं विसेसाहियं कम्मइगस्स उक्कस्सगं विसे-

साहियं। (एवं संघायणनामस्स वि)। सव्वत्थोवं आहारगआहारगसरीरबंधणणामाए उक्कसगं पदेसग्गं, आ-
हारगतेजतिगसरीरबंधणणामाए उक्कस्सगं विसेसाहियं, आहारगकम्मतिगसरीरबंधणणामाए[3] उक्कस्सगं वि-
सेसाहियं, आहारगतेजकम्मतिगसरीरबंधणणामाए[4] उक्कस्सगं विसेसाहियं, विउव्वितविउव्वितसरीरबंधणणामाए
उक्कस्सगं विसेसाहियं, वेउव्वियतेजतिगसरीरबंधणणामाए[6] उक्कस्सगं विसेसाहियं, वेउव्वियकम्मतिगसरीर-[7]
बंधणणामाए उक्कस्सगं विसेसाहियं, वेउव्वियतेजकम्मतिगसरीरबंधणणामाए उक्कस्सगं विसेसाहियं, उरा
लियउरालियसरीरबंधणणामाए उक्कस्सगं विसेसाहियं, उरालियतेजतिगसरीरबंधणणामाए[10] उक्कस्सगं वि-
सेसाहियं, उरालियकम्मतिगसरीरबंधणणामाए[11] उक्कस्सगं विसेसाहियं, उरालियतेजकम्मतिगसरीरबंधणणा-[12]
माए उक्कस्सगं विसेसाहियं, तेजतिगतेजतिगसरीरबंधणणामाए[13] उक्कस्सगं विसेसाहियं, तेजतिगकम्मतिगस-[14]
रीरबंधणणामाए उक्कस्सगं विसेसाहियं, कम्मगकम्मगसरीरबंधणणामाए[15] उक्कस्सगं पदेसग्गं विसेसाहियं।
सव्वत्थोवं चतुण्हं संठाणाणं उक्कोसपदेसग्गं (सट्ठाणे तुल्लं), समचउरंससंठाणस्स उक्कस्सगं विसेसाहियं, हुं-
डसंठाणस्स उक्कस्सगं विसेसाहियं। सव्वत्थोवं आहारसरीरअंगोवंगस्स उक्कोसपदेसग्गं, वेउव्वितअंगोवंग-
स्स उक्कस्सगं विसेसाहियं, ओरालियअंगोवंगस्स उक्कस्सगं विसेसाहियं। सव्वथोवं पंचण्हं संघयणाणं उक्को-
सपदेसग्गं (सट्ठाणे तुल्लं), असंपत्तछेवट्टस्स उक्कस्सगं विसेसाहियं। सव्वत्थोवं किण्हणामाए उक्कोसपदेसग्गं,
णीलणामाए उक्कस्सगं विसेसाहियं, लोहितणामाए उक्कस्सगं विसेसाहियं, हालिद्दणामाए विसेसाहियं, सु-

किलणामाए विसेसाहियं । सव्वत्थोवं दुरभिगंधणामाए उक्कोसपदेसग्गं, सुरभिगंधणामाए विसेसाहियं । सव्वथोवं कडुतणामाए उक्कोसपदेसग्गं, तित्तणामाए विसेसाहियं, कसायणामाए विसेसाहियं, अंबिलणामाए विसेसाहियं, मधुरणामाए विसेसाहियं । सव्वथोवं कक्खडगगुरुणामाणं उक्कोसगपदेसग्गं, मउयलहुयणामाणं उक्कोसगं विसेसाहियं, सीयलुक्खाण विसेसाहियं, णिद्धउसिणणामाए विसेसाहियं । सव्वथोवं णिरयगति देवगतिपातोग्गाणुपुव्वीए उक्कोसपदेसग्गं, मणुयगतिपातोग्गाणुपुव्वीए विसेसाहियं, तिरिक्खगतिपातोग्गाणुपुव्वीए विसेसाहियं । सव्वथोवं तसणामाण उक्कस्सपदेसग्गं, थावरणामाए उक्कोसपदेसग्गं विसेसाहियं । सव्वत्थोवं पज्जत्तगणामाए उक्कोसपदेसग्गं, अपज्जत्तगणामाए उक्कोसगं विसेसाहियं । सव्वत्थोवं थिरसुभसुभगआदिज्जणामाणं उक्कोसगं पदेसग्गं, अथिरअसुभदुभगअणादिज्जणामाणं उक्कोसगं विसेसाहियं। सव्वत्थोवं अजसकित्तीए उक्कोसगं पदेसग्गं, जसकीत्तिए उक्कस्सग्गं असंखेज्जगुणं। सेसाणं उक्कोसं आतावुज्जोवपसत्थापसत्थविहायगतिसुहुमबादरपत्तेयसाहारणसूसरदूसराणं तुल्लं । निम्माणुस्सासपरघायउवघायागुरुलहुतीत्थयरनामाणं अप्पबहुगं नत्थित्ति । जओ एयं अप्पबहुगं सेसवण्णाविवक्खया किण्हवण्णनामस्स सजाइपगइअवेक्खं, सुभगदुभगाणं व वि सपडिवक्खपगअइवेक्खं चिंतिज्जइ । नय एया अन्नोन्नं सजाईआ, अभिन्नेगमूलपिंडपगइअभावाओ, नावि विरुद्धा, जुगवं बंधभावाओ, तो अनहिगया अत्थित्ति । सव्वत्थोवं नीयागोयस्स उक्कोसगं पदेसग्गं, उच्चागोयस्स उक्कोसगं विसेसाहियं। सव्वत्थोवं दाणंतरातियस्स उक्कोसगं, लाभंतराइयस्स उक्को-

स्सगं विसेसाहियं, भोगंतरातियस्स उक्कोसगं विसेसाहियं, उवभोगंतराततिस्स उक्कोसगं विसेसाहियं, वि-रियंतरातितस्स उक्कोसगं विसेसाहियं। उक्कोसं भणितं।

इयाणिं जहण्णं भण्णति–तत्थ सव्वत्थोवं केवलणाणावरणीयस्स जहण्णपदेसग्गं, मणपज्जवणाणावरणीयस्स जहण्णगं अणंतगुणं, ओहिणाणावरणीयस्स जहण्णगं विसेसाहियं, सुतणाणावरणीयस्स जहण्णगं विसेसाहियं, आभिणिबोहितणाणावरणीयस्स जहण्णगं विसेसाहियं। सव्वत्थोवं णिद्दाए जहण्णगं पदेसग्गं, पयलाए जहण्णगं विसेसाहियं, णिद्दाणिद्दाए जहण्णगं विसेसाहियं, पयलापयलाए जहण्णगं विसेसाहियं, थीणगिद्धीए जहण्णयं विसेसाहियं, केवलदंसणावरणीयस्स जहण्णयं विसेसाहियं, ओहिदंसणावरणीयस्स जहण्णगं अणंतगुणं, अचक्खुदंसणावरणीयस्स जहण्णयं विसेसाहियं, चक्खुदंसणावरणीयस्स जहण्णयं विसेसाहियं। सव्वत्थोवं अपच्चक्खाणावरणमाणस्स जहण्णपदेसग्गं, कोहस्स जहण्णयं विसेसाहियं, मायाए जहण्णयं विसेसाहियं, लोभस्स जहण्णयं विसेसाहियं, पच्चक्खाणावरणमाणस्स जहण्णयं विसेसाहियं, कोहस्स जहण्णयं विसेसाहियं, मायाए जहण्णयं विसेसाहियं, लोहस्स जहण्णयं विसेसाहियं, अणंताणुबंधिमाणस्स जहण्णं पदेसग्गं विसेसाहियं, अणंताणुबंधिकोहस्स जहण्णं पदेसग्गं विसेसाहियं, अणंताणुबंधिमायाए जहण्णं पदेसग्गं विसेसाहियं, अणंताणुबंधिलोहस्स जहण्णं पदेसग्गं विसेसाहियं, मिच्छत्तस्स जहण्णगं पदेसग्गं विसेसाहियं, दुगंछाए जहण्णगं अणंतगुणं, भयस्स जहण्णगं विसेसाहियं, हाससोगाणं जहण्णगं विसेसाहियं, रतिअरतीणं

प्रदेशबन्धे दलिकानामल्पबहुत्वम् ।

जहण्णगं विसेसाहियं, अण्णयरवेदस्स जहण्णगं विसेसाहियं, माणसंजलणाते जहण्णगं विसेसाहियं, कोहसंजलणाए जहण्णगं विसेसाहियं, मायासंजलणाए जहण्णगं विसेसाहियं, लोभसंजलणाते जहण्णयं विसेसाहियं। सव्वथोवं तिरियमणुयाउगाणं जहण्णं पदेसग्गं, देवणिरयाउगाणं जहण्णयं असंखेज्जगुणं। सव्वत्थोवं तिरिक्खगतीए जहण्णयं पदेसग्गं, मणुयगतीए जहण्णयं विसेसाहियं, देवगतीए जहण्णयं असंखेज्जगुणं, निरयगतीते जहण्णयं असंखेज्जगुणं। सव्वत्थोवं चतुण्हं जातिणामाणं जहण्णयं पदेसग्गं, एगेंदितजातिते जहण्णयं विसेसाहियं। सव्वथोवं उरालियसरीरणामस्स जहण्णयं पदेसग्गं, तेजतिगसरीरणामस्स जहण्णयं विसेसाहियं, कम्मतिगसरीरणामस्स जहण्णयं विसेसाहियं, तओ विउव्वियसरीरस्स जहण्णं पदेसग्गं असंखेज्जगुणं, आहारसरीरस्स जहण्णयं असंखेज्जगुणं। एवं संघायणणामाण वि वत्तव्वं। सव्वथोवं उरालियअंगोवंगस्स जहण्णयं पदेसग्गं, वेउव्वियअंगोवंगस्स जहण्णयं असंखेज्जगुणं, आहारगअंगोवंगस्स जहण्णयं असंखेज्जगुणं। चतुण्हं आणुपुव्वीणं जहा उक्कस्सगे तहा भाणियव्वं। सव्वत्थोवं तसबादरपज्जत्तगपत्तेयसरीरणामाणं जहण्णयं पदेसग्गं, थावरसुहुमअपज्जत्तगसाहारणसरीरणामाणं जहण्णयं विसेसाहियं। सेसाणं णत्थि अप्पाबहुगं। अंतरातितस्स जहा उक्कस्सते तहा भाणियव्वं। जहण्णगं सम्मत्तं अप्पाबहुगं। सातिअणातिपरूवणा, उक्कोसाणुक्कोसपदेसबंधसामी य जहा सतगे तहा भाणियव्वाणि। एवं पदेसबंधो भणितो ॥२८॥

(मलय०)—'सत्ते'ति–बन्धननाम्नां भागलब्धं यद्दलिकमायाति तस्य सप्त विकल्पाः सप्तभेदा एकादश वा विकल्पाः क्रियन्ते। तत्रौ-

दारिकौदारिक १ औदारिकतैजस २ औदारिककार्मण ३ औदारिकतैजसकार्मण ४ तैजसतैजस ५ तैजसकार्मण ६ कार्मणकार्मण ७ रूपाणि वैक्रियचतुष्कतैजसत्रिकरूपाणि वा सप्त बन्धनानि बध्नता सप्त। वैक्रियचतुष्काहारकचतुष्कतैजसत्रिकलक्षणान्येकादश बन्धनानि बध्नता एकादश। अवशेषाणां च प्रकृतिनां यद्भागलब्धं दलिकमायाति तन्न भूयो विभज्यते, तासां युगपदवान्तरद्वित्र्यादिभेदबन्धाभावात्। तेन तासां तदेव परिपूर्णं दलिकं भवति। इहैकाध्यवसायगृहीतस्य कर्मदलिकस्य परमाणवो विभागशः कृत्वा मूलप्रकृतिभ्य उत्तरप्रकृतिभ्यश्च दत्ताः, तत्र न ज्ञायते जघन्यपदे उत्कृष्टपदे वा कस्याः कियान् भागस्ततो विशेषपरिज्ञानार्थमाह—'मूलपगई' इत्यादि। आसां मूलप्रकृतीनामुत्तरप्रकृतीनां च परस्परं भागस्य विशेषोऽल्पबहुत्वात् शास्त्रान्तरोक्तात् द्रष्टव्यः। तत्र मूलप्रकृतीनामल्पबहुत्वं दर्श्यते—इह कर्मणां स्थित्यनुसारतो भाग आभजति, यस्य बृहती स्थितिस्तस्य बृहद्भागः, यस्य स्तोका तस्य स्तोक इति। तत्रायुषो भागः सर्वस्तोकः, सर्वेभ्योऽप्यन्येभ्यः स्तोकस्थितिकत्वात् तत्स्थितेरुत्कर्षतोऽपि त्रयस्त्रिंशत्सागरोपमप्रमाणत्वात्। ततो नामगोत्रयोर्भागो बृहत्तरः, तयोः स्थितेर्विंशतिसागरोपमकोटीकोटी प्रमाणत्वात्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यः, समानस्थितिकत्वात्। ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणां बृहत्तमः, तेषां स्थितेस्त्रिंशत्सागरोपमकोटीकोटीप्रमाणत्वात्, स्वस्थाने परस्परं तुल्य एव, तुल्यस्थितिकत्वात्। ततोऽपि मोहनीयस्य बृहत्तमः, तस्य स्थितेः सप्ततिसागरोपमकोटीकोटीप्रमाणत्वात्। वेदनीयं यद्यपि ज्ञानावरणीयादिभिः सह समस्थितिकम्, तथापि तस्य भागः सर्वोत्कृष्ट एव वेदितव्यः, अन्यथा स्पष्टतरस्वफलसुखदुःखोपदर्शकत्वानुपपत्तेः। इदानीं सर्वोत्तरप्रकृतीनामुत्कृष्टपदे जघन्यपदे चाल्पबहुत्वमभिधीयते—तत्रोत्कृष्टपदे सर्वस्तोकं केवलज्ञानावरणस्य प्रदेशाग्रम्, ततो मनःपर्यवज्ञानावरणीयस्यानन्तगुणम्, ततोऽवधिज्ञानावरणीयस्य विशेषाधिकम्, ततः श्रुतज्ञानावरणीयस्य विशेषाधिकम्, ततोऽपि

प्रदेशबन्धे दलिकानामल्पबहुत्वम् ।

मतिज्ञानावरणीयस्य विशेषाधिकम् । तथा दर्शनावरणीये उत्कृष्टपदे सर्वस्तोकं प्रचलायाः प्रदेशाग्रम्, ततो निद्राया विशेषाधिकम्, ततोऽपि प्रचलाप्रचलाया विशेषाधिकम्, ततोऽपि निद्रानिद्राया विशेषाधिकम्, ततः स्त्यानर्द्धेर्विशेषाधिकम्, ततः केवलदर्शनावरणीयस्य विशेषाधिकम्, ततोऽवधिदर्शनावरणीयस्यानन्तगुणम्, ततोऽचक्षुर्दर्शनावरणीयस्य विशेषाधिकम्, ततोऽपि चक्षुर्दर्शनावरणीयस्य विशेषाधिकम्। तथा सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमसातवेदनीयस्य, ततो विशेषाधिकं सातवेदनीयस्य । तथा मोहनीये सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमप्रत्याख्यानावरणमानस्य, ततोऽप्रत्याख्यानावरणक्रोधस्य विशेषाधिकम्, ततोऽप्रत्याख्यानावरणमायाया विशेषाधिकम्, ततोऽप्रत्याख्यानावरणलोभस्य विशेषाधिकम्, ततः प्रत्याख्यानावरणमानस्य विशेषाधिकम्, ततः प्रत्याख्यानावरणक्रोधस्य विशेषाधिकम्, ततः प्रत्याख्यानावरणमायाया विशेषाधिकम्, ततः प्रत्याख्यानावरणलोभस्य विशेषाधिकम्, ततोऽनन्तानुबन्धिमानस्य विशेषाधिकम्, ततोऽनन्तानुबन्धिक्रोधस्य विशेषाधिकम्, ततोऽनन्तानुबन्धिमायाया विशेषाधिकम्, ततोऽनन्तानुबन्धिलोभस्य विशेषाधिकम्, ततो मिथ्यात्वस्य विशेषाधिकम्, ततो जुगुप्साया अनन्तगुणम्, ततो भयस्य विशेषाधिकम्, ततो हास्यशोकयोर्विशेषाधिकम्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततो रत्यरत्योर्विशेषाधिकम्, तयोः पुनः स्वस्थाने तुल्यम्, ततः स्त्रीवेदनपुंसकवेदयोर्विशेषाधिकम्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततः संज्वलनक्रोधस्य विशेषाधिकम्, ततः संज्वलनमानस्य विशेषाधिकम्, ततः पुरुषवेदस्य विशेषाधिकम्, ततः संज्वलनमायाया विशेषाधिकम्, ततः संज्वलनलोभस्यासंख्येयगुणम् । तथा चतुर्णामप्यायुषामुत्कृष्टपदे प्रदेशाग्रं परस्परं तुल्यम् । नामकर्मणि उत्कृष्टपदे प्रदेशाग्रं गतौ देवगतिनरकगत्योः सर्वस्तोकम्, ततो मनुजगतौ विशेषाधिकम्, ततस्तिर्यग्गतौ विशेषाधिकम् । तथा जातौ चतुर्णां द्वीन्द्रियादिजातिनाम्नामुत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकम्, स्वस्थाने तु तेषां

परस्परं तुल्यम्, तत एकेन्द्रियजातेर्विशेषाधिकम्। तथा शरीरनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकशरीरस्य, ततो वैक्रियशरीरनाम्नो विशेषाधिकम्, तत औदारिकशरीरनाम्नो विशेषाधिकम्, ततस्तैजसशरीरनाम्नो विशेषाधिकम्, ततोऽपि कार्मणशरीरनाम्नो विशेषाधिकम्। एवं संघातननाम्न्यपि द्रष्टव्यम्। तथा बन्धननाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकाहारकबन्धननाम्नः, तत आहारकतैजसनाम्नो विशेषाधिकम्, तत आहारककार्मणबन्धननाम्नो विशेषाधिकम्, तत आहारकतैजसकार्मणबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियवैक्रियशरीरबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियतैजसबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियकार्मणबन्धननाम्नो विशेषाधिकम्, ततो वैक्रियतैजसकार्मणबन्धननाम्नो विशेषाधिकम्, तत औदारिकौदारिकबन्धननाम्नो विशेषाधिकम्, तत औदारिकतैजसबन्धननाम्नो विशेषाधिकम्, तत औदारिककार्मणबन्धननाम्नो विशेषाधिकम्, ततोऽप्यौदारिकतैजसकार्मणबन्धननाम्नो विशेषाधिकम्, ततस्तैजसतैजसबन्धननाम्नो विशेषाधिकम्, ततस्तैजसकार्मणबन्धननाम्नो विशेषाधिकम्, ततः कार्मणकार्मणबन्धननाम्नो विशेषाधिकम्। तथा संस्थाननाम्नि संस्थानानामाद्यन्तवर्जानां चतुर्णामुत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकम्, स्वस्थाने तु तेषां परस्पर तुल्यम्। ततः समचतुरस्रसंस्थानस्य विशेषाधिकम्। ततोऽपि हुण्डसंस्थानस्य विशेषाधिकम्। तथाङ्गोपाङ्गनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकाङ्गोपाङ्गनाम्नः ततो वैक्रियाङ्गोपांगनाम्नो विशेषाधिकम्, ततोऽप्यौदारिकाङ्गोपाङ्गनाम्नो विशेषाधिकम्। तथा संहनननाम्नि सर्वस्तोकमाद्यानां पञ्चानां संहननानामुत्कृष्टपदे प्रदेशाग्रम्, स्वस्थाने तु तेषां परस्परं तुल्यम्, ततः सेवार्तसंहननस्य विशेषाधिकम्। तथा वर्णनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं कृष्णवर्णनाम्नः, ततो नीलवर्णनाम्नो विशेषाधिकम्, ततो लोहितवर्णनाम्नो विशेषाधिकम्, ततो हारिद्रवर्णनाम्नो विशेषाधिकम्, ततोऽपि शुक्लवर्णनाम्नो विशेषाधिकम्। तथा गन्धनाम्नि

सर्वस्तोकं सुरभिगन्धनाम्नः, ततो विशेषाधिकं दुरभिगन्धनाम्नः । तथा रसनाम्नि सर्वस्तोकं कटुरसनाम्नः, ततस्तिक्तरसनाम्नो विशेषाधिकम्, ततः कषायरसनाम्नो विशेषाधिकम्, ततः अम्लरसनाम्नो विशेषाधिकम्, ततोऽपि मधुररसनाम्नो विशेषाधिकम् । तथा स्पर्शनाम्नि सर्वस्तोकमुत्कृष्टपदे कर्कशगुरुस्पर्शनाम्नोः प्रदेशाग्रम्, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततो मृदुलघुस्पर्शनाम्नोर्विशेषाधिकम्, स्वस्थाने तु तयोः द्वयोरपि परस्परं तुल्यम्, ततो रूक्षशीतस्पर्शनाम्नोर्विशेषाधिकम्, स्वस्थाने तु तयोर्द्वयोरपि परस्परं तुल्यम्, ततः स्निग्धोष्णस्पर्शनाम्नोर्विशेषाधिकम्, स्वस्थाने तु तयोरपि द्वयोः परस्परं तुल्यम् । तथानुपूर्वीनाम्नि सर्वस्तोकं प्रदेशाग्रं देवगतिनरकगत्यानुपूर्व्योः, स्वस्थाने तु द्वयोरपि परस्परं तुल्यम्, ततो मनुजगत्यानुपूर्व्या विशेषाधिकम्, ततस्तिर्यगानुपूर्व्या विशेषाधिकम् । तथा सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं त्रसनाम्नः, ततो विशेषाधिकं स्थावरनाम्नः । तथा सर्वस्तोकं प्रदेशाग्रं पर्याप्तनाम्नः, ततो विशेषाधिकमपर्याप्तनाम्नः, एवं स्थिरास्थिरयोः, शुभाशुभयोः, सुभगदुर्भगयोः, आदेयानादेययोः, सूक्ष्मबादरयोः, प्रत्येकसाधारणयोर्वाच्यम्, तथा सर्वस्तोकमयशःकीर्तिनाम्नः प्रदेशाग्रम्, ततो यशःकीर्तिनाम्नः संख्येयगुणम् । शेषाणामातपोद्योतप्रशस्ताप्रशस्तविहायोगतिसुस्वरदुःस्वराणां परस्परं तुल्यमुत्कृष्टपदे प्रदेशाग्रम्। निर्माणोच्छ्वासपराघातोपघातागुरुलघुतीर्थकराणां त्वल्पबहुत्वं नास्ति, यत इदमल्पबहुत्वं सजातीयप्रकृत्यपेक्षया, यथा कृष्णादिवर्णनाम्नः शेषवर्णापेक्षम्, प्रतिपक्षप्रकृत्यपेक्षया वा यथा सुभगदुर्भगयोः, न चैताः परस्परं सजातीयाः, अभिन्नैकमूलपिण्डप्रकृत्यभावात्, नापि विरुद्धा युगपदपि बन्धसम्भवात्। तथा गोत्रे सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं नीचैर्गोत्रस्य, ततो विशेषाधिकमुच्चैर्गोत्रस्य । तथाऽन्तराये सर्वस्तोकं दानान्तरायस्य, ततो लाभान्तरायस्य विशेषाधिकम्, ततो भोगान्तरायस्य विशेषाधिकम्, तत उपभोगान्तरायस्य विशेषाधिकम्, ततो वीर्यान्तरायस्य विशेषाधिकम्।

तदेवमुक्तमुत्तरप्रकृतीनामुत्कृष्टपदे प्रदेशाग्राल्पबहुत्वम्, सम्प्रति जघन्यपदे तदभिधीयते—तत्र सर्वस्तोकं जघन्यपदे प्रदेशाग्रं केवलज्ञानावरणीयस्य, ततो मनःपर्यवज्ञानावरणीयस्यानन्तगुणम्, ततोऽवधिज्ञानावरणीयस्य विशेषाधिकम्, ततः श्रुतज्ञानावरणीयस्य विशेषाधिकम्, ततोऽपि मतिज्ञानावरणीयस्य विशेषाधिकम् । तथा दर्शनावरणीये सर्वस्तोकं जघन्यपदे प्रदेशाग्रं निद्रायाः, ततः प्रचलाया विशेषाधिकम्, ततो निद्रानिद्राया विशेषाधिकम्, ततः प्रचलाप्रचलाया विशेषाधिकम्, ततः स्त्यानर्द्धेर्विशेषाधिकम्, ततः केवलदर्शनावरणस्य विशेषाधिकम्, ततोऽवधिदर्शनावरणस्यानन्तगुणम्, ततोऽचक्षुर्दर्शनावरणस्य विशेषाधिकम्, ततोऽपि चक्षुर्दर्शनावरणीयस्य विशेषाधिकम् । तथा मोहनीये सर्वस्तोकं जघन्यपदे प्रदेशाग्रमप्रत्याख्यानावरणमानस्य, ततोऽप्रत्याख्यानावरणस्य क्रोधस्य विशेषाधिकम्, ततोऽप्रत्याख्यानावरणमायाया विशेषाधिकम्, ततोऽप्रत्याख्यानावरणलोभस्य विशेषाधिकम्, तत एवमेव प्रत्याख्यानावरणमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकम्, एवमेवानन्तानुबन्धिमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकं वक्तव्यम्, ततो मिथ्यात्वस्य विशेषाधिकम्, ततो जुगुप्साया अनन्तगुणम्, ततो भयस्य विशेषाधिकम्, ततो हास्यशोकयोर्विशेषाधिकम्, स्वस्थाने तु तयोः परस्परं तुल्यम्, ततो रत्यरत्योर्विशेषाधिकम्, स्वस्थाने तु तयोरपि परस्परं तुल्यम्, ततोऽन्यतमवेदस्य विशेषाधिकम्, ततः संज्वलनमानक्रोधमायालोभानां यथोत्तरं विशेषाधिकम्। तथायुषि सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्मनुष्यायुषोः, स्वस्थाने परस्परं तुल्यम्, ततो देवनारकायुषोरसंख्येयगुणम्, स्वस्थाने परस्परं तुल्यम् । तथा नाम्नि गतौ सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्गतेः, ततो विशेषाधिकं मनुजगतेः, ततो देवगतेरसंख्येयगुणम्, ततो निरयगतेरसंख्येयगुणम्। तथा जातौ सर्वस्तोकं चतुर्णां द्वीन्द्रियादिजातिनाम्नाम्, तत एकेन्द्रियजातेर्विशेषाधिकम् । तथा शरीरनाम्नि सर्वस्तोकमौदारिकशरीरनाम्नः, ततस्तैजसशरीरनाम्नो विशेषाधिकम्, ततः कार्मणशरीरनाम्नो विशे-

पाधिकम्, ततो वैक्रियशरीरनाम्नोऽसंख्येयगुणं, ततोऽप्याहारकशरीरनाम्नोऽसंख्येयगुणम्। एवं संघातननाम्नोऽपि वाच्यम्। अङ्गोपाङ्गनाम्नि सर्वस्तोकं जघन्यपदे प्रदेशाग्रमौदारिकाङ्गोपाङ्गनाम्नः, ततो वैक्रियाङ्गोपाङ्गनाम्नोऽसंख्येयगुणम्, ततोऽप्याहारकाङ्गोपाङ्गनाम्नोऽसंख्येयगुणम्। तथा सर्वस्तोकं जघन्यपदे नरकगतिदेवगत्यानुपूर्व्योः प्रदेशाग्रम्, ततो मनुजगत्यानुपूर्व्या विशेषाधिकम्, ततोऽपि तिर्यग्गत्यानुपूर्व्या विशेषाधिकम्। तथा सर्वस्तोकं त्रसनाम्नः, ततो विशेषाधिकं स्थावरनाम्नः। एवं बादरसूक्ष्मयोः, पर्याप्तापर्याप्तयोः, प्रत्येकसाधारणयोश्च। शेषाणां तु नामप्रकृतीनामल्पबहुत्वं न विद्यते, तथा सातासातवेदनीययोरुच्चैर्गोत्रनीचैर्गोत्रयोरपि। अन्तराये पुनर्यथोत्कृष्टपदे तथैवावगन्तव्यम्। इह यदा जन्तुरुत्कृष्टे योगस्थाने वर्तते, यदा च मूलप्रकृतीनामुत्तरप्रकृतीनां च स्तोकतराणां बन्धकः, तथा यदा संक्रमकाले प्रकृत्यन्तरदलिकानामुत्कृष्टः प्रदेशसंक्रमो भवति, तदोत्कृष्टप्रदेशाग्रसंभवः। तथाहि—उत्कृष्टे योगे वर्तमानो जीव उत्कृष्टं प्रदेशग्रहणं करोति, तथा स्तोकतराणां मूलप्रकृतीनामुत्तरप्रकृतीनां च यदा बन्धकस्तदा शेषाबध्यमानप्रकृतिलभ्योऽपि भागस्तासां बध्यमानानामाभजति। तथा प्रकृत्यन्तरदलिकानामुत्कृष्टप्रदेशसंक्रमकाले विवक्षितासु प्रकृतिषु बध्यमानासु प्रभूता कर्मपुद्गलाः प्रविशन्ति। तत एतेषु कारणेषु सत्सूत्कृष्टप्रदेशाग्रसंभवो भवति, विपर्यासे तु जघन्यप्रदेशाग्रसंभवः॥ २८॥

(उ०)—बन्धननाम्नां भागलब्धं यद्दलिकं तस्य सप्त विकल्पाः—सप्त भागा एकादश वा क्रियन्ते। तत्रौदारिकौदारिक १ औदारिकतैजस २ औदारिककार्मण ३ औदारिकतैजसकार्मण ४ तैजसतैजस ५ तैजसकार्मण ६ कार्मणकार्मण ७ रूपाणि वैक्रियचतुष्कतैजसत्रिकरूपाणि वा सप्त बन्धनानि बध्नता सप्त भागाः क्रियन्ते। वैक्रियचतुष्काहारकचतुष्कतैजसत्रिकलक्षणान्येकादश बन्धनानि बध्नता चैकादश। शेषाणां च प्रकृतीनां युगपद्बान्तरद्वित्र्यादिभेदबन्धाभावान्न भागदलिकं विभागमापद्यते किं तु परिपूर्णमेवायाति। इहैकाध्य-

त्मायगृहीतस्य कर्मदलिकस्य परमाणवो विभज्य मूलप्रकृतिभ्य उत्तरप्रकृतिभ्यश्च दत्ताः, तत्र जघन्यत उत्कर्षतो वा कस्याः प्रकृतेः कियान् भाग इति विशेषजिज्ञासायामाह—आसां मूलप्रकृतीनामुत्तरस्वप्रकृतीनां च परस्परं भागस्य विशेषोऽल्पबहुत्वाच्छास्त्रान्तरोक्तादवसेयः। तत्र मूलप्रकृतीनामिदमल्पबहुत्वम्। कर्मणां हि स्थित्यनुसारतो भाग आभजति, यस्य महती स्थितिस्तस्य महान् भागोऽल्पस्य स्तोका तस्य स्तोक इति। तत्र आयुषो भागः सर्वस्तोकः, तस्योत्कर्षतोऽपि त्रयस्त्रिंशत्सागरोपमप्रमाणत्वेनान्येभ्यः स्तोकस्थितिकत्वात्। ततो नामगोत्रयोर्भागो बृहत्तरः, तयोः स्थितेर्विंशतिसागरोपमकोटाकोटिप्रमाणत्वात्, स्वस्थाने तु मिथस्तुल्यः, तुल्यस्थितिकत्वात्। ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणां बृहत्तमः, तेषां स्थितेस्त्रिंशत्सागरोपमकोटाकोटिप्रमाणत्वात्, स्वस्थाने तु परस्परं तुल्य एव, तुल्यस्थितिकत्वात्। ततोऽपि मोहनीयस्य बृहत्तमः, तस्य स्थितेः सप्ततिसागरोपमकोटाकोटीप्रमाणत्वात्। वेदनीयस्य तु ज्ञानावरणादिभिः समानस्थितिकस्यापि सर्वेभ्य उत्कृष्ट एव भागोऽन्यथा स्पष्टतरस्वफलसुखदुःखोपदर्शकत्वानुपपत्तेः। उक्तं मूलप्रकृतीनामल्पबहुत्वम्। अथ स्वस्वोत्तरप्रकृतीनां जघन्यत उत्कर्षतश्च तदभिधीयते—तत्रोत्कृष्टपदे सर्वस्तोकं केवलज्ञानावरणस्य प्रदेशाग्रं, ततो मनःपर्यायज्ञानावरणस्यानन्तगुणं, ततोऽवधिज्ञानावरणस्य विशेषाधिकं, ततः श्रुतज्ञानावरणस्य विशेषाधिकं, ततो मतिज्ञानावरणस्य विशेषाधिकम्। तथा दर्शनावरणीये उत्कृष्टपदे सर्वस्तोकं प्रचलायाः प्रदेशाग्रं, ततो निद्राया विशेषाधिकं, ततोऽपि प्रचलाप्रचलाया विशेषाधिकं, ततोऽपि निद्रानिद्राया विशेषाधिकं, ततः स्त्यानर्द्धेर्विशेषाधिकं, ततः केवलदर्शनावरणस्य विशेषाधिकं, ततोऽवधिदर्शनावरणस्यानन्तगुणं, ततोऽचक्षुर्दर्शनावरणस्य विशेषाधिकं, ततोऽपि चक्षुर्दर्शनावरणस्य विशेषाधिकम्। तथा सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमसातवेदनीयस्य, ततो विशेषाधिकं सातवेदनीयस्य। तथा मोहे सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमप्रत्याख्यानावरणमानस्य, ततोऽप्रत्याख्यानावरणक्रोधस्य विशेषाधिकं, ततोऽप्र-

त्याख्यानावरणमायायाः, ततोऽप्रत्याख्यानावरणलोभस्य, ततः प्रत्याख्यानावरणमानस्य, ततः प्रत्याख्यानावरणक्रोधस्य, ततः प्रत्याख्यानावरणमायायाः, ततः प्रत्याख्यानावरणलोभस्य, ततोऽनन्तानुबन्धिमानस्य, ततोऽनन्तानुबन्धिक्रोधस्य, ततोऽनन्तानुबन्धिमायायाः, ततोऽनन्तानुबन्धिलोभस्य, ततश्च मिथ्यात्वस्य विशेषाधिकं, ततो जुगुप्साया अनन्तगुणं, ततो भयस्य विशेषाधिकं, ततो हास्यशोकयोर्विशेषाधिकं, स्वस्थाने तु द्वयोरपि परस्परं तुल्यं, ततो रत्यरत्योर्विशेषाधिकं,स्वस्थाने तु तयोस्तुल्यं, ततः स्त्रीवेदनपुंसकवेदयोर्विशेषाधिकं, स्वस्थाने तु द्वयोस्तुल्यं, ततः संज्वलनक्रोधस्य विशेषाधिकं, ततः संज्वलनमानस्य, ततः पुरुषवेदस्य, ततः संज्वलनमायाया विशेषाधिकं, ततः संज्वलनलोभस्यासङ्ख्येयगुणम् । तथा चतुर्णामप्यायुषामुत्कृष्टं प्रदेशाग्रं परस्परं तुल्यम् । नामकर्मण्युत्कृष्टपदे प्रदेशाग्रं गतौ देवगतिनरकगत्योः सर्वस्तोकं, ततो मनुजगतौ विशेषाधिकं, ततस्तिर्यग्गतौ विशेषाधिकम् । तथा जातौ चतसृणां द्वीन्द्रियादिजातीनामुत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकं, स्वस्थाने तु तासां परस्परं तुल्यं, तत एकेन्द्रियजातेर्विशेषाधिकं । तथा शरीरनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकस्य, ततो वैक्रियस्य विशेषाधिकं, तत औदारिकस्य, ततस्तैजसस्य, ततोऽपि कार्मणनाम्नो विशेषाधिकम् । एवं संघातनाम्न्यपि द्रष्टव्यम् । तथा बन्धननाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकाहारकबन्धननाम्नः,तत आहारकतैजसबन्धनस्य विशेषाधिकं, ततोऽप्याहारककार्मणबन्धनस्य, तत आहारकतैजसकार्मणबन्धनस्य, ततो वैक्रियवैक्रियशरीरबन्धनस्य, ततो वैक्रियतैजसबन्धनस्य, ततो वैक्रियकार्मणबन्धनस्य, ततो वैक्रियतैजसकार्मणबन्धनस्य, तत औदारिकौदारिकबन्धननाम्नः, तत औदारिकतैजसबन्धनस्य, तत औदारिककार्मणबन्धनस्य, ततोऽप्यौदारिकतैजसकार्मणबन्धनस्य, ततस्तैजसतैजसबन्धनस्य, ततस्तैजसकार्मणबन्धनस्य, ततः कार्मणकार्मणबन्धनस्य विशेषाधिकम् । तथा संस्थाननाम्नि संस्थानानां मध्यमानां चतुर्णामुत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकं, स्वस्थाने तु तेषां

परस्परं तुल्यं, ततः समचतुरस्रस्य विशेषाधिकं, ततोपि हुण्डस्य विशेषाधिकम् । तथाङ्गोपाङ्गनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रमाहारकाङ्गोपाङ्गनाम्नः, ततो वैक्रियाङ्गोपाङ्गनाम्नो विशेषाधिकं, ततोऽप्यौदारिकाङ्गोपाङ्गनाम्नो विशेषाधिकम् । तथा संहनननाम्नि सर्वस्तोकमाद्यानां पञ्चानां संहननानामुत्कृष्टपदे प्रदेशाग्रं, स्वस्थाने तु तेषां परस्परं तुल्यं, ततः सेवार्त्तसंहननस्य विशेषाधिकम्। तथा वर्णनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं कृष्णवर्णनाम्नः, ततो नीलवर्णनाम्नो विशेषाधिकं, ततो लोहितवर्णनाम्नः, ततो हारिद्रवर्णनाम्नः, ततश्च श्वेतवर्णनाम्नो विशेषाधिकं । तथा गन्धनाम्नि सर्वस्तोकं सुरभिगन्धनाम्नः, ततो दुरभिगन्धनाम्नो विशेषाधिकम्। तथा रसनाम्नि सर्वस्तोकं कटुरसनाम्नः, ततस्तिक्तरसनाम्नो विशेषाधिकं,ततः कषायरसनाम्नः,ततोऽम्लरसनाम्नः, ततश्च मधुररसनाम्नो विशेषाधिकम् । तथा स्पर्शनाम्नि सर्वस्तोकं उत्कृष्टपदे कर्कशगुरुस्पर्शनाम्नोः प्रदेशाग्रं, स्वस्थाने तु मिथो द्वयोरपि तुल्यं, ततो मृदुलघुस्पर्शनाम्नोर्विशेषाधिकं, स्वस्थाने तु मिथो द्वयोरपि तुल्यं, ततो रूक्षशीतस्पर्शनाम्नोर्विशेषाधिकं, स्वस्थाने तु मिथो द्वयोरपि तुल्यं, ततः स्निग्धोष्णस्पर्शनाम्नोर्विशेषाधिकं, स्वस्थाने तु मिथो द्वयोरपि तुल्यम्। तथाऽऽनुपूर्वीनाम्नि सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं देवगतिनरकगत्यानुपूर्व्योः, स्वस्थाने तु मिथो द्वयोरपि तुल्यं, ततो मनुजगत्यानुपूर्व्या विशेषाधिकं, ततस्तिर्यगानुपूर्व्या विशेषाधिकम् । तथा सर्वस्तोकमुत्कृष्टपदे प्रदेशाग्रं त्रसनाम्नः, ततो विशेषाधिकं स्थावरनाम्नः । तथा सर्वस्तोकं प्रदेशाग्रं पर्याप्तनाम्नः, ततो विशेषाधिकमपर्याप्तनाम्नः । एवं स्थिरास्थिरयोः, शुभाशुभयोः,सुभगदुर्भगयोः,आदेयानादेययोः,सूक्ष्मबादरयोः,प्रत्येकसाधारणयोर्वाच्यम्। तथा सर्वस्तोकमयशःकीर्त्तिनाम्नः प्रदेशाग्रमुत्कृष्टपदे,ततो यशःकीर्त्तिनाम्नः संख्येयगुणम्। शेषाणामातपोद्योतप्रशस्ताप्रशस्तविहायोगतिसुस्वरदुःस्वराणां परस्परं तुल्यमुत्कृष्टपदे प्रदेशाग्रम् । निर्माणोच्छ्वासपराघातोपघातागुरुलघुतीर्थकरनामप्रकृतीनां त्वल्पबहुत्वं नास्ति । यत इदमल्पबहुत्वं

शेषवर्णापेक्षया कृष्णवर्णनाम्न इव सजातीयप्रकृत्यपेक्षं चिन्त्यते, न चैताः परस्परं सजातीयाः, अभिन्नैकमूलपिण्डप्रकृत्यभावात्, नापि विरुद्धाः, युगपदपि बन्धभावात्, ततोऽत्रानधिकृता इति। तथोत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकं नीचैर्गोत्रस्य, ततो विशेषाधिकमुच्चैर्गोत्रस्य। तथाऽन्तराये सर्वस्तोकं दानान्तरायस्य, ततो लाभान्तरायस्य विशेषाधिकं, ततो भोगान्तरायस्य, तत उपभोगान्तरायस्य, ततश्च वीर्यान्तरायस्य विशेषाधिकम्। उक्तमुत्तरप्रकृतीनामुत्कृष्टप्रदेशाग्राल्पबहुत्वम्। अथ जघन्यपदे तदभिधीयते—तत्र ज्ञानावरणदर्शनावरणप्रकृतीनां यथोत्कृष्टपदे तथैवावगन्तव्यम्। मोहनीये सर्वस्तोकं जघन्यपदे प्रदेशाग्रमप्रत्याख्यानमानस्य, ततोऽप्रत्याख्यानक्रोधस्य विशेषाधिकं, ततोऽप्रत्याख्यानमायाया विशेषाधिकं, ततोऽप्यप्रत्याख्यानलोभस्य विशेषाधिकं, ततः प्रत्याख्यानावरणानन्तानुबन्धिमानक्रोधमायालोभानां यथोत्तरमुक्तरीत्यैव विशेषाधिकं वाच्यं, ततो मिथ्यात्वस्य विशेषाधिकं, ततो जुगुप्साया अनन्तगुणं, ततो भयस्य विशेषाधिकं, ततो हास्यशोकयोर्विशेषाधिकं, स्वस्थाने तु मिथो द्वयोस्तुल्यं, ततो रत्यरत्योर्विशेषाधिकं, स्वस्थाने तु तयोः परस्परं तुल्यं, ततोऽन्यतमवेदस्य विशेषाधिकं,ततः संज्वलनानां चतुर्णां यथोत्तरं विशेषाधिकम्। तथाऽऽयुषि सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यङ्मनुष्यायुषोः, ततो देवनारकायुषोरसङ्ख्येयगुणम्। तथा नाम्नि गतौ सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्गतेः, ततो विशेषाधिकं मनुजगतेः, ततो देवगतेरसङ्ख्येयगुणं ततो निरयगतेरसंख्येयगुणम्। तथा जातौ सर्वस्तोकं चतुर्णां द्वीन्द्रियादिजातिनाम्नां, तत एकेन्द्रियजातेर्विशेषाधिकम्। तथा शरीरनाम्नि सर्वस्तोकमौदारिकशरीरनाम्नः प्रदेशाग्रं, ततस्तैजसस्य विशेषाधिकं, ततः कार्मणस्य विशेषाधिकं, ततो वैक्रियशरीरनाम्नोऽसङ्ख्येयगुणं,ततोऽप्याहारकशरीरनाम्नोऽसंख्येयगुणम्। एवं सङ्घातनाम्न्यपि वाच्यम्। अङ्गोपाङ्गनाम्नि सर्वस्तोकं जघन्यपदे प्रदेशाग्रमौदारिकाङ्गोपाङ्गनाम्नः,ततो वैक्रियाङ्गोपाङ्गनाम्नोऽसंख्येयगुणं,ततोऽप्याहारकाङ्गोपाङ्गनाम्नोऽसंख्येयगुणम्। तथा सर्व-

स्तोकं जघन्यपदे देवनरकानुपूर्व्योः प्रदेशाग्रं, ततो मनुजानुपूर्व्या विशेषाधिकं, ततोऽपि तिर्यगानुपूर्व्या विशेषाधिकम्। तथा सर्वस्तोकं त्रसनाम्नः, ततो विशेषाधिकं स्थावरनाम्नः। एवं बादरसूक्ष्मयोः, पर्याप्तापर्याप्तयोः,प्रत्येकसाधारणयोश्च ज्ञेयम्। शेषाणां तु नामप्रकृतीनां नास्त्यल्पबहुत्वम् ,तथा सातासातवेदनीययोरुच्चैर्गोत्रनीचैर्गोत्रयोरपि। अन्तराये तु यथोत्कृष्टपदे तथैवावगन्तव्यम्। इह यदा जन्तुरुत्कृष्टयोगस्थानवर्ती, यदा च मूलप्रकृतीनामुत्तरप्रकृतीनां च स्तोकतराणां बन्धकः, तथा यदा प्रकृत्यन्तरदलिकानामुत्कृष्टप्रदेशसंक्रमः, तदोत्कृष्टप्रदेशाग्रसंभवः, उत्कृष्टयोगे वर्त्तमानत्वे उत्कृष्टप्रदेशग्रहणसंभवात्, स्तोकतरप्रकृतिबन्धकत्वे शेषाबध्यमानप्रकृतिलभ्यस्यापि भागस्य बध्यमानप्रकृतिष्वेवाभजनात्, प्रकृत्यन्तरदलिकानामुत्कृष्टप्रदेशसंक्रमकाले च विवक्षितासु बध्यमानासु प्रकृतिषु प्रभूतानां कर्मपुद्गलानां प्रवेशात्, एतद्विपर्यासे तु जघन्यप्रदेशाग्रसंभव इति ज्ञेयम्। नन्वयं प्रतिसमयं बध्यमानानां प्रतिसमयं विभागविधिरुक्तः, यदा तु तत्तद्गुणस्थाने तत्तद्बन्धोच्छेदः स्यात् तदा तद्भागद्रव्यं कस्या भागे समायातीति चेद्, उच्यते—तद्भागलभ्यं द्रव्यं यावदेकापि तत्सजातीयप्रकृतिर्बध्यते तावत्तस्या एव विभज्य देयम्। यदा तु तत्सजातीयसर्वप्रकृतिबन्धोच्छेदो यस्या वा मिथ्यात्वप्रकृतेः सजातीया नापरा प्रकृतिरस्ति तदा तद्भागलभ्यं द्रव्यं सर्वं मूलप्रकृत्यन्तर्गतानां विजातीयप्रकृतीनां विभज्य दीयते, तासामप्युच्छेदे तद्दलिकमन्यस्या एव मूलप्रकृतेः संपद्यते, एवं तावज्ज्ञेयं यावत्सूक्ष्मसंपराये गृहीतं दलिकं षड्भागीभवति, तदूर्ध्वं तु सर्वदलिकं सातस्योपतिष्ठत इति।

अथ च साद्यादिप्ररूपणा स्वाम्यादिप्ररूपणा च कर्त्तव्या। तत्र मोहायुर्वर्जानां षण्णां मूलप्रकृतीनामनुत्कृष्टः प्रदेशबन्धः साद्यादितया चतुर्विधः। तथाहि—एतेषां षण्णां कर्मणां सूक्ष्मसंपरायस्थस्योत्कृष्टयोगे वर्त्तमानस्यैकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धो भवति। ततोऽसौ सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्टः। स चोत्कृष्टात् प्रदेशबन्धात् पततो बन्धव्यवच्छेदं कृत्वा वा पततो मन्दयोगस्थान-

शेषवर्णापेक्षया कृष्णवर्णनाम्न इव सजातीयप्रकृत्यपेक्षं चिन्त्यते, न चैताः परस्परं सजातीयाः, अभिन्नैकमूलपिण्डप्रकृत्यभावात्, नापि विरुद्धाः, युगपदपि बन्धभावात्, ततोऽत्रानधिकृता इति। तथोत्कृष्टपदे प्रदेशाग्रं सर्वस्तोकं नीचैर्गोत्रस्य, ततो विशेषाधिकमुच्चैर्गोत्रस्य। तथाऽन्तराये सर्वस्तोकं दानान्तरायस्य, ततो लाभान्तरायस्य विशेषाधिकं, ततो भोगान्तरायस्य, तत उपभोगान्तरायस्य, ततश्च वीर्यान्तरायस्य विशेषाधिकम्। उक्तमुत्तरप्रकृतीनामुत्कृष्टप्रदेशाग्राल्पबहुत्वम्। अथ जघन्यपदे तदभिधीयते—तत्र ज्ञानावरणदर्शनावरणप्रकृतीनां यथोत्कृष्टपदे तथैवावगन्तव्यम्। मोहनीये सर्वस्तोकं जघन्यपदे प्रदेशाग्रमप्रत्याख्यानमानस्य, ततोऽप्रत्याख्यानक्रोधस्य विशेषाधिकं, ततोऽप्रत्याख्यानमायाया विशेषाधिकं, ततोऽप्यप्रत्याख्यानलोभस्य विशेषाधिकं, ततः प्रत्याख्यानावरणानन्तानुबन्धिमानक्रोधमायालोभानां यथोत्तरमुक्तरीत्यैव विशेषाधिकं वाच्यं, ततो मिथ्यात्वस्य विशेषाधिकं, ततो जुगुप्साया अनन्तगुणं, ततो भयस्य विशेषाधिकं, ततो हास्यशोकयोर्विशेषाधिकं, स्वस्थाने तु मिथो द्वयोस्तुल्यं, ततो रत्यरत्योर्विशेषाधिकं, स्वस्थाने तु तयोः परस्परं तुल्यं, ततोऽन्यतमवेदस्य विशेषाधिकं, ततः संज्वलनानां चतुर्णां यथोत्तरं विशेषाधिकम्। तथाऽऽयुषि सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यङ्मनुष्यायुषोः, ततो देवनारकायुषोरसङ्ख्येयगुणम्। तथा नाम्नि गतौ सर्वस्तोकं जघन्यपदे प्रदेशाग्रं तिर्यग्गतेः, ततो विशेषाधिकं मनुजगतेः, ततो देवगतेरसङ्ख्येयगुणं ततो निरयगतेरसंख्येयगुणम्। तथा जातौ सर्वस्तोकं चतुर्णां द्वीन्द्रियादिजातिनाम्नां, तत एकेन्द्रियजातेर्विशेषाधिकम्। तथा शरीरनाम्नि सर्वस्तोकमौदारिकशरीरनाम्नः प्रदेशाग्रं, ततस्तैजसस्य विशेषाधिकं, ततः कार्मणस्य विशेषाधिकं, ततो वैक्रियशरीरनाम्नोऽसङ्ख्येयगुणं, ततोऽप्याहारकशरीरनाम्नोऽसंख्येयगुणम्। एवं सङ्घातनाम्न्यपि वाच्यम्। अङ्गोपाङ्गनाम्नि सर्वस्तोकं जघन्यपदे प्रदेशाग्रमौदारिकाङ्गोपाङ्गनाम्नः, ततो वैक्रियाङ्गोपाङ्गनाम्नोऽसंख्येयगुणं, ततोऽप्याहारकाङ्गोपाङ्गनाम्नोऽसंख्येयगुणम्। तथा सर्व-

प्रदेशबन्धे दलिकानामल्पबहुत्वम्।

स्तोकं जघन्यपदे देवनरकानुपूर्व्योः प्रदेशाग्रं, ततो मनुजानुपूर्व्यां विशेषाधिकं, ततोऽपि तिर्यगानुपूर्व्यां विशेषाधिकम्। तथा सर्वस्तोकं त्रसनाम्नः, ततो विशेषाधिकं स्थावरनाम्नः। एवं बादरसूक्ष्मयोः, पर्याप्तापर्याप्तयोः,प्रत्येकसाधारणयोश्च ज्ञेयम्। शेषाणां तु नामप्रकृतीनां नास्त्यल्पबहुत्वम् ,तथा सातासातवेदनीययोरुच्चैर्गोत्रनीचैर्गोत्रयोरपि। अन्तराये तु यथोत्कृष्टपदे तथैवावगन्तव्यम्। इह यदा जन्तुरुत्कृष्ट-योगस्थानवर्ती, यदा च मूलप्रकृतीनामुत्तरप्रकृतीनां च स्तोकतराणां बन्धकः, तथा यदा प्रकृत्यन्तरदलिकानामुत्कृष्टप्रदेशसंक्रमः, तदो-त्कृष्टप्रदेशाग्रसंभवः, उत्कृष्टयोगे वर्त्तमानत्वे उत्कृष्टप्रदेशग्रहणसंभवात्, स्तोकतरप्रकृतिबन्धकत्वे शेषाबध्यमानप्रकृतिलभ्यस्यापि भागस्य बध्यमानप्रकृतिष्वेवाभजनात्, प्रकृत्यन्तरदलिकानामुत्कृष्टप्रदेशसंक्रमकाले च विवक्षितासु बध्यमानासु प्रकृतिषु प्रभूतानां कर्मपुद्गलानां प्रवेशात्, एतद्विपर्यासे तु जघन्यप्रदेशाग्रसंभव इति ज्ञेयम्। नन्वयं प्रतिसमयं बध्यमानानां प्रतिसमयं विभागविधिरुक्तः, यदा तु तत्त-द्गुणस्थाने स्वस्वबन्धोच्छेदः स्यात् तदा तद्भागद्रव्यं कस्या भागे समायातीति चेद्, उच्यते—तद्भागलभ्यं द्रव्यं यावदेकापि तत्सजातीय-प्रकृतिर्बध्यते तावत्तस्या एव विभज्य देयम्। यदा तु तत्सजातीयसर्वप्रकृतिबन्धोच्छेदो यस्या वा मिथ्यात्वप्रकृतेः सजातीया नापरा प्रकृतिरस्ति तदा तद्भागलभ्यं द्रव्यं सर्वं मूलप्रकृत्यन्तर्गतानां विजातीयप्रकृतीनां विभज्य दीयते, तासामप्युच्छेदे तद्दलिकमन्यस्या एव मूलप्रकृतेः संपद्यते, एवं तावज्ज्ञेयं यावत्सूक्ष्मसंपराये गृहीतं दलिकं षड्भागीभवति, तदूर्ध्वं तु सर्वदलिकं सातस्योपतिष्ठत इति।

अथ च साद्यादिप्ररूपणा स्वाम्यादिप्ररूपणा च कर्त्तव्या। तत्र मोहायुर्वर्जानां षण्णां मूलप्रकृतीनामनुत्कृष्टः प्रदेशबन्धः साद्यादितया चतुर्विधः। तथाहि—एतेषां षण्णां कर्मणां सूक्ष्मसंपरायस्थस्योत्कृष्टयोगे वर्त्तमानस्यैकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धो भवति। ततो-ऽसौ सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्टः। स चोत्कृष्टात् प्रदेशबन्धात् पततो बन्धव्यवच्छेदं कृत्वा वा पततो मन्दयोगस्थान-

वर्त्तिनः प्रवर्त्तमानः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षयेति। एषामेव षण्णां कर्मणामुत्कृष्टजघन्याजघन्यविकल्पाः साद्यध्रुवाः। तत्रोत्कृष्टः साद्यध्रुवो भावित एव। जघन्यः सूक्ष्मनिगोदस्यापर्याप्तस्योत्पत्तिसमये सर्वाल्पवीर्यस्य सप्तविधबन्धकस्य समयमेकं लभ्यते। ततो द्वितीयसमये तस्यैवाजघन्यः। ततो भूयोऽपि संख्येयकालेऽसंख्येयकाले वाऽतिक्रान्ते प्रागुक्तलक्षणसूक्ष्मनिगोदभावं प्राप्तस्याद्यसमये जघन्यः। तदनन्तरसमये त्वजघन्यः। एवमनेकधा संसारिणां जघन्येऽजघन्ये च परावर्त्तनात् द्वावप्येतौ साद्यध्रुवौ। आयुर्मोहनीययोश्च जघन्यादयश्चत्वारोऽपि साद्यध्रुवाः। तत्राध्रुवबन्धित्वादायुश्चतुर्णामपि भेदानां साद्यध्रुवता स्फुटा। मोहनीयस्य तूत्कृष्टः प्रदेशबन्धः सप्तविधबन्धकस्योत्कृष्टयोगस्थानवर्तिन एकं द्वौ वा समयौ भवति। ततोऽनुत्कृष्ट एवेति द्वावप्येतौ साद्यध्रुवौ। जघन्याजघन्ययोः साद्यध्रुवता तु ज्ञानावरणीयादिवद्भावनीया। उत्तरप्रकृतिषु ज्ञानावरणपञ्चकान्तरायपञ्चकनिद्राऽनाद्यद्वादशकषायभयजुगुप्सादर्शनावरणचतुष्टयप्रचलारूपाणां ध्रुवबन्धिनीनां त्रिंशत्प्रकृतीनामनुत्कृष्टः प्रदेशबन्धश्चतुष्प्रकारः—सादिरनादिर्ध्रुवोऽध्रुवश्चेति। तथाहि—ज्ञानावरणान्तरायपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणरूपाणां चतुर्दशप्रकृतीनां सूक्ष्मसंपरायस्थस्योत्कृष्टयोगस्य समयमेकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धः प्राप्यते, योगोत्कर्षेण बहुदलिकग्रहणादायुर्मोहबन्धव्यवच्छेदेन तद्भागस्याधिकस्य प्रवेशाच्चतसृणां दर्शनावरणप्रकृतीनां सजातीयाबध्यमानप्रकृतिभागोपनमनाच्च। स च प्रतिनियतकालभावित्वात्साद्यध्रुवः। ततः समयान्तरे तस्यैव मन्दयोगस्थानवृत्तेर्बन्धव्यवच्छेदं कृत्वा वा प्रतिपततोऽनुत्कृष्टः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। तथा निद्राप्रचलयोरविरतसम्यग्दृष्ट्यादेरपूर्वकरणान्तस्योत्कृष्टयोगस्थानवृत्तेः सप्तविधबन्धकस्योत्कृष्टः प्रदेशबन्ध एकं द्वौ वा समयौ, योगस्थानोत्कर्षेण भूयिष्ठदलिकग्रहणाद् स्त्यानर्द्धित्रिकलभ्यमानप्रकृतिभागप्रवेशादायुपा भागानादानाच्च। स च नियतकालभावित्वा-

त्साद्यध्रुवः । ततः समयान्तरेऽनुत्कृष्टः, स च सादिः । बन्धव्यवच्छेदस्थानं गत्वा प्रतिपततो मन्दयोगस्थानस्य बन्धमारभमाणस्य
वा नुत्कृष्टः, सोऽपि सादिः । तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । अप्रत्याख्यानावरणचतुष्टयस्याविरतसम्यग्दृष्टेरुत्कृष्टयोग-
स्थानवर्तिनः समयमेकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धः, योगस्थानोत्कर्षाद्बहुदलिकग्रहणान्मिथ्यात्वानन्तानुबन्धिलभ्यमानभागप्रवे-
शाच्च । तत उत्कृष्टात्प्रदेशबन्धाद् बन्धव्यवच्छेदस्थानाद्वा प्रतिपततो मन्दपरिणामस्यानुत्कृष्टः, स च सादिः, अप्राप्ततत्स्थानस्यानादिः,
ध्रुवाध्रुवौ प्राग्वत् । प्रत्याख्यानावरणचतुष्टयस्य देशविरतस्योत्कृष्टयोगस्थानवृत्तेरेकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धः, योगोत्कर्षाद् ब-
हुदलिकग्रहणान्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानलभ्यमानभागप्रवेशाच्च । स च प्रतिनियतकालभावित्वात्साद्यध्रुवः । तत उत्कृष्टप्रदे-
शबन्धाद् बन्धव्यवच्छेदस्थानाद्वा च्युतस्य मन्दयोगस्थानस्यानुत्कृष्टः, स च सादिः, अप्राप्ततत्स्थानस्यानादिः, ध्रुवाध्रुवौ पूर्ववत् । भय-
जुगुप्सयोरपूर्वकरणस्योत्कृष्टयोगिन एकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धः, योगोत्कर्षेण बहुदलिकग्रहणान्मिथ्यात्वादिसजातीयाबध्य-
मानप्रकृतिभागप्रवेशाच्च, स च साद्यध्रुवः, उत्कृष्टतोऽपि समयद्वयभावित्वात् । तत उत्कृष्टाद् बन्धव्यवच्छेदस्थानाद्वा प्रतिपततो मन्द-
परिणामस्यानुत्कृष्टः, स च सादिः, अप्राप्ततत्स्थानस्यानादिः, ध्रुवाध्रुवता प्राग्वत् । संज्वलनक्रोधस्यानिवृत्तिबादरसंपरायस्योत्कृष्ट-
योगस्य चतुर्विधबन्धकस्यैकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धः, योगोत्कर्षेण प्रभूतदलिकग्रहणान्मिथ्यात्वादीनां पुरुषवेदस्य च भाग
प्रवेशाच्च, स च प्रतिनियतकालभावित्वात्साद्यध्रुवः । तथा तस्यैवोत्कृष्टयोगस्थानवर्तिनस्त्रिविधबन्धकस्यैकं द्वौ वा समयौ संज्वलन-
मानस्योत्कृष्टः प्रदेशबन्धः, संज्वलनक्रोधस्यापि भागप्रवेशात् । तस्यैवोत्कृष्टयोगस्य द्विविधबन्धकस्योत्कर्षतः समयद्वयं संज्वलनमायाया
उत्कृष्टः प्रदेशबन्धः, संज्वलनमानस्यापि भागप्रवेशाद् । तस्यैवोत्कृष्टयोगस्यैकविधबन्धकस्योत्कर्षतः समयद्वयं संज्वलनलोभस्योत्कृष्टः

प्रदेशबन्धः । स चैवं संज्वलनचतुष्कस्योत्कृष्टः प्रदेशबन्धः प्रतिनियतकालभावित्वात्साद्यध्रुवः, ततोऽन्यः सर्वोऽप्यनुत्कृष्टः । स चोत्कृष्टप्रदेशबन्धस्थानात्प्रतिपततो बन्धव्यवच्छेदस्थानमारुह्य वा प्रतिपततो मन्दपरिणामस्य सादिः, अप्राप्ततत्स्थानस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । एतासामेव त्रिंशत्प्रकृतीनां जघन्याजघन्योत्कृष्टाः साद्यध्रुवाः, तत्रोत्कृष्टः साद्यध्रुवतयाऽन्तराल एव भावितः । जघन्याजघन्ययोः साद्यध्रुवता तु प्रागुक्तनिगोदावस्थामधिकृत्य भावनीया। शेषाणां तु मिथ्यात्वानन्तानुबन्धिस्त्यानर्द्धित्रिकागुरुलघुतैजसकार्मणोपघातवर्णादिचतुष्टयनिर्माणरूपाणां सप्तदशध्रुवबन्धिप्रकृतीनां जघन्यादयश्चत्वारोऽपि साद्यध्रुवाः । तथाहि–स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिनां मिथ्यादृष्टेः सप्तविधबन्धकस्योत्कृष्टयोगस्थानवर्तिनः समयमेकं द्वौ वा समयौ यावदुत्कृष्टः प्रदेशबन्धः । सम्यग्दृष्टेरेताः प्रकृतयो बन्धमेव नायान्तीति मिथ्यादृष्टिग्रहणम् । उत्कृष्टाच्च प्रतिपतितस्यानुत्कृष्टः। ततो भूयोऽपि समयान्तरे उत्कृष्ट इति द्वावपि साद्यध्रुवौ । तैजसकार्मणागुरुलघूपघातवर्णादिचतुष्टयनिर्माणरूपाणां नामध्रुवबन्धिनीनां नवानां प्रकृतीनां त्रयोविंशतिबन्धकस्य मिथ्यादृष्टेरुत्कृष्टयोगस्थानवर्तिनः समयमेकं द्वौ वा समयावुत्कृष्टः प्रदेशबन्धः, अन्यस्याऽऽसामुत्कृष्टप्रदेशबन्धासंभवात् केवलज्ञानिना तथैव दृष्टत्वात्, ततः समयान्तरेऽनुत्कृष्टो, भूयोऽपि कालान्तरे उत्कृष्ट इति द्वावपि साद्यध्रुवौ । जघन्याजघन्यभावना तु प्राग्वत् । अध्रुवबन्धिनीनां चाध्रुवबन्धित्वादेव चत्वारोऽपि विकल्पाः साद्यध्रुवा इति सर्वं सुस्थम् । स्वामित्वप्ररूपणा च द्विविधा–उत्कृष्टप्रदेशविषया, जघन्यप्रदेशविषया च। तत्राल्पतरप्रकृतिबन्ध उत्कृष्टयोगश्च संज्ञिपर्याप्त उत्कृष्टप्रदेशबन्धकः,अल्पतरप्रकृतिबन्धे भागानामल्पत्वात् उत्कृष्टयोगत्वे च बहुप्रदेशग्रहणात् ,एतद्विपर्यये जघन्यप्रदेशबन्धकः। तत्रायुषो मिथ्यादृष्टिरयताद्याश्च चत्वार उत्कृष्टप्रदेशबन्धस्वामिनः, सर्वेषामेतेषामुत्कृष्टयोगस्थानस्यायुर्बन्धस्य च लभ्यमानत्वात् । सासादनः कस्मादुत्कृष्टप्रदेशबन्धस्वामी नेति चेद् , उच्यते–अल्पकालभावि-

न्यादिना तस्योत्कृष्टयोगस्थानासंभवात् । अन्यथा मिथ्यात्वभागलाभेनानन्तानुबन्धिनामुत्कृष्टप्रदेशबन्धः सासादन एव लभ्येतेति तेषामनुत्कृष्टप्रदेशबन्धः साद्यादिरूपतया चतुर्विधः स्याद्, न चैतदिष्टं, साद्यध्रुवतयैव तस्य प्रागभिधानात् । शेषप्रकृतीनां मिथ्यादृष्टिरेवोत्कृष्टप्रदेशबन्धस्वामी वाच्य इत्यतोऽपि न सासादनस्योत्कृष्टयोगसंभव इति न तद्ग्रहणम् । सास्वादनसम्यग्मिथ्यादृष्टी विना मिथ्यादृष्ट्याद्या अनिवृत्तिबादरान्ताः सप्तविधबन्धका मोहनीयस्योत्कृष्टप्रदेशबन्धस्वामिनः, सर्वेषामप्येतेषामुत्कृष्टयोगस्थानस्य मोहनीयबन्धस्य च लभ्यमानत्वात् । सासादनसम्यग्मिथ्यादृष्टी कस्मात्त्यक्ताविति चेत्तयोरुत्कृष्टयोगाभावात् । तत्र सासादनस्योत्कृष्टयोगाभावे युक्तिरुक्तैव । मिश्रेऽप्युत्कृष्टयोगाभ्युपगमे तत्र द्वितीयकषायाणामुत्कृष्टप्रदेशबन्धाभ्युपगमप्रसङ्गः, न चैतदिष्यते, तदुत्कृष्टप्रदेशबन्धस्वामिनोऽविरतसम्यग्दृष्टेरेवाभिधास्यमानत्वात्, नच मिश्रादल्पतरप्रकृतिबन्धकोऽविरतसम्यग्दृष्टिरिति तस्यैव तथाभिधास्यमानत्वं युक्तं, मूलप्रकृत्यपेक्षया सप्तविधबन्धकत्वस्योत्तरप्रकृत्यपेक्षया च सप्तदशमोहनीयप्रकृतिबन्धकत्वस्योभयोरविशेषात् । तस्मादुत्कृष्टयोगाभाव एव मिश्रपरित्यागे कारणमिति केचिद्ग्रन्थकृतः समादधते । मलयगिरिचरणास्तु सम्यग्मिथ्यादृष्टेरुत्कृष्टयोगस्थानहीनत्वे "सासाणसम्मामीसेसुक्कोसो जोगो न हवइ' त्ति पूर्वाचार्यवचनमेव प्रमाणमाहुः । मिश्रस्य व्यञ्जनावग्रहप्रत्ययत्वान्न तत्रोत्कृष्टप्रदेशबन्ध इत्यपि युक्तमीक्षामहे । ज्ञानावरणदर्शनावरणवेदनीयनामगोत्रान्तरायाणामुत्कृष्टयोगस्थानवर्ती सूक्ष्मसंपराय उत्कृष्टप्रदेशबन्धस्वामी, आयुर्मोहनीयभागयोरपि तत्र लभ्यमानत्वात् । एतन्मूलप्रकृतिविषयमुत्कृष्टप्रदेशबन्धस्वामित्वं भावितम् । अथोत्तरप्रकृतिविषयं तदुच्यते—तत्र ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयसातवेदनीययशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकलक्षणानां सप्तदशप्रकृतीनां सूक्ष्मसंपराय उत्कृष्टयोगे वर्तमान उत्कृष्टप्रदेशबन्धस्वामी । मोहायुषी असौ न बध्नातीति तद्भागोऽत्राधिको लभ्यते, दर्शनावरणभागो नामभागश्च

सर्वोऽपि यथासंख्यं दर्शनावरणचतुष्कस्य यशःकीर्त्तेश्चैकस्या भवतीति सूक्ष्मसंपरायस्यैव ग्रहणम् । अविरतसम्यग्दृष्टयः सप्तविधबन्धका उत्कृष्टयोगे वर्त्तमाना अप्रत्याख्यानावरणानामुत्कृष्टप्रदेशबन्धकाः, मिथ्यात्वमनन्तानुबन्धिनश्चैते न बध्नन्तीति तद्भागद्रव्यमधिकं लभ्यत इत्यमीषामेव ग्रहणम् । देशविरता उक्तरूपाः प्रत्याख्यानावरणानाम्, अप्रत्याख्यानावरणानामप्यमी अबन्धका इति तद्भागाधिकद्रव्यलाभात् । पुरुषवेदसंज्वलनचतुष्टयानामनिवृत्तिबादरः सर्वोत्कृष्टयोगः पञ्चचतुस्त्रिद्व्येकबन्धक उत्कृष्टप्रदेशबन्धस्वामी, बन्धमधिकृत्य व्यवच्छिन्नानां प्रकृतीनां यथायथं भागप्रवेशात् । प्रशस्तविहायोगतिमनुजायुःसुरत्रिकसुभगत्रिकवैक्रियद्विकसमचतुरस्रसंस्थानासातवेदनीयवज्रर्षभनाराचसंहननलक्षणानां त्रयोदशप्रकृतीनां मिथ्यादृष्टिः सम्यग्दृष्टिर्वोत्कृष्टप्रदेशबन्धस्वामी । तथाहि—असातं मिथ्यादृष्टिसम्यग्दृष्टी द्वावपि प्रकृतिलाघवादिविशेषाभावादुत्कृष्टयोगावुत्कृष्टप्रदेशं बध्नीतः, देवमनुष्यायुषोरप्यष्टविधबन्धकावुत्कृष्टयोगावविशेषेणोत्कृष्टप्रदेशबन्धं कुरुतः, देवद्विकवैक्रियद्विकाद्यसंस्थानप्रशस्तविहायोगतिसुभगत्रिकलक्षणा नव नामप्रकृतयो नाम्नोऽष्टाविंशतिबन्धकाल एव बन्धमायान्ति । तां चाष्टाविंशतिं देवद्विकवैक्रियद्विकपञ्चेन्द्रियजातितैजसकार्मणाद्यसंस्थानवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरैकतरशुभाशुभैकतरसुभगत्रिकयशःकीर्त्त्ययशःकीर्त्त्येकतरनिर्माणलक्षणां देवगतिप्रायोग्यां सम्यग्दृष्टिर्मिथ्यादृष्टिश्च बध्नातीति द्वयोरप्युत्कृष्टयोगयोः सप्तविधबन्धकयोरष्टाविंशतिबन्धकाले उक्तानां नवप्रकृतीनामुत्कृष्टप्रदेशबन्धकत्वम् । एकोनत्रिंशदादिबन्धस्थानेष्वप्येता नव प्रकृतयो बध्यन्ते परं तत्र भागबाहुल्यादुत्कृष्टप्रदेशबन्धासंभव इति तदग्रहणम् । वज्रर्षभनाराचस्यापि सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा सप्तविधबन्धको नाम्नो वज्रर्षभनाराचसहितास्तिर्यग्द्विकपञ्चेन्द्रियजात्यौदारिकद्विकतैजसकार्मणाद्यसंस्थानसंहननवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासप्रशस्तविहायोगतित्रसचतुष्कसुभगत्रिकस्थिरास्थिरैकतरशुभाशुभैकत-

प्रदेशबन्धे-उत्कृष्टप्रदे-शबन्धस्वा-मित्वम् ।

रयशःकीर्त्ययशःकीर्त्येकतरनिर्माणलक्षणा मनुष्यद्विकपञ्चेन्द्रियजात्यौदारिकद्विकतैजसकार्मणाद्यसंस्थानसंहननवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासाप्रशस्तविहायोगतित्रसचतुष्कसुभगत्रिकस्थिरास्थिरैकतरशुभाशुभैकतरयशःकीर्त्ययशःकीर्त्येकतरनिर्माणलक्षणा वा एकोनत्रिंशत्प्रकृतीर्बध्नन्नुत्कृष्टयोग उत्कृष्टप्रदेशबन्धकः, त्रिंशद्बन्धादौ भागबाहुल्यात्तदग्रहणम्। निद्राप्रचलाहास्यरत्यरतिभयशोकजुगुप्सातीर्थकरनामप्रकृतीनां सम्यग्दृष्टिरुत्कृष्टयोगस्तथा। तत्र निद्राप्रचलयोरविरतसम्यग्दृष्ट्यादयोऽपूर्वकरणान्ताः सप्तविधबन्धकोत्कृष्टयोगा एकं द्वौ वा समयावुत्कृष्टप्रदेशबन्धकाः, आयुर्द्रव्यभागोऽधिको लभ्यत इति सप्तविधबन्धकग्रहणं, स्त्यानर्द्धित्रिकभागलाभाय सम्यग्दृष्टिग्रहणम्, मिश्रस्त्वेतदबन्धकत्वेऽप्युत्कृष्टयोगाभावान्नेहाधिकृतः। हास्यरत्यरतिशोकभयजुगुप्सानां त्वविरताद्यपूर्वकरणान्ता ये ये उत्कृष्टयोगास्ते ते उत्कृष्टप्रदेशबन्धकाः, मिथ्यात्वानन्तानुबन्ध्यादिभागलाभाय सम्यग्दृष्टिग्रहणम्। तीर्थकरनाम्नोऽप्येत एव देवगतिप्रायोग्यामष्टाविंशतिं तीर्थकरनामसहितां बध्नन्तः सप्तविधमूलप्रकृतिबन्धकाः तथा, त्रिंशदेकत्रिंशद्बन्धौ तु भागबाहुल्यात्त्यज्येते। आहारकद्विकस्याप्रमत्तापूर्वकरणौ केवलस्थिरशुभयशःकीर्तिसहितभागुक्ताष्टाविंशतावाहारकद्विकप्रक्षेपेण त्रिंशन्नामोत्तरप्रकृतिबन्धकौ तथा, तीर्थकरनामसहिते एकत्रिंशद्बन्धेऽप्येतद्बध्यते, किं तु तत्र भागबाहुल्यात्तस्येहाग्रहणम्। शेषाणां स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिस्त्रीक्लीबवेदनारकतिर्यगायुर्नरकद्विकतिर्यग्द्विकमनुजद्विकौदारिकद्विकपञ्चेन्द्रियजातितैजसकार्मणवर्णचतुष्कागुरुलघुपराघातोपघातोच्छ्वासत्रसचतुष्कस्थिरास्थिरशुभाशुभयशःकीर्तिनिर्माणाद्यजातिचतुष्टयप्रथमवर्जसंस्थानसंहननातपोद्योताप्रशस्तविहायोगतिस्थावरचतुष्कदुर्भगत्रिकनीचैर्गोत्रलक्षणानां षट्षष्टिप्रकृतीनां मिथ्यादृष्टिरुत्कृष्टप्रदेशबन्धकः। तथाहि—मनुष्यद्विकादिपञ्चविंशतिप्रकृतीर्विना शेषाः सम्यग्दृष्टेरिह बन्ध एव नायान्ति, सासादनस्तु काश्चिद्बध्नाति परं तस्योत्कृष्टयोगो न लभ्यते, अत एता एकचत्वारिंशन्मिथ्यादृष्टि-

प्रदेशबन्धे-जघन्यप्रदेशबन्धस्वामित्वम् ।

रेवोत्कृष्टयोगोऽल्पतरबन्धक उत्कृष्टप्रदेशाः करोति । या अपि पञ्चविंशतिः सम्यग्दृष्टिबन्धयोग्यास्तासामपि मध्ये औदारिकतैजसकार्मणवर्णचतुष्कागुरुलघूपघातबादरप्रत्येकास्थिराशुभायशःकीर्तिनिर्माणलक्षणानां पञ्चदशानामपर्याप्तैकेन्द्रिययोग्यत्रयोविंशतिबन्ध एव, शेषाणां च दशानां पर्याप्तप्रायोग्यपञ्चविंशतिबन्ध एवोत्कृष्टप्रदेशबन्धो लभ्यते, नाधिकबन्धे, भागबाहुल्यात् । तौ च त्रयोविंशतिपञ्चविंशतिबन्धौ सम्यग्दृष्टेर्न भवत इत्येतासामपि मिथ्यादृष्टिरेवोत्कृष्टबन्धस्वामी। उक्तमुत्तरप्रकृतिषूत्कृष्टप्रदेशबन्धस्वामित्वम्, अथ जघन्यप्रदेशबन्धस्वामित्वमुच्यते—तत्रायुर्वर्जानां सप्तानां मूलप्रकृतीनां सूक्ष्मनिगोदो लब्ध्यपर्याप्तक आद्यसमये जघन्यप्रदेशबन्धस्वामी, द्वितीयादिसमयेऽसंख्येयगुणयोगस्थानवृद्धेरादिसमयग्रहणं, आयुषोऽपि स एव शेषसूक्ष्मनिगोदापेक्षया सर्वमन्दयोगस्थानवर्ती स्वायुःशेषत्रिभागाद्यसमयस्थस्तथा । उत्तरप्रकृतिष्वाहारकद्विकस्य परावर्त्तमानयोगोऽष्टविधबन्धकः, सर्वजघन्यवीर्योऽप्रमत्तयतिर्देवद्विकवैक्रियद्विकपञ्चेन्द्रियजात्याद्यसंस्थानोच्छ्वासपराघातप्रशस्तविहायोगतित्रसदशकवर्णचतुष्कतैजसकार्मणागुरुलघूपघातनिर्माणतीर्थंकरनामाहारकद्विकलक्षणैकत्रिंशन्नामोत्तरप्रकृतिबन्धकस्तथा, भागाल्पत्वात्त्रिंशद्बन्धत्यागः । तथाऽसंज्ञी घोलमानयोगः सर्वजघन्यवीर्यो नरकत्रिकसुरायुषोस्तथा, पृथिव्यादीनामसंज्ञ्यपर्याप्तस्य चैतदबन्धकत्वादसंज्ञिपर्याप्तग्रहणं, सोऽपि यद्येकस्मिन्नेव योगे चिरमवतिष्ठमानो गृह्यते तदा तीव्रचेष्टो भवेदिति घोलमानयोगग्रहणं, परावर्त्तमानयोग इति तदर्थः, योगाद्योगान्तरसंक्रान्तौ च स्वभावादल्पैव चेष्टा भवति, पर्याप्तसंज्ञी च प्रभूतयोगत्वान्नात्राधिकृतः, जघन्यस्यापि पर्याप्तसंज्ञियोगस्योत्कृष्टासंज्ञिपर्याप्तयोगादसङ्ख्येयगुणत्वात् । सुरद्विकवैक्रियद्विकजिननाम्नां सम्यग्दृष्टिर्भवाद्यसमये वर्त्तमानस्तथा । तथाहि—तीर्थकरनामकर्मणो मनुष्यस्तीर्थकरनामकर्मबन्धकः कालं कृत्वा देवेषूत्पन्नः, तत्र प्रथमसमये वर्त्तमानो मनुष्यगतिप्रायोग्यजिननामसहितत्रिंशद्बन्धकः सर्वजघन्ययोगोऽविरतसम्यग्दृष्टिर्जघन्यप्रदेशबन्धं विधत्ते,

नारकोऽपि श्रेणिकादिवदेवं तद्बन्धकः संभवति परमिह देवोऽल्पयोगत्वादनुत्तरवासी गृह्यते, नारकेषु त्वेवंभूतो जघन्ययोगो न लभ्यत इति तेषु समुत्पन्नो नेह गृहीतः। तिर्यञ्चस्तु तीर्थकरनाम न बध्नन्तीत्युपेक्षिताः। मनुष्यास्तु भवाद्यसमये तीर्थकरनामसहिता नाम्न एकोनत्रिंशत्प्रकृतीर्बध्नन्ति, परं तत्राल्पा भागा इति तेऽप्युपेक्षिताः। एकत्रिंशद्बन्धस्तु जिननामसहितः संयतस्यैव भवति, तत्र वीर्यमल्पं न लभ्यत इति तस्यापि त्यागः। देवद्विकवैक्रियद्विकयोर्देवो नैरयिको वा तीर्थकरनामबन्धको यथासङ्ख्यं देवभवान्नारकभवाच्च च्युतो मनुष्यभवे समुत्पद्यमान उत्पत्तिप्रथमसमयस्थो देवगतिप्रायोग्यास्तीर्थकरनामसहिता एकोनत्रिंशत्प्रकृतीर्बध्नन् सम्यग्दृष्टिर्जघन्ययोगस्थानवर्ती जघन्यप्रदेशबन्धकर्ता। देवनारका भवप्रत्ययादेवैतत्प्रकृतिचतुष्टयं न बध्नन्तीति नेहाधिकृताः। तिर्यञ्चश्च भोगभूमिजा भवाद्यसमये बध्नन्ति एतत् केवलं देवगतिप्रायोग्यामष्टाविंशतिं बध्नन्तीति भागाल्पत्वात्तेऽपि नाधिकृताः। मनुष्यस्याप्यष्टाविंशतिबन्धकस्य भागा बहवो न लभ्यन्ते। त्रिंशदेकत्रिंशद्बन्धौ तु देवगतिप्रायोग्यौ संयतस्य भवतः, परं तत्र वीर्यमल्पं न लभ्यते। अन्ये च देवगतिप्रायोग्या बन्धा एव न सन्तीत्येकोनत्रिंशद्बन्धकस्य मनुष्यस्यैव ग्रहणम्। ननु तिर्यक्षु पर्याप्तासंज्ञी देवगतिप्रायोग्यं बध्नन्नेतत्प्रकृतिचतुष्टयबन्धकः कस्मान्न गृहीतः? उच्यते—प्रभूतयोगत्वादपर्याप्तसंज्ञियोगाद्धि पर्याप्तासंज्ञियोगो जघन्यतोऽप्यसङ्ख्येयगुण इति। शेषाणां तु मनुष्यायुस्तिर्यगायुर्वर्जितानां नवोत्तरशतसङ्ख्यानां प्रकृतीनां सूक्ष्मनिगोदो लब्ध्यपर्याप्तः सर्वाल्पवीर्य उत्पत्तिप्रथमसमये जघन्यप्रदेशबन्धस्वामी। नवरमपर्याप्तकसूक्ष्मसाधारणनाम्नां पञ्चविंशतिबन्धकः, एकेन्द्रियातपस्थावराणां षड्विंशतिबन्धको, मनुष्यद्विकस्यैकोनत्रिंशद्बन्धकः, शेषाणां तु त्रिंशद्बन्धक उक्तविशेषणस्तथा। मनुष्यतिर्यगायुषोः स एव स्वायुःशेषत्रिभागसमये तथा, कारणं तु प्रागुक्तमेव ॥ २८ ॥

इदाणिं अणुभागबंधो भण्णइ । तस्स कारणं अज्झवसाणं । 'ठितीअणुभागं कसायओ कुणति'त्ति वयणातो। अनुभागबंधज्झवसाणस्स परूवणा कीरति । तस्स इमे अणुतोगद्दारा । तंजहा–अविभागपलिच्छेदपरूवणा, वग्गणपरूवणा, (फड्डगपरूवणा),अंतरपरूवणा,ठाणपरूवणा, कंडगपरूवणा, छट्ठाणपरूवणा, हेट्ठट्ठाणपरूवणा, वड्डिपरूवणा, समयपरूवणा, जवमज्झपरूवणा, उयजुम्मगपरूवणा, पज्जवसाणपरूवणा, अप्पाबहुगपरूवणत्ति। अविभागपलिच्छेदणिरूवणत्थं भण्णइ—

गहणसमयंमि जीवो उप्पाएई गुणे सपच्चयओ । सव्वजियाणंतगुणे कम्मपएसेसु सव्वेसुं ॥ २९ ॥

(चू०)—अंज्झवसाणाणं[1] अणुभागाविभागपलिच्छेदो जहा जोगाविभागपलिच्छेदो । 'गहणसमयंमि जीवो उप्पाएई गुणे सपच्चयतो'त्ति–कम्मजोगे पोग्गले गेण्हमाणो जीवो संकिलिट्ठो वा गेण्हति, विसुद्धो वा गेण्हति । संकिलेसस्स वि असंखेज्जा भेदा, विसोहीए असंखेज्जा भेदा, जहा–तिव्वतिव्वतरतिव्वतमाइं ति । जारिसेण अज्झवसाणेण संजुत्तो कम्मपोग्गले गेण्हति तारिसो तस्स अणुभागो भवति । अणुभागोत्ति वा रसोत्ति वा एगट्ठं । [दव्वविसेसो] अद्दहणतुल्ला अज्झवसाणा, तंदुलत्थाणीया कम्मपोग्गला। अद्दहणे णिदरिसणं दायव्वं, तत्थ असुभस्स घोसाडतिरसो,सुभस्स माहिसं खीरं। एताणि णिदरिसणाणि । तेण गहणसमए कम्मपोग्गलेसु उप्पाएति जीवो 'गुणे'त्ति–अणुभागे, 'सपच्चयतो'त्ति–आयपच्चत्तेणं। किं भणियं होति ? भण्णइ–संकिलेसविसो-

१ अध्यवसायजनितानुभागानामित्यर्थः स्वबन्धानुसारेण सर्वत्र ग्राह्यः ।

हीनो अणुभागो भवति, सा य संकिलेसविसोही जीवस्स 'सव्वजीयाणंतगुणे'त्ति–सव्वजीवाणंतगुणे, 'कम्मपदेसेसु सव्वेसु'त्ति–सव्वेसु कम्मप्पदेसेसु एक्किक्के कम्मपएसे सव्वजीवाणं अणंतगुणे रसअविभागपलिच्छेदे उप्पादेति भणितं होति ॥ २९ ॥

(मलय०)—तदेवमुक्तौ प्रकृतिप्रदेशबन्धौ, सम्प्रति स्थित्यनुभागबन्धप्ररूपणावसरः, तत्र बहुवक्तव्यत्वात् प्रथमतोऽनुभागबन्धस्यैव प्ररूपणा क्रियते, तत्र चतुर्दशानुयोगद्वाराणि, तद्यथा–अविभागप्ररूपणा १, वर्गणाप्ररूपणा २, स्पर्धकप्ररूपणा ३, अन्तरप्ररूपणा ४, स्थानप्ररूपणा ५, कण्डकप्ररूपणा ६, षट्स्थानप्ररूपणा ७, अधस्तनस्थानप्ररूपणा ८, वृद्धिप्ररूपणा ९, समयप्ररूपणा १०, यवमध्यप्ररूपणा ११, ओजोयुग्मप्ररूपणा १२, पर्यवसानप्ररूपणा १३, अल्पबहुत्वप्ररूपणा १४। तत्राविभागप्ररूपणार्थमाह—'गहणे'ति। इहानुभागस्य कारणं काषायिका अध्यवसायाः, "ठिइअणुभागं कसायओ कुणइ" इति वचनात्, ते च द्विधा–शुभा अशुभाश्च, तत्र शुभैः क्षीरखण्डरसोपममाह्लादजननभागं कर्मपुद्गलानामाधत्ते, निम्बघोषातकीरसोपमं चाशुभैः। ते च शुभा अशुभा वा काषायिका अध्यवसायाः प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणाः, केवलं शुभा विशेषाधिका द्रष्टव्याः, तथाहि–यानेवानुभागबन्धाध्यवसायान् क्रमशः स्थापितान् संक्लिश्यमानः क्रमेणाधोऽध आस्कन्दति तानेव विशुध्यमानः क्रमेणोर्ध्वोर्ध्वमारोहति, ततो यथा प्रसादादवतरतो यावन्ति सोपानस्थानानि भवन्ति तावन्त्येवारोहतोऽपि, तथाऽत्रापि यावन्त एव संक्लिश्यमानस्याशुभाध्यवसायास्तावन्त एव विशुध्यमानस्यापि शुभाध्यवसायाः। उक्तं च–"क्रमशः स्थितासु काषायिकीषु जीवस्य भावपरिणतिषु। अवपतनोत्पतनाद्धे संक्लेशाद्धाविशोध्यद्धे ॥" केवलं क्षपको येष्वध्यवसायेषु वर्तमानः क्षपकश्रेणिमारोहति, तेभ्यः पुनर्न निवर्तते तस्य प्रतिपाताभावात्, अतस्तेऽधिका इति तदपेक्षया वि-

शेषाधिकाः शुभाध्यवसायाः । तत्र शुभेनाशुभेन वा एकेन केनचिदध्यवसायेन 'स्वप्रत्ययत' इति स्वस्यात्मनः संबन्धिनाऽनुभागबन्धं प्रति प्रत्ययेन प्रत्ययभूतेन कारणभूतेन जीवो 'ग्रहणसमये' योग्यपुद्गलादानसमये 'सर्वेषु कर्मप्रदेशेषु' एकैकस्मिन् कर्मपरमाणावित्यर्थः 'गुणान्' रसस्य निर्विभागान् भागानुक्तस्वरूपान् सर्वजीवेभ्योऽनन्तगुणानुत्पादयति । इयमत्र भावना–इह कर्मप्रायोग्यवर्गणान्तःपातिनः सन्तः कर्मपरमाणवो न तथाविधविशिष्टरसोपेता आसीरन्, किन्तु प्रायो नीरसा एकस्वरूपाश्च । यदा तु जीवेन गृह्यन्ते, तदानीं ग्रहणसमये एव तेषां काषायिकेणाध्यवसायेन सर्वजीवेभ्योऽप्यनन्तगुणा रसाविभागा आपद्यन्ते, ज्ञानावरकत्वादिविचित्रस्वभावता च, अचिन्त्यत्वात् जीवानां पुद्गलानां च शक्तेः । न चैतदनुपपन्नम्, तथा दर्शनात् । तथाहि–शुष्कतृणादिपरमाणवोऽत्यन्तनीरसा अपि गवादिभिर्गृहीत्वा विशिष्टक्षीरादिरसरूपतया च परिणम्यन्ते इति ॥ २९ ॥

(उ०)—तदेवमुक्तौ प्रकृतिप्रदेशबन्धौ, सम्प्रति स्थित्यनुभागबन्धप्ररूपणावसरः । तत्र बहुवक्तव्यत्वात् बहुवक्तव्यज्ञानेऽल्पवक्तव्यस्य सुज्ञानत्वसंभवात्तादृशशिष्येच्छानुरोधेन प्रथमतोऽनुभागबन्धस्यैव प्ररूपणा क्रियते—तत्र चतुर्दशानुयोगद्वाराणि—अविभागप्ररूपणा १, वर्गणाप्ररूपणा २, स्पर्धकप्ररूपणा ३, अन्तरप्ररूपणा ४, स्थानप्ररूपणा ५, कण्डकप्ररूपणा ६, षट्स्थानकप्ररूपणा ७, अधस्तनस्थानप्ररूपणा ८, वृद्धिप्ररूपणा ९, समयप्ररूपणा १०, यवमध्यप्ररूपणा ११, ओजोयुग्मप्ररूपणा १२, पर्यवसानप्ररूपणा १३, अल्पबहुत्वप्ररूपणा चेति १४ । तत्रादावविभागप्ररूपणां कुर्वन्नाह—इहानुभागस्य हेतवः काषायिका अध्यवसायाः 'ठिइअणुभागं कसायओ कुणइ'त्ति वचनात् । ते च द्विधा—शुभा अशुभाश्च । उभयेऽपि प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणाः, केवलं शुभा विशेषाधिकाः; सोपानारोहणावतरणतुल्यानामुभयेषां साम्येऽपि येष्वध्यवसायेषु वर्तमानः क्षपकः श्रेणिमारोहति तेभ्यः प्रतिपातो नास्तीति शुभानाम-

शुभेभ्यो विशेषाधिक्यसंभवात् । एवं स्थिते स्वप्रत्यय इत्यत्र सार्वविभक्तिकस्तस् प्रत्यय इति स्वस्मात्मनः संबद्धेन प्रत्ययेनानुभागबन्धं प्रति कारणभूतेन केनचिदेकेन शुभेनाशुभेन वाऽध्यवसायेनेत्यर्थः । जीवो ग्रहणसमये-योग्यपुद्गलादानसमये सर्वेषु कर्मप्रदेशेष्वेकैकस्मिन् कर्मपरमाणावित्यर्थः गुणान् रसस्य निर्विभागान् भागान् सर्वजीवानन्तगुणानुत्पादयति । अयं भावः-पूर्वं हि कर्मप्रायोग्यवर्गणान्तःपातिनः कर्मपरमाणवो न तथाविधविशिष्टरसोपेता आसीरन् किंतु प्रायो नीरसा एकस्वरूपाश्च । ग्रहणसमय एव च जीवस्य काषायिकेनाध्यवसायेन तेषां सर्वजीवेभ्योऽनन्तगुणा रसाविभागा आपद्यन्ते ज्ञानावारकत्वादिविचित्रस्वभावता च, जीवानां पुद्गलानां च शक्तेरचिन्त्यत्वात् । न चैतदनुपपन्नं, शुष्कतृणादिपरमाणूनामत्यन्तनीरसानामपि गवादिभिर्गृहीतानां क्षीरादिरूपतया सप्तधातुरूपतया च परिणामदर्शनात् ॥ २९ ॥

ते रसअविभागपलिच्छेदा किं सव्वकम्मप्पदेसेसु सरिसा उआहु विसरिसा? तं णिरूवणत्थं वग्गणपरूवणा भणन्ति—

सव्वप्पगुणा ते पढमवग्गणा सेसिया विसेसूणा । अविभागुत्तरियाओ सिद्धाणमणंतभागसमा ॥३०॥

(चू०)—'सव्वप्पगुणा ते पढमवग्गण'त्ति-जेसि कम्मप्पदेसाणं सव्वत्थोवा रसअविभागपलिच्छेदा ते पढमवग्गणा भवन्ति । ते सव्वबहुगा कम्मप्पदेसा । 'सेसिगा विसेसूण'त्ति-पढमवग्गणातो बितितवग्गणाए कम्मप्पदेसा विसेसहीणा, ततो ततितवग्गणाए कम्मपदेसा विसेसहीणा, एवं जाव उक्कोसिता वग्गणा । 'अविभागुत्तरिग'त्ति-पढमवग्गणातो बितियवग्गणा एगेण अविभागपलिच्छेदेणं अब्भहिगा । एवं एक्केक्केणं अवि-

भागेणं अब्भहिगातो वग्गणातो ततो केत्तितो ? भण्णइ–'सिद्धाणमणंतभागसम'त्ति–तातो वग्गणातो अभवसिद्धिएहिं अणंतगुणातो सिद्धाणं अणंतभागो ॥ ३० ॥

(मलय०)—अत्राह–ननु तान् रसस्याविभागान् किं सर्वेष्वपि कर्मपरमाणुषु तुल्यानुत्पादयति आहोश्चिद्विषमान् ? उच्यते–विषमान्। तथाहि–केषुचित्परमाणुषु स्तोकान्,तांश्च जघन्यतोऽपि सर्वजीवानन्तगुणान्। केषुचित्तेभ्योऽपि प्रभूतान्। केषुचिच्च प्रभूततमान्। तत्र न ज्ञायते केषु कियन्त इति तन्निरूपणार्थं वर्गणादिप्ररूपणामाह—'सव्वे'त्ति। येषां परमाणूनां समस्तान्यपरमाण्वपेक्षया 'अल्पगुणाः'–स्तोका रसाविभागास्ते सर्वाल्पगुणाः परमाणवः समुदिताः प्रथमा वर्गणा, तस्यां च कर्मपरमाणवोऽतिशयेन प्रभूताः। शेषाश्च वर्गणा विशेषहीनाः कर्मपरमाण्वपेक्षया। तथाहि–प्रथमवर्गणापेक्षया द्वितीयवर्गणायां कर्मपरमाणवो विशेषहीनाः, ततोऽपि तृतीयस्यां विशेषहीनाः, एवं तावद्वाच्यं यावत्सर्वोत्कृष्टा वर्गणा। एताश्च कथंभूता इत्याह–'अविभागुत्तरियाउ'त्ति–अविभागोत्तराः–एकैकस्नेहाविभागाधिका इत्यर्थः। तथाहि–प्रथमवर्गणापरमाण्वपेक्षया ये परमाणव एकेन रसाविभागेनाभ्यधिकास्तेषां समुदायो द्वितीया वर्गणा, तेभ्योप्येकेन रसाविभागेनाधिकानां समुदायस्तृतीया वर्गणा, एवमेकैकाविभागवृद्ध्या वर्गणास्तावद्वक्तव्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति इति ॥ ३० ॥

(उ०)—अत्र कश्चिदाह–ननु तान् रसाविभागान् किं सर्वेष्वपि कर्मपरमाणुषु तुल्यान् जनयत्याहोश्चिद्विषमान् ? उच्यते–विषमान्। तथाहि—केषुचित् स्तोकान् तांश्च जघन्यतोऽपि सर्वजीवानन्तगुणान्, केषुचित्तेभ्योऽपि प्रभूतान्, केषुचिच्च प्रभूततमान्। तत्र न ज्ञायते केषु कियन्त इति तद्व्यक्तये वर्गणादि प्ररूपयितुमाह—सर्वेभ्योऽन्यपरमाणुभ्योऽल्पे स्तोका गुणाः–रसाविभागा येषां ते

अनुभागस्थानचित्रम्।




परमाणवः समुदिताः प्रथमवर्गणा । तस्यां च कर्मपरमाणवोऽतिप्रभूताः । शेषाश्च वर्गणा विशेषहीनाः कर्मपरमाण्वपेक्षया, तथाऽविभागोत्तरा एकैकस्नेहाविभागाधिकाः सिद्धानामनन्तभागसमा वाच्याः । तथाहि—प्रथमवर्गणागतपरमाण्वपेक्षया ये परमाणव एकेन रसाविभागेन वृद्धास्तेषां समुदायो द्वितीया वर्गणा। ते च प्रथमवर्गणागतपरमाण्वपेक्षया विशेषहीनाः। तेभ्योऽप्येकेन रसाविभागेनाधिकानां समुदायस्तृतीया वर्गणा । ते च द्वितीयवर्गणागतपरमाण्वपेक्षया विशेषहीनाः । एवमुत्तरोत्तरं रसाविभागवृद्धिपरमाणुविशेषहानी तावदभ्यूह्ये यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा वर्गणा भवन्ति ॥ ३० ॥

नातो वग्गणातो किं संतरातो निरंतरातो ? अतो फड्डगपरूवणा भण्णति—

**फड्डगमणंतगुणिअं सव्वजिएहिं पि अंतरं एवं । सेसाणि वग्गणाणं समाणि ठाणं पढममित्तो ॥३१॥**

(चू०)—अणंतातो वग्गणातो अभवसिद्धिएहिं अणंतगुणातो एयं एगं फड्डगं । एवं अणंता फड्डगा अभवसिद्धिएहिं अणंतगुणा सिद्धाणं अणंतभागो । अंतरपरूवणाए एक्केक्कस्स फड्डगस्स अंतरं किं पमाणं ? भण्णति—'अणंतगुणितं सव्वजिएहिंपि अंतरं'ति। पढमफड्डगस्स चरिमवग्गणाउ अण्णस्स फड्डगस्स एगुत्तरा णत्थि, बिउत्तरा नत्थि, जाव असंखेज्ज(अणंत)अविभागुत्तरा णत्थि, सव्वजीवाणं अणंतगुणं अंतरं । सव्वजीवाणंतगुणाणंतरं अण्णस्स आदिवग्गणा[ए] । 'एवं सेसाणि वग्गणाणं समाणि'त्ति—एवमेव सेसगाणि फड्डगाणि नेयव्वाणि अंतराणि य, ते य फड्डगा पढमफड्डगवग्गणाहिं तुल्ला। 'ठाणं पढममेत्तो'त्ति—एवं अणंताणि फड्डगाणि अभवसिद्धिएहिं अणंतगुणाणि सिद्धाणं अणंतभागो एगं अणुभागबंधज्झवसाणट्ठाणं वुच्चति, एवं असंखेज्जलोगागासपदेसमेत्ताणि अणुभागबंधज्झवसाणट्ठाणाणि ॥ ३१ ॥

(मलय०)—कृता वर्गणाप्ररूपणा,सम्प्रति स्पर्धकप्ररूपणामाह—'फड्डग'त्ति। अभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा अनन्ता वर्गणा एकं स्पर्धकम् । एषा स्पर्धकप्ररूपणा । सम्प्रत्यन्तरप्ररूपणा क्रियते—इत ऊर्ध्वमेकेन रसाविभागेनाभ्यधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः, किन्त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरभ्यधिकाः प्राप्यन्ते । ततस्तेषां समुदायो द्वितीयस्य स्पर्धकस्य प्रथमा वर्गणा । तत एकेन रसाविभागेनाधिकानां परमाणूनां समुदायो द्वितीया वर्गणा, द्वाभ्यां रसाविभागाभ्यामधिकानां परमाणूनां समुदायस्तृतीया वर्गणा, एवमेकैकरसाविभागवृद्ध्या वर्गणास्तावद्वाच्या याव-

द्भव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । ततस्तासां समुदायो द्वितीयं स्पर्धकम् । ततः पुनरप्यत ऊर्ध्वमेकेन रसाविभागेनाभ्यधिकाः परमाणवो न प्राप्यन्ते, नापि द्वाभ्यां, नापि त्रिभिः, नापि संख्येयैः, नाप्यसंख्येयैः, नाप्यनन्तैः किन्त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैः । ततस्तेषां समुदायस्तृतीयस्य स्पर्धकस्य प्रथमा वर्गणा । ततः पुनरप्यत ऊर्ध्व यथोत्तरमेकैकरसाविभागवृद्धया द्वितीयादिका वर्गणास्तावद्वाच्या यावदभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभागकल्पा भवन्ति । ततस्तासां समुदायस्तृतीयं स्पर्धकम् । एवं स्पर्धकानि तावद्वाच्यानि यावदभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानि भवन्ति । तेषां समुदाय एकमनुभागबन्धस्थानम् । तथा चाह–'अणंतगुणियं सव्वजिएहिं पि' इत्यादि । प्रथमस्पर्धकचरमवर्गणाया द्वितीयस्पर्धकप्रथमवर्गणायाश्चान्तरमपि सर्वजीवेभ्योऽनन्तगुणितं द्रष्टव्यम् । एषान्तरप्ररूपणा। एवं शेषाण्यपि स्पर्द्धकान्यन्तराणि च यथोक्तप्रमाणान्यवगन्तव्यानि । तानि च स्पर्द्धकानि एकस्पर्द्धकवर्गणानां समानि, अभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानीत्यर्थः । एकं प्रथमं सर्वजघन्यमनुभागबन्धस्थानं भवति । अनुभागबन्धस्थानं नामैकेन काषायिकेणाध्यवसायेन गृहीतानां कर्मपरमाणूनां रसस्पर्धकसमुदायपरिमाणम् ॥ ३१ ॥

(उ०)—कृता वर्गणाप्ररूपणाऽथ स्पर्धकप्ररूपणामाह—ताः सिद्धानन्तभागकल्पा अनन्ता वर्गणा एकं स्पर्द्धकं भवति। एषा स्पर्द्धकप्ररूपणा। अथान्तरप्ररूपणा क्रियते–इत ऊर्ध्वमेकादिरसाविभागाधिकाः परमाणवो न प्राप्यन्ते, किंत्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणैरधिकाः प्राप्यन्ते, ततस्तेषां समुदायो द्वितीयस्पर्द्धकस्य प्रथमा वर्गणा । तत एकैकरसाविभागवृद्ध्याऽभव्यानन्तगुणसिद्धानन्तभागकल्पा वर्गणा वाच्याः, तासां समुदायो द्वितीयं स्पर्द्धकम् । तत ऊर्ध्वं पुनरेकादिरसाविभागवृद्धाः परमाणवो न लभ्यन्ते, किं तु सर्वजीवानन्तगुणैरनन्तानन्तैरेवाधिकाः, ततस्तेषां समुदायस्तृतीयस्पर्द्धकस्य प्रथमा वर्गणा । तत एकैकरसाविभागवृद्ध्या सिद्धानन्तभागाऽभ-

ऽयानन्तगुणा वर्गणा वाच्याः । तासां समुदायस्तृतीयं स्पर्द्धकम् । एवं स्पर्द्धकान्यप्यभव्येभ्योऽनन्तगुणानि सिद्धानामनन्तभागकल्पानि भवन्ति । तेषां समुदाय एकमनुभागबन्धस्थानम् । तथा चाह—अन्तरं प्रथमस्पर्द्धकचरमवर्गणाया द्वितीयस्पर्द्धकप्रथमवर्गणायाश्च सर्वजीवेभ्योऽनन्तगुणितं द्रष्टव्यम् । एषाऽन्तरप्ररूपणा । 'सव्वजिएहिं पि' इत्यत्रापेर्भिन्नक्रमस्य शेषाणीत्यनन्तरं योजनादेवं शेषाण्यपि स्पर्द्धकान्यन्तराणि च यथोक्तप्रमाणानि वाच्यानि । तानि च स्पर्द्धकानि वर्गणानाम्—एकस्पर्द्धकवर्गणानां समानि अभव्येभ्योऽनन्तगुणानि सिद्धानन्तभागकल्पानीत्यर्थः, एकं प्रथमं सर्वजघन्यं स्थानम्—अनुभागस्थानं भवति । अनुभागबन्धस्थानं नाम एकेन काषायिकेणाध्यवसायेन गृहीतानां कर्मपरमाणूनां रसस्पर्द्धकसमुदायपरिमाणम् ॥ ३१ ॥

**एत्तो अंतरतुल्लं अंतरमणंतभागुत्तरं बिइयमेवं । अंगुल असंखभागो अणंतभागुत्तरं कंडं ॥३२॥**

(चू०)—'अंतरं'ति–पढमस्स अज्झवसाणट्ठाणस्स अंतिमफड्डगस्स अंतिमवग्गणाते अविभागपलिच्छेदेहिंतो बितितस्स अणुभागज्झवसाणट्ठाणस्स पढमस्स फड्डगस्स पढमाए वग्गणाते रसअविभागपलिच्छेदेहिं एकेण रसअविभागपलिच्छेदेण अहिगा ण होंति, दोहिं ण होंति, एवं जाव असंखेज्जेहिं ण होंति, सव्वजीवेहिं अणंतगुणेण रसअविभागपलिच्छेदरासिणा अब्भहिगा बितियस्स अज्झवसाणट्ठाणस्स पढमा वग्गणा। सेसं पढमज्झवसाणं ट्ठाणं सरिसं । एवं सेसाणि वि अज्झवसाणठाणाणि नेयव्वाणि । सव्वेसिं अंतराणि सरिसाणि । पढमज्झवसाणट्ठाणाओ बितियज्झवसाणट्ठाणं अणंतभागब्भहियं । एवं 'अंगुलअसंखभागो अणंतभागोत्तरं कंडगं'-ति–एवं अंगुलमेत्ताए सेढीए असंखेज्जतिभागमेत्ताणि अज्झवसाणट्ठाणाणि अणंतभागब्भहिगाणि होऊणं कंडगं

होति । एयं एक्कं कंडगं ॥ ३२ ॥

(मलय०)—कृता स्थानप्ररूपणा । कण्डकप्ररूपणार्थमाह—'एत्तो'त्ति । इतः प्रथमस्थानादारभ्य द्वितीयस्थानादर्वाक् अन्तरमन्तरतुल्यं-प्रागुक्तप्रमाणान्तरतुल्यं द्रष्टव्यम् । इदमुक्तं भवति—यथा प्रथमस्पर्धकचरमवर्गणाया द्वितीयस्पर्धकादिवर्गणायाश्चान्तरं सर्वजीवेभ्योऽनन्तगुणं समुद्दिष्टम्, एवमिहापि प्रथमस्थानान्तिमस्पर्धकचरमवर्गणाया द्वितीयस्थानाद्यस्पर्धकप्रथमवर्गणायाश्चान्तरं सर्वजीवेभ्योऽनन्तगुणमवगन्तव्यम् । तच्च द्वितीयस्थानं स्पर्धकापेक्षयाऽनन्तभागोत्तरम्—अनन्तभागवृद्धम् । यावन्ति प्रथमे स्थाने स्पर्धकानि तावद्भ्योऽनन्तभागाधिकानि द्वितीये स्थाने स्पर्धकान्यवसेयानीत्यर्थः । एवं यथोत्तरमनन्तभागवृद्धान्युपदर्शितप्रकारेण स्थानानि तावद्वाच्यानि यावदङ्गुलासंख्येयभागगताकाशप्रदेशराशिप्रमाणानि भवन्ति । एतेषां च समुदाय एकं कण्डकम् । 'अणंतभागुत्तरं'ति—अनन्तभागोत्तरं अनन्तभागोत्तरस्थानसमुदायरूपत्वात्कण्डकमप्यनन्तभागोत्तरमुक्तम् । एषा कण्डकप्ररूपणा । सम्प्रति षट्स्थानप्ररूपणा क्रियते—तस्मात् प्रथमात् कण्डकात् परं यदन्यदनुभागबन्धस्थानं भवति तत्स्पर्धकापेक्षयाऽसंख्येयभागाधिकम् । तस्मात्पराणि तु कण्डकमात्राणि स्थानानि यथोत्तरमनन्तभागवृद्धानि । ततः परं पुनरप्येकमन्यदनुभागबन्धस्थानमसंख्येयभागाधिकम् । ततः पुनरपि कण्डकमात्राणि स्थानानि यथोत्तरमनन्तभागवृद्धानि । ततो भूयोऽप्येकमसंख्येयभागाधिकं स्थानम् । एवमनन्तभागाधिकैः कण्डकप्रमाणैः स्थानैर्व्यवहितान्यसंख्येयभागाधिकानि स्थानानि तावद्वक्तव्यानि यावत्तान्यपि कण्डकमात्राणि भवन्ति । कण्डकं च समयपरिभाषयाऽङ्गुलमात्रक्षेत्रासंख्येयभागगताकाशप्रदेशराशिसंख्याप्रमाणमभिधीयते । ततश्चरमादसंख्येयभागाधिकात् स्थानात् पराणि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि स्थानानि वाच्यानि । ततः संख्येयभागाधिकमेकं स्थानं वक्तव्यम् । ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि ताव-

न्ति पुनरपि तथैवाभिधाय पुनरप्येकं संख्येयभागाधिकं स्थानं वक्तव्यम् । अमूनि चैवं संख्येयभागाधिकानि स्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति । तत उक्तक्रमेण भूयोऽपि संख्येयभागाधिकस्थानप्रसङ्गे संख्येयगुणाधिकमेकं स्थानं वक्तव्यम् । ततः पुनरपि मूलादारभ्य यावन्त्यनुभागबन्धस्थानानि प्रागतिक्रान्तानि तावन्ति तथैव वाच्यानि । ततः पुनरप्येकं संख्येयगुणाधिकं स्थानं वक्तव्यम् । ततो भूयोऽपि मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तावन्त्यनुभागबन्धस्थानानि तथैव वक्तव्यानि । ततः पुनरप्येकं संख्येयगुणाधिकं स्थानं वक्तव्यम् । अमून्यप्येवं संख्येयगुणाधिकानि स्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति । ततः पूर्वपरिपाट्या पुनः संख्येयगुणाधिकस्थानप्रसङ्गेऽसंख्येयगुणाधिकं स्थानं वक्तव्यम् । ततः पुनरपि मूलादारभ्य यावन्त्यनुभागबन्धस्थानानि प्रागतिक्रान्तानि तावन्ति तथैव पुनरपि वाच्यानि । ततः पुनरप्येकमसंख्येयगुणाधिकं स्थानं वक्तव्यम् । ततो भूयोऽपि मूलादारभ्य तावन्त्यनुभागबन्धस्थानानि वक्तव्यानि । ततः पुनरप्येकमसंख्येयगुणाधिकं स्थानं वक्तव्यम् । अमूनि चैवमसंख्येयगुणाधिकानि स्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति । ततः पूर्वपरिपाट्या पुनरप्यसंख्येयगुणाधिकस्थानप्रसङ्गेऽनन्तगुणाधिकं स्थानं वक्तव्यम् । ततः पुनरपि मूलादारभ्य यावन्त्यनुभागबन्धस्थानानि प्रागभिहितानि तावन्ति पुनरपि तथैव वाच्यानि । ततो भूयोऽप्येकमनन्तगुणाधिकं स्थानं वक्तव्यम् । ततो भूयोपि मूलादारभ्य तावन्ति स्थानानि तथैव वक्तव्यानि । ततः पुनरप्येकमनन्तगुणाधिकं स्थानं वक्तव्यम् । एवमनन्तगुणाधिकानि स्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति इति ॥ ३२ ॥

(उ०)—कृता स्थानप्ररूपणा । अथ कण्डकप्ररूपणार्थमाह—इतः प्रथमस्थानादारभ्य द्वितीयस्थानादर्वागन्तरं अन्तरतुल्यं—प्रागुक्तप्रमाणान्तरतुल्यं द्रष्टव्यम् । यथा प्रथमस्पर्द्धकचरमवर्गणाया द्वितीयस्पर्द्धकप्रथमवर्गणायाश्चान्तरं सर्वजीवानन्तगुणमुक्तं तथा प्रथमस्था-

नान्तिमस्पर्द्धकचरमवर्गणाया द्वितीयस्थानाद्यवर्गणायाश्चान्तरं सर्वजीवानन्तगुणं वाच्यमित्यर्थः। तच्च द्वितीयस्थानमनन्तभागोत्तरं यथोत्तरानन्तभागाधिकस्पर्द्धकान्वितमित्यर्थः। एवं यथोत्तरमनन्तभागवृद्धानि स्थानानि तावद्वाच्यानि यावदङ्गुलासंख्येयभागगताकाशप्रदेशप्रमाणानि भवन्ति। एतेषां समुदाय एकं कण्डकम्। एतच्चानन्तभागोत्तरस्थानसमुदायरूपत्वादनन्तभागोत्तरं कण्डकम्। एषा कण्डकप्ररूपणा।

**एक्कं असंखभागेणणंतभागुत्तरं पुणो कंडं। एवं असंखभागुत्तराणि जा पुव्वतुल्लाइं ॥ ३३ ॥**

(चू०)—ततो एक्कं असंखेज्जतिभागवड्ढिट्ठाणं उट्ठेति। 'अणंतभागुत्तरं पुणो कंडं'ति-ततो पुणो अणंतभागब्भहिअं वितिअं अज्झवसाणट्ठाणं ति। एवं अणंतभागब्भहिआणि अंगुलस्स असंखेज्जतिभागमेत्ताणि गताणि। ततो पुणो एक्कं असंखेज्जतिभागब्भहितं ट्ठाणं उट्ठेति। पुणो अणंतभागब्भहिगाणि अज्झवसाणट्ठाणाणि अंगुलस्स असंखेज्जतिभागमेत्ताणि। पुणो एक्कं असंखेज्जतिभागं अज्झवसाणट्ठाणं। एवं णेयव्वं जाव जाणि अंतरंतरे उट्ठेन्ति असंखेज्जतिभागब्भहिगट्ठाणाणि। ताणि अंगुलस्स असंखेज्जतिभागमेत्ताणि उट्ठिताणि 'जा पुव्वतुल्लाणि' जाव पुव्वकंडगतुल्लाणि ॥ ३३ ॥

(मलय०)—इदानीं सूत्रमनुस्रियते—'एगं'ति। ततः प्रथमात् कण्डकादुपरि एकमनुभागबन्धस्थानम्। 'असंखभागेण'-असंख्येयेन भागेनाधिकं द्रष्टव्यं पूर्वस्थानगतस्पर्धकापेक्षयाऽसंख्येयभागाधिकैः स्पर्धकैरधिकं द्रष्टव्यमित्यर्थः। ततः पुनरप्यनन्तभागोत्तरं कण्डं—यथोत्तरमनन्तभागवृद्धानां स्थानानां कण्डकम्। ततः पुनरप्येकमसंख्येयभागाधिकं स्थानम्। एवमनन्तभागवृद्धकण्डकव्यवहितान्यसंख्येयभागाधिकानि स्थानानि तावद्वक्तव्यानि यावत्पूर्वतुल्यानि भवन्ति, कण्डकमात्राणि भवन्तीत्यर्थः। ततः पुनरप्यनन्तभागवृद्धस्थानानां

कण्डकमभिधाय ततः परमेकं संख्येयभागोत्तरं–संख्येयभागाधिकमेकं स्थानं द्रष्टव्यम् ॥ ३३ ॥

(उ०)—अथ षट्स्थानकप्ररूपणा क्रियते—तस्मात् प्रथमात् कण्डकात्परमेकमनुभागबन्धस्थानमसंख्येयेन भागेनाधिकं पूर्वस्थानगतस्पर्द्धकापेक्षयाऽसंख्येयभागाधिकैः स्पर्द्धकैरधिकं द्रष्टव्यमित्यर्थः। ततः पुनरप्यनन्तभागोत्तरं कण्डं यथोत्तरमनन्तभागवृद्धानां स्थानानां कण्डकम्। ततः पुनरप्येकमसंख्येयभागाधिकं स्थानम्। एवमनन्तभागवृद्धकण्डकव्यवहितान्यसंख्येयभागाधिकानि स्थानानि तावद्वक्तव्यानि यावत्पूर्वतुल्यानि भवन्ति, कण्डकमात्राणि भवन्तीत्यर्थः ॥ ३३ ॥

**एक्कं संखेज्जुत्तरमेत्तोतीयाणतिच्छिया बिइयं। ताणि वि पढमसमाइं संखेज्जगुणोत्तरं एक्कं ॥ ३४ ॥**

(चू०)—ततो असंखेज्जभागुत्तरातो पुणो एक्कं अणंतभागुत्तरं कंडगं गंतूणं एक्कं संखेज्जतिभागुत्तरं ठाणं उट्ठेति। 'एत्तोऽतीयाणऽतितिथिया बितितं'ति–पुणो मूलतो आढवेत्तु जत्तियाणि अज्झवसाणट्ठाणाणि गताणि ततिताणि अण्णाणि अज्झवसाणट्ठाणाणि गंतूण बितीयं संखेज्जभागुत्तरं ट्ठाणं उट्ठेति। पुणो ततियाणि चेव अज्झवसाणट्ठाणाणि गंतूणं ततितं संखेज्जभागुत्तरं अज्झवसाणं ट्ठाणं उट्ठेति। एवं अंतरंतरे जाणि संखेज्जभागुत्तराणि अज्झवसाणट्ठाणाणि 'ताणि वि पढमसमाइं'ति–ताणि वि मूलिल्लकंडगतुल्लाणि जाव पुण्णाणि। ताहे 'संखेज्जगुणोत्तरं एक्कं'ति–संखेज्जभागुत्तरं कंडगं गंतूणं पुणो संखेज्जभागुत्तराइं उट्ठेति ति? ण उट्ठेइ, तम्मि ट्ठाणे एक्कं संखेज्जगुणुत्तरं ठाणं उट्ठेति ॥ ३४ ॥

(मलय०)—तथा चाह–'एगं' ति। 'एत्तो' त्ति–इतः संख्येयभागाधिकात् स्थानात् परतो मूलादारभ्य यावन्त्यनुभागबन्धस्थानानि प्रा-

गतिक्रान्तानि तावन्त्यतिक्रम्य गत्वा द्वितीयं संख्येयभागाधिकं स्थानं वक्तव्यम्। तान्यपि संख्येयभागाधिकानि स्थानान्युपदर्शितप्रकारेण तावद्वाच्यानि यावत्प्रथमसमानि भवन्ति–प्रथमकण्डकतुल्यानि भवन्तीत्यर्थः। ततः पूर्वपरिपाट्या संख्येयभागाधिकस्थानप्रसङ्गे 'संख्येयगुणोत्तरं'–संख्येयगुणाधिकं स्थानमेकं वक्तव्यम् ॥ ३४ ॥

(उ०)—ततः पुनरप्यनन्तभागवृद्धानां स्थानानां कण्डकमभिधाय एकं संख्येयोत्तरमिति–संख्येयभागाधिकं स्थानं वक्तव्यम्। 'एत्तो' त्ति–इतः संख्येयभागाधिकात् स्थानात् परतो मूलादारभ्य यावन्त्यनुभागबन्धस्थानानि प्रागतीतानि तान्यतीत्य–गत्वा द्वितीयं संख्येयभागाधिकं स्थानं वक्तव्यम्। तान्यपि संख्येयभागाधिकानि स्थानानि तावद्वाच्यानि यावत्प्रथमसमानि भवन्ति, प्रथमकण्डकतुल्यानि भवन्तीत्यर्थः। ततः पूर्वोक्तदिशा संख्येयभागाधिकस्थानप्रसङ्गे संख्येयगुणोत्तरं–संख्येयगुणाधिकं स्थानमेकं वक्तव्यम् ॥ ३४ ॥

**एत्तो तीयाणि अइच्छिआण वितियमवि ताणि पढमस्स। तुल्लाणऽसंखगुणियं एक्कं तीयाण इक्कम्म ॥३५॥**

**वितियं ताणि समाइं पढमस्साणंतगुणियमेगं तो। तीयाणऽतिच्छियाणं ताणि वि पढमस्स तुल्लाणि॥ ३६ ॥**

(चू०)—ततो संखेज्जगुणुत्तरातो अज्झवसाणट्ठाणातो तीताणि अज्झवसाणट्ठाणाणि गंतूणं वितितं संखेज्जगुणुत्तरं अज्झवसाणट्ठाणं उट्ठेति। 'ताणि पढमस्स तुल्लाणि' त्ति–ताणि संखेज्जगुणुत्तराणि अज्झवसाणट्ठाणाणि अंतरंतरे उट्ठिताणि ताणि मूल्लिल्लअणंतभागुत्तरवड्ढिट्ठाणेहिं तुल्लाणि। 'असंखिज्जगुणियं एक्कं' ति–संखेज्जगुणुत्तराणं अज्झवसाणट्ठाणाणं कंडगं गंतूणं पुणो संखेज्जगुणुत्तरं ट्ठाणं उट्ठेतित्ति? ण उट्ठेति, तंमि ट्ठाणे असंखेज्जगुणुत्तरं एक्कं

ठाणं उट्ठेति। 'तीयाणतिकम्म'—हिट्ठिल्लाणि सव्वट्ठाणाणि अतिच्छिऊण पुणो बीयं असंखेज्जगुणुत्तरं अज्झवसाणट्ठाणं उट्ठेति। 'ताणि समाणि पढमस्स'त्ति—ताणि असंखेज्जगुणब्भहिगट्ठाणाणि अंतरंतरे उट्ठिताणि पढमस्स अणंतभागवड्ढिकंडगस्स तुल्लाणि। 'अणंतगुणियमेगं तो'त्ति—असंखेज्जगुणब्भहिगाणं अज्झवसाणट्ठाणाणं कंडगं गंतूण पुणो असंखेज्जगुणब्भहितं ट्ठाणं उट्ठेति त्ति? ण उट्ठविज्जति, तंमि ट्ठाणे एक्कं अणंतगुणब्भहितं ट्ठाणं उट्ठेतित्ति। 'तीताणतित्थितातां'ति—सव्वाणि तीताणि ट्ठाणाणि अतिच्छितुण बितितं अणंतगुणवड्ढिट्ठाणं उट्ठेति। पुणो तत्तिताणि चेव अज्झवसाणट्ठाणाणि अतिच्छिऊण तइयं अणंतगुणवड्ढिट्ठाणं उट्ठेति। 'ताणि वि पढमस्स तुल्लाणि'त्ति—ताणि वि अंतरंतरे उट्ठिताणि अणंतगुणवड्ढिट्ठाणाणि मूलिल्लअणंतभागवड्ढिकंडगतुल्लाणि। ततो अंतिमातो अणंतगुणवड्ढिट्ठाणातो मूलिल्लातिं पंचवि वड्ढिट्ठाणाइं गंतूणं अणंतगुणवड्ढिट्ठाणं उट्ठेति त्ति? न उट्ठियं। एतं पढमं छट्ठाणगं। एतंमि छट्ठाणगे कंडगाणि अत्थि—अणंतभागवड्ढिकंडकं, असंखिज्जभागवड्ढिकंडगं, संखिज्जभागवड्ढिकंडगं, संखिज्जगुणवड्ढिकंडगं, असंखेज्जगुणवड्ढिकंडगं, अणंतगुणवड्ढिकंडगं ॥ ३५–३६ ॥

(मलय०)—एत्तो त्ति—इतः संख्येयगुणोत्तरादनुभागबन्धस्थानात् यावन्ति मूलत आरभ्य प्रागतीतानि—अतिक्रान्तान्यनुभागबन्धस्थानानि तावन्त्यतिक्रम्य द्वितीयं संख्येयगुणाधिकं स्थानं वक्तव्यम्। तान्यप्येवं तावद्वक्तव्यानि यावत्प्रथमस्यानन्तभागवृद्धस्थानकण्डकस्य तुल्यानि भवन्ति। ततः पूर्वपरिपाट्या पुनः संख्येयगुणाधिकस्थानप्रसङ्गेऽसंख्येयगुणाधिकं स्थानमेकं वक्तव्यम्। ततो मूलत आरभ्य यावन्त्यतीतानि तावन्ति भूयोऽप्यतिक्रम्य—गत्वा द्वितीयकमसंख्येयगुणाधिकं स्थानं वक्तव्यम्। 'बिइयं' ति—तान्यप्यसंख्येयगुणाधि-

कानि स्थानानि 'प्रथमस्य'-मूलभूतस्यानन्तभागवृद्धकण्डकस्य 'समानि'-तुल्यानि भवन्ति। ततः पूर्वपरिपाट्या पुनरप्यसंख्येयगुणाधिकस्थानप्रसङ्गे 'अनन्तगुणितं'-अनन्तगुणाधिकं स्थानमेकं वक्तव्यम्। ततो मूलत आरभ्य यानि अनुभागबन्धस्थानानि अतीतानि तानि भूयोऽप्यतिक्रम्य गत्वा द्वितीयमनन्तगुणाधिकं स्थानं वक्तव्यम्। एवं तान्यप्यनन्तगुणाधिकानि स्थानानि तावद्वक्तव्यानि यावत्प्रथमस्यानन्तभागवृद्धस्थानकण्डकस्य तुल्यानि भवन्ति। ततः पूर्वपरिपाट्या पञ्चकवृद्ध्यनन्तरं पुनरप्यनन्तगुणाधिकं स्थानमुत्पद्यते किं वा न? इति चेत्, उच्यते-नोत्पद्यते, षट्स्थानकस्य परिसमाप्तत्वात्। एतत् प्रथमं षट्स्थानकम्॥ ३५-३६॥

(३०)—इतः संख्येयगुणोत्तरादनुभागबन्धस्थानात् यावन्ति मूलत आरभ्य प्रागतिक्रान्तानि स्थानानि तावन्त्यतिक्रम्य द्वितीयं संख्येयगुणाधिकं स्थानं वक्तव्यम्। अपिरेवमर्थे। एवं तानि संख्येयगुणाधिकानि स्थानानि तावद्वक्तव्यानि यावत्प्रथमस्यानन्तभागवृद्धस्थानकण्डकस्य तुल्यानि भवन्ति। ततः पूर्वपरिपाट्या पुनः संख्येयगुणाधिकस्थानप्रसङ्गेऽसंख्येयगुणाधिकं स्थानमेकं वक्तव्यम्। ततो मूलत आरभ्य यावन्त्यतीतानि तावन्ति भूयोऽप्यतिक्रम्य-गत्वा द्वितीयमसंख्येयगुणाधिकं स्थानं वक्तव्यम्। तान्यप्यसंख्येयगुणाधिकानि स्थानानि प्रथमस्य-मूलभूतस्यानन्तभागवृद्धकण्डकस्य समानि-तुल्यानि भवन्ति। ततः पूर्वपरिपाट्या पुनरप्यसंख्येयगुणाधिकस्थानप्रसङ्गेऽनन्तगुणितम्-अनन्तगुणाधिकं स्थानमेकं वक्तव्यम्। 'तो' त्ति-ततो मूलत आरभ्य यान्यतीतानि तान्यतिक्रम्य द्वितीयमनन्तगुणाधिकं स्थानं वक्तव्यम्। तान्यप्येवमनन्तगुणाधिकानि स्थानानि तावद्वक्तव्यानि यावत्प्रथमानन्तभागवृद्धस्थानकण्डकस्य तुल्यानि भवन्ति। ततः पूर्वपरिपाट्या पञ्चवृद्ध्यनन्तरं पुनरप्यनन्तगुणाधिकं स्थानं लभ्यते न वा? इति चेद्, उच्यते—न लभ्यते, षट्स्थानकस्य परिसमाप्तत्वात्। एतत्प्रथमं षट्स्थानकम्॥ ३५-३६॥

एतम्मि छट्ठाणगे एताणि छवड्ढिट्ठाणाणि काए परिवड्ढीए वड्ढतित्ति छट्ठाणवड्ढिपरूवणा भण्णति—

**सव्वजियाणमसंखिज्जलोगसंखिज्जगस्स जेट्ठस्स । भागो तिसु गुणणा तिसु छट्ठाणमसंखिया लोगा ॥३७॥**

(चू०)—'सव्वजियाणमसंखेज्जलोकसंखेज्जगस्स जेट्ठस्स भागो तिसु गुणणा तिसु'त्ति—सव्वजीवेहिं, असंखेज्जलोगेहिं, उक्कस्ससंखेज्जगेण य भागो भागवड्ढीतेहिं भागवड्ढी गुणिए चेव गुणवड्ढी भवति। किं भणियं होति? भण्णइ—पढमस्स अज्झवसाणट्ठाणस्स सव्वजीवेहिं भागो हीरति तंमि भागे हिते जं भागलद्धं सो अणंतभागो भण्णति, तेण अब्भहितं बितितं अज्झवसाणट्ठाणं। बितियस्सवि सव्वजीवेहिं भागो, जं भागलद्धं तेणब्भहिगं बितियातो ततियं अज्झवसाणट्ठाणं । एवं सव्वजीवेहिं भागहारलद्धेणं अणंतरातो अणंतरं अज्झवसाणट्ठाणं वड्ढति अणंतभागवड्ढीते। असंखेज्जभागपरिवड्ढीए का परिवड्ढी ? भण्णइ—असंखेज्जाणं लोगाणं जावतिया आगासपएसा तेहिं भागो पढमस्स कंडगस्स चरिमस्स अणंतभागवड्ढिट्ठाणस्स जं भागलद्धं सो असंखेज्जतिभागो वुच्चति, तेण अब्भहितं पढमकण्डगस्स चरिमट्ठाणस्स उवरिमं ठाणं, तं पढमं असंखेज्जभागवड्ढिट्ठाणं । एवं सेसाण वि असंखेज्जभागवड्ढिट्ठाणाणं वड्ढी भाणियव्वा। संखेज्जभागवड्ढिट्ठाणस्स का परिवड्ढि? भण्णति—जहन्नगेणं असंखेज्जगेणरूवोणेण भागो हीरइ, संखेज्जभागवड्ढिट्ठाणस्स अणंतरस्स हिट्ठिमस्स अज्झवसाणट्ठाणस्स जं भागलद्धं सो संखेज्जइभागो वुच्चइ, तेण अहिगं अज्झवसाणट्ठाणस्स उवरि अज्झवसाणट्ठाणं । एवं सेसाण वि संखेज्जभागवड्ढिट्ठाणाणं वड्ढि भाणियव्वा । एवं संखेज्जगुणवड्ढिट्ठाणस्स वि, णवरि तं चेव उक्कोससंखेज्जगं गुणगारो । एवं असंखेज्जगुण-

वड्ढिट्ठाणस्स वि, णवरि असंखेज्जलोगा गुणागारो। एवं अणंतगुणवड्ढीट्ठाणस्स वि, णवरि सव्वजीवा गुणगारो। पढमस्स छट्ठाणगस्स परिसंमतीते जं उवरिं अणंतरट्ठाणं भवति तं वितियस्स छट्ठाणगस्स आतिट्ठाणं भवति। एयस्स वि पुव्वकम्मेण णिप्पत्ती परिवड्ढीय भाणियव्वा। एवं सेसाणवि छट्ठाणाणं णिप्पत्ती परिवड्ढी य भाणियव्वा। एवं एयाए परिवड्ढिएण णिप्पण्णाणं छट्ठाणाणं किं पमाणं? भण्णइ–'छट्ठाण'मसंखेज्जलोगागासपदेसमेत्ताणि ट्ठाणाणि सव्वाणि। इदाणिं तेसिं चेव छण्हं ट्ठाणाणं हेट्ठट्ठाणस्स परूवणा भण्णइ–पढमस्स असंखेज्जभागवड्ढिट्ठाणस्स हेट्ठतो केवइताणि अणंतभागवड्ढिट्ठाणाणि? भण्णइ–कंडगमेत्ताणि। पढमस्स संखेज्जतिभागवड्ढिट्ठाणस्स हेट्ठतो केवतिताणि असंखेज्जतिभागवड्ढीट्ठाणाणि? भण्णइ–कंडगमेत्ताणि। एवं संखेज्जगुणवड्ढिट्ठाणहेट्ठा संखेज्जभागवड्ढिट्ठाणाणि कंडगमेत्ताणि। असंखेज्जगुणवड्ढिहेट्ठा संखेज्जगुणवड्ढिट्ठाणाणि कंडगमेत्ताणि। अणंतगुणवड्ढिट्ठाणस्स हेट्ठा असंखिज्जगुणवड्ढिट्ठाणाणि कंडगमेत्ताणि। [एवं अंतरेपि]। इयाणिं एगंतरं भन्नइ–पढमस्स संखिज्जइभागवड्ढिट्ठाणस्स हेट्ठओ केवतिताणि अणंतभागवड्ढिट्ठाणाणि? भण्णइ–कंडगवग्गो कंडगं च। एवं संखेज्जतिगुणवड्ढि० असंखेज्जभागवड्ढिट्ठाणाणं कंडगवग्गो कंडगं च। असंखेज्जगुणवड्ढि० संखेज्जभागवड्ढिट्ठाणाणं कंडगवग्गो कंडगं च। पढमस्स अणंतगुणवड्ढिट्ठाणस्स हेट्ठतो संखेज्जगुणवड्ढिट्ठाणाणं कंडगवग्गो कंडगं च। इदाणिं वितियंतरं–पढमस्स संखेज्जगुणवड्ढिट्ठाणस्स हेट्ठतो केवतियाणि अणंतभागवड्ढिट्ठाणाणि? भण्णइ–कंडगघणो दो कंडगवग्गा कंडगं च। पढमस्स असंखेज्जगुणवड्ढिहेट्ठा केवतियाणि असंखभागवड्ढिट्ठाणाणि?

भण्णइ–कंडगघणो दो कंडगवग्गा कंडगं च। अणंतगुणवड्ढिहेट्ठा केवतिताणि संखेज्जभागवड्ढिट्ठाणाणि? भण्णइ–कंडगघणो, दो कंडगवग्गा, कंडगं च। इदाणिं तितंतरं–पढमस्स असंखेज्जगुणवड्ढिट्ठाणस्स हेठा केवतिताणि अणंतभागवड्ढिठाणाणि? भण्णइ–कंडगवग्गवग्गो तिण्णि कंडगघणा तिण्णि कंडगवग्गा कंडगं च। पढमअणंतगुणवड्ढिट्ठाणस्स हेट्ठा केवतिताणि असंखभागवड्ढिट्ठाणाणि? भण्णइ–कंडगवग्गवग्गो तिण्णि कंडगघणा तिण्णि कंडगवग्गा कंडगं च। इदाणिं चतुरंतरं भण्णइ–पढमस्स अणंतगुणस्स वड्ढिट्ठाणस्स हेट्ठतो केवतिताणि अणंतभागवड्ढिट्ठाणाणि? भण्णइ–कंडगंपंचगतं कंडगपंचकस्य परस्पराभ्यासः चत्तारि कंडगवग्गवग्गा (१०२४) छ घणा (३८४) चत्तारि कंडगवग्गा (६४) कंडगं च (४) एवं सेसाणं वि ठाणाणं भाणियव्वं। एतस्स कारणं भण्णति–पुव्वुत्तरासिं पडिरासिऊण हेट्ठिल्लरासि (१०२४) कंडगेण चत्तारिं घेत्तुं रासिं वड्ढाविज्जति कंडगं ति काउं। अस्यायमर्थः–एकान्तरचिन्तायां पूर्वोक्तोऽनन्तभागवृद्धिस्थानकराशिर्निरन्तरतया प्रवृत्तः कण्डकमात्रं वर्तते। ततस्तं पूर्वोक्तं राशिं प्रतिराश्य द्वितीये स्थाने धृत्वा पश्चहिं वा गुणे इति हेट्ठट्ठाणे परूवणया भणिया ॥ ३७ ॥

(मलय०)–अस्मिंश्च षट्स्थानकेऽनन्तभागवृद्धिः, असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्येयगुणवृद्धिः, असंख्येयगुणवृद्धिः, अनन्तगुणवृद्धिश्चोक्ता। तत्र कियन्मात्रेणानन्तासंख्येयसंख्येयतमेन भागेन कियन्मात्रेण वाऽनन्तासंख्येयसंख्येयगुणकारेण वृद्धिर्भवतीति तत्परिज्ञानार्थमाह—'सव्वे'ति। आद्यासु त्रिसृषु वृद्धिष्वनन्तासंख्येयसंख्येयानां भागो यथाक्रमं सर्वजीवानामसंख्येयलोकाकाशप्रदेशानामुत्कृष्ट-

मन संख्येयस्य द्रष्टव्यः। उत्तरासु च त्रिसृषु वृद्धिषु 'गुणना'–गुणकारोऽनन्तासंख्येयसंख्येयानां यथाक्रममेतेषामेव मर्वजीवादीनामव-गन्तव्या। इदमुक्तं भवति–प्रथमस्यानुभागबन्धस्थानस्य सर्वजीवसंख्याप्रमाणेन राशिना भागे हृते मति यल्लब्धं सोऽनन्तभाग इह प्राह्यः, तेनाभ्यधिकं द्वितीयमनुभागस्थानम्। तस्यापि सर्वजीवसंख्याप्रमाणेन राशिना भागे हृते सति यल्लब्धं तेनाभ्यधिकं तृतीयम-नुभागबन्धस्थानम्। एवं यद्यदनुभागबन्धस्थानमनन्तभागवृद्धमुपलभ्यते तत्तत्पाश्चात्यस्य पाश्चात्यस्यानुभागबन्धस्थानस्य सर्वजीवसं-ख्याप्रमाणेन राशिना भागे हृते मति यल्लभ्यते तेन तेनानन्ततमेन भागेनाभ्यधिकमवगन्तव्यम्। तथाऽसंख्येयभागाधिकं नाम पाश्चा-त्यस्यानुभागबन्धस्थानस्यासंख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते सति यल्लभ्यते सोऽसंख्येयतमो भागः। तेनासंख्येयत-मेन भागेनाभ्यधिकमसंख्येयभागाधिकं द्रष्टव्यम्। तथा संख्येयभागाधिकं नाम पाश्चात्यस्यानुभागबन्धस्थानस्य उत्कृष्टेन संख्येयेन भागे हृते मति यल्लभ्यते स संख्येयतमो भागः, तेन संख्येयतमेन भागेनाभ्यधिकमवगन्तव्यम्। तथा संख्येयगुणवृद्धं नाम पाश्चा-त्यमनुभागबन्धस्थानमुत्कृष्टसंख्येयकप्रमाणेन राशिना गुण्यते, गुणिते च मति यावान् राशिर्भवति एतावत्प्रमाणमवगन्तव्यम्। तथाऽ-संख्येयगुणवृद्धं नाम पाश्चात्यमनुभागबन्धस्थानमसंख्येयलोकाकाशप्रदेशसंख्याप्रमाणेन राशिना गुण्यते, गुणिते च सति यावान् राशिर्भवति तावत्प्रमाणमवमेयम्। एवमनन्तगुणवृद्धमपि भावनीयम्। प्रथमस्य षट्स्थानकस्य परिसमाप्तौ सत्यामुपरि यदन्यदनुभाग-स्थानमुपजायतेऽनन्तभागवृद्धं तत् द्वितीयस्य षट्स्थानकस्य प्रथममवगन्तव्यम्। तदपि च द्वितीयं षट्स्थानकं पूर्वक्रमेण सकलमपि वक्तव्यम्। एवं शेषाण्यपि षट्स्थानकानि वक्तव्यानि। तानि च तावद्वक्तव्यानि यावदसंख्येयलोकाकाशप्रदेशराशिप्रमाणानि भवन्ति। तथा चाह–'छट्ठाणमसंखिया लोगा'। अत्र कश्चित्प्रश्नयति–ननु प्रथमानुभागबन्धस्थानस्य सर्वजीवप्रमाणेन राशिना भागोऽपह्रियते

किं रसाविभागापेक्षया उत परमाण्वपेक्षया यद्वा स्पर्धकापेक्षया ? तत्र न तावद्रसाविभागापेक्षया, प्रथमस्थानात् द्वितीयस्थानेऽपि रसाविभागानां संख्येयादिगुणनया प्राप्यमाणत्वात्। तथाहि–प्रथमे स्थाने प्रथमे स्पर्धके प्रथमवर्गणायामनन्ता अपि रसाविभागाः किलासत्कल्पनया सप्त, ततो द्वितीयस्यां वर्गणायामष्टौ, तृतीयस्यां नव, चतुर्थ्यां दश, इदमेकं स्पर्धकम्। इत ऊर्ध्वं त्वेकोत्तरवृद्ध्या रसाविभागा न प्राप्यन्ते, किन्तु सर्वजीवानन्तगुणाधिकाः। ते च किलासत्कल्पनया सप्तदश। एते च द्वितीयस्य स्पर्धकस्य प्रथमवर्गणायाम्। ततो द्वितीयस्यां वर्गणायामष्टादश, तृतीयस्यामेकोनविंशतिः, चतुर्थ्यां विंशतिः, इदं द्वितीयं स्पर्धकम्। ततः पुनरप्यत ऊर्ध्वमेकोत्तरवृद्ध्या रसाविभागा न प्राप्यन्ते, किन्तु सर्वजीवानन्तगुणाधिकाः। ते च किलासत्कल्पनया सप्तविंशतिः। एते च तृतीयस्य स्पर्धकस्य प्रथमवर्गणायाम्। ततो द्वितीयस्यां वर्गणायामष्टाविंशतिः, तृतीयस्यामेकोनत्रिंशत्, चतुर्थ्यां त्रिंशत्, इदं तु तृतीय स्पर्धकम्। ततः पुनरप्यत ऊर्ध्वमेकोत्तरवृद्ध्या रसाविभागा न प्राप्यन्ते, किन्तु सर्वजीवानन्तगुणाभ्यधिकाः। ते च किलासत्कल्पनया सप्तत्रिंशत्। एते चतुर्थस्य स्पर्धकस्य प्रथमवर्गणायाम्। ततो द्वितीयस्यां वर्गणायामष्टात्रिंशत्, तृतीयस्यामेकोनचत्वारिंशत्, चतुर्थ्यां चत्वारिंशत्, इदं चतुर्थं स्पर्धकम्। एतानि च किलासत्कल्पनया प्रथममनुभागबन्धस्थानम्। अत्र च रसाविभागाः सर्वसंख्यया षट्सप्तत्यधिकानि त्रीणि शतानि। इत ऊर्ध्वं त्वेकोत्तरवृद्ध्या रसाविभागा न प्राप्यन्ते किन्तु सर्वजीवानन्तगुणाभ्यधिकाः। ते च किलासत्कल्पनया सप्तचत्वारिंशत्। एते च द्वितीयस्य स्थानस्य प्रथमस्पर्धकस्य प्रथमवर्गणायाम्, ततो द्वितीयस्यां वर्गणायामष्टचत्वारिंशत्, तृतीयस्यामेकोनपञ्चाशत्, चतुर्थ्यां पञ्चाशत्, इदं द्वितीये स्थाने प्रथमं स्पर्धकम्। इत ऊर्ध्वं त्वेकोत्तरवृद्ध्या रसाविभागा न प्राप्यन्ते, किन्तु सर्वजीवानन्तगुणाधिकाः। ते च किलासत्कल्पनया सप्तपञ्चाशत्। एते च द्वितीयस्थाने द्वितीयस्पर्धकस्य प्रथमवर्गणायाम्।

ततो द्वितीयस्यां वर्गणायामष्टपञ्चाशत्, तृतीयस्यामेकोनषष्टिः, चतुर्थ्यां षष्टिः, इदं द्वितीयस्थाने द्वितीयं स्पर्धकम्। इत ऊर्ध्वमेकोत्तरवृद्ध्या रसाविभागा न प्राप्यन्ते, किन्तु सर्वजीवानन्तगुणाधिकाः। ते च किलासत्कल्पनया सप्तषष्टिः। एते च द्वितीये स्थाने तृतीयस्य स्पर्धकस्य प्रथमवर्गणायाम्। ततो द्वितीयस्यां वर्गणायामष्टषष्टिः, तृतीयस्यामेकोनसप्ततिः, चतुर्थ्यां सप्ततिः, इदं द्वितीये स्थाने तृतीयं स्पर्धकम्। तत इत ऊर्ध्वं पुनरप्येकोत्तरवृद्ध्या रसाविभागा न प्राप्यन्ते, किन्तु सर्वजीवानन्तगुणाधिकाः। ते च किलासत्कल्पनया सप्तसप्ततिः। ततो द्वितीयस्यां वर्गणायामष्टसप्ततिः, तृतीयस्यामेकोनाशीतिः, चतुर्थ्यामशीतिः, इदं च द्वितीयस्थाने चतुर्थं स्पर्धकम्। एतानि च किलासत्कल्पनया द्वितीयं स्थानम्। अत्र च रसाविभागाः सर्वसंख्यया षोडशाधिकं सहस्रम्। तदेवं प्रथमस्थानगतरसाविभागापेक्षया द्वितीयस्थाने रसाविभागाः संख्येयगुणाः प्राप्यन्ते। उत्तरस्मिन्नुत्तरस्मिंस्तु स्थाने पूर्वपूर्वस्थानापेक्षया प्रभूताः प्रभूततमाः इति न क्वापि रसाविभागापेक्षया पूर्वस्थानादुत्तरस्य स्थानस्यानन्तभागाधिकत्वं प्राप्यते। नापि परमाण्वपेक्षयाऽनन्तभागाधिकत्वसंभवः, यतो यथा यथाऽनुभागो वर्धते तथा तथा पुद्गलाः स्तोकाः स्तोकतराः प्राप्यन्ते। ततः प्रथमस्थानगतपरमाण्वपेक्षया द्वितीये स्थाने परमाणवः किञ्चिदूना एव भवन्ति, नानन्तभागाधिकाः। एवमुत्तरेष्वपि स्थानेषु पूर्वपूर्वस्थानापेक्षया हीनहीनतरपरमाणुत्वं द्रष्टव्यम्। नापि स्पर्धकापेक्षया प्रथमस्थानादीनां सर्वजीवप्रमाणेन राशिना भागापहारः संभवति, प्रथमस्थानादिगतस्पर्धकानामभव्यानन्तगुणसिद्धानन्तभागकल्पतयाऽतीव स्तोकत्वादिति। अत्रोच्यते—इयं हि षट्स्थानकप्ररूपणा संयमश्रेण्यादिगतसकलषट्स्थानकव्यापकलक्षणतया प्ररूप्यते। ततो यद्यप्यनन्तगुणवृद्धात् स्थानादर्वाक्तनेषु स्थानेषु सर्वजीवप्रमाणेन राशिना स्पर्धकापेक्षया भागहारो न संभवति, तथाप्युत्तरेषु स्थानेष्वन्येष्वपि च द्वितीयादिषु षट्स्थानेषु तथा सर्वेष्वपि संयमश्रेण्यादिगतेषु संभव-

तीति न कश्चिद्विरोधः । बाहुल्येन सर्वत्रापि संभवात् सर्वजीवप्रमाणेन राशिना भागो न्हियत इति वचनाच्च अनन्तगुणवृद्धात् स्थानादर्वागपि पूर्वस्थानेभ्य उत्तरोत्तरस्थानानां सर्वस्तोकानन्तभागाधिकत्वमवसेयम् । यद्यपि च पूर्वपूर्वस्थानापेक्षयोत्तरोत्तरस्थानेषु किञ्चिद्धीनहीनतराः परमाणवः प्राप्यन्ते तथापि स्तोकस्तोकतरैः परमाणुभिर्वर्गणादीनां संभवादुक्तस्वरूपस्पर्धकबाहुल्यं न विरुध्यते । तदेवमुक्ता षट्स्थानकप्ररूपणा । साम्प्रतमधस्तनस्थानप्ररूपणा क्रियते–तत्र प्रथमादसंख्येयभागवृद्धात्स्थानादधः कियन्त्यनुभागबन्धस्थानान्यनन्तभागवृद्धानि? उच्यते–कण्डकमात्राणि । तथा प्रथमात्संख्येयभागवृद्धात्स्थानात् अधः कियन्त्यसंख्येयभागवृद्धानि स्थानानि ? उच्यते–कण्डकमात्राणि । तथा प्रथमात्संख्येयगुणवृद्धात्स्थानादधः कियन्ति संख्येयभागवृद्धानि स्थानानि ? उच्यते–कण्डकमात्राणि । तथा प्रथमादसंख्येयगुणवृद्धात् स्थानादधः कियन्ति संख्येयगुणवृद्धानि स्थानानि ? उच्यते–कण्डकमात्राणि । तथा प्रथमादनन्तगुणवृद्धात् स्थानादधः कियन्त्यसंख्येयगुणवृद्धानि स्थानानि ? उच्यते–कण्डकमात्राणि । इयमुत्तरोत्तरस्थानादधोऽध आनन्तर्येण मार्गणा । इदानीमेकान्तरिता मार्गणा क्रियते–तत्र प्रथमात्संख्येयभागवृद्धात् स्थानादधः कियन्त्यनन्तभागवृद्धानि स्थानानि ? उच्यते–कण्डकवर्गः कण्डकं च । तथा प्रथमात्संख्येयगुणवृद्धात् स्थानादधः कियन्त्यसंख्येयभागवृद्धानि स्थानानि ? उच्यते–कण्डकवर्गः कण्डकं च । तथा प्रथमादसंख्येयगुणवृद्धात् स्थानादधः कियन्ति संख्येयभागवृद्धानि स्थानानि ? उच्यते–कण्डकवर्गः कण्डकं च । तथा प्रथमादनन्तगुणवृद्धात् स्थानादधः कियन्ति संख्येयगुणवृद्धानि स्थानानि ? उच्यते–कण्डकवर्गः कण्डकं च । एवमुक्तप्रकारेण द्व्यन्तरिता त्र्यन्तरिता चतुरन्तरिता च मार्गणा स्वधिया परिभावनीया ॥ ३७ ॥

(उ०)—अस्मिंश्च षट्स्थानके त्रिविधा भागवृद्धिरुक्ता–अनन्तभागवृद्धिरसंख्येयभागवृद्धिः संख्येयभागवृद्धिश्चेति । त्रिविधा च गुणवृ-

स्थानादधः कियन्त्यनन्तभागवृद्धानि स्थानानि ? उच्यते—कण्डकघनो द्वौ कण्डकवर्गौ कण्डकं च। एवं प्रथमादसंख्येयगुणवृद्धादधोऽसंख्येयभागवृद्धानि स्थानानि तावन्त्येव। प्रथमादनन्तगुणवृद्धस्थानादधः संख्येयभागवृद्धस्थानान्यपि तावन्त्येवेत्यवसेयम्। काऽत्र भावना ? इति चेद्, उच्यते—इह प्रथमात्संख्येयगुणवृद्धात्स्थानादध एकैकस्य संख्येयभागवृद्धस्थानस्याधः प्रत्येकमेकैककण्डकाधिकः कण्डकवर्गोऽनन्तभागवृद्धानां स्थानानां प्राप्यते। संख्येयभागवृद्धानि च स्थानानि कण्डकमात्राणि। ततः कण्डकवर्गः कण्डकेन गुणितः कण्डकघनो भवति। कण्डकं च कण्डकगुणितं कण्डकवर्गः। अन्त्यसंख्येयभागवृद्धाचोपरि कण्डकवर्ग एकं च कण्डकं प्राप्यते। ततो द्व्यन्तरितमार्गणायामनन्तभागवृद्धानां कण्डकघनो द्वौ कण्डकवर्गावेकं च कण्डकं भवति। एवमग्रेऽप्यूह्यम्। एषा द्व्यन्तरितमार्गणा। उक्तं च—"कंडं कंडस्स घणो वग्गो दुगुणो दुगंतराए ओ"। प्रथमादसंख्येयगुणवृद्धात्स्थानादधः कियन्त्यनन्तभागवृद्धानि स्थानानि ? उच्यते—कण्डकवर्गवर्गस्त्रयः कण्डकघनास्त्रयः कण्डकवर्गा एकं च कण्डकम्। एवं प्रथमादनन्तगुणवृद्धात्स्थानादधोऽसंख्येयभागवृद्धानि स्थानान्यप्येतावन्त्येवेत्यवसेयम्। काऽत्र भावना ? इति चेद्, उच्यते—इह प्रथमादसंख्येयगुणवृद्धात्स्थानादध एकैकस्य संख्येयगुणवृद्धस्य स्थानस्याधः प्रत्येकमनन्तभागवृद्धानां स्थानानां कण्डकघनो द्वौ कण्डकवर्गावेकं च कण्डकं प्राप्यते। संख्येयगुणवृद्धानि च स्थानानि कण्डकमात्राणि। ततः कण्डकघनः कण्डकेन गुणितः कण्डकवर्गवर्गो भवति। तथाहि—चतुष्कस्य घनश्चतुःषष्टिप्रमाणः, स चतुष्केण गुण्यते, ततो द्विशती षट्पञ्चाशदधिका भवति, अयं चतुष्कस्य वर्गवर्गः, चतुष्कस्थानीयं चेह कण्डकं द्रष्टव्यमिति। द्वौ कण्डकवर्गौ कण्डकेन गुणितौ द्वौ कण्डकघनौ भवतः, वर्गस्य वर्गमूलेन गुणने घनस्य निष्पत्तेः। कण्डकं च कण्डकेन गुणितं कण्डकवर्गः। संख्येयगुणवृद्धस्थानस्योपर्येकः कण्डकघनो द्वौ च कण्डकवर्गावेकं च कण्डकं प्राप्यते, तत्पूर्वराशौ प्रक्षेप्यं, ततस्त्र्यन्तरितमार्गणायामनन्तभागवृद्धानां स्थानानां कण्ड-

द्धिः—संख्येयगुणवृद्धिरसंख्येयगुणवृद्धिरनन्तगुणवृद्धिश्चेति। तत्र कियन्मात्रेणानन्तासंख्येयसंख्येयतमेन भागेन, कियन्मात्रेण वाऽनन्तासंख्येयसंख्येयगुणकारेणवृद्धिः? इत्येतत्परिज्ञानार्थमाह—आद्यासु तिसृषु वृद्धिष्वनन्तासंख्येयसंख्येयानां भागो यथाक्रमं सर्वजीवानामसंख्येयलोकाकाशप्रदेशानां ज्येष्ठस्योत्कृष्टस्य संख्येयकस्य च द्रष्टव्यः। उत्तरासु च तिसृषु वृद्धिषु गुणना—गुणकारो यथाक्रममनन्तासंख्येयसंख्येयानां सर्वजीवानामसंख्येयलोकाकाशप्रदेशानामुत्कृष्टस्य संख्येयकस्य च द्रष्टव्यः। तथाहि—प्रथमस्यानुभागबन्धस्थानस्य सर्वजीवसंख्याप्रमाणेन राशिना भागे हृते सति यल्लभ्यते स इहानन्तभागो ग्राह्यः, तेनाधिकं द्वितीयमनुभागबन्धस्थानं, तस्यापि सर्वजीवप्रमाणेन राशिना भागे हृते यल्लभ्यते तेनाधिकं तृतीयमनुभागबन्धस्थानम्। एवं यद्यदनुभागबन्धस्थानं यतो यतोऽनन्तभागवृद्धमुपलभ्यते तत्तत्तस्य तस्य सर्वजीवप्रमाणराशिना भागलभ्येनानन्ततमेनांशेनाधिकं द्रष्टव्यम्। तथाऽसंख्येयभागाधिकं नाम पाश्चात्यस्यानुभागबन्धस्थानस्यासंख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते यल्लभ्यते सोऽसंख्येयतमो भागः, तेनाधिकम्। तथा संख्येयभागाधिकं नाम पाश्चात्यानुभागबन्धस्थानस्योत्कृष्टेन संख्येयेन भागे हृते सति यल्लभ्यते स संख्येयतमो भागः, तेनाधिकम्। तथा संख्येयगुणवृद्धं नाम पाश्चात्येऽनुभागबन्धस्थाने उत्कृष्टसंख्येयकप्रमाणेन राशिना गुणिते यावद्राशिनिष्पत्तिस्तावत्प्रमाणम्। तथाऽसंख्येयगुणवृद्धं नाम पाश्चात्येऽनुभागबन्धस्थानेऽसंख्येयलोकाकाशप्रदेशप्रमाणेन राशिना गुणिते यावान् राशिर्भवति तावत्प्रमाणम्। तथाऽनन्तगुणवृद्धं नाम पाश्चात्येऽनुभागबन्धस्थाने सर्वजीव संख्याप्रमाणेन राशिना गुणिते यावान् राशिर्भवति तावत्प्रमाणम्। प्रथमस्य षट्स्थानकस्य परिसमाप्तौ यदन्यदनुभागस्थानमुपजायतेऽनन्तभागवृद्धं तद्द्वितीयस्य षट्स्थानकस्य प्रथमम्। ततःपूर्वोक्तक्रमेण संपूर्णं द्वितीयं षट्स्थानकं वक्तव्यम्। एवमसंख्येयलोकाकाशप्रदेशप्रमाणानि षट्स्थानकानि भवन्ति। तथा चाह—"छट्ठाणमसंखया लोगा"। अत्र कश्चित् पूर्वपक्षयति—ननु प्रथमानुभागबन्धस्थानस्य जीव-

कवर्गवर्गास्त्रयः कण्डकघनास्त्रयः कण्डकवर्गा एकं च कण्डकं प्राप्यते । एवमसंख्येयभागवृद्धानामपि भावनीयम् । उक्त च–"कंडगस्स वग्गवग्गा घणवग्गा तिगुणियाकंडं"। एषा त्र्यन्तरिता मार्गणा । प्रथमादनन्तगुणवृद्धात्स्थानादधः कियन्त्यनन्तभागवृद्धानि स्थानानि? उच्यते–अष्टौ कण्डकवर्गवर्गाः षट् कण्डकघनाश्चत्वारः कण्डकवर्गा एकं च कण्डकम् । कथम्? इति चेद्, उच्यते–इह कण्डकमसत्कल्पनया चतुःसंख्यात्मकं कल्प्यते । तत्र प्रथमादनन्तगुणवृद्धात्स्थानादधः एकैकस्यासंख्येयगुणवृद्धस्य स्थानस्याधः प्रत्येकमनन्तभागवृद्धानां स्थानानामेकः कण्डकवर्गवर्गः त्रयः कण्डकघनाः त्रयः कण्डकवर्गा एकं च कण्डकं प्राप्यते । असंख्येयगुणवृद्धानि च स्थानानि कण्डकमात्राणि, ततः कण्डकवर्गवर्गाः असंख्येयाः कण्डकमात्राः प्राप्यन्ते तथापि कण्डकमिह चतुःसङ्ख्यात्मकं कल्पितमिति चत्वारः कण्डकवर्गवर्गा लब्धाः, त्रयश्च कण्डकघनाः चतुःसङ्ख्यात्मकेन कण्डकेन गुणिता जाता द्वादश, कण्डकघनश्चतुष्केण गुणितः कण्डकवर्गवर्गो भवति, ततोऽत्र लब्धास्त्रयः कण्डकवर्गवर्गाः, सर्वसंख्यया जाताः सप्त कण्डकवर्गवर्गाः। कण्डकवर्गाश्च त्रयः चतुःसंख्यात्मकेन कण्डकेन गुणिता जाता द्वादश । कण्डकवर्गश्च कण्डकेन गुणितः कण्डकघनो भवति यथा चतुष्कवर्गः षोडशात्मा चतुष्केन गुणितश्चतुःषष्ट्यात्मकश्चतुष्कघनः ततो लब्धास्त्रयः कण्डकघनाः,कण्डकं च कण्डकेन गुणितं कण्डकवर्ग एकः। असंख्येयगुणवृद्धस्थानकण्डकाधोपरि एकः कण्डकवर्गवर्गः त्रयः कण्डकघनास्त्रयः कण्डकवर्गा एकं च कण्डकं प्राप्यते । तच्च पूर्वराशौ प्रक्षिप्यते,तत उक्तप्रमाणं संपद्यते। उक्तं च–"अड कंडकवग्गवग्गा वग्गा चत्तारि छग्घणं कंडं । चउअंतरवुड्ढीए हेट्ठट्ठाणप्परूवणया" ॥ त्ति एतच्चासत्कल्पनयोक्तं, वस्तुगत्या तु चतुरुत्तरकण्डकमिताः कण्डकवर्गवर्गाः षट् कण्डकघनाश्चत्वारः कण्डकवर्गा एकं च कण्डकं भवति । उक्ता चतुरन्तरमार्गणा। तदेवं कृता पञ्चभिर्मार्गणाभिरधस्तनस्थानप्ररूपणा ॥ ३७ ॥

अनुभागबन्धस्थानानाम् षट्स्थानकस्थापना ।

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | | | | | |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ४०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| ३०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० |
| २०००० | १०००० | १०००० | १०००० | १०००० | २०००० | १०००० | १०००० | १०००० | १०००० | ४०००० | १०००० | १०००० | १०००० | १०००० |

अनुभाग-
बन्धप्ररू-
पणा.

एकस्मिन्नपान्तराले यानि स्थानानि तानि स्तोकानि, द्विगुणवृद्धिद्विगुणहान्यन्तराणि पुनरसंख्येयगुणानि । कृता वृद्धिप्ररूपणा । सम्प्रति यवमध्यप्ररूपणा क्रियते—यवमध्यस्थानानि अष्टसामयिकानि शेषस्थानापेक्षयाऽसंख्येयभागमात्राणि । तथा यवमध्यस्याधस्तनानि स्थानानि स्तोकानि, ततो यवमध्यस्योपरितनानि असंख्येयगुणानि । उक्तं च—"जवमज्झे ठाणाइं असंखभागो उ सेसठाणाणं । हेट्ठम्मि होंति थोवा उवरिम्मि असंखगुणियाणि" ॥ ४८ ॥

(३०)—नानान्तराणि—नानाप्रकाराणि द्विगुणवृद्धिद्विगुणहानिरूपाणि मध्यगतानि स्थानानि त्रसेषु आवलिकाऽसङ्ख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि । तथा चान्यत्राप्युक्तं—"आवलिअसंखभागो तसेसु हाणीण होइ परिमाणं" । नन्वावलिकाऽसंख्येयभागमात्राण्येवानुभागबन्धस्थानानि त्रसजीवैर्निरन्तरं बध्यमानानि प्राप्यन्त इति प्रागुक्तं तत्कथं त्रसेषु द्विगुणवृद्धिहानय इयत्योऽभिधीयन्ते ? एकं ह्यपि द्विगुणवृद्धिर्द्विगुणहानिर्वा न प्राप्नोति, सत्यं, प्रागावलिकाऽसङ्ख्येयभागमात्राणि स्थानानि त्रसैर्निरन्तरं बध्यमानतया प्राप्यमाणान्युक्तानि, इह तु कालान्तरे बध्यमानान्यपि गृह्यन्ते, तेषु च जीवा उत्कृष्टपदे क्रमेण विशेषाधिका लभ्यन्ते, ततो यथोक्तप्रमाणा द्विगुणवृद्धिहानयो न विरुध्यन्ते । तथेतरेषु—स्थावरेषु एकस्मादन्तरात्, त्रसकायिकानामेकस्मिन् द्वयोर्द्विगुणवृद्ध्योर्द्विगुणहान्योर्वाऽपान्तराले यानि स्थानानि तेभ्य इत्यर्थः, नानान्तराणि—यवमध्यादर्वाक्तन्यः परभाविन्यश्च द्विगुणवृद्धिहानय इत्यर्थः, असङ्ख्येयगुणानि । उक्तं च—"…णि दुगन्तरठाणा थावर हाणी असंखगुण" त्ति । इह त्रसानां द्विगुणवृद्धिहानयः स्तोकाः, तेभ्य एकद्विगुणवृद्धिहान्यन्यतमस्थानापान्तरालवर्तीनि स्थानान्यसङ्ख्येयगुणानि । स्थावराणां तु द्वयोर्द्विगुणवृद्ध्योर्द्विगुणहान्योर्वाऽपान्तराले एकस्मिन् यानि स्थानानि तानि स्तोकानि, द्विगुणवृद्धिद्विगुणहानिस्थानानि पुनरसङ्ख्येयगुणानि । कृता वृद्धिप्ररूपणा । अथ यवमध्यप्ररूपणा क्रियते—तत्र यवमध्यस्था-

नान्यष्टसामयिकानि शेपस्थानापेक्षयाऽसङ्ख्येयभागमात्राणि। तथा यवमध्यस्याधस्तनानि स्थानानि स्तोकानि, ततो यवमध्यस्योपरितनान्यसङ्ख्येयगुणानि। उक्तं च पञ्चसंग्रहे–"जवमज्झे ठाणाइं असंखभागो उ सेसठाणाणं। हेट्ठम्मि होंति थोवा उवरिम्मि असंखगुणियाणि" ॥ इयाणिं फासणताणि परूवणताए—

फासणकालोऽतीए थोवो उक्कोसगे जहन्ने उ। होइ असंखेज्जगुणो य कंडगे तत्तिओ चेव ॥ ४९ ॥

जवमज्झकंडगोवरि हेट्ठा जवमज्झओ असंखगुणो। कमसो जवमज्झुवरिं कंडगहेट्ठा य तावइओ ॥५०॥

जवमज्झुवरि विसेसो कंडगहेट्ठा य सव्वहिं चेव। जीवप्पाबहुमेवं अज्झवसाणेसु जाणेज्जा ॥ ५१ ॥

(चू०)—'फासणकालोऽतीए थोवो उक्कस्सगे'त्ति–अतीए काले एकजीवस्स 'उक्कस्सगे'त्ति–दुसमतिगे उक्कोसगे अणुभागट्ठाणे फासणकालो थोवो। 'जहण्णे उ होति असंखेज्जगुणो'त्ति–जहण्णगे अणुभागबंधज्झवसाणट्ठाणे कालो 'असंखेज्जगुणो'त्ति; 'जहण्णगे'त्ति–आतिचउसमतिगे। 'कंडगे तत्तितो चेव'त्ति–कंडगत्ति उपरिल्ला चतुसमतिगा ट्ठाणा, तेसु तत्तितो चेव फासणाकालो। 'जवमज्झ'त्ति–ततो जवमज्झे फासणाकालो असंखेज्जगुणो। 'कंडगोवरि'त्ति–ततो कंडगस्स उवरिं फासणकालो असंखेज्जगुणो; तिसमतिगेसुं भणितं होति। 'हेट्ठाजवमज्झातो असंखगुणो कमसो'त्ति–जवमज्झस्स हेट्ठतो फासणाकालो असंखेज्जगुणो। 'जवमज्झुवरिं कण्डगहेट्ठा य तावतितो'त्ति–जवमज्झस्स उवरिं कंडगस्स हेट्ठतो फासणकालो तत्तितो चेव। जवमज्झस्स उवरिल्लेसु ट्ठा- ॥११५॥

णेसु फासणकालो विसेसाहितो। 'कंडगहेट्ठा य'त्ति–कंडगस्स हेट्ठातो फासणकालो विसेसाहितो। 'सव्वहिंचेव'–ते-
ह्रिंतो सव्वेसु ठाणेसु फासणाकालो विसेसाहितो। फासणापरूवणा भणिया। इयाणिं अप्पाबहुगं–'जीवप्पाबहु-
मेवं अज्झवसाणेसु जाणेज्ज'त्ति। उक्कस्सगे अणुभागवंधज्झवसाणट्ठाणे जीवा थोवा, जहण्णगे अणुभागबन्ध-
ज्झवसाणट्ठाणे जीवा असंखेज्जगुणा, कण्डगे जीवा तत्तिया, जवमज्झे जीवा असंखेज्जगुणा, कंडगस्स उवरिं
जीवा असंखेज्जगुणा, जवमज्झस्स हेट्ठओ जीवा असंखेज्जगुणा, जवमज्झउवरिं कंडगस्स हेट्ठओ जीवा तत्तिया
चेव, जवमज्झस्स उवरिं जीवा विसेसाहिया, कंडगस्स हेट्ठा जीवा विसेसाहिया, सव्वेसु वि ठाणेसु जीवा वि-
सेसाहिया। जीवसमुदाहारो भणिओ। अणुभागवंधज्झवसाणट्ठाणा भणिया। तेसिं इमाणि एगट्ठियाणि णा-
माणि। तंजहा–अणुभागवंधज्झवसाणट्ठाणाणि वा अणुभागबंधट्ठाणाणि वा संकिलेसविसोहिट्ठाणाणि वा एगट्ठं।
इयाणिं ठितिवंधज्झवसाणट्ठाणाण एगट्ठिया णामा वुच्चंति। तंजहा–ठिइवंधज्झवसाणट्ठाणाणि वा कसायुदय-
ट्ठाणाणि वा परिणामट्ठाणाणि वा एगट्ठा ॥ ४९–५०–५१ ॥

(मलय०)–कृता यवमध्यप्ररूपणा। सम्प्रति स्पर्शनाप्ररूपणामाह—'फासणे'ति। अतीते काले एकस्य जीवस्योत्कृष्टे–द्वे सामयिके
इत्यर्थः, अनुभागबन्धस्थाने स्पर्शनाकालः स्तोकः। अतीते काले परिभ्रमता जन्तुना द्विसामयिकान्यनुभागबन्धस्थानानि स्तोकमेव
कालं स्पृष्टानीत्यर्थः। जघन्ये पुनरनुभागबन्धस्थाने–प्राथमिकेषु चतुःसामयिकेष्वित्यर्थः, अतीते काले स्पर्शनाकालोऽसंख्येयगुणः।
'कंडगे तत्तिओ चेव'–कंडके उपरितनानि चतुःसामयिकानि स्थानानि, तेषु तावन्मात्रः स्पर्शनाकालो यावन्मात्र आद्येषु चतुःसामयिकेषु।

ततो यवमध्येषु स्थानेषु—अष्टसामयिकेष्वित्यर्थः, स्पर्शनाकालोऽसंख्येयगुणः । ततः कण्डकस्योपरिवर्ति—चतुःसामयिकस्थानसंघातरूपस्योपरितनेषु स्थानेषु त्रिसामयिकेष्वित्यर्थः, स्पर्शनाकालोऽसंख्येयगुणः । ततो यवमध्यस्याधस्तात् पञ्चषट्सप्तसामयिकेष्वसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः । ततः 'क्रमशः'—क्रमेण यवमध्यादुपरितनेषु कण्डकाच्चतुःसामयिकस्थानसंघातरूपादधस्तनेषु पञ्चषट्सप्तसामयिकेषु स्थानेषु तावन्मात्र एव स्पर्शनाकालो यावन्मात्रः पाश्चात्येषु पञ्चषट्सप्तसामयिकेषु। ततो 'यवमध्यस्य'—अष्टसामयिकस्थानसंघातरूपस्योपरितनेषु द्विसामयिकपर्यन्तेषु सर्वेष्वपि स्थानेषु यः स्पर्शनाकालः स विशेषाधिकः । ततोऽपि कण्डकस्य यवमध्यस्योपरिवर्तिचतुःसामयिकस्थानसंघातरूपस्याधस्तात् सर्वेष्वपि स्थानेषु जघन्यचतुःसामयिकपर्यन्तेषु स्पर्शनाकालः समुदितो विशेषाधिकः । ततोऽपि सर्वेष्वपि स्थानेषु स्पर्शनाकालो विशेषाधिकः। सम्यग्ज्ञानं तु पटस्थापनातः कर्त्तव्यम्। कृता स्पर्शनाप्ररूपणा। सम्प्रत्यल्पबहुत्वप्ररूपणामाह—'जीवप्पाबहु' इत्यादि । यथा स्पर्शनाकालस्याल्पबहुत्वमुक्तम् एवं जीवानामपि अध्यवसानेषु—अनुभागबन्धस्थाननिमित्तभूतेषु वर्तमानानामल्पबहुत्वं जानीयात् । तद्यथा—उत्कृष्टेष्वध्यवसानेषु द्विसामयिकानुभागनिबन्धनभूतेषु वर्तमाना जीवाः स्तोकाः, ततो जघन्येषु चतुःसामयिकानुभागबन्धनिबन्धनभूतेष्वसंख्येयगुणाः, एतावन्त एव चोपरिवर्तिचतुःसामयिकानुभागबन्धस्थाननिबन्धनेष्वध्यवसानेषु, ततोऽपि यवमध्यकल्पानुभागबन्धस्थाननिबन्धनेष्वसंख्येयगुणाः, ततोऽपि त्रिसामयिकानुभागबन्धस्थाननिमित्तष्वसंख्येयगुणाः, ततोऽप्याद्यपञ्चषट्सप्तसामयिकानुभागबन्धस्थानहेतुष्वध्यवसानेषु असंख्येयगुणाः, एतावन्त एवोपरितनपञ्चषट्सप्तसामयिकानुभागबन्धस्थाननिबन्धनेष्वध्यवसानेषु, ततो यवमध्योपरिवर्तिनिःशेषानुभागबन्धस्थाननिबन्धनभूतेष्वध्यवसानेषु वर्तमाना जीवा विशेषाधिकाः, ततोऽप्युपरिवर्तिपञ्चसामयिकपर्यवसानप्राथमिकचतुःसामयिकप्रभृतिसमस्तानुभागबन्धस्थाननिबन्धनेषु विशेषाधिकाः, त-

ततोऽपि सर्वेष्वपि अनुभागबन्धस्थाननिबन्धनेषु विशेषाधिका इति ॥ ४९-५०-५१ ॥

(उ०)-कृता यवमध्यप्ररूपणा । अथ स्पर्शनाप्ररूपणामाह—अतीते काले एकस्य जीवस्योत्कृष्टे द्विसामयिकेऽनुभागबन्धस्थाने स्पर्शनाकालः स्तोकः, अतीते काले परिभ्रमता जन्तुना स्तोकमेव कालं द्विसामयिकान्यनुभागबन्धस्थानानि स्पृष्टानीत्यर्थः । जघन्ये ऽनुभागबन्धस्थाने-प्राथमिकेषु चतुःसामयिकेष्वित्यर्थः, अतीते काले स्पर्शनाकालोऽसंख्येयगुणः । कण्डके तावन्मात्र एव स्पर्शनाकालो यावन्मात्र आद्येषु चतुःसामयिकेषु । कण्डकं नामोपरितनानि चतुःसामयिकानि स्थानानि । ततो यवमध्येऽष्टसामयिकेषु स्थानेषु स्पर्शनाकालोऽसंख्येयगुणः । ततः कण्डकस्योपरिवर्तिचतुःसामयिकस्थानसंघातरूपस्योपरितनेषु त्रिसामयिकेषु स्थानेषु स्पर्शनाकालोऽसंख्येयगुणः । ततो यवमध्यस्याधस्तात् पञ्चषट्सप्तसामयिकेष्वसंख्येयगुणः, उपरितनत्रिसामयिकस्पर्शनापेक्षया समुदितानि प्राथमिकानि पञ्चषट्सप्तसामयिकान्यसंख्येयगुणकालं स्पृष्टानीत्यर्थः, स्वस्थाने त्वेषां तुल्यः स्पर्शनाकालः । ततः क्रमशः-क्रमेण यवमध्यादुपरितनेषु कण्डकाद्-उपरितनचतुःसामयिकसंघातरूपादधस्तनेषु पञ्चषट्सप्तसामयिकेषु स्वस्थानेषु तावन्मात्र एव स्पर्शनाकालो यावन्मात्रः प्राक्तनेषु पञ्चषट्सप्तसामयिकेषु । ततो यवमध्यस्योपरितनेषु द्विसामयिकपर्यन्तेषु सर्वेष्वपि स्थानेषु यः स्पर्शनाकालः स विशेषाधिकः । ततोऽपि कण्डकस्य-यवमध्योपरिवर्तिचतुःसामयिकस्थानसंघातरूपस्याधस्तात्सर्वेष्वपि स्थानेषु जघन्यचतुःसामयिकपर्यन्तेषु स्पर्शनाकालः समुदितो विशेषाधिकः । ततोऽपि सर्वस्थानेषु स्पर्शनाकालो विशेषाधिकः । कृता स्पर्शनाप्ररूपणा । सम्प्रत्यल्पबहुत्वप्ररूपणार्थमाह-'जीवाप्पाबहुं' ति । जीवाल्पबहुत्वमेवमध्यवसायस्थानेषु जानीयात् । तथाहि-द्विसामयिकानुभागनिबन्धनभूतेष्वध्यवसानेषु वर्त्तमाना जीवाः स्तोकाः । ततः प्राथमिकचतुःसामयिकानुभागनिबन्धनभूतेष्वसंख्येयगुणाः । एतावन्त एवोपरिवर्त्तिचतुःसामयिकानुभागबन्ध-

स्थाननिबन्धनेषु । ततोऽपि यवमध्यानुभागबन्धस्थाननिबन्धनेष्वसंख्येयगुणाः । ततोऽपि त्रिसामयिकानुभागबन्धस्थाननिमित्तेष्वसंख्येयगुणाः । ततोऽप्याद्यपञ्चषट्सप्तसामयिकानुभागबन्धस्थानहेतुष्वसंख्येयगुणाः । एतावन्त एवोपरितनपञ्चषट्सप्तसामयिकानुभागबन्धस्थाननिमित्तेषु । ततो यवमध्योपरिवर्त्तिनिःशेषानुभागबन्धस्थाननिमित्तेषु विशेषाधिकाः । ततोऽपि कण्डकाधस्तननिःशेषानुभागबन्धस्थानहेतुषु विशेषाधिकाः । ततोऽपि सर्वेष्वनुभागबन्धस्थाननिबन्धनेष्वध्यवसानेषु विशेषाधिकाः ॥ ४९–५०–५१ ॥

इयाणिं पुण अनुभागबंधज्झवसाणट्ठाणाणि एक्केक्के कसायोदयट्ठाणे केवइयाणि होज्जन्ति तं णिरूवणत्थं भण्णति—

**एक्केक्कम्मि कसायोदयम्मि लोगा असंखिया होंति । ठिइबंधट्ठाणेसु वि अज्झवसाणाण ठाणाणि ॥५२॥**

(चू०)—'एक्केक्कंमि कसायोदयंमि'त्ति–एक्केक्कंमि कसाओदए 'लोगा असंखिया होंति'त्ति अज्झवसाणट्ठाणाणं ति । 'ठितिबंधट्ठाणेसु वि अज्झवसाणाण ट्ठाणाणि'त्ति–जे एक्कं ठितिं णिव्वत्तंति ठितिबंधज्झवसाणट्ठाणा ते असंखेज्जलोगागासपदेसमेत्ता, एवं सव्वट्ठितिविकप्पेसु, तंमि एक्केक्कंमि ठितिबंधट्ठाणंमि अणुभागबंधज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि ॥ ५२॥

(मलय०)–तदेवमनुभागबन्धस्थानेषु तन्निबन्धनेषु चाध्यवसानेषु यथा जीवा वर्तन्ते तथा प्ररूपणा कृता । सम्प्रत्येकैकस्मिन् स्थितिस्थानाध्यवसाये नानाजीवापेक्षया कियन्तोऽनुभागबन्धाध्यवसायाः प्राप्यन्त इति तन्निरूपणार्थमाह—'एकेकम्मि'त्ति । एकैकस्मिन् कषायोदये स्थितिस्थाननिबन्धनभूते नानाजीवापेक्षयाऽनुभागबन्धाध्यवसायस्थानानि–कृष्णादिलेश्यापरिणामविशेषरूपाणि, "सकषायोद-

या हि कृष्णादिलेश्यापरिणामविशेषा अनुभागबन्धहेतवः" इतिवचनात्, असंख्येया लोका भवन्ति—असंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्तीत्यर्थः। तथा जघन्यस्थितेरारभ्योत्कृष्टां स्थितिं यावद्यावन्तः समयास्तावन्ति स्थितिस्थानानि, तथाहि—जघन्या स्थितिरेकं स्थितिस्थानम्, सैव समयोत्तरा द्वितीयं स्थितिस्थानम्, द्विसमयोत्तरा तृतीयं स्थितिस्थानम्, एवं समयवृद्ध्या तावद्वाच्यं यावदुत्कृष्टा स्थितिः। एवं चासंख्येयानि स्थितिस्थानानि भवन्ति। तेषु चासंख्येयेषु स्थितिबन्धस्थानेषु प्रत्येकमेकैकस्मिन् स्थितिबन्धस्थानेऽध्यवसायस्थानानि तीव्रतीव्रतरमन्दमन्दतरादिकषायोदयविशेषरूपाणि असंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति ॥५२॥

(उ०)-तदेवमनुभागबन्धस्थानेषु तन्निबन्धनेषु चाध्यवसानेषु यथा जीवा वर्त्तन्ते तथा प्ररूपितम्। अथैकैकस्मिन् स्थितिस्थानाध्यवसाये नानाजीवापेक्षया कियन्तोऽनुभागबन्धाध्यवसायाः प्राप्यन्त इत्येतन्निरूपयितुमाह—एकैकस्मिन् कषायोदये स्थितिस्थाननिबन्धनभूते नानाजीवापेक्षयाऽनुभागबन्धाध्यवसायस्थानानि कृष्णादिलेश्यापरिणामविशेषरूपाण्यसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति। तथाहि—जघन्यस्थितेरारभ्योत्कृष्टां स्थितिं यावद्यावन्तः समयास्तावन्ति स्थितिस्थानानि। तथाहि—जघन्या स्थितिरेकं स्थितिस्थानं, सैव समयोत्तरा द्वितीयं, द्विसमयोत्तरा तृतीयं, एवं समयवृद्ध्या तावद्वाच्यं यावदुत्कृष्टा स्थितिः। एवं चासंख्येयानि स्थितिस्थानानि भवन्ति। तेषु च प्रत्येकमेकैकस्मिन् स्थितिबन्धस्थानेऽध्यवसायस्थानानि तीव्रमन्दादिकषायोदयविशेषरूपाण्यसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति। एकैकस्मिंश्च कषायोदये सति असंख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागबन्धस्थानानि कृष्णादिलेश्यापरिणामविशेषरूपाणि भवन्ति, "सकषायोदया हि कृष्णादिलेश्यापरिणामविशेषा अनुभागबन्धहेतवः" इति वचनात्, इति मिलितोऽर्थः। यत्तु "स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेणे"ति वाचकवचनं तत्रापि पाकपदमहिम्नाऽनुभाग एव ग्राह्य इति वृद्धवादः ॥ ५२ ॥

इयाणिं अज्झवसाणट्ठाणवड्ढी—

**थोवाणि कसाउदये अज्झवसाणाणि सव्वडहरम्मि। बिइयाइ विसेसहियाणि जाव उक्कोसगं ठाणं॥५३॥**

(चू०)—सा वड्ढी दुव्विहा। तंजहा—अणंतरोवणिहा परंपरोवणिहा य। तत्थ अणंतरोवणिहाए जहण्णगे कसायोदयट्ठाणे सव्वत्थोवाणि अणुभागबंधज्झवसाणट्ठाणाणि। 'बितियाइ विसेसाहियाणि' त्ति—ततो बितिए कसाउदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणाणि विसेसाहिगाणि। एवं ततिए विसेसा। 'जाव उक्कोसगं ट्ठाणं' ति—एवं जाव उक्कोसयं कसायोदयट्ठाणं, उक्कस्सगे कसाउदये अणुभागबंधज्झवसाणट्ठाणाणि विसेसाहिगाणि।

(मलय०)—सम्प्रत्यनुभागबन्धाध्यवसायस्थानानां वृद्धिमार्गणा क्रियते। सा द्विधा—अनन्तरोपनिधया परम्परोपनिधया च। तत्रानन्तरोपनिधया तावद्वृद्धिमार्गणां चिकीर्षुराह—'थोवाणि' त्ति—'सव्वडहरम्मि' त्ति। सर्वजघन्ये कषायोदये स्थितिबन्धहेतावनुभागबन्धाध्यवसायस्थानानि कृष्णादिलेश्यापरिणामविशेषरूपाणि स्तोकानि, ततो द्वितीयादौ यथोत्तरं विशेषाधिकानि तावद्वाच्यानि यावदुत्कृष्टं स्थितिबन्धाध्यवसायस्थानम्। एतदुक्तं भवति—द्वितीये कषायोदये विशेषाधिकानि, ततोऽपि तृतीये विशेषाधिकानि, ततोऽपि चतुर्थे विशेषाधिकानि, एवं तावद्वाच्यं यावदुत्कृष्टं कषायोदयरूपं स्थितिबन्धाध्यवसायस्थानमिति॥५३॥

(उ०)—अथानुभागबन्धाध्यवसायस्थानानां वृद्धिमार्गणा क्रियते। सा द्विधा—अनन्तरोपनिधया परंपरोपनिधया च। तत्रानन्तरोपनिधया तावद्वृद्धिमार्गणां चिकीर्षुराह—'सव्वडहरम्मि' सर्वजघन्ये स्थितिहेतौ कषायोदयेऽध्यवसानान्यनुभागबन्धाध्यवसायस्थानानि कृष्णादिलेश्यापरिणामरूपाणि स्तोकानि। ततो द्वितीयादौ यथोत्तरं विशेषाधिकानि तावद्वाच्यानि यावदुत्कृष्टं स्थि-

स्थितिबन्धाध्यवसायस्थानम् ॥ ५३ ॥

इयाणि परंपरोवणिहाए—

**गंतूणमसंखेज्जे लोगे दुगुणाणि जाव उक्कोसं । आवलिअसंखभागो नाणागुणवुड्ढिठाणाणि ॥५४॥**

(चू०)—जहण्णकसायोदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणेहिंतो असंखेज्जलोगागासपदेसमेत्ताणि कसायोदयट्ठाणाणि गंतूण जं होइ कसायोदयट्ठाणं तंमि कसायोदयट्ठाणंमि दुगुणवड्ढियाणि अणुभागबन्धज्झवसायट्ठाणाणि लब्भंति । ततो पुणो तत्तियाणि चेव कसायोदयट्ठाणाणि गंतूण दुगुणवड्ढियाणि अणुभागबंधज्झवसाणट्ठाणाणि । एवं जाव उक्कस्सगं कसाउदयट्ठाणं ताव णेयव्वं । 'आवलिअसंखभागो णाणागुणवुड्ढिट्ठाणाणि'त्ति । जाणि अंतरंतरे उट्ठियाणि दुगुणवड्ढिट्ठाणाणि ताणि केवतियाणि ? भण्णइ—आलियाए असंखेज्जभागमेत्ताणि ।

(मलय०)—कृताऽनन्तरोपनिधया वृद्धिमार्गणा । सम्प्रति परम्परोपनिधया तामभिधित्सुराह—'गंतूणं'ति । जघन्यात् कषायोदयादसंख्येयलोकाकाशप्रदेशप्रमाणानि कषायोदयस्थानानि गत्वाऽतिक्रम्य परं यद्भवति स्थितिबन्धाध्यवसायस्थानं तस्मिन्ननुभागबन्धाध्यवसायस्थानानि जघन्यकषायोदयस्थानसत्कानुभागबन्धाध्यवसायस्थानापेक्षया द्विगुणानि भवन्ति । पुनरपि तावन्ति कषायोदयस्थानानि गत्वा यदपरं स्थितिबन्धाध्यवसायस्थानं तस्मिन् द्विगुणानि भवन्ति । एवं भूयो भूयस्तावद्वाच्यं यावदुत्कृष्टं कषायोदयस्थानम् । यानि चान्तरान्तरा नानारूपाणि द्विगुणवृद्धिस्थानानि भवन्ति तानि कियन्ति ? इति चेद्, उच्यते—'आवलिकाया असंख्येयभागः', आवलिकाया असंख्येयभागे यावन्तः समयास्तावत्प्रमाणानि भवन्तीत्यर्थः ॥५४॥

(उ०)–कृताऽनन्तरोपनिधया वृद्धिमार्गणा। अथ परम्परोपनिधया तां कुर्वन्नाह—जघन्यात् कषायोदयादारभ्यासंख्येयलोकाकाशप्रदेशप्रमाणानि कषायोदयस्थानानि गत्वा परं यत् स्थितिबन्धाध्यवसायस्थानं कषायोदयरूपं तस्मिन्ननुभागबन्धाध्यवसायस्थानानि जघन्यकषायोदयस्थानसत्कानुभागबन्धाध्यवसायस्थानापेक्षया द्विगुणानि भवन्ति। पुनरपि तावत्कषायोदयस्थानातिक्रमे यदपरं स्थितिबन्धाध्यवसायस्थानं तस्मिन् द्विगुणानि भवन्ति। एवं भूयो भूयस्तावद्वाच्यं यावदुत्कृष्टं कषायोदयस्थानम्। यावन्ति चान्तरालिकानि नानारूपाणि द्विगुणवृद्धिस्थानानि तावन्त्यावलिकाऽसंख्येयभागसमयप्रमाणानि भवन्ति ॥ ५४ ॥

**सव्वासुभपगईणं सुभपगईणं विवज्जयं जाण। ठिइबंधट्ठाणेसु वि आउगवज्झाण पगडीणं ॥५५॥**

(चू०)—सव्वासिं असुभपगतीणं एसा वड्ढी। ताओ य इमाओ–पंच णाणावरणं, नव दंसणावरणं, असातावेयणिज्जं, मिच्छत्तं, सोलसकसाया, णवणोकसाया, णिरयाउगं, णिरयगतितिरियगतीओ, पंचिंदियवज्जाओ चत्तारि जाईओ, आइल्लवज्जा पंचसंठाणासंघयणा, कुवण्णणवगं, णिरयगतितिरियगतिपाओग्गाणुपुव्वीओ, उपघातं, अपसत्थविहायगई, थावरसहुमअपज्जत्तगसाहारणं, अथिरासुभदूभगदूस्सरअणाएज्जअजसकित्तीणीयागोय, पंचण्हमंतराइयाणं एसा परिवड्ढि भणिया। 'सुभपगतीणं विवज्जयं जाण'त्ति–सव्वासिं सुभपगतीणं विवरीयं जाणिज्जा। ताओ इमाओ सुभाओ–सायावेयणीयं, तिरियमणुयदेवाउगाणि, मणुयगतिदेवगतीओ, पंचिंदियजाई, पंचसरीरा, पंचसंघायणा, पण्णरसबंधणाणि, समचउरंसं, तिण्णि अंगोवंगाणि, पढमसंघयणं, सुहवण्णेक्कारसगं, देवगतिमणुयगतिपाउग्गाणुपुव्वीओ, अगुरुलहुगं, पराघातं, उस्सासं, आयवुज्जोयाणि, पसत्थविहायगइ, तसबादर-

पज्जत्तगपत्तेगथिरं सुभं सुभगं सुस्सरआएज्जजसकित्तिणिम्माणतित्थगरउच्चागोयाणं उक्कस्सगे कसायोदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि। दुचरिमे कसाउदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि। एवं तिचरिमे। एवं णिरंतरं हेट्ठाहुत्तं णेयव्वं जाव जहण्णगं कसायोदयट्ठाणं। अप्पप्पणो जहण्णगे कसायोदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि। एयाणि वड्ढी, सा दुविहा-अणंतरोवणिहिता परंपरोवणिहिया य। तत्थ अणंतरोवणिहियाए एयासिं सुभपगतीणं अप्पप्पणो उक्कस्सगे कसाउदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणा थोवा। दुचरिमे कसायोदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणाणि विसेसाहिया। एवं तिचरमे विसेसाहिया, जाव जहण्णकसायोदयट्ठाणे अणुभागबंधज्झवसाणट्ठाणा विसेसाहिया। परंपरोवणिहियाए एयासिं सुभपगडीणं उक्कस्सकसाउदयट्ठाणअणुभागबंधज्झवसाणट्ठाणेहिंतो असंखेज्जलोगागासपएसमेत्ताणि कसायोदयट्ठाणाणि उसरिऊण जं होति कसाउदयट्ठाणं तंमि कसाउदयट्ठाणंमि दुगुणवड्ढियाणि अणुभागबंधज्झवसाणट्ठाणाणि लब्भंति। ततो पुणो तत्तियाणि चेव कसाउदयट्ठाणाणि उसरिऊण दुगुणवड्ढियाणि अणुभागबन्धज्झवसाणट्ठाणाणि। एवं जाव जहण्णगं कसाउदयट्ठाणं ताव णेयव्वं। नाना कसायोदयगुणहाणिट्ठाणंतराणि थोवाणि, एक्ककसाउदयगुणहाणिट्ठाणंतरं असंखेज्जगुणं। 'ठितिबंधट्ठाणेसु आउगवज्जाण पगतीणं'ति-पुव्वुत्ताणि आउगवज्जाणं असुभपगतीणं जहण्णाए ठितीए अणुभागबंधज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि। एवं बितियाए समयाहियाए असंखेज्जलोगागासपदेसमे-

त्ताणि ठाणाई विसेसाहियाणि, तइयाए ठितीए अणुभागबन्धज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि ट्ठाणाई विसेसाहियाणि। एवं विसेसाहियाए विसेसाहियाए जाव उक्कसिया ठितित्ति। पुवुत्ताणं आउगवज्जाणं सुभपगतीणं उक्कसियाए ठितीए अणुभागबन्धज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि थोवाइं। समयूणाए उक्कसियाए ट्ठितीए अणुभागबन्धज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि ठाणाणि विसेसाहियाणि। दुसमऊणाए उक्कसियाए अणुभागबन्धज्झवसाणट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि-ठाणाणि विसेसाहियाणि। एवं विसेसाहिगाणि विसेसाहिगाणि जाव जहण्णिया ठितित्ति ॥ ८९ ॥

(मलय०)—'सव्वे'ति। सर्वासामशुभप्रकृतीनां ज्ञानावरणपञ्चकनवदर्शनावरणासातवेदनीयमिथ्यात्वषोडशकषायनवनोकषायनरकायुःपञ्चेन्द्रियजातिवर्जजातिचतुष्टयसमचतुरस्रवर्जसंस्थानपञ्चकवज्रर्षभनाराचवर्जसंहननपञ्चककृष्णनीलवर्णदुरभिगन्धतिक्तकटुरसकर्कशगुरुरूक्षशीतस्पर्शरूपाशुभकुवर्णादिनवकनरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्व्यप्रशस्तविहायोगत्युपघातस्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्रान्तरायपञ्चकलक्षणानां सप्ताशीतिसंख्यानामेषाऽनन्तरोक्ताऽनुभागबन्धाध्यवसायस्थानानां वृद्धिमार्गणा द्रष्टव्या। 'सुभपगईणं' इत्यादि—शुभानां प्रकृतीनां सातवेदनीयतिर्यगायुर्मनुष्यायुर्देवायुर्देवगतिमनुष्यगतिपञ्चेन्द्रियजातिशरीरपञ्चकसंघातपञ्चकबन्धनपञ्चदशकसमचतुरस्रसंस्थानाङ्गोपाङ्गत्रयवज्रर्षभनाराचसंहननशुभवर्णाद्येकादशकदेवानुपूर्वीमनुष्यानुपूर्वीपराघातागुरुलघूच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणानामेकोनसप्ततिसंख्यानां विपर्ययं जानीहि। तद्यथा—उत्कृष्टे कषायोदयेऽनुभागबन्धाध्यवसायस्थानानि सर्वस्तोकानि, द्विचरमे कषायोदये

विशेषाधिकानि, त्रिचरमे कषायोदये विशेषाधिकानि, चतुश्चरमे कषायोदये विशेषाधिकानि, एवं तावद्वाच्यं यावत्सर्वजघन्यं कषायोदयस्थानम् । इयमनन्तरोपनिधया वृद्धिमार्गणा । परम्परोपनिधया तु वृद्धिमार्गणेयम्—उत्कृष्टकषायोदयस्थानादारभ्यासंख्येयलोकाकाशप्रदेशराशिप्रमाणानि कषायोदयस्थानानि अधोभागेनातिक्रम्य यदपरमधः कषायोदयस्थानं तस्मिन्ननुभागबन्धाध्यवसायस्थानानि उत्कृष्टकषायोदयस्थानकानुभागबन्धाध्यवसायस्थानापेक्षया द्विगुणानि भवन्ति । पुनरपि तावन्ति कषायोदयस्थानानि ततः प्रभृत्यधोभागेनातिक्रम्य यदपरमधःकषायोदयस्थानं तस्मिन् द्विगुणानि भवन्ति । एवं भूयो भूयस्तावद्वाच्यं यावज्जघन्यं कषायोदयस्थानम् । यानि चान्तरान्तरा नानारूपाणि द्विगुणवृद्धिस्थानानि तान्यावलिकाया असंख्येयभागे यावन्तः समयास्तावत्प्रमाणानि भवन्ति । अमूनि चावलिकाया असंख्येयभागमात्राणि शुभप्रकृतीनां अशुभप्रकृतीनां च प्रत्येकं द्विगुणवृद्धिस्थानानि स्तोकानि, एकस्मिन्नपि द्विगुणवृद्ध्यपान्तराले कषायोदयस्थानानि असंख्येयगुणानि । तदेवं स्थितिबन्धहेतुष्वध्यवसायेषु अनुभागबन्धहेतूनामध्यवसायानां प्ररूपणा कृता। साम्प्रतं स्थितिबन्धस्थानेष्वनुभागबन्धप्ररूपणां चिकीर्षुराह—'ठिइबन्ध' इत्यादि । स्थितिबन्धस्थानेष्वपि आयुर्वर्जानां सर्वासां प्रकृतीनां कषायोदयेष्वनुभागबन्धाध्यवसायस्थानवदनुभागबन्धस्थानानि वक्तव्यानि । तद्यथा—तत्र पूर्वोक्तानामायुर्वर्जानामशुभप्रकृतीनां जघन्यस्थितावनुभागबन्धस्थानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि, तानि च स्तोकानि । ततो द्वितीयस्थितौ विशेषाधिकानि । ततोऽपि तृतीयस्थितौ विशेषाधिकानि । एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः । तथा पूर्वोक्तानामायुर्वर्जानां शुभप्रकृतीनामुत्कृष्टस्थितावनुभागबन्धस्थानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि, तानि च स्तोकानि । तेभ्यः समयोनायामुत्कृष्टस्थितौ विशेषाधिकानि । ततोऽपि द्विसमयोनायामुत्कृष्टस्थितौ विशेषाधिकानि । एवं तावद्वाच्यं यावज्जघन्या स्थितिरिति ॥ ५५ ॥

(उ०)—सर्वासामशुभप्रकृतीनां ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीयमिथ्यात्वकषायषोडशकनोकषायनवकनरकायुराद्यजातिचतुष्टयाप्रथमसंस्थानपञ्चकसंहननपञ्चककृष्णनीलवर्णदुरभिगन्धतिक्तकटुरसकर्कशगुरुरूक्षशीतस्पर्शरूपाशुभकुवर्णादिनवकनरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्व्यप्रशस्तविहायोगत्युपघातस्थावरदशकनीचैर्गोत्रान्तरायपञ्चकलक्षणानां सप्ताशीतिसंख्यानामेषा प्रागुक्ताऽनुभागबन्धाध्यवसायस्थानानां वृद्धिमार्गणा द्रष्टव्या । शुभप्रकृतीनां देवत्रिकमनुजत्रिकतिर्यगायुःसातवेदनीयपञ्चेन्द्रियजातिशरीरपञ्चकसंघातनपञ्चकबन्धनपञ्चदशकाङ्गोपाङ्गत्रयाद्यसंहननसंस्थानशुभवर्णाद्येकादशकपराघातागुरुलघूच्छ्वासातपोद्योतनिर्माणप्रशस्तविहायोगतित्रसदशकतीर्थकरोच्चैर्गोत्रलक्षणानामेकोनसप्ततिसंख्यानां विपर्ययं जानीहि। तथाहि—उत्कृष्टे कषायोदयेऽनुभागबन्धाध्यवसायस्थानान्यासां सर्वस्तोकानि, द्विचरमे विशेषाधिकानि, त्रिचरमे विशेषाधिकानि, एवं तावद्वाच्यं यावत्सर्वजघन्यं कषायोदयस्थानम्। इयमनन्तरोपनिधया वृद्धिमार्गणा। परम्परोपनिधया वृद्धिमार्गणायां तूत्कृष्टकषायोदयस्थानादारभ्य यावत्सर्वजघन्यं कषायोदयस्थानं तावदधोऽधोऽसंख्येयलोकाकाशप्रदेशप्रमाणकषायोदयस्थानातिक्रमे यद्यत्स्थानमागच्छति तत्र तत्रानुभागबन्धाध्यवसायस्थानानां द्विगुणवृद्धिर्वाच्या। तानि च नानारूपाणि द्विगुणवृद्धिस्थानान्यावलिकाऽसंख्येयभागप्रमाणानि द्रष्टव्यानि। अमूनि चोक्तप्रमाणानि शुभप्रकृतीनामशुभप्रकृतीनां च प्रत्येकं द्विगुणस्थानानि स्तोकानि। एकस्मिन् द्विगुणवृद्ध्यपान्तराले कषायोदयस्थानान्यसंख्येयगुणानि । तदेवं स्थितिबन्धहेतुष्वध्यवसायेष्वनुभागबन्धहेतूनामध्यवसायानां प्ररूपणा कृता। अथ स्थितिबन्धस्थानेष्वनुभागबन्धस्थानप्ररूपणां कुर्वन्नाह—स्थितिबन्धस्थानेष्वपि सर्वासामायुर्वर्जानां प्रकृतीनां कषायोदयेष्वनुभागबन्धाध्यवसायस्थानानीवानुभागबन्धस्थानानि वक्तव्यानि। तत्र पूर्वोक्तानामायुर्वर्जानामशुभप्रकृतीनां जघन्यस्थितावनुभागबन्धस्थानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि। तानि च




पल्यासंख्येयभागमात्राणि स्थितिस्थानानि ग
त्वा यद्यत्पर स्थितिस्थानं तस्मिन् तस्मिन्
द्विगुणानि रसबन्धाध्यवसायस्थानानि भवन्ति.

० इति स्थितिस्थानकम्

. इति रसबन्धाध्यवसायस्थानम्

स्थितिबंधाध्यवसायेषु अनुभागाध्यवसायचित्रम्

८७ अशुभानाम्

| | | | |
|---|---|---|---|
| असं० लोकानि | | ○ | द्विगुणानि |
| विशेषाधिकानि | | ○ | “ |
| „ | | ○ | “ |
| „ | | ○ | “ |
| „ | द्विगुणानि | ○ | “ |
| „ | | ○ | द्विगुणानि |
| „ | | ○ | “ |
| „ | | ○ | “ |
| „ | | ○ | “ |
| „ | द्विगुणानि | ○ | “ |
| „ | | ○ | द्विगुणानि |
| „ | | ○ | “ |
| „ | | ○ | “ |
| „ | | ○ | “ |
| „ | द्विगुणानि | ○ | “ |
| „ | | ○ | द्विगुणानि |
| „ | | ○ | “ |
| „ | | ○ | “ |
| „ | | ○ | विशेषाधिका० |
| „ | द्विगुणानि | ○ | असं० लोकानि |

६९ शुभानाम्

जघन्यात् कषायोदयाद् संख्येयलोकाकाशप्रदेश-प्रमाणानि कषायोदयस्थानानि गत्वा परं यत् कषायोदयस्थानं तस्मिन् द्विगुणानि रसवन्धा-ध्यवसाय स्थानानि भवन्ति। एवमग्रेऽपि।

○ इति कषायोदयस्थानकम्

. इति रसवन्धाध्यवसायस्थानम्

स्तोकानि, ततो द्वितीयस्थितौ विशेषाधिकानि, ततोऽपि तृतीयस्थितौ विशेषाधिकानि, एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः । शुभप्रकृतीनां त्वायुर्वर्जानां प्रागुक्तानामुत्कृष्टस्थितावनुभागवन्धस्थानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि, तानि स्तोकानि, तत एकैकसमयहान्या जघन्यस्थितिं यावद्विशेषाधिकानि वाच्यानि ॥ ५५ ॥

पल्लासंखियभागं गंतुं दुगुणाणि आउगाणं तु । थोवाणि पढमबंधे विइयाइ असंखगुणियाणि ॥५६॥

(चू०)—परंपरोवणिहियाए पुव्वुत्ताणं आउगवज्जाणं असुभपगतीणं जहण्णियाए ठितीए अणुभागबन्धज्झवसाणट्ठाणाणि थोवाणि । ततो पलिओवमस्स असंखेज्जइभागं गंतूणं दुगुणवड्ढियाणि अणुभागबन्धज्झवसाणट्ठाणाणि । एवं दुगुणवड्ढियाणि दुगुणवड्ढियाणि जाव उक्कसियाणं ठितित्ति । एगं ठितिअणुभागबंधज्झवसाणट्ठाणंतरं पलिओवमस्स असंखेज्जइभागो, नाणाठितिअणुभागबंधज्झवसाणगुणहाणिट्ठाणंतराणि आवलियाए असंखेज्जइभागमेत्ताणि । णाणाठितीअणुभागबंधज्झवसाणहाणिट्ठाणंतराणि थोवाणि, एगं ठिइअणुभागबंधज्झवसाणट्ठाणंतरं असंखेज्जगुणं । पुव्वुत्ताणं आउगवज्जाणं सुभपगतीणं उक्कसियाए ठितीए अणुभागबंधज्झवसाणट्ठाणेहिंतो पलिओवमस्स असंखेज्जइभागमेत्ताणि ठाणाणि ओसरिऊण दुगुणवड्ढियाणि ठितिअणुभागबंधज्झवसाणट्ठाणाणि । एवं दुगुणवड्ढियाणि दुगुणवड्ढियाणि जाव जहण्णिया ठितित्ति । एगंतरनाणंतराणं पमाणं अप्पाबहुगं च जहा असुभाणं । 'आउगाणं तु थोवाणि पढमबंधे विइयाइ असंखगुणियाणि' त्ति—चतुण्हवि आउगाणं जहण्णियाए ठितीए अणुभागबन्धज्झवसाणट्ठाणाणि थोवाणि, समयाहियाए जहण्णगाए ठितीए अणु-

भागवन्धज्झवसाणट्ठाणाणि असंखेज्जगुणाणि, एवं जाव उक्कोसिया ठिती ताव णेयव्वं ॥ ५६ ॥

(मलय०)–तदेवं कृताऽनन्तरोपनिधया वृद्धिमार्गणा। सम्प्रति परम्परोपनिधया तां चिकीर्षुराह—'पल्ले'ति। पूर्वोक्तानामायुर्वर्जानामशुभप्रकृतीनां जघन्यस्थितेरारभ्य पल्योपमासंख्येयभागमात्राणि स्थितिस्थानान्यतिक्रम्य यदपरं स्थितिस्थानं तस्मिन् अनुभागबन्धस्थानानि जघन्यस्थितिसत्कानुभागबन्धस्थानेभ्यो द्विगुणानि भवन्ति। ततः पुनरपि तावन्ति स्थितिस्थानान्यतिक्रम्य यदपरं स्थितिस्थानं तस्मिन् द्विगुणान्यनुभागबन्धस्थानानि भवन्ति। एवं भूयो भूयस्तावद्वाच्यं यावदुत्कृष्टा स्थितिः। तथा पूर्वोक्तानामायुर्वर्जानां शुभप्रकृतीनामुत्कृष्टस्थितेरारभ्य पल्योपमासंख्येयभागमात्राणि स्थितिस्थानान्यतिक्रम्य यदपरमधःस्थितिस्थानं तस्मिन्ननुभागबन्धस्थानान्युत्कृष्टस्थितिस्थानसत्कानुभागबन्धस्थानेभ्यो द्विगुणानि भवन्ति। ततः पुनरपि तावन्ति स्थितिस्थानान्यधोऽवतीर्याधस्तनं यदपरं स्थितिस्थानं तस्मिन् द्विगुणानि भवन्ति। एवं तावद्वाच्यं यावज्जघन्या स्थितिः। एतानि च शुभप्रकृतीनामशुभप्रकृतीनां च प्रत्येकं द्विगुणवृद्धिस्थानानि आवलिकाया असंख्येयभागे यावन्तः समयास्तावत्प्रमाणानि भवन्ति। तथा द्विगुणवृद्धिस्थानानि स्तोकानि, आवलिकाया असंख्येयभागमात्रत्वात्। एकस्मिन् द्विगुणवृद्ध्योरपान्तराले स्थितिस्थानानि असंख्येयगुणानि, पल्योपमासंख्येयभागमात्रत्वात्। तथा चतुर्णामप्यायुषां जघन्यायां स्थितौ सर्वस्तोकान्यनुभागबन्धस्थानानि, ततः समयाधिकायां जघन्यस्थितौ असंख्येयगुणानि, ततोऽपि द्विसमयाधिकायामसंख्येयगुणानि, एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिरिति ॥ ५६ ॥

(उ०)–इयमनन्तरोपनिधया वृद्धिमार्गणा, अथेह परम्परोपनिधया तां चिकीर्षुराह—पल्योपमासंख्येयभागमात्राणि स्थितिस्थानानि गत्वाऽतिक्रम्य यद्यदपरं स्थितिस्थानं तस्मिंस्तस्मिन् प्राक्तनस्थितिस्थानसत्कानुभागबन्धस्थानेभ्यो द्विगुणान्यनुभागबन्धस्था-

### आयुषः स्थितिस्थानेषु अनुभागस्थानानाम्




आयुषस्तु जघन्यस्थितिस्थानादारभ्य उत्तरोत्तरस्मिन् स्थाने असंख्येयगुणानि रसबन्धाध्यवसायस्थानानि भवन्ति ।

नानि वाच्यानि । एतच्च पूर्वोक्तानामायुर्वर्जानामशुभप्रकृतीनां जघन्यस्थितेरारभ्योत्कृष्टस्थितिं यावदुपर्युपरि द्रष्टव्यम् । पूर्वोक्तानामायुर्वर्जानां शुभप्रकृतीनां तूत्कृष्टस्थितेरारभ्य जघन्यस्थितिं यावत्पल्योपमासंख्येयभागप्रमाणस्थितिस्थानातिक्रमेऽधोऽधोऽवतीर्य द्विगुणवृद्धिर्वाच्या । एतानि च शुभप्रकृतीनामशुभप्रकृतीनां च प्रत्येकं द्विगुणवृद्धिस्थानान्यावलिकाऽसंख्येयभागसमयप्रमाणानि भवन्ति । तथा द्विगुणवृद्धिस्थानानि स्तोकानि, आवलिकाऽसंख्येयभागमात्रत्वात् । एकस्मिन् द्विगुणवृद्ध्योरपान्तराले स्थितिस्थानान्यसंख्येयगुणानि, पल्योपमासंख्येयभागमात्रत्वात् । तथाऽऽयुषां चतुर्णामपि प्रथमबन्धे जघन्यस्थितिबन्धे सर्वस्तोकान्यनुभागबन्धस्थानानि, ततः समयाधिकायां जघन्यस्थितावसंख्येयगुणानि, ततोऽपि द्विसमयाधिकायामसंख्येयगुणानि । एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः ॥ ५६ ॥

एत्तो तिव्वसंदयाए पुव्वं गमणिज्जा अणुकड्ढी, सण्णिपंचिंदियंमि पगतं अभवसिद्धियपाउग्गं बंधमाणंमि ।

घाईणमसुभवण्णरसगंधफासे जहन्नठिइबंधे । जाणज्झवसाणाइं तदेगदेसो य अन्नाणि ॥५७॥

पल्लासंखियभागो जावं बिइयस्स होइ बिइयम्मि । आ उक्कस्सा एवं उवघाए वा वि अणुकड्ढि ॥५८॥

(चू०)—पंचविहं णाणावरणं, णवविह दंसणावरणं, मिच्छत्तं, सोलसकसाया, णवणोकसाया, कुवण्णणवगं, पंचविहं अंतराईयं, उवघायं य, एयासिं पगतीणं जहण्णियं ट्ठितिबंधमाणस्स 'जाणज्झवसाणाणि तदेगदेसो य अण्णाणि'त्ति—जाणि अणुभागज्झवसाणट्ठाणाणि बितियाए ट्ठितिए तदेकदेसो य अण्णाणि य, तइयाए ट्ठितिए तदेकदेसो य अण्णाणि, 'पलियासंखियभागो जावं'ति—एवं जाव पलिओवमस्स असंखेज्जइभागमेत्ताओ

ठितीओ ताव तदेगदेसो य अण्णाणि य । एसा जहण्णियाए ठितीए अणुभागबंधज्झवसाणट्ठाणाणं अणुकट्ठी ठिता । तओ अणंतरे उवरिमे समए बितियाए ठितीए अणुकट्ठी ठायइ–'बितियस्स होइ बीइयम्मि' त्ति । 'आ उक्कस्सा णं' ति–जाए ठितीए बितियट्ठितीए अणुकट्ठी ठिता ततो अणंतरे उवरिमे समए तइयाए ठितीए अणुकट्ठी ठायइ, एवं जाव अप्पणो उक्कसिया ठिति त्ति सव्वपगतीणं अप्पणो णामाणि घेत्तूण अणुकट्ठी णेयव्वा ॥८७–८८॥

(मलय०)–साम्प्रतमनुभागबन्धस्थानानां तीव्रमन्दतापरिज्ञानार्थमनुभागबन्धाध्यवसायस्थानानामनुकृष्टिमभिधातुकाम आह–'घाइ-णं' ति । इह प्रायो ग्रन्थिदेशे वर्त्तमानस्याभव्यजीवस्य यो जघन्यस्थितिबन्धस्तस्मात् स्थितिवृद्धौ अनुकृष्टिरभिधीयमानाऽनुसर्त्तव्या । सातवेदनीयमनुजद्विकदेवद्विकतिर्यग्द्विकपञ्चेन्द्रियजातित्रसबादरपर्याप्तप्रत्येकसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्युच्चैर्गोत्रनीचैर्गोत्राणामभव्यप्रायोग्यजघन्यबन्धादधोऽप्यनुसर्तव्या । तत्र घातिनां पञ्चविधज्ञानावरणनवविधदर्शनावरणमिथ्यात्वषोडशकषायनवनोकषायपञ्चविधान्तरायलक्षणानां कर्मणामशुभगन्धवर्णरसस्पर्शे च, अत्र षष्ठ्यर्थे सप्तमी, अशुभानां वर्णगन्धरसस्पर्शानां च कृष्णनीलदुरभिगन्धतिक्तकटुकगुरुकर्कशरूक्षशीतरूपाणां जघन्यस्थितिबन्धे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामेकदेशो द्वितीये स्थितिबन्धेऽनुवर्तते, अन्यानि च भवन्ति । इदमुक्तं भवति–जघन्यस्थितिबन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि द्वितीयस्थितिबन्धारम्भे प्राप्यन्ते, अन्यानि च भवन्ति । द्वितीयस्थितिबन्धारम्भे च यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि तृतीयस्थितिबन्धारम्भे प्राप्यन्ते, अन्यानि च भवन्ति । तृतीयस्थितिबन्धारम्भे च यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि

सर्वाण्यपि चतुर्थस्थितिबन्धारम्भे प्राप्यन्ते, अन्यानि च भवन्ति । एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्र जघन्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता । यत्र च जघन्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानासनुकृष्टिः परिसमाप्ता ततोऽनन्तरमुपरितने स्थितिबन्धे द्वितीयस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमियर्ति । तथा चाह–'बिइयस्स होइ बिइयंमि'–द्वितीयस्य स्थितिबन्धस्य संबन्धिनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिर्द्वितीये–यत्र जघन्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता ततोऽनन्तरे परिनिष्ठां याति । तृतीयस्थितिबन्धारम्भभाविनां चानुभागबन्धाध्यवसायस्थानानामनुकृष्टिस्ततोऽप्यनन्तरे परिसमाप्तिं याति । एवं तावद्वाच्यं यावदुक्तप्रकृतीनामात्मीयात्मीयोत्कृष्टा स्थितिर्भवति । तथा चाह–'आ उक्कस्सा एवं' । एवममुना प्रकारेण आ उत्कर्षादवगन्तव्यम् । तथोपघातेऽप्येवमेवानुकृष्टिरभिधातव्या यथा घातिप्रकृतीनामभिहिता अनुकृष्टिरिति । अनुकर्षणमनुकृष्टिरनुवर्तनमित्यर्थः ॥५७–५८॥

(उ०)–अथानुभागबन्धस्थानानां तीव्रमन्दतापरिज्ञानार्थमनुकृष्टिमभिधित्सुराह—इह ग्रन्थिदेशे वर्त्तमानस्याभव्यस्य यो जघन्यः स्थितिबन्धस्तस्मात् स्थितिवृद्धावनुकृष्टिरभिधीयमानाऽनुसर्त्तव्या । सातवेदनीयमनुजद्विकदेवद्विकतिर्यग्द्विकपञ्चेन्द्रियजातित्रसदशकाद्यसंहननसंस्थानप्रशस्तविहायोगत्युच्चैर्गोत्रनीचैर्गोत्राणां त्वभव्यप्रायोग्यजघन्यबन्धादधोऽप्यनुसर्त्तव्या । इह च वर्गे वर्गेऽनुकृष्टिस्तीव्रमन्दत्वानि च स्वस्थाने तुल्यानीति चत्वारो वर्गाः परिगृह्यन्ते–अपरावर्त्तमानाशुभप्रकृतिवर्गः, अपरावर्त्तमानशुभप्रकृतिवर्गः, परावर्त्तमानशुभप्रकृतिवर्गः, परावर्त्तमानाशुभप्रकृतिवर्गश्चेति । तत्र घातिप्रकृतय उपघातमशुभवर्णनवकं चेत्यपरावर्त्तमानाशुभप्रकृतिवर्गः । पराघातबन्धनतनुसंघातनांगो-

पांगसुराणां त्रसादशकतीर्थकरनिर्माणागुरुलघूच्छ्वासातपोद्योता अपरावर्त्तमानशुभप्रकृतिवर्गः। सातवेदनीयस्थिरादिपट्कोच्चैर्गोत्रदेवद्विक-मनुजद्विकपञ्चेन्द्रियजातिसमचतुरस्रवज्रर्षभनाराचप्रशस्तविहायोगतयः परावर्त्तमानशुभप्रकृतिवर्गः। असातस्थावरदशकनरकद्विकाप्रश-स्तविहायोगत्याद्यजातिचतुष्टयानाद्यसंस्थानसंहननानि परावर्त्तमानाशुभप्रकृतिवर्गः। तत्र प्रथमं वर्गमधिकृत्येदमभिधीयते—घातिनां प-ञ्चविधज्ञानावरणनवविधदर्शनावरणमिथ्यात्वषोडशकषायनवनोकषायपञ्चविधान्तरायलक्षणानां, अशुभवर्णगन्धरसस्पर्शे च, अत्र षष्ठ्यर्थे सप्तमीति, अशुभानां वर्णगन्धरसस्पर्शानां कृष्णनीलदुरभिगन्धतिक्तकटुगुरुकर्कशरूक्षशीतरूपाणामित्यर्थः। जघन्यस्थितिबन्धे यान्यनुभा-गबन्धाध्यवसायस्थानानि तदेकदेशः—तदेकदेशप्रमाणान्यन्यानि द्वितीयस्थितिबन्धेऽधिकान्यायान्ति, तावन्ति चासंख्येयं भागं मुक्त्वा द्वितीयस्थितिबन्धारम्भे प्राप्यन्त एव। इदमुक्तं भवति—जघन्यस्थितिबन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयभागं मुक्त्वा शेषाणि सर्वाण्यपि द्वितीयस्थितिस्थानबन्धारम्भे गच्छन्ति, तदेकदेशेनान्यानि च भवन्ति। तदुक्तम्—"मोत्तुमसंखं भागं जहन्नठिइठाणगाण सेसाइं। गच्छंति उवरिमाए तदेक्कदेसेण अण्णाइं॥" द्वितीयस्थितिबन्धारम्भे च यान्यनुभागबन्धाध्यवसायस्था-नानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि तृतीयस्थितिस्थानबन्धारम्भे गच्छन्ति, अन्यानि च भवन्ति। तृतीयस्थिति-बन्धारम्भे च यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि चतुर्थस्थितिस्थानबन्धारम्भे गच्छन्ति, अन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति। अत्र च जघन्यस्थितिब-न्धारम्भभाविनामनुकृष्टिः परिसमाप्ता। द्वितीयस्य स्थितिबन्धस्य सम्बन्धिनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिर्द्वितीये—यत्र जघ-न्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता ततोऽनन्तरे परिनिष्ठां याति। ततश्चानन्तरे तृती-

४६ पराघातादि अप० शुभानामनुकृष्टिः

| स्थि० स्था० | अनु० |
|---|---|
| ३० | अस्मिन्नसंख्येयलोकप्रमाणानि रसवन्धाध्यवसायस्थानानि आदितोऽसंख्येयभागं मुक्त्वोपरितनानि सर्वाणि अन्यानि च |
| २९ | |
| २८ | ,, |
| २७ | ,, |
| २६ | ,, ३० स्या. स० |
| २५ | ,, २९ ,, |
| २४ | ,, २८ ,, |
| २३ | ,, २७ ,, |
| २२ | ,, २६ ,, |
| २१ | ,, २५ ,, |
| २० | ,, २४ ,, |
| १९ | ,, २३ ,, |
| १८ | ,, २२ ,, |
| १७ | ,, २१ ,, |
| १६ | ,, २० ,, |
| १५ | ,, १९ ,, |
| १४ | ,, १८ ,, |
| १३ | ,, १७ ,, |
| १२ | ,, १६ ,, |
| ११ | ,, १५ ,, |
| १० | ,, १४ ,, |

५८ अपरा० अशुभानामनुकृष्टि (आवरणानि १४-मोह० २६-वि० ५-अशु० वर्णादि ९-उपघातानाम्)

स्थि० स्था० ५ ६ ७ ८ ९

अनु० अयो० अंतःको० को० सागराणि

पल्यो० असं०

प० अ०

| स्थि० स्था० | अनु० |
|---|---|
| १० | अस्मिन्नसंख्येयलोकप्रमाणानि रसवन्धाध्य० स्था० आदितोऽसंख्येयभागं मुक्त्वोपरितनानि सर्वाणि अन्यानि च |
| ११ | |
| १२ | ,, |
| १३ | ,, |
| १४ | ,, १० स्यानु० समाप्ता |
| १५ | ,, ११ ,, |
| १६ | ,, १२ ,, |
| १७ | ,, १३ ,, |
| १८ | ,, १४ ,, |
| १९ | ,, १५ ,, |
| २० | ,, १६ ,, |
| २१ | ,, १७ ,, |
| २२ | ,, १८ ,, |
| २३ | ,, १९ ,, |
| २४ | ,, २० ,, |
| २५ | ,, २१ ,, |
| २६ | ,, २२ ,, |
| २७ | ,, २३ ,, |
| २८ | ,, २४ ,, |
| २९ | ,, २५ ,, |
| ३० | ,, २६ ,, |

यस्थितिबन्धारम्भभाविनामनुकृष्टिर्निष्ठां याति। एवममुना प्रकारेण आ उत्कर्षादुत्कृष्टस्थितिं यावदवगन्तव्यम्। उपघातेऽप्येवमेवानुकृष्टिस्तु निर्गन्तव्या इति ॥ ५७-५८ ॥

परघाउज्जोउस्सासायवधुवनामतणुउवंगाणं। पडिलोमं सायस्स उ उक्कोसे जाणि समऊणे ॥५९॥
ताणि य अन्नाणेवं ठिइबंधो जा जहन्नगमसाए। हेट्ठुज्जोयसमेवं परित्तमाणीण उ सुभाणं ॥ ६० ॥

(चू०)—परघाय उज्जोवुस्सासं आयवसुहवण्णेक्कारसगं अगुरुलहुगं णिम्माणं पंचसरीर पंचसंघाय पण्णरसबंधणणाम तिण्णि अंगोवंगणामाणि अणुकड्ढि पडिलोमा। एतासिं पगतीणं उक्कोसियं ठितिं बन्धमाणस्स जाणि अणुभागबंधज्झवसाणट्ठाणाणि ततो समयूणाए ट्ठितीए तदेगदेसो य अण्णाणि य। विसमयूणाए उक्कोसियाए तदेकदेसो य अण्णाणि य। एवं तिसमयूणाए। एवं जाव पलिओवमस्स असंखेज्जइभागमेत्ताए ठितीए जाए उक्कसियाए ट्ठितीए अणुकड्ढी वोच्छिण्णा। तओ अणंतरे हिट्ठिल्ले समये समऊणाए उक्कसियाए ट्ठितीए अणुकड्ढी वोच्छिज्जई। जाए बिईए ठितीए समऊणाए उक्कसियाए ट्ठितीए अणुकड्ढी वोच्छिन्ना ततो अणंतरे हेट्ठिल्ले समए तिसमऊणाए उक्कसियाए ट्ठिईए अणुकड्ढी वोच्छिज्जइ। एवं जाव अप्पप्पणो जहण्णिया ठितित्ति अप्पप्पणो णामं घेत्तूणं अणुकड्ढी नेयव्वा। 'सायस्स य उक्कस्से जाणि य समयूणे ताणि य अण्णाणेवं ट्ठितिबंधो जा जहण्णगमसाए'—सायस्स ओक्कसियं ठितिं बन्धमाणस्स जाणि अणुभागबन्धज्झवसाणट्ठाणाणि समयूणाए

उक्कसियाए ठितीए ताणि य अण्णाणि य। बिसमयूणाए उक्कसियाए ठितीए ताणि य अण्णाणि य। एव जाव असायस्स जहण्णिया ठिती। 'हेट्ठुज्जोवसमं'ति–ततो जहण्णातो असायबंधातो जा समयूणा ठिती तीसे जाणि अणुभागबंधज्झवसाणट्ठाणाणि ताणि उवरिल्लाणं ठितीणं अणुभागबंधज्झवसाणट्ठाणेहिंतो तदेगदेसो य अण्णाणि य। ततो समयूणाए हेट्ठिल्लाए ठितीए अणुभागबंधज्झवसाणट्ठाणेहिंतो तदेक्कदेसो य अण्णाणि य। ततो बितियस्स समयूणाए हिट्ठिल्लाए ठिइए अणुभागबन्धज्झवसाणट्ठाणेहिंतो तदेकदेसो य अण्णाणि य। उच्चारेयव्वं जाव पलिओवमस्स असंखेज्जइभागमेत्ताणि ठाणाणि ताव तदेकदेसो य अण्णाणि य। एवं गातो असायबंधाओ जा समयूणा ठिती तीए अणुकड्ढी जहिं असायजहण्णगस्स ठितीए अणुकड्ढी वोच्छिण्णा ततो अणंतरे हिट्ठिल्लाए ठितीए ठाति। एवं णिरंतरं उसारियव्वं जाव सायस्स जहण्णिया ठिती एति ताव तदेकदेसो य अण्णाणि य। 'एवंपरित्तमाणीण उ सुभाणं'ति–एवं चेव परियत्तमाणगाणं सुभपगतीणं णेयव्वं। तातो इमाओ, तंजहा–देवदुगं मणुयदुगं पंचिंदियजाइ समचउरंसवज्जरिसभपसत्थविहायगतिथिरसुभसुभगसुस्सरआदेज्जा जसकित्ती उच्चागोयाणं अप्पप्पणो नामं घेत्तूणमणुकड्ढी णेयव्वा ॥ ५९–६० ॥

(मलय०)—'परघा' ति–पराघातोद्योतोच्छ्वासातपानां शुभवर्णाद्येकादशकागुरुलघुनिर्माणरूपाणां ध्रुवनाम्नां–'तणुउवंगाणं'ति, इह तनुग्रहणेन शरीरसंघातबन्धनानि गृह्यन्ते। ततश्च शरीरपञ्चकसंघातपञ्चकबन्धनपञ्चदशकाङ्गोपाङ्गत्रयाणां च सर्वसंख्यया पञ्चचत्वारिंशत्प्रकृतीनामनुकृष्टिः प्रतिलोममभिधातव्या। तद्यथा–एतासां प्रकृतीनामुत्कृष्टस्थितिबन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि

तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यपि एकसमयोनोत्कृष्टस्थितिबन्धारम्भे प्राप्यन्ते, अन्यानि च भवन्ति । एकसमयोनोत्कृष्टस्थितिबन्धारम्भे च यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि द्विसमयोनोत्कृष्टस्थितिबन्धारम्भे प्राप्यन्ते, अन्यानि च भवन्ति । एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयोऽधोऽधोऽतिक्रान्ता भवन्ति । सर्वोत्कृष्टस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानां स्थितिस्थाने स्थितिस्थानेऽसंख्येयासंख्येयभागमोचनेनानुकृष्टिः परिसमाप्ता । ततोऽनन्तरमधस्तने स्थितिस्थाने एकसमयोनोत्कृष्टस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिनिष्ठां याति । ततोऽप्यनन्तरे द्विसमयोनोत्कृष्टस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमियर्ति । एवं तावद्वाच्यं यावदुक्तप्रकृतीनां सर्वासामपि आत्मीया आत्मीया जघन्या स्थितिर्भवति । 'सायस्स' इत्यादि । सातस्योत्कृष्टां स्थितिं बध्नतो यान्यनुभागबन्धाध्यवसायस्थानानि समयोनोत्कृष्टस्थितिबन्धारम्भेऽपि तानि भवन्ति अन्यानि च । यानि समयोनोत्कृष्टस्थितिबन्धारम्भे भवन्ति द्विसमयोनोत्कृष्टस्थितिबन्धारम्भेऽपि तानि भवन्ति अन्यानि च । एवं तावद्वाच्यं यावदसातेऽसातस्य जघन्यः स्थितिबन्धः । किमुक्तं भवति ? यावत्प्रमाणाः स्थितयोऽसातस्य जघन्यानुभागबन्धप्रायोग्याः सातेन च सह परावर्त्य परावर्त्य बध्यन्ते तावत्प्रमाणासु सातस्य स्थितिषु तानि चान्यानि चेत्येवं क्रमोऽनुसरणीयः । 'हेट्ठुज्जोयसमं'ति—अधस्तादुद्योतसमं वक्तव्यं, यथा प्रागुद्योतस्याभिहितं तथात्रापि वक्तव्यमित्यर्थः । तद्यथा—असातस्य जघन्यस्थितिबन्धादधस्तने स्थितिस्थाने यान्यनुभागबन्धाध्यवसायस्थानानि तानि कानिचिदुपरितनस्थितिस्थानसत्कानि कानिचिदन्यानि । तस्मादप्यधस्तने स्थितिस्थाने यानि अनुभागबन्धाध्यवसायस्थानानि तानि कानिचित्प्राक्तनस्थितिस्थानसत्कानि, कानिचिदन्यानि । अनेन च क्रमेणाधोमुखं तावन्नेयं यावत्पल्योपमासंख्येयभागमात्राः

स्थितयो गता भवन्ति। तत्र चासातजघन्यस्थितिबन्धतुल्यस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति। एतदुक्तं भवति–असातजघन्यस्थितिबन्धतुल्यस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामधोऽध एकैकस्मिन् स्थितिस्थानेऽसंख्येये भागेऽसंख्येये भागे व्यवच्छिद्यमाने पल्योपमासंख्येयभागमात्रासु स्थितिष्वतिक्रान्तासु सर्वात्मना परिसमाप्तिर्भवतीति। ततोऽसातजघन्यबन्धतुल्यस्थितिस्थानादधस्तनस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः पल्योपमासंख्येयभागमात्रादधःस्थितौ निष्ठामेति। एवं तावद्वाच्यं यावत्सातस्य जघन्या स्थितिः। 'एवं परित्तमाणीण उ सुभाणं'–यथा सातवेदनीयस्योक्तं, तथा सर्वासां परावर्तमानप्रकृतीनां शुभानां मनुजद्विकदेवद्विकपञ्चेन्द्रियजातिसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्युच्चैर्गोत्ररूपाणां पञ्चदशसंख्यानां नामग्राहमनुकृष्टिरभिधातव्या इति ॥ ५९–६० ॥

(उ०)–इयं पञ्चपञ्चाशत्प्रकृतिसमुदायरूपे प्रथमवर्गेऽनुकृष्टिरभिहिता, अथ द्वितीयवर्गे तामाह—पराघातोद्योतोच्छ्वासातपानां शुभवर्णाद्येकादशकागुरुलघुनिर्माणरूपाणां ध्रुवनाम्नां, 'तणुउवंगाणं'ति–तनुग्रहणेन शरीरसंघातबन्धनानि गृह्यन्ते, ततश्च शरीरपञ्चकसंघातपञ्चकबन्धनपञ्चदशकाङ्गोपाङ्गत्रयाणां चानुकृष्टिः प्रतिलोममभिधातव्या। तथाहि–एतासां प्रकृतिनामुत्कृष्टस्थितिबन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यप्येकसमयोनोत्कृष्टस्थितिबन्धारम्भे प्राप्यन्तेऽन्यानि च भवन्ति। एकसमयोनोत्कृष्टस्थितिबन्धारम्भे च यानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि द्विसमयोनोत्कृष्टस्थितिबन्धारम्भे प्राप्यन्तेऽन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयोऽधोऽतिक्रान्ता भवन्ति। अत्रोत्कृष्टस्थितिबन्धारम्भभाविनामनुभागाध्यवसायस्थानानां स्थितिस्थाने स्थितिस्थानेऽसंख्येयभागमोचनेनानुकृष्टिः परिसमाप्ता। ततोऽनन्तरमधस्तने

स्थितिस्थाने एकसमयोनोत्कृष्टस्थितिबन्धारम्भभाविनामनुकृष्टिर्निष्ठां याति। ततोऽप्यनन्तराधस्तने द्विसमयोनोत्कृष्टस्थितिबन्धारम्भभाविनामनुकृष्टिर्निर्दिश्यते। एवं तावद्वाच्यं यावदात्मीया जघन्या स्थितिः। तीर्थंकरनामातिदेशेनाग्रे वक्ष्यमाणमप्यत्र द्रष्टव्यं, "परघायबंधणतणुअंगवन्नाइ तित्थनिम्माणं। अगुरुलहुसासतिगं संघायं छयाल सुभवग्गो॥" इत्येवं षट्चत्वारिंशत्प्रकृतिसमुदायरूपस्यापरावर्तमानशुभप्रकृतिवर्गस्य परिगणनात्, तत्र च सामस्त्येनेहानुकृष्टेरभिधित्सितत्वात्। उक्ता द्वितीयवर्गेऽनुकृष्टिः। अथ तृतीयवर्गमधिकृत्याह—'सायस्स उ' इत्यादि। सातस्योत्कृष्टां स्थितिं बध्नतो यान्यनुभागबन्धाध्यवसायस्थानानि समयोनोत्कृष्टस्थितिबन्धारम्भेऽपि तानि भवन्ति अन्यानि च। यानि च समयोनोत्कृष्टस्थितिबन्धारम्भे भवन्ति द्विसमयोनोत्कृष्टस्थितिबन्धारम्भेऽपि तानि अन्यानि च भवन्ति। एवं तावद्वाच्यं यावदसातेऽसातस्य जघन्यस्थितिबन्धः। अयमिह भावार्थः—सप्रतिपक्षाणां प्रकृतीनामन्तःकोटाकोटयादीनि स्थितिस्थानानि स्थापनीयानि, अभव्यस्य हि जघन्यः स्थितिबन्धः सर्वस्तोकोऽप्यन्तःकोटीकोटीप्रमाणः, तस्मादारभ्य च प्रायोऽनुकृष्टिरुक्तेति हेतोः। स्थापनायां च सातस्योपरिभागादारभ्याधोमुखमसातस्य चाधोभागादारभ्योर्ध्वमुखं सागरोपमशतपृथक्त्वप्रमाणाः स्थितयः परस्परमाक्रान्ताः स्थापयितव्याः। एतावत्यो हि स्थितयः परावर्त्य परावर्त्य बध्यन्ते तत आक्रान्ताः स्थाप्याः। शेषास्तु सातस्याधोमुखा असातस्य चोर्ध्वमुखाः स्थाप्याः यावत्पर्यन्तवर्त्तिनी निजनिजा स्थितिः, एताश्चान्तराले प्रतिपक्षप्रकृतिबन्धाभावाच्छुद्धा उच्यन्ते। ततोऽसातस्य जघन्यस्थितिबन्धं यावदधोमुखतया सातस्य स्थितयः प्रतिपक्षाक्रान्ताः सागरोपमशतपृथक्त्वप्रमाणा लभ्यन्ते। तत एतास्वाक्रममाणासु सातस्य स्थितिषु तानि चान्यानि चेत्येवं क्रमोऽनुसरणीयः। 'हेठुज्जोअसमं'ति—अधस्तात्सातस्य शुद्धस्थितिषु उद्योतसमं—यथा प्रागुद्योतस्याभिहितं तथा वक्तव्यम्। तथाहि—स्थापनायामसातस्य यो जघन्यः स्थितिबन्धोऽभव्यप्रायोग्यस्तत्समानं

यत् स्थितिस्थानं तत्र यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसङ्ख्येयतमं भागं मुक्त्वा शेषाणि सर्वाणि तदधस्तने स्थितिस्थाने प्राप्यन्तेऽन्यानि च भवन्ति । तत्रापि यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाणि ततोऽप्यधस्तने प्राप्यन्तेऽन्यानि च भवन्ति । अनेन क्रमेण तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । तत्र चासातसत्कजघन्यस्थितिबन्धतुल्यस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिर्निष्ठामेति । ततोऽधस्तने स्थितिस्थानेऽसातजघन्यबन्धतुल्यस्थितिस्थानाधस्तनस्थितिस्थानसत्कानामनुकृष्टिर्निष्ठिता भवति । एवं तावद्वाच्यं यावत्सातस्य जघन्या स्थितिः । अतिदेशमाह–एवं यथा सातवेदनीयस्योक्तं तथा सर्वासां परावर्त्तमानानां शुभानां मनुजद्विकदेवद्विकपञ्चेन्द्रियजातिसमचतुरस्रवज्रर्षभनाराचप्रशस्तविहायोगतिस्थिरषट्कोच्चैर्गोत्ररूपाणां पञ्चदशसंख्यानां शुभप्रकृतीनां नामग्राहमनुकृष्टिरभिधातव्या ॥ ५९–६० ॥

**जाणि असायजहन्ने उदहिपुहुत्तं ति ताणि अण्णाणि । आवरणसमुप्पेवं परित्तमाणीणमसुभाणं ॥६१॥**

(चू०)—असायस्स जहण्णयं ठितिं बंधमाणस्स जाणि अणुभागबंधज्झवसाणट्ठाणाणि ततो समयाहियाए ठितीए ताणि य अण्णाणि य । एवं बिसमयाहियाए ताणि य अण्णाणि य । एवं जाव सागरोवमसयपुहुत्तं । सागरोवमसयपुहुत्तं णाम जाव सायस्स उक्कोसिया ठिती ताव ताणि य अण्णाणि य । एसा परूवणा कयरासिं असायठितीणं ? भण्णइ–इमासिं जाउ ठिइउ बंधंतो असातस्स जहण्णगं अणुभागं बंधइ तासिं ठितीणं एसा परूवणा जाव सायस्स उक्कसिया ठिती ताव ताणि य अण्णाणि य । 'आवरणसमुप्पिं'ति–असायस्स जहन्नगं अणुभागं बन्धमाणस्स जा उक्कसिया ठिती तीसे जाणि अणुभागबंधज्झवसाणट्ठाणाणि

ततो समयुत्तराए ठिईए तदेकदेसो य अण्णाणि य । एवं विसमयुत्तराए, एवं जावती तेसिं ठिती । पलिओवमस्स असंखेज्जतिभागमेत्ताणि ट्ठाणाणि गंतूणं अणुकड्ढी तीसे ठितीए झीणा । तत्तो जा समयुत्तरा ट्ठिती तीसे ट्ठितीए अणुकड्ढी जहिं इयरस्स अणुकड्ढी ज्झीणा ततो अणंतरे उवरिमे ठितिट्ठाणे सिज्झइ । एवं जाव असायस्स उक्कसिया ठिती ताव णेयव्वा अणुकड्ढी । 'एवं परित्तमाणीण असुभाणं'ति–एवं चेव परित्तमाणीणं असुभपगईणं अणुकड्ढी भाणियव्वा । तंजहा–णिरयदुगं,आदिआतो चत्तारि जातीओ,अंतिमा पंच संघयणसंठाणा, अपसत्थविहायगति, थावरसुहुमअपज्जत्तगसाहारणअथिरअसुभदूभगदूसरअणादिज्जअजसकित्तिणामा, एयासिं अप्पप्पणो णामाणि घेत्तूणं अणुकड्ढी भाणियव्वा ॥ ६१ ।

(मलय०)–इदानीमसातस्योच्यते–'जाणि'त्ति । असातस्य जघन्यस्थितिबन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि तानि समयाधिकजघन्यस्थितिबन्धारम्भेऽपि भवन्ति, अन्यानि च । यानि समयाधिकजघन्यस्थितिबन्धारम्भेऽनुभागबन्धाध्यवसायस्थानानि तानि द्विसमयाधिकजघन्यस्थितिबन्धारम्भेऽपि भवन्ति, अन्यानि च । एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वं भवति । यावन्मात्रासु सातवेदनीयस्य स्थितिषु तानि नान्यानि चेत्येवंक्रमोऽनुकृष्टेरभिहितस्तावत्प्रमाणास्वेवासातवेदनीयस्थितिष्वपि जघन्यस्थितेरारभ्य तानि नान्यानि चेत्येवमनुकृष्टिरभिधातव्या । एता एव च स्थितयः सर्वजघन्यानुभागबन्धप्रायोग्याः । यत एतावत्यः स्थितयः सातासातयोः परावृत्य बध्यन्ते । परावर्तमानश्च प्रायो मन्दपरिणामो भवति । तत एतासु जघन्यानुभागबन्धसंभवः । इत ऊर्ध्वं त्वसातमेव केवलं बध्नाति, तदपि न तीव्रतरेण परिणामेन, ततो न तत्र जघन्यानुभागबन्धसंभव इति । 'आवरणसमं उप्पि'ति–तत उ-

परितनीनां स्थितीनां यथा ज्ञानावरणीयादेरुक्तं तदेकदेशोऽन्यानि चेति तथैवाभिधातव्यम् । तद्यथा—असातस्य जघन्यानुभागबन्धप्रायोग्यानां स्थितीनां या चरमा स्थितिस्तद्बन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामेकदेशस्तदुपरितनस्थितिबन्धारम्भेऽनुवर्तते, अन्यानि च भवन्ति । ततोऽप्युपरितनस्थितिबन्धारम्भे प्राक्तनस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामेकदेशोऽनुवर्तते, अन्यानि च भवन्ति । एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्र च जघन्यानुभागबन्धप्रायोग्यचरमस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमेति । ततोऽप्युपरितनस्थितिबन्धे जघन्यानुभागबन्धप्रायोग्यस्थित्यनन्तरस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति । एवं तावद्वाच्यं यावदसातस्योत्कृष्टा स्थितिर्भवति । 'एवं परित्तमाणीणमसुभाणं'—यथाऽसातवेदनीयस्योक्तं एवं शेषाणामपि परावर्तमानप्रकृतीनामशुभानां नरकद्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयप्रथमवर्जसंस्थानपञ्चकप्रथमवर्जसंहननपञ्चकाप्रशस्तविहायोगतिस्थावरसूक्ष्मसाधारणापर्याप्तास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिरूपाणां सप्तविंशतिसंख्यानां प्रत्येकं नामग्राहमनुकृष्टिरभिधातव्या इति ॥ ६१ ॥

(उ०)—उक्ता तृतीयवर्गेऽनुकृष्टिः,अथ तुरीयवर्गे तामाह—असातस्य जघन्यस्थितिबन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि तानि समयाधिकजघन्यस्थितिबन्धारम्भेऽपि भवन्ति, अन्यानि च । यानि समयाधिकजघन्यस्थितिबन्धारम्भेऽनुभागबन्धाध्यवसायस्थानानि तानि द्विसमयाधिकजघन्यस्थितिबन्धारम्भेऽपि भवन्ति, अन्यानि च । एवं तावद्वाच्यं यावदुदधिपृथक्त्वं—सागरोपमशतपृथक्त्वं भवति । यावन्मात्रासु सातवेदनीयस्थितिष्वधोमुखेन तानि चान्यानि चेत्येवं क्रमोऽनुकृष्टेरुक्तस्तावत्प्रमाणास्वेवासातवेदनीयस्थितिषूर्ध्वमुखेन तानि चान्यानि चेत्येवं जघन्यस्थितेरारभ्य क्रमोऽभिधेय इत्यर्थः । एता एव च स्थितयोऽसातस्य सर्वजघन्यानुभागबन्धप्रायोग्याः,यतः

एतावत्यः स्थितयः सातात् परावृत्य परावृत्य बध्यन्ते परावर्त्तमानश्च प्रायो मन्दपरिणामो भवति, तत एतासु जघन्यानुभागबन्धसंभवः। इत ऊर्ध्वं त्वसातमेव केवलं बध्यते, तच्च तीव्रतरेण परिणामेन, ततो न तत्र जघन्यानुभागबन्धसंभवः। 'उप्पि'ति–तत उपरि आवरणसमं–ज्ञानावरणादितुल्यं वक्तव्यम्। तथाहि–जघन्यानुभागबन्धप्रायोग्यस्थितीनां चरमस्थितिबन्धे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि तदुपरितनस्थितिबन्धारम्भेऽनुवर्त्तन्ते अन्यानि च भवन्ति। ततोऽप्युपरितनस्थितिबन्धारम्भे प्राक्तनस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यनुवर्त्तन्तेऽन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति। अत्र जघन्यानुभागबन्धप्रायोग्यचरमस्थितिसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्यते। ततोऽप्युपरितनस्थितिबन्धे जघन्यानुभागबन्धप्रायोग्यचरमस्थित्यनन्तरस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः समाप्यते। एवं तावद्वाच्यं यावदसातस्योत्कृष्टा स्थितिः। अतिदेशमाह–एवं यथाऽसातवेदनीयस्योक्तं तथैव परावर्त्तमानानामशुभानां स्थावरदशकनरकद्विकाद्यजातिचतुष्टयानाद्यसंस्थानसंहननाप्रशस्तविहायोगतिरूपाणां सप्तविंशतिसंख्यानामशुभप्रकृतीनां नामग्राहमनुकृष्टिरभिधेया ॥ ६१ ॥

इयाणिं तिरियगईए अणुकड्ढी भण्णइ—

**से काले सम्मत्तं पडिवज्जंतस्स सत्तमखिईए। जो ठितिबंधो हस्सो एत्तो आवरणतुल्लो उ ॥६२॥**

**जा अभवियपाउग्गा उप्पिमसायसमया उ आजेट्ठा। एसा तिरियगतिदुगे नीयागोए य अणुकड्ढी ॥६३॥**

(चू०)—तंजहा–सत्तमाए पुढवीए णेरतियस्स तिरियगतीए सव्वजहण्णगं ठितिं बन्धमाणस्स जाणि अणुभा-
गबन्धज्झवसाणट्ठाणाणि वितियाए ठितीए तदेक्कदेसो य अण्णाणि य। एवं ततियाए तदेक्कदेसो य अण्णाणि
य। एवं जाव पलिओवमस्स असंखेज्जतिभागमेत्ताणि ठितिट्ठाणाणि गंतूण तीसे ठितीए अणुकड्ढी ज्झीणा। जंमि
ठितिट्ठाणे जहण्णियाए ठितीए अणुकड्ढी वोच्छिण्णा ततो से काले समउत्तराए ठितीए अणुकड्ढी वोच्छिज्जइ। जं-
मि समउत्तराए ठितीए अणुकड्ढी वोच्छिण्णा ततो से काले विसमयुत्तराए ठितीए अणुकड्ढी वोच्छिज्जइ। जंमि
विसमउत्तराए ठितीए अणुकड्ढी वोच्छिन्ना ततो से काले तिसमउत्तराए ठितीए अणुकड्ढी वोच्छिज्जइ। एवं जाव
अभवसिद्धियपाउग्गं जहन्नगं ठितीबंधचरिमसमयं ण पावइ। 'उप्पिमसायसमया उ आजेट्ठ'त्ति–ततोऽभव-
सिद्धियपाउग्गं जहण्णं ठितीं बंधंतस्स जाणि अणुभागबंधज्झवसाणट्ठाणाणि ततो उवरिल्लाए समयुत्तराए
ठितीए ताणि य अण्णाणि य। एवं वितियाए य ठितिए ताणि य अण्णाणि य, तइयाए ठितीए ताणि य अण्णाणि य,
एवं जाव सागरोवमपुहुत्तं ताव ताणि य अण्णाणि य। एसा परूवणा कयरासिं तिरियगतिट्ठितीणं? भण्णइ–
सत्तमाए पुढवीए णेरइओ तिरिक्खगतिणामा य अभवसिद्धिओ अप्पणो ज-
हण्णगं अणुभागं बन्धंति तासिं ठितीणं एसा परूवणा। तासिं ठितीणं जा उक्कसिगा ट्ठिती तीसे ठितीए जाणि
अणुभागबंधज्झवसाणठाणाणि ततो समयुत्तराए ठितीए तदेकदेसो य अण्णाणि य। एवं जाव पलिओवमस्स
असंखेज्जभागमेत्ताणि ठितिट्ठाणाणि ताव तदेकदेसो य अण्णाणि य। जिसे ठितीए पलिओवमस्स असंखेज्ज-

इभागे अणुकड्ढी झीणा ततो जा समयुत्तरा ठिती तीसे अणुकड्ढी जहिं इयरिस्से ठितीए अणुकड्ढी उझीणा ततो से काले समयुत्तराए ठितीए ज्झिज्जइत्ति। जंमि समयुत्तराए ठितीए अणुकड्ढी ज्झिणा ततो से कालेपि समयुत्तराए ठितीए अणुकड्ढी ज्झिज्जइ । एवं बिसमयुत्तराए तिसमयुत्तराए अणुकड्ढी झिज्झइ। एवं जाव तिरियगतीणामाए उक्कस्सिया ठितित्ति । 'एसा तिरियगतिदुगे णीयागोए य अणुकड्ढी'त्ति–जहा तिरियगइअंमि तहा तिरियगतिपाओग्गाणुपुव्वीए णीयागोयस्स अणुकड्ढी णेयव्वा ॥६२–६३॥

(मलय०)–इदानीं तिर्यग्द्विकनीचैर्गोत्राणामनुकृष्टिमभिधातुकाम आह—'से' त्ति । सप्तमपृथिव्यां वर्तमानस्य नारकस्य 'से काले'–अनन्तरसमये सम्यक्त्वं प्रतिपत्तुकामस्य यो 'हृस्वो'–जघन्यः स्थितिबन्ध इत ऊर्ध्वं स्थितिबन्धोऽनुकृष्टिमधिकृत्य 'आवरणतुल्यो'–ज्ञानावरणतुल्यो ज्ञातव्यः, स च तावद्यावदभव्यप्रायोग्या जघन्या स्थितिः । तत्र तिर्यग्गतिमधिकृत्य भावना क्रियते–सप्तमपृथिव्यां वर्तमानस्य नारकस्य सम्यक्त्वं प्रतिपत्तुकामस्य तिर्यग्गतेर्जघन्यां स्थितिं बध्नतो यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वाऽन्यानि सर्वाण्यपि द्वितीयस्थितिबन्धारम्भेऽनुवर्तन्ते, अन्यानि च भवन्ति । द्वितीयां च स्थितिं बध्नतो यानि यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वाऽन्यानि सर्वाण्यपि तृतीयस्थितिबन्धारम्भेऽनुवर्तन्ते, अन्यानि च भवन्ति । एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्र च जघन्यस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमियर्ति । तत उपरितनस्थितिबन्धारम्भे द्वितीयस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति । ततोऽप्युपरितनस्थितिबन्धारम्भे तृतीयस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिपरिसमाप्तिमे-

नि। एवं तावद्वाच्यं यावदभव्यप्रायोग्यो जघन्यस्थितिबन्धः। 'उप्पिं असायसमया उ आजेट्ठा'–तत उपरिष्टात्, अभव्यप्रायोग्यजघन्यस्थितिबन्धादारभ्येत्यर्थः, असातेन समता–तुल्यता ज्ञातव्या, 'आ जेट्ठ'त्ति–यावज्ज्येष्ठा–उत्कृष्टा स्थितिः। एतदुक्तं भवति–अभव्यप्रायोग्यां जघन्यां स्थितिं बध्नतो यानि अनुभागबन्धाध्यवसायस्थानानि तानि तत उपरितनस्थितौ सर्वाणि भवन्ति, अन्यानि च। तस्यामपि यानि अनुभागबन्धाध्यवसायस्थानानि तानि उपरितनस्थितौ सर्वाणि भवन्ति, अन्यानि च। एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वम्। एताश्च प्रायोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषयाः स्थितयः। एता हि मनुष्यगतिरूपया प्रतिपक्षप्रकृत्या सह परावृत्य परावृत्य बध्यन्ते, परावृत्य बन्धे च प्रायः परिणामो मन्द उपजायते, तत एता जघन्यानुभागबन्धविषयाः। एतासां चरमस्थितौ यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यपि तदुपरितनस्थितिबन्धारम्भेऽनुवर्तन्ते, अन्यानि च भवन्ति। तत्रापि यानि अनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि तत उपरितनस्थितिबन्धारम्भेऽनुवर्तन्ते, अन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति। अत्र जघन्यानुभागबन्धविषयचरमस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता। तत उपरितने स्थितिबन्धे जघन्यानुभागबन्धविषयचरमस्थित्यनन्तरस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति। एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः। 'एसा तिरियगतिदुगे नीयागोए य अणुकड्ढी'–एषाऽनन्तरोक्ताऽनुकृष्टिः तिर्यग्गतिद्विके–तिर्यग्गतितिर्यगानुपूर्वीलक्षणे नीचैर्गोत्रे च द्रष्टव्या। तत्र यथा तिर्यग्गतौ भाविता तथा तिर्यगानुपूर्व्यां नीचैर्गोत्रे च स्वयमेव भावनीयेति ॥ ६२–६३ ॥

(उ०)–तदेवं चतुर्णामपि वर्गाणामनुकृष्टिरभिहिता, अथ तिर्यग्द्विकनीचैर्गोत्राणामनुकृष्टिमभिधित्सुराह—सप्तमक्षितौ वर्त्तमानस्य ना-

रकस्य 'से काले'—अनन्तरसमये सम्यक्त्वं प्रतिपद्यमानस्य यो हस्वो—जघन्यः स्थितिबन्धः इत ऊर्ध्वं स्थितिबन्धोऽनुकृष्टिमधिकृत्याव-रणतुल्यो—ज्ञानावरणतुल्यो ज्ञातव्यः। स च तावद्यावदभव्यप्रायोग्या जघन्या स्थितिः। तिर्यग्द्विकनीचैर्गोत्राणां हि स्थापनायां स्वप्रतिपक्षप्रकृतिजघन्यस्थितिबन्धादभव्यप्रायोग्याज्जघन्यतरः स्थितिबन्धः स्थापनीयः। ततोऽभव्यप्रायोग्यजघन्यस्थितिं यावज्ज्ञानावरणतुल्यता द्रष्टव्येत्यर्थः। तत्र तिर्यग्गतिमधिकृत्य भाव्यते—सप्तमपृथिव्यां वर्त्तमानस्य नारकस्य सम्यक्त्वं प्रतिपित्सतस्तिर्यग्गतेर्जघन्यां स्थितिं बध्नतो यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वाऽन्यानि सर्वाण्यपि द्वितीयस्थितिबन्धारम्भेऽनुवर्त्तन्तेऽन्यानि च भवन्ति। द्वितीयां स्थितिं बध्नतो यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वाऽन्यानि सर्वाण्यपि तृतीयस्थितिबन्धारम्भेऽनुवर्त्तन्तेऽन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गच्छन्ति। अत्र च जघन्यस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिर्निष्ठां याति। ततः उपरितनस्थितिबन्धारम्भे द्वितीयस्थितिसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः समाप्तिमियर्त्ति। ततोऽप्युपरितनस्थितिबन्धारम्भे तृतीयस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमेति। एवं तावद्वाच्यं यावदभव्यप्रायोग्यो जघन्यस्थितिबन्धः। तत उपरिष्टादभव्यप्रायोग्यजघन्यस्थितिबन्धादारभ्येत्यर्थः असातेन समता—तुल्यता ज्ञातव्या। 'आजेट्ठ'त्ति—यावज्ज्येष्ठोत्कृष्टा स्थितिः। इदमुक्तं भवति—अभव्यप्रायोग्यां जघन्यां स्थितिं बध्नतो यान्यनुभागबन्धाध्यवसायस्थानानि तानि तत उपरितनस्थितौ सर्वाणि भवन्ति अन्यानि च। तस्यामपि यान्यनुभागबन्धाध्यवसायस्थानानि तानि तत उपरितनस्थितौ सर्वाणि भवन्त्यन्यानि च। एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वम्। एताश्च स्थितयः प्रायोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषयाः। यत एता मनुष्यगतिरूपप्रतिपक्षप्रकृत्या परावृत्त्य परावृत्त्य बध्यन्ते पराव-

## तिर्यग्द्विकनीचैर्गोत्राणामनुकृष्टिः

सम्यक्त्वोन्मुखमिथ्यादृ-
कस्य सर्व ज०स्थि० बंध.

- ५ मन्दानुभा०
- ६ तदेकदेशा०
- ७ ,,
- ८ ,,
- ९ ,,
- १० ,,
- ११ ,,
- १२ ,,
- १३ ,,
- १४ ,,
- १५ ,,
- १६ ,,
- १७ ,,
- १८ ,,
- १९ ,,
- २० ,,

प० अ० — अंतः को० को०

- २१ तान्यन्यानि च
- २२ ,,
- २३ ,,
- २४ ,,
- २५ ,,
- २६ ,,
- २७ ,,
- २८ ,,
- २९ ,,
- ३० ,,
- ३१ ,,
- ३२ ,,
- ३३ ,,
- ३४ ,,
- ३५ ,,
- ३६ ,,
- ३७ ,,
- ३८ ,,
- ३९ ,,
- ४० ,,

अभव्यस्य जघन्यानुभागबंधप्रायोग्यानि

- ४१ तदेकदेशा०
- ४२ ,,
- ४३ ,,
- ४४ ,,

प० अ०

- ४५ ,,
- ४६ ,,
- ४७ ,,
- ४८ ,,
- ४९ ,,
- ५० ,,

स्थानु० सं०: ५, ६ ,, ७ ,, ८ ,, ९ ,, १० ,, ११ ,, १२ ,, १३ ,, १४ ,, १५ ,,

स्थानु० सं०: ४० ,, ४१ ,, ४२ ,, ४३ ,, ४४ ,, ४५ ,, ४६

त्यबन्धे च प्रायः परिणाममान्द्यं भवति तत एता जघन्यानुभागबन्धविषयाः । एतासां चरमस्थितौ यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यपि तदुपरितनस्थितिबन्धारम्भेऽनुवर्त्तन्तेऽन्यानि भवन्ति च। तत्रापि यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यपि तत उपरितनस्थितिबन्धारम्भेऽनुवर्त्तन्तेऽन्यानि च भवन्ति । एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गच्छन्ति । अत्र जघन्यानुभागबन्धविषयचरमस्थितिसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिर्निष्ठामियर्त्ति । तत उपरितनस्थितिबन्धे जघन्यानुभागबन्धविषयचरमस्थित्यनन्तरस्थितिसत्कानां तेषामनुकृष्टिः समाप्यते । एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः । एषा तिर्यग्गतिद्विके नीचैर्गोत्रे चानुकृष्टिः । तत्र यथा तिर्यग्गतौ भाविता तथा तिर्यगानुपूर्व्यां नीचैर्गोत्रे च भावनीया ॥ ६२–६३ ॥

**तसबायरपज्जत्तगपत्तेगाण परघायतुल्लाओ । जाव अठारसकोडाकोडी हेट्ठा य साएणं ॥६४॥**

(चू०)—एत्तो तसणामाए अणुकड्ढी वत्तयिस्सामो। तंजहा–तसणामाए उक्कस्सगं ठितिबंधंतस्स जाणि अणुभागबंधज्झवसाणट्ठाणाणि समयूणाए ठितीए तदेकदेसो य अण्णाणि य। बिसमयूणाए तदेकदेसो य अण्णाणि य । तिसमऊणाए तदेकदेसो य अण्णाणि य । एवं जाव पलिओवमस्स असंखेज्जतिभागो ताव तदेकदेसो य अण्णाणि य । (एत्थ) उक्कसियाए ठितीए अणुकड्ढी णिट्ठिता । ततो से काले समयूणाए उक्कसियाए ठितीए अणुकड्ढी णिट्ठायति । जहिं समगूणाए ठितीए अणुकड्ढी णिट्ठिता ततो से काले बिसमगूणाए ठितीए अणुकड्ढी णिट्ठायति । जंमि बिसमऊणाए ठितीए अणुकड्ढी णिठिता ततो से काले तिसमगूणाए ठितीए अणुकड्ढी णिट्ठायति ।

एवं अट्ठारससागरोवमकोडाकोडी समउत्तरति। एवं वे सागरोवमकोडाकोडीओ। ततो अट्ठारसकोडाकोडीबंधं- तस्स जाणि अणुभागबंधज्झवसाणठाणाणि समगूणाए ठितीए ताणि य अण्णाणि य। बिसमगूणाए ठितीए ता- णि य अण्णाणि य। तिसमगूणाए ठितीए ताणि अण्णाणि य। जाव थावरनामाए जहण्णगो ठितिबंधो ताव ताणि य अण्णाणि य। 'हेट्ठा य सातेणं'ति-ततो थावरनामाए जहण्णाउ ठितिबंधाउ समऊणाए ठितीए तदेकदेसो य अण्णाणि य। बिसमऊणाए ठितीए तदेकदेसो य अण्णाणि य। तिसमगूणाए ठितीए तदेकदेसो य अण्णाणि य। एवं जाव पलिओवमस्स असंखेज्जतिभागो ताव तदेकदेसो य अण्णाणि य एत्थ जहन्नियाए ठितीए अणुकड्ढी निट्ठिया। एवं णिरंतरं ओयारिअव्वं जाव अप्पणो सव्वजहन्ना ठिई। एवं चेव 'बादरपज्जत्तगपत्तेगाण'त्ति-बाद- रपज्जत्तपत्तेयणामाण अणुकड्ढी भाणियव्वा ॥ ६४ ॥

(मलय०)-सम्प्रति त्रसादिचतुष्कस्यानुकृष्टिमभिधातुकाम आह—'तस'त्ति। त्रसबादरपर्याप्तप्रत्येकनाम्नामनुकृष्टिः 'पराघाततुल्या'— पराघातस्येव द्रष्टव्या। सा चोपरितनात् स्थितिस्थानादारभ्याधोऽवतरणेन तावदवसेया यावदधस्तादष्टादशकोटीकोटयः सागरोपमाणां तिष्ठन्ति। ततोऽधस्तात् सातेन तुल्यानुकृष्टिरभिधातव्या। तत्र त्रसनाम्नो भाव्यते-त्रसनाम्न उत्कृष्टस्थितिबन्धारम्भे यान्यनुभागब- न्धाध्यवसायस्थानानि तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यपि समयोनोत्कृष्टस्थितिबन्धारम्भेऽनुवर्तन्ते, अन्यानि च भवन्ति। समयोनोत्कृष्टस्थितिबन्धारम्भेऽपि च यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यपि द्विसमयोनो- त्कृष्टस्थितिबन्धारम्भेऽपि अनुवर्तन्ते, अन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति।

अत्रोत्कृष्टस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता । ततोऽधस्तने स्थितिस्थाने समयोनोत्कृष्टस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिं याति । ततोऽप्यधस्तने स्थितिस्थाने द्विसमयोनोत्कृष्टस्थितिसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्तिमेति । एवमधोऽधोऽवतरणेन तावद्वाच्यं यावदधस्तादष्टादशसागरोपमकोटीकोटयस्तिष्ठन्ति । ततोऽष्टादशसागरोपमकोटीकोटीचरमस्थितौ यान्यनुभागबन्धाध्यवसायस्थानानि तान्यधस्तनस्थितिबन्धारम्भे सर्वाण्यपि भवन्ति, अन्यानि च । यानि चाधस्तनस्थितिबन्धारम्भेऽनुभागबन्धाध्यवसायस्थानानि तानि ततोऽप्यधस्तनस्थितिबन्धारम्भे सर्वाण्यपि भवन्ति, अन्यानि च । एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धविषयस्थावरनामसत्कस्थितिप्रमाणाः स्थितयो गता भवन्ति । ततोऽनन्तरमधस्तने स्थितिस्थाने प्राक्तनानन्तरस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामसंख्येयं भागं मुक्त्वा सर्वाण्यपि तान्यनुवर्तन्ते, अन्यानि च भवन्ति । ततोऽप्यधस्तनतरे स्थितिबन्धे प्राक्तनानन्तरस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामसंख्येयं भागं मुक्त्वा शेषाणि तानि सर्वाण्यप्यनुवर्तन्ते, अन्यानि च भवन्ति । एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति । अत्र जघन्यानुभागबन्धविषयस्थावरनामसत्कस्थितिप्रमाणतया अभिहितानां प्रथमस्थितेर्यान्यनुभागबन्धाध्यवसायस्थानानि तेषामनुकृष्टिः परिसमाप्ता । ततोऽधस्तने स्थितिस्थाने द्वितीयस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिनिष्ठामेति । एवं तावद्वाच्यं यावज्जघन्या स्थितिः । एवं बादरपर्याप्तप्रत्येकनाम्नामपि भावना कार्या ॥ ६४ ॥

(उ०)–अथ त्रसादिचतुष्कस्यानुकृष्टिमभिधित्सुराह—त्रसबादरपर्याप्तप्रत्येकनाम्नामनुकृष्टिः पराघाततुल्या–पराघातस्येव वक्तव्या । सा चोपरितनात्स्थितिस्थानादारभ्याधोऽधोऽवतीर्य यावदधस्तादष्टादशकोटीकोट्यः सागरोपमाणां तिष्ठन्ति तावद्द्रष्टव्या । ततोऽधस्तात्सा-

त्रसचतुष्कस्यानुकृष्टिः

यान्यनुभा० तदेकद्वयान्या " " " " " " " " " " " | तान्यन्यानि " " " " " " " " " " " " " " " " " " " | तदेकं० " " " " " " " "

५५ ५४ ५३ ५२ ५१ ५० ४९ ४८ ४७ ४६ ४५ ४४ ४३ ४२ ४१ ४० | ३९ ३८ ३७ ३६ ३५ ३४ ३३ ३२ ३१ ३० २९ २८ २७ २६ २५ २४ २३ २२ २१ २० | १९ १८ १७ १६ १५ १४ १३ १२ ११ १०

ग० अ० — २ को. को. सागराणि — अभव्यस्य जघन्यानुभागबंधप्रायोग्यस्थावरस्थिति- — प० अ०

प्रमाणाः स्थितयः

स्थाव० स० " " " " " " " " " " "

५५ ५४ ५३ ५२ ५१ ५० ४९ ४८ ४७ ४६ ४५ ४४

स्थाव० स० " " " " " "

२० १९ १८ १७ १६ १५ १४

तेन तुल्यानुकृष्टिरभिधेया। तत्र त्रसनाम्नो भावना क्रियते–त्रसनाम्न उत्कृष्टस्थितिबन्धारम्भे यान्यनुभागबन्धाध्यवसायस्थानानि तेषामसंख्येयतमं भागं मुक्त्वा शेषाणि सर्वाण्यपि समयोनोत्कृष्टस्थितावनुवर्त्तन्तेऽन्यानि च भवन्ति। तानि च सर्वाण्यसंख्येयभागं मुक्त्वा द्वितीयस्थितिबन्धारम्भे प्राप्यन्तेऽन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गच्छन्ति। अत्रोत्कृष्टस्थितिसत्कानामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः समाप्तिमियर्त्ति। ततोऽधस्तने च स्थितिस्थाने समयोनोत्कृष्टस्थितिसत्कानां तेषामनुकृष्टिर्निष्ठामुपैति। एवं तावद्वाच्यं यावदधस्तादष्टादशसागरोपमकोटीकोट्यस्तिष्ठन्ति। ततोऽष्टादशसागरोपमकोटाकोटीचरमस्थितौ यान्यनुभागबन्धाध्यवसायस्थानानि तान्यधस्तनस्थितिबन्धारम्भे सर्वाण्यपि भवन्त्यन्यानि च। तत्स्थानभावीनि च सर्वाण्यपि ततोऽप्यधस्तने स्थितिस्थाने भवन्त्यन्यानि च। एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धविषयस्थावरनामसत्कस्थितिप्रमाणाः स्थितयो गता भवन्ति। ततोऽनन्तरमधस्तने स्थितिस्थाने प्राक्तनानन्तरस्थितिस्थानसत्कानामनुभागबन्धाध्यवसायस्थानानामसंख्येयं भागं मुक्त्वा सर्वाण्यपि तान्यनुवर्त्तन्तेऽन्यानि च भवन्ति। ततोऽप्यधस्तने स्थितिबन्धे प्राक्तनानन्तरस्थितिस्थानसत्कानां तेषामसंख्येयं भागं मुक्त्वा शेषाणि सर्वाण्यपि तान्यनुवर्त्तन्तेऽन्यानि च भवन्ति। एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गच्छन्ति। अत्र जघन्यानुभागबन्धविषयस्थावरनामसत्कस्थितिप्रमाणतयाऽभिहितानां स्थितीनां प्रथमस्थितेर्यान्यनुभागबन्धाध्यवसायस्थानानि तेषामनुकृष्टिर्निष्ठिता। ततोऽधस्तने स्थितिस्थाने द्वितीयस्थितिस्थानसत्कानुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिनिष्ठामेति। एवं तावद्वाच्यं यावत्सर्वजघन्या स्थितिः। एवं बादरपर्याप्तप्रत्येकनाम्नामपि भावना कार्या ॥ ६४ ॥

**तणुतुल्ला तित्थयरे अणुकड्ढी तिव्वमंदया एत्तो। सव्वपगईण नेया जहन्नयाई अणंतगुणा ॥६५॥**

चू०—'तणुतुल्ला तित्थयरे अणुकड्डि'त्ति–तित्थगरनामाए अणुकड्डी अहा सरीरनामाए तहा भाणियव्वा। 'तिव्वमंदया एत्तो सव्वपगतीणं णेया जहण्णगादीणंतगुण'त्ति। सव्वपगतीणं अप्पप्पणो जहण्णाणुभागतो आढत्ता ठितीए ठितीए अणंतगुणा अणुभाग(तिव्वमंदया) भाणियव्वा जाव अप्पप्पणो उक्कोसो अणुभागोत्ति। असुभपगतीणं जहण्णगठितीओ आढत्ता उवरिहुत्ता भाणियव्वा, सुभपगतीणं अप्पप्पणो उक्कस्सगठितीतो आढत्ता हेट्ठाहुत्तं भाणियव्वं जाव जहण्णगा ठितीत्ति। एवं सामण्णेणं तिव्वमंदया भणिता। सव्वठितीणं जहण्णाणुभागो उक्कोसाणुभागो य वे वि अत्थि, तम्हा सव्वपगतीणं जहण्णं उक्कोसो च अणुभागं अहिकिच्च पत्तेयं पत्तेयं तिव्वमंदता भण्णति–घातिकम्माणं अप्पसत्थवण्णरसगंधफासाणं उवघायणामस्स य जहण्णगाए ठितीए जहण्णाणुभागो थोवो। बितियाए ठितीए जहण्णाणुभागो अणंतगुणो। एवं जाव णिव्वत्तणकंडगं ति। णिव्वत्तणकंडगं णाम जहण्णिगाए ठितीए अणुकड्डी जत्थ णिट्ठिया तं णिव्वत्तणकंडगं वुचति ॥६५॥

(मलय०)—'तणुतुल्ल'त्ति। तीर्थकरनाम्नि अनुकृष्टिर्यथा शरीरनाम्नि प्रागभिहिता तथा द्रष्टव्या। इत ऊर्ध्वमनुभागानां तीव्रमन्दता द्रष्टव्या। तत्र सर्वासां प्रकृतीनामात्मीयात्मीयजघन्यानुभागबन्धादारभ्य यावदुत्कृष्टोऽनुभागबन्धस्तावत् स्थितिबन्धे स्थितिबन्धेऽनन्तगुणा तीव्रमन्दता वक्तव्या–यथोत्तरमनन्तगुणोऽनुभागो वक्तव्य इत्यर्थः। तत्राप्यशुभप्रकृतीनां जघन्यस्थितेरारभ्योर्ध्वमुखं क्रमेणानन्तगुणो वक्तव्यः, शुभप्रकृतीनां तूत्कृष्टस्थितेरारभ्याधोमुखं यावज्जघन्या स्थितिः। तदियं सामान्यतस्तीव्रमन्दताऽभिहिता, सम्प्रति विशेषत उच्यते–तत्र घातिकर्मणामप्रशस्तवर्णगन्धरसस्पर्शानामुपघातस्य च जघन्यायां स्थितौ जघन्योऽनुभागः सर्वस्तोकः। ततो द्वि-

तीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततोऽपि तृतीयस्यां स्थितौ जघन्यानुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावन्निवतनकण्डकं भवति। निवर्तनकण्डकं नाम यत्र जघन्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिः परिसमाप्ता तत्पर्यन्ता मूलत आरभ्य स्थितयः पल्योपमासंख्येयभागमात्रप्रमाणा उच्यन्ते इति ॥ ६५ ॥

(उ०)—तीर्थंकरनाम्न्यनुकृष्टिस्तनुतुल्या–यथा शरीरनाम्नि प्रागभिहिता तथा द्रष्टव्या। इत ऊर्ध्वमनुभागानां तीव्रमन्दता वक्तव्या, सा च सर्वासां प्रकृतीनां स्वस्वजघन्यानुभागबन्धादारभ्य यावदुत्कृष्टोऽनुभागबन्धस्तावत् स्थितिबन्धे स्थितिबन्धेऽनन्तगुणा ज्ञेया, यथोत्तरमनन्तगुणानुभागो वक्तव्य इत्यर्थः। तत्राप्यशुभप्रकृतीनां जघन्यस्थितेरारभ्योर्ध्वमुखं, शुभप्रकृतीनां तूत्कृष्टस्थितेरारभ्याधोमुखं क्रमेणानन्तगुणो वक्तव्यः। इयं सामान्यतस्तीव्रमन्दताऽभिहिता, अथ विशेषत उच्यते–तत्र घातिकर्मणामप्रशस्तवर्णगन्धरसस्पर्शानामुपघातस्य च जघन्यायां स्थितौ जघन्योऽनुभागः सर्वस्तोकः। ततो द्वितीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततोऽपि तृतीयस्यां जघन्योऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावन्निवर्त्तनकण्डकं भवति। निवर्त्तनकण्डकं नाम यत्र जघन्यस्थितिबन्धारम्भभाविनामनुभागबन्धाध्यवसायस्थानानामनुकृष्टिर्निष्ठिता तत्पर्यन्ता आदित आरभ्य पल्योपमासंख्येयभागमात्राः स्थितयः। तदुक्तं–"कंडं णिव्वत्तणकंडगं च पलियस्ससंखंसो"त्ति ॥ ६५ ॥

**णिव्वत्तणा उ एक्किक्कस्से हेट्ठोवरिं तु जेट्ठियरे। चरमठिईणुक्कोसो परित्तमाणीण उ विसेसो ॥६६॥**

(चू०)—ततो णिव्वत्तणकंडगस्स चरमठितीए जहण्णाणुभागातो जहण्णगाए ठितीए उक्कोसाणुभागो अणंतगुणो। ततो उवरिल्लाए ठितीए जहण्णाणुभागो अणंतगुणो। ततो बितियाए ठितीए उक्कस्साणुभागो अणंत-

गुणो। 'उवरिं'ति–उवरिमठितीए जहण्णाणुभागो अणंतगुणो। 'हेट्ठि'त्ति–हिट्ठिमाए ठितीए उक्कसाणुभागो एवं।
णमं एक्केक्कं णेयव्वं जाव उक्कसियाए ठितीए जहण्णाणुभागोत्ति। सव्वुक्कसियाए जहण्णाणुभागाउ पलिउव-
मस्स असंखेज्जइभागं ओसरित्तु जा ठिति तीस्से उक्कसाणुभागो अणंतगुणो। 'चरिमठिईणुक्कोस्स'त्ति–ततोणं-
नुक्कसियाए ठितीए उक्कस्साणुभागो अणंतगुणो। एवं चेव पराघायाईण, णवरि उक्कस्सिगाउ ठितीउ हेट्ठा-
हुत्तं भाणियव्वं। 'परित्तमाणीणं तु विसेसो'त्ति–परियत्तमाणीणं पगतीणं विसेसो भण्णइ। जासिं ठितीणं तदे-
गदेसो य अण्णाणित्ति भणितं तासिं पुव्वुत्तो विही, जओ ताणि य अन्नाणि य आढत्तं ततो हेट्ठाओ णिव्वत्त-
णकण्डगमेत्तीणं ठितीणं उक्कोसाणुभागा ण भणिया ततो ताणि य अन्नाणियत्ति जत्तियाणि ठितीणं ट्ठाणाणि
गताणि तेसु ठाणेसु तासिं ठितीणं जहण्णगाणुभागो तत्तिओ चेव ॥६६॥

(मलय०)—'निव्वत्तण'त्ति। ततो निवर्तनकण्डकस्य चरमस्थितौ जघन्यानुभागाज्जघन्यस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततः
कण्डकादुपरि प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततो द्वितीयस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततः कण्डकादुपरि द्वितीय-
स्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततोऽधस्तनतृतीयस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततः कण्डकादुपरि तृतीयस्थितौ जघन्यो-
ऽनुभागोऽनन्तगुणः। एवमेकैकोऽधस्तादुपरि च यथाक्रमं 'ज्येष्ठः'–उत्कृष्टः 'इतरश्च'–जघन्योऽनुभागोऽनन्तगुणतया तावद्वाच्यो यावदु-
त्कृष्टायां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽद्याप्यनुक्तस्तिष्ठति शेषः सर्वोऽप्युक्तः।
ततः सर्वोत्कृष्टायाः स्थितेर्जघन्यानुभागात् कण्डकमात्राणां स्थितीनां प्रथमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणो वक्तव्यः। ततोऽप्यन-

न्तरायामुपरितनस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवं निरन्तरमुत्कृष्टोऽनुभागोऽनन्तगुणतया तावद्वक्तव्यो यावदुत्कृष्टा स्थितिः । तथा चाह–'चरमठिईणुक्कोसो'–चरमस्थितीनां कण्डकमात्राणां पल्योपमासंख्येयभागमात्राणामित्यर्थः उत्कृष्टोऽनुभागो निरन्तरमनन्तगुणतया नेतव्यः । इदानीं शुभप्रकृतीनां तीव्रमन्दताभिधानावसरः । तत्र पराघातप्रकृतिमधिकृत्योच्यते–पराघातस्योत्कृष्टायां स्थितौ जघन्यपदे जघन्योऽनुभागः सर्वस्तोकः । ततः समयोनायामुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः । ततोऽपि द्विसमयोनायामुत्कृष्टस्थितौ जघन्योनुभागोऽनन्तगुणः । एवं तावद्वाच्यं यावत्पल्योपमासंख्येयभागमात्राः स्थितयो गता भवन्ति, निवर्तनकण्डकमतिक्रान्तं भवतीत्यर्थः । तत उत्कृष्टायां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततो निवर्तनकण्डकादधः प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः । ततः समयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततो निवर्तनकण्डकादधो द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः । एवं तावद्वाच्यं यावत्पराघातस्य जघन्यस्थितौ जघन्यानुभागोऽनन्तगुणः । कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽद्याप्यनुक्तस्तिष्ठति, शेषः सर्वोऽप्युक्तः । ततो जघन्यस्थितेरारभ्योर्ध्वं कण्डकमात्राः स्थितीरतिक्रम्य चरमायां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणो वक्तव्यः । ततोऽधस्तनस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवं तावद्वाच्यं यावज्जघन्यस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवं शरीरपञ्चकसंघातपञ्चकबन्धनपञ्चदशकाङ्गोपाङ्गत्रयप्रशस्तवर्णगन्धरसस्पर्शागुरुलघूच्छ्वासातपोद्योतनिर्माणतीर्थकराणामपि भावनीयम् । 'परित्तमाणीण उ विसेसो'–परावर्तमानप्रकृतीनां विशेषो द्रष्टव्यः । स चैवं–यावतीनां स्थितिनां तानि चान्यानि चेत्येवमनुकृष्टिरभिहिता तावतीनां सर्वासामपि जघन्योऽनुभागस्तावन्मात्र एव द्रष्टव्यः । तानि चान्यानि चेत्येवमनुकृष्टिविषयाभ्यस्तु परतो जघन्यो अनुभागो यथोत्तरमनन्तगुणस्तावद्वक्तव्यो यावत् कण्डकस्यासंख्येया भागा गता भवन्ति, एकोऽवशिष्यते ॥ ६६ ॥

(उ०)—ततो निवर्त्तनकण्डकचरमस्थितिजघन्यानुभागादधस्तनप्रथमस्थितावुत्कृष्टोऽनन्तगुणः । ततः कण्डकादुपरि प्रथमस्थितौ ज-
घन्यानुभागोऽनन्तगुणः । ततोऽधस्तनद्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततः कण्डकादुपरि द्वितीयस्थितौ जघन्यानुभागोऽ-
नन्तगुणः । ततोऽधस्तनतृतीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततः कण्डकादुपरि तृतीयस्थितौ जघन्यानुभागोऽनन्तगुणः । एवं कण्ड-
के कण्डके एककः स एककः, स्व इति पदं प्रतिनियतकण्डकावधिमत्त्वं द्योतयति, यथाक्रमं ज्येष्ठः—उत्कृष्ट इतरश्च जघन्योऽनुभागोऽनन्तगुणो
वाच्यः । स च तावद्यावत्सर्वोत्कृष्टायां स्थितौ जघन्यानुभागोऽनन्तगुणः, कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽद्याप्यनुक्त-
स्तिष्ठति शेषस्तु सर्वोऽप्युक्त इति तमाह—'चरमठिईणुक्कोसो' । चरमस्थितीनां कण्डकमात्राणामुत्कृष्टोऽनुभागो निरन्तरमनन्तगुणत-
याऽभिधातव्यः । तथाहि–सर्वोत्कृष्टायाः स्थितेर्जघन्यानुभागात्पल्योपमासंख्येयभागमात्राणां चरमस्थितीनां प्रथमस्थितावुत्कृष्टोऽनु-
भागोऽनन्तगुणो वक्तव्यः । ततोऽप्युपरितन्यामनन्तरस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततोऽप्यनन्तरायामुपरितनस्थितौ सोऽनन्त-
गुणः । एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिरिति । पराघातादीनां षट्चत्वारिंशत्संख्यानां शुभप्रकृतीनां तूत्कृष्टात् स्थितिस्थानादारभ्या-
धोमुखमुक्तदिशाऽनन्तगुणनया तीव्रमन्दता वाच्या । तथाहि–एतासामुत्कृष्टायां स्थितौ जघन्यानुभागः सर्वस्तोकः । ततः समयो-
नायामुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः । ततोऽपि द्विसमयोनायामुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः । एवं तावद्वाच्यं
यावन्निवर्त्तनकण्डकं भवति । तत उत्कृष्टायां स्थितावुत्कृष्टानुभागोऽनन्तगुणः । ततो निवर्त्तनकण्डकादधः प्रथमस्थितौ जघन्योऽनु-
भागोऽनन्तगुणः । ततः समयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततो निवर्त्तनकंडकादधो द्वितीयस्थितौ जघन्यानुभा-
गोऽनन्तगुणः । एवं तावद्वाच्यं यावज्जघन्यस्थितौ जघन्यानुभागोऽनन्तगुणः । कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽद्याप्य-

### ५५ अपरावर्तमानाशुभानाम् तीव्रमंदता

| | | | |
|---|---|---|---|
| निवर्तनकंडक | १० स्य ज० | अनु० | अल्पः |
| | ११ | ,, | अनंतगु० |
| | १२ | ,, | ,, |
| | १३ | ,, | ,, |
| | १४ | ,, | ,, |
| ततः | १५ | ,, | ,, |
| ततः | १६ | ,, | ,, |
| ततः | १७ | ,, | ,, |
| ततः | १८ | ,, | ,, |
| ततः | १९ | ,, | ,, |
| ततः | २० | ,, | ,, |
| ततः | २१ | ,, | ,, |
| ततः | २२ | ,, | ,, |
| ततः | २३ | ,, | ,, |
| ततः | २४ | ,, | ,, |
| ततः | २५ | ,, | ,, |
| ततः | २६ | ,, | ,, |
| ततः | २७ | ,, | ,, |
| ततः | २८ | ,, | ,, |
| ततः | २९ | ,, | ,, |
| ततः | ३० | ,, | ,, |

| | | | |
|---|---|---|---|
| ततः | १०स्य उ० | अनु. | अनं०गु. |
| ततः | ११ | ,, | ,, |
| ततः | १२ | ,, | ,, |
| ततः | १३ | ,, | ,, |
| ततः | १४ | ,, | ,, |
| ततः | १५ | ,, | ,, |
| ततः | १६ | ,, | ,, |
| ततः | १७ | ,, | ,, |
| ततः | १८ | ,, | ,, |
| ततः | १९ | ,, | ,, |
| तत. | २० | ,, | ,, |
| तत | २१ | ,, | ,, |
| ततः | २२ | ,, | ,, |
| ततः | २३ | ,, | ,, |
| तत. | २४ | ,, | ,, |
| ततः | २५ | ,, | ,, |
| ततः | २६ | ,, | ,, |
| ,, अन्त्यनिव० | २७ | ,, | ,, |
| | २८ | ,, | ,, |
| | २९ | ,, | ,, |
| | ३० | ,, | ,, |

## पराघातादि ४६ अप० शुभानां प्रकृतीनां तीव्रमन्दता।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्र० निवृ० कं० | ३० स्य जघ० अनु० सर्वाल्पः | | | | | | |
| | २९ तत जघ० अनु० अनंतगु० | | | | | | |
| | २८ | ,, | ,, | | | | |
| | २७ | ,, | ,, | | | | |
| | २६ | ,, | ,, | ततः | ३० स्यउ.अनु. अनंत. | | |
| ततः | २५ | ,, | ,, | ,, | २९ | ,, | ,, |
| ,, | २४ | ,, | ,, | ,, | २८ | ,, | ,, |
| ,, | २३ | ,, | ,, | ,, | २७ | ,, | ,, |
| ,, | २२ | ,, | ,, | ,, | २६ | ,, | ,, |
| ,, | २१ | ,, | ,, | ,, | २५ | ,, | ,, |
| ,, | २० | ,, | ,, | ,, | २४ | ,, | ,, |
| ,, | १९ | ,, | ,, | ,, | २३ | ,, | ,, |
| ,, | १८ | ,, | ,, | ,, | २२ | ,, | ,, |
| ,, | १७ | ,, | ,, | ,, | २१ | ,, | ,, |
| ,, | १६ | ,, | ,, | ,, | २० | ,, | ,, |
| ,, | १५ | ,, | ,, | ,, | १९ | ,, | ,, |
| ,, | १४ | ,, | ,, | ,, | १८ | ,, | ,, |
| ,, | १३ | ,, | ,, | ,, | १७ | ,, | ,, |
| ,, | १२ | ,, | ,, | ,, | १६ | ,, | ,, |
| ,, | ११ | ,, | ,, | ,, | १५ | ,, | ,, |
| ,, | १० | ,, | ,, | ,, | अंत्य निवृ० कं० १४ | ,, | ,, |
| | | | | ,, | १३ | ,, | ,, |
| | | | | ,, | १२ | ,, | ,, |
| | | | | ,, | ११ | ,, | ,, |
| | | | | ,, | १० | ,, | ,, |

नुक्तस्तिष्ठति, शेषः सर्वोऽप्युक्तः, ततो जघन्यस्थितेरूर्ध्वं कण्डकमात्रं स्थित्युल्लङ्घने या चरमा स्थितिस्तस्यामुत्कृष्टोऽनुभागोऽनन्तगुणो वाच्यः। ततोऽधस्तनस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततोऽप्यधस्तनस्थितौ सोऽनन्तगुणः। एवं तावद्वाच्यं यावज्जघन्यस्थितावुत्कृष्टोऽनुभागोऽनन्तगुण इति । 'परित्तमाणीण उ विसेसो'–परावर्त्तमानप्रकृतीनां तु विशेषो द्रष्टव्यः ॥ ६६ ॥

**ताणन्नाणि त्ति परं असंखभागाहि कंडगेक्काणं । उक्कोसियरे नेया जा तक्कंडोवरि समत्ती ॥६७॥**

(चू०)—'ताणण्णाणि'त्ति गतातो, 'परं'–परतो जा ठिती तीसे ठ्ठितीए जहण्णाणुभागो अणंतगुणो। ततो परतो जा हिट्ठिउ तीसे ठितीए जहण्णाणुभागो अणंतगुणो । एवं जाव णिव्वत्तणकंडगस्स असंखेज्जइभागो सेसो त्ति । 'असंखभागाहिं कंडगेक्काणं'ति–ततो णिव्वत्तणकंडगस्स असंखेज्जइभागसेसाउ णिवत्तित्तु जओ ताणि य अण्णाणि य त्ति आढत्तं ततो पलिउवमस्स असंखेज्जतिभागं ओसरित्तु जा ट्ठिती तीसे ट्ठितीए उक्कस्साणुभागो अणंतगुणो । हिट्ठिल्ला पुव्वभणियातो अणंतराए ठितीए उक्कस्साणुभागो अणंतगुणो। एवं उक्कस्सगं णेयव्वं जाव कंडगमेत्ताणि ठाणाणि। ततो णिव्वत्तणकण्डगस्स असंखेज्जइभागसेसाओ जतो णियत्तो ततो उवरिल्लाए ट्ठितीए जहण्णाणुभागो अणंतगुणो। ततो जत्थ कंडगं गंतूण ठिओ तत्थ कंडगमेत्ताणि ट्ठाणाणि परिवाडीए उक्कस्सगाणि अणंतगुणाणि । पुणो जहण्णगे ट्ठाणं, पुणो उक्कस्सिगाए कंडकं, 'उक्कसियरे णेया जा तक्कंडगोवरि समत्ति'त्ति–एवं हेट्ठा उवरिं च णेयव्वं जाव तस्स कंडगस्स उवरिमाणं ठितीणं अंतिमा ट्ठितित्ति ताव हेट्ठावि कंडगमेत्तं उसरित्तु ठितं। ततो पुव्वक्कमेण हेट्ठा एक्का ट्ठिती उवरि एक्का ठिती एवं णेयव्वं जाव अंतं ति । चरिमट्ठितीण

पज्ञ उक्कोसो णेयव्वो। एस सुत्तत्थो।

इदाणिं पत्तेयं पत्तेयं तिव्वमंदया भण्णइ। तत्थ आभिणिबोहियणाणावरणस्स जहण्णियाए ठितीए जहण्णपदे जहण्णाणुभागो थोवो। ततो वितियाए ठितीए जहण्णाणुभागो अणंतगुणो। ततो तइआए ठितीए जहण्णाणुभागो अणंतगुणो। एवं जाव णिव्वत्तणकंडगं ति। जहण्णियाए ठितीए जम्मि सट्ठाणे अणुकट्ठी णिट्ठाया तावइयातो ठितीओ णिव्वत्तणं कंडगं ति भण्णंति, पलिओवमस्स असंखेज्जइभागो वुच्चति णिव्वत्तणाओ। 'एक्किक्कस्स हेट्ठोवरिं तु जेट्ठियरो'त्ति। ततो णिव्वत्तणकंडगस्स जहण्णगाउ अणुभागाउ जहण्णिगाए ठितीए उक्कोसो अणुभागो अणंतगुणो। ततो जंमि ठिउ जहण्णो ततो समउत्तराए ठितीए जहण्णगो अणुभागो अणंतगुणो। ततो वितियाए ठिईए उक्कस्सो अणुभागो अणंतगुणो। इयरत्थ जहण्णाणुभागो अणंतगुणो। तइयाए ठितीए उक्कस्सगो अणुभागो अणंतगुणो, इयरत्थ जहण्णाणुभागो अणंतगुणो। एवं णेयव्वं जाव उक्कस्सिगाए ठितीए जहण्णपदे जहण्णाणुभागो अणंतगुणो। 'चरिमठितीणुक्कोसो'त्ति–ततो पलिओवमस्स असंखेज्जइभागं ऊसरिऊणं जंमि ठिउ उक्कोसो ततो समयुत्तराए ठितीए उक्कोसाणुभागो अणंतगुणो। ततो विसमउत्तराए उक्कस्साणुभागो अणंतगुणो। एवं अणुबद्धं उक्कोसाणुभागं अणंतगुणं। एवं णेयं जाव आभिणिबोहियणाणावरणस्स उक्कस्सिगाए ठितिए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो। एवं सव्वेसिं घातिकम्माणं अप्पसत्थवन्नगंधरसफासाणं उवघायस्स य अप्पप्पणो णामं घेत्तूण तिव्वमंदया भाणि-

यव्वा । घातियं भणियं ।

इयाणिं सुभाणं तिव्वमंदया भण्णति–एत्तो पराघायणामाए तिव्वमंदत्तं वत्तइस्सामो । तंजहा–पराघायणामाए उक्कसिगाए ठितीए जहण्णपदे जहण्णाणुभागो थोवो। समयूणाए उक्कसिगाए ठितीए जहण्णपदे जहण्णाणुभागो अणंतगुणो । एवं बिसमयूणाए ठितीए जहण्णपदे जहण्णाणुभागो अणंतगुणो। तिसमयूणाए ठितीए अणंतगुणो । एवं जाव पलिओवमस्स असंखेज्जइभागूणाए उक्कसिगाए ठितीए जहण्णपदे जहण्णाणुभागो अणंतगुणो। ततो उक्कसिगाए ठितीए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो। ततो हेट्ठिल्लाए ठितीए जहण्णाणुभागो अणंतगुणो। एवं हेट्ठिल्लाए ठितीए जहण्णपदे जहण्णाणुभागो उवरिमाए ठितीए उक्कस्सपदे उक्कसाणुभागो । एवं एक्केक्का ओगाहिज्जमाणा२ ताव आगता जाव परघायणामाए जहण्णिगाए ठितीए जहण्णपदे जहण्णाणुभागो अणंतगुणो । ततो पलिओवमस्स असंखेज्जतिभागं अब्भुस्सरिऊणं जहट्ठिउ उक्कस्साणुभागो ततो समयूणाए ठितीए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो । ततो बिसमयूणाए ठितीए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो । तिसमयूणाए ठितीए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो । एवं जाव परघायणामाए जहण्णगट्ठितीए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो । एवं पंचण्हं सरीराणं, पंचण्हं संघायणाणं,पण्णरसण्हं बन्धणाणं,तिण्हं अंगोवंगाणं,पसत्थवण्णगंधरसफासाणं,अगुरुलहुगउस्सासआयवउज्जोयणिम्मेणं, तित्थगरणामाणं च णेयव्वं ।

उगाणि परित्तमाणियाणं। तंजहा-एत्तो सायस्स तिव्वमंदत्तं वत्तइस्सामो। सायस्स उक्कसियाए ठितीए जहण्णपदे जहण्णाणुभागो थोवो। समयूणाए उक्कसियाए ठितीए जहण्णपए जहण्णाणुभागो तत्तितो चेव। एवं विसमयूणाए ठितीए जहण्णपदे जहण्णाणुभागो तत्तिओ चेव। तिसमयूणाए ठितीए जहण्णपदे जहण्णाणुभागो तत्तितो चेव। एवं उस्सारेयव्वं जाव जहण्णओ असायबंधो ताव तत्तिओ चेव। ततो जहण्णगाओ समयूणाए ठितीए जहण्णपदे जहण्णाणुभागो अणंतगुणो। विसमयूणाए वि ठिईए जहण्णपदे जहण्णाणुभागो अणंतगुणो। तिसमयूणाए ठितीए जहण्णपदे जहण्णाणुभागो अणंतगुणो। एवं एएण कमेण जहण्णगं असायबन्धं आदिं काऊणं असंखेज्जाओ ठितीओ जाव णिव्वत्तणकंडगस्स असंखेज्जभागो-समो, तत्तीयमेत्तीणं ठितीणं जहण्णाणुभागा अणंतगुणाए सेढीए णेयव्वा। ते य एगंतसागारपाउग्गा ततो णियत्तियव्वं। ततो सायस्स उक्कसिगाए ठितीए उक्कसपए उक्कसाणुभागो अणंतगुणो। समयूणाए उक्कसिगाए ठितीए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो। विसमयूणाए उक्कस्सपदे उक्कस्साणुभागो अणंतगुणो। एवं तिसमयूणाए ठिईए। एवं णिरंतरं उक्कस्सगं आदि काऊणं असंखेज्जाओ ठितीओ जेत्तियमेत्तं णिव्वत्तणकंडगस्स परिमाणं तत्तियमेत्ताणं ठितीणं उक्कस्सपदे अणुभागा अणंतगुणाए सेढीए णेयव्वा। ततो जातो ठितीहिंतो एगंतसागारपातोग्गाणं जहण्णाणुभागे भणिऊण णियत्तो ततो ठितीतो उवरिमाए ठितीए जहण्णाणुभागो अणंतगुणो। ततो पुणो उक्कस्सगाओ ठितीओ णिव्वत्तणं कंडगमेत्तीउ उसारेऊण जा ठिती ति-

स्से ठीतीए उक्कस्स अणुभागो अणंतगुणो। ततो पुणो णिव्वत्तणकंडगमेत्तीणं ठितीणं उक्कसाणुभागा अणंतगुणाए सेढीए णिरंतरं णेयव्वा। ततो पुणो हेट्ठउ एगाए ठितीए जहण्णाणुभागो अणंतगुणो। ततो पुणो उक्कस्सिगाउ ट्ठितीउ दुगुणा णिव्वत्तणकंडगमेतीयो ट्ठितीउ उसरिऊण जा ट्ठिती तीस्से ठितीए उक्कस्साणुभागाणंतगुणा। ततो पुणो वि णिव्वत्तणकंडगमेत्तीणं उक्कस्साणुभागा अणंतगुणाए सेढीए निरंतरं णेयव्वा। एवं हेट्ठउ एक्कस्स ट्ठितीए जहण्णाणुभागा अणंतगुणा। ततो पुणो उक्करिसगाउ ट्ठितीउ तिगुणा णिव्वत्तणकंडगमेत्तीउ ट्ठितीउ उसारेऊण जा ट्ठिती तिस्से ट्ठितीए उक्कसाणुभागा अणंतगुणा। ततो पुणो णिव्वत्तणकंडगमेत्तीणं ठितीणं उक्कसाणुभागा अणंतगुणाए सेढीए णिरंतरं णेयव्वा। एवं हेट्ठउ एक्कस्से ठितीए जहण्णाणुभागाउ उवरिल्लीणं ठितीणं असंखेज्जाणं उक्कोसाणुभागाणं एवं ओगाहिज्जमाणे ताव आगतं जाव जहण्णगो असायस्स ठितिबन्धो णिव्वत्तणकंडगेण। ततो जहण्णगातो असायट्ठितिबंधातो णिव्वत्तणकंडगमेत्तीणो ठितीओ उसरिऊण जा ट्ठिती तीसे ठितीए जहण्णाणुभागा अणंतगुणा। ततो जहण्णगातो असायट्ठितिबन्धातो समऊणाए ठितीए उक्कस्साणुभागा अणंतगुणा। तेणपरं हिट्ठिमाए ठिइए जहण्णाणुभागा उवरिमाए ठितीए उक्कसाणुभागा। एक्केक्के ओगाहिया जहण्णगातो असायबंधातो आढत्ता ताव णेया जाव सायस्स जहण्णगा ठिती त्ति। ततो सायबंधट्ठितीणं जहण्णातो णिव्वत्तणकंडगमेत्तीउ अब्भुस्सरितूणं जंमि ट्ठितं उक्कस्सगं ततो समयूणाए ठितीए उक्कस्साणुभागा अणंतगुणा, दुसमयूणाए ठितीए उक्कस्साणुभागा अणंतगुणा, एवं णिव्व-

त्तणकंडगमेत्तीणं ठितीणं उक्कस्साणुभागा अणंतगुणाए सेढीए णेयव्वा। एवं जाय सायस्स जहण्णगो ठितियन्धो। एवं मणुस्सगतिदुगदेवगतिदुगपंचेंदियजातिसमचउरंसवज्जरिसभपसत्थविहायगतिथिरसुभसुभगसुस्सरआदेज्जजसकीत्तिउच्चागोयस्स य वत्तव्वं।

एत्तो असायस्स तिव्वमंदयं वत्तइस्सामो। असायस्स जहण्णिगाए ठितीए जहण्णपदे जहण्णाणुभागो थोवो। वितियाए ठितीए जहण्णपदे जहण्णाणुभागो तत्तिओ चेव। ततियाए ठितीए जहण्णाणुभागो तत्तिओ चेव। एवं चेव सागरोवमसयपुहत्तं ताव तत्तिओ चेव (जाव) सातउक्कोस ट्ठितीत्ति भणितं होइ। ततो जातो ट्ठितीतो यन्धमाणो जहण्णाणुभागे वंधति तासिं ठितीणं जासे उवरिमा ट्ठिती तीसे ठितीए जहण्णाणुभागा अणंतगुणा। यितियाए ठितीए जहण्णाणुभागा अणंतगुणा। ततियाए जहण्णाणुभागा अणंतगुणा। एवं जाव पलिओवमस्स असंखेज्जइभागा। सेसो य णिव्वत्तणकंडगस्स असंखेज्जभागो। एत्तियमेत्तीणं ठितीणं जहण्णाणुभागे अणंतगुणे भणिऊण ततो णियत्तियव्वं। असायस्स जहण्णियाए ठितीए उक्कस्सपदे उक्कस्साणुभागाणंतगुणा। वितियाए ठितीए उक्कसपदे उक्कस्साणुभागा अणंतगुणा। एवं ततियाए ठितीए उक्कस्सपदे उक्कस्साणुभागा अणंतगुणा। एवं णिव्वत्तणकंडगमेतीणं ठितीणं उक्कस्साणुभागा अणंतगुणा। उवरिमाए ट्ठितीए जीसे जहण्णाणुभागा भणिऊण णियत्तं तेण हेट्ठिमाणं ठिती उक्कस्साणुभागा भणिया तीसे उवरिमाए ठितीए समयुत्तराए जहण्णाणुभागा अणंतगुणा। ततो णिव्वत्तणकंडगमेत्तीणं ठितीणं उक्कस्साणुभागा अणंतगुणाए सेढीए

णेयव्वा। ततो उवरि पुणो बितियाए ठितीए जहण्णाणुभागा अणंतगुणा। ततो हेट्ठउ णिव्वत्तणकंडगमेत्तणं ठितीणं उक्कस्साणुभागा अणंतगुणा अणंतगुणाए सेढीए णेयव्वा। एवं एतेण कमेण उवरिमाए जावेगीसे ठितीए जहण्णाणुभागा हिट्ठिमाणं ठितीणं असंखेज्जाणं उक्कस्साणुभागा। एवं जाव ओघ जहण्णाणुभागियाणं उक्कसिताए ठितीए उक्कस्साणुभागे पडंति। [ओघजहन्नाणुभागिया णाम या संन्ना भण्णइ]। ओघजहण्णाणुभागिया णाम जाओ ठितीओ बंधंतो असायस्स जहण्णाणुभागं बंधइ एसा ओघजहन्नाणुभागिया ( णाम संण्णा भण्णइ )। एतीसे ओघजहण्णाणुभागसन्नाए जाहे ओघजहण्णाणुभागियाणं चरिमाए ठितीए उक्कस्साणुभागा अणंतगुणा। ताहे ओघजहण्णाणुभागियाणं उवरिं णिव्वत्तणकंडगमेत्ताणं ठितीणं जहण्णाणुभागा भणिता होंति। एत्तो य उवरिमाणं अभणियाणुभागाणं ठितीणं एगीसे ठितीए जहण्णाणुभागा अणंतगुणा। हेट्ठिमाणं ठितीणं एक्किस्सं ठितीए उक्कस्साणुभागा अणंतगुणा। एतेण कमेण एक्केक्कट्ठिती ओगाहित्ता जाव असायस्स उक्कसियाए जहण्णाणुभागा अणंतगुणा। ताहे असायस्स ठितीणं णिट्ठवणिगाणं णिव्वत्तणकंडगमेत्तीणं उक्कस्साणुभागा न भणिया। तासिं जहण्णगा जा ट्ठिती तिस्से ट्ठितीए उक्कस्साणुभागा अणंतगुणा। ततो समयुत्तराए ठितीए उक्कस्साणुभागा अणंतगुणा। ततो बिसमयुत्तराए ठितीए उक्कस्साणुभागा अणंतगुणा। तओ तिसमउत्तराए ठिईए उक्कस्साणुभागा अणंतगुणा। एवं अणुबद्धं उक्कस्साणुभागा। एवं णीतं ताव जाव असायस्स उक्कोसिगाए ठितीए उक्कस्सपदे उक्कस्साणुभागा अणंतगुणा। एवं णिरयगतिदुगस्स

अपसत्थविहायगतिथावरसुहुमअपज्जत्तगसाहार-
आदिमाणं चतुण्हं जातीणं अंतिमाणं पंचसंठाणसंघयणाणं अपसत्थविहायगतिथावरसुहुमअपज्जत्तगसाहार-
आदिमाणं चतुण्हं जातीगं अंतिमाणं पंचसंठाणसंघयणाणं णेयव्वं जहा असायस्स ।
णअथिरअसुभदुभगदुस्सरअणादेज्जाजसकित्तिणामाणं णेयव्वं जहा असायस्स ।
णअथिरअसुभदुभगदुस्सरअणादेज्जाजसकित्तिणामाणं णेयव्वं जहा असायस्स ।

एत्तो तिरिक्खगतिणामाए तिव्वमंदत्तं वत्तयिस्सामो। तं जहा—सत्तमपुढवीए णेरइयस्स सव्वजहण्णगे ठितीबंध-
ट्ठाणे जहण्णाणुभागा थोवा। बितियाए ठितीए जहण्णपदे जहण्णाणुभागा अणंतगुणा। ततियाए ठितीए जहण्णपदे
जहण्णाणुभागा अणंतगुणा। एवं जहण्णपदे जहण्णाणुभागा अणंतगुणाए सेढीए ताव गता जाव णिव्वत्तणकं-
डगमेत्तीओ ठितीओ। जहण्णियाए ठितीए उक्कस्साणुभागा अणंतगुणा। ततो जओ णियत्तो ठिईए ततो सम-
उत्तराए ठितीए जहण्णाणुभागा अणंतगुणा। बितियाए उक्कस्साणुभागा अणंतगुणा। एवं उवरिल्लस्स हेट्ठिल्ल-
स्स पज्जाएण णेयव्वा। एवं णीतं ताव जाव अभवसिद्धियपाउग्गस्स जहण्णगस्स ठितीबंधस्स हेट्ठउ समयूणा
ठितित्ति। तओ अभवसिद्धियपाउगस्स जहण्णगस्स ठितिबंधस्स हेट्ठतो णिव्वत्तणकंडगमेत्तीणं ठितीणं उक्क-
स्साणुभागा न भणिया। अभवसिद्धियपाउग्गस्स हेट्ठउ जाणि ठितिबंधट्ठाणाणि ताणि पलिओवमस्स असंखेज्जइ-
भागो, ततो अभवसिद्धियपाउग्गाउ जहण्णगाउ ठितीबंधाउ णिव्वत्तणकंडगमेत्तीउ ठितीउ उसरिऊण जा ठिती
तीसे ठितीए उक्कस्सेहिं अणुभागेहिंतो अभवसिद्धियपाउग्गजहण्णिगाए ठितीए जहण्णाणुभागा अणंतगुणा।
ततो समउत्तराए ठितीए जहण्णाणुभागा तत्तिआ चेव। बिसमउत्तराए तत्तिया चेव। तिसमउत्तराए ठितीए
जहण्णाणुभागा तत्तिया चेव। एवं सागरोवमसतपुहुतमेत्तीणं ठितीणं तुल्लो जहण्णाणुभागबन्धो जाव पडिवक्ख-

स्स उक्कस्सिया ठ्ठितित्ति भणियं होत्ति ताव तत्तिया चेव। ततो जासिं ठितीणं तुल्लो जहण्णाणुभागबंधो तासिं [ठितीणं णाम संना] परियत्तमाणजहण्णाणुभागबंधपाउग्गाणं ठितीणं उक्कस्सिआतो ठितीओ जहण्णाणुभागेहिंतो समयुत्तराए ठितीए जहण्णाणुभागा अणंतगुणा। बिसमयुत्तराए ठितीए जहण्णाणुभागा अणंतगुणा। तिसमयुत्तराए ठितीए जहण्णाणुभागा अणंतगुणा। एवं असंखेज्जाओ ठ्ठितीओ णिव्वत्तणकंडगस्स असंखेज्जइभागो सेसो, एत्तियमेत्तीणं ठितीणं जहण्णाणुभागा अणंतगुणाए सेढीए णेयव्वा। ततो णियत्तियव्वं जातो अभवसिद्धिपाउग्गस्स जहण्णगस्स ठितिबंधस्स हेट्ठउ णिवत्तणकंडगमेत्तीउ ठितीउ तासिं जहण्णिगा ठ्ठिती तीसे ठ्ठितीए उक्कसाणुभागा अणंतगुणा। ततो समउत्तराए ठितीए उक्कस्साणुभागा अणंतगुणा। बिसमगुत्तराए ठ्ठिइए उक्कस्सा अणंतगुणा। तिसमगुत्तराए अणंतगुणा। एवं णीतं ताव जाव अभवसिद्धियपाउगस्स जहण्णगो ठ्ठितीबंधो समउणोत्ति। ततो अभवसिद्धियपाउग्गस्स जहण्णठितीबंधाउ समयूणातो उक्कस्सगेहिंतो अणुभागेहिंतो जतो ठितीतो जहण्णाणुभागे भणिऊण णियत्तो ततो समयुत्तराए ठितीए जहण्णाणुभागा अणंतगुणा। ततो जहण्णाणुभागबंधपाउग्गाणं जहण्णियाए ठितीए उक्कोसाणुभागा अणंतगुणा। समउत्तराए ठितीए उक्कस्साणुभागा अणंतगुणा। बिसमउत्तराए ठितीए उक्कस्साणुभागा अणंतगुणा। एवं णिव्वत्तणकंडगमेत्तीणं ठितीणं उक्कस्साणुभागा अणंतगुणाए सेढीए णेयव्वा। ततो पुण उवरिं जिस्से ठ्ठितीए जहण्णाणुभागे भणितूण णियत्तो तओ समउत्तराए ठितीए जहण्णाणुभागा अणंतगुणा। ततो परियत्तमाणिगा-

म्मिं जहण्णाणुभागबंधपाओग्गा ट्ठितीउ णिव्वत्तणकंडगमेत्तीउ अब्भुसरितूण जा ट्ठिती तीसे ठितीए उक्कस्साणुभागा अणंतगुणा। ततो निव्वत्तणकंडगमेत्तीणं ठितीणं उक्कस्साणुभागा अणंतगुणाए सेढीए णेयव्वा। एतेण कमेण उवरिमाणं ठितीणं एग्गिस्से ठितीए (जहण्णाणुभागा) जहण्णाणुभागबंधपाउग्गाणं च णिव्वत्तणकंडगमेत्तीणं उक्कस्साणुभागा अणंतगुणाए सेढीए णेयव्वा जाव जहण्णाणुभागबंधपातोग्गाणं उक्कसियाए ठितीए उक्कस्साणुभागा। जहण्णाणुभागबंधपातोग्गाणं ठितीणं उवरिमाणं ट्ठितीओ तासिं णिव्वत्तणकंडगमित्तीणं जहण्णाणुभागा भणिता। ण अण्णं किंचि भणितं। ततो जहण्णाणुभागबंधपातोग्गातो उक्कस्सिगातो ठितीओ उक्कस्सगेहिं अणुभागेहिंतो उवरिं जासिं ठितीणं जहण्णाणुभागा न भणिया तासिं ट्ठितीणं जा सव्वजहण्णिगा ठिती तीसे ठितीए जहण्णाणुभागा अणंतगुणा ट्ठिट्ठितो पुण एगीसे ठितीए उक्कस्साणुभागा अणंतगुणा। ततो जंमि ट्ठिता जहण्णा ततो समयुत्तराए ठितीए जहण्णाणुभागा अणंतगुणा। बितियाए ठितीए उक्कस्साणुभागा अणंतगुणा, इयरत्थ जहण्णाणुभागा अणंतगुणा। एवं णीतं ताव जाव उक्कस्सियाए ठितीए जहन्नपदे जहण्णाणुभागा अणंतगुणा। तओ पलिओवमस्स असंखिज्जइभागं उस्सरिऊणं जंमि ठिया उक्कस्सा तओ समउत्तराए ठितीए उक्कस्साणुभागा अणंतगुणा। विसमउत्तराए ठितीए उक्कस्साणुभागा अणंतगुणा। तिसमयुत्तराए ठितीए उक्कसाणुभागा अणंतगुणा। एवं अणुबद्धं उक्कस्सा अणंतगुणा। एवं णीयं ताव जाव तिरिक्खगतिणामाए उक्कस्सिगाए ठितीए उक्कस्सपदे उक्कस्साणुभागा अणंतगुणा।

एवं तिरिक्खगतिपाउग्गाणुपुव्वीए णियागोयस्स य णेयव्वा तिव्वमंदया ।

एत्तो तसणामाए तिव्वमंदत्तं वत्तव्वइस्सामो, तंजहा–तसणामाए वीससागरोवमकोडाकोडिट्ठितिं बंधमाणस्स उक्करिसयाए ठितीए जहण्णपदे जहण्णाणुभागा थोवा । समयूणाए ठितीए जहण्णपदे जहण्णाणुभागा अणंतगुणा । बिसमयूणाए जहण्णपदे जहण्णाणुभागा अणंतगुणा । तिसमयूणाए जहण्णपदे जहण्णाणुभागा अणंतगुणा । एवं णिव्वत्तणकंडगमेत्तीणं ठीतीणं जहण्णपदे जहण्णाणुभागा अणंतगुणाए सेढीए नेयव्वा । ततो उक्कस्सिताए ठितीए उक्कस्सपदे उक्कस्साणुभागा अणंतगुणा । एवं ततो णिव्वत्तणकंडगमेत्तीओ ठितीओ उसरिऊणं जंमि ट्ठिता जहण्णा तओ समयूणाए ठितीए जहण्णाणुभागा अणंतगुणा । ततो उवरिंमि समयूणाए ठितीए उक्कस्साणुभागा अणंतगुणा । ततो हेट्ठतो एगीसे ठितीए जहण्णाणुभागा अणंतगुणा । एवं जाव अट्ठारससागरोवमकोडाकोडिं समयुत्तरति । ततो अट्ठारसण्हं कोडाकोडीणं उवरिं समउत्तरिगं ठितीं आदिं काऊण णिव्वत्तणकंडगमेत्तीणं उक्कस्साणुभागा न भणिया सेसं सव्वं भणितं । उवरिमाणं ठितीणं ततो अट्ठारसण्हं कोडाकोडीणं समयुत्तराए ठितीए जहण्णाणुभागेहिंतो अट्ठारसण्हं पडिपुण्णाणं जहण्णपदे जहण्णाणुभागा अणंतगुणा । ततो समयूणाए ठितीए जहण्णाणुभागा तत्तिया चेव । बिसमयूणाए ठितीए जहण्णाणुभाणा तत्तिया चेव । तिसमयूणाए ठितीए जहण्णाणुभागा तत्तिया चेव । एवं जाव जहण्णगा थावरणामाए ठितीबंधे ताव तत्तिउ तत्तिउ चेव । ततो परियत्तमाणजहण्णाणुभागबन्धपाउग्गाणं जहण्णिगाणं ट्ठितीणं जहण्णपदे जहण्णाणुभागेहिंतो समयूणाए

ठितीए जहण्णाणुभागाऽणंतगुणा। विसमयूणाए ठितीए जहण्णाणुभागा अणंतगुणा। तिसमयूणाए अणंतगुणा। एवं जाव असंखेज्जातो ट्ठितीतो णिवत्तणकंडगस्स असंखिज्जतिभागो सेसो, तत्तियमित्तीणं ठितीणं जहण्णाणुभागा अणंतगुणाए सेढीए णेयव्वा। ततो अट्ठारसण्हं कोडाकोडीणं उवरिं जासिं ट्ठितीणं उक्कस्साणुभागा न भणिया तासिं सव्वुक्कस्सिगाए ठिइए उक्कस्साणुभागा अणंतगुणा। ततो समयूणाए ठितीए उक्कस्साणुभागा अणंतगुणा। विसमयूणाए ठितीए उक्कस्साणुभागा अणंतगुणा। तिसमयूणाए ठितीए उक्कस्साणुभागा अणंतगुणत्ति। एवं जाव अट्ठारसकोडाकोडि समउत्तरति ताव उक्कस्साणुभागा अणंतगुणाए सेढीए णेयव्वा। ततो अट्ठारसकोडाकोडीए ठितीए उक्कोस्सगेहिं अणुभागेहिंतो परियत्तमाणजहण्णाणुभागबन्धपातोग्गाणं ठितीणं हेट्ठउ ट्ठितीतो [जहण्णाणुभागेहिंतो] भणितेग्गिल्लाओ तासिं जा जहण्णिगा ठिती तीसे ट्ठितीए हिट्ठिमाए अणंतराए ट्ठितीए जहण्णाणुभागा अणंतगुणा। ततो अट्ठारसकोडाकोडीणं उक्कस्साणुभागा अणंतगुणा। ततो पुणो णिव्वत्तणकंडगमेत्तीणं ठितीणं उक्कस्साणुभागा अणंतगुणा। हेट्ठा पुणो एगसीट्ठितीए जहण्णाणुभागा अणंतगुणा। उवरिं पुणो णिव्वत्तणकंडगमेत्तीणं ठितीणं उक्कस्साणुभागा अणंतगुणाए सेढीए णेयव्वा। एतेण कमेणं हेट्ठउ एगीसे ट्ठितीए जहण्णाणुभागा उवरिमाणं णिव्वत्तणकंडगमेत्तीणं ट्ठितीणं उक्कस्साणुभागा एवं णीयं ताव जाव परियत्तमाणजहण्णाणुभागबंधपाउग्गाणं जहण्णगट्ठितीए उक्कस्सपदे उक्कस्साणुभागा अणंतगुणा। ततो तीसे ट्ठितीए हेट्ठतो जातो ठितीओ तासिं णिव्वत्तणकंडगमेत्तीणं जहण्णाणुभागा भणिता हो-

ति । ततो जहण्णाओ थावरणामाए ठ्ठितिबंधातो उक्कस्सगेहिं अणुभागेहिंतो जहण्णातो थावरणामठ्ठितीबन्धाओ णिव्वत्तणकंडगमेत्तीओ ठ्ठिइओ ओसरितूण जा ठ्ठिती तीसे ठ्ठितीए जहण्णाणुभागा अणंतगुणा । ततो जहण्णातो थावरणामठ्ठितिबन्धातो समयूणाए ठ्ठितीए उक्कस्साणुभागा अणंतगुणा । ततो परं हेट्ठिमाए ठितीए जहण्णाणुभागा उवरिमाए ठ्ठितीए उक्कस्साणुभागा एक्केक्का वोगाहित्ता जहण्णिगाओ थावरणामबंधाओ आढत्तं ताव णीतं जाव तसणामाए जहण्णिगा ठितीत्ति—जाव तसणामजहन्निगाए ठितीए जहण्णाणुभागा अणंतगुणा । ततो णिव्वत्तणकंडगमेत्तितो ठ्ठितीउ अब्भुसरिऊण जहिं ठिया उक्कस्सा ततो समयूणाए ठितीए उक्कस्साणुभागा अणंतगुणा । दूसमऊणाए ठितीए उक्कस्साणुभागा अणंतगुणा । तिसमयूणाए ठ्ठिईए उक्कस्साणुभागा अणंतगुणा । एवं णिव्वत्तणकंडगमेत्तीणं ठ्ठितीणं उक्कस्साणुभागा अणंतगुणाए सेढीए णेयव्वा जाव जहण्णिगाए ठितीए उक्कस्साणुभागा अणंतगुणा । एवं पज्जत्तगबादरपत्तेयसरीरणामाए णेयव्वा । तिव्वमंदया सम्मत्ता । इदाणिं सादिअणादिपरूवणा सामित्तं घातिसन्ना ठ्ठाणसन्ना सुभासुभपरूवणा बन्धतो विवागो य जहासयगे तहा भाणियव्वा । एवं अणुभागबन्धो सम्मत्तो ॥ ६७ ॥

(मलय०)–तथा चाह—'ताणि'त्ति । तानि चान्यानि चेत्येवमनुकृष्टेः परं कण्डकस्यासंख्येयेभ्यो भागेभ्य ऊर्ध्वं कण्डकमात्राणामेकैकस्याश्चाधः स्थितेर्यथासंख्यमुत्कृष्टा इतरे च जघन्या अनुभागा अनन्तगुणा ज्ञेयाः । एतदुक्तं भवति–तानि चान्यानि चेत्येवमनुकृष्टेः परं जघन्योऽनुभागो यथोत्तरमनन्तगुणस्तावद्वाच्यो यावत् कण्डकमात्राणां स्थितीनामसंख्येया भागा गता भवन्ति, एकोऽवतिष्ठते ।

ततो यतः स्थितेरारभ्य तानि चान्यानि चेत्येवमनुकृष्टिरारब्धा तत्प्रभृतीनां स्थितीनां कण्डकमात्राणां यथोत्तरमनन्तगुणतयोत्कृष्टोऽनुभागो वक्तव्यः। ततो यतः स्थितिस्थानाज्जघन्यानुभागमुक्त्वा निवृत्तस्तत उपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणो वाच्यः। एवमेकैकं जघन्यानुभागमुत्कृष्टानुभागानां च कण्डकं कण्डकं तावद्वदेत् यावज्जघन्यानुभागविषयाणां स्थितीनां तानि चान्यानि चेत्येवमनुकृष्टेः परं कण्डकं परिपूर्णं भवति। उत्कृष्टाश्चानुभागाः सागरोपमशतपृथक्त्वतुल्या भवन्ति। तत उपरि जघन्योऽनुभागोऽनन्तगुणः। पश्चादेक उत्कृष्टोऽनुभागः, ततः पुनरप्येको जघन्योऽनुभागः, पुनरप्येक उत्कृष्टोऽनुभागः, एवं तावद्वाच्यं यावज्जघन्यानुभागविषयाः स्थितयः सर्वा अपि परिसमाप्ता भवन्ति। उत्कृष्टानुभागविषयाश्च कण्डकमात्राः स्थितयोऽद्याप्यनुक्तास्तिष्ठन्ति शेषाः सर्वा अप्युक्ताः। ततस्तासां यथोत्तरमुत्कृष्टोऽनुभागोऽनन्तगुणो वाच्यः। तथा चाह—'जा तकंडोवरि समत्ती'—यावत्तेषां जघन्यानुभागानां कण्डकस्य चोपरितनस्य परिसमाप्तिः। इदमुक्तं भवति—अनन्तगुणतयाऽभिहितानां जघन्यानुभागविषयाणां स्थितीनां कण्डकादुपरि एकैकोत्कृष्टानुभागान्तरिता जघन्यानुभागास्तावद्वक्तव्या यावत्तेषां सर्वेषामपि परिसमाप्तिरुपजायते। ततो ये कण्डकमात्रा उत्कृष्टानुभागाः केवलास्तिष्ठन्ति तेऽपि यथोत्तरमनन्तगुणास्तावद्वाच्या यावत्सर्वसमाप्तिर्भवतीति गाथार्थः।

तत्र सातासाते अधिकृत्य भावना विधीयते—सातस्योत्कृष्टायां स्थितौ जघन्योऽनुभागः सर्वस्तोकः। ततः समयोनायामुत्कृष्टस्थितौ जघन्योऽनुभागस्तावन्मात्र एव। द्विसमयोनायामप्युत्कृष्टस्थितौ जघन्योऽनुभागस्तावन्मात्र एव। एवमधोऽधोऽवतीर्य तावद्वक्तव्यो यावत्सागरोपमशतपृथक्त्वमतिक्रान्तं भवति। ततोऽधस्तनस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततोऽप्यधस्तनस्थितौ जघन्योऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावत् कण्डकस्यासंख्येयभागा गता भवन्ति, एकोऽवशिष्यते। एताश्च स्थितयोऽसंख्येयभागहीनकण्डकमात्राः

साकारोपयोगसंज्ञा इति व्यवह्रियन्ते, साकारोपयोगेनैवैतासां बध्यमानत्वात् । तत उत्कृष्टस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणो वक्तव्यः । ततः समयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततोऽपि द्विसमयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवमधोऽधोऽवतरणेनोत्कृष्टोऽनुभागोऽनन्तगुणस्तावद्वक्तव्यो यावत्कण्डकमात्राः स्थितयोऽतिक्रान्ता भवन्ति । ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्ततोऽधस्तने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः । ततः पुनरपि प्रागुक्तानामुत्कृष्टानुभागविषयाणां स्थितीनामधस्तात् कण्डकमात्रासु उत्कृष्टोऽनुभागः क्रमेणानन्तगुणो वाच्यः। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्ततोऽधस्तने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणो वक्तव्यः। ततः पुनरपि कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागोऽनन्तगुणः । एवमेकैकस्याः स्थितेर्जघन्योऽनुभागः कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽनन्तगुणतया तावद्वाच्यो यावज्जघन्यानुभागविषयाणामेकैकस्थितीनां तानि चान्यानि चेत्येवमनुकृष्टेः परं कण्डकं परिपूर्णं भवति । उत्कृष्टानुभागविषयाश्च स्थितयः सागरोपमशतपृथक्त्वमात्राः । ततः एकस्याः स्थितेर्जघन्यानुभागोऽनन्तगुणः। ततः सागरोपमशतपृथक्त्वादधस्तनस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततः पुनरपि प्रागुक्तस्थितिस्थानादधस्तनस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततः सागरोपमशतपृथक्त्वादधस्तनद्वितीयस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। एवमेकैकं जघन्यमुत्कृष्टं चानुभागमनन्तगुणतया वदन् तावद्व्रजेद्यावत्सर्वजघन्या स्थितिः। कण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागा अद्याप्यनुक्तास्तिष्ठन्ति, शेषाः सर्वेऽप्युक्ताः। ततस्तेऽप्यधोऽधः क्रमेणानन्तगुणा वक्तव्या यावत्सर्वजघन्या स्थितिः। एवं मनुष्यगतिमनुष्यानुपूर्वीदेवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्युच्चैर्गोत्राणामपि वक्तव्यम् ।

सम्प्रत्यसातवेदनीयस्योच्यते–तत्रासातस्य जघन्यस्थितौ जघन्योऽनुभागः सर्वस्तोकः। द्वितीयस्यां स्थितौ जघन्योऽनुभागस्तावन्मात्र एव। तृतीयस्यामपि स्थितौ जघन्योऽनुभागस्तावन्मात्र एव। एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वं भवति। तत उपरितनस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततो द्वितीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावत्कण्डकस्यासंख्येया भागा गता भवन्ति, एकोऽवतिष्ठते। ततोऽसातस्य जघन्यस्थितावुत्कृष्टपदे उत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽपि द्वितीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽपि तृतीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावत् कण्डकमात्राः स्थितयो गता भवन्ति। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्तत उपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः। ततः प्रागुक्तादुत्कृष्टानुभागविपयात्कण्डकादुपरि प्रथमस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽपि द्वितीयस्यां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽपि तृतीयस्यां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावत्पुनरपि कण्डकमात्राः स्थितयो गता भवन्ति। ततः पुनरपि यतः स्थितिस्थानाज्जघन्यानुभागमुक्त्वा निवृत्तस्तस्योपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः। ततो भूयोऽपि प्रागुक्तकण्डकद्वयादुपरि कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागो यथोत्तरमनन्तगुणो वक्तव्यः। एवमेकैकस्याः स्थितेर्जघन्योऽनुभागः कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽनन्तगुणतया तावद्वक्तव्यो यावज्जघन्यानुभागविपयाणामेकैकस्थितीनां तानि चान्यानि चेत्येवमनुकृष्टेः परं कण्डकं परिपूर्णं भवति। उत्कृष्टानुभागविषयाश्च स्थितयः सागरोपमशतपृथक्त्वमात्राः। तत उपरि एकस्याः स्थितेर्जघन्योऽनुभागोऽनन्तगुणो वाच्यः। ततः सागरोपमशतपृथक्त्वादुपरितनस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततः पुनरपि प्रागुक्तात् स्थितिस्थानादुपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः। ततः सागरोपमशतपृथक्-

त्वादुपरि द्वितीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवमेकैकं जघन्यमुत्कृष्टं चानुभागमनन्तगुणं वदन् तावद्व्रजेद्यावदसातवेदनीयस्य सर्वोत्कृष्टा स्थितिर्भवति। कण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागा अद्याप्यनुक्ता अवतिष्ठन्ते शेषाः सर्वेऽप्युक्ताः । ततस्तेऽपि यथोत्तरमनन्तगुणा वक्तव्या यावदुत्कृष्टा स्थितिः। एवं नरकगतिनरकानुपूर्वीपञ्चेन्द्रियजातिवर्जजातिचतुष्टयप्रथमवर्जसंस्थानपञ्चकप्रथमवर्जसंहननपञ्चकाप्रशस्तविहायोगतिस्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तीनामपि तीव्रमन्दताऽभिधातव्या।

सम्प्रति तिर्यग्गतेस्तीव्रमन्दताऽभिधीयते—सप्तमपृथिव्यां वर्तमानस्य नैरयिकस्य सर्वजघन्ये स्थितिस्थाने जघन्यपदे जघन्योऽनुभागः सर्वस्तोकः । ततो द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततोऽपि तृतीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः । एवं तावद्वाच्यं यावन्निवर्तनकण्डकमतिक्रान्तं भवति । ततो जघन्यस्थितावुत्कृष्टपदे उत्कृष्टोऽनुभागोऽनन्तगुणः। ततो निवर्तनकण्डाकादुपरि प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः । ततो द्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततः कण्डकादुपरि द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः । ततस्तृतीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धस्याधश्चरमस्थितिः। अभव्यप्रायोग्यजघन्यानुभागबन्धस्याधः कण्डकमात्राणां स्थितीनामुत्कृष्टानुभागा अद्याप्यनुक्ताः सन्ति, शेषास्तूक्ताः । ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषये प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः । द्वितीयस्यां स्थितौ जघन्योऽनुभागस्तावन्मात्र एव । तृतीयस्यामपि स्थितौ जघन्योऽनुभागस्तावन्मात्र एव। एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वमात्राः स्थितयोऽतिक्रान्ता भवन्ति। एतासां च स्थितीनां पूर्वपुरुषैः परावर्तमानजघन्यानुभागबन्धप्रायोग्या इति नाम कृतम् । एतासां चोपरि प्रथमस्थितौ जघन्यानुभागोऽनन्तगुणः । ततोऽपि द्वितीयस्यां स्थितौ जघन्यानुभागोऽनन्तगुणः । ततोऽपि तृतीयस्यां स्थितौ जघन्याऽनुभागोऽनन्तगुणः । एवं ताव-

ग्राच्यं यावन्निवर्तनकण्डकस्य असंख्येया भागा गता भवन्ति, एकोऽवतिष्ठते । ततो यतः स्थितिस्थानादुत्कृष्टमनुभागमुक्त्वा निवृत्तस्तत उपरितने स्थितिस्थाने उत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽप्युपरितने द्वितीये स्थितिस्थाने उत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽपि तृतीये स्थितिस्थाने उत्कृष्टोऽनुभागोऽनन्तगुणः । एवं तावद्वाच्यं यावदभव्यप्रायोग्यजघन्यानुभागवन्धस्याधश्चरमा स्थितिः । ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्तत उपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः । ततोऽभव्यप्रायोग्यजघन्यानुभागवन्धविषये प्रथमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽपि द्वितीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावत् कण्डकमात्राः स्थितयोऽतिक्रान्ता भवन्ति । ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्तत उपरितने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः । ततोऽप्यभव्यप्रायोग्यजघन्यानुभागवन्धविषये कण्डकादुपरि पुनरपि कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागो यथोत्तरमनन्तगुणो वक्तव्यः । एवमेकस्याः स्थितेर्जघन्यमनुभागं कण्डकमात्राणां च स्थितीनामुत्कृष्टमनुभागं वदता तावद्गन्तव्यं यावदभव्यप्रायोग्यजघन्यानुभागवन्धविषये चरमस्थितिः । ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्तत उपरितने जघन्योऽनुभागोऽनन्तगुणः । ततोऽभव्यप्रायोग्यजघन्यानुभागवन्धस्योपरि प्रथमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । तत उपरि प्रागुक्ताजघन्यानुभागवन्धादुपरि द्वितीयस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततः प्रागुक्तादुत्कृष्टानुभागादुपरितने स्थितिस्थाने उत्कृष्टोऽनुभागोऽनन्तगुणः। एवमेकस्याः स्थितेर्जघन्यमेकस्याश्चोत्कृष्टमनुभागं वदता तावद् गन्तव्यं यावदुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः। कण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागा अद्याप्यनुक्ताः सन्ति, शेषाश्च सर्वेऽप्युक्ताः । ततस्ते यथोत्तरमनन्तगुणास्तावद्वक्तव्या यावदुत्कृष्टा स्थितिः । एवं तिर्यगानुपूर्व्या नीचैर्गोत्रस्य च तीव्रमन्दताऽभिधातव्या ।

सम्प्रति त्रसनाम्नोऽभिधीयते—त्रसनाम्न उत्कृष्टस्थितौ जघन्यपदे जघन्योऽनुभागः सर्वस्तोकः। ततः समयोनायामुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततोऽपि द्विसमयोनायामुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः। एवमधोऽधोऽवतरणेन जघन्योऽनुभागोऽनन्तगुणतया तावद्वक्तव्यो यावत्कण्डकमात्राः स्थितयोऽतिक्रान्ता भवन्ति। तत उत्कृष्टायां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततः कण्डकादधः प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः। समयोनायामुत्कृष्टस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततः कण्डकादधस्तन्यां द्वितीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततो द्विसमयोनायामुत्कृष्टस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावदष्टादशसागरोपमकोटीकोटीनामुपरितनी स्थितिः। अष्टादशकोटीकोटीनां चोपरि कण्डकमात्राणां स्थितीनामुत्कृष्टानुभागा अद्याप्यनुक्ताः सन्ति, शेषं सर्वमुक्तम्। ततोऽष्टादशकोटीकोटीनां सत्कायामुत्कृष्टस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततः समयोनायामुत्कृष्टस्थितौ जघन्योऽनुभागस्तावन्मात्र एव। द्विसमयोनायामप्युत्कृष्टस्थितौ जघन्योऽनुभागस्तावन्मात्र एव। एवमधोऽधोऽवतरणेन तावद्वाच्यं यावदभव्यप्रायोग्यो जघन्यस्थितिबन्धः। ततोऽधस्तन्यां प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः। ततो द्वितीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावत्कण्डकस्यासंख्येया भागा गता भवन्ति, एकोऽवतिष्ठते। ततोऽष्टादशसागरोपमकोटीकोटीनामुपरिष्टात् कण्डकमात्राणां स्थितीनां चरमस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः। ततो द्विचरमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततस्त्रिचरमस्थितावुत्कृष्टोनुभागोऽनन्तगुणः। एवमधोऽधोऽवतरणेन तावद्वाच्यं यावत्कण्डकमतिक्रान्तं भवति, अष्टादशकोटीकोटीनामुपरि अनन्तरा स्थितिरतिक्रान्ता भवतीत्यर्थः। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमभिधाय निवृत्तस्ततोऽधस्तने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः। ततः पुनरप्यष्टादशसागरोपमकोटीकोटीनां सत्कायाश्चरमस्थितेरारभ्याधोऽधः कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागो वक्त-

व्यः । ततो यतः स्थितिस्थानाज्जघन्यानुभागमभिधाय निवृत्तस्ततोऽधस्तने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः । ततः पुनरपि प्रागुक्तात्कण्डकादधः कण्डकमात्राणां स्थितीनामधोऽधः क्रमेणोत्कृष्टा अनुभागा अनन्तगुणा वक्तव्याः । एवमेकस्याः स्थितेर्जघन्यमनुभागं कण्डकमात्राणां स्थितीनामुत्कृष्टाननुभागान् वदता तावद्गन्तव्यं यावदभव्यप्रायोग्यजघन्यानुभागबन्धविषये जघन्या स्थितिः । ततो यतः स्थितिस्थानाज्जघन्यानुभागमुक्त्वा निवृत्तस्ततोऽधस्तने स्थितिस्थाने जघन्योऽनुभागोऽनन्तगुणः । ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषयादधः प्रथमस्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः ततः प्रागुक्ताज्जघन्यानुभागादधः स्थितौ जघन्योऽनुभागोऽनन्तगुणः । ततोऽप्यभव्यप्रायोग्यजघन्यानुभागबन्धविषयादधो द्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवमेकस्याः स्थितेर्जघन्यमनुभागमेकस्याश्च स्थितेरुत्कृष्टं वदताऽधोऽधस्तावदवतरीतव्यं यावज्जघन्या स्थितिः । कण्डकमात्राणां च स्थितीनामुत्कृष्टा अनुभागा अद्याप्यनुक्ताः सन्ति, शेषाः सर्वेऽप्युक्ताः । ततस्तेऽप्यधोऽधः क्रमेणानन्तगुणास्तावद्वक्तव्या यावज्जघन्या स्थितिः । एवं बादरपर्याप्तप्रत्येकनाम्नामपि तीव्रमन्दताऽभिधातव्या । विशेषतस्त्वनुकृष्टिस्तीव्रमन्दता च पटस्थापनातोऽवसेया । साद्यनादिप्ररूपणा, स्वामित्वं, घातिसंज्ञा, स्थानसंज्ञा, शुभाशुभप्ररूपणा, प्रत्ययप्ररूपणा, विपाकप्ररूपणा च यथा शतके तथाऽवगन्तव्या इति ॥ ६७ ॥

(उ०)–तमेवाह—यावतीनां तानि चान्यानि चेत्येवमनुकृष्टिरभिहिता तावतीनां सर्वासामपि जघन्योऽनुभागस्तावन्मात्र एव द्रष्टव्यः। तानि चान्यानि चेत्येवमनुकृष्टेः परं कण्डकस्यासंख्येयेभ्यो भागेभ्य ऊर्ध्वं कण्डकमात्राणामेकैकस्याश्च स्थितेर्यथासंख्यमुत्कृष्टा इतरे च जघन्या अनुभागा अनन्तगुणा ज्ञेयाः। इदमुक्तं भवति–तानि चान्यानि चेत्येवमनुकृष्टेः परं जघन्योऽनुभागो यथोत्तरं तावदनन्तगुणो वाच्यो यावत्कण्डकमात्राणां स्थितीनामसंख्येया भागा गच्छन्ति, एको भागस्तिष्ठति। ततो यतः स्थितिस्थानादारभ्य तानि चान्यानि चेत्ये-

वमनुकृष्टिः प्रारब्धा तत्प्रभृतीनां कण्डकमात्राणां स्थितीनां यथोत्तरमुत्कृष्टोऽनुभागोऽनन्तगुणो वक्तव्यः। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा पश्चाद्वलितं तत उपरितने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणो वक्तव्यः। एवमेकैकं जघन्यानुभागमुत्कृष्टानुभागानां च कण्डकं कण्डकं तावद्वदेद्यावज्जघन्यानुभागविषयाणां तानि चान्यानि चेत्येवमनुकृष्टेः परं कण्डकं परिपूर्णं भवति, उत्कृष्टाश्चानुभागाः सागरोपमशतपृथक्त्वतुल्या भवन्ति। सागरोपमशतपृथक्त्वं ह्यसत्कल्पनया लक्षं, कण्डकानि सहस्रतुल्यानि, तदेकभागः शतं, तदेकैकव्यक्त्यन्तरितानि च सहस्राणि लक्षं भवतीति। तत उपरि जघन्यानुभागोऽनन्तगुणः। पश्चादेक उत्कृष्टोऽनुभागोऽनन्तगुणः। ततः पुनरप्येको जघन्योऽनुभागोऽनन्तगुणः। ततः पुनरप्येक उत्कृष्टोऽनुभागोऽनन्तगुणः। एवं कण्डके कण्डके एकैकमुपर्यधो जघन्यमुत्कृष्टं चानन्तगुणमनुभागं तावद्वदेद्यावज्जघन्यानुभागविषयाः स्थितयः परिपूर्यन्ते। उत्कृष्टानुभागविषयाश्च कण्डकमात्रा अनुक्तास्तिष्ठन्ति, तासां यथोत्तरमुत्कृष्टोऽनुभागोऽनन्तगुणो वाच्यः। तथा चाह—'जा तक्कंडोवरि समत्ती'—यावत्तेषां जघन्यानुभागानां कण्डकस्य चोपरितनस्य समाप्तिः। इदमुक्तं भवति—असंख्येयेषु भागेषु यथोत्तरमनन्तगुणतयैकस्मिंश्चान्त्ये भागे उत्कृष्टानुभागकण्डकान्तरितत्वेनानन्तगुणतया परिसमापिताज्जघन्यानुभागस्थितिकण्डकादुपरि एकैकोत्कृष्टानुभागान्तरिता जघन्यानुभागास्तावद्वाच्या यावत्तेषां सर्वेषां समाप्तिर्भवति। ततो ये उत्कृष्टानुभागाः केवलास्तिष्ठन्ति तेऽपि यथोत्तरमनन्तगुणास्तावद्वाच्या यावत्सर्वसमाप्तिर्भवतीति गाथार्थः।

तत्र सातासाते अधिकृत्य भावना क्रियते—सातस्योत्कृष्टायां स्थितौ जघन्यानुभागः सर्वस्तोकः। ततः समयोनायामुत्कृष्टस्थितौ जघन्यानुभागस्तावन्मात्र एव। द्विसमयोनायामप्यसौ तावन्मात्र एव। एवमधोऽधोऽवतीर्य तावन्मात्र एव जघन्यानुभागस्तावद्वाच्यो यावत्प्रतिपक्षाक्रान्ताः सागरोपमशतपृथक्त्वप्रमाणाः स्थितयो गता भवन्ति। ततोऽधस्तनाधस्तनस्थितिषु जघन्यानुभागाः क्रमेणानन्तगु-

णात्तावद्वाच्या यावत्कण्डकस्यासंख्येयभागा गता भवन्ति एकोऽवशिष्यते। एताश्च स्थितयोऽसंख्येयभागहीनकण्डकमात्राः साकारोपयोगेनैव बध्यमानत्वात् पूर्वग्रन्थेषु साकारोपयोगसंज्ञा इति व्यवह्रियन्ते। तत उत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणो वक्तव्यः। ततः समयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततोऽपि द्विसमयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। एवमधोऽधोऽवतीर्योत्कृष्टोऽनुभागोऽनन्तगुणस्तावद्वाच्यो यावत्कण्डकमात्राः स्थितयो गच्छन्ति। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा पश्चाद्वलितं ततोऽधस्तने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततः पुनरपि प्रागुक्तानां कण्डकमात्राणामुत्कृष्टानुभागस्थितीनामधस्तात्कण्डकमात्रासु स्थितिपूत्कृष्टोऽनुभागः क्रमेणानन्तगुणो वाच्यः। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तं ततोऽधस्तने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततः पुनरपि प्रागुक्तानां कण्डकमात्राणामुत्कृष्टानुभागस्थितीनामधस्तात्कण्डकमात्रासु स्थितिपूत्कृष्टोऽनुभागः क्रमेणानन्तगुणो वाच्यः। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तं ततोऽधस्तने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततः पुनरपि कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागोऽनन्तगुणः। एकमेकैकस्याः स्थितेर्जघन्यानुभागः कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागस्तावद्वाच्यो यावज्जघन्यानुभागविषयाणामेकैकस्थितीनां तानि चान्यानि चेत्येवमनुकृष्टेः परमुपलक्षणभाषया साकारोपयोगकण्डकसंज्ञं कण्डकं परिपूर्णं भवति। उत्कृष्टानुभागविषयाश्च स्थितयोऽभव्यप्रायोग्यजघन्यस्थितिबन्धपर्यन्ताः सागरोपमशतपृथक्त्वप्रमाणाः समाप्यन्ते। ततः साकारोपयोगकण्डकादधस्तनप्रथमस्थितौ जघन्यानुभागोऽनन्तगुणः। ततोऽभव्यप्रायोग्यजघन्यस्थितेरधः प्रथमस्थितौ उत्कृष्टानुभागोऽनन्तगुणः। ततः साकारोपयोगकण्डकस्याधो द्वितीयस्थितौ जघन्यानुभागोऽनन्तगुणः। ततोऽभव्यप्रायोग्यजघन्यस्थितेरधो द्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। एवमेकैकं जघन्यमुत्कृष्टं चानुभागमनन्तगुणतया तावद्-

भाषेत यावत्सर्वजघन्या स्थितिरायाति। कण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागा अनुक्ता भवन्ति। तेऽप्यधोऽधः क्रमेणानन्तगुणा वक्तव्या यावत्सर्वजघन्या स्थितिः। एवं मनुष्यगतिमनुष्यानुपूर्वीपञ्चेन्द्रियजातिसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननप्रशस्तविहायोगतिस्थिरादिषट्कोच्चैर्गोत्राणामपि वक्तव्यम्।

असातस्य जघन्यस्थितौ जघन्यानुभागः सर्वस्तोकः। ततो द्वितीयादिस्थितिषु सागरोपमशतपृथक्त्वपर्यन्तं तावन्मात्र एव वाच्यः। तत उपरितनस्थितौ जघन्यानुभागोऽनन्तगुणः। ततो द्वितीयस्यां स्थितौ जघन्योऽनुभागोऽनन्तगुणः। एवं तावद्वाच्यं यावत्कण्डकस्यासंख्येया भागा गता भवन्ति एकोऽवतिष्ठते। ततो जघन्यस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततो द्वितीयादिस्थितिषु यथोत्तरमुत्कृष्टोऽनुभागः कण्डकमात्राः स्थितीर्यावदनन्तगुणो वाच्यः। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा न्युपरतं तत उपरितने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततः प्रागुक्तादुत्कृष्टानुभागविषयात्कण्डकादुपरि कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागो यथोत्तरमनन्तगुणो वक्तव्यः। एवमेकैकस्याः स्थितेर्जघन्यानुभागः कण्डकमात्राणां च स्थितीनामुत्कृष्टोऽनुभागोऽनन्तगुणतया तावद्वाच्यो यावज्जघन्यानुभागविषयाणामेकैकस्थितीनां तानि चान्यानि चेत्येवमनुकृष्टेः परं कण्डकं परिपूर्णं भवति। उत्कृष्टानुभागविषयाश्च सागरोपमशतपृथक्त्वमात्रा भवन्ति यावत्सातरूपप्रतिपक्षप्रकृत्याक्रान्ताः स्थितयः परिनिष्ठामुपयन्तीत्यर्थः। ततः प्रागुक्तजघन्यानुभागकण्डकस्योपरि प्रथमस्थितौ जघन्यानुभागोऽनन्तगुणः। ततः सागरोपमशतपृथक्त्वादुपरितनस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततः पुनरपि प्रागुक्तात् स्थितिस्थानादुपरितने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततः सागरोपमशतपृथक्त्वादुपरि द्वितीयस्यां स्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। एवमेकैकं जघन्यमुत्कृष्टं चानुभागमुपर्यधोऽनन्तगुणं वदंस्तावद्व्रजेद्यावदसातस्य सर्वोत्कृष्टा स्थितिर्भवति। क-

ण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागा येऽद्याप्यनुक्तास्तिष्ठन्ति ते यथोत्तरमनन्तगुणा वक्तव्याः यावदुत्कृष्टा स्थितिः । एवं नरकद्विकपञ्चेन्द्रियजातिवर्जजातिचतुष्टयाप्रथमसंस्थानसंहननाप्रशस्तविहायोगतिस्थावरदशकानामपि तीव्रमन्दता वाच्या ।

अथ तिर्यग्गतेस्तीव्रमन्दताऽभिधीयते—सप्तमपृथिव्यां वर्त्तमानस्य नैरयिकस्य सर्वजघन्ये स्थितिस्थाने जघन्यपदे जघन्यानुभागः सर्वस्तोकः । ततः स द्वितीयस्थितावनन्तगुणः । ततोऽपि तृतीयस्थितौ सोऽनन्तगुणः । एवं तावद्वाच्यं यावन्निवर्त्तनकण्डकमतिक्रान्तं भवति । ततो जघन्यस्थितावुत्कृष्टपदे उत्कृष्टोऽनुभागोऽनन्तगुणः । ततो निवर्त्तनकण्डकादुपरि प्रथमस्थितौ जघन्यानुभागोऽनन्तगुणः । ततोऽधस्तनद्वितीयस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततः कण्डकादुपरि द्वितीयस्थितौ जघन्यानुभागोऽनन्तगुणः । एवमेकैकं जघन्यमुत्कृष्टं चानुभागमनन्तगुणतया तावन्नयेद्यावदभव्यप्रायोग्यजघन्यानुभागबन्धस्याधश्चरमा स्थितिः । अभव्यप्रायोग्यजघन्यानुभागबन्धस्य चाधः कण्डकमात्राणां स्थितीनामुत्कृष्टानुभागा इयताप्यनुक्ताः सन्ति, शेषास्तूक्ताः । ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषये प्रथमस्थितौ जघन्योऽनुभागोऽनन्तगुणः । द्वितीयस्यां स्थितौ जघन्यानुभागस्तावन्मात्र एव । तृतीयस्यामपि स्थितौ तावन्मात्र एव सः । एवं तावद्वाच्यं यावत्सागरोपमशतपृथक्त्वमात्राः स्थितयोऽतिक्रान्ता भवन्ति । एतासां च स्थितीनां पूर्वपुरुषैः परावर्त्तमानजघन्यानुभागबन्धप्रायोग्या इति नाम कृतम् । एतासां चोपरि प्रथमस्थितौ जघन्यानुभागोऽनन्तगुणः । ततोऽपि द्वितीयस्यां स्थितौ जघन्यानुभागोऽनन्तगुणः । ततोऽपि तृतीयस्यां सोऽनन्तगुणः । एवं तावद्वाच्यं यावन्निवर्त्तनकण्डकस्यासंख्येया भागा गता भवन्ति, एकोऽवतिष्ठते । ततो यतः स्थितिस्थानादुत्कृष्टमनुभागमुक्त्वा निवृत्तस्तत उपरितने द्वितीये स्थितिस्थाने उत्कृष्टोऽनुभागोऽनन्तगुणः । ततोऽप्युपरितने स्थितिस्थाने उत्कृष्टोऽनुभागोऽनन्तगुणः । एवमुपर्युपर्यनन्तगुणताऽनुभागस्य तावद्वाच्या यावदभव्यप्रायोग्यजघन्यानुभागबन्धस्याधश्चरमा

स्थितिः । ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्तत उपरितने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः । ततोऽभव्यप्रायोग्यजघन्यानुभागविषये प्रथमकण्डकमात्राणां स्थितीनां यथोत्तरमुत्कृष्टोऽनुभागोऽनन्तगुणः । ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा व्युपरतं तत उपरितने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः । ततोऽभव्यप्रायोग्यजघन्यानुभागविषयकण्डकादुपरि कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागो यथोत्तरमनन्तगुणो वाच्यः । एवमेकस्याः स्थितेर्जघन्यमनुभागं कण्डकमात्राणां च स्थितीनामुत्कृष्टमनुभागं वदंस्तावद्व्रजेद्यावदभव्यप्रायोग्यजघन्यानुभागबन्धविषये चरमा स्थितिः । ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्तत उपरितने जघन्यानुभागोऽनन्तगुणः । ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धस्योपरि प्रथमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । तत उपरि प्रागुक्तजघन्यानुभागाद् द्वितीयस्थितौ जघन्यानुभागोऽनन्तगुणः। ततः प्रागुक्तादुत्कृष्टानुभागादुपरितने स्थितिस्थाने उत्कृष्टानुभागोऽनन्तगुणः । एवमुपर्यध एकैकस्याः स्थितेर्जघन्यमुत्कृष्टं चानुभागमनन्तगुणं वदता तावद् गन्तव्यं यावदुत्कृष्टस्थितौ जघन्यानुभागोऽनन्तगुणः । कण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागाः कथनावशिष्टा यथोत्तरमनन्तगुणा वाच्या यावदुत्कृष्टा स्थितिः । एवमेव तिर्यगानुपूर्व्या नीचैर्गोत्रस्य च तीव्रमन्दता निरूपणीया ।

अथ त्रसनाम्नोऽभिधीयते—त्रसनाम्नः सर्वोत्कृष्टस्थितेरारभ्याधोऽधः कण्डकमात्रासु स्थितिषु पश्चानुपूर्व्याऽनन्तगुणोऽनुभागो वक्तव्यः । तत उत्कृष्टायां स्थितौ उत्कृष्टोऽनुभागोऽनन्तगुणः । ततः कण्डकादधः प्रथमस्थितौ जघन्यानुभागोऽनन्तगुणः । ततः समयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । ततः कण्डकादधस्तन्यां द्वितीयस्यां स्थितौ जघन्यानुभागोऽनन्तगुणः । ततो द्विसमयोनायामुत्कृष्टस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः । एवं तावद्वाच्यं यावदष्टादशसागरोपमकोटाकोटीनामुपरितनी स्थितिः । ततो-

ऽष्टादशसागरकोटाकोटीसम्बन्धिन्यामुत्कृष्टस्थितौ जघन्यानुभागोऽनन्तगुणः। समयोनायामुत्कृष्टस्थितौ तावानेव, द्विसमयोनायामपि तावानेव। एवमधोऽधोऽवतीर्य तावन्मात्रोऽनुभागस्तावद्वाच्यो यावदभव्यप्रायोग्यो जघन्यः। ततोऽधस्तन्यां प्रथमस्थितौ जघन्यानुभागोऽनन्तगुणः, ततो द्वितीयस्यां स्थितौ जघन्यानुभागोऽनन्तगुणः, एवं तावद्वाच्यं यावत्कण्डकस्यासंख्येया भागा गता भवन्ति। ततोऽष्टादशसागरोपमकोटाकोटीनामुपरिष्टात्कण्डकमात्राः स्थितयो याः कथनावशिष्टोत्कृष्टानुभागास्तासां चरमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। ततस्तद्विचरमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, ततस्त्रिचरमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः, एवमधोऽधोऽवतीर्य तावद्वाच्यं यावत्कण्डकमतिक्रान्तं भवति। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तिः कृता ततोऽधस्तने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततोऽष्टादशसागरकोटाकोटीनां सम्बन्धिन्याश्चरमस्थितेरारभ्याधोऽधः कण्डकमात्राणां स्थितीनामुत्कृष्टोऽनुभागः क्रमेणानन्तगुणो वाच्यः। ततः प्रागुक्तजघन्यानुभागादधस्तने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततः प्रागुक्तकण्डकादधः कण्डकमात्राणां स्थितीनामधोऽधः क्रमेणोत्कृष्टानुभागा अनन्तगुणा वाच्याः। एवमेकस्या जघन्यानुभागं कण्डकमात्राणां च स्थितीनां उत्कृष्टमनुभागमनन्तगुणं वदंस्तावद् व्रजेद्यावदभव्यप्रायोग्यजघन्यानुभागबन्धविषये जघन्यस्थितिः। ततो यतः स्थितिस्थानाज्जघन्यमनुभागमुक्त्वा निवृत्तस्तदधस्तने स्थितिस्थाने जघन्यानुभागोऽनन्तगुणः। ततोऽभव्यप्रायोग्यजघन्यानुभागबन्धविषयजघन्यस्थितेरधः प्रथमस्थितावुत्कृष्टोऽनुभागोऽनन्तगुणः। एवमेकैकस्थितेर्जघन्यानुभागमेकैकस्याश्चोत्कृष्टानुभागमनन्तगुणमधोऽधो वदंस्तावदवतरेद्यावज्जघन्या स्थितिः। कण्डकमात्राणां च स्थितीनामुत्कृष्टानुभागाः कथनावशिष्टा अधोऽधः क्रमेणानन्तगुणा द्रष्टव्याः। एवं बादरपर्याप्तप्रत्येकनाम्नामपि तीव्रमन्दताऽभिधेया। तदेवमुक्ता तीव्रमन्दता॥

## सातादि (१६) शुभपरा०प्रकृतीनां तीव्रमन्दता।

| | | |
|---|---|---|
| ९९ स्यज०अनु.अल्पः | ७० ,, | ५२ स्य ज० अनं० |
| ९८ तुल्यः ,, | ६९ ,, | ८९ स्य० उ० अनं० |
| ९७ ,, | ६८ ,, | ८८ ,, |
| ९६ ,, | ६७ ,, | ८७ ,, |
| ९५ ,, | ६६ ,, | ८६ ,, |
| ९४ ,, | ६५ ,, | ८५ ,, |
| ९३ ,, | ६४ ,, | ८४ ,, |
| ९२ ,, | ६३ ,, | ८३ ,, |
| ९१ ,, | ६२ ,, | ८२ ,, |
| ९० ,, | ६१ ,, | ८१ ,, |
| ८९ ,, | ६० ,, | ८० ,, |
| ८८ ,, | ५९ स्यज० अनं० | ५१ स्य ज० अनं० |
| ८७ ,, | ५८ ,, | ७९ स्य उ० अनं० |
| ८६ ,, | ५७ ,, | ७८ ,, |
| ८५ ,, | ५६ ,, | ७७ ,, |
| ८४ ,, | ५५ ,, | ७६ ,, |
| ८३ ,, | ५४ ,, | ७५ ,, |
| ८२ ,, | ५३ ,, | ७४ ,, |
| ८१ ,, | ५२ } अवशिष्टाः | ७३ ,, |
| ८० ,, | ५१ } | ७२ ,, |
| ७९ ,, | ५० } | ७१ ,, |
| ७८ ,, | ९९ स्य उ० अनं० | ७० ,, |
| ७७ ,, | ९८ ,, | ५० स्य ज० अनं० |
| ७६ ,, | ९७ ,, | ६९ स्य उ० अनं० |
| ७५ ,, | ९६ ,, | ६८ ,, |
| ७४ ,, | ९५ ,, | ६७ ,, |
| ७३ ,, | ९४ ,, | ६६ ,, |
| ७२ ,, | ९३ ,, | ६५ ,, |
| ७१ ,, | ९२ ,, | ६४ ,, |
| | ९१ ,, | ६३ ,, |
| | ९० ,, | ६२ ,, |

| | | | |
|---|---|---|---|
| ६१ | ,, | | |
| ६० | ,, | | |
| ४९ | स्य ज० अनु अनं० | ५९ | स्य उ. अनं. ततः |
| ४८ | स्य. ज. अनं. ततः | ५८ | स्य उ. अनं ततः |
| ४७ | ,, | ५७ | ,, |
| ४६ | ,, | ५६ | ,, |
| ४५ | ,, | ५५ | ,, |
| ४४ | ,, | ५४ | ,, |
| ४३ | ,, | ५३ | ,, |
| ४२ | ,, | ५२ | ,, |
| ४१ | ,, | ५१ | ,, |
| ४० | ,, | ५० | ,, |
| ३९ | ,, | ४९ | ,, |
| ३८ | ,, | ४८ | ,, |
| ३७ | ,, | ४७ | ,, |
| ३६ | ,, | ४६ | ,, |
| ३५ | ,, | ४५ | ,, |
| ३४ | ,, | ४४ | ,, |
| ३३ | ,, | ४३ | ,, |
| ३२ | ,, | ४२ | ,, |
| ३१ | ,, | ४१ | ,, |
| ३० | ,, | ४० | ,, |
| | | ३९ | ,, |
| | | ३८ | ,, |
| | | ३७ | ,, |
| | | ३६ | ,, |
| | | ३५ | ,, |
| | | ३४ | ,, |
| | | ३३ | ,, |
| | | ३२ | ,, |
| | | ३१ | ,, |
| | | ३० | ,, |

अन्त्यनिव० कंडकं

अत्र स्थापनायां ९९ तः प्रारभ्य यावत् ६० स्थितयः शतपृ० सागरप्रमाणाः ता अभव्यस्य जघन्यानुभागबंधप्रायोग्याः | ५९ इत्यस्मात् ५३ पर्यन्ताः साकारोपयोगाः

— इति चिन्हेन ४९ तः ५९
— ५९ तः ४८
— ४८ तः ५८ इति आक्रांतप्ररूपणा तिर्यग्मुखेन कर्त्तव्या.

असातादीनां तीव्रमन्दता जघन्यस्थितेरारभ्य सातवज्ज्ञेया

## तिर्यग्द्विकादीनां तीव्रमन्दता।

प्रथमं निवर्तनकण्डकं (११–२०)

परावर्तमाना जघन्यानुभागबन्धप्रायोग्याः शतपृथक्त्वसागरोपमप्रमाणाः स्थितयः ४१ तः ७०

| | | | |
|---|---|---|---|
| ११ | स्य ज० अनु० अल्पः | ४१ | स्य ज० तुल्यः |
| १२ | स्य ज० अनन्तगुणः | ४२ | स्य ज० तुल्यः |
| १३ | ,, | ४३ | ,, |
| १४ | ,, | ४४ | ,, |
| १५ | ,, | ४५ | ,, |
| १६ | ,, | ४६ | ,, |
| १७ | ,, | ४७ | ,, |
| १८ | ,, | ४८ | ,, |
| १९ | ,, | ४९ | ,, |
| २० | ,, ततः ११ स्यउ अनं. | ५० | ,, |
| २१ | ,,——१२ ,, | ५१ | ,, |
| २२ | ,,——१३ ,, | ५२ | ,, |
| २३ | ,,——१४ ,, | ५३ | ,, |
| २४ | ,,——१५ ,, | ५४ | ,, |
| २५ | ,,——१६ | ५५ | ,, |
| २६ | ,,——१७ ,, | ५६ | ,, |
| २७ | ,,——१८ ,, | ५७ | ,, |
| २८ | ,,——१९ ,, | ५८ | ,, |
| २९ | ,,——२० ,, | ५९ | ,, |
| ३० | ,,——२१ ,, | ६० | ,, |
| ३१ | ,,——२२ ,, | ६१ | स्य० ज० अनं० |
| ३२ | ,,——२३ ,, | ६२ | ,, |
| ३३ | ,,——२४ , | ६३ | ,, |
| ३४ | ,,——२५ ,, | ६४ | ,, |
| ३५ | ,,——२६ ,, | ६५ | ,, |
| ३६ | ,,——२७ ,, | ६६ | ,, |
| ३७ | ,,——२८ ,, | ६७ | ,, |
| ३८ | ,,——२९ ,, | ६८ | अवशिष्टाः |
| ३९ | ,,——३० ,, | ६९ | अवशिष्टाः |
| ४० | ,, | ७० | अवशिष्टाः |

३१ स्य उ० अनं०

३२ ,,
३३ ,,
३४ ,,
३५ ,,
३६ ,,
३७ ,,
३८ ,,
३९ ,,
४० ,,

—

६८ स्य ज० अनं०

—

४१ स्य उ० अनं०
४२ ,,
४३ ,,
४४ ,,
४५ ,,
४६ ,,
४७ ,,
४८ ,,
४९ ,,
५० ,,

—

६९ स्य ज० अनं०

—

५१ स्य उ० अनं०
५२ ,,
५३ ,,
५४ ,,
५५ ,,
५६ ,,
५७ ,,
५८ ,,
५९ ,,
६० ,,

—

७० स्य ज० अनं०

—

६१ स्य उ.अनं.ततः ७१स्यजघ.अ.
६२ ,, ——७२ ,,
६३ ,, ——७३ ,,
६४ ,, ——७४ ,,
६५ ,, ——७५ ,,
६६ ,, ——७६ ,,
६७ ,, ——७७ ,,
६८ ,, ——७८ ,,
६९ ,, ——७९ ,,

७० ,, ——८० ,,

—

अन्त्यम् निर्वर्तन कंडकम्

७१ ,,
७२ ,,
७३ ,,
७४ ,,
७५ ,,
७६ ,,
७७ ,,
७८ ,,
७९ ,,
८० ,,

अनया रीत्या उत्कृष्टस्थितेः आरभ्य त्रसचतुष्केऽपि ज्ञेयाऽनुकृष्टिः

अथानुभागबन्धे साद्यनादिप्ररूपणा स्वामित्वप्ररूपणा च क्रियते—तत्र मूलप्रकृतिविषये नामकर्मवेदनीयकर्मणोरनुत्कृष्टो घातिकर्मणां चाजघन्योऽनुभागश्चतुर्विधः—सादिरनादिर्ध्रुवोऽध्रुवश्चेति । तथाहि—नामवेदनीययोरुत्कृष्टोऽनुभागः सूक्ष्मसंपरायान्त्यसमये क्षपकस्य भवति । स च द्वितीयसमये व्यवच्छेदमुपयातीति साद्यध्रुव एव । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः । स चोपशान्तमोहे न भवति ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, अभव्यानां ध्रुवः, भव्यानामध्रुवः । तथा मोहनीयस्यानिवृत्तिबादरान्त्यसमये ज्ञानावरणदर्शनावरणान्तरायाणां च सूक्ष्मसंपरायान्त्यसमये क्षपकस्य जघन्योऽनुभागबन्धः । स चैकसामयिक इति साद्यध्रुवः । ततोऽन्यः सर्वोऽप्यजघन्यः, स चोपशमश्रेण्यां मोहनीयस्य सूक्ष्मसंपराये ज्ञानावरणादित्रिकस्योपशान्तमोहे न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया । गोत्रस्य द्वावप्यनुत्कृष्टाजघन्यौ चतुर्विधौ । तथाहि—गोत्रस्योत्कृष्टोऽनुभागबन्धः सूक्ष्मसंपरायान्त्यसमये क्षपकस्य, स चैकसामयिकत्वात्साद्यध्रुवः । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः, स चोपशान्तमोहे न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः , ध्रुवाध्रुवावभव्यभव्यापेक्षया । तथा गोत्रस्य जघन्यानुभागबन्धः सप्तमक्षितिनारकस्यौपशमिकसम्यक्त्वमुत्पादयतोऽन्तरकरणं कृत्वा मिथ्यात्वस्य प्रथमस्थितावनुभवतः परिक्षीयमाणायामन्त्यसमये वर्त्तमानस्य नीचैर्गोत्रमधिकृत्य भवति, स चैकसामयिक इति साद्यध्रुवः । ततोऽन्यः सर्वोऽप्यजघन्यो यावदुत्कृष्टो न भवति, स चौपशमिकसम्यक्त्वलाभकाले उच्चैर्गोत्रमधिकृत्य प्रवर्त्तमानः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ पूर्ववत् । अमीषां सप्तानामपि कर्मणां शेषविकल्पाः साद्योऽध्रुवाश्चेति द्विविधाः । तथाहि—वेदनीयनाम्नोरुत्कृष्टोऽनुभागः साद्यध्रुवतया प्रागेव भावितः । मध्यमपरिणामे मिथ्यादृष्टौ सम्यग्दृष्टौ वाऽनयोर्जघन्योऽनुभागबन्धः, संक्लिश्यमाने विशुध्यमाने वाऽजघन्य इति द्वावप्येतौ जघन्या-

जघन्यौ मिथ्यादृष्टौ सम्यग्दृष्टौ वा पर्यायेण प्राप्यमाणत्वात् साद्यध्रुवौ । घातिनां जघन्योऽनुभागबन्धः साद्यध्रुवतया प्रागेव भावितः। उत्कृष्टानुत्कृष्टौ तु क्रमेण मिथ्यादृष्टौ प्राप्येते, सर्वसंक्लिष्टे उत्कृष्टो मध्यमपरिणामे त्वनुत्कृष्ट इति साद्यध्रुवावेतौ । गोत्रस्य जघन्योत्कृष्टौ साद्यध्रुवौ प्रागेव भावितौ । आयुषस्त्वध्रुवबन्धित्वाच्चत्वारोऽपि विकल्पाः साद्यध्रुवाः सुप्रतीताः ॥

उत्तरप्रकृतिषु शुभध्रुवबन्धिनीनां तैजसकार्मणप्रशस्तवर्णगन्धरसस्पर्शागुरुलघुनिर्माणरूपाणामष्टानां प्रकृतीनामनुत्कृष्टोऽनुभागबन्धश्चतुर्धा । तथाहि—एतासां क्षपणार्हस्यापूर्वकरणस्य त्रिंशत्प्रकृतिबन्धव्यवच्छेदसमये समयमात्रमुत्कृष्टोऽनुभागबन्धः प्राप्यते । स चैकसामयिकत्वात्साद्यध्रुवः । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः । स चोपशमश्रेण्यां बन्धव्यवच्छेदात्परतो न भवति, ततः प्रतिपाते च भूयोऽपि भवतीति सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ पूर्ववत् । तथाऽशुभानां ध्रुवबन्धिनीनां ज्ञानावरणपञ्चकदर्शनावरणनवकमिथ्यात्वषोडशकषायजुगुप्साभयोपघाताप्रशस्तवर्णादिचतुष्टयान्तरायपञ्चकरूपाणां त्रिचत्वारिंशत्प्रकृतीनामजघन्यश्चतुर्धा । तथाहि—ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाणां चतुर्दशप्रकृतीनां क्षपकस्य सूक्ष्मसंपरायान्त्यसमये, चतुर्णां संज्वलनानामनिवृत्तिबादरक्षपकस्य स्वस्वबन्धव्यवच्छेदसमये, निद्राप्रचलोपघातभयजुगुप्साऽप्रशस्तवर्णगन्धरसस्पर्शानामपूर्वकरणस्य क्षपणार्हस्य स्वस्वबन्धान्तसमये, चतुर्णां प्रत्याख्यानावरणानां संयमं प्रतिपित्सतो देशविरतस्य स्वगुणस्थानान्तसमये तद्बन्धकेषु तस्यातिविशुद्धत्वात्, चतुर्णामप्रत्याख्यानावरणानामविरतसम्यग्दृष्टेः क्षायिकसम्यक्त्वं संयमं च युगपत्प्राप्स्यतः तद्बन्धकेषु तस्यैवातिविशुद्धत्वात्, स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिनां मिथ्यादृष्टेः सम्यक्त्वं संयमं चैककालं प्रतिपत्तुकामस्य चरमसमये जघन्योऽनुभागबन्धो लभ्यते । स च समयमात्रभावीति सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यजघन्यः । स च ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयानामुपशान्त-

मोहे, निद्राप्रचलोपघाताप्रशस्तवर्णादिचतुष्टयभयजुगुप्सानामुपशमश्रेण्यामनिवृत्तिबादरे, प्रत्याख्यानावरणादीनां प्रमत्तसंयतादौ बन्धव्यवच्छेदे न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। आसामेव शुभानामशुभानां वा ध्रुवबन्धिनीनामुक्तशेषा विकल्पाः साद्यध्रुवाः। तथाहि—तैजसाद्यानामष्टानां शुभध्रुवबन्धिनीनामुत्कृष्टः साद्यध्रुवतया प्रागेव भावितः। जघन्याजघन्यौ तु संज्ञिपर्याप्तमिथ्यादृष्टौ पर्यायेण प्राप्येते। अतिसंक्लिष्टे जघन्यः, सुविशुद्धे त्वजघन्य इति साद्यध्रुवावेतौ। अशुभध्रुवबन्धिनीनां तु जघन्यः साद्यध्रुवतया प्रागेव भावितः। उत्कृष्टस्तु मिथ्यादृष्टौ संज्ञिपर्याप्ते सर्वसंक्लिष्टे एकं द्वौ वा समयौ लभ्यते। ततः पुनरपि मन्दपरिणामेऽनुत्कृष्ट इतीमावपि साद्यध्रुवौ। अध्रुवबन्धिनीनां तु जघन्यादयश्चत्वारोऽप्यध्रुवबन्धित्वादेव साद्यध्रुवाः। कृता साद्यनादिप्ररूपणा ॥

अथ स्वामित्वप्ररूपणा क्रियते—तत्राशुभप्रकृतीनां तद्बन्धकेषु चरमबन्धसमयवर्त्तिनोऽत्यन्तविशुद्धाः समयमेकं जघन्यमनुभागं बध्नन्ति, स्वबन्धव्यवच्छेदादूर्ध्वमपि गत्वा पतन्तोऽजघन्यं बध्नन्ति। शुभानां प्रकृतीनां तद्बन्धकेषु चरमा अत्यन्तविशुद्धा उत्कृष्टमनुभागं बध्नन्ति, मन्दपरिणामपरिणतास्त्वनुत्कृष्टम्। तथा सकलानामशुभप्रकृतीनामुद्योतातपतिर्यग्मनुजायुषां च संज्ञिमिथ्यादृष्टिः समयमेकमुत्कृष्टमनुभागं बध्नाति। तत्राशुभप्रकृतिषु नरकत्रिकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मापर्याप्तसाधारणानां तिर्यग्मनुष्यो वा संज्ञी मिथ्यादृष्टिः उत्कृष्टानुभागबन्धस्वामी। तत्रापि नरकत्रिकस्यातिसंक्लिष्टो विकलत्रिकसूक्ष्मत्रिकयोश्च तदर्हसंक्लेशवान्, अतिसंक्लिष्टो ह्येतत् षट्कमुल्लङ्घ्य नरकयोग्यं बध्नीयादिति। देवनारकाणां तु भवप्रत्ययवशादेतत्प्रकृतिबन्धासंभवः। एकेन्द्रियजातिस्थावरयोर्देवा एव भवनपत्यादय ईशानान्ता अतिसंक्लिष्टमिथ्यादृश उत्कृष्टानुभागबन्धकाः, तिर्यग्मनुष्याणामतिसंक्लिष्टानां नरकगतिप्रायोग्यबन्ध-

कत्वात्, मन्दसंक्लेशे चैतासामशुभत्वेनोत्कृष्टानुभागबन्धासंभवात् । नारकाणामीशानोत्तरदेवानां च भवप्रत्ययत एवैतत्प्रकृत्यबन्धकत्वात् । तिर्यग्गतितिर्यगानुपूर्वीसेवार्त्तसंहननानां देवनारका अतिसंक्लिष्टा मिथ्यादृष्टय उत्कृष्टानुभागबन्धस्वामिनः । तिर्यग्नरा हि तदर्हसंक्लेशे वर्त्तमाना नरकयोग्यमेव बध्नीयुः, न च तद्योग्या एताः प्रकृतय इति देवनारकग्रहणम्, ते हि सर्वसंक्लिष्टा अपि तिर्यगर्हमेव बध्नन्तीति । इह च सामान्योक्तावपि सेवार्त्तोत्कृष्टानुभागबन्धकाः सनत्कुमारादिसुरा एव न त्वीशानान्ताः, तेषामतिसंक्लिष्टानामेकेन्द्रियार्हस्यैव बन्धकत्वादित्यवधेयम् । शेषाणां तु ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीयमिथ्यात्वषोडशकषायनपुंसकवेदारतिशोकभयजुगुप्साहुंडसंस्थानाप्रशस्तवर्णरसगन्धस्पर्शोपघाताप्रशस्तविहायोगतिदुर्भगदुःस्वराशुभास्थिरानादेयायशःकीर्तिनीचैर्गोत्रान्तरायरूपाणां पञ्चपञ्चाशत्प्रकृतीनां चतुर्गतिको मिथ्यादृष्टिरतिसंक्लिष्टः, हास्यरतिस्त्रीपुरुषवेदाद्यन्तवर्जसंस्थानसंहननरूपाणां द्वादशप्रकृतीनां तत्प्रायोग्यसंक्लिष्ट उत्कृष्टानुभागबन्धस्वामी । सर्वोत्कृष्टसंक्लेशो हि हास्यरतियुगलमतिक्रम्यारतिशोकयुगलं बध्नाति, स्त्रीवेदपुंवेदौ त्वतिक्रम्य क्लीववेदं निर्वर्त्तयति । संस्थानसंहननेष्वपि सर्वसंक्लिष्टो विंशतिसागरोपमकोटाकोटिस्थितिके हुंडसेवार्त्ते निर्वर्त्तयति । ततो विशुद्धोऽष्टादशसागरोपमकोटाकोटिस्थितिके वामनकीलिके। ततो विशुद्धतरः षोडशसागरोपमकोटाकोटिस्थितिके कुब्जार्द्धनाराचे । ततोऽपि विशुद्धश्चतुर्दशसागरोपमकोटाकोटिस्थितिके सादिनाराचे । ततो विशुद्धो द्वादशसागरोपमकोटाकोटिस्थितिके न्यग्रोधपरिमण्डलर्षभनाराचे । ततोऽपि विशुद्धो दशसागरोपमकोटाकोटिस्थितिके समचतुरस्रवज्रर्षभनाराचे इति । हीनाधिकसंक्लेशेऽन्यान्यबन्धसंभवात्तत्प्रायोग्यसंक्लेशग्रहणम् । आतपोद्योततिर्यग्मनुष्यायुषां तु सुविशुद्धः संज्ञिमिथ्यादृष्टिरुत्कृष्टानुभागबन्धस्वामी । सम्यग्दृष्टीनां हि तिर्यगायुरातपोद्योतानि बन्धमेव नायान्तीति कुतस्तदुत्कृष्टानुभागबन्धवार्त्ता ? मनुष्यायुषश्चोत्कृष्टोऽनुभागस्त्रिपल्योपमस्थिति-

कस्यावाप्यते, न शेषस्य, तिर्यग्मनुष्याश्च सम्यग्दृष्टयो न मनुष्यायुर्बन्धकाः, तेषां देवायुर्बन्धसंभवात्। येऽपि देवा नारका वा सम्यग्दृष्टयो मनुष्यायुर्बध्नन्ति तेऽपि कर्मभूमियोग्यमेव, नाकर्मभूमियोग्यं, तत्र तेषामुत्पादाभावात्। ततो मनुष्यायुरादीनां चतसृणामपि प्रकृतीनामुत्कृष्टानुभागबन्धस्वामी मिथ्यादृष्टिरेव, न सम्यग्दृष्टिरिति स्थितम्। अत्रापि विशेषचिन्तायामातपस्य तत्प्रायोग्यविशुद्धो मिथ्यादृष्टिर्देवस्तथा, नारकाणामेकेन्द्रियार्हस्य तस्य बन्धासंभवात्, तिर्यङ्मनुष्याणां च तदुत्कृष्टरसयोग्यायां विशुद्धौ वर्तमानानां तिर्यक्पञ्चेन्द्रियादियोग्यान्यशुभतरबन्धसंभवात्। उद्योतनाम्नः सप्तमपृथिव्यां वर्तमानो नारक औपशमिकसम्यक्त्वमुत्पादयितुकामो यथाप्रवृत्तादिकरणत्रयपुरस्सरमन्तरकरणं कृत्वा मिथ्यात्वस्य प्रथमस्थितिमनुभवंश्चरमसमये वर्त्तमान उत्कृष्टानुभागबन्धस्वामी, तद्बन्धकेषु तस्यातिविशुद्धत्वात्। तिर्यङ्मनुष्यायुषोस्तिर्यङ्मनुष्यो वा तत्प्रायोग्यविशुद्धो मिथ्यादृष्टिस्तथा। अगुरुलघुतैजसकार्मणनिर्माणप्रशस्तवर्णगन्धरसस्पर्शदेवद्विकवैक्रियद्विकाहारकद्विकपञ्चेन्द्रियजातिसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतितीर्थकरयशःकीर्तिवर्जत्रसादिनवकरूपाणामेकोनत्रिंशत्प्रकृतीनामपूर्वकरणः क्षपणार्हो देवगतिप्रायोग्यबन्धव्यवच्छेदसमये वर्त्तमान उत्कृष्टानुभागबन्धस्वामी, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात्। मनुष्यद्विकौदारिकद्विकप्रथमसंहननानां सम्यग्दृष्टिर्देवोऽतिविशुद्ध उत्कृष्टानुभागमेकं द्वौ वा समयौ बध्नाति। मिथ्यादृष्टेः सम्यग्दृष्टिरनन्तगुणविशुद्ध इति सम्यग्दृष्टिग्रहणम्। नारका अपि विशुद्धाः सन्त एताः प्रकृतीर्निर्वर्त्तयन्ति, केवलं नन्दीश्वरादिचैत्यमहोत्सवाद्युपबृंहितभावत्रिदशवदतिविशुद्धत्वाभावात्तेषामग्रहणम्। तिर्यङ्मनुष्याणां पुनरतिशुद्धानां देवगतिप्रायोग्यबन्धकत्वात्तदयोग्यप्रस्तुतप्रकृतिबन्धासंभव इति सर्वव्युदासेन देवस्यैव ग्रहणम्। तथाऽप्रमत्तसंयतो देवायुष उत्कृष्टानुभागबन्धस्वामी, सर्वेभ्यस्तद्बन्धकेभ्योऽस्यातिविशुद्धत्वात्। सातवेदनीययशःकीर्त्युच्चैर्गोत्राणां सूक्ष्मसम्परायश्चरमसमये वर्त्तमानस्तथा, तद्बन्धकेभ्योऽस्यवातिविशुद्धत्वात्।

जघन्यानुभागस्वामित्वविषयेऽप्रमत्तयतिः प्रमत्ताभिमुख आहारकद्विकस्य जघन्यानुभागबन्धस्वामी, तस्य तद्बन्धकेषु सर्वसंक्लिष्टत्वात्। सूक्ष्मत्रिकविकलत्रिकायुश्चतुष्टयदेवद्विकनरकद्विकवैक्रियद्विकरूपाणां षोडशप्रकृतीनां नरतिर्यञ्चो जघन्यानुभागबन्धस्वामिनः। अत्र हि तिर्यङ्मनुष्यायुषी विना शेषाश्चतुर्दश प्रकृतीर्देवनारका भवप्रत्ययादेव न बध्नन्ति, तिर्यङ्मनुष्यायुर्द्वयमपि यदा जघन्यस्थितिकं बध्यते तदा जघन्यरसं क्रियते। देवनारकास्तु तज्जघन्यं न बध्नन्त्येव, तत्स्थितिकेषु तेषामुत्पत्त्यभावात्, तस्मादेतत्प्रकृतिषोडशकं नारकायोग्यमिति नरतिरश्चामेव ग्रहणम्। तत्र नारकायुषोऽशुभत्वात्तद्बन्धकेषु सर्वविशुद्धा दशवर्षसहस्रलक्षणजघन्यस्थितिबन्धकाले जघन्यानुभागं तिर्यङ्मनुष्याः कुर्वन्ति, शेषायुस्त्रयस्य शुभत्वात्तद्बन्धकेषु सर्वसंक्लिष्टाः स्वस्वसर्वजघन्यस्थितिबन्धका जघन्यानुभागबन्धस्वामिनः। नरकद्विकस्याशुभत्वाज्जघन्यस्थितिबन्धकाले तद्बन्धकेषु सर्वविशुद्धास्तथा। देवद्विकस्य शुभत्वात्स्वोत्कृष्टस्थितिबन्धकाले तत्प्रायोग्यसंक्लिष्टास्तथा, अतिसंक्लिष्टो नरकादियोग्यं बध्नीयादिति तत्प्रायोग्यसंक्लेशग्रहणम्। एवमन्यत्रापि द्रष्टव्यम्। वैक्रियद्विकस्यापि शुभत्वान्नरकगतिबन्धसहितां सर्वोत्कृष्टां स्थितिं बध्नतस्तथा। विकलत्रिकसूक्ष्मत्रिकयोस्त्वशुभत्वात्तत्प्रायोग्यविशुद्धास्तथा, अतिविशुद्धा मनुष्यादिप्रायोग्यं बध्नन्तीति तत्प्रायोग्यविशुद्धिग्रहणम्। औदारिकद्विकोद्योतानां देवा नैरयिका वा तिर्यग्गतेस्त्रिंशतिसागरोपमकोटाकोटिप्रमाणामुत्कृष्टस्थितिं बध्नन्त उत्कृष्टसंक्लेशे वर्त्तमाना जघन्यानुभागबन्धस्वामिनः, एतासां प्रकृतीनां तिर्यग्गतिप्रायोग्यबन्धसहचरितानामेव जघन्यरसबन्धात्। तिर्यङ्मनुष्याणां चैतावति संक्लेशे वर्त्तमानानां नरकगतिप्रायोग्यबन्धसंभवेनैतद्बन्धासंभवात्। औदारिकाङ्गोपाङ्गस्य च देवा ईशानात्परे द्रष्टव्याः, ईशानान्तानामतिसंक्लिष्टानामप्येकेन्द्रियप्रायोग्यस्यैव बन्धात्, औदारिकाङ्गोपाङ्गस्य चैकेन्द्रियाप्रायोग्यत्वात्। तिर्यग्द्विकनीचैर्गोत्राणां सप्तमपृथिवीनारका औपशमिकसम्यक्त्वमुत्पादयन्तो यथाप्रवृत्ता-

दिकरणत्रयपूर्वमन्तरकरणं कृत्वा प्रथमस्थितिं विपाकतोऽनुभवन्तश्चरमसमये मिथ्यादृष्टयस्तथा । अस्य हि प्रकृतित्रयस्याशुभत्वात्सर्वविशुद्धा जघन्यानुभागबन्धकारिणः । तद्बन्धकेषु चैत एव विशुद्धा इति । उक्तं च शतकचूर्णौ–"तिरियगइतिरियाणुपुव्विणीयागोयाणं अहे सत्तमपुढविनेरईओ सम्मत्ताभिमुहो करणाइं करित्तु चरमसमयमिच्छदिट्ठी भवपच्चपण ताओ तिन्नि वि बंधइ जाव मिच्छत्तभावो ताव तस्स जहण्णोणुभागो हवइ, तब्बंधगेसु अच्चंतविसुद्धो त्ति काउ"। अन्यस्थानवर्ती ह्येतावत्यां विशुद्धौ मनुष्यद्विकादियुक्तमुच्चैर्गोत्रं बध्नीयादिति सप्तमपृथिवीनारकग्रहणमिति भावः। अविरतसम्यग्दृष्टिर्मिथ्यात्वनरकगमनाभिमुखो मनुष्यस्तीर्थकरनाम्नस्तथा। अस्य हि शुभप्रकृतित्वाज्जघन्यानुभागः संक्लेशेन बध्यते, स च यथोक्तविशेषणविशिष्टस्यैवलभ्यते । तत्र तियञ्चस्तीर्थकरनाम्नः पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च भवप्रत्ययेनैव न भवन्तीति मनुष्यग्रहणम् । क्षायिकसम्यग्दृष्टिश्रेणिकादेर्नरकगमनाभिमुखस्यापि विशुद्धत्वादन्यगत्यभिमुखस्य च सम्यग्दृष्टेस्तादृशसंक्लेशाभावान्मिथ्यात्वनरकाभिमुखग्रहणम् । पञ्चेन्द्रियजातितैजसकार्मणप्रशस्तवर्णगन्धरसस्पर्शागुरुलघुपराघातोच्छ्वासत्रसबादरपर्याप्तप्रत्येकनिर्माणलक्षणानां पञ्चदशप्रकृतीनां चतुर्गतिका अपि जीवा मिथ्यादृष्टयः सर्वोत्कृष्टसंक्लेशा जघन्यानुभागबन्धकारिणः । एता हि शुभप्रकृतित्वात्सर्वोत्कृष्टसंक्लेशैर्जघन्यरसाः क्रियन्ते । तत्र च तिर्यङ्मनुष्याः सर्वोत्कृष्टसंक्लेशे वर्त्तमाना नरकगतिसहचरिता एता बध्नन्तो जघन्यरसाः कुर्वन्ति, नारकाः सनत्कुमारादिदेवाश्च सर्वसंक्लिष्टाः पञ्चेन्द्रियतिर्यक्प्रायोग्या एता बध्नन्तो जघन्यरसाः कुर्वन्ति, ईशानान्तास्तु देवाः सर्वसंक्लिष्टाः पञ्चेन्द्रियजातित्रसवर्जाः शेषाः प्रकृतीस्त्रयोदशैकेन्द्रियप्रायोग्या बध्नन्तो जघन्यरसा विदधति। पञ्चेन्द्रियजातित्रसनाम्नी तु विशुद्धा अमी बध्नन्ति इति जघन्यरसो न लभ्यत इति तद्वर्जनम् । त एव चतुर्गतिका मिथ्यादृष्टयो मनाग्विशुद्ध्यन्तः स्त्रीवेदनपुंसकवेदयोर्जघन्यानुभागबन्धस्वामिनः, केवलं मनाक्छुध्यन्तो नपुंसकवेदस्य,

ततो मनाग्विशुद्धतराः स्त्रीवेदस्य, सर्वविशुद्धास्तु पुरुषवेदमेव बध्नन्तीति मनाग्विशुध्यन्त इत्युक्तम्। सातवेदनीयस्थिरशुभयशःकीर्त्ति-
नां सप्रतिपक्षाणां सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा परावर्त्तमानमध्यमपरिणामो जघन्यानुभागबन्धस्वामी। कथम्? इति चेद्, उच्यते–इह सातस्य
पञ्चदशसागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, असातस्य च त्रिंशत्। तत्र प्रमत्तसंयतस्तत्प्रायोग्यविशुद्धोऽसातस्य सम्यग्दृष्टियोग्य-
स्थितिषु सर्वजघन्यामन्तःसागरोपमकोटाकोटिप्रमाणां स्थितिं बध्नाति, ततोऽन्तर्मुहूर्त्तात्परावृत्य परावृत्य सातं बध्नाति, पुनरप्य-
सातम्। एवं देशविरताविरतसम्यग्दृष्टिसम्यग्मिथ्यादृष्टिसासादनमिथ्यादृष्टयोऽपि परावृत्य सातासाते बध्नन्ति। तत्र मिथ्यादृष्टिः साता-
साते परावृत्य तावद्बध्नाति यावत्सातस्य पञ्चदशसागरोपमकोटाकोटिलक्षणा ज्येष्ठा स्थितिः। ततः परतोऽपि संक्लिष्टः संक्लिष्टतरः
संक्लिष्टतमोऽसातमेव केवलं तावद्बध्नाति यावत् त्रिंशत्सागरोपमकोटीकोट्यः। प्रमत्तादपि परतोऽप्रमत्तादयो विशुद्धविशुद्धतरविशुद्ध-
तमाः सातमेव केवलं बध्नन्ति यावत्सूक्ष्मसम्पराये द्वादशमुहूर्त्ताः। तदेवं व्यवस्थिते सातस्यासातेन सह परावृत्य परावृत्य बन्धे उत्कृ-
ष्टस्थितेरारभ्य जघन्यानुभागबन्धोचितः परावर्त्तमानमध्यमपरिणामस्तावल्लभ्यते यावत्प्रमत्तेऽन्तःसागरोपमकोटाकोटीलक्षणा सर्वजघन्या
स्थितिः। एतेषु हि सम्यग्दृष्टिमिथ्यादृष्टियोग्यस्थानेषु प्रकृतेः प्रकृत्यन्तरसंक्रमे मन्दः परिणामो जघन्यानुभागबन्धोचितो लभ्यते,
नान्यत्र, शुद्धस्थितावप्रमत्तादीनां मिथ्यादृष्टेश्च सातासातयोः प्रभूतरसाभिनिर्वृत्तेः। सागरोपमसप्तभागत्रयादिरूपवेदनीयस्थितिबन्धके-
ष्वेकेन्द्रियादिष्वपि तथाविधाध्यवसायाभावाज्जघन्यानुभागबन्धो न संभवति तस्माद्यथोक्तस्थितिबन्ध एव जघन्यानुभागबन्धसंभवस्त-
थाविधपरिणामसद्भावादिति। अस्थिराशुभायशःकीर्त्तीनां विंशतिसागरोपमकोटीकोट्य उत्कृष्टा स्थितिः। स्थिरशुभयशःकीर्त्तीनां तु
दश। तत्रास्थिराशुभायशःकीर्त्तीनां सम्यग्दृष्टियोग्यस्थितिषु प्रमत्तसंयतस्तत्प्रायोग्यविशुद्धो जघन्यां स्थितिमन्तःसागरोपमकोटाकोटी-

लक्षणां बध्नाति, ततोऽन्तर्मुहूर्त्ताद्विशुद्धः स्थिरादिका बध्नाति, पुनरप्यस्थिरादिका इत्येवं देशविरताविरतमिश्रसास्वादनमिथ्यादृष्टयोऽपि परावृत्त्य परावृत्य सप्रतिपक्षा अस्थिराशुभायशःकीर्तीर्बध्नन्ति । तत्र मिथ्यादृष्टिः परावृत्त्यैतास्तावद्बध्नाति यावत्स्थिरादीनामुत्कृष्टा स्थितिः । एतेषु च सम्यग्दृष्टिमिथ्यादृष्टिस्थानेषु जघन्यानुभागबन्धो लभ्यते, नान्यत्र। दशकोटाकोटीपरतो ह्यस्थिराद्य एवाशुभा बहुरसा बध्यन्ते । अप्रमत्तादिभिस्तु स्थिराद्याः शुभा एव बहुरसा बध्यन्त इति नान्यत्र जघन्यानुभागलाभः । तथा स्थावरैकेन्द्रियजात्योर्नैरयिकवर्जः शेषस्त्रिगतिको मिथ्यादृष्टिः परावर्त्तमानमध्यमपरिणामो जघन्यानुभागबन्धस्वामी । सर्वविशुद्धो हि पञ्चेन्द्रियजातित्रसनाम्नोर्बन्धको भवति। सर्वसंक्लिष्टः स्थावरैकेन्द्रियजात्योरुत्कृष्टानुभागबन्धक इत्यालोच्य मध्यमपरिणामग्रहणम् । अयं च मध्यमपरिणामो यदैकस्मिन्नन्तर्मुहूर्त्ते एकेन्द्रियजातिस्थावरनाम्नी बद्ध्वा पुनर्द्वितीयेऽप्यन्तर्मुहूर्त्ते ते एव बध्नाति तदापि भवति । केवलं तदाऽवस्थितपरिणामेऽशुभयोरनयोर्जघन्यानुभागहेतुर्विशुद्धिर्न लभ्यत इति मध्यमपरिणामः परावर्त्तमानत्वेन विशिष्यते, तादृशश्च परिणामः पञ्चेन्द्रियजातित्रसनामभ्यां परावृत्य परावृत्य बन्धे भवति, तदा च जघन्यानुभागो लभ्यत इति । भवत्वेवं तथापि नारकवर्जनं किमर्थम् ? इति चेद्,उच्यते–नारकाणां स्वभावादेवैतत्प्रकृतिद्वयाबन्धकत्वात्। आतपनाम्नस्तु सर्वसंक्लिष्टा ईशानान्ता देवा मिथ्यादृष्टयो जघन्यानुभागबन्धस्वामिनः, अस्य शुभप्रकृतित्वेन सर्वसंक्लिष्टानामेव जघन्यानुभागबन्धकत्वात्, तद्बन्धकेषु चैतेषामेव सर्वसंक्लिष्टत्वात्। तिर्यङ्मनुष्या ह्येतावति संक्लेशे वर्त्तमाना नारकादिप्रायोग्यं बध्नीयुः।नारकाः सनत्कुमारादिदेवाश्च भवप्रत्ययादेव तन्न बध्नन्तीति सर्वपरिहारेण यथोक्तदेवानामेव ग्रहणम्। मनुष्यद्विकसंहननषट्कसंस्थानषट्कविहायोगतिद्विकसुभगसुस्वरादेयदुर्भगदुःस्वरानादेयोच्चैर्गोत्रलक्षणानां त्रयोविंशतिप्रकृतीनां चतुर्गतिका अपि मिथ्यादृष्टयो मध्मपरिणामा जघन्यानुभागं कुर्वन्ति । सम्यग्दृष्टीनां ह्येतासां परावृत्तिर्नास्ति ।

तथाहि–तिर्यङ्मनुष्याः सम्यग्दृष्टयो देवद्विकमेव बध्नन्ति, न मनुष्यादिद्विकानि, संस्थानेषु समचतुरस्रमेव, संहननं तु न कि-
ञ्चिदपि । शुभविहायोगतिसुभगसुस्वरादेयोच्चर्गोत्राण्यप्रतिपक्षाण्येव । देवनारका अपि सम्यग्दृष्टयो मनुष्यद्विकमेव बध्नन्ति, न तिर्य-
ग्द्विकादिकम्, संस्थानेषु समचतुरस्रमेव, संहननेषु वज्रर्षभनाराचमेव, विहायोगत्यादिका अपि शुभा एव नाशुभा इति परावृत्त्यभा-
वात्सम्यग्दृष्टित्यागः । तत्र मनुष्यगतिद्विकस्य पञ्चदशसागरोपमकोटीकोटय उत्कृष्टा स्थितिः । प्रशस्तविहायोगतिसुभगसुस्वरादेयोच्चै-
र्गोत्रवज्रर्षभनाराचसमचतुरस्राणां तु दश । एताः शुभप्रकृतयः स्वस्वोत्कृष्टस्थितेरारभ्य प्रतिपक्षप्रकृतिभिः सह परावृत्त्य परावृत्त्य ता-
वद्बध्यन्ते यावत्तासामेव प्रतिपक्षप्रकृतीनां सर्वजघन्यान्तःसागरोपमकोटीकोटीलक्षणा स्थितिः। एतेषु स्थितिस्थानेषु परावर्त्तमानमध्यम
परिणाम एतासां जघन्यानुभागं बध्नाति । हुंडसेवार्त्तयोरपि वामनकीलिकयोरुत्कृष्टस्थितेरारभ्य स्वस्वजघन्यस्थितिं यावत्परावृत्तिर्लभ्यते।
शेषसंस्थानसंहननानामप्यात्मीयोत्कृष्टस्थितेरारभ्य संभवदितरसंस्थानसंहननैः सह परावृत्तिस्तावल्लभ्यते यावदात्मीयात्मीयजघन्यस्थितिः।
एतेषु स्थितिस्थानेषु मिथ्यादृष्टिः परावर्त्तमानमध्यमपरिणामो जघन्यानुभागं बध्नाति। तथाऽरतिशोकयोः प्रमत्तसंयतोऽप्रमत्तसंयमं प्र-
तिपित्सुर्जघन्यरसानुबन्धस्वामी, तद्बन्धकेषु तस्यातिविशुद्धत्वात्। ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकरूपाणां चतुर्दशानां
प्रकृतीनां क्षपकः सूक्ष्मसम्परायान्त्यसमये वर्त्तमानः समयमेकं तथा, तद्बन्धकेषु तस्य विशुद्धतमत्वात् । पुरुषवेदसंज्वलनचतुष्कयोर-
निवृत्तिबादरः क्षपकः स्वबन्धव्यवच्छेदसमये समयमेकं तथा, तस्यापि तद्बन्धकेष्वतिविशुद्धत्वात् । अप्रशस्तवर्णादिचतुष्टयनिद्राप्रचलो
पघातहास्यरतिभयजुगुप्सारूपाणामेकादशप्रकृतीनामपूर्वकरणः क्षपणार्हः स्वस्वबन्धव्यवच्छेदसमये समयमेकं तथा, तस्यापि तद्बन्धकेषु
परमविशुद्धत्वात् । स्त्यानर्द्धित्रिकमिथ्यात्वानन्तानुबन्धिनामष्टानां कर्मणां सम्यक्त्वं संयमं च युगपत्प्रतिपित्सुर्मिथ्यादृष्टिश्चरमसमये

तथा । अप्रत्याख्यानावरणानामविरतसम्यग्दृष्टिः संयमं प्रतिपित्सुः, प्रत्याख्यानावरणानां देशविरतः सर्वविरतिं प्रतिपित्सुस्तथा । कृता स्वामित्वप्ररूपणा, घातिसंज्ञा स्थानसंज्ञा शुभाशुभप्ररूपणा च रसविपाकप्ररूपणायां पूर्वमर्थात् कृतैवेत्युपरम्यते ॥ ६७ ॥

इयाणिं ट्ठितिबंधो । तस्स इमाणि चत्तारि अणुओगदाराणि पुव्वगमणिज्जाणि । तं जहा—ट्ठितिबंधट्ठाणपरूवणा, निसेगपरूवणा, अबाहाकंडगपरूवणा, अप्पाबहुगं ति । तत्थ ठितिबंधठाणपरूवणता पढमं भण्णति—

**ठिइबंधठाणाइं सुहुमअपज्जत्तगस्स थोवाइं । बायरसुहुमेयरबितिचउरिंदियअमणसन्नीणं ॥६८॥**

**संखेज्जगुणाणि कमा असमत्तियरे य बिंदियाइम्मि । नवरमसंखेज्जगुणाणि संकिलेसा य सव्वत्थ ॥६९॥**

(चू०)—'ठितिबंधट्ठाणे' त्ति । जहण्णिग ठितिं आदिं काऊणं जाव उक्कस्सिता ठिती एसिं मज्झे जत्तिया ठितिविगप्पा ते उक्कसियाए ठितिए समं ठितिबंधट्ठाणा वुच्चंति । ताणि सव्वथोवाणि सुहुमस्स अपज्जत्तगस्स ठितिबंधट्ठाणातिं। बायरअपज्जत्तगस्स ठितिबन्धट्ठाणाणि संखेज्जगुणाणि।सुहुमस्स पज्जत्तगस्स ठितिबन्धट्ठाणाणि संखेज्जगुणाणि। बायरस्स पज्जत्तगस्स ठितिबन्धट्ठाणाणि संखेज्जगुणाणि। एवं एतेसिं पलिओवमस्स असंखेज्जइभागमेत्ताणि ठितिबन्धट्ठाणाणि। ततो बिइंदियस्स अपज्जत्तगस्स ठितिबन्धट्ठाणाणि असंखेज्जगुणाइं । कहं ? बेतिंदियादिणं ठितिबन्धट्ठाणाति पलिओवमस्स संखेज्जइभागमेत्ताणि त्ति काउं। तस्सेव पज्जत्तगस्स ठितिबन्धट्ठाणातिं संखेज्जगुणातिं । तेइंदियस्स अपज्जत्तगस्स ठितिबन्धट्ठाणाइं संखेज्जगुणाइं । तस्सेव पज्जत्तगस्स ठिति-

बन्धट्ठाणाइं संखेज्जगुणाइं। चउरिंदियस्स अपज्जत्तगस्स ठितिबन्धट्ठाणाति संखेज्जगुणाइं। तस्सेव पज्जत्तगस्स ठितिबन्धट्ठाणाति संखेज्जगुणाणि। असण्णिपंचेंदियस्स अपज्जत्तस्स ठितिबन्धट्ठाणाति संखेज्जगुणाणि। तस्सेव पज्जत्तगस्स ठितिबन्धट्ठाणाति संखेज्जगुणाणि। सण्णिपंचिंदियअपज्जत्तगस्स ठितिबन्धट्ठाणाति संखेज्जगुणाइं। तस्सेव पज्जत्तगस्स ठितिबन्धणाइं संखेज्जगुणाइं। 'असमत्तियरे'त्ति–अपज्जत्तपज्जत्तगाणं, 'बेतिंदियातिम्मि णवरमसंखेज्जगुणाणि'त्ति–एगिंदियातो बेइंदियसंकमणे असंखेज्जगुणाणित्ति भणियं भवति। 'संकिलेसा य सव्वत्थ'त्ति–सव्वत्थ संकिलेसा असंखेज्जगुणा चेव। सव्वत्थोवाणि सुहुमस्स अपज्जत्तगस्स संकिलेसट्ठाणाइं। बादरस्स अपज्जत्तगस्स संकिलेसठाणा असंखेज्जगुणा। जहा ठितिबन्धट्ठाणाणि तहा संकिलेसट्ठाणाणि वि णेयव्वाणि। णवरि असंखेज्जगुणाणि। कहं असंखेज्जगुणाणि? भण्णइ—सुहुमअपज्जत्तगस्स जहण्णगे ठितिबन्धे जाणि संकिलेसट्ठाणाणि ततो बितियाए ठितिए विसेसहियाणि, एवं जाव तस्सेवुक्कसियाए ठितीए ठितिबन्धज्झवसाणट्ठाणाणि असंखेज्जगुणाणि लब्भंतित्ति काउं। ततो बादरस्स अपज्जत्तगस्स ठितिबन्धट्ठाणाणि संखेज्जगुणाणि ठितीदीहत्ताए, एतेसु संकिलेसट्ठाणा असंखेज्जगुणा लब्भंति एवं णेयव्वं। सव्वत्थोवाणि सुहुमस्स अपज्जत्तगस्स विसोहिट्ठाणाणि। बायरस्स अपज्जत्तगस्स विसोहिट्ठाणाणि असंखेज्जगुणाणि। एवं णेयव्वं जाव सण्णिपंचिंदियस्स पज्जत्तगस्स विसोहिट्ठाणाणि। जाणि चेव संकिलेसमाणस्स संकिलेसट्ठाणाणि ताणि चेव विसुज्झमाणस्स विसोहिट्ठाणाणि। सोवाणारोहओयरणदिट्ठंतेण णायव्वाणि। ठितिबन्धट्ठाणा परूविता॥६८–६९॥

(मलय०)—तदेवमुक्तोऽनुभागबन्धः। सम्प्रति स्थितिबन्धाभिधानावसरः। तत्र च चत्वार्यनुयोगद्वाराणि। तद्यथा—स्थितिस्थानप्ररूपणा, निषेकप्ररूपणा, अबाधाकण्डकप्ररूपणा, अल्पबहुत्वप्ररूपणा च। तत्र स्थितिस्थानप्ररूपणार्थमाह—'ठिइ'त्ति। इह जघन्यस्थितेरारभ्योत्कृष्टां स्थितिं यावत् यावन्तः समयास्तावत्प्रमाणानि स्थितिस्थानानि। तथाहि—जघन्यायाः स्थितेरेकं स्थितिस्थानम्, सैव समयाधिका द्वितीयं स्थितिस्थानम्, द्विसमयाधिका तृतीयं स्थितिस्थानम्, एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः। तानि च स्थितिस्थानानि सूक्ष्मस्यापर्याप्तस्य सर्वस्तोकानि। तेभ्योऽपर्याप्तबादरस्य संख्येयगुणानि। तेभ्योऽपि सूक्ष्मपर्याप्तस्य संख्येयगुणानि। तेभ्योऽपि पर्याप्तबादरस्य संख्येयगुणानि। एतानि च पल्योपमासंख्येयभागगतसमयप्रमाणानि द्रष्टव्यानि। ततोऽपर्याप्तद्वीन्द्रियस्यासंख्येयगुणानि। कथमेवं गम्यते? इति चेद्, उच्यते—द्वीन्द्रियाणामपर्याप्तानां स्थितिस्थानानि पल्योपमस्य संख्येयभागगतसमयप्रमाणानि, पाश्चात्यानि च पल्योपमासंख्येयभागगतसमयप्रमाणानि, ततः पाश्चात्येभ्योऽमून्यसंख्येयगुणान्येवोपपद्यन्ते। तेभ्योऽपि द्वीन्द्रियस्य पर्याप्तस्य स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि त्रीन्द्रियस्यापर्याप्तकस्य संख्येयगुणानि। तेभ्योऽपि तस्यैव पर्याप्तस्य संख्येयगुणानि। तेभ्योऽपि चतुरिन्द्रियस्यापर्याप्तस्य संख्येयगुणानि। तेभ्योऽपि चतुरिन्द्रियस्य पर्याप्तस्य संख्येयगुणानि। तेभ्योऽप्यसंज्ञिपञ्चेन्द्रियस्यापर्याप्तस्य संख्येयगुणानि। तेभ्योऽप्यसंज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य संख्येयगुणानि। तेभ्योऽपि संज्ञिपञ्चेन्द्रियस्यापर्याप्तस्य संख्येयगुणानि। तेभ्योऽपि संज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य संख्येयगुणानि। 'असमत्तियरे' त्ति—असमाप्तानाम्—अपर्याप्तानामितरेषां च—पर्याप्तानां बादरादीनां स्थितिस्थानानि क्रमेण संख्येयगुणानि वक्तव्यानीति। नवरमेकेन्द्रियाणां स्थितिस्थानान्यभिधायानन्तरं द्वीन्द्रियस्य प्रथमे भेदेऽपर्याप्तरूपे स्थितिबन्धस्थानान्यसंख्येयगुणानि वक्तव्यानि। तथैव च युक्तिपूर्वं

प्रागुक्तानि । 'संकिलेसा य सव्वत्थ'-संक्लेशाश्च सर्वत्र-सर्वेषु स्थानेष्वसंख्येयगुणा वक्तव्याः, आस्तां द्वीन्द्रियस्य प्रथमभेदेऽपर्याप्तलक्षणे स्थितिस्थानान्यसंख्येयगुणानीति चशब्दार्थः । तद्यथा-सूक्ष्मस्यापर्याप्तस्य संक्लेशस्थानानि सर्वस्तोकानि । तेभ्योऽपर्याप्तबादरस्यासंख्येयगुणानि । तेभ्योऽपि पर्याप्तसूक्ष्मस्यासंख्येयगुणानि । तेभ्योऽपि पर्याप्तबादरस्यासंख्येयगुणानि । तेभ्योऽपि द्वीन्द्रियस्यापर्याप्तस्यासंख्येयगुणानि । एवं पर्याप्तद्वीन्द्रियापर्याप्तपर्याप्तत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाणां यथोत्तरमसंख्येयगुणानि वक्तव्यानि । कथमेवं गम्यते सर्वत्राप्यसंख्येयगुणानि संक्लेशस्थानानि ? इति चेद्, उच्यते-इह सूक्ष्मस्यापर्याप्तस्य जघन्यस्थितिबन्धारम्भे यानि संक्लेशस्थानानि तेभ्यः समयाधिकजघन्यस्थितिबन्धारम्भे संक्लेशस्थानानि विशेषाधिकानि । तेभ्योऽपि द्विसमयाधिकजघन्यस्थितिबन्धारम्भेऽपि विशेषाधिकानि । एवं तावद्वाच्यं यावत्तस्यैवोत्कृष्टा स्थितिः । तदुत्कृष्टस्थितिबन्धारम्भे च संक्लेशस्थानानि जघन्यस्थितिसत्कसंक्लेशस्थानापेक्षयाऽसंख्येयगुणानि लभ्यन्ते । यद्येतदेवं तदा सुतरामपर्याप्तबादरस्य संक्लेशस्थानानि अपर्याप्तसूक्ष्मसत्कसंक्लेशस्थानापेक्षयाऽसंख्येयगुणानि भवन्ति । तथाहि-अपर्याप्तसूक्ष्मसत्कस्थितिस्थानापेक्षया बादरापर्याप्तस्य स्थितिस्थानानि संख्येयगुणानि । स्थितिस्थानवृद्धौ च संक्लेशस्थानवृद्धिः । ततो यदा सूक्ष्मापर्याप्तस्यापि स्थितिस्थानेष्वतिस्तोकेषु जघन्यस्थितिस्थानसत्कसंक्लेशस्थानापेक्षया उत्कृष्टे स्थितिस्थाने संक्लेशस्थानान्यसंख्येयगुणानि भवन्ति तदा बादरापर्याप्तस्थितिस्थानेषु सूक्ष्मापर्याप्तस्थितिस्थानापेक्षया संख्येयगुणेषु सुतरां भवन्ति । एवमुत्तरत्रापि असंख्येयगुणत्वं भावनीयमिति ॥६८-६९॥

(उ०)—तदेवमुक्तोऽनुभागबन्धः, अथ स्थितिबन्धाभिधानावसरः । तत्र चत्वार्यनुयोगद्वाराणि—स्थितिस्थानप्ररूपणा, निषेकप्ररूपणा, अबाधाकण्डकप्ररूपणा, अल्पबहुत्वप्ररूपणा च । तत्र स्थितिस्थानप्ररूपणार्थमाह-इह जघन्यस्थितेरारभ्योत्कृष्टां स्थितिं

यावद्यावन्तः समयास्तावत्प्रमाणानि स्थितिस्थानानि भवन्ति। तानि च स्थितिस्थानानि सूक्ष्मस्यापर्याप्तस्य सर्वस्तोकानि। तेभ्योऽपर्याप्तबादरस्य संख्येयगुणानि। तेभ्योऽपि सूक्ष्मपर्याप्तस्य संख्येयगुणानि। तेभ्योऽपि बादरपर्याप्तस्य संख्येयगुणानि। एतानि च पल्योपमासंख्येयभागगतसमयप्रमाणानि द्रष्टव्यानि। ततोऽपर्याप्तद्वीन्द्रियस्यासंख्येयगुणानि। कुत? इति चेद्, उच्यते—द्वीन्द्रियाणामपर्याप्तानां स्थितिस्थानानि पल्योपमसंख्येयभागगतसमयप्रमाणानि पाश्चात्यानि च पल्योपमासंख्येयभागगतसमयप्रमाणानि, ततः पाश्चात्येभ्योऽमून्यसंख्येयगुणान्येव भवन्ति। तेभ्योऽपि द्वीन्द्रियस्य पर्याप्तस्य स्थितिस्थानानि संख्येयगुणानि। तेभ्यस्त्रीन्द्रियस्यापर्याप्तस्य, तेभ्योऽपि त्रीन्द्रियस्य पर्याप्तस्य। तेभ्यश्चतुरिन्द्रियस्यापर्याप्तस्य। तेभ्योऽपि तस्यैव पर्याप्तस्य। तेभ्योऽसंज्ञिपञ्चेन्द्रियस्यापर्याप्तस्य। तेभ्योऽपि तस्यैव पर्याप्तस्य। तेभ्यः संज्ञिपञ्चेन्द्रियस्यापर्याप्तस्य। तेभ्योऽपि तस्यैव पर्याप्तस्य क्रमेण संख्येयगुणानि। 'असमत्तियर' त्ति—असमाप्तानाम्—अपर्याप्तानामितरेषां च—पर्याप्तानां बादरादीनां स्थितिस्थानानि क्रमात्संख्येयगुणानीत्यन्वयः। नवरं द्वीन्द्रियादौ—द्वीन्द्रियप्रथमभेदेऽपर्याप्तरूपे स्थितिस्थानान्येकेन्द्रियाणामभिधाय तेभ्योऽसंख्येयगुणानि वक्तव्यानि, एतच्च भावितं प्राक्। संक्लेशाश्च सर्वत्र सर्वेषु स्थानेष्वसंख्येयगुणा वक्तव्याः 'आस्तां द्वीन्द्रियस्य प्रथमभेदे स्थितिस्थानान्यसंख्येयगुणानीति चार्थः। तथाहि—सूक्ष्मस्यापर्याप्तस्य संक्लेशस्थानानि सर्वस्तोकानि। तेभ्योऽपर्याप्तबादरस्यासंख्येयगुणानि। तेभ्यः पर्याप्तसूक्ष्मबादरापर्याप्तपर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियाणां यथोत्तरमसंख्येयगुणानि। सर्वत्रापि संक्लेशस्थानानामसंख्येयगुणत्वे का युक्तिः? इति चेद्, उच्यते—इह सूक्ष्मस्यापर्याप्तस्य जघन्यस्थितिबन्धारम्भे यानि संक्लेशस्थानानि तेभ्यः प्रतिसमयमुत्तरोत्तरस्थितिषु विशेषाधिकानि भवन्ति। तानि तदुत्कृष्टस्थितिबन्धारम्भेऽसंख्येयगुणानि लभ्यन्ते। एवं च यदि सूक्ष्मापर्याप्त-

म्यापि स्थितिस्थानेष्वतिस्तोकेषु जघन्यस्थितिस्थानसत्कसंक्लेशस्थानापेक्षयोत्कृष्टे स्थितिस्थाने तान्यसंख्येयगुणानि भवन्ति तदा बादरापर्याप्तस्थितिस्थानेषु सूक्ष्मापर्याप्तस्थितिस्थानापेक्षया संख्येयगुणेषु सुतरां भवन्ति। एवमुत्तरत्राप्यसंख्येयगुणत्वं भावनीयम्। एवं न प्राक्तनसंक्लेशस्थानानामाद्यापेक्षयैवोत्तरत्राऽसंख्येयगुणत्वमिति न काप्यनुपपत्तिः॥ ६८–६९॥

इदाणिं उक्कस्सजहण्णिगा ठिती भण्णइ—

**एमेव विसोहीओ विग्घावरणेसु कोडिकोडीओ। उदही तीसमसाते तद्धं थीमणुयदुगसाए॥ ७०॥**

(चू०) 'विग्घावरणेसु कोडाकोडीओ उदही तीसमसाए'त्ति–पंचण्हं णाणावरणीयाणं, णवण्हं दंसणावरणीयाणं, पंचण्हं अंतराइआणं असातवेयणिज्जस्स उक्किस्सगो उ ठितिबन्धो तीसं सागरोवमकोडाकोडीओ, तिन्नि वास सहस्साणि अबाहा, अबाहूणिया कम्मट्ठिती कम्मणीसेगो। 'तद्धं थीमणुयदुगसाते'त्ति–इत्थिवेयमणुयगतिमणुयाणुपुव्विसायावेयणीयाणं अद्धं ति–पण्णरससागरोवमकोडाकोडीउ, पण्णरसवाससयाणि य अबाहा, अबाहूणिया कम्मट्ठिती कम्मणिसेगो॥७०॥

(मलय०)—'एमेव' त्ति। 'एमेव विसोहीओ'–त्ति–यथा संक्लेशस्थानान्यसंख्येयगुणतया प्रागुक्तानि एवमेव–असंख्येयगुणतयैवेत्यर्थः, विशोधयोऽपि विशोधिस्थानान्यपि वक्तव्यानि। यतो यान्येव संक्लिश्यमानस्य संक्लेशस्थानानि तान्येव विशुध्यमानस्य सतो विशुद्धिस्थानानि भवन्ति। एतच्च प्रागेव सप्रपञ्चं भावितम्, नेह भूयो भाव्यते, ततो विशोधिस्थानान्यपि संक्लेशस्थानवत् क्रमेण सर्वत्राप्यसंख्येयगुणानि वक्तव्यानि। साम्प्रतमुत्कृष्टेतरस्थितिप्रतिपादनार्थमाह–'विग्घ' त्ति अन्तरायं,'आवरणं'–ज्ञानावरणं दर्शनावरणं च।

तत्र पञ्चानामन्तरायप्रकृतीनां पञ्चानां ज्ञानावरणप्रकृतीनां नवानां च दर्शनावरणप्रकृतीनामसातवेदनीयस्य चोत्कृष्टा स्थितिस्त्रिंशत्सागरोपमाणां कोटीकोटयः। इह द्विधा स्थितिः-कर्मरूपतावस्थानलक्षणा,अनुभवयोग्या च। तत्र कर्मरूपतावस्थानलक्षणामेव स्थितिमधिकृत्य जघन्योत्कृष्टप्रमाणाभिधानमिदमवगन्तव्यम्। अनुभवप्रायोग्या पुनरबाधाकालहीना। येषां च कर्मणां यावत्यः सागरोपमकोटीकोटय-स्तेषां तावन्ति वर्षशतानि अबाधाकालः। तथाहि-मतिज्ञानावरणस्य त्रिंशत्सागरोपमकोटीकोटय उत्कृष्टा स्थितिरतस्तस्याबाधाकालोऽप्युत्कृष्टस्त्रिंशद्वर्षशतान्यवगन्तव्यः। यतस्तन्मतिज्ञानावरणमुत्कृष्टस्थितिकं बद्धं सत्त्रिंशद्वर्षशतानि यावन्न काञ्चिदपि स्वोदयतो जीवस्य बाधामुत्पादयति। अबाधाकालहीनश्च कर्मदलिकनिषेकः। एवं श्रुतज्ञानावरणादीनामप्युक्तप्रकृतीनामबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेको भावनीयः। तथा स्त्रीवेदे 'मनुष्यद्विके'-मनुष्यगतिमनुष्यानुपूर्वीरूपे सातवेदनीये च पूर्वोक्तस्य स्थितिप्रमाणस्यार्धमुत्कृष्टस्थितितया द्रष्टव्यम्, पञ्चदशसागरोपमकोटीकोटयः स्त्रीवेदादीनामुत्कृष्टा स्थितिरवगन्तव्येत्यर्थः। पञ्चदशवर्षशतान्यबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः ॥७०॥

(उ०)—यथा संक्लेशस्थानान्यसंख्येयगुणतया प्रागुक्तान्येवमेवानेन क्रमेणासंख्येयगुणतयैवेत्यर्थः विशोधयोऽपि-विशुद्धिस्थानान्यपि वक्तव्यानि। यान्येव हि संक्लिश्यमानस्य संक्लेशस्थानानि तान्येव विशुध्यमानस्य विशोधिस्थानानीति नेह भावनाविशेषः। अथोत्कृष्टेतरस्थितिप्रतिपादनार्थमाह—'विग्घे'त्यादि। विघ्नोऽन्तरायं, आवरणं-ज्ञानावरणं दर्शनावरणं च। तत्र पञ्चानामन्तरायप्रकृतीनां पञ्चानां ज्ञानावरणप्रकृतीनां नवानां दर्शनावरणप्रकृतीनामसातवेदनीयस्य चोत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यः। इह द्विधा स्थितिः-कर्मतयाऽवस्थानरूपा,अनुभवयोग्या च। तत्राद्यामधिकृत्य जघन्योत्कृष्टप्रमाणाभिधानमेतदवगन्तव्यम्। अनुभवयोग्या पुनर-

बाधाकालहीना। येषां कर्मणां यावत्यः सागरोपमकोटिकोट्यस्तेषां तावन्ति वर्षशतान्यबाधाकालः, तावन्तं हि कालं तानि कर्माणि स्वोदयतो जीवस्य बाधां नोत्पादयन्ति। तत्र मतिज्ञानावरणादीनां त्रिंशत्सागरोपमकोटाकोट्य उत्कृष्टा स्थितिरिति त्रिंशद्वर्षशतान्यबाधाकालः,अबाधाकालहीनश्च कर्मनिषेको भावनीयः। तथा स्त्रीवेदे मनुष्यगतिमनुष्यानुपूर्वीरूपे सातवेदनीये च पूर्वोक्तस्थितेरर्द्धमुत्कृष्टस्थितितया द्रष्टव्यम्। स्त्रीवेदादीनां पञ्चदशसागरोपमकोटाकोट्य उत्कृष्टा स्थितिरित्यर्थः। पञ्चदशवर्षशतान्यबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥ ७० ॥

**तिविहे मोहे सत्तरि चत्तालीसा य वीसई य कमा। दस पुरिसे हासरई देवदुगे खगइ चेट्ठाए॥७१॥**

(चू०)—मिच्छत्तस्स सोलसण्हं कसायाणं णपुंसगवेअअरतिसोगभयदुगुंछाणं पडिवाडीए सत्तरिचत्तालीसावीससागरोवमकोडाकोडीउ, सत्त-चत्तारि-वे-वाससहस्साणि अबाहाउ, अबाहूणिगा कम्मट्ठिती कम्मणिसेगो। 'दस पुरिसे हासरती देवदुगे खगति चेट्ठाए'त्ति-पुरिसवेदहासरतिदेवगतिदेवाणुपुव्वीपसत्थविहायगतीणं दससागरकोडाकोडीओ। दसवाससयाणि अबाहा। अबाहूणिगा कम्मट्ठिती कम्मणिसेगो॥७१॥

(मलय०)—'तिविहे' त्ति। त्रिविधे-त्रिप्रकारे 'मोहे' मोहनीये मिथ्यात्वलक्षणे दर्शनमोहनीये, षोडशकषायलक्षणे कषायमोहनीये, नपुंसकवेदारतिशोकभयजुगुप्सारूपे च नोकषायमोहनीये, यथासंख्यमुत्कृष्टा स्थितिः सागरोपमकोटीकोट्यः सप्ततिः चत्वारिंशत् विंशतिश्च। यथासंख्यमेव च सप्त चत्वारि द्वे च वर्षसहस्रे अबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः। इह पुरुषवेदहास्यरतीनां विशेषतो वक्ष्यमाणत्वात् स्त्रीवेदस्य चोक्तत्वान्नोकषायमोहनीयग्रहणेन नपुंसकवेदारतिशोकभयजुगुप्सानामेव ग्रहणमवगन्तव्यम्। 'दस

पुरिसे'त्यादि । पुरुषे-पुरुषवेदे हास्ये रतौ 'देवद्विके'-देवगतिदेवानुपूर्वीरूपे 'खगतौ चेष्टायां'-प्रशस्तविहायोगतौ दशसागरोपमकोटीकोट्य उत्कृष्टा स्थितिः । दशवर्षशतानि चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥ ७१ ॥

(उ०)—त्रिप्रकारे मोहे-मोहनीये मिथ्यात्वलक्षणे दर्शनमोहनीये, षोडशकषायलक्षणे कषायमोहनीये, नपुंसकवेदारतिशोकभयजुगुप्सारूपे च नोकषायमोहनीये, यथासंख्यमुत्कृष्टा स्थितिः सागरोपमकोटीकोटयः सप्ततिश्चत्वारिंशद्विंशतिश्च, यथासंख्यमेव च सप्त चत्वारि द्वे च वर्षसहस्रे अबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः । इह नोकषायशब्देन प्रतिनियतप्रकृतीनां ग्रहणमितरासामुक्तवक्ष्यमाणत्वेन सामान्यशब्दस्य विशेषपरत्वादित्यवसेयम् । पुरुषे पुरुषवेदे हास्ये रतौ देवद्विके-देवगतिदेवानुपूर्वीरूपे-खगइत्तिलुप्तविभक्तिको निर्देशः, चकारः समुच्चयार्थः, तत इष्टायां-प्रशस्तायां खगतौ विहायोगतावित्यर्थः, दशसागरोपमकोटीकोटय उत्कृष्टा स्थितिः, दशवर्षशतानि चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥७१॥

**थिरसुभपंचगउच्चे चेवं संठाणसंघयणमूले । तब्बीतियाइ बिवुड्ढि अट्ठारससुहुमविगलतिगे ॥ ७२ ॥**

(चू०)—'थिरसुभपंचगउच्चे चेवं संठाणसंघयणमूले'त्ति । थिरसुभपंचग'त्ति-सुभसुभगसुस्सरआदेज्जजसकित्ती उच्चागोय वज्जरिसभसमचउरंसस्स य सव्वेसिं दस सागरोवमकोडाकोडी 'तब्बीतियाति बिवुड्ढि'त्ति-संठाणसंघयणाणं बितियाणं बार सागरो०, तेसिं चेव ततियाणं चोद्दस सागरो०, तेसिं चेव चउत्थाणं सोलस सागरोवमकोडाकोडीओ, 'अट्ठारस सुहुमविगलतिगे'त्ति-तेसिं चेव पंचमाणं, सुहुमअपज्जत्तगसाहारणबेइंदियतेइंदियचउरिंदियजाइणामाणं, अट्ठारससागरोवमकोडाकोडीतो । अट्ठारसवाससयाणि अबाहा, अबाहूणिया कम्मट्ठिती

कम्मणिसेगो ॥७२॥

(मलय०)—'थिर' त्ति–स्थिरे, 'शुभपञ्चके'–शुभसुभगसुस्वरादेययशःकीर्तिरूपे, उच्चैर्गोत्रे च–तथा 'संठाणसंघयणमूले'त्ति–मूले–प्रथमे संस्थाने समचतुरस्रलक्षणे, प्रथमे च संहनने वज्रर्षभनाराचसंज्ञे, एवं–पूर्वोक्तप्रकारेणोत्कृष्टा स्थितिरवगन्तव्या, दश सागरोपमकोटीकोटय उत्कृष्टा स्थितिरवगन्तव्येत्यर्थः । दश वर्षशतानि चाबाधा । अबाधाकालहीनश्च कर्मदलिकनिषेकः । 'तव्वीइयाइ विवुड्ढी'–तेषां संस्थानानां संहननानां च मध्ये 'द्वितीयादिषु'–द्वितीयतृतीयादिषु संस्थानेषु संहननेषु च द्विवृद्धिः द्विकवृद्धिः क्रमेणावसेया । तद्यथा–द्वितीययोः संस्थानसंहननयोर्द्वादश सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, द्वादशवर्षशतानि चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः । तृतीययोः संस्थानसंहननयोश्चतुर्दश सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, चतुर्दशवर्षशतानि चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः । चतुर्थयोः संस्थानसंहननयोः षोडश सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, षोडश वर्षशतान्यबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः । पञ्चमयोः संस्थानसंहननयोरष्टादश सागरोपमकोटीकोटय उत्कृष्टा स्थितिः, अष्टादश वर्षशतानि चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः । षष्ठयोः संस्थानसंहननयोर्विंशतिसागरोपमकोटीकोटय उत्कृष्टा स्थितिः, द्वे वर्षसहस्रे अबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः । 'अट्ठारस सुहुमविगलतिगे' सूक्ष्मत्रिके–सूक्ष्मापर्याप्तसाधारणरूपे, विकलत्रिके–द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिलक्षणे, अष्टादशसागरोपमकोटीकोटय उत्कृष्टा स्थितिः, अष्टादश वर्षशतान्यबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥७२॥

(उ०)—स्थिरे, तथा शुभपञ्चके–शुभशुभगसुस्वरादेययशःकीर्त्तिरूपे, उच्चैर्गोत्रे च, तथा संस्थानसंहननमूले प्रथमे संस्थाने प्रथमे च

संहनन इत्यर्थः, एवं पूर्वोक्तरीत्या दश सागरोपमकोटाकोटच उत्कृष्टा स्थितिरवगन्तव्येत्यर्थः, दश वर्षशतानि चाबाधा, अबाधाहीनश्च कर्मदलिकनिषेकः । तेषां संस्थानानां संहननानां च मध्ये द्वितीयादिषु द्विवृद्धिः । तथाहि–द्वितीययोः संस्थानसंहननयोर्द्वादशसागरोपमकोटीकोटच उत्कृष्टा स्थितिः, द्वादश वर्षशतान्यबाधाकालोऽबाधाहीनश्च कर्मदलिकनिषेकः । तृतीययोः संस्थानसंहननयोश्चतुर्दश सागरोपमकोटाकोटच उत्कृष्टा स्थितिः, चतुर्दश वर्षशतान्यबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः । चतुर्थयोः संस्थानसंहननयोः षोडश सागरोपमकोटीकोटच उत्कृष्टा स्थितिः, षोडश वर्षशतान्यबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः । पञ्चमयोः संस्थानसंहननयोरष्टादश सागरोपमकोटीकोटच उत्कृष्टा स्थितिः, अष्टादश वर्षशतानि चाबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः । षष्ठयोः संस्थानसंहननयोर्विंशतिः सागरोपमकोटीकोटच उत्कृष्टा स्थितिः, द्वे वर्षसहस्रे अबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः । 'अट्ठारस' त्ति–सूक्ष्मत्रिके–सूक्ष्मापर्याप्तसाधारणरूपे विकलत्रिके–द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिलक्षणेऽष्टादशसागरोपमकोटीकोटच उत्कृष्टा स्थितिः, अष्टादश वर्षशतान्यबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः ॥७२॥

**तित्थगराहारदुगे अंतो वीसं सनिच्चनामाणं । तेत्तीसुदही सुरनारयाउ सेसाउ पल्लतिगं ॥ ७३ ॥**

(चू०)—'तित्थगराहारदुगे अंतो'त्ति–तित्थगरआहारसरीरअंगोवंगाणं अंतोकोडाकोडी, अंतोमुहुत्तं अबाहा, अबाहूणिगा कम्मट्ठिती कम्मणिसेगो । 'वीसं सणिच्चनामाणं'ति भणितसेसाणं णिरयगतितिरियगतिएगंदियजाइपंचिंदियजाइउरालियवेउव्वियतेयकम्मतिगसरीरहुंडसंठाणउरालियवेउव्वियअंगोवंग[ असंपत्ति ]सेवट्ठसंघयणवण्णगंधरसफासाणिरयगतितिरियगतिपातोग्गाणुपुव्वीअगुरुलहुउवघाय( पराघाय )उस्सासआयवउज्जोव-

अपसत्थविहायगतितसथावरबादरपज्जत्तगपत्तेयअथिरअसुभदूभगदूसरअणादेज्जाजसकित्तिणिम्मेण एयासिं णामपगतीणं णीयागोयस्स उक्कस्सगो ठितिबन्धो वीसं सागरोपमकोडाकोडीओ, वेवाससहस्साणि अबाहा, अबाहूणिया कम्मट्ठिती कम्मणिसेगो। 'तेत्तीसुदही सुरणारगायु'त्ति–देवनिरयाउगाणं उक्कस्सगा ठिती तेत्तीसं सागरोवमाणि, पुव्वकोडितिभागो अबाहा अबाहाए विणा कम्मट्ठिती कम्मणिसेगो। 'सेसाउ पल्लतिगं'ति–मणुयतिरियाउगाणं उक्कस्स ठिती तिण्णि पलिओवमाणि पुव्वकोडीतिभागो अबाहा ॥७२॥

(मलय०)—'तित्थगर' त्ति–तिर्थकरे, 'आहारकद्विके'–आहारकशरीराहारकाङ्गोपाङ्गरूपे अन्तःकोटीकोटी उत्कृष्टा स्थितिः, अन्तर्मुहूर्तमबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः। 'वीसा सनिचनामाणं' शेषाणां नामप्रकृतीनां–नरकगतिनरकानुपूर्वीतिर्यग्द्विकैकेन्द्रियजातिपञ्चेन्द्रियजातितैजसकार्मणौदारिकवैक्रियशरीरौदारिकाङ्गोपाङ्गवैक्रियाङ्गोपाङ्गवर्णगन्धरसस्पर्शागुरुलघूपघातपराघातोच्छ्वासातपोद्योताप्रशस्तविहायोगतित्रसस्थावरबादरपर्याप्तप्रत्येकास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनिर्माणलक्षणानां नीचैर्गोत्रस्य च विंशतिः सागरोपमकोटीकोटय उत्कृष्टा स्थितिः, विंशतिर्वर्षशतानि चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः। 'तेत्तीसुदही सुरनारयाउ'–सुरायुषो नारकायुषश्चोत्कृष्टा स्थितिस्त्रयस्त्रिंशदुदधयः–सागरोपमाणि पूर्वकोटीत्रिभागाभ्यधिकानीति शेषः, पूर्वकोटीत्रिभागश्चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः। 'सेसाउ पल्लतिगं'–शेषायुषोर्मनुष्यतिर्यगायुषोः पल्यत्रिकं–त्रीणि पल्योपमानि पूर्वकोटीत्रिभागाभ्यधिकानीति शेषः, पूर्वकोटीत्रिभागश्चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः। एतच्च पूर्वकोटयायुषश्चतुर्गतिगमनयोग्यान् उत्कृष्टस्थितिबन्धकान् तिर्यग्मनुष्यान् प्रति द्रष्टव्यम्, तानेवाश्रित्य यथोक्तरूपाया उत्कृष्टस्थितेः पूर्वकोटि-

त्रिभागरूपायाश्चाबाधायाः प्राप्यमाणत्वात् ॥ ७३ ॥

(उ०)—तीर्थकरे आहारकद्विके चाहारकशरीराहारकाङ्गोपाङ्गरूपे, 'अंतो' त्ति–अन्तःकोटाकोट्युत्कृष्टा स्थितिः, अन्तर्मुहूर्त्तमबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः। 'सनिच्चणामाणं' ति–नीचैर्गोत्रसहितानां शेषनामप्रकृतीनां–नरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्व्येकेन्द्रियजातिपञ्चेन्द्रियजातितैजसकार्मणौदारिकवैक्रियशरीरौदारिकाङ्गोपाङ्गवैक्रियाङ्गोपाङ्गवर्णगन्धरसस्पर्शागुरुलघूपघातपराघातोच्छ्वासातपोद्योताप्रशस्तविहायोगतित्रसस्थावरबादरपर्याप्तप्रत्येकास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तिनिर्माणलक्षणानां(३६) विंशतिः सागरोपमकोटाकोट्य उत्कृष्टा स्थितिः, विंशतिर्वर्षशतानि चाबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः। अत्र चौदारिकादीनां ये बन्धनसङ्घातास्तेषामपि स्थितिः स्वशरीरतुल्यैवेति दृश्यम्। तथा चोक्तं–"स्थित्युदयबन्धकालाः सङ्घातबन्धनानां स्वशरीरतुल्या ज्ञेयाः" इति। सुरनारकायुषोरुत्कृष्टा स्थितिस्त्रयस्त्रिंशदुदधयः सागरोपमाणि पूर्वकोटित्रिभागाधिकानि इति शेषः। पूर्वकोटित्रिभागश्चाबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः। शेषायुषोर्मनुष्यतिर्यगायुषोः पल्यत्रिकं–पल्योपमत्रयं पूर्वकोटीत्रिभागाधिकमिति शेषः। एतच्च पूर्वकोट्यायुषश्चतुर्गतिगमनयोग्यानुत्कृष्टस्थितिबन्धकांस्तिर्यङ्मनुष्यान् प्रति द्रष्टव्यं, तानेवाश्रित्य यथोक्तोत्कृष्टस्थित्यबाधयोः प्राप्तेः ॥७३॥

**आउचउक्कुक्कोसो पल्लासंखेज्जभागममणेसुं। सेसाण पुव्वकोडी साउतिभागो अबाहा सिं ॥ ७४ ॥**

(चू०)—चउण्हं आउगाणं उक्कोसा ठिती असण्णीपंचिंदियस्स पलिओवमस्स असंखेज्जतिभागो पुव्वकोडीतिभागो अबाहा। 'सेसाणपुव्वकोडी साउतिभागो अबाहासिं'ति–सेसाणं एगिंदिय जाव चउरिंदियाणं

पज्जत्तापज्जत्तगाणं संणियपंचिंदियअसण्णियपंचिंदियाण य अप्पज्जत्तगाणं उक्कस्सगो ठितिबंधो पुव्वकोडी। अप्पप्पणो आउगस्स तिभागो अबाहा, अबाहाए विणा कम्मट्ठिती कम्मणिसेगो ॥ ७४ ॥

(मलय०)–साम्प्रतमसंज्ञिपञ्चेन्द्रियादीन् बन्धकानाश्रित्यायुषामुत्कृष्टां स्थितिं प्रतिपादयन्नाह—'आउ' त्ति। 'अमनस्केषु'–असंज्ञिपञ्चेन्द्रियेषु पर्याप्तेषु आयुरुत्कृष्टस्थितिबन्धकेषु चतुर्णामप्यायुषां परभवसंबन्धिनामुत्कृष्टा स्थितिः पल्योपमासंख्येयभागमात्रा पूर्वकोटित्रिभागाभ्यधिकेति शेषः। पूर्वकोटित्रिभागश्चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः। शेषाणां चैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां पर्याप्तापर्याप्तानामसंज्ञिपञ्चेन्द्रियसंज्ञिपञ्चन्द्रियाणां चापर्याप्तानामायुरुत्कृष्टस्थितिबन्धकानां–परभवायुष उत्कृष्टस्थितिबन्धः पूर्वकोटीस्वस्वभवत्रिभागाभ्यधिको वेदितव्यः। 'सिं'ति–एषां स्वस्वभवत्रिभागोऽबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः॥

(उ०)–अथासंज्ञिपञ्चेन्द्रियादीन् बन्धकानाश्रित्यायुषामुत्कृष्टां स्थितिमाह—अमनस्केषु–असंज्ञिपञ्चेन्द्रियेषु पर्याप्तेष्वायुरुत्कृष्टस्थितिबन्धकेषु चतुर्णामप्यायुषां परभवसम्बन्धिनामुत्कृष्टा स्थितिः पल्योपमासंख्येयभागमात्रा पूर्वकोटित्रिभागाधिकेति शेषः। पूर्वकोटित्रिभागश्चाबाधाऽबाधाहीनः कर्मदलिकनिषेकः। शेषाणां चैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां पर्याप्तापर्याप्तानामसंज्ञिपञ्चेन्द्रियसंज्ञिपञ्चेन्द्रियाणां चापर्याप्तानामुत्कृष्टायुःस्थितिबन्धकानां परभवायुष उत्कृष्टस्थितिः पूर्वकोटी स्वस्वभवत्रिभागाभ्यधिका वेदितव्या, एषामुत्कृष्टतोऽपि पूर्वकोटयायुष्केष्वेव नरतिर्यक्षु समुत्पत्तेः। 'सिं' ति–एषां स्वायुस्त्रिभागः–स्वस्वभवत्रिभागोऽबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः॥ ७४ ॥

इयाणिं आउगवज्जाणं सव्वकम्माणं अबाहापरिमाणं भण्णइ—

**वाससहस्समबाहा कोडाकोडिदसगस्स सेसाणं । अणुवाओ अणुवट्टणगाउसु छम्मासिगुक्कोसो ॥ ७५ ॥**

(चू०)—दसण्हसागरोवमकोडाकोडीण वाससहस्सं अबाहा भवति। 'सेसाणं अणुवाओ'त्ति। सेसाणं—बारसचउदससोलसट्ठारसवीसतीसचत्तालीससत्तिरि एयासिं सागरोवमकोडाकोडीणं 'अणुवाउ'त्ति—तेरासियं कायव्वं। 'अणवट्टणगाउसु छम्मासिगुक्कोसो' त्ति—देवनेरइयअसंखेज्जवासाउ य तिरियमणुयाणं आउगस्स अबाहा छम्मासा उक्कोसा भवति। एवं उक्कोसगो अद्धाच्छेदो भणिओ ॥ ७५ ॥

(मलय०)—इदानीमायुर्वर्जानां सर्वकर्मणामबाधाकालपरिमाणप्रतिपादनार्थमाह—'वास'त्ति—कोटीकोटीदशकस्य—दशानां सागरोपमकोटीकोटीनां वर्षसहस्रं—दशवर्षशतानि अबाधा भवति। शेषाणां—द्वादशचतुर्दशपञ्चदशषोडशाष्टादशविंशतित्रिंशच्चत्वारिंशत्सप्ततीनां 'अनुपातो'—अनुसारः कर्त्तव्यः, त्रैराशिकमनुसर्तव्यमित्यर्थः। तथाहि—यदा दशानां सागरोपमकोटीकोटीनां वर्षसहस्रमबाधा प्राप्यते तदा द्वादशानां सागरोपमकोटीकोटीनां वर्षसहस्रं शतद्वयं चाबाधा भवति, चतुर्दशानां वर्षसहस्रं शतचतुष्टयं च। एवं सर्वत्राप्यनुसर्तव्यम्। 'अणुवट्टणगाउसु छम्मासिगुक्कोसो'—अनपवर्तनीयायुष्केषु देवनारकासंख्येयवर्षायुष्कतिर्यङ्मनुष्येषु परभवायुष्कोत्कृष्टस्थितिबन्धकेषु परभवायुष उत्कृष्टाऽबाधा 'षाण्मासिकी'—षण्मासप्रमाणा द्रष्टव्या, षण्मासावशेषे एव तेषां परभवायुर्बन्धकत्वात्। केचित्पुनर्युगधर्मिणां पल्योपमासंख्येयभागप्रमाणामबाधामिच्छन्ति। तदुक्तं—"पलियासंखिज्जंसं जुगधम्मोणं वयंतण्णे"। इति ॥ ७५ ॥

(उ०)—सम्प्रत्यायुर्वर्जसर्वकर्मणामबाधामुत्कृष्टां प्रतिपादयन्नाह—कोटाकोटीदशकस्य—दशसागरोपमकोटाकोटीमात्रायाः स्थितेर्वर्ष-

सहस्रमबाधा। शेषाणां—द्वादशचतुर्दशपञ्चदशषोडशाष्टादशविंशतित्रिंशच्चत्वारिंशत्सप्ततीनामनुपातः—अनुसारो विधेयः। यदा दशानां सागरोपमकोटीकोटीनां वर्षसहस्रमबाधा तदा द्वादशानां वर्षसहस्रं शतद्वयं चाबाधा, चतुर्दशानां वर्षसहस्रं शतचतुष्टयं चेत्येवं सर्वत्र त्रैराशिकमनुसर्त्तव्यमित्यर्थः। आयुराश्रित्याह—'अणुवट्टणगाउसु छम्मासिगुक्कोसो'—अनपवर्त्तनीयायुष्केषु देवनारकासंख्येयवर्षायुष्कतिर्यङ्मनुष्येषु परभवायुरुत्कृष्टस्थितिबन्धकेषु परभवायुष उत्कृष्टाऽबाधा षाण्मासिकी, षण्मासावशेष एवायुषि तेषां परभवायुर्बन्धकत्वात्। केचित्तु युगलधर्मिणां पल्योपमासंख्येयभागप्रमाणामबाधामिच्छन्ति। तदाहुश्चन्द्रर्षिपूज्याः—"पलियासंखिज्जंसं जुगधम्मीणं वयंतण्णे" शेषेषु तु स्वायुस्त्रिभागरूपाऽबाधोक्तैव, सापि न नियतैवावतिष्ठते, स्वायुस्त्रिभाग इव स्वायुस्त्रिभागत्रिभागे स्वायुस्त्रिभागत्रिभागत्रिभागेऽपि च परभवायुर्बन्धाभ्युपगमात् स्वायुर्नवभागसप्तविंशतिभागरूपाया अप्यबाधायाः संभवादिति सम्प्रदायः ॥७५॥

इयाणिं जहण्णओ ठितिबन्धो तं जहा—

**भिन्नमुहुत्तं आवरणविग्घदंसणचउक्कलोभंते। बारस सायमुहुत्ता अट्ठ य जसकित्तिउच्चेसु ॥ ७६ ॥**

(चू०)—'भिन्नमुहुत्तं'ति—ऊणं मुहुत्तं पंचण्हं णाणावरणीयाणं चउण्हं दंसणावरणीयाणं पंचण्हं अंतराइयाणं लोभसंजलणाए य एयासिं पण्णरसण्हं पगतीणं जहण्णओ ट्ठितिबन्धो, अंतोमुहुत्तं अबाहा, अबाहूणिया कम्मट्ठिती कम्मणिसेगो। 'बारससायमुहुत्तं'ति—सातावेयणिज्जस्स जहण्णओ ठितिबन्धो बारसमुहुत्ता, अन्तोमुहुत्तं अबाहा। 'अट्ठ य जसकित्तिउच्चेसु'त्ति—जसकित्तिउच्चागोत्ताणं जहण्णतो ठितिबंधो अट्ठमुहुत्ता, अंतोमुहुत्तमबाहा ॥७६॥

(मलय०)—तदेवमुक्तोत्कृष्टा स्थितिः, सम्प्रति जघन्यामभिधातुकाम आह—'भिन्न'त्ति। पञ्चानां ज्ञानावरणीयानां पञ्चानामन्तरा-

याणां चतुर्णां दर्शनावरणानां चक्षुरचक्षुरवधिकेवलदर्शनावरणरूपाणां सर्वान्तिमस्य च लोभस्य संज्वलनसंज्ञस्य भिन्नमुहूर्तम्—अन्तर्मुहूर्तमबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः । सातवेदनीयस्य जघन्या स्थितिर्द्वादश मुहूर्ताः, अन्तर्मुहूर्तं चाबाधाकालः, अबाधाकालहीनश्च कर्मदलिकनिषेकः । इह काषायिक्या एव स्थितेर्जघन्यत्वप्रतिपादनमभिप्रेतम्, अतो द्वादश मुहूर्ता इत्युक्तम्, अन्यथा सातवेदनीयस्य जघन्या स्थितिः समयद्वयमात्रापि सयोगिकेवल्यादौ प्राप्यते । तथा यशःकीर्त्युच्चैर्गोत्रयोरष्टौ मुहूर्ता जघन्या स्थितिः, अन्तर्मुहूर्तमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः ॥ ७६ ॥

(उ०)—तदेवमुक्तोत्कृष्टा स्थितिः,अथ जघन्यामभिधित्सुराह—आवरणानि—पञ्च ज्ञानावरणानि, विघ्नाः—पञ्चान्तरायप्रकृतयः, दर्शनचतुष्कं—चक्षुरचक्षुरवधिकेवलदर्शनावरणरूपं दर्शनावरणचतुष्टयं, लोभान्तो—विशेषणव्यत्ययादन्तलोभः संज्वलनलोभ इति यावत्, ततः समाहारद्वन्द्वादेकवचनम् । एतेषु भिन्नमुहूर्त्तम्—अन्तर्मुहूर्त्त जघन्या स्थितिः, अन्तर्मुहूर्त्तमबाधाकालोऽबाधाहीनश्च कर्मदलिकनिषेकः । 'साय त्ति'—सातवेदनीयस्य जघन्या स्थितिर्द्वादश मुहूर्त्ताः, अन्तर्मुहूर्तं चाबाधाकालोऽबाधाकालहीनश्च कर्मदलिकनिषेकः । इदं च काषायिक्या एव स्थितेर्जघन्यायाः परिमाणमभिहितम्, अन्यथा सातवेदनीयस्य जघन्या स्थितिः समयद्वयमात्रापि सयोगिकेवल्यादौ प्राप्यत इत्यवधेयम् । तथा यशःकीर्त्युच्चैर्गोत्रयोरष्टौ मुहूर्त्ता जघन्या स्थितिः, अन्तर्मुहूर्त्तमबाधाऽबाधाहीनश्च कर्मदलिकनिषेकः ॥७६॥

**दो मासा अद्धद्धं संजलणे पुरिस अट्ठ वासाणि । भिन्नमुहुत्तमबाहा सव्वासिं सव्वहिं हस्से ॥ ७७ ॥**

(चू०)—'दो मासा अद्धद्धं संजलणासु'त्ति । कोहसंजलणाए दो मासा, माणसंजलणाए मासो, मायासंजलणाए ठितिबंधो अद्धमासो, सव्वेसिं अबाहा अन्तोमुहुत्तो । 'पुरिसट्ठवासाणि'त्ति—पुरिसवेदस्स जहण्णओ ठिति-

बंधो अट्ठवरिसाणि, अन्तोमुहुत्तं अबाहा। 'भिण्णमुहुत्तमबाहा सव्वासिं'ति–जाओ भणियाओ पगतीतो तासिं सव्वासिं अबाहा अन्तोमुहुत्तो। 'सव्वहिं ह्रस्से'त्ति–सव्वकम्मेसु वि जहण्णगा अबाहा अन्तोमुहुत्तं ॥७७॥

(मलय०)—'दो मास'त्ति। संज्वलनानां द्वौ मासौ अर्धार्धं च जघन्या स्थितिः। एतदुक्तं भवति–संज्वलनक्रोधस्य द्वौ मासौ जघन्या स्थितिः, संज्वलनमानस्य मासः, संज्वलनमायाया अर्धमासः। तथा पुरुषे–पुरुषवेदस्याष्टौ वर्षाणि जघन्या स्थितिः। सर्वत्राप्यन्तर्मुहूर्तमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। अबाधाकालप्रमाणप्रतिपादनार्थमाह–'भिन्ने'इत्यादि–सर्वासामपि प्रकृतीनामुक्तानां वक्ष्यमाणानां च सर्वस्मिन्नपि 'ह्रस्वे'–जघन्ये स्थितिबन्धे भिन्नमुहूर्तमबाधा द्रष्टव्या। तथैव च प्राक् प्रतिपादिता वक्ष्यते चेति॥

(उ०)—संज्वलनानां द्वौ मासावर्द्धार्द्धं च जघन्या स्थितिः। इदमुक्तं भवति—संज्वलनक्रोधस्य द्वौ मासौ जघन्या स्थितिः, संज्वलनमानस्य मासः, संज्वलनमायायाश्चार्द्धमासः। तथा पुरुषे पुरुषवेदस्याष्टौ वर्षाणि जघन्या स्थितिः। सर्वत्राप्यन्तर्मुहूर्त्तमबाधाऽबाधाकालहीनश्च कर्मदलिकनिषेकः। जघन्याबाधाकालपरिमाणं सूत्रतः प्रतिपादयन्नाह–'भिन्नमुहुत्तं' ति। सर्वासामपि प्रकृतीनामुक्तानां वक्ष्यमाणानां च सर्वस्मिन्नपि ह्रस्वे–जघन्ये स्थितिबन्धे भिन्नमुहूर्त्तमबाधा द्रष्टव्या, तथैव च प्राक् प्रतिपादिता, वक्ष्यते च ॥७७॥

**खुड्डागभवो आउसु उववायाउसु समा दस सहस्सा। उक्कोसा संखेज्जगुणहीणमाहारतित्थयरे ॥७८॥**

(चू०)—'खुड्डागभवो आउसु'त्ति। मणुयतिरियाउगाणं जहण्णगो ठितिबंधो खुड्डागं भवग्गहणं, अबाहा अन्तोमुहुत्तं।'उववायाउसु समा दससहस्स'त्ति।'उववाताउसु'त्ति–देवणेरइयाणं आउगस्स जहण्णओ ठितिबंधो दस वाससहस्साणि, अन्तोमुहुत्तं अबाहा। 'उक्कस्सगा संखेज्जगुणहीणमाहारतित्थगरे'त्ति–आहारगतित्थग-

रनामाणं उक्कस्सगो ठितिबंधो अन्तोकोडाकोडी भणिओ। ततो उक्कस्सओ ठितिबंधाओ जहण्णओ ठितिबंधो संखेज्जगुणहीणो आहारगतित्थगरणामाणं, सो वि जहण्णओ अन्तोकोडाकोडी चेव ॥ ७८ ॥

(मलय०)–सम्प्रत्यायुषो जघन्यस्थितिप्रतिपादनार्थमाह—'खुड्डागभवो'त्ति। तिर्यगायुषो मनुष्यायुषश्च जघन्या स्थितिः क्षुल्लकभवः। तस्य किं मानम्? इति चेद्, उच्यते–आवलिकानां द्वे शते षट्पञ्चाशदधिके। अपि चैकस्मिन्मुहूर्ते घटिकाद्वयप्रमाणे सप्तत्रिंशच्छतानि त्रिसप्तत्यधिकानि प्राणापानानां हृष्टानवकल्पजन्तुसत्कानां भवन्ति। एकस्मिंश्च प्राणापाने साधिकाः सप्तदश क्षुल्लकभवाः। सकले च मुहूर्ते पञ्चषष्टि सहस्राणि पञ्च शतानि षट्त्रिंशदधिकानि क्षुल्लकभवानां भवन्ति। अत्रापि 'सव्वहिं हस्से' इतिवचनादन्तर्मुहूर्तमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। तथा उपपातायुषो देवानां नारकाणां चायुषो जघन्या स्थितिर्दशवर्षसहस्राणि, अन्तर्मुहूर्तमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। अधुना तीर्थकराहारकयोर्जघन्यां स्थितिमभिधातुकाम आह–'उक्कोसे'त्यादि। आहारकशरीराहारकाङ्गोपाङ्गतीर्थकरनाम्नां योत्कृष्टा स्थितिः प्रागुक्ताऽन्तःसागरोपमकोटीकोटीप्रमाणा, सा संख्येयगुणहीना जघन्या स्थितिर्भवति, साऽपि चान्तःसागरोपमकोटीकोटीप्रमाणैव। ननु तीर्थकरनामकर्म तीर्थकरभवादर्वाक् तृतीये भवे बध्यते। तदुक्तं—[1]"वज्झइ त तु भयवओ तइयभवोसक्कइत्ताणं", तत्कथं जघन्यतोऽप्यन्तःसागरोपमकोटीकोटीप्रमाणा तस्य स्थितिरुपपद्यते? तदयुक्तं, अभिप्रायापरिज्ञानात्। 'वज्झइ तं तु' इत्यादिकं निकाचनापेक्षयोक्तम्, इतरथा तु तृतीयभवादर्वाक्तरामपि बध्यते। उक्तं च विशेषणवत्यां–"कोडाकोडीअयरोवमाण तित्थयरनामकम्मठिई। वज्झइ य तं अणंतरभवम्मि तइयम्मि निद्दिट्ठं ॥७८॥" ततः कथमेतत्पर-

१ आवश्यकनिर्युक्ति गा० २१०

स्तरं युज्यते ? अत्रोत्तरं-"जं वज्झइत्ति भणियं तत्थ निकाइज्जइ त्ति नियमोऽयं । तदवंझफलं नियमा भयणा अनिकाइयावत्थे ॥८०॥" आह-यदि तीर्थंकरनाम्नो जघन्यापि स्थितिरन्तःसागरोपमकोटीकोटीप्रमाणा तर्हि तावत्याः स्थितेस्तिर्यग्भवभ्रमणमन्तरेण पूरयितुमशक्यत्वात् तिर्यग्गतावपि तीर्थंकरनामसत्कर्मा जन्तुः कियन्तं कालं यावद्भवेत्, तथा च सत्यागमविरोधः, आगमे हि तिर्यग्गतौ तीर्थंकरनामसत्कर्मा सन् प्रतिषिध्यते । नैष दोषः, निकाचितस्यैव तीर्थंकरनामकर्मणस्तिर्यग्गतौ सतः प्रतिषेधात् । उक्तं च-"जमिह निकाइयतित्थं तिरियभवे तं निसेहियं संतं । इयरम्मि नत्थि दोसो उव्वट्टणवट्टणासज्झे" ॥ अस्या अक्षरगमनिका-इहास्मिन् प्रवचने यत्तीर्थंकरनामकर्म निकाचितमवश्यवेद्यतया स्थापितं तदेव स्वरूपेण सद्विद्यमानं तिर्यग्गतौ निषिद्धं, इतरस्मिन् पुनरनिकाचिते उद्वर्तनापवर्तनासाध्ये तिर्यग्भवे विद्यमानेऽपि न कश्चिद्दोष इति । अत्रापि चान्तर्मुहूर्तमबाधा, ततः परं दलिकरचनायाः संभवादवश्यं प्रदेशोदय भवः ॥ ७८ ॥

(३०)—सम्प्रत्यायुषो जघन्यस्थितिप्रतिपादनार्थमाह-तिर्यगायुषो मनुष्यायुषश्च जघन्यस्थितिः क्षुल्लकभवः । तस्य किं मानम् ? इति चेद्, उच्यते-आवलिकानां द्वे शते षट्पञ्चाशदधिके । तथैकस्मिन्मुहूर्त्ते घटिकाद्वयप्रमाणे सप्तत्रिंशच्छतानि त्रिसप्तत्यधिकानि प्राणापानानां भवन्ति । क्षुल्लकभवग्रहणानि च पञ्चषष्टिसहस्राणि पञ्चशतानि षट्त्रिंशदधिकानि । ततः पञ्चषष्टिसहस्रपञ्चशतषट्त्रिंशल्लक्षणस्य मुहूर्त्तगतक्षुल्लकभवग्रहणराशेर्भाज्यस्य मुहूर्त्तगतप्राणापानराशिना त्रिसप्तत्यधिकसप्तत्रिंशच्छतप्रमाणेन भागे हृते सति यल्लभ्यते तदेकत्र प्राणापाने क्षुल्लकभवग्रहणप्रमाणं भवति । ते च सप्तदश भवाः । तथा यैर्भागहारांकमानैरंशैः क्षुल्लकभवः संपद्यते ते एकत्र प्राणापानेऽष्टादशस्यापि पञ्चनवत्यधिकत्रयोदशशतप्रमाणा अंशा आयान्ति, अष्टसप्तत्यधिकत्रयोविंशतिशतानि चांशानां न पूर्यन्ते, तदेवं सम-

धिकाः सप्तदश क्षुल्लकभवा एकत्र प्राणापाने भवन्तीति प्रसिद्धम् । एतच्च क्षुल्लकभवग्रहणं सर्वेषामप्यौदारिकशरीरिणां भवतीति भगवत्यामपि सिद्धम् । यत्पुनरावश्यकटीकायां क्षुल्लकभवग्रहणं वनस्पतिष्वेव प्राप्यत इत्युक्तं तन्मतान्तरमिति बहुश्रुताः संगिरन्ते । अत्रापि 'सव्वहिं हस्से' इतिवचनादन्तर्मुहूर्त्तमबाधाऽबाधाकालहीनश्च कर्मदलिकनिषेकः । तथोपपातायुषां देवानां नारकाणां चायुषो जघन्या स्थितिर्दशवर्षसहस्राणि, अन्तर्मुहूर्त्तमबाधाऽबाधाकालहीनश्च कर्मदलिकनिषेकः । तीर्थकराहारकयोर्जघन्यां स्थितिमाह–'उक्कोस' त्ति । आहारकशरीराहारकाङ्गोपाङ्गतीर्थकरनाम्नां योत्कृष्टा स्थितिरन्तःसागरोपमकोटाकोटीप्रमाणा प्रागुक्ता सा संख्येयगुणहीना जघन्या स्थितिर्भवति । साऽपि चान्तःसागरोपमकोटाकोटिप्रमाणैव । ननु तीर्थकरनाम तीर्थकरभवादर्वाक् तृतीयभवे बध्यते, तदुक्तं–"वज्झइ तं तु भगवओ तइयभवोसक्कइत्ताणं" तत्कथं जघन्यतोऽपि अन्तःसागरोपमकोटाकोटीप्रमाणा तस्य स्थितिरुपपद्यते ? मैवं, 'बज्झइ तं तु' इत्यादेर्निकाचनापेक्षयैवोक्तत्वात् । तथा चास्यामेवाशङ्कायां विशेषणवत्यां पूज्यैः समाहितम्—"जं वज्झइ त्ति भणियं तत्थ णिकाइज्ज त्ति णियमोऽयं । तदवंझफलं णियमा भयणा अणिकाइयावत्थे" ॥ आह–यदि तीर्थकरनाम्नो जघन्यापि स्थितिरन्तःसागरोपमकोटाकोटीप्रमाणा तदा तावत्याः स्थितेस्तिर्यग्भवभ्रमणमन्तरेण पूरयितुमशक्यत्वात्तिर्यग्गतावपि तीर्थकरनामसत्ताप्रसङ्गः,तथा चागमविरोधः, आगमे हि तिर्यग्गतौ तीर्थकरनामसत्कर्मा सन् प्रतिषिध्यत इति । नैष दोषः, अत्यन्तनिकाचिततीर्थकरनामसत्ताया एवागमे प्रतिषेधात् । तथा चोक्तं विशेषणवत्यामेव—"तिरिएसु णत्थि तित्थयरणाम संतं ति देसियं समए । कह य तिरिओ ण होही अयरोवमकोडीकोडीओ ॥८१॥ तं पि सुनिकाइयस्सेव तइयभवभाविणो विणिद्दिठं । अणिकाइयंमि वच्चइ सव्वगईओ वि ण विरोहो ॥८२॥" तथा च यत्सुनिकाचितं तदेव तीर्थकरनाम सत्तिर्यग्गतौ प्रतिषिद्धं, यत्तु प्रभूतस्थितिकमप्यपवर्त्तनाकरणेन लघुस्थितिकं क्रियते, उद्वर्त्तनया वा

तदल्पस्थितिकं मद्वृहत्स्थितिकत्वेन व्यवस्थाप्यते, तस्योद्वर्त्तनापवर्त्तनासाध्यस्य तिर्यग्गतौ सत्वेऽपि न दोष इति सिद्धम्। उक्तं च— "अमिद णिकाइयतित्थं तिरियभवे तं णिसेहियं संतं। इयरम्मि णत्थि दोसो उव्वट्टणवट्टणासज्झे" ॥ अत्र च तीर्थकराहारकद्विकयोरन्तःसागरोपमकोटीकोट्याः संख्येयभागादारभ्य निकाचयितुमारब्धयोर्यदा सर्वात्मना निकाचना कृता भवति तदा सुनिकाचितस्य तीर्थकरनाम्न उत्कृष्टा स्थितिः किञ्चिन्न्यूनपूर्वकोटिद्वयाभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि। तथाहि—तीर्थकरभवादर्वाक् तृतीये भवे पूर्वकोट्यायुषा प्रथमत एव तन्निकाचितम्। ततोऽनुत्तरसुरेषु त्रयस्त्रिंशत्सागरोपमस्थितिको देवो जातः। ततोऽपि च्युत्वा चतुरशीतिलक्षणपूर्वायुस्तीर्थकरो जायत इति। सुनिकाचितस्याहारकद्विकस्य तु पल्योपमासंख्येयभाग उत्कृष्टा स्थितिः। अल्पनिकाचितयोश्च तीर्थकराहारकद्विकयोरन्तःसागरोपमकोटाकोट्याः संख्येयतमो भाग उत्कृष्टा स्थितिरिति विवेचितं पञ्चसंग्रहे। अत्रापि चान्तर्मुहूर्त्तमबाधा, उत्कृष्टस्थितावपि चानयोरियत्येवाबाधोक्ता। ततः परं दलिकरचनायाः सद्भावेनावश्यं प्रदेशोदयसंभवः। केचित्तु तीर्थकरनामकर्मान्तर्मुहूर्त्तादूर्ध्वं कस्यचित्प्रदेशत उदेति, तदुदये चाज्ञैश्वर्यादय ऋद्धिविशेषा अन्यजीवेभ्यो विशिष्टतरास्तस्य संभवन्तीति संभावयन्ति। अत्र च तीर्थकरनाम्नो जघन्या स्थितिर्दशवर्षसहस्रमात्राऽऽहारकद्विकस्य चान्तर्मुहूर्त्तमात्रा पञ्चसंग्रहे प्रतिपादिताऽस्ति, तच्च ग्रन्थकृदभिप्रायोत्तीर्णमाचार्यान्तरस्य मतान्तरमिति द्रष्टव्यम् ॥७८॥

**वग्गुक्कोसठिईणं मिच्छत्तुक्कोसगेण जं लद्धं। सेसाणं तु जहन्नो पल्लासंखेज्जगेणूणो ॥ ७९ ॥**

(चू०)—भणियसेसाणं पगतीणं जहण्णट्ठितिणिरूवणत्थं सामण्णलक्खणं भण्णइ—'वग्गस्स उक्कोसो'त्ति। णाणावरणिज्जं,दंसणावरणिज्जं, वेयणिज्जं, दंसणमोहणिज्जं, कसायमोहणिज्जं, णोकसायमोहणिज्जं, नामं, गोयं, अन्त-

सह चैक इति। सूक्ष्मापर्याप्ताभ्यां सह यशःकीर्त्तेरुदयो न स्यादिति तदाश्रिता विकल्पा न प्राप्यन्ते। एषा चैकविंशतिर्योऽग्रे सर्वा अपि स्वपर्याप्तीः पूरयिष्यति तस्य योग्यतया लब्धिमाश्रित्य भवान्तरालादावपि पर्याप्तिरस्तीति लब्धिपर्याप्त्यपेक्षया एकेन्द्रियस्य भवान्तरालगतौ वर्तमानस्यावगन्तव्या, अन्तराले बादरपर्याप्तयशःकीर्त्तीनामप्युदयसंभवात्, ततः शरीरस्थस्यौदारिकं हुण्डमुपघातं प्रत्येकसाधारणयोरेकतरमिति चतस्रः प्रकृतयः क्षिप्यन्ते, प्रागुक्तैकविंशतिमध्याच्च तिर्यगानुपूर्व्यपनीयते, ततश्चतुर्विंशतिः स्यात्। इह च भङ्गा दश तद्यथा—बादरपर्याप्तस्य प्रत्येकसाधारणयशःकीर्त्त्ययशःकीर्त्तिपदैर्भङ्गाश्चत्वारः, बादरापर्याप्तस्य प्रत्येकसाधारणाभ्यामयशःकीर्त्तिनियन्त्रिताभ्यां सह द्वौ, सूक्ष्मस्य पर्याप्तापर्याप्तप्रत्येकसाधारणैरयशःकीर्त्तिनियन्त्रितैः सह चत्वार इति। तथा बादरवायुकायिकस्य वैक्रियं कुर्वत औदारिकस्थाने वैक्रियं वक्तव्यं, ततश्च तस्यापि चतुर्विंशतिरुदये प्राप्यते, केवलमिह बादरपर्याप्तप्रत्येकायशःकीर्त्तिपदैरेक एव भङ्गः, तेजस्कायिकवायुकायिकयोर्यशःकीर्त्तिसाधारणयोरुदयो न स्यादिति तदाश्रिता भङ्गा न प्राप्यन्ते। सर्वसंख्यया चतुर्विंशतौ भङ्गा एकादश। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, सा च पर्याप्तकस्यैवेत्यपर्याप्तकमपसार्यते, अत्र भङ्गाः षट्, तद्यथा—बादरपर्याप्तस्य प्रत्येकसाधारणयशःकीर्त्त्ययशःकीर्त्तिपदैश्चत्वारः, सूक्ष्मस्य च प्रत्येकसाधारणाभ्यामयशःकीर्त्त्या सह द्वाविति। तथा बादरवायुकायिकस्य वैक्रियं कुर्वतः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, अत्र च प्राग्वदेक एव भङ्गः। सर्वसङ्ख्यया पञ्चविंशतौ सप्त भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते षड्विंशतिः। अत्रापि भङ्गाः प्रागिव षट्। अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते आतपोद्योतयोरन्यतरस्मिन्नुदिते षड्विंशतिर्भवति, अत्रापि भङ्गाः षट्, तद्यथा—बादरस्योद्योतेन सहितस्य प्रत्येकसाधारणयशःकीर्त्त्ययशःकीर्त्तिभिश्चत्वारः, आतपसहितस्य प्रत्येकयशःकीर्त्त्ययशःकीर्त्तिपदैश्च द्वाविति। तथा बादरवायुकायिकस्य

राइयन्ति, एते णव वग्गा वुच्चंति। एतेसिं वग्गाणं अप्पप्पणो जाव उक्कस्सा ठिती तीसे ठितीए मिच्छत्तुक्कस्साए ठितीए भागो हीरति, तत्थ जो भागो लब्भइ सो भणियसेसाणं पगतीणं जहण्णओ ठितीबंधो भवति पलिओवमस्स असंखेज्जतिभागेण ऊणो। ताओ य इमाओ भणियसेसाओ तं जहा–णिद्दापणगअसातावेयणिज्जस्स जहण्णिगा ठिती सागरोवमस्स सत्तभागा तिण्णि पलिओवमस्स असंखेज्जतिभागेण ऊणगा। मिच्छत्तस्स जहण्णगो ठितिबन्धो सागरोवमस्स सत्तसत्तभागा पलिओवमस्स असंखेज्जतिभागेण ऊणा। संजलणवज्जाणं बारसण्हं कसायाणं जहण्णओ ठितिबंधो सागरोवमस्स चत्तारि सत्तभागा पलिओवमस्स असंखेज्जतिभागेण ऊणगा। पुरिसवेयवज्जाणं अट्ठण्हं णोकसायाणं जहण्णतो ठितिबंधो सागरोवमस्स वेसत्तभागा पलिउवमस्स जाव ऊणगा। देवदुगणिरयदुगवेउव्वियदुगआहारगदुगजस्सकित्तितित्थगरणामा एते पगतिवज्जाणं सेसाणं णामपगतीणं जहण्णाउ ठितिबन्धो सागरोवमस्स वे सत्तभागा पलिउवमस्स जाव ऊणगा, एवं णियागोयस्स वि। वेउव्विय(च्छ)क्कगाणं सागरोवमसहस्सस्स वे सत्तभागा पलिउवमस्स जाव ऊणगा, असण्णिपंचिदिओ देवणिरयपाउग्गाणं बंधउत्ति। जहण्णओ अद्धाच्छेओ भणिओ ॥७९॥

(मलय०)—उक्तशेषाणां प्रकृतीनां जघन्यस्थितिप्ररूपणार्थमाह–'वग्गुक्कोस' त्ति। इह ज्ञानावरणप्रकृतीसमुदायो ज्ञानावरणीयवर्ग इत्युच्यते। एवं दर्शनावरणप्रकृतिसमुदायो दर्शनावरणीयवर्गः, वेदनीयप्रकृतिसमुदायो वेदनीयवर्गः, दर्शनमोहनीयप्रकृतिसमुदायो दर्शनमोहनीयवर्गः, चारित्र(कषाय)मोहनीयप्रकृतिसमुदायश्चारित्रमोहनीयवर्गः, नोकषायमोहनीयप्रकृतिसमुदायो नोकषायमोहनीय-

वर्गः, नामप्रकृतिसमुदायो नामवर्गः, गोत्रप्रकृतिसमुदायो गोत्रवर्गः, अन्तरायप्रकृतिसमुदायोऽन्तरायवर्गः । एतेषां वर्गाणां याऽऽ-
त्मीयात्मीयोत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यादिलक्षणा तस्या मिथ्यात्वस्योत्कृष्टया स्थित्या सप्ततिसागरोपमकोटीकोटीलक्ष-
णया भागे हृते सति यल्लभ्यते तत्पल्योपमासंख्येयभागन्यूनं सदुक्तशेषाणां प्रकृतीनां जघन्यस्थितेः परिमाणमवसेयम् । तथाहि–दर्श-
नावरणीयवेदनीययोरुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटिकोटीप्रमाणा, तस्या मिथ्यात्वस्थित्या सप्ततिसागरोपमकोटीकोटीप्रमाणया
भागे हृते सति 'शून्यं शून्येन पातयेदि' तिवचनाल्लब्धास्त्रयः सागरोपमसप्तभागाः, ते पल्योपमासंख्येयभागहीना निद्रापञ्चकासात-
वेदनीययोर्जघन्या स्थितिः । एवं मिथ्यात्वस्य सप्त सप्त भागाः पल्योपमासंख्येयभागहीनाः । संज्वलनवर्जानां द्वादशकषायाणां चत्वारः
सप्तभागाः पल्योपमासंख्येयभागहीनाः । तथा नोकषायमोहनीयस्य नामकर्मणो गोत्रस्य च स्वस्वोत्कृष्टायाः स्थितेर्विंशतिसागरोपम-
कोटीकोटीप्रमाणया मिथ्यात्वस्थित्या सप्ततिसागरोपमकोटीकोटीप्रमाणया भागे हृते सति यौ लब्धौ द्वौ सागरोपमस्य सप्तभागौ तौ
पल्योपमासंख्येयभागहीनौ पुरुषवेदवर्जानामष्टानां नोकषायाणां देवद्विकनरकद्विकवैक्रियद्विकाहारकद्विकयशःकीर्तितीर्थकरवर्जशेषनाम-
प्रकृतीनां नीचैर्गोत्रस्य च जघन्या स्थितिः । वैक्रियषट्कस्य–देवगतिदेवानुपूर्वीनरकगतिनरकानुपूर्वीवैक्रियशरीरवैक्रियाङ्गोपाङ्गलक्ष-
णस्य द्वौ सप्तभागौ सहस्रगुणितौ पल्योपमासंख्येयभागहीनौ जघन्या स्थितिः । यतस्तस्य वैक्रियषट्कस्य जघन्यस्थितिबन्धका असंज्ञि-
पञ्चेन्द्रिया एव न त्वेकेन्द्रियादयः, ते च जघन्यां स्थितिमेतावतीमेव बन्धन्ति, न न्यूनाम् । तदुक्तं–"वेउव्विछक्के तं सहस ताडियं जं
असन्निणो तेसिं । पलियासंखंसूणं ठिइ अबाहूणियनिसेगो ॥ १ ॥ अस्या अक्षरगमनिका–"वग्गुक्कोसठिईणं मिच्छत्तुक्कोसियाए" इत्य-
नेन करणेन यल्लब्धं तत् सहस्रताडितं–गुणितं ततः पल्योपमस्या संख्येयेनांशेन भागेन न्यूनं सत् वैक्रियषट्के उक्तस्वरूपे जघन्यस्थितेः

परिमाणमवसेयम् । कुतः ? इत्याह—यद्यस्मात्कारणात्तेषां वैक्रियषट्कलक्षणानां कर्मणां असंज्ञिपञ्चेन्द्रिया एव जघन्यस्थितेर्बन्धकाः । ते च जघन्यां स्थितिमेतावतीमेव बन्धन्ति, न न्यूनां, अन्तर्मुहूर्तमबाधा, अबाधाकालहीना च कर्मस्थितिः कर्मदलिकनिषेक इति ॥७९॥

(उ०)—उक्तशेषाणां प्रकृतीनां जघन्यस्थितिप्ररूपणामाह – इह ज्ञानावरणीयप्रकृतिसमुदायो ज्ञानावरणीयवर्गः, दर्शनावरणीयप्रकृतिसमुदायो दर्शनावरणीयवर्गः, वेदनीयप्रकृतिसमुदायो वेदनीयवर्गः, दर्शनमोहनीयप्रकृतिसमुदायो दर्शनमोहनीयवगः, कषायमोहनीयप्रकृतिसमुदायकषायमोहनीयवर्गः, नोकषायमोहनीयप्रकृतिसमुदायो नोकषायमोहनीयवर्गः, नामप्रकृतिसमुदायो नामवर्गः, गोत्रप्रकृतिसमुदायो गोत्रवर्गः, अन्तरायप्रकृतिसमुदायोऽन्तरायवर्गः । एतेषां वर्गाणां या स्वीयस्वीयोत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटिकोटयादिका, तस्या मिथ्यात्वस्योत्कृष्टया स्थित्या सप्ततिसागरोपमकोटाकोटीलक्षणया भागे हृते यल्लभ्यते पल्योपमाऽसंख्येयभागन्यूनस्तत्प्रमाण उक्तशेषाणां प्रकृतीनां जघन्यः स्थितिबन्धः । तथाहि—दर्शनावरणीयवेदनीययोरुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटाकोटीप्रमाणा, तस्या मिथ्यात्वस्थित्या सप्ततिसागरोपमकोटाकोटया भागे हृते शून्यं शून्येन पातयेदिति वचनाल्लब्धास्त्रयः सागरोपमसप्तभागाः ते पल्योपमासंख्येयभागहीना निद्रापञ्चकासातवेदनीययोर्जघन्या स्थितिः । एवं मिथ्यात्वस्य सप्त सप्तभागाः पल्योपमासंख्येयभागहीनाः । संज्वलनवर्जानां द्वादशकषायाणां चत्वारः सप्तभागाः पल्योपमासंख्येयभागहीनाः । तथा नोकषायमोहनीयस्य नामकर्मणो गोत्रस्य च स्वस्वोत्कृष्टस्थितेर्विंशतिसागरोपमकोटीकोटया मिथ्यात्वस्थित्या सप्ततिसागरोपमकोटीकोटया भागे हृते लब्धौ सागरोपमस्य द्वौ सप्तभागौ, तौ पल्योपमासंख्येयभागहीनौ, पुरुषवेदवर्जानामष्टानां नोकषायाणां देवद्विकनरकद्विकवैक्रियद्विकाहारकद्विकयशःकीर्त्तितीर्थंकरवर्जशेषनामप्रकृतीनां नीचैर्गोत्रस्य च जघन्या स्थितिः । वैक्रियषट्कस्य द्वौ सप्तभागौ सहस्रगुणितौ पल्यो-

पमासंख्येयभागहीनौ जघन्या स्थितिरिति ग्रन्थान्तराद्द्रष्टव्यं, यतस्तस्य जघन्यस्थितिबन्धका असंज्ञिपञ्चेन्द्रिया एव, ते चैतावतीमेव जघन्यां स्थितिं बध्नन्तीति। पञ्चसंग्रहे तु वर्गोत्कृष्टस्थितिर्विभजनीयतया नाभिप्रेता, किन्तु "सेसाणुक्कोसाओ मिच्छत्तठिईइ जं लद्धं"॥४८॥ इतिग्रन्थेन स्वस्वोत्कृष्टस्थितेर्मिथ्यात्वोत्कृष्टस्थित्या भागे हृते यल्लभ्यते तदेव जघन्यस्थितिपरिमाणमुक्तम्। तत्र निद्रापञ्चकस्यासातवेदनीयस्य च प्रत्येकमुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटाकोटिरिति, तस्या मिथ्यात्वोत्कृष्टस्थित्या भागे ह्रियमाणे शून्यं शून्येन पातयेदिति वचनाल्लब्धास्त्रयः सागरोपमसप्तभागाः,–३/७ इयती निद्रापञ्चकासातवेदनीययोर्जघन्या स्थितिः। एवं मिथ्यात्वस्य सप्त सप्तभागाः पूर्णं सागरोपममित्यर्थः। आद्यद्वादशकषायाणां चत्वारः सप्तभागाः। सूक्ष्मत्रिकस्य विकलत्रिकस्य चोत्कृष्टा स्थितिरष्टादशसागरोपमकोटीकोटयः, तस्या मिथ्यात्वस्थित्या भागे ह्रियमाणे शून्यं शून्येन पात्यते, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तनातो लब्धाः सागरोपमस्य नव पञ्चत्रिंशद्भागाः, इयती सूक्ष्मत्रिकविकलत्रिकयोर्जघन्या स्थितिः–९/३५। तथा स्त्रीवेदमनुष्यद्विकयोरुत्कृष्टस्थितिः पञ्चदशसागरोपमकोटाकोटिमाना, तस्या मिथ्यात्वस्थित्या भागे ह्रियमाणे शून्यं शून्येन पातयित्वा छेद्यच्छेदकराश्योः पञ्चभिरपवर्त्तने लब्धास्त्रयः सागरोपमस्य चतुर्दश भागाः, इयती स्त्रीवेदमनुष्यद्विकयोर्जघन्या स्थितिः–३/१४। तथा स्थिरशुभसुभगसुस्वरादेयहास्यरतिशुभविहायोगतिशुक्लवर्णसुरभिगन्धमधुररसमृदुलघुस्निग्धोष्णस्पर्शाद्यसंस्थानसंहननलक्षणप्रकृतिसप्तदशकस्य दश सागरोपमकोटीकोटय उत्कृष्टा स्थितिः, तस्या मिथ्यात्वस्थित्या भागहरणे शून्यस्य शून्येन पातने लब्ध एकः सप्तभागः–१/७, इयती स्थिरादीनां जघन्या स्थितिः। द्वितीययोः संस्थानसंहननयोर्द्वादशोदधिकोटिकोटय उत्कृष्टा स्थितिः, तस्या मिथ्यात्वस्थित्या भागहरणे शून्यं शून्येन पातयित्वा छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तने लब्धाः षट् सागरोपमस्य पञ्चत्रिंशद्भागाः–६/३५। तृतीययोः संस्थानसंहननयोरुत्कृष्टस्थितिश्चतुर्दशोदधिकोटीकोटयः,

तस्या मिथ्यात्वस्थित्या भागहारे शून्यस्य शून्येन पातने छेद्यच्छेदकराश्योश्चतुर्दशकेनापवर्त्तने लब्ध एकः सागरोपमस्य पञ्चभागः, इयती तयोर्जघन्या स्थितिः–१/५ । चतुर्थयोः संस्थानसंहननयोः षोडशार्णवकोटाकोटीमानोत्कृष्टा स्थितिः, तस्या मिथ्यात्वस्थित्या भागहरणविधौ शून्यं शून्येन पातयित्वा छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तने लब्धाः सागरोपमस्याष्टौ पञ्चत्रिंशद्भागाः–८/३५, इयती तयोर्जघन्या स्थितिः । पञ्चमसंस्थानसंहननयोरष्टादशाब्धिकोटीकोटय उत्कृष्टा स्थितिः, तस्यां मिथ्यात्वस्थित्या भाज्यमानायां शून्यस्य शून्येन पातने छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तने लब्धा नव पञ्चत्रिंशद्भागाः–९/३५, इयती तयोर्जघन्या स्थितिः । शेषाणां त्रसबादरपर्याप्तप्रत्येकागुरुलघुपराघातोपघातोच्छ्वासास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तितिर्यग्द्विकौदारिकद्विकहारिद्रलोहितनीलकृष्णवर्णदुरभिगन्धकषायाम्लकटुतिक्तरसगुरुकर्कशरूक्षशीतस्पर्शपञ्चन्द्रियजात्येकेन्द्रियजातिनिर्माणातपोद्योताप्रशस्तविहायोगतिचरमसंस्थानसंहननतैजसकार्मणनीचैर्गोत्रारतिशोकभयजुगुप्सानपुंसकवेदस्थावररूपाणामष्टचत्वारिंशत्प्रकृतीनां सागरोपमस्य द्वौ सप्तभागौ–२/७–जघन्या स्थितिः । यद्यपि हारिद्रलोहितादीनामुत्कृष्टस्थितिः सार्द्धद्वादशाब्धिकोटाकोट्यादिमानेत्यधिकृतभागहारविधिना समधिकपट्सागरोपमपञ्चत्रिंशद्भागादिप्रमाणा जघन्यस्थितिर्लभ्यते, तथापि चिरंतनशास्त्रेषु तेषां द्वौ सप्तभागौ जघन्यस्थिततया दृष्टाविति तावेवोक्तौ । इदं च जघन्यस्थितिपरिमाणं पञ्चसंग्रहोक्तं मतान्तरमिति द्रष्टव्यम् । परमेतज्जीवाभिगमाद्यनुपाति दृश्यते । तथा च स्त्रीवेदमधिकृत्य तत्र सूत्रम्–"इत्थिवेदस्स णं भंते केवइयं कालं बन्धठिई पन्नत्ता ? गोयमा ! जहन्नेणं सागरोवमस्स दिवड्ढो सत्तभागो पलिओवमस्स असंखेज्जइ भागेण ऊणओ" इत्यादि ॥७९॥

इदाणीं एगिंदीयातीणं जहणुक्कस्स ठितीपरिमाणं भण्णइ–

एसेगिंदियडहरो सव्वासिं ऊणसंजुओ जेट्ठो। पणवीसा पन्नासा सयं सहस्सं च गुणकारो ॥ ८० ॥
कमसो विगलअसन्नीण पल्लसंखेज्जभागहा इयरो। विरए देसजइदुगे सम्मचउक्के य संखगुणो ॥ ८१ ॥
सन्नीपज्जत्तियरे अब्भितरओउ कोडिकोडीए। ओघुक्कोसो सन्निस्स होइ पज्जत्तगस्सेव ॥ ८२ ॥

(चू०)—'एसेगिंदियडहरो सव्वासिं'त्ति–सव्वासिं पगतीणं उक्कस्स ठितीणं मिच्छत्तुक्कस्स ठितीए भागो हीरति, जं भागलद्धं तं पलिउवमस्स असंखेज्जइ भागेण ऊणगं एगिंदियाणं जीवाणं जहण्णगो ठितिबंधो भवति। णाणावरणदंसणावरणअसायवेयणीयअन्तराइयाणं सव्वासिं पगतीणं जहण्णगो ठितिबंधो सागरोवमस्स तिण्णि सत्तभागा पलिओवमस्स जाव ऊणा। मिच्छत्तस्स सागरोवमस्स सत्तसत्तभागा पलिओवमस्स जाव ऊणगा। चत्तारिकसायमोहणिज्जाणं जहण्णं ठितिबंधो सागरोवमस्स चत्तारि सत्तभागा पलिउवमस्स जाव ऊणगा। णोकसायाणं जहण्णं ठितिबंधो सागरोवमस्स विसत्तभागा पलिओवमस्स जाव ऊणगा। वेउव्वियछक्कआहार-तित्थगरवज्जाणं सेसाणं णामपगतीणं सव्वासिं जहन्न ठितिबंधो सागरोवमस्स वे सत्तभागा पलिओवमस्स असंखेज्जतिभागेण ऊणगा। सव्वत्थ पलिओवमस्स असंखिज्जतिभागेण ऊणगं भणियव्वं। 'ऊणसंजुतो जेट्ठो' त्ति–जहण्णगट्ठितिपलिउवमस्स असंखेज्जइभागेण ऊणिया, तेण पलिउवमस्स असंखेज्जतिभागेण संजुत्ता जहण्णगा ठीती एगिंदियाणं उक्कोसट्ठितीपरिमाणं भवति। 'पणवीसा पण्णासा सतं सहस्सं च गुणगारो कम-

सो विगलअसण्णीणं'ति–एगिंदियस्स उक्कस्सट्ठिती पणवीसगुणा वेइन्दियाणं उक्कोसट्ठिती भवति। सच्चेवेगिंदियट्ठिती पण्णासगुणा तेइंदियाणं उक्कोसट्ठिती भवति। एवं सच्चेव सतगुणिता चउरिंदियाणं उक्कोसट्ठिती भवति। एवं सच्चेव सहस्सगुणिता असण्णिपंचेंदियाणं उक्कोसिता ठिती भवति। वेउव्वियच्छक्कस्स एत्थ जहण्णगट्ठिती, हेट्ठिला ण बंधंतित्ति काउं। 'पल्लसंखेज्जभागहा इयरो'त्ति–वेइंदियादीणं अप्पप्पणो उक्कसट्ठिती पलिउवमस्स [अ]संखेज्जतिभागेण ऊणा इयरोत्ति–जहण्णगट्ठिति भवति ॥

इदाणिं सव्वासिं जहण्णुक्कस्स ठितीणं अप्पाबहुगं भण्णति–सव्वत्थोवो संजयस्स जहण्णगो ठितीवंधो। एगिंदियबादरपज्जत्तगस्स जहण्णउ ठितिबंधो असंखेज्जगुणो। सुहुमस्स पज्जत्तगस्स जहण्णगो ठितिबंधो विसेसाहितो। अपज्जत्तगस्स बायरस्स जहण्णगो विसेसाहिओ। सुहुमस्स अपज्जत्तगस्स जहण्णगो विसेसाहिओ। तस्सेवुक्कस्सगो ठितीबंधो विसेसाहिओ। बादरस्स अपज्जत्तगस्स उक्कोसो विसेसाहिओ। सुहुमस्स पज्जत्तगस्स उक्कोसो विसेसाहिओ। बादरस्स पज्जत्तगस्स उक्कोसो विसेसाहिओ। ततो वेइंदियस्स पज्जत्तगस्स जहण्णओ संखगुणो। तस्सेव अपज्जत्तगस्स जहण्णओ विसेसाहिओ। तस्सेवुक्कस्सगो विसेसाहिओ। वेइंदियस्स पज्जत्तगस्स उक्कोसो विसेसाहिओ। तओ तेइंदियपज्जत्तगस्स जहण्णो विसेसाहिओ तस्सेव अपज्जत्तगस्स जहण्णओ विसेसाहितो। तस्सेवुक्कोसो विसेसाहिओ। तेइंदियस्स पज्जत्तगस्स उक्कोसो विसेसाहिओ। चउरिंदियपज्जत्तस्स जहण्णओ विसेसाहिओ। तस्सेव अपज्जत्तगस्स जहण्णओ विसेसाहिओ।

तस्सेव उक्कोसो विसेसाहिओ। तस्सेव पज्जत्तगस्स उक्कोसो विसेसाहिओ। असण्णि पंचिंदियस्स पज्जत्तगस्स
जहण्णओ संखेज्जगुणो। तस्सेव अपज्जत्तगस्स जहण्णओ विसेसाहिओ। तस्सेवुक्कस्सगो विसेसाहिओ। असण्णि-
पंचेंदियस्स पज्जत्तगस्स उक्कोसो ठितिवंधो विसेसाहिओ। ततो संजतस्स उक्कोसगो ठितिवंधो संखेज्जगुणो।
'विरते देसजइदुगे सम्मचउक्के य संखगुणो' त्ति–ततो देशविरतस्स जहण्णओ ठितिबंधो संखेज्जगुणो। तस्सेव
उक्कस्सगो ठितिवंधो संखेज्जगुणो। 'संमचउक्के य' त्ति–असंजयसम्मदिट्ठी पज्जत्तापज्जत्तगाणं जहण्णुक्कोस-
गं ति भणितं होति। देसविरयस्स उक्कोसा ठितिवंधातो असंजतसम्मदिट्ठियस्स पज्जत्तगस्स जहण्णओ ठिति-
वंधो संखेज्जगुणो। तस्सेव अपज्जत्तगस्स जहण्णओ ठितिवंधो संखेज्जगुणो। तस्सेवुक्कस्सओ ट्ठितिवंधो संखे-
ज्जगुणो। असंजतस्स संमदिट्ठिस्स पज्जत्तगस्स उक्कस्सगो ठितिवंधो संखेज्जगुणो॥

असंजयसम्मदिट्ठस्स पज्जत्तगस्स उक्कस्सगातो ठितिवंधातो सण्णिपंचेंदियपज्जत्तगस्स जहण्ण-
ओ ठितिवंधो संखेज्जगुणो। तस्सेव अपज्जत्तगस्स जहण्णओ ठितिवंधो संखेज्जगुणो। तस्सेवुक्कस्सगो ठिति-
वंधो संखेज्जगुणो, 'अब्भितरतो उ कोडाकोडीए' त्ति-एवं संजयस्स उक्कोसातो आढत्तं कोडाकोडीए अब्भितरतो
भवति। 'ओहुक्कोसो सण्णिस्स होइ पज्जत्तगस्सेव' त्ति–पुव्वं सामण्णेण उक्कस्सगो भणितो सो सण्णिस्स
पंचेंदियस्स पज्जत्तगस्स भिच्छादिट्ठिस्स चेव भवति। ट्ठितिवंधट्ठाणपरूवणा भणिता ॥८०-८१-८२॥

(मलय०)–सम्प्रत्येकेन्द्रियादीनां जघन्योत्कृष्टस्थितिवन्धप्रतिपादनार्थमाह—'एसे' त्ति। सर्वासां प्रकृतीनां वैक्रियपट्काहारकती-

र्थकरवर्जितानामेषोऽनन्तरोक्तो–"वग्गुक्कोसठिईणं मिच्छत्तुक्कोसगेण जं लद्धं पलिओवमासंखेज्जभागेणूणो" इत्वेवंलक्षणः स्थितिबन्धो 'डहरो'–जघन्य एकेन्द्रियाणां द्रष्टव्यः। तथाहि–ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामुत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीप्रमाणा, तस्या मिथ्यात्वस्थित्योत्कृष्टया सप्ततिसागरोपमकोटीप्रमाणया भागे हृते सति लब्धाः सागरोपमस्य त्रयः सप्तभागास्ते च पल्योपमासंख्येयभागहीनाः क्रियन्ते, एतावत्प्रमाणां जघन्यां स्थितिं ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीयान्तरायपञ्चकानामेकेन्द्रिया बध्नन्ति, न न्यूनां। एवं मिथ्यात्वस्य जघन्यां स्थितिमेकं सागरोपमं पल्योपमासंख्येयभागहीनम्। कषायमोहनीयस्य चतुरः सागरोपमस्य सप्तभागान् पल्योपमासंख्येयभागहीनान्। नोकषायाणां तथा वैक्रियषट्काहारकद्विकतीर्थकरवर्जितानां शेषनामप्रकृतीनां गोत्रप्रकृतिद्वयस्य च द्वौ सागरोपमस्य सप्तभागौ पल्योपमासंख्येयभागहीनावेकेन्द्रिया बध्नन्ति। 'ऊणसंजुओ जेठ'त्ति–स एव जघन्यः स्थितिबन्ध ऊनेन पल्योपमासंख्येयभागलक्षणेन संयुतः सन्नुत्कृष्टस्थितिबन्ध एकेन्द्रियाणां वेदितव्यः। तद्यथा–ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीयान्तरायपञ्चकानां त्रयः सागरोपमस्य सप्तभागाः परिपूर्णा उत्कृष्टः स्थितिबन्धः। एवं सर्वत्रापि भावनीयम्। उक्त एकेन्द्रियाणां जघन्योत्कृष्टः स्थितिबन्धः। सम्प्रति विकलेन्द्रियाणामाह–'पणवीस' इत्यादि। एकेन्द्रियाणां सत्क उत्कृष्टः स्थितिबन्धः पञ्चविंशत्यादिना गुणकारेण गुणितः सन् 'क्रमशः'–क्रमेण 'विकलानां'–विकलेन्द्रियाणां द्वित्रिचतुरिन्द्रियलक्षणानां 'असंज्ञिनां' च–असंज्ञिपञ्चेन्द्रियाणां चोत्कृष्टः स्थितिबन्धो वेदितव्यः। तद्यथा–एकेन्द्रियाणामुत्कृष्टः स्थितिबन्धः पञ्चविंशत्या गुणितो द्वीन्द्रियाणामुत्कृष्टः स्थितिबन्धो भवति। स एवैकेन्द्रियाणामुत्कृष्टः स्थितिबन्धः पञ्चाशता गुणितस्त्रीन्द्रियाणामुत्कृष्टः स्थितिबन्धः। शतेन गुणितश्चतुरिन्द्रियाणाम्। सहस्रेण गुणितोऽसंज्ञिपञ्चेन्द्रियाणामिति। 'पल्लसंखेज्जभागहा इयरो'–स एव द्वीन्द्रियादीनामात्मीय आत्मीय

उत्कृष्टः स्थितिबन्धः पल्योपमसंख्येयभागहीनः सन् इतरो–जघन्यः स्थितिबन्धो वेदितव्यः ।
उत्कृष्टः स्थितिबन्धः पल्योपमसंख्येयभागहीनः सन् इतरो—जघन्यः स्थितिबन्धो वेदितव्यः । ततो

सम्प्रति सर्वेषामपि जघन्योत्कृष्टस्थितिबन्धानामल्पबहुत्वमभिधीयते–तत्र सूक्ष्मसंपरायस्य जघन्यस्थितिबन्धः सर्वस्तोकः । ततो
बादरपर्याप्तकस्य जघन्यः स्थितिबन्धोऽसंख्येयगुणः । ततोऽपि सूक्ष्मपर्याप्तकस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽप्यपर्याप्त-
बादरस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽप्यपर्याप्तसूक्ष्मस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽपि अपर्याप्तसूक्ष्मस्योत्कृष्टः
स्थितिबन्धो विशेषाधिकः । ततोऽप्यपर्याप्तबादरस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽपि सूक्ष्मपर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषा-
धिकः । ततोऽपि बादरपर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततो द्वीन्द्रियस्य पर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः । ततस्त-
स्यैवापर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः। ततोऽपि तस्यैव द्वीन्द्रियस्यापर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽपि द्वीन्द्रि-
यपर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽपि त्रीन्द्रियपर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः (विशेषाधिकः) । ततोऽपि
तस्यैव त्रीन्द्रियस्यापर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽपि त्रीन्द्रियापर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽपि
पर्याप्तत्रीन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततश्चतुरिन्द्रियस्य पर्याप्तकस्य जघन्यः स्थितिबन्धः संख्येयगुणः (विशेषाधिकः) ।
ततोऽप्यपर्याप्तचतुरिन्द्रियस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽप्यपर्याप्तचतुरिन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततो-
ऽपि पर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽसंज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः । ततोऽपि तस्यैवा-
पर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽपि तस्यैवापर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽपि तस्यैव पर्याप्तस्योत्कृष्टः
स्थितिबन्धो विशेषाधिकः । ततः संयतस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः । 'विरए'–इत्यादि । 'विरते'–संयते, अत्र च जघन्य

उत्कृष्टश्च स्थितिबन्ध उक्त एव । ततो 'देशयतिद्विके' देशविरतद्विके जघन्योत्कृष्टस्थितिबन्धलक्षणे, तथा 'सम्यक्त्वचतुष्के'–अविरतसम्यग्दृष्टौ पर्याप्तेऽपर्याप्ते च प्रत्येकं जघन्योत्कृष्टस्थितिबन्धके स्थितिबन्धो यथोत्तरं संख्येयगुणो वक्तव्यः । तद्यथा–संयतोत्कृष्टस्थितिबन्धात् देशविरतस्य जघन्यः स्थितिबन्धः संख्येयगुणः । ततो देशविरतस्यैवोत्कृष्टः स्थितिबन्धः संख्येयगुणः । ततः पर्याप्ताविरतस्य सम्यग्दृष्टेर्जघन्यः स्थितिबन्धः संख्येयगुणः । ततोऽप्यपर्याप्ताविरतस्य सम्यग्दृष्टेर्जघन्यः स्थितिबन्धः संख्येयगुणः । ततोऽप्यपर्याप्ताविरतसम्यग्दृष्टेरुत्कृष्टः स्थितिबन्धः संख्येयगुणः । ततोऽपि पर्याप्ताविरतसम्यग्दृष्टेरुत्कृष्टः स्थितिबन्धः संख्येयगुणः ॥

'सन्नि' त्ति–अविरतसम्यग्दृष्टेः पर्याप्तस्य सत्कादुत्कृष्टस्थितिबन्धात् संज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः। ततोऽपि तस्यैवापर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः । ततोऽपि तस्यवापर्याप्तस्य संज्ञिपञ्चेन्द्रियस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः । 'अब्भितरओ उ कोडिकोडीए'–त्ति संयतस्योत्कृष्टात् स्थितिबन्धादारभ्य यावदपर्याप्तसंज्ञिपञ्चेन्द्रियस्योत्कृष्टः स्थितिबन्ध एव सर्वोऽपि सागरोपमकोटीकोटचा अभ्यन्तर एव द्रष्टव्यः । एकेन्द्रियादीनां तु सर्वजघन्यसर्वोत्कृष्टस्थितिबन्धपरिमाणं प्रागेव प्रत्येकमुक्तम् । संज्ञिपञ्चेन्द्रियपर्याप्तकस्य पुनरुत्कृष्टः स्थितिबन्धो य एव प्रागोघेन–सामान्येनोक्त उत्कृष्टः स्थितिबन्धः स एव वेदितव्यः ॥ ८०–८१–८२ ॥

(उ०)–अथैकेन्द्रियादीनां जघन्योत्कृष्टस्थितिबन्धप्रतिपादनायाह—'एषः'–अनन्तरमेवोक्तः सर्वासां प्रकृतीनां वैक्रियषट्काहारकतीर्थकरवर्जितानां स्थितिबन्धो 'डहरो'–जघन्य एकेन्द्रियाणां द्रष्टव्यः । तथाहि–ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां सागरोपमस्य त्रीन् सप्तभागान् पल्योपमासंख्येयभागहीनान् जघन्यां स्थितिमेकेन्द्रिया बध्नन्ति, न न्यूनाम् । एवं मिथ्यात्वस्य सागरोपममेकं पल्यो-

पमासंख्येयभागहीनम्, कषायमोहनीयस्य चतुरः सागरोपमस्य सप्तभागान् पल्योपमासंख्येयभागहीनान्, नोकषायाणां वैक्रियषट्काहारकद्विकतीर्थकरवर्जितानां शेषनामप्रकृतीनां गोत्रप्रकृतिद्वयस्य च द्वौ सप्तभागौ पल्योपमासंख्येयभागहीनाविति। स एव जघन्यस्थितिबन्ध ऊनेन–पल्योपमासंख्येयभागलक्षणेन संयुतः सन्नुत्कृष्टः स्थितिबन्ध एकेन्द्रियाणां वेदितव्यः। अथ विकलेन्द्रियाणामाह–'पणवीस'इत्यादि। एकेन्द्रियसत्के उत्कृष्टे स्थितिबन्धे पञ्चविंशत्यादिना गुणकारः कार्यः, तथागुणितश्च स 'क्रमशः'–क्रमेण विकलानां-द्वित्रिचतुरिन्द्रियलक्षणानां विकलेन्द्रियाणाम्-असंज्ञिनाम्-असंज्ञिपञ्चेन्द्रियाणां च ज्येष्ठः स्थितिबन्ध इति प्राक्तनमनुपज्यते। तथाहि-एकेन्द्रियाणामुत्कृष्टस्थितिबन्धः पञ्चविंशत्या गुणितो द्वीन्द्रियाणामुत्कृष्टः, स एवैकेन्द्रियोत्कृष्टः स्थितिबन्धः पञ्चाशता गुणितस्त्रीन्द्रियाणामुत्कृष्टः, शतेन गुणितश्चतुरिन्द्रियाणां, सहस्रेण गुणितोऽसंज्ञिपञ्चेन्द्रियाणामिति। एष एव द्वीन्द्रियादीनामुत्कृष्टः स्थितिबन्धः 'पल्लसंखेज्जभागह' त्ति–पल्यसंख्येयभागं जहातीति पल्यसंख्येयभागहा–पल्योपमसंख्येयभागहीन इत्यर्थः, इतरो जघन्यस्थितिबन्धः। पञ्चसंग्रहे तु या जघन्यस्थितिरेकेन्द्रियाणां सा पल्योपमासंख्येयभागाभ्यधिकीकृता पञ्चविंशत्यादिना च गुणिता द्वीन्द्रियादीनामुत्कृष्टा, यथास्थितैव चैकेन्द्रियजघन्यस्थितिः पञ्चविंशत्यादिना गुणिता द्वीन्द्रियादीनां जघन्येत्युक्तमस्ति। तत्त्वं तु केवलिनो विदन्ति।

सम्प्रति सर्वेषामपि जघन्योत्कृष्टस्थितिबन्धानामल्पबहुत्वमभिधीयते–तत्र यतेः सूक्ष्मसंपरायस्य जघन्यः स्थितिबन्धः सर्वस्तोकः, आन्तर्मोहूर्त्तिकत्वात्। ततो बादरपर्याप्तस्य जघन्यः स्थितिबन्धोऽसंख्येयगुणः। ततः सूक्ष्मपर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः। ततोऽप्यपर्याप्तबादरस्य जघन्यस्थितिबन्धो विशेषाधिकः। ततोऽप्यपर्याप्तसूक्ष्मस्य जघन्यः स्थितिबन्धो विशेषाधिकः। ततोऽपि तस्यैवापर्याप्तस्य सूक्ष्मस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः। ततोऽप्यपर्याप्तबादरस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः। ततोऽपि सूक्ष्मपर्या-

प्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽपि बादरपर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततो द्वीन्द्रियपर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः । ततस्तस्यैवापर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततो द्वीन्द्रियापर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततो द्वीन्द्रियपर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततस्त्रीन्द्रियपर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः, ततस्त्रीन्द्रियापर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः, ततस्त्रीन्द्रियापर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः, ततोऽपि पर्याप्तत्रीन्द्रियस्योत्कृष्टस्थितिबन्धो विशेषाधिकः। ततश्चतुरिन्द्रियपर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः, ततोऽप्यपर्याप्तचतुरिन्द्रियस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽप्यपर्याप्तचतुरिन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽपि पर्याप्तचतुरिन्द्रियस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततोऽसंज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्य स्थितिबन्धः संख्येयगुणः । ततोऽपि असंज्ञिपञ्चेन्द्रियस्यापर्याप्तस्य जघन्यः स्थितिबन्धो विशेषाधिकः । ततोऽपि तस्यैवापर्याप्तस्योत्कृष्टस्थितिबन्धो विशेषाधिकः । ततोऽपि तस्यैव पर्याप्तस्योत्कृष्टः स्थितिबन्धो विशेषाधिकः । ततः संयतस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः । 'विरए'—इत्यादि । विरते–संयतेऽग्रिमापेक्षया स्तोकः स्थितिबन्धः। तत्र च जघन्य उत्कृष्टश्चान्तरालिकाभिधानक्रमेणोक्त एव । ततः संयतोत्कृष्टस्थितिबन्धाद्देशयतिद्विके–देशविरतद्विके जघन्योत्कृष्टस्थितिबन्धकलक्षणे तथा सम्यक्त्वचतुष्के- अविरतसम्यग्दृष्टौ पर्याप्तेऽपर्याप्ते च प्रत्येकं जघन्योत्कृष्टस्थितिबन्धके स्थितिबन्धो यथोत्तरं संख्येयगुणो वक्तव्यः । तथाहि–संयतोत्कृष्टस्थितिबन्धाद्देशविरतस्य जघन्यः स्थितिबन्धः संख्येयगुणः । ततस्तस्यैवोत्कृष्टः स्थितिबन्धः संख्येयगुणः । ततोऽविरतसम्यग्दृष्टेः पर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः । ततस्तस्यैवापर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः। ततस्तस्यैवापर्याप्तस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः। ततस्तस्यैव पर्याप्तस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः ।

पर्याप्ताविरतसम्यग्दृष्टेरुत्कृष्टस्थितिबन्धात्संज्ञिपञ्चेन्द्रियस्य पर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः। ततोऽपि तस्यैवा-
पर्याप्तस्य जघन्यः स्थितिबन्धः संख्येयगुणः। ततोऽपि तस्यैव संज्ञिपञ्चेन्द्रियस्यापर्याप्तस्योत्कृष्टः स्थितिबन्धः संख्येयगुणः।
'अब्भितरओ उ कोडिकोडीए' त्ति–संयतोत्कृष्टस्थितिबन्धादारभ्य यावदपर्याप्तसंज्ञिपञ्चेन्द्रियस्योत्कृष्टः स्थितिबन्ध एष सर्वोऽपि साग-
रोपमकोटीकोट्या अभ्यन्तर एव परिभाषितव्यः। एकेन्द्रियादीनां तु सर्वजघन्यसर्वोत्कृष्टस्थितिबन्धमानं प्रागुक्तमेव। ओघेन सामा-
न्येनोत्कृष्टो यः स्थितिबन्ध उक्तः स संज्ञिपञ्चेन्द्रियस्य पर्याप्तस्यैव परिशिष्यते ॥८०-८१-८२॥

इदाणिं णिसेगपरूवणा भण्णइ—

**मोत्तूण सगमबाहं पढमाइ ठिईइ बहुतरं दव्वं। एत्तो विसेसहीणं जावुक्कोसं ति सव्वेसिं ॥ ८३॥**

(चू०)—एगिंदिय जाव चउरिंदियअसण्णिपंचेंदियसण्णिपंचेंदियाणं पज्जत्तापज्जत्ताणं 'सगमबाहं' ति–
अप्पप्पणो 'बहुतरं'–पाउग्गं अबाहं मोत्तूण जं पढमसमए पदेसग्गं णिसिंचति ते बहुयं। ततो समउत्तराए
ठितीए विसेसहीणं। विसमउत्तराए ठितीए विसेसहीणं। ततो समउत्तराए ठितीए विसेसहीणं। 'एत्तो विसेस-
हीणं जावुक्कस्सं ति' एवं विसेसहीणं विसेसहीणं जावुक्कस्साए ठितीए–विसेसहीणं ताव णेयव्वं। 'सव्वासिं'-
त्ति–सव्वासिं पगतीणं जाव अप्पप्पणो उक्कस्स ठिती ताव णेयव्वं अणंतरोवणिहाए ॥८३॥

(मलय०)–तदेवं कृता स्थितिस्थानप्ररूपणा। सम्प्रति निषेकप्ररूपणावसरः। तत्र च द्वे अनुयोगद्वारे–अनन्तरोपनिधा, परम्प-
रोपनिधा च। तत्रानन्तरोपनिधाप्ररूपणार्थमाह—'मोत्तूण' त्ति। सर्वस्मिन्नपि कर्मणि बध्यमाने आत्मीयमात्मीयमबाधाकालं मुक्त्वा–

परित्यज्य ऊर्ध्वं दलिकनिक्षेपं करोति। तत्र प्रथमायां स्थितौ समयलक्षणायां प्रभूततरं द्रव्यं कर्मदलिकं निषिञ्चति। 'एत्तो विसेसहीणं' त्ति–इतः प्रथमस्थितेरूर्ध्वं द्वितीयादिषु स्थितिषु समयसमयप्रमाणासु विशेषहीनं विशेषहीनं कर्मदलिकं निषिञ्चति। तथाहि–प्रथमस्थितेः सकाशात् द्वितीयस्थितौ विशेषहीनम्, ततोऽपि तृतीयस्थितौ विशेषहीनम्, ततोऽपि चतुर्थस्थितौ विशेषहीनम्। एवं विशेषहीनं विशेषहीनं तावद्वाच्यं यावत्तत्तत्समयबध्यमानकर्मणामुत्कृष्टा स्थितिश्चरमसमय इत्यर्थः ॥ ८३ ॥

(उ०)–तदेवं कृता स्थितिस्थानप्ररूपणा। अथ निषेकप्ररूपणावसरः। तत्र द्वे अनुयोगद्वारे–अनन्तरोपनिधा, परम्परोपनिधा च। तत्रानन्तरोपनिधामाश्रित्याह—सर्वस्मिन्नपि कर्मणि बध्यमाने स्वस्वमबाधाकालं मुक्त्वा तदूर्ध्वं दलिकनिक्षेपं करोति। तत्र प्रथमायां स्थितौ समयलक्षणायां बहुतरं द्रव्यं कर्मदलिकं निषिञ्चति। इतः प्रथमस्थितेरूर्ध्वं द्वितीयादिस्थितिषु समयसमयप्रमाणासु विशेषहीनं विशेषहीनं कर्मदलिकं निषिञ्चति। एवं च तावद्वाच्यं यावत्तत्तत्समयबध्यमानकर्मणामुत्कृष्टा स्थितिश्चरमसमय इत्यर्थः। एष चाबाधां मुक्त्वा दलिकनिषेकविधिरायुर्वर्जकर्मणां ज्ञेयः। आयुषस्तु प्रथमसमयादारभ्य दलिकरचना प्रवर्त्तते। प्रथमसमय एवायुषः प्रभूत-दलिकनिषेकः, द्वितीयादिसमयेषु तु यथोत्तरं विशेषहीनो यावच्चरमसमय इति पञ्चसंग्रहोक्तमिति द्रष्टव्यम् ॥८३॥

**पल्लासंखियभागं गंतुं दुगुणूणमेवमुक्कोसा। नाणंतराणि पल्लस्स मूलभागो असंखतमो ॥ ८४ ॥**

(चू०)—'पल्लासंखियभाग गंतुं दुगुणूणमेव उक्कस्स'त्ति–परंपरोवणिहियाए अबाहं मोत्तूण जं पढमसमए पदेसग्गं णिसत्तं ततो पढम समयाओ पलिओवमस्स असंखेज्जत्तिभागमेत्तीओ ठिती गंतूण जा ठिती तीए पदेसग्गं दुगुणहीणं भवति। ततो पुणो तत्तियं चेव गंतूणं दुगुणहीणं भवति। एवं जाव उक्कस्सियाए ठितीए

ताव णेयव्वं। 'णाणंतराणि पल्लस्स मूलभागो असंखतमो'त्ति-जाणि अंतरंतरे उवट्ठिताणि ताणि दुगुणहाणि ठाणाणि पलिओवमवग्गमूलस्स असंखेज्जतिभागमेत्ताणि। णाणापदेसगुणहाणिठाणंतराणि थोवाणि, एगंतरे ठितिठाणाणि असंखेज्जगुणाणि। एवं णिसेगपरूवणाए सुत्तत्थो भणितो।

इयाणिं विभागेण भण्णइ-तत्थ णिसेगपरूवणाए इमाणि दुवे अणुओगद्दाराणि। तंजहा-अणंतरोवणिहिता, परंपरोवणिहिता य। तत्थ अणंतरोवणिहिताए पंचेंदियाणं सण्णीणं मिच्छदिट्ठीणं पज्जत्तगाणं णाणावरणीयदंसणावरणीयवेयणीयअंतराइयाणं तिन्नि वाससहस्साणि अवाहं मोत्तूण जं पढमसमए पदेसग्गं णिसित्तं तं बहुगं, बितियसमए विसेसहीणं, ततियसमए विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव उक्कोसेण तीसं सागरोवमकोडाकोडीउत्ति। पंचदियाणं सण्णीणं मिच्छदिट्ठीणं पज्जत्तगाणं मोहणिज्जस्स सत्तवाससहस्साणि अवाहं मोत्तूणं जं पढमसमए पदेसग्गं णिसित्तं तं बहुगं, वितियसमए विसेसहीणं, ततियसमए विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव उक्कोसेण सत्तरि सागरोपमकोडाकोडीउत्ति। पंचेंदियाणं सण्णीणं मिच्छदिट्ठीणं पज्जत्तगाणं आउगस्स पुव्वकोडितिभागं अवाहं मोत्तूणं जं पढमसमए पदेसग्गं णिसित्तं तं बहुगं, वितिए विसेसहीणं, ततिए विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव उक्कोसेणं तेत्तीससागरोवमाणीत्ति। पंचिंदियाणं सण्णीण मिच्छादिट्ठीणं पज्जत्तगाणं णामगोयाणं बे वाससहस्साणि अवाहं मोत्तूण जं पढमसमए पदेसग्गं णिसित्तं तं बहुगं, वितियसमये विसेसहीणं, ततिए विसेसहीणं, एवं जाव उक्कोसेणं वीससागरोवमकोडाकोडी-

उत्ति। पंचिंदियाणं सण्णीणं अपज्जत्तगाणं आउअवज्जाणं सत्तण्हं कम्माणं अंतोमुहुत्तं अबाहं मोत्तूणं जं पढमसमए पदेसग्गं निसित्तं तं बहुयं, बितियसमये विसेसहीणं, ततिए विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव उक्कोसेणं अंतोकोडाकोडिउत्ति। पंचिंदियाणं असण्णीणं चतुरिंदियतिइन्दियबिइन्दियबादरएगिन्दियअपज्जत्तगाणं सुहुमएगिंदियपज्जत्तअपज्जत्तगाणं च आउस्स अंतोमुहुत्तं अबाहं मोत्तूणं जं पढमसमये पदेसग्गं णिसित्तं तं बहुगं, बितियसमये विसेसहीणं, ततिय समये विसेसहीणं, एवं विसेसहीणं विसेसहीण जाव उक्कोसेणं पुव्वकोडित्ति। पंचिंदियाणं असण्णीणं पज्जत्तगाणं आउअवज्जाणं सत्तण्हं कम्माणं अंतोमुहुत्तं अबाहं मोत्तूणं जं पढमसमये पदेसग्गं णिसित्तं तं बहुत्तं, बितियसमये विसेसहीणं, ततिय समये विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव सागरोपमसहस्स तिण्णि सत्त भागा, सत्त सत्त भागा, बिसत्तभागा पडिपुण्णत्ति। पंचिंदियाणं असण्णीणं पज्जत्तगाण आउअस्स पुव्वकोडितिभागं मोत्तणं अबाहं जं पढमसमए पदेसग्गं णिसित्तं तं बहुतं, बितियसमये विसेसहीणं, ततियसमए विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव उक्कोसेण पलिओवमस्स असंखिज्जतिभागो। पंचिंदियाणं असण्णीणं चउरिंदियाणं तेइन्दियाणं बेइन्दियाणं अपज्जत्तगाणं आउअवज्जाणं सत्तण्हं कम्माणं अंतोमुहुत्तं अबाहं मोत्तूणं जं पढमसमए पदेसग्गं णिसित्तं तं बहुगं, बितियसमए विसेसहीणं, ततियसमए विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव उक्कोसेण सागरोवमसहस्स, सागरोवमसतस्स, सागरोवमपण्णास्साए, सागरोपमपणुविसाए, तिण्णि सत्तभागा, सत्त सत्तभागा, बिसत्तभागा, पलिओवमस्स

असंखेज्जतिभागेण उणयत्ति। चउरिंदियाणं तेइंदियाणं बेइंदियाणं बादरएगिंदियाणं पज्जत्तगाणं आउगवज्जाण सत्तण्हं कम्माणं अबाहं मोत्तूणं जं पढमसमए पदेसग्गं णिसित्तं तं बहुतं, बितिए विसेसहीणं, ततिए विसेसहीणं, एवं विसेसहीणं विसेसहीणं जावुक्कोसेण सागरोवमसतस्स, सागरोवमपण्णासाए, सागरोवमपणुवीसाए, सागरोवमस्स य तिण्णि सत्तभागा सत्त सत्तभागा, वि सत्तभागा, पडिपुण्णत्ति। चउरिंदिया तेइंदियबेइन्दियबायरएगिंदियपज्जत्तगाणं, आउगस्स बे मासा, सोलस राइंदियाणि साइरेगाणि, चत्तारि वासाणि, सत्तवासहस्साणि सातिरेगाणि अबाहं मोत्तूणं जं पढमसमए णिसित्तं तं बहुगं, बितिय समये विसेसहीणं, ततिय समये विसेसहीणं, एवं विसेसहीणं विसेसहीणं जाव उक्कोसेण पुव्वकोडित्ति। बादरएगिंदियाणं अपज्जत्तगाणं सुहुमएगिंदिअपज्जत्तअपज्जत्तगाणं:आउगवज्जाणं सत्तण्हं कम्माणं अंतोमुहुत्तं अबाहं मोत्तूणं जं पढमसमए णिसित्तं तं बहुत्तं, बितिए विसेसहीणं, ततिए विसेसहीणं एवं विसेसहीणं विसेसहीणं जाव उक्कोसेण सागरोवमस्स तिण्णि सत्तभागा सत्तसत्तभागा बे सत्तभागा पलितोवमस्स असंखेज्जतिभागेण ऊणियत्ति। परंपरोवणिहिताए पंचिंदियाणं सण्णीणं असण्णीणं पज्जत्तगाणं अट्ठण्हं कम्माणं, पंचिंदियाणं सण्णीणं असण्णीणं अपज्जत्तगाणं चउरिंदियतेइंदियवेइंदियबायरेगिंदियाणं सुहुमएगिंदियाणं पज्जत्तगापज्जत्तगाणं आउगवज्जाणं सत्तण्हं कम्माणं (अबाहं मोत्तूण) पढमसमए (जाइं) पदेसग्गाओ (इं) ततो पलिओवमस्स असंखेज्जइभागं गंतूण दुगुणहीणं पदेसग्गं। ततो पुणो तत्तियं चेव गंतूण दुगुणहीणं पदेसग्गं। ततो पुणो तत्तियं चेव गंतूण

दुगुणहीणं पदेसग्गं। एवं दुगुणहीणं दुगुणहीणं जाव अप्पप्पणोक्कस्सिगा ठिती। एगं पदेसगुणहाणिठाणंतरं असंखेज्जाणि पलितोवमवग्गमूलाणि। णाणापदेसगुणहाणिठाणंतराणि पलिओवमवग्गमूलस्स असंखेज्जइभागो। णाणापदेसगुणहाणिठाणंतराणि थोवाणि, एगं पदेसगुणहाणिट्ठाणंतरं असंखेज्जगुणं। एवं णिसेगपरूवणा समत्ता ॥८४॥

(मलय०)—कृताऽनन्तरोपनिधाप्ररूपणा, सम्प्रति परम्परोपनिधाप्ररूपणार्थमाह—'पल्ल'त्ति। अबाधाकालादूर्ध्वं प्रथमस्थितौ यन्निषिक्तं कर्मदलिकं तदपेक्षया द्वितीयादिषु स्थितिषु समयसमयरूपासु विशेषहीनं विशेषहीनतरं दलिकमारच्यमाणं पल्योपमासंख्येयभागमात्रासु स्थितिष्वतिक्रान्तासु दलिकं द्विगुणोनं भवति, अर्धं भवतीत्यर्थः। ततः पुनरप्यत ऊर्द्धमेतदपेक्षया विशेषहीनं विशेषहीनतरं दलिकमारच्यमानं पल्योपमासंख्येयभागमात्रासु स्थितिष्वतिक्रान्तासु दलिकं द्विगुणोनं भवति। ततः पुनरप्यत ऊर्ध्वमेतदपेक्षया विशेषहीनं विशेषहीनतरं दलिकमारच्यमाणं पल्योपमासंख्येयभागमात्रप्रमाणासु स्थितिष्वतिक्रान्तासु अर्धं भवति। एवमर्धार्धहान्या तावद्वाच्यं यावदुत्कृष्टा स्थितिः—स्थितेश्चरमसमय इत्यर्थः। कियन्ति पुनरेवं द्विगुणहानिस्थानानि भवन्ति? इत्येतन्निरूपणार्थमाह—'नाणंतराणि' इत्यादि। नानाप्रकाराणि, यान्यन्तराणि-अन्तरान्तरा द्विगुणहानिस्थानानि भवन्ति, तान्युत्कृष्टस्थितिबन्धे पल्योपमस्य संबन्धिनः प्रथमवर्गमूलस्यासंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि भवन्ति। उक्तं च—"[1]पलिओवमस्स मूला असंखभागम्मि जत्तिया समया। तावइया हाणीओ ठिइबंधुक्कोसए नेया॥" ननु मिथ्यात्वमोहनीयस्योत्कृष्टस्थितेः सप्ततिसागरोपमकोटीकोटीप्रमाणत्वादेतावत्यो

१ पञ्चसंग्रहस्य पञ्चमद्वारे गा० ५२

स्थितिबन्धप्ररूपणा.

हानयः संभवन्तु, आयुपस्तूत्कृष्टस्थितेस्त्रयस्त्रिंशत्सागरोपमसमयमात्रत्वात् कथमेतावत्यो हानयः संभवन्तीति ? उच्यते–इहासंख्येयतमो भागोऽसंख्येयभेदात्मकः, असंख्यातस्यासंख्यातभेदभिन्नत्वात् । ततः पल्योपमप्रथमवर्गमूलस्यासंख्येयतमो भाग आयुष्यतीवाल्पतरो गृह्यते इत्यविरोधः । तथा सर्वाणि द्विगुणहानिस्थानानि स्तोकानि, एकस्मिन् द्विगुणहान्योरन्तरे निपेकस्थानानि असंख्येयगुणानि इति ॥

(उ०)—कृताऽनन्तरोपनिधाप्ररूपणा । अथ परम्परोपनिधाप्ररूपणायाह—अबाधाकालादूर्ध्वं प्रथमस्थितौ यन्निपिक्तं कर्मदलिकं तदपेक्षया द्वितीयादिस्थितिपु समयसमयमानासु विशेपहीनं विशेपहीनं विधीयमानं दलिकं पल्योपमासंख्येयभागं गत्वा–तावन्मात्रासु स्थितिष्वतिक्रान्तास्वित्यर्थः, द्विगुणोनं भवत्यर्धं भवतीत्यर्थः । तत ऊर्ध्वं भूयोऽपि विशेपहीनं दलिकमारच्यमानं पल्योपमासंख्येयभागमात्रासु स्थितिष्वतिक्रान्तास्वर्धं भवति । एवमर्धार्धहान्या तावद्वाच्यं यावदुत्कृष्टा स्थितिः–स्थितेश्चरमसमय इत्यर्थः । कियन्ति पुनरेवं द्विगुणहानिस्थानानि भवन्ति? इत्याह–'नाणंतराणि'इत्यादि । नानाप्रकाराणि यान्यन्तराणि–अन्तरा जातानि द्विगुणहानिस्थानानि तान्युत्कृष्टस्थितिबन्धे पल्योपमस्य सम्बन्धिनः प्रथमवर्गमूलस्यासंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि भवन्ति । ननु मिथ्यात्वस्योत्कृष्टस्थितेः सप्ततिसागरोपमकोटाकोटीप्रमाणत्वादेतावत्यो हानय उत्पद्यन्तां, आयुपस्तूत्कृष्टस्थितेस्त्रयस्त्रिंशत्सागरोपमप्रमाणत्वात्कथमेतावत्यो हानयो युज्यन्ते ? इति चेत्, सत्यम्, असंख्येयतमो भाग इहासंख्येयभेदात्मकोऽसंख्यातस्यासंख्यातभेदभिन्नत्वात् । ततः पल्योपमप्रथमवर्गमूलस्यासंख्येयतमो भाग आयुष्यतीवाल्पतरो गृह्यत इति न दोपः । तथा सर्वाणि द्विगुणहानिस्थानानि स्तोकानि, एकस्मिन् द्विगुणहान्योरन्तरे निपेकस्थनान्यसंख्येयगुणानि ॥८४॥

इयाणिं अबाहाकंडगपरूवणा भण्णइ—

**मोत्तूण आउगाइं समए समए अबाहहाणीए। पल्लासंखियभागं कंडं कुण अप्पबहुमेसिं ॥ ८५ ॥**

(चू०)—आउगाणि मोत्तूणं सेसाणं सव्वकम्माणं उक्कस्सिगाए अबाहाए वट्टमाणो उक्कस्सट्ठितिं वा समयूणं वा बिसमयूणं वा जाव पलिओवमस्स असंखेज्जभागूणं वा ठिइ बन्धइ। जइ अबाहा एगेण समएण ऊणा तो णियमादेव पलिओवमस्स असंखेज्जतिभागमेत्तेणं कंडगेणं ऊणियं उक्कोसियं ठितिं बन्धइ। समयूणाए अबाहाए वट्टमाणो हिट्ठिल्लं कंडगं समयूणं पि बिसमयूणं पि तिसमयूणं पि जाव पलिओवमस्स असंखेज्जतिभागूणं पि ठितिं बन्धइ। जइ दोहिं समएहिं ऊणा अबाहा भवति तो णियमा दोहिं कंडगेहिं ऊणियं ठितिं बन्धइ। एवं जत्तिएहिं समएहिं ऊणिया अबाहा भवति तत्तिएहिं कंडगेहिं णियमादेव ऊणियं ठितिं बन्धति। एवं जाव जहण्णिया अबाहत्ति ताव। एवं एगिंदियाइणं सव्वेसिं समाणं। अबाहाकंडगपरूवणा भणिता। इयाणिं अप्पाबहुगं भण्णइ—'अप्पबहुमेसिं'ति—तेसिं अप्पाबहुगं भाणियव्वं ॥८५॥

(मलय०)—कृता निषेकप्ररूपणा, सम्प्रत्यबाधाकण्डकप्ररूपणार्थमाह—'मोत्तूण'त्ति। आयूंषि चत्वार्यपि मुक्त्वा शेषाणां सर्वेषामपि कर्मणामबाधाहानौ समये समये पल्योपमासंख्येयभागलक्षणां कण्डकमुत्कृष्टस्थितेः सकाशाद्धीनं करोति। तथाहि—उत्कृष्टायामबाधायां वर्तमानो जीवः स्थितिमुत्कृष्टां बध्नाति परिपूर्णामेकसमयहीनां वा, एवं यावत्पल्योपमासंख्येयभागहीनां वा। यदि पुनरुत्कृष्टाऽबाधा एकेन समयेन हीना भवेत्ततो नियमात्पल्योपमासंख्येयभागमात्रेण कण्डकेन हीनामेवोत्कृष्टां स्थितिं बध्नाति। तामप्येकसमयहीनां वा

द्विसमयहीनां वा यावत्पल्योपमासंख्येयभागहीनां वा । यदि पुनर्द्वाभ्यां हीनोत्कृष्टाऽबाधा भवेत्ततो नियमात्पल्योपमासंख्येयभागलक्ष-
णकण्टकद्वयहीनामेवोत्कृष्टां स्थितिं बध्नाति । तामप्येकसमयहीनां वा यावत्पल्योपमासंख्येयभागहीनां वा । एवं यतिभिः समयैरूना-
ऽबाधा भवति ततिभिरेव कण्डकैः पल्योपमासंख्येयभागलक्षणैरूना स्थितिर्द्रष्टव्या । यावदेकत्र जघन्याऽबाधा भवति, अन्यत्र च जघन्या
स्थितिः । तदेवमबाधागतसमयसमयहान्या स्थितेः कण्डकहानिप्ररूपणा कृता । सम्प्रत्यल्पबहुत्वप्ररूपणार्थमाह—'अप्पबहुमेसिं' एषां
वक्ष्यमाणानामल्पबहुत्वं वक्तव्यम् ॥ ८५ ॥

(उ०)—कृता निषेकप्ररूपणा । सम्प्रत्यबाधाकण्डकं प्ररूपयन्नाह—आयूंषि चत्वार्यपि मुक्त्वा शेषाणां सर्वेषामपि कर्मणामबाधाहानौ
समये समये पल्योपमासंख्येयलक्षणं कण्डकं कुरु, उत्कृष्टस्थितेः सकाशाद्धीनमिति शेषः । इदमुक्तं भवति—उत्कृष्टायामबाधायां वर्त्त-
मानो जीव उत्कृष्टां स्थितिं बध्नाति परिपूर्णामेकसमयहीनां वा । एकसमयहीनायां तूत्कृष्टाबाधायां नियमात्पल्योपमासंख्येयभागहीना-
मेवोत्कृष्टां स्थितिं बध्नाति, तामप्येकसमयहीनां वा यावत्पल्योपमासंख्येयभागहीनां वा । द्विसमयहीनायां तूत्कृष्टाबाधायां नियमा-
त्कण्टकद्वयहीनामेवोत्कृष्टां स्थितिं बध्नाति । तामप्येकसमयहीनां वा यावत्पल्योपमासंख्येयभागहीनां वा । एवं यावद्भिः समयैरू-
नाऽबाधा भवति तावद्भिरेव कण्डकैः स्थितिन्यूनता द्रष्टव्या यावज्जघन्याऽबाधा जघन्या च स्थितिरायाति । तदेवमबाधागतसमयहान्या
स्थितेः कण्टकहानिः प्ररूपिता । अथाल्पबहुत्वं प्ररूपयन्नाह—'अप्पबहुमेसिं'—एषां वक्ष्यमाणानामल्पबहुत्वं वक्तव्यम् ॥८५॥

कयरेसिं ? भण्णइ—

**बंधाबाहाणुक्कसियरं कण्डकअबाहबंधाणं । ठाणाणि एक्कनाणंतराणि अत्थेण कंडं च ॥ ८६ ॥**

(चू०)—'बन्धाबाहाणुक्कस्सियर'ति–उक्कस्सतो बन्धो, जहण्णतो बन्धो, उक्कसिता अबाहा, जहण्णिया अबाहा। 'कंडगअबाहबन्धाणं ठाणाणि'त्ति–अबाहाकंडगठाणाणि, अबाहाठाणाणि, ठितिबन्धठाणाणि। 'एक्कनाणंतराणि'त्ति–एगगुणहाणिअन्तरं, णाणागुणहाणिअन्तराणि। 'अत्थेणकंड'ति–एगं अबाहाकंडगपरिमाणं च। एताणि दसत्थगाणं आउगवज्जाणं सत्तण्हं कम्माणं ठाणाणि। एतेसिं अत्थापत्तीए अप्पाबहुगं भाणियव्वं। तं जहा–पंचिंदियाणं सण्णीणं पज्जत्तगापज्जत्तगाणं आउगवज्जाणं सत्तण्हं कम्माणं सव्वत्थोवा जहण्णिगा अबाहा, सा य अन्तोमुहुत्तमेत्ता। ततो अबाहाट्ठाणाणि अबाहाकंडगाणि च दोवी तुल्लाणि असंखेज्जगुणाणि। किं कारणं? भण्णइ–तिण्हं वाससहस्साणं जहण्णाबाहूणाणं जत्तिया समया तत्तियाणि य अबाहाठाणाणि अबाहाकंडगाणि यत्ति काउं। ततो उक्कोस्सिता अबाहा विसेसाहिया, जहण्णाबाहसहियत्ति काउं। ततो णाणापदेसगुणहाणिठाणंतराणि असंखेज्जगुणाणि पलिओवमवग्गमूलस्स असंखेज्जति भागोत्ति काउं। एगं पदेसगुणहाणिठाणंतरं असंखेज्जगुणं, असंखेज्जाणि पलिओवमवग्गमूलाणित्ति काउं। ततो एगं अबाहाकंडगं असंखेज्जगुणं। किं कारणं? भण्णइ–तिण्हं वाससहस्साणं जहण्णाबाहूणाणं जत्तिया समया तत्तिमो भागो जहण्णगठिती ऊणाए उवरिल्लीए ठितीए एगं अबाहाकंडगत्ति काउं। ततो जहण्णगो ठितिबन्धो असंखेज्जगुणो अन्तोसागरोवमकोडाकोडित्ति काउं। ततो ठितिबंधट्ठाणाणि संखेज्जगुणाणि, जहण्णगट्ठितिऊणा (सव्वा) ट्ठितित्ति काउं। ततो उक्कोसिया ठिती विसेसाहिया, जहण्णगट्ठितीए अबाहाए य सहियत्ति काउं।

पंचिंदियाणं सण्णीणं असण्णीणं पज्जत्तगाणं आउगस्स सव्वत्थोवा जहण्णिया अवाहा, सा य असंखिज्जद्धा।[1]
ततो जहण्णगो ठितिबंधो संखेज्जगुणो, सो य खुड्डागभवोत्ति काउं। ततो अवाहाट्ठाणाणि संखेज्जगुणाणि, पुव्व-
कोटितिभागो जहण्णावाहूणोत्ति काउं। उक्कस्सिया अवाहा विसेसाहिया, जहण्णावाहासहियत्ति काउं। ततो
णाणापदेसगुणहाणिट्ठाणंतराणि असंखेज्जगुणाणि, कारणं पुव्वुत्तं। ततो एगं गुणहाणिट्ठाणंतरं असंखेज्जगुणं,
कारणं पुव्वुत्तं। ततो ठितिबंधट्ठाणाणि असंखेज्जगुणाणि, जहण्णगट्ठितिहीणा सव्वाट्ठितित्ति काउं। ततो उक्को-
सगो ठितिबंधो विसेसाहितो, जहण्णगट्ठितिसहिउत्ति काउं।

पंचिंदियाणं सण्णीणं असण्णीणं अपज्जत्तगाणं चउरिंदियाणं तेइंदियाणं वेइंदियाणं बादरएगिंदियाणं सुहु-
मेगिंदियाणं पज्जत्तापज्जत्तगाणं आउगस्स सव्वत्थोवा जहण्णगा अवाहा, सा य असंखिज्जद्धा। जहण्णगो ठिति-
बंधो संखेज्जगुणो, खुड्डागभवगहणं ति काउं। अवाहाठाणाणि संखेज्जगुणाणि। उक्कस्सिता अवाहा विसेसा-
हिया। ठितिबन्धट्ठाणाणि संखेज्जगुणाणि, पुव्वकोडि जहण्णगट्ठितिऊणत्ति काउं। उक्कस्सगो ठितिबन्धो
विसेसाहितो।

पंचिंदियाणं असण्णीणं चउरिंदियाणं तेइंदियाणं वेइंदियाणं पज्जत्तापज्जत्तगाणं आउगवज्जाणं सत्तण्हं कम्माणं
अबाहाट्ठाणाणि अवाहाकण्डगाणि वि दो वि तुल्लाणि सव्वत्थोवाणि। ताणि य आवलियाए असंखेज्जत्ति-

[1] क्षुल्लकभवत्रिभागरूपा

भागमेत्ताणि। ततो जहण्णिया अबाहासंखेज्जगुणा अन्तोमुहुत्तमिति काउं। उक्कस्सगा अबाहा विसेसाहिया, जहण्णिया अबाहा सहियत्ति काउं। ततो णाणापदेसगुणहाणि ठाणन्तराणि असंखेज्जगुणाणि। ततो एगं पदेसगुणहाणिट्ठाणंतरं असंखेज्जगुणं। ततो एगं अबाहाकण्डगं असंखेज्जगुणं। ततो ठितिबन्धट्ठाणाणि असंखेज्जगुणाणि, पलिओवमस्स संखेज्जतिभागमिति काउं। जहण्णगो ठितिबन्धो संखेज्जगुणो। उक्कस्सिता ठिति विसेसाहिता।

एगिंदियाणं सुहुमाणं बादराणं पज्जत्तअपज्जत्तगाणं आउगवज्जाणं सत्ताणं कम्माणं अबाहाठाणाणि अबाहा कण्डगाणि दोवि तुल्लाणि सव्वथोवाणि। ताणि आवलियाए असंखेज्जतिभागमेत्ताणि। जहण्णिया अबाहा असंखेज्जगुणा, अन्तोमुहुत्तमिति काउं। उक्कस्सिता अबाहा विसेसाहिता, जहण्णअबाहा सहियत्ति काउं। णाणंतराणि असंखेज्जगुणाणि। एगं पदेसगुणहाणिट्ठाणंतरं असंखेज्जगुणं। एगं अबाहं कण्डगं असंखेज्जगुणं। ततो ठितिबंधट्ठाणाणि असंखेज्जगुणाणि। जहण्णगो ठितिबंधो असंखिज्जगुणो। उक्कस्सगो ठितिबधो विसेसाहिओ। अप्पाबहुयं गतं॥ ८६॥

(मलय०)—केषाम्? इति चेत्, तानेवाह—'बध' त्ति। 'बंधाबाहाणुक्कसियरं' ति—उत्कृष्टः स्थितिबन्धो, जघन्यः स्थितिबन्धः, उत्कृष्टाऽबाधा, जघन्याऽबाधा। 'कण्डकअबाहबंधाणं ठाणाणि' त्ति—कण्डकस्थानानि अबाधास्थानानि स्थितिबन्धस्थानानि च। 'एक्कनाणंतराणि' त्ति—एकं द्विगुणहान्योरन्तरं, नानारूपाणि चान्तराणि द्विगुणहानिस्थानरूपाणि। 'अत्थेण कण्डं च' त्ति—'जघन्याऽबाधाहीनया उत्कृ-

ष्टाऽबाधया जघन्यास्थितिहीनाया उत्कृष्टस्थितेर्भागे हृते सति यावान् भागो लभ्यते तावान् अर्थेन कण्डकमित्युच्यते'इत्याम्नायिका व्याख्यानयन्ति, चः समुच्चये। पञ्चसंग्रहे पुनरेतस्य स्थानेऽबाधाकण्डकस्थानानीत्युक्तम्। तत्र चैवं मूलटीकाकारेण व्याख्या कृता—"अबाधा च कण्डकानि चाबाधाकण्डकं, समाहारो द्वन्द्वः, तस्य स्थानानि अबाधाकण्डकस्थानानि, तयोर्द्वयोरपि स्थानसंख्येत्यर्थः"।

एतेषां दशानां स्थानानामल्पबहुत्वमुच्यते—तत्र संज्ञिपञ्चेन्द्रियेषु पर्याप्तेषु अपर्याप्तकेषु वा बन्धकेषु आयुर्वर्जानां सप्तानां कर्मणां सर्वस्तोका जघन्याऽबाधा, सा चान्तर्मुहूर्तप्रमाणा। ततोऽबाधास्थानानि कण्डकस्थानानि चासंख्येयगुणानि, तानि तु परस्परं तुल्यानि। तथाहि—जघन्यामबाधामादिं कृत्वोत्कृष्टाऽबाधाचरमसमयमभिव्याप्य यावन्तः समयाः प्राप्यन्ते तावन्त्यबाधास्थानानि भवन्ति। तद्यथा—जघन्याऽबाधा एकमबाधास्थानं, सैव समयाधिका द्वितीयम्, द्विसमयाधिका तृतीयम्, एवं तावद्वाच्यं यावदुत्कृष्टाबाधाचरमसमयः। एतावन्त्येव चाबाधाकण्डकानि, जघन्याबाधात आरभ्य समयं समयं प्रति कण्डकस्य प्राप्यमाणत्वात्। एतच्च प्रागेवोक्तम्। तेभ्य उत्कृष्टाबाधा विशेषाधिका, जघन्याबाधायास्तत्र प्रवेशात्। ततो दलिकनिषेकविधौ द्विगुणहानिस्थानानि असंख्येयगुणानि, पल्योपमप्रथमवर्गमूलासंख्येयभागगतसमयप्रमाणत्वात्। तत एकस्मिन् द्विगुणहान्योरन्तरे निषेकस्थानान्यसंख्येयगुणानि, तेषामसंख्येयानि पल्योपमवर्गमूलानि परिमाणमिति कृत्वा। तेभ्योऽपि अर्थेन कण्डकमसंख्येयगुणम्। तस्माज्जघन्यः स्थितिबन्धोऽसंख्येयगुणः, अन्तःसागरोपमकोटीकोटीप्रमाणत्वात्। संज्ञिपञ्चेन्द्रिया हि श्रेणिमनारूढा जघन्यतोऽपि स्थितिबन्धमन्तःसागरोपमकोटीकोटीप्रमाणमेव कुर्वन्ति। ततोऽपि स्थितिबन्धस्थानानि संख्येयगुणानि। तत्र ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामेकोनत्रिंशद्गुणानि समधिकानि, मिथ्यात्वमोहनीयस्यकोनसप्ततिगुणानि समधिकानि। नामगोत्रयोरेकोनविंशतिगुणानि समधिकानीति। तेभ्य उत्कृष्टा स्थितिर्विशेषाधिका, जघ-

न्यस्थितेरबाधायाश्च तत्र प्रवेशात् ।

तथा संज्ञिपञ्चेन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेषु वा पर्याप्तकेषु प्रत्येकमायुषो जघन्याऽबाधा सर्वस्तोका । ततो जघन्यः स्थितिबन्धः संख्येयगुणः, स च क्षुल्लकभवरूपः । ततोऽबाधास्थानानि संख्येयगुणानि, जघन्याबाधारहितः पूर्वकोटीत्रिभाग इति कृत्वा । ततोऽप्युत्कृष्टाऽबाधा विशेषाधिका, जघन्याबाधाया अपि तत्र प्रवेशात् । ततो द्विगुणहानिस्थानान्यसंख्येयगुणानि, पल्योपमप्रथमवर्गमूलासंख्येयभागगतसमयप्रमाणत्वात् । तेभ्योऽप्येकस्मिन् द्विगुणहान्योरन्तरे निषेकस्थानान्यसंख्येयगुणानि । तत्र युक्तिः प्रागुक्तावगन्तव्या । ततः स्थितिबन्धस्थानान्यसंख्येयगुणानि । तेभ्योऽप्युत्कृष्टः स्थितिबन्धो विशेषाधिकः, जघन्यस्थितेरबाधायाश्च तत्र प्रवेशात् ।

तथा पञ्चेन्द्रियेषु संज्ञिष्वसंज्ञिष्वपर्याप्तेषु चतुरिन्द्रियत्रीन्द्रियद्वीन्द्रियबादरसूक्ष्मैकेन्द्रियेषु च पर्याप्तापर्याप्तेषु प्रत्येकमायुषः सर्वस्तोका जघन्याऽबाधा । ततो जघन्यः स्थितिबन्धः संख्येयगुणः, स च क्षुल्लकभवरूपः । ततोऽबाधास्थानानि संख्येयगुणानि । ततोऽप्युत्कृष्टाऽबाधा विशेषाधिका । ततोऽपि स्थितिबन्धस्थानानि संख्येयगुणानि, जघन्यस्थितिन्यूनपूर्वकोटिप्रमाणत्वात् । तत उत्कृष्टः स्थितिबन्धो विशेषाधिकः, जघन्यस्थितेरबाधायाश्च तत्र प्रवेशात् ।

तथाऽसंज्ञिपञ्चेन्द्रियचतुरिन्द्रियत्रीन्द्रियद्वीन्द्रियसूक्ष्मबादरैकेन्द्रियेषु पर्याप्तापर्याप्तेष्वायुर्वर्जानां सप्तानां कर्मणां प्रत्येकमबाधास्थानानि कण्डकानि च स्तोकानि परस्परं च तुल्यानि, आवलिकाऽसंख्येयभागगतसमयप्रमाणत्वात् । ततो जघन्याऽबाधाऽसंख्येयगुणा, अन्तर्मुहूर्तप्रमाणत्वात् । ततोऽप्युत्कृष्टाऽबाधा विशेषाधिका, जघन्याबाधाया अपि तत्र प्रवेशात् । ततो द्विगुणहीनानि स्थानान्यसंख्येयगुणानि । तत एकस्मिन् द्विगुणहान्योरन्तरे निषेकस्थानान्यसंख्येयगुणानि । ततोऽर्थेन कण्डकमसंख्येयगुणम् । ततोऽपि स्थिति-

बन्धस्थानान्यसंख्येयगुणानि, पल्योपमासंख्येयभागगतसमयप्रमाणत्वात्। ततोऽपि जघन्यस्थितिबन्धोऽसंख्येयगुणः। ततोऽप्युत्कृष्टस्थितिबन्धो विशेषाधिकः, पल्योपमासंख्येयभागेनाभ्यधिकत्वादिति ॥ ८६ ॥

(उ०)—के ते? इति चेत्तानेवाह—बन्धाबाधयोरुत्कृष्टेतरे-उत्कृष्टः स्थितिबन्धो, जघन्यः स्थितिबन्धः, उत्कृष्टाऽबाधा, जघन्याऽबाधा चेत्यर्थः। कण्डकस्थानानि, अबाधास्थानानि, स्थितिबन्धस्थानानि च। 'एक्कनाणंतराणि' त्ति-एकं द्विगुणहान्योरन्तरं नानारूपाणि चान्तराणि द्विगुणहानिस्थानरूपाणि। 'अत्थेण कंडं च' त्ति-जघन्याऽबाधाहीनयोत्कृष्टाबाधया जघन्यस्थितिहीनाया उत्कृष्टस्थितेर्भागे हृते सति यावान् भागो लभ्यते तावानर्थेनकण्डकमित्युच्यते, अर्थेन यथोक्तलक्षणेन कण्डकमित्यलुक्समासाश्रयणात्, इत्याम्नायिका व्याचक्षते। चः समुच्चये। पञ्चसंग्रहे पुनरेतस्य स्थानेऽबाधाकण्डकस्थानानीत्युक्तम्। तत्र चैवं मूलटीकाव्याख्या—अबाहा च कण्डकानि चाबाधाकण्डकं, समाहारो द्वन्द्वः, तस्य स्थानान्यबाधाकण्डकस्थानानि, तयोर्द्वयोरपि स्थानसंख्येत्यर्थः।

एतेषां दशानां स्थानानामल्पबहुत्वमुच्यते—तत्र संज्ञिपञ्चेन्द्रियेषु पर्याप्तेष्वपर्याप्तेषु वा बन्धकेष्वायुर्वर्जानां सप्तानां कर्मणां सर्वस्तोका जघन्याबाधा, आन्तर्मौहूर्त्तिकत्वात्। ततोऽबाधास्थानानि कण्डकस्थानानि चासंख्येयगुणानि, परस्परं तु तानि तुल्यानि, यतो जघन्याबाधात उत्कृष्टाबाधा चरमसमयमभिव्याप्य यावन्तः समयास्तावन्त्यबाधास्थानानि भवन्ति। तथाहि-जघन्याबाधा एकमबाधास्थानं, सैव समयाधिका द्वितीयं, द्विसमयाधिका तृतीयम्, एवं यावदुत्कृष्टाबाधाचरमसमयस्तावद्वाच्यमिति। एतावन्त्येव च कण्डकस्थानानि, उत्कृष्टाबाधायाः समयसमयहानौ उत्कृष्टस्थितेः कण्डककण्डकहानेरुक्तत्वात्। तेभ्य उत्कृष्टाबाधा विशेषाधिका, जघन्याबाधाया अपि तत्र प्रवेशात्। ततो दलिकनिषेकविधौ द्विगुणहानिस्थानान्यसंख्येयगुणानि, पल्योपमप्रथमवर्गमूलासंख्येयभागगतसमय-

प्रमाणत्वात् । तत एकस्मिन् द्विगुणहान्योरन्तरे यानि निषेकस्थितिस्थानानि तान्यसंख्येयगुणानि, तेषामसंख्येयपल्योपमवर्गमूलपरिमाणत्वात्। तेभ्योऽर्थेनकण्डकमसंख्येयगुणम्। तस्माज्जघन्यः स्थितिबन्धोऽसंख्येयगुणः। संज्ञिपंचेन्द्रिया हि श्रेणिमनारूढा जघन्यतोऽपि स्थितिबन्धमन्तःसागरोपमकोटिकोटीप्रमाणमेव कुर्वन्तीति । ततोऽपि स्थितिबन्धस्थानानि संख्येयगुणानि। तत्र ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामेकोनत्रिंशद्गुणानि समधिकानि। मिथ्यात्वमोहनीयस्यकोनसप्ततिगुणानि समधिकानि । नामगोत्रयोश्चैकोनविंशतिगुणानि समधिकानि । तेभ्य उत्कृष्टा स्थितिर्विशेषाधिका, जघन्यस्थितेरबाधायाश्च तत्र प्रवेशात् ।

तथा संज्ञिपंचेन्द्रियेष्वसंज्ञिपंचेन्द्रियेषु वा पर्याप्तेषु प्रत्येकमायुषो जघन्याबाधा सर्वस्तोका। ततो जघन्यः स्थितिबन्धः संख्येयगुणः, स च क्षुल्लकभवरूपः। ततोऽबाधास्थानानि संख्येयगुणानि, जघन्याबाधारहितः पूर्वकोटीत्रिभाग इति कृत्वा। ततोऽप्युत्कृष्टाबाधा विशेषाधिका, जघन्याबाधाया अपि तत्र प्रवेशात्। ततो द्विगुणहानिस्थानान्यसंख्येयगुणानि, पल्योपमप्रथमवर्गमूलासंख्येयभागगतसमयप्रमाणत्वात्। तेभ्योऽप्येकस्मिन् द्विगुणहान्योरन्तरे निषेकस्थानान्यसंख्येयगुणानि प्रागुक्तयुक्तेः। ततः स्थितिबन्धस्थानान्यसंख्येयगुणानि। तेभ्योऽप्युत्कृष्टः स्थितिबन्धो विशेषाधिकः, जघन्यस्थितेरबाधायाश्च तत्र प्रवेशात्। एतत्संज्ञिपञ्चेन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेषु च पर्याप्तेष्वायुषोऽष्टभेदमल्पबहुत्वम् ।

तथा पञ्चेन्द्रियेषु संज्ञिष्वसंज्ञिष्वपर्याप्तेषु चतुरिन्द्रियत्रीन्द्रियद्वीन्द्रियबादरसूक्ष्मैकेन्द्रियेषु च पर्याप्तापर्याप्तेषु प्रत्येकमायुषः सर्वस्तोका जघन्याबाधा १ । ततो जघन्यस्थितिबन्धः संख्येयगुणः २ । स च क्षुल्लकभवरूपः । ततोऽबाधास्थानानि संख्येयगुणानि ३ । ततोऽप्युत्कृष्टाबाधा विशेषाधिका ४ । ततोऽपि स्थितिबन्धस्थानानि संख्येयगुणानि, जघन्यस्थितिन्यूनपूर्वकोटिप्रमाणत्वात् ५ । तत उत्कृष्ट-

स्थितिबन्धो विशेषाधिकः, जघन्यस्थितेरबाधायाश्च तत्र प्रवेशादिति ६। षड्भेदमल्पबहुत्वम्।

तथाऽसंज्ञिपञ्चेन्द्रियचतुरिन्द्रियत्रीन्द्रियद्वीन्द्रियसूक्ष्मबादरैकेन्द्रियेषु पर्याप्तापर्याप्तेष्वायुर्वर्जानां सप्तानां कर्मणां प्रत्येकमबाधास्थानानि कण्डकानि च स्तोकानि, परस्परं च तुल्यानि, आवलिकाऽसंख्येयभागगतसमयप्रमाणत्वात्। ततो जघन्याबाधाऽसंख्येयगुणा, अन्तर्मुहूर्त्तप्रमाणत्वात्। ततोऽप्युत्कृष्टाबाधा विशेषाधिका, जघन्याबाधाया अपि तत्र प्रवेशात्। ततो द्विगुणहानिस्थानान्यसंख्येयगुणानि। तत एकस्मिन् द्विगुणहान्योरन्तरे निषेकस्थानान्यसंख्येयगुणानि। ततोऽर्थेनकण्डकमसंख्येयगुणम्। ततोऽपि स्थितिबन्धस्थानान्यसंख्येयगुणानि, एकेन्द्रियान् शेषजीवांश्चाश्रित्य यथाक्रमं तेषां पल्योपमासंख्येयसंख्येयभागगतसमयप्रमाणत्वात्। ततोऽपि जघन्यः स्थितिबन्धोऽसंख्येयगुणः। ततोऽप्युत्कृष्टस्थितिबन्धो विशेषाधिकः, एकेन्द्रियाणां पल्योपमासंख्येयभागेन शेषजीवानां पल्योपमसंख्येयभागेनाभ्यधिकत्वादिति ॥८६॥

इयाणिं ठितिबंधज्झवसाणट्ठाणपरूवणा भण्णइ—तत्थ तिण्णि अणुओगद्दाराणि। तं जहा—ठितिसमुदाहारो, पगइसमुदाहारो, जीवसमुदाहारो। ठितिसमुदाहारोत्ति—तत्थ इमाणि तिण्णि अणुओगदाराणि। तं जहा—पगणणा, अणुकड्ढी, तिव्वमंदता। तत्थ पगणणाए—

ठिइबंधे ठिइबंधे अज्झवसाणाणसंखिया लोगा। हस्सा विसेसवुड्ढी आऊणमसंखगुणवुड्ढी ॥८७॥

(चू०)—णाणावरणियस्स जहण्णिगाए ठितीए ठितीबंधज्झवसाणाणि असंखेज्जलोगागासपदेसमेत्ताणि। बितियाए ठितिए [जाव] असंखेज्जलोगागासपदेसमेत्ताणि। ततियाए ठितिए असंखेज्जलोगागासपदेसमेत्ताणि।

एवं जाव उक्कस्सिया ठितित्ति। एवं सत्तण्हवि कम्माणं। तेसिं अज्झवसाणट्ठाणाणं दुविहा वड्ढिपरूवणता–अणंतरोवणिहिता परंपरोवणिहिता य। तत्थ अणंतरोवणिहिताए 'हस्सा विसेसवुड्ढि'त्ति–णाणावरणिज्जस्स जहण्णियाए ठितिए ठितिबंधज्झवसाणठाणाणि थोवाणि। बितियाए ठितिए ठितिबंधज्झवसाणठाणाणि विसेसाहियाणि। ततियाए ठितिए ठितिबंधज्झवसाणठाणाणि विसेसाहियाणि। एवं विसेसाहियाणि विसेसाहियाणि जाव उक्कस्सगा ठितित्ति। एवं आउगवज्जाणं सत्तण्हं कम्माणं। 'आऊणमसंखगुणवुड्ढि'त्ति–आउगस्स जहण्णिगाए ठितिए ठितिबंधज्झवसाणट्ठाणाणि थोवाणि। बितियाए असंखेज्जगुणाणि। ततियाए असंखेज्जगुणाणि। एवं जाव उक्कस्सिता ठितित्ति ॥८७॥

(मलय०)—तदेवमुक्तमल्पबहुत्वम्, इदानीं स्थितिबन्धाध्यवसायस्थानप्ररूपणा कर्त्तव्या। तत्र च त्रीण्यनुयोगद्वाराणि। तद्यथा–स्थितिसमुदाहारः, प्रकृतिसमुदाहारः, जीवसमुदाहारश्च। समुदाहारः प्रतिपादनम्। तत्र स्थितिसमुदाहारेऽपि त्रीण्यनुयोगद्वाराणि। तद्यथा–प्रगणना, अनुकृष्टिः, तीव्रमन्दता च। तत्र प्रगणनाप्ररूपणार्थमाह–'ठिइबंधे' त्ति। इह सर्वेषामपि कर्मणां जघन्यस्थितेः परत उत्कृष्टस्थितेश्चरमसमयमभिव्याप्य यावन्तः समयास्तावन्ति स्थितिस्थानानि जघन्यस्थितिसहितानि प्रत्येकं भवन्ति। एकैकस्मिंश्च स्थितिस्थाने बध्यमाने तद्बन्धहेतुभूताः काषायिका अध्यवसाया नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणा अवगन्तव्याः। अत्र च द्वेधा प्ररूपणा। तद्यथा–अनन्तरोपनिधया परम्परोपनिधया च। तत्रान्तरोपनिधया प्ररूपणामाह–'हस्सा विसेसवुड्ढी'। आयुर्वर्जानां कर्मणां ह्रस्वात् जघन्यात् स्थितिबन्धात् परतो द्वितीयादिषु स्थितिस्थानबन्धेषु 'विशेषवृद्धिः'–विशेषाधिका वृद्धिरवसेया। तद्यथा–ज्ञा-

नावरणीयस्य जघन्यस्थितौ तद्बन्धहेतुभूता अध्यवसाया नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणाः। ते चान्यापेक्षया सर्वस्तोकाः। ततो द्वितीयस्थितौ विशेषाधिकाः, ततोऽपि तृतीयस्थितौ विशेषाधिकाः, एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः। एवं सर्वेष्वपि कर्मसु वाच्यम्। 'आऊगमसंखगुणवुड्ढी'–आयुषां जघन्यस्थितेरारभ्य प्रतिस्थितिबन्धमसंख्येयगुणवृद्धिर्वक्तव्या। तद्यथा–आयुषो जघन्यस्थितौ तद्बन्धहेतुभूता अध्यवसाया असंख्येयलोकाकाशप्रदेशप्रमाणाः, ते च सर्वस्तोकाः, ततो द्वितीयस्थितौ असंख्येयगुणाः, ततोऽपि तृतीयस्थितावसंख्येयगुणाः। एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः॥ ८७॥

(उ०)—तदेवमुक्तमल्पबहुत्वम्। अथ स्थितिबन्धाध्यवसायस्थानप्ररूपणा कर्त्तव्या। तत्र त्रीण्यनुयोगद्वाराणि–स्थितिसमुदाहारः प्रकृतिसमुदाहारो जीवसमुदाहारश्च। समुदाहारः प्रतिपादनम्। तत्र स्थितिसमुदाहारेऽपि त्रीण्यनुयोगद्वाराणि–प्रगणना, अनुकृष्टिः, तीव्रमन्दता च। तत्र प्रगणनाप्ररूपणायाह–परत उत्कृष्टस्थितेश्चरमसमयमभिव्याप्य यावन्तः समयास्तावन्ति स्थितिस्थानानि जघन्यस्थितिसहितानि प्रत्येकं भवन्ति। एकैकस्मिंश्च स्थितिस्थाने बध्यमाने तद्बन्धहेतुभूताः काषायिका अध्यवसाया नानाजीवापेक्षयाऽसंख्यलोकाकाशप्रदेशप्रमाणा भवन्ति। अत्र च द्वेधा प्ररूपणाऽनन्तरोपनिधया, परम्परोपनिधया च। तत्रानन्तरोपनिधया प्ररूपणामाह—'ठस्सा विसेसवुड्ढी'। आयुर्वर्जानां कर्मणां ह्रस्वात्–जघन्यात्स्थितिबन्धात् परतो द्वितीयादिषु स्थितिबन्धस्थानेषु विशेषवृद्धिः–विशेषाधिका वृद्धिरवसेया। तथाहि–ज्ञानावरणस्य जघन्यस्थितौ तद्बन्धहेतुभूता अध्यवसाया नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणाः, ते चान्यापेक्षया सर्वस्तोकाः, ततो द्वितीयस्थितौ विशेषाधिकाः, ततोऽपि तृतीयस्थितौ विशेषाधिकाः। एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः। एवं सर्वेष्वपि कर्मसु वाच्यम्। 'आऊणमसंखगुणवुड्ढी'–आयुषां जघन्यस्थितेरारभ्य प्रतिस्थितिबन्धमसंख्येयगुणवृद्धिर्वक्तव्या।

तथाहि—आयुषो जघन्यस्थितौ तद्बन्धहेतुभूता अध्यवसाया असंख्येयलोकाकाशप्रदेशप्रमाणाः, ते चान्यापेक्षया सर्वस्तोकाः। ततो द्वितीयस्थितावसंख्येयगुणाः। ततोऽपि तृतीयस्थितावसंख्येयगुणाः। एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः। स्यादेतत्—इहैकस्यामपि स्थितौ यद्यध्यवसायस्थानान्यसंख्येयानि परस्परविचित्राण्यभ्युपगम्यन्ते तदा स्थितेरपि वैचित्र्यं प्राप्नोति, मैवं, विचित्राणामपि नानाध्यवसायानामविचित्रैकस्थितिजननशक्तिमत्त्वेनोक्तदोषाभावात्। स्थित्यवैचित्र्येऽध्यवसायवैचित्र्यमेव न स्यादिति चेन्न, स्थितिहेतुभूताध्यवसायवैचित्र्ये स्थितिवैचित्र्यस्यानियामकत्वात् देशकालरसविभागवैचित्र्यस्यैव तत्र नियामकत्वात्। अस्तु वाऽध्यवसायवैचित्र्यनिबन्धनादेशादिवैचित्र्यादेकस्याः स्थितेरपि वैचित्र्यं, समयसमयमात्रापगमनेन प्रतिसमयमन्यथात्वप्रतिपत्त्या वाऽसंख्येयसमयात्मिकाया एकस्या अपि स्थितेर्वैचित्र्यम्, एकस्यापि वस्तुनः कथञ्चिद्विचित्राविचित्रत्वाभ्युपगमे स्याद्वादस्यैव शरणत्वात्। तदिदमुक्तं—"[1]असंखलोगखपएसतुलया हीणमज्झिमुकोसा। ठिइबन्धज्झवसाया ठितीए विसेसा असंखिज्जा ॥१॥" इति कृतं प्रसङ्गेन ॥८७॥

परंपरोवणिहित्ति—

**पल्लासंखियभागं गंतुं दुगुणाणि जाव उक्कस्सा। नाणंतराणि अंगुलमूलच्छेयणमसंखतमो ॥८८॥**

(चू०)—परंपरोवणिहियाए णाणावरणिज्जस्स जहण्णियाए ठितिबंधज्झवसाणट्ठाणेहिंतो पलिओवमस्स असंखेज्जइभागं गंतूणं दुगुणवड्ढियाणि अज्झवसाणट्ठाणाणि। ततो पुणो पलिओवमस्स असंखेज्जइभागं गंतूणं दुगुणवड्ढि। एवं दुगुणवड्ढिता दुगुणवड्ढिता जाव उक्कस्सिता ठितित्ति। एवं ठितिबंधज्झवसाणठाणंतरं असंखेज्जाणि

१ पञ्चसंग्रहे पञ्चमद्वारे गा० ५८

पलिओवमवग्गमूलाणि। 'णाणंतराणि अंगुलमूलच्छेयणमसंखतमो'त्ति। णाणागुणट्ठितिवंधज्झवसाणट्ठाणंतराणि अंगुलवग्गमूलच्छेयणगाणं असंखेज्जतिमो भागो। 'अंगुलमूलच्छेयणग'त्ति–अंगुलवग्गमूलं छण्णउत्तिच्छेदणगविहीए ताव छिज्जति जाव भागं ण देति तेसिं छेदणगाणं असंखेज्जतिभागो जावतिओ तावइयाणि णाणागुणहाणिट्ठाणंतराणि थोवाणि। एगं ठितिवंधज्झवसाणगुणहाणिट्ठाणंतरं असंखेज्जगुणं सत्तण्हं कम्माणं।

अणुकट्ठीए णाणावरणिज्जस्स जहण्णियाठितिए जाणि ठितिवंधज्झवसाणट्ठाणाणि तेहिंतो वितियाए ठितीए अपुव्वाणि, एवं अपुव्वाणि अपुव्वाणि जाव उक्कस्सियाए ठितीए अपुव्वाणि ठितिवंधज्झवसाणट्ठाणाणि। एवं सव्वकम्माणं॥

एदाणि तिव्वमंदया सा टप्पा। पगतिसमुदाहारो भण्णइ–तत्थ दुवे अणुओगदाराणि–पमाणाणुगमो अप्पाबहुगं च। पमाणाणुगमेणं णाणावरणिज्जस्स असंखेज्जलोगागासपदेसमेत्ताणि ठितिवंधज्झवसाणट्ठाणाणि सव्वट्ठितीणं। एवं सव्वकम्माणं ॥८८॥

(मलय०)—तदेवं कृताऽनन्तरोपनिधया प्ररूपणा। सम्प्रति परम्परोपनिधया तां करोति—'पल्ल'त्ति। आयुर्वर्जानां सप्तानां कर्मणां जघन्यस्थितौ यान्यध्यवसायस्थानानि तेभ्यः पल्योपमासंख्येयभागमात्राः स्थितीरतिक्रम्य परस्मिन्ननन्तरे स्थितिस्थाने द्विगुणान्यध्यवसायस्थानानि भवन्ति। तेभ्योऽपि पल्योपमासंख्येयभागमात्राः स्थितीरतिक्रम्यानन्तरे स्थितिस्थाने द्विगुणान्यध्यवसायस्थानानि भवन्ति। एवं द्विगुणवृद्धिस्तावद्वक्तव्या यावदुत्कृष्टा स्थितिरिति। एकस्मिन् द्विगुणवृद्ध्योरन्तरे स्थितिस्थानानि पल्योपमवर्गमूलान्य-

संख्येयानि। नानाद्विगुणवृद्धिस्थानानि चाङ्गुलवर्गमूलच्छेदनकासंख्येयतमभागप्रमाणानि। एतदुक्तं भवति–अङ्गुलमात्रक्षेत्रगतप्रदेशराशेर्यत् प्रथमं वर्गमूलं तन्मनुष्यप्रमाणहेतुराशिपण्णवतिच्छेदनकविधिना तावच्छिद्यते यावद्भागं न प्रयच्छति। तेषां च च्छेदनकानामसंख्येयतमे भागे यावन्ति च्छेदनकानि तावत्सु यावानाकाशप्रदेशराशिस्तावत्प्रमाणानि नानाद्विगुणस्थानानि भवन्तीति तदेव कृता प्रगणना। साम्प्रतमल्पुक्कृष्टिश्चिन्त्यते। सा च न विद्यते। तथाहि–ज्ञानावरणीयस्य जघन्यस्थितिबन्धे यान्यध्यवसायस्थानानि, तेभ्यो द्वितीयस्थितिबन्धेऽन्यानि, तेभ्योऽपि तृतीयस्थितिबन्धेऽन्यानि, एवं तावद्वाच्यं यावदुत्कृष्टा स्थितिः। एवं सर्वेषामपि कर्मणां द्रष्टव्यम्। इदानीं तीव्रमन्दता वक्तुमवसरप्राप्ता, सा स्थाप्या, अग्रे वक्ष्यमाणत्वात्। तदेवमभिहितः स्थितिसमुदाहारः। सम्प्रति प्रकृतिसमुदाहार उच्यते। तत्र च द्वे अनुयोगद्वारे। तद्यथा- प्रमाणानुगमः, अल्पबहुत्वं च। तत्र प्रमाणानुगमे ज्ञानावरणीयस्य सर्वेषु स्थितिबन्धेषु कियन्त्यध्यवसायस्थानानि ? उच्यते–असंख्येयलोकाकाशप्रदेशप्रमाणानि। एवं सर्वकर्मणामपि द्रष्टव्यम् ॥ ८८ ॥

(उ०)—तदेवं कृताऽनन्तरोपनिधया प्ररूपणा, अथ परम्परोपनिधया तामाह—आयुर्वर्जानां सप्तानां कर्मणां जघन्यस्थितौ यान्यध्यवसायस्थानानि तेभ्यः पल्योपमासंख्येयभागं गत्वा तावन्मात्राः स्थितीरतिक्रम्य यदनन्तरं स्थितिस्थानमायाति तत्र द्विगुणान्यध्यवसायस्थानानि भवन्ति। तेभ्योऽपि पल्योपमासंख्येयभागमात्रस्थितीरतिक्रम्यानन्तरभाविनि स्थितिस्थाने द्विगुणान्यध्यवसायस्थानानि भवन्ति। एवमुपर्युपरि द्विगुणवृद्धिस्तावद्वाच्या यावदुत्कृष्टा स्थितिः। एकस्मिन् द्विगुणवृद्धयोरन्तरे स्थितिस्थानानि पल्योपमवर्गमूलान्यसंख्येयानि, नानान्तराणि द्विगुणवृद्धिस्थानानि अङ्गुलवर्गमूलच्छेदनकासंख्येयतमभागप्रमाणानि। अङ्गुलमात्रक्षेत्रगतप्रदेशराशेर्यत्प्रथमं वर्गमूलं तन्मनुष्यप्रमाणहेतुराशिपण्णवतिच्छेदनकविधिना तावच्छिद्यते यावत्भागं न दत्ते। तेषां च च्छेदनकानामसंख्येयतमे भागे याव-

न्ति च्छेदनकानि तावत्तु यावानाकाशप्रदेशराशिस्तावन्ति नानाद्विगुणस्थानानीत्यर्थः। तदेवं कृता प्रगणाना। अथानुकृष्टिर्वाच्या। सा च नास्ति, ज्ञानावरणादिकर्मणां यानि प्राक्तनस्थितिबन्धेऽध्यवसायस्थानानि तेषामग्रेतनस्थितिबन्धे लेशेनाप्यनुवृत्त्यभावात् प्रतिस्थितिबन्धमन्यान्याध्यवसायस्थानानामेव सद्भावात्। अतः परं तीव्रमन्दता वक्तुमवसरप्राप्ता, सा स्थाप्या, अग्रे वक्ष्यमाणत्वात्। तदेवमभिहितः स्थितिसमुदाहारः। सम्प्रति प्रकृतिसमुदाहार उच्यते–तत्र च द्वे अनुयोगद्वारे–प्रमाणानुगमोऽल्पबहुत्वं च। तत्र प्रमाणानुगमः संख्याप्ररूपणम्। तत्र ज्ञानावरणीयस्य सर्वेषु स्थितिबन्धेषु कियन्त्यध्यवसायस्थानानि ? उच्यते–असंख्येयलोकाकाशप्रदेशप्रमाणानि। एवं सर्वेषामपि कर्मणां द्रष्टव्यम् ॥८८॥

अप्पाबहुगंति–

ठिइदीहयाइ कमसो असंखगुणिया अणंतगुणणाए। पढमजहन्नुक्कस्सं बिइयजहन्नाइआचरमा ॥८९॥

(चू०)—सव्वत्थोवाणि आउगस्स ठितिबंधज्झवसाणट्ठाणाणि। णामगोयाणं ठिति(बंधज्झवसाणाणि) असंखेज्जगुणाणि। आउगस्स ठितिबन्धे अज्झवसाणठाणाणं वड्ढी असंखेज्जगुणा दिट्ठा, णामगोयाणं विसेसाहिगा दिट्ठा, एत्थ कहं असंखेज्जगुणा ? भण्णइ–आउगस्स जहण्णियाए ठितीए अज्झवसाणट्ठाणाणि अतिबहुगाणित्ति (थोवाणित्ति) काउं, तेण आउगस्स थोवाणि आदिउत्तरं गच्छति, सेसाण वासंखेज्जा। णाणावरणदंसणावरणवेयणिज्जअंतराइयाणं असंखेज्जगुणाणि। कहं ? भण्णइ–पलिओवमस्स असंखेज्जतिभागंगंतूणं दुगुणवड्ढी दिट्ठा। एवं एक्केक्कस्स पलिओवमस्स अंते असंखेज्जगुणाणि लब्भंति। मोहणिज्जस्स ठितिबंध-

ज्झवसाणट्ठाणाणि असंखेज्जगुणाणि। पगतिसमुदाहारो भणितो। इदाणिं ठितिसमुदाहारे तिव्वमंदया ण भणिता, सा भण्णति–'अणंतगुणणाए पढमजहन्नुक्कोसं बितियजहण्णादि आ चरिमा'त्ति–णाणावरणीयस्स जहण्णियाए ठितीए जहण्णयं ठितिबंधज्झवसाणट्ठाणं सव्वमंदाणुभागं। तस्सेवुक्कस्सयं अणंतगुणं। बितियाए जहन्नतं ठितिबंधज्झवसाणट्ठाणं अणंतगुणं। तस्सेवुक्कस्सयं अणंतगुणं। एवं ततियाए जहण्णयं ठितिबन्धज्झवसायट्ठाणं अणंतगुणं, तस्सेवुक्कोसं अणंतगुणं। एवं अणंतगुणं जाव उक्कस्सिता ठितित्ति। ठितिसमुदाहारो भणितो ॥८९॥

(मलय०)—इदानीमल्पबहुत्वमभिधातुकाम आह–'ठिइदीहयाए'त्ति–स्थितिदीर्घतया 'क्रमशः'–क्रमेणाध्यवसायस्थानान्यसंख्येयगुणानिवक्तव्यानि। यस्य यतः क्रमेण दीर्घा स्थितिस्तस्य ततः क्रमेणाध्यवसायस्थानान्यसंख्येयगुणानि वक्तव्यानीत्यर्थः। तथाहि–सर्वस्तोकान्यायुषः स्थितिबन्धाध्यवसायस्थानानि। तेभ्योऽपि नामगोत्रयोरसंख्येयगुणानि। नन्वायुषः स्थितिस्थानेषु यथोत्तरमसंख्येयगुणा वृद्धिः, नामगोत्रयोस्तु विशेषाधिका, तत्कथमायुरपेक्षया नामगोत्रयोरसंख्येयगुणानि भवन्ति? उच्यते–आयुषो जघन्यस्थितावध्यवसायस्थानान्यतीव स्तोकानि, नामगोत्रयोः पुनर्जघन्यायां स्थितौ अतिप्रभूतानि, स्तोकानि चायुषः स्थितिस्थानानि, नामगोत्रयोस्त्वतिप्रभूतानि, ततो न कश्चिद्दोषः। नामगोत्रसत्कस्थितिबन्धाध्यवसायस्थानेभ्यो ज्ञानावरणीयदर्शनावरणीयवेदनीयान्तरायाणां स्थितिबन्धाध्यवसायस्थानान्यसंख्येयगुणानि। कथम्? इति चेद्, उच्यते–इह पल्योपमासंख्येयभागमात्रासु स्थितिष्वतिक्रान्तासु द्विगुणवृद्धिरुपलब्धा। तथा च सत्येकैकस्यापि पल्योपमस्यान्तेऽसंख्येयगुणानि लभ्यन्ते किं पुनर्दशसागरोपमकोटीकोटयन्ते इति। तेभ्योऽपि

कषायमोहनीयस्य स्थितिबन्धाध्यवसायस्थानान्यसंख्येयगुणानि । तेभ्योऽपि दर्शनमोहनीयस्य स्थितिबन्धाध्यवसायस्थानान्यसंख्येयगुणानि । उक्तः प्रकृतिसमुदाहारः। सम्प्रति स्थितिसमुदाहारे या प्राक् तीव्रमन्दता नोक्ता साऽभिधीयते—'अणंते' त्यादि । प्रथमायां स्थितौ जघन्यं स्थितिबन्धाध्यवसायस्थानम् । ततस्तस्यामेवोत्कृष्टम् । ततो द्वितीयस्थितौ जघन्यम् । एवमादि आचरमात्—उत्कृष्टस्थितौ चरमं स्थितिबन्धाध्यवसायस्थानं यावत्क्रमेणानन्तगुणतया वक्तव्यम् । तद्यथा—ज्ञानावरणीयस्य जघन्यस्थितौ जघन्यस्थितिबन्धाध्यवसायस्थानं सर्वमन्दानुभावम् । ततस्तस्यामेव जघन्यस्थितौ उत्कृष्टमध्यवसायस्थानमनन्तगुणम् । ततोऽपि द्वितियस्थितौ जघन्यं स्थितिबन्धाध्यवसायस्थानमनन्तगुणम् । ततोऽपि तस्यामेव द्वितीयस्थितौ उत्कृष्टमनन्तगुणम् । एवं प्रतिस्थिति जघन्यमुत्कृष्टं च स्थितिबन्धाध्यवसायस्थानमनन्तगुणतया तावद्वक्तव्यं यावदुत्कृष्टायां स्थितौ चरमं स्थितिबन्धाध्यवसायस्थानमनन्तगुणम् ॥ ८९ ॥

(९०)—इदानीमल्पबहुत्वमाह—स्थितिदीर्घतया क्रमशः—क्रमेणाध्यवसायस्थानान्यसंख्येयगुणानि वक्तव्यानि । तथाहि—सर्वस्तोकान्यायुषः स्थितिबन्धाध्यवसायस्थानानि। तेभ्यो नामगोत्रयोरसंख्येयगुणानि । नन्वायुषः स्थितिस्थानेषु यथोत्तरमसंख्येयगुणवृद्धिः, नामगोत्रयोस्तु विशेषाधिकेति कथमायुरपेक्षया नामगोत्रयोरसंख्येयगुणान्यध्यवसायस्थानानि ? इति चेत्, सत्यम् , आयुषो जघन्यस्थितौ यावन्त्यध्यवसायस्थानानि तेभ्यो नामगोत्रयोर्जघन्यस्थितावतीव प्रभूतानि, नामगोत्रयोः स्थितिस्थानानि अपि चायुषः स्थितिस्थानापेक्षयाऽतिप्रभूतानीति न कश्चिद्दोषः । नामगोत्रस्थितिबन्धाध्यवसायस्थानेभ्यो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धाध्यवसायस्थानान्यसंख्येयगुणानि, पल्योपमासंख्येयभागमात्रस्थित्यतिक्रमे द्विगुणवृद्धिलाभादेकस्यापि पल्योपमस्यान्तेऽसंख्येयगुणत्वसिद्धौ दशसागरोपमकोटीकोटयन्ते सुतरामसंख्येयगुणत्वसिद्धेः । तेभ्योपि कषायमोहनीयस्थितिबन्धाध्यवसायस्थानान्यसंख्येयगुणानि । ते-

भ्योऽपि दर्शनमोहनीयस्थितिबन्धाध्यवसायस्थानान्यसंख्येयगुणानि । उक्तः प्रकृतिसमुदाहारः । अथ स्थितिसमुदाहारे या प्राक् तीव्रमन्दता नोक्ता सा कथ्यते–'अणंतगुणणाए' इत्यादि । प्रथमायां स्थितौ जघन्यं स्थितिबन्धाध्यवसायस्थानं, ततस्तस्यामेवोत्कृष्टं, ततो द्वितीयस्थितौ जघन्यं । एवमाद्याचरमादुत्कृष्टस्थितौ चरमस्थितिबन्धाध्यवसायस्थानं यावत्क्रमेणानन्तगुणतया वक्तव्यम् । तथाहि–ज्ञानावरणीयस्य जघन्यस्थितौ जघन्यम् स्थितिबन्धाध्यवसास्थानं सर्वमन्दानुभावम् । ततस्तस्यामेव जघन्यस्थितावुत्कृष्टमध्यवसायस्थानमनन्तगुणम् । ततो द्वितीयस्थितौ जघन्यमध्यवसायस्थानमनन्तगुणम् । ततस्तस्यामेव द्वितीयस्थितावुत्कृष्टमनन्तगुणम् । एवं प्रतिस्थिति जघन्यमुत्कृष्टं चानन्तगुणं तावद्वाच्यं यावदुत्कृष्टायां स्थितौ चरमं स्थितिबन्धाध्यवसायस्थानमनन्तगुणम् । तदेवं स्थितिप्रकृतिसमुदाहारौ निरवशेषावुक्तौ ॥ ८९ ॥

इयाणिं जीवसमुदाहारो—

**बंधंता धुवपगडी परित्तमाणगसुहाण तिविहरसं। चउतिगबिट्ठाणगयं विवरीयतिगं च असुभाणं॥९०॥**

(चू०)—एवं णाणावरणदंसणावरणमिच्छत्तं सोलस कसाय भयं दुगंछा तेजोकम्मइगा वण्णगंधरसफासअगुरुलहुय उवघाय णिम्मेण पंचण्हं अंतराइयाणं एयासिं सत्तचत्तालीसाए धुवपगतीणं बंधंता । 'परित्तमाणिग सुभाण तिविहरस'त्ति–सातवि(वेयणिज्ज)देवगतिमणुयगतिपंचिंदियजातिउरालियवेउव्वियआहारसरीरसमचउरंसवज्जरिसभति[णिण]अंगोवंगमणुयदेवाणुपुव्वीउपराघातउस्सासआतपउज्जोवपसत्थविहायोगतितसादिदसगं तित्थगरं तिण्णिआउगाणि उच्चागोयंति एयाओ सुभपरियत्तमाणिगातो । सेसातो असुभपरियत्तमा-

णिगाओ एतासिं च सुभाणं परियत्तमाणिगाणं तिविहं अणुभागं वंधंति। के ते तिविहा रसा? भण्णइ–'चउणिगाओ परियत्तमाणिगाओ वज्झंति तासिं अणुभागं विवरीयं वंधति। 'विवरीयं तिगं च असुभाण'ति–विवरीयं असुभाणं विट्ठाणिगं वा तिट्ठाणिगं वा चउट्ठाणिगं वा रसं वन्धति ॥९०॥

(मलय०)-तदेवं स्थितिसमुदाहारोऽपि निरवशेष उक्तः, प्रकृतिसमुदाहारश्च। सम्प्रति जीवसमुदाहारमभिधित्सुराह—'वंधंता'त्ति–इह ध्रुवबन्धिनीव्यतिरिक्ताः सर्वा अपि प्रकृतयः परावर्त्तमानाः विवक्षिताः। तत्र ज्ञानावरणीयपञ्चकदर्शनावरणीयनवकमिथ्यात्वषोडशकषायभयजुगुप्सातैजसकार्मणवर्णगन्धरसस्पर्शागुरुलघूपघातनिर्माणान्तरायपञ्चकलक्षणाः सप्तचत्वारिंशत्संख्या ध्रुवप्रकृतीर्बध्नन्तः परावर्त्तमानशुभप्रकृतीनां सातवेदनीयदेवगतिमनुजगतिपञ्चेन्द्रियजातिवक्रियाहारकौदारिकशरीरसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननाङ्गोपाङ्गत्रयमनुजानुपूर्व्वीदेवानुपूर्व्वीपराघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसादिदशकतीर्थकरनामनरकायुर्वर्जशेषायुष्कत्रयोच्चैर्गोत्रलक्षणानां चतुस्त्रिंशत्संख्यानां 'त्रिविधं'–त्रिप्रकारम्, तद्यथा–चतुःस्थानगतं, त्रिस्थानगतं, द्विस्थानगतं चरममनुभागं बध्नन्ति। इह शुभप्रकृतीनां रसः क्षीरादिरसोपमः। अशुभप्रकृतीनां तु घोषातकीनिम्बादिरसोपमः। उक्तं च–"घोसाडइनिंबुवमो असुभाण सुभाण खीरखंडुवमो" इति। क्षीरादिरसश्च स्वाभाविक एकस्थानिक उच्यते। द्वयोस्तु कर्पयोरावर्तने कृते सति योऽवशिष्यते एकः कर्पः स द्विस्थानिकः। त्रयाणां कर्पाणामावर्तने कृते सति य उद्धरित एकः कर्पः स त्रिस्थानगतः। चतुर्णां तु कर्पाणामावर्तने कृते सति योऽवशिष्टः एकः कर्पः स चतुःस्थानगतः। एकस्थानगतोऽपि रसो जललवबिन्दुचुलुकप्रसृत्यञ्जलिकरककुम्भद्रोणादिषु प्रक्षेपात् मन्दमन्दतराद्य-

संख्यभेदत्वं प्रतिपद्यते। एवं द्विस्थानगतादिष्वपि रसेष्वसंख्येयभेदत्वं वाच्यम्। एतदनुसारेण च कर्मणामपि रसेष्वेकस्थानगतत्वादि स्वधिया परिभावनीयम्। एकस्थानगताच्च रसात् कर्मणां द्विस्थानगतादयो रसा यथोत्तरमनन्तगुणा वाच्याः। तदुक्तं–"अणंतगुणिय कमेणियरे"। तथा केवलज्ञानावरणवर्जानां चतुर्णां ज्ञानावरणीयानां, केवलदर्शनावरणवर्जानां त्रयाणां चक्षुरादिदर्शनावरणीयानाम्, पुरुषवेदसंज्वलनचतुष्टयान्तरायपञ्चकानां च सर्वसंख्यया सप्तदशप्रकृतीनां बन्धमाश्रित्य चतुर्धापि रसः सम्भवति। तद्यथा–एकस्थानगतो द्विस्थानगतस्त्रिस्थानगतश्चतुःस्थानगतश्च। शेषाणां तु शुभप्रकृतीनामशुभप्रकृतीनां वा द्विस्थानगतः त्रिस्थानगतश्चतुःस्थानगतश्च, न तु कदाचनाप्येकस्थानगत इति वस्तुस्थितिः। तत्र शुभप्रकृतीनां चतुःस्थानगतादिक्रमेण रसस्य त्रैविध्यं प्रतिपाद्य सम्प्रत्यशुभप्रकृतीनां रसस्य त्रैविध्यमाह–'विवरीयतिगं च असुभाणं'। ता एव ध्रुवप्रकृतीर्बध्नन्तो यदि परावर्तमाना अशुभप्रकृतीर्बध्नन्ति तदा तासामनुभागं 'विपरीतत्रिकं'–विपरीतं त्रिक यस्य स तथा तं बध्नन्ति, तद्यथा–द्विस्थानगतं त्रिस्थानगतं चतुःस्थानगतं च। इह ध्रुवप्रकृतीनां जघन्यां स्थितिं बध्नन् परावर्तमानशुभप्रकृतीनां बन्धमागतानां चतुःस्थानगतं रसं बध्नाति, अत एव अशुभपरावर्तमानप्रकृतीनां तु द्विस्थानगतम्। अजघन्यां च ध्रुवप्रकृतीनां स्थितिं बध्नन् परावर्तमानानां शुभप्रकृतीनामशुभप्रकृतीनां वा यथायोगं बन्धमागतानां त्रिस्थानगतं रसं बध्नाति। उत्कृष्टां च स्थितिं ध्रुवप्रकृतीनां बध्नन् शुभप्रकृतीनां द्विस्थानगतम्, अशुभप्रकृतीनां चतुःस्थानगतं रसं बध्नाति। ततः शुभप्रकृतीगतरसत्रैविध्यक्रमापेक्षयाऽशुभप्रकृतीनां रसत्रैविध्यक्रमस्य वैपरीत्यमुक्तम् ॥९०॥

(उ०)–अथ जीवसमुदाहारमभिधित्सुराह—ध्रुवप्रकृतीर्ज्ञानावरणीयपञ्चकदर्शनावरणीयनवकमिथ्यात्वषोडशकषायभयजुगुप्सातैजसकार्मणवर्णगन्धरसस्पर्शागुरुलघूपघातनिर्माणान्तरायपञ्चकलक्षणाः सप्तचत्वारिंशद्बध्नन्तः परावर्तमानकशुभप्रकृतीनां सातवेदनीयदेवग-

तिमनुजगतिपञ्चेन्द्रियजातिवैक्रियाहारकौदारिकशरीराद्यसंस्थानसंहननाङ्गोपाङ्गत्रयमनुजानुपूर्वीदेवानुपूर्वीपराघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसादिदशकतीर्थकरनामनरकायुर्वर्जायुस्त्रयोच्चैर्गोत्रलक्षणानां चतुस्त्रिंशत्संख्यानां चतुःस्थानगतं त्रिस्थानगतं द्विस्थानगतं चेति त्रिविधं–त्रिप्रकार रसं बध्नन्ति । यदि च ता एव ध्रुवप्रकृतीर्बध्नन्तोऽसातवेदनीयवेदत्रयहास्यरत्यरतिशोकनरकायुर्नरकद्विकतिर्यग्द्विकाद्यजातिचतुष्टयानाद्यसंस्थानसंहननाप्रशस्तविहायोगतिस्थावरादिदशकनीचैर्गोत्ररूपा एकोनचत्वारिंशत्संख्याः परावर्त्तमाना अशुभप्रकृतीर्बध्नन्ति तदा तासामनुभागं विपरीतं त्रिकं यस्य स विपरीतत्रिकस्तं बध्नन्ति । इह ध्रुवप्रकृतीनां जघन्यां स्थितिं बन्धन् शुभप्रकृतीनां बन्धप्राप्तानामनुभागं चतुःस्थानगतं बध्नाति, अशुभप्रकृतीनां तु द्विस्थानगतम्। अजघन्यां च ध्रुवप्रकृतीनां स्थितिं बन्धन् शुभप्रकृतीनामशुभप्रकृतीनां च यथायोगं बन्धप्राप्तानां त्रिस्थानगतमनुभागं बन्धन्ति। उत्कृष्टानां च ध्रुवप्रकृतीनां स्थितिं बध्नन् शुभप्रकृतीनां द्विस्थानगतं, अशुभप्रकृतीनां च चतुःस्थानगतं रसं बध्नाति । ततः शुभप्रकृतिगतरसत्रैविध्यक्रमापेक्षयाऽशुभप्रकृतिरसत्रैविध्यक्रमेण वैपरीत्यमुक्तम् ॥ ९० ॥

परियत्तमाणिगाणं सुभपगतीणं चउट्ठाणिगरसं तिठाणिगरसं बिठाणिगरसं के बंधंति ? भण्णइ–

सव्वविसुद्धा बंधंति मज्झिमा संकिलिट्ठतरगा य। धुवपगडिजहन्नठिइं सव्वविसुद्धा उ बंधंति ॥९१॥
तिट्ठाणे अजहण्णं बिट्ठाणे जेट्ठगं सुभाण कमा। सट्ठाणे उ जहन्नं अजहन्नुक्कोसमियरासिं ॥९२॥

(चू०)—जे सव्वविसुद्धा जीवा ते परियत्तमाणिगाणं सुभपगतीणं चउट्ठाणिगं रसं बंधति, जे वि मज्झिम-

परिणामा जीवा ते परियत्तमाणिगाणं सुभपगतीणं तिट्ठाणियं रसं बंधंति, जे ततो संकिलिट्ठपरिणामया जीवा ते परियत्तमाणिगाणं सुभपगतीणं बिट्ठाणियं रसं बंधंति। (परित्तमाणीणं असुभपगतीणं बिट्ठाणगं तिट्ठाणगं चउट्ठाणगं के बंधंति?) भण्णइ–जे सत्थाणे सव्वविसुद्धपरिणामा जीवा ते परियत्तमाणिगाणं असुभपगतीणं बिट्ठाणियं रसं बंधंति। जे वि मज्झिमपरिणामा जीवा ते परियत्तमाणिगाणं असुभपगईणं तिट्ठाणियं रसं बंधंति। जे संकिलिट्ठपरिणामा जीवा ते परियत्तमाणिगाणं असुभपगतीणं चतुट्ठाणियं रसं बंधंति। धुवपगतीणं जहन्नियं ठितिं के बंधंति? भण्णइ–'धुवपगतिजहण्णट्ठितिं सव्वविसुद्धा उ बंधंति'त्ति। जे सव्वविसुद्धपरिणामा जीवा (सुभपगतीणं चउट्ठाणिगं रसं बंधंति) ते धुवपगतीणं जहण्णियं ठितिं बंधंति। 'तिठाणे अजहण्णं'ति–परियत्तमाणिगाणं सुभपगतीणं तिट्ठाणियं रसं बंधंति जे जीवा ते धुवपगतीणं अजहण्णियं ठितिं बंधंति। 'बिट्ठाणे जेट्ठगं सुभाण कम'त्ति–परियत्तमाणिगाणं सुभपगतीणं बिट्ठाणियं रसं बंधंति जे जीवा ते धुवपगतीणं सट्ठाणे परियत्तमाणिगाण य उक्कोसट्ठितिं बंधंति। 'सट्ठाणे उ जहण्णं अजहन्नुक्कोसमियरासिं' ति–परियत्तमाणिगाणं असुभपगतीणं बिट्ठाणियं रसं बंधंति जे जीवा ते धुवपगतीणं इयरासिं असुभपरियत्तमाणिगाणं च उक्कोसियं ठितिं बंधंति। जे परित्तमाणीणं असुभपगतीणं तिट्ठाणिगरसं बंधंति ते धुवपगतीणं मज्झिमां ठिइ बंधंति। जे परित्तमाणीणं असुभपगतीणं चउट्ठाणियं रसं बंधंति ते धुवपगतीणं उक्कोसियं ठितिं बंधंति॥ ९१–९२॥

(मलय०)—अथ के शुभप्रकृतीनां चतुःस्थानगतं त्रिस्थानगतं द्विस्थानगतं वा रसं बध्नन्ति? उच्यते—'सव्व'त्ति। ये सर्वविशुद्धा जन्तवस्ते परावर्तमानशुभप्रकृतीनां चतुःस्थानगतं रसं बध्नन्ति, ये पुनर्मध्यमपरिणामास्ते त्रिस्थानगतं, संक्लिष्टतरपरिणामास्तु द्विस्थानगतम्। ये पुनस्तद्योग्यभूमिकानुसारेण सर्वविशुद्धाः परावर्तमाना अशुभप्रकृतीर्बध्नन्ति ते तासां द्विस्थानगतं रसं निवर्तयन्ति, मध्यमपरिणामास्त्रिस्थानगतम्, संक्लिष्टतरपरिणामास्तु चतुःस्थानगतम्। 'धुवपगडि' इत्यादि—ये सर्वविशुद्धाः शुभप्रकृतीनां चतुःस्थानगतं रसं बध्नन्ति, ते ध्रुवप्रकृतीनां जघन्यां स्थितिं निवर्तयन्ति। 'तिट्ठाणे' इति षष्ठ्यर्थे सप्तमी, परावर्तमानशुभप्रकृतीनां त्रिस्थानगतस्य रसस्य ये बन्धकास्ते ध्रुवप्रकृतीनां 'अजघन्यां'—मध्यमां स्थिति बध्नन्ति। द्विस्थानगतस्य रसस्य ये बन्धकास्ते ध्रुवप्रकृतीनां 'ज्येष्ठां' उत्कृष्टां स्थिति बध्नन्ति। तथा 'इतरासां'—परावर्तमानाशुभप्रकृतीनां ये द्विस्थानगतं रसं बध्नन्ति ते ध्रुवप्रकृतीनां जघन्यां स्थितिं 'स्वस्थाने'—स्वविशुद्धिभूमिकानुसारेणेत्यर्थः बध्नन्ति। परावर्तमानाशुभप्रकृतिसत्कद्विस्थानगतरसबन्धहेतुविशुद्ध्यनुसारेण जघन्यां स्थितिं बध्नन्ति, न त्वतिजघन्यामित्यर्थः। जघन्यस्थितिबन्धो हि ध्रुवप्रकृतीनामेकान्तविशुद्धौ संभवति, न च तदानीं परावर्तमानाशुभप्रकृतीनां बन्धः संभवति। ये पुनः परावर्तमानाशुभप्रकृतीनां त्रिस्थानगतस्य रसस्य बन्धकास्ते ध्रुवप्रकृतीनामजघन्यां स्थितिं बध्नन्ति। तथा ये परावर्तमानाशुभप्रकृतीनां चतुःस्थानगतं रसं बध्नन्ति ते ध्रुवप्रकृतीनामुत्कृष्टां स्थिति निवर्तयन्ति॥ ९१-९२॥

(उ०)—अथ के शुभप्रकृत्यादीनां चतुःस्थानगतरसादिबन्धका इत्याह—ये सर्वविशुद्धा जन्तवस्ते परावर्त्तमानशुभप्रकृतीनां चतुःस्थानगतरसं बध्नन्ति। ये पुनर्मध्यमपरिणामास्ते त्रिस्थानगतम्। संक्लिष्टतरपरिणामास्तु द्विस्थानगतम्। एवं च ये तद्योग्यभूमिकानुसारेण सर्वशुद्धाः परावर्तमानाशुभप्रकृतीर्बध्नन्ति, ते तासां रसं द्विस्थानगतं बध्नन्ति, मध्यमपरिणामास्त्रिस्थानगतं, संक्लिष्टतरपरिणामास्तु

चतुःस्थानगतमित्यर्थतः सिद्धं द्रष्टव्यम् । ये सर्वविशुद्धाः शुभप्रकृतीनां चतुःस्थानकं रसं बध्नन्ति ते ध्रुवप्रकृतीनां जघन्यां स्थितिं बध्नन्ति । 'तिट्ठाणे' इति षष्ठ्यर्थे सप्तमी । परावर्त्तमानशुभप्रकृतीनां त्रिस्थानगतस्य रसस्य ये बन्धकास्ते ध्रुवप्रकृतीनामजघन्यां-मध्यमां स्थितिं बध्नन्ति । 'बिट्ठाणे'त्ति–शुभप्रकृतीनां द्विस्थानगतरसस्य ये बन्धकास्ते ध्रुवप्रकृतीनां ज्येष्ठामुत्कृष्टां स्थितिं बध्नन्ति । तथा इतरासां–परावर्तमानाशुभप्रकृतीनां ये द्विस्थानगतं रसं बध्नन्ति ते ध्रुवप्रकृतीनां जघन्यां स्थितिं स्वस्थाने–स्वविशुद्धिभूमिकानुरेणेत्यर्थः, बध्नन्ति । परावर्तमानाशुभप्रकृतिगतद्विस्थानकरसबन्धहेतुविशुद्ध्यनुविधायिनी जघन्यां स्थितिं बध्नन्ति, न त्वतिजघन्यामित्यर्थः । ध्रुवप्रकृतीनामतिजघन्यस्थितिबन्धस्यैकान्तविशुद्धौ संभवात्, तदानीं च परावर्तमानाशुभप्रकृतीनां बन्धाभावात् । ये च परावर्तमानाशुभप्रकृतीनां त्रिस्थानगतस्य रसस्य बन्धकास्ते ध्रुवप्रकृतीनामजघन्यां स्थितिं बध्नन्ति । तथा ये परावर्तमानाशुभप्रकृतीनां चतुःस्थानगतं रसं बध्नन्ति ते ध्रुवप्रकृतीनां स्थितिमुत्कृष्टां बध्नन्ति ॥९१–९२॥

तेसिं दुविहा सेढिपरूवणा भण्णइ । तं जहा–अणंतरोवणिहिता, परंपरोवणिहिता य । अणंतरोवणिहिताए—

**थोवा जहन्नियाए होंति विसेसाहिओदहिसयाइं । जीवा विसेसहीणा उदहिसयपुहुत्त मो जाव ॥९३॥**

(चू०)—अणंतरोवणिहिताए सुभपगतीण परियत्तमाणिगाणं चउट्ठाणबन्धगा णाणावरणीयस्स जहण्णिगाए ठितीए जीवा थोवा । बितियाए ठिईए जीवा विसेसाहिया, एवं ततियाए विसेसाहिया । एवं विसेसाहिया जाव सागरोवमसतं ति । 'उदहिसयं'ति–बहूणि सागरोवमाणि । 'जीवा विसेसहीणा उदहिसयपुहुत्त मो जाव'त्ति–तेण परं विसेसहीणा विसेसहीणा जाव सागरोवमसतपुहुत्तं ति । पुहुत्तसद्दो बहुत्तवाची ॥९३॥



॥१९३॥

(मलय०)—इह द्विधा प्ररूपणा–अनन्तरोपनिधया, परम्परोपनिधया च। तत्रानन्तरोपनिधया प्ररूपणामाह—'थोव'त्ति। परावर्तमानानां शुभप्रकृतीनां चतुःस्थानगतरसबन्धकाः सन्तो ज्ञानावरणीयादीनां ध्रुवप्रकृतीनां जघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। द्वितीयस्यां स्थितौ विशेषाधिकाः। ततोऽपि तृतीयस्यां स्थितौ विशेषाधिकाः। एवं तावद्विशेषाधिका वक्तव्या यावत्प्रभूतानि सागरोपमशतान्यतिक्रान्तानि भवन्ति। ततः परं विशेषहीनास्तावद्वक्तव्या यावद्विशेषहानावपि 'उदहिसयपुहुत्तं' ति–प्रभूतानि सागरोपमशतानि भवन्ति। 'मो' इति पादपूरणे। पृथक्त्वशब्दोऽत्र बहुत्ववाची। यदाह चूर्णिकृत्–'पुहुत्तसद्दो बहुत्तवाइत्ति' इति ॥९३॥

(उ०)—इह द्विधा जीवप्ररूपणा–अनन्तरोपनिधया, परंपरोपनिधया च। तत्रानन्तरोपनिधया प्ररूपणामाह–परावर्तमानशुभप्रकृतीनां चतुःस्थानगतरसबन्धकाः सन्तो ध्रुवप्रकृतीनां जघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। द्वितीयस्यां स्थितौ विशेषाधिकाः। ततोऽपि तृतीयस्यां विशेषाधिकाः। एवं तावद्विशेषाधिका वाच्या यावदुदधिशतानि प्रभूतानि सागरोपमशतान्यतिक्रान्तानि भवन्तीत्यर्थः। ततः परं विशेषहीनास्तावद्वाच्या यावत्समयसमयापगमनेन विशेषहानावपि 'उदहिसयपुहुत्तं' ति–प्रभूतानि सागरोपमशतानि भवन्ति। 'मो' इति पादपूरणे। पृथक्त्वशब्दार्थश्चात्र बहुत्वं, 'पुहुत्तसद्दो बहुत्तवाइत्ति' चूर्णिकृद्वचनात् ॥ ९३ ॥

**एवं तिठाणकरा बिठाणकरा य आसुभुक्कोसा। असुभाणं बिट्ठाणे तिचउट्ठाणे य उक्कोसा ॥९४॥**

(चू०)—एवं तिट्ठाणबन्धगजीवा भाणियव्वा। परियत्तमाणिगाणं सुहाणं बिट्ठाणिं बन्धगा [णाणावरणीया] तप्पाउग्गजहण्णिगाए ठितीए जीवा थोवा। बिइयाए ठितीए जीवा विसेसाहीगा, ततियाए विसेसाहिया, एवं विसेसाहिया विसेसाहिया जाव सागरोवमसतंति। तेण परं विसेसहीणा विसेसहीणा 'आसुभुक्कोसं'ति–जाव

परियत्तमाणिगाणं सुभाणं उक्कस्सिगा ठितित्ति। 'असुभाणं बिट्ठाणे तिचउट्ठाणे य उक्कस्स'त्ति-परियत्तमाणिगाणं असुभपगतीणं बिट्ठाणियतिट्ठाणियचउट्ठाणबन्धगा वत्तव्वा। णाणावरणीयस्स सट्ठाण जहण्णिगाए ठितीए जीवा थोवा, वितियाए जीवा विसेसाहिया, ततियाए विसेसाहिया, एवं विसेसाहिया विसेसाहिया जाव सागरोवमसतं ति। तेण परं विसेसहीणा जाव असुभपरियत्तमाणगाणं उक्कोसिया ठितित्ति। एयासु सेढीसु इमाए आगीए जीवा ठावेयव्वा। तत्थ इमा ठवणा। एषा स्थापना विधीयते ॥९४॥

(मलय०)—एवं ति-परावर्तमानानां शुभप्रकृतीनां त्रिस्थानगतं रसं निवतयन्तः सन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततो द्वितीयस्यां स्थितौ विशेषाधिकाः। ततोऽपि तृतीयस्यां स्थितौ विशेषाधिकाः। एवं तावद्वाच्यं यावत्प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। ततः परं विशेपहीना विशेषहीनास्तावद्वक्तव्या यावद्विशेषहानावपि प्रभूतानि सागरोपमशतानि गच्छन्ति। तथा परावर्तमानानां शुभप्रकृतीनां द्विस्थानगतं रसं निवर्तयन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततो द्वितीयस्यां स्थितौ विशेषाधिकाः। ततोऽपि तृतीयस्यां विशेषाधिकाः। एवं तावद्वाच्यं यावत्प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। ततः परं विशेषहीना विशेषहीनास्तावद्वक्तव्या यावद्विशेषहानावपि प्रभूतानि सागरोपमशतानि प्रयान्ति। परावर्तमानशुभप्रकृतीनां च द्विस्थानगतरसबन्धका एवं तावद्वक्तव्या यावत्तासां परावर्तमानशुभप्रकृतीनामुत्कृष्टा स्थितिः, उत्कृष्टस्थितिगतद्विस्थानरसबन्धका इत्यर्थः। 'असुभाणं' इत्यादि अशुभपरावर्तमानप्रकृतीनां प्राग्दर्शितक्रमेण प्रथमतो द्विस्थानगतरसबन्धका वक्तव्याः। ततस्त्रिस्थानगतरसबन्धका वक्तव्याः, ततश्चतुःस्थानगतरसबन्धकाः, ते च तावद्वक्तव्या यावदुत्कृष्टा स्थितिः। इयमत्र

॥१९४॥

भावना—अशुभपरावर्तमानप्रकृतीनां द्विस्थानगतरसवन्धकास्सन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ वन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततो द्वितीयस्यां स्थितौ विशेपाधिकाः। ततोऽपि तृतीयस्यां विशेपाधिकाः। एवं विशेपाधिका विशेपाधिकास्तावद्वक्तव्या यावत्प्रभूतानि सागरोपमशतानि गच्छन्ति। तत परं विशेपहीना विशेपहीनास्तावद्वक्तव्या यावद्विशेपहानावपि प्रभूतानि सागरोपमशतानि यान्ति। अशुभपरावर्तमानप्रकृतीनां त्रिस्थानगतरसवन्धकाः सन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ वन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततो द्वितीयस्यां स्थितौ विशेपाधिकाः। एवं प्रागिव तावद्वाच्यं यावद्विशेपहानावपि प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। तथाऽशुभपरावर्तमानप्रकृतीनां चतुःस्थानगतरसवन्धकाः सन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ वन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततो द्वितीयस्यां स्थितौ विशेपाधिकाः। ततोऽपि तृतीयस्यां स्थितौ विशेपाधिकाः। एवं तावद्वाच्यं यावत्प्रभूतानि सागरोपमशतानि गच्छन्ति। ततः पर विशेपहीना विशेपहीनास्तावद्वक्तव्या यावद्विशेपहानावपि प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। अशुभपरावर्तमानप्रकृतीनां च चतुःस्थानगतरसवन्धका एवं विशेपहीना विशेपहीनास्तावद्वक्तव्या यावत्तासामशुभपरावर्तमानप्रकृतीनामुत्कृष्टा स्थितिर्भवति, उत्कृष्टस्थितिगतचतुःस्थानकरसवन्धका इत्यर्थः ॥ ९४ ॥

(३०)—एवमुक्तप्रकारेण द्विस्थानकास्त्रिस्थानकाश्चाशुभोत्कर्षाच्छुभप्रकृतीनामुत्कृष्टस्थितिं यावद्वाच्याः। तथाहि—परावर्तमानानां शुभप्रकृतीनां त्रिस्थानगतं रसं वध्नन्तः सन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ वन्धकत्वेन वर्तमाना जीवाः स्तोकाः। द्वितीयस्यां स्थितौ विशेपाधिकाः। ततस्तृतीयस्यां स्थितौ विशेपाधिकाः। एवं तावद्वाच्यं यावत्प्रभूतानि सागरोपमशतान्यतियन्ति। ततः पर विशेपहीना विशेपहीनास्तावद्वाच्या यावद्विशेपहानावपि प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। तथा परावर्त्तमानानां शुभप्रकृतीनां

द्विस्थानगतं रसं बध्नन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। द्वितीयस्यां स्थितौ विशेषाधिकाः। ततोऽपि तृतीयस्यां विशेषाधिकाः। एवं तावद्वाच्यं यावत्प्रभूतानि सागरोपमशतान्यतियन्ति। ततः परं विशेषहीना विशेषहीनास्तावद्वाच्या यावद्विशेषहानावपि प्रभूतानि सागरोपमशतानि यान्ति। परावर्तमानशुभप्रकृतीनां द्विस्थानगतरसबन्धकाश्चैवं तावद्वाच्या यावत्तासामुत्कृष्टा स्थितिः यावदुत्कृष्टस्थितिगतद्विस्थानरसबन्धका लभ्यन्त इत्यर्थः। 'असुभाणं' ति–अशुभपरावर्तमानप्रकृतीनां प्राग्दर्शितदिशाऽऽदौ द्विस्थानगतरसबन्धका वाच्याः। ततस्त्रिस्थानगतरसबन्धकाः। ततश्चतुःस्थानगतरसबन्धकाः। ते च तावद्वाच्या यावदुत्कृष्टा स्थितिः। तथाहि–अशुभपरावर्तमानप्रकृतीनां द्विस्थानरसबन्धकाः सन्तो ध्रुवप्रकृतीनां जघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततो द्वितीयस्यां स्थितौ विशेषाधिकाः। ततोऽपि तृतीयस्यां विशेषाधिकाः। एवं तावद्वाच्या यावत्प्रभूतानि सागरोपमशतानि गच्छन्ति। ततः परं विशेषहीना विशेषहीनास्तावद्वाच्या यावद्विशेषहानावपि प्रभूतानि सागरोपमशतानि यान्ति। तथाऽशुभपरावर्तमानप्रकृतीनां त्रिस्थानकरसबन्धकाः सन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततो द्वितीयादिस्थितिषु यथोक्तावधि विशेषाधिका विशेषहीनाश्च प्राग्वद्वाच्याः। तथाऽशुभपरावर्तमानप्रकृतीनां चतुःस्थानगतरसबन्धकाः सन्तो ध्रुवप्रकृतीनां स्वप्रायोग्यजघन्यस्थितौ बन्धकत्वेन वर्तमाना जीवाः स्तोकाः। ततः प्रभूतानि सागरोपमशतानि यावद्विशेषवृद्धिर्वाच्या। ततः परं विशेषहानिरपि तावदेव वाच्या। अशुभपरावर्तमानप्रकृतीनामेवं चतुःस्थानगतरसबन्धकास्तावद्वाच्या यावत्तासामुत्कृष्टा स्थितिरुत्कृष्टस्थितिगतचतुःस्थानबन्धका इत्यर्थः ॥ ९४ ॥

इयाणिं परंपरोवणिहिता—

पल्लासंखियमूलानि गंतुं दुगुणा य दुगुणहीणा य। नाणंतराणि पल्लस्स मूलभागो असंखतमो ॥ ९५ ॥

(चू०)—परियत्तमाणिगाणं सुभाणं चउट्ठाणवन्धगा णाणावरणियस्स जहण्णिगाए ठितीए जीवेहिंतो ततो असंखेज्जाणि पलिओवमवग्गमूलाणि गंतूणं दुगुणवड्ढिया जीवा। ततो पुणो तत्तियं चेव गंतूणं दुगुणवड्ढिया जीवा। एवं दुगुणवड्ढिता जीवा दुगुणवड्ढिता जीवा जाव सागरोवमसतं ति। तेण परं असंखेज्जाणि पलिओवमवग्गमूलाणि गंतूणं दुगुणहीणा दुगुणहीणा। एवं दुगुणहीणा दुगुणहीणा जाव सागरोवमसयपुहुत्तं ति। एवं तिट्ठाणिगा वि जीवा। परियत्तमाणिगाणं सुभाणं बिट्ठाणबन्धगा णाणावरणीयस्स तप्पाउग्गजहण्णिगाए ठितीए जीवेहिंतो तत्तो असंखेज्जाणि पलिओवमवग्गमूलाणि गंतूणं दुगुणवड्ढिता जीवा। ततो पुणो तत्तियं चेव गंतूणं दुगुणवड्ढिता जीवा। एवं दुगुणवड्ढिता दुगुणवड्ढिता जाव सागरोवमसतं ति। तेण परं असंखेज्जाणि पलिओवमवग्गमूलाणि गंतूणं दुगुणहीणा। ततो तत्तियं चेव गंतूणं पुणो दुगुणहीणा जीवा। एवं दुगुणहीणा दुगुणहीणा जाव परित्तमाणिगाणं सुभाणं उक्कस्सिगा ठितित्ति। एवं जीवगुणहाणिट्ठाणंतरं असंखेज्जाणि पलितोवमवग्गमूलाणि। णाणाजीवगुणहाणिट्ठाणंतराणि 'णाणंतराणि पल्लस्स मूलभागो असंखतमो' त्ति—पलिओवमवग्गमूलस्स असंखेज्जतिभागो। णाणाजीवगुणहाणि ठाणंतराणि थोवाणि, एगं जीवगुणहाणिट्ठाणंतरं असंखेज्जगुणं। परियत्तमाणिगाणं असुभाणं बिट्ठाणियतिट्ठाणिय भंगो जहा परियत्तमाणिगाणं सुभाणं चउट्ठाणभंगो। असुभपगतीणं परियत्तमाणिगाणं चउट्ठाणिभंगो जहा परियत्तयाणिगाणं सुभाणं बिट्ठाणियभंगो। णवरं परियत्त-

माणिगाणं उक्कस्सिगा ठितित्ति ॥९५॥

(मलय०)––तदेवं कृताऽनन्तरोपनिधया प्ररूपणा। सम्प्रति परम्परोपनिधया तामाह–'पल्ल'त्ति। परावर्तमानशुभप्रकृतीनां चतुःस्थानगतरसबन्धका ध्रुवप्रकृतीनां जघन्यस्थितौ बन्धकत्वेन वर्तमाना ये जीवास्तदपेक्षया जघन्यस्थितेः परतः 'पल्योपमस्यासंख्येयानि वर्गमूलानि'–पल्योपमस्यासंख्येयेषु वर्गमूलेषु यावन्तः समयास्तावत्प्रमाणाः स्थितीरतिक्रम्यापरस्मिन् स्थितिस्थाने वर्तमाना जीवा द्विगुणा भवन्ति। ततः पुनरपि पल्योपमासंख्येयवर्गमूलप्रमाणाः स्थितीरतिक्रम्यानन्तरे स्थितिस्थाने द्विगुणा भवन्ति। एवं द्विगुणास्तावद्वक्तव्या यावत्प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। ततः परं पल्योपमासंख्येयवर्गमूलप्रमाणाः स्थितीरतिक्रम्यापरस्मिन् स्थितिस्थाने विशेषवृद्धिगतचरमस्थितौ बन्धकत्वेन वर्तमाना ये जीवास्तदपेक्षया द्विगुणहीना भवन्ति–अर्धा भवन्तीत्यर्थः। ततः पुनरपि पल्योपमासंख्येयवर्गमूलप्रमाणाः स्थितीरतिक्रम्यापरस्मिन् स्थितिस्थानेऽर्धा भवन्ति। एवं तावद्वाच्यं यावद्द्विगुणहानावपि प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। एवं परावर्तमानशुभप्रकृतीनां त्रिस्थानकरसबन्धका द्विस्थानगतरसबन्धकाश्च, अशुभपरावर्तमानप्रकृतीनां तु द्विस्थानरसबन्धकास्त्रिस्थानरसबन्धकाश्चतुःस्थानरसबन्धकाश्च वक्तव्याः। एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा स्थितिस्थानानि पल्योपमस्यासंख्येयानि वर्गमूलानि–पल्योपमस्यासंख्येयेषु वर्गमूलेषु यावन्तः समयास्तावत्प्रमाणानीत्यर्थः। 'नानान्तराणि'–नानारूपद्विगुणवृद्धिद्विगुणहानिलक्षणानि पल्योपमस्य संबन्धिनः प्रथमवर्गमूलस्यासंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि भवन्ति। नानाद्विगुणवृद्धिद्विगुणहानिस्थानानि स्तोकानि, एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा स्थितिस्थानानि असंख्येयगुणानि ॥९५॥

स्थितिबन्धप्ररूपणा.

१ चूर्ण्यभिहितरीत्या यथानुसारं बोध्यम्।

(उ०)-तदेवं कृताऽनन्तरोपनिधया प्ररूपणा, अथ परम्परोपनिधया तामाह—परावर्तमानप्रकृतीनां शुभानां चतुःस्थानकमशुभानां वा द्विस्थानकरसं वध्नन्तो ये ध्रुवप्रकृतीनां जघन्यस्थितिबन्धकत्वेन वर्तन्ते जीवास्तदपेक्षया जघन्यस्थितेः परतः पल्यासंख्येयमूलानि-पल्योपमस्यासंख्येयेषु वर्गमूलेषु यावन्तः समयास्तावत्प्रमाणानि स्थितिस्थानानीत्यर्थः, गत्वाऽतिक्रम्यापरस्मिन् स्थितिस्थाने बन्धकत्वेन वर्तमाना जीवा द्विगुणा भवन्ति। ततः पुनरपि पल्योपमासंख्येयवर्गमूलप्रमाणस्थित्यतिक्रमेऽनन्तरस्थितिस्थाने द्विगुणा भवन्ति। एवं द्विगुणास्तावद्वाच्या यावत्प्रभूतानि सागरोपमशतान्यतिक्रामन्ति। ततः परं पल्योपमासंख्येयवर्गमूलप्रमाणाः स्थितीरतिक्रम्यापरस्मिन् स्थितिस्थाने विशेषवृद्धिगतचरमस्थितौ बन्धकत्वेन वर्तन्ते ये जीवास्तदपेक्षया द्विगुणहीना भवन्त्यर्धा भवन्तीत्यर्थः। ततः पुनरपि तावतीः स्थितीरतिक्रम्यापरस्मिन् स्थितिस्थाने द्विगुणहीना भवन्ति। एवं तावद्वाच्यं यावद्द्विगुणहानिवक्तव्यतायामपि प्रभूतानि सागरोपमशतान्यतियन्ति। एवं परावर्तमानप्रकृतीनां शुभानां त्रिस्थानकरसबन्धका द्विस्थानकरसबन्धकाश्च, तथाऽशुभपरावर्तमानप्रकृतीनां द्विस्थानकरसबन्धकास्त्रिस्थानकरसबन्धकाश्चतुःस्थानकरसबन्धकाश्चोपयुज्य वाच्याः। एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा स्थितीस्थानानि पल्योपमस्यासंख्येयेषु वर्गमूलेषु यावन्तः समयास्तावत्प्रमाणानि। नानान्तराणि नानारूपद्विगुणवृद्धिद्विगुणहानिलक्षणानि पल्योपमस्य सम्बन्धिनः प्रथमवर्गमूलस्यासंख्येयतमे भागे यावन्तः समयास्तावत्प्रमाणानि भवन्ति। नानाद्विगुणवृद्धिद्विगुणहानिस्थानानि स्तोकानि। तेभ्य एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा स्थितिस्थानान्यसंख्येयगुणानि ॥ ९५ ॥

**अणगारप्पाउग्गा बिट्ठाणगया उ दुविहपगडीणं। सागारा सव्वत्थ वि हिट्ठा थोवाणि जवमज्झा ॥९६॥**
**ठाणाणि चउट्ठाणा संखेज्जगुणाणि उवरिमेमेवं। तिट्ठाणे बिट्ठाणे सुभाणमेगंतमीसाणि ॥९७॥**

उवरिं मिस्साणि जहन्नगो सुभाणं तओ विसेसहिओ। होइ असुभाण जहन्नो संखेज्जगुणाणि ठाणाणि॥९८॥
बिट्ठाणे जवमज्झा हट्ठा एगंत मीसगाणुवरिं। एवं तिचउट्ठाणे जवमज्झाओ य डायठिई ॥९९॥
अंतोकोडाकोडी सुभबिट्ठाणजवमज्झओ उवरिं। एगंतगा विसिट्ठा सुभजिट्ठा डायठिइजेट्ठा ॥१००॥

(चू०)—परियत्तमाणिगाणं सुभाण असुभाण य बिट्ठाणगताणि णियमा अणागारपाउग्गाणि ठाणाणि भवंति, अण्णत्थ णत्थि। 'सागारा सव्वत्थ वि'त्ति—सागारोवउग्गपाउग्गाणि ठाणाणि सव्वत्थेव—बिट्ठाणतिट्ठाणचउट्ठाणे लब्भंति।

इयाणिं सव्वट्ठितिट्ठाणाणं अप्पाबहुगं भण्णइ—'हेट्ठा थोवाणि जवमज्झा ठाणाणि चउट्ठाण'त्ति। परियत्तमाणिगसुभाणं चउट्ठाणियजवमज्झस्स हेट्ठओ ठितिट्ठाणाणि थोवाणि। 'संखेज्जगुणाणि उवरिं'ति—चउट्ठाणे य जवमज्झस्स उवरिं ठितिट्ठाणाणि संखेज्जगुणाणि। 'एमेव तिट्ठाणे सुभाणं'ति—परियत्तमाणिगाणं तिट्ठाणियजवमज्झस्स हेट्ठओ ठितिट्ठाणाणि संखेज्जगुणाणि, तस्सेव जवमज्झस्स उवरिं ठितिट्ठाणाणि (वि संखेज्जगुणाणि)। 'बिट्ठाणे सुभाणमेगंत'त्ति—परियत्तमाणिगाणं सुभाणं बिट्ठाणे य जवमज्झस्स हेट्ठतो एगंतसागारपाउग्गाणि ठितिट्ठाणाणि संखेज्जगुणाणि। (तओवि बिट्ठाणअणुभागजवमज्झस्स हेट्ठओ पुव्वओ उवरिं ठिइट्ठाणाणि मिस्साणि संखेज्जगुणाणि, तओ वि बिट्ठाणरसजवमज्झस्स उवरिं मिस्साणि ठिइट्ठाणाणि संखेज्जगुणाणि, तओ) परियत्तमाणिगाणं

सुहाण जहण्णट्ठितिबन्धो संखेज्जगुणो। 'ततो विसेसाहितो होइ असुभाणं जहण्णो' त्ति–परियत्तमाणिगाणं असुभाणं जहण्णओ ठितिबन्धो विसेसाहिगो। 'संखेज्जगुणाणि ठाणाणि विट्ठाणे जवमज्झा हेट्ठा एगंत' त्ति–परियत्तमाणिगाणं असुभाणं यिट्ठाणियजवमज्झस्स हिट्ठओ एगंतसागारपाउग्गाणि ठाणाणि संखेज्जगुणाणि। 'मिस्सगाणं' ति–ततो विट्ठाणिगजवमज्झस्स हेट्ठउ मिस्सगाणि ठाणाणि संखेज्जगुणाणि। 'उवरि' त्ति–परियत्तमाणिगाणं असुभाणं यिट्ठाणिगं जवमज्झस्स उवरिं मिस्सगाणि ठितिट्ठाणाणि संखेज्जगुणाणि। तस्सेवुवरिं एगंतसागारपाउग्गाणि ठितिट्ठाणाणि संखेज्जगुणाणि। 'एवं तिचउट्ठाणे' त्ति–ततो परियत्तमाणिगाणं असुभाणं तिट्ठाणियजवमज्झस्स हेट्ठतो ठितिट्ठाणाणि संखेज्जगुणाणि। (तओवि तिट्ठाण जवमज्झस्स उवरिं ठितिट्ठाणाणि संखेज्जगुणाणि। ततोवि असुभाण परियत्तमाणिगाण चउट्ठाणिय जवमज्झस्स हिट्ठओ ठितिट्ठाणाणि संखेज्जगुणाणि। तओ) 'जवमज्झाओ य डायट्ठिति' त्ति–जवमज्झाउ जओ ट्ठाणा उक्कोसं डायं इच्छइ सा ठिति संखेज्जगुणा, जओ ट्ठितिओ उक्कोसं ट्ठितिं जातित्ति भणियं भवति। 'अंतोकोडाकोडि' त्ति– अन्तोकोडाकोडी संखेज्जगुणा। 'सुभविट्ठाणजवमज्झओ उवरिं एगंतिग' त्ति–ततो परियत्तमाणिगाणं सुभाण विट्ठाणियजवमज्झउवरिं एगंतसागारोवउग्गाणि ठितिट्ठाणाणि संखेज्जगुणाणि। 'विसिट्ठा सुभजिट्ठ' त्ति–परियत्तमाणिगाणं सुभाणं उक्कस्सगो ठितिबन्धो विसेसाहितो। 'डायट्ठिति' त्ति–परियत्तमाणिगाणं असुभाणं डायं गंतूण जा ठिति बद्धा सा ठिति विसेसाहीगा। 'जेट्ठ' त्ति–परियत्तमाणिगाणं असुभाणं उक्कोसगो ठितिबन्धो विसेसाहितो ॥ ९६–९७–९८–९९–१०० ॥

(मलय०)—'अणगार'त्ति। द्विविधानामपि शुभानामशुभानां च परावर्तमानप्रकृतीनां रसा 'अनाकारप्रायोग्याः'—बन्धं प्रत्यनाकारोपयोगयोग्याः, बन्धमधिकृत्य तथाविधमन्दपरिणामयोग्या इत्यर्थः, नियमात् द्विस्थानगता एव, नान्ये। तुरेवकारार्थः। उक्तं च—"तुः स्याद् भेदेऽवधारणे"।'साकाराः'—साकारोपयोगयोग्याः, बन्धमधिकृत्य तीव्रपरिणामयोग्याः पुन सर्वत्रापि द्विस्थानादौ प्राप्यन्ते, द्विस्थानगतास्त्रिस्थानगताश्चतुःस्थानगताश्च रसा बन्धमाश्रित्य साकारोपयोगयोग्या भवन्तीत्यर्थः।

इदानीं सर्वस्थितिस्थानानामल्पबहुत्वमाह—'हिट्ठा थोवाणि'इत्यादि। परावर्तमानशुभप्रकृतीनां चतुःस्थानकरसयवमध्यादधः स्थितिस्थानानि सर्वस्तोकानि। तेभ्यश्चतुःस्थानकरसयवमध्यस्यैवोपरि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि परावर्तमानशुभप्रकृतीनां त्रिस्थानकरसयवमध्यादधः स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि त्रिस्थानकरसयवमध्यस्योपरि स्थितिस्थानानि संख्येयगुणानि। 'एवं तिट्ठाणे' त्ति—एवं संख्येयगुणतयाऽध उपरि च त्रिस्थानेऽपि रसे स्थितिस्थानानि वक्तव्यानीत्यर्थः। तेभ्योऽपि परावर्तमानशुभप्रकृतीनां द्विस्थानकसयवमध्यादधः स्थितिस्थानानि एकान्तसाकारोपयोगयोग्यानि संख्येयगुणानि। तेभ्योऽपि द्विस्थानकरसयवमध्यादधः पाश्चात्येभ्य ऊर्ध्वं स्थितिस्थानानि मिश्राणि साकारानाकारोपयोगयोग्यानि संख्येयगुणानि। तेभ्योऽपि द्विस्थानकरसयवमध्यस्योपरि मिश्राणि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि शुभानां परावर्तमानप्रकृतीनां जघन्यः स्थितिबन्धः संख्येयगुणः। ततोऽप्यशुभपरावर्तमानप्रकृतीनां जघन्यः स्थितिबन्धो विशेषाधिकः। ततोऽप्यशुभपरावर्तमानप्रकृतीनामेव द्विस्थानकरसयवमध्यादध एकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि। ततस्तासामेव परावर्तमानाशुभप्रकृतीनां द्विस्थानकरसयवमध्यादधः पाश्चात्येभ्य ऊर्ध्वं मिश्राणि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि तासामेवाशुभपरावर्तमानप्रकृतीनां द्विस्थानकरसयवमध्यादुपरि स्थितिस्थानानि मिश्रा-

णि संख्येयगुणानि। तेभ्योऽप्युपरि एकान्तमाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि तासामेव परावर्तमाना-
शुभप्रकृतीनां त्रिस्थानकरसयवमध्यादधः स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि त्रिस्थानकरसयवमध्यस्योपरि स्थितिस्थानानि
संख्येयगुणानि। तेभ्योऽप्यशुभपरावर्तमानप्रकृतीनामेव चतुःस्थानकरसयवमध्यादधः स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि यव-
मध्यादुपरि डायस्थितिः संख्येयगुणा। यतः स्थितिस्थानादपवर्तनाकरणवशेनोत्कृष्टां स्थितिं याति तावती स्थितिर्डायस्थितिरित्युच्यते।
ततोऽपि सागरोपमाणामन्तःकोटीकोटी संख्येयगुणा। ततोऽपि परावर्तमानशुभप्रकृतीनां द्विस्थानकरसयवमध्यस्योपरि यानि मिश्राणि
स्थितिस्थानानि तेषामुपर्येकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि परावर्तमानशुभप्रकृतीनामुत्कृष्टः
स्थितिबन्धो विशेषाधिकः। ततोऽप्यशुभपरावर्तमानप्रकृतीनां बद्धा डायस्थितिर्विशेषाधिका। यतः स्थितिस्थानात् मण्डूकप्लुतिन्यायेन
टायां फालां-दत्वा या स्थितिर्बध्यते, ततः प्रभृति तदन्ता तावती स्थितिर्बद्धा डायस्थितिरिहोच्यते। सा चोत्कर्षतोऽन्तःसागरोपमको-
टीकोट्यूना सकलकर्मस्थितिप्रमाणा वेदितव्या। तथाहि-अन्तःसागरोपमकोटीकोटीप्रमाणं स्थितिबन्धं कृत्वा पर्याप्तसंज्ञिपञ्चेन्द्रिय उ-
त्कृष्टां स्थितिं बन्धातीति नान्यथा। ततोऽपि परावर्तमानाशुभप्रकृतीनामुत्कृष्टः स्थितिबन्धो विशेषाधिक इति ॥९६-९७-९८-
९९-१००॥

(उ०)-बन्धविशिष्टेषु रसभेदेषु संज्ञाविशेषमाह—द्विविधानामपि शुभानामशुभानां वा परावर्त्तमानप्रकृतीनां रसा अनाकारप्रायोग्याः-
बन्धमधिकृत्य तथाविधमन्दपरिणामयोग्यत्वादनाकारोपयोगयोग्यताव्यवहारविषया इत्यर्थः, नियमाद्विस्थानगता एव, नान्ये। तुरेवकारा-
र्थः, 'तुः स्याद्भेदेऽवधारणे' इति नामानुशासनात्। साकाराः-बन्धमधिकृत्य तीव्रपरिणामयोग्यत्वेन साकारोपयोगयोग्यत्वव्यवहारवि-

षयाः, पुनः सर्वत्रापि–द्विस्थानादौ प्राप्यन्ते, द्विस्थानगतास्त्रिस्थानगताश्चतुःस्थानगताश्च रसा बन्धमाश्रित्य साकारोपयोगयोग्या उच्यन्त इत्यर्थः। अत्र त्रिस्थानकाश्चतुःस्थानकाश्च रसाः केवलसाकाराः, द्विस्थानकास्तूभयरूपा इति संज्ञाभेदः फलितः।

इदानीं सर्वस्थितिस्थानानामल्पबहुत्वमाह–'हेट्ठा' इत्यादि। परावर्तमानशुभप्रकृतीनां चतुःस्थानकरसे यद्यवमध्यं तस्मादधः स्थितिस्थानानि सर्वस्तोकानि। तेभ्यश्चतुःस्थानकरसयवमध्यस्यैवोपरि स्थितिस्थानानि संख्येयगुणानि। एवमध उपरि च त्रिस्थानेऽपि वक्तव्यम्। तथाहि–चतुःस्थानकरसयवमध्यस्योपरि यानि स्थितिस्थानानि तेभ्यः परावर्तमानशुभप्रकृतीनां त्रिस्थानकयवमध्यादधः स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि त्रिस्थानकरसयवमध्यस्योपरि स्थितिस्थानानि संख्येयगुणानि।तेभ्योऽपि परावर्तमानशुभप्रकृतीनां द्विस्थानकरसयवमध्यादधः स्थितिस्थानानि एकान्तसाकारोपयोगयोग्यानि संख्येयगुणानि। तेभ्योऽपि द्विस्थानकरसयवमध्यादधः पाश्चात्येभ्य ऊर्ध्वं स्थितिस्थानानि मिश्राणि साकारानाकारोपयोगयोग्यानि संख्येयगुणानि। तेभ्योऽपि द्विस्थानकरसयवमध्यस्योपरि मिश्राणि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि शुभानां परावर्तमानप्रकृतीनां जघन्यः स्थितिबन्धः संख्येयगुणः। ततोऽप्यशुभपरावर्तमानप्रकृतीनां जघन्यः स्थितिबन्धो विशेषाधिको भवति। ततोऽप्यशुभपरावर्तमानप्रकृतीनामेव द्विस्थानकरसयवमध्यादधः एकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि। ततस्तासामेव द्विस्थानकरसयवमध्यादधः पाश्चात्येभ्य ऊर्ध्वं मिश्राणि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि तासामेवाशुभपरावर्तमानप्रकृतीनां, द्विस्थानकरसयवमध्यादुपरि मिश्राणि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽप्युपरि एकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि तासामेव परावर्तमानाशुभप्रकृतीनां त्रिस्थानकरसयवमध्यादधः स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि त्रिस्थानकरसयवमध्यस्योपरि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽप्यशुभपराव-

र्तमानप्रकृतीनामेव चतुःस्थानकरसयवमध्यादधः स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि चतुःस्थानकरसयवमध्यादुपरि डायस्थितिः संख्येयगुणा। यतः स्थितिस्थानादपवर्तनाकरणेनोत्कृष्टां स्थितिं याति, ततस्तावती स्थितिर्डायस्थितिरित्युच्यते। ततोऽपि सागरोपमाणामन्तःकोटाकोटी संख्येयगुणा। ततोऽपि परावर्तमानशुभप्रकृतीनां द्विस्थानकरसयवमध्यस्योपरि यानि मिश्राणि स्थितिस्थानानि तेषामुपर्येकान्तसाकारोपयोगयोग्यानि स्थितिस्थानानि संख्येयगुणानि। तेभ्योऽपि परावर्तमानशुभप्रकृतीनामुत्कृष्टः स्थितिबन्धो विशेषाधिकः। ततोऽप्यशुभपरावर्तमानप्रकृतीनां बद्धा डायस्थितिर्विशेषाधिका। यतः स्थितिस्थानान्मण्डूकप्लुतिन्यायेन डायांफाला दत्त्वा या स्थितिर्बध्यते ततः प्रभृति तदन्ता तावती स्थितिर्बद्धा डायस्थितिरुच्यते। सा चोत्कर्षतोऽन्तःसागरोपमकोटाकोटयूनसकलकर्मस्थितिप्रमाणा ज्ञातव्या। यतोऽन्तःसागरोपमकोटाकोटीप्रमाणं स्थितिबन्धं कृत्वैव पर्याप्तसंज्ञिपञ्चेन्द्रिय उत्कृष्टां स्थितिं बध्नातीत्यन्तःकोटाकोटेरूर्ध्वमेव डयनं भवतीति। ततोऽपि परावर्तमानाशुभप्रकृतीनामुत्कृष्टः स्थितिबन्धो विशेषाधिकः, डायाधस्तनस्थितेरपि तत्र प्रवेशात्॥ ९६–९७–९८–९९–१००॥

इत्थ अप्पाबहुगे जीवा भण्णइ—

**संखेज्जगुणा जीवा कमसो एएसु दुविहपगईणं। असुभाणं तिट्ठाणे सव्वुवरि विसेसओ अहिया॥१०१॥**

(चू०)—सव्वत्थोवा परियत्तमाणिगाणं सुभाणं चउट्ठाणबन्धगा जीवा। तिट्ठाणबन्धगा जीवा संखेज्जगुणा। (बिट्ठाणबंधगा संखेज्जगुणा, तओ) परियत्तमाणिगाणं असुभाणं बिट्ठाणबन्धगा जीवा (संखेज्जगुणा, ततो वि चउट्ठाण बंधगा जीवा संखेज्जगुणा, ततो वि तिट्ठाणगबंधगा जीवा) विसेसाहीगा॥ १०१॥

(मलय०)—सम्प्रत्यस्मिन् विषये जीवानामल्पबहुत्वमाह—'संखेज्ज'त्ति । सर्वस्तोकाः परावर्तमानशुभप्रकृतीनां चतुःस्थानकरसबन्धका जीवाः । तेभ्योऽपि त्रिस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि द्विस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि परावर्तमानाशुभप्रकृतीनां द्विस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि चतुःस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि त्रिस्थानकरसबन्धका विशेषाधिकाः । तथा चाह—'असुभाणं' इत्यादि। अशुभानाम्—अशुभप्रकृतीनां त्रिस्थाने—त्रिस्थानकस्य रसस्य बन्धकाः सर्वेषामुपरि विशेषाधिका वक्तव्याः ॥१०१॥

(उ०)—सम्प्रत्यस्मिन् विषये जीवानामल्पबहुत्वमाह —एतेषु द्वित्रिचतुःस्थानकरसेषु द्विविधप्रकृतीनां वर्तमानाः 'क्रमशः'—क्रमेण शुभानां पश्चानुपूर्व्याऽशुभानां चादौ—पूर्वानुपूर्व्येत्यर्थः, जीवाः संख्येयगुणा वाच्याः । नवरमशुभानां त्रिस्थानं सर्वोपरि वाच्यम् । तत्र च जीवा विशेषाधिका वाच्याः । तथाहि—सर्वस्तोकाः परावर्तमानशुभप्रकृतीनां चतुःस्थानकरसबन्धका जीवाः । तेभ्यस्त्रिस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि द्विस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि परावर्तमानाशुभप्रकृतीनां द्विस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि चतुःस्थानकरसबन्धकाः संख्येयगुणाः । तेभ्योऽपि त्रिस्थानकरसबन्धका विशेषाधिकाः । तदेवं कृता सप्रसङ्गं स्थितिबन्धनिरूपणा ।

साद्यादिप्ररूपणां चात्रेत्थं कुर्वन्ति—इहायुर्वर्जानां सप्तानां मूलप्रकृतीनामजघन्यः स्थितिबन्धश्चतुर्धा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—मोहनीयवर्जानां षण्णां मूलप्रकृतीनां जघन्यः स्थितिबन्धः क्षपकस्य सूक्ष्मसंपरायस्य स्वगुणस्थानचरमसमये प्राप्यते । स च तदानीमेव भवतीति सादिः । द्वितीयसमये बन्धव्यवच्छेदादपगच्छतीत्यध्रुवः । एतादृशाजघन्यस्थितिबन्धादन्यः सर्वोऽप्य-

जघन्यः, स चोपशान्तमोहे न भवति, ततः प्रतिपाते च भूयोऽपि भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। मोहनीयस्य जघन्यः स्थितिबन्धः क्षपकस्यानिवृत्तिबादरसंपरायस्य चरमसमये, स चैकसामयिक इति साद्यध्रुवः, ततोऽन्यः सर्वोऽप्यजघन्यः, स चोपशमश्रेण्यां सूक्ष्मसंपराये न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत्। वेदनीयस्य चात्र सांपरायिकस्थितिबन्धापेक्षया सादित्वं भाव्यं, अन्यथा द्विसामयिकस्थितिबन्धस्तस्योपशान्तमोहादावपि प्राप्यत इति। जघन्योत्कृष्टानुत्कृष्टाश्च स्थितिबन्धाः सप्तानामपि साद्यध्रुवाः। तत्र जघन्यः साद्यध्रुवतया प्रागेव भावितः। उत्कृष्टश्चासौ सर्वसंक्लिष्टे संज्ञिमिथ्यादृष्टौ कियत्कालं प्राप्यते, तदनन्तरमनुत्कृष्टः, भूयोऽपि कालान्तर उत्कृष्ट इति द्वावप्येतौ पर्यायलभ्यत्वात्साद्यध्रुवौ। आयुषि जघन्यादयश्चत्वारोऽपि साद्यध्रुवाः प्रतिपत्तव्याः, आयुर्बन्धस्य प्रतिनियतकालभावित्वात्। उत्तरप्रकृतिषु ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयसंज्वलनचतुष्टयरूपाणामष्टादशप्रकृतीनामजघन्या स्थितिः साद्यादितया चतुर्विधा। तथाहि—ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयानां जघन्यस्थितिबन्धः क्षपकस्य सूक्ष्मसंपरायस्य स्वगुणस्थानचरमसमये वर्तमानस्य, संज्वलनचतुष्टयस्य क्षपकस्यानिवृत्तिबादरसंपरायस्य स्वस्वबन्धव्यवच्छेदसमये, स चैकसामयिक इति साद्यध्रुवः, ततोऽन्यः सर्वोऽप्यजघन्यः, स चोपशान्तमोहे न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत्। एतासामेव जघन्योत्कृष्टानुत्कृष्टाः स्थितयः साद्यध्रुवाः। तत्र जघन्याऽनन्तरमेव भाविता, उत्कृष्टाऽनुत्कृष्टा च संज्ञिमिथ्यादृष्टौ पर्यायेण लभ्यते, सर्वसंक्लिष्टे उत्कृष्टा, तस्मिन्नेव मध्यमपरिणामे चानुत्कृष्टेति द्वे अपि साद्यध्रुवे। उक्ताऽष्टादशशेषाणां प्रकृतीनां सर्वा अपि जघन्याजघन्योत्कृष्टानुत्कृष्टाः स्थितयः साद्यध्रुवाः। तथाहि—निद्रापञ्चकमिथ्यात्वाद्यद्वादशकषायभयजुगुप्सातैजसकार्मणवर्णादिचतुष्टयागुरुलघूपघातनिर्माण-

रूपाणामेकोनत्रिंशत्प्रकृतीनां जघन्यः स्थितिबन्धः सर्वविशुद्धे बादरैकेन्द्रिये पर्याप्तेऽन्तर्मुहूर्तं यावल्लभ्यते। तदनन्तरं तस्मिन्नेवाध्यवसायपरावृत्तेर्मन्दपरिणामेऽजघन्यः। पुनरपि कालान्तरे तस्मिन्नन्यस्मिन् वा भवे प्रतिपन्नविशुद्धौ जघन्य इति साद्यध्रुवावेतौ। उत्कृष्टः सर्वसंक्लिष्टे संज्ञिमिथ्यादृष्टौ,अनुत्कृष्टश्च मध्यमपरिणामे तस्मिन्निति तावपि पर्यायलभ्यत्वात्साद्यध्रुवौ। शेषाणामध्रुवबन्धिनीनां चाध्रुवबन्धित्वादेव चत्वारोऽपि विकल्पाः साद्यध्रुवा ज्ञेयाः।

स्वामित्वचिन्तायां तीर्थंकरनाम्नो मनुष्यो नरकबद्धायुष्को नरकं जिगमिषुर्मिथ्यात्वप्रतिपत्तिप्राक्समये उत्कृष्टस्थितिबन्धकः, उत्कृष्टस्थितेरुत्कृष्टसंक्लेशेनैव बन्धात्, तद्बन्धकेषु चास्यैवातिसंक्लिष्टत्वात्। आहारकद्विकस्याप्रमत्तयतिः प्रमत्तताभिमुखस्तथा। अमरायुषः प्रमत्तः संयतः पूर्वकोट्यायुरप्रमत्तभावाभिमुखः स्वायुःशेषतृतीयभागाद्यसमये वर्त्तमानस्तथा। पूर्वकोटित्रिभागस्य द्वितीयादिसमयेषु बध्नतो नोत्कृष्टमायुर्लभ्यतेऽबाधायाः परिगलितत्वेन मध्यमत्वप्राप्तेरित्याद्यसमयग्रहणम्। शुभेयं स्थितिर्विशुद्ध्या बध्यत इति अप्रमत्तभावाभिमुखत्वग्रहणम्। शेषाणां षोडशोत्तरशतसङ्ख्यप्रकृतीनां मिथ्यादृष्टिः सर्वपर्याप्तिपर्याप्तः सर्वसंक्लिष्ट उत्कृष्टस्थितिबन्धस्वामी। अत्र सर्वसंक्लिष्टत्वं प्रायोवृत्त्योच्यते, यावता तिर्यङ्मनुष्यायुषी उत्कृष्टे तत्प्रायोग्यविशुद्धो बध्नातीति द्रष्टव्यं, तयोः शुभस्थितिकत्वेन विशुद्धिजन्यत्वात्। ननु यदि विशुद्ध्येदमायुर्द्वयं बध्यते तदा मिथ्यादृष्टेः सास्वादनो विशुद्धतर इति स कस्मादेतदुत्कृष्टस्थितिबन्धकत्वेन नोच्यते ? न च वाच्यं तिर्यग्मनुष्यायुषी सास्वादनो न बध्नात्येवेति, तिर्यगायुषो बन्धो, मनुष्यायुष उदयः, तिर्यग्मनुष्यायुषी सती, एष विकल्पो मिथ्यादृष्टेः सास्वादनस्य वा। मनुष्यायुषो बन्धो, मनुष्यायुष उदयः, मनुष्यमनुष्यायुषी सती, एषोऽपि विकल्पो मिथ्यादृष्टेः सास्वादनस्य वेति सप्ततिकाटीकायामभिधानात् इति चेद्, अत्र प्रतिविधीयते—सत्यामपि

सामान्यतो मनुष्यतिर्यगायुर्बन्धानुज्ञायामसङ्ख्येयवर्षायुष्कयोग्यमुत्कृष्टं प्रस्तुतायुर्द्वयं सास्वादनो न बध्नाति, तस्य गुणप्रतिपाताभिमुखत्वेन गुणाभिमुखविशुद्धमिथ्यादृष्टेः सकाशाद्विशुद्ध्याधिक्यासिद्धेः । अत्र च विशेषचिन्तायां विकलत्रिकसूक्ष्मत्रिकदेवायुर्वर्जायुस्त्रिकसुरद्विकवैक्रियद्विकनरकद्विकलक्षणानां पञ्चदशप्रकृतीनामुत्कृष्टस्थितिं तिर्यग्मनुष्या एव मिथ्यादृष्टयः प्रतिनियतसमये बध्नन्ति । देवनारका ह्येतास्तिर्यग्मनुष्यायुर्वर्जा भवप्रत्ययादेव न बध्नन्ति । तिर्यग्मनुष्यायुषी अपि त्रिपल्योपमलक्षणे उत्कृष्टे ते न बध्नन्ति । तस्मात्तिर्यग्मनुष्यायुषोरुत्कृष्टस्थितिबन्धकास्तिर्यग्मनुष्या एव पूर्वकोट्यायुषस्तत्प्रायोग्यविशुद्धा द्रष्टव्याः । सम्यग्दृष्टेरतिविशुद्धमिथ्यादृष्टेश्च देवायुर्बन्ध एव स्यादिति मिथ्यादृष्टित्वतत्प्रायोग्यविशुद्धविशेषणद्वयम् । नारकायुषः पुनरेत एव तत्प्रायोग्यसंक्लिष्टा वाच्याः, अत्यन्तशुद्धस्यात्यन्तसंक्लिष्टस्य चायुर्बन्धस्य सर्वथा निषेधात् । नरकद्विकवैक्रियद्विकयोश्चैत एव सर्वसंक्लिष्टा उत्कृष्टस्थितिबन्धकाः । विकलजातित्रिकसूक्ष्मत्रिकयोस्तु तत्प्रायोग्यसंक्लिष्टा द्रष्टव्याः । अतिसंक्लिष्टा ह्येतत्प्रकृतिबन्धमुल्लङ्घ्य नरकप्रायोग्यमेव बध्नीयुः । विशुद्धास्तु विशुद्धितारतम्यात्पञ्चेन्द्रियतिर्यक्प्रायोग्यं वा मनुष्यप्रायोग्यं वा देवप्रायोग्यं वा बध्नीयुरिति तत्प्रायोग्यसंक्लेशग्रहणम् । देवद्विकस्यापि तत्प्रायोग्यसंक्लिष्टा द्रष्टव्याः, अतिसंक्लिष्टानामधोवर्तिमनुष्यादिप्रायोग्यबन्धसंभवात्, विशुद्धौ पुनरुत्कृष्टबन्धाभावादिति । स्थावरैकेन्द्रियजात्यातपानामीशानान्ता देवा उत्कृष्टस्थितिबन्धकाः । ततः परे देवा नैकेन्द्रियप्रायोग्यबन्धका इति तन्निषेधः । तिर्यङ्मनुष्यास्त्वेतावति संक्लेशे वर्तमाना एतद्बन्धमतिक्रम्य नरकप्रायोग्यमेव बध्नन्तीति तेषामपि निषेधः । तिर्यग्द्विकौदारिकद्विकोद्योतसेवार्तसंहनननानां सुरनारका उत्कृष्टस्थितिबन्धकाः । मनुष्यतिर्यञ्चो ह्येतद्बन्धार्हसंक्लेशे वर्तमाना एतासां षट्प्रकृतीनामुत्कृष्टतोऽप्यष्टादशकोटाकोटिलक्षणां मध्यमां स्थितिं बध्नन्ति, न तु

विंशतिकोटाकोटीलक्षणामुत्कृष्टां, अधिकसंक्लेशे वर्तमानास्तु नरकयोग्यमेव बध्नीयुरिति तद्व्युदासः। देवनारकास्त्वतिसंक्लिष्टा अपि तिर्यग्गतिप्रायोग्यमेव बध्नन्तीति तेषां ग्रहणम्। अत्र च सामान्योक्तावपि सेवार्त्तसंहननौदारिकोपाङ्गयोरुत्कृष्टस्थितिबन्धकाः सनत्कुमारादिदेवा द्रष्टव्याः, नेशानान्ताः। ते हि तत्प्रायोग्यसंक्लेशे वर्तमानाः प्रकृतप्रकृत्योरुत्कृष्टतोऽप्यष्टादशकोटाकोटीलक्षणां मध्यमामेव स्थितिं बध्नन्ति। सर्वोत्कृष्टसंक्लेशास्त्वेकेन्द्रियप्रायोग्यमेव बध्नन्ति। न चैते प्रकृती एकेन्द्रियप्रायोग्यान्तर्भूते इति। उक्ताष्टाविंशतिप्रकृतिभ्यः शेषाणां द्विनवतिसंख्यप्रकृतीनां मिथ्यादृष्टयश्चतुर्गतिका अप्युत्कृष्टस्थितिबन्धकाः। तत्र वर्णचतुष्कतैजसकार्मणागुरुलघुनिर्माणोपघातभयजुगुप्सामिथ्यात्वकषायषोडशकज्ञानावरणपञ्चकदर्शनावरणनवकान्तरायपञ्चकलक्षणानां सप्तचत्वारिंशतो ध्रुवबन्धिनीनामध्रुवबन्धिनीनामपि मध्येऽसातारतिशोकनपुंसकवेदपञ्चेन्द्रियजातिहुंडसंस्थानपराघातोच्छ्वासाशुभविहायोगतित्रसचतुष्कास्थिरषट्कनीचैर्गोत्रलक्षणानां विंशतेः प्रकृतीनां सर्वोत्कृष्टसंक्लेशेनोत्कृष्टां स्थितिं चतुर्गतिका अपि मिथ्यादृष्टयो बध्नन्ति। शेषाणां त्वध्रुवबन्धिनीनां सातरतिहास्यस्त्रीपुंवेदमनुष्यद्विकप्रथमसंस्थानसंहननपञ्चकप्रशस्तविहायोगतिस्थिरषट्कोच्चैर्गोत्रलक्षणानां पञ्चविंशतिप्रकृतीनां तद्बन्धकेषु तत्प्रायोग्यसंक्लिष्टा उत्कृष्टस्थितिबन्धका इति ज्ञेयम्।

आहारकद्विकजिननाम्नोरपूर्वकरणक्षपकस्तद्बन्धस्य चरमस्थितिबन्धे वर्तमानो जघन्यस्थितिबन्धकः, तद्बन्धकेषु अस्यैवातिविशुद्धत्वात्, तिर्यङ्मनुष्यदेवायुर्वर्जकर्मणां च जघन्यस्थितेर्विशुद्धिप्रत्ययत्वात्। संज्वलनचतुष्टयपुरुषवेदानामनिवृत्तिबादरक्षपकः, तद्बन्धस्य यथास्वं चरमस्थितिबन्धे वर्तमानो जघन्यस्थितिबन्धकः, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात्। ज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकसातवेदनीययशःकीर्त्युच्चैर्गोत्राणां सूक्ष्मसंपरायक्षपकश्चरमस्थितिबन्धे वर्तमानो जघन्यस्थितिबन्धकः, तद्बन्धकेष्वस्यैवातिविशुद्धत्वात्। वैक्रि-

यपट्कस्यासंज्ञी तिर्यक्पञ्चेन्द्रियः सर्वपर्याप्तिपर्याप्तस्तथा, तस्यैव सागरोपम(सप्तभाग)सहस्रद्वयप्रमाणाया एतज्जघन्यस्थितेर्बन्धकत्वात्। एता
दि प्रकृतयो नरकदेवलोकप्रायोग्याः, तत्र च देवनारकासंज्ञिमनुष्यैकेन्द्रियविकलेन्द्रिया नारकेषु देवलोकेषु च नोत्पद्यन्त एवेति तेषामेत-
द्बन्धासंभवः। तिर्यङ्मनुष्यास्तु स्वभावादेव प्रकृतप्रकृतिषट्कस्थितिं मध्यमामुत्कृष्टां वा कुर्वन्तीति तेऽपीहोपेक्षिताः। आयुषश्चतुर्विध-
स्यापि संज्ञ्यसंज्ञी च जघन्यस्थितिबन्धस्वामी। तत्र देवनारकायुषोः पञ्चेन्द्रियतिर्यङ्मनुष्याः, मनुष्यतिर्यगायुषोः पुनरेकेन्द्रियादयो जघ-
न्यस्थितिबन्धस्वामिनो द्रष्टव्याः। उक्तशेषाणां पञ्चाशीतिप्रकृतीनां बादरपर्याप्तस्तद्बन्धकेषु सर्वविशुद्ध एकेन्द्रियो जघन्यां स्थितिं
करोति। अन्ये त्वेकेन्द्रियास्तथाविधविशुद्ध्यभावाद्बृहत्तरां स्थितिं निर्वर्तयन्ति। विकलेन्द्रियपञ्चेन्द्रियेषु शुद्धिरधिकाऽपि लभ्यते, केवलं
तेऽपि स्वभावादेव प्रस्तुतप्रकृतीनां महती स्थितिमुपकल्पयन्तीति शेषव्युदासेन यथोक्तैकेन्द्रियस्यैव ग्रहणमिति ॥१०१॥

**एवं बंधणकरणे परूविए सह हि बंधसयगेणं। बंधविहाणाहिगमो सुहमभिगंतुं लहुं होइ ॥१०२॥**

(चू०)—'एवं'ति–भणियविहिणा बन्धणकरणे परूविते एवं बन्धणकरणं वुच्चति। एतंमि बन्धणकरणे बन्धस-
यगेण सह परूविते 'बन्धसतगं'ति–सतगमेव भण्णति 'बन्धविहाणाभिगमो'त्ति–बन्धविहाणस्स अभिगमो अव
बोहो सुभं अभिगंतुं लहुं भवतित्ति सुहं सिग्घं भवतित्ति ॥१०२॥

॥ एवं बन्धणकरणं सम्मत्तं ॥

(मलय०)—'एवं' ति–'एवम्' उक्तप्रकारेणास्मिन् बन्धनकरणे 'बन्धशतकेन' बन्धशतकाख्येन ग्रन्थेन सह प्ररूपिते सति। एतेन

किल शतककर्मप्रकृत्योरेककर्तृकता आवेदिता द्रष्टव्या। बन्धविधानस्य पूर्वगतस्य सुखमधिगन्तुं सुखेन ज्ञातुमिष्यमाणस्याभिगमोऽवबोधो लघु शीघ्रं भवति ॥१०२॥

॥ इति श्रीमलयगिरिविरचितायां कर्मप्रकृतिटीकायां बन्धनकरणम् ॥

(उ०)—एवममुना प्रकारेण बन्धनकरणे बन्धशतकेन शतकाख्येन ग्रन्थेन सह प्ररूपिते सति, अनया च वचनभङ्ग्या शतककर्मप्रकृत्योरेककर्तृकता समुच्चयेनोभयग्रन्थार्थज्ञानस्यावश्योपयोगित्वं चावेदितं भवति। बन्धविधानस्य पूर्वगतस्याभिगमोऽवबोधः सुखमधिगन्तुं–सुखेन प्राप्तुं, इष्यमाणस्येति शेषः, लघु–शीघ्रं भवति ॥१०२॥

विवृतं बन्धनकरणं कर्मप्रकृतौ गभीरभावायाम्। श्रीनयविजयबुधानां कृपयैव यशोविजयसुधिया ॥१॥

नमोत्थु णं समणस्स भगवओ महावीरस्स ।

सिद्धान्तकोविदसुविहिताचार्यश्रीविजयदानसूरीश्वरगुरुभ्यो नमः

## कर्मप्रकृतौ संक्रमकरणम् ।

चूर्णिः—भणियं बंधणकरणं, इदाणिं संकमकरणं भण्णइ। तस्स इमे अहिगारा—सामण्णविसेसलक्खणविही, अववातो, णियमो, [तो] विगप्पो, सादिअणादिपरूवणा, सामित्तमिति। तत्थ पगतिट्ठितिअणुभागपदेससंकमाणं सामण्णलक्खणं भणइ—

**सो संकमो त्ति वुच्चइ जं बंधणपरिणओ पओगेणं । पगयंतरत्थदलियं परिणमयइ तयणुभावे जं ॥१॥**

(चू०)—यस्या बन्धनं यद्बन्धनं, तेन परिणतो जीवपोग्गलपरिणामो बंधो त्ति भणियं। "जीवपरिणामहेतो(तू) कम्मत्ता पोग्गला परिणमन्ति। पोग्गलकम्मणिमित्तं जीवो वि तहेव परिणमति" ॥ ति। 'पयोगेणं'ति–संकिलेसविसोहिअज्झवसाणसण्णीएणं वीरियविसेसेणं। 'पगतिंतरत्थं' ति–प्रकृतेरन्या प्रकृतिः प्रकृत्यन्तरं तत्थितं पगतिंतरत्थं। 'दलितं'–कम्मदव्वं। 'तदणुभावेण' इति–वज्झमाणकम्मसभावेण। एस अत्थो–जमिति दलितं संवज्झति अतिथोवमितं भवति वंधे संकमो त्ति ॥१॥

आ०श्रीमलय० टी०—तदेवमुक्तं बन्धनकरणम्, संप्रत्युद्देशक्रमेण वक्तुमवसरप्राप्तं संक्रमकरणम्। संक्रमश्च प्रकृतिस्थित्यनुभागप्रदेशरूपविषयभेदाच्चतुर्विधः। तत्र प्रथमतः संक्रमस्य सामान्यलक्षणमभिधातुकाम आह—'सो संकमु' त्ति। इह जीवो 'यद्बन्धनपरिणतो' यस्याः प्रकृतेर्बन्धनेन—बन्धकत्वेन परिणतः, अनेन किलेदमावेद्यते—यदि जीवस्तथारूपबन्धनपरिणामपरिणतो भवति ततः कर्मवर्गणापुद्गला अपि कर्मरूपतया परिणमन्ते, नान्यथा। उक्तं च—"जीवपरिणामहेऊ कम्मत्ता पुग्गला परिणमन्ति। पोग्गलकम्मनिमित्तं जीवो वि तहेव परिणमइ ॥" अस्या अक्षरगमनिका—जीवसत्कात् परिणामाद्—अध्यवसायाद्धेतोः, जीवपरिणामं हेतुमाश्रित्येत्यर्थः, कर्मवर्गणान्तःपातिनो जीवस्वप्रदेशावगाढाः पुद्गलाः कर्मरूपतया—ज्ञानावरणीयादिकर्मरूपतया परिणमन्ते। अथ जीवस्यापि तथारूपः परिणामः कस्माद्भवतीति चेत्, उच्यते—'पुग्गल' इत्यादि। पुद्गलरूपं प्राग्बद्धं कर्म विपाकोदयप्राप्तं तन्निमित्तं तत्सामर्थ्यादिति भावः। जीवोऽपि तथैव स्वप्रदेशावगाढकर्मवर्गणान्तःपातिपुद्गलकर्मरूपतापत्तिहेतुतयैव परिणमत इति। 'पओगेणं' ति—प्रयोगेण संक्लेशसंज्ञितेन विशोधिसंज्ञितेन वा वीर्यविशेषेण, विवक्षितायाः प्रकृतेरन्या प्रकृतिः प्रकृत्यन्तरं विवक्षितवध्यमानप्रकृतिव्यतिरिक्ताऽन्या प्रकृतिरित्यर्थः, तत्रस्थं दलिकं, तदनुभावेन—वध्यमानप्रकृतिस्वभावेन, यत् परिणमयति—परिणमनमापादयति स संक्रम उच्यते। एतदुक्तं भवति—वध्यमानासु प्रकृतिषु मध्येऽवध्यमानप्रकृतिदलिकं प्रक्षिप्य वध्यमानप्रकृतिरूपतया यत्तस्य परिणमनम्, यच्च वा वध्यमानानां प्रकृतीनां दलिकरूपस्येतरेतररूपतया परिणमनं तत्सर्वं संक्रमणमित्युच्यते। तत्र वध्यमानप्रकृतिष्ववध्यमानप्रकृतीनां संक्रमो यथा—सातवेदनीये वध्यमानेऽसातवेदनीयस्य, उच्चैर्गोत्रे वा नीचैर्गोत्रस्येत्यादि। वध्यमानानां परस्परं संक्रमो यथा—वध्यमाने मतिज्ञानावरणीये वध्यमानमेव श्रुतज्ञानावरणं संक्रमयति, श्रुतज्ञानावरणे वा वध्यमाने वध्यमानमेव मतिज्ञानावरणीयमित्यादि। इह यत्प्रकृतिबन्धकत्वेन

परिणत आत्मा तदनुभावेन प्रकृत्यन्तरस्थं दलिकं यत्परिणमयति स संक्रम इत्युक्तम् ॥१॥

उ० श्रीयशो० व्याख्या—उक्तं बन्धनकरणम्, अथोद्देशक्रमेण संक्रमकरणं वक्तुमवसरप्राप्तम्, संक्रमश्च प्रकृतिस्थित्यनुभागप्रदेशविषयभेदाच्चतुर्धा। तत्र प्रथमतः संक्रमसामान्यलक्षणमाह—इह जीवो यद्बन्धनपरिणतो—यस्याः प्रकृतेर्बन्धकत्वेन परिणतः, अनेनेदं सूच्यते—यदुत जीवकर्मणोस्तथातथात्रध्यबन्धकभावे परस्परं सव्यपेक्षत्वमिति। उक्तं च—"जीवपरिणामहेऊ कम्मत्ता पोग्गला परिणमन्ति। पोग्गलकम्मणिमित्त जीवो वि तहेव परिणमई" इति ॥ बध्यमाने कर्मणि जीवस्य तथाविधाध्यवसायद्वारा प्राग्बद्धकर्मणश्च तथाविधविपाकोदयद्वारा मिथः सहकारित्वमित्यस्या निर्गलितोऽर्थः। प्रयोगेण संक्लेशाख्येन विशोध्याख्येन वा वीर्यविशेषेण प्रकृत्यन्तरं—प्रकृतबध्यमानप्रकृतिभिन्ना प्रकृतिः, तत्रस्थम् (दलिकम्), तदनुभावे—सप्तम्यास्तृतीयार्थत्वाद् बध्यमानप्रकृतिस्वभावेन यत्परिणमयति स संक्रम उच्यते। बध्यमानासु प्रकृतिषु मध्येऽबध्यमानप्रकृतिदलिकं प्रक्षिप्य बध्यमानप्रकृतिरूपतया तस्य परिणमनं यद्, यश्च बध्यमानानामेव भिन्नप्रकृतीनां दलिकस्येतरेतररूपतया परिणमनं तत्सर्वं संक्रम इति भावः। तत्र बध्यमानप्रकृतिष्वबध्यमानप्रकृतीनां संक्रमो यथा—सातवेदनीये बध्यमानेऽसातवेदनीयस्य, उच्चैर्गोत्रे वा नीचैर्गोत्रस्येत्यादि। बध्यमानानां परस्परं संक्रमो यथा—बध्यमाने मतिज्ञानावरणीये बध्यमानस्यैव श्रुतज्ञानावरणस्य, श्रुतज्ञानावरणे वा बध्यमाने बध्यमानस्यैव मतिज्ञानावरणस्य संक्रम इत्यादि ॥१॥

बंधादिरित्तो वि अत्थि संकमो, सो ण भणितो। तस्स संगहत्थं इमं गाहट्टो—

दुसु वेगे दिट्ठिदुगं बंधेण विणा वि सुद्धदिट्ठिस्स। परिणमयइ जीसे तं पगईइ पडिग्गहो एसो ॥२॥

(चू०)—'दुसुवे' त्ति–सम्मत्तसम्मामिच्छत्तेसु मिच्छत्तं संकमति। 'एगे' इति संमत्ते सम्मामिच्छत्तं संकमति। 'सुद्धदिट्ठिस्स' इति संमदिट्ठिस्सेव। एरिसो संकमो ण अण्णस्सेति णियमिज्जइ। भणियं सामण्णलक्खणं णियमो य। जहिं संकामिज्जति, तेण विणा णत्थि संकमो त्ति; तेण पडिग्गहलक्खणं भण्णति–'परिणमयति जिस्से तं पगतीए पडिग्गहो एसो'। यस्यां प्रकृतौ जीवस्तद्भावेन परिणमयति सो प्रकृतिः पगतीए संकममाणाए पडिग्गहो वुच्चति ॥२॥

(मलय०)—एतच्च लक्षणं दर्शनत्रिकव्यतिरेकेणान्यत्र द्रष्टव्यम्, दर्शनत्रिके पुनर्बन्धं विनापि संक्रमोऽवगन्तव्यः। तथा चाह–'दुसु' त्ति। शुद्धदृष्टेः–सम्यग्दृष्टेर्द्वयोः सम्यक्त्वसम्यग्मिथ्यात्वयोराधारभूतयोर्मिथ्यात्वम्, एकस्मिंश्च सम्यग्मिथ्यात्वं बन्धं विनापि संक्रामति। इयमत्र भावना–इह मिथ्यात्वस्यैव बन्धो न सम्यक्त्वसम्यग्मिथ्यात्वयोः, यतो मिथ्यात्वपुद्गला एव मदनकोद्रवस्थानीया औषधविशेषकल्पेनौपशमिकसम्यक्त्वानुगतेन विशोधिस्थानेन त्रिधा क्रियन्ते, तद्यथा–शुद्धा अर्धविशुद्धा अविशुद्धाश्च। तत्र विशुद्धाः सम्यक्त्वम्, अर्धविशुद्धाः सम्यग्मिथ्यात्वम्, अविशुद्धा मिथ्यात्वम्। तत्र विशुद्धसम्यग्दृष्टिः सम्यक्त्वसम्यग्मिथ्यात्वयोर्बन्धं विनापि तत्र मिथ्यात्वं संक्रमयति, सम्यग्मिथ्यात्वं च सम्यक्त्वे इति। तदेवमुक्तं संक्रमस्य सामान्यलक्षणम्, संप्रति यासु प्रकृतिषु प्रकृत्यन्तरस्थं दलिकं संक्रमयति तासां संज्ञान्तरमाह–'परिणमयइ' इत्यादि। यस्यां प्रकृतौ आधारभूतायां तत्प्रकृत्यन्तरस्थं दलिकं परिणमयति–आधारभूतप्रकृतिरूपतामापादयति एषा प्रकृतिराधारभूता पतद्ग्रह इव पतद्ग्रहः संक्रम्यमाणप्रकृत्याधार इत्यर्थ ॥ २ ॥

(उ०)—एतच्च बन्धगर्भितं संक्रमलक्षणं दर्शनत्रिकव्यतिरेकेण द्रष्टव्यमित्यभिप्रायवानाह–'शुद्धदृष्टेः'–सम्यग्दृष्टेर्द्वयोः–सम्यक्त्वसम्यग्मिथ्यात्वयोराधारभूतयोर्मिथ्यात्वम्, 'एकस्मिँश्च' सम्यक्त्वे सम्यग्मिथ्यात्वं बन्धं विनापि संक्रामति। इह हि मिथ्यात्वस्यैव

बन्धः, न सम्यक्त्वसम्यग्मिथ्यात्वयोः, यतो मिथ्यात्वपुद्गला एवौपशमिकसम्यक्त्वानुगतेन विशोधिस्थानेन त्रिधा क्रियन्ते–शुद्धा अर्धविशुद्धा अविशुद्धाश्च। तत्र विशुद्धाः सम्यक्त्वम्, अर्धविशुद्धाः सम्यग्मिथ्यात्वम्, अविशुद्धाश्च मिथ्यात्वमिति। ततो विशुद्धसम्यग्दृष्टिः सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहणरूपबन्धाभावेऽपि मिथ्यात्वं संक्रमयति, सम्यग्मिथ्यात्वं च सम्यक्त्वे। एतदतिरिक्तस्थल एव बन्धः पतद्ग्रहकतावच्छेदक इत्यर्थः। उक्तं संक्रमसामान्यलक्षणम्। अथ यासु प्रकृतिषु प्रकृत्यन्तरस्थं दलिकं संक्रमयति तासां संज्ञाविशेषमाह–'परिणमयइ' इत्यादि। यस्यां प्रकृतावाधारभूतायां तत्प्रकृत्यन्तरस्थं दलिकं परिणमयति–आधाररूपप्रकृतिरूपतामापादयति एषा प्रकृतिराधारभूता संक्रम्यमाणप्रकृत्याधारत्वात् पतद्ग्रह इव पतद्ग्रह उच्यते ॥ २॥

अतिपसत्तं लक्खणमिति अववादो भण्णति—

**मोहदुगाउगमूलपगतीण न परोप्परंमि संकमणं। संकमबंधुदउव्वट्टणालिगाईणकरणाइं ॥ ३ ॥**

(चू०)—'मोहदुगमिति'–दंसणमोहणिज्जं चरित्तमोहणिज्जं वा, तेसिं परोप्परसंकमं णिवारेति। तहा मूलपगति-आउगाणं पि परोप्परसंकमणं णिवारेति। संकंतदलियाहिगारेण जं संकंतं दलितं तं आवलिआए अंतो करणजोग्गं ण भवति त्ति भणंतो चेव लाघवत्थं बन्धादिआवलियागयं पि करणजोग्गं ण होति त्ति पसंगेण भणति–'संकमबंधुदयउव्वट्टणालिगाईणकरणाइं' ॥३॥

(मलय०)—संक्रमलक्षणं च प्रागुक्तमतिप्रसक्तमिति तत्रापवादमाह–'मोह' त्ति–'मोहद्विकं'–दर्शनमोहनीयं चारित्रमोहनीयं च, तयोः परस्पर संक्रमो न भवति। तथाहि–न दर्शनमोहनीयं चारित्रमोहनीये संक्रमयति, चारित्रमोहनीयं वा दर्शनमोहनीये। तथा आयूंषि

चत्वार्यपि न परस्पर संक्रमयति, नापि मूलप्रकृतीः परस्परं संक्रमयति । तथाहि—न ज्ञानावरणीये दर्शनावरणीयं संक्रमयति, नापि दर्शनावरणीये ज्ञानावरणीयम्, एवं सर्वास्वपि मूलप्रकृतिषु भावनीयम्। अपि च यस्मिन् दर्शनमोहनीये यो जन्तुरवतिष्ठते, स तदन्यत्र न संक्रमयति । यथा मिथ्यादृष्टिर्मिथ्यात्वम्, सम्यग्मिथ्यादृष्टिः सम्यग्मिथ्यात्वम्, सम्यग्दृष्टिः सम्यक्त्वम्, तथा सासादनाः सम्यग्मिथ्यादृष्टयश्च न किमपि दर्शनमोहनीयं क्वापि संक्रमयन्ति, अविशुद्धदृष्टित्वात् । बन्धाभावे हि दर्शनमोहनीयस्य संक्रमो विशुद्धदृष्टेरेव भवति, नाविशुद्धदृष्टेः । अन्यच्च परप्रकृतिषु संक्रान्तं दलिकमावलिकामात्रं कालं यावदुद्वर्तनादिसकलकरणायोग्यमवगन्तव्यम् । न केवलं संक्रान्तम्, अपि तु बन्धाद्यावलिकागतमपि । तथा चाह—'संकम' इत्यादि—संक्रमावलिकागतम्, बन्धावलिकागतम्, उदयावलिकागतम्, उद्वर्तनावलिकागतम्, आदिशब्दादुपशान्तं मोहनीयं दर्शनमोहनीयत्रिकरहितमित्येतानि सर्वाण्यप्यकरणानि—सकलकरणायोग्यान्यवसेयानि । दर्शनत्रिकं तूपशान्तमपि संक्रमयति ॥ ३ ॥

(उ०)—अथ लक्षणद्वारा सामान्यतः प्रतिपाद्यमानः संक्रमोऽतिप्रसक्त इति तत्रापवादमाह—'मोहद्विकस्य'—दर्शनमोहनीयचारित्रमोहनीयलक्षणस्य, तथायुषां चतुर्णामपि मूलप्रकृतीनां च ज्ञानावरणीयदर्शनावरणीयादिलक्षणानां परस्परं संक्रमो न भवति । इदमुपलक्षणम्, तेन यस्मिन् दर्शनमोहनीये यो जन्तुरवतिष्ठते स तदन्यत्र न संक्रमयति, यथा मिथ्यादृष्टिर्मिथ्यात्वम्, सम्यग्मिथ्यादृष्टिः सम्यग्मिथ्यात्वं, सम्यग्दृष्टिः सम्यक्त्वम्, तथा सासादनाः सम्यग्मिथ्यादृष्टयश्च न किमपि दर्शनमोहनीयं क्वापि संक्रामयन्ति, अविशुद्धदृष्टित्वात्, बन्धाभावे च दर्शनमोहनीयसंक्रमस्य विशुद्धदृष्टेरेवागमोक्तत्वात् । तथा मिश्रे सम्यक्त्वं न संक्रमयतीत्यपि द्रष्टव्यं, उक्तं च—"नियनियदिट्ठि न केइ दुइयं तइया न दंसणतिगं पि । मीसम्मि न सम्मत्तं" ति । अन्यच्च परप्रकृतिषु संक्रान्तं दलिकमावलिकामात्रं कालं

यावदुद्वर्तनादिसकलकरणायोग्यमवगन्तव्यम्, न केवलं संक्रान्तम्, अपि तु बन्धाद्यावलिकागतमपि तथेत्याह–'संकम' इत्यादि–संक्रमावलिकागतं बन्धावलिकागतमुदयावलिकागतमुद्वर्तनावलिकागतम्, आदिशब्दादुपशान्तं च मोहनीयं दर्शनमोहनीयत्रयवर्जितमित्येतानि सर्वाण्यप्यकरणानि- सकलकरणायोग्यान्यवसेयानि । दर्शनत्रिकं तूपशान्तमपि संक्रमयतीति द्रष्टव्यम् ॥३॥

वुत्तो सामण्णलक्खणापवादो, आणुपुव्वीए अणाणुपुव्वीए य विसेसेण संकमे पत्ति (पत्ते) यत्र नेष्टं तत्र नियमार्थमाह—

अंतरकरणम्मि कए चरित्तमोहेऽणुपुव्विसंकमणं । अन्नत्थ सेसिगाणं च सव्वहिं सव्वहिं बंधे ॥४॥

(चू०)—अंतरकरणविही उवसामणाकरणे भण्णिहिंति। 'चरित्तमोहे' त्ति–पुरिसवेयसंजलणाणगहणं, ण सेसाणं । 'अणुपुर्व्वीसंकमणं' ति–परिवाडीसंकमणं। 'अण्णत्थे' त्ति–अंतरकरणादन्यत्र चरित्रमोहस्यापि इत्यर्थः। 'सेसियाणं च सव्वहिं' नि–अंतरकरणावस्थायां अन्यत्र चेति । 'सव्वहिं बंधे' इति नियमनं–अवस्थान्तरापेक्षायामपि मा भूदयन्धेऽन्यासां संक्रम इति । जहा सामण्णलक्खणपत्तस्स संकमस्स जत्थ ण इच्छिज्जति तत्थववातो णियमो य भणितो तहा पडिग्गहस्स वि वन्धे पडिग्गहोत्ति ॥४॥

(मलय०)—तदेवं लक्षणापवादोऽभिहितः । संप्रति क्रमेणोत्क्रमेण वाऽविशेषेण संक्रमे प्राप्ते सति नियममाह–'अंतरकरणंमि' त्ति–अन्तरकरणविधिरग्रे उपशमनाकरणाभिधानावसरे प्रतिपादयिष्यते । तत्रोपशमश्रेण्यां चारित्रमोहनीयोपशमनार्थमेकविंशतेः प्रकृतीनाम्,

१ सव्वाहा इति प्रत्यन्तरे ।

क्षपकश्रेण्यां पुनः कषायाष्टकक्षपणानन्तरं त्रयोदशप्रकृतीनामन्तरकरणे कृते सति 'चारित्रमोहे'—पुरुषवेदसंज्वलनचतुष्टयलक्षणे, अत्र हि चारित्रमोहनीयग्रहणेनैता एव पञ्च प्रकृतयो गृह्यन्ते, न शेषाः, बन्धाभावात्। तत्र आनुपूर्व्या—परिपाट्या संक्रमणं भवति, न त्वनानुपूर्व्या। तथाहि—पुरुषवेदं संज्वलनक्रोधादावेव संक्रमयति, नान्यत्र, संज्वलनक्रोधमपि संज्वलनमानादावेव, न तु पुरुषवेदे, संज्वलनमानमपि संज्वलनमायादावेव, न तु संज्वलनक्रोधादौ, संज्वलनमायामपि संज्वलनलोभे एव, न तु संज्वलनमानादाविति। 'अन्नत्थ' त्ति—अन्तरकरणादन्यत्र पञ्चानामपि पुरुवेदादिप्रकृतीनां शेषाणां पुनः प्रकृतीनां 'सव्वहिं' ति—सर्वस्मिन्नप्यवस्थाविशेषेऽन्तरकरणावस्थायामन्यत्र वा इत्यर्थः, सर्वैः प्रकारैः क्रमेणोत्क्रमेण वा संक्रमोऽवगन्तव्यः। किं सर्वदैव? नेत्याह—'बन्धे' बन्धकाले, न त्वन्यदा यथोक्तं प्राक् ॥ ४ ॥

(उ०)—तदेवमुक्तोऽनतिप्रसक्तः संक्रमविधिः। अथ क्रमोत्क्रमाविशेषेण संक्रमे प्राप्ते नियममाह—अन्तरकरणविधिरग्रे वक्ष्यते। तत्रोपशमश्रेण्यां चारित्रमोहनीयोपशमनायैकविंशतेः प्रकृतीनाम्, क्षपकश्रेण्यां तु कषायाष्टकक्षपणानन्तरं त्रयोदशप्रकृतीनामन्तरकरणे कृते सति। 'चारित्रमोहे'—पुरुषवेदसंज्वलनचतुष्टयलक्षणे। अत्र शेषाणां बन्धाभावाच्चारित्रमोहशब्देनैता एव पञ्च प्रकृतयो गृह्यन्ते। तत्रानुपूर्व्या—परिपाट्या संक्रमणं भवति, न त्वनानुपूर्व्या। तथाहि—पुरुषवेदं संज्वलनक्रोधादावेव संक्रमयति, नान्यत्र, संज्वलनक्रोधमपि संज्वलनमानादावेव, न तु पुरुषवेदे, संज्वलनमानमपि संज्वलनमायादावेव, न तु संज्वलनक्रोधादौ, संज्वलनमायामपि संज्वलनलोभ एव, न तु संज्वलनमानादौ, संज्वलनलोभस्त्वसंक्रान्त एव तिष्ठति। 'अन्नत्थ' ति—अन्तरकरणादन्यत्र पञ्चानामपि पुरुषवेदादिप्रकृतीनां शेषाणां पुनः प्रकृतीनां 'सव्वहिं' ति—सर्वस्मिन्नप्यवस्थाविशेषेऽन्तरकरणावस्थायामन्यत्र वेत्यर्थः, सर्वथा—सर्वैः प्रकारैः क्रमेणोत्क्रमेण

दा संक्रमोऽवगन्तव्यः। किं सर्वदैव ? नेत्याह—बन्धे—बन्धकाले, न त्वन्यदा, बन्धाभावे बन्धगर्भितसंक्रमलक्षणस्यैवाभावादित्यर्थः ॥४॥

सव्वत्थ बंधे पडिग्गहत्ते पसत्ते यत्र नेष्यते तत्र प्रतिषेधार्थं नियमार्थं चाह—

**तिसु आवलियासु समयूणिगासु अपडिग्गहाउ संजलणा। दुसु आवलियासु पढमट्ठिती सेसासु वि य वेदो ॥५॥**

(चू०)—चउण्हं संजलणाणं समयूणतियावलियसेसा पढमट्ठितीए वज्झमाणाणं पि अपडिग्गहत्तं। समयूणदुआवलियसेसाए पुरिसवेदस्स अपडिग्गहत्तं, न सेसवेदाणं। किं कारणं ? तेसिं बंधो चेव णत्थि ॥५॥

(मलय०)—तदेवं संक्रमस्य सामान्यलक्षणविधिरपवादो नियमश्चोक्तः। संप्रति यदुक्तं—यस्याः प्रकृतेर्बन्धः सा प्रकृत्यन्तरदलिकसंक्रमणं प्रति पतद्ग्रह इति, तत्रापवादमाह—'तिसु' त्ति—अन्तरकरणे कृते प्रथमस्थितौ तिसृष्वावलिकासु समयोनासु सतीषु चत्वारोऽपि संज्वलना अपतद्ग्रहाः, पतद्ग्रहा न भवन्ति। एतदुक्तं भवति—चतुर्ष्वपि संज्वलनेषु प्रथमस्थितौ 'तिसृष्वावलिकासु'—समयोनावलिकात्रिकशेषायां गत्यां बध्यमानेष्वपि नान्यत्प्रकृत्यन्तरदलिकं तेषु संक्रामति, तेन तदानीमपतद्ग्रहाः। तथाऽन्तरकरणे कृते सति द्वयोरावलिकयोः प्रथमस्थितिसत्कयोः समयोनयोः सत्योर्वेदः-पुरुषवेदः पतद्ग्रहो न भवति, न किमपि तत्र प्रकृत्यन्तरदलिकं संक्रामतीत्यर्थः। वेदश्चेह पुरुषवेद एव द्रष्टव्यः, न स्त्रीनपुंसकवेदौ, तदानीं तयोर्बन्धाभावादेवापतद्ग्रहत्वसिद्धेः। अपि च मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वस्य मिथ्यात्वसम्यग्मिथ्यात्वयोश्च क्षपितयोः सम्यक्त्वस्योद्वलितयोस्तु सम्यक्त्वसम्यग्मिथ्यात्वयोर्मिथ्यात्वस्यापतद्ग्रहताऽनुक्ताऽपि द्रष्टव्या, न खलु तत्रापि किंचित् संक्रामतीति ॥ ५ ॥

(उ०)—तदेवं संक्रमसामान्यलक्षणविध्यपवादनियमा उक्ताः। अथ यदुक्तं यस्या प्रकृतेर्बन्धः सा प्रकृत्यन्तरदलिकसंक्रमं प्रति पत-

द्ग्रह इति सामान्यातिप्रसक्तावपवादमाह—अन्तरकरणे कृते प्रथमस्थितौ तिसृष्वावलिकासु समयोनासु सतीषु चत्वारोऽपि संज्वलना अपतद्ग्रहाः, अन्तरकरणे कृते प्रथमस्थितौ समयोनावलिकात्रिकशेषायां सत्यां वध्यमानेष्वपि संज्वलनेषु प्रकृत्यन्तरदलिकं न संक्रामति, तेन ते तदानीं पतद्ग्रहा न भवन्तीत्यर्थः। तथान्तरकरणे कृते सति द्वयोरावलिकयोः ( समयोनयोः ) प्रथमस्थितिसत्कयोः सत्योर्वेदः—पुरुषवेदः पतद्ग्रहो न भवति, न किमपि तत्र प्रकृत्यन्तरदलिकं संक्रामतीत्यर्थः। स्त्रीनपुंसकवेदयोस्तदानीं बन्धाभावादेवापतद्ग्रहत्वसिद्धेर्वेदशब्देनेह पुंवेद एव गृह्यते। अपि च मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वस्य पतद्ग्रहता न भवति, मिश्रे हि मिथ्यात्वदलिकमेव संक्रामति नान्यत्, तच्च मिथ्यात्वं क्षीणम्, ततः संक्रम्यमाणदलिकाभावात्तत्रापतद्ग्रहत्वसिद्धिरिति। तथा मिथ्यात्वसम्यग्मिथ्यात्वयोः क्षपितयोः सम्यक्त्वस्य न पतद्ग्रहता, सम्यक्त्वे मिथ्यात्वसम्यग्मिथ्यात्वयोरेव संक्रमसंभवात्, तदुभयक्षये संक्रम्यमाणप्रकृत्यसंभवेन पतद्ग्रहत्वायोगात्। तथा सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलितयोर्मिथ्यात्वस्य न पतद्ग्रहता। मिथ्यात्वे हि सम्यक्त्वं सम्यग्मिथ्यात्वं वा संक्रामति, न चारित्रमोहनीयमपि, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमप्रतिषेधात्। सम्यक्त्वसम्यग्मिथ्यात्वे चोद्वलिते इति संक्रमाभावादपतद्ग्रहतेत्येतत्सर्वमनुक्तमपि पञ्चसंग्रहाद् द्रष्टव्यम् ॥५॥

इयाणिं सादिअणादिपरूवणा कायव्वत्ति तत्थ आह—

**साइ अणाइ धुव अधुवा य सव्वधुवसंतकम्माणं। साइ अधुवा य सेसा मिच्छा वेयणियनीएहिं ॥६॥**

(चू०)—सम्मत्तसम्मामिच्छत्तणिरयगतिमणुयगतिदेवगति, एयासं चेवाणुपुव्वीउ वेउव्विय(आहारग)सत्तगं, तित्थगरं, उच्चागोयं ति; ( सेसत्ति ) पयाओ चउवीसं अधुवसंतातो य पगतीउ सेसाउ आउगवज्जातो तीसुत्तरं

सतं धुवसंताउ। ततो तीसुत्तरसयाउ सायासातणीयागोयमिच्छत्तेसु धुवसंकमो ण होतु त्ति अवणीतेसु सेसं छवीसुत्तरं पगतिसतं सातियातिचउव्विहसंकमं। कहं? भण्णइ–सगसगपगतिबंधवोच्छेदे जाते संकमाभावाउ। ततो पुणो बंधादयणे पगईए सातिउ संकमो, तं भावमपत्तस्स अणादिउ, बंधवोच्छेदाभावाउ अभवसिद्धियस्स धुवो, भवसिद्धियस्स अधुवो। किं कारणं? बंधवोच्छेदं काहिंति। चउवीसाए अधुवसंताणं अधुवसंतत्तादेव सातियअधुवो संकमो। सातासातवेदणीयगोयाण 'परियत्तमाणिउ' त्ति काउ सातिअधुवो। मिच्छत्तस्स कहं? सुद्धदिट्ठिस्स एव संकमोत्ति। सुद्धदिट्ठित्तणस्स सातिअधुवताउ सातियअधुवो। भणितो (ता) संकमस्स साद्दियादिपरूवणा ॥ ६ ॥

(मलय०)—सम्प्रति साधनादिप्ररूपणामाह–'साइ' त्ति। सम्यक्त्वसम्यग्मिथ्यात्वनरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरोच्चैर्गोत्रलक्षणाश्चतुर्विंशतिप्रकृतयोऽध्रुवसत्कर्माण आयुश्चतुष्टयं च, शेषं पुनस्त्रिंशदुत्तरं प्रकृतिशतं ध्रुवसत्कर्म। ततोऽपि सातासातवेदनीयनीचैर्गोत्रमिथ्यात्वरूपं चतुष्टयमपनीयते, ततः शेषस्य षड्विंशत्युत्तरप्रकृतिशतस्य साद्यादिरूपतया चतुर्विधोऽपि संक्रमो भवति, तथाहि–अमूषां ध्रुवसत्प्रकृतीनां संक्रमविषयप्रकृतिबन्धव्यवच्छेदे सति संक्रमो न भवति, ततः पुनरपि तासां संक्रमविषयप्रकृतीनां स्वबन्धहेतुसंपर्कतो बन्धारम्भे सति भवति, ततोऽसौ सादिः, तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादिः, अभव्यस्य ध्रुवः, कदाचिदपि व्यवच्छेदाभावात्, भव्यस्य पुनरध्रुवः, कालान्तरे व्यवच्छेदसंभवात्। शेषाश्चतुर्विंशतिप्रकृतयोऽध्रुवसत्कर्मणो मिथ्यात्ववेदनीयनीचैर्गोत्रैः सह 'साद्यध्रुवाः' साद्यध्रुवसंक्रमा अवगन्तव्याः। तथाहि–अध्रुवसत्कर्मणामध्रुवसत्कर्मत्वादेव संक्रमः सादिरध्रुवश्चा-

वगन्तव्यः। सातासातवेदनीयनीचैर्गोत्राणां तु परावर्तमानत्वात्, मिथ्यात्वस्य पुनः संक्रमो विशुद्धसम्यग्दृष्टेः, विशुद्धसम्यग्दृष्टित्वं च कादाचित्कम्, ततस्तस्यापि संक्रमः साद्यध्रुव एव ॥ ६ ॥

( उ० )—सम्प्रति साद्यनादिप्ररूपणामाह—सम्यक्त्वसम्यग्मिथ्यात्वनरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरोच्चैर्गोत्रलक्षणाश्चतुर्विंशतिप्रकृतयोऽध्रुवसत्ताका आयुश्चतुष्टयं च। शेषं पुनस्त्रिंशदुत्तरं प्रकृतिशतं ध्रुवसत्कर्म। ततोऽपि सातासातवेदनीयनीचैर्गोत्रमिथ्यात्वरूपं प्रकृतिचतुष्टयमपसार्यते, ततोऽवशिष्टाः सर्वा ध्रुवसत्कर्मप्रकृतयः षड्विंशत्युत्तरशतसङ्ख्याः संक्रममधिकृत्य साद्यादिरूपतया चतुर्विधा अपि भवन्ति। तथाहि—अमूषां ध्रुवसत्कर्मप्रकृतीनां संक्रमविषयप्रकृतिबन्धव्यवच्छेदे सति संक्रमो न भवति, ततः पुनरपि तासां संक्रमविषयप्रकृतीनां स्वबन्धहेतुसंपर्कतो बन्धारम्भे सति भवति, ततोऽसौ सादिः, तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादिः, अभव्यस्य ध्रुवः, कदाचिदपि व्यवच्छेदाभावात्, भव्यस्य पुनरध्रुवः, कालान्तरे व्यवच्छेदसंभवाद्। शेषाश्चतुर्विंशतिरध्रुवसत्कर्मप्रकृतयः मिथ्यात्ववेदनीयनीचैर्गोत्रैः सह संक्रममाश्रित्य साद्यध्रुवा अवगन्तव्याः। तथाहि—अध्रुवसत्कर्मणामध्रुवसत्कर्मत्वादेव संक्रमः साद्यध्रुवोऽवगन्तव्यः, सातासातवेदनीयनीचैर्गोत्राणां तु परावर्तमानत्वात्। तथाहि—साते बध्यमानेऽसातस्य संक्रमः, असाते च बध्यमाने सातस्य, नान्यदा, तथोच्चैर्गोत्रे बध्यमाने नीचैर्गोत्रस्य संक्रमः, नीचैर्गोत्रे च बध्यमाने उच्चैर्गोत्रस्य, तत एषां संक्रमः सादिरध्रुवश्चेति। मिथ्यात्वस्य संक्रमो विशुद्धसम्यग्दृष्टेर्भवति, विशुद्धसम्यग्दृष्टित्वं च कादाचित्कम्, ततस्तस्य संक्रमः साद्यध्रुव एवेति।

स्यादेतत्, कासां प्रकृतीनां किं संक्रमपर्यवसानस्थानं येन तत ऊर्ध्वमभवन् प्रतिपाते च पुनरपि भवन् संक्रमः सुज्ञानः स्यात्?

उच्यते—सातवेदनीयस्य संक्रमका मिथ्यादृष्ट्यादयः प्रमत्तपर्यवसाना ज्ञेयाः, न परे, परतो ह्यसातवेदनीयं न बध्यते, किंतु सातवेदनीयमेव, ततोऽसातस्यैव साते बध्यमाने संक्रमो भवति, न सातस्येति। अनन्तानुबन्धिनां मिथ्यादृष्ट्यादयोऽप्रमत्तसंयतपर्यवसानाः संक्रमकाः, न परे, परतस्तेषामुपशान्तत्वेन क्षीणत्वेन वा संक्रमस्याभावात्। यशःकीर्तेर्मिथ्यादृष्ट्यादयोऽपूर्वकरणान्ताः संक्रमका भवन्ति, न परे, परतस्तस्या केवलाया एव बन्धेन पतद्ग्रहत्वस्यैव भावात्। अनन्तानुबन्धिवर्जद्वादशकषायनोकषायाणां मिथ्यादृष्ट्यादयो निवृत्तिबादरसंपरायपर्यवसानाः संक्रमकाः, परतस्तेषामुपशान्तत्वेन क्षीणत्वेन वा संक्रमाभावात्। मिथ्यात्वसम्यग्मिथ्यात्वयोरविरतसम्यग्दृष्ट्यादय उपशान्तमोहपर्यवसानाः संक्रमकाः, न परे, परतस्तयोः सत्ताया एवाभावात्। सासादनाः सम्यग्मिथ्यादृष्टयश्च न किमपि दर्शनमोहनीयं क्वापि संक्रमयन्ति। मिथ्यादृष्टिस्तु मिथ्यात्वं स्वाधारभूतं स्वभावादेव न संक्रमयतीत्यविरतसम्यग्दृष्ट्यादय इत्युक्तम्। सम्यग्मिथ्यात्वस्य पुनर्मिथ्यादृष्टिरपि संक्रमको भवति। तथा सम्यक्त्वस्य मिथ्यादृष्टिरेव संक्रमकः, नान्यः, यतः सम्यक्त्वं मिथ्यात्वे वर्तमानः संक्रमयति, न सासादने मिश्रे वा, मिथ्यात्वे च वर्तमानो मिथ्यादृष्टिरेव। तथोच्चैर्गोत्रस्य मिथ्यादृष्टिसासादना एव संक्रमकाः, नान्ये, अन्येषां नीचैर्गोत्राबन्धकत्वात्, नीचैर्गोत्रबन्धकाल एव च तत्संक्रमाभ्युपगमात्। उक्तशेषाणां च मतिज्ञानावरणीयादिप्रकृतीनां सूक्ष्मसंपरायपर्यवसानानां मिथ्यादृष्ट्यादयः संक्रमकाः, न परे, परतो बन्धाभावेन पतद्ग्रहप्रकृत्यभावात् ॥ ६ ॥

## आयुषां संक्रमाभावेन चतुष्पञ्चाशदधिकशतप्रकृतीनां संक्रमस्य साद्यादिभङ्गकयन्त्रम् ।

| प्रकृतीनां संक्रमः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| १२६ ध्रुवसत्ताकानां | प्रतिग्रहरूपबन्धविच्छेदानन्तर पुनर्बन्धे | भव्यानाम् | सादित्वाप्राप्तस्य | अभव्यानाम् |
| २४ अध्रुवसत्ताकानां | अध्रुवसत्त्वादेव | अध्रुवसत्त्वादेव | ० | ० |
| वेदनीययोः नीचैर्गोत्रस्य च | बन्धे परावर्त्तमानत्वात् | बन्धे परावर्त्तमानत्वात् | ० | ० |
| मिथ्यात्वस्य | विशुद्धसम्यग्दृष्टेः संक्रम्यमाणत्वेन कादाचित्कत्वात् | सादित्वात् | ० | ० |

चतुष्पञ्चाशदधिकशतप्रकृतीनां संक्रमपर्यवसानाः ।

| | | | |
|---|---|---|---|
| ज्ञानदर्शनावरणयोः | सूक्ष्मसम्परायान्ताः | आद्यवर्जद्वादशकषायाणां नोकषायाणां च | अनिवृत्तिबादरान्ताः |
| सातवेदनीयस्य | प्रमत्तान्ताः | यशःकीर्तेः | अपूर्वकरणषष्ठभागपर्यवसानाः |
| असातस्य | सूक्ष्मसम्परायान्ताः | | |
| मिथ्यात्वस्य | अविरतसम्यग्दृष्टेरारभ्योपशान्तपर्यवसानाः | जिनस्य | द्वितीयतृतीयवर्जसूक्ष्मसम्परायपर्यन्ताः |
| मिश्रस्य | मिथ्यादृष्टिरविरतसम्यग्दृष्टेरारभ्योपशान्तपर्यवसानाश्च | जिनयशोवर्जितशेषनाम्न एकोत्तरशतस्य | सूक्ष्मसम्परायपर्यवसानाः |
| सम्यक्त्वस्य | मिथ्यादृष्टयः | उच्चैर्गोत्रस्य | प्रथमद्वितीयगुणस्थानवर्तिनः |
| अनन्तानुबन्धिचतुष्कस्य | अप्रमत्तान्ताः | नीचैर्गोत्रस्यान्तरायपञ्चकस्य च | सूक्ष्मसम्परायपर्यवसानाः |

इदानीं पतद्ग्रहस्य भण्णति—

मिच्छत्तजढा य पडिग्गहंमि सव्वधुववंधपगतीओ। णेया चउव्विगप्पा सादि य अधुवा य सेसाओ ॥७॥

(चू०)—चसद्दा संकमे वि मिच्छत्तजढा एव चउव्विहत्ति संबज्झइ सव्वधुवबंधपगतीणं। पंचण्हं णाणावरणीयाणं णवण्हं दंसणावरणीयाणं सोलसण्हं कसायाणं भयं दुगंछाणं तेजइयसत्तगं वण्णादीणं वीसाणं अगुरुलहुगं उवघाय णिमेण पंचण्हं अंतराइयाणं एयासिं सतसट्ठीपगतीणं धुवबंधियत्ति काउ जावप्पप्णो बन्धच्छेदो (न) भवति ताव धुवपडिग्गहत्तं। ततो अप्पप्पणो बन्धवोच्छेदे कते धुवसंकमपगतीणमेव सादियादियो भाणियव्वो। 'साति य अधुवा य सेसाउ' त्ति सत्ता(अट्ठा)सीए वुत्तसेसाए सादि य अधुवो। मिच्छत्तस्स तु विज्जमाणसम्मत्तमीसगस्स पडिग्गहत्तंति ततो साद(द्य)ध्रुवत्वात सातियअधुवपडिग्गहता। एवमेगेगपगतीणं सङ्कमपडिग्गहाणं सादिआदिपरूवणा कता ॥ ७ ॥

(मलय०)—साम्प्रतं पतद्ग्रहाणां साद्यनादिप्ररूपणामाह—'मिच्छत्त' त्ति—'मिथ्यात्वजढाः' मिथ्यात्वरहिताः सर्वा अपि ध्रुवबन्धिन्यः प्रकृतयः—पञ्च ज्ञानावरणीयानि, नव दर्शनावरणीयानि, षोडश कषायाः, भयम्, जुगुप्सा, तैजससप्तकम्, वर्णादिर्विंशतिः, अगुरुलघु, उपघातम्, निर्माणम्, अन्तरायपञ्चकं चेति। एताः संक्रममधिकृत्य चतुर्विकल्पाः साद्यनादिध्रुवाध्रुवरूपचतुर्भेदा ज्ञेयाः। तथाहि—एतासां सप्तषष्टिसंख्यानां ध्रुवबन्धिनीनामात्मीयात्मीयबन्धव्यवच्छेदसमये पतद्ग्रहत्वं न भवति, न किमपि प्रकृत्यन्तरदलिकं तासु संक्रामतीत्यर्थः। पुनः स्वस्वबन्धहेतुसंपर्कतो बन्धारम्भे सति पतद्ग्रहत्वं भवति, ततः सादिः, तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे अभव्यभव्यापेक्षया। 'साई' इत्यादि। शेषास्त्वध्रुवबन्धिन्योऽष्टाशीतिसंख्याः प्रकृतयोऽध्रुवबन्धित्वादेव साद्यध्रुवपतद्ग्रहता भावनीया। मिथ्यात्वस्य पुनर्ध्रुवबन्धित्वेऽपि यस्य सम्यक्त्वसम्यग्मिथ्यात्वे विद्येते स एव ते तत्र संक्रमयति नान्य

इति तस्य साद्यध्रुवपतद्ग्रहता द्रष्टव्या ॥ ७ ॥

(३०)—'पतद्ग्रहे' पतद्ग्रहविषये 'मिच्छत्तजढा य' त्ति—मिथ्यात्वरहिताः सर्वा अपि ध्रुवबन्धिन्यः प्रकृतयो ज्ञानावरणपञ्चकदर्शनावरणनवकषोडशकषायभयजुगुप्सातैजससप्तकवर्णादिविंशतिनिर्माणागुरुलघूपघातान्तरायपञ्चकलक्षणाः सप्तषष्टिश्चतुर्विकल्पाः साद्यनादिध्रुवाध्रुवरूपचतुर्भेदा ज्ञेयाः। तथाहि—एतासां ध्रुवबन्धिनीनां स्वस्वबन्धव्यवच्छेदे सति पतद्ग्रहत्वं न भवति, न किमपि प्रकृत्यन्तरदलिकं तत्र संक्रामतीत्यर्थः। पुनः स्वबन्धहेतुसाम्राज्याद्बन्धारम्भे पतद्ग्रहत्वं भवतीति तत्सादि, तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादि। ध्रुवाध्रुवत्वे अभव्यभव्यापेक्षया भावनीये। शेषास्त्वध्रुवबन्धिन्योऽष्टाशीतिसङ्ख्याः प्रकृतयोऽध्रुवबन्धित्वादेव पतद्ग्रहत्वमधिकृत्य साद्यध्रुवा भावनीयाः। मिथ्यात्वस्य पुनर्ध्रुवबन्धित्वेऽपि यस्य सम्यक्त्वसम्यक्त्वमिथ्यात्वे विद्येते स एव ते तत्र संक्रमयति नान्य इति तस्य साद्यध्रुवपतद्ग्रहता द्रष्टव्या ॥ ७ ॥

१ आयुषोऽध्रुवबन्धित्वेनान्तर्भावः कृतः नान्यप्रकृतिप्रतिग्रहत्वेन, यद्वाऽऽयुष उद्वर्तनापवर्तनरूपौ प्रतिग्रहौ ग्राह्यौ, मिश्रसम्यक्त्वयोः पतद्ग्रहत्वभावेऽपि बन्धाभावात् तद्ग्रहणं न कृतमिति।

पतद्ग्रहप्रकृतीनां साद्यादिभङ्गकयन्त्रम् ।

| प्रकृतीनां प्रतिग्रहता | सादिः | अध्रुवाः | अनादि | ध्रुवा |
|---|---|---|---|---|
| ६७ ध्रुवबन्धिनीनाम् | स्वस्वबन्धव्यवच्छेदानन्तरं पुनर्बन्धारम्भे | भव्यानाम् | सादित्वाप्राप्तस्य | अभव्यानाम् |
| ८४ अध्रुवबन्धिनीनाम् | अध्रुवबन्धित्वादेव | अध्रुवबन्धित्वादेव | ० | ० |
| मिथ्यात्वस्य | पतद्ग्रहताया एव कादाचित्कत्वात् | पतद्ग्रहताया एव कादाचित्कत्वात् | ० | ० |
| मिश्रसम्यक्त्वयोः | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |

इदानीं पगतिठाणेसु वि सातियातिपरूवणा कायव्वत्तिऽतिदेसो कतो—

**पगईठाणे वि तहा पडिग्गहो संकमो य बोद्धव्वो। पढमंतिमपगईणं पंचसु पंचण्ह दो वि भवे ॥८॥**

(चू०)—अतिसंक्षिप्तत्वान्नावगम्यत इति किंचिदुच्यते–णाणावरणंतराईयाणं एगेगं पगतिठाणं, तेसिं तेसिं सङ्कमपडिग्गहभावो सातियातियो चउविहो वि। दंसणावरणस्स दुण्णि सङ्कमट्ठाणाणि–णवविहं छव्विहं च, तिण्णि पडिग्गहट्ठाणाणि–णवविहं छव्विहं चउविहं ति। णवविहस्स सङ्कमे पडिग्गहे य सातियाउ(इ)चउव्विहो वि। अवसेसा सातियअधुवा। वेयणीयस्स पगतिट्ठाणं एगमेवेति तं सातियातिचउव्विहं। मोहणीयस्स तेवीसं सङ्कमट्ठाणाणि सत्तावीसादीणि वक्ष्यमाणाणि, अट्ठारस पडिग्गहट्ठाणाणि बावीसादीणि। तेसु पंचवीससङ्कमो एगवीसपडिग्गहो य सातियातिचउविगप्पो, सेसा सङ्कमा पडिग्गहा य सादिया अधुवा। णामंमि तिउत्तर-सतादीणि बारस सङ्कमट्ठाणाणि, तेवीसादीणि अट्ठ पडिग्गहट्ठाणाणि वि सातिया अधुवा। णियगोयस्स एगं पगतीट्ठाणं सङ्कमे पडिग्गहे य सादि अधुवं। उच्चगोयस्स उच्चलणेण अणित्त सञ्जातो। इदाणि विगप्पावसरो, सो य दंसणावरणमोहणाणामेव पगतीसङ्कमे संभवति, सामित्तेणं च सह जाति त्ति न पृथगुच्यते, ठितिसंकामगिसु संभवति, उद्दिट्ठो। इदाणि सङ्कमसामित्तं भण्णति–'पढमंतिमपगतीणं पंचसु पंचण्हं ति वि भागे (एहं दो वि भवे)' त्ति। तत्थ णाणावरणंतराइयाणं एगं सङ्कमट्ठाणं, एगं पडिग्गहट्ठाणं। पंचण्हमेव अप्पप्पणो पगतिसमुदायो सङ्कमो पडिग्गहो य अप्पप्पणो पगइं मोत्तूणं पंच वि पंचसु मिच्छद्दिट्ठिप्पभिइ जाव सुहुमरागस्स चरिमसमतो ताव सङ्कमन्ति। एवं पडिग्गहत्तं पि ॥ ८ ॥

(मलय०)—तदेवमेकैकप्रकृतीनां संक्रमस्य पतद्ग्रहत्वस्य च साधनादिप्ररूपणा कृता। सम्प्रति प्रकृतिस्थानेषु तां चिकीर्षुरतिदेश-

माह–'पगईठाणे' त्ति। यथैकैकस्याः प्रकृतेः पतद्ग्रहत्वं संक्रमश्च साद्यादिरूप उक्तस्तथा प्रकृतिस्थानेष्वपि बोद्धव्यः। द्वित्रादीनां च प्रकृतीनां समुदायः प्रकृतिस्थानम्। तत्र प्रथमतो ज्ञानावरणीयस्य तत्समानवक्तव्यत्वादन्तरायस्य च संक्रमपतद्ग्रहत्वस्थानप्रतिपादनार्थमाह–'पढमंतिम' इत्यादि। प्रथमप्रकृतेर्ज्ञानावरणीयस्य अन्तिमप्रकृतेरन्तरायस्य संबन्धिनीनां प्रत्येकं पञ्चानामपि प्रकृतीनां पञ्चस्वपि प्रकृतिषु द्वावपि संक्रमपतद्ग्रहभावौ भवतः। एतदुक्तं भवति–ज्ञानावरणीयान्तराययोरेकैकं पञ्चप्रकृत्यात्मकं स्थानं संक्रमे पतद्ग्रहभावे च भवतीति। तौ चेमौ संक्रमपतद्ग्रहभावौ साद्यादिरूपतया चतुष्प्रकारौ। तथाहि–उपशान्तमोहगुणस्थानके तयोरभावात्, ततः प्रतिपाते च पुनः संभवाद् सादी, तत्स्थानमप्राप्तस्य पुनरनादी, ध्रुवाध्रुवता चाभव्यभव्यापेक्षया भावनीया ॥ ८ ॥

(उ०)—तदेवमेकैकप्रकृतीनां संक्रमपतद्ग्रहत्वयोः साद्यनादिप्ररूपणा कृता। अथ प्रकृतिस्थानेषु तामतिदिशन्नाह–यथा एकैकस्याः प्रकृतेः पतद्ग्रहः संक्रमश्च साद्यादिरूपतयोक्तस्तथा प्रकृतिस्थानेष्वपि बोद्धव्यः। द्वित्रादीनां प्रकृतीनां समुदायः प्रकृतिस्थानम्। तत्रैकैकां प्रकृतिं बुद्धौ गृहित्वा प्रकृतिसंक्रमपतद्ग्रहौ यथोच्येते तथा समुदायविवक्षायां प्रकृतिस्थानसंक्रमपतद्ग्रहावपि वाच्याविति नातिविशेष इति भावः। वस्तुस्थित्या तु यदैका प्रकृतिरेकस्यां प्रकृतौ संक्रामति यथा सातमसातेऽसातं वा साते तदा प्रकृतिसंक्रमः, यस्यां तु संक्रामति सा प्रकृतिपतद्ग्रहः। यदा प्रभूताः प्रकृतय एकस्यां संक्रामन्ति, यथा यशःकीर्त्तावेकस्यां शेषनामप्रकृतयः तदा प्रकृतिस्थानसंक्रमः प्रकृतिपतद्ग्रहः, यदा तु प्रभूतासु प्रकृतिष्वेका संक्रामति, यथा मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोस्तदा प्रकृतिस्थानपतद्ग्रहः प्रकृतिसंक्रमः, यदा तु प्रभूतासु प्रभूताः संक्रामन्ति तदा प्रकृतिस्थानसंक्रमः प्रकृतिस्थानपतद्ग्रह इति द्रष्टव्यम्। इत्थं च प्रकृतिस्थानसंक्रमपतद्ग्रहयोः साद्यादिप्ररूपणामतिदेशेनैव कृत्वा प्रतिकर्म संक्रमपतद्ग्रहविषयस्थानसङ्ख्यानिरूपयि-

पुगह–'पढमंतिम' इत्यादि । प्रथमप्रकृतेर्ज्ञानावरणीयस्यान्तिमप्रकृतेरन्तरायस्य सम्बन्धिनीनां प्रत्येकं पञ्चानामपि प्रकृतीनां पञ्चस्वपि प्रकृतिषु द्वावपि संक्रमपद्ग्रहभावौ भवतः । इदमुक्तं भवति–ज्ञानावरणान्तराययोरेकमेवपञ्चप्रकृत्यात्मकं सत्तास्थानं संक्रमस्थानं चैकमेव च पञ्चप्रकृत्यात्मकं बन्धस्थानं पतद्ग्रहस्थानं चेति । इमौ च संक्रमपतद्ग्रहभावौ साद्यादिरूपतया चतुष्प्रकारौ । तथाहि–उपशान्तमोहगुणस्थाने तयोरभावात्, ततः प्रतिपाते च पुनः संभवात्सादी, तत्स्थानमप्राप्तस्य पुनरनादी, ध्रुवाध्रुवावभव्यभव्यापेक्षयेति ॥८॥

इदाणिं दरिसणावरणीयस्स दोण्हि संकमठाणाणि नवविहं छव्विहं च, तिण्णि पडिग्गहट्ठाणाणि—

नवगच्छक्कचउक्के णवगं छक्कं च चउसु विइयम्मि । अन्नयरस्सिं अन्नयरा वि य वेयणीयगोएसु ॥ ९ ॥

(चू०)—णवविहं छव्विहं चउव्विहं चेति । तत्थ णवविहपडिग्गहो मिच्छदिट्ठीसासायणसम्मदिट्ठीणं णवविहबंधगाणं णवविहं णवविहपडिग्गहे संकमति । इदाणिं छव्विहपडिग्गहे सम्मामिच्छदिट्ठीप्पभित्ति जाव अपुव्वकरणद्धाए संखेज्जइतो भागो णवविहसंतकम्मंसियाणं णवविहं छव्विहे पडिग्गहे संकमेति । इदाणिं चउव्विहपडिग्गहे अपुव्वकरणस्स णिद्दापयलाणं बंधवोच्छेदाउ उवरि आरद्धं जाव सुहुमरागस्स चरिमो समतो ताव णवविहसंतकम्मंसिताणं णवविहं चउव्विहपडिग्गहे संकमति, अणिअट्टिअद्धाए य [अ]संखेज्जभागावसेसाए थीणगिद्धितियक्खविए छव्विहसंतकम्मंसिताणं जाव सुहुमखवगस्स चरिमो समतो चउविहं बंधमाणाणं चउव्विहपडिग्गहे छव्विहं संकमति । इयाणिं वेयणिज्जस्स अण्णयरं अण्णयरे बज्झमाणंमि संकमति, अण्णयरं

अण्णयरस्स पडिग्गहे । इदाणिं सायाबंधगाणं मिच्छद्दिट्ठीप्पभिति जाव सुहुमरागो सातासातकम्मंसिताणं सायपडिग्गहे असातं संकमति । इयाणिं असातबंधगाणं मिच्छद्दिट्ठिप्पभिति जाव पमत्तसंजतो सातासातकम्मंसिताणं (अ)सातपडिग्गहे सातं संकमति । इदाणिं गोयस्स सामण्णलक्खणं जहा वेयणियस्स । णीयागोयस्स उच्चागोए संकमो जहा असातस्स साते संकमो । इयाणिं णीयागोयबंधगाणं मिच्छादिट्ठीसासायणाणं णीयउच्चागोयसंतकंमिसी(मंसि)ताणं णीयागोयस्स पडिग्गहे उच्चागोतं संकमति ॥ ९ ॥

(मलय०)—सम्प्रति दर्शनावरणीयस्य संक्रमपतद्ग्रहत्वस्थानप्रतिपादनार्थमाह—'नवग' त्ति—'द्वितीये' दर्शनावरणीये नवकषट्कचतुष्केषु नवकं संक्रामति, षट्कं च चतसृषु प्रकृतिषु । तेनेह द्वे संक्रमस्थाने, तद्यथा—नवकं षट्कं च । त्रीणि पतद्ग्रहस्थानानि, तद्यथा—नवकं षट्कं चतुष्कं च । तत्र नवकरूपे पतद्ग्रहे मिथ्यादृष्टयः सासादनाश्च नवविधदर्शनावरणीयबन्धका नवकमपि संक्रमयन्ति । अयं च नवकरूपः पतद्ग्रहः साद्यादिरूपतया चतुष्प्रकारः, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—सम्यग्मिथ्यादृष्ट्यादिगुणस्थानेषु न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया । तथा सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्यापूर्वकरणस्य संख्येयतमं भागं यावन्नवविधदर्शनावणीयसत्कर्माणः षड्विधदर्शनावरणीयबन्धकाः षट्के नवकं संक्रमयन्ति । अयं तु षट्करूपः पतद्ग्रहः साद्यध्रुवः, कादाचित्कत्वात् । तथाऽपूर्वकरणस्य संख्येयतमे भागे निद्राप्रचलयोर्बन्धव्यवच्छेदे तत ऊर्ध्वं सूक्ष्मसंपरायगुणस्थानकचरमसमयं यावदुपशमश्रेण्यां नवविधदर्शनावरणीयसत्कर्माणश्चतुर्विधदर्शनावरणीयबन्धकाश्चतुष्के नवकं संक्रमयन्ति । अयमपि च चतुष्करूपः पतद्ग्रहः साद्यध्रुवः, कदाचिद्भावात् । नवकरूपः संक्रमश्चतुष्प्रकारः,

तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—सूक्ष्मसंपरायात्परत उपशान्तमोहे न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया । क्षपकश्रेण्यां पुनरनिवृत्तिकरणाद्धायाः संख्येयतमे भागेऽवशिष्टे सति स्त्यानर्द्धित्रिकक्षयात् परतः सूक्ष्मसंपरायगुणस्थानकचरमसमयं यावत् षड्विधदर्शनावरणीयसत्कर्माणश्चक्षुरादिदर्शनावरणीयचतुष्टयं वध्नन्तस्तस्मिन् दर्शनावरणचतुष्के षट्कं संक्रमयन्ति । इमावपि संक्रमपतद्ग्रहौ साद्यध्रुवौ, कादाचित्कत्वात् । अतः परं तु न संक्रमो नापि पतद्ग्रहत्वमिति । सम्प्रति वेदनीयगोत्रयोः संक्रमपतद्ग्रहत्वस्थानप्रतिपादनार्थमाह—'अन्नयरस्सि' इत्यादि । वेदनीये गोत्रे चान्यतरस्यां प्रकृतौ वध्यमानायामन्यतराऽवध्यमाना प्रकृतिः संक्रामति । तेन या यत्र संक्रामति सा तस्याः पतद्ग्रहः, इतरा च संक्रमस्थानम् । तत्र सातवन्धकानां मिथ्यादृष्टिप्रभृतीनां सूक्ष्मसंपरायपर्यन्तानां सातासातसत्कर्मणां सातवेदनीयं पतद्ग्रहः, असातं संक्रमस्थानम् । असातवन्धकानां पुनर्मिथ्यादृष्टिप्रभृतीनां प्रमत्तसंयतपर्यन्तानां सातासातसत्कर्मणां असातवेदनीयं पतद्ग्रहः, सातवेदनीयं तु संक्रमस्थानम् । इमौ च सातासातरूपौ संक्रमपतद्ग्रहौ साद्यध्रुवौ, भूयो भूयः परावृत्त्य भावात् । तथा मिथ्यादृष्टिप्रभृतीनां सूक्ष्मसंपरायपर्यन्तानामुच्चैर्गोत्रवन्धकानामुच्चैर्नीचैर्गोत्रसत्कर्मणामुच्चैर्गोत्रं पतद्ग्रहः, नीचैर्गोत्रं तु संक्रमस्थानम् । नीचैर्गोत्रवन्धकानां तु मिथ्यादृष्टिसासादनानामुच्चनीचैर्गोत्रसत्कर्मणां नीचैर्गोत्रं पतद्ग्रहः, उच्चैर्गोत्रं तु संक्रम्यमाणं संक्रमस्थानम् । इमावप्युच्चैर्गोत्रनीचैर्गोत्ररूपौ संक्रमपतद्ग्रहौ प्रागिव साद्यध्रुवौ भावनीयौ ॥९॥

(उ०)—द्वितीये दर्शनावरणीये नवकषट्कचतुष्केषु नवकं संक्रामति षट्कं च चतसृषु प्रकृतिषु । तथा च दर्शनावरणे नवकषट्कचतुष्कलक्षणानि त्रीण्येव सत्तास्थानानि, त्रीण्येव वन्धस्थानानि पतद्ग्रहस्थानानि च, द्वे च संक्रमस्थाने—नवकं षट्कं चेति फलितम् । तत्र नवक-

रूपे पतद्ग्रहे मिथ्यादृष्टयः सासादनाश्च नवविधदर्शनावरणीयबन्धका नवकमपि संक्रमयन्ति । अयं च नवकरूपः पतद्ग्रहः साद्यादिरूपतया चतुष्प्रकारः, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—सम्यग्मिथ्यादृष्ट्यादिगुणस्थानेषु न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, अत्यक्तमिथ्यात्वस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। तथा सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्यापूर्वकरणस्य सङ्ख्येयतमं भागं यावन्नवविधदर्शनावरणीयसत्कर्माणः षड्विधदर्शनावरणीयबन्धकाः षट्के नवकं संक्रमयन्ति । अयं षट्करूपपतद्ग्रहः कादाचित्कत्वात्साद्यध्रुवः । तथाऽपूर्वकरणस्य सङ्ख्येयतमे भागे निद्राप्रचलयोर्बन्धव्यवच्छेदे तत ऊर्ध्वं सूक्ष्मसंपरायचरमसमयं यावदुपशमश्रेण्यां नवविधदर्शनावरणीयसत्कर्माणश्चतुर्विधदर्शनावरणीयबन्धकाश्चतुष्के नवकं संक्रमयन्ति । अयमपि चतुष्करूपः पतद्ग्रहः साद्यध्रुवः, कादाचित्कत्वात् । एतत्पतद्ग्रहत्रिकप्रतियोगी नवकरूपः संक्रमः साद्यादिभेदेन चतुर्विधः, सूक्ष्मसंपरायात्परत उपशान्तमोहे न भवति; ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया । क्षपकश्रेण्यां पुनरनिवृत्तिकरणाद्धायाः सङ्ख्येयतमे भागेऽवशिष्टे सति स्त्यानर्द्धित्रिकक्षयात्परतः सूक्ष्मसंपरायचरमसमयं यावत् षड्विधदर्शनावरणीयसत्कर्माणश्चक्षुरादिदर्शनावरणीयचतुष्टयं बध्नन्तस्तस्मिन् दर्शनावरणचतुष्के षट्कं संक्रमयन्ति । इमावपि संक्रमपतद्ग्रहौ कादाचित्कत्वात्साद्यध्रुवौ । अतः परं तु न संक्रमो नापि पतद्ग्रहत्वं, बन्धाभावात् । अत एव चतुष्करूपं तृतीयमपि संक्रमस्थानं न लभ्यते । वेदनीये गोत्रे चान्यतरस्यां प्रकृतौ बध्यमानायामन्यतराऽबध्यमाना प्रकृतिः संक्रामति । तेन या यत्र संक्रामति सा तस्याः पतद्ग्रहः, इतरा च संक्रमस्थानम् । तत्र मिथ्यादृष्ट्यादिसूक्ष्मसंपरायान्तानां सातबन्धकानां सातासातसत्कर्मणां सातवेदनीयं पतद्ग्रहः, असातं संक्रमस्थानं। असातबन्धकानां तु मिथ्यादृष्ट्यादीनां प्रमत्तान्तानां सातासातसत्कर्मणामसातवेदनीयं पतद्ग्रहः, सातवेदनीयं तु संक्रमस्थानम् । इमौ च साता-

गात्ररूपौ संक्रमपतद्ग्रहौ परावर्त्तमानत्वात्साद्यध्रुवौ। तथा मिथ्यादृष्ट्यादीनां सूक्ष्मसंपरायान्तानामुच्चैर्गोत्रबन्धकानामुच्चनीचैर्गोत्रसत्कर्मणामुच्चैर्गोत्रं पतद्ग्रहः, नीचैर्गोत्रं संक्रमस्थानम्। नीचैर्गोत्रबन्धकानां तु मिथ्यादृष्टिसासादनानामुच्चनीचैर्गोत्रसत्कर्मणां नीचैर्गोत्रं पतद्ग्रहः, उच्चैर्गोत्रं तु संक्रमस्थानम्। एतावप्युच्चनीचैर्गोत्ररूपौ संक्रमपतद्ग्रहौ परावर्त्तमानत्वादेव साद्यध्रुवौ ॥ ९ ॥

मोहायुर्नामवर्जप्रकृतिसंक्रमप्रतिग्रहस्थानानां साद्यादिभङ्गकयन्त्रम्।

| प्रकृतिस्थानानां संक्रमः | सादि· | अध्रुव· | अनादि· | ध्रुवः |
|---|---|---|---|---|
| ज्ञानावरणान्तराय-दशकस्य | उपशान्तमोहात् प्रतिपततः | भव्यानाम् | उपशान्तमोहा-प्राप्तस्य | अभव्यानाम् |
| दर्शनावरणीयनवकस्य | ,, | ,, | अत्यक्तमिथ्यात्वस्य | ,, |
| दर्शनावरणीयषट्कस्य | क्षपकश्रेण्यां विद्यमानत्वेन कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| असातवेदनीयस्य | परावर्त्तमानबन्धित्वात् | परावर्तमानबन्धित्वात् | ० | ० |
| सात० उच्च० नीच० च | ,, | ,, | ० | ० |

सङ्कमति। तस्सेव णपुंसगवेदे उवसंते एक्कवीसा सङ्कमति। बावीसाउ दंसणतिगस्स सम्मामिच्छत्ते खविते एक्कवीसा सङ्कमति। अहवा खवगसेढीए खवगस्स जाव अट्ठ कसाया ण खिज्जंति ताव एक्कवीसा सङ्कमति। एक्कविसातो उवसामगस्स इत्थिवेदे उवसामिदे वीसा सङ्कमति। खाइयस्स सम्मदिट्ठिस्स वा उवसमसेढीए पडिवण्णस्स चरित्तमोहस्स अंतरकरणे कते लोभसंजलणाए अणाणुपुव्वी सङ्कमो णत्थि त्ति वीसा सङ्कमइ। ततो णपुंसकवेदे उवसामिते एगूणवीसा सङ्कमइ। इत्थीवेदे उवसामिए अट्ठारस सङ्कमइ। उवसमसम्मदिट्ठिस्स उवसमसेढीए वीसातो छण्णोकसाए उवसामिए चोद्दस सङ्कमइ। ततो पुरिसवेदे उवसामिते तेरस सङ्कमइ। खवगस्स वा एक्कवीसाउ अट्ठकसाए खविते तेरस संकमति। चरित्तमोहस्स अंतरकरणे कते लोभस्स अणाणुपुव्वी संकमो णत्थि त्ति फेडिते बारस संकमति। अहवा उवसमसेढीए खाइयसम्मदिट्ठिस्स अट्ठारसातो छण्णोकसाते उवसामिते बारस संकमति। ततो पुरिसवेदे उवसामिते एक्कारस संकमंति। खवगस्स वा बारसातो णपुंसकवेदे (खविए) एक्कारस संकमंति। अहवा उवसमसेढीए तेरसातो कोहदुगे उवसंते एक्कारस संकमंति। खाइयसेढीए एक्कारसतो इत्थीवेदे खविए दस संकमंति। उवसमसेढीए उवसमसम्मद्दिट्ठिस्स एक्कारसातो कोहसंजलणे उवसंते दस संकमंति। उवसमसेढीए खाइयसम्मद्दिट्ठिस्स एक्कारसतो दो कोहे उवसामिते णव संकमंति। तस्सेव कोहसंजलणे उवसंते अट्ठ संकमंति। अहवा उवसमसेढीए उवसमसम्मद्दिट्ठिस्स दसाउ माणदुगे उवसंते अट्ठ संकमंति। तस्सेव माणसंजलणे उवसंते सत्त संकमंति। उवसमसेढीए खाइयसम्मदिट्ठिस्स अट्ठगाउ दो माणे

उवसंते छ संकमइ। तस्सेव माणसंजलणे उवसंते पंच संकामंति। अहवा उवसमसेढीए उवसमसम्मदिट्ठिस्स मत्तगाउ मायादुगे उवसंते पंच संकामंति। तस्सेव मायासंजलणे (उवसंते)चत्तारि संकमंति। अहवा खवगस्स दमाउ छण्णोकसाए खविते चत्तारि संकमंति। तस्सेव पुरिसवेदे खविते तिण्णि संकामंति। अहवा उवसमसेढीए खाइयसम्मदिट्ठिस्स पण्णगाउ मायादुगे उवसंते तिण्णि संकामंति। तस्सेव मा[ति]यासंजलणे उवसंते दो संकमन्ति। अहवा उवसमसेढीए उवसमसम्मदिट्ठिस्स चउक्कगातो लोभदुगे उवसंते दो संकमन्ति। अहवा खवगस्स तिभागातो (तिहिन्तो) कोहसंजलणे खविते दो संकमंति। तस्सेव माणसंजलणे खविए एगं संकामति। एवं मगि(ग्गि)ज्जमाणो(णे) अट्ठावीसा(स)चउवीससत्तरससोलसपण्णरसाण संकमो ण संभवति, तेण पडिसिद्धा। भणिता संकमासंकमट्ठाणपरूवणा ॥१०॥

(मलय०)—सम्प्रति मोहनीयस्य संक्रमपतद्ग्रहत्वस्थानप्रतिपादनावसरः, तत्र प्रथमतः संक्रमासंक्रमस्थाननिर्देशं चिकीर्षुराह—'अट्ठ' त्ति–अष्टाधिका चतुरधिका च विंशतिः, अष्टाविंशतिश्चतुर्विंशतिश्चेत्यर्थः, तथा सप्तदश षोडश पञ्चदश चेत्यमूनि स्थानानि वर्जयित्वा शेषाणि एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवदशैकादशद्वादशत्रयोदशचतुर्दशाष्टादशैकोनविंशतिविंशत्येकविंशतिद्वाविंशतित्रयोविंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिलक्षणानि त्रयोविंशतिसंख्यानि मोहनीये संक्रमस्थानानि भवन्ति। तथाहि—अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति मिथ्यात्वव्यतिरिक्ताः शेषाः सप्तविंशतिः संक्रामन्ति। तत्र चारित्रमोहनीयं पञ्चविंशतिप्रकृत्यात्मकं परस्परं संक्रामति। सम्यक्त्वसम्यग्मिथ्यात्वे च मिथ्यात्वे। तथा सम्यक्त्वे उद्वलिते सति सप्तविंशतिसत्कर्मणो

मिथ्यादृष्टेर्मिथ्यात्वं सम्यग्मिथ्यात्वस्य पतद्ग्रह इति तद्व्यतिरिक्ताः शेषाः षड्विंशतिः संक्रामन्ति । सम्यग्मिथ्यात्वेऽप्युद्वलिते सति षड्विंशतिसत्कर्मणः पञ्चविंशतिः । अथवाऽनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणः पञ्चविंशतिः, मिथ्यात्वस्य संक्रमाभावात्, न हि तच्चारित्रमोहनीये संक्रामति, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमाभावात् । अथवौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मणः सम्यक्त्वलाभादावलिकाया ऊर्ध्वं वर्त्तमानस्य सम्यक्त्वे मिथ्यात्वसम्यग्मिथ्यात्वयोः संक्रमः, तेन तत् पतद्ग्रह इति तस्मिन्नपसारिते शेषा सप्तविंशतिः संक्रमे प्राप्यते । तस्यैव चौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मण आवलिकाया अभ्यन्तरे वर्तमानस्य सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रामति, यतो मिथ्यात्वपुद्गला एव सम्यक्त्वानुगतविशोधिप्रभावतः सम्यग्मिथ्यात्वलक्षणं परिणामान्तरमापादिताः, अन्यप्रकृतिरूपतया परिणामान्तरापादनं च संक्रमः, संक्रमावलिकागतं च सकलकरणायोग्यमिति सम्यक्त्वलाभादावलिकाया अभ्यन्तरे वर्तमानेन सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रम्यते, किं तु केवलं मिथ्यात्वमेव, ततः सम्यग्मिथ्यात्वेऽप्यपसारिते शेषा षड्विंशतिः संक्रामति, चतुर्विंशतिस्तु संक्रमे न प्राप्यते, यतश्चतुर्विंशतिसत्कर्मा सम्यग्दृष्टिर्मिथ्यात्वं गतः सन् यद्यप्यनन्तानुबन्धिनो भूयोऽपि बध्नाति, तथापि तान् सतोऽपि न संक्रमयति, बन्धावलिकागतस्य सर्वकरणायोग्यत्वात्, मिथ्यात्वं च सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति तस्मिन्नपसारिते शेषा त्रयोविंशतिरेव संक्रामति। अथवा चतुर्विंशतिसत्कर्मणः सम्यग्दृष्टेः सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति तस्मिन्नपसारिते शेषा त्रयोविंशतिः संक्रामति । तस्यैव मिथ्यात्वे क्षपिते द्वाविंशतिः । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य चारित्रमोहनीयस्यान्तरकरणे कृते सति लोभसंज्वलनस्यापि संक्रमो न भवति, 'अन्तरकरणे कृते पुरुषवेदसंज्वलनचतुष्टययोरानुपूर्व्या संक्रमो भवति'इतिवचनप्रामाण्यात् अनन्तानुबन्धिचतुष्टयस्य च विसंयोजितत्वादुप-

शान्तत्वाद्वा संक्रमाभावः, सम्यक्त्वं च मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति संज्वलनलोभानन्तानुबन्धिचतुष्टयसम्यक्त्वेष्वष्टाविंशतेरपनीतेषु शेषा द्वाविंशतिः संक्रामति । तस्यैवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य नपुंसकवेदे उपशान्ते एकविंशतिः । द्वाविंशतितत्कर्मणो वा सम्यक्त्वं न क्वापि संक्रामतीत्येकविंशतिः संक्रमे प्राप्यते । यद्वा क्षपकश्रेण्यां वर्तमानस्य क्षपकस्य यावदद्याप्यष्टौ कषाया न क्षयमुपयान्ति तावदेकविंशतिः संक्रमे प्राप्यते । औपशमिकसम्यग्दृष्टेः संबन्धिन्याः प्रागुक्ताया एकविंशतेः स्त्रीवेदे उपशान्ते सति शेषा विंशतिः संक्रामति । यद्वा क्षायिकसम्यग्दृष्टेरुपशमश्रेणिं प्रतिपन्नस्य चारित्रमोहनीयस्यान्तरकरणे कृते लोभसंज्वलनस्यापि प्रागुक्तयुक्तेः संक्रमो न भवतीति तस्मिन्नपसारिते विंशतिः संक्रमे प्राप्यते । ततो नपुंसकवेदे उपशान्ते एकोनविंशतिः । स्त्रीवेदे उपशान्तेऽष्टादश । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताया विंशतेः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश संक्रामन्ति । ततः पुरुषवेदे उपशान्ते त्रयोदश । यद्वा क्षपकस्य क्षपकश्रेण्यां वर्तमानस्य प्रागुक्ताया एकविंशतेरष्टसु कषायेषु क्षीणेषु शेषास्त्रयोदश संक्रामन्ति । तस्यैव क्षपकस्य चारित्रमोहनीयस्यान्तरकरणे कृते संज्वलनलोभस्य प्रागुक्तयुक्तेः संक्रमो न भवतीति तस्मिन्नपसारिते शेषा द्वादश संक्रामन्ति । अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्योऽष्टादशभ्यः षट्सु नोकषायेषूपशान्तेषु सत्सु शेषा द्वादश संक्रामन्ति । ततः पुरुषवेदे उपशान्ते एकादश । क्षपकस्य वा प्रागुक्ताभ्यो द्वादशभ्यो नपुंसकवेदे क्षीणे शेषा एकादश संक्रामन्ति । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां प्रागुक्ताभ्यस्त्रयोदशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते शेषा एकादश संक्रमे प्राप्यन्ते । क्षपकश्रेण्यामेकादशभ्यः स्त्रीवेदे क्षीणे शेषा दश संक्रामन्ति । औपशमिकसम्यग्दृष्टेर्वोपशमश्रेण्यां वर्तमानस्यैकादशभ्यः संज्वलनक्रोधे उपशान्ते शेषा दश संक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्य एकादशभ्यो-

प्रत्याख्यानप्रत्याख्यानावरणलक्षणे क्रोधद्विक उपशान्ते शेषा नव संक्रामन्ति । तस्यैव संज्वलनक्रोधेऽप्युपशान्तेऽष्टौ । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यो दशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विके उपशान्ते शेषा अष्टौ संक्रामन्ति । तस्यैव संज्वलनमाने उपशान्ते सप्त । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्योऽष्टाभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विक उपशान्ते शेषाः षट् संक्रामन्ति । तस्यैव संज्वलनमान उपशान्ते पञ्च । यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यः प्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषाः पञ्च संक्रामन्ति । तस्यैव संज्वलनमायायामुपशान्तायां चतस्रः । अथवा क्षायिकसम्यग्दृष्टेः क्षपकस्य प्रागुक्ताभ्यो दशभ्यः षट्सु नोकषायेषु क्षीणेषु शेषाश्चतस्रः प्रकृतयः संक्रामन्ति । तस्यैव पुरुषवेदे क्षीणे तिस्रः, अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यः पञ्चभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषास्तिस्रः संक्रामन्ति । तस्यैव संज्वलनमायायामुपशान्तायां द्वे । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यश्चतसृभ्यः प्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे लोभद्विक उपशान्ते शेषे द्वे प्रकृती संक्रामतः । अथवा क्षायिकसम्यग्दृष्टेः क्षपकस्य प्रागुक्ताभ्यस्तिसृभ्यः संज्वलनक्रोधे क्षीणे द्वे संक्रामतः । तस्यैव संज्वलनमाने क्षीण एका । तदेवं परिभाव्यमानेऽष्टाविंशतिचतुर्विंशतिसप्तदशषोडशपञ्चदशलक्षणानि संक्रमस्थानानि न प्राप्यन्ते इति प्रतिषिध्यन्ते । तेषु च प्रतिषिद्धेषु शेषाणि त्रयोविंशतिसंख्यानि संक्रमस्थानान्यवगन्तव्यानि । एतेषु संक्रमस्थानेषु मध्ये पञ्चविंशतिप्रकृत्यात्मकं संक्रमस्थानं साद्यादिरूपतया चतुष्प्रकारम्, तद्यथा—साद्यनादि ध्रुवमध्रुवं च। तत्राष्टाविंशतिसत्कर्मणः सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलितयोर्भवत् सादि, अनादिमिथ्यादृष्टेरनादि, अध्रुवध्रुवता भव्याभव्यापेक्षया । शेषाणि तु संक्रमस्थानानि साद्यध्रुवाणि, कादाचित्कत्वात् ॥ १० ॥

(उ०)—मोहनीये पञ्चदश सत्तास्थानानि—अष्टाविंशतिः सप्तविंशतिः षड्विंशतिः चतुर्विंशतिः त्रयोविंशतिः द्वाविंशतिः एकविंशतिः त्रयोदश द्वादश एकादश पञ्च चतस्रः तिस्रः द्वे एका चेति । तत्राष्टाविंशतिश्चतुर्विंशतिश्च सत्तास्थानेऽभिहितेऽपि संक्रमे न प्राप्यते, ततः सत्तास्थानमध्ये तद्द्वयं सप्तदशषोडशपंचदशस्थानानि च वर्जयित्वैकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशैकादशद्वादशत्रयोदशचतुर्दशाष्टादशैकोनविंशतिविंशत्येकविंशतिद्वाविंशतित्रयोविंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिलक्षणानि त्रयोविंशतिसंख्यानि संक्रमस्थानानि भवन्ति । तथाहि—अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति मिथ्यात्वव्यतिरिक्ताः शेषाः सप्तविंशतिः संक्रामन्ति । तत्र चारित्रमोहनीयं पञ्चविंशतिप्रकृत्यात्मकं परस्परं संक्रामति । सम्यक्त्वसम्यग्मिथ्यात्वे च मिथ्यात्वे । तथा सम्यक्त्वे उद्वलिते सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं विना षड्विंशतिः संक्रामन्ति, मिथ्यात्वं सम्यग्मिथ्यात्वस्य पतद्ग्रह इति तत्पद्यते । सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशतिसत्कर्मणः पञ्चविंशतिः, अथवाऽनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणः पञ्चविंशतिः, मिथ्यात्वस्य स्थानाभावेन संक्रमाभावात् । अथवौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मणः सम्यक्त्वलाभादावलिकाया ऊर्ध्वं वर्तमानस्य सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रहः, तेन सम्यक्त्वे पतद्ग्रहीभूतत्वेन त्यक्ते शेषा सप्तविंशतिः संक्रमे प्राप्यते । तस्यैव चौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मण आवलिकाया अभ्यन्तरे वर्तमानस्य सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रामति, यतो मिथ्यात्वपुद्गला एव सम्यक्त्वानुगतविशोधिप्रभावेण सम्यग्मिथ्यात्वलक्षणं परिणामान्तरमापादिताः, स च परिणामविशेषोऽस्य संक्रमः, अन्यप्रकृतिरूपतया परिणामान्तरापादनस्यैव संक्रमलक्षणत्वात् । संक्रमावलिकागतं च सकलकरणायोग्यमिति सम्यक्त्वलाभादावलिकाया अभ्यन्तरे वर्तमानेन सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रम्यते, किं तु केवलं मिथ्यात्वमेव । ततः सम्यग्मि-

थ्यात्वेऽप्यपसारिते षड्विंशतिः संक्रामति, चतुर्विंशतिस्तु संक्रमे न प्राप्यते, चतुर्विंशतिसत्कर्मणः सम्यग्दृष्टेर्मिथ्यात्वं गतस्य तत्प्रत्ययेन भूयोऽप्यनन्तानुबन्धिनां बन्धेन लब्धसत्ताकानामपि बन्धावलिकागतस्य सकलकरणायोग्यत्वेन संक्रमाभावात्, मिथ्यात्वस्य च सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहत्वेनापसारणे त्रयोविंशतेरेव संक्रमः परिशेषात्। अथवा चतुर्विंशतिसत्कर्मणः सम्यग्दृष्टेः सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति तदपसारणे शेषास्त्रयोविंशतिः संक्रामन्ति। तस्यैव मिथ्यात्वे क्षपिते द्वाविंशतिः। अथवोपशमश्रेणीस्थस्यौपशमिकसम्यग्दृष्टेश्चारित्रमोहनीयस्यान्तरकरणे कृते पुंवेदसंज्वलनचतुष्टययोरानुपूर्व्या संक्रमाभिधानात्संज्वलनलोभस्य, अनन्तानुबन्धिचतुष्टयस्य च विसंयोजितत्वादुपशान्तत्वाद्वा संक्रमाभावात् सम्यक्त्वस्य च मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रहत्वेन त्यागात् संज्वलनलोभानन्तानुबन्धिचतुष्टयसम्यक्त्वेष्वष्टाविंशतेरपनीतेषु द्वाविंशतिः संक्रामति, तस्यैव नपुंसकवेदे उपशान्ते एकविंशतिः, द्वाविंशतिसत्कर्मणो वा सम्यक्त्वं स्थानाभावान्न क्वापि संक्रामतीत्येकविंशतिः। यद्वा क्षपकश्रेण्यां वर्तमानस्य क्षपकस्य यावदष्टानां कषायाणां न क्षयस्तावदेकविंशतिः संक्रमे प्राप्यते। औपशमिकसम्यग्दृष्टेः प्रागुक्ताया एकविंशतेर्मध्यात् स्त्रीवेदे उपशान्ते शेषा विंशतिः संक्रामति। यद्वा क्षायिकसम्यग्दृष्टेरुपशमश्रेणीं प्रतिपन्नस्य चारित्रमोहनीयस्यान्तरकरणे कृते संज्वलनलोभस्योक्तयुक्त्या संक्रमाभावादेव विंशतिः संक्रमे लभ्यते। ततो नपुंसकवेदे उपशान्ते एकोनविंशतिः, स्त्रीवेदे चोपशान्तेऽष्टादश। औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताया विंशतेः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश संक्रामन्ति। ततः पुरुषवेदे उपशान्ते त्रयोदश। यद्वा क्षपकश्रेणीस्थस्य क्षपकस्य सम्बन्धिन्या एकविंशतेः कषायाष्टकक्षये त्रयोदश। तस्यैव क्षपकस्य चारित्रमोहनीयस्यान्तरकरणे कृते संज्वलनलोभस्य संक्रमाभावात् द्वादश, अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्योऽष्टादशभ्यो नोकषायषट्के उपशान्ते द्वादश संक्रा-

मन्ति। ततः पुरुषवेदे उपशान्ते एकादश, क्षपकस्य वा प्रागुक्ताभ्यो द्वादशभ्यो नपुंसकवेदे क्षीणेऽवशिष्टा एकादश संक्रामन्ति, यद्वौपशमि-
कसम्यग्दृष्टेरुपशमश्रेण्यां प्रागुक्ताभ्यस्त्रयोदशभ्यो नपुंसकवेदे क्षीणेऽवशिष्टा एकादश संक्रामन्ति, यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां
प्रागुक्ताभ्यस्त्रयोदशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते एकादश संक्रामन्ति। क्षपकश्रेण्यामेकादशभ्यः स्त्रीवेदे क्षीणे
शेषा दश संक्रामन्ति, औपशमिकसम्यग्दृष्टेर्वा उपशमश्रेण्यां वर्तमानस्यैकादशभ्यः संज्वलनक्रोधे उपशान्ते शेषा दश संक्रामन्ति। क्षायि-
कसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्य एकादशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणक्रोधद्वये उपशान्ते नव संक्रामन्ति।
तस्यैव संज्वलने क्रोधेऽप्युपशान्तेऽष्टौ, यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेणीस्थस्य प्रागुक्ताभ्यो दशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्ष-
णमानद्वये उपशान्तेऽष्टौ संक्रामन्ति। तस्यैव संज्वलनमाने उपशान्ते सप्त। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्योऽ-
ष्टाभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणमानद्वये उपशान्ते षट्। तस्यैव संज्वलनमाने उपशान्ते पञ्च, यद्वौपशमिकसम्यग्दृष्टेरुपशम-
श्रेणीस्थस्य प्रागुक्ताभ्यः सप्तप्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणमायाद्विके उपशान्ते पञ्च। तस्यैव संज्वलनमायायामुपशान्तायां
चतस्रः, यद्वा क्षायिकसम्यग्दृष्टेः क्षपकस्य प्रागुक्ताभ्यो दशभ्यो नोकषायषट्कक्षये शेषाश्चतस्रः प्रकृतयः संक्रामन्ति। तस्यैव पुरुष-
वेदे क्षीणे तिस्रः, अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्यः पञ्चभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणमाया-
द्विके उपशान्ते शेषास्तिस्रः संक्रामन्ति। तस्यैव संज्वलनमायायामुपशान्तायां द्वे, अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य
प्रागुक्ताभ्यश्चतसृभ्यः प्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणलोभद्विके उपशान्ते शेषे द्वे प्रकृती संक्रामतः, यद्वा क्षायिकसम्य-
ग्दृष्टेः क्षपकस्य प्रागुक्ताभ्यस्तिसृभ्यः संज्वलनक्रोधे क्षीणे द्वे संक्रामतः। तस्यैव संज्वलनमाने क्षीणे एका। तदेवं भावितानि त्रयोविं-

शतिसंक्रमस्थानानि । एतेषु मध्ये पञ्चविंशतिप्रकृतिकं संक्रमस्थानं साद्यादिरूपतया चतुष्प्रकारम् । तथाहि–अष्टाविंशतिसत्कर्मणः सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलनया भवदेतत्सादि, अनादिमिथ्यादृष्टेरनादि, अध्रुवध्रुवता तु भव्याभव्यापेक्षयेति । शेषाणि तु संक्रमस्थानानि कादाचित्कत्वात्साद्यध्रुवाणि ॥१०॥

मोहनीयसंक्रमस्थानानां साद्यादिभङ्गकयन्त्रम् ।

| प्रकृतिस्थानसंक्रमः | सादिः | अध्रुवः | अनादिः | ध्रुव |
|---|---|---|---|---|
| २७ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २६ | ,, | ,, | ० | ० |
| २५ | सम्यक्त्वमिश्रयोरुद्वलनात् | भव्यानाम् | अनादिमिथ्यादृष्टे | अभव्यानाम् |
| २३ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २२, २१, २०, १९, १८, | ,, | ,, | ० | ० |
| १४, १३, १२, ११, १०, ९, | ,, | ,, | ० | ० |
| ८, ७, ६, ५, ४, ३, २, १ | ,, | ,, | ० | ० |

इयाणिं पडिग्गहापडिग्गहट्ठाणपरूवणा भण्णइ। तत्थ इमा गाहा—

**सोलस बारसगट्ठग वीसग तेवीसगाइगे छच्च। वज्जिय मोहस्स पडिग्गहा उ अट्ठारस हवंति ॥११॥**

(चू०)—सोलस, बारस, अट्ठ, वीस, तेवीस, चउवीस, पणवीसा, छव्वीसा, सत्तावीसा, अट्ठावीसा इति वव-ट्ठाणा पडिग्गहा ण होन्ति। सेसा अट्ठारस ट्ठाणा पडिग्गहा होन्ति। बावीसादीणि बंधट्ठाणाणि वुत्ताणि, तेसु सम्मत्तसम्मामिच्छत्ताणि सत्तरसबंधादिसु संभवंति त्ति तेसु पक्खित्तेसु पडिग्गहट्ठाणाणि एगूणवीसा-दीणि लब्भंति। तत्थ बावीसपडिग्गहो मिच्छादिट्ठिस्स अट्ठावीससंतकम्मंसियस्स लब्भति। एक्कवीसपडि-ग्गहो छव्वीससंतकम्मियस्स मिच्छादिट्ठिस्स लब्भति। सासायणस्स विसुद्धदिट्ठी ण होति त्ति दिट्ठितिगस्स संकमाभावाउ एक्कवीसा लब्भंति। सत्तरसबंधगस्स सम्मदिट्ठीस्स सम्मत्तसम्मामिच्छत्ते च्छूढे एगूणवीसा लब्भंति। तस्सेव मिच्छत्ते खविते सम्मामिच्छत्तस्स पडिग्गहाभावा अट्ठारस लब्भंति। तस्सेव खाइयसम्म-दिट्ठिस्स सत्तरस लब्भंति। अहवा सम्मामिच्छदिट्ठीस्स सुद्धदिट्ठी ण होति त्ति दिट्ठितिगस्स संकमाभावा सत्तरस्स पडिग्गहो। तेरसबंधगस्स सम्मत्तसम्मामिच्छत्ते च्छूढे पण्णरस लब्भइ। तस्सेव मिच्छत्ते खविए चोद्दस। (तस्सेव) खाईयसम्मदिट्ठिस्स तेरस लब्भंति। णवविहबंधगस्स सम्मत्तसम्मामिच्छत्ते पडिग्गहो त्ति छूढे एक्कारस लब्भंति। तस्सेव मिच्छत्ते खविए सम्मामिच्छत्तस्स पडिग्गह(हा)भावा दस लब्भते। तस्सेव खाइयसम्मदिट्ठिस्स णवपडिग्गहो भवति। पंचविहबंधगस्स सम्मत्तसम्मामिच्छत्ते पडिग्गहो त्ति छूढे सत्त

लब्भंति। तस्सेव पुरिसवेदस्स पडिग्गहत्ताए फिट्टाए छ लब्भंति। ततो चउव्विहबंधगस्स सम्मामिच्छत्तेसु पक्खित्तेसु छ लब्भंति। ततो कोहसंजलणो पडिग्गहो ण होति त्ति फेडिते पंच लब्भंति। अहवा उवसमसेढीए वा खाइगसम्मदिट्ठिस्स पंचविहबंधगस्स पंचपडिग्गहो। अहवा तिविहबंधगस्स सम्मत्तसम्मामिच्छत्तेसु छूढेसु पंचपडिग्गहो। ततो तस्स चेव माणसंजलणो पडिग्गहो ण होति त्ति फेडिते चत्तारि लब्भंति, अहवा खवग-सेढिट्ठिताणं खाइयसम्मदिट्ठीणं पंचगाउ पुरिसाणंदो (पुरिसवेदो) पडिग्गहो ण होति त्ति फेडिए चत्तारि लब्भंति। ततो चउक्काउ कोहसंजलणाए पडिग्गहो न होति त्ति फेडिए तिण्णि पडिग्गहो। अहवा एगविह-बंधगस्स सम्मत्तसम्मामिच्छत्तेसु तिण्णि लब्भंति। ततो लोभसंजलणे फिट्टे दोण्णि सम्मत्तसम्मामिच्छत्ताणि पडिग्गहो। खाइयसम्मदिट्ठीणं तिविहबन्धाउ माणसंजलणा पडिग्गहो (न हो)ति त्ति फेडिते दोण्णि पडि-ग्गहो। ततो मायासंजलणो पडिग्गहो ण होति त्ति फेडिते एगं पडिग्गहो, सो य लोभसंजलणो पडिग्गहो। एवं मग्गमाणा सोलसगादीणं दसण्हं ठाणाणं पडिग्गहया ण संभवति, तेण ते दस ट्ठाणा पडिसिद्धा। भणियाणि संकमपडिग्गहट्ठाणाणि।

इदानिं सामित्तं–को कं संकमेति, कंमि व पडिग्गहे? तं भण्णति–अट्ठावीससंतकंमंसियस्स मिच्छदिट्ठिस्स मिच्छत्तं पडिग्गहो त्ति फेडिते सेसा सत्तावीसा बावीसाए संकमति। तस्सेव सम्मत्ते उव्वलिए सत्तावीस-संतकम्मंसियस्स मिच्छत्तं पडिग्गहे त्ति फेडिए छव्वीसा बावीसाए संकमति। तस्सेव सम्मामिच्छत्ते उव्वलिए

छव्वीससंतकम्मंसियस्स पणवीसा एक्कवीसाए संकमति। अहवा अणादियमिच्छदिट्ठिस्स छव्वीससंतकम्मं- सियस्स मिच्छत्ताए वञ्जा पणुवीसा एक्कवीसाए संकमति। चउवीससंतकम्मंसिउ सम्मदिट्ठी मिच्छत्तं गतो, तस्स मिच्छदिट्ठिस्स मिच्छत्ते पडिग्गहे फेडिए आवलियमेत्तं तेवीसा बावीसाए संकमति। गतो मिच्छदिट्ठी। इयाणिं असंजयसम्मदिट्ठिस्स वा संजयासंजयस्स वा (पमत्तसंजयस्स वा अपमत्तसंजयस्स वा) उवसम- सम्मदिट्ठिस्स पढमसमयाओ पभिति जाव आवलियाए ताव सम्मामिच्छत्तसम्मत्ताणं पडिग्गहया भवति, संकमो णत्थि एयाणमिति, सत्तरसतेरसणवबंधएसु सम्मत्तसम्मामिच्छत्तेसु छूढेसु छव्वीसा संकमति। तेसिं चेव असंजयसम्मदिट्ठिपभतीणं तिण्हं आवलियाए गताए सम्मामिच्छत्तं संकमे पडिग्गहे य लब्भइ, तेण सत्तावीसा संकमति तेसु चेव सत्तरसादिसु। तेसिं चेव असंजयसम्मदिट्ठीपभितीणं तिण्हं अणंताणु- बंधिउव्वलिए चउवीससंतकम्मंसियाणं वेयगसम्मादिट्ठीणं संमत्तं पडिग्गहो त्ति फेडितं, ततो तेवीसा सत्तरसादिसु तिसु संकमति। तेसु चेव सत्तरसादिसु तिसु मिच्छखविए बावीसा संकमति। ततो सम्मा- मिच्छत्ते खविए एक्कवीसा संकमति। (सासादन)सम्मत्तसम्मामिच्छादिट्ठीणं दोण्हं पि जहक्कमेणं एक्कवीससत्त- रसबन्धगाणं अट्ठावीसचउवीससंतकंमंसियाणं सुद्धदिट्ठिणो ण होंति त्ति दिट्ठिमोहस्स संकमाभावा पणुवीसा एक्कवीसा उ दोण्ह वि संकमंति अप्पप्पणो बंधेसु।

इयाणिं उवसमसम्मदिट्ठिस्स उवसामगसेढिं भणामि—चउवीससंतकम्मातो सम्मत्ते पडिग्गहो त्ति फेडिए

तेवीसा पंचगे बंधे सम्मत्तसम्मामिच्छत्तसहिते सत्तगे संकमति। तस्सेव पंचविहबन्धगस्स अंतरकरणे कते लोभसंजलणाए अणाणुपुव्विसंकमो णत्थि त्ति फेडिते बावीसा संकमति। तस्सेव नपुंसगवेदे उवसंते तेसु चेव सत्तसु एक्कवीसा संकमति। तस्सेव इत्थिवेदे उवसंते तेसु चेव सत्तगे वीसा संकमति। ततो पुरिसवेयस्स पढमट्ठितियसमयूणदुआवलियसेसाए पुरिसवेदो पडिग्गहो ण होति त्ति वीसा तेसु चेव सत्तसु पुरुसवेयरहिएसु छसु संकमति जाव समयूणाउ दो आवलियाउ। ततो छसु णोकसाएसु उवसंतेसु चोद्दस्स भवंति, ते चोद्दस तेसु चेव छसु संकमति, जाव समऊणाओ दो आवलियाओ। ते चेव चोद्दसा पुरिसवेदे उवसंते तेरस भवंति। एते तेरस तेसु चेव छसु संकमंति अंतोमुहुत्तं। ततो कोहसंजलणाए पढमट्ठितीए समयूणतिआवलियसेसाए कोहसंजलणा पडिग्गहो ण होति त्ति तेरस तेसु चेव छसु कोहसंजलणारहितेसु पंचसु संकमंति जाव समयूणाओ दो आवलियाओ। ततो तेरससु दोसु कोहेसु उवसंतेसु एक्कारस भवंति। ते एक्कारस समयूणाउ दो आवलियाओ तेसु चेव पंचसु संकमंति। ततो एक्कारससु कोहसंजलणे उवसंते दस भवंति। ते दस अंतोमुहुत्तं तेसु चेव पंचसु संकमंति। ततो माणसंजलणाए पढमट्ठितीए समयूणतिआवलियसेसाए माणसंजलणो पडिग्गहो न होति त्ति दस चेव तेसु पंचसु माणसंजलणरहितेसु चउसु संकमंति जाव समयूणाओ दो आवलियाओ। ततो दससु दोसु माणेसु उवसंतेसु अट्ठ भवंति। ते अट्ठ समयूणाओ दो आवलियाओ तेसु चेव चउसु संकमंति। ततो अट्ठसु माणसंजलणे उवसंते सत्त भवंति, ते सत्त अन्तोमुहुत्तं तेसु चेव चउसु

संकमन्ति। ततो मायासंजलणा(ए) पढमट्ठितीए समयूणतिआवलियासेसाए मायासंजलणो पडिग्गहो(न हो-)त्ति संकमति जाव समयूणातो दो आवलियाओ। ततो सत्त त्ति मत्त तेसु चेव चउसु मायासंजलणरहितेसु तिसु संकमति जाव समयूणातो दो आवलियाओ। ततो दोसु मायासु उवसंतासु पंच भवंति। ते पंच समयूणाओ दो आवलियाओ तेसु चेव तिसु संकमति। ततो पंचसु मायासंजलणे उवसंते चत्तारि भवंति। ते चत्तारि अन्तोमुहुत्तं जाव अणियट्टिचरमसमउ ताव तेसु चेव तिसु संकमति। अणिअट्टिचरमसमये दोसु लोहेसु उवसंतेसु ते चेव चत्तारि लोहदुगरहिता दो भवंति मिच्छत्त-सम्मामिच्छत्ता, तत्थ मिच्छत्तं सम्मत्तसम्मामिच्छत्तेसु दोसु संकमंति, सम्मामिच्छत्तं सम्मत्ते संकमति। एवं उवसमदिट्ठिस्स उवसमसेढीए संकमो भणितो।

इदाणिं उवसमसेढीए खाइअसम्मदिट्ठिस्स विहिं भणामि—अणंताणुबंधिदंसणतिए खविए एक्कवीससंतकंमंमिओ उवसमसेढिं पडिवज्जति। तस्स पंचविहे बंधे एक्कवीसा संकमति अन्तोमुहुत्तं। ततो एक्कवीसाणं कम्मपगडीणं अन्तरकरणे कते लोभसंजलणाए अणाणुपुव्वीसंकमो णत्थि त्ति काऊण फेडिए एक्कवीसा वीसा भवति। सा वीसा पंचविहे बंधे संकमति अन्तोमुहुत्तं। ततो वीसाउ णपुंसकवेदे उवसामिए एगुणवीसा भवति। सा एगुणवीसा तंमि चेव पंचविहे संकमति अन्तोमुहुत्तं। ततो एगुणवीसाउ इत्थीवेदे उवसामिए अट्ठारस भवंति। ते अट्ठारस तंमि चेव पंचविहे बंधे संकमति अन्तोमुहुत्तं। ततो पुरिसवेदस्स पढमट्ठितीए समयूणादुयावलियसेसाए पुरिसवेदो पडिग्गहो ण होइ त्ति ते चेव अट्ठारस पुरिसवेदूणेसु पंचसु चउसु संजलणेसु संकमति जाव

समयूणा दो आवलियाओ। ततो अट्ठारस छसु णोकसाएसु उवसंतेसु बारस भवंति। ते बारस तंमि चेव चउक्कगे संकमंति जाव समयूणाउ दो आवलिआउ। ततो बारस पुरिसवेदे उवसंते एक्कारस भवंति। ते एक्कारस तेसु चेव चउसु संकमंति जाव अन्तोमुहुत्तं। ततो कोहसंजलणाए पढमट्ठितीए समयूणतिआवलियसेसाए कोहसंजलणो पडिग्गहो ण होति त्ति ते चेव एक्कारस कोहसंजलणऊणेसु चउसु तिसु संकमंति जाव समयूणाउ दो आवलियाउ। ततो एक्कारस दुसु कोहेसु उवसंतेसु णव भवंति। ते णव तेसु चेव तिसु संकमंति जाव समयूणाउ दो आवलियाउ। ततो णव कोहसंजलणे उवसंते अट्ठ भवंति। ते अट्ठ तेसु चेव तिसु संकमंति जाव अन्तोमुहुत्तं। ततो माणसंजलणाए पढमट्ठितीए समयूणतियावलियस्स सेसाए माणसंजलणा पडिग्गहो ण होति त्ति ते चेव अट्ठ माणसंजलणूणेसु तिसु दुसु संकमंति जाव समयूणा दो आवलियाउ। ततो अट्ठ दोसु माणेसु उवसंतेसु छ भवंति। ते छ तेसु चेव दोसु संकमंति जाव समऊणाउ दो आवलियाउ। ततो छ माणसंजलणाए उवसंताए पंच भवंति। ते पंच तेसु चेव दोसु संकमंति जाव अन्तोमुहुत्तं। ततो मायासंजलणाए पढमट्ठितीए समयूणातिआवलियसेसाए मायासंजलणा पडिग्गहो ण होइ त्ति ते चेव पंच दोसु मायारहितेसु एक्कंमि संजलणे लोभे संकमंति जाव समयूणाओ दो आवलियाओ। ततो पंच मायादुगरहिता तिण्णि भवंति। ते तिण्णि तंमि चेव एक्कंमि संजलणे लोभे संकमंति जाव समयूणाउ दो आवलियाउ। ततो तिण्णि मायासंजलणरहिया दोण्णि भवंति। ते दोण्णि तंमि चेव एक्कंमि संजलणलोभम्मि संकमंति अन्तोमुहुत्तं, जाव अणियट्टिचरि-

मसमउवरिसमए उवसंता भवंति। एवं खाइयसम्मद्दिट्ठिस्स उवसमसेढीए संकमो परूवितो।
इदानीं खयगसेढीए संकमविही भण्णइ। तत्थ जाव एक्कवीसा ताव पुव्वपओगेण भाणियव्वा जाव अणं-
ताणुबंधिदंसणतिए खविए एक्कवीससंतकम्मंसिओ खवगसेढीं पडिवज्जइ। ततो अणियट्टिठाणं पत्तस्स एक्क-
वीसा पंचविहबंधे संकमंति जाव अन्तोमुहुत्तं। ततो एक्कवीसाउ अट्ठकसाए खविए सेसा तेरस हवन्ति। ते
तेरस अन्तोमुहुत्तकालं तंमि चेव पंचविहबंधे संकमंति। ततो तेरसण्हं कम्माणं अन्तरकरण(णे) कते लोभसंजल-
णाए अणाणुपुव्विसंकमो णत्थि त्ति लोभे फेडिए सेसा बारस तंमि चेव पंचविहे बंधे संकमंति अन्तोमुहुत्तं।
ततो बारसाहिंतो णपुंसगवेदे खविए सेसा एक्कारस भवंति। ते एक्कारस तंमि चेव पंचविहे बन्धे संकमंति
अन्तोमुहुत्तं। ततो एक्कारसउ इत्थीवेदे खविए सेसा दस तंमि चेव पंचविहे संकमंति अन्तोमुहुत्तं। ततो पुरि-
सवेयस्स पढमट्ठितिए समऊणदुआवलिआए सेसाए पुरिसवेदो पडिग्गहो ण होति त्ति ते दस पुरिसवेदूणेसु च-
उसु संजलणेसु समयूणदुआवलियमेत्तं संकमंति। ततो दसगाउ छण्णोकसाए खविए सेसा चत्तारि ते चेव
चउसु समयूणदुआवलियमेत्तं कालं संकमंति। ततो चउसु पुरिसवेदे खविए तं समयमेव कोहसंजलणाए पडि-
ग्गहत्ता फिट्टइ। ततो तिण्णि तिसु चउव्विहबंधगस्स अंतो हुत्तं कालं संकमंति। ततो कोहसंजलणाए बंधे फिट्टे
समयूणादुआवलियमेत्तेणं तिविहबंधगस्स कोहजं लणाए खविताए माणसंजलणाए य पडिग्गहत्ताए फिट्टाए
दोण्णि दोसु संकमंति अन्तोमुहुत्तं। ततो माणसंजलणे खविए मायाए पडिग्गहत्ते फिट्टे माया एक्का एक्कंमि

**संजलणे लोभे संकमति अन्तोमुहुत्तं । [जह्वा कोहस्स खवणविही संकमपडिग्गहया तह्वा सेसाणं पि संजलणाणं वत्तव्वं । एवं मोहणीयस्स संकमो भिसंमच्छत्ता ?] ॥ ११ ॥**

(मलय०)—कृता मोहनीये संक्रमासंक्रमस्थानप्ररूपणा। सम्प्रति पतद्ग्रहापतद्ग्रहस्थानप्ररूपणार्थमाह—षोडश द्वादशाष्टौ विंशतिस्त्रयोविंशत्यादयश्च षट्, तद्यथा—त्रयोविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिश्च, एतानि स्थानानि वर्जयित्वा शेषाण्येकद्वित्रिचतुःपञ्चषट्सप्तनवदशैकादशत्रयोदशचतुर्दशपञ्चदशसप्तदशाष्टादशैकोनविंशत्येकविंशतिद्वाविंशतिलक्षणानि अष्टादश पतद्ग्रहस्थानानि भवन्ति । तत्र कस्मिन् पतद्ग्रहे काः प्रकृतयः संक्रामन्तीत्येतद्भाव्यते—तत्र मिथ्यादृष्टेरष्टाविंशतिसत्कर्मणो मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति तस्मिन्नपसारिते शेषा सप्तविंशतिर्मिथ्यात्वषोडशकषायान्यतरवेदभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगललक्षणायां द्वाविंशतौ संक्रामति। तस्यैव सम्यक्त्व उद्वलिते सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यग्मिथ्यात्वस्य पतद्ग्रह इति तस्मिन्नपसारिते शेषा षड्विंशतिः प्रागुक्तायां द्वाविंशतौ संक्रामति। तस्यैव मिथ्यादृष्टेः सम्यग्मिथ्यात्व उद्वलिते षड्विंशतिसत्कर्मणो मिथ्यात्वे न किमपि संक्रामतीति न तत्कस्यचित्पतद्ग्रह इति तस्मिन् प्रागुक्ताया द्वाविंशतेरपनीते शेषे एकविंशतिप्रकृतिसमुदायात्मके पतद्ग्रहे पञ्चविंशतिः संक्रामति । अथवाऽनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणो मिथ्यात्वं न क्वापि संक्रामति, नापि तत्रान्या प्रकृतिरित्याधाराधेयभावपरिभ्रष्टं मिथ्यात्वमपनीयते, ततः शेषाः पञ्चविंशतिः प्रागुक्तायामेकविंशतौ संक्रामति। तथा चतुर्विंशतिसत्कर्मा मिथ्यात्वं गतः सन् यद्यपि मिथ्यात्वप्रत्ययतो भूयोऽप्यनन्तानुबन्धिनो बध्नाति, तथापि बन्धावलिकागतं सकलकरणायोग्यमिति कृत्वा सतोऽपि तान् न संक्रमयति । मिथ्यात्वं च सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहस्ततोऽनन्तानुबन्धिचतुष्टय-

मिथ्यात्ववर्जिताः शेषास्त्रयोविंशतिप्रकृतयः प्रागुक्तायां द्वाविंशतौ संक्रामन्ति । तदेवं मिथ्यादृष्टेर्द्वाविंशतिपतद्ग्रहे सप्तविंशतिषड्विंशतित्रयोविंशतिसंक्रमाः । एकविंशतिपतद्ग्रहे च पञ्चविंशतिसंक्रम उक्तः, शेषः संक्रमः पतद्ग्रहो वा न संभवति । सासादनसम्यग्दृष्टेस्तु सम्यग्दृष्टित्वाभावाद्दर्शनमोहनीयत्रयस्य संक्रमाभावः, ततोऽस्य सर्वदा एकविंशतिरूपे पतद्ग्रहे पञ्चविंशतिरेव संक्रामति । सम्यग्मिथ्यादृष्टेरपि शुद्धदृष्टित्वाभावाद्दर्शनत्रयस्य संक्रमाभाव इति अष्टाविंशतिसत्कर्मणः सप्तविंशतिसत्कर्मणो वा पञ्चविंशतिः संक्रामति। चतुर्विंशतिसत्कर्मणः पुनरेकविंशतिः द्वादशकषायपुरुषवेदभयजुगुप्साऽन्यतरयुगललक्षणसप्तदशप्रकृतिसमुदायरूपे पतद्ग्रहे संक्रामति। तदेवमुक्तौ सासादनसम्यग्मिथ्यादृष्टी। सम्प्रत्यविरतदेशविरतप्रमत्ताप्रमत्तेषु संक्रमाणां तुल्यत्वात् युगपत्पतद्ग्रहा उच्यन्ते—तत्रैतेषामविरतादीनामौपशमिकसम्यग्दृष्टीनां सम्यक्त्वलाभप्रथमसमयादारभ्य यावदावलिकामात्रं तावत् सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहतैव भवति, न संक्रमः, इति शेषा षड्विंशतिरविरतानां द्वादशकषायपुरुषवेदभयजुगुप्साऽन्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वरूपे एकोनविंशतिपतद्ग्रहे, देशविरतानां प्रत्याख्यानावरणसंज्वलनकषायपुरुषवेदभयजुगुप्साऽन्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वलक्षणे पञ्चदशपतद्ग्रहे, प्रमत्ताप्रमत्तानां संज्वलनचतुष्टयपुरुषवेदसम्यक्त्वसम्यग्मिथ्यात्वभयजुगुप्साऽन्यतरयुगलरूपे एकादशपतद्ग्रहे संक्रामति । तेषामेवाविरतसम्यग्दृष्ट्यादीनामावलिकायाः परतः सम्यक्त्वं संक्रमे पतद्ग्रहे च लभ्यते इति सप्तविंशतिः प्रागुक्तेषु त्रिषु पतद्ग्रहेषु संक्रामति । तथा तेषामेवाविरतसम्यग्दृष्ट्यादीनामनन्तानुबन्धिषूद्वलितेषु चतुर्विंशतिसत्कर्मणां क्षायोपशमिकसम्यग्दृष्टीनां सम्यक्त्वं पतद्ग्रह इति कृत्वा शेषाः त्रयोविंशतिः प्रागुक्तेष्वेवैकोनविंशत्यादिषु त्रिषु पतद्ग्रहेषु संक्रामति । ततो मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वं पतद्ग्रहभावे न लभ्यते, मिथ्यात्वं च संक्रमे न लभ्यते, ततः शेषा द्वाविंशतिरविरतदेशविरतसंयतानां यथासंख्यमष्टादशचतुर्दशद-

शरूपेषु पतद्ग्रहेषु संक्रामति। ततः सम्यग्मिथ्यात्वे क्षपिते सति सम्यक्त्वस्य न संक्रमो नापि पतद्ग्रह इत्येकविंशतिरविरतादीनां यथासंख्यं सप्तदशत्रयोदशनवकरूपेषु पतद्ग्रहेषु संक्रामति। सम्प्रत्यौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संक्रममाश्रित्य-पतद्ग्रहविधिरुच्यते—चतुर्विंशतिसत्कर्मणः सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह एवेति कृत्वा तस्मिन्नपसारिते शेषा त्रयोविंशतिः पुंवेदसंज्वलनचतुष्टयसम्यक्त्वसम्यग्मिथ्यात्वरूपे सप्तकपतद्ग्रहे संक्रामति। तस्यैवोपशमश्रेण्यां वर्तमानस्यान्तरकरणे कृते संज्वलनलोभस्य संक्रमो न भवतीति तस्मिन्नपसारिते शेषा द्वाविंशतिः पूर्वोक्त एव सप्तकपतद्ग्रहे संक्रामति। तस्यैव नपुंसकवेदे उपशान्ते सप्तकपतद्ग्रहे एकविंशतिः। ततस्त्रीवेदे उपशान्ते विंशतिः। ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां "दुसु आवलियासु पढमठिईसु सेसासुऽवि य वेदो" इति वचनात् पुरुषवेदः पतद्ग्रहो न भवति, ततः प्रागुक्तात् सप्तकात्पुरुषवेदेऽपनीते शेषे षट्करूपे पतद्ग्रहे प्रागुक्ता विंशतिः संक्रामति। ततः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश प्रकृतयः प्रागुक्त एव षट्करूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावत्संक्रामन्ति यावत्समयोनमावलिकाद्विकम्। ततः पुरुषवेदे उपशान्ते शेषास्त्रयोदश षट्करूपे पतद्ग्रहे संक्रामन्ति, ताश्च तत्र तावद्यावदन्तर्मुहूर्तम्। ततः संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनक्रोधोऽपि "तिसु आवलियासु समऊणियासु अपडिग्गहा उ संजलणा" इति वचनात् पतद्ग्रहो न भवतीति प्रागुक्तात् षट्कात्तस्मिन्नपसारिते शेषे पञ्चकरूपे पतद्ग्रहे ता एव त्रयोदश प्रकृतयः संक्रामन्ति। ततोऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विक उपशान्ते शेषा एकादश प्रागुक्त एव पञ्चकपतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनावलिकाद्विकम्। ततः संज्वलनक्रोधे उपशान्ते शेषा दश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम्। ततः संज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमा-

नोऽपि पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपनीते शेषे चतुष्करूपे पतद्ग्रहे ता दश प्रकृतयः संक्रामन्ति, ताश्च तावद्यावत्समयोनमा-
नोऽपि पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपनीते शेषे चतुष्करूपे एव पतद्ग्रहे संक्रामन्ति।
वलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मानद्विके उपशान्ते शेषा अष्टौ प्रकृतयश्चतुष्करूपे एव पतद्ग्रहे संक्रामन्ति।
ततः संज्वलनमाने उपशान्ते सप्त, ताश्च सप्त चतुष्करूपे पतद्ग्रहेऽन्तर्मुहूर्तं कालं यावत्संक्रामन्ति। ततः संज्वलनमायायाः प्रथमस्थि-
तौ समयोनावलिकात्रिकशेषायां संज्वलनमायाऽपि पतद्ग्रहो न भवतीति चतुष्कात्तस्यामपगतायां शेषे त्रिकरूपे पतद्ग्रहे पूर्वोक्ताः
सप्त संक्रामन्ति, ताश्च तावद्यावत् समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषाः पञ्च
प्रकृतयस्त्रिकरूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततः संज्वलनमायायामुपशान्तायां शेषाश्चतस्रः प्रकृतयः
संक्रामन्ति, ताश्च तावद्यावदन्तर्मुहूर्तम्। ततोऽनिवृत्तिबादरसंपरायचरमसमयेऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे लोभद्विके उपशान्ते
शेषे द्वे प्रकृती संक्रामतः, ते च मिथ्यात्वसम्यग्मिथ्यात्वलक्षणे। अप्रत्याख्यानप्रत्याख्यानावरणलक्षणे लोभद्विके उपशान्ते शेषे द्वे प्रकृती
संक्रामतः, ते च मिथ्यात्वसम्यग्मिथ्यात्वलक्षणे। न चैते संज्वलनलोभे संक्रामतः, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमा-
भावात्, ततस्तस्यापि पतद्ग्रहता न भवतीति द्वयोरेव ते द्वे संक्रामतः। तत्र मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोः, सम्यग्मिथ्यात्वं
सम्यक्त्वे। तदेवमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्तः।

संप्रति क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुच्यते—तत्रानन्तानुबन्धिचतुष्टयदर्शनत्रिकरूपे सप्तके क्षपिते सति एक-
विंशतिसत्कर्मा सन् क्षायिकसम्यग्दृष्टिरुपशमश्रेणिं प्रतिपद्यते। तस्य चान्तर्मुहूर्तं कालं यावत्पुरुषवेदसंज्वलनचतुष्टयरूपे पञ्चकपतद्ग्रहे
एकविंशतिः संक्रामति। ततोऽन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवतीति एकविंशतेस्तस्मिन्नपनीते शेषा विंशतिः पञ्चक-

पतद्ग्रहे संक्रामति, सा चान्तर्मुहूर्तं कालं यावत्। ततो नपुंसकवेदे उपशान्ते एकोनविंशतिः, सापि चान्तर्मुहूर्तं कालं यावत्। ततः स्त्रीवेदे उपशान्ते शेषा अष्टादश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति, ताश्च तत्र तावत् यावदन्तर्मुहूर्तम्। ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदः पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपगते शेषे चतुष्करूपे पतद्ग्रहे ता एवाष्टादश प्रकृतयः संक्रामन्ति। ततः षट्सु नोकषायेषूपशान्तेषु शेषा द्वादश प्रकृतयश्चतुष्करूपे एव तस्मिन् पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततः पुरुषवेद उपशान्ते एकादश ताश्चतुष्करूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम्। ततः संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनक्रोधोऽपि पतद्ग्रहो न भवतीति चतुष्कात्तस्मिन्नपगते शेषे त्रिकरूपे पतद्ग्रहे ताः पूर्वोक्ता एकादश प्रकृतयः संक्रामन्ति, ताश्च तावद्यावत् समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे क्रोधद्विके उपशान्ते शेषा नव प्रकृतयः पूर्वोक्त एव त्रिकरूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततः संज्वलनक्रोधे उपशान्तेऽष्टौ संक्रामन्ति, ताश्च त्रिकरूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम्। ततः संज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमानोऽपि पतद्ग्रहो न भवतीति त्रिकात्तस्मिन्नपनीते शेषे द्विकरूपे पतद्ग्रहे पूर्वोक्ता अष्टौ प्रकृतयः संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विक उपशान्ते शेषाः षट् प्रकृतयो द्विकपतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततः संज्वलनमान उपशान्ते पञ्च संक्रामन्ति, ताश्च द्विकरूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम्। ततः संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमायापि पतद्ग्रहो न भवतीति द्विकात्तस्यामपगतायां शेषे संज्वलनलोभ एवैकस्मिंस्ताः पञ्च प्रकृतयः संक्रामन्ति, ताश्च तावद्यावत् समयोनावलिका

द्विकम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषास्तिस्रः प्रकृतयः संज्वलनलोभे संक्रामन्ति, ताश्च तावद्यावत्
समयोनमावलिकाद्विकम् । ततः संज्वलनमायायामुपशान्तायां शेषे द्वे अप्रत्याख्यानप्रत्याख्यानावरणलोभलक्षणे प्रकृती संज्वलनलोभे
संक्रामतः, ते चान्तर्मुहूर्तं कालं यावत् । ततोऽनिवृत्तिबादरसंपरायगुणस्थानकचरमसमये ते अप्युपशान्ते इति न किमपि संक्रामति । तदेवं
क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्तः ।

सम्प्रति क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां संक्रमपतद्ग्रहविधिरभिधीयते—तत्र क्षायिकसम्यग्दृष्टिरेकविंशतिसत्कर्मा क्षपकश्रेणिं प्रतिप-
द्यते । तस्य चानिवृत्तिबादरसंपरायगुणस्थानं प्राप्तस्य पुरुषवेदसंज्वलनचतुष्टयरूपे पञ्चकपतद्ग्रहे प्रथमत एकविंशतिप्रकृतयः संक्रामन्ति ।
ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश, ताश्चान्तर्मुहूर्तं कालं यावत् । ततोऽन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवतीति
शेषा द्वादश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति, ताश्चान्तर्मुहूर्तं कालं यावत् । ततो नपुंसकवेदे क्षीणे एकादश, ता अपि
अन्तर्मुहूर्तं कालं यावत् । ततः स्त्रीवेदे क्षीणे दश, ता अप्यन्तर्मुहूर्तं कालं यावत् तस्मिन्नेव पञ्चकरूपे पतद्ग्रहे संक्रामन्ति । ततः
पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदः पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपनीते शेषे चतुष्करूपे पतद्ग्रहे
ता एव दश संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । ततः षट्सु नोकषायेषु क्षीणेषु शेषाश्चतस्रः प्रकृतयस्तस्मिन्नेव चतु-
ष्करूपे पतद्ग्रहे संक्रामन्ति । ततः पुरुषवेदः क्षीणः । तत्समये च संज्वलनक्रोधस्यापि पतद्ग्रहता न भवतीति तस्मिन्नपगते शेषासु
तिसृषु प्रकृतिषु तिस्रः प्रकृतयः संक्रामन्ति, ताश्चान्तर्मुहूर्तं कालं यावत् । ततः समयोनावलिकाद्विकेन कालेन संज्वलनक्रोधः क्षीयते ।
तत्समये च संज्वलनमानस्यापि पतद्ग्रहता न भवतीति शेषयोर्द्वयोः प्रकृत्योर्द्वे प्रकृती संक्रामतः, ते चान्तर्मुहूर्तं कालं यावत् । ततः

समयोनावलिकाद्विकेन कालेन संज्वलनमानोऽपि क्षीयते। तत्समयमेव च संज्वलनमायाया अपि पतद्ग्रहता न भवति। तत एकस्यामेव संज्वलनलोभलक्षणायां प्रकृतौ संज्वलनमायालक्षणा एका प्रकृतिः संक्रामति, सा चान्तर्मुहूर्तं कालं यावत्। तत आवलिकाद्विकेन कालेन संज्वलनमायापि क्षीयते। तत ऊर्ध्वं न किमपि क्वापि संक्रामति ॥ ११ ॥

(उ०)—कृता मोहनीये संक्रमासंक्रमस्थानप्ररूपणा। अथ पतद्ग्रहापतद्ग्रहस्थानप्ररूपणार्थमाह–मोहनीये बन्धस्थानानि दशोक्तानि द्वाविंशतिरेकविंशतिः सप्तदश त्रयोदश नव पञ्च चतस्रस्तिस्रो द्वे एका च। तत्र पतद्ग्रहस्थानानि षोडश द्वादशाष्टौ विंशतिस्त्रयोविंशत्यादयश्च षट्–त्रयोविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिश्चेत्येतानि स्थानानि वर्जयित्वा शेषाण्येकद्वित्रिचतुःपञ्चषट्सप्तनवदशैकादशत्रयोदशचतुर्दशपञ्चदशसप्तदशाष्टादशैकोनविंशत्येकविंशतिद्वाविंशतिलक्षणान्यष्टादश भवन्ति। तत्र मिथ्यादृष्टेरष्टाविंशतिसत्कर्मणो मिथ्यात्वस्य सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहतया त्यागे शेषाः सप्तविंशतिर्मिथ्यात्वषोडशकषायान्यतरवेदभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगललक्षणायां द्वाविंशतौ संक्रामति। तस्यैव सम्यक्त्वे उद्वलिते सप्तविंशतिसत्कर्मणो मिथ्यात्वस्य सम्यग्मिथ्यात्वपतद्ग्रहतया त्यागेन षड्विंशतिः प्रागुक्तायां द्वाविंशतौ संक्रामति। तस्यैव मिथ्यादृष्टेः सम्यग्मिथ्यात्वोद्वलनायां षड्विंशतिसत्कर्मणो मिथ्यात्वे न किमपि संक्रामतीति पतद्ग्रहत्वाद् भ्रष्टे तस्मिन् द्वाविंशतेरपनीते एकविंशतिप्रकृतिसमुदायात्मके पतद्ग्रहे पञ्चविंशतिः संक्रामति। यद्वाऽनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणो मिथ्यात्वे न किमपि संक्रामति, न वा तत्रान्या प्रकृतिरिति संक्रमप्रतियोग्यनुयोगिभावपरिभ्रष्टे मिथ्यात्वेऽपनीते शेषा पञ्चविंशतिरेकविंशतौ संक्रामति। तथा चतुर्विंशतिसत्कर्मणो मिथ्यात्वं गतस्य तत्प्रत्ययेन बद्धा अप्यनन्तानुबन्धिनो बन्धावलिकां यावत्संक्रमानर्हा इति तान् मिथ्यात्वं च सम्यक्त्वसम्यग्मिथ्यात्वयोः

पतद्ग्रहमात्रतया वर्जयित्वा शेषास्त्रयोविंशतिप्रकृतयः प्रागुक्तद्वाविंशतौ संक्रामन्ति। तदेवं मिथ्यादृष्टेर्द्वाविंशतिपतद्ग्रहे सप्तविंशतिषड्विंशतित्रयोविंशतिरूपास्त्रयः संक्रमा लभ्यन्ते, एकविंशतिपतद्ग्रहे चैकः पञ्चविंशतिसंक्रमः, शेषः संक्रमः पतद्ग्रहो वा मिथ्यादृष्टेर्न भवति। सासादनसम्यग्दृष्टेस्तु शुद्धदृष्टित्वाभावाद् दर्शनमोहनीयत्रयस्य संक्रमाभाव इत्यस्य सर्वदैकविंशतिरूपे पतद्ग्रहे पञ्चविंशतिरेव संक्रामति। सम्यग्मिथ्यादृष्टेरपि शुद्धदृष्टित्वाभावाद् दर्शनत्रयसंक्रमाभाव इत्यष्टाविंशतिसत्कर्मणः सप्तविंशतिसत्कर्मणो वा तस्य पञ्चविंशतिः, चतुर्विंशतिसत्कर्मणस्तु तस्यैकविंशतिर्द्वादशकषायपुरुषवेदभयजुगुप्सान्यतरयुगललक्षणसप्तदशप्रकृतिसमुदायरूपे पतद्ग्रहे संक्रामति। अविरतदेशविरतप्रमत्ताप्रमत्तेषु संक्रमतौल्याद्युगपत्पतद्ग्रहा उच्यन्ते। तत्रौपशमिकसम्यग्दृष्टीनामेतेषां सम्यक्त्वलाभप्रथमसमयादारभ्य यावदावलिकामात्रं तावत् सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहतैव भवति, न संक्रम इति शेषा षड्विंशतिरविरतानां द्वादशकषायपुरुषवेदभयजुगुप्सान्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वरूपे एकोनविंशतिपतद्ग्रहे, देशविरतानामन्त्याष्टकषायपुरुषवेदभयजुगुप्सान्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वलक्षणे पञ्चदशपतद्ग्रहे, प्रमत्ताप्रमत्तानां संज्वलनचतुष्टयपुरुषवेदसम्यक्त्वसम्यग्मिथ्यात्वभयजुगुप्साऽन्यतरयुगलरूपे एकादशपतद्ग्रहे संक्रामति। तेषामेवाविरतसम्यग्दृष्ट्यादीनामावलिकायाः परतः सम्यग्मिथ्यात्वं संक्रमे पतद्ग्रहे च लभ्यत इति सप्तविंशतिः प्रागुक्तेषु त्रिषु पतद्ग्रहेषु संक्रामति। तेषामेवाविरतसम्यग्दृष्ट्यादीनामनन्तानुबन्ध्युद्वलने चतुर्विंशतिसत्कर्मणां क्षायोपशमिकसम्यक्त्ववतां सम्यक्त्वं पतद्ग्रह एवेति कृत्वा शेषा त्रयोविंशतिः प्रागुक्तेष्वेकोनविंशत्यादिषु त्रिषु पतद्ग्रहेषु संक्रामति। ततो मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वं न पतद्ग्रहीभवति, मिथ्यात्वं च न संक्रमप्रतियोगी भवतीति शेषा द्वाविंशतिरविरतदेशविरतसंयतानां यथासङ्ख्यमष्टादशचतुर्दशदशरूपेषु पतद्ग्रहेषु संक्रामति। ततः सम्यग्मिथ्यात्वे क्षपिते सम्यक्त्वं न संक्रमे नापि

पतद्ग्रहभावे लभ्यते इत्येकविंशतिरविरतादीनां यथासङ्ख्यं सप्तदशत्रयोदशनवकरूपेषु पतद्ग्रहेषु संक्रामति ।

अथौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संक्रममाश्रित्य पतद्ग्रहविधिरुच्यते—तत्र चतुर्विंशतिसत्कर्मणः सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह एवेति तत्त्यागे शेषा त्रयोविंशतिः पुंवेदसंज्वलनचतुष्टयसम्यक्त्वसम्यग्मिथ्यात्वरूपे सप्तकपतद्ग्रहे संक्रामति । तस्यैवोपशमश्रेण्यामन्तरकरणे कृते संज्वलनलोभस्य न संक्रम इति तत्त्यागे शेषा द्वाविंशतिः प्रागुक्त एव सप्तकपतद्ग्रहे संक्रामति । तस्यैव नपुंसकवेदे उपशान्ते सप्तकपतद्ग्रहे एकविंशतिः । ततः स्त्रीवेदे उपशान्ते विंशतिः, ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदः पतद्ग्रहो न भवति, ततः प्रागुक्तात्सप्तकात्पुरुषवेदेऽपनीते शेषे षट्करूपे पतद्ग्रहे प्रागुक्ता विंशतिः संक्रामति । ततः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश प्रकृतयः प्रागुक्ता एव षट्करूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावत्संक्रामन्ति यावत्समयोनमावलिकाद्विकम् । ततः पुरुषवेदे उपशान्ते शेषास्त्रयोदश षट्करूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावदन्तर्मुहूर्त्तम् । ततः संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनक्रोधोऽपि पतद्ग्रहो न भवतीति प्रागुक्तषट्कात्तदपनयने शेषे पञ्चकरूपपतद्ग्रहे ता एव त्रयोदश प्रकृतयः संक्रामन्ति । ततोऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते शेषा एकादश प्रागुक्त एव पञ्चकपतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनावलिकाद्वयम् । ततः संज्वलनक्रोधे उपशान्ते शेषा दश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्त्तम् । ततः संज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमानस्याप्यपतद्ग्रहीभाव इति पञ्चकात्तदपनयने शेषे चतुष्करूपे पतद्ग्रहे ता एव दश प्रकृतयः संक्रामन्ति, ताश्च तावद्यावत्समयोनावलिकाद्वयम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मानद्वये उपशान्ते शेषा अष्टौ प्रकृतयश्चतुष्करूपे एव पतद्ग्रहे संक्रामन्ति ।

ततः संज्वलनमाने उपशान्ते सप्त, ताश्च सप्त चतुष्करूपे पतद्ग्रहेऽन्तर्मुहूर्त्तं कालं यावत्संक्रामन्ति। ततः संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमायापि न पतद्ग्रहीभवतीति चतुष्कात्तदपनयने शेषे त्रिकरूपे पतद्ग्रहे पूर्वोक्ताः सप्त संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपमायाद्विके उपशान्ते शेषाः पञ्च प्रकृतयस्त्रिकरूपे पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम्। ततः संज्वलनमायायामुपशान्तायां शेषाश्चतस्रः संक्रामन्ति, ताश्च तावद्यावदन्तर्मुहूर्तम्। ततोऽनिवृत्तिबादरसंपरायचरमसमयेऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणलोभद्विके उपशान्ते शेषे मिथ्यात्वसम्यग्मिथ्यात्वलक्षणे द्वे एव प्रकृती संक्रामतः। अनयोश्च संक्रमो न संज्वलनलोभे संभवति, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमप्रतिषेधात्, ततस्तस्यापि पतद्ग्रहता न भवतीति द्वयोरेव ते द्वे संक्रामतः। तत्र मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयोर्द्वयोः संक्रामति, सम्यग्मिथ्यात्वं तु सम्यक्त्व एवेति विवेकः। तदयमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्तः।

अथ क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुच्यते—तत्र क्षीणसप्तक एकविंशतिसत्कर्मा सन् क्षायिकसम्यग्दृष्टिरुपशमश्रेणिं प्रतिपद्यते। तस्य चान्तर्मुहूर्त्तं कालं यावत्पुरुषवेदसंज्वलनचतुष्टयरूपे पञ्चकपतद्ग्रहे एकविंशतिः संक्रामति। ततोऽन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवतीत्येकविंशतेस्तस्मिन्नपनीते शेषा विंशतिः पञ्चकपतद्ग्रहे संक्रामति, सा चान्तर्मुहूर्त्तं कालं यावत्। ततो नपुंसकवेदे उपशान्ते एकोनविंशतिः, साप्यन्तर्मुहूर्त्तं कालं यावत्। ततः स्त्रीवेदे उपशान्ते शेषा अष्टादश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति, ता अप्यन्तर्मुहूर्त्तं कालं यावत्। ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायामपतद्ग्रहीभवतीति पुरुषवेदेऽपनीते चतुष्करूपे पतद्ग्रहे ता एवाष्टादश प्रकृतयः संक्रामन्ति। ततो नोकषायषट्के उपशान्ते शेषा द्वादश प्रकृतयस्तस्मिन्नेव चतुष्क-

पतद्ग्रहे संक्रामन्ति, ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । ततः पुरुषवेदे उपशान्ते एकादश चतुष्कपतद्ग्रहेऽन्तर्मुहूर्त्तं यावत्संक्रामन्ति । ततः संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायामपतद्ग्रहीभवतः संज्वलनक्रोधस्यापसारणे शेषे त्रिकरूपे पतद्ग्रहे प्रागुक्तानामेकादशप्रकृतीनां संक्रमः, स च तावद्यावत्समयोनमावलिकाद्विकम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे क्रोधद्विके उपशान्ते शेषा नव प्रकृतयः प्रागुक्तत्रिकरूपे पतद्ग्रहे संक्रामन्ति समयोनावलिकाद्विकं यावत् । ततः संज्वलनक्रोधे उपशान्तेऽष्टौ त्रिकरूपे पतद्ग्रहेऽन्तर्मुहूर्त्तं यावत्संक्रामन्ति । ततः संज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमानस्याप्यपतद्ग्रहीभूतस्यापनयने शेषे द्विकरूपे पतद्ग्रहे प्रागुक्ता अष्टौ प्रकृतयः समयोनमावलिकाद्विकं यावत्संक्रामन्ति । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विके उपशान्ते षट् द्विकपतद्ग्रहे समयोनमावलिकाद्विकं संक्रामन्ति । ततः संज्वलनमाने उपशान्ते पञ्च द्विकपतद्ग्रहेऽन्तर्मुहूर्त्तं यावत्संक्रामन्ति । ततः संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमायायामप्यपतद्ग्रहीभवन्त्यां संज्वलनलोभ एव एकस्मिंस्ताः पञ्च संक्रामन्ति समयोनावलिकाद्विकं यावत् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते तिस्रः प्रकृतयः संज्वलनलोभे समयोनमावलिकाद्विकं यावत्संक्रामन्ति । ततः संज्वलनमायायामुपशान्तायां शेषे द्वे अप्रत्याख्यानप्रत्याख्यानावरणलोभलक्षणे प्रकृती संज्वलनलोभेऽन्तर्मुहूर्त्तं यावत्संक्रामतः । ततोऽनिवृत्तिबादरसंपरायचरमसमये ते अप्युपशान्ते इति न किमपि क्वापि संक्रामति । तदयं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्तः ।

अथ क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यामयमभिधीयते—तत्र क्षायिकसम्यग्दृष्टिरेकविंशतिसत्कर्मा क्षपकश्रेणिं प्रतिपद्यते, तस्य चानिवृत्तिबादरसंपरायगुणस्थानं प्राप्तस्य पुंवेदसंज्वलनचतुष्टयरूपे पञ्चकपतद्ग्रहे प्रथमत एकविंशतिप्रकृतीनां संक्रमः । ततोऽष्टसु कषायेषु

क्षीणेऽन्तर्मुहूर्तं यावत् त्रयोदशानां, ततोऽन्तरकरणे कृते संज्वलनलोभस्यासंक्रम इति द्वादशानां तस्मिन्नेव पञ्चकपतद्ग्रहेऽन्तर्मुहूर्तं यावत्संक्रमः। ततो नपुंसकवेदे क्षीणे एकादशानां तावत्कालमेव। ततः स्त्रीवेदे क्षीणे दशानामन्तर्मुहूर्तमेव तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रमः। ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदस्यापतद्ग्रहतेति शेषे चतुष्करूपे पतद्ग्रहे तासामेव दशानां समयोनमावलिकाद्विकं यावत्संक्रमः। ततो नोकषायषट्कक्षये शेषाणां चतसृणां प्रकृतीनां तस्मिन्नेव चतुष्करूपे पतद्ग्रहे संक्रमः। ततः पुरुषवेदः क्षीयते, तत्समये च संज्वलनक्रोधस्यापि पतद्ग्रहता न भवतीति तदुत्सारणे शेषासु तिसृषु तिसृणां संक्रमः, स चान्तर्मुहूर्तं यावत्। ततः समयोनावलिकाद्विकेन कालेन संज्वलनक्रोधः क्षीयते, तत्समये च संज्वलनमानस्यापि पतद्ग्रहता न भवतीति शेषयोर्द्वयोः प्रकृत्योर्द्वयोरेव संक्रमः, स चान्तर्मुहूर्तं यावत्। ततः समयोनावलिकाद्विकेन कालेन संज्वलनमानोऽपि क्षीयते, तत्समये एव च संज्वलनमायायाः पतद्ग्रहता त्यज्यते। तत एकस्यामेव संज्वलनलोभलक्षणायां प्रकृतौ संज्वलनमायालक्षणैका प्रकृतिः संक्रामति, सा चान्तर्मुहूर्तं यावत्। तत आवलिकाद्विकेन कालेन संज्वलनमायापि क्षीयते। तत ऊर्ध्वं न किमपि क्वापि संक्रामति। एतेषु च पतद्ग्रहेषु एकविंशतिरूपः पतद्ग्रहः साद्यादिरूपतया चतुर्विधः। तथाहि—सादिमिथ्यादृष्टेः सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलितयोः सतोः षड्विंशतिसत्कर्मण एकविंशतिरूपः पतद्ग्रहः सादिः। अनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणोऽनादिः। ध्रुवाध्रुवावभव्यभव्यापेक्षया। शेषास्तु पतद्ग्रहाः कादाचित्कत्वादेव साद्यध्रुवाः ॥ ११ ॥

मोहनीयस्य प्रतिग्रहस्थानानां साद्यादिभङ्गकयन्त्रम् ।

| प्रकृतिस्थानप्रतिग्रहः | सादिः | अध्रुव | अनादि | ध्रुव |
|---|---|---|---|---|
| २२ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २१ | उद्वलितमिश्रसम्यक्त्वस्य सादिमिथ्यादृष्टेः | भव्यानाम् | अनादिमिथ्यादृष्टे | अभव्यानाम् |
| १९ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| १८, १७, १५, १४, १३, | ,, | ,, | ० | ० |
| ११, १०, ९, ७, ६, | ,, | ,, | ० | ० |
| ५, ४, ३, २, १ | ,, | ,, | ० | ० |

**छव्वीससत्तवीसाण संकमो होइ चउसु ठाणेसु । बावीसपन्नरसगे इक्कारसइगुणवीसाए ॥ १२ ॥**

(मलय०)—सम्प्रति यथोक्तरूपेषु पतद्ग्रहेषु प्रत्येकं संक्रमस्थानानि संकलयन्नाह—'छव्वीस' त्ति। चतुर्षु स्थानेषु पतद्ग्रहरूपेषु, तद्यथा–द्वाविंशतौ, पञ्चदशके, एकादशके, एकोनविंशतौ च षड्विंशतिसप्तविंशत्योः संक्रमो भवति । तत्र द्वाविंशतौ मिथ्यादृष्टेः, पञ्चदशके देशविरतस्य, एकादशके प्रमत्ताप्रमत्तयोः, एकोनविंशतौ अविरतसम्यग्दृष्टेः ॥ १२ ॥

(उ०)—सम्प्रति यथोक्तपतद्ग्रहेषु संक्रमस्थानसंकलनामाह—द्वाविंशतौ पञ्चदशके एकादशके एकोनविंशतौ चेति चतुर्षु स्थानेषु पतद्ग्रहलक्षणेषु षड्विंशतिसप्तविंशत्योः संक्रमो भवति। तत्र द्वाविंशतौ मिथ्यादृष्टेः, पञ्चदशके देशविरतस्य, एकादशके प्रमत्ताप्रमत्तयोः, एकोनविंशतावविरतसम्यग्दृष्टेः ॥ १२ ॥

**सत्तरसइक्कवीसासु संकमो होइ पन्नवीसाए। णियमा चउसु गईसुं णियमा दिट्ठी कए तिविहे ॥ १३ ॥**

(मलय०)—'सत्तरस' त्ति। सप्तदशकैकविंशत्योः पञ्चविंशतेः संक्रमो भवति। तत्र सप्तदशके मिश्रदृष्टेः, एकविंशतौ मिथ्यादृष्टेः सासादनस्य च। अयं च पञ्चविंशतेः सप्तदशकैकविंशत्योः संक्रमो नियमाच्चतसृष्वपि गतिषु प्राप्यते। नियमाच्च सप्तदशके सासादनैकविंशतौ च पञ्चविंशतेः संक्रमः 'त्रिविधायां' त्रिप्रकारायां दृष्टौ—दर्शनमोहनीये कृतायां वेदितव्यः—त्रिविधे दर्शनमोहनीये सति वेदितव्य इत्यर्थः। मिथ्यादृष्टेस्त्वेकविंशतौ पञ्चविंशतिसंक्रमोऽनादिमिथ्यादृष्टेरपि भवति। 'कए तिविहे' इति पुंस्त्वनिर्देशः प्राकृतत्वात् ॥ १३ ॥

(उ०)—सप्तदशैकविंशत्योः पञ्चविंशतेः संक्रमो भवति। तत्र सप्तदशके मिश्रदृष्टेरेकविंशतौ च मिथ्यादृष्टेः सासादनस्य च। अयं च पञ्चविंशतेः सप्तदशैकविंशत्योः संक्रमो नियमाच्चतसृष्वपि गतिषु प्राप्यते, नियमाच्च दृष्टौ—दर्शनमोहनीयप्रकृतौ त्रिविधायां कृतायां वेदितव्यः। 'कए तिविहे' त्ति पुंस्त्वनिर्देशः प्राकृतत्वात्। एतच्च सप्तदशके सासादनैकविंशतौ च पञ्चविंशतिसंक्रममाश्रित्य ज्ञेयम्, त्रिधाकृतदर्शनमोहनीयस्यैव मिश्रसासादनत्वसंभवात्। मिथ्यादृष्टेस्त्वेकविंशतौ पञ्चविंशतिसंक्रमोऽनादिमिथ्यात्ववतोऽपि भवतीत्यवसेयम् ॥ १३ ॥

**बावीसपन्नरसगे सत्तगएक्कारसिगुणवीसासु । तेवीसाए णियमा पंच वि पंचिंदिएसु भवे ॥ १४ ॥**

(मलय०)—'बावीस' त्ति । त्रयोविंशतेः संक्रमो द्वाविंशतिपञ्चदशकसप्तकैकादशकैकोनविंशतिरूपेषु पञ्चसु पतद्ग्रहेषु भवति । तत्र द्वाविंशतौ मिथ्यादृष्टेः, पञ्चदशके देशविरतस्य, सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य, एकादशके प्रमत्ताप्रमत्तयोः, एकोनविंशतौ अविरतसम्यग्दृष्टेः । एतानि च पञ्च पतद्ग्रहस्थानानि पञ्चेन्द्रियेष्वेव भवन्ति ॥ १४ ॥

(उ०)—द्वाविंशतिपञ्चदशसप्तकैकादशैकोनविंशतिरूपेषु पञ्चसु पतद्ग्रहेषु त्रयोविंशतेः संक्रमो भवति। तत्र द्वाविंशतौ मिथ्यादृष्टेः, पञ्चदशके देशविरतस्य, सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य, एकादशके प्रमत्ताप्रमत्तयोः, एकोनविंशतावविरतसम्यग्दृष्टेः । एतानि च पञ्च पतद्ग्रहस्थानानि पञ्चेन्द्रियेष्वेव भवन्ति ॥१४॥

**चोद्दसगदसगसत्तगअट्ठारसगे य होइ बावीसा । णियमा मणुयगईए णियमा दिट्ठी कए दुविहे ॥१५॥**

(मलय०)—'चोद्दस' त्ति । द्वाविंशतिः संक्रमयोग्या भवति चतुर्दशके, दशके, सप्तके, अष्टादशके च । तत्र चतुर्दशके देशविरतस्य, दशके प्रमत्ताप्रमत्तयोः, सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, अष्टादशकेऽविरतसम्यग्दृष्टेः । एषा च द्वाविंशतिर्नियमान्मनुजगतौ भवति, नान्यत्र। नियमाच्च दृष्टौ द्विविधायां कृतायां—सम्यक्त्वसम्यग्मिथ्यात्वयोरेव सतोरित्यर्थः ॥ १५ ॥

(उ०)—चतुर्दशके दशके सप्तकेऽष्टादशके च द्वाविंशतिः संक्रामति । तत्र चतुर्दशके देशविरतस्य, दशके प्रमत्ताप्रमत्तयोः, सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, अष्टादशकेऽविरतसम्यग्दृष्टेः । एषा च द्वाविंशतिर्नियमान्मनुजगतौ भवति, नान्यत्र,

नियमाच दृष्टा द्विविधायां कृतायां–सम्यक्त्वसम्यग्मिथ्यात्वयोरेव सतोरित्यर्थः ॥ १५ ॥

**तेरसगणवगसत्तगसत्तरसगपणगएक्कवीसासु । एक्कावीसा संकमइ सुद्धसासाणमीसेसु ॥ १६ ॥**

तेरसगणवगसत्तगसत्तरसगपणगएक्कवीसासु । एक्कावीसा संकमइ सुद्धसासाणमीसेसु ॥ १६ ॥

त्रयोदशकनवकसप्तकसप्तदशकपञ्चकैकविंशतिरूपेषु षट्सु पतद्ग्रहेष्वेकविंशतिः संक्रामति । केषु जीवेष्वि-

(मलय०)—'तेरस' त्ति । त्रयोदशकनवकसप्तकसप्तदशकपञ्चकैकविंशतिरूपेषु षट्सु पतद्ग्रहेष्वेकविंशतिः संक्रामति । केषु जीवेष्वि-

त्याह–'शुद्धसासादनमिश्रेषु' शुद्धेषु–विशुद्धदृष्टिषु अविरतसम्यग्दृष्ट्यादिषु, सासादनमिश्रेषु । तत्र त्रयोदशके देशविरतस्य, नवके प्रमत्ता-

प्रमत्तयोः, सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, सप्तदशकेऽविरतसम्यग्दृष्टेर्मिश्रदृष्टेश्च, पञ्चके क्षायिकसम्यग्दृष्टेरुपशम-

श्रेण्यां वर्तमानस्य क्षपकश्रेण्यां वा, एकविंशतौ सासादनस्य । इह यैराचार्यैश्चतुर्विंशतिसत्कर्मा सन्नुपशमश्रेणीतः प्रतिपतन् मिथ्यात्वा-

भिमुखः सासादन इष्यते तन्मते सासादनस्यैकविंशतावेकविंशतिः संक्रमेऽभिहिता, अन्यथा पुनरनन्तानुबन्ध्युदयसहितस्य सासादन-

स्यैकविंशतौ पञ्चविंशतिरेव संक्रमे प्राप्यते । सा च प्रागेवोक्ता ॥ १६ ॥

(उ०)—त्रयोदशकनवकसप्तकसप्तदशकपञ्चकैकविंशतिरूपेषु षट्सु पतद्ग्रहेष्वेकविंशतिः संक्रामति । केष्वित्याह—'शुद्धसासादन-

मिश्रेषु' शुद्धेषु–विशुद्धदृष्टिष्वविरतसम्यग्दृष्ट्यादिषु, सासादनमिश्रेषु–द्वितीयतृतीयगुणस्थानवर्तिषु । तत्र त्रयोदशके देशविरतस्य,

नवके प्रमत्ताप्रमत्तयोः, सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, सप्तदशकेऽविरतसम्यग्दृष्टेर्मिश्रदृष्टेश्च, पञ्चके क्षायिकस-

म्यग्दृष्टेरुपशमश्रेण्यां क्षपकश्रेण्यां वा वर्तमानस्य, एकविंशतौ सासादनस्य । इह यन्मते चतुर्विंशतिसत्कर्मोपशमश्रेणीतः पतन्मिथ्या-

त्वाभिमुखः सासादन इष्यते तन्मते सासादनस्यैकविंशतावेकविंशतिः संक्रमेऽभिहिता, अन्यथा तु सासादनेऽनन्तानुबन्ध्युदयसाहि-

त्यनियमात् तत्रैकविंशतौ पञ्चविंशतिरेव संक्रमे प्राप्यत इति तथैव प्रागुक्तम् ॥ १६ ॥

**एत्तो अविसेसा संकमंति उवसामगे व खवगे वा । उवसामगेसु वीसा य सत्तगे छक्क पणगे वा ॥१७॥**

(मलय०)—'एत्तो' त्ति। इत ऊर्ध्वमविशेषाः सप्तदश संक्रमाः संक्रामन्ति उपशमके क्षपके वा। तत्र विंशतिः संक्रमयोग्या सप्तके षट्के पञ्चके चौपशमिकेषु प्राप्यते। तत्रापि सप्तके षट्के चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। पञ्चके क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम् ॥ १७॥

(उ०)—इत ऊर्ध्वमविशेषाः सप्तदश संक्रमाः संक्रामन्ति उपशमके क्षपके वा। तत्र विंशतिः सप्तके षट्के पञ्चके चोपशमकेषु संक्रमयोग्या लभ्यते, तत्रापि सप्तके षट्के चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य, पञ्चके क्षायिकसम्यग्दृष्टेस्तथाभूतस्य ॥ १७॥

**पंचसु एगुणवीसा अट्ठारस पंचगे चउक्के य। चोद्दस छसु पगडीसुं तेरसगं छक्कपणगम्मि ॥ १८ ॥**

(मलय०)—'पंचसु' त्ति। पञ्चके एकोनविंशतिः संक्रामति, सा च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा तस्यैवाष्टादश संक्रामन्ति पञ्चके चतुष्के च। तथा चतुर्दश षट्सु प्रकृतिषु, ताश्चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा त्रयोदशकं षट्के पञ्चके च। तत्र षट्के औपशमिकम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, पञ्चके क्षपकश्रेण्यां च॥ १८ ॥

(उ०)—'पञ्चसु' पञ्चके एकोनविंशतिः संक्रामति। सा च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा तस्यैवाष्टादश पञ्चके चतुष्के वा संक्रामन्ति। तथा चतुर्दश षट्सु प्रकृतिषु संक्रामन्ति, ताश्चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा त्रयोदशकं षट्के पञ्चके च संक्रामति। तत्र षट्के औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, पञ्चके क्षपकश्रेण्याम् ॥ १८ ॥

**पंच चउक्के बारस एक्कारस पंचगे तिगचउक्के । दसगं चउक्कपणगे णवगं च तिगम्मि बोद्धव्वं॥१९॥**

(मलय०)—'पंच' त्ति। पञ्चके चतुष्के च द्वादश संक्रामन्ति। ताश्च पञ्चके क्षपकश्रेण्याम्, चतुष्के क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथैकादश पञ्चके त्रिके चतुष्के च संक्रामन्ति। तत्र पञ्चके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, क्षपकश्रेण्यां च। त्रिके चतुष्के च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथा दशकं चतुष्के पञ्चके संक्रामति। तच्चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य क्षपकश्रेण्यां च। तथा नवकं त्रिके बोद्धव्यम्। तच्च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य ॥ १९ ॥

(उ०)—पञ्चके चतुष्के च द्वादश संक्रामन्ति, ताश्च पञ्चके क्षपकश्रेण्याम्, चतुष्के क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा एकादश पञ्चके त्रिके चतुष्के च संक्रामन्ति। तत्र पञ्चके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षपकश्रेण्यां च वर्तमानस्य, त्रिके चतुष्के च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथा दशकं चतुष्के पञ्चके च संक्रामति, तत्रौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य क्षपकश्रेण्यां च। तथा नवकं त्रिके संक्रमयोग्यं बोद्धव्यम्, तच्च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य ॥ १९ ॥

**अट्ठ दुगतिगचउक्के सत्त चउक्के तिगे य बोद्धव्वा। छक्कं दुगम्मि णियमा पंच तिगे एक्कगदुगे य॥ २० ॥**

(मलय०)—'अट्ठ' त्ति। अष्टौ द्विके त्रिके चतुष्के च संक्रामन्ति। तत्र द्विके त्रिके च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, चतुष्के औपशमिकसम्यग्दृष्टेः। तथा सप्त त्रिके चतुष्के च बोद्धव्याः। ताश्च त्रिके चतुष्के चौपशमिकसम्यग्दृष्टेरेवोपशमश्रेण्यां वर्तमानस्य वेदितव्याः। तथा षट्कं द्विके एव नियमाद्भवति। तच्च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा पञ्च त्रिके एकके

द्विके च संक्रामन्ति। तत्र त्रिके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, द्विके एकके च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम् ॥२०॥

(उ०)—अष्टौ द्विके त्रिके चतुष्के च संक्रामन्ति। तत्र द्विके त्रिके चोपशमश्रेण्यां वर्तमानस्य क्षायिकसम्यग्दृष्टेः, चतुष्के औपशमिकसम्यग्दृष्टेः। तथा सप्त त्रिके चतुष्के च बोद्धव्याः, ताश्च त्रिके चतुष्के चौपशमिकसम्यग्दृष्टेरेवोपशमश्रेण्यां वर्तमानस्य ज्ञातव्याः। तथा षट्कं द्विक एव नियमाद्भवति, तच्च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा पञ्च त्रिके एकके द्विके च संक्रामन्ति। तत्र त्रिके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, द्विके एकके च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम् ॥ २० ॥

**चत्तारि तिगचउक्के तिन्नि तिगे एक्कगे य बोद्धव्वा। दो दुसु एक्काए वि य एक्का एक्काइ बोद्धव्वा ॥२१॥**

(मलय०)—'चत्तारि' त्ति। चतस्रस्त्रिके चतुष्के च संक्रामन्ति। तत्र त्रिके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, चतुष्के क्षपकश्रेण्याम्। तथा तिस्रस्त्रिके एकके च बोद्धव्याः। तत्र त्रिके क्षपकश्रेण्याम्, एकके क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथा द्वे प्रकृती द्वयोरेकस्यां च संक्रामतः। तत्र द्वयोः क्षपकश्रेण्यामौपशमिकसम्यग्दृष्टेश्चोपशमश्रेण्याम्, एकस्यां तु क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथैकप्रकृतिरेकस्यां बोद्धव्या, सा च क्षपकश्रेण्यामेव। एतच्च पतद्ग्रहेषु संक्रमस्थानसंकलनं प्रागुक्तं सप्रपञ्चं पतद्ग्रहेषु संक्रमस्थानसंबन्धं पट्टकादौ प्रस्तार्य परिभावनीयम् ॥ २१ ॥

॥ २१ ॥ (उ०)—चतस्रस्त्रिके चतुष्के च संक्रामन्ति। तत्र त्रिके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, चतुष्के क्षपकश्रेण्याम्। तथा तिस्रस्त्रिक एकके च बोद्धव्याः। तत्र त्रिके क्षपकश्रेण्याम्, एकके क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथा द्वे प्रकृती द्वयोरेकस्यां च संक्रामतः। तत्र द्वयोः क्षपकश्रेण्याम्, औपशमिकसम्यग्दृष्टेश्चोपशमश्रेण्याम्, एकस्यां तु क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथैका

प्रकृतिरेकस्यां बोद्धव्या, सा च क्षपकश्रेण्यामेव । तदेवमेतानि पतद्ग्रहेषु संकलितानि संक्रमस्थानानि संवेधचिन्तायां पट्टकादौ प्रस्तार्य परिभावनीयानि ॥ २१ ॥

**अणुपुव्विअणाणुपुव्वी झीणमझीणे य दिट्ठिमोहम्मि। उवसामगे य खवगे य संकमे मग्गणोवाया ॥२२॥**

(मलय०)—संप्रति पतद्ग्रहेषु संक्रमस्थानसंकलने मार्गणोपायानाह—'अणुपुव्वि'त्ति । पतद्ग्रहेषु संक्रमे—संक्रमस्थानसंकलनचिन्तायामेते मार्गणोपायाः । तथाहि—किमिदं संक्रमस्थानमानुपूर्व्या संक्रमे उपपद्यतेऽनानुपूर्व्या वोभयत्र वा ? तथा क्षीणे दृष्टिमोहे आहोश्विदक्षीणे उभयत्र वा ? तथोपशमके उताश्वित् क्षपके उभयत्र वेति ? ॥ २२ ॥

(उ०)—सम्प्रति पतद्ग्रहेषु संक्रमस्थानसंकलने मार्गणोपायानाह—पतद्ग्रहेषु संक्रमे—संक्रमस्थाने संकलयितुमिष्यमाणे एते मार्गणोपायाः, तद्यथा—किमिदं संक्रमस्थानमानुपूर्व्या संक्रमे समापतितमाहोश्विदनानुपूर्व्योभयत्र वा ? तथा क्षीणे दृष्टिमोहे उताहो अक्षीणे यद्वोभयत्र ? तथोपशमके किं वा क्षपके उभयत्र वेति ? ॥ २२ ॥

## मोहनीयस्य सत्स्थानादियन्त्रम् ॥

| सत्स्था-नानि | प्रकृतयः | संक्रम-स्थानानि | प्रकृतयः | कालमानम् | गुणस्थानकादिविवक्षया स्वामित्वम् |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | २७ | मिथ्यात्वव्यतिरिक्ताः | पल्योपमासंख्येयभागं यावत् | मिथ्यादृष्टिः |
| २८ | ,, | २७ | सम्यक्त्वव्यतिरिक्ताः | आवलिकावर्जोपशमसम्य-क्त्वकालं यावत् | उपशमसम्यग्दृष्टिः |
| २८ | ,, | २७ | ,, | साधिकषट्षष्टिसागरोपम यावत् | वेदकसम्यग्दृष्टिः |
| २७ | सम्यक्त्वव्यतिरिक्ताः | २६ | मिथ्यात्वसम्यक्त्वव्यतिरिक्ताः | पल्योपमासंख्येयभागं यावत् | मिथ्यादृष्टिः |
| २८ | सर्वप्रकृतिसमुदायः | २६ | मिश्रसम्यक्त्वव्यतिरिक्ताः | आवलिकामात्रं यावत् | औपशमिकसम्यग्दृष्टिः |
| २६ | सम्यक्त्वमिश्रव्यति-रिक्ताः | २५ | दर्शनमोहव्यतिरिक्ताः | अर्द्धपुद्गलपरावर्तं यावदभव्य-माश्रित्यानन्तकालं यावत् | उद्वलितमिश्रसम्यक्त्वमोह-नीयो मिथ्यादृष्टिरभव्याश्च |
| २४ | अनन्तानुबन्धिव्य-तिरिक्ताः | २३ | अनन्तानुबन्धिसम्यक्त्व-व्यतिरिक्ता | साधिकषट्षष्टिसागरो-पमं यावत् | विसंयोजितानन्तानुबन्धि-सम्यग्दृष्टिः |

| | | | | | |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदाय | २३ | अनन्तानुबन्धिमिथ्यात्व-व्यतिरिक्ताः | आवलिकामात्रं यावत् | विसंयोजितानन्तानुबन्धिसम्यग्दृष्टिः मिथ्यात्वं गतः |
| २६ | अनन्तानुबन्धिमिथ्यात्वव्यतिरिक्ताः | २२ | अनन्तानुबन्धिमिथ्यात्व-सम्यक्त्वव्यतिरिक्ताः | अन्तर्मुहूर्तं यावत् | सम्यग्दृष्टि. |
| २८ | सर्वप्रकृतिसमुदायः | २२ | अन० सम्यक्त्वसंज्वल-नलोभव्यतिरिक्ताः | अन्तर्मुहूर्तं यावत् | उपशमश्रेण्यामन्तरकरणे कृते सति नवमगुणस्थानवर्त्ती |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २२ | ” | ” | ” |
| २८ | सर्वप्रकृतिसमुदायः | २१ | अन० सम्यक्त्वसंज्वलनलोभनपुंसकवेदव्यतिरिक्ताः | ” | नपुंसकवेदे उपशान्तेऽनिवृत्तिबादरः |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २१ | ” | | ” |
| २६ | अनन्तानुबन्धिमिथ्यात्वमिश्रव्यतिरिक्ताः | २१ | अन० दर्शनत्रिकव्यतिरिक्ता. | ” | वेदकसम्यग्दृष्टिः |

| | | | | | |
|---|---|---|---|---|---|
| २१ | अनन्तानुवन्धिदर्शन-त्रिकव्यतिरिक्ताः | २१ | ” | ” | उपशमश्रेण्यामन्तरकरणाद-र्वाक्क्षायिकसम्यग्दृष्टिः |
| २१ | ” | २१ | ” | साधिकत्रयस्त्रिंशत्सागरो-पमं यावत् | क्षायिकसम्यग्दृष्टिः कषाया-ष्टकक्षयादर्वाक् |
| २८ | सर्वप्रकृतिसमुदायः | २० | अन० स्त्रीनपुंसकसंज्वलन-लोभसम्यक्त्ववर्जाः शेषाः | अन्तर्मुहूर्तं यावत् | उपशमश्रेण्यामुपशम-सम्यग्दृष्टिः |
| २४ | अनन्तानुवन्धिव्य-तिरिक्ताः | २० | ” | ” | ” |
| २१ | अनन्तानुवन्धिदर्शन-त्रिकव्यतिरिक्ताः | २० | अन० संज्वलनलोभदर्शन-त्रिकव्यतिरिक्ताः | ” | उपशमश्रेण्यां क्षायिकसम्य-ग्दृष्टिरन्तरकरणे कृते सति |
| २१ | ” | १९ | अन० दर्शनत्रिकसंज्वलन-लोभनपुंसकवेदव्यतिरिक्ताः | ” | ” |
| २१ | ” | १८ | अन० दर्शनत्रिकसंज्वलन-लोभनपुंसकस्त्रीवेदवर्जाः | ” | ” |

| | | | | | |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | १४ | अन० सम्यक्त्वसंज्वलन लोभक्लीनपुंसकवेद-हास्यषट्कवर्जाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेण्यामुपशम-सम्यग्दृष्टिः |
| २४ | अनन्तानुबन्धिव्यति-रिक्ता. | १४ | ,, | ,, | ,, |
| २८ | सर्वप्रकृतिसमुदाय. | १३ | पूर्वोक्ता पुंवेदवर्जाश्च शेषाः | अन्तर्मुहूर्तं यावत् | ,, |
| २४ | आद्यकषायविहीना. | १३ | ,, | ,, | ,, |
| १३ | संज्वलनचतुष्कनव-नोकषायाः | १३ | संज्वलनचतुष्कनव-नोकषायाः | ,, | क्षपकश्रेण्यामन्तरकरणात्पूर्वं मध्यमकषायाष्टकक्षयादनन्तरम् |
| १३ | ,, | १२ | संज्वलनलोभहीना. पूर्वोक्ताः | ,, | क्ष० श्रे० अन्तरकरणानन्तरम् |
| २१ | अन० दर्शनत्रिकवर्जा शेषाः | १२ | पुंवेदमध्यमकषायाष्टकलोभ-वर्जसंज्वलनत्रिकरूपाः | समयोनावलिकाद्विकं यावत् | उ. श्रे. क्षा. स. दृष्टिः हास्यादिषट्के उपशान्ते |

| | | | | | |
|---|---|---|---|---|---|
| २१ | ,, | ११ | पुंवेदवर्जाः पूर्वोक्ताः | अन्तर्मुहूर्त्तं यावत् | उ. श्रे. क्षा. पुंवेदे-उपशान्ते सति |
| १२ | संज्वलनचतुष्कनपुंस-कवर्जनोकपायाः | ११ | संज्वलनक्रोधमानमायानपुं-सकवर्जनोकषायाः | ,, | नपुंसकवेदे क्षीणे क्षपक-श्रेण्याम् |
| २८ | सर्वप्रकृतिसमुदायः | ११ | मध्यममानमायालोभसंज्व-लनक्रोधमानमायामिथ्या-त्वमिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेण्यामौपशमिकस-म्यग्दृष्टिः मध्यमक्रोधद्विके उपशान्ते |
| २४ | अनन्तानुवन्धिव्य-तिरिक्ताः | ११ | ,, | ,, | ,, |
| ११ | हास्यादिपट्कपुंवेदसं-ज्वलनचतुष्करूपाः | १० | हास्यादिषट्कपुंवेदलोभवर्ज-संज्वलनत्रिकरूपाः | अन्तर्मुहूर्तं यावत् | क्षपकश्रेण्यामनिवृत्तिवादरः |
| २८ | सर्वप्रकृतिसमुदायः | १० | मध्यममानमायालोभसंज्व-लनमानमायामिथ्यात्व-मिश्ररूपाः | ,, | उपशमश्रेण्यामुपशमसम्य-ग्दृष्टिः |
| २४ | अनन्तानुवन्धिव्य-तिरिक्ताः . . | १० | ,, | ,, | ,, |

| | | | | | |
|---|---|---|---|---|---|
| २१ | अन० दर्शनत्रिकव्यतिरिक्ताः | ९ | मध्यममानमायालोभसंज्वलनक्रोधमानमायाख्याः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्यग्दृष्टिः |
| २१ | ,, | ८ | संज्वलनक्रोधव्यतिरिक्ताः पूर्वोक्ता. | अन्तर्मुहूर्तं यावत् | ,, |
| २८ | सर्वप्रकृतिसमुदाय. | ८ | मध्यममायालोभसंज्वलन मानमायामिथ्यात्वमिश्ररूपा. | समयोनावलिकाद्विकं यावत् | उपशमश्रेणावुपशमसम्यग्दृष्टिः |
| २४ | अन० व्यतिरिक्ताः | ८ | ,, | ,, | ,, |
| २८ | सर्वप्रकृतिसमुदायः | ७ | मध्यममायालोभसंज्वलन मायामिथ्यात्वमिश्राख्याः | अन्तर्मुहूर्तं यावत् | ,, |
| २४ | अन० व्यतिरिक्ताः | ७ | ,, | ,, | ,, |

| | | | | | |
|---|---|---|---|---|---|
| २१ | अन० दर्शनत्रिकवर्जाः | ६ | मध्यममायालोभसंज्वलन-मानमायारूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्य-ग्दृष्टिः |
| २१ | " | ५ | संज्वलनमानवर्जपूर्वोक्ताः | अन्तर्मुहूर्तं यावत् | " |
| २८ | सर्वप्रकृतिसमुदायः | ५ | मध्यमलोभद्विकसंज्वलन-मायामिथ्यात्वमिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणावुपशमसम्य-ग्दृष्टिः |
| २४ | अनन्ता०व्यतिरिक्ताः | ५ | " | " | " |
| २८ | सर्वप्रकृतिसमुदायः | ४ | मध्यमलोभद्विकमिथ्यात्व-मिश्ररूपाः | अन्तर्मुहूर्तं यावत् | " |
| २४ | अनन्तानुबन्धिव्य-तिरिक्ताः | ४ | " | " | " |
| ५ | पुंवेदसंज्वलनचतु-ष्करूपाः | ४ | पुंवेदसंज्वलनक्रोधमान-मायारूपाः | समयोनावलिकाद्विकं यावत् | क्षपकश्रेण्यामनिवृत्तिबादरः |

| | | | | | |
|---|---|---|---|---|---|
| ४ | संज्वलनचतुष्करूपा. | ३ | संज्वलनक्रोधमान मायारूपाः | अन्तर्मुहूर्तं यावत् | ,, |
| २१ | अन० दर्शनत्रिकव्य-तिरिक्ताः | ३ | मध्यमलोभद्विकसंज्वलन मायारूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्य-ग्दृष्टिः |
| २१ | ,, | २ | मध्यमलोभद्विकं | अन्तर्मुहूर्तं यावत् | ,, |
| २८ | सर्वप्रकृतिसमुदाय. | २ | मिथ्यात्वमिश्ररूपम् | ,, | उपशमश्रेणावुपशमसम्य-ग्दृष्टिः |
| २९ | अन० वर्जाः | २ | ,, | ,, | ,, |
| ३ | संज्वलनमानमाया-लोभरूपम् | २ | संज्वलनमायालोभरूपे | ,, | क्षपकश्रेणावनिवृत्तिबादरः |
| २ | संज्वलनमानमायारूपम् | १ | संज्वलनमायारूपा | ,, | ,, |

## मोहनीयस्य कस्मिन्प्रतिग्रहे कः संक्रामतीति संवेधयन्त्रम् ॥

| प्रतिग्रह-स्थानानि | प्रतिग्रहस्थानगतप्रकृतयः | संक्रमस्था-नानि | संक्रमस्थानगतप्रकृतयः |
|---|---|---|---|
| २२ | १मिथ्यात्व १६कषाय १वेद २युगल १भ. १जु. | २७ | मिथ्यात्वव्यतिरिक्ताः |
| २२ | ,, ,, ,, ,, ,, ,, | २६ | मिथ्यात्वसम्यक्त्वव्यतिरिक्ताः |
| २२ | ,, ,, ,, ,, ,, ,, | २३ | अनन्तानुवन्धिमिथ्यात्वरहिताः |
| २१ | ० ,, ,, ,, ,, ,, | २५ | दर्शनत्रिकव्यतिरिक्ताः |
| १९ | १सम्य० १मिश्र. १२कषाय १वेद २युगल १भ. १जु. | २७ | सम्यक्त्वरहिताः |
| १९ | ,, ,, ,, ,, ,, ,, ,, | २६ | मिश्रसम्यक्त्वरहिताः |
| १९ | ,, ,, ,, ,, ,, ,, ,, | २३ | अनन्तानुवन्धिसम्यक्त्वरहिताः |
| १८ | ,, ० ,, ,, ,, ,, ,, | २२ | अनन्तानुवन्धिमिथ्यात्वसम्यक्त्वरहिताः |
| १७ | ० ० ,, ,, ,, ,, ,, | २५ | दर्शनत्रिकरहिताः |
| १७ | ० ० ,, ,, ,, ,, ,, | २१ | अनन्तानुवन्धिदर्शनत्रिकरहिताः |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १५ | [1]सम्य. | [1]मिथ. | [4]प्रत्या. | [4]संज्य. | [1]वेद. | [2]युग. | [1]भ. | [1]जु | २७ | सम्यक्त्वव्यतिरिक्ताः |
| १५ | " | " | " | " | " | " | " | " | २६ | मिश्रसम्यक्त्वव्यतिरिक्ताः |
| १५ | " | " | " | " | " | " | " | " | २३ | अनन्तानुवन्धिसम्यक्त्वव्यतिरिक्ताः |
| १४ | " | ० | " | " | " | " | " | " | २२ | अनन्तानुवन्धिमिथ्यात्वसम्यक्त्वव्यतिरिक्ताः |
| १३ | ० | ० | " | " | " | " | " | " | २१ | अनन्तानुवन्धिदर्शनत्रिकरहिताः |
| ११ | सम्य० | मिश्र० | | सं०४ | वे० | यु० | भ० | जु० | २७ | सम्यक्त्वव्यतिरिक्ताः |
| ११ | " | " | | " | " | " | " | " | २६ | मिश्रसम्यक्त्वव्यतिरिक्ताः |
| ११ | " | " | | " | " | " | " | " | २३ | अनन्तानुवन्धिसम्यक्त्वव्यतिरिक्ताः |
| १० | " | ० | | " | " | " | " | " | २२ | अनन्तानुवन्धिसम्यक्त्वमिथ्यात्वव्यतिरिक्ताः |
| ९ | ० | ० | | " | " | " | " | " | २१ | अनन्तानुवन्धिदर्शनत्रिकव्यतिरिक्ताः |
| ८ | सम्य० | मिश्र० | | सं०४ | | | वे० | " | २३ | अनन्तानुवन्धिसम्यक्त्वव्यतिरिक्ताः |
| ७ | " | " | | " | | | " | | २२ | अनन्तानुवन्धिसम्यक्त्वसंज्वलनलोभरहिता. |
| ७ | " | " | | " | | | " | | २१ | अन० सम्य० संज्व.लो० नपुंसकव्यतिरिक्ताः |

| | | | |
|---|---|---|---|
| ७ | ” ” ” ” | २० | अन०-सम्य०-संज्व.लो०-नपुंसक-स्त्रीव्यतिरिक्ताः |
| ६ | सम्य० मिश्र० सं०४ | २० | ” ” ” ” ” |
| ६ | ” ” ” | १४ | अन० सम्य० सं.लो० न० स्त्री० हास्यादिषट्करहिताः |
| ६ | ” ” ” | १३ | अन० सम्य० सं.लो० वेदत्रिकहास्यादिपट्करहिताः |
| ५ | संज्वलनचतुष्कपुरुषवेदरूपासु | २१ | अनन्तानुवन्धिदर्शनत्रिकव्यतिरिक्ताः |
| ५ | ” ” | २० | अन०दर्शनत्रिकसंज्व.लो०व्यतिरिक्ताः |
| ५ | ” ” | १९ | अन०-दर्शनत्रिक-सं.लो०-नपुंसकव्यतिरिक्ताः |
| ५ | ” ” | १८ | अन०-दर्शनत्रिक-सं.लो०-नपुंसकस्त्रीव्यतिरिक्ताः |
| ५ | ” ” | १३ | अन०-दर्शनत्रिक-कषाय८व्यतिरिक्ताः |
| ५ | ” ” | १२ | अन०-दर्श०-कषाय८-सं.लो०-व्यतिरिक्ताः |
| ५ | ” ” | ११ | अन०-दर्श०-कषाय८-सं.लो०-नपुंसकरहिताः |
| ५ | ” ” | १० | ” ” ” ” स्त्रीरहिताश्च |
| ५ | संज्वलनमानादि३-सम्यक्त्वमिश्ररूपासु | १३ | अन०-सम्य०-सं.लो०-नवनोकषायरहिताः |

| | | | |
|---|---|---|---|
| ५ | ,, ,, | ११ | ,, ,, ,, ,, मध्यमक्रोधद्विकविकलाश्च |
| ५ | ,, ,, | १० | ,, ,, ,, ,, क्रोधत्रिकरहिताश्च |
| ४ | संज्वलनचतुष्के | १८ | अन०४-दर्श०३-नपुंसक-स्त्री०-सं.लोभवर्जाः |
| ४ | ,, | १२ | पूर्वोक्तदशकहास्यादिषट्कव्यतिरिक्ताः |
| ४ | ,, | ११ | पुंवेदः पूर्वोक्ताश्च त्याज्याः |
| ४ | ,, | १० | अन०-दर्श०-कषायाष्टक-सं.लो०-नपुंसकस्त्रीवेदरहिताः |
| ४ | संज्वलनमायालोभसम्यक्त्वमिश्रेषु | १० | मि०मिश्र०मध्यममानमायालोभद्विकसंज्वलनमानमायारूपा |
| ४ | ,, ,, | ८ | मिथ्या०मिश्र०मध्यममायालोभद्विकसंज्वलनमानमायारूपाः |
| ४ | ,, ,, | ७ | मिथ्या० मिश्र० मध्यममायालोभद्विकसं०मायारूपा |
| ४ | संज्वलनचतुष्के | ४ | पुंवेदलोभवर्जसंज्वलनत्रिकरूपाः |
| ३ | सं०मानादित्रिके | ११ | अनाद्यक्रोधमानमायात्रिकमध्यमलोभद्विकरूपाः |
| ३ | ,, | ९ | मध्यमक्रोधद्विकवियुक्ताः पूर्वोक्ताः |
| ३ | ,, | ८ | अनाद्यमानमायात्रिकमध्यमलोभद्विकरूपाः |

| | | | |
|---|---|---|---|
| ३ | संज्वलनलोभ-मिश्र-सम्यक्त्वरूपासु | ७ | अनाद्यमायात्रिकमध्यमलोभद्विकमिथ्या०मिश्ररूपाः |
| ३ | ,, ,, ,, | ५ | संज्व०मायामध्यमलोभद्विकमिथ्या०मिश्ररूपाः |
| ३ | ,, ,, ,, | ४ | मध्यमलोभमिथ्यात्वमिश्ररूपाः |
| ३ | संज्वलनमानादित्रिके | ३ | संज्वलनक्रोधमानमायारूपाः |
| २ | संज्वलनमायालोभयोः | ८ | प्रथमवर्जमानमायात्रिकमध्यमलोभद्वयरूपाः |
| २ | | ६ | मध्यममानवर्जपूर्वोक्ताः |
| २ | ,, | ५ | प्रथमवर्जमायात्रिकमध्यमलोभद्वयरूपाः |
| २ | ,, | २ | मानमायारूपे |
| २ | मिश्रसम्यक्त्वयोः | २ | मिथ्यात्वमिश्रे |
| १ | सं० लोभे | ५ | प्रथमवर्जमायात्रिकमध्यमलोभद्वयरूपाः |
| १ | ,, | ३ | संज्वलनमायामध्यमलोभद्वयरूपाः |
| १ | ,, | २ | मध्यमलोभौ |
| १ | ,, | १ | मायारूपा |

## अथवा प्रकारान्तरेण प्रतिग्रहेषु संक्रमस्थानानां यन्त्रकम् ।

| संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु | संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु | संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु | संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु |
|---|---|---|---|---|---|---|---|
| २७ | २२ | २२ | १८ | १८ | ४ | ८ | २ |
| २७ | १९ | २२ | १४ | १४ | ६ | ७ | ४ |
| २७ | १५ | २२ | १० | १३ | ६ | ७ | ३ |
| २७ | ११ | २२ | ७ | १३ | ५ | ० | ० |
| २६ | २२ | २१ | १७ | १२ | ५ | ५ | २ |
| २६ | १९ | २१ | १३ | १२ | ४ | ५ | १ |
| २६ | १५ | २१ | ९ | ११ | ५ | ० | ० |
| २६ | ११ | २१ | ७ | ११ | ४ | ४ | ३ |
| २५ | २१ | २१ | ५ | ११ | ३ | ४ | ३ |
| २५ | १७ | २० | ७ | १० | ५ | ३ | १ |
| २३ | २२ | २० | ६ | १० | ४ | ० | ० |
| २३ | १९ | २० | ५ | ९ | ३ | २ | २ |
| २३ | १५ | १९ | ५ | ८ | ४ | २ | १ |
| २३ | ११ | १८ | ५ | ८ | ३ | १ | १ |
| २३ | ७ | | | | | | |

इदानीं णामस्स संकमपडिग्गहविहिं भणामि। तत्थ णामस्स बारस संकमणट्ठाणा। तं जहा—

तिदुगेगसयं छप्पणचउतिगणउई य इगूणनउइ या। अट्ठचउदुगिक्कसीइ य संकमा बारस य छट्ठे॥ २३॥

(चू०)—तत्थ णामस्स तिउत्तरं पगडिसतं–गति ४, जाति ५, सरीर ५, संघाया ५, बंधणपण्णरसविहं, तं जहा–उरालियउरालियबंधणणामं, उरालियतेजसबन्धणणाम, उरालियकम्मबंधणणाम, उरालियतेयकम्मबंधणणाम, एवं विउव्विए वि ४, आहारगस्स वि ४, तेईयतेजइयं, तेजइककम्मइयं, कम्मइयकम्मइयं चेति–एयाणि पण्णरस, संठाण ६, अगोवंगाणि तिण्णि, संघयणा ६, वण्ण ५, गंध २, रस ५, फास ८, आणुपुव्वीउ ४, अगुरुलघु, उवघाय, पराघाय, उस्सास, आयव, उज्जोवं, विहायगतीउ२ चेव, तसं, थावरं, बादरं, सुहुमं, पज्जत्तगं, अपज्जत्तगं, पत्तेयं, साहारणं, थिरं, अथिरं, सुभं, असुभं, सुभगं, दुभगं, सुसरं, दुसरं, आदेज्जं, अणादिज्जं, जसकित्ति, अजसकित्ति, णिमेणं, तित्थगरं–एयं तिउत्तरसतं पगतीणं। एयं चेव तित्थगरवज्जं बिउत्तरसतं, आहारगसत्तरहितं छण्णउती होति। छण्णउती तित्थगररहिया पंचाणउती होति। अहवा छण्णउती जसकित्तिरहिया पंचाणउती होति। निरयगतिणिरयाणुपुव्वी य वा विणा तिणउती होति। तिउत्तरसयाओ तेरसणामे खविए–निरयगतितिरियगतिएगिंदियबेंदियतेइंदियचउरिंदियजातिणिरयतिरियाणुपुव्वीउ आयवुज्जोयथावरसुहुमसाहारणाणि- जसकित्तिरहिया एगूणणउती होइ। एगूणणउती तित्थगररहिता अट्ठासीती होति। तेणउतीतो वेउव्वियसत्तए णिरयगतिणिरयाणुपुव्वीए य उव्वलियासु चउरासी होति। चउरासीतो मणुयगतिमणुयाणुपुव्वीसु उव्वलियासु

बासीति होंति। अहवा छण्णउतीउ तेरसणामे खविते जसकित्तिरहिता बासीइ होइ। घासीती तित्थगररहिता एक्कासीति होंति। एताणि संकमट्ठाणाणि णामस्स ॥ २३ ॥

(मलय०)—तदेवमुक्तो मोहनीयस्य प्रपञ्चतः संक्रमपतद्ग्रहविधिः। सम्प्रति नामकर्मणोऽभिधीयते—तत्र द्वादश नामकर्मणः संक्रमस्थानानि। तथा चाह—'तिदुगेगसयं'ति—षष्ठे नामकर्मणि द्वादश संक्रमस्थानानि। तद्यथा—त्र्युत्तरशतम्, द्व्युत्तरशतम्, एकोत्तरशतम्, षण्णवतिः, पञ्चनवतिः, चतुर्नवतिः, त्रिनवतिः, एकोननवतिः, चतुरशीतिः, द्व्यशीतिः, एकाशीतिश्चेति। तत्र नाम्नः सर्वसंख्यया त्र्युत्तर प्रकृतिशतम्, तद्यथा—गतिचतुष्टयम्, जातिपञ्चकम्, शरीरपञ्चकम्, संघातपञ्चकम्, बन्धनपञ्चदशकम्, संस्थानषट्कम्, संहननषट्कम् अंगोपाङ्गत्रयम्, वर्णपञ्चकम्, गन्धद्विकम्, रसपञ्चकम्, स्पर्शाष्टकम्, अगुरुलघु, आनुपूर्वीचतुष्टयम्, पराघातोपघातोच्छ्वासातपोद्योतविहायोगतिद्विकत्रसस्थावरबादरसूक्ष्मसाधारणप्रत्येकपर्याप्तापर्याप्तस्थिरास्थिरशुभाशुभसुभगदुर्भगदुःस्वरसुस्वरादेयानादेयायशःकीर्तियशःकीर्तिनिर्माणतीर्थकराणि च। एतदेव च तीर्थंकरवर्जं द्व्युत्तरशतम्। अथवा यशःकीर्तिरहितं द्व्युत्तरशतम्। तीर्थंकरयशःकीर्तिरहितमेकोत्तरशतम्। त्र्युत्तरशतमेवाहारकसप्तकरहितं षण्णवतिः, सैव तिर्थंकररहिता पञ्चनवतिः। अथवा यशःकीर्तिरहिता पञ्चनवतिः। यशःकीर्तितीर्थंकररहिता चतुर्नवतिः। तीर्थंकररहिता पञ्चनवतिरेव। देवगतिदेवानुपूर्व्योरुद्वलितयोस्त्रिनवतिः। अथवा नरकगतिनरकानुपूर्वीरहिता त्रिनवतिः। त्र्युत्तरशतान्नरकगतिनरकापूर्वीतिर्यग्गतितिर्यगानुपूर्वीपञ्चेन्द्रियजातिवर्जैकजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतलक्षणासु त्रयोदशसु प्रकृतिषु क्षीणासु यशःकीर्तौ चापनीतायामेकोननवतिर्भवति। सैव तीर्थंकररहिताऽष्टाशीतिः। त्रिनवतेर्वैक्रियसप्तके उद्वलिते नरकगतिनरकानुपूर्व्योश्चोद्वलितयोः शेषा चतुरशीतिर्भवति। मनुजगति-

मनुजापूर्व्योरुद्वलितयोर्द्व्यशीतिः। अथवा षण्णवतिः प्रागुक्तासु त्रयोदशसु प्रकृतिषु क्षीणासु यशःकीर्तौ चापनीतायां द्व्यशीतिः। सैव तीर्थकररहिता एकाशीतिः। एतानि नाम्नः संक्रमस्थानानि ॥ २३ ॥

(उ०)—तदेवमुक्तो मोहनीयस्य प्रपञ्चतः संक्रमपतद्ग्रहविधिः। सम्प्रति नामकर्मणोऽभिधीयते—तत्र नामकर्मणो द्वादश सत्तास्थानानि। तद्यथा—त्र्युत्तरशतं द्व्युत्तरशतं षण्णवतिः पञ्चनवतिः, एतत्प्रथमसंज्ञं सत्ताचतुष्कम्। तत्र सकलप्रकृतिसमुदायस्त्र्युत्तरशतम्, तदेव तीर्थकररहितं द्व्युत्तरशतम्, त्र्युत्तरशतमेवाहारकसप्तकरहितं षण्णवतिः, द्व्युत्तरशतमाहारकसप्तकरहितं पञ्चनवतिः। क्षपकश्रेण्यां प्रथमसत्ताचतुष्कान्नरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्व्याद्यजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतलक्षणासु त्रयोदशसु प्रकृतिषु क्षीणासु यथाक्रमं द्वितीयं सत्ताचतुष्कं नवतिरेकोननवतिस्त्र्यशीतिर्द्व्यशीतिश्च। तथा पञ्चनवतेर्देवद्विके उद्वलिते त्रिनवतिः। तस्या अपि वैक्रियसप्तकनरकद्विकयोरुद्वलितयोश्चतुरशीतिः। अस्या अपि मनुजद्विके उद्वलिते द्व्यशीतिः। एतच्च सत्तात्रिकमध्रुवसंज्ञम्। यद्यपीह द्वितीयसत्ताचतुष्के च द्व्यशीतिर्भिन्नभिन्नतया व्यवस्थिता तथापि संख्यातौल्यादेकमेवेदं सत्तास्थानं गण्यते। तदेवं संजातेषु दशसु सत्तास्थानेषु द्वितीयसत्ताचतुष्कस्थे नवतित्र्यशीतिरूपे सत्तास्थाने संक्रमे न प्राप्येते, शेषाणि तु सर्वाणि प्राप्यन्त इत्यष्टौ संक्रमस्थानानि भवन्ति। नवाष्टरूपे चान्ये द्वे सत्तास्थाने अयोग्यवस्थाचरमसमये प्राप्येते, ततो द्वादश सत्तास्थानानि पूर्यन्ते, परं ते संक्रमे न प्राप्येते, अयोग्यवस्थायां बन्धाभावेन पतद्ग्रहाभावात् बध्यमानप्रकृतेरेव पतद्ग्रहत्वात्पतद्ग्रहे सत्येव च संक्रमसंभवात्। सत्तास्थानवाद्यानि च चत्वार्यन्यानि संक्रमस्थानानि भवन्ति—एकोत्तरशतं चतुर्नवतिरष्टाशीतिरेकाशीतिश्च ॥

इदाणिं पडिग्गहट्ठाणाणि—

तदेवं द्वादश सत्तास्थानानि द्वादशैव संक्रमस्थानानीति लब्धम्, तच्चाह—षष्ठे नामकर्मणि द्वादश संक्रमस्थानानि, तद्यथा—त्र्युत्तरशतम्, द्व्युत्तरशतम्, एकोत्तरशतम्, षण्णवतिः, पञ्चनवतिः, चतुर्नवतिः, त्रिनवतिः, एकोननवतिः, अष्टाशीतिः, चतुरशीतिः, एकाशीतिश्चेति । तत्र सर्वप्रकृतिसमुदायस्त्र्युत्तरशतम्, तदेव तीर्थकरवर्जं यशःकीर्तिवर्जं वा द्व्युत्तरशतम्, उभयवर्जमेकोत्तरशतम्, त्र्युत्तरशतमेवाहारकसप्तकरहितं षण्णवतिः, द्व्युत्तरशतं च तथाभूतं पञ्चनवतिः, सा यशःकीर्तिरहिता चतुर्नवतिः, पञ्चनवतिरेव देवगतिदेवानुपूर्व्योरुद्वलितयोस्त्रिनवतिः, यद्वा नरकगतिनरकानुपूर्वीरहिता त्रिनवतिः, त्र्युत्तरशतात्त्रयोदशप्रकृतिक्षये यशःकीर्त्तिं चापनीतायामेकोननवतिः, सैव तीर्थकररहिताऽष्टाशीतिः, त्रिनवतेर्वैक्रियसप्तकनरकद्विकयोरुद्वलितयोश्चतुरशीतिः, ततो मनुजगतिमनुजानुपूर्व्योरुद्वलितयोर्द्व्यशीतिः, षण्णवतेर्वा त्रयोदशप्रकृतिक्षये यशःकीर्तौ चापनीतायां द्व्यशीतिः, सैव तीर्थकररहितैकाशीतिः । एतानि नाम्नः संक्रमस्थानानि ॥ २३ ॥

इदानीं पतद्ग्रहस्थानानि—

**तेवीसा पणवीसा छव्वीसा अट्ठवीसगुणतीसा । तीसेगतीसेक्का वि य पडिग्गहा अट्ठ णामस्स ॥२४॥**

(मलय०) सम्प्रति पतद्ग्रहस्थानप्रतिपादनार्थमाह—'तेवीस' त्ति । त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका चेत्यष्टौ नाम्नः पतद्ग्रहस्थानानि भवन्तीति ॥ २४ ॥

(यशो०) अथ पतद्ग्रहस्थानान्याह—नाम्नो ह्यष्टौ बन्धस्थानानि-त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका च । एतान्येव चाष्टौ पतद्ग्रहस्थानानि भवन्ति ॥ २४ ॥

एक्कगदुगसयपणचउणउई ता तेरसूणिया वा वि । परभवियबंधवुच्छेय उवरि सेढीइ इक्कम्मि॥२५॥

(चू०)—एगपगतिपडिग्गहे अट्ठ ट्ठाणाणि संकमंति । तंजहा–बिउत्तरसतं, एगुत्तरसतं, पंचाणउती, चउणउती, एगूणणउती, अट्ठासीति, बासीति, एक्कासीति । तत्थ तिउत्तरसयसंतकंमियस्स जसकित्तिपडिग्गहो त्ति फेडिए बिउत्तरसतं संकमइ । बिउत्तरसयसंतकंमियस्स जसकित्तिपडिग्गहो त्ति फेडिते एगुतरसतं संकमति । छण्णउतिसंतकंमियस्स जसकीत्तिपडिग्गहो त्ति फेडिए पंचाणउति संकमति । पंचाणउतिसंतकंमियस्स जसकित्तिपडिग्गहो त्ति फेडिए चउणउती संकमति । इदाणिं तिउत्तरसयबिउत्तरसतछण्णउतिपंचणउतिसंतकम्मेहिंतो तेरसणामे खविते जसकित्तिपडिग्गहो त्ति फेडिए जहक्कमेणं एगूणणउतिअट्ठासीतीबासीयएक्कासीतीउ तंमि चेव जसकित्तिपडिग्गहंमि संकमति ॥ २५ ॥

(मलय०)–सम्प्रति काः प्रकृतयः कुत्र संक्रामन्तीत्येतन्निरूपणार्थमाह—'एक्कग' त्ति। 'पारभविकीनां'–परभववेद्यानां नामप्रकृतीनां देवगतिप्रायोग्यैकत्रिंशदादीनां बन्धव्यवच्छेदे सति उपरि द्वयोरपि श्रेण्योः–उपशमक्षपकश्रेणिरूपयोरेकस्यां यशःकीर्तिलक्षणायां प्रकृतौ बध्यमानायामष्टौ संक्रमस्थानानि संक्रामन्ति । तद्यथा–एकोत्तरशतम्, द्व्युत्तरशतम्, पञ्चनवतिः, चतुर्नवतिः । 'ता' इति–तान्येवानन्तरोदितानि चत्वारि संक्रमस्थानानि त्रयोदशन्यूनानि चत्वारि भवन्ति । तद्यथा–अष्टाशीतिः, एकोननवतिः, द्व्यशीतिः, एकाशीतिश्चेति । तत्र त्र्युत्तरशतसत्कर्मणो यशःकीर्तिर्बध्यमाना पतद्ग्रह इति तस्यामुत्सारितायां शेषं द्व्युत्तरशतं यशःकीर्तिपतद्ग्रहे संक्रामति । एवमेव द्व्युत्तरशतसत्कर्मण एकोत्तरं शतम् । तथा षण्णवतिसत्कर्मणो यशःकीर्तिः पतद्ग्रह इति तस्यामुत्सारितायां

शेषा पञ्चनवतिः तस्यां यशःकीर्त्तौ संक्रामति । एवमेव पञ्चनवतिसत्कर्मणश्चतुर्नवतिः । तथा त्र्युत्तरशतसत्कर्मणस्त्रयोदशसु पूर्वोक्तेषु नामकर्मसु क्षीणेषु सत्सु यशःकीर्त्तिः पतद्ग्रह इति तस्यामपगतायां शेषा एकोननवतिर्यशःकीर्त्तौ संक्रामति । द्व्युत्तरशतसत्कर्मणः पुनस्त्रयोदशसु क्षीणेष्वष्टाशीतिः संक्रामति । पण्णवतिसत्कर्मणस्तु नामत्रयोदशके क्षीणे द्व्यशीतिः । पञ्चनवतिसत्कर्मण एकाशीतिः ॥२५॥

(यशो०)—सम्प्रति काः प्रकृतयः कुत्र संक्रामन्तीत्याह—'पारभविकीनां'—परभववेद्यानां नामप्रकृतीनां देवगतिप्रायोग्यैकत्रिंशदादीनां बन्धव्यवच्छेदे सत्युपरि द्वयोरपि श्रेण्योरुपशमक्षपकश्रेणिरूपयोरेकस्यां यशःकीर्तिलक्षणायां प्रकृतौ बध्यमानायामष्टौ संक्रमस्थानानि संक्रामन्ति । तद्यथा—एकोत्तरशतं द्व्युत्तरशतं पञ्चनवतिश्चतुर्नवतिः । 'ता' इति—तान्येवानन्तरोदितानि चत्वारि संक्रमस्थानानि त्रयोदशन्यूनानि चत्वारि भवन्ति—अष्टाशीतिरेकोननवतिर्द्व्यशीतिरेकाशीतिश्चेति । यशःकीर्तिवर्जप्रथमसत्ताचतुष्कं द्वितीयसत्ताचतुष्कं च यशःकीर्तावेकस्या संक्रामतीत्यर्थः । तत्र यशःकीर्तिर्बध्यमाना पतद्ग्रह इति सर्वत्र संक्रमादुत्सार्यत इति त्र्युत्तरशतसत्कर्मणः शेषं द्व्युत्तरशतं यशःकीर्तिपतद्ग्रहे संक्रामति । द्व्युत्तरशतसत्कर्मण एकोत्तरशतम्, पण्णवतिसत्कर्मणः पञ्चनवतिः, पञ्चनवतिसत्कर्मणश्चतुर्नवतिः । त्रयोदशप्रकृतिक्षये च त्र्युत्तरशतसत्कर्मणः शेषा एकोननवतिर्यशःकीर्तौ संक्रामति । द्व्युत्तरशतसत्कर्मणोऽष्टाशीतिः, पण्णवतिसत्कर्मणो द्व्यशीतिः, पञ्चनवतिसत्कर्मणश्चैकाशीतिरिति बोध्यम् ॥ २५ ॥

इदानीं एक्कतीसपडिग्गहंमि चत्तारि संकमट्ठाणाणि । तंजहा—

**तिगदुगसयं छप्पंचगणउई य जइस्स एक्कतीसाए । एगंतसेढिजोगे वज्जिय तीसिगुणतीसासु ॥ २६ ॥**

(चू०)—तिउत्तरसतं बिउत्तरसतं छण्णउती पंचणवति चेव । तत्थ तिउत्तरसतं तित्थगराहारगाणं बन्धावलि-

ताए गलाते एक्कतीसपडिग्गहे संकमति। बिउत्तरसतं तित्थगरबन्धावलिताते अगताए तंमि चेव एक्कतीसे संकमति। छण्णउती आहारगसत्तगस्स बन्धावलियाए अगताए तंमि चेव ३१ पडिग्गहे संकमति। पंचाणउती आहारगसत्तगतित्थगराणं आवलियाए अगताते तंमि चेव ३१ पडिग्गहे संकमति। एयं अपमत्तस्स वा अपुव्वकरणस्स। इदाणीं तीसपडिग्गहे सत्त ट्ठाणाणि संकमंति। तं जहा—'एगंतसेढिजोगे वज्जिय तीसिगुणतीसासु' त्ति—तिउत्तरसयं, बिउत्तरसयं, छण्णउती, पंचाणउती, तिणउती, चउरासीति, बासीति चेति। तत्थ तिउत्तरसतसंतकंमितस्स देवस्स सम्मदिट्ठिस्स मणुयगतिपातोग्गं तित्थकरसहितं तीसं बंधमाणस्स तिउत्तरसयं तीसपडिग्गहे संकमति। बिउत्तरसतसंतकंमियस्स अपमत्तसंजयस्स वा अपुव्वकरणस्स वा आहारगदुगसहितं देवगतिपातोग्गं तीसं बंधमाणस्स बिउत्तरसतं तंमि चेव पडिग्गहे संकमति। अहवा बिउत्तरसतगंमि (सतसंतकंमियाणं) एगिंदियादीणं उज्जोवसहितं वेइंदियातिजोग्गं तीसं बन्धमाणाणं बिउत्तरसतं तीसाए संकमति। छण्णउनिसंतकंमियाणं देवनेरइयाणं मणुयगतिपातोग्गं तित्थयरसहितं तीसं बन्धमाणाणं तीसाते संकमति। पंचाणउतिसंतकंमिताणं अप्पमत्तअपुव्वकरणसंजताणं आहारगदुगसहितं देवपातोग्गं तीसं बन्धमाणाणं आहारगसत्तगस्स बन्धावलिताते अगताते पंचाणउती तीसाए संकमति। अहवा एगिंदियादीणं पंचणउतीसंतकंमंसिताणं बेतिंदियादिपातोग्गं उज्जोवसहितं तीसं बन्धमाणाणं पंचणउती तीसाते संकमति। तिणउती चउरासीती बासीतीतो य तस्संतकम्मियाणं एगिंदियादीणं विगलिंदियपंचेंदियतिरियगतिपातोग्गं उज्जोवसहितं तीसं बन्धमाणाणं तीसाए पडिग्ग-

ए संकमंति। इदाणिं एगूणतीसाए ताणि चेव सत्त ट्ठाणाणि संकमंति—तत्थ तिउत्तरसतं तिउत्तरसतसंतकंमंमियाणं अविरतसम्मदिट्ठिदेसविरतपमत्तसंजयाणं देवगइपातोग्गं तित्थगरसहितं एगूणतीसं बंधमाणाणं तिउत्तरसतं एगूणतीसाते संकमति। अहवा एगिंदियादीणं बिउत्तरसतसंतकम्मंमियाणं बेतिंदियातिपातोग्गं एगूणतीसं बंधमाणाणं बिउत्तरसतं एगूणतीसाए संकमति। छण्णउती अविरयसम्मदिट्ठिदेसविरतसंजयाणं छण्णउतीसंतकम्मंमियाणं देवगतिपातोग्गं तित्थकरसहितं एगूणतीसं बंधमाणाणं छण्णउती सा एगूणतीसाए संकमति। अहवा णेरइयस्स तित्थगरसंतकंमियाणं(यस्स) मिच्छद्दिट्ठिस्स अपज्जत्तगद्धाते वट्टमाणस्स मणुतगतिपातोग्ग एगूणतीसं बन्धमाणस्स छण्णउती एगूणतीसाए संकमति। इदाणिं पंचाणउती पुव्वुत्ताणं अविरयादीणं तिण्हं छण्णउतीसंतकंमियाणं तित्थगरसहितं देवगतिपातोग्गं एगूणतीसं बन्धमाणाणं तित्थगरबन्धावलियाए अतीताए पंचाणउती एगूणतीसाए संकमति। अहवा पंचाणउतीसंतकंमियाणं एगिंदियादीणं बेइंदियातिपातोग्गं एगूणतीसं बन्धमाणाणं पंचाणउती एगूणतीसाए संकमति। तिणउतिचउरासीतिबासीति जहा तीसपडिग्गहे तहा एगूणतीसापडिग्गहे वि संकमंति ॥२६॥

(मलय०)-एकत्रिंशत्प्रकृतिसमुदायरूपे पतद्ग्रहे चत्वारि संक्रमस्थानानि। तथा चाह—'तिग' त्ति—यतेरप्रमत्तस्यापूर्वकरणस्य च देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तितैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकराहारकद्विकलक्षणामेकत्रिंशतं बध्नतस्तस्यामेकत्रिंश-

ति–एकत्रिंशत्प्रकृतिसमुदायरूपे पतद्ग्रहे त्र्युत्तरशतं द्व्युत्तरशतं षण्णवतिः पञ्चनवतिरिति चत्वारि संक्रामन्ति। तत्र त्र्युत्तरशतं तीर्थकराहारकयोर्बन्धावलिकायामपगतायामेकत्रिंशत्प्रकृतिपतद्ग्रहे संक्रामति। तीर्थकरनाम्नः पुनर्बन्धावलिकायामनपगतायां द्व्युत्तरशतम्। आहारकसप्तकस्य तु बन्धावलिकायामनपगतायां षण्णवतिः। तीर्थकराहारकसप्तकयोः पुनर्बन्धावलिकायामनपगतायां पञ्चनवतिः। 'एगंत' इत्यादि–एकान्तेन श्रेणियोग्यानि यानि संक्रमस्थानानि एकोत्तरशतचतुर्नवत्येकोननवत्यष्टाशीत्येकाशीतिरूपाणि–एतानि हि श्रेणावेव वर्तमानेन यशःकीर्तावेकस्यां बध्यमानायां संक्रम्यमाणानि प्राप्यन्ते, नान्यत्र, ततस्तानि वर्जयित्वा शेषाणि त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि त्रिंशत्पतद्ग्रहे एकोनत्रिंशत्पतद्ग्रहे च सप्त संक्रमस्थानानि भवन्ति। तत्र त्र्युत्तरशतसत्कर्मणो देवस्य सम्यग्दृष्टेस्तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणपञ्चेन्द्रियजात्यौदारिकशरीरौदारिकाङ्गोपाङ्गसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननमनुजगतिमनुजानुपूर्वीत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासप्रशस्तविहायोगतितीर्थकरलक्षणां मनुजगतिप्रायोग्यां तीर्थकरनामसहितां त्रिंशतं बध्नतस्त्र्युत्तरशतं तस्मिन् त्रिंशत्पतद्ग्रहे संक्रामति। द्व्युत्तरशतसत्कर्मणोऽप्रमत्तसंयतस्यापूर्वकरणस्य वा देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तितैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणाहारकद्विकलक्षणां देवगतिप्रायोग्यां त्रिंशतं बध्नतो द्व्युत्तरशतं तस्मिन् त्रिंशत्पतद्ग्रहे संक्रामति। अथवा द्व्युत्तरशतसत्कर्मणामेकेन्द्रियादीनामुद्योतसहितां द्वीन्द्रियादिप्रायोग्यां तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कतिर्यग्गतितिर्यगानुपूर्वीद्वीन्द्रियाद्यन्यतमजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगदुःस्वरानादेययशःकीर्त्ययशःकीर्त्यन्य

तरौदारिकशरीरौदारिकाङ्गोपाङ्गान्यतमसंस्थानान्यतमसंहननाप्रशस्तविहायोगतिपराघातोद्योतोच्छ्वासलक्षणां त्रिंशतं बध्नतां द्व्युत्तरशतं तस्मिन् त्रिंशत्पतद्ग्रहे संक्रामति। षण्णवतिसत्कर्मणां देवनारकाणां मनुजगतिप्रायोग्यां तीर्थकरनामसहितां प्रागुक्तां त्रिंशतं बध्नतां तस्मिन् त्रिंशत्पतद्ग्रहे षण्णवतिः संक्रामति। पञ्चनवतिसत्कर्मणामप्रमत्तापूर्वकरणसंयतानामाहारकद्विकसहितां प्रागुक्तां देवगतिप्रायोग्यां त्रिंशतं बध्नतामाहारकसप्तकस्य बन्धावलिकायामनपगतायां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे संक्रामति। अथवा पञ्चनवतिसत्कर्मणामेकेन्द्रियादीनां द्वीन्द्रियादिप्रायोग्यामुद्योतसहितां प्रागुक्तां त्रिंशतं बध्नतां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे संक्रामति। त्रिनवतिसत्कर्मणां चतुरशीतिसत्कर्मणां द्व्यशीतिसत्कर्मणां चैकेन्द्रियादीनां विकलेन्द्रियपञ्चेन्द्रियतिर्यग्गतिप्रायोग्यां प्रागुक्तामुद्योतसहितां त्रिंशतं बध्नतां यथाक्रमं त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च त्रिंशत्पतद्ग्रहे संक्रामति। एकोनत्रिंशत्पतद्ग्रहेऽप्येतान्येव सप्त संक्रमस्थानानि। तत्र त्र्युत्तरशतसत्कर्मणामविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानां देवगतिप्रायोग्यां तीर्थकरनामसहितां देवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरसमचतुरस्रसंस्थानतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकरलक्षणामेकोनत्रिंशतं बध्नतां त्र्युत्तरशतमेकोनत्रिंशत्पतद्ग्रहे संक्रामति। एतेषामेवाविरतादीनां त्रयाणां प्रागुक्तामेकोनत्रिंशतं बध्नतां तीर्थकरनाम्नो बन्धावलिकायामनपगतायां द्व्युत्तरशतं तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति। अथवैकेन्द्रियादीनां द्व्युत्तरशतसत्कर्मणां द्वीन्द्रियादिप्रायोग्यां प्रागुक्तामेव त्रिंशतमुद्योतरहितामेकोनत्रिंशतं बध्नतां द्व्युत्तरशतमेकोनत्रिंशत्पतद्ग्रहे संक्रामति। अविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानां षण्णवतिसत्कर्मणां प्रागुक्ताया देवगतिप्रायोग्यायास्त्रिंशत आहारकद्विकेऽपनीते तीर्थकरनाम्नि च तत्र प्रक्षिप्ते सति या संजातैकोनत्रिंशत् तां बध्नतां षण्णव-

तिस्तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति । अथवा नैरयिकस्य तीर्थकरनामसत्कर्मणो मिथ्यादृष्टेरपर्याप्तावस्थायां वर्तमानस्य मनुजगतिप्रायोग्यां मनुजगतिमनुजानुपूर्वीपञ्चेन्द्रियजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगदुर्भगान्यतरादेयानादेयान्यतरयशःकीर्त्ययशःकीर्त्यन्यतरसंस्थानषट्कान्यतमसंस्थानसंहननषट्कान्यतमसंहननवर्णादिचतुष्कागुरुलघूपघातनिर्माणतैजसकार्मणौदारिकशरीरौदारिकाङ्गोपाङ्गसुस्वरदुःस्वरान्यतरपराघातोच्छ्वासप्रशस्ताप्रशस्तान्यतरविहायोगतिलक्षणामेकोनत्रिंशतं बध्नतः षण्णवतिरेकोनत्रिंशति संक्रामति । अविरतसम्यग्दृष्टीनां देशविरतानां प्रमत्तसंयतानां वा षण्णवतिसत्कर्मणां प्रागुक्तां तीर्थकरनामसहितां देवगतिप्रायोग्यामेकोनत्रिंशतं बध्नतां तीर्थकरनामकर्मणो बन्धावलिकायामनपगतायामेकोनत्रिंशति पञ्चनवतिः संक्रामति । यद्वा पञ्चनवतिसत्कर्मणामेकेन्द्रियादीनां द्वीन्द्रियादिप्रायोग्या प्रागुक्ता या त्रिंशत् तैवोद्योतरहितैकोनत्रिंशत् तां बध्नतां तस्यामेवैकोनत्रिंशति पञ्चनवतिः संक्रामति । त्रिनवतिचतुरशीतिद्व्यशीतयो यथा त्रिंशत्पतद्ग्रहेऽभिहितास्तथैवात्रापि भावनीयाः ॥ २६ ॥

(उ०)–एकत्रिंशत्प्रकृतिसमुदायरूपे पतद्ग्रहे प्रथमसत्ताचतुष्कलक्षणानि चत्वारि संक्रमस्थानानि भवन्ति । तथा चाह—यतेरप्रमत्तस्यापूर्वकरणस्य च देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसदशकतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकराहारकद्विकलक्षणामेकत्रिंशतं बध्नतस्तस्यामेकत्रिंशति–एकत्रिंशत्प्रकृतिसमुदायरूपे पतद्ग्रहे त्र्युत्तरशतं द्व्युत्तरशतं षण्णवतिः पञ्चनवतिरिति चत्वारि संक्रमस्थानानि संक्रामन्ति। तत्र त्र्युत्तरशतं तीर्थकराहारकनाम्नोर्बन्धावलिकायामपगतायामेकत्रिंशत्प्रकृतिपतद्ग्रहे संक्रामति । तीर्थकरनाम्नः पुनर्बन्धावलिकायामनपगतायां द्व्युत्तरशतम् । आहारकसप्तकस्य तु बन्धावलिकायामनपगतायां षण्णवतिः । तीर्थकराहारकसप्तकयोः पुनर्बन्धावलिकायामनपगतायां पञ्चनवतिः । त्रिंश-

त्येकोनत्रिंशति च प्रथमसत्ताचतुष्काध्रुवसंज्ञसत्तात्रिकलक्षणानि सप्त संक्रमस्थानानि संक्रामन्ति । तथा चाह–'एगंत' इत्यादि । एकान्तेन श्रेणियोग्यानि यानि संक्रमस्थानान्येकोत्तरशतचतुर्नवत्येकोननवत्यष्टाशीत्येकाशीतिरूपाणि–एतानि हि श्रेणावेव वर्तमानेन यशःकीर्तावेकस्यामेव वध्यमानायां संक्रम्यमाणानि प्राप्यन्ते, नान्यत्र, ततस्तानि वर्जयित्वा शेषाणि त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि सप्त संक्रमस्थानानि त्रिंशदेकोनत्रिंशत्पतद्ग्रहयोः प्राप्यन्ते । तत्र त्र्युत्तरशतसत्कर्मणो देवस्य सम्यग्दृष्टेस्तैजसकार्मणवर्णादिचतुष्कागुरुलघुनिर्माणोपघातपञ्चेन्द्रिजात्यौदारिकशरीरौदारिकाङ्गोपाङ्गाद्यसंस्थानसंहननमनुजगतिमनुजानुपूर्वीत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासप्रशस्तविहायोगतितीर्थकरलक्षणां मनुजगतिप्रायोग्यां तीर्थकरनामसहितां त्रिंशतं बध्नतस्त्र्युत्तरशतं तस्मिन् त्रिंशत्पतद्ग्रहे संक्रामति । द्व्युत्तरशतसत्कर्मणोऽप्रमत्तसंयतस्यापूर्वकरणस्य वा देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसदशकतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणाहारकद्विकलक्षणां देवगतिप्रायोग्यां त्रिंशतं बध्नतो द्व्युत्तरशतं तस्मिन् त्रिंशत्पतद्ग्रहे संक्रामति । अथवा द्व्युत्तरशतसत्कर्मणामेकेन्द्रियादीनामुद्योतसहितां द्वीन्द्रियादिप्रायोग्यां तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कतिर्यग्गतितिर्यगानुपूर्वीद्वीन्द्रियाद्यन्यतमजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगदुःस्वरानादेययशःकीर्त्ययशःकीर्त्यन्यतरौदारिकशरीरौदारिकाङ्गोपाङ्गान्यतमसंस्थानान्यतमसंहननाप्रशस्तविहायोगतिपराघातोद्योतोच्छ्वासलक्षणा त्रिंशतं बध्नतां द्व्युत्तरशतं तस्मिंस्त्रिंशत्पतद्ग्रहे संक्रामति। पण्णवतिसत्कर्मणां देवनारकाणां मनुजगतिप्रायोग्यां तीर्थकरनामसहितां प्रागुक्तां त्रिंशतं बध्नतां त्रिंशत्पतद्ग्रहे पण्णवतिः संक्रामति । द्व्युत्तरशतसत्कर्मणामप्रमत्तापूर्वकरणसंयतानामाहारकद्विकसहितां

प्रागुक्तां देवगतिप्रायोग्यां त्रिंशतं बध्नतामाहारकसप्तकस्य बन्धावलिकायामनपगतायां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे संक्रामति। अथवा पञ्चनवतिसत्कर्मणामेकेन्द्रियादीनां द्वीन्द्रियादिप्रायोग्यां प्रागुक्तामुद्योतसहितां त्रिंशतं बध्नतां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे संक्रामति। त्रिनवतिसत्कर्मणां चतुरशीतिसत्कर्मणां द्व्यशीतिसत्कर्मणां चैकेन्द्रियादीनां विकलेन्द्रियपञ्चेन्द्रियतिर्यग्गतिप्रायोग्यां प्रागुक्तामुद्योतसहितां त्रिंशतं बध्नतां यथाक्रमं त्रिनवतिश्चतुरशीतिद्व्यशीतिश्च त्रिंशत्पतद्ग्रहे संक्रामति। एकोनत्रिंशत्पतद्ग्रहेऽप्येतान्येव सप्त संक्रमस्थानानि भवन्ति। तत्र त्र्युत्तरशतसत्कर्मणामविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानां देवगतिप्रायोग्यां तीर्थकरनामसहितां देवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियद्विकपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरसमचतुरस्रसंस्थानतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकरलक्षणामेकोनत्रिंशतं बध्नतां त्र्युत्तरशतमेकोनत्रिंशत्पतद्ग्रहे संक्रामति। एतेषामेवाविरतादीनां त्रयाणां प्रागुक्तामेकोनत्रिंशतं बध्नतां तीर्थकरनाम्नो बन्धावलिकायामनपगतायां द्व्युत्तरशतं तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति। एकेन्द्रियादीनां वा द्व्युत्तरशतसत्कर्मणां द्वीन्द्रियादिप्रायोग्यां प्रागुक्तां त्रिंशतमुद्योतरहितां बध्नतामेकोनत्रिंशत्पतद्ग्रहे द्व्युत्तरशतं संक्रामति। अविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानां पण्णवतिसत्कर्मणां प्रागुक्ताया देवगतिप्रायोग्यायास्त्रिंशत आहारकद्विकापनयनेन जिननाम्नश्च तत्र प्रक्षेपेण निष्पन्नामेकोनत्रिंशतं बध्नतां पण्णवतिस्तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति। अथवा नैरयिकस्य तीर्थकरनामसत्कर्मणो मिथ्यादृष्टेरपर्याप्तावस्थायां वर्तमानस्य मनुजगतिमनुजानुपूर्वीपञ्चेन्द्रियजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगदुर्भगान्यतरादेयानादेयान्यतरयशःकीर्त्ययशःकीर्त्यन्यतरषट्कान्यतमसंस्थानषट्कान्यतमसंहननवर्णादिचतुष्कागुरुलघूपघाततैजसकार्मणनिर्माणौदारिकशरीरौदारिकाङ्गोपाङ्गसुस्वरदुःस्वरान्यतरपराघातोच्छ्वासान्यतरविहायोग-

नित्यक्षणामेकोनत्रिंशतं बध्नतः पण्णवतिरेकोनत्रिंशति संक्रामति । अविरतसम्यग्दृष्टीनां देशविरतानां प्रमत्तसंयतानां वा पण्णवतिसत्कर्मणां प्रागुक्तां तीर्थकरनामसहितां देवगतिप्रायोग्यामेकोनत्रिंशतं बध्नतां तीर्थकरनामकर्मणो बन्धावलिकायामनपगतायामेकोनत्रिंशति पञ्चनवतिः संक्रामति । पञ्चनवतिसत्कर्मणामेकेन्द्रियादीनां वा द्वीन्द्रियादिप्रायोग्यां प्रागुक्तां त्रिंशतमुद्योतहीनां कृत्वैकोनत्रिंशतं बध्नतां तस्यामेवैकोनत्रिंशति पञ्चनवतिः संक्रामति । त्रिनवतिचतुरशीतिद्व्यशीतयस्तु त्रिंशत्पतद्ग्रहे यथोक्तास्तथैवात्रापि भावनीयाः॥२६॥

इदाणीं अट्ठावीसपडिग्गहस्स पंच संकमट्ठाणाणि—

अट्ठावीसाए वि ते वासीईतिसयवज्जिया पंच । ते च्चिय वासीइजुया सेसेसुं छन्नउइ य वज्जा ॥२७॥

पगइसंकमो समत्तो ॥

(चू०)—'अट्ठावीसाए वि ते वासीतीतिसयवज्जिया पंच' त्ति । बिउत्तरसतं, छण्णउती, पंचाणउती, तेणउती, चउरासीति चेति । तत्थ मिच्छद्दिट्ठिस्स णिरयगतिपातोग्गं वा देवगतिपातोग्गं वा अट्ठावीसं बन्धमाणस्स, सम्मद्दिट्ठिस्स देवगतिपातोग्गं अट्ठावीसं बन्धमाणस्स बिउत्तरसतसंतकंमिताणं बिउत्तरसयं अट्ठावीसपडिग्गहे संकमति । मणुयस्स तित्थकरसंतकंमियस्स णिरताभिमुहस्स पुव्वाउयबद्धस्स मिच्छत्तं पडिवन्नस्स निरयपाउग्गं अट्ठावीसं बंधमाणस्स छन्नउईसंतकम्मंसियस्स अट्ठावीसाए छन्नउई संकमइ । पंचाणउईए जहा बिउत्तरसत्तस्स अट्ठावीसाते संकमो तहा कायव्वो । तेणउतीए मिच्छद्दिट्ठिस्स देवगतिपातोग्गं अट्ठावीसं बंधमाणस्स तेणउती-

संतकम्मियाणं(यस्स) तस्स वेउव्वीतसत्तगदेवगतिदेवाणुपुव्वीणं बन्धावलिताए परतो वट्टमाणस्स तेणउती अट्ठावीसाए संकमति। अहवा पंचाणउतीसंतकंमितस्स देवगतिपातोग्गं अट्ठावीसं बंधमाणस्स देवगतिदेवाणुपुव्वीणं अंतो बन्धावलिताए वट्टमाणस्स तेणउती अट्ठावीसाए संकमति। अहवा तेणउतीसंतकंमियस्स मिच्छदिट्ठिस्स अट्ठावीसं बन्धमाणस्स णिरयगतिपातोग्गं णिरयदुगवेउव्वियसत्तगाणं बन्धावलिताए परतो वट्टमाणस्स तीणउती अट्ठावीसाए संकमइ। अहवा पंचाणुतीसंतकंमियस्स मिच्छदिट्ठिस्स णिरयगतिपातोग्गं अट्ठावीसं बन्धमाणस्स णिरयगतिदुगस्स अंतो बन्धावलिताए वट्टमाणस्स तिणउती अट्ठावीसाए संकमति। इदाणिं चउरासीतितेणउतिसंतकंमियस्स मिच्छदिट्ठिस्स देवगतिपातोग्गं अट्ठावीसं बन्धमाणस्स देवदुगवेउव्वियसत्तगाणं बन्धावलियाए अंतो वट्टमाणाणं चउरासीति अट्ठावीसाए संकमति। अहवा तेणउतीसंतकम्मियस्स मिच्छदिट्ठिस्स णिरयगतिपातोग्गं अट्ठावीसं बंधमाणस्स णिरयदुगवेउव्वियसत्तगाणं बन्धावलियाए परतो वट्टमाणाणं चउरासीती अट्ठावीसाए संकमति। इदाणिं छव्विसापडिग्गहे पंच ट्ठाणाणि संकमति—'ते च्चिय बासीतीजुत्ता सेसेसु छण्णउइ य वज्ज' त्ति। तं जहा—बिउत्तरसतं, पंचाणउती, तिणउति, चउरासीति, बासीती। तत्थ एगिंदियादीणं णेरइतवज्जाणं बिउत्तरसतपंचाणउतीसंतकंमियाणं आतावुज्जोयएक्कतरसहितं एगिंदियपातोग्गं छव्वीसं बंधमाणाणं विउत्तरसतपंचाणउतीतो छव्वीसपडिग्गहे संकमंति। एतेसिं चेव एगिंदियादीणं देववज्जाणं तं चेव छव्वीसं बंधमाणाणं तेणउतीचउरासीसंतकंमिताणं तेण-

उतीयउरासीतो तंमि चेव छव्वीसपडिग्गहे संकमंति। तेसिं चेव एगिंदियातीणं देवणारगमणुयवज्जाणं तं चेव छव्वीसं बन्धमाणाणं बासीतीसंतकम्मियाणं बासीती तंमि चेव छव्वीसपडिग्गहे संकमति। इदाणीं पणवीसपडिग्गहे ते चेव पंचट्ठाणा संकमंति। एते पंचट्ठाणा जहा छव्वीसापडिग्गहे भणिता तहा एगिंदियपज्जत्तपातोग्गं पणुवीसं बन्धमाणाणं भणियव्वा। अहवा विगलिंदियपंचिन्दियमणुयअपज्जत्तगपातोग्गं पणवीसं बन्धमाणाणं एगिंदियातीणं देवणेरइयवज्जाणं बिउत्तरसतादिसंतकंमियाणं बिउत्तरसतादि पंच पणवीसापडिग्गहे संकमंति। इयाणिं तेवीसापडिग्गहे एते चेव पंचट्ठाणा संकमंति। जहा पणवीसपडिग्गहे बेतिंदियातिअपज्जत्तगपातोग्गं पणवीसं बन्धमाणाणं एगिंदितादीणं संकमविही भणिया तहा एगिंदियातीणं एगिंदियअपज्जत्तगपातोग्गं तेवीसं बन्धमाणाणं तत चेव बिउत्तरसतादि पंचट्ठाणा तेवीसापडिग्गहे संकमंति ॥ २७ ॥

पगति संकमो समत्तो।

(मलय०)—'अट्ठावीसाए' त्ति–अष्टाविंशतावपि तान्येव पूर्वोक्तानि द्व्यशीतित्र्युत्तरशतवर्जितानि शेषाणि द्व्युत्तरशतपण्णवतिपञ्चनवतिन्निनवतिचतुरशीतिरूपाणि पञ्च संक्रमस्थानानि संक्रामन्ति। तत्र मिथ्यादृष्टेर्नरकगतिप्रायोग्यां नरकगतिनरकानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गहुंडसंस्थानपराघातोच्छ्वासाप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतर(प्रत्येकास्थिराशुभ)दुर्भगदुःस्वरानादेयायशःकीर्तिवर्णादिचतुष्कागुरुलघूपघाततैजसकार्मणनिर्माणलक्षणाम्, तथा मिथ्यादृष्टेः सम्यग्दृष्टेर्वा देवगतिप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणदेवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गसमचतुरस्रसंस्थान-

पराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरलक्षणामष्टाविंशतिं बध्नतो द्व्युत्तरशतसत्कर्मणो द्व्युत्तरशतमष्टाविंशतिपतद्ग्रहे संक्रामति। तथा मनुष्यस्य तीर्थकरनामसत्कर्मणः पूर्वमेव नरके बद्धायुष्कस्य सतो नरकाभिमुखस्य सतो मिथ्यात्वं प्रपन्नस्य नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतः पण्णवतिसत्कर्मणोऽष्टाविंशतिपतद्ग्रहे पण्णवतिः संक्रामति। यथा द्व्युत्तरशतस्य भावना कृता तथा पञ्चनवतेरपि भावना कार्या। केवलं द्व्युत्तरशतस्थाने पञ्चनवतिरित्युच्चारणीयम्। तथा मिथ्यादृष्टेस्त्रिनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो वैक्रियसप्तकदेवगतिदेवानुपूर्वीणां बन्धावलिकायाः परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। अथवा पञ्चनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिंबध्नतो वैक्रियसप्तकदेवगतिदेवानुपूर्वीणां बन्धावलिकायाः परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। अथवा पञ्चनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्तामेवाष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्वीवैक्रियसप्तकानां बन्धावलिकायाः परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। अथवा पञ्चनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। तथा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्देवगतिप्रायोग्यामष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्वीवैक्रियसप्तकानां बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति। अथवा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्वीवैक्रियसप्तकानां बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति। षड्विंशत्यादिपतद्ग्रहेषु संक्रमस्थानान्याह—

'ति चि र' इत्यादि। शेषेषु षड्विंशतिपञ्चविंशतित्रयोविंशतिलक्षणेषु पतद्ग्रहेषु तान्येव पूर्वोक्तानि द्व्युत्तरशतादीनि पण्णवतिरहितानि द्व्यशीतियुतानि पञ्च संक्रमस्थानानि संक्रामन्ति। तद्यथा—द्व्युत्तरशतं पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च। तत्रैकेन्द्रियादीनां नैरयिकवर्जितानां द्व्युत्तरशतसत्कर्मणां पञ्चनवतिसत्कर्मणां च तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कैकेन्द्रियजातिहुण्डकसंस्थानौदारिकशरीरतिर्यग्गतितिर्यगानुपूर्वीस्थावरबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगानादेयायशःकीर्तियशःकीर्त्यन्यतरपराघातोच्छ्वासातपोद्योतान्यतररूपामेकेन्द्रियप्रायोग्यां षड्विंशतिं बध्नतां द्व्युत्तरशतं पञ्चनवतिश्च तस्यामेव षड्विंशतौ संक्रामति। तथा तेषामेवैकेन्द्रियादीनां देव(नारक)वर्जानां त्रिनवतिसत्कर्मणां [देवनारकवर्जानां] चतुरशीतिसत्कर्मणां च तामेव पूर्वोक्तां षड्विंशतिं बध्नतां त्रिनवतिश्चतुरशीतिश्च तस्यामेव षड्विंशतौ संक्रामति। तथा तेषामेवैकेन्द्रियादीनां देवनारकमनुष्यवर्जानां द्व्यशीतिसत्कर्मणां तामेव पूर्वोक्तां षड्विंशतिं बध्नतां द्व्यशीतिस्तस्यामेव षड्विंशतौ संक्रामति। तथा पञ्चविंशतिपतद्ग्रहे तान्येव पञ्च संक्रमस्थानानि चिन्त्यन्ते—तत्रैकेन्द्रियपर्याप्तप्रायोग्यां पूर्वोक्तामेव षड्विंशतिमातपेनोद्योतेन वा रहितां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुरिन्द्रियादीनां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासंख्यं तस्यामेव पञ्चविंशतौ द्व्युत्तरशतं पञ्चनवतिः त्रिनवतिः चतुरशीतिः द्व्यशीतिश्च संक्रामति। अथवाऽपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणद्वीन्द्रियाद्यन्यतमजातिहुण्डसंस्थानसेवार्तसंहननौदारिकशरीरौदारिकाङ्गोपाङ्गतिर्यग्गतितिर्यगानुपूर्वीत्रसबादरापर्याप्तप्रत्येकास्थिराशुभदुर्भगानादेयायशःकीर्तिलक्षणां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुःपञ्चेन्द्रियतिरश्चां द्व्युत्तरशतादिसत्कर्मणां पञ्चविंशतौ द्व्युत्तरशतादीनि पञ्च (मनुजानां च द्व्यशीतिवर्जानि चत्वारि) संक्रमस्थानानि संक्रामन्ति। तथाऽपर्याप्तकैकेन्द्रियप्रायोग्यां वर्णादिचतुष्कागुरुलघूपघातनिर्माण-

तैजसकार्मणहुण्डसंस्थानौदारिकशरीरैकेन्द्रियजातितिर्यग्गतितिर्यगानुपूर्वीबादरसूक्ष्मान्यतरस्थावरापर्याप्तप्रत्येकसाधारणान्यतरास्थिराशुभदुर्भगानादेयायशःकीर्तिलक्षणां त्रयोविंशतिं बध्नतामेकद्वित्रिचतुःपञ्चेन्द्रियतिरश्चां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासंख्यं द्व्युत्तरशतादीनि पञ्च (मनुजानां च द्व्यशीतिवर्जानि चत्वारि) संक्रमस्थानानि संक्रामन्ति ॥२७॥

(उ०)—आद्यवर्जितं प्रथमं सत्तास्थानचतुष्कमाद्ये द्वे अध्रुवसंज्ञे चेत्येवं पञ्च संक्रमस्थानान्यष्टाविंशतिपतद्ग्रहे संक्रामन्ति। तथा चाह—अष्टाविंशतावपि तान्येव प्रागुक्तानि द्व्यशीतित्र्युत्तरशतवर्जितानि द्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि पञ्च संक्रमस्थानानि संक्रामन्ति। तत्र मिथ्यादृष्टेर्नरकगतिप्रायोग्यां नरकगतिनरकानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गहुण्डसंस्थानपराघातोच्छ्वासाप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतर(प्रत्येकास्थिराशुभ)दुर्भगदुःस्वरानादेयायशःकीर्तिवर्णादिचतुष्कागुरुलघूपघाततैजसकार्मणनिर्माणलक्षणां, मिथ्यादृष्टेः सम्यग्दृष्टेर्वा देवगतिप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणदेवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरलक्षणामष्टाविंशतिं बध्नतो द्व्युत्तरशतसत्कर्मणो द्व्युत्तरशतमष्टाविंशतिपतद्ग्रहे संक्रामति। तथा मनुष्यस्य तीर्थकरनामसत्कर्मणः पूर्वमेव नरके बद्धायुष्कस्य नरकगमनाभिमुखस्य सतो मिथ्यात्वं प्रपन्नस्य नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतः षण्णवतिसत्कर्मणोऽष्टाविंशतिपतद्ग्रहे षण्णवतिः संक्रामति। पञ्चनवतिभावना द्व्युत्तरशतस्येव कार्या, नवरं द्व्युत्तरशतस्थाने पञ्चनवतिरित्युच्चारणीयम्। तथा मिथ्यादृष्टेस्त्रिनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो वैक्रियसप्तकदेवगतिदेवानुपूर्वीणां बन्धावलिकायाः परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति।

अथवा पञ्चनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति । यद्वा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्वीवैक्रियसप्तकानां बन्धावलिकायाः परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति । अथवा पञ्चनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति । तथा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्देवगतिप्रायोग्यामष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्वीवैक्रियसप्तकानां बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति । अथवा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्वीवैक्रियसप्तकानां बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति । तीर्थकरनामोपलक्षितसत्तास्थानरहितप्रथमचतुष्काध्रुवसत्तात्रिकलक्षणानि पञ्च संक्रमस्थानानि षड्विंशत्यादिपतद्ग्रहेषु भवन्ति । तथा चाह—'ते च्चिय' इत्यादि । शेषेषु षड्विंशतिपञ्चविंशतित्रयोविंशतिलक्षणेषु पतद्ग्रहेषु तान्येव पूर्वोक्तानि त्र्युत्तरशतादीनि पण्णवतिरहितानि द्व्यशीतियुतानि पञ्च संक्रमस्थानानि संक्रामन्ति । तथाहि—त्र्युत्तरशतं पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च । इत्थं ह्यध्रुवसत्तात्रिकं पूर्यते प्रथमचतुष्काच्च त्र्युत्तरशतपण्णवतिलक्षणस्थानद्वयं जिननामोपलक्षितमपगच्छतीति यथोक्तानि पञ्च भवन्ति। तत्रैकेन्द्रियादीनां नैरयिकवर्जितानां त्र्युत्तरशतसत्कर्मणा पञ्चनवतिसत्कर्मणां च तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कैकेन्द्रियजातिहुंडसंस्थानौदारिकशरीरतिर्यग्गतितिर्यगानुपूर्वीस्थावरबादरपर्याप्तप्रत्येकास्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगानादेयायशःकीर्तियशःकीर्त्यन्यतरपराघातोच्छ्वासातपोद्योतान्यतररूपामेकेन्द्रियप्रायोग्यां षड्विंशतिं बध्नतां त्र्युत्तरशतं पञ्चनवतिश्च तस्यामेव षड्विंशतौ संक्रामति । तथा तेषामेवैकेन्द्रियादीनां

नारकवर्जानां त्रिनवतिसत्कर्मणां देवनारकवर्जानां चतुरशीतिसत्कर्मणां च तामेव पूर्वोक्तां षड्विंशतिं बध्नतां त्रिनवतिश्चतुरशीतिश्च तस्यामेव षड्विंशतौ संक्रामति। तथा तेषामेवैकेन्द्रियादीनां देवनारकमनुष्यवर्जानां द्व्यशीतिसत्कर्मणां तामेव पूर्वोक्तां षड्विंशतिं बध्नतां द्व्यशीतिस्तस्यामेव षड्विंशतौ संक्रामति। अथ पञ्चविंशतिपतद्ग्रहे तान्येव पञ्च संक्रमस्थानानि चिन्त्यन्ते—तत्रैकेन्द्रियपर्याप्तप्रायोग्यां पूर्वोक्तामेव षड्विंशतिमातपेनोद्योतेन वा रहितां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुरिन्द्रियादीनां त्र्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासङ्ख्यं तस्यामेव पञ्चविंशतौ त्र्युत्तरशतं पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च संक्रामति। अथवाऽपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणद्वीन्द्रियाद्यन्यतमजातिहुंडसंस्थानसेवार्तसंहननौदारिकशरीरौदारिकाङ्गोपाङ्गतिर्यग्गतितिर्यगानुपूर्वीत्रसबादरापर्याप्तप्रत्येकास्थिराशुभदुर्भगानादेयायशःकीर्तिलक्षणां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुःपञ्चेन्द्रियतिरश्चां त्र्युत्तरशतादिसत्कर्मणां पञ्चविंशतौ त्र्युत्तरशतादीनि पञ्च (मनुजानां च द्व्यशीतिवर्जानि चत्वारि) संक्रमस्थानानि संक्रामन्ति। तथाऽपर्याप्तैकेन्द्रियप्रायोग्यां वर्णादिचतुष्कागुरुलघूपघातनिर्माणतैजसकार्मणौदारिकशरीरहुंडसंस्थानैकेन्द्रियजातितिर्यग्गतितिर्यगानुपूर्वीबादरसूक्ष्मान्यतरस्थावरापर्याप्तप्रत्येकसाधारणान्यतरास्थिराशुभदुर्भगानादेयायशःकीर्तिलक्षणां त्रयोविंशतिं बध्नतामेकद्वित्रिचतुःपञ्चेन्द्रियतिरश्चां त्र्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासङ्ख्यं त्र्युत्तरशतादीनि पञ्च (मनुजानां च द्व्यशीतिवर्जानि चत्वारि) संक्रमस्थानानि संक्रामन्ति। अत्र कश्चिदाशङ्कते—ननु संक्रम्यमाणप्रकृतेर्दलिकं परमाण्वात्मकं यत्पतद्ग्रहप्रकृतिरूपतया परिणम्यते, नायं प्रकृतिसंक्रमः, किंतु प्रदेशसंक्रम एव। अथ प्रकृतिः स्वभावस्तत्संक्रमः प्रकृतिसंक्रम इत्युच्यते, तदयुक्तं, स्वभावस्यान्यत्र संक्रमयितुमशक्यत्वात्। तत इत्थं विचार्यमाणः प्रकृतिसंक्रमो नोपपद्यते इति तत्प्रतिपादनं सकलमप्यभित्तिचित्रारोपणप्रायम्। एवं स्थित्यनुभागसंक्रमावपि नोपपद्येते। स्थितिर्नाम नियतकालविशिष्टमवस्थानम्, न च कालो-

अन्यत्र संक्रमयितुं शक्यते, अमूर्त्तत्वात्। अनुभागोऽपि रस उच्यते, स च परमाणूनां गुणः, गुणश्च गुणिनमन्तरेणान्यत्र नेतुमशक्यः, गुणिनां च परमाणूनां संक्रमे प्रदेशसंक्रम एव प्रसज्यत इति न कश्चिदन्यः संक्रमो युक्त इति। अत्रोच्यते—न हि वयं विवक्षितपरमाणुभ्यः समाकृष्य परमाण्वन्तरेषु प्रक्षिप्यन्ते इत्येवं प्रकृतिसंक्रमादीनाचक्ष्महे, येन पूर्वोक्तदोषावकाशः स्यात्, किं तु स्वभावादित्रयाधारभूतपरमाणुरूपप्रदेशेषु परप्रकृतिषु संक्रम्यमाणेषु संक्रम्य च परप्रकृतिरूपतामापाद्यमानेषु पतद्ग्रहप्रकृतिरूपतापादनं प्रकृतिसंक्रमः, पतद्ग्रहप्रकृतिरूपतयैव नियतकालविशिष्टस्यावस्थानस्यापादनं स्थितिसंक्रमः, पतद्ग्रहप्रकृत्यनुयायिरसापादनं त्वनुभागसंक्रमः, परमाणूनां च प्रक्षेपणं प्रदेशसंक्रम इत्येवं स्वपरिणामविशेषरूपा एव प्रकृतिसंक्रमादय इष्यन्त इत्यदोष इति। अत एवैते परस्पराविनाभाविनः। तदुक्तं पञ्चसंग्रहमूलटीकायां—'अमी प्रकृतिस्थित्यनुभागप्रदेशेषु संक्रमा बन्धा उदया वा समकालं प्रवर्त्तन्ते' इति। केवलं युगपदभिधातुं न शक्यन्ते, वाचः क्रमवर्त्तित्वात्। ततो यो यदा संक्रमे वक्तुमिष्यते स तदानीं बुद्ध्या पृथक्कृत्वा सप्रपञ्चमुच्यत इति सर्वमुपपन्नम्। ननु दलिकरसानां धर्मिद्वारा पृथिवीजलयोरिव मूर्त्तत्वादन्यभावसंक्रमणमस्तु, कालश्चामूर्त्त इति तस्यान्यभावसंक्रमणमयुक्तम्, मैवम्, न खलु कालस्य संक्रमणमस्माभिरिष्यते, किं तु स्थितेः, स्थितिश्चाप्रच्युतिलक्षणमवस्थानम्, तच्च पूर्वमन्यप्रकृतिरूपतयाऽऽसीत्, सम्प्रति त्वन्यप्रकृतिरूपतया यदवस्थानापादनं स स्थितिसंक्रमः। न चायमनुपपन्नः, प्रत्यक्षसिद्धत्वात्। तथाहि—तृणादिपरमाणवः पूर्वं तृणादिरूपत्वेन स्थिताः, ततो लवणाकरेषु निपतिताः कालक्रमेण लवणरूपतयाऽवतिष्ठन्त इति। अस्तु वा स्थितिकालस्यैव संक्रमणम्, तदपि ऋतुसंक्रमणवददुष्टमेव। यथा हि वृक्षादिषु स्वभावतः क्रमेण, देवतादिप्रयोगतो युगपदपि वा सर्वेऽपि ऋतवः संक्रामन्ति, तत्तत्कार्यपुष्पफलादिदर्शनात्, तथेहापि जीवप्रयोगतः कर्मपरमाणुषु सातादिरूपताहेतु कालमुपमृद्यासातादिरूपताहेतुकालसंक्रमान्न विरुध्यत इत्यदोष इति कृतं प्रसङ्गेन ॥२७॥

## नाम्नः संक्रमस्थानानां प्रतिग्रहस्थानानां च साद्यादिभङ्गकयन्त्रं नाम्नः संक्रमस्थानानि च।

| स्थानसंक्रमः | सादिः | अध्रुव | स्थानप्रतिग्रहः | सादिः | अध्रुवः |
|---|---|---|---|---|---|
| १०३ | कादाचित्कत्वात् | कादाचित्कत्वात् | ३१ | ,, | ,, |
| १०२, १०१, ९६ | ,, | ,, | ३०, २९ | ,, | ,, |
| ९५, ९४, ९३, ८९ | ,, | ,, | २८, २६ | ,, | ,, |
| ८८, ८४, ८२, ८१ | ,, | ,, | २५, २३, १ | ,, | ,, |

| | |
|---|---|
| १०३ | सर्वप्रकृतिसमुदायः |
| १०२ | जिनवर्जं यशःकीर्तिवर्जं वा |
| १०१ | जिनयशःकीर्तिवर्जं |
| ९६ | आहारकसप्तकवर्जं |
| ९५ | आहारकसप्तकयशःकीर्तिवर्जम् |
| ९४ | आहारकसप्तकयशःकीर्तिजिनवर्जम् |
| ९३ | आहारकसप्तकजिनदेवद्विकवर्जम् |
| ८९ | त्रयोदशसु क्षीणासु नवतिसत्ताकस्य यशःकीर्तिवर्जम् |

| | |
|---|---|
| ८८ | त्रयोदशसु क्षीणास्वेकोननवतिसत्ताकस्य यशः-कीर्तिवर्जम् |
| ८४ | आहारवैक्रियसप्तकजिनदेवद्विकनरकद्विकवर्जितम् |
| ८२ | त्रयोदशसु क्षीणासु त्र्यशीतिसत्ताकस्य यशः-कीर्तिवर्जम् |
| ८१ | त्रयोदशसु क्षीणासु द्व्यशीतिसत्ताकस्य यशः-कीर्तिवर्जम् |

## नामकर्मणः प्रतिग्रहस्थानेषु संक्रमस्थानानि ।

| प्रतिग्रह-स्थानानि | बध्यमानप्रतिग्रहप्रकृत्यभिधानानि | संक्रमस्थानानि | स्वामिनः | | | |
|---|---|---|---|---|---|---|
| | | | सर्वे तिर्यञ्चः | मनुजाः | देवाः | नारकाः |
| २३ | अपर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | ,, | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २५ | पर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | म० | दे० | ० |
| ,, | ,, | ९५ | ,, | ,, | ,, | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| २५ | अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रिय-मनुजप्रायोग्यासु | १०२ | ,, | म० | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २६ | पर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | म० | दे० | ० |
| ,, | ,, | ९५ | ,, | ,, | ,, | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २८ | देवप्रायोग्यासु | १०२ | पर्याप्तपञ्चे-न्द्रियतिर्यञ्चः | म० | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| २८ | नरकप्रायोग्यासु | १०२ | ,, | ,, | ० | ० |
| ,, | ,, | ९६ | ० | ,, | ० | ० |
| ,, | ,, | ९५ | प० प० ति० | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| २९. | पर्याप्तविकलेन्द्रियप्रायोग्यासु | १०२ | सर्वे तिर्यञ्चः | ,, | ० | ० |
| ,, | ,, | ९५ | ,, | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २९. | पर्याप्तपञ्चेन्द्रियतिर्यक्प्रायोग्यासु | १०२ | ,, | म० | देवाः | नारकाः |

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ९५ | ,, | ,, | ,, | ,, |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २९ | पर्याप्तमनुजप्रायोग्यासु | १०२ | ,, | ,, | दे० | ना० |
| ,, | ,, | ९६ | ० | ० | ० | ,, |
| ,, | ,, | ९५ | ति० | म० | दे० | ,, |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| २९ | देवप्रायोग्यासु | १०३ | ० | म० | ० | ० |
| ,, | ,, | १०२ | ० | ,, | ० | ० |
| ,, | ,, | ९६ | ० | ,, | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| ” | ” | ९५ | ० | ” | ० | ० |
| ३० | पर्याप्तविकलेन्द्रियप्रायोग्यासु | १०२ | सर्वे तिर्यञ्चः | ” | ० | ० |
| ” | ” | ९५ | ” | ” | ० | ० |
| ” | ” | ९३ | ” | ” | ० | ० |
| ” | ” | ८४ | ” | ” | ० | ० |
| ” | ” | ८२ | ” | ० | ० | ० |
| ३० | प० पञ्चेन्द्रियतिर्यक्प्रायो० | १०२ | ” | म० | दे० | ना० |
| ” | ” | ९५ | ” | ” | ” | ” |
| ” | ” | ९३ | ” | ” | ० | ० |
| ” | ” | ८४ | ” | ” | ० | ० |
| ” | ” | ८२ | ” | ० | ० | ० |
| ३० | प० मनुजप्रायोग्यासु | १०३ | ० | ० | दे० | ० |
| ” | ” | ९६ | ० | ० | ” | ना० |

| | | | | | | |
|---|---|---|---|---|---|---|
| ३० | देवप्रायोग्यासु | १०२ | ० | म० | ० | ० |
| ,, | ,, | ९५ | ० | ,, | ० | ० |
| ३१ | देवप्रायोग्यासु | १०३ | ० | ,, | ० | ० |
| ,, | , | १०२ | ० | ,, | ० | ० |
| ,, | ,, | ९६ | ० | ,, | ० | ० |
| ,, | ,, | ९५ | ० | ,, | ० | ० |
| १ | यशःकीर्त्याम् | १०२ | ० | ,, उ. श्रे. | ० | ० |
| ,, | ,, | १०१ | ० | ,, | ० | ० |
| ,, | ,, | ९५ | ० | ,, | ० | ० |
| ,, | ,, | ९४ | ० | ,, | ० | ० |
| ,, | ,, | ८९ | ० | ,, क्ष. श्रे. | ० | ० |
| ,, | ,, | ८८ | ० | ,, | ० | ० |
| ,, | ,, | ८२ | ० | ,, | ० | ० |
| ,, | ,, | ८१ | ० | ,, | ० | ० |

भणितो पगतिसंकमो, इदाणिं ठितीसंकमो भण्णइ। तत्थ इमे अत्थाहिगारा—तं जहा—भेदो, विसेसलक्खणं, उक्कस्सट्ठितीसंकमपमाणं, जहण्णट्ठितीसंकमपमाणं, सातिअणादिपरूवणा, सामित्तमिति। तत्थ भेदविसेस-णिरूवणत्थं इमा गाहा भण्णइ—

ठिइसंकमो त्ति वुच्चइ मूलुत्तरपगइतो उ जा हि ठिई। उव्वट्टिया व ओवट्टिया व पगइं णिया वऽण्णं ॥२८॥

(चू०)—तत्र 'मूलुत्तरपगतितो' त्ति भेदो। सो ठिइसंकमो दुविहो—मूलपगतिट्ठितिसंकमो, उत्तरपगतिट्ठिती-संकमो य। मूलपगतिट्ठितिसंकमो अट्ठविहो—णाणावरणादी जाव अन्तराई य मूलपगतिट्ठितिसंकमो। उत्तर-पगतिट्ठितिसंकमो अट्ठावण्णसतविहो—आभिणीबोहियणाणावरणादि जाव वीरियंतराय उत्तरपगतिट्ठितिसं-कमो। एस भेदो गतो। तस्स मूलुत्तरपगतिट्ठितिसंकमस्स पुव्वुत्तसामण्णलक्खणे सति विसेसलक्खणं ठिते णियमिज्जइ—'जा हि ठिई उव्वट्टिता व ओवट्टिता व पगतिं णिया वऽण्णं' ति। 'जा हि ठिति' त्ति—जा ट्ठिति उव्व-ट्टणओवट्टणअण्णपगतिसंकमणपाओग्गा सा उवट्टिता ठिति ठितिसंकमो वुच्चति, ओवट्टिता वि ठितिसंकमो वुच्चइ, अण्णपगतिं संकमिया वि ठितिसंकमो वुचति। उव्वट्टणओवट्टणालक्खणं सट्ठाणे भणिहिति। 'अण्ण-पगतिं णिया व' त्ति—अण्णपगतिभावेणं परिणामिता इत्यर्थः। पगतिपरिणामिताए तग्गता ट्ठिती तस्संबन्धातो सा वि परिणामियत्ति वुच्चइ। तत्थ उव्वट्टणाओवट्टणा मूलपगतिट्ठितिसंकमे संभवन्ति अण्णपगतिट्ठिति-संकमणं ण संभवति। कम्हा? भण्णति—'मूलपगतीणं ण परप्परंमि संकमणं' ति पडिसेहा। अतो उत्तरपगति

ट्ठितिसंकमंमि उव्वट्टणादि तिण्णि वि संभवंति। गतं विसेसलक्खणं ॥ २८ ॥

(मलय०)–तदेवमुक्तः प्रकृतिसंक्रमः। सम्प्रति स्थितिसंक्रमाभिधानावसरः। तत्र चैतेऽर्थाधिकाराः। तद्यथा–भेदो विशेषलक्षणं उत्कृष्टस्थितिसंक्रमणप्रमाणं जघन्यस्थितिसंक्रमप्रमाणं साद्यादिप्ररूपणा स्वामित्वप्ररूपणा चेति। तत्र भेदविशेषलक्षणयोः प्रतिप्रादनार्थमाह—'ठिइ'त्ति। इह 'मूलुत्तरपगइउ' इत्यत्र षष्ठ्यर्थे पञ्चमी। ततोऽयमर्थः–'हि' स्फुटं या स्थितिर्मूलप्रकृतीनामष्टसंख्यानामुत्तरप्रकृतीनां वाऽष्टपञ्चाशदधिकशतसंख्यानां संबन्धिनी 'उद्वर्तिता' ह्रस्वीभूता सती दीर्घीकृता, 'अपवर्तिता वा' दीर्घीभूता सती ह्रस्वीकृता, 'अन्यां वा प्रकृतिं नीता' पतद्ग्रहप्रकृतिस्थितिषु मध्ये नीत्वा निवेशिता स स्थितिसंक्रम उच्यते। एतदुक्तं भवति–द्विविधः स्थितिसंक्रमो मूलप्रकृतिस्थितिसंक्रम उत्तरप्रकृतिस्थितिसंक्रमश्च। तत्र मूलप्रकृतिस्थितिसंक्रमोऽष्टप्रकारः, तद्यथा–ज्ञानावरणीयस्य यावदन्तरायस्य। उत्तरप्रकृतिस्थितिसंक्रमोऽष्टपञ्चाशदधिकशतधा। तद्यथा–मतिज्ञानावरणीयस्य श्रुतज्ञानावरणीयस्य यावद्वीर्यान्तरायस्य। 'तदेवं मूलुत्तरपगईउ' इत्यनेन भेद उक्तः। 'उवट्टिया व' इत्यादिना तु विशेषलक्षणं त्रिप्रकारम्। तत्र कर्मपरमाणूनां ह्रस्वस्थितिकालतामपहाय दीर्घकालतया व्यवस्थापनमुद्वर्तना। कर्मपरमाणूनामेव दीर्घस्थितिकालतामपहाय ह्रस्वस्थितिकालतया व्यवस्थापनमपवर्तना। यत्पुनः संक्रम्यमाणप्रकृतिस्थितीनां पतद्ग्रहप्रकृतौ नीत्वा निवेशनं तत्प्रकृत्यन्तरनयनम्। स्थितीनां चान्यत्र निवेशनं स्थितियुक्तानां परमाणूनामवसेयम्, स्थितेरन्यत्र नेतुमशक्यत्वात्। इदं च विशेपलक्षणं सामान्यलक्षणे सत्येवावगन्तव्यम्, न सर्वथा तदपवादेन, तेन मूलप्रकृतीनां परस्परं संक्रमप्रतिपेधात् तासामन्यप्रकृत्यन्तरनयनलक्षणः स्थितिसंक्रमो न भवति, किन्तु द्वावेव उद्वर्तनापवर्तनालक्षणौ संक्रमौ, उत्तरप्रकृतीनां तु त्रयोऽपि संक्रमा द्रष्टव्याः ॥ २८ ॥

(उ०)—तदेवमुक्तः प्रकृतिसंक्रमः। सम्प्रति स्थितिसंक्रमाभिधानावसरः। तत्र चैतेऽर्थाधिकाराः, तद्यथा—भेदो विशेपलक्षणं उत्कृष्ट-
स्थितिसंक्रमप्रमाणं जघन्यस्थितिसंक्रमप्रमाणं साद्यादिप्ररूपणा स्वामित्वप्ररूपणा चेति। तत्र भेदविशेपलक्षणे प्रतिपादयन्नाह—इह
'मूलुत्तरपगईओ' इत्यत्र "हर्म्यात्प्रेक्षते" इत्यत्रेव ल्यब्लोपे पञ्चमी। ततोऽयमर्थः—'हि'—स्फुटं मूलप्रकृतीरष्टसङ्ख्याः उत्तरप्रकृती-
श्चाष्टपञ्चाशदधिकशतसङ्ख्याः आश्रित्य या स्थितिरुद्वर्तिता—ह्रस्वीभूता सती दीर्घीकृता, अपवर्तिता वा—दीर्घीभूता सती ह्रस्वी-
कृता, अन्यां वा प्रकृतिं नीता—पतद्ग्रहप्रकृतिस्थितिषु नीत्वा निवेशितेत्यर्थः, स स्थितिसंक्रम उच्यते। इदमुक्तं भवति—द्विविधः
स्थितिसंक्रमः—मूलप्रकृतिविषय उत्तरप्रकृतिविषयश्च। आद्योऽष्टधा, तद्यथा—ज्ञानावरणीयस्य यावदन्तरायस्य। द्वितीयोऽष्टपञ्चाशदधि-
कशतधा, तद्यथा—मतिज्ञानावरणीयस्य यावद्वीर्यान्तरायस्य। तदेवं 'मूलत्तरपगईओ' इत्यनेन भेद उक्तः। 'उव्वट्टिया व' इत्यादि-
ना तु विशेपलक्षणं त्रिप्रकारम्। तत्र कर्मपरमाणूनां ह्रस्वस्थितिकालतामपनीय दीर्घकालतया व्यवस्थापनमुद्वर्तना, तेपामेव दीर्घस्थिति-
कालतामपनीय ह्रस्वस्थितिकालतया व्यवस्थापनमपवर्तना, संक्रम्यमाणप्रकृतिस्थितीनां पतद्ग्रहप्रकृतौ नीत्वा निवेशनं प्रकृत्यन्तरनयनम्।
स्थितीनां चान्यत्र निवेशनं स्थितियुक्तपरमाणुद्वाराऽवसेयम्, स्थितेः साक्षादन्यत्र नेतुमशक्यत्वात्। इदं च विशेपलक्षणं सामान्यलक्षण-
मनुरुध्य प्रवर्तते, न तु तदपोद्यापि, ततो मूलप्रकृतीनां मिथः संक्रमप्रतिषेधात्तासां प्रकृत्यन्तरनयनलक्षणः स्थितिसंक्रमो न भवति,
किंतु द्वावेवोद्वर्तनापवर्तनालक्षणौ संक्रमौ, उत्तरप्रकृतीनां तु त्रयोऽपि संक्रमाः संभवन्तीति द्रष्टव्यम् ॥२८॥

इदाणिं उक्कस्सट्ठितिसंकमपरिमाणणिरूवणत्थं भण्णइ—

तीसा सत्तरि चत्तालीसा वीसुदहिकोडिकोडीणं। जेट्ठो आलिगदुगहा सेसाण वि आलियतिगूणो ॥२९॥

(चू०)—सव्वपगतीणं उक्कस्सट्ठिई बंधणकरणे परूविता। इह संकमं पडुच्च दुविहा–बंधुक्कसा संकमुक्कसा य। बन्धुक्कसा बन्धातो चेव लब्भति। संकमुक्कस्सा संकमातो लब्भइ। जासिं उत्तरपगतीणं ठितिं पडुच्च (बंध)भेदो णत्थि तासिं उत्तरपगईणं बंधुक्कसो एव, जासिं उत्तरपगतीणं ठितिं पडुच्च बंधभेदो अत्थि तासिं बन्धुकस्सा संकमुक्कस्सो लब्भंति। जहाऽसातासाताणं। तत्थ संकमुक्कस्सातो इमातो पगतितो–सायावेयणिज्जसंमत्तसम्मामिच्छत्तणवणोकसायमणुयगतिदेवगतिबेइन्दियतेइंदियचउरिन्दितजाइआहारसत्तगं अंतिमवज्जासंठाणसंघयणा मणुयगतिदेवगतिआणुपुव्वीउ पसत्थविहायगतिसुहुमअपज्जत्तसाहारणथिरसुहसुभगसुस्सरआदेज्जजसकित्तितित्थगरउच्चागोयाणं एयासिं अडयालीसाए पगतीणं संकमातो उक्कस्सट्ठिती लब्भति। सेसाणं पगतीणं बंधओ चेव उक्कस्सट्ठिती लब्भति। 'जेट्ठो' इति–उक्कस्सट्ठितिसंकमो 'आवलियदुगह' त्ति–आलियदुगेण हीणा ट्ठिति संकमति। तत्थ बन्धुक्कसाणं उक्कोसट्ठितिसंकमपरिमाणं आवलियदुगहीणं संकमति। कहं? भण्णति–बन्धावलियाए गयाए ठिति संकमति, तत्थ उदयावलियाए अब्भंतरगया ण संकमति, ततो उवरिल्ला ठिती संकमति। 'सेसाण वि आवलियतिगूणो' त्ति–संकमुक्कसाणं आवलियतिगहिणा ठिति संकमति। कहं? भण्णइ–बन्धावलियाए गयाए उदयावलियविहूणा संकंता ततो संकमावलियाए (गयाए) उदयावलितं मोत्तूणं उवरिल्ला ठिति संकमति। तम्हा तिआवलिऊणं संकमुक्कोसठितिपरिमाणं ॥ २९ ॥

(मलय०)–तदेवं भेदविशेपलक्षणे प्रतिपाद्य सम्प्रत्युत्कृष्टस्थितिसंक्रमपरिमाणप्रतिपादनार्थमाह—'तीस'त्ति। इह सर्वासां प्रकृतीनां

बन्धमाश्रित्योत्कृष्टा स्थितिः प्रागेव बन्धनकरणे प्रतिपादिता । अत्र पुनः संक्रमे उत्कृष्टा स्थितिश्चिन्त्यमाना द्विधा प्राप्यते—बन्धोत्कृष्टा संक्रमोत्कृष्टा च । तत्र या बन्धादेव केवलादुत्कृष्टा स्थितिर्लभ्यते सा बन्धोत्कृष्टा । या पुनर्बन्धेऽबन्धे वा सति संक्रमादुत्कृष्टा स्थितिर्भवति सा संक्रमोत्कृष्टा । तत्र यासामुत्तरप्रकृतीनां स्वस्वमूलप्रकृत्यपेक्षया स्थितेर्न्यूनता न भवति किन्तु तुल्यतैव ता बन्धोत्कृष्टा ज्ञातव्याः, ताः सप्तनवतिसंख्याः । तद्यथा—ज्ञानावरणपञ्चकम्, दर्शनावरणनवकम्, अन्तरायपञ्चकम्, आयुश्चतुष्टयम्, असातवेदनीयम्, नरकद्विकम्, तिर्यग्द्विकम्, एकेन्द्रियजातिः, पञ्चेन्द्रियजातिः, तैजससप्तकम्, औदारिकसप्तकम्, वैक्रियसप्तकम्, नीलकटुवर्जमशुभवर्णगसप्तकम्, अगुरुलघु, पराघातम्, उपघातम्, उच्छ्वासातपोद्योतानि, निर्माणम्, षष्ठं संस्थानम्, षष्ठं संहननम्, अशुभविहायोगतिः, स्थावरम्, त्रसचतुष्कम्, अस्थिरषट्कम्, नीचैर्गोत्रम्, षोडश कषायाः, मिथ्यात्वं च, सर्वसंख्यया सप्तनवतिः । अत्र नरतिर्यगायुषी यद्यपि स्वमूलप्रकृत्यपेक्षया तुल्यस्थितिके न भवतः तथापि संक्रमोत्कृष्टत्वाभावात्ते बन्धोत्कृष्टे उक्ते । शेषास्त्वेकषष्टिप्रकृतयः संक्रमोत्कृष्टाः । ताश्चेमाः—सातवेदनीयम्, सम्यक्त्वम्, सम्यग्मिथ्यात्वम्, नव नोकषायाः, आहारकसप्तकम्, शुभवर्णाद्येकादशकम्, नीलम्, कटु, देवद्विकम्, मनुजद्विकम्, द्वित्रिचतुरिन्द्रियजातयः, अन्त्यवर्जानि संस्थानानि, अन्त्यवर्जानि संहननानि, प्रशस्तविहायोगतिः, सूक्ष्मम्, साधारणम्, अपर्याप्तम्, स्थिरशुभसुभगसुस्वरादेययशःकीर्तितीर्थकरोच्चैर्गोत्राणि च । तत्र बन्धोत्कृष्टानां मतिज्ञानावरणीयादिमिथ्यात्वषोडशकषायनरकद्विकादीनां यथाक्रमं त्रिंशत्सप्ततिचत्वारिंशद्विंशतिसागरोपमकोटाकोटीस्थितिकानां 'जेट्ठो'--उत्कृष्टः स्थितिसंक्रमः 'आलिगदुगहं' त्ति-आवलिकाद्विकहीनः । तथाहि—स्थितिर्बद्धा सती बन्धावलिकायामतीतायां सत्यां संक्रामति । तत्राप्युदयावलिका सकलकरणायोग्येति कृत्वोदयावलिकात उपरितनी । ततो बन्धोत्कृष्टानामुत्कृष्टः स्थि-

तिसंक्रम आवलिकाद्विकहीन एव प्राप्यते । इहोदयवतीनामनुदयवतीनां वा प्रकृतीनामुदयसमयादारभ्यावलिकामात्रा स्थितिरुदयावलिकेति पूर्वग्रन्थेषु व्यवह्रियते । तथा यद्यपि 'तीसासत्तरिचत्तालीसा' इत्यनेन ग्रन्थेनेह मिथ्यात्वस्य सप्ततिसागरोपमकोटीकोटीस्थितिकस्योत्कृष्टतः स्थितिसंक्रम आवलिकाद्विकहीन उक्तस्तथाप्यन्तर्मुहूर्तोनोऽवगन्तव्यः। यतो मिथ्यात्वस्योत्कृष्टां स्थितिं बद्ध्वा जघन्यतोऽप्यन्तर्मुहूर्तं कालं यावन्मिथ्यात्वे एवावतिष्ठते । ततः सम्यक्त्वं प्रतिपद्य मिथ्यात्वस्य स्थितिमन्तर्मुहूर्तोनां सम्यक्त्वे सम्यग्मिथ्यात्वे च संक्रामयति । ततोऽन्तर्मुहूर्तोन एवास्योत्कृष्टः स्थितिसंक्रमः । वक्ष्यति च—'मिच्छत्तमुक्कोसो' इत्यादि । इह पुनर्यत् सत्तरीत्युपादानं तदशेषाणामपि बन्धोत्कृष्टानां प्रकृतीनां व्याप्तिपुरःसरमविशेषेणावलिकाद्विकहीनोत्कृष्टस्थितिसंक्रमप्रदर्शनार्थम् । 'सेसाणमाव(लि आ)लिगतिगूणो' त्ति—शेषाणां संक्रमोत्कृष्टानामावलिकात्रिकहीन उत्कृष्टः स्थितिसंक्रमः। तथाहि—बन्धावलिकायामतीतायां सत्यामावलिकात उपरितनी स्थितिः सर्वाप्यन्यत्र प्रकृत्यन्तरे आवलिकाया उपरि संक्रामति । तत्र च संक्रान्ता सती आवलिकामात्रं कालं यावत्सकलकरणायोग्येति कृत्वा संक्रमावलिकायामतीतायां सत्यामुदयावलिकात उपरितनी स्थितिस्ततोऽप्यन्यत्र प्रकृत्यन्तरे संक्रामति। ततः संक्रमोत्कृष्टानामुत्कृष्टः स्थितिसंक्रम आवलिकात्रिकहीन एव। तद्यथा—नरकद्विकस्य विंशतिसागरोपमकोटीकोटीप्रमाणामुत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायामतीतायां सत्यामावलिकात उपरितनीं तां सर्वामपि स्थितिं मनुजद्विकं बध्नन् तत्र मनुजद्विके संक्रमयति, तत्र च संक्रान्ता सती आवलिकामात्रं कालं यावत्सकलकरणायोग्येति कृत्वा संक्रमावलिकायामतिक्रान्तायां सत्यामुदयावलिकात उपरितनीं तां सर्वामपि स्थिति देवद्विकं बध्नन् तत्र संक्रमयति । एवमन्यासामपि संक्रमोत्कृष्टानामुत्कृष्टः स्थितिसंक्रम आवलिकात्रिकहीनो भावनीयः ॥२९॥

(३०)—तदेवं प्रतिपादिते भेदविशेषलक्षणे। अथोत्कृष्टस्थितिसंक्रमपरिमाणप्रतिपादनार्थमाह—इह सर्वासां प्रकृतीनां बन्धमाश्रित्योत्कृष्टा स्थितिः प्रागेव बन्धनकरणे प्रदर्शिता। अत्र तु संक्रमे उत्कृष्टा स्थितिश्चिन्त्यमाना द्विधा प्राप्यते—बन्धोत्कृष्टा संक्रमोत्कृष्टा च। तत्र बन्धादेव या स्थितिरुत्कृष्टा सा बन्धोत्कृष्टा, या तु बन्धेऽबन्धे वा सति संक्रमादुत्कृष्टा स्थितिर्लभ्यते सा संक्रमोत्कृष्टा। तत्र यासामुत्तरप्रकृतीनां स्वस्वमूलप्रकृत्यपेक्षया स्थितेर्न्यूनता न भवति, किं तु तुल्यतैव, ता बन्धोत्कृष्टाः, ताश्च सप्तनवतिः—ज्ञानावरणपञ्चकं दर्शनावरणनवकं अन्तरायपञ्चकं आयुश्चतुष्टयं असातवेदनीयं नरकद्विकं तिर्यग्द्विकं एकेन्द्रियजातिः पञ्चेन्द्रियजातिः तैजससप्तकं औदारिकसप्तकं वैक्रियसप्तकं नीलतिक्तवर्जमशुभवर्णादिसप्तकं अगुरुलघुपराघातोपघातोच्छ्वासातपोद्योतानि निर्माणं षष्ठसंस्थानसंहनने अशुभविहायोगतिः स्थावरनाम त्रसचतुष्कं अस्थिरषट्कं नीचैर्गोत्रं षोडश कषाया मिथ्यात्वं चेति। शेषास्त्वेकषष्टिः संक्रमोत्कृष्टाः, ताश्चेमाः—सातवेदनीयं सम्यक्त्वं सम्यग्मिथ्यात्वं नव नोकषाया आहारकसप्तकं शुभवर्णाद्येकादशकं नीलं तिक्तं देवद्विकं मनुजद्विकं द्वित्रिचतुरिन्द्रियजातयः अनन्त्यानि पञ्च संस्थानानि संहननानि च प्रशस्तविहायोगतिः सूक्ष्मं साधारणं अपर्याप्तं स्थिरषट्कं तीर्थकरोच्चैर्गोत्राणि च। तत्र बन्धोत्कृष्टानां मतिज्ञानावरणीयादिमिथ्यात्वषोडशकषायनरकद्विकादीनां यथाक्रमं त्रिंशत्सप्ततिचत्वारिंशद्विंशतिसागरोपमकोटीकोटिस्थितिकानां 'ज्येष्ठः'– उत्कृष्टस्थितिसंक्रमः 'आवलियदुगह' त्ति–आवलिकाद्विकहीनः। तथाहि–स्थितिर्बद्धा सती बन्धावलिकायामतीतायां सत्यां संक्रामति। तत्राप्युदयावलिका सकलकरणायोग्येति कृत्वोदयावलिकात उपरितनी संक्रामति, उदयावलिकामात्रं त्वसंक्रान्तमेवावतिष्ठते। ततो बन्धोत्कृष्टानामुत्कृष्टस्थितिसंक्रम आवलिकाद्विकहीन एव प्राप्यते। इहोदयवतीनामनुदयवतीनां वा प्रकृतीनामुदयसमयादारभ्यावलिकामात्रा स्थितिरुदयावलिकेति पूर्वग्रन्थेषु व्यवह्रियते। अत्र

च मिथ्यात्वस्य सप्ततिसागरोपमकोटाकोटिस्थितिकस्योत्कृष्टः स्थितिसंक्रमो यद्यप्यावलिकाद्विकहीन उक्तस्तथाप्यन्तर्मुहूर्त्तोनोऽवगन्तव्यः, यतो मिथ्यात्वस्योत्कृष्टां स्थितिं बद्ध्वा जघन्यतोऽप्यन्तर्मुहूर्त्तं मिथ्यात्व एव तिष्ठति, ततः सम्यक्त्वं प्रतिपद्य मिथ्यात्वस्य स्थितिमन्तर्मुहूर्त्तोनां सम्यक्त्वे सम्यग्मिथ्यात्वे च संक्रमयति, ततोऽन्तर्मुहूर्त्तोन एवास्योत्कृष्टः स्थितिसंक्रमो लभ्यत इति। 'सत्तरि'इत्युपादानं च सूत्रेऽशेषाणामपि बन्धोत्कृष्टानां बाहुल्येनावलिकाद्विकहीनोत्कृष्टस्थितिसंक्रमव्याप्तिप्रदर्शनार्थम्। शेषाणां संक्रमोत्कृष्टानामावलिकात्रिकहीन उत्कृष्टस्थितिसंक्रमः। तथाहि–बन्धावलिकायामतीतायां सत्यामावलिकात उपरितनी स्थितिः सर्वाप्यन्यत्र प्रकृत्यन्तरे आवलिकाया उपरि संक्रामति। तत्र च संक्रान्ता सत्यावलिकामात्रं कालं यावत्सकलकरणायोग्येति कृत्वा संक्रमावलिकातिक्रमे उदयावलिकात उपरितनी स्थितिः ततोऽप्यन्यत्र प्रकृत्यन्तरे संक्रामति। ततः संक्रमोत्कृष्टानामुत्कृष्टः स्थितिसंक्रम आवलिकात्रिकहीन एव। तथाहि–नरकद्विकस्य विंशतिसागरोपमकोटाकोटिप्रमाणामुत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकात्यये आवलिकात उपरितनीं सर्वामपि तां स्थितिं मनुजद्विकं बध्नंस्तत्र मनुजद्विके संक्रमयति। तत्र च संक्रान्ता सत्यावलिकामात्रं कालं सकलकरणायोग्येति संक्रमावलिकात्यये उदयावलिकात उपरितनीं तां देवद्विकं बध्नंस्तत्र संक्रमयति। एवमन्यासामपि संक्रमोत्कृष्टानामुत्कृष्टस्थितिसंक्रमे आवलिकात्रिकहीनत्वं भावनीयम्॥ २९॥

स्थितिसंक्रमे परप्रकृतिलतायां या संक्रम्यमाणा स्थितिः संक्रमकाले च सर्वा स्थितिस्तयोः स्थापना.

बन्धोत्कृष्टानां यथा नरकगतेः संक्रमप्रायोग्याः स्थितयः

नरकगतेः बध्यमाना लता··· ○○○○○ ○○○○○ ○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○|
(१ बधावलिका, २ उदयावलिका)

अत्र प्राग्बद्धनरकगतेर्देवगतौ संक्रमः

पूर्वलतायाः संक्रमप्रायोग्याः स्थितयः सर्वत्र लतायामुदयावलिकावर्जासु संक्रामन्ति

संक्रम्यमाणनरकगतेः बध्यमानदेवगतिरूपा पतद्ग्रहलता ··○○○○○|○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○|

देवगतेः बन्धाव० नरकगतेरुदयाव० सं० आ० इति तिसृणामेककालीनत्वम्

संक्रमोत्कृष्टानां यथा मनुजगतेः संक्रमप्रायोग्याः स्थितयः

नरकगतेर्बध्यमाना लता··· ○○○○○ ○○○○○|○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○|
(१ बन्धाव०, उदयाव०)

अत्र प्राग्बद्धनरकगतेः मनुजगतौ संक्रमः

पूर्वलताया संक्रमप्रायो० स्थितयः सर्वत्र लतायामुदयावलिकावर्जासु सं०

संक्रम्यमाणनरकगतेः बध्यमानमनुजगतिरूपा प्रतिग्रहलता ··○○○○○ ○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○○|
(२, ३)

नरकगतेरुदयाव० संक्रमाव० मनुजगतेरुदयाव० मनुजगतेश्च बन्धाव० इति- तिसृणामेककालीनत्वम्

अस्या लतायाः संक्रमप्रा० स्थितयः

| | |
|---|---|
| संक्रम्यमाणमनुजगतेः देवगतिरूपा प्रतिग्रहलता········○○○○○ | पूर्वसंक्रमितलतायाः संक्रमप्रायो०स्थितय उदयावलिवर्जासु सर्वत्र लतायां सं० ○○○○○○○○○○○○○○○○○○○○○○○○○○ |

मनुजगतेरुदयाव० संक्रमाव० देवगतेश्च बन्धाव० इति तिसृणामेककालीनत्वम्

अत्र या उदयावलिका सा उदयवतीनां विपाकोदयावलिका अनुदयवतीनां च प्रदेशोदयावलिका इति। अस्याः स्थापनाया अनुसारेण वन्धोत्कृष्टानामावलिकाद्विकोना संक्रमस्थितिः १-२ इति अंकतः, संक्रमोत्कृष्टानां चावलिकात्रिकहीना संक्रमस्थितिः १-२-३ इति अंकतः अकिता। परप्रकृतिलतायां संक्रम्यमाणदलिकमुदयावलिकायां न संक्रामति इति उदयावलिकायाः सर्वत्र वर्जनं कृतम्।

(उदीरणापवर्त्तनयोरेवोदयावलिकासु दलिकप्रक्षेपः स्यान्नान्यत्र)

**बंधे संकमो जेसिं कम्माणं तेसिं एयं भणियं। जेसिं बंधेणं विणा संकमुक्कोसो लब्भति तेसिं ठितिसंकमपरिमाणणिरूवणत्थं भण्णति—**

**मिच्छत्तस्सुक्कोसो भिन्नमुहुत्तूणगो उ सम्मत्ते। मिस्से वंतोकोडाकोडी आहारातित्थयरे ॥ ३० ॥**

**(चू०)—दिट्ठितिगसंतकम्मिगो मिच्छदिट्ठि उक्कस्सं संकिलेसं गंतूणं उक्कोसं ठितिं बंधिऊणं ततो अंतोमुहुत्तेणं पडिवडितूणं विसुद्धिं गतो संमत्तं पडिवज्जति, तस्स एवतिकालेण ऊणमिच्छत्तस्स उक्कोसा ठिति सम्मत्तसम्मामिच्छत्ते संकमति, ततो आवलियतिगूणा ठिती उक्कस्सट्ठितीपरिमाणं ति पत्ते तस्स इमो अववातो।**

'अंतो कोडाकोडी आहारगतित्थगरे'–आहारगं तित्थगरणामं वा जो बन्धति तस्स णियमा संतकम्मं अंतोकोडा-
कोडी, बन्धं वि अंतोकोडाकोडी चेव। दोण्ण वि सरिसाभिलावे किमेता बन्धुक्कस्सा उताहु संकमुक्कस्सा वि-
त्ति संकापत्ते भण्णति–संकमुक्कस्सा एव। कहं? जेण संकमुक्कस्साहिगारे पढिता। अण्णं च तेसिं बन्धट्ठितीउ
संकमट्ठिती संखेज्जगुणा एव सव्वकालं ॥ ३० ॥

(मलय)–तदेवं यासां प्रकृतीनां बन्धे सति संक्रमादुत्कृष्टा स्थितिर्भवति तासामेतत् उत्कृष्टस्थितिसंक्रमपरिमाणमुक्तम्। संप्रति पुन-
र्यासां बन्धेन विना संक्रमादेव केवलादुत्कृष्टा स्थितिर्लभ्यते, तासामुत्कृष्टस्थितिसंक्रमपरिमाणनिरूपणार्थमाह—'मिच्छत्तस्स' त्ति–मिथ्या-
त्वस्योत्कृष्टः स्थितिसंक्रमो 'भिन्नमुहूर्तोनो'–अन्तर्मुहूर्तोनः, तथा 'सम्यक्त्वे'–सम्यक्त्वस्य, सम्यक्त्वे मिश्रे वा मिश्रस्य चोत्कृष्टः स्थितिसंक्र-
मो भिन्नमुहूर्तोनः। तुशब्दस्याधिकार्थसंसूचनादावलिकाद्विकहीनश्च वेदितव्यः। इयमत्र भावना–दर्शनमोहनीयत्रितयसत्कर्मा मिथ्यादृष्टि-
रुत्कृष्टे संक्लेशे वर्तमानो मिथ्यात्वस्योत्कृष्टां स्थितिं बद्ध्वा ततोऽन्तर्मुहूर्तमात्रानन्तरं मिथ्यात्वात् प्रतिपत्य विशुद्धिमासादयन् सम्यक्त्वं
प्रतिपद्यते। ततो मिथ्यात्वस्योत्कृष्टां स्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणामन्तर्मुहूर्तोनां सम्यक्त्वे सम्यग्मिथ्यात्वे च संक्रमयति।
सा च संक्रान्ता सती संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वस्थितिमपवर्तनाकरणेन स्वस्थाने संक्रमयति। सम्य-
ग्मिथ्यात्वस्थितिमपि संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वे संक्रमयति अपवर्तयति च। तदेवं मिथ्यात्वस्या-
न्तर्मुहूर्तोनः सम्यक्त्वसम्यग्मिथ्यात्वयोस्त्वन्तर्मुहूर्तावलिकाद्विकहीन उत्कृष्टः स्थितिसंक्रमः। इह तीर्थकरस्याहारकसप्तकस्य चोत्कृष्टः
स्थितिबन्धोऽन्तःसागरोपमकोटीकोटीप्रमाणः, सत्कर्माप्येतेषामन्तःसागरोपमकोटीकोटीप्रमाणमेव, ततः संशयः कीमेताः संक्रमोत्कृष्टा

उत बन्धोत्कृष्टा इति तदपनोदार्थमाह–'अन्तोकोडाकोडी' इत्यादि। आहारके–आहारकसप्तके तीर्थकरे च संक्रमतः स्थितिसत्कर्म अन्तःसागरोपमकोटीकोटी, अत एताः संक्रमोत्कृष्टाः। यद्यपि च बन्धेऽप्यन्तःसागरोपमकोटीकोटीप्रमाणं स्थितिसत्कर्माभिहितम्, तथापि बन्धोत्कृष्टायाः स्थितेः सकाशात् संक्रमोत्कृष्टा स्थितिः संख्येयगुणा द्रष्टव्या। उक्तं च चूर्णौ–"बंधट्ठिईओ संतकम्मठिई संखिज्जगुणा"। ननु नामकर्मण उत्कृष्टा स्थितिर्विंशतिसागरोपमकोटीकोटीप्रमाणा, तत आहारके तीर्थकरे च संक्रमादुत्कृष्टा स्थितिः प्राप्यमाणा बन्धावलिकोदयावलिकारहिता विंशतिसागरोपमकोटीकोटीप्रमाणैव लभ्यते, कथमुच्यते तीर्थकराहारकयोः संक्रमतोऽप्युत्कृष्टा स्थितिरन्तःसागरोपमकोटीकोटीप्रमाणेति ? तदयुक्तम्, अभिप्रायापरिज्ञानात्। तथाहि–तीर्थकराहारकयोः प्रकृत्यन्तरस्य स्थितिः संक्रामति बन्धकाले नान्यदा, बन्धश्चानयोर्यथाक्रमं विशुद्धसम्यग्दृष्टेः संयतस्य च, विशुद्धसम्यग्दृष्टीनां संयतानां च स्थितिसत्कर्म सर्वेषामपि कर्मणामायुर्वर्जानामन्तःसागरोपमकोटीकोटीप्रमाणं नाधिकम्। ततः संक्रमोऽप्येतावन्मात्र एव प्राप्यते नाधिक इत्यदोषः ॥३०॥

(उ०)—तदेवं बन्धे सति यासां संक्रमादुत्कृष्टा स्थितिस्तासां प्रकृतीनामिदमुत्कृष्टस्थितिसंक्रमपरिमाणमुक्तम्। अथ यासां बन्धेन विना केवलात्संक्रमादेवोत्कृष्टा स्थितिर्लभ्यते तासामुत्कृष्टस्थितिसंक्रमपरिमाणं निरूपयन्नाह—मिथ्यात्वस्योत्कृष्टः स्थितिसंक्रमो भिन्नमुहूर्त्तोनः। तथा सम्यक्त्वे सम्यक्त्वस्य, सम्यक्त्वे मिश्रे वा मिश्रस्योत्कृष्टस्थितिसंक्रमो भिन्नमुहूर्त्तोनः। तुशब्दस्याधिकार्थसंसूचकत्वादावलिकाद्विकहीनश्च द्रष्टव्यः। इयमत्र भावना–दर्शनमोहनीयत्रयसत्कर्मा मिथ्यादृष्टिरुत्कृष्टसंक्लेशे वर्तमानो मिथ्यात्वस्योत्कृष्टां स्थितिं बद्ध्वा ततोऽन्तर्मुहूर्त्तमात्रानन्तरं मिथ्यात्वात्प्रतिपत्य विशुद्धिमासादयन् सम्यक्त्वं प्रतिपद्यते। ततो मिथ्यात्वस्य सप्ततिसागरोपमकोटाकोटिलक्षणामुत्कृष्टां स्थितिमन्तर्मुहूर्त्तोनां सम्यक्त्वे सम्यग्मिथ्यात्वे च संक्रमयति, सा च तत्र संक्रान्ता सती

आवलिकामात्रं यावत्सकलकरणायोग्या, ततः संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वस्थितिमपवर्तनाकरणेन स्वस्थाने संक्रमयति, सम्यग्मिथ्यात्वस्थितिमपि संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वे संक्रमयत्यपवर्तनाकरणेन स्वस्थाने च। तदेवं मिथ्यात्वस्यान्तर्मुहूर्त्तोनः सम्यक्त्वसम्यग्मिथ्यात्वयोस्त्वन्तर्मुहूर्त्तावलिकाद्विकहीन उत्कृष्टस्थितिसंक्रम इति स्थितम्। ननु दर्शनत्रयसत्कर्मा मिथ्यादृष्टिः स एव यः पूर्वं सम्यग्दृष्टिर्भूत्वा प्रतिपतितस्तस्य च मिथ्यात्वोत्कृष्टस्थितिबन्धो न संभवति, 'बंधेण न वोलइ कयावि' इत्यागमाद् भिन्नग्रन्थेः पतितस्यापि कोटाकोट्यधिकबन्धनिषेधात्, ततः सर्वमिदं निर्मूलमिति चेत्, न, 'बंधेण न वोलइ' इत्यस्य सिद्धान्तमतत्वात्, कार्मग्रन्थिकैः सम्यग्दृष्टेः पतितस्य मिथ्यात्वमागतस्योत्कृष्टस्थितिबन्धस्याप्यभ्युपगमात्, तस्य तथाविधरसाभावादेव विशेषसमर्थनादिति न कश्चिद्दोषः। इह तीर्थकरनाम्न आहारकसप्तकस्य चोत्कृष्टः स्थितिबन्धोऽन्तःसागरोपमकोटाकोटिप्रमाणः, सत्कर्माप्येतेषामेतावदेव, ततः किमेताः प्रकृतयो बन्धोत्कृष्टा उत संक्रमोत्कृष्टा इति संशये सत्याह—'अंतो' इत्यादि। आहारके—आहारकसप्तके तीर्थकरे च संक्रमतः स्थितिसत्कर्मान्तःसागरोपमकोटाकोटी, अत एताः संक्रमोत्कृष्टा द्रष्टव्याः। यद्यपि बन्धेऽप्येतासामन्तःसागरोपमकोटाकोटिप्रमाणं स्थितिसत्कर्म प्रतिपादितं तथापि बन्धोत्कृष्टायाः स्थितेः सकाशात् संक्रमोत्कृष्टा स्थितिः संख्येयगुणा द्रष्टव्या, "बंधहिईओ संतकम्मट्ठिई संखेज्जगुण त्ति" चूर्णिकृद्वचनात्। ननु नामकर्मण उत्कृष्टा स्थितिर्विंशतिसागरोपमकोटाकोटिप्रमाणा ततः, आहारकसप्तके तीर्थकरे च संक्रमादुत्कृष्टा स्थितिः प्राप्यमाणा बन्धावलिकोदयावलिकारहिता विंशतिसागरोपमकोटाकोटिप्रमाणैव लभ्यते, तत्कथमुच्यते तीर्थकराहारकसप्तकयोः संक्रमतोऽप्युत्कृष्टा स्थितिरन्तःकोटाकोटिप्रमाणेति चेत्, नैवं, अनयोः प्रकृत्यन्तरस्य स्थितिर्बन्धकाले संक्रामति, नान्यदा, बन्धश्चानयोर्विशुद्धसम्यग्दृष्टेः विशुद्धसंयतस्य च, विशुद्धसम्य-

ग्दृष्टीनां विशुद्धसंयतानां च स्थितिसत्कर्म सर्वेषामपि कर्मणामायुर्वर्जानामन्तःसागरोपमकोटाकोटिप्रमाणं, नाधिकं, ततः संक्रमोऽप्येतावन्मात्र एव भवति, नाधिक इति दोषाभावाद् । उक्तं च पञ्चसंग्रहे—"तित्थयराहाराणं संकमणे बंधसंतएसुं पि । अंतोकोडाकोडी तहा वि ता संकमुक्कोसा ॥३८॥ एवइय संतया जं सम्मदिट्ठीण सव्वकम्मेसु त्ति" । "एवइयसंतय" त्ति—एतावत्येवान्तःकोटाकोटिप्रमाणैव सत्ता ॥

बन्धुक्कस्ससंकमुक्कस्सट्ठितीसंकमपरिमाणकालो सव्वट्ठितीणं केवतितो त्ति तज्जाणणत्थं इमं भण्णति—

**सव्वासिं जट्ठिइगो सावलिगो सो अहाउगाणं तु । बंधुक्कस्सुक्कसो सावाहठिई य जट्ठिइगो ॥ ३१ ॥**

(चू०)—जा जंमि संकमणकाले ट्ठिति सा जट्ठिती, सा जस्स अत्थि सो संकमो जट्ठितिसंकमो । तोसिं बन्धुक्कस्ससंकमुक्कस्साणं संकमाणं आवलियाए सह जट्ठिति त्ति वुचति । तम्हा बंधुक्कस्ससंकमुक्कस्साणं आवलियदुआवलिगूणा सव्वट्ठिति जट्ठिती भण्णति । इदाणिं आऊणि किं बन्धुक्कस्साणि उयाहु संकमुक्कस्साणि होज्जा ? भण्णति—'आउगाणं तु बन्धुक्कोसुक्कोसो'—आउगाणं सव्वोसिं उक्कस्सट्ठितिपरिमाणं बन्धुक्कस्सं एव ? कहं । भण्णति—'मोहदुगाउगाणं मूलपगतीणं ण परोप्परंमि संकमणं' ति एएणं पडिसेहितं । तोसिं जट्ठितिणियमणत्थं भण्णति—'साबाहट्ठिती य जट्ठितिगो' त्ति । जा ट्ठिति अबाहाए सह साबाहा ट्ठिती जट्ठिती भवति, 'बन्धुक्कस्सगाणं आवलियगूणा ट्ठिति जट्ठिती' त्ति वयणाउ, आवलिगूणा साबाहा ट्ठिति जट्ठिति भवति । भणियं उक्कोसट्ठिति संकमपरिमाणं ॥३१॥

(मलय०)—सम्प्रति सर्वासां प्रकृतीनां बन्धोत्कृष्टानां संक्रमोत्कृष्टानां वा संक्रमणकाले यावती स्थितिः प्राप्यते तावतीं निर्दिदिक्षुराह—'सव्वासिं' त्ति सर्वासां प्रकृतीनां संक्रमो यत्स्थितिकः—संक्रमणकाले या स्थितिर्विद्यते सा यत्स्थितिरित्युच्यते, सा यस्य संक्रम-

स्यास्ति स संक्रमो यत्स्थितिकः, या स्थितिर्विद्यते यस्यासौ यत्स्थितिक इति बहुव्रीहिसमाश्रयणात्, 'सावलिक'–आवलिकया सहितो द्रष्टव्यः। एतदुक्तं भवति–यः प्रागुक्तः संक्रमः स आवलिकया सहितः सन् यावान् भवति तावती संक्रमकाले स्थितिरित्यर्थः। ततो बन्धोत्कृष्टानामावलिकाहीना, संक्रमोत्कृष्टानां त्वावलिकाद्विकहीना संक्रमकाले सर्वा स्थितिर्वेदितव्या। तथाहि–संक्लेशादिकारणवशत उत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायामतीतायामुदयावलिकात उपरितनीं स्थितिमन्यत्र प्रकृत्यन्तरे संक्रमयितुमारभते, ततो बन्धोत्कृष्टानामेकावलिकाहीना संक्रमकाले सर्वा स्थितिः प्राप्यते, संक्रमोत्कृष्टानां पुनर्बन्धावलिकासंक्रमावलिकयोरतीतयोरुदयावलिकातः परतो वर्तमानां स्थितिमन्यत्र संक्रमयति, तेन संक्रमोत्कृष्टानामावलिकाद्विकहीना संक्रमकाले सर्वा स्थितिरवाप्यते। अथायुषामुत्कृष्टा स्थितिः किं बन्धोत्कृष्टा उत संक्रमोत्कृष्टा? उच्यते–बन्धोत्कृष्टैव। तथा चाह–'अहाउगाणं' इत्यादि। आयुषामुत्कृष्टः स्थितिसंभवो बन्धोत्कृष्ट एव न संक्रमोत्कृष्टः। यतो नायुषां परस्परं संक्रमः ''[1]मोहदुगाउगमूलप्पगडीण न परोप्परंमि संकमणं'' इतिवचनात्। 'सावाहठिई' इत्यादि। आयुषां 'सावाधा' अवाधासहिता या सर्वा स्थितिः सा यत्स्थितिरवगन्तव्या, केवलं 'बंधुक्कोसाणं आवलिगूणा ठिई जट्ठिइ' इति वचनात् बन्धावलिकोना द्रष्टव्या। तथाहि–आयुर्बन्धे प्रवर्तमान एव प्रथमसमये यद्बद्धं दलिकं तद्बन्धावलिकातीतं सदुद्वर्तयति, तत उद्वर्तनारूपसंक्रमे बन्धावलिकोना सावाधा यत्स्थितिः प्राप्यते। अथवाऽपवर्तनापि निर्व्याघातभाविन्यायुषो बन्धावलिकायामतीतायां सर्वदैव प्रवर्तते, ततस्तामधिकृत्य यथोक्ता यत्स्थितिरवसेया ॥३१॥

(उ०)–सम्प्रति सर्वासां प्रकृतीनां बन्धोत्कृष्टानां संक्रमोत्कृष्टानां वा संक्रमकाले यावती स्थितिः प्राप्यते तावतीं निर्दिशति—स-

१ संक्रमकरणे गाथा ३।

र्वासां प्रकृतीनां संक्रमो 'यत्स्थितिकः'—संक्रमकाले या स्थितिर्विद्यते सा यत्स्थितिरित्युच्यते, ततो या स्थितिर्विद्यते यस्य स तथेति बहुव्रीहिः, स 'सावलिकः'—आवलिकया सहितो द्रष्टव्यः, यः प्रागुक्तः संक्रमः स आवलिकया सहितः सन् यावान् भवति तावती संक्रमकाले सर्वा स्थितिरित्यर्थः। ततो बन्धोत्कृष्टानामावलिकाहीना संक्रमोत्कृष्टानां त्वावलिकाद्विकहीना संक्रमकाले सर्वा स्थितिर्ज्ञातव्या। तथाहि—संक्लेशादिकारणवशत उत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकातिक्रमे उदयावलिकात उपरितनी स्थितिः संक्रमयितुमारभ्यते, ततो बन्धोत्कृष्टानामेकावलिकाहीना, संक्रमोत्कृष्टानां तु बन्धावलिकासंक्रमावलिकयोरतीतयोरुदयावलिकातः परावर्तमाना स्थितिरन्यत्र संक्रम्यते, तेन संक्रमोत्कृष्टानामावलिकाद्विकहीना संक्रमकाले सर्वा स्थितिरवाप्यते। आयुषां तूत्कृष्ट इति—उत्कृष्टस्थितिसंभवो बन्धोत्कृष्ट एव, न संक्रमोत्कृष्टः, यतो न तेषां परस्परं संक्रमः संभवति। 'स' च—यत्स्थितिकः आयुषां 'साबाधा' अबाधया सहिता सर्वा स्थितिरवगन्तव्या, केवलं 'बंधुक्कस्साण आवलिगूणा ठिई जट्ठिइ' त्ति वचनाद्बन्धावलिकोना द्रष्टव्या। इहायुषो व्याघातभाविन्यपवर्त्तना नियमादुदये सति प्रवर्तते ततो न तामधिकृत्येह यत्स्थितिनिरूपणम्। या तु निर्व्याघातभाविन्यपवर्तना साऽनुदयेऽपि बन्धावलिकातिक्रमे सर्वदा प्रवर्तते, अपि च बन्धे प्रवर्तमान एव सति प्रथमादिसमयबद्धानां लतानां बन्धावलिकातिक्रमे उद्वर्तनापि भवति, ततो निर्व्याघातभाव्यपवर्त्तनारूपे उद्वर्तनारूपे च स्वस्थानसंक्रमे यत्स्थितिरायुष आवलिकाहीना साबाधा सर्वा स्थितिर्भावनीया। तदेवमुक्तमुत्कृष्टस्थितिसंक्रमपरिमाणम् ॥३१॥

इदाणिं जहण्णगट्ठितिसंकमपरिमाणं भण्णति—

**आवरणविग्घदंसणचउक्कलोभंतवेयगाऊणं। एगा ठिई जहन्नो जट्ठिइ समयाहिगावलिगा ॥ ३२ ॥**

(चू०)—पंचणाणावरणं, पंचअंतराततिं, चक्खुदंसणअचक्खुदंसणओहिदंसणकेवलदंसणावरण, लोभस्संजलण, वेदगसम्मत्तं, चउण्हं च आउगाणं, एतासिं वीसाए पगतीणं अप्पप्पणो संतकम्मस्स अंते समयाहिगावलिगसेसाए ट्टितीए आवलिगातो उवरिल्ला ट्टिति हेट्ठिल्ले आवलियतिभागसमयाहिगे संकमति, तंमि काले सव्वट्टितिपरिमाणणिरूवणत्थं भण्णति–'जट्ठिति समयाहिगावलिय' त्ति–समयाहियावलिगा जट्ठिति भवति ॥ ३२॥

(मलय०)-तदेवमुक्तमुत्कृष्टस्थितिसंक्रमपरिमाणम्, सम्प्रति जघन्यस्थितिसंक्रमपरिमाणप्रतिपादनावसरः। जघन्यस्थितिसंक्रमश्च द्विधा–स्वप्रकृतौ परप्रकृतौ च। तत्र स्वप्रकृतौ जघन्यस्थितिसंक्रमप्रतिपादनार्थमाह–'आवरण'–त्ति पञ्चानां ज्ञानावरणीयप्रकृतीनां 'विग्घ' त्ति पञ्चानामन्तरायप्रकृतीनाम्, चतसृणां दर्शनावरणीयप्रकृतीनां–चक्षुरचक्षुरवधिकेवलदर्शनावरणलक्षणानाम्, संज्वलनलोभस्य, वेदकसम्यक्त्वस्य, चतुर्णां चायुषाम्, सर्वसंख्यया विंशतिप्रकृतीनां आत्मीयात्मीयसत्ताव्यवच्छेदसमये समयाधिकावलिकाशेषायां स्थितावुदयावलिका सर्वकरणायोग्येति कृत्वोदयावलिकात उपरितनी समयमात्रा स्थितिरपवर्तनासंक्रमेणाधस्तने उदयावलिकात्रिभागे समयाधिके संक्रामति, तदा च सर्वस्थितिपरिमाणं समयाधिकावलिका। तथा चाह–'जट्ठिइ' इत्यादि ॥ ३२ ॥

(उ०)-अथ जघन्यस्थितिसंक्रमपरिमाणप्रतिपादनावसरः। जघन्यस्थितिसंक्रमश्च द्विधा–स्वप्रकृतौ परप्रकृतौ च। उभयत्राप्युदयावलिकायां योऽन्तिमः संछोभः स जघन्यः स्थितिसंक्रमः। तेनोदयावलिकाया बहिर्भागेऽपि यः प्रक्षेपः स जघन्यः स्थितिसंक्रमो न भवतीति सिद्धम्। एतच्च लक्षणं निद्राद्विकातिरेकेण वेदितव्यम्। तत्र स्वप्रकृतौ जघन्यस्थितिसंक्रमपरिमाणप्रतिपादनार्थमाह—'आवरण' त्ति-पञ्चानां ज्ञानावरणीयप्रकृतीनां, 'विग्घ' त्ति–पञ्चानामन्तरायप्रकृतीनां, दर्शनचतुष्कस्य–चक्षुरचक्षुरवधिकेवलदर्शनावरणलक्षणस्य,

'लोभंत' त्ति-संज्वलनलोभस्य, 'वेयग' त्ति वेदकसम्यक्त्वस्य, चतुर्णां चायुषाम्, सर्वसङ्ख्यया विंशतिप्रकृतीनां स्वस्वसत्ताव्यवच्छेद-समये समयाधिकावलिकाशेषायां स्थितौ उदयावलिका सकलकरणायोग्येति कृत्वा तस्या उपरितनी समयमात्रा स्थितिरपवर्त्तनसंक्रमेणाधस्तन उदयावलिकात्रिभागे समयाधिके संक्रामति, एष समयमात्रो जघन्यस्थितिसंक्रमः, यत्स्थितिः-सर्वसंक्रमस्थितिपरिमाणमत्र-समयाधिकावलिका ॥ ३२ ॥

णिद्दापयलाणं जहण्णट्ठितिणिरूवणा—

**निद्दादुगस्स एगा आवलियदुगं असंखभागो अ। जट्ठिइ हासच्छक्के संखेज्जाऊ समाऊ उ ॥ ३३ ॥**

(चू०)—'एगा' इति-एगा ठिति जहण्णगो संकमो अप्पप्पणो संकमस्संति। उवरिल्ला एगा ठिति हेट्ठिल्ले दु-आवलियआवलियतिभागसमयाहिगे संकमंति। तेसिं चेव केवतिया जट्ठिति तं णिरूविज्जइ-'आवलियदुगं असंखेज्जभागो अ जट्ठिइ'त्ति-दो आवलियातो अण्णाए आवलियाए असंखभागो तम्मि काले सव्वठितिपरिमाणं। हासातिछक्कस्स जहण्णठितिसंकमपरिमाणं भण्णइ-'हासच्छक्के संखेज्जाऊ समाऊ उ'-हासरइअरतिसोगभयदुगुच्छाणं खवगेणं अपवत्तेऊणं संखिज्जवासित्ता ठिति कता सा तासिं अप्पणो णिल्लेवणाकालसमयंमि कोहसंजलणे संच्छुभमाणीणं जहण्णयं ठितिसंकमपरिमाणं भवति ॥ ३३ ॥

(मलय०)—'निद्द' त्ति। 'निद्राद्विकस्य'-निद्राप्रचलालक्षणस्य जघन्यः स्थितिसंक्रमः स्वसंक्रमान्ते स्वस्थितेरुपरितनी एका समयमात्रा स्थितिः, सा आवलिकाया अधस्तने समयाधिके त्रिभागे निक्षिप्यते, तदानीं च यत्स्थितिः सर्वा स्थितिः आवलिकाद्विकं तृती-

यम्याश्चावलिकाया असंख्येयो भागः। अत्र वस्तुस्वभाव एप यन्निद्राद्विकस्यावलिकासंख्येयभागाधिकावलिकाद्विकशेपायां स्थितावुपरितनी समयमात्रिका स्थितिः संक्रामति, न पुनर्मतिज्ञानावरणीयादीनामिव समयाधिकावलिकाशेपायामिति। सम्प्रति यासां परप्रकृतिपु संभवी जघन्यस्थितिसंक्रमस्ताः प्रतिपादयति- 'हासच्छके' इत्यादि। हास्येनोपलक्षितं पट्कं हास्यपट्कं–हास्यरत्यरतिभयशोकजुगुप्सालक्षणं, तस्य क्षपकेणापवर्तनाकरणेन संख्येयवर्पप्रमाणा स्थितिः कृता। ततः सा स्वनिर्लेपनावसरे संज्वलनक्रोधे प्रक्षिप्यमाणा जघन्यः स्थितिसंक्रमः ॥ ३३ ॥

(उ०)—'निद्राद्विकस्य'–निद्राप्रचलालक्षणस्य जघन्यस्थितिसंक्रमः स्वसंक्रमान्ते स्वस्थितेरुपरितनी एका समयमात्रा स्थितिः, साऽधस्तन्या आवलिकायास्त्रिभागे समयाधिके निक्षिप्यते। तदानीं च यत्स्थितिः सर्वा स्थितिरावलिकाद्विकं तृतीयस्याश्चावलिकाया असङ्ख्येयो भागः। अत्रायं वस्तुस्वभावः–यन्निद्राद्विकस्यावलिकाऽसङ्ख्येयभागाधिकावलिकाद्विकशेपायां स्थितावुपरितनी समयमात्रिका स्थितिः संक्रामति, न तु मतिज्ञानावरणीयादीनामिव समयाधिकावलिकाशेपायामिति। अथ यासां परप्रकृतिपु पतद्ग्रहभूतासु संभवी जघन्यः स्थितिसंक्रमस्ताः प्रतिपादयति–'हासच्छके' इत्यादि। हास्येनोपलक्षितं पट्कं हास्यपट्कं–हास्यरत्यरतिशोकभयजुगुप्सालक्षणम्, तस्य क्षपकेणापवर्तनाकरणेन सङ्ख्येयवर्पप्रमाणा स्थितिः कृता, ततः सा स्वनिर्लेपनावसरे संज्वलनक्रोधे प्रक्षिप्यमाणा जघन्यः स्थितिसंक्रमः ॥ ३३ ॥

तासिं जट्ठितिपरिमाणणिरूवणं कीरति—

**सोणमुहुत्ता जट्ठिइ जहण्णवंधो उ पुरिससंजलणे। जट्ठिइ सगऊणजुत्तो आवलियदुगूणगो तत्तो ॥३४॥**

(चू०)—'सोणमुहुत्ता जट्ठिति'त्ति–सह अंतोमुहुत्तेण जट्ठिति। कहं? भण्णाति–अंतरकरणद्धाए वट्टमाणो तातो कोहसंजलणे संकामेति। पुरिसवेदसंजलणकोहमाणमायाणं जहण्णठितिसंकमणिरूवणत्थं भण्णइ–'जहण्णबंधो तु पुरिससंजलणे'। जहण्णबंधं ति–पुरिसवेदजहण्णतो ट्ठितिबंधो अट्ठसंवच्छराणि(कोहसंजलणाए बे मासा, माणसंजलणाए मासो मायासंजलणाए अद्धमासो)। संकमं पडुच्च अंतोमुहूत्तूणाणि। कहं? भण्णइ–अबाहूणत्ताएउ–कोहसंजलणाए बे मासा अंतोमुहूत्तूणा, माणसंजलणाए मासो अंतोमुहूत्तूणो, मायासंजलणाए अद्धमासो अंतोमुहूत्तूणो, अबाहूणत्तादेव। तेसिं जट्ठितिणिरूवणत्थं कीरति–'जट्ठिइ सगऊणजुत्तो आवलिय दुगूणगो तत्तो' इति। जट्ठिती–सव्वट्ठितीपरिमाणं सगऊणजुत्तो इति–अप्पप्पणो जहण्णट्ठितिअबाहाए ऊणा। कहं? भण्णाति–"अबाहुणिगा कम्मट्ठिति कम्मणिसेगो" इति वयणातो तेण ऊणा जट्ठिति भवति। अतो आवलितदुगेण ऊणो। कहं? भण्णाति–बन्धे वोच्छिण्णे बन्धावलियाए गताए ततो खवित्तूमाढत्ता आवलियाए खविज्जति तस्स बन्धावलियखवणावलियविहूणा सेसंतरकरणट्ठा जट्ठिती भवति ॥३४॥

(मलय०)—'सोणमुहुत्त' त्ति। संक्रमणकाले सैव संख्येयवर्षप्रमाणा स्थितिः 'सोनमुहूर्ता'–अन्तर्मुहूर्तेनाभ्यधिका 'यत्स्थितिः'–सर्वा स्थितिः। तथाहि–अन्तरकरणे वर्तमानस्तां संख्येयवर्षप्रमाणां स्थितिं संज्वलनक्रोधे संक्रमयति, अन्तरकरणे च कर्मदलिकं न विद्यते किन्तु तत ऊर्ध्वम्, ततोऽन्तरकरणकालेनाभ्यधिका संख्येयवर्षप्रमाणा स्थितिर्हास्यषट्कस्य जघन्यस्थितिसंक्रमकाले यत्स्थितिः। 'जहन्नबंधो' इत्यादि। पुरुषवेदस्य संज्वलनानां च यो जघन्यः स्थितिबन्धः प्रागुक्तः, तद्यथा–पुरुषवेदस्याष्टौ संवत्सराणि, संज्व-

न्यः स्थितिबन्धोऽबाधाकालोनस्तेषां जघ-
लनक्रोधस्य मासद्वयम्, संज्वलनमानस्य मासः, संज्वलनमायाया अर्धमासः, स एव जघन्यः स्थितिबन्धोऽबाधाकालोनस्तेषां जघ-
न्यः स्थितिसंक्रमः। अबाधारहिता हि स्थितिरन्यत्र संक्रामति, तत्रैव कर्मदलिकसंभवात्, "आबाधाकालोना कर्मस्थितिः कर्मनिषेकः"
इति वचनात्, जघन्यस्थितिबन्धे चाऽबाधाऽन्तर्मुहूर्तप्रमाणा। न च जघन्यस्थितिसंक्रमणकालेऽबाधाकालमध्ये प्राग्बद्धं सत्कर्म प्राप्यते,
तस्य तदानीं सर्वस्यापि क्षीणत्वात्। ततोऽन्तर्मुहूर्तहीन एवैतेषां पुरुषवेदादीनां स्वस्वजघन्यस्थितिबन्धो जघन्यस्थितिसंक्रमः। तदा-
नीं चैतेषां यत्स्थितिः—सर्वा स्थितिः स्वकीयेनोनेनाबाधारूपान्तर्मुहूर्तलक्षणेन युक्तोऽबाधाकालसहित इत्यर्थः, जघन्यः स्थितिबन्धः ततः
पुनरप्यावलिकाद्विकेनोनो हीनः सन् द्रष्टव्यः। एतदुक्तं भवति—जघन्यस्थितिसंक्रमेऽबाधाकालः प्रक्षिप्यते, तत्प्रक्षेपानन्तरं चावलि-
काद्विकं ततोऽपसार्यते, तदुत्सारणे च कृते यावती स्थितिर्भवति एतावती जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः। आवलिकाद्विकं
कस्मादुत्सार्यत इति चेदुच्यते—बन्धव्यवच्छेदानन्तरं बन्धावलिकायामतीतायां चरमसमयबद्धाः पुरुषवेदादिप्रकृतिलताः संक्रमयितुमा-
रब्धाः, आवलिकामात्रेण च कालेन ताः संक्रम्यन्ते, संक्रमावलिकाचरमसमये च जघन्यः स्थितिसंक्रमः प्राप्यते, ततो बन्धावलि-
कासंक्रमावलिकारहित एवाबाधासहितो जघन्यः स्थितिबन्धो जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः ॥३४॥

(उ०)—संक्रमकाले सव सङ्ख्येयवर्षप्रमाणा स्थितिः 'सोनमुहुत्ता'—अन्तर्मुहूर्तेनाभ्यधिका यत्स्थितिः सर्वा स्थितिः। तथाहि—अन्तरकरणे
वर्त्तमानस्तां सङ्ख्येयवर्षप्रमाणां स्थितिं संज्वलनक्रोधे संक्रमयति। अन्तरकरणे च कर्मदलिकं न वेद्यते, किंतु तत ऊर्ध्वम्, ततोऽन्तर-
करणकालेनाभ्यधिका सङ्ख्येयवर्षप्रमाणा स्थितिर्हास्यषट्कस्य जघन्यस्थितिसंक्रमकाले यत्स्थितिः। इमां च सङ्ख्येयवर्षप्रमाणां स्थिति-
मपवर्तनाकरणेनापवर्त्य संज्वलनक्रोधस्योदयावलिकायां प्रक्षिपतीति प्रतिपत्तव्यम्, अन्यथा स्थितेः प्रभूतत्वादुदयावलिकाया बहिर्भागेऽपि

प्रक्षेपः स्यात्, तथा चान्यप्रकृतेरुदयावलिकायां योऽन्तिमः संछोभः स जघन्यः स्थितिसंक्रम इति वचनं विरुध्येत। पुरुषवेदस्य संज्वलनानां च यो जघन्यः स्थितिबन्धः प्रागुक्तः, तद्यथा–पुरुषवेदस्याष्टौ संवत्सराणि, संज्वलनक्रोधस्य मासद्वयं, संज्वलनमानस्य मासः, संज्वलनमायाया अर्धमासः, स एव जघन्यः स्थितिबन्धोऽबाधाकालोनस्तेषां जघन्यः स्थितिसंक्रमः। अबाधारहिता हि स्थितिरन्यत्र संक्रामति, तत्रैव कर्मदलिकसंभवात्, अबाधाकालोनायाः कर्मस्थितेरेव कर्मनिषेकरूपत्वात्, जघन्यस्थितिबन्धे चान्तर्मुहूर्त्तप्रमाणैवाबाधा। न च जघन्यस्थितिसंक्रमणकालेऽबाधाकालमध्ये प्राग्बद्धं सत्कर्म प्राप्यते, तस्य तदानीं सर्वस्यापि क्षीणत्वात्। ततः पुरुषवेदादीनामन्तर्मुहूर्त्तोना स्वस्वजघन्यस्थितिर्जघन्यस्थितिसंक्रमः। तदानीं चैतेषां यत्स्थितिः स्वकीयेनोनेनाबाधालक्षणेनान्तर्मुहूर्त्तेन युक्तो जघन्यः स्थितिबन्धः ततः पुनरप्यावलिकाद्विकेनोनो द्रष्टव्यः। आवलिकाद्विकोनत्वं कथमिति चेदुच्यते–बन्धव्यच्छेदानन्तरं बन्धावलिकायामतीतायां चरमसमयबद्धाः पुरुषवेदादिप्रकृतिलताः संक्रमयितुमारभ्यन्ते, आवलिकामात्रेण च कालेन ताः संक्रम्यन्ते, संक्रमावलिकाचरमसमये च जघन्यः स्थितिसंक्रमः प्राप्यते, ततो बन्धावलिकासंक्रमावलिकारहित एवाबाधासहितो जघन्यस्थितिबन्धो जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः ॥ ३४ ॥

इयाणिं केवलिसत्तकम्माणं जहण्णट्ठितिसंकमपरूवणा—

जोगंतिगाणमंतोमुहुत्तिऊ सेसियाण पल्लस्स । भागो असंखियतमो जट्ठिइगो आलिगाइ सह ॥ ३५ ॥

(चू०)—जोगंते जाणि संकमेण विज्जंति कम्माणिं ताणि जोगंतिगाणि, तेसिं जोगंतिगाणं, के ते? भण्णइ–णिरतगति तिरियगति एगिंदियजाति बेइंदियजाति तेइंदियजाति चउरिंदियजाति णिरयाणुपुव्वी आतावं उज्जोवं थावरं

सुहुमं साहारणं एतेहिं विहूणा णामकंमा सेसा णउती, सातासातउच्चागोयणीयागोयसहिया चउणउती, एतेसिं सजोगिकेवलिचरिमसमए सव्वोवट्टणाए अंतोमुहुत्तिया ट्ठिती भवति। आवलिगूणा सा ओवट्टिज्जमाणा जहण्णट्ठितिसंकमो भवति। ताए आवलियाए सह जट्ठिति भवति। इदाणिं वुत्तसेसाणं पगतीणं जट्ठिती परिमाणं संकमो य भण्णति–'सेसियाण पल्लस्स भागो असंखिज्जतमो' 'सेसियाणं' इति–भणियसेसियाणं। कतरासिं? भण्णति–थीणगिद्धितिगमिच्छत्तसम्मामिच्छत्तअणंताणुबन्धिअपच्चक्खाणावरणपच्चक्खाणावरणणपुंसगवेयइत्थिवेय णिरयगतितिरियगतिएगिंदियजातिबेतिंदियजातितेतिंदियजातिचउरिन्दियजातिणिरयाणुपुव्वितिरियाणुपुव्वीआतावउज्जोवथावरसुहुमसाहारणमिति। एतासिं बत्तीसाण कम्मपगतीणं अप्पप्पणो खवगकालंमि चरिमो संछोहो पलितोवमस्स असंखेज्जतिभागमेत्तो सो सव्वोवट्टमाणाए लद्धो तं सव्वेसिं जहण्णट्ठितिसंकमपरिमाणं। जट्ठिति परिमाणं–'जट्ठितिगो आवलियाए सह'। 'जट्ठितिगो' इति–सव्वट्ठितिपरिमाणं, 'आवलियाए सह'त्ति–आवलियाए सह गणिज्जइ। णपुंसगइत्थिवेदाणं अंतोमुहुत्तेणं सह जट्ठिति भवति। कम्हा? भण्णति–अंतरकरणट्ठितो संकामेति त्ति। सेसाणं कम्माणं अंतरकरणेण विणा खवणा, सावलिगा जट्ठिति। जहण्णियठितिसंकमपरिमाणं भणितं ट्ठितिसंकमपरिमाणं (च)॥ ३५॥

(मलय०)–सम्प्रति केवलिसत्कर्मणां जघन्यस्थितिसंक्रमप्ररूपणार्थमाह—'जोगंतियाण'त्ति। 'योगिनि'–सयोगिकेवलिनि संक्रममाश्रित्यान्तः–पर्यन्तो यासां ता 'योग्यन्तिकाः'–नरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतवर्जाः

शेषा नाम्नो नवतिप्रकृतयः सातासातवेदनीयोच्चैर्गोत्रनीचैर्गोत्राणि च, एतासां सयोगिकेवलिचरमसमये सर्वापवर्तनयाऽऽन्तर्मौहूर्तिकी स्थितिर्भवति। सा चापवर्त्यमाना उदयावलिकारहिता जघन्यस्थितिसंक्रमः, उदयावलिका सकलकरणायोग्येति कृत्वा नापवर्त्यते, तया चावलिकया सहिताऽपवर्तनारूपजघन्यस्थितिसंक्रमकाले तासां यत्स्थितिः। नन्वासां प्रकृतीनामयोगिकेवलिनि समयाधिकावलिकाशेषायां स्थितौ वर्तमानो जघन्यः स्थितिसंक्रमः कस्मान्नाभिधीयते, क्षीणकषाय इव मतिज्ञानावरणीयादीनामिति? उच्यते—अयोगिकेवली भगवान् सकलसूक्ष्मबादरयोगप्रयोगरहितो मेरुरिव निष्प्रकम्पो नैकमप्यष्टानां करणानां मध्ये करणं प्रवर्तयति, निष्क्रियत्वात्, केवलमुदयप्राप्तानि वेदयते। ततः सयोगिकेवलिन एवैतासां जघन्यः स्थितिसंक्रमः प्राप्यते। 'सेसियाण' इत्यादि—उक्तशेषाणां प्रकृतीनां स्त्यानर्द्धित्रिकमिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणनपुंसकस्त्रीवेदनरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मातपोद्योतसाधारणलक्षणानां द्वात्रिंशत्प्रकृतीनामात्मीयात्मीयक्षपणकाले यश्चरमः संछोभः पल्योपमासंख्येयभागमात्रः स जघन्यः स्थितिसंक्रमः। 'यत्स्थितिकस्तु'—सर्वस्थितियुक्तस्तु स एवावलिकया सह युक्तो वेदितव्यः। अयमिह सम्प्रदायः—स्त्रीनपुंसकवेदवर्जानां प्रकृतीनामेकामधस्तादावलिकां मुक्त्वा शेषमुपरितनं पल्योपमासंख्येयभागमात्रं चरमखण्डमन्यत्र संक्रमयति। ततस्तासां जघन्यस्थितिसंक्रमकाले यत्स्थितिः स एव जघन्यस्थितिसंक्रम आवलिकयाऽभ्यधिको वेदितव्यः। स्त्रीनपुंसकवेदयोस्त्वन्तर्मुहूर्तेनाभ्यधिको, यतस्तयोश्चरमं स्थितिखण्डमन्तरकरणे स्थितः सन् संक्रमयति, अन्तरकरणे च कर्मदलिकं न विद्यते, किन्तु तत ऊर्ध्वम्, अन्तरकरणं चान्तर्मुहूर्तप्रमाणम्, ततोऽन्तर्मुहूर्तयुक्तो जघन्यस्थितिसंक्रमस्तयोर्यत्स्थितिरवसेया। शेषाणां तु प्रकृतीनामन्तरकरणं न भवति, ततस्तासामावलिकायुक्त एव यत्स्थितिः ॥३५॥

(उ०)-केवलिसत्कर्मणां जघन्यस्थितिसंक्रमप्ररूपणार्थमाह—'जोगंतियाणमंतोमुहुत्तिओ'। योगिनि-सयोगिकेवलिनि संक्रममा-
श्रित्यान्तो यासां ता 'योग्यन्तिकाः'-नरकद्विकतिर्यग्द्विकाद्यजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतवर्जाः शेषा नाम्नो नवतिप्रकृतयः
सातासातवेदनीयोच्चैर्गोत्रनीचैर्गोत्राणि च, तासां जघन्यस्थितिसंक्रमोऽन्तर्मुहूर्त्तप्रमाणः। तथाहि-एतासां सयोगिकेवलिचरमसमयेऽ-
न्तर्मुहूर्त्तप्रमाणा स्थितिर्विद्यते, सा च तस्मिन्नेव समये सर्वापवर्तनयाऽपवर्त्यायोग्यवस्थाप्रमाणा क्रियते, अयोग्यवस्था चान्तर्मौहूर्त्तिकी,
केवलमिदमन्तर्मुहूर्त्तं लघुतरमवसेयम्, सर्वापवर्तनया चापवर्त्यते स्थितिरुदयावलिकारहिता, उदयावलिकाया सकलकरणायोग्यत्वेनान-
पवर्तनीयत्वात्, ततोऽपवर्त्यमानोदयावलिकारहिता सा जघन्यस्थितिसंक्रमः, तया च सहितापवर्तनारूपजघन्यस्थितिसंक्रमकाले तासां
यत्स्थितिः। नन्वासां प्रकृतीनामयोगिकेवलिनि समयाधिकावलिकाशेषायां स्थितौ वर्तमाने जघन्यस्थितिसंक्रमः कुतो नोच्यते क्षीण-
कषाय इव मतिज्ञानावरणीयादीनाम्? उच्यते-अयोगिकेवलिनः सकलसूक्ष्मबादरयोगरहितत्वेन निष्क्रियस्य करणमात्राप्रवर्तकत्वात्। शेषाः
प्रकृतीरधिकृत्याह-'सेसियाण' इत्यादि। उक्तशेषाणां प्रकृतीनां स्त्यानर्द्धित्रिकमिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्या-
ख्यानावरणनपुंसकस्त्रीवेदनरकद्विकतिर्यग्द्विकाद्यजातिचतुष्टयस्थावरसूक्ष्मातपोद्योतसाधारणलक्षणानां द्वात्रिंशत्सङ्ख्यानां स्वस्वक्षपणकाले
यश्चरमसंक्षोभः-पल्योपमासङ्ख्येयभागमात्रः, स जघन्यः स्थितिसंक्रमः, यत्स्थितिकस्तु-स्वकालीनः सर्वस्थितियुक्तस्तु संक्रमावलिकया
सह युक्तो वेदितव्यः। इयं च यत्स्थितिः स्त्रीनपुंसकवेदावतिरिच्याभिहिता द्रष्टव्या, यतः स्त्रीनपुंसकवेदवर्जानां शेषप्रकृतीनामेकाम-
धस्तादावलिकां मुक्त्वा शेषमुपरितनं पल्योपमासङ्ख्येयभागमात्रं चरमखण्डमन्यत्र संक्रमयति, ततस्तासां जघन्यस्थितिसंक्रमकाले
यत्स्थितिः स एव जघन्यस्थितिसंक्रम आवलिकयाऽभ्यधिको भवति। स्त्रीनपुंसकवेदयोस्तु चरमं स्थितिखण्डमन्तरकरणे स्थितेन

संक्रम्यते, अन्तरकरणे च कर्मदलिकं न वेद्यते, किं तु तत ऊर्ध्वम् । अन्तरकरणं चान्तर्मुहूर्त्तप्रमाणं, ततोऽन्तर्मुहूर्त्तयुक्तो जघन्यस्थितिसंक्रमस्तयोर्यत्स्थितिः संभवतीति ॥ ३५ ॥



उत्कृष्टसंक्रमस्थितेर्यत्स्थितेश्च प्रमाणम् ।

| प्रकृतिषु | संक्रमस्थितिप्रमाणं | यत्स्थितेः प्रमाणं |
|---|---|---|
| मिथ्यात्ववर्जबन्धोत्कृष्टानां | आवलिकाद्विकहीनं | एकावलिकाहीनं |
| संक्रमोत्कृष्टानां | आवलिकात्रिकहीनं | आवलिकाद्विकहीनं |
| मिथ्यात्वस्य | अन्तर्मु० हीनं ७० सा० को० को० | अन्तर्मु० हीनं ७० सा० को० को० |
| सम्यक्त्वमिश्रयोः | आवलिकाद्विकाधिकान्तर्मु०हीन७०सा०को० | सावलिकान्तर्मु० ही ७० सा० को० |

## जघन्यस्थितिसंक्रमप्रमाणयन्त्रम् ।

| प्रकृतीनां | जघ० स्थि० संक्रमप्रमाणं | जघ० यत्स्थिति-प्रमाणं | कदा ? |
|---|---|---|---|
| ज्ञाना० ५ दर्श० ४ विघ्न ५ सं० लोभ सम्य० ४ आयुषां | १ समयमात्रं | समयाधिकावलिका १ १ | समयाधिकावलिकाशेषे सत्ताविच्छेदसमये ( अपवर्त्तनया ) |
| निद्रा-प्रचलयो. | १ समयमात्रं | २ आवलिका आव० असं० भागाधिका | आ० असंख्येयभागाधिके आवलिकाद्विकशेषे संक्रमान्ते (अपवर्त्तनया) १२ मे गु० |
| हास्या० ६<br>पुंवेदस्य<br>सं० क्रोधस्य<br>सं० मानस्य<br>सं० मायाया. | संख्येयवर्षाणि<br>अवाधोन ८ वर्षा०<br>अवाधोन २ मास०<br>अवाधोन १ मास०<br>अवाधोन ०॥ मास० | अन्तर्मु० अधिकसंख्येयव०<br>२ आव० ऊन ८ वर्ष<br>,, २ मास०<br>,, ३ मास०<br>,, ०॥ मास० | स्वसंक्रमावलिकान्त्यसमय एता दशापि परप्रकृतौ |

| | | | |
|---|---|---|---|
| नरक २-तिर्य० २-कुजाति ४-स्था० सू०-साधा०-आत० उद्योत इति १३ वर्ज नाम ९० वेदनीय २ गोत्राणां २ | उदयावलिकारहितं अन्तर्मुहूर्त | उदयाव० सहान्तर्मुहूर्त्त | सयोगिकेवलिगुणस्थानान्ते (सर्वापवर्त्तनया) |
| उक्तशेषाणां ३० | पल्योपमाऽसंख्येयभागः | पल्योपमाऽसं० भाग० संक्रमाव० सहितः | स्वक्षपणकाले |
| स्त्री-नपुंसकयोः | पल्योपमासंख्येयभागः | अन्तरकरणरूपमन्तर्मु० अधिकपल्योपमासंख्येयभागः | ” |

इयाणिं साइअणाइपरूवणा भण्णइ। पढमं ताव मूलपगतीणं—

**मूलठिई अजहन्नो सत्तण्ह तिहा चउव्विहो मोहे। सेसविगप्पा तेसिं दुविगप्पा संकमे हुंति ॥ ३६ ॥**

(चू०)—'मूलट्ठिति' त्ति-सत्तण्हं मूलपगतिट्ठितीणं 'अजहण्ण' इति-जहन्नतो अन्नं सव्वं अजहन्नं भवति। 'सत्तण्हं' ति मोहणिज्जवज्जाणं सत्तण्हं कम्माणं, 'तिहा' इति-अणाति य धुव अधुवो य। मोहवज्जाणं सत्तण्हं कम्माणं अजहण्णतो ठितिसंकमो अणातितो धुवो अधुवो इति तिविहो। कहं ? भण्णइ-णाणावरणदंसणावरण-

अंतराइयाणं खीणकसायस्स समयाहियाए आवलियाते सेसाते जहण्णो ठितिसंकमो लब्भति। णामगोयवेयणिज्जाउगाणं सजोगिकेवलिस्स चरिमसमए अंतोमुहुत्तो त्ति जहण्णतो ठितिसंकमो लब्भति। सो य तेसिं सातिओ अधुवो। तम्हा अजहण्णतो ठितिसंकमो अणातिबन्धादेव अणाइओ, धुवो अभवसिद्धियाणं, अधुवो भवियाणं, कारणं पुव्वभणियं। 'चउव्विहो मोहे' इति–अजहण्णठितिसंकमो मोहस्स चउव्विहो। कहं? भण्णइ–मोहणीयस्स जहण्णतो ठितिसंकमो सुहुमरागखवगस्स समयाहियावलियाए वट्टमाणस्स लब्भति। सो य साइय अधुवो। एयं मोत्तूणं सेसं अजहण्णं खाइगसम्मदिट्ठिस्स उवसमसेढिं पडिवण्णस्स मोहस्स उवसमं काउं पुणो परिवट्टमाणस्स सातितो, तं ठाणमपत्तपुव्वस्स अणादितो, धुवो अभवियाणं, अधुवो भवियाणं। 'सेसविगप्पा तेसिं दुविगप्पा संकमे' त्ति। 'सेसा वियप्पा' इति–उक्कोसअणुक्कोसजहण्णगा, 'तेसिं' इति–कम्माणं, 'दुविगप्पा संकमे होन्ति'–सातिता अधुवा। कहं? भण्णति–जो उक्कोसं ठितिं बंधति सो चेव उक्कोसं संकामति। जस्स सव्वकालं उक्कोसाट्ठितिसंकमो ण लब्भति तस्सेव अणुक्कोसो लब्भति त्ति। ते दो वि मिच्छदिट्ठिस्स लब्भंति। दोण्हवि उक्कोमाणुक्कोसाणं सादिय–अधुवो ठितिसंकमो। जहण्णगस्स कारणं पुव्वुत्तं ॥ ३६ ॥

(मलय०)–तदेवमुक्तं जघन्यस्थितिसंक्रमपरिमाणम्। सम्प्रति साद्यनादिप्ररूपणावसरः। सा च द्विधा–मूलप्रकृतीनामुत्तरप्रकृतीनां च। तत्र मूलप्रकृतीनां साद्यनादिप्ररूपणार्थमाह––'मूलठिइ' त्ति। इह जघन्यादन्यत्सर्वमजघन्यं यावदुत्कृष्टम्। उत्कृष्टादन्यत्सर्वमपि यावज्जघन्यं तावदनुत्कृष्टम्। तत्र मोहनीयवर्जानां सप्तानां कर्मणामजघन्यस्थितिसंक्रमस्त्रिधा, तद्यथा- अनादिर्ध्रुवोऽध्रुवश्च। तथाहि–

ज्ञानावरणदर्शनावरणान्तरायाणां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य जघन्यः स्थितिसंक्रमो भवति । नामगोत्रवेदनीयायुषां तु सयोगिकेवलिचरमसमयेऽन्तर्मुहूर्तप्रमाण आवलिकारहितो जघन्यः स्थितिसंक्रमः । स च सादिरध्रुवश्च । तस्मादन्यः सर्वोऽपि स्थितिसंक्रमोऽजघन्यः। स चानादिः, ध्रुवोऽभव्यानां, भव्यानामध्रुवः। 'चउव्विहो मोहे' त्ति–मोहे मोहनीयेऽजघन्यः स्थितिसंक्रमश्चतुर्विधः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि–मोहनीयस्य जघन्यः स्थितिसंक्रमः सूक्ष्मसंपरायस्य क्षपकस्य समयाधिकावलिकायां शेषायां स्थितौ, ततोऽसौ सादिरध्रुवश्च । तस्माच्च जघन्यादन्यः सर्वोऽप्यजघन्यः । स च क्षायिकसम्यग्दृष्टेरुपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया । शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणास्तेषां कर्मणां संक्रमे–संक्रमविषये द्विविकल्पा भवन्ति, तद्यथा–सादयोऽध्रुवाश्च । तथाहि–य एवोत्कृष्टां स्थितिं बध्नाति स एवोत्कृष्टं स्थितिसंक्रमं करोति, उत्कृष्टां च स्थितिं बध्नाति उत्कृष्टे संक्लेशे वर्तमानः, न चोत्कृष्टः संक्लेशः सर्वदैव लभ्यते, किन्त्वन्तरान्तरा, शेषकालं त्वनुत्कृष्टः । तत एतौ द्वावपि साद्यध्रुवौ । जघन्यश्च साद्यध्रुवः प्रागेव भावितः ॥३६॥

(उ०)–तदेवमुक्तं जघन्यस्थितिसंक्रमपरिमाणम्, सम्प्रति साद्यनादिप्ररूपणावसरः। सा च द्विधा–मूलप्रकृतीनामुत्तरप्रकृतीनां च। तत्र मूलप्रकृतीनां साद्यनादिप्ररूपणामाह—मूलस्थितिसंक्रमे मोहनीयवर्जानां सप्तानां कर्मणामजघन्यः स्थितिसंक्रमस्त्रिधा–अनादिर्ध्रुवोऽध्रुवश्चेति । तथाहि–ज्ञानावरणदर्शनावरणान्तरायाणां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य जघन्यः स्थितिसंक्रमो भवति। नामगोत्रवेदनीयायुषां तु सयोगिकेवलिचरमसमयेऽन्तर्मुहूर्त्तप्रमाण उदयावलिकारहितो जघन्यस्थितिसंक्रमः संभवति। स च सादिरध्रुवश्च। तस्मादन्यः सर्वोऽपि स्थितिसंक्रमोऽजघन्यः, स चानादिः, ध्रुवोऽभव्यानां, भव्यानामध्रुवः। 'मोहे'-

मोहनीयेऽजघन्यः स्थितिसंक्रमश्चतुर्विधः—सादिरनादिर्ध्रुवोऽध्रुवश्चेति। तथाहि—मोहनीयस्य जघन्यः स्थितिसंक्रमः क्षपकसूक्ष्मसंपरायस्य समयाधिकावलिकायां शेषायां भवति, ततोऽसौ सादिरध्रुवः। तस्माच्च जघन्यादन्यः सर्वोऽप्यजघन्यः, स च क्षायिकसम्यग्दृष्टेरुपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया। शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणाः तेषां कर्मणां द्विविकल्पा भवन्ति—सादयोऽध्रुवाश्च। तथाहि—उत्कृष्टां स्थितिं बध्नन्नेवोत्कृष्टस्थितिसंक्रमं करोति, स्थितिं चोत्कृष्टामुत्कृष्टसंक्लेशवर्ती बध्नाति, उत्कृष्टसंक्लेशश्च सर्वदा न लभ्यते, किंत्वन्तरान्तरा, उत्कृष्टस्थितिबन्धसंक्रमाभावकाले चानुत्कृष्ट इत्येतौ द्वावपि साद्यध्रुवौ, जघन्यश्च साद्यध्रुवः प्रागेव भावितः ॥ ३६ ॥

इयाणिं उत्तरपगतीणं भण्णइ—

**धुवसंतकम्मिगाणं तिहा चउद्धा चरित्तमोहाणं । अजहन्नो सेसेसु य दुहेतरासिं च सव्वत्थ ॥३७॥**

(चू०)—'धुवसंतकंमियाणं तिहा'—धुवसंतकम्मं जासिं पगतीणं तातो धुवसंतकंमियातो, तासिं च तीसुत्तरं सतं। कयरासिं पगतीणं तीसुत्तरसतं? भण्णाति—इमं णिरयगतिमणुयगतिदेवगतिविउव्वितसत्तगं आहारसत्तगं निरयाणुपुव्वी मणुयाणुपुव्वी देवाणुपुव्वी तित्थगरणामं सम्मत्तं सम्मामिच्छत्तं उच्चागोयं चत्तारि आउगाणि एयाहिं अट्ठावीसाए पगतीहिं रहितं अट्ठावण्णसयं होति तीसुत्तरं सतं। एयातो तिसुत्तरसतातो चारित्तमोहं सुद्धं सेसं पंचुत्तरं सतं। एतस्स पंचुत्तरसतस्स अप्पप्पणो खवणंते जहण्णतो ट्ठितिसंकमो। तस्स पमाणं पुव्वुत्तं। सो य जहण्णगट्ठितिसंकमो सातिय—अधुवो। जहण्णस्स ट्ठितिसंकमस्स उवरि पवाहातो तासिं

अजहन्नगे ठितिसंकमे सातियं नत्थि, धुवसत्तकम्मत्तादेव। अणादीयं धुवं अभवियाणं, अधुवं भवियाणं। चउद्धा चरित्तमोहाणं। 'अजहण्ण'त्ति–चरित्तमोहाणं अजहण्णगो ठितिसंकमो चउव्विहो। कहं? भण्णइ–उवसमसेढीए उवसंताणं संकमाभावो, पुणो वि परिवडंतो संकामेतुमाढवेति, ततो पभिति सातियं, अणातितो तं ठाणं अपत्तपुव्वस्स, धुवं अभवियाणं, अधुवं भवियाणं। 'सेसेसु तु दुहा'–सेसेसु उक्कोसअणुक्कोसजहण्णगेसु दुहा–सातितो अधुवो य। उक्कोसअणुक्कोसाणं जहा मूलपगतीणं तहा भाणियव्वं। जहण्णगं अप्पप्पणो ठ्तितिखंडवोच्छेदे। तं च सादितं अधुवं। 'इयरासिं च सव्वत्थ' 'इतरासिं' इति–अधुवसंतकंमियाणं पुव्वुत्ताणं अट्ठावीसाए 'सव्वत्थे' त्ति–जहण्णअजहण्णुक्कोसअणुक्कोसेसु चउसु वि साति–अधुवो ट्ठितिसंकमो। कहं? भण्णइ–अधुवसंतकम्मत्तादेव। सादि–अणादिपरूवणा गता ॥३७॥

(मलय०)–सम्प्रत्युत्तरप्रकृतीनां साद्यनादिप्ररूपणार्थमाह —'धुव'त्ति–ध्रुवं सत्कर्म यासां ता ध्रुवसत्कर्मिकास्त्रिंशदुत्तरशतसंख्याः। तथाहि–नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरनामसम्यक्त्वसम्यग्मिथ्यात्वोच्चैर्गोत्रायुश्चतुष्टयलक्षणा अष्टाविंशतिसंख्या अध्रुवसत्कर्मिकाः प्रकृतयस्ता अष्टापञ्चाशदधिकात् शतादपनीयन्ते, ततः शेषं त्रिंशदुत्तरमेव शतं ध्रुवसत्कर्मिकाणां भवति। तस्मादपि चारित्रमोहनीयप्रकृतयः पञ्चविंशतिसंख्या अपनीयन्ते, तासां पृथग्वक्ष्यमाणत्वात्। ततः शेषस्य पञ्चोत्तरशतस्य स्वस्वक्षपणपर्यवसाने जघन्यः स्थितिसंक्रमो भवति। स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः। स चानादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया। चारित्रमोहनीयप्रकृतीनां पञ्चविंशतिसंख्यानामजघन्यः स्थितिसंक्रमश्चतुर्धा। तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–उपशमश्रेण्यामुप-

शान्तौ सत्यां संक्रमाभावः, उपशमश्रेणितः प्रच्यवने च पुनरप्यजघन्यं स्थितिसंक्रममारभते, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनर-
नादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया। 'सेसेसु य दुहा'–शेषेपूत्कृष्टानुत्कृष्टजघन्येपु द्विधा प्ररूपणा कर्त्तव्या, तद्यथा–सादिरध्रुवश्च।
तत्रोत्कृष्टानुत्कृष्टयोर्यथा मूलप्रकृतिषु भावना कृता तथाऽत्रापि कर्त्तव्या, जघन्यस्थितिसंक्रमः स्वस्वक्षयावसरे प्राप्यते, ततोऽसौ सादिरध्रुवश्च।
'इयराणि च' इत्यादि–इतरासामध्रुवसत्कर्मणां पूर्वोक्तानामष्टाविंशतिसंख्यानां सर्वत्रापि सर्वेष्वपि जघन्याजघन्योत्कृष्टानुत्कृष्टेपु द्विधा
प्ररूपणा कर्त्तव्या, तद्यथा–सादिरध्रुवश्च। सा च साद्यध्रुवताऽध्रुवसत्कर्मत्वादेव परिभावनीया ॥३७॥

(उ०)–अथोत्तरप्रकृतीनां साद्यनादिप्ररूपणामाह—नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थंकरनामसम्यक्त्वसम्य-
ग्मिथ्यात्वोच्चैर्गोत्रायुश्चतुष्टयलक्षणा अष्टाविंशतिरध्रुवसत्कर्मिकाः प्रकृतयः। ततः शेषं त्रिंशदुत्तरं शतं ध्रुवसत्कर्मिकाणां भवति।
ततोऽपि चारित्रमोहनीयप्रकृतयः पञ्चविंशतिरपनीयन्ते, पृथग्वक्ष्यमाणत्वात्। ततः शेषस्य पञ्चोत्तरशतस्य स्वस्वक्षपणपर्यवसाने जघन्य-
स्थितिसंक्रमो भवति, स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः, स चानादिः, ध्रुवश्चाभव्यापेक्षया, भव्यापेक्षया चाध्रुव इति
त्रिधा। चारित्रमोहनीयप्रकृतीनां पञ्चविंशतेरजघन्यः स्थितिसंक्रमश्चतुर्धा–सादिरनादिर्ध्रुवोऽध्रुवश्चेति। तथाहि–उपशमश्रेणावुपशान्तानां
तासां संक्रमाभावः, उपशमश्रेणितः प्रतिपाते च पुनरप्यजघन्यः स्थितिसंक्रम आरभ्यत इत्यसौ सादिः, तत्स्थानमप्राप्तस्यानादिः। अध्रुव-
ध्रुवौ भव्याभव्यापेक्षया। शेषेपूत्कृष्टानुत्कृष्टजघन्येपु द्विधा विकल्पः–सादिरध्रुवश्चेति। तत्रोत्कृष्टानुत्कृष्टयोर्भावना मूलप्रकृतिवत्कार्या।
जघन्यस्थितिसंक्रमस्तु स्वस्वक्षयावसरे प्राप्यत इत्यसौ सादिरध्रुवश्च। इतरासामध्रुवसत्कर्मणामष्टाविंशतिसङ्ख्यानां प्रागुक्तानां सर्वत्रापि
सर्वेष्वपि जघन्याजघन्योत्कृष्टानुत्कृष्टेपु संक्रमेपु द्विधा विकल्पः–सादिरध्रुवश्चेति। सा च साद्यध्रुवताऽध्रुवसत्कर्मत्वादेवावसेया ॥ ३७॥

## मूलप्रकृतिषु स्थितिसंक्रमस्य साद्यादिभङ्गयन्त्रम् ।

| मूलप्रकृतयः | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुव | सादिः | अध्रुवः |
| ज्ञाना० दर्श० अन्त० | — | जघन्यसंक्रमकाले व्यवच्छे० | भव्यस्य | अभव्यस्य | १२ मे गु० समयाधिकाऽऽव०शेषे | विच्छेदभावात् | परावर्त्तमानत्वात् | परावर्त्तमानत्वात् | पराव० | पराव० |
| नाम–गोत्र–वेदनीय–आयु० | — | " | " | " | १३ मान्ते | " | " | " | " | " |
| मोहनीय० | क्षायिकोपशमकस्य ११ तः प्रतिपततः | भव्यानां | साद्यप्राप्तस्य | अभव्यस्य | क्ष० १० मे | " | " | " | " | " |

उत्तरप्रकृतिपु स्थितिसंक्रमस्य साद्यादिभङ्गयन्त्रम् ।

| उत्तरप्रकृतयः | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|
| | सादि· | अध्रुव· | अनादिः | ध्रुव· | सादिः | अध्रुव· | सादिः | अध्रुवः | सादिः | अध्रुवः |
| २५ चारित्र-मोहनीयानाम् | ११ त पतितस्य | भव्यानां | तत्स्था-नाप्रा-प्तस्य | अभ० | स्वक्षय-काले | भव्यानां | उत्कृष्टेन परावर्त्त-मानत्वात् | परावर्त्त- | अनुत्कृष्टे-न परा० त्वात् | परावर्त्त-मानत्वात् |
| २८ अध्रुवस-त्ताकानां | अध्रु० स-त्ताकत्वात् | अध्रु० स-त्ताकत्वात् | — | — | अध्रु० स-त्ताकत्वात् | अध्रुवस-त्ताकत्वात् | अध्रुवस-त्ताकत्वात् | अध्रुवस-त्ताकत्वात् | अध्रुव सत्ता० | अध्रुव सत्ता० |
| १०५ उत्त-शेषाणा | — | भव्यानां क्षयिष्य-माणत्वात् | जघन्य स्थाना प्राप्तस्य | अभ० | स्वक्षय-समये | भव्यानां | परावर्त्त-मानत्वात् | परावर्त्त-मानत्वात् | परावर्त्त-मानत्वात् | परावर्त्त-मानत्वात् |

इयाणिं सामित्तं भण्णति । तं च उक्कोसं जहण्णगमिति दुहा । उक्कोसणिरूवणत्थं इमा गाहा—

वंधाओ उक्कस्सो जासिं गंतूण आलिगं परओ । उक्कस्स सामिओ संकमेण जासिं दुगं तासिं ॥३८॥

(चू०)—जासिं पगतीणं बन्धुक्कसो ठितिसंकमो तासिं उक्कस्सठितिबंधगा एव णेरइयतिरियमणुयदेवा बन्धावलियाए परतो उक्कोसं संकामंति। 'संकमेण जासिं दुगं तासिं' ति—संकमेण उक्कोसठितिसंकमो जासिं पगतीणं तासिं दुआवलियं गंतूणं ते चेव णारगादी सामिणो। जहासंभवं 'दुगं' ति बन्धावलियसंकमावलियविहूणो ठितिसंकमो ॥ ३८ ॥

(मलय०)—सम्प्रति क्रमप्राप्तं स्वामित्वमभिधानीयम्। तच्च द्वेधा—उत्कृष्टस्थितिसंक्रमस्वामित्वं जघन्यस्थितिसंक्रमस्वामित्वं च। तत्रोत्कृष्टस्थितिसंक्रमस्वामित्वं प्रतिपिपादयिषुराह—'बंधाउ'त्ति—यासां प्रकृतीनां 'बन्धात्' बन्धनात् उत्कृष्टः स्थितिबन्धो भवति तासां ते एवोत्कृष्टस्थितिबन्धका देवनैरयिकतिर्यङ्मनुष्याः, 'गंतूण आलिगं परउ' त्ति—बन्धावलिकां 'गत्वा' अतिक्रम्य 'परतः' बन्धावलिकायामतीतायामित्यर्थः, उत्कृष्टस्वामिनः—उत्कृष्टस्थितिसंक्रमस्वामिन उत्कृष्टां स्थितिं संक्रमयन्तीत्यर्थः। यासां पुनः प्रकृतीनामुत्कृष्टा स्थितिः संक्रमेण प्राप्यते तासां द्विकं बन्धावलिकासंक्रमावलिकालक्षणं गत्वाऽतिक्रम्य परत उत्कृष्टस्वामिनः, बन्धावलिकासंक्रमावलिकयोरतीतयोरुत्कृष्टस्थितिसंक्रमस्वामिनो भवन्तीत्यर्थः ॥३८॥

(उ०)—अथ क्रमप्राप्तं स्वामित्वमभिधेयम्। तच्च द्विधा—उत्कृष्टस्थितिसंक्रमस्वामित्वं जघन्यस्थितिसंक्रमस्वामित्वं च। तत्राद्यमधिकृत्याह—यासां प्रकृतीनां बन्धादुत्कृष्टः स्थितिबन्धो भवति, तासां त एवोत्कृष्टस्थितिबन्धका देवनैरयिकतिर्यग्मनुष्या बन्धावलिकां गत्वा परतो बन्धावलिकायामतीतायामित्यर्थः, उत्कृष्टस्वामिनः—उत्कृष्टस्थितिसंक्रमस्वामिनः। यासां पुनरुत्कृष्टा स्थितिः संक्रमेण प्राप्यते, तासां द्विकं बन्धावलिकासंक्रमावलिकालक्षणं गत्वा परत उत्कृष्टस्थितिसंक्रमस्वामिनो भवन्ति ॥३८॥

सम्मत्तसम्माभिच्छत्ताण उक्कस्ससामी भण्णति—

**तस्संतकम्मिगो बंधिऊण उक्कस्सियं मुहुत्तंता। सम्मत्तमीसगाणं आवलिगा सुद्धदिट्ठिओ ॥ ३९ ॥**

(चू०)—'तस्संतकम्मिगो' इति। सम्मत्तसम्माभिच्छत्तसंतकम्मिगो मिच्छदिट्ठी 'बन्धिउण उक्कस्सिगं' ति—मिच्छत्तस्स उक्कोसं ट्ठितिं बंधिऊण 'मुहुत्तंता' इति—अंतोमुहुत्ता परिवडितूणं सम्मत्तं पडिवण्णस्स अंतोमुहुत्तूणा भिच्छट्ठिती सम्मत्तसम्माभिच्छत्तेसु संकमते। ततो आवलियं गंतूणं सम्मदिट्ठि ओवट्टणाए सम्मत्तं संकामेति, सम्माभिच्छत्तं सम्मत्ते संकामेति ओवट्टेति वि। 'सुद्धदिट्ठि' त्ति—सम्मदिट्ठी। उक्कोससाभित्तं सम्मत्तं ॥३९॥

(मलय०)—सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टस्थितिसंक्रमस्वामिनमाह—'तस्संतकम्मिगो' त्ति। 'तत्सत्कर्मा'—सम्यक्त्वसम्यग्मिथ्यात्वसत्कर्मा मिथ्यादृष्टिरुत्कृष्टां स्थिति सप्ततिसागरोपमकोटीकोटीप्रमाणां बद्ध्वा ततोऽन्तर्मुहूर्तादनन्तरं मिथ्यात्वात् प्रतिपत्य सम्यक्त्वं प्रतिपद्यते। ततोऽसौ 'शुद्धदृष्टिः' सम्यग्दृष्टिरन्तर्मुहूर्तोनामुत्कृष्टां मिथ्यात्वस्थितिं सम्यक्त्वसम्यग्मिथ्यात्वयोः संक्रमयति। ततः संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वस्थितिमपवर्तनाकरणेन स्वस्थाने संक्रमयति। सम्यग्मिथ्यात्वस्थितिमपि संक्रमावलिकायामतीतायामुदयावलिकात उपरितनी सम्यक्त्वे संक्रमयति, अपवर्तयति च। तत एवं तिसृणामपि दर्शनमोहनीयप्रकृतीनामुत्कृष्टस्थितिसंक्रमस्वामी सम्यग्दृष्टिरेवेति ॥३९॥

(उ०)—'तत्सत्कर्मा'—सम्यक्त्वसम्यग्मिथ्यात्वसत्कर्मा मिथ्यादृष्टिर्बद्ध्वोत्कृष्टां—सप्ततिकोटाकोटिसागरोपमप्रमाणां ततोऽन्तर्मुहूर्त्तादनन्तर मिथ्यात्वात् प्रतिपत्य सम्यक्त्वमालम्बते, स शुद्धदृष्टिरन्तर्मुहूर्त्तोनामुत्कृष्टां मिथ्यात्वस्थिति सम्यक्त्वे सम्यग्मिथ्यात्वे च संक्र-

मयति । ततः संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं स्थितिमपवर्तनाकरणेन स्वस्थाने संक्रमयति । सम्यग्मिथ्यात्वस्थितिं च सम्यक्त्वे संक्रमयत्यपर्वर्त्तयति च । ततो दर्शनमोहत्रयस्याप्युत्कृष्टस्थितिसंक्रमस्वामी सम्यग्दृष्टिरेव ॥३९॥

उत्कृष्टस्थितिसंक्रमस्वामिनः

| प्रकृतीनाम् | स्वामिनः | विशेषः |
|---|---|---|
| वंधोत्कृष्टानां | चतुर्गतिकाः | वन्धावलिकापरतः |
| संक्रमोत्कृष्टानां | ,, | वंधसंक्रमावलिका२परतः |
| दर्शनमोहानां | सम्यग्दृष्टयः | |

इयाणिं जहण्णगठितिसंकमसामित्तं भणति—

दंसणचउक्कविग्घावरणं समयाहिगालिगा छउमो । णिद्दाणावलिगदुगे आवलियअसंखतमसेसे॥ ४०॥

(चू०)—चक्खुदंसणावरणअचक्खुदंसणावरणओहिदंसणावरणकेवलदंसणावरणपंचअंतराइयपंचविहणाणावरणजहण्णियट्ठितिसंकमसामी खीणकसातो समयाहियावलियसेसे वट्टमाणो। 'णिद्दाणावलिगदुगे आवलि-

गअसंखमसेसे' णिद्दापयलाणं स एव खीणकसायो दोहिं आवलिगाहिं ततियावलियाए य असंखेज्जतिभागे सेसे वट्टमाणो संकामेति ॥ ४० ॥

(मलय०)-तदेवमुक्त उत्कृष्टस्थितिसंक्रमस्वामी । सम्प्रति जघन्यस्थितिसंक्रमस्वामिनमाह—'दंसण'त्ति-चक्षुरचक्षुरवधिकेवलदर्शनावरणीयानां 'विग्घ'त्ति-पञ्चानामन्तरायप्रकृतीनां पञ्चानां च ज्ञानावरणीयप्रकृतीनां जघन्यस्थितिसंक्रमस्वामी 'छउमो'त्ति-क्षीणकषायवीतरागच्छद्मस्थः स्वगुणस्थानकस्य समयाधिकावलिकाशेषे वर्तमानः, तथा 'निद्दयोः'-निद्राप्रचलयोः स एव क्षीणकषायवीतरागच्छद्मस्थो द्वयोरावलिकयोः शेषयोस्तृतीयस्याश्चावलिकाया असंख्येयतमे भागे शेषे वर्तमानो जघन्यस्थितिसंक्रमस्वामी भवति ॥४०॥

(उ०)-उक्त उत्कृष्टस्थितिसंक्रमस्वामी, अथ जघन्यस्थितिसंक्रमस्वामिनिरूपणां चिकीर्षुराह—'दर्शनचतुष्कं'-चक्षुरचक्षुरवधिकेवलदर्शनावरणीयलक्षणं, 'विघ्नाः'--पञ्चान्तरायाः, 'आवरणानि'-पञ्च ज्ञानावरणानि, एतावतीनां प्रकृतीनां समयाधिकावलिकाशेषे वर्तमानः 'छउमो'त्ति-क्षीणकषायवीतरागच्छद्मस्थो जघन्यस्थितिसंक्रमस्वामी । तथा 'निद्दयोः'-निद्राप्रचलयोः स एवावलिकाद्विके तृतीयस्याश्चावलिकाया असङ्ख्येयतमे भागे शेषे वर्तमानो जघन्यस्थितिसंक्रमस्वामी ॥४०॥

इयाणिं वेयगसम्मत्तस्स—

समयाहिगालिगाए सेसाए वेयगस्स कयकरणो । सक्खवगचरमखंडगसंछुभणे दिट्ठिमोहाणं ॥४१॥

(चू०)—दंसणमोहक्खवगे(गस्स) मिच्छत्तसम्मामिच्छत्ते खवेत्तु सम्मत्तं सव्वोवट्टणाए ओवट्टेत्तूण वेदेमाणस्स चतुगतिगस्स अण्णयरस्स समयाहियावलिताए सेसाए पवट्टमाणस्स जहण्णगो ठितिसंकमो। ततो परं खाइय-

सम्मदिट्ठी होस्सति। 'कयकरणो'त्ति–खवणकरणे वट्टमाणो चेव। वेदगसम्मत्त(स्स उत्तं),मिच्छत्तसम्मामिच्छत्ताणं भण्णइ–'सखवगचरिमखंडगसंछुभणा दिट्ठिमोहाणं' ति। मिच्छत्तसम्मामिच्छत्ताणं अप्पप्पणो खवणचरिमखंडगे वट्टमाणो मणुतो अविरतसम्मादिट्ठी देसविरतो वा विरतो वा जहण्णठितिसंकामगो लब्भति। 'दिट्ठिमोहाणं' (ति मिच्छत्तसम्मा)मिच्छत्ताणं ॥ ४१ ॥



(मलय०)–वेदकसम्यक्त्वस्य जघन्यस्थितिसंक्रमस्वामिनमाह—'समय'त्ति। दर्शनमोहनीयक्षपको मनुष्यो जघन्यतोऽपि वर्षाष्टकादुपरि वर्तमानो मिथ्यात्वसम्यग्मिथ्यात्वे क्षपयित्वा सम्यक्त्वं च सर्वापवर्तनयाऽपवर्त्य सम्यक्त्वं वेदयमानस्ततः सम्यक्त्वे क्षपितशेषे सति कश्चिच्चतसृणां गतीनामन्यतमस्यां गतौ प्रयाति। ततश्चतुर्गतिकानामन्यतमः सम्यक्त्वस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानः 'कयकरणो'त्ति–कृतकरणः क्षपणकरणेऽभ्युद्यतो जघन्यस्थितिसंक्रमस्वामी भवति। मिथ्यात्वसम्यग्मिथ्यात्वयोर्जघन्यस्थितिसंक्रमस्वामिनमाह–'सक्खवग'इत्यादि। 'दृष्टिमोहयोः'–मिथ्यात्वसम्यग्मिथ्यात्वयोः क्षपणकाले यच्चरमखण्डं,'संछुभणं'–सर्वापवर्तनेनापवर्त्य परस्थाने पल्योपमासंख्येयभागमात्रचरमखण्डे प्रक्षेपणम्, तत्र वर्तमानो मनुष्योऽविरतसम्यग्दृष्टिर्देशविरतः प्रमत्तोऽप्रमत्तो वा जघन्यस्थितिसंक्रमस्वामी भवति ॥४१॥

(उ०)—'कृतकरणो'–दर्शनमोहनीयक्षपणाय प्रवर्त्तितकरणो मनुष्यो जघन्यतोऽपि वर्षाष्टकस्योपरि वतमानो मिथ्यात्वसम्यग्मिथ्यात्वे क्षपयित्वा सम्यक्त्वं सर्वापवर्तनयाऽपवर्त्य क्षपितशेषसम्यक्त्वश्चतुर्गतिको भूत्वा चतसृणां गतीनामन्यतमस्यां गतौ गत्वा वेदकसम्यक्त्वस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमान उदयावलिकात उपरितनीं समयमात्रां स्थितिमपवर्तनासंक्रमेणाधस्तने स्वोदयाव-

गतौ वर्तमानस्तस्य जघन्यस्थितिसंक्रमस्वामी। 'दृष्टिमोहयोः'–मिथ्यात्वसम्यग्मि-
लिकात्रिभागे समयाधिके प्रक्षिपंश्चतसृणामन्यतमस्यां गतौ वर्तमानस्तस्य जघन्यस्थितिसंक्रमस्वामी। 'दृष्टिमोहयोः'–मिथ्यात्वसम्यग्मि-
ख्यान्ययोर्मनुष्योऽविरतसम्यग्दृष्टिर्देशविरतः प्रमत्तोऽप्रमत्तो वा स्वक्षपकः क्षपणकाले सर्वापवर्तनेनापवर्त्य कृतस्य चरमखण्डस्य पल्योप-
मासंख्येयभागमात्रस्य 'संछुभणे'त्ति–प्रक्षेपणे जघन्यस्थितिसंक्रमस्वामी ॥ ४१ ॥

इदाणिं लोभसंजलणाए भण्णइ—

**समउत्तरालियाए लोभे सेसाइ सुहुमरागस्स । पढमकसायाण विसंजोयणसंछोभणाए उ ॥ ४२ ॥**

(चू०)—सुहुमए रागे समताधियावलियसेसे वट्टमाणो लोभस्स जहण्णियं ट्ठितिं संकामेति। इदाणिं अणं-
ताणुबन्धीणं भण्णति–'पढमकसायाण विसंयोजणसंछोभणाए य'। 'पढमकसाया' इति–अणंताणुबन्धी, विसं-
जोयणं–विणासणम्। अणन्ताणुबन्धीणं अप्पणो खवणकाले चरिमसंकामणे वट्टमाणो अण्णतरो चतुगतिगो स-
म्मद्दिट्ठी सामी ॥ ४२ ॥

(मलय०)—'समउत्तर'इति। सूक्ष्मसंपरायस्य स्वगुणस्थानकस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य 'लोभे' लोभस्य ज-
घन्यः स्थितिसंक्रमो भवति। इदमिह तात्पर्यम्–सूक्ष्मसंपरायः स्वगुणस्थानकस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानो लोभस्य-
जघन्यस्थितिसंक्रमस्वामी भवति । अनन्तानुबन्धिनां जघन्यस्थितिसंक्रमस्वामिनमाह–'पढम'इत्यादि । 'प्रथमकषायाणाम्'–अनन्ता-
नुबन्धिनां 'विसंयोजने'–विनाशने या चरमा पल्योपमासंख्येयभागमात्रा 'संछोभणा'–प्रक्षेपणं तत्र वर्तमानश्चतुर्गतिकानामन्यतमः
सम्यग्दृष्टिर्जघन्यस्थितिसंक्रमस्वामी भवति ॥४२॥

(उ०)—समयोत्तरावलिकायां शेषायां लोभे सप्तम्याः षष्ठ्यर्थत्वात् संज्वलनलोभस्य 'सूक्ष्मरागस्य'—सूक्ष्मसंपरायस्योदयावलिकात उपरितन्याः समयमात्रायाः स्थितेरपवर्तनासंक्रमेणाधस्तने स्वोदयावलिकात्रिभागे समयाधिके प्रक्षेपाज्जघन्यस्थितिसंक्रम इति स एव तज्जघन्यस्थितिसंक्रमस्वामी। प्रथमकषायाणाम्—अनन्तानुबन्धिनां विसंयोजने—विनाशने या चरमा पल्योपमासङ्ख्येयभागमात्रा संछोभना—प्रक्षेपणं तत्र वर्तमानश्चतुर्गतिकानामन्यतमः सम्यग्दृष्टिर्जघन्यस्थितिसंक्रमस्वामी ॥ ४२ ॥

इदाणिं जोगंतियाणं भण्णति—

**चरिमसजोगे जा अत्थि तासि सो चेव सेसगाणं तु। खवगक्कमेण अणियट्टिबायरो वेयगो वेए ॥४३॥**

(चू०)—'चरिमसजोगे जा अत्थि तासिं सो चेव' जोगंतिया चतुणउती पुव्ववण्णिया, तासिं सो चेव सजोगिकेवली चरिमोवट्टणे वट्टमाणो सामी। अजोगिस्स ण चलंतीति कातूण सेसपगतीणं भण्णाति—'सेसगाणं तु खवणक्कमेण अणियट्टिबादरो वेदगो वेदे' त्ति। 'सेसगाणं' ति—वुत्तसेसाणं थीणगिद्धितिगतेरसणामा अट्ठकसायणवणोकसाया कोहसंजलणमाणमायासंजलणाणं—एयासिं छत्तीसाए कम्मपगतीणं 'खवणक्कमेण' त्ति—खवणपरिवाडिते चेव अप्पणो चरिमसंछोभे वट्टमाणो अणियट्टिजहण्णगट्ठितिसंकमसामी। 'वेदगो वेदे' त्ति—पुरिसो पुरिसवेदस्स, इत्थि इत्थिवेदस्स, णपुंसगो णपुंसगवेदस्स, सेसवेदेहिं पडिवन्नस्स(न) लब्भति। कहं? भण्णइ—पुरिसवेदेण पडिवण्णो पुव्वं णपुंसकवेदं खवेइ, ततो इत्थिवेयं, ततो छणोकसाए, ततो पुरिसवेदं खवेति। तस्स समयूणदुआवलियबन्धो सव्वजहन्नगो ठितिसंकमो लब्भति। एवं इत्थिवेदेणं पडिवण्णाणं, णवरि अवेदगो छणो-

कसायपुरिमवेदस्सगं खवेति। णपुंसकवेदेण पडिवण्णो इत्थीवेदं णपुंसगवेदं जुगवं खवेति त्ति। तम्हा कालविसेसो लब्भति त्ति काऊणं तम्हि काले उवरि सट्ठितिओवट्टणा लब्भति। ततो जहण्णगो ट्ठितिसंकमो त्ति 'वेदगो वेदे' इति वयणं। भणियो ट्ठितिसंकमो ॥४३॥

(मलय०)—'चरिम'त्ति। या योग्यन्तिकाः प्रकृतयश्चतुर्नवतिसंख्याः प्रागुक्तास्तासां स एव–सयोगिकेवली चरमापवर्तने वर्तमानो जघन्यस्थितिसंक्रमस्वामी भवति। शेषप्रकृतीनां जघन्यस्थितिसंक्रमस्वामिनमाह–'सेसगाणं'इत्यादि। शेषाणां स्त्यानर्द्धित्रिकनामत्रयोदशकाष्टकषायनवनोकषायसंज्वलनक्रोधमानमायालक्षणानां षट्त्रिंशत्प्रकृतीनां 'क्षपणक्रमेण'–क्षपणपरिपाट्या चरमे पल्योपमासंख्येयभागादिमात्रे संछोभणे वर्तमानोऽनिवृत्तिबादरो जघन्यस्थितिसंक्रमस्वामी भवति। 'वेयगो वेदे' त्ति। वेदको वेदे–वेदस्य जघन्यस्थितिसंक्रमस्वामी। इयमत्र भावना–पुरुषवेदोदये वर्तमानः पुरुषवेदस्य, स्त्रीवेदोदये वर्तमानः स्त्रीवेदस्य, नपुंसकवेदोदये वर्तमानो नपुंसकवेदस्यानिवृत्तिबादरसंपरायश्चरमसंक्रमं कुर्वन् जघन्यस्थितिसंक्रमस्वामी वेदितव्यः। अन्येन हि वेदेन क्षपकश्रेणिमारूढस्यान्यस्य वेदस्य जघन्यस्थितिसंक्रमो न लभ्यते। तथाहि–येन वेदेन क्षपकश्रेणिमारोहति तस्य वेदस्योदयोदीरणापवर्तनादिभिः स्थितिः पुद्गलाश्च बहवः परिशटन्ति। ततो यद्यपि नपुंसकवेदेन क्षपकश्रेणिं प्रपन्नः स्त्रीवेदनपुंसकवेदौ युगपत्क्षपयति तथापि नपुंसकवेदस्यैव जघन्यः स्थितिसंक्रमः प्राप्यते, न स्त्रीवेदस्य, उदयोदीरणयोरभावात्। स्त्रीवेदेन च प्रतिपन्नो नपुंसकवेदक्षयानन्तरमन्तर्मुहूर्तेन कालेन स्त्रीवेदं क्षपयति। एतावता च कालेनोदयोदीरणाभ्यां बह्वी स्थितिस्त्रुटयति। यद्यपि च पुरुषवेदेनापि प्रतिपन्नस्यैतावान् कालो लभ्यते तथापि तस्य स्त्रीवेदसत्के उदयोदीरणे न भवत इति स्त्रीवेदप्रतिपन्नस्यैव स्त्रीवेदस्य जघन्यः स्थितिसंक्रमः, न शेषस्य। तथा पुरुषवेदेन

क्षपकश्रेणिं प्रपन्नो हास्यादिषट्कक्षयानन्तरं पुरुषवेदं क्षपयति, अन्यथा तु हास्यादिषट्कसहितम्। उदितस्य च वेदस्योदीरणापि प्रवर्त्तते इति बह्वी स्थितिस्त्रुटयति, ततः पुरुषवेदस्यापि पुरुषवेदारूढस्यैव जघन्यः स्थितिसंक्रमो न शेषस्य ॥४३॥

(उ०)—'सयोगे'—सयोगिकेवलिनि याश्चतुर्नवतिसङ्ख्याः प्रागुक्ताः प्रकृतयस्तासां स एव—सयोगिकेवली चरमापवर्तने वर्तमानो जघन्यस्थितिसंक्रमस्वामी। शेषाणां तु स्त्यानर्द्धित्रिकनामत्रयोदशकाष्टकषायनवनोकषायसंज्वलनक्रोधमानमायालक्षणानां षट्त्रिंशत्प्रकृतीनां क्षपकक्रमेण चरमे पल्योपमासङ्ख्येयभागमात्रे संछोभे वर्तमानोऽनिवृत्तिबादरो जघन्यस्थितिसंक्रमस्वामी भवति। 'वेयगो वेदे' त्ति—वेदस्य वेदकः स्वोदये वर्तमानः क्षपकोऽनिवृत्तिबादरश्चरमसंक्रमं कुर्वन् जघन्यस्थितिसंक्रमस्वामी वेदितव्यः। अन्येन हि वेदेन क्षपकश्रेणिमारूढस्य वेदान्तरस्य जघन्यस्थितिसंक्रमो न लभ्यते, येन वेदेन क्षपकश्रेण्यारोहस्तस्यैव वेदस्योदयोदीरणापवर्तनादिभिर्बह्व्याः स्थितेर्बहूनां च पुद्गलानां परिशटनात्। एवं हि नपुंसकवेदेन यद्यपि क्षपकश्रेणिमारूढः स्त्रीवेदनपुंसकवेदौ युगपत् क्षपयति तथापि नपुंसकवेदस्यैव जघन्यस्थितिसंक्रमः प्राप्यते, न स्त्रीवेदस्य, उदयोदीरणयोरभावात्। स्त्रीवेदेन च प्रतिपन्नो नपुंसकवेदक्षयानन्तरमन्तर्मुहूर्त्तेन कालेन स्त्रीवेदं क्षपयति। पुरुषवेदेनापि च प्रतिपन्नस्य यद्यप्येतावानेव कालो लभ्यते तथापि तस्य स्त्रीवेदसत्कोदयोदीरणे न भवत इत्येतावता कालेन स्त्रीवेदप्रतिपन्नस्यैवोदयोदीरणाभ्यां बह्व्याः स्थितेस्त्रुटयमानत्वात् तस्यैव स्त्रीवेदस्य जघन्यस्थितिसंक्रमः, न शेषस्य। तथा पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नो हास्यादिषट्कक्षयानन्तरं पुरुषवेदं क्षपयति, अन्यथा तु हास्यादिषट्कसहितम्, उदितस्य च वेदस्योदीरणाया अपि प्रवृत्तेः प्रभूता स्थितिस्त्रुटयतीति पुरुषवेदस्यापि पुरुषवेदारूढस्यैव जघन्यस्थितिसंक्रमो न शेषस्य। आयुषां तु चतुर्णा स्वस्वभवव्यवच्छेदसमये समयाधिकावलिकायां शेषायां वर्तमानः समयमात्रामुपरितनीं स्थितिं स्वस्वोदयावलिकात्रिभागेऽधस्तने समया-

धिकं प्रक्षिपन् जघन्यस्थितिसंक्रमस्वामी द्रष्टव्यः ॥ ४३ ॥

## जघन्यस्थितिसंक्रमस्वामिनः

| | | | |
|---|---|---|---|
| ज्ञाना० ५ नाम् विघ्न ५ नाम् दर्श० ४ नाम् | १२ मे समयाधिकावलिकाशेषे | १ समयमात्रा | अपवर्त्तनया |
| निद्राद्विकस्य | १२ मे असं० भा० सह २ आव० शेषे | १ समयमात्रा | अपवर्त्तनया |
| मिथ्यात्वस्य मिश्रस्य | ४-५-६-७ गुणस्थाः स्वस्वक्षपणकाले | पल्यासं० भा० | सर्वापवर्त्तनया |
| सं० लोभस्य | सू० समयाधिकाव०शेषे क्ष० | १ समयमात्रा | अपवर्त्तनया |
| अनंता० ४ | ४ गतिका. सम्यग्दृशः | पल्यासं० भा० | उद्वलनया |
| सम्यक्त्वस्य | ४ गतिकाः कृतकरणाः समयाधिकाव० शेषे | १ समयमात्रा | अपवर्त्तनया |
| सयोगिसत्ताक ९.४ नाम् | १३ मान्ते | आवलिकोनान्तर्मुहूर्त्ता | चरमापवर्त्तनया |

| | | | |
|---|---|---|---|
| स्त्रीवेदस्य | स्त्रीवेदोदयेन श्रेणिगताः | पल्योपमासंख्येय भा० | |
| पुंवेदस्य | पुंवेदोदयेन ,, | अबाधोन ८ वर्षा | |
| नपुंवेदस्य | नपुंवेदोदयेन ,, | पल्यासंख्येयभागमात्रा | |
| आयूंषि ४ | स्वस्वभवस्थाः | १ समयमात्रा | भवविच्छेदकाले अपवर्त्तनया |
| ३३ उक्तशेषाणां | ९ मस्थाः स्वस्वक्षयकाले | पल्यासं० | उद्वलनया |

इयाणिं अणुभागसंकमो। तस्स इमे अत्थाहिगारा। तंजहा–भेदो, फड्डगपरूवणा, लक्खणं, जहण्णुक्कस्स-अणुभागसंकमपरिमाणं, साइयअणाइयपरूवणा, साभित्तमिति। तत्थ भेयफड्डगपरूवणत्थं भण्णति—

**मूलुत्तरपगइगतो अणुभागे संकमो जहा बंधे। फड्डगणिद्देसो सिं सव्वेयरघायऽघाईणं॥ ४४॥**

(चू०)—'मूलुत्तरपगतिगतो अणुभागे संकमो'त्ति भेदो। अणुभागसंकमो दुविहो–मूलपगतिअणुभाग-संकमो उत्तरपगईअणुभागसंकमो य। तत्थ मूलुत्तरभेया जहा ठितिसंकमे। 'जहा बन्धे'त्ति–बन्धसतगे जहा अणुभागबन्धे 'फड्डगणिद्देसो सिं' ति–फड्डगपरूवणा कया 'सव्वेयरघायऽघातीणं' ति–जहा सतगे सव्वघातीणं देसघातीणं अघातीणं च भणियं तहा एत्थ वि भाणियव्वं। तो वि असमोहत्थं उल्लोतिज्जति, तंजहा–केवलणाणा-वरणकेवलदंसणावरण णिद्दापंचग मिच्छत्तं अणंताणुबन्धि ४ अपच्चक्खाणावरण ४ पच्चक्खाणावरण ४ एतासिं

चिमाते उत्तरपगतीणं सव्वघानीणि फड्डगाणि। णाणावरणचउक्कं चक्खुदंसणावरणीयअचक्खुदंसणावरणीय ओहिदंसणावरणीय पंचविहअंतराततित चत्तारिसंजलणणवणोकसाय–एयासिं पणुवीसाए उत्तरपगतीणं देसघातीणि फड्डगाणि। वेयणियाउणामगोयाणं एक्कारस्सुत्तरस्स पगनिसतस्स सव्वघाईपलिभागाणि फड्डगाणि यन्धसतगे भणिताणि ॥ ४४ ॥

(मलय०)–तदेवमुक्तः स्थितिसंक्रमः। सम्प्रत्यनुभागसंक्रमाभिधानावसरः, तत्र चैतेऽर्थाधिकारास्तद्यथा–भेदः, स्पर्धकप्ररूपणा, विशेषलक्षणप्ररूपणा, उत्कृष्टानुभागसंक्रमप्रमाणप्ररूपणा, जघन्यानुभागसंक्रमप्रमाणप्ररूपणा, साद्यनादिप्ररूपणा, स्वामित्वं चेति। तत्र भेदप्ररूपणार्थमाह–'मूलुत्तर'त्ति। 'अनुभागे'–अनुभागविषये 'संक्रमो'–मूलोत्तरप्रकृतिगतः। किमुक्तं भवति? द्विधाऽनुभागसंक्रमस्तद्यथा–मूलप्रकृत्यनुभागसंक्रम उत्तरप्रकृत्यनुभागसंक्रमश्च। ते च मूलोत्तरप्रकृतिभेदा 'यथा बन्धे'–बन्धशतकेऽभिहितास्तथात्रापि द्रष्टव्याः। कृता भेदप्ररूपणा। स्पर्धकप्ररूपणार्थमाह–'फड्डग'इत्यादि। आसां सर्वघातिनीनां देशघातिनीनामघातिनीनां च प्रकृतीनां 'स्पर्धकनिर्देशः'–स्पर्धकप्ररूपणा यथा शतके कृता तथात्रापि कर्तव्या। तथापि किञ्चिदुच्यते–तत्र च केवलज्ञानावरणकेवलदर्शनावरणाद्यद्वादशकषायनिद्रापञ्चकमिथ्यात्वलक्षणानां विंशतिप्रकृतीनां रसस्पर्धकानि सर्वघातीनि, सर्वं स्वघात्यं केवलज्ञानादिलक्षणं गुणं घातयन्तीति सर्वघातीनि। तानि च ताम्रभाजनवत् निश्छिद्राणि, घृतवत् स्निग्धानि, द्राक्षावत्तनुप्रदेशोपचितानि, स्फटिकाभ्रहारवच्चातीव निर्मलानि। उक्तं च–"जो घायइ सविसयं सयल सो होइ सव्वघाइरसो। सो निच्छिद्दो निद्धो तणुओ फलिहब्भहरविमलो" ॥१॥ मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणसंज्वलनचतुष्टयनवनोकषायान्तरायपञ्चकलक्षणानां पञ्चविंशतिसंख्यानां देशघातिप्रकृतीनां दे-

शघातीनि रसस्पर्धकानि भवन्ति। स्वस्य ज्ञानादेर्गुणस्य देशमेकदेशं मतिज्ञानादिलक्षणं घातयन्तीत्येवंशीलानि देशघातीनि। तानि चानेकप्रकारच्छिद्रशतसंकुलानि। तथाहि—कानिचिदनेकबृहच्छिद्रशतसंकुलानि, वंशदलनिर्मापितकटवद्। कानिचिन्मध्यमानेकच्छिद्रशतसंकुलानि, कम्बलवत्। कानिचित्पुनरतीवसूक्ष्मानेकच्छिद्रशतसंकुलानि तथाविधवस्त्रवत्। तथा तानि स्तोकस्नेहानि विशिष्टनैर्मल्यरहितानि च भवन्ति। तथा चोक्तं—"देसविघाइत्तणओ इयरो कडकंवलंसुसंकासो। विविहवहुछिद्दभरिओ अप्पसिणेहो अविमलो य॥१॥" वेदनीयायुर्नामगोत्राणां संबन्धिन एकादशोत्तरप्रकृतिशतस्याघातिनो रसस्पर्धकान्यघातीनि वेदितव्यानि। केवलं वेद्यमानसर्वघातिरसस्पर्धकसंबन्धात्तान्यपि सर्वघातीनि भवन्ति, यथेहलोके स्वयमचौराणामपि चौरसंबन्धाच्चौरता। उक्तं च—"जाण न विसओ घाइत्तणम्मि ताणं पि सव्वघाइरसो। जायइ घाइसगासेण चोरया वेहऽचोराणं॥१॥"॥४४॥

(उ०)—तदेवमुक्तः स्थितिसंक्रमः। अथानुभागसंक्रमाभिधानावसरः। तत्र चैतेऽर्थाधिकाराः, तद्यथा—भेदः स्पर्द्धकप्ररूपणा विशेषलक्षणप्ररूपणा उत्कृष्टानुभागसंक्रमप्ररूपणा जघन्यानुभागसंक्रमप्ररूपणा साद्यनादिप्ररूपणा स्वामित्वं चेति। तत्र भेदप्ररूपणामाह—'अनुभागे'—अनुभागविषये संक्रमो—मूलोत्तरप्रकृतिगतो मूलप्रकृत्यनुभागसंक्रम उत्तरप्रकृत्यनुभागसंक्रमश्चेति द्विविध इत्यर्थः। ते च मूलोत्तरप्रकृतिभेदा यथा बन्धे—बन्धशतकेऽभिहितास्तथाऽत्रापि द्रष्टव्याः। कृता भेदप्ररूपणा। स्पर्द्धकप्ररूपणामाह—'फड्डग'इत्यादि, आसां सर्वघातिनीनां देशघातिनीनामघातिनीनां च प्रकृतीनां स्पर्धकनिर्देशो यथा शतके कृतस्तथाऽत्रापि कर्तव्यः। इह चैतत्प्ररूपणा पीठिकायामेव कृतेति नेह भूयस्तन्यते॥४४॥

**सम्मत्तसम्मामिच्छत्ताणं तहिं ण भणितं, तेसिं इहं भण्णति—**

दारुसमाणस्साणंतमो त्ति मिच्छत्तमुप्पिमओ ॥४५॥
सव्वेसु देसघाइसु सम्मत्तं तदुवरिं तु वा मिस्सं। दंसणमोहस्स संतकम्मं पडुच्च
(चू०)—तम्हा तासिं फड्डगपरूवणा भण्णति—'सव्वेसु देसघातिसु संमत्तं' ति। 'तदुवरिं तु वा
दुविहाणि फड्डगाणि—देसघाति सव्वघातीणि। तत्थ जे देसघाती फड्डगा ते सव्वे सम्मत्तफड्डगा। सव्व-
मिस्सं'—जहिं देसघाईफड्डगाणि णिट्ठियाणि तप्पभिइ समामिच्छत्तस्स फड्डगाणि, ताणि य सव्वघाईणि। जाव तस्स
घाइफड्डगस्स आदिवग्गणातो आढत्तं 'दारुसमाणस्साणंतमो' त्ति। 'दारु[ण]समाणमिति'—विठाणितं, ततो
यिट्टाणियस्स फड्डगाणं अंति(अणंत)मो भागो ताव सव्वे सम्मामिच्छत्तफड्डगा। जहिं सम्मामिच्छत्तं णिट्ठितं पडुच्च
पभिति दुट्टाणिगतिट्ठाणिगचतुट्ठाणियाणि सव्वाणि मिच्छत्तफड्डगाणि। अण्णं च सव्वकम्मणं संतकम्मं एगट्ठाणिगा
दुट्ठाणिगतिट्ठाणिगचतुट्ठाणिगाणि फड्डगाणि, सम्मामिच्छत्तस्स दुट्ठाणिगा चेव फड्डगा, सम्मत्तस्स
दुग(ट्ठा)णियाणि। पुरिसवेदसंजलणाण एगट्ठाणादिचउव्विहा फड्डगपरूवणा कया ॥४५॥
(मलय०)—सम्प्रति दर्शनमोहनीयस्य स्पर्धकप्ररूपणार्थमाह—'सव्वेसु' त्ति। दर्शनमोहनीयस्य सत्कर्म प्रतीत्य द्विविधानि रसस्पर्ध-
कानि। तद्यथा—देशघातीनि सर्वघातीनि च। तत्र यानि देशघातीनि स्पर्धकानि एकस्थानकरसोपेतानि द्विस्थानकरसोपेतानि च तेषु
सर्वेष्वपि सम्यक्त्वम्। 'तदुवरि तु वा मिस्सं'—यत्र देशघातीनि स्पर्धकानि निष्ठितानि तत उपरि सम्यग्मिथ्यात्वस्य स्पर्धकानि भवन्ति।
तानि च सर्वघातीनि द्विस्थानकरसोपेतानि च तानि सम्यग्मिथ्यात्वस्य स्पर्धकानि तावद् द्रष्टव्यानि यावद् 'दारुसमाणस्साणंतमो'
त्ति। 'दारुसमान' इति—द्विस्थानको रसस्तस्य संबन्धिनां स्पर्धकानामन्ततमो भागो गतो भवति। ततो यत्र सम्यग्मिथ्यात्वस्य स्पर्धका-

नि निष्ठां यान्ति ततः प्रभृति द्विस्थानकत्रिस्थानकचतुःस्थानकरसोपेतानि स्पर्धकानि सर्वाण्यपि मिथ्यात्वस्य द्रष्टव्यानि ॥ ४५ ॥

(उ०)–दर्शनमोहनीयस्पर्धकप्ररूपणां विशेषजिज्ञापयिषयाऽऽह—इह दर्शनमोहनीयसत्कर्म प्रतीत्य द्विविधानि रसस्पर्धकानि भवन्ति–देशघातीनि सर्वघातीनि च। तत्र यानि देशघातिस्पर्धकान्येकस्थानिकरसानि द्विस्थानिकरसानि वा तेषु सर्वेष्वपि सम्यक्त्वम्। यत्र देशघातीनि स्पर्धकानि निष्ठितानि तदुपरि तु मिश्रं–सम्यग्मिथ्यात्वस्य स्पर्धकानि भवन्ति। तानि च कियद्भवन्ति? वाशब्दस्य यावदित्यर्थस्य भिन्नक्रमस्येह योजनात्, यावत् 'दारुसमान' इति। "लतादार्वस्थिशैलाख्या एकस्थानादयो रसाः"। इति ग्रन्थशैल्या द्विस्थानको रसस्तस्य सम्बन्धिनां स्पर्धकानामनन्ततमो भागो गतो भवतीति। ततो यत्र सम्यग्मिथ्यात्वस्पर्धकानि निष्ठितान्यत उपरि द्विस्थानकत्रिस्थानकचतुःस्थानकरसोपेतानि सर्वाण्यपि मिथ्यात्वस्योपढौकन्ते ॥ ४५ ॥

इदाणिं लक्खणपरूवणत्थं भणणति—

**तत्थट्ठपयं उव्वट्टिया व ओवट्टिया व अविभागा। अणुभागसंकमो एस अन्नपगइं णिया वावि ॥४६॥**

(चू०)—'तत्थ' इति अणुभागसंकमे, 'अट्ठपदं' ति–अणुभागसंकमसरूवणिद्धारणं, 'उव्वट्टिता व ओवट्टिता अविभागा' इति–उव्वट्टिता वि ओवट्टिता वि फड्डगा अणुभागसंकमो। 'अविभाग' त्ति अणुभागस्स णामं। 'अण्णपगतिं णिया व' त्ति–अन्नपगतिसब्भावेणं परिणामिया वि फड्डगा अणुभागसंकमो त्ति। तत्थ मूलपगतीणं उव्वट्टणा (ओवट्टणा) एव, परोप्परं संकमो णत्थि। उत्तरपगतीणं तिण्णि वि ॥ ४६ ॥

(मलय०)–कृता स्पर्धकप्ररूपणा, सम्प्रति विशेपलक्षणप्ररूपणार्थमाह—'तत्थ' त्ति। तत्रानुभागसंक्रमेऽर्थपदं याथात्म्यनिर्धारणमिदं

यद्वत 'उद्वर्तिताः' प्रभृतीकृता यद्वा 'अपवर्तिताः' ह्रस्वीकृता अथवा 'अन्यां प्रकृतिं नीताः' अन्यप्रकृतिस्वभावेन परिणमिता 'अविभागा'—अनुभागाः, एप सर्वोऽप्यनुभागसंक्रमः। तत्र मूलप्रकृतीनामुद्वर्तनापवर्तनारूपौ द्वावेव संक्रमौ नान्यप्रकृतिनयनरूपः संक्रमः, तासां परस्पर संक्रमाभावात्। उत्तरप्रकृतीनां तु त्रयोऽपि संक्रमाः ॥ ४६ ॥

(उ०)-कृता स्पर्धकप्ररूपणा, अथ विशेपलक्षणप्ररूपणामाह—तत्रानुभागसंक्रमेऽर्थपदं विशेपनिर्धारणमिदं यदुतोद्वर्तिताः-प्रभृतीकृता यद्वाऽपवर्तिताः-ह्रस्वीकृता अथवाऽन्यां प्रकृतिं नीताः-अन्यप्रकृतिस्वभावेन परिणमिता अविभागाः-अनुभागाः,एप सर्वोऽप्यनुभागसंक्रमः। तत्र मूलप्रकृतीनामुद्वर्तनापवर्तनरूपौ द्वावेव संक्रमौ, नान्यप्रकृतिनयनरूपस्तृतीयोऽपि, तासां मिथः संक्रमाभावात्, उत्तरप्रकृतीनां तु त्रयोऽपि संभवन्ति ॥ ४६ ॥

भणियं लक्खणं, इयाणिं उक्कस्सजहण्णाणुभागसंकमपरिमाणं भण्णति—

**दुविहपमाणे जेट्ठो सम्मत्ते देसघाइ दुट्ठाणे। नरतिरियाऊआयवमिस्से वि य सव्वघाइम्मि ॥४७॥**

(चू०)—'दुविहपमाणे' त्ति। ठाणपमाणघातिपमाणेसु 'जेट्ठो' इति—उक्कोसो अणुभागो, 'सम्मत्ते' त्ति—वेदगसम्मत्तस्स 'देसघाति दुट्ठाणे' त्ति—घातित्तणातो देसघाति ठाणं पडुच्च दुट्ठाणियफड्डगं। तत्थ उक्कस्सं दुट्ठाणिगं ति काउं 'णरतिरियाऊ आयवमिस्से वि य सव्वघाइंमि' मणुयाउगतिरियाउगआतवणामसम्मामिच्छत्ताणं ठाणं पडुच्च दुट्ठाणिगं, घातिं पडुच्च सव्वघातिं फड्डगं संकमति ॥ ४७॥

(मलय०)-तदेवमुक्तं विशेपलक्षणम्, सम्प्रत्युत्कृष्टानुभागसंक्रमप्रमाणप्रतिपादनार्थमाह—'दुविह' त्ति। 'द्विविधे प्रमाणे'—स्थानप्रमाणे

घातित्वप्रमाणे च। 'ज्येष्ठः'–उत्कृष्टोऽनुभागसंक्रमः सम्यक्त्वस्य देशघातिनि द्विस्थानके रसस्पर्धके संक्रम्यमाणे वेदितव्यः। एतदुक्तं भवति–सम्यक्त्वस्य घातित्वमाश्रित्य देशघाति, स्थानमाश्रित्य सर्वोत्कृष्टद्विस्थानकरसोपेतं स्पर्धकपटलं यदा संक्रामति तदा तस्योत्कृष्टोऽनुभागसंक्रम इति। नरायुस्तिर्यगायुरातपसम्यग्मिथ्यात्वानां स्थानं प्रतीत्य सर्वोत्कृष्टद्विस्थानकरसोपेते घातित्वमाश्रित्य सर्वघातिनि रसस्पर्धके उत्कृष्टोऽनुभागसंक्रमः। अत्रापीयं भावना–नरतिर्यगायुरातपसम्यग्मिथ्यात्वानां सर्वोत्कृष्टद्विस्थानकरसोपेतं सर्वघातिरसस्पर्धकं यदा संक्रामति तदा स तेषामुत्कृष्टोऽनुभागसंक्रमः। अत्र नरतिर्यगायुरातपानां 'दुतिचउट्ठाणा उ सेसा उ' इति वचनात् द्वित्रिचतुःस्थानकरससंभवेऽपि यत् द्विस्थानकरसस्पर्धकस्यैव संक्रमे उत्कृष्टोऽनुभागसंक्रम उक्तः स एवं ज्ञापयति–एतेषां कर्मणां तथास्वाभाव्यादेव त्रिस्थानकचतुःस्थानकरसस्पर्धकानामुद्वर्तनापवर्तनाप्रकृत्यन्तरनयनरूपस्त्रिप्रकारोऽपि संक्रमो न भवतीति॥ ४७॥

(उ०)–उक्तं विशेपलक्षणं, अथोत्कृष्टानुभागसंक्रमप्रमाणप्रतिपादनार्थमाह–'द्विविधे प्रमाणे'–स्थानप्रमाणे घातित्वप्रमाणे च। 'ज्येष्ठः'–उत्कृष्टोऽनुभागसंक्रमः सम्यक्त्वस्य देशघातिनि द्विस्थानके रसस्पर्द्धके संक्रम्यमाणे वेदितव्यः, सम्यक्त्वस्य घातित्वमाश्रित्य देशघाति, स्थानमाश्रित्य च सर्वोत्कृष्टं द्विस्थानकरसोपेतं स्पर्धकपटलं यदा संक्रामति तदा तस्योत्कृष्टोऽनुभागसंक्रम इत्यर्थः। अस्यैकस्थानकोऽनुभागो जघन्यत्वादेव त्यज्यते, त्रिस्थानचतुःस्थानकौ च न भवत एव। तथा नरायुस्तिर्यगायुरातपसम्यग्मिथ्यात्वानां स्थानं प्रतीत्य सर्वोत्कृष्टद्विस्थानकरसोपेते घातित्वमाश्रित्य सर्वघातिनि रसस्पर्धके उत्कृष्टोऽनुभागसंक्रमः, नरतिर्यगायुरातपसम्यग्मिथ्यात्वानां सर्वोत्कृष्टं द्विस्थानकरसोपेतं सर्वघातिरसस्पर्धकं यदा संक्रामति तदा स तेषामुत्कृष्टोऽनुभागसंक्रम इत्यर्थः। [illegible] रसः सर्वोऽपि सर्वघाती द्विस्थानिकश्च विद्यते, न शेप इति शेपसंक्रमप्रतिपेधः। आतपमनुष्यतिर्यगायुषां तु 'दुतिचउट्ठाणा उ सेसा उ' इति

यचनान् द्वित्रिचतुःस्थानकरससंभवेऽपि तथास्वाभाव्यात् त्रिस्थानकचतुःस्थानकरसस्पर्धकानामुद्वर्तनापवर्तनाप्रकृत्यन्तरनयनरूपस्त्रिप्रकारोऽपि संक्रमो न भवतीति द्विस्थानकस्यैव ग्रहणम्, ज्ञापकं चात्र तद्वचनमेव, सर्वघातिप्रकृत्यन्तररससम्बन्धाच्चैतेषां रसः सर्वघाती, न त्वघाती, ततो देशघात्यघातिरसप्रतिषेध इति द्रष्टव्यम् ॥४७॥

## सेसासु चउट्ठाणे मंदो सम्मत्तपुरिससंजलणे। एगट्ठाणे सेसासु सव्वघाइंमि दुट्ठाणे ॥ ४८ ॥

(चू०)—'सेसासु चउट्ठाणे' त्ति। 'सेसासु' त्ति–सेसाणं सव्वपगतीणं घातिं पडुच्च सव्वघातिं ठाणं पडुच्च चउट्ठाणियं फड्डगं संकमति। इयाणिं जहण्णाणुभागसंकमपरिमाणं भण्णाति—'मंदो सम्मत्तपुरिससंजलणे एगट्ठाणे'। 'मंदो' त्ति–जहण्णाणुभागसंकमो, 'सम्मत्तपुरिससंजलण' त्ति–सम्मत्त पुरिसवेद चतुण्हं संजलणाणं 'एगट्ठाणे' इति–एगट्ठाणिगं देसघाति फड्डगं संकमति। कहं? भण्णइ–पुरिसवेदसंजलणाणं अप्पप्पणो खवणंते समयूणदुआवलिया बद्धाति फड्डाइ संकमंति, तातो वि लतातो एगट्ठाणियातो, तेण एगठाणिए रसे फड्डगाणि संकमंति। सम्मत्तस्स सव्वविसुद्धो एगट्ठाणीतो अणुभागरसो भवति सो संकमति। 'सेसासु सव्वघाइम्मि दुट्ठाणे'। 'सेसासु' त्ति–भणितसेसासु सव्वपगतीसु 'सव्वघातिंमि' त्ति–घातित्तं पडुच्च सव्वघातीणं, ठाणं पडुच्च दुट्ठाणिगाणि संकमंति। वुत्तं परिमाणं ॥४८॥

(मलय०)–'सेसासु' त्ति। शेषाणामुक्तव्यतिरिक्तानां प्रकृतीनां स्थानमाश्रित्य सर्वोत्कृष्टश्चतुःस्थानको घातित्वमाश्रित्य सर्वघाती रसो यदा संक्रामति तदा स तासामुत्कृष्टोऽनुभागसंक्रमः। तदेवमुक्तमुत्कृष्टानुभागसंक्रमप्रमाणम्, सम्प्रति जघन्यानुभागसंक्रमप्रमाणप्रतिपा-

दनार्थमाह–'मंदो' त्ति। सम्यक्त्वस्य पुरुषवेदस्य संज्वलनानां चैकस्थानके रसे संक्रामति मन्दो–जघन्योऽनुभागसंक्रमो वेदितव्यः। एतदुक्तं भवति–सम्यक्त्वस्य सर्वविशुद्ध एकस्थानको रसो यदा संक्रामति तदा स तस्य जघन्योऽनुभागसंक्रमः, पुरुषवेदसंज्वलनानां च क्षपणकाले यानि समयोनावलिकाद्विकबद्धानि स्पर्धकानि एकस्थानरसोपेतानि तानि यदा संक्रामन्ति तदा स तेषां जघन्योऽनुभागसंक्रमः। 'सेसासु' इत्यादि–शेषासूक्तव्यतिरिक्तासु सर्वासु प्रकृतिषु सर्वघातीनि द्विस्थानकरसोपेते स्पर्धके संक्रम्यमाणे जघन्योऽनुभाग संक्रमो वेदितव्यः। इदमत्र तात्पर्य–सम्यक्त्वपुरुषवेदसंज्वलनचतुष्टयव्यतिरिक्तानां शेषप्रकृतीनां घातित्वमाश्रित्य सर्वघातीनि, स्थानमाश्रित्य द्विस्थानकरसोपेतानि मन्दानुभावानि यानि रसस्पर्धकानि तानि यदा संक्रामन्ति तदा स तासां जघन्योऽनुभागसंक्रमः। इह यद्यपि मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणान्तरायपञ्चकानामेकस्थानकोऽपि रसो बन्धे प्राप्यते तथापि क्षयकाले प्राग्बद्धो द्विस्थानकोऽपि रसः संक्रामति नैकस्थानकः केवल इति जघन्यसंक्रमविषयतया नैतेषामेकस्थानकरस उक्तः ॥ ४८ ॥

(उ०)–'शेषाणाम्'–उक्तव्यतिरिक्तानां प्रकृतीनां स्थानमाश्रित्य सर्वोत्कृष्टश्चतुःस्थानको घातित्वमाश्रित्य सर्वघाती रसः स्वीयः साहचर्यजनितो वा यदा संक्रामति तदा स तासामुत्कृष्टोऽनुभागसंक्रमः। उक्तमुत्कृष्टानुभागसंक्रमप्रमाणम्। अथ जघन्यानुभागसंक्रमप्रमाणं प्रतिपादयति–'मंदो' इत्यादि। सम्यक्त्वस्य पुरुषवेदस्य संज्वलनानां चैकस्थानके रसे संक्रामति सति मन्दो जघन्यानुभागसंक्रमो ज्ञेयः। इदमुक्तं भवति–सम्यक्त्वस्य सर्वशुद्ध एकस्थानको रसो यदा संक्रामति तदा स तस्य जघन्यानुभागसंक्रमः। पुरुषवेदसंज्वलनानां च क्षपणकाले यानि समयोनावलिकाद्विकबद्धान्येकस्थानकरसोपेतानि सर्वजघन्यस्पर्धकानि तानि यदा संक्रामन्ति तदा स तेषां जघन्यानुभागसंक्रमः। 'शेषासु'–उक्तव्यतिरिक्तासु सर्वासु प्रकृतिषु सर्वघातीनि द्विस्थानकरसोपेते स्पर्धके संक्रामति जघन्यानुभाग-

संक्रमः। सम्यक्त्वपुंवेदसंज्वलनचतुष्टयातिरिक्तशेषप्रकृतीनां घातित्वमाश्रित्य सर्वघातीनि स्थानमाश्रित्य द्विस्थानकरसोपेतानि सर्वजघन्यानि रसस्पर्धकानि यदा संक्रामन्ति तदा स तासां जघन्यानुभागसंक्रम इत्यर्थः। यद्यपि मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणान्तरायपञ्चकानामेकस्थानकोऽपि रसो बन्धे प्राप्यते तथापि क्षयकाले पूर्ववद्द्विस्थानकरसस्यापि संक्रमादेकस्थानरसस्य शुद्धस्यासंक्रमात् संक्रमविषयतयैकस्थानकरसस्यानभिधानम् ॥४८॥

उत्कृष्टानुभागसंक्रमप्रमाणम्

| प्रकृतीनां | स्थानप्रमाण | घातिप्रमाणं |
| --- | --- | --- |
| सम्यक्त्वस्य | २ | देशघाति |
| मिथ्यात्व नरायुस्तिर्यगायुरातपानां च | २ | सर्वघाति |
| उक्तशेषाणां | ४ | ,, |

जघन्यानुभागसंक्रमप्रमाणम्

| प्रकृतीनां | स्थानप्रमाणं | घातिप्रमाणं |
| --- | --- | --- |
| सम्य० पुं० संज्व० ४ | १ | देशघाति |
| उक्तशेषाणां | २ | सर्वघाति |

इदाणिं सादिअणादिपरूवणा। सा दुविहा–मूलपगतिसातिअणातिपरूवणा उत्तरपगतिसातिअनादिपरूवणा य। तत्थ मूलपगतीणं परूवणत्थं भण्णति—

अजहण्णो तिण्ह तिहा मोहस्स चउव्विहो अहाउस्स। एवमणुक्कोसो सेसिगाण तिविहो अणुक्कस्सो ॥४९॥

(चू०)—'अजहन्नो तिण्ह तिहा' इति। णाणावरणियदंसणावरणियअंतराइयाणं तिविहो अणादितो धुवो अधुवो। कहं ? भण्णइ–खीणकसायस्स चरिमंते समयाहिताते आवलिताते सेसाते जहण्णो अणुभागसंकमो भवति। सो य सादितो अधुवो, तव्विवरीतो सव्वो अजहण्णो ति, तम्हा अणादीतो धुवो अभव्वाणं, अधुवो भव्वाणं। 'मोहस्स चउव्विहो' इति–मोहस्स अजहण्णतो अणुभागसंकमो चउव्विहो। कहं ? भण्णइ–सुहुमरागस्स चरिमंते समयाहीयाए आवलियाए सेसाए जहण्णो अणुभागसंकमो भवति, तव्विवरीतो सव्वो अजहण्णो ति खाइयसम्मदिट्ठिस्स उवसमसेढीए सव्वमोहं उवसामेत्तु पुणो पडिवडमाणस्स सादीतो संकमो भवति। तं ठाणं अप्पत्तपुव्वस्स अणादितो, धुवो अभव्वाणं, अधुवो भव्वाणं। 'अहाउस्स एवमणुक्कोसो' त्ति–आउयस्स अणु॰सो संकमो चउव्विहो। कहं ? भण्णइ–अप्पमत्तेण देवाउगस्स उक्कोसो अणुभागो बद्धो। तेतीसं सागरोवमाणि बन्धावलियाए गयाए संकामेत्तुं पवत्तो जाव आवलितावसेसं ताव उक्कोसं संकमति। ततो उक्कोसवोच्छेदे अणुक्कोसस्स सातितो, तं ठाणं अपत्तपुव्वस्स(अणाइओ), धुवो अभव्वाणं, अधुवो भव्वाणं। सेसिगाणं' इति–णामगोत्तवेयणियताणं, 'तिविहो अणुक्स्सो' इति–अणातितो धुवो अधुवो इति। अणुक्कोसो संकमो तिविहो। कहं ? भण्णइ–सुहुमरागस्स चरिमसमए उक्स्सं बद्धं आवलितातितं संकमति जाव सजोगिचरिमसमए त्ति तं च सादितअधुव्वं। तं मोत्तूणं सेसमणुक्कोसं ति। तम्हा अणुक्कोससंकमस्स धुवसंतकम्मत्ताओ अणादि, धुवो अभव्वाणं, अधुवो भव्वाणं ॥ ४९ ॥

(मलय०)—तदेवमुक्तं जघन्यानुभागसंक्रमपरिमाणम्, सम्प्रति साद्यनादिप्ररूपणा कर्तव्या। सा च द्विधा—मूलप्रकृतिसाद्यनादिप्ररूपणा उत्तरप्रकृतिसाद्यनादिप्ररूपणा च। तत्र मूलप्रकृतीनां साद्यनादिप्ररूपणार्थमाह—'अजहण्णो' त्ति। ज्ञानावरणदर्शनावरणान्तरायलक्षणानां त्रयाणां कर्मणामजघन्योऽनुभागः 'त्रिधा'—त्रिप्रकारः, तद्यथा—अनादिरध्रुवो ध्रुवश्च। तथाहि—क्षीणकषायस्यैतेषां कर्मणां समयाधिकावलिकाशेषायां स्थितौ जघन्यानुभागसंक्रमो भवति, स च सादिरध्रुवश्च, ततोऽन्यः सर्वोऽप्यजघन्यः, स चानादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया। मोहनीयस्याजघन्योऽनुभागसंक्रमश्चतुर्विधः। तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि—सूक्ष्मसंपरायस्य क्षपकस्य मोहनीयस्य समयाधिकावलिकाशेषायां स्थितौ जघन्योऽनुभागसंक्रमो भवति। स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः। स च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्योपशान्तमोहगुणस्थानके न भवति, उपशान्तमोहगुणस्थानकाच्च प्रतिपततः गतः पुनरपि भवति, ततोऽसौ सादिः। तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवौ पूर्ववत्। आयुषस्त्वनुत्कृष्टोऽनुभागसंक्रमश्चतुर्विधः, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि—अप्रमत्तो देवायुष उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परतः संक्रमयितुमारभते। तं च तावत्संक्रमयति यावदनुत्तरसुरभवे स्थितस्य त्रयस्त्रिंशत्सागरोपमाण्यतिक्रामन्ति, आवलिकामात्रा स्थितिरवतिष्ठते। ततोऽन्योऽनुभागसंक्रम आयुषः सर्वोऽप्यनुत्कृष्टः, स च सादिः। तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवावभव्यभव्यापेक्षया। 'शेषाणां'—नामगोत्रवेदनीयानामनुत्कृष्टोऽनुभागसंक्रमः 'त्रिविधः'—त्रिप्रकारः, अनादिरध्रुवो ध्रुवश्च। तथाहि—सूक्ष्मसंपरायेण क्षपकेण स्वगुणस्थानकस्य चरमसमये तेषां नामगोत्रवेदनीयानां सर्वोत्कृष्टोऽनुभागो बध्यते। बन्धावलिकायामतीतायां यावत्सयोगिचरमसमयस्तावत्संक्रामति। स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्टः। स चानादिः, आदेरभावात्। ध्रुवाध्रुवौ पूर्ववत्। ॥४९॥

(उ०)–उक्तं जघन्यानुभागसंक्रमपरिमाणम्। अथ साद्यनादिप्ररूपणा कार्या। सा च मूलोत्तरप्रकृतिविषयतया द्विधा। तत्र मूलप्रकृतीनां साद्यनादिप्ररूपणामाह—ज्ञानावरणदर्शनावरणान्तरायलक्षणानां त्रयाणां कर्मणामजघन्योऽनुभागस्त्रिधा–अनादिरध्रुवो ध्रुवश्चेति। तथाहि–एतेषां जघन्यानुभागसंक्रमः क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ प्राप्यते, स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः, स चानादिः। अध्रुवध्रुवौ भव्याभव्यापेक्षया। मोहनीयस्याजघन्यानुभागसंक्रमश्चतुर्विधः–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–मोहनीस्य जघन्यानुभागसंक्रमः समयाधिकावलिकाशेषायां स्थितौ सूक्ष्मसंपरायस्य क्षपकस्य भवति, स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः। स च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्योपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः। तत्स्थानमप्राप्तस्यानादिः। ध्रुवाध्रुवौ पूर्ववत्। अथायुषोऽनुत्कृष्टोऽनुभागसंक्रम एवं–मोहनीयाजघन्यानुभागसंक्रमवच्चतुर्विधः–साद्यनादिध्रुवाध्रुवभेदाद्। तथाहि–अप्रमत्तः सुरायुष उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परतः संक्रमयितुमारभमाणस्तं तावत्संक्रमयति यावदनुत्तरसुरभवे स्थितस्य त्रयस्त्रिंशत्सागरोपमाण्यतिगच्छन्ति, आवलिकामात्रा स्थितिरवतिष्ठते, ततोऽन्य आयुषोऽनुभागसंक्रमः सर्वोऽप्यनुत्कृष्टः, स च सादिः। तत्स्थानमप्राप्तस्यानादिः। ध्रुवाध्रुवौ पूर्ववद्। शेषाणां नामगोत्रवेदनीयानां अनुत्कृष्टोऽनुभागसंक्रमस्त्रिविधः–अनादिरध्रुवो ध्रुवश्च। तथाहि–सूक्ष्मसंपरायेण क्षपकेण स्वगुणस्थानचरमसमये नामगोत्रवेदनीयानां सर्वोत्कृष्टोऽनुभागो बध्यते, बन्धावलिकायामतीतायां यावत्सयोगिचरमसमयस्तावत्संक्रम्यते। स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्टः, स चादेरभावादनादिः। ध्रुवाध्रुवौ पूर्ववत् ॥४९॥

**सेसा मूलप्पगइसु दुविहा अह उत्तरा अजहन्नो। सत्तरसण्ह चउद्धा तिविगप्पो सोलसण्हं तु ॥५०॥**

(चू०)—'सममूलपगइसु दुविह' त्ति। वुत्तसेसपविकप्पेसु मूलपगतीणं 'दुविह' त्ति–सातितो अधुवो य। कहं ? भण्णइ–चउण्हं घातिकम्माणं उक्कोसाणुक्कोसजहण्णगेसु, जहण्णगे कारणं पुव्वुत्तं, उक्कोसं मिच्छदिट्ठिस्स लब्भति, तस्स (अणुक्कोसं),दोसु वि परियत्तंतस्स, दोण्ह वि सादितो अधुवो। सेसाणं चउण्हं उक्कोसजहण्णाजहण्णेसु दुविहो। कहं ? भण्णइ–उक्कोसे पुव्वुत्तं, जहण्णगं सुहुमपज्जत्तगस्स लब्भति त्ति, एवं अजहण्णंपि तंमि चेव लब्भति त्ति सादि य अधुवो। इयाणिं उत्तरपगतीणं भण्णति–अह उत्तरासु अजहण्णो संकमो सत्तरसण्हं कम्माणं सादिनादि चतुविगप्पो वि। कहं? भण्णइ–अणंताणुबंधि ४ संजलण ४ णवणोकसाया य एएसिं सत्तरसण्हं कम्माणं अप्पप्पणो खवणंते जहण्णगो अणुभागसंकमो भवति। णवरि अणंताणुबन्धिणो उव्वट्टेत्तु पुणो बंधमाणस्स बन्धावलियाए गयाए बितितावलियाए पढमसमए यो जहण्णो अणुभागसंकमो भवति एयं मोत्तूणं सेसं सव्वं अजहण्णं भवति। उवसमसेढिण सव्वोवसमणाए उवसंताणं संकमाभावातो ण संकमति। पुणो परियडंतो संकामेति, तं पडुच्च सातितो, अणादीतो अपत्तपुव्वस्स, धुवो अभव्वाणं, अधुवो भव्वाणं ति। 'तिविगप्पो सोलसण्हं तु'–सोलसण्हं तु कम्मपगडीणं अजहण्णो अणुभागसंकमो तिविगप्पो। कहं ? भण्णइ–पंचविहं णाणावरणं थीणगिद्धितिगवज्जछदंसणावरणं पंचविहअंतराइतं इति एतेसिं सोलसण्हं कम्माणं जहण्णाणुभागसंकमो खीणकसायस्स समयाहियाते आवलियाते सेसाए वट्टमाणस्स भवति। एतं मोत्तूण सेसो अजहण्णो। तस्स आदी णत्थि, धुवो अभव्वाणं, अधुवो भव्वाणं ति, एस तिविहो ॥५०॥

(मलय०)–उक्तशेषेषु विकल्पेषु द्विधा प्ररूपणा कर्तव्या। तद्यथा–सादिरध्रुवश्च। तत्र चतुर्णां घातिकर्मणां उत्कृष्टानुत्कृष्टजघन्येषु जघन्यः सादिरध्रुवश्च भावित एव, उत्कृष्टः कदाचिन्मिथ्यादृष्टेर्भवति, अन्यदा तु तस्याप्यजघन्यः, अत एतौ साद्यध्रुवौ। शेषाणां चतुर्णामघातिकर्मणां जघन्याजघन्योत्कृष्टेषु मध्ये उत्कृष्टो भावित एव, जघन्यः सूक्ष्मस्यापर्याप्तस्यैकेन्द्रियस्य हतप्रभूतानुभागसत्कर्मणो लभ्यते, नान्यस्य। प्रभूतानुभागसत्कर्मघाताभावे तु तस्याप्यजघन्यः, तत एतावपि साद्यध्रुवौ। एता मूलप्रकृतीनां साद्यनादिप्ररूपणा, सम्प्रत्युत्तरप्रकृतीनां साद्यनादिप्ररूपणार्थमाह–'अह' इत्यादि। उत्तरासूत्तरप्रकृतिषु मध्ये सप्तदशानां कर्मणामनन्तानुबन्धिचतुष्टयसंज्वलनचतुष्टयनवनोकषायलक्षणानामजघन्योऽनुभागसंक्रमश्चतुर्धा। तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–एतेषामनन्तानुबन्धिवर्जानां त्रयोदशकर्मणां स्वस्वक्षयपर्यवसानावसरे जघन्यस्थितिसंक्रमकाले जघन्योऽनुभागसंक्रमः प्राप्यते। अनन्तानुबन्धिनां पुनरुद्वलनासंक्रमेणोद्वल्य भूयोऽपि मिथ्यात्वप्रत्ययतो बद्धानां बन्धावलिकायामतीतायां द्वितीयावलिकायाः प्रथमसमये जघन्योऽनुभागसंक्रमः। एतदन्यः पुनः सर्वोऽप्येतासां सप्तदशप्रकृतीनामजघन्यः। स चोपशमश्रेण्यामुपशान्तानामेतासां न भवति, ततः प्रतिपाते च पुनर्भवति, ततोऽसौ सादिः। तत्स्थानमप्राप्तस्य पुनरनादिः। अध्रुवध्रुवौ भव्याभव्यापेक्षया। तथा पञ्चविधज्ञानावरणस्त्यानर्द्धित्रिकवर्जषड्दर्शनावरणपञ्चविधान्तरायलक्षणानां षोडशकर्मणामजघन्योऽनुभागसंक्रमस्त्रिविकल्पः–त्रिप्रकारः, तद्यथा–अनादिरध्रुवो ध्रुवश्च। तथाहि–एतेषां षोडशकर्मणां जघन्यानुभागसंक्रमः क्षीणकषायस्य स्वगुणस्थानकस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य प्राप्यते। ततोऽन्यः सर्वोऽप्यजघन्यः, तस्य चादिर्न विद्यते इत्यनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया ॥५०॥

(उ०)–मूलप्रकृतिपूक्तशेषा विकल्पा द्विधा प्ररूपणीयाः, तद्यथा–सादयोऽध्रुवाश्च। तत्र चतुर्णां घातिकर्मणामुत्कृष्टानुत्कृष्टजघन्येषु

जघन्यः साद्यध्रुवश्च भावित एव । उत्कृष्टो मिथ्यादृष्टेः प्रतिनियतकाल एव भवति, अन्यदा तु तस्याप्यनुत्कृष्ट इत्येतौ साद्यध्रुवौ । जघन्यः सूक्ष्मस्यापर्याप्तस्यैकेन्द्रियस्य हतप्रभूतानुभागसत्कर्मणो लभ्यते, नान्यस्य । प्रभूतानुभागसत्कर्मघाताभावे तु तस्याप्यजघन्यः, किं पुनरन्यस्येत्येतावपि साद्यध्रुवौ । कृता मूलप्रकृतीनां साद्यनादिप्ररूपणा । सम्प्रत्युत्तरप्रकृतीनां साद्यनादिप्ररूपणामाह—'अह' इत्यादि । अथोत्तराद्युत्तरप्रकृतिषु मध्ये सप्तदशानां प्रकृतीनामनन्तानुबन्धिचतुष्टयसंज्वलनचतुष्टयनोकषायनवकलक्षणानामजघन्योऽनुभागसंक्रमश्चतुर्धा साद्यनादिध्रुवाध्रुवभेदात् । तथाहि—एतासामनन्तानुबन्धिवर्जानां त्रयोदशानां स्वस्वक्षयपर्यवसानावसरे जघन्यस्थितिसंक्रमकाले जघन्यानुभागसंक्रमः प्राप्यते । अनन्तानुबन्धिनां तूद्वलनासंक्रमेणोद्वल्य भूयोऽपि मिथ्यात्वप्रत्ययतो बद्धानां बन्धावलिकातिक्रमे द्वितीयावलिकाद्यसमये जघन्यानुभागसंक्रमो लभ्यते । एतदन्यस्तु सर्वोऽप्येतासां सप्तदशप्रकृतीनामजघन्यः, स चोपशमश्रेण्यामुपशान्तानामेतासां न भवति, ततः प्रतिपाते च भवतीति सादिः । तत्स्थानमप्राप्तस्यानादिः । अध्रुवध्रुवौ भव्याभव्यापेक्षया । तथा ज्ञानावरणपञ्चकस्त्यानर्द्धित्रिकवर्जदर्शनावरणषट्कान्तरायपञ्चकलक्षणानां षोडशप्रकृतीनामजघन्यानुभागसंक्रमस्त्रिविकल्पः—त्रिप्रकारः—अनादिरध्रुवो ध्रुवश्चेति । तथाहि—एतासां षोडशप्रकृतीनां जघन्यानुभागसंक्रमः क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य प्राप्यते, ततोऽन्यः सर्वोऽप्यजघन्यः, तस्य चादिर्नास्तीत्यनादिः । अध्रुवाध्रुवौ प्राग्वत् ॥५०॥

तिविहो छत्तीसाए णुक्कोसोऽह णवगस्स य चउद्धा । एयासिं सेसा सेसगाण सव्वे य दुविगप्पा ॥५१॥

(चू०)—छत्तीसाए कम्मपगडीणं अणुक्कसो अणुभागसंकमो अणादिधुवअधुव इति तिविगप्पो । के ते कम्दा

कहं वा तिविगप्पो? भण्णइ–सातावेयणिज्जपणिंदितजातितेजतिगसत्तगं समचउरंससंठाणं लोहितहालिद्द-सुक्किलसुरभिगन्धकसायअंबिलमहुरमउतलहुतउसिणणिद्ध इति एयं सुभवण्णेक्कारसगं अगुरुलहुतं पराघातं उस्सासं पसत्थविहायगति, तसबादरपज्जत्तपत्तेयथिरसुभसुभगसुस्सरआदेयजसमिति–एतं तसादिदसगं भ-णंति, णिमेणमिति एयासिं छत्तीसाए पगतीणं खवगो अप्पप्पणो बन्धवोच्छेयकाले उक्कोसं अणुभागं बंधति, आवलिआते गताते उक्कोसं संकमति जाव सजोगिचरिमसमउत्ति। खवगसजोगिकेवलिवज्जस्स सेसस्स अणु-क्कस्सं अणुभागं संकमति, तस्स आदी णत्थि, धुवसंतकम्मतादेव, धुवो अभव्वाणं, अधुवो भव्वाणं ति तिवि-गप्पं भवति। 'अह णवगस्स य चउद्ध' त्ति–णवण्हं पगतीणं अणुक्कस्सो अणुभागसंकमो चउव्विहो। के वा कम्हा कहं वा चउव्विहो? भण्णइ–उरालियसत्तगवज्जरिसहणारायसंघयणउज्जोवणामाणं एतेसिं णवण्हं क-म्माणं उज्जोयवज्जाणं देवेण सम्मद्दिट्ठिणा सव्वसुद्धेण उक्कोसो अणुभागो बद्धो, उज्जोयवज्जाणं तस्स बन्धावलि-याए गताए उक्कोसो अणुभागो संकमति। उज्जोवणामस्स अहे सत्तमाए गमितस्स मिच्छदिट्ठिस्स से काले सम्मत्तं पडिवज्जिउकामस्स उक्कोसो अणुभागो बद्धो, सो बन्धावलिताते गताते उक्कोरसाणुभागो संकमति। जह-ण्णेण अंतोमुहुत्तं, उक्कोसेणं व छावट्ठीउ सागरोवमाणं। उक्कोसातो परिवडमाणस्स अणुक्कोसस्स सातीतो अणु-भागसंकमो, तं ठाणं अप्पत्तपुव्वस्स अणादीतो, धुवो अभव्वाणं, अधुवो भव्वाणं एस चउव्विहो। 'एतासिं सेसा सेसिगाणं सव्वे य दुविगप्पा' इति। 'एतासिं सेस' त्ति–सत्तरससोलसछत्तीसणवाणं भणियविगप्पं

मोत्तूण सेसा तिण्णि विगप्पा। तेसु सव्वेसु सादितअधुवो अणुभागसंकमो। 'सेसिगाण सव्वे य' त्ति। 'सेसिगाणं' ति–भणितसेसाणं अट्ठुत्तरिवज्जाणं असीतीते पगतीणं 'सव्वे य' ति–उक्कोसअणुक्कोसजहण्णाअजहण्णा विगप्पा 'दुविगप्प' त्ति–साति य अधुवा। कहं? (सत्तरसण्हं)सोलसण्ह(उक्कोसो मिच्छदिट्ठिस्स, अणुक्कोसो)वि तस्सेव मिच्छदिट्ठिस्स, उक्कस्साणुक्कस्सा (परावत्तिओ) लब्भंति। छत्तीसण्हं जहण्णतो सुहमेगिंदियंमि हतसत्तकंमितंमि। अजहण्णगो वि तस्सेव सुहुमस्स। उक्कोसं खवगसजोगिम्मि, कारणं पुव्वुत्तं। तम्हा तिसु वि सादि य अधुवो। णवगस्स जहण्णगं सुहुमंमि हतसंतकंमंमि, अजहण्णगो वि तस्सेव, उक्कोसस्स पुव्वुत्तं देवंमि तमतमाणारगंमि य, तम्हा तिसु वि सादितमधुवो। सेसिगाणं सण्णिमि पंचिंदियम्मि पज्जत्तगंमि सुभाणं विसुद्धंमि असुभाणं संकिलिट्ठंमि उक्कोसो अणुभागबन्धो लब्भति। उक्कोस्साणुक्कोसस्स सादिअधुवो अणुभागसंकमो। एतंमि जहण्णगं सुहुमंमि हतसंतकंमितम्मि लब्भति, अजहण्णगं सव्वत्थ, तम्हा सादितअधुवो सव्वत्थ। भणिया सादिअणादिपरूवणा ॥ ५१ ॥

(मलय०)–'तिविहो' त्ति। सातवेदनीयपञ्चेन्द्रियजातितैजससप्तकसमचतुरस्रसंस्थानशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धलक्षणशुभवर्णाद्येकादशकागुरुलघूच्छ्वासपराघातप्रशस्तविहायोगतित्रसादिदशकनिर्माणलक्षणानां षट्त्रिंशत्प्रकृतीनामनुत्कृष्टोऽनुभागसंक्रमः 'त्रिविधः'–त्रिप्रकारः, तद्यथा–अनादिर्ध्रुवोऽध्रुवश्च। तथाहि–आसां षट्त्रिंशत्प्रकृतीनां क्षपक आत्मीयात्मीयबन्धव्यवच्छेदकाले उत्कृष्टमनुभागं बध्नाति बद्ध्वा च बन्धावलिकायामतीतायां संक्रमयितुमारभते, तं च तावत्संक्रमयति यावत्सयोगिकेव-

लिचरमसमयः। ततः क्षपकसयोगिकेवलिवर्जस्य शेषस्यानुत्कृष्ट एवानुभाग एतासां संक्रामति, तस्य चादिर्न विद्यत इत्यनादिः। ध्रुवाध्रुवौ अभव्यभव्यापेक्षया। 'अह' इत्यादि। अथशब्दस्तथार्थे। नवकस्य—उद्योतवज्रर्षभनाराचसंहननौदारिकसप्तकलक्षणस्यानुत्कृष्टोनुभागसंक्रमश्चतुर्विधः, तद्यथा—सादिरनादिध्रुवोऽध्रुवश्च। तथाहि—एतेषामुद्योतवर्जानामष्टानां कर्मणां सम्यग्दृष्टिर्देवोऽत्यन्तविशुद्धपरिणाम उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायामतीतायां संक्रमयति। उद्योतनाम्नः पुनः सप्तमनरकपृथिव्यां वर्तमानो नैरयिको मिथ्यादृष्टिः सम्यक्त्वं प्रतिपत्तुकाम उत्कृष्टमनुभागबन्धं करोति। ततो बन्धावलिकायामतीतायां संक्रमयति। तं च जघन्येनान्तर्मुहूर्तमुत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत्। इह यद्यपि सप्तमनरकपृथिव्यां चरमेऽन्तर्मुहूर्तेऽवश्यं मिथ्यात्वं गच्छति तथाप्यग्रेतने भवेऽन्तर्मुहूर्तानन्तरं यः सम्यक्त्वं प्रतिपद्यते स इह गृह्यते। ततोऽपान्तराले स्तोको मिथ्यात्वकालो भवन्नपि चिरंतनग्रन्थेषु न विवक्षित इत्यस्माभिरपि द्वे षट्षष्टी सागरोपमाणां यावदित्युक्तम्। तत उत्कृष्टात्प्रतिपतितस्यानुत्कृष्टः। स च सादिः। तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवावभव्यभव्यापेक्षया। 'एयासिं' इत्यादि। एतासां—सप्तदशषोडशषट्त्रिंशन्नवकरूपाणां प्रकृतीनामुक्तशेषा विकल्पाः, उक्तसप्तदशादिव्यतिरिक्तानां च शेषप्रकृतीनामशीतिसंख्यानां सर्वेऽप्युत्कृष्टानुत्कृष्टजघन्याजघन्या 'द्विविकल्पाः'—द्विप्रकारा ज्ञातव्याः, तद्यथा—सादयोऽध्रुवाश्च। तथाहि—सप्तदशानां षोडशानां चोत्कृष्टोऽनुभागसंक्रमो मिथ्यादृष्टेरुत्कृष्टे संक्लेशे वर्तमानस्य प्राप्यते। शेषकालं तु तस्याप्यनुत्कृष्ट एव। अत एव तौ द्वावपि साद्यध्रुवौ। जघन्यो भावित एव। तथा षट्त्रिंशत्प्रकृतीनां नवकस्य च जघन्योऽनुभागसंक्रमः सूक्ष्मैकेन्द्रिये हतप्रभूतानुभागसत्कर्मणि प्राप्यते। प्रभूतानुभागसत्कर्मघाताभावे तु तस्मिन्नप्यजघन्यस्तत एतौ साद्यध्रुवौ। उत्कृष्टो भावित एव। शेषाणां प्रकृतीनां संज्ञिनि पञ्चेन्द्रिये पर्याप्ते शुभानां—वैक्रियसप्तकदेवद्विकोच्चैर्गोत्रातपतीर्थकराहारकसप्तकमनुजद्विकनरकायुर्वर्जशेषायुस्त्र-

यरूपाणां चतुर्विंशतिसंख्यानां विशुद्धौ, अशुभानां च–स्त्यानर्द्धित्रिकासातवेदनीयदर्शनमोहनीयत्रितयाप्रत्याख्यानप्रत्याख्यानावरणक-
पायनरकायुर्नरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयप्रथमवर्जसंस्थानप्रथमवर्जसंहननाशुभवर्णादिनवकाप्रशस्तविहायोगत्युप-
घातस्थावरदशकनीचैर्गोत्ररूपाणां षट्पञ्चाशत्संख्यानां संक्लेशे उत्कृष्टोऽनुभागबन्धो लभ्यते। शेषकालं त्वनुत्कृष्टः। एवं संक्रमोऽपि।
नत एतौ साद्यध्रुवौ। जघन्योऽनुभागसंक्रमः पुनः सूक्ष्मैकेन्द्रिये हतप्रभूतानुभागसत्कर्मणि प्राप्यते। प्रभूतानुभागसत्कर्मघाताभावे
तु तस्मिन्नप्यजघन्यः। तत एतावपि साद्यध्रुवौ ॥ ५१ ॥

(उ०)–सातवेदनीयपञ्चेन्द्रियजातितैजससप्तकसमचतुरस्रसंस्थानशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघूष्णस्निग्धलक्षण-
वर्णादिकादशकागुरुलघूच्छ्वासपराघातप्रशस्तविहायोगतित्रसदशकनिर्माणलक्षणानां षट्त्रिंशत्प्रकृतीनामनुत्कृष्टोऽनुभागसंक्रमस्त्रिविधो-
ऽनादिध्रुवाध्रुवभेदात्। तथाहि–एतासां षट्त्रिंशत्प्रकृतीनां स्वस्वबन्धव्यवच्छेदकाले क्षपक उत्कृष्टमनुभागं बध्नाति, बन्धावलिका-
त्यये च तं संक्रमयितुमारभते। तं च तावत्संक्रमयति यावत्सयोगिकेवलिचरमसमयः। ततः क्षपकसयोगिकेवलिवर्जस्य सर्वस्यानु-
त्कृष्ट एवासामनुभागः संक्रामति। स चानादिः, आदेरभावात्। ध्रुवाध्रुवावभव्यभव्यापेक्षया। अथशब्दस्तथार्थे, नवकस्योद्योतवज्रर्ष-
भनाराचसंहननौदारिकसप्तकलक्षणस्यानुत्कृष्टोऽनुभागसंक्रमश्चतुर्विधः साद्यनादिध्रुवाध्रुवभेदात्। तथाहि–एतासामुद्योतवर्जानामष्टानां
प्रकृतीनां सम्यग्दृष्टिर्देवोऽत्यन्तविशुद्धपरिणाम उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायामतीतायां तं संक्रमयति। उद्योतनाम्नस्तु सप्तम-
नरकपृथिवीनैरयिको मिथ्यादृष्टिः सम्यक्त्वं प्रतिपित्सुरुत्कृष्टमनुभागं बध्नाति। बन्धावलिकात्यये च तं संक्रमयति जघन्येनान्तर्मुहूर्तम्,
उत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत्। इह यद्यपि सप्तमनरकपृथिव्यामन्तिमेऽन्तर्मुहूर्तेऽवश्यं मिथ्यात्वं गच्छति, तथाऽप्यग्रेतनभ-

वेऽन्तर्मुहूर्त्तानन्तरं यः सम्यक्त्वं प्रतिपत्स्यते स इह गृह्यते। ततोऽन्तराले स्तोकं मिथ्यात्वकालमविवक्षितत्वाद् द्व पट्षष्टी सागरोपमाणामुच्येते। तत उत्कृष्टात् प्रतिपतितस्यानुत्कृष्टः, स च सादिः। तत्स्थानमप्राप्तस्यानादिः। अध्रुवध्रुवौ भव्याभव्यापेक्षया। एतासां सप्तदशषोडशपट्त्रिंशन्नवकरूपाणां प्रकृतीनामुक्तशेषविकल्पाः सप्तदशाद्यतिरिक्तानां च शेषप्रकृतीनामशीतिसङ्ख्यानां सर्वेऽपि विकल्पा द्विविकल्पाः–द्विप्रकारा ज्ञातव्याः, साद्यध्रुवभेदात्। तथाहि–सप्तदशानां षोडशानां चोत्कृष्टोऽनुभागसंक्रमो मिथ्यादृष्टेरुत्कृष्टसंक्लेशे वर्तमानस्य प्राप्यते, शेषकालं तु तस्याप्यनुत्कृष्ट एवेत्येतौ द्वावपि साद्यध्रुवौ। जघन्यस्तु भावित एव। तथा पट्त्रिंशत्प्रकृतीनां नवकस्य च जघन्योऽनुभागसंक्रमः सूक्ष्मैकेन्द्रियस्य हतप्रभूतानुभागसत्कर्मणः प्राप्यते, प्रभूतानुभागसत्कर्मघाताभावे तु तस्मिन्नप्यजघन्य इत्येतौ साद्यध्रुवौ। उत्कृष्टस्तु भावित एव। शेषाणां प्रकृतीनां संज्ञिपञ्चेन्द्रियपर्याप्ते शुभानां वैक्रियसप्तकदेवद्विकोच्चैर्गोत्रातपतीर्थकराहारकसप्तकमनुजद्विकनरसुरतिर्यगायुर्लक्षणानां चतुर्विंशतिसङ्ख्यानां विशुद्धौ, अशुभानां च स्त्यानर्द्धित्रिकासातवेदनीयदर्शनमोहनीयत्रयाप्रत्याख्यानप्रत्याख्यानावरणकषायनरकायुर्नरकद्विकतिर्यग्द्विकाद्यजातिचतुष्टयानाद्यसंस्थानसंहननाशुभवर्णादिनवकाप्रशस्तविहायोगत्युपघातस्थावरदशकनीचैर्गोत्ररूपाणां पट्पंचाशत्सङ्ख्यानां संक्लेशे उत्कृष्टोऽनुभागबन्धो लभ्यते, तथाविधविशुद्धिसंक्लेशाभावे त्वनुत्कृष्टः। तथैव संक्रमावप्युत्कृष्टानुत्कृष्टाविति साद्यध्रुवावेतौ। जघन्यानुभागसंक्रमस्तु सूक्ष्मैकेन्द्रिये हतप्रभूतानुभागसत्कर्मणि लभ्यते। प्रभूतानुभागसत्कर्मघाताभावे तु तस्मिन्नप्यजघन्यस्तत एतावपि साद्यध्रुवौ॥ ५१॥

## मूलप्रकृतिष्वनुभागसंक्रमस्य साद्यादिभङ्गयन्त्रम्।

| प्रकृतीनां | अजघन्य. | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्ट | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादि. | अध्रुव. | अना० | ध्रुव. | सादिः | अध्रुव | सादिः | अध्रु० | अना० | ध्रु० | सादिः | अध्रु० |
| ज्ञाना० दर्शना० विघ्नानां | — | भव्यानां | अक्षीणमोहानां | अभव्या० | १२ मे समयाधिकाव० शेषे | सादित्वात् | उत्कृष्टादागतानां प्रथमसमये | सादित्वात् | — | — | नियतकालत्वात् | सादित्वात् |
| मोहस्य | ११ त. पतितक्षायिकसम्य० | " | सादिस्थानाप्राप्तौ | " | क्षप० १०मे समयाधिकाव० शेषे | " | " | " | — | — | " | " |
| आयुषः | अहतप्रभृतानुभागानां | सादित्वात् | — | — | हतप्रभृतानुभागजीवानां | " | उत्कृष्टादन्येषां बन्धका० | भव्यानां | साद्यप्राप्तानां | अभव्यानां | उ० सत्ताकानां मनुजानामनुत्तराणां च | " |
| नामगोत्रवेदनीयानां | " | " | — | — | " | " | " | " | आदेरभावात् | " | क्षपकाणां १२-१३ मे | " |

## उत्तरप्रकृतिष्वनुभागसंक्रमस्य साद्यादिभङ्गयन्त्रम्।

| प्रकृतीनाम् | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रु० | अना० | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रु० |
| ९नोक० संज्व० ४ नाम् | उप० श्रेणितः पतितानां | भ० | साद्य-प्राप्तानां | अभव्या० | स्वस्वक्षयसमये | सादित्वात् | उत्कृष्टानुभागसंक्रमात्पतितानां | सादित्वात् | — | — | उत्कृ० संक्लेशानां मिथ्यादृशां | सादित्वात् |
| अनन्तानु० ४ नाम् | ” | , | ” | ” | पुनर्बन्धद्वितीयावलिकाद्यसमये | ” | ” | ” | — | — | ” | ” |
| ज्ञाना० ५-दर्श० ६-अन्त० ५ नाम् | — | ” | आदेरभावात् | ” | १२ मे समयाधिकाव० शेषे | ” | ” | ” | — | — | ” | ” |
| सात-पंचें-तै० ७-समच-शुभ वर्णादि ११-अ-गु०-उच्छ्वा०- | अहतप्रभूतानुभागसत्ताकानां | सादित्वात् | — | — | हतप्रभूतानुभागसत्कर्म सूक्ष्मै- | ” | — | भव्यानां | क्षपक सयोगिवर्जे- | अभव्यानां | स्वस्वक्षपककालात् सयोगिगुणपर्यन्तव- | ” |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| परा०-सुरग-त्रसादि १०-निर्माणाना (३६) | | | | | एकेन्द्रियाणां | | | | पाणां | | समानानां | ” |
| त्रस०-आदा० ७ नाम् | ” | ” | — | — | ” | ” | उ० संक्रमा त्पतितानां | ” | साध-प्राप्त-स्य | ” | अतिविशुद्ध सम्य० देवानां | ” |
| उद्योतस्य | ” | ” | — | — | ” | ” | ” | ” | ” | ” | सम्य०अभिमुखसप्तम-नारकाणां | ” |
| पं०७-वैच २-उ ध०-आन०-जिन-आता०७-मनु० २-शुभायु ३ नाम (२४) | ” | ” | — | — | ” | ” | ” | ” | — | — | विशुद्ध पर्या० संज्ञि पंचेन्द्रियाणां | ” |
| स्त्यानर्द्धित्रिकादि ६८ अशुभानामनुभागानां | ” | ” | — | — | ” | ” | ” | ” | — | — | संक्लिष्टपर्या० संज्ञिपंचेन्द्रिया० | ” |

इदानीं साभित्तं भण्णति। तं दुविहं–उक्कोसअणुभागसंकमसामित्तं जहण्णऽणुभागसंकमसामित्तं। तत्थ उक्कोसं पुव्वं वुच्चति। तक्कालपरिमाणणियमणत्थं इमा गाहा—

**उक्कोसगं पबंधिय आवलियमइच्छिऊण उक्कस्सं। जाव ण घाएइ तयं संकमइ आमुहुत्तंता ॥५२॥**

(चू०)—उक्कोसगं बंधिउमाढत्तं आवलियाते परतो उक्कोसं संकमयति जाव तं उक्कोसं स ण विणासेति। तं कित्तियकालं ण विणासेति ? भण्णति–'आमुहुत्तंता' त्ति–जाव अंतोमुहुत्तं। परतो मिच्छादिट्ठी सुभाणं अणुभागं संकिलेसेणं विणासेति असुभाणं विसोहीए विणासेति त्ति तेण मुहुत्तगहणं ॥५२॥

(मलय०)–कृता साद्यनादिप्ररूपणा, सम्प्रति स्वामित्वं वक्तव्यम्। तच्च द्विधा–उत्कृष्टानुभागसंक्रमस्वामित्वं जघन्यानुभागसंक्रमस्वामित्वं च। तत्रोत्कृष्टानुभागसंक्रमस्वामित्वमभिधित्सुस्तत्कालप्रमाणनियमनार्थमिदमाह—'उक्कोसगं' ति। मिथ्यादृष्टिरुत्कृष्टमनुभागं बद्ध्वा तत आवलिकामतिक्रम्य–बन्धावलिकायाः परत इत्यर्थः, तमुत्कृष्टमनुभागं संक्रमयति तावद्यावन्न विनाशयति। कियन्तं कालं यावत्पुनर्न विनाशयतीति चेत्, उच्यते–'आमुहूर्तान्तः'–अन्तर्मुहूर्तं यावदित्यर्थः। परतो मिथ्यादृष्टिः शुभप्रकृतीनामनुभागं संक्लेशेन अशुभप्रकृतीनां तु विशुद्ध्याऽवश्यं विनाशयति ॥ ५२ ॥

(उ०)–कृता साद्यनादिप्ररूपणा, अथ स्वामित्वकथनावसरः। तच्च द्विधा–उत्कृष्टानुभागसंक्रमस्वामित्वं जघन्यानुभागसंक्रमस्वामित्वं च। तत्रोत्कृष्टानुभागसंक्रमस्वामित्वं निरूपयिषुस्तत्कालप्रमाणनियममादावाह—मिथ्यादृष्टिरुत्कृष्टमनुभागं बद्ध्वा, आवलिकामिति–बन्धावलिकामतिक्रम्य–तस्याः परत इत्यर्थः, उत्कृष्टमनुभागं तावत्संक्रमयति यावन्न घातयति–विनाशयति। कियन्तं कालं या-

यत्र विनाशयतीति चेद्, उच्यते–'आमुहूत्ताद्'–अन्तर्मुहूर्तं यावदित्यर्थः। परतो मिथ्यादृष्टिः शुभप्रकृतीनामनुभागं संक्लेशेनाशुभप्रकृतीनां तु विशुद्ध्याऽवश्यं विनाशयति ॥ ५२ ॥

इयाणिं सामी णिद्दंसिज्जत्ति—

**असुभाणं अन्नयरो सुहुमअपज्जत्तगाइ मिच्छो उ। वज्जिय असंखवासाउए य मणुओववाए य ॥५३॥**

(चू०)—'असुभाणं' ति। पंचविहं णाणावरणं, णवविहं दंसणावरणं, असातावेयणिज्जं, अट्ठावीसतिविहं मोहणिज्जं, णिरयगतितिरियगतिएगिंदियजाति जाव चउरिंदियजाति, संघयणसंठाणा आदिल्लविरहिगा दस, कालणीलदुब्भिगंधतित्तकडुककक्खडगरुयसीतलुक्ख एतं कुवण्णणवगं भण्णाति, णिरयाणुपुव्वितिरियाणुपुव्वी उपघातं अपसत्थविहायगति थावरं सुहुमं अपज्जत्तगं साहारणं अथिरं असुभं दूभगं दूसरं अणादेज्जं अजसकित्ति–एवं थावरदसगं भण्णाति, णीयागोयं, पंचविहं अन्तराइयमिति–एतासिं अट्ठासीतीए असुभपगतीणं 'अण्णयरातो'–विसेसियवयणं 'सुहुमअपज्जत्तगादि मिच्छो उ' त्ति–सुहुमएगिंदियअपज्जत्तगमिच्छादिट्ठि आदिं कातूण सव्वो मिच्छद्दिट्ठी अण्णयरो–एगिंदितो वा बितिचतुपंचेन्दियतिरिमणुस्सादेवनेरतितो वा पज्जत्तगो अपज्जत्तगो वा उक्कोसं अणुभागं संकामेति। अविसेसेण सव्वे इति पत्ते अववातो–'वज्जितअसंखवासाउते य मणुओववाए य'–असंखेज्जवासाउता तिरिक्खमणुस्सा देवा य जे माणुसेसु उववज्जंति एते मोत्तूण। कहं एते ण संकामंति ? भण्णति–उक्कोसअणुभागरसं न बन्धंति तिव्वेण संकिलेसेण तेसु ण उववज्जंति। तव्वज्जा सेसा

उक्कोसं अणुभागं संकामेति ॥५३॥

(मलय०)–सम्प्रति स्वामी प्रतिपाद्यते—'असुभाणं' ति। अशुभानां प्रकृतीनां पञ्चविधज्ञानावरणनवविधदर्शनावरणासातवेदनीयाष्टाविंशतिविधमोहनीयनरकद्विकतिर्यग्द्विकपञ्चेन्द्रियवर्जजातिचतुष्टयप्रथमवर्जसंस्थानप्रथमवर्जसंहनननीलकृष्णदुरभिगन्धतिक्तकटुकरूक्षशीतकर्कशगुरूपघाताप्रशस्तविहायोगतिस्थावरसूक्ष्मसाधारणापर्याप्तास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्रपञ्चविधान्तरायलक्षणानामष्टाशीतिसंख्यानामन्यतरः सूक्ष्मापर्याप्तादिः, आदिशब्दात् पर्याप्तसूक्ष्मपर्याप्तापर्याप्तबादरद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञितिर्यक्पञ्चेन्द्रियमनुष्यदेवनारकपरिग्रहः। तत एतेषामन्यतमो मिथ्यादृष्टिरुत्कृष्टमनुभागसंक्रमं करोति, केवलमसंख्येयवर्षायुषो मनुष्यतिरश्चो ये च देवाः स्वभवाच्च्युत्वा मनुष्येषूत्पद्यन्ते तांश्च मनुष्योपपातान् आनतप्रमुखान् देवान् वर्जयित्वा। एते हि मिथ्यादृष्टयोऽपि नाशुभप्रकृतीनामुक्तस्वरूपाणामुत्कृष्टमनुभागं बध्नन्ति, ती संक्लेशाभावात्, ततश्चोत्कृष्टानुभागसंक्रमाभाव इति तेषां वर्जनम् ॥ ५३ ॥

(उ०)–अथोत्कृष्टसंक्रमस्वामी प्रतिपाद्यते—अशुभानां प्रकृतीनां ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीयाष्टाविंशतिविधमोहनीयनरकद्विकतिर्यग्द्विकाद्यजातिचतुष्टयानाद्यसंस्थानसंहनननीलकृष्णदुरभितिक्तकटुकरूक्षशीतकर्कशगुरूपघाताप्रशस्तविहायोगतिस्थावरदशकनीचैर्गोत्रान्तरायपञ्चकलक्षणानामष्टाशीतिसङ्ख्यानामन्यतमः सूक्ष्मापर्याप्तादिः, आदिशब्दाद् पर्याप्तसूक्ष्मपर्याप्तापर्याप्तबादरद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञितिर्यक्पञ्चेन्द्रियमनुष्यदेवनारकपरिग्रहः। एतदन्यतमो मिथ्यादृष्टिरुत्कृष्टमनुभागसंक्रमं करोति। अविशेषोक्तौ नियममाह–केवलं येऽसङ्ख्येयवर्षायुषो मनुष्यतिर्यञ्चो ये च मनुष्योपपाता नामानतप्रमुखा देवाः स्वभवाच्च्युत्वा मनुष्येष्वेवोत्पद्यन्ते इतिकृत्वा तान् वर्जयित्वा। एते हि मिथ्यादृष्टयोऽपि सन्तो न प्रागुक्ताशुभप्रकृतीनामुत्कृष्टमनुभागं बध्नन्ति, तीव्रसंक्लेशाभावात्। तत

एतासामुत्कृष्टानुभागसंक्रमोऽप्येतेषां न भवतीत्येतद्वर्जनम् ॥ ५३ ॥

इदाणिं सुभपगतीणं आउगाणं च सामित्तपरूवणा—

**सव्वत्थ आयवुज्जोयमणुयगइपंचगाण आऊणं। समयाहिगालिगा सेसिगत्ति सेसाण जोगंता ॥५४॥**

(चू०)—'सव्वत्थ' त्ति। णियमिएसु एगिंदियअपज्जत्तातिसु पडिसेहिएसु असंखवासाउमणुयतिरिएसु मणुतावचातिएसु देवेसु आणतादिसु एतेसु वि पडिसेहिएसु 'आतवुज्जोयमणुयगइ पंचगाणं' ति—आतावं, उज्जोयं, मणुयगतिउरालियसरीरउरालियंगोवंगवज्जरिसभमणुयगतिपातोग्गाणुपुव्वी, उरालियदुगग्गहणेण उरालिनसत्तगं गहितं, एतासिं बारसण्हं पगतीणं सव्वेसिं उक्कोसो अणुभागसंकमो भवति। किं कारणं? भण्णई—सम्मदिट्ठी सुभं अणुभागं ण विणासेति, उक्कोसेण बे छावट्ठी सागरोवमाणं सुभं अणुभागं उक्कोसं परिपालेति। एवतियं कालं अविणासेत्तु पच्छा सव्वहिं उप्पज्जति। 'आतूणं समताहिगालिगा सेसिग' त्ति—चउण्हं आउगाणं उक्कोसं अणुभागं बंधित्तु बंधावलितादीतं जाव समयाहियावलियसेसा ताबुक्कोसो अणुभागो संकमति। 'सेसाण जोगंत' त्ति—सेसाणं सुभपगतीणं सातावेयणीतदेवगतिपंचिंदियजातिवेउव्वियसत्तगा आहारगसत्तगा तेजनिगसत्तग समचउरंससंठाणं सुभवण्णेक्कारस देवाणुपुव्वि अगुरुलहुग पराघाय उस्सास पसत्थविहायगति तसादिदसगं णिमेण तित्थगर उच्चागोयमिति—एतासिं चउप्पण्णाए पगतीणं अप्पप्पणो बंधवोच्छेगाओ आवलियाओ परतो जाव सजोगिचरिमसमतोत्ति ताव उक्कोसअणुभागसंकमसामिणो। भणियं

उक्कोससाभित्तं ॥ ५४ ॥

(मलय०)–'सव्वत्थ' त्ति। सर्वत्र–सर्वेषु सूक्ष्मापर्याप्तादिषु नैरयिकपर्यवसानेषु असंख्येयवर्षायुस्तिर्यग्मनुष्येषु मनुष्योपपातेषु च देवेषु आनतादिषु मिथ्यादृष्टिषु सम्यग्दृष्टिषु वा आतपस्योद्योतस्य मनुजगतिपञ्चकस्य–मनुजगतिमनुजानुपूर्व्यौदारिकद्विकवज्रर्षभनाराचसंहननलक्षणस्य, अत्रौदारिकद्विकग्रहणादौदारिकसप्तकं गृह्यते, तथाविवक्षणात्, ततः सर्वसंख्यया द्वादशानां प्रकृतीनामुत्कृष्टोऽनुभागसंक्रमो वेदितव्यः। तथाहि–सम्यग्दृष्टिः शुभमनुभागं न विनाशयति किंतु विशेषतो द्वे षट्षष्टी सागरोपमाणां यावत् परिपालयति, ततः उत्कर्षत एतावन्तं कालं यावदुत्कृष्टमनुभागमविनाश्य पश्चात्सर्वत्र यथायोग्यमुत्पद्यते। ततो मिथ्यादृष्टिष्वप्यनन्तरोक्तप्रकृतीनामुत्कृष्टोऽनुभागसंक्रमोऽन्तर्मुहूर्तं कालं यावदवाप्यते। आतपोद्योतयोश्चोत्कृष्टोऽनुभागो मिथ्यादृष्टिनैव बध्यते, ततो न तत्र तयोरुत्कृष्टानुभागसंक्रमाभावः। मिथ्यात्वाच्च प्रतिपत्य सम्यक्त्वं गते सम्यग्दृष्टावपि प्राप्यते। न च सम्यग्दृष्टिः सन् तयोरुत्कृष्टमनुभागं विनाशयति, शुभप्रकृतित्वात्। ततो द्वे षट्षष्टी अपि सागरोपमाणां यावदुत्कर्षतस्तयोस्तत्र संक्रमो द्रष्टव्यः। तथा चतुर्णामायुषामुत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायामतीतायां यावत्समयाधिकावलिका शेषा तावदुत्कृष्टानुभागसंक्रमः प्राप्यते। शेषाणां तु शुभप्रकृतीनां सातवेदनीयदेवद्विकपञ्चेन्द्रियजातिवैक्रियसप्तकाहारकसप्तकतैजससप्तकसमचतुरस्रसंस्थानशुक्ललोहितहारिद्रवर्णसुरभिगन्धकषायाम्लमधुररसमृदुलघुस्निग्धोष्णस्पर्शप्रशस्तविहायोगत्युच्छ्वासागुरुलघुपराघातत्रसादिदशनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणानां चतुःपञ्चाशत्संख्यानामात्मीयात्मीयबन्धव्यवच्छेदसमये उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परतस्तावदुत्कृष्टमनुभागं संक्रमयति यावत्सयोगिकेवलिचरमसमयः। तथा चैतासां प्रकृतीनामुत्कृष्टानुभागसंक्रमस्वामिनः प्रायोऽपूर्वकरणादयः सयोगिकेवलिपर्यवसाना द्रष्टव्याः॥ ५४ ॥

(उ०)—सर्वत्र-सर्वेषु सूक्ष्मापर्याप्तादिनैरयिकान्तेषु असङ्ख्येयवर्षायुस्तिर्यग्मनुष्यमनुष्योपपातदेवसहितेषु मिथ्यादृष्टिषु सम्यग्दृष्टिषु आतपोद्योतस्य मनुजगतिमनुजानुपूर्व्यौदारिकद्विकवज्रर्षभसंहननलक्षणस्य मनुजगतिपञ्चकस्य च, अत्रौदारिकद्विकोक्तिभङ्ग्याऽप्यौदारिकसप्तकं गृह्यते तथैव विवक्षणात्, ततः सर्वसङ्ख्यया द्वादशानां प्रकृतीनां उत्कृष्टानुभागसंक्रमो ज्ञातव्यः। तथाहि—सम्यग्दृष्टिः शुभप्रकृतीनामनुभागं न विनाशयति किंतु विशेषतो द्वे षट्षष्टी सागरोपमाणां यावदनुवर्तयति। तत उत्कर्षत एतावन्तं कालमियतीनां प्रकृतीनामुत्कृष्टमनुभागमविनाश्य पश्चात्सर्वत्र यथायोगमुत्पद्यते। ततो मिथ्यादृष्टिष्वप्यनन्तरोक्तप्रकृतीनामुत्कृष्टोऽनुभागसंक्रमोऽन्तर्मुहूर्तं यावदवाप्यत इति। आतपोद्योतयोश्चोत्कृष्टोऽनुभागो मिथ्यादृष्टिनैव बध्यते इति तत्र तयोरुत्कृष्टानुभागसंक्रमो नासंभवी। स च मिथ्यात्वात्प्रतिपत्य सम्यक्त्वं गते सम्यग्दृष्टावपि प्राप्यते, सम्यग्दृष्टेः सतः शुभप्रकृतित्वेन तयोरुत्कृष्टानुभागाविनाशकत्वात्, ततो द्वे षट्षष्टी अपि सागरोपमाणां यावदुत्कर्षतस्तयोस्तत्र संक्रमो द्रष्टव्यः। तथा चतुर्णामप्यायुषां सम्यग्दृष्टयो मिथ्यादृष्टयो चोत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायामतीतायां संक्रमयन्ति तावद्यावत्समयाधिकावलिकाशेष इति। तत आयुषामुत्कृष्टानुभागसंक्रमस्वामिनः सम्यग्दृष्टयो मिथ्यादृष्टयो वा प्राप्यन्ते। शेषाणां तु शुभप्रकृतीनां सातवेदनीयदेवद्विकपञ्चेन्द्रियजातिवैक्रियसप्तकाहारकसप्तकतैजससप्तकसमचतुरस्रसंस्थानशुक्ललोहितहारिद्रवर्णसुरभिगन्धकषायाम्लमधुररसमृदुलघुस्निग्धोष्णस्पर्शप्रशस्तविहायोगत्युच्छ्वासागुरुलघुपराघाततत्रसदशकनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणानां चतुःपञ्चाशत्सङ्ख्यानां स्वस्वबन्धव्यवच्छेदसमये उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परतस्तावदुत्कृष्टानुभागसंक्रमो यावत्सयोगिकेवलिचरमसमयः। तथा चैतासामुत्कृष्टानुभागसंक्रमस्वामिनः स्वबन्धव्यवच्छेदस्योपरितनगुणस्थानस्था जीवा योग्यन्ताः सयोगिकेवलिपर्यवसाना द्रष्टव्याः॥ ५४॥

उत्कृष्टानुभागसंक्रमस्वामिनः।

| प्रकृतयः | स्वामिनः | उत्कृष्टसंक्रमसततकालः |
|---|---|---|
| नरकायुर्वर्जं ८८ अशुभानां | युगलिकानतादिवर्जामिथ्यादृष्टयःसर्वेजीवभेदाः | अन्तर्मुहूर्तं यावत् |
| आत०-उद्यो० मनु०२-औदा० ७-वज्रर्ष०(१२) | सम्यग्दृशो मिथ्यादृशो वा सर्वे जीवभेदा | १३२ सागराणिपर्यन्तम् |
| ४ आयुषाम् | उ०अनुभागबन्धकाःसम्यग्दृशो मिथ्यादृशोऽपि | समयाधिकावलिकाशेषपर्यन्तम् |
| ५४ उक्तशेषाणां | क्षपकः स्वस्वक्षयकालतः | क्षयकालादारभ्य सयोगिपर्यन्तम् |

इदाणिं जहण्णसामित्तस्स परिकम्मणत्थं भण्णति—

**खवगस्संतरकरणे अकए घाईण सुहुमकम्मुवरिं। केवलिणोणंतगुणं असन्निओ सेसअसुभाणं ॥५५॥**

(चू०)—खवगस्स अणुभागो जाव अंतरकरणं न कीरति ताव 'घातीणं' ति–सव्वघातिदेसघातीणं सुहुमएगिंदियस्स अणुभागसंतकम्मातो अणंतगुणितो होइ। अंतरकरणे कते सुहुमस्स अणुभागातो हेट्ठा भवति। 'केवलिणोणंतगुणं असंणितो सेसमसुभाणं' ति–सेसाणं अघातीणं असुभकम्माणं असातावेदणीयं आदिवज्जसंठाणसंघयणदसगं कुवण्णणवउवघायअपसत्थविहायगति अपज्जत्तगअथिरअसुभदूभगदूसरअणादेअअजसकित्ती-

णीयगोयाणं एतासिं तिसाए कम्मपगडीणं असण्णिपंचिंदियअणुभागातो केवलिणो अणुभागो अणंतगुणो भवति ॥५५॥

(मलय०)-तदेवमुक्त उत्कृष्टानुभागसंक्रमस्वामी, सम्प्रति जघन्यानुभागसंक्रमस्वामिनं प्रतिपिपादयिषुर्जघन्यानुभागसंक्रमसंभवपरिज्ञानार्थमाह—'खवगस्स' त्ति। यावदद्याप्यन्तरकरणं न विधीयते तावत्क्षपकस्य सर्वघातिनीनां देशघातिनीनां च प्रकृतीनां संबन्धी अनुभागः सूक्ष्मैकेन्द्रियसत्कादनुभागसत्कर्मणोऽनन्तगुणो भवति। अन्तरकरणे तु कृते सति सूक्ष्मैकेन्द्रियस्यापि सत्कादनुभागसत्कर्मणो हीनो भवति। तथा शेषाणामप्यघातिनीनामशुभप्रकृतीनामसातवेदनीयप्रथमवर्जसंस्थानप्रथमवर्जसंहननकृष्णनीलदुरभिगन्धतिक्तकटुगुरुकर्कशरूक्षशीतोपघाताप्रशस्तविहायोगतिदुर्भगदुःस्वरानादेयास्थिराशुभापर्याप्तायशःकीर्तिनीचैर्गोत्रलक्षणानां त्रिंशत्संख्यानां केवलिनोऽनुभागसत्कर्म असंज्ञिपञ्चेन्द्रियसत्कादनुभागसत्कर्मणोऽनन्तगुणं वेदितव्यम्। तथा च सति सर्वघातिनीनां देशघातिनीनां च प्रकृतीनां जघन्यानुभागसंक्रमसंभवः क्षपकस्यान्तरकरणे कृते सति वेदितव्यः। शेषाणां त्वशुभप्रकृतीनामुक्तरूपाणां जघन्यानुभागसंक्रमसंभवः न सयोगिकेवलिनि किंतु हतसत्कर्मणः सूक्ष्मैकेन्द्रियादेः, तस्यैव वक्ष्यमाणत्वात् ॥५५॥

(उ०)-तदेवमुक्त उत्कृष्टानुभागसंक्रमस्वामी। अथ जघन्यानुभागसंक्रमस्वामिनमभिधित्सुर्जघन्यानुभागसंक्रमसंभवज्ञानोपायमाह—यावदन्तरकरणं न विधीयते तावत्क्षपकस्य सर्वघातिनीनां देशघातिनीनां वा प्रकृतीनां संबन्ध्यनुभागः 'सूक्ष्मकर्मण उपरि' सूक्ष्मैकेन्द्रियसत्कादनुभागसत्कर्मणोऽनन्तगुणो भवति। अन्तरकरणे तु कृते सति सूक्ष्मैकेन्द्रियसम्बन्धिनोऽप्यनुभागसत्कर्मणो हीनो भवति। तथा शेषाणामप्यघातिनीनामशुभप्रकृतीनामसातवेदनीयानाद्यसंस्थानसंहननकृष्णनीलदुरभिगन्धतिक्तकटुगुरुकर्कशरूक्षशीतो-

पघाताप्रशस्तविहायोगतिदुर्भगदुःस्वरानादेयास्थिराशुभापर्याप्तायशःकीर्त्तिनीचैर्गोत्रलक्षणानां त्रिंशत्सङ्ख्यानामनुभागसत्कर्म केवलिनः 'असन्निउ' त्ति-असंज्ञिपञ्चेन्द्रियसम्बन्धिनोऽनुभागसत्कर्मणोऽनन्तगुणं ज्ञातव्यम् । तथा च सति सर्वघातिनीनां देशघातिनां च प्रकृतीनां जघन्यानुभागसंक्रमसंभवोऽन्तरकरणे कृते सति क्षपकस्यैव । शेषाणां तूक्तरूपाशुभप्रकृतीनां जघन्यानुभागसंक्रमसंभवो न सयोगिकेवलिनि किंतु केवल्यपेक्षयाऽनन्तभागकल्पतदनुभागस्य हतप्रभूतानुभागसत्कर्मणः सूक्ष्मैकेन्द्रियादेर्द्रष्टव्यः ॥ ५५ ॥

इदानीं सर्वकर्मणां सम्मदिट्ठीमिच्छदिट्ठीसु अंतोमुहुत्तस्स परतो अणुभागघाते पत्ते तं णिवारणत्थं इमं भण्णति–

**सम्मदिट्ठी ण हणइ सुहाणुभागं असम्मदिट्ठी वि। सम्मत्तमीसगाणं उक्कस्सं वज्जिया खवणं ॥५६॥**

(चू०)—'सम्मदिट्ठी ण हणइ सुभाणुभागे' ति। जावतिताओ सुभपगतीतो, कातो तातो ? सातं देवगती मणुयगती पंचिंदियजाति ओरालियसत्तगं विउव्वियसत्तगं आहारसत्तगं तेजतिगसत्तगं पढमसंठाणं पढमसंघयणं सुभवण्णिक्कारसगं देवमणुयाणुपुव्वीतो अगुरुलहु पराघायं उस्सासं आतावं उज्जोयं पसत्थविहायगति तसादिदसगं निमेणं तित्थगरं उच्चागोयं–एयासिं छावट्ठीए सुभपगतीणं जाव बे छावट्ठीओ सागरोवमाणं ताव सम्मदिट्ठी सुभ अणुभागं 'ण हणति'–ण विणासेति जं भणितं होति। 'असम्मदिट्ठी वि सम्मत्तमीसगाणं उक्कस्सं' ति–सम्मत्तसम्माभिच्छत्ताणं मिच्छदिट्ठी वि उक्कोसं अणुभागं ण विणासेति। 'वज्जिता खवणं' ति–सम्मदिट्ठी खवणकाले सम्मत्तसम्माभिच्छत्ताणं उक्कोसं अणुभागं घातेइ, अण्णत्थ ण हातेति। सम्मदिट्ठी सव्वत्थ वि उक्कोसं अणुभागं ण विणासेति ॥५६॥

(मलय०)–इह 'संकमइ आमुहुत्तंता' इति वचनात्सम्यग्दृष्टयो मिथ्यादृष्टयो वा किलान्तर्मुहूर्तात्परतः सर्वप्रकृतीनामनुभागघातं कुर्वन्तीति प्रसक्तं तत्रापवादमाह—'सम्मद्दिट्ठि' त्ति–इह याः शुभप्रकृतयः सातवेदनीयदेवद्विकमनुजद्विकपञ्चेन्द्रियजातिप्रथमसंस्थानप्रथमसंहननौदारिकवैक्रियसप्तकाहारकसप्तकतैजससप्तकशुभवर्णाद्येकादशकागुरुलघुपराघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसादिदशकनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणाः षट्षष्टिसंख्यास्तासां सर्वासामपि शुभमनुभागमुत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत्सम्यग्दृष्टिर्न विनाशयति। असम्यग्दृष्टिः–मिथ्यादृष्टिः,अपिशब्दात्सम्यग्दृष्टिश्च सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टमनुभागं न विनाशयति क्षपणं–क्षपणकालं वर्जयित्वा। एतदुक्तं भवति–क्षपणकाले सम्यग्दृष्टिरपि सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टमनुभागं विनाशयति, तेन क्षपणकालो वर्ज्यते। तथा चोक्तं पञ्चसंग्रहमूलटीकायाम्–"सम्यग्दृष्टयो मिथ्यादृष्टयश्च सम्यक्त्वसम्यग्मिथ्यात्वयोर्नोत्कृष्टमनुभागं विनाशयन्ति, अपि तु क्षपकः सम्यग्दृष्टिर्विनाशयति उभयोरपि दृष्टयोरिति"। मिथ्यादृष्टिः पुनः सर्वासामपि शुभप्रकृतीनां संक्लेशेनाशुभप्रकृतीनां तु विशुद्ध्याऽन्तर्मुहूर्तात्परत उत्कृष्टमनुभागमवश्यं विनाशयति ॥५६॥

(उ०)–इह 'संकमइ आमुहुत्तंता' इति यत्प्रागुक्तं, तत्र सम्यग्दृष्टयो मिथ्यादृष्टयो वाऽन्तर्मुहूर्त्तानन्तरं सर्वप्रकृतीनामनुभागमवश्यं घ्नन्तीति प्रसज्यते तदपवदन्नाह—इह याः शुभाः प्रकृतयः सातवेदनीयसुरद्विकमनुजद्विकपञ्चेन्द्रियजात्याद्यसंस्थानसंहननौदारिकसप्तकवैक्रियसप्तकाहारकसप्तकतैजससप्तकशुभवर्णाद्येकादशकागुरुलघुपराघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसदशकनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणाः षट्षष्टिसंख्यास्तासां सर्वासामपि शुभमनुभागमुत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत्सम्यग्दृष्टिर्न हन्ति–न विनाशयति। असम्यग्दृष्टिः मिथ्यादृष्टिः,अपिशब्दात्सम्यग्दृष्टिश्च, सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टमनुभागं न विनाशयति क्षपणं–क्षपणकालं वर्जयित्वा।

क्षपणकाले सम्यग्दृष्टिरेव सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टमनुभागं विनाशयतीति क्षपणकालो वर्ज्यते। तदिदमुक्तं पञ्चसंग्रहे—"सम्मद्दिट्ठी ण हणइ सुभाणुभागं दुवे वि दिट्ठीणं। सम्मत्तमीसगाणं उक्कोसं हणइ खवगो वि" ॥ ६१ ॥ अत्र 'दुवे वि' त्ति द्वावपि सम्यग्दृष्टिमिथ्यादृष्टी 'खवगो वि' त्ति अपेरवधारणार्थत्वात् 'किं तु क्षपक एवे'त्यर्थः। मिथ्यादृष्टिस्तु सर्वासामपि शुभप्रकृतीनां संक्लेशेन, अशुभप्रकृतीनां तु विशुद्ध्यान्तर्मुहूर्त्तात्परत उत्कृष्टमनुभागमवश्यं विनाशयतीत्युक्तमेव प्रागिति कृता जघन्यानुभागसंक्रमस्वामित्वप्रतिपादनाय भावना ॥ ५६ ॥

इयाणिं सामित्तं भण्णइ—

**अंतरकरणा उवरिं जहन्नठिइसंकमो उ जस्स जहिं। घाईणं णियगचरमरसखंडे दिट्ठिमोहदुगे ॥५७॥**

(चू०)—अंतरकरणे कए उवरि जासिं घातिकम्माणं जहिं जहण्णगो ट्ठितिसंकमो भणितो तासिं अप्पप्पणो ट्ठाणे तहिं जहण्णाणुभागसंकमो। के ते ? भण्णइ—णवणोकसाया चत्तारि संजलणा णिद्दा पयला पंचणाणावरण चत्तारि दंसणावरण पंच अंतरायमिति—एतेसिं एगूणतीसाए पगतीणं अंतरकरणस्स उवरिं जहण्णगट्ठितिसंकमो भवति। 'णियगचरिमरसखंडे दिट्ठिमोहदुगे'—अप्पप्पणो चरिमे अणुभागसंकमे सम्मत्तसम्मामिच्छत्ताणं जहण्णगो अणुभागसंकमो भवति। अहवा 'दिट्ठिमोहदुगे' त्ति—सम्मत्तसम्मामिच्छत्ताणं जहिं जहण्णगो ट्ठितिसकमो तहिं चेव जहण्णगो अणुभागसंकमो भवति। सम्मामिच्छत्तस्स सम्मत्ते चरिमसंछोभे जहण्णगो अणुभागसंकमो भवति ॥५७॥

(मलय०)-तदेवं जघन्यानुभागसंक्रमस्वामित्वप्रतिपादनाय भावना कृता। सम्प्रति जघन्यानुभागसंक्रमस्वामित्वमेवाह—'अंतरकरण' त्ति। अन्तरकरणादूर्ध्वं घातिकर्मप्रकृतीनां मध्ये यस्याः प्रकृतेर्यत्र गुणस्थानके जघन्यस्थितिसंक्रम उक्तः तस्यास्तत्र जघन्यानुभागसंक्रमोऽपि वेदितव्यः। एतदुक्तं भवति-अन्तरकरणे कृते सति अनिवृत्तिबादरसंपरायः क्षपको नवनोकपायसंज्वलनचतुष्टयानां क्षपणक्रमेण जघन्यस्थितिसंक्रमणकाले जघन्यानुभागसंक्रमं करोति। ज्ञानावरणपञ्चकान्तरायपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणनिद्राप्रचलारूपदर्शनावरणषट्कानां क्षीणकपायः समयाधिकावलिकाशेपायां स्थितौ वर्तमानो जघन्यानुभागसंक्रमं करोति। 'नियग' इत्यादि। दर्शनमोहनीयद्विकस्य सम्यक्त्वसम्यग्मिथ्यात्वरूपस्य क्षपणकाले निजकचरमरसखंडे—आत्मीयात्मीयचरमरसखंडसंक्रमणकाले जघन्यानुभागसंक्रमो भवति ॥५७॥

(उ०)-अथ जघन्यानुभागसंक्रमस्वामित्वमेवाह—अन्तरकरणादुपरि घातिकर्मप्रकृतीनां मध्ये यस्याः प्रकृतेर्यत्र गुणस्थानके जघन्यस्थितिसंक्रम उक्तस्तस्यास्तत्र जघन्यानुभागसंक्रमोऽपि वक्तव्यः। इदमुक्तं भवति-अन्तरकरणे कृते सत्यनिवृत्तिबादरसंपरायः क्षपको नोकपायनवकसंज्वलनचतुष्टयानां क्षपणक्रमेण जघन्यस्थितिसंक्रमणकाले जघन्यमनुभागं संक्रमयति। ज्ञानावरणपञ्चकान्तरायपञ्चकस्त्यानर्द्धित्रिकवर्जितदर्शनावरणषट्कानां क्षीणकपायः समयाधिकावलिकाशेपायां आवलिकाऽसंख्येयभागाधिकावलिकाद्विकशेपायां स्थितौ वर्तमानो जघन्यमनुभागं संक्रमयति। दर्शनमोहनीयद्विकस्य—सम्यक्त्वसम्यग्मिथ्यात्वरूपस्य क्षपणकाले निजकचरमरसखण्डे—स्वस्वचरमरसखण्डसंक्रमणकाले जघन्यानुभागसंक्रमो भवति ॥ ५७ ॥

**आऊण जहन्नठिइ बंधिय जावत्थि संकमो ताव। उव्वलणतित्थसंजोयणा य पढमालियं गंतुं ॥५८॥**

(चू०)—'आऊण जहन्नट्ठितिं बन्धिय जावत्थि संकमो ताव'। चतुण्हं आउगाणं जहन्नट्ठितिं 'बन्धित' त्ति–जहण्णयट्ठितिं बंधओ जहण्णं अणुभागं बंधति त्ति जहण्णट्ठितिगहणं, ततो आवलियाए परतो 'जावत्थि संकमो ताव'–त्ति आउगाणं जाव समताहिगा आवलिया ताव जहण्णो अणुभागसंकमो। 'उव्वलणतित्थसंजोयणा य पढमालियं गंतु' त्ति–णिरतगतिमणुयगतिदेवगतिवेउव्वियसत्तगआहारगसत्तगणिरतमणुयदेवाणुपुव्वीतो उच्चागोयमिति एतासिं एक्कवीसाए उव्वलमाणीणं तित्थगरअणंताणुबंधीणं च एतासिं बन्धगो बंधित्तुमाढत्तो सो बन्धावलियाए गताए जहन्नं अणुभागं संकामेति एक्कं समयं। को सामी? भण्णइ–वेउव्वेक्कारसगस्स असण्णिपंचिंदितो, मणुतदुगउच्चागोयाणं सुहुमणिगोतो, आहारगसत्तगस्स अप्पमत्तो, तित्थकरस्स असंजयसम्मदिट्ठी, संजोयणाणं अण्णयरो सम्मत्तपच्छाकडो मिच्छदिट्ठी ॥ ५८ ॥

(मलय०)–'आऊण' त्ति–चतुर्णामप्यायुषां जघन्यां स्थितिं बद्ध्वा, जघन्यां हि स्थितिं बध्नन् जघन्यमनुभागं बध्नातीति जघन्यस्थितिग्रहणम्। ततो जघन्यां स्थितिं बद्ध्वा बन्धावलिकायाः परतस्तावज्जघन्यानुभागं संक्रमयति यावत्समयाधिकावलिका शेषा भवति, ततो जघन्यां स्थितिं बद्ध्वा यावदस्ति संक्रमस्तावज्जघन्यानुभागसंक्रमः प्राप्यते। तथा नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्रलक्षणानामेकविंशत्युद्वलनप्रकृतीनां तीर्थकरस्यानन्तानुबन्धिनां च जघन्यमनुभागं बद्ध्वा प्रथमावलिकां–बन्धावलिकालक्षणां गत्वाऽतिक्रम्य, बन्धावलिकायाः परत इत्यर्थः, जघन्यमनुभागं संक्रमयति। कः संक्रमयतीति चेद्, उच्यते–वैक्रियसप्तकदेवद्विकनरकद्विकानामसंज्ञिपञ्चेन्द्रियः, मनुजद्विकोच्चैर्गोत्रयोः सूक्ष्मनिगोदः, आहारकसप्तकस्याप्रमत्तः, तीर्थकरस्याविरतसम्यग्दृष्टिः, अन-

न्तानुबन्धिनां पश्चात्कृतसम्यक्त्वो मिथ्यादृष्टिः संक्रमयतीति ॥५८॥

(उ०)—चतुर्णामप्यायुषां जघन्यां स्थितिं बद्ध्वा बन्धावलिकायाः परतो यावदस्ति संक्रमः समयाधिकावलिकाशेषसर्वस्वकालपर्यन्तं तावज्जघन्यानुभागसंक्रमः प्राप्यते। जघन्यस्थितिबन्धनियतो जघन्यानुभागबन्ध इति जघन्यस्थितिग्रहणम्। तथा नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्रलक्षणानामेकविंशत्युद्वलनप्रकृतीनां तीर्थकरस्य संयोजनाकषायाणां च जघन्यमनुभागं बद्ध्वा प्रथमावलिकां—बन्धावलिकालक्षणां गत्वाऽतिक्रम्य, बन्धावलिकायाः परत इत्यर्थः, जघन्यमनुभागं संक्रमयति। कः संक्रमयतीति चेद्, उच्यते—वैक्रियसप्तकदेवद्विकनरकद्विकानामसंज्ञिपञ्चेन्द्रियः,मनुष्यद्विकोच्चैर्गोत्रयोः सूक्ष्मनिगोदः,आहारकसप्तकस्याप्रमत्तः, तीर्थकरस्याविरतसम्यग्दृष्टिः, अनन्तानुबन्धिनां पश्चात्कृतसम्यक्त्वो मिथ्यादृष्टिः ॥ ५८ ॥

**सेसाण सुहुम हयसंतकम्मिगो तस्स हेट्ठओ जाव। बंधइ तावं एगिंदिओ व णेगिंदिओ वा वि ॥५९॥**

(चू०)—भणियसेसाणं सुहाण(मसुहाणं) सत्ताणउतीए पगडीणं सुहुमो 'हयसंतकम्मिगो'—जेण अणुभागसंतकंमं विणासितं सो हयसंतकम्मिगो 'तस्स हेट्ठतो जाव बन्धइ' ति। 'तस्स'—हयसत्तकम्मस्स अणुभागसंतकम्मस्स हेट्ठतो अणुभागं जाव बंधति ताव एगिंदियाइतो सो चेव हतसंतकंमितो एगिंदियो वेतिंदियतातिअन्नमभवं वट्टमाणो जाव अण्णं ततो तिव्वयरं अणुभागं ण बंधइ ताव तमेव जहण्णं अणुभागं संकामेति ॥५९॥

(मलय०)-'सेसाण' त्ति—उक्तशेषाणां शुभानामशुभानां वा प्रकृतीनां सप्तनवतिसंख्यानां यः सूक्ष्मैकेन्द्रियो वायुकायिकोऽग्निकायिको वा हतसत्कर्मा, हतं विनाशितं प्रभूतमनुभागसत्कर्म येन स हतसत्कर्मा, स तस्य—आत्मसत्कस्यानुभागसत्कर्मणोऽधस्तात्—ततः स्तो-

कतरमित्यर्थः, अनुभागं तावद्बध्नाति यावदेकेन्द्रियस्तस्मिन्नन्यस्मिन् वा एकेन्द्रियभवे वर्तमानः, अनेकेन्द्रियो वेति—स एव हतसत्कर्मा एकेन्द्रियोऽन्यस्मिन् द्वीन्द्रियादिभवे वर्तमानो यावदन्यं बृहत्तरमनुभागं न बध्नाति तावत्तमेव जघन्यमनुभागं संक्रमयति ॥५९॥

(उ०)—'शेषाणाम्'—उक्तोद्धरितानां शुभानामशुभानां च प्रकृतीनां सप्तनवतिसङ्ख्यानां यः सूक्ष्मकेन्द्रियो वायुकायिकोऽग्निकायिको वा हतं—संक्रमेण नाशितं सत्कर्म—प्रभूतानुभागसत्कर्म येन स तथा तस्य—स्वसम्बन्ध्यनुभागसत्कर्मणोऽधस्तात्—ततः स्तोकतरमित्यर्थः, अनुभागं यावद् बध्नाति तावदेकेन्द्रियस्तस्मिन्नन्यस्मिन् वा भवे एकेन्द्रियत्वे वर्तमानोऽनेकेन्द्रियो वेति—स एवैकेन्द्रियो हतप्रभूतानुभागसत्कर्मा भवान्तरे द्वीन्द्रियादिभवे वर्तमानो यावद् बृहत्तरमनुभागं न बध्नाति तावत्तमेव जघन्यमनुभागं संक्रमयति ॥५९॥

जघन्यानुभागसंक्रमस्वामियन्त्रम् ।

| प्रकृतयः | स्वामिनः | प्रकृतयः | स्वामिनः |
|---|---|---|---|
| घातिनः | ज० स्थि० संक्रमका अन्तरकरणादूर्ध्वं | नरक०२-देव०२-वै०७ | ज० अनु० वन्धकाः असं० पञ्चें० |
| ९ नोक० ४ संज्व० | क्षपकाः ज० स्थि० संक्रमकाः ९ माः | मनु० २-उच्चैः० | सूक्ष्मनिगोदाः |
| ज्ञा०५-अं०५-दर्श०४ | क्षीणमोहाः समयाधिकाव० शेषे | आहा० ७ | अप्रमत्ता |
| निन्द्रा २ | क्षी० आ० २ आ० असं० शेषे | जिननाम्नः | अविरतसम्यग्दृशः |
| सम्य० मिश्रयो | क्षयकालेऽन्त्यखण्डसंक्रमकाः | अनन्ता० ४ | पश्चात्कृतसम्यक्त्वाः मिथ्यादृशः |
| आयु ४ र्णाम् | ज० स्थि० वन्धकाः | ९७ उक्तशेषाणां | हतप्रभूतानुभागसत्ताकावग्निवायुकायिकौ, अन्यभवेऽपि तावेव यावद् बृहदनुभागं न बध्नीत |

भणितो अणुभागसंकमो, इयाणिं पदेससंकमो, तस्स इमे अत्थाहिगारा। तंजहा—सामण्णलक्खणं भेदो सादि-अणादिपरूवणा उक्कोसपदेससंकमसामी जहन्नपदेससंकमसामी। तत्थ सामण्णलक्खणपरूवणं—

**जं दलियमन्नपगइं णिज्जइ सो संकमो पएसस्स। उव्वलणो विज्झाओ अहापवत्तो गुणो सव्वो ॥६०॥**

(चू०)—'जं दलियं' इति। जं संकमपातोग्गं कम्मदव्वं 'अण्णपगतिं णिज्जति'—अण्णपगतिसभावेण परिणामिज्जति जं भणियं होति, 'सो संकमो पदेसस्स'—सो पदेससंकमो वुच्चति। गतं लक्खणं। इदाणिं भेदो—'उव्वलणो विज्झाओ अहापवत्तो गुणो सव्वो' इति। उव्वलणसंकमो विज्झातसंकमो, अहापव्वत्तसंकमो, गुणसंकमो सव्वसंकमो य। एतेहिं पंचहिं पगारेहिं कम्मदलितं अण्णपगतिं णिज्जति ॥६०॥

(मलय०)—तदेवमुक्तोऽनुभागसंक्रमः सम्प्रति प्रदेशसंक्रमाभिधानावसरः। तत्र चैतेऽर्थाधिकाराः, तद्यथा—सामान्यलक्षणं, भेदः, साद्यनादिप्ररूपणा, उत्कृष्टप्रदेशसंक्रमस्वामी, जघन्यप्रदेशसंक्रमस्वामी च। तत्र सामान्यलक्षणप्रतिपादनार्थमाह—'जं ति'। यत्संक्रमप्रायोग्यं दलिकं-कर्मद्रव्यं अन्यप्रकृतिं नीयते—अन्यप्रकृतिरूपतया परिणम्यते स प्रदेशसंक्रमः। उक्तं सामान्यलक्षणम्। सम्प्रति भेदमाह—'उव्वलणो' इत्यादि। प्रदेशसंक्रमः पञ्चधा। तद्यथा—उद्वलनासंक्रमः, विध्यातसंक्रमः, यथाप्रवृत्तसंक्रमः, गुणसंक्रमः, सर्वसंक्रमश्च। तत्र 'यथोद्देशं निर्देशः' इति न्यायात्प्रथमत उद्वलनासंक्रमस्य लक्षणमभिधीयते—इहानन्तानुबन्धिचतुष्टयसम्यक्त्वसम्यग्मिथ्यात्वदेवद्विकनरकद्विकवैक्रियसप्तकाहारकसप्तकमनुजद्विकोच्चैर्गोत्रलक्षणानां सप्तविंशतिप्रकृतीनां प्रथमतः पल्योपमासंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्तेन कालेनोत्किरति। ततः पुनरपि द्वितीयं स्थितिखण्डं पल्योपमासंख्येयभागमात्रमेव, केवलं प्रथमात् स्थितिखण्डात् विशेषहीनम-

न्तर्मुहूर्तेन कालेनोत्किरति। ततोऽपि तृतीयं स्थितिखण्डं पल्योपमासंख्येयभागमात्रम्, द्वितीयात् स्थितिखण्डात् विशेषहीनमन्तर्मुहूर्तेन कालेनोत्किरति। एवं पल्योपमासंख्येयभागमात्राणि स्थितिखण्डानि पूर्वस्मात् पूर्वस्मात् स्थितिखण्डाद्विशेषहीनानि तावद्वाच्यानि यावत् द्विचरमं स्थितिखण्डम्। सर्वाण्यपि च तानि प्रत्येकमन्तर्मुहूर्तेन कालेनोत्कीर्यन्ते। इह च द्विधा प्ररूपणा–अनन्तरोपनिधया परंपरोपनिधया च। तत्रानन्तरोपनिधया प्रथमस्थितिखण्डस्य प्रभूता स्थितिः। ततो द्वितीयस्य विशेषहीना। ततोऽपि तृतीयस्य विशेषहीना। एवं यावद् द्विचरमं स्थितिखण्डम्। कृताऽनन्तरोपनिधया प्ररूपणा। सम्प्रति परंपरोपनिधया क्रियते–तत्र प्रथमस्थितिखण्डापेक्षया कानिचित् स्थितिखण्डानि स्थित्यपेक्षयाऽसंख्येयभागहीनानि, कानिचित्संख्येयभागहीनानि, कानिचित् संख्येयगुणहीनानि, कानिचिदसंख्येयगुणहीनानि। यदा तु प्रदेशपरिमाणं चिन्त्यते तदा प्रथमस्थितिखण्डात् द्वितीयं स्थितिखण्डं दलिकापेक्षया विशेषाधिकम्। ततोऽपि तृतीयं विशेषाधिकम्, एवं तावद्वाच्यं यावद् द्विचरमं स्थितिखण्डम्। इयमनन्तरोपनिधा। परंपरोपनिधा पुनरियं–प्रथमात् स्थितिखण्डाद्दलिकमपेक्ष्य किंचिदसंख्येयभागाधिकम्, किंचित्संख्येयभागाधिकम्, किंचित्संख्येयगुणाधिकम्, किंचिदसंख्येयगुणाधिकम्। स्थितिखण्डानां चोत्करणविधिरयं–प्रथमसमये स्तोकं दलिकमुत्किरति, द्वितीये समयेऽसंख्येयगुणम्, ततोऽपि तृतीयसमयेऽसंख्येयगुणम्। एवं तावद्वाच्यं यावदन्तर्मुहूर्तस्य चरमसमयः। गुणकारश्चात्र पल्योपमासंख्येयभागलक्षणो वेदितव्यः। एवं सर्वेष्वपि स्थितिखण्डेषु द्रष्टव्यम्। दलिकं चोत्कीर्य क्व प्रक्षिप्यत इति चेद्, उच्यते–किंचित्स्वस्थाने किंचित्परस्थाने। तत्र कियत्प्रक्षिप्यत इति विशेषतो निरूप्यते–प्रथमे स्थितिखण्डे प्रथमसमये यत्कर्मदलिकमन्यप्रकृतिषु प्रक्षिपति तत् स्तोकम्। यत् स्वस्थान एवाधस्तात्प्रक्षिप्यते तत्ततोऽसंख्येयगुणम्। ततोऽपि द्वितीयसमये यत्स्वस्थाने प्रक्षिप्यते तदसंख्येयगुणम्। परप्रकृतिषु पुनर्यत् प्रक्षिप्यते तत्प्रथमसमयपरस्थानप्रक्षिप्ताद्विशेषहीनम्। तृ-

तीयसमये यत्स्वस्थाने प्रक्षिप्यते तद् द्वितीयसमयस्वस्थानप्रक्षिप्तादसंख्येयगुणम्। यत्पुनः परप्रकृतिषु प्रक्षिप्यते तद् द्वितीयसमयपरस्था-नप्रक्षिप्ताद्विशेषहीनम्। एवं तावद्वाच्यं यावदन्तर्मुहूर्तचरमसमयः। एवं सर्वेष्वपि स्थितिखण्डेषु द्विचरमस्थितिखण्डपर्यवसानेषु वाच्यम्। सम्प्रति चरमखण्डस्य विधिरुच्यते—चरमस्थितिखण्डं द्विचरमस्थितिखण्डापेक्षयाऽसंख्येयगुणं तदपि चरमस्थितिखण्डमन्तर्मुहूर्तेन कालेनो-त्कीर्यते। तस्य च यत्प्रदेशाग्रं तदुदयावलिकागतं मुक्त्वा शेषं सर्वं परस्थाने प्रक्षिपति। तच्चैवं—प्रथमसमये स्तोकम्, द्वितीये समयेऽसं-ख्येयगुणम्, ततोऽपि तृतीयसमयेऽसंख्येयगुणम्, एवं यावच्चरमसमयः। चरमसमये तु यत्परप्रकृतिषु प्रक्षिप्यते दलिकं स सर्वसंक्रम उच्यते। तत्र यावत्प्रमाणं द्विचरमस्थितिखण्डसत्कं कर्मदलिकं चरमसमये परप्रकृतिषु संक्रमयति, तावत्प्रमाणं चेच्चरमस्थितिखण्डस्य क-र्मदलिकं प्रतिसमयमपह्रियते तर्हि तच्चरमं स्थितिखण्डमसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिर्निर्लेपीभवति। एषा कालतो मार्गणा। क्षेत्रतः पुनरियं—यावत्प्रमाणं द्विचरमस्थितिखण्डसत्कं कर्मदलिकं परप्रकृतिषु संक्रमयति तावत्प्रमाणं कर्मदलिकं चरमस्थितिखण्डस्य सत्कमेक-त्रापह्रियते, अन्यत्र एक आकाशप्रदेशः, एवमपह्रियमाणं चरमस्थितिखण्डमङ्गुलमात्रक्षेत्रगतप्रदेशराशेरसंख्येयतमेन भागेनापह्रियते। अङ्गुलस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्ति चरमस्थितिखण्डे यथोक्तप्रमाणानि खण्डानि भवन्तीत्यर्थः। यावत्प्रमाणं पुन-र्द्विचरमस्थितिखण्डसत्कं कर्मदलिकं स्वस्थाने संक्रमयति तावत्प्रमाणं चेच्चरमस्थितिखण्डस्य कर्मदलिकं प्रतिसमयमपह्रियते तर्हि तच्चर-मं स्थितिखण्डं पल्योपमासंख्येयभागमात्रगतैः समयैर्निर्लेपीभवति ॥६०॥

(उ०)—तदेवमभिहितोऽनुभागसंक्रमः, सम्प्रति प्रदेशसंक्रमो वक्तुमवसरप्राप्तः, तत्र चामी अर्थाधिकाराः—सामान्यलक्षणम्, भेदः, साद्यनादिप्ररूपणा, उत्कृष्टप्रदेशसंक्रमस्वामी, जघन्यप्रदेशसंक्रमस्वामी च। तत्र सामान्यलक्षणं भेदं च प्रतिपादयन्नाह—यत्संक्रमयोग्यं

दलिकं–कर्मद्रव्यमन्यप्रकृतिं नीयते स्वभिन्नपतद्ग्रहप्रकृतिरूपतया परिणम्यते स प्रदेशसंक्रमः। सामान्यलक्षणप्रतिपादनमेतत्। स पञ्चधा–उद्वलनसंक्रमो विध्यातसंक्रमो यथाप्रवृत्तसंक्रमो गुणसंक्रमः सर्वसंक्रमश्चेति। भेदप्रतिपादनमेतत्। तत्र 'यथोद्देशं निर्देशः' इत्यादावुद्वलनासंक्रमलक्षणमभिधीयते—इह सम्यक्त्वसम्यग्मिथ्यात्वसुरद्विकनरकद्विकवैक्रियसप्तकाहारकसप्तकमनुजद्विकोच्चैर्गोत्रलक्षणानां त्रयोविंशतिप्रकृतीनां प्रथमतः पल्योपमासङ्ख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तेन कालेनोत्कीर्यते, घनदलान्वितस्याल्पदलस्योत्तारणमुत्किरणं तदेव चोद्वलनं व्यपदिश्यते। ततो द्वितीयं स्थितिखण्डं पल्योपमासंख्येयभागमात्रमेवान्तर्मुहूर्तेन कालेनोत्कीर्यते। केवलं प्रथमात् स्थितिखण्डाद् विशेषहीनम्। ततोऽपि तृतीयं स्थितिखण्डं पल्योपमासंख्येयभागमात्रं द्वितीयात् स्थितिखण्डाद्विशेषहीनमन्तर्मुहूर्त्तेन कालेनोत्कीर्यते। एवं प्रत्येकमन्तर्मुहूर्त्तेन कालेनोत्कीर्यमाणानि पल्योपमासंख्येयभागमात्राणि स्थितिखण्डानि पूर्वपूर्वस्थितिखण्डापेक्षया विशेषहीनानि विशेषहीनानि तावद्वाच्यानि यावद् द्विचरमं स्थितिखण्डम्। एतानि च सर्वाण्यनन्तरोपनिधया स्थित्यपेक्षया पूर्वपूर्वस्थितिखण्डाद्यथोत्तरमुत्तराणि विशेषहीनानि। परंपरोपनिधया च प्रथमस्थितिखण्डापेक्षया कानिचित्स्थितिखण्डान्यसंख्येयभागहीनानि, कानिचित्संख्येयभागहीनानि, कानिचित्संख्येयगुणहीनानि, कानिचिदसंख्येयगुणहीनानीत्येवं चतुःस्थानपतितानि। प्रदेशपरिमाणचिन्तायां त्वनन्तरोपनिधया पूर्वपूर्वस्थितिखण्डादुत्तरोत्तरस्थितिखण्डानि यथाक्रमं विशेषाधिकदलिकानि। परंपरोपनिधया तु प्रथमात्स्थितिखण्डाद्दलिकमपेक्ष्य किञ्चित्स्थितिखण्डमसंख्येयभागाधिकं किञ्चित्संख्येयभागाधिकं किञ्चित्संख्येयगुणाधिकं किञ्चिदसंख्येयगुणाधिकमित्येवं चतुःस्थानपतितानि। स्थितिखण्डानामुत्किरणविधिश्चायं–प्रथमसमये स्तोकं दलिकमुत्कीर्यते, द्वितीयसमये ततोऽसंख्येयगुणम्, ततोऽपि तृतीयसमयेऽसंख्येयगुणम्, एवं तावद्वाच्यं यावत्स्वस्वान्तर्मुहूर्त्तचरमसमयः। गुणकारश्चात्र

पल्योपमासंख्येयभागलक्षणो द्रष्टव्यः । तच्चोत्कीर्णदलिकं किञ्चित्स्वस्थाने किञ्चिच्च परस्थाने प्रक्षिप्यते । तत्र कुत्र कियान् प्रक्षेप इति
चेद्, उच्यते—प्रथमे स्थितिखण्डे प्रथमसमये यत्कर्मदलिकमन्यप्रकृतिषु प्रक्षिप्यते तत्सर्वस्तोकम्। यत्स्वस्थान एवाधस्तात् क्षिप्यते तत्ततोऽ-
संख्येयगुणम्। ततोऽपि यद् द्वितीये समये स्वस्थाने प्रक्षिप्यते तदसंख्येयगुणम्। परप्रकृतिषु पुनः प्रक्षिप्यमाणं प्रथमसमयपरस्थानप्रक्षि-
प्ताद्विशेषहीनम्। ततोऽपि यत्तृतीये समये स्वस्थाने प्रक्षिप्यते तद् द्वितीयसमयस्वस्थानप्रक्षिप्तादसंख्येयगुणम् । यत्पुनः परप्रकृतिषु प्रक्षि-
प्यते तद् द्वितीयसमयपरस्थानप्रक्षिप्ताद्विशेषहीनम् । एवं तावद्वक्तव्यं यावदन्तर्मुहूर्त्तचरमसमयः। एवं सर्वेष्वपि स्थितिखण्डेषु द्विचरम-
स्थितिखण्डान्तेषु भावनीयम्। चरमस्थितिखण्डं द्विचरमस्थितिखण्डात् स्थित्यपेक्षयाऽसंख्येयगुणं प्रथमस्थितिखण्डाच्च दलिकापेक्षया-
ऽसंख्येयगुणम्, स्थित्यपेक्षयाऽसंख्येयभागकल्पम्। उक्तं च पञ्चसंग्रहे—" असंखगुणयं अतिमयं " । अस्य प्रतीकस्य व्याख्या यथा—अन्ति-
मखण्डं द्विचरमखण्डात् स्थित्यपेक्षयाऽसंख्येयगुणम्। तुशब्दस्याधिकार्थसंसूचनादन्तिमस्थितिखण्डं प्रथमस्थितिखण्डापेक्षया दलिकमधि-
कृत्यासंख्येयगुणं स्थित्यपेक्षया त्वसंख्येयभागकल्पमिति। तदपि चरमस्थितिखण्डमन्तर्मुहूर्तेन कालेनोत्कीर्यते, तस्य च यत्प्रदेशाग्रं
तदुदयावलिकागतं मुक्त्वा शेषं सर्वमपि परस्थाने प्रक्षिप्यते। तच्च प्रथमसमये स्तोकं द्वितीयादिसमयेषु यथोत्तरमसंख्येयगुणं प्रक्षिप्य-
ते यावच्चरमसमयः। चरमसमये तु यत्परप्रकृतिषु दलिकं प्रक्षिप्यते स सर्वसंक्रम उच्यते, संक्रमार्हस्य सर्वस्यापि निर्लेपात्। तत्र याव-
त्प्रमाणं द्विचरमस्थितिखण्डसत्कं कर्मदलिकं चरमसमये परप्रकृतिषु संक्रम्यते तावत्प्रमाणं चेच्चरमस्थितिखण्डस्य कर्मदलिकं प्रतिसम-
यमपह्रियते तदा तच्चरमं स्थितिखण्डमसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिर्निर्लिप्यते। इयं कालतो मार्गणा। क्षेत्रतस्त्वियं मार्गणा—याव-
त्प्रमाणं द्विचरमस्थितिखण्डसत्कं कर्मदलिकं परप्रकृतिषु संक्रम्यते तावत्प्रमाणमेकत्र चरमस्थितिखण्डकर्मदलिकमपह्रियते, अन्यत्रैक

आकाशप्रदेशः, एवं तुल्यवदुभयापहारे क्रियमाणे चरमस्थितिखण्डमङ्गुलमात्रक्षेत्रगतप्रदेशराशेरसंख्येयतमेन भागेनापहृतं भवति, चरमस्थितिखण्डे द्विचरमस्थितिखण्डसत्कपरस्थानप्रक्षिप्यमाणदलिकपुञ्जप्रमाणानि खण्डान्यङ्गुलासंख्येयतमभागवर्त्याकाशप्रदेशप्रमाणानि भवन्तीत्यर्थः। यावत्प्रमाणं पुनर्द्विचरमस्थितिखण्डसत्कं कर्मदलिकं स्वस्थाने संक्रम्यते तावत्प्रमाणस्य चरमस्थितिखण्डकर्मदलिकस्य प्रतिसमयमपहारे तच्चरमं स्थितिखण्डं पल्योपमासंख्येयभागमात्रगतैः समयैर्निर्लेपीभवति ॥६०॥

तत्थ उव्वलणसंकमस्स लक्खणं भण्णति—

**आहारतणू भिन्नमुहुत्ता अविरइगओ पउव्वलए। जा अविरइओ त्ति उव्वलइ पल्लभागे असंखतमे ॥६१॥**

(चू०)–आहारगसंतकम्मिगो अविरतिं गतो अंतोमुहुत्तातो परतो आहारगं उव्वलितुमाढत्तो उव्वलेति। केवतितेणं कालेणं? भण्णति–जाव अविरतोत्ति ताव। अविरतिकालस्स अणंतत्तातो तं णियमेति–'पल्लभागे असंखतमे'त्ति–पलितोवमस्स असंखेज्जतिभागेण सव्वं उव्वलेति ॥६१॥

(मलय०)–तदेवमुक्तमुद्वलनासंक्रमलक्षणम्, संप्रत्येतदेव लक्षणं योजयन्नाहारकसप्तकस्योद्वलनासंक्रमकारकमाह—'आहार' त्ति–आहारकसप्तकसत्कर्माऽविरतिं–विरत्यभावं गतः सन् अन्तर्मुहूर्तात्परत आहारकतनूम्, इहाहारकग्रहणेनाहारकसप्तकं गृहीतं द्रष्टव्यम्। तत आहारकसप्तकं 'पउव्वलए' त्ति प्रोद्वलयति। कियता पुनः कालेनोद्वलयतीति चेद्, उच्यते–यावदविरतिस्तावदुद्वलयति। एतेनाविरतिप्रत्यया आहारकसप्तकस्योद्वलना प्रतिपादिता द्रष्टव्या। अविरतिश्चानन्तमपि कालं यावद् भवति, ततो नियममाह–'पल्लभागे असंखतमे' पल्योपमस्यासंख्येयतमेन भागेन सर्वमुद्वलयतीत्यर्थः ॥६१॥

(उ०)—उक्तमुद्वलनासंक्रमलक्षणम्, एतदेव योजयन्नाहारकसप्तकस्योद्वलनासंक्रमकारके तत्करणप्रक्रियामाह—आहारकतनुः, अङ्गवचनमाहारकसप्तकसंग्रहपरम्, तदाहारकसप्तकसत्कर्माऽविरति–विरत्यभावं गतः सन् 'भिन्नमुहुत्ता' इति अन्तर्मुहूर्तात्परतः प्रोद्वलयति। कियता कालेनोद्वलयतीति जिज्ञासायामाह—यावदविरतोऽविरतिभागी, इतिस्तावदर्थे, तावदुद्वलयति, तथा चाविरतिप्रत्ययाहारकसप्तकस्योद्वलना भवतीति प्रतिपादितं भवति। अविरतिश्चाहारकवतोऽविरतीभूतस्यापार्धपुद्गलपरावर्त्तं यावदपि लभ्यते, ततो नियममाह—'पल्यम्न' पल्योपमस्यासंख्येयतमे भागे—तावन्मात्रेण कालेन सर्वमुद्वलयतीत्यर्थः ॥ ६१ ॥

**अंतोमुहुत्तमद्धं पल्लासंखिज्जमेत्तठिइखंडं। उक्किरइ पुणो वि तहा ऊणूणमसंखगुणहं जा ॥६२॥**

(चू०)—'अंतोमुहुत्तमद्धं पल्लासंखिज्जमेत्तठितिखंडं उक्किरति' त्ति। अंतोमुहुत्तेणं कालेणं पलिओवमस्स असंखेज्जतिभागमेत्तं ठितिखण्डं उक्किरति। एस विही पढमखण्डगस्स। 'पुणो वि तह' त्ति–पुणो वि अण्णं ठितिखण्डगं एवमेव उव्वलति। एवं जाव चरिमं ठितिखंडगं ति। 'ऊणूणगसंखगुणहं ज' त्ति। पढमस्स ठितीखंडगस्स ठितितो बहुतातो, बितितस्स विसेसहीणातो, ततितस्स ठितिखंडगस्स ठितिओ विसेसहीणातो। एवं अणंतरोवणिधाए जाव दुचरिमातो खंडगाउत्ति विसेसहीणातो। परंपरोवणिधाए पढमठितिखंडकउवणिधाए अत्थि काणि वि ठितिखण्डगाणि असंखेज्जभागहीणाणि, अत्थि संखेज्जभागहीणाणि, अत्थि संखेज्जगुणहीणाणि, अत्थि काणि वि असंखेज्जगुणहीणाणि त्ति ॥६२॥

(मलय०) 'अंतोमुहुत्तं' ति–अन्तर्मुहूर्तप्रमाणामद्धां यावदन्तर्मुहूर्तेन कालेनेत्यर्थः, पल्योपमासंख्येयभागमात्रं स्थितिखण्डमुत्किरति।

एष विधिः प्रथमखण्डस्य। ततः पुनरपि तथा—तेनैव प्रकारेणान्तर्मुहूर्तेन कालेनान्यत् पल्योपमासंख्येयभागमात्रं खण्डं पूर्वसादूनमूनतरमुत्किरति। एवं तावद्वाच्यं यावत् द्विचरमं स्थितिखण्डम्, तच्च प्रथमस्थितिखण्डापेक्षयाऽसंख्येयगुणहीनम् ॥६२॥

(उ०)–अन्तर्मुहूर्त्तप्रमाणामद्धां यावदन्तर्मुहूर्त्तेन कालेनेत्यर्थः। पल्योपमासंख्येयभागमात्रं स्थितिखण्डमुत्किरति। एष प्रथमस्थितिखण्डस्य विधिः। ततः पुनरपि तथा तेनैव प्रकारेणान्तर्मुहूर्त्तेन कालेनोत्तरोत्तरं पल्योपमासंख्येयभागमात्रं खण्डं पूर्वस्मात्पूर्वस्मादूनमूनतरमुत्किरति। एवं तावद्वाच्यं यावद् द्विचरमस्थितिखण्डम्। तच्च प्रथमस्थितिखण्डापेक्षयाऽसंख्येयगुणहीनम् ॥ ६२ ॥

तस्स उक्किरिज्जमाणस्स दलितस्स णियमो भण्णइ—

**तं दलियं सट्ठाणे समए समए असंखगुणियाए। सेढीए परठाणे विसेसहाणीइ संछुभइ ॥६३॥**

(चू०)—एएसिं ठितिखंडगाणं पढमं ठितिखंडगं उक्किरिज्जति। तासिं ठितीणं पढमसमए उक्किरति पदेसग्गं थोवं, बितियसमए असंखेज्जगुणं, ततितसमए असंखेज्जगुणं, एवं जाव अंतोमुहुत्तं असंखेज्जगुणाए सेढीए। पलितोवमस्स असंखेज्जतिभागो गुणकारो। पढमसमए परपगतीसु जं दिज्जति दलितं तं थोवं, जं सट्ठाणे दिज्जति तं असंखगुणं, बितियसमए जं सट्ठाणे दिज्जति तं असंखेज्जगुणं, परट्ठाणे दिज्जति विसेसहीणं। एस विही पढमस्स ठितिखंडगस्स। सा चेव विही बितियस्स खण्डगस्स। एवं तइयस्स जाव दुचरिमातो खंडगातो त्ति ॥६३॥

(मलय०)–'तं' ति–तदुत्कीर्यमाणं दलिकं समये समये स्वस्थाने असंख्येयगुणितया श्रेण्या संछुभते–प्रक्षिपति। यत्पुनः परस्थाने परप्रकृतौ तद्विशेषहान्या। तद्यथा–प्रथमसमये यत् परप्रकृतौ प्रक्षिपति तत् स्तोकम्। यत्पुनः स्वस्थाने एवाधस्तात् प्रक्षिप्यते, तत्ततोऽ-

संख्येयगुणम्। ततोऽपि द्वितीयसमये यत् स्वस्थाने प्रक्षिप्यते तदसंख्येयगुणम् । परप्रकृतिषु पुनर्यत् प्रक्षिप्यते तत्प्रथमसमये परस्थानप्रक्षिप्ताद्विशेषहीनम्। एवं तावत्प्रतिसमयं वाच्यं यावदन्तर्मुहूर्तस्य चरमसमयः । एष प्रथमस्थितिखण्डस्योत्किरणविधिः । एवमन्येषामपि द्रष्टव्यम् ॥ ६३ ॥

(उ०)–तदुत्कीर्यमाणं दलिकं समये समये स्वस्थानेऽसंख्येयगुणितया श्रेण्या संछुभति–प्रक्षिपति, परस्थाने परप्रकृतौ तद्विशेषहान्या। तथाहि–प्रथमसमये परप्रकृतौ स्तोकं प्रक्षिप्यते, स्वस्थान एवाधस्तात् ततोऽसंख्येयगुणम्। ततोऽपि द्वितीयसमये स्वस्थाने यत्प्रक्षिप्यते तदसंख्येयगुणम्। परप्रकृतिषु च यत्प्रक्षिप्यते तदाद्यसमयपरस्थानप्रक्षिप्ताद्विशेषहीनम्। एवं प्रतिसमयं तावद्वाच्यं यावदन्तर्मुहूर्तचरमसमयः। एष प्रथमस्थितिखण्डस्योत्किरणविधिः, एवमन्येषामपि द्विचरमान्तानां द्रष्टव्यः ॥ ६३ ॥

**जं दुचरिमस्स चरिमे अन्नं संकमइ तेण सव्वं पि। अंगुलअसंखभागेण हीरए एस उव्वलणा ॥६४॥**

(चू०)–'जं दुचरिमस्स चरिमे अण्णं संकमइ तेण सव्वं पि'–जं दुचरिमं ठितिखंडगं तस्स चरिमे समए जं पदेसग्गं परट्ठाणे संकमति तेण पमाणेण जं चरमे ठितिखंडगे दलितं तं अवहीरमाणं अवहीरमाणं असंखेज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरति कालओ। 'अंगुलअसंखभागेण हीरति' त्ति–खेत्तओ अंगुलसेढीए असंखिज्जतिभागेणं अवहीरति। 'एस उव्वलण' त्ति–एस उव्वलणासंकमो। दुचरिमखंडगस्स जं चरिमसमए सत्थाणे दलितं दिज्जति तेण पमाणेणं अवहीरमाणं जं चरिमखंडगे दलितं तं पलितोवमस्स संखेज्जतिभागमेत्तेणं कालेणं अवहीरति ॥६४॥

(मलय०)–'जं' ति–द्विचरमस्थितिखण्डस्य चरमसमये यत् कर्मदलिकमन्यां प्रकृतिं संक्रमयति तेन मानेन–तावत्प्रमाणेन दलिकेनेत्यर्थः, यदि चरमं स्थितिखण्डमपह्रियते ततः कालतोऽसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियते, क्षेत्रतः पुनरङ्गुलमात्रक्षेत्रासङ्ख्येयतमेन भागेन। एषा प्रागुक्ता द्विचरमस्थितिखण्डं यावदाहारकसप्तकस्योद्वलना ॥ ६४ ॥

(उ०)–द्विचरमस्थितिखण्डस्य चरमसमये यत्कर्मदलिकमन्यां प्रकृतिं संक्रमयति तेन मानेन–तावत्प्रमाणेन दलिकेनेत्यर्थः, यदि चरमस्थितिखण्डमपह्रियते तदा कालतोऽसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियते। क्षेत्रतः पुनरङ्गुलमात्रक्षेत्रासंख्येयतमेन भागेन। एषा–इयद्दलविषयाहारकसप्तकस्य चरमस्थितिखण्डे उद्वलना ॥ ६४ ॥

**चरममसंखिज्जगुणं अणुसमयमसंखगुणियसेढीए। देइ परट्ठाणेवं संछुभतीणमवि कसिणो ॥६५॥**

(चू०)–'चरिममसंखिज्जगुण'त्ति। दुचरिमखंडगस्स ठितितो चरिमखंडगस्स ठिति असंखेज्जगुणा। 'अणुसमयमसंखगुणियसेढीए देइ परत्थाणेवं'ति–तस्स चरिमखंडगस्स जं पदेसग्गं उदितावलिलागतं मोत्तुण सेसं सव्वं परत्थाणे दिज्जति–पढमसमए थोवं, बितियसमए असंखेज्जगुणं, ततियसमए असंखेज्जगुणं, एवं जाव चरिमसमतो त्ति। 'संछुभतीणमवि कसिणो'त्ति–सव्वसंकमो रूतितो,'कसिणमि'ति–सव्वसंकमो,'संछुभतीणं'–णिल्लेवेज्जमाणीणं, जा पगती अण्णं पगतिं संकममाणा णिल्लेवा होति'त्ति से जो चरिमे संछोभो सो कसिणसंकमो ॥६५॥



(मलय०)–सम्प्रति चरमस्थितिखण्डकस्य वक्तव्यतामाह—'चरमं' ति–द्विचरमस्थितिखण्डाच्चरमं स्थितिखण्डं स्थित्यपेक्षयाऽसंख्येयगुणम्। तथा तस्य चरमखण्डस्य यत्प्रदेशाग्रं तदुदयावलिकागतं मुक्त्वा शेषं परस्थाने–परप्रकृतिषु अनुसमयं प्रतिसमयम्, असं-

ख्येयगुणनया श्रेण्या प्रक्षिपति। तद्यथा—प्रथमसमये स्तोकम्, द्वितीयसमयेऽसंख्येयगुणम्, तृतीयसमयेऽसंख्येयगुणम्, एवं यावच्चरमसमयः। एवममुना प्रकारेण परप्रकृतौ प्रक्षिप्यमाणानां प्रकृतीनाम्, अपिः—संभावने, चरमसमये यः कृत्स्नसंक्रमो भवति स सर्वसंक्रमः। एतेन सर्वसंक्रमस्य लक्षणं प्रतिपादितं द्रष्टव्यम् ॥६५॥

(उ०)—एतद्विधिवक्तव्यतामाह—द्विचरमस्थितिखण्डाच्चरमस्थितिखण्डं स्थित्यपेक्षयाऽसंख्येयगुणम्। तथा तस्य चरमखण्डस्य यत्प्रदेशाग्रं तदुदयावलिकागतं मुक्त्वा शेषं सर्वं परस्थाने—परप्रकृतिष्वनुसमयमसंख्येयगुणया श्रेण्या प्रक्षिपति। तथाहि—प्रथमसमये स्तोकम्, द्वितीयसमयेऽसंख्येयगुणम्, तृतीयसमयेऽसंख्येयगुणम्, एवं यावच्चरमसमयः। एवममुना प्रकारेण परप्रकृतौ प्रक्षिप्यमाणानाम्, अपिः संभावने, चरमसमये कृत्स्नो निरवशेषः संक्रमो भवति स सर्वसंक्रमोऽवसेयः। एतेन सर्वसंक्रमो लक्षितः ॥ ६५ ॥

अण्णातो वि पगतीतो उव्वलमाणीतो अत्थि तासिं अतिदेसो किरति इमाए गाहाए—

एवं मिच्छद्दिट्ठिस्स वेयगं मिस्सगं तओ पच्छा। एगिंदियस्स सुरदुगमओ सवेउव्विणिरयदुगं ॥६६॥

(चू०)—मिच्छद्दिट्ठि अट्ठावीससंतकम्मितो पुव्वं सम्मत्तं एतेण विहिणा उव्वलेति। ततो सम्मामिच्छत्तं तेणेव विहिणा। 'एगिंदियस्स सुरदुगं' एगिंदिओ पंचाणउतिसंतकम्मिओ णामकम्मस्स तिउत्तरातो सतातो आहारसत्तगे तित्थगरणामे य फेडिए सेसा पंचाणउती होति। एयातो पंचाणउतीतो देवगतिं देवाणुपुव्विं च एतेण विहिणा जुगवं उव्वलेइ। 'अतो सवेउव्विणिरयदुगं' पच्छा वेउव्वियसत्तगं णिरतदुगं च जुगवं उव्वलेति ॥६६॥

(मलय०)—सम्प्रति वेदकसम्यक्त्वादीनामुद्वलनासंक्रमकारकानाह—'एवं' ति—अष्टाविंशतिसत्कर्मा मिथ्यादृष्टिः प्रथमत एवमुपदर्शितेन

प्रकारेण सम्यक्त्वमुद्वलयति, ततः सम्यग्मिथ्यात्वम् । तथा एकेन्द्रिय आहारकसप्तकरहिता या नामकर्मणः पञ्चनवतिप्रकृतयस्तत्सत्कर्मा देवगतिदेवानुपूर्व्यौ पूर्वोक्तेन विधिना युगपदुद्वलयति, ततोऽनन्तरं वैक्रियसप्तकं नरकद्विकं च युगपदुद्वलयति ॥६६॥

(उ०)–अथ वेदकसम्यक्त्वादीनामुद्वलनासंक्रमकारकानाह–अष्टाविंशतिसत्कर्मा मिथ्यादृष्टिः प्रथमत एवमुक्तप्रकारेण सम्यक्त्वमुद्वलयति, ततः पश्चात्सम्यग्मिथ्यात्वम् । तथैकेन्द्रिय आहारकसप्तकवर्जपञ्चनवतिप्रकृतिसत्कर्मा देवगतिदेवानुपूर्व्यौ पूर्वोक्तेन विधिना युगपदुद्वलयति । ततोऽनन्तरं वैक्रियसप्तकं नरकद्विक च युगपदुद्वलयति ॥ ६६ ॥

**सुहुमतसे गोत्तुत्तममओ य णरदुगमहानियट्टिम्मि । छत्तीसाए णियगे संजोयणदिट्ठिजुअले य ॥६७॥**

(चू०)—'सुहुमतसे गोत्तुत्तमं' सुहुमतसा तेउकाया वाउकाया ते 'गोत्तुत्तमं' उच्चागोत्तं, एतेणेव विहिणा उव्वल्लेति। अतो–इमाओ 'णरदुगं' पच्छा ते चेव मणुतगति मणुयाणुपुव्वीतो एते। इदाणीं सम्मद्दिठिस्स उव्वलमाणीतो भण्णंति–'अहाणियट्टिमि छत्तीसाए' अहसद्दो अण्णाहिगारे, किमण्णं ? भण्णइ–कालओ अंतोमुहुत्तेण उव्वलतित्ति तं दरिसेति–अणियट्टिखवगो छत्तीसं कम्मपगतीतो एएणेव विहिणा उव्वलेंति। कयराओ पगतीओ ? भण्णइ–थीणगिद्धीतिगतेरसणामअडकसायाणवणोकसायसंजलणकोहमाणमाया इति एतासिं छत्तीसाए। 'णियगे संजोयणदिट्ठिजुयले य' इति। 'णियगे' इति–अप्पप्पणे खवेत्तगे अणंतानुबन्धिमिच्छत्तसम्मामिच्छत्ताणं एसा चेव विही ॥६७॥

(मलय०)–'सुहुम' त्ति–सूक्ष्मत्रसस्तैजस्कायिको वायुकायिकश्च, उत्तमं गोत्रमुच्चर्गोत्रम्, प्रथमतः पूर्वोक्तेन विधिनोद्वलयति । ततो

नरद्विकं-मनुजगतिमनुजानुपूर्वीलक्षणम् । तदेवं मिथ्यादृष्टेरुद्वलना प्रतिपादिता, सम्प्रति सम्यग्दृष्टेः प्रतिपाद्यते-'अहानियट्टिम्मि छत्ती-
साए' त्ति-अथशब्दोऽधिकारान्तरसूचकः। किमिदमधिकारान्तरमिति चेद्, उच्यते-प्राक्तनीनां प्रकृतीनामुद्वलना पल्योपमासंख्येयभाग-
मात्रेण कालेन भवति यथायोगं मिथ्यादृष्टेश्च, वक्ष्यमाणानां चान्तर्मुहूर्तेन कालेन सम्यग्दृष्टीनां चेत्यधिकारान्तरता। 'अनिवृत्तौ'-अनि-
वृत्तिबादरसंपराये षट्त्रिंशत्प्रकृतीनामुद्वलना । एतदुक्तं भवति-अनिवृत्तिबादरसंपरायः क्षपकः स्त्यानर्द्धित्रिकनामत्रयोदशकाप्रत्याख्या-
नप्रत्याख्यानावरणकषायाष्टकनवनोकषायसंज्वलनक्रोधमानमायालक्षणाः षट्त्रिंशत्प्रकृतीः स्वस्वक्षपणकालेऽन्तर्मुहूर्तेन कालेनोद्वलयति।
'नियगे' इत्यादि। निजके-आत्मीये क्षपके स्वक्षपकेऽविरतसम्यग्दृष्ट्यादावित्यर्थः। अत्र षष्ठ्यर्थे सप्तमी, 'सयोजनानाम्' अनन्तानुबन्धिनां
'दृष्टियुगलस्य च' मिथ्यात्वसम्यग्मिथ्यात्वयोश्च पूर्वोक्तविधिनोद्वलनाऽन्तर्मुहूर्तेन कालेनावगन्तव्या ॥६७॥

(उ०)-सूक्ष्मत्रसः-तेजस्कायिको वायुकायिकश्चोत्तमम्-उत्तमगोत्रमुच्चैर्गोत्राभिधं पूर्वोक्तेनविधिनोद्वलयति। अतश्च पश्चान्नरद्विकं मनु-
जगतिमनुजानुपूर्वीलक्षणम्। तदेवं मिथ्यादृष्टेरुद्वलना प्रतिपादिता, अथ सम्यग्दृष्टेः सा प्रतिपाद्यते-'अह त्ति' अथशब्दोऽधिकारा-
न्तरसूचकः, प्राक्तनीनां प्रकृतीनामुद्वलना पल्योपमासङ्ख्येयभागमात्रकालभाविनी मिथ्यादृष्टिकर्तृका च, वक्ष्यमाणप्रकृत्युद्वलना चान्त-
र्मुहूर्त्तमात्रकालभाविनी सम्यग्दृष्टिकर्तृका चेत्येतदधिकारान्तरम्। 'अनिवृत्तौ' अनिवृत्तिबादरसंपराये षट्त्रिंशत्प्रकृतीनामुद्वलना। तथाहि-
क्षपकोऽनिवृत्तिबादरसंपरायः स्त्यानर्द्धित्रिकनामत्रयोदशकमध्यमाष्टकषायनोकषायनवकसंज्वलनक्रोधमानमायालक्षणाः षट्त्रिंशत्प्रकृतयः
स्वस्वक्षपणकालेऽन्तर्मुहूर्त्तेन कालेनोद्वलयतीति । 'निजके'-स्वक्षपकेऽविरतसम्यग्दृष्ट्यादावित्यर्थः, सप्तम्याः षष्ठ्यर्थत्वात्, 'संयोजनाना-
म्' अनन्तानुबन्धिनां 'दृष्टियुगलस्य च'-मिथ्यात्वसम्यग्मिथ्यात्वलक्षणस्य पूर्वोक्तविधिनोद्वलनाऽन्तर्मुहूर्त्तेन कालेनावगन्तव्या ॥६७॥

## उद्वलना संक्रमस्य चित्रम् ।



उदयावलिका (उद्वलनाऽयोग्या इति उदयेनैव वेदयति)

अन्तिमस्थि० खण्डं उपान्त्यादसंख्येयगुणं प्रथमाच्चासंख्येयभागं दलिकापेक्षया प्रथमादसंख्येयगुणं प्रक्षेपः परस्थान एव प्रतिसमयमसंख्येयगुणःअत्रैच चरिमप्रक्षेपे सर्वसंक्रमः

उपान्त्य-स्थि०खण्डं

५मम्

४र्थम्

३स्थि०खण्डं

प० असं० द्वितीयस्थि०खण्डंप्रथमात् विशे०हीनं हीनांतर्मु० कालेनोद्वलनयोग्यं, प्रदेशापेक्षया विशेषाधिकमेवमग्रेतनमपि स्थि०खण्डम्

पल्यासं०भा० प्रथमं स्थितिखण्डमन्तर्मु० कालेनोद्वलनयोग्यं दलिकप्रक्षेपःस्वस्मिन् प्रतिसमयमसं० गुणं परस्मिन् प्रतिसमयं विशेषहीनमेवमुपान्त्यं यावत्

○—प्रदेशोपचितं स्थितिस्थानं, लतागतानि दर्शितानि स्थितिस्थानानि क्रमेण विशेषप्रदेशोपचितानीति कृत्वा क्रमेण गुरुगुरुतराणि।

## उद्वलनासंक्रमस्य यन्त्रम् ।

| प्रकृतिनाम् | उद्वलनस्वामिन. | उद्वलनकाल. | प्रकृतिनाम् | उद्वलनस्वामिन | उद्वलनकाल. |
|---|---|---|---|---|---|
| (मिथ्यादृशा २६ तीना मप्यापि आहा० ७ ना | अविरता | पल्यासंख्येयभागः | स्था०-सू०-तिर्य०२ नरक २-आतप-उद्योत-एके०-विकल-३-साधा० (१३) | ९ मे क्षपकाः | अन्तर्मुहूर्त्त. |
| सम्यक्त्वस्य | २८ मोहसत्ताकमिथ्यादृशः | ,, | मध्यकषाय ८ | ,, | ,, |
| मिश्रस्य | २८, २७ सत्ताको वा | ,, | नोकषाय ९ | ,, | ,, |
| देव २ कस्य (युगपत्) | आहा०जिनवर्ज९५नामसत्ताका एकेन्द्रियाः | ,, | सं० क्रो०-मान-माया | ,, | ,, |
| वैक्रिय ७ नरक २ } युगपत् | ,, | ,, | मिथ्यात्वस्य | ४-५-६-७गुणस्था. | ,, |
| उच्चैर्गोत्रस्य | अग्निवायुकायिकौ | ,, | मिश्रस्य | ,, | ,, |
| मनुष्यद्विकस्य | ,, | ,, | अनन्ता० ४ णाम् | ,, | ,, |
| सम्यग्दृशा ४२ मप्यापि स्त्यानर्द्धि ३ | ९ मे क्षपका | अन्तर्मुहूर्त्तम् | | | |

भणितो उव्वलणसंकमो इदाणीं, विज्झायसंकमो भण्णति। विज्झायसंकमो णाम अहापवत्ते संकमे निरुद्धे परपगतिं अच्चंतथोवदलियसंकमो।

जासि ण बंधो गुणभवपच्चयओ तासि होइ विज्झाओ। अंगुलअसंखभागेणवहारो तेण सेसस्स ॥६८॥

(चू०)—जेसिं कम्माणं बन्धो णत्थि गुणपच्चयओ भवपच्चयओ वा तेसिं कम्माणं विज्झायसंकमो हवति। कतरातो गुणपच्चतातो ? भण्णति–मिच्छद्दिट्ठिसासातणअविरतसम्मदिट्ठिदेसविरतपमत्तसंजयंतातो पगतीतो सोलसपणवीसदसचउछक्केत्ति एतासिं अणंतरादिसु गुणपच्चयतो बन्धो णत्थि, तेण तेसु उप्परिल्लेसु विज्झायसंकमो भवति। भवपच्चएण णेरइएसु वेउव्वेकारसगं एगिंदियादिचतुष्कं थावरसुहुम अपज्जत्तगासाहारणं आतावणामाणं एयासिं वीसाते पगतीणं भवपच्चतो णेरतीएसु बन्धो नत्थि। णिरतगतिदेवगति विउव्वितसत्तग बेंतिंदियतेंनिंदियचउरिंदियजातिनिरताणुपुव्विदेवाणुपुव्विसुहुमअपज्जत्तगसाहारणाण य भवपच्चयतो सव्वदेवाणं बन्धो णत्थि। एगिंदियआतवथावरणामाणं सणंतकुमारादीणं बन्धो णत्थि। एवं जस्स जस्स जं जं भवपच्चयतो बंध ण आदिसति तं तं तत्थ भाणियव्वं। तस्स दलियस्स पमाणणिरूवणत्थं भण्णति–'अंगुलअसंखभागेणवहारो तेण सेसस्स' जं पढमसमए परपगतिं विज्झातसंकमेण दलितं संकमति तेण दलितप्पमाणेणं तं दलितं अवहीरमाणं असंखेज्जाति उसप्पिणिहिं(ओसप्पिणीहिं)हीरति कालओ, खेत्तओ अंगुलसेढीते असंखेज्जतिभागेण अवहीरति ॥६८॥

(मलय०)–तदेवमुद्वलनासंक्रम उक्तः, सम्प्रति विध्यातसंक्रमस्य लक्षणमाह—'जासि' त्ति–यासां प्रकृतीनां गुणप्रत्ययतो भवप्रत्ययतो वा बन्धो न भवति तासां विध्यातसंक्रमोऽवसेयः। कास्ता भवप्रत्ययतो गुणप्रत्ययतो वा बन्धं नायान्तीति चेद्, उच्यते–इह या मिथ्यादृष्टिगुणस्थानान्ताः षोडश प्रकृतयस्तासां सासादनादिषु गुणप्रत्ययतो बन्धो न भवति, सासादनान्तानां पञ्चविंशतिप्रकृतीनां सम्यग्मिथ्यादृष्ट्यादिषु, अविरतसम्यग्दृष्ट्यन्तानां दशानां देशविरतादिषु, देशविरतान्तानां च चतसृणां प्रमत्तादिषु, प्रमत्तान्तानां षण्णामप्रमत्तादिषु गुणप्रत्ययतो बन्धो न भवति। ततस्तासां तत्र तत्र विध्यातसंक्रमः प्रवर्त्तते। तथा वैक्रियसप्तकदेवद्विकनरकद्विकैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणापर्याप्तातपलक्षणानां विंशतिप्रकृतीनां नैरयिका मिथ्यात्वादिरूपे हेतौ विद्यमानेऽपि भवप्रत्ययतो बन्धका न भवन्ति। नरकद्विकदेवद्विकवैक्रियसप्तकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मापर्याप्तसाधारणानां सप्तदशप्रकृतीनां समस्ता अपि देवा भवप्रत्ययतो बन्धका नोपजायन्ते, एकेन्द्रियजात्यातपस्थावरनाम्नामपि तु सनत्कुमारादयः, संहननषट्कसमचतुरस्रवर्जसंस्थानपञ्चकनपुंसकवेदमनुजद्विकौदारिकसप्तकतिर्यगेकान्तयोग्यस्थावरादिप्रकृतिदशकदुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतिप्रकृतीनां त्वसंख्येयवर्षायुषः, एवं यस्य यस्य यत् यत् कर्म भवप्रत्ययतो गुणप्रत्ययतो वा न बन्धमायाति तत्तस्य तस्य विध्यातसंक्रमयोग्यं वेदितव्यम्। दलिकप्रमाणनिरूपणार्थमिदमाह–'अंगुल' इत्यादि। यावत्प्रमाणं कर्मदलिकं प्रथमसमये विध्यातसंक्रमेण परप्रकृतिषु प्रक्षिप्यते तेन मानेन शेषस्य दलिकस्यापहारे क्रियमाणे अङ्गुलस्यासंख्येयतमेन भागेनापहारो भवति। इयमत्र भावना–यावत्प्रमाणं प्रथमसमये कर्मदलिकं विध्यातसंक्रमेण प्रकृत्यन्तरे प्रक्षिप्यते तावत्प्रमाणैः खण्डैः शेषं सर्वमपि तत्प्रकृतिगतं दलिकमपह्रियमाणमङ्गुलमात्रस्य क्षेत्रस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्संख्याकैरपह्रियते। इदं क्षेत्रतो निरूपणम्। कालतस्त्वसंख्येयाभिरुत्स-

र्पिण्यवसर्पिणीभिरपहारः। अयं विध्यातसंक्रमः प्रायो यथाप्रवृत्तसंक्रमावसाने वेदितव्यः ॥ ६८ ॥

(उ०)–तदेवमुक्त उद्वलनासंक्रमः,अथ विध्यातसंक्रमलक्षणमाह—यासां प्रकृतीनां गुणप्रत्ययतो भवप्रत्ययतो वा बन्धो न भवति तासां विध्यातसंक्रमोऽवसेयः। कास्तादृश्यः प्रकृतयः कुत्र च तासां विध्यातसंक्रम इति चेद्, उच्यते–इह या मिथ्यादृष्टिगुणस्थानान्ता षोडश प्रकृतयस्तासां सासादनादिषु गुणप्रत्ययतो बन्धो न भवति, सासादनान्तानां पञ्चविंशतिप्रकृतीनां सम्यग्मिथ्यादृष्ट्यादिषु, अविरतसम्यग्दृष्ट्यन्तानां दशानां देशविरतादिषु, देशविरतान्तानां चतसृणां प्रमत्तादिषु, प्रमत्तान्तानां षण्णामप्रमत्तादिषु गुणप्रत्ययतो बन्धो न भवति, ततस्तासां तत्र तत्र विध्यातसंक्रमः प्रवर्तते। तथा वैक्रियसप्तकदेवद्विकनरकद्विकैकद्वित्रिचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणापर्याप्तातपलक्षणा विंशतिप्रकृतीनरयिकास्तद्बन्धहेतुमिथ्यात्वादिसत्त्वेऽपि भवप्रत्ययादेव न बध्नन्ति। नरकद्विकदेवद्विकवैक्रियसप्तकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मापर्याप्तसाधारणलक्षणाः सप्तदश प्रकृतीः समस्ता अपि देवा भवप्रत्ययतो न बध्नन्ति, एकेन्द्रियजात्यातपस्थावरनामानि तु सनत्कुमारादयः, संहननषट्कानाद्यसंस्थानपञ्चकनपुंसकवेदमनुजद्विकौदारिकसप्तकतिर्यगेकान्तप्रायोग्यस्थावरादिप्रकृतिदशकनरकद्विकातपोद्योतापर्याप्तदुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतिप्रकृतीरसङ्ख्येयवर्षायुषः। ये च यद्यदबन्धकास्तेषां तास्ताः प्रकृतयो विध्यातसंक्रमयोग्याः। दलिकप्रमाणं निरूपयति–'अंगुल' इत्यादि। यावत्प्रमाणं कर्मदलिकं प्रथमसमये विध्यातसंक्रमेण परप्रकृतिषु प्रक्षिप्यते तेन मानेन शेषस्य दलिकस्यापहारे क्रियमाणेऽङ्गुलस्यासङ्ख्येयतमेन भागेनापहारो भवति। यावत्प्रमाणं प्रथमसमयकर्मदलिकं विध्यातसंक्रमेण प्रकृत्यन्तरे प्रक्षिप्यते तावत्प्रमाणैः खण्डैः शेषं सर्वमपि तत्प्रकृतिगतं दलिकमपह्रियमाणमेकतस्तदेकखण्डं दलिकराशिरन्यतश्चैक आकाशप्रदेश इत्येवमङ्गुलमात्रक्षेत्रासङ्ख्येयतमभागवृत्त्याकाशप्रदेशैरपह्रियते। इयं क्षेत्रतो निरूपणा।

[illegible] अथ च विध्यातसंक्रमो [illegible]

विध्यातसंक्रमस्य यन्त्रम् । (गुणप्र० भवप्र० वाऽबध्यमानानाम् )

| | | |
|---|---|---|
| मिथ्यात्व नरकायुर्वर्जाः १४ मिथ्यात्वान्तानाम् | सास्वादनादयः | गुणप्रत्ययत· |
| तिर्यगायुर्वर्जा २४ सास्वादनान्ता० | मिश्राद्याः | ,, |
| (२)मिथ्यात्वमिश्रयोः | अविरतादय· | ,, |
| चतुर्थान्तानाम् मनुष्यायुर्वर्जा ९ | देशविरतादय· | ,, |
| पञ्चमान्तानाम ४ | प्रमत्तादयः | ,, |
| प्रमत्तान्तानाम् ६ | अप्रमत्तादयः | ,, |
| ध्रु०७-देव २-नरक २-कुजाति ४-स्था०-सू०-साधा०- अपर्या०-आतपाना (२८) | सर्वे नारका· सनत्कुमारादयो देवाश्च | भवप्रत्ययतः |

| गुणस्थाने | सर्वाग्रम् | |
|---|---|---|
| मिथ्यात्वे | ०-१ | |
| सासादने | १४ | |
| मिश्रे | ३८ | |
| अविरते | ४० | |
| देशविरते | ४९ | ५४ |
| प्रमत्ते | ५३ | ५८ |
| अप्रमत्ते | ९५ | ६४ |

| | | | | | | |
|---|---|---|---|---|---|---|
| 'नरक२-देव२-वै०७-विकल३-सू०-अपर्या०-साधा० (१७) | ईशानान्ता देवाः | भवप्रत्ययतः | | अपूर्वक. प्र. ६ | १४ | |
| तिर्य० २-उद्यो० पूर्वोक्तानां (२०) च | आनतादयो देवाः | ,, | | अपूर्वक. ७ | २९. | ६५ |
| सघ०६-कुसंस्था० ५-नपुं०-मनु०२-औदा०७-ति०प्रा०१०-अप०-नरक २-दुर्भ० ३-नी० गो०-अप्र० खग० (३९) | युगलिकतिर्यङ्नराः | ,, | | अनिवृ. | २९ | ६५ |
| | | | | सूक्ष्मसं. | २९ | ६५ |

इयाणिं गुणसंकमो भण्णइ—

**गुणसंकमो अबज्झंतिगाण असुभाणऽपुव्वकरणाई। बंधे अहापवत्तो परित्तिओ वा अबंधे वि ॥६९॥**

(चू०)–'गुणसंकमो अवज्झंतीगाण असुभाणऽपुव्वकरणादी'। गुणेण संकमो गुणसंकमो समए समए असंखेज्जगुणेण संकमणं गुणसंकमो वुच्चति असुभाणं कम्माणं। के ते? भण्णइ–सोलस मिच्छत्तंता, तेसु मिच्छत्तणिरतायुगआयावं च फेडेत्तु तेरस गहिता; सासाणंताओ पणुवीसं तु, ततो अणंताणुबन्धि तिरियाउग उज्जोवं च फेडेत्तु सेसा एगूणवीसा गहिया; अविरतियन्तातो दसेत्ति, तेसु अप्पच्चक्खाणावरणीयचउक्कं गहितं; विरताविरतंतितो चत्तारि, पच्चक्खाणावरणचउक्कगं पि गहितं चेव; प्रमत्तंता छावि गहिता; सव्वेसिं पि समुदातो

छत्तालीसाए अवज्झंतीगाणं। 'अपुव्वकरणादी'त्ति–अपुव्वकरणस्स आदितो आढत्तो उवरिं एतेसिं कम्माणं गुणसंकमो भवति। इयाणिं अहापवत्तसंकमो–अहापवत्तसंकमो णाम संसारत्थाणं जीवाणं बंधणजोग्गाणं कम्माणं बज्झमाणाणं अवज्झमाणाणं वा थोवातो थोवं बहुगाओ बहुगं वज्झमाणीसु य संकमणं। 'बन्धे अहापवत्तो परित्तिओ वा अबन्धे वि'त्ति। वज्झमाणाणं कम्माणं अहापवत्तसंकमो भवति धुवबन्धीणं, 'परितितो'–बंधे परावत्ते वा परियत्तमाणीनो सूचितातो, 'अबंधे वि'त्ति बंधाभावे वि अहापवत्तो चेव संकमो–वज्झमाणाणं पि अवज्झमाणाणं पि अहापवत्तो संकमो भवति ॥ ६९ ॥

(मलय०)–इदानीं गुणसंक्रमस्य लक्षणमाह—'गुणसंकमो'त्ति। अपूर्वकरणादयः–अपूर्वकरणप्रभृतयोऽबध्यमानानामशुभप्रकृतीनां संबन्धि कर्मदलिकं प्रतिसमयमसंख्येयगुणतया बध्यमानासु प्रकृतिषु यत्प्रक्षिपन्ति स गुणसंक्रमः। गुणेन प्रतिसमयमसंख्येयलक्षणेन गुणकारेण संक्रमो गुणसंक्रमः, तथाहि–मिथ्यात्वातपनारकायुर्वर्जानां मिथ्यादृष्टियोग्यानां त्रयोदशानाम्, अनन्तानुबन्धितिर्यगायुरुद्योतवर्जानां च सासादनयोग्यानामेकोनविंशतिप्रकृतीनाम्, यतो मिथ्यात्वमनन्तानुबन्धिनश्चापूर्वकरणादारत एवाविरतसम्यग्दृष्ट्यादयः क्षपयन्ति, आतपोद्योते च शुभे, अशुभप्रकृतीनां च गुणसंक्रमः, आयुषां च परप्रकृतौ न संक्रमः, ततो मिथ्यात्वादिप्रकृतीनामिह वर्जनम्। तथाऽप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकास्थिराशुभायशःकीर्तिशोकारत्यसातवेदनीयानां सर्वसंख्यया षट्चत्वारिंशत्प्रकृतीनां अशुभानामबध्यमानानामपूर्वकरणादारभ्य गुणसंक्रमो भवति। निद्राद्विकोपघाताशुभवर्णादिनवकहास्यरतिभयजुगुप्सानां त्वपूर्वकरणे स्वस्वबन्धव्यवच्छेदादारभ्य गुणसंक्रमो वेदितव्यः। अपरोऽर्थः–अपूर्वकरणादयः–अपूर्वकरणसंज्ञकरणवर्तिप्रभृतयोऽशुभप्रकृतीनामबध्यमानानां दलिकमसं-

ख्येयगुणनया श्रेण्या बध्यमानासु प्रकृतिषु यत्प्रक्षिपन्ति स गुणसंक्रमः। तेन क्षपणकालेऽनन्तानुबन्धिमिथ्यात्वसम्यग्मिथ्यात्वानामप्यपूर्वकरणादारभ्य गुणसंक्रमः प्रवर्तते। तदेवमुक्तं गुणसंक्रमस्य लक्षणम्, सम्प्रति यथाप्रवृत्तसंक्रमस्य प्रतिपादयति–'बंधे' इत्यादि। ध्रुवबन्धिनीनां प्रकृतीनां बन्धे सति यथाप्रवृत्तः संक्रमः प्रवर्तते। 'परित्तिओ वा' इति–'परित्ति' अनेन परावर्तमानाः प्रकृतय उच्यन्ते, तासामबन्धेऽपि, आस्तां बन्धे इत्यपिशब्दार्थः, यथाप्रवृत्तसंक्रमो भवति। इयमत्र भावना–सर्वेषामपि संसारस्थानामसुमतां ध्रुवबन्धिनीनां बन्धे, परावर्तमानप्रकृतीनां तु स्वस्वभवबन्धयोग्यानां बन्धेऽबन्धे वा यथाप्रवृत्तसंक्रमो भवति॥ ६९॥

(उ०)–इदानीं गुणसंक्रमस्य लक्षणमाह—'अपूर्वकरणादयः'–अपूर्वकरणस्थानकप्रभृतयोऽबध्यमानानामशुभप्रकृतीनां सम्बन्धि कर्मदलिकं प्रतिसमयमसङ्ख्येयगुणश्रेण्या यद्बध्यमानासु प्रकृतिषु प्रक्षिपन्ति स गुणसंक्रमः, गुणेन प्रतिसमयमसङ्ख्येयलक्षणेन गुणकारेण संक्रमो गुणसंक्रम इति। तथाहि–मिथ्यात्वातपनारकायुर्वर्जानां मिथ्यादृष्टियोग्यानां त्रयोदशानाम्, अनन्तानुबन्धितिर्यगायुरुद्योतवर्जानां सासादनयोग्यानामेकोनविंशतिप्रकृतीनाम्, तथा मध्यमाष्टकषायास्थिराशुभायशःकीर्त्तिशोकारत्यसातवेदनीयानां सर्वसङ्ख्यया षट्चत्वारिंशत्प्रकृतीनामशुभानामबध्यमानानामपूर्वकरणादारभ्य गुणसंक्रमो भवति। मिथ्यात्वमनन्तानुबन्धिनश्चापूर्वकरणगुणस्थानादर्वागेवाविरतसम्यग्दृष्ट्यादयः क्षपयन्ति। आतपोद्योतयोश्च शुभत्वान्न गुणसंक्रमः, अशुभप्रकृतीनामेव तत्संभवात्। आयुषां च परप्रकृतौ संक्रम एव नेति मिथ्यात्वादिप्रकृतीनामिह वर्जनम्। निद्राद्विकोपघाताशुभवर्णादिनवकहास्यरतिभयजुगुप्सानां त्वपूर्वकरणे स्वस्वबन्धव्यवच्छेदादारभ्य गुणसंक्रमो ज्ञातव्यः। अपूर्वकरणादयः–अपूर्वकरणप्रवृत्तप्रभृतयोऽशुभप्रकृतीनामबध्यमानानां दलिकमसङ्ख्येयगुणश्रेण्या बध्यमानासु प्रकृतिषु यत्प्रक्षिपति स गुणसंक्रम इत्यपरोऽर्थः। तेन क्षपणकाले मिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्धिनामप्यपूर्वकरणरूपा-

न्करणादारभ्य प्रवर्तमानो गुणसंक्रमो न विरुध्यते। लक्षितो गुणसंक्रमः, अथ यथाप्रवृत्तसंक्रमं लक्षयन्नाह–'बंधे' इत्यादि। ध्रुवबन्धिनीनां बन्धे सति यथाप्रवृत्तसंक्रमः प्रवर्त्तते। 'परित्तिओ व' त्ति–परावर्तमानप्रकृतिसम्बन्धी यथाप्रवृत्तसंक्रमोऽबन्धेऽपि वा भवति, आस्तां बन्धे इत्यपिशब्दार्थः। इयमिह भावना–सर्वेषामपि संसारस्थानां जीवानां ध्रुवबन्धिनीनां बन्धे परावर्तमानप्रकृतीनां तु स्वस्वभवबन्धयोग्यानां बन्धेऽबन्धे वा यथाप्रवृत्तसंक्रमो भवति। तत्र ध्रुवबन्धिनीनामध्रुवबन्धिनीनां वा यदि तत्काले प्रभूतं दलं बध्यमानं प्राप्यते, कासाञ्चिदध्रुवबन्धिनीनां तद्भवबन्धयोग्यानां तदानीमबन्धेऽपि यदि प्राग्बद्धं प्रभूतं दलिकं प्राप्यते, तर्हि प्रभूतं दलं संक्रमयति, स्तोकं चेत्प्राप्यते तदा स्तोकं संक्रमयति। तच्च जघन्ययोगे वर्तमानो जघन्यं दलिकम्, मध्यमे मध्यमम्, उत्कृष्टे चोत्कृष्टमिति। यथाप्रवृत्त्या संक्रमयतीत्यस्य यथाप्रवृत्तसंक्रम इत्यन्वर्थं नाम गीयते। एतेषु पञ्चसु संक्रमेषु कः कं बाधित्वा प्रवर्त्तते इति चेद्, उच्यते–यथाप्रवृत्तं संक्रमं प्रवर्तमानं स्वहेतुसम्पर्कसामर्थ्येन बाधित्वा विध्यातसंक्रमो गुणसंक्रमो वा भवति। सर्वसंक्रमोऽप्युद्वलनासंक्रमस्य चरमखण्डे चरमप्रक्षेप इति सोऽप्युद्वलनासंक्रमं बाधित्वा प्रवर्त्तत इति ज्ञेयम् ॥६९॥

यथाप्रवृत्तसंक्रम । गुणसंक्रम । अबध्यमानाशुभानामेव स्यात् ।

| | | |
|---|---|---|
| ध्रुवबन्धिनीनाम तद्बन्धकः | मिथ्यात्वान्तानां १३अन० तिर्यगायुरुद्योतवर्ज१९सास्वादनान्तानां | ८ मादयः |
| तद्भवयोग्यपरावर्तमानानां तद्बन्धका अबन्धका वा | ८ मध्यमकषाया० अस्थिराशुभायश शोकारत्यसातानां च | ,, |
| अस्य योगानुरूप संक्रमः स्यात्, अस्य बाधको | निद्रा २-उप०-कुवर्णादि ९-हास्यरतिभयकुत्सानाम् | ,, |
| विध्यातो गुणसंक्रमो वा भवति | मिथ्या०-मिश्रानन्तानुबन्धि ४ र्णाम् | ४र्थतः७मान्ता |

इदाणीं एत्थ चउण्हं संकमाणं अवहारकालस्स अप्पाबहुगं भण्णति—

**थोवोवहारकालो गुणसंकमेण असंखगुणणाए। सेसस्सहापवत्ते विज्झाउव्वलणणामे य ॥ ७० ॥**

(चू०)–सव्वथोवो गुणसंकमेण अवहारकालो–अंतोमुहुत्तो त्ति। किंच सेसस्स दलियस्स अहापवत्तेण अवहारकालो असंखेज्जगुणो–पलितोवमस्स असंखेज्जतिभागो त्ति काउं। विज्झाएण सेसस्स अवहारकालो असंखेज्जगुणो–अंगुलसेढीए पदेसअसंखेज्जतिभागो त्ति काउं। उव्वलणेण वि सेसस्स अवहारकालो असंखेज्जगुणो, सो वि अंगुलस्स असंखेज्जतिभागो त्ति काउं ॥ ७० ॥

(मलय०)–सांप्रतमेतैरेवोद्वलनासंक्रमविध्यातसंक्रमगुणसंक्रमयथाप्रवृत्तसंक्रमैरपहारकालस्याल्पबहुत्वमभिधीयते—'थोवो'त्ति। उद्वलनासंक्रमाभिधानावसरे यत्प्रागभिहितं चरमखण्डं तच्छेपमित्युच्यते। तस्य शेषस्य यदि गुणसंक्रममानेनापहारः क्रियते ततोऽन्तर्मुहूर्तमात्रेण कालेन सकलमपि तदपह्रियते, ततो गुणसंक्रमेणापहारकालः सर्वस्तोकः। ततो यथाप्रवृत्तसंक्रमेणापहारकालोऽसंख्येयगुणः, यतस्तदेव चरमखण्डं यदि यथाप्रवृत्तसंक्रमेणापह्रियते तर्हि पल्योपमासंख्येयभागमात्रेण कालेनापह्रियते, ततो विध्यातसंक्रमेणापहारकालोऽसंख्येयगुणः, यतस्तदेव चरमखण्डं यदि विध्यातसंक्रमेणापह्रियते ततोऽसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियते। ततोऽप्युद्वलनासंक्रमेणापहारकालोऽसंख्येयगुणः, तथाहि–तदेव चरमखण्डं द्विचरमस्थितिखण्डस्य चरमसमये यत्परप्रकृतौ प्रक्षिप्यते तेन मानेन चेदपह्रियते ततोऽतिप्रभूताभिरसंख्येयोत्सर्पिण्यवसर्पिणिभिरपह्रियते, ततः पाश्चात्यादयमुद्वलनासंक्रमेणापहारकालोऽसंख्येयगुणः॥७०॥

(उ०)–साम्प्रतमेनैरेवोद्वलनासंक्रमविध्यातसंक्रमगुणसंक्रमयथाप्रवृत्तसंक्रमैरपहारकालस्याल्पबहुत्वमाह—उद्वलनासंक्रमाभिधानाव-

यदेव पूर्वं चरमखण्डमभिहितं तदिह शेषमित्युच्यते, तस्य शेषस्य यदि गुणसंक्रममानेनापहारः क्रियते ततोऽन्तर्मुहूर्त्तमात्रेण कालेन सकलमपि तदपह्रियते, ततो गुणसंक्रमेणापहारकालः सर्वस्तोकः । ततो यथाप्रवृत्तसंक्रमेणापहारकालोऽसङ्ख्येयगुणः, यतस्तदेव चरमखण्डं यथाप्रवृत्तसंक्रमेणापह्रियमाणं पल्योपमासङ्ख्येयभागमात्रेण कालेनापह्रियत इति । ततो विध्यातसंक्रमेणापहारकालोऽसङ्ख्येयगुणः, यतस्तदेव चरमखण्डं विध्यातसंक्रमेणापह्रियमाणमसङ्ख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियत इति । ततोऽप्युद्वलनासंक्रमेणापहारकालोऽसङ्ख्येयगुणः, यत उद्वलनासंक्रमेणहापहारकाले मीयमाने चरमखण्डं द्विचरमस्थितिखण्डस्य चरमसमये यत्परप्रकृतौ प्रक्षिप्यते तेन मानेनापह्रियमाणं ग्राह्यम्, तथापहारे च तदतिप्रभूताभिरसङ्ख्येयोत्सर्पिण्यवसर्पिणीभिरपह्रियते. ततः पाश्चात्यादयमुद्वलनासंक्रमेणापहारकालोऽसङ्ख्येयगुणः। विध्यातसंक्रमेणोद्वलनासंक्रमेण वाऽपहारः क्षेत्रतोऽङ्गुलासङ्ख्येयभागेन द्रष्टव्यः, केवलमुद्वलनासंक्रमेणापहारो बृहत्तराङ्गुलेन ॥७०॥

इदाणिं अहापवत्तसंकमस्स कालो पुव्वं ण भणितो, उव्वलणसंकमे जं दुचरिमस्स चरिमे समए सत्थाणे कमति दलितं तेण पमाणेण सेसस्स अवहारकालो ण भणितो, तेसिं णिरूवणत्थं भण्णति—

पल्लासंखियभागेणहापवत्तेण सेसगवहारो। उव्वलणेण य थिवुओ अणुइन्नाए उ जं उदये ॥ ७१ ॥

(चू०)–अहापवत्तेणं संकमेणं सेसस्स दलितस्स अवहारकालो पलिओवमस्स असंखेज्जइभागो, उव्वलणेण वि –उव्वलणसंकमेण वि एत्तितो चेव कालो। अण्णो वि छट्टो संकमो अत्थि त्ति तं णिरूवणत्थं भण्णति–'थिवुगो अणुदिन्नाए उ जं उदए'। थिवुगसंकमो वुच्चति अणुदिण्णाणं कंमाणं दलितं उदयवति कम्मे पाडिज्जति, जहा

मणूसस्स मणुयगतीए वेतिज्जमाणीए णरगगतितिरियगतिदेवगतिकम्मदलितं अणुदिण्णं मणुतगतिए समं
वेदिज्जति। एवं सव्वत्थ भाणियव्वं ॥७१॥

(मलय०)–इह प्राग्यथाप्रवृत्तसंक्रमस्य कालो नोक्तः, उद्वलनासंक्रमेऽपि यद् द्विचरमं स्थितिखण्डं तस्य चरमसमये स्वस्थाने यत्कर्म-
दलिकं प्रक्षिप्यते तेन मानेन शेषस्य चरमस्थितिखण्डस्यापहारकालो नोक्तस्ततस्तन्निरूपणार्थमाह–'पल्ल'त्ति–उद्वलनासंक्रमे यच्चरमं स्थिति-
खण्डं तस्य यदि यथाप्रवृत्तसंक्रममानेनापहारः क्रियते तर्हि पल्योपमासंख्येयभागमात्रेण कालेन निःशेषतोऽपहारो भवति। उद्वलना-
संक्रमेणापि द्विचरमस्थितिखण्डकस्य चरमसमये यत्स्वस्थाने प्रक्षिप्यते दलिकं तेन मानेन चरमस्थितिखण्डस्यापहारकालः पल्योपमा-
संख्येयभागलक्षणो वेदितव्यः। तत एतौ द्वावपि तुल्यौ। इहान्योऽपि षष्ठः स्तिबुकसंक्रमोस्ति, परं नासौ संक्रमकरणे संबध्यते, कर-
णलक्षणासंभवाद्। करणं हि सलेश्यं वीर्यमुच्यते। अथ च लेश्यातीतोऽपि भगवानयोगिकेवली द्विचरमसमये द्विसप्ततिप्रकृतीः स्तिबु-
कसंक्रमेण संक्रमयति। अपि च स्तिबुकसंक्रमेण संक्रान्तं दलिकं न सर्वथा पतद्ग्रहप्रकृतिरूपतया परिणमते, ततो नासौ संक्रमे संब-
ध्यते। परमेषोऽपि संक्रम इति संक्रमप्रस्तावात्तल्लक्षणनिरूपणार्थमाह–'थिबुगो' इत्यादि। 'अनुदीर्णायाः–अनुदयप्राप्तायाः सत्कं यत्क-
र्मदलिकं सजातीयप्रकृतावुदयप्राप्तायां समानकालस्थितौ संक्रमयति,संक्रमय्य चानुभवति, यथा मनुजगतावुदयप्राप्तायां शेषं गतित्रयम्,
एकेन्द्रियजातौ जातिचतुष्टयमित्यादि स स्तिबुकसंक्रमः। एष एव च प्रदेशानुभवः ॥ ७१ ॥

(उ०)–इह पूर्वं यथाप्रवृत्तसंक्रमस्य कालो नाभिहितः, उद्वलनासंक्रमेऽपि यद् द्विचरमं स्थितिखण्डं तस्य चरमसमये स्वस्थाने यत्कर्म-
दलिकं प्रक्षिप्यते तेन मानेन शेषस्य चरमस्थितिखण्डस्यापहारकालो नोक्तः ततस्तन्निरूपणायाह–उद्वलनासंक्रमे यच्चरमं स्थितिखण्डं

तस्य यदि यथाप्रवृत्तसंक्रममानेनापहारः क्रियते तर्हि पल्योपमासङ्ख्येयभागमात्रेण कालेन निःशेषापहारो भवति, उद्वलनासंक्रमे द्विचरमखण्डस्य चरमप्रक्षेपे यत्स्वस्थाने दलिकं प्रदीयते तावत एव यथाप्रवृत्तसंक्रमप्रक्षेपप्रमाणत्वात् । उद्वलनासंक्रमेणापि द्विचरमस्थितिखण्डस्य चरमसमये यत् स्वस्थाने प्रक्षिप्यते दलिकं तेन मानेन चरमस्थितिखण्डस्यापहारकालः पल्योपमासङ्ख्येयभागमात्र इत्युक्तमेव । इत्थमेव प्रदलक्षणो ज्ञातव्यः, इत्येतौ द्वावपि स्वस्थानप्रक्षेपरूपेण तुल्यौ । पूर्वं तु परस्थानप्रक्षेपरूपेणोद्वलनासंक्रमो ग्राह्य इत्युक्तमेव । इत्थमेव प्रदलक्षणो ज्ञातव्यः, इत्येतौ द्वावपि स्वस्थानप्रक्षेपरूपेण तुल्यौ । पूर्वं तु परस्थानप्रक्षेपरूपेणोद्वलनासंक्रमो ग्राह्य इत्युक्तमेव । इत्थमेव प्रदलक्षणो ज्ञातव्यः, ... जहक्कमसो अहापवत्तुव्वलणमाणे ॥८२॥" इति । इहान्योक्तं पञ्चसंग्रहे—"जं दुचरिमस्स चरमे सपरट्ठाणेसु देइ समयम्मि । ते भागे जहक्कमसो अहापवत्तुव्वलणमाणे ॥८२॥" इति । इहान्योऽपि षष्ठः स्तिवुकसंक्रमोऽस्ति, पर न तेन संक्रमकरणविशेष आक्षिप्यते, करणस्य सलेश्यवीर्यरूपत्वात्, स्तिवुकसंक्रमेण संक्रमस्य च लेश्यातीतस्यायोगिकेवलिनोऽपि भगवतो द्विचरमसमये द्वासप्ततिप्रकृतीनां प्रतिपादनात् । न च स्तिवुकसंक्रमेण संक्रान्तं दलिकं सर्वथा पतद्ग्रहप्रकृतिरूपतया परिणमत इति न यथोक्तसंक्रमस्वभावोऽसौ, तथापि संक्रमशब्देनायमप्युच्यत इति संक्रमप्रस्तावात्तं लक्षयन्नाह—'थिवुगो अणुइन्नाए उ जं उदए' । अनुदीर्णाया—अनुदयप्राप्तायाः सत्कं यत्कर्मदलिकं सजातीयप्रकृतावुदयप्राप्तायां समानकालस्थितौ संक्रमयति, संक्रमयित्वा चानुभवति, यथा मनुजगतावुदयप्राप्तायां शेषं गतित्रयम्, एकेन्द्रियजातौ जातिचतुष्टयम्, यथा वा क्षपणकाले संज्वलनक्रोधादीनां शेषीभूता आवलिकाः संज्वलनमानादौ, एष स्तिवुकसंक्रमः। उक्तं च—"अनुदीर्णमित्यादि, यथा वा क्षपणकाले ... 

सुदीर्णान्तस्तुल्यकाल प्रतिक्षणम् । दलिकं संक्रमं याति, येन स स्तिवुको मतः ॥१॥" इति । एष एव च प्रदेशानुभवो गीयते ॥ ७१ ॥

शेषस्यापहारकालाल्पबहुत्वम् ।

| | | | | | |
|---|---|---|---|---|---|
| गुणसंक्रमेण | अन्तर्मुहूर्त्तं | सर्वाल्पः | परस्थानान्त्योद्वलनया (उपान्त्यखण्डस्य) | बह्वसं०कालचक्राणि | ततोऽसंख्येयगुणः |
| यथाप्रवृत्तेन | पल्यासं० भा० | ततोऽसंख्येयगुणः | स्वस्थानोपान्त्योद्वलनया | पल्यासंख्येयभागः | यथा०कालतुल्यः |
| विध्यातेन | असं० कालचक्राणि | " | | | |
| उद्वलनायां योऽन्त्यखण्डः सः शेष इति | | | | | |

भणियं लक्खणं भेदो य, इदाणिं सादिअणादिपरूवणा। मूलपगतीणं पदेससंकमअसंभवातो उत्तरपगतीणमेव भण्णति—

धुवसंकम अजहन्नो णुक्कोसो तासि वा विवज्जित्तु। आवरणणवगविग्घं ओरालियसत्तगं चेव ॥७२॥
साइयमाइ चउद्धा सेसविगप्पा य सेसियाणं च। सव्वविगप्पा णेया साइगअधुवा पएसम्मि ॥७३॥

(चू०)—'धुवसंकम अजहन्नो'त्ति। पुव्वुत्तस्स छव्वीसुत्तरसतस्स धुवसंतकम्माणं अजहण्णगो पदेससंकमो सादियमादि चउव्विहो। कहं? भण्णइ—खवियकंमंसितो खवणाए अब्भुट्ठितो एतासिं सव्वासिं पगतीणं सामण्णेण जहण्णगपदेससंकामगो भवति, तं मोत्तूणं सेसं सव्वं अजहण्णं। उवसमसेढीए बंधवोच्छेदे कते असंकमो

सव्वकम्माणं, पुणो परिवडमाणो यन्धति तं पडुच्च सादितो, तं ठाणं अपत्तपुव्वस्स अणादितो, धुवोऽधुवो जहा पुव्वं। 'अणुक्कोसो तासिं वा विवज्जित्तु' अणुक्कोसो संकमो तासिं चेव छव्वीसुत्तरपगतिसतस्स 'वज्जेत्तु आवरणणवगविग्घं उरालियसत्तगं चेव'त्ति–छव्वीससतातो पंचणाणावरणा चत्तारि दंसणावरणा पच तरातितं उरालियसत्तगं तु वज्जेतु सेसस्स पंचुत्तरस्स पगतिसयस्स अणुक्कोसो संकमो चउव्विहो सादितातो। कहं? भण्णइ–सव्वेसिं कम्माणं गुणियकम्मंसिगम्मि खवणं अब्भुट्ठिनंमि उक्कोसो संकमो सो तं सादिअधुवो। तं मोत्तूण सेसमणुक्कोमोत्ति। वंधवोच्छेये जाते असंकमो, एवं पुव्वपयोगेण जोजेयव्वं। 'सेसविगप्पा य सेसियाणं च सव्वविगप्पा णेया सादितअधुवा पएसम्मि'। 'सेसविगप्पा' इति–भणियविगप्पं मोत्तूणं पंचुत्तरस्स पगतिसयस्स जहण्णुक्कोसो य आवरणविग्घचोद्दसउरालियसत्तगाणं जहण्णो उक्कोसो अणुक्कोसो य, 'सेसिगाणं च' अट्ठावीसाए अधुवसंतकंमियाणं पगतीणं 'सव्वविगप्पा' इति–उक्कोसाणुक्कोसजहण्णाजहण्णा य 'णेया' इति–जाणियव्वा, 'सादिअधुवा पदेसंमि'त्ति–एतासु सव्वासु सादिअधुवा एव पएससंकमं पडुच्च। अधुवसंतकम्माणमधुवसंतकम्मत्तादेव सादियअधुवं। आवरणणवगविग्घउरालितसत्तगाणं भिच्छद्दिट्ठिम्मि उक्कोसो पदेससंकमो लब्भति, अणुक्कोसो वि तहिं चेव, तस्स सादियअधुवं। जहण्णगस्स पुव्वतो विही ॥ ७२–७३॥

(मलय०)–तदेवमुक्तं लक्षणं भेदश्च, सम्प्रति साद्यनादिप्ररूपणा कर्तव्या। तत्र मूलप्रकृतीनां परस्परं संक्रमो न भवति, तत उत्तरप्रकृतीनामेव साद्यनादिप्ररूपणार्थमाह––'धुवसंकम'त्ति। प्रागुक्तानां ध्रुवसत्कर्मणां पड्विंशत्युत्तरशतसंख्यानामजघन्यःप्रदेशसंक्रमश्चतुर्धा

–चतुष्प्रकारः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तत्र क्षपितकर्मांशो वक्ष्यमाणलक्षणः क्षपणार्थमभ्युद्यतो ध्रुवसत्कर्मप्रकृतीनां सर्वासामपि जघन्यं प्रदेशसंक्रमं करोति, स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः। स चोपशमश्रेण्यां बन्धव्यवच्छेदे सति सर्वासामपि प्रकृतीनां न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवावभव्यभव्यापेक्षया। अनुत्कृष्टोऽपि प्रदेशसंक्रमो ध्रुवसत्कर्मप्रकृतीनां चतुर्धा। किं सर्वासाम्? नेत्याह–आवरणनवकं–ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयलक्षणं तथाऽन्तरायपञ्चकमौदारिकसप्तकं च वर्जयित्वा शेषस्य पञ्चोत्तरप्रकृतिशतस्य। तथाहि–सर्वासामपि प्रकृतीनां गुणितकर्मांशे वक्ष्यमाणलक्षणे क्षपणार्थमभ्युद्यते उत्कृष्टः प्रदेशसंक्रमः प्राप्यते, नान्यत्र। ततोऽसौ सादिः। तस्मादन्यः सर्वोऽप्यनुत्कृष्टः, स चोपशमश्रेण्यां व्यवच्छिद्यते, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। 'सेस' इत्यादि। शेषविकल्पाः पञ्चोत्तरशतस्य जघन्य उत्कृष्टश्च, ज्ञानावरणीयाद्येकविंशतिप्रकृतीनां जघन्योत्कृष्टानुत्कृष्टाः सादयोऽध्रुवाश्च। तत्र पञ्चोत्तरशतस्य जघन्य उत्कृष्टश्च साद्यध्रुवतया भावित एव। ज्ञानावरणीयादीनां चोत्कृष्टः प्रदेशसंक्रमो गुणितकर्मांशे मिथ्यादृष्टौ कदाचिल्लभ्यते, शेषकालं त्वनुत्कृष्टः, तत एतौ द्वावपि साद्यध्रुवौ। जघन्यस्तु साद्यध्रुवतया भावित एव। शेषप्रकृतीनां च सर्वेऽप्युत्कृष्टानुत्कृष्टजघन्याजघन्यविकल्पा अध्रुवसत्कर्मत्वात्, मिथ्यात्वस्य ध्रुवसत्कर्मणोऽपि सदैव पतद्ग्रहाप्राप्तेः, नीचैर्गोत्रसातासातवेदनीयानां तु परावर्तमानत्वात् सादयोऽध्रुवाश्चावगन्तव्याः ॥७२–७३॥

(उ०)–तदेवमुक्तं लक्षणं भेदश्च, अथ साद्यनादिप्ररूपणा कर्तव्या। तत्र मूलप्रकृतीनां परस्परं संक्रमो न भवतीत्युत्तरप्रकृतीनामेव तां चिकीर्षुराह—ध्रुवसत्कर्मणां षड्विंशत्युत्तरशतसङ्ख्यानामजघन्यः प्रदेशसंक्रमः साद्यादिः–सादिरनादिर्ध्रुवोऽध्रुवश्चेति चतुर्द्धा।

तत्र क्षपितकर्मांशः क्षपणोद्यतो ध्रुवसत्कर्मप्रकृतीनां सर्वासामपि जघन्यप्रदेशसंक्रमं करोति, स च सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यजघन्यः, स चोपशमश्रेण्यां बन्धव्यवच्छेदे न भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः । ध्रुवाध्रुवावभव्यभव्यापेक्षया । अनुत्कृष्टोऽपि प्रदेशसंक्रमो ध्रुवसत्कर्मणामावरणनवकं—ज्ञानावरणपञ्चकदर्शनावरणचतुष्कलक्षणं तथान्तरायपञ्चकमौदारिकसप्तकं च वर्जयित्वा शेषस्य पञ्चोत्तरप्रकृतिशतस्य चतुर्धा । तथाहि—सर्वासामपि प्रकृतीनां गुणितकर्मांशे क्षपणार्थमभ्युद्यते उत्कृष्टः प्रदेशसंक्रमो लभ्यते, नान्यत्र, ततोऽसौ सादिरध्रुवश्च, तस्मादन्यः सर्वोऽप्यनुत्कृष्टः, स चोपशमश्रेण्यां व्यवच्छिद्य ततः प्रतिपाते भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ पूर्ववत् । शेषविकल्पाः पञ्चोत्तरशतस्य जघन्य उत्कृष्टश्च, ज्ञानावरणीयाद्येकविंशतिप्रकृतीनां च जघन्योत्कृष्टानुत्कृष्टा इत्येते सादयोऽध्रुवाश्च । तत्र पञ्चोत्तरशतस्य जघन्य उत्कृष्टश्च साद्यध्रुवतया भावित एव । ज्ञानावरणीयादीनां चोत्कृष्टः प्रदेशसंक्रमो गुणितकर्मांशे मिथ्यादृष्टौ कदाचिदेव प्राप्यते, शेषकालं त्वनुत्कृष्ट इत्येतौ द्वावपि साद्यध्रुवौ । जघन्यस्तु साद्यध्रुवतया भावित एव । शेषप्रकृतीनां च सर्वेऽप्युत्कृष्टानुत्कृष्टजघन्याजघन्यविकल्पा अध्रुवसत्कर्मत्वात्, मिथ्यात्वस्य ध्रुवसत्कर्मणोऽपि पतद्ग्रहाभावेऽध्रुवत्वात्, नीचैर्गोत्रसातासातवेदनीयानां तु परावर्तमानत्वात्सादयोऽध्रुवाश्चावगन्तव्याः ॥७२॥७३॥

प्रदेशसंक्रमस्य साद्यादिभङ्गयन्त्रम्।

| प्रकृतीनाम् | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रु० |
| अनन्तरोक्त२१ वर्ज१०५ ध्रुवसत्ताकानां | उपशमश्रेणितः पतितानां | भव्यानाम् | साद्यप्राप्तानां | अभव्या० | क्षपणोद्यतक्षपितकर्मांशानाम् | सादित्वात् | उप० श्रे० तः पतितानाम् | भव्यानाम् | साद्यप्राप्तानाम् | अभव्यानाम् | क्षपणोद्यतगुणितकर्मांशानाम् | सादित्वात् |
| दाना० ५-दर्श० ४-अं० प-औ-दा० ७ (२१) ध्रु०सत्ताकानां | ” | ” | ” | ” | ” | ” | गुणितकर्मांशमिथ्यादृशाम् कादाचित्कत्वात् | सादित्वात् | — | — | गुणितकर्मांशमिथ्यादृशां कादाचित्कत्वात् | ” |
| शेषाणाम्(२८) | अध्रुवसत्ताकत्वात् | अध्रु० | — | — | अध्रुव सत्ता० | अध्रु० | अध्रुवसत्ताकत्वात् | अध्रु० | — | — | अध्रुवसत्ताकत्वात् | अध्रुव० |
| मिथ्यात्वस्य | पतद्ग्रहाध्रौव्यत्वात् | पतद्ग्र० | — | — | पतद्ग्र० | पतद्ग्र० | पतद्ग्र० | पतद्ग्र० | — | — | पतद्ग्र० | पतद्ग्र० |
| नीचैः-सात-असातानाम् | परावर्त्तमानत्वात् | परा० | — | — | परा० | परा० | परा० | पराव० | — | — | परा० | परा० |

भणिया सादिअणादिपरूवणा, इदाणिं उक्कोससामित्तं भणणति। सो उक्कोसो सामी कहं भवति ? तं णिरूवणत्थं गुणियकंमंसिनपरूवणा कीरति—

जो वायरतसकालेणूणं कम्मट्ठिइं तु पुढवीए। वायर(रे)पज्जत्तापज्जत्तगदीहेयरद्धासु ॥ ७४ ॥

जोगकसाउक्कोसो वहुसो निच्चमवि आउवंधं च। जोगजहण्णेणुवरिल्लठिइनिसेगं वहुं किच्चा ॥७५॥

वायरतसेसु तक्कालमेवमंते य सत्तमखिईए। सव्वलहुं पज्जत्तो जोगकसायाहिओ वहुसो ॥ ७६ ॥

जोगजवमज्झउवरिं मुहुत्तमच्छित्तु जीवियवसाणे। तिचरिमदुचरिमसमए पुरित्तु कसायउक्कस्सं ॥७७॥

जोगुक्कस्सं चरिमदुचरिमे समए य चरिमसमयम्मि। संपुन्नगुणियकम्मो पगयं तेणेह सामित्ते ॥७८॥

(चू०)—'जो जीवो वायरतसकालेणूणं'ति–सुहुमतसणिवारणत्थं वादरगहणं, वादरतसा वेतिंदियादी, ततो तेसिं कालो वे सागरोवमसहस्साइं पुव्वकोडीपुहत्तेण अब्भहियातिं, तेण ऊणा कम्मट्ठिती–सत्तरि सागरोवमकोडाकोडीतो, एतग्गहणं कम्मट्ठितिजाणणत्थं, वादरपुढविकातिएसु अत्थि, तो वादरपुढवीगहणं। किं कारणं ? भण्णइ–आयाधासहिष्णुत्वात्, दीहाउअत्ताउ। 'पज्जत्तापज्जत्तगदीहेयरद्धासु'–वहुगा पज्जत्तगभवा, थोवा अपज्जत्तगभवा, दीहातो पज्जतगद्धाउ हस्सातो अपज्जत्तगद्धातो। उपज्जंतमरंतस्स वहुगा पोग्गला परिसरंति, अपज्जत्तगस्स कसायजोगमंदत्ताओ थोवा गिण्हति, अतो 'जोगकसाउक्कोसो वहुसो'–तंमि वादरपुढविकाए वट्टमाणो

बहुसो बहुसो उक्कोसगातिं जोगट्ठाणातिं गच्छति, तेण बहुगं पदेसग्गं गेण्हति। बहुसो–बहुसो बहुसंकिलेसपरिणामो भवति तेण उक्कोसं ठितिं बन्धति, बहुगं उव्वट्टेत्ति, थोवं ओव्वट्टेति। 'णिच्चमवि आउवंधं च जोगजहण्णेण'–णिच्चमिति जंमि काले आउगं बंधति तदा जहण्णे जोगे वट्टमाणो बंधति। किं कारणं? भण्णइ–उक्कोसए जोगे बंधमाणो आउत्ताए बहुगा पोग्गला परिणामेति, तेण ण कज्जं, तेण जहण्णजोगगहणं। 'उवरिल्लठितिनिसेगं बहुं किच्चा'–उवरिल्लीसु ठितिसु णिसेगो दलियस्स निसेगो न्यासः, तं बहुं किच्चा, हेठिल्लेसु थोवं, तह विसेसहीणमेव। एवं संसरिऊणं ततो पुढवीतो काले पुण्णे फिडिऊण बादरतसकादिए स उ पण्णो ॥७४–७५॥

'बादरतसेसु तक्कालमेवं'। 'बादरतसेसु'–वेदिंदियातिसु, 'तक्कालं'–बादरतसकायकालं, 'एवं'ति–पुव्वुत्तं विहिं दंसेति–कतरं? 'पज्जत्तापज्जत्तगदीहेतरद्धासु॥ जोगकसाउक्कोसो णिच्चमवि आउबन्धं च। जोगजहण्णेणं उवरिल्लठितिणिसेगं बहुं किच्चा' ॥ त्ति–एतेण विहिणा बादरतसेसु वे सागरोवमसहस्सातिं सातिरेगातिं परिब्भमित्ता 'अंते च सत्तमखितीए'। 'अंते च'त्ति–अंतिमे भवे, च गहणं भेददरिसणत्थं, कं तं? भण्णइ–जत्तिता वारा सत्तामिं गंतुं जोगो तत्तिना वारातो दंदरिसेति, 'सत्तमखितिए'–अहे सत्तमपुढवीए, सत्तमीगहणं दीहाउअत्तातो जोगुक्कस्सं कसाउक्कोसं च लब्भति। 'सव्वलहुं पज्जत्तो' त्ति–स च पज्जत्तभावं गतो, एवं तेण उक्कोसेण जोगेण वड्ढितो अप्पज्जत्तगजोगातो पज्जत्तगस्स जोगो असंखेज्जगुणो त्ति, 'जोगकसायाहिगो'–बहुतम्मि भवे बहुसो बहुसो उक्कोसगातिं जोगठाणातिं गच्छति, 'बहुसो'–बहुसो बहुसंकिलेसपरिणामो भवति ॥७६॥

'जोगजवमज्झस्स उवरिं'ति। जोगस्स जवमज्झत्तं, कहं ? कालसंजोगातो अट्ठसमतिगाणं, 'उवरिं मुहुत्तमच्छित्तु जीवियवसाणे'। मुहुत्तमच्छित्तु-अंतोमुहुत्तं कालमच्छित्तु-वट्टीए अन्तोमुहुत्तो कालो त्ति जीवियवसाणे-जीवियस्स अन्ते अन्तोमुहुत्तसेसाउगे जोगजवमज्झस्स असंखेज्जगुणेण वड्ढितो, 'तिचरिमदुचरिमसमए पूरेत्तु कसायउक्कोसं'-चरिमस्स दुतियं दुचरिमं, चरिमस्स ततितं (ति)चरिमं, पूरेत्तु 'कसायउक्कोसं' ति-अणंतगुणाते कसायवुड्ढीए वड्ढंतो तंमि तिचरिमदुचरिमसमए उक्कोसं संकिलेसट्ठाणं गतो। 'जोगुक्कस्सं चरिमदुचरिमे'-जोगस्स उक्कोसं जोगुक्कस्सं चरिमदुचरिमे-अन्त्योपान्त्यसमए जोगस्स उक्कोसं गतो। उक्कोसो जोगो उक्कोससंकिलेसो जुगवं एगसमए लब्भंति परतो णत्थित्ति विसमगहणं। दुचरिमतिचरिमसमये संकिलेसेण किं पयोतणं ? भण्णइ-ठितिउव्वट्टणत्थं, चरिमदुचरिमसमए जोगग्गहणं परिपूर्णप्रदेशाथम्। 'चरिमसमयंमि संपुण्णगुणियकमो'-चरिमसमए वट्टमाणो संपुण्णगुणियकंमंसितो त्ति वुच्चति। सत्तरिसागरोवमकोडाकोडीठियस्स दलियस्स चरिमसमयणारगस्स एगो भागो धरति, सेसा भागा खीणा, सो वि धरमाणभागो चरिमसमए उवट्टमाणस्स खतं जाहित्ति। 'पगतं तेणेह सामित्ते'त्ति-पगतं अहिगारो, तेण एरिसेण विहिणा आगतेण सामित्ते उक्कोसपदेससंकमसामित्ताहिगारे। भणितो गुणितकम्मंसिगो ॥७७-७८॥

(मलय०)-तदेवं कृता साधनादिप्ररूपणा, सांप्रतमुत्कृष्टप्रदेशसंक्रमस्वामित्वमभिधातव्यम्, तच्च गुणितकर्मांशे लभ्यत इति तन्निरूपणार्थमाह—'जो बायर' त्ति। इह द्विधा त्रसाः-सूक्ष्मा बादराश्च। तत्र बादरा द्वीन्द्रियादयः, सूक्ष्मास्तेजोवायुकायिकाः। तत्र सूक्ष्मत्र-

सव्यवच्छेदाथ बादरग्रहणम्। बादरत्रसानां द्वीन्द्रियादीनां यः कायस्थितिकालः, पूर्वकोटीपृथक्त्वाभ्यधिकद्विसहस्रसागरोपमप्रमाणः, तेनोनां कर्मस्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणां यावत् पृथिव्यां बादरे बादरपृथिवीकायभवेषु स्थित्वा, कथं स्थित्वा? इत्यत आह– 'पज्जत्तापज्जत्तगदीहेयरद्धासु' त्ति–दीर्घेतराद्धाभ्यां पर्याप्तापर्याप्तयोर्यथासंख्येन योजना, ततोऽयमर्थः–दीर्घाद्धं पर्याप्तभवेषु, इतराद्धं–स्तोकाद्धमपर्याप्तभवेषु, प्रभूतेषु पर्याप्तभवेषु स्तोकेषु चापर्याप्तभवेषु स्थित्वेत्यर्थः। तथा बहुशः–अनेकवारम्, 'योगकषायोत्कृष्टः'–उत्कृष्टेषु योगस्थानेषु उत्कृष्टेषु च काषायिकेषु संक्लेशपरिणामेषु वर्तित्वा। इह शेषैकेन्द्रियेभ्यो बादरपृथिवीकायस्य प्रभूतमायुस्तेनाव्यवच्छिन्नं तस्य प्रभूतकर्मपुद्गलोपादानम्। बलवत्तया च तस्यातीव वेदनासहिष्णुत्वम्। तेन तस्य प्रभूतकर्मपुद्गलपरिसाटो न भवतीति बादरपृथ्वीकायिकग्रहणम्। अपर्याप्तभवग्रहणं च परिपूर्णकायस्थितिपरिग्रहार्थम्। तेषां चापर्याप्तकभवानां स्तोकानां पर्याप्तकभवानां च प्रभूतानां ग्रहणं प्रभूतकर्मपुद्गलपरिसाटाभावप्राप्त्यर्थम्, अन्यथा हि निरन्तरमुत्पद्यमानम्रियमाणेषु बहवः पुद्गलाः परिसटन्ति, न च तेन प्रयोजनम्। उत्कृष्टेषु च योगस्थानेषु वर्तमानः प्रभूतं कर्मदलिकमादत्ते, उत्कृष्टसंक्लेशपरिणामश्चोत्कृष्टां स्थितिं बध्नाति प्रभूतां चोद्वर्तयति स्तोकं चापवर्तयति, अतो योगकषायोत्कृष्टग्रहणम्। 'निच्चम्' इत्यादि–नित्यं सर्वकालं भवे भवे आयुर्बन्धकाले जघन्ये योगे वर्तमान आयुर्बन्धं कृत्वा, उत्कृष्टे हि आयुःप्रायोग्ये योगे वर्तमानः प्रभूतानायुःपुद्गलान् आदत्ते तथास्वाभाव्याच्च ज्ञानावरणीयस्य प्रभूतान् पुद्गलान् परिसाटयति, न च तेन प्रयोजनम्, अतो जघन्ययोगग्रहणम्। तथोपरितनीषु स्थितिषु निषेकं–कर्मदलिकन्यासरूपं बहु–स्वभूमिकानुसारेणातिशयेन प्रभूतं कृत्वा। एवं बादरपृथ्वीकायिकेषु मध्ये पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयन्यूनाः सप्ततिसागरोपमकोटीकोटीः संसृत्य ततो विनिर्गच्छति,विनिर्गत्य च बादरत्रसकायेषु द्वीन्द्रियादिषु मध्ये समुत्पद्यते॥७४-७५॥

'यायर' त्ति। एवं पूर्वोक्तेन विधिना "पज्जत्तापज्जत्तगदीहेयरद्धासु ॥ जोगकसाउक्कोसो बहुसो निच्चमवि आउबंधं च। जोग-
जहण्णेणुवरिल्लठिइनिसेगं बहुं किच्चा" ॥ इत्येवंरूपेण बादरत्रसेषु तत्कालं–बादरत्रसकायस्थितिकालं पूर्वकोटिपृथक्त्वाभ्यधिकसाग-
रोपमसहस्रद्वयप्रमाणं परिभ्रम्य यावतो वारान् सप्तमीं नरकपृथिवीं गन्तुं योग्यो भवति तावतो वारान् गत्वा अन्तिमे सप्तमपृथिवीनारक-
भवे वर्तमानः। इह दीर्घजीवित्वं योगकषायोत्कटता च लभ्यत इति यावत्संभवसप्तमनरकपृथ्वीगमनग्रहणम्। तथा सप्तमपृथ्वीनारकभवे
सर्वलघुपर्याप्तः–सर्वेभ्योऽप्यन्येभ्यो नारकेभ्यः शीघ्रं पर्याप्तभावमुपगतः। इहापर्याप्तापेक्षया पर्याप्तस्य योगोऽसंख्येयगुणो भवति, तथा
च सति तस्यातीव प्रभूतकर्मपुद्गलोपादानसंभवः, तेन चेह प्रयोजनमिति सर्वलघुपर्याप्त इत्युक्तम्। बहुशश्च–अनेकवारं च तस्मिन् भवे
वर्तमानो योगकषायाधिकः–उत्कृष्टानि योगस्थानानि उत्कृष्टांश्च काषायिकान् परिणामविशेषान् गच्छन् ॥ ७६ ॥
'जोग' त्ति–योगयवमध्यस्योपरि अष्टसामयिकानां योगस्थानानामुपरीत्यर्थः, अन्तर्मुहूर्तं कालं यावत् स्थित्वा जीविताव-
सानेऽन्तर्मुहूर्ते आयुषः शेषे। एतदुक्तं भवति–अन्तर्मुहूर्तावशेषे आयुषि योगयवमध्यस्योपरि असंख्येयगुणवृद्ध्याऽन्तर्मुहूर्तं कालं यावत्
प्रवर्धमानो भूत्वा। ततः किमित्याह–'तिचरिम' इत्यादि। त्रयश्चरमा यस्मात्स त्रिचरमः, यत आरभ्यान्तिमः समयस्तृतीयो भवति
स त्रिचरम इत्यर्थः, तस्मिन् भवस्य त्रिचरमे द्विचरमे च समये वर्तमान उत्कृष्टं काषायिकं संक्लेशस्थानं पूरयित्वा, । । मे
च समये योगस्थानमपि चोत्कृष्टं पूरयित्वा। इहोत्कृष्टो योग उत्कृष्टश्च संक्लेशो युगपदेकमेव समयं यावत् प्राप्यते, नाधिकमिति
विषमसमयतया उत्कृष्टयोगोत्कृष्टकषायस्थानग्रहणम्। त्रिचरमे द्विचरमे च समये उत्कृष्टसंक्लेशग्रहणं प्रभूतोद्वर्तनास्वल्पापवर्त्तनाभा-
वार्थम्, द्विचरमे चरमे च समये उत्कृष्टयोगग्रहणं परिपूर्णप्रदेशोपचयसंभवार्थम्। स इत्थंभूतो नारकभवस्य चरमसमये वर्तमानः संपूर्ण-

गुणितकर्मांशो भवति, तेन च संपूर्णगुणितकर्मांशेन इहोत्कृष्टप्रदेशसंक्रमस्वामित्वे प्रकृतम्—अधिकारः ॥ ७७–७८ ॥

(उ०)—तदेवं कृता साद्यनादिप्ररूपणा। अथोत्कृष्टप्रदेशसंक्रमस्वामित्वमभिधेयम्। तच्च गुणितकर्मांशे लभ्यत इति तं लक्षयन्नाह—यो बादरत्रसानां द्वीन्द्रियादीनाम्, तेजोवायुकायिकरूपसूक्ष्मत्रसव्यवच्छेदार्थं बादरग्रहणम्, कालेन पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयप्रमाणेन कायस्थितिकालेनोनां कर्मस्थितिं—मोहनीयकर्मस्थितिं सप्ततिसागरोपमकोटाकोटिप्रमाणां यावत् पृथिव्यां बादरे—बादरपृथिवीकायभवेषु स्थित्वा। कथं स्थित्वा ? इत्याह—पर्याप्तापर्याप्तकयोर्दीर्घेतराद्धे, सप्तमी द्वितीयार्थे दीर्घाद्धां पर्याप्तभवेषु, इतराद्धां—स्तोकाद्धामपर्याप्तभवेषु, प्रभूतेषु पर्याप्तभवेषु स्तोकेषु चापर्याप्तभवेषु स्थित्वेत्यर्थः। तथा बहुशोऽनेकवारं योगकषायोत्कृष्टः—उत्कृष्टेषु योगस्थानेषु उत्कृष्टेषु च काषायिकेषु संक्लेशपरिणामेषूषित्वेत्यर्थः। इह शेषैकेन्द्रियेभ्यो बादरपृथिवीकायिकः प्रभूतायुष्कस्तेनाऽव्यवच्छिन्नं तस्य प्रभूतकर्मपुद्गलोपादानम्, बलवत्तयाऽतीव वेदनासहिष्णुतया च तस्य प्रभूतकर्मपुद्गलपरिशाटाभावः, असहिष्णुरेव वेदनाकरालितस्तथा तथा प्रयोगेण प्रभूतकर्मपुद्गलान् परिशातयतीत्येवमालोच्य बादरपृथिवीकायिकग्रहणं कृतम्। अपर्याप्तभवग्रहणं च परिपूर्णकायस्थितिपरिग्रहाय, तेषां चापर्याप्तकभवानां स्तोकानां पर्याप्तकभावानां च प्रभूतानां ग्रहणं प्रभूतकर्मपुद्गलपरिशाटाभावज्ञापनाय, अन्यथा हि निरन्तरोत्पद्यमानम्रियमाणेषु बहुपुद्गलपरिशाटो लभ्यते, न च तेनेह प्रयोजनम्। उत्कृष्टेषु योगस्थानेषु च वर्त्तमानः प्रभूतं कर्मदलिकमादत्ते, उत्कृष्टसंक्लेशपरिणामश्चोत्कृष्टां स्थितिं बध्नाति, प्रभूतमुद्वर्तयति, स्तोकं चापवर्तयतीति योगकषायोत्कृष्टग्रहणम्। तथा नित्यं—सर्वकालं भवे भवे जघन्ययोगे वर्तमानस्तेनायुर्बन्धं कृत्वा, उत्कृष्टे ह्यायुःप्रायोग्ये योगे वर्तमानः प्रभूतायुःपुद्गलानादत्ते, उत्कृष्टेन योगेन प्रभूतानायुःपुद्गलानाददानश्च तथास्वाभाव्याज्ज्ञानावरणीयस्य प्रभूतान् पुद्गलान् परिशाटयति, न च तेनेह प्रयोजनमिति जघन्ययोग

ग्रहणम् । तथोपरितनीषु स्थितिषु निषेकं–कर्मदलिकन्यासं बहु–स्वभूमिकानुसारेणातिप्रभूतं कृत्वा, एवं बादरपृथ्वीकायिकेषु बादरत्रसकायस्थितिन्यूनाः सप्ततिसागरोपमकोटाकोटीः संसृत्य ततो निर्गच्छति, निर्गत्य च बादरत्रसकायेषु द्वीन्द्रियादिषु समुत्पद्यते॥७४–७५॥

बादरत्रसेषु चैवं प्रभूतस्तोकपर्याप्तापर्याप्तभवावस्थानाद्युपरितनस्थितिबहुनिषेककरणान्तेन पूर्वोक्तेन तत्कालं–बादरत्रसकायस्थितिकालं पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयप्रमाणं परिभ्रमणेन संपूर्य यावतो वारान् सप्तमीं नरकावनिं गन्तुमर्हस्तावतो वारांस्तत्र गत्वाऽन्तिमे भवे सप्तमपृथ्वीनारकत्वेन वर्तमानः, इह दीर्घजीवित्वं योगकषायोत्कटता च लभ्यत इति यावत्संभवं सप्तमनरकपृथ्वीगमनग्रहणम् । तथा सप्तमक्षितौ नारकभवे सर्वेभ्योऽप्यन्येभ्यो नारकेभ्यो लघु–शीघ्रं पर्याप्तभावमुपगतः । इहापर्याप्तापेक्षया पर्याप्तोऽसङ्ख्येयगुणयोगो लभ्यते, तथा च तस्यातिप्रभूतकर्मपुद्गलोपादानसंभवः, तेन चेह प्रयोजनमिति सर्वलघुपर्याप्त इत्युक्तम् । बहुशश्चानेकवारं तस्मिन्नन्त्यसप्तमनरकपृथ्वीनारकभवेऽपि योगकषायाधिको भूत्वा उत्कृष्टानि योगस्थानान्युत्कृष्टांश्च काषायिकान् परिणामविशेषान् गच्छन्नित्यर्थः ॥७६॥

योगयवमध्यस्य–अष्टसामयिकानां योगस्थानानामुपरि अन्तर्मुहूर्तं जीवितावसाने स्थित्वाऽन्तर्मुहूर्तावशेषे आयुषि योगयवमध्यस्योपरि असङ्ख्येयगुणवृद्ध्याऽन्तर्मुहूर्तं यावत्प्रवर्धमानो भूत्वेत्यर्थः । भवस्य त्रिचरमे द्विचरमे च समये वर्तमान उत्कृष्टं काषायिकसंक्लेशस्थानं पूरयित्वा, त्रयः समयाश्चरमा यस्माद्यत आरभ्यान्तिमः समयस्तृतीयो भवतीति यावत् स त्रिचरमः, एवं द्वौ चरमौ यस्मात्स द्विचरम इति व्युत्पत्तिः । चरमे द्विचरमे च समये योगस्थानमपि चोत्कृष्टं पूरयित्वा । इहोत्कृष्टो योग उत्कृष्टश्च संक्लेशो युगपदेकमेव समयं यावत्प्राप्यते नाधिकमिति विषमसमयोद्भवोत्कृष्टयोगोत्कृष्टकषायस्थानग्रहणम् । त्रिचरमे द्विचरमे च समये उत्कृष्टसंक्लेश-

ग्रहणं प्रभूतोद्वर्तनाल्पापवर्तनासंपत्तये। द्विचरमे चरमे च समये उत्कृष्टयोगग्रहणं संपूर्णप्रदेशोपचयसंभवाय। एवं कृत्वा नारकभवस्य चरमसमये संपूर्णगुणितकर्मांशः संपद्यते, तेन च संपूर्णगुणितकर्मांशेनेहोत्कृष्टप्रदेशसंक्रमस्वामित्वे प्रकृतम्–अधिकृतम् ॥ ७७–७८ ॥

इयाणिं साभित्तं—

**तत्तो उव्वट्टित्ता आवलिगासमयतब्भवत्थस्स। आवरणविग्घचोद्दसगोरालियसत्तगुक्कस्सो ॥ ७९ ॥**

(चू०)—'तत्तो' इति–णरगातो, 'उव्वट्टिता'–णिगंतूणं पंचिंदियतिरिक्खेसु उप्पण्णस्स, 'आवलितासमयतब्भवत्थस्स' इति–आवलियामेत्तं तंमि भवे ठितितस्स, तंमि काले 'आवरणविग्घचोद्दसगोरालियसत्तगुक्कोसो'–पंच णाणावरण, चत्तारि दंसणावरण, पंच अन्तरातियं, उरालियसत्तगं, एतासिं एक्कवीसाए पगतीणं उक्कोसो पदेससंकमो होति। आवलियसमयतब्भवत्थगहणं णारगचरिमसमए उक्कोसजोतिणा बहुतं दलितं बद्धं, आवलियातीतं संकमंति त्ति काउं, अण्णहिं एत्तियस्स दलितस्स संचओ ण लब्भति त्ति काउं ॥७९॥

(मलय०)–तदेवमुक्तो गुणितकर्मांशः, सम्प्रति स्वामित्वमभिधीयते—'तत्तो'त्ति–स गुणितकर्मांशस्ततः सप्तमपृथ्वीरूपान्नरकादुद्वृत्य पर्याप्तपञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नः, ततस्तद्भवस्थस्य–तस्मिन् पर्याप्तसंज्ञिपञ्चेन्द्रियभवे तिष्ठतः प्रथमावलिकाया उपरितने चरमे समये ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकौदारिकसप्तकलक्षणानामेकविंशतिप्रकृतीनामुत्कृष्टप्रदेशसंक्रमो भवति। एतासां हि कर्मप्रकृतीनां नारकभवचरमसमये उत्कृष्टयोगवशात् प्रभूतं कर्मदलिकमात्तम्। तच्च बन्धावलिकायामतीतायां संक्रमयति, नान्यथा। अन्यत्र चैतावत् प्रभूतं कर्मदलिकं न प्राप्यत इति 'आवलिगासमयतब्भवत्थस्स' इत्युपात्तम् ॥ ७९ ॥

(उ०)-तदेवमुक्तो गुणितकर्मांशः, सम्प्रति स्वामित्वमभिधीयते—तस्य गुणितकर्मांशस्य ततः सप्तमपृथ्वीरूपान्नरकादुद्वृत्य पर्याप्तपञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नस्य तद्भवस्थस्य—तस्मिन् पर्याप्तसंज्ञिपञ्चेन्द्रियभवे तिष्ठतः 'आवलिगासमय' त्ति—लुप्तसप्तम्यन्तनिर्देशः, आद्यतद्भवावलिकाया उपरितने चरमसमय इत्यर्थः, ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकौदारिकसप्तकलक्षणानामेकविंशतिप्रकृतीनामुत्कृष्टप्रदेशसंक्रमो भवति। यत एतासां कर्मप्रकृतीनां नारकभवान्त्यसमये उत्कृष्टयोगेनातिप्रभूतं दलिकमात्तम्, तच्च बन्धावलिकायामतीतायां संक्रम्यते, अन्यत्र चैतावत्प्रभूतं कर्मदलिकमुक्तप्रक्रियालभ्यं न लभ्यते, तत 'आवलिकान्तसमये तद्भवस्थस्य' इत्युक्तम् ॥

**कम्मचउक्के असुभाणऽवज्झमाणीण सुहुमरागंते। संछोभणम्मि णियगे चउवीसाए नियट्टिस्स ॥८०॥**

(चू०)—'कम्मचउक्के'—दंसणावरणवेतणिज्जणामगोतेसु 'असुभाणं अवज्झमाणीणं'—णिद्दादुगअसातावेयणिज्जआदिल्लवज्जसंठाणसंघयणं कुवण्णणवगं उवघातअपसत्थविहायगतिअपज्जत्तगअथिरादिछक्कणीतागोत—एयासिं बत्तीसाए कंमाणं खवगस्स 'सुहुमरागंते'—सुहुमरागस्स चरिमसमए उक्कोसो पदेससंकमो, गुणितकंमंसितस्स गुणसंकमेण लब्भति संछोभ इत्यर्थः। चउव्वीसाए—थीणगिद्धितिगछन्नोकसायासत्तणामअट्ठकसायाणं एतासिं चउव्वीसाए पगतीणं गुणितकंमंसितस्स अणियट्टिकरणे वट्टमाणस्स उक्कोसो पदेससंकमो सव्वसंकमेण लब्भति ॥

(मलय०)-'कम्मचउक्के' त्ति—कर्मचतुष्के दर्शनावरणवेदनीयनामगोत्रलक्षणे या अशुभाः सूक्ष्मसंपरायावस्थायामबध्यमानाः प्रकृतयो निद्राऽसातवेदनीयप्रथमवर्जसंस्थानप्रथमसंहननाशुभवर्णादिनवकोपघाताप्रशस्तविहायोगत्यपर्याप्तास्थिराशुभदुर्भगदुःस्वरानादे-

यायशःकीर्तिनीचैर्गोत्रलक्षणा द्वात्रिंशत्प्रकृतयस्तासां गुणितकर्मांशस्य क्षपकस्य सूक्ष्मसंपरायस्यान्ते—चरमसमये उत्कृष्टः प्रदेशसंक्रमो भवति। तथाऽनिवृत्तिवादरस्य गुणितकर्मांशस्य क्षपकस्य मध्यमकपायाष्टकस्त्यानर्द्धित्रिकतिर्यग्द्विकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मसाधारण-नोकपायपट्करूपाणां चतुर्विंशतिप्रकृतीनां आत्मीय आत्मीये चरमसंछोभे—चरमसंक्रमे उत्कृष्टप्रदेशसंक्रमो भवति ॥ ८० ॥

(उ०)–'कर्मचतुष्के'–दर्शनावरणवेदनीयनामगोत्रलक्षणे या अशुभाः प्रकृतयः सूक्ष्मसंपरायत्वेऽवध्यमानाः प्रकृतयो निद्राद्विकासातवेदनीयानाद्यसंहननसंस्थानाशुभवर्णादिनवकोपघाताप्रशस्तविहायोगत्यपर्याप्तास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तिनीचैर्गोत्रलक्षणा द्वात्रिंशत् तासां गुणितकर्मांशस्य क्षपकस्य–सूक्ष्मसंपरायस्यान्ते–चरमसमये उत्कृष्टः प्रदेशसंक्रमो भवति। तथा मध्यमकपायाष्टकस्त्यानर्द्धित्रिकतिर्यग्द्विकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मसाधारणनोकपायपट्करूपाणां चतुर्विंशतिप्रकृतीनां 'णियगे' त्ति–स्वस्वचरमसंच्छोभेऽनिवृत्तिवादरस्य गुणितकर्मांशस्य क्षपकस्योत्कृष्टः प्रदेशसंक्रमो भवति ॥ ८० ॥

**तत्तो अणंतरागयसमयादुक्कस्स सायबंधद्धं। बंधिय असायबंधालिगंतसमयम्मि सायस्स ॥ ८१ ॥**

(चू०)—'तत्तो अणंतरागयसमयादु' त्ति। उप्पण्णपढमसमयातो आढत्तं उक्कोसं सातबंधकालं सातं बंधित्वा 'असातबन्धावलिगंतसमयंमि'–सातबंधातो असातं बन्धितुमाढत्तस्स असातबन्धावलिताए गयाए सातस्स असाते उक्कोसपदेससंकमो अहापवत्तसंकमेण लब्भति ॥८१॥

(मलय०)–'तत्तो'त्ति–ततो नरकभवादनन्तरभवे समागतः प्रथमसमयादारभ्य सातवेदनीयमुत्कृष्टां बन्धाद्धां–उत्कृष्ट बन्धकालं यावदित्यर्थः, बद्ध्वा असातवेदनीयं बध्धुमारभते। ततोऽसातवेदनीयस्य बन्धावलिकान्तसमये सातवेदनीयं सकलमपि बन्धाव-

लिकातीतं भवतीति कृत्वा तस्मिन् समयेऽसातवेदनीये वध्यमाने सातं यथाप्रवृत्तसंक्रमेण संक्रमयतः सातस्योत्कृष्टप्रदेशसंक्रमो भवति ॥

(उ०)-ततो नरकभवादनन्तरभवे समागतः समयादिति-प्रथमसमयादारभ्योत्कृष्टां वन्धाद्धामुत्कृष्टं वन्धकालं यावदित्यर्थः, सातवेदनीयं बद्ध्वाऽसातवेदनीयं वध्नाति । ततोऽसातवेदनीयवन्धावलिकान्त्यसमये सातवेदनीयं सकलमपि वन्धावलिकातीतं भवतीति वध्यमानेऽसातवेदनीये तदा सातं यथाप्रवृत्तसंक्रमेण संक्रमयतः सातस्योत्कृष्टप्रदेशसंक्रमो लभ्यते ॥ ८१ ॥

**संछोभणाए दोण्हं मोहाणं वेयगस्स खणसेसे । उप्पाइय सम्मत्तं मिच्छत्तगए तमतमाए ॥ ८२ ॥**

(चू०)—'संछोभणाए दोण्हं मोहाणं' अप्पप्पणो खवगस्स चरिमसंछोभणातो 'दोण्हं मोहाणं' ति-मिच्छत्तसम्माभिच्छत्ताणं उक्कोसपदेससंकमो सव्वसंकमेण लब्भति। 'वेदगस्स खणसेसे उप्पाइय सम्मत्तं मिच्छत्तगए तमतमाए'-वेयगस्स सम्मत्तस्स 'खणसेसे'ति-आउगस्स अन्तोमुहुत्तावसेसे 'उप्पाइय सम्मत्तं'ति-सम्मत्तं उप्पाएत्तु दीहेण गुणसंकमणकालेण पूरित्तु मिच्छत्तगए-सम्मत्तातो पुणो भिच्छत्तं पडिवन्नस्स पढमसमए चेव सम्मत्तस्स भिच्छत्ते उक्कोसो पदेससंकमो लब्भति ॥८२॥

(मलय०)-'संच्छोभणाए' त्ति—क्षपकस्य द्वयोर्मोहनीययोर्मिथ्यात्वसम्यग्मिथ्यात्वरूपयोरात्मीयात्मीयचरमसंच्छोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति। तथा क्षणशेषे-अन्तर्मुहूर्तावशेषे आयुषि तमस्तमाभिधानायां सप्तमपृथिव्यां वर्तमान औपशमिकं सम्यक्त्वमुत्पाद्य दीर्घेण च गुणसंक्रमकालेन वेदकसम्यक्त्वपुञ्जं समापूर्य सम्यक्त्वात् प्रतिपतितो मिथ्यात्वं च प्रतिपद्य तत्प्रथमसमय एव वेदकसम्यक्त्वस्य मिथ्यात्वे उत्कृष्टं प्रदेशसंक्रमं करोति ॥ ८२ ॥

(उ०)–द्वयोर्मोहयोः–मिथ्यात्वसम्यग्मिथ्यात्वरूपयोः संच्छोभणायां–स्वस्वचरमसंच्छोभे क्षपकस्य सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति। तथा क्षणशेषेऽन्तर्मुहूर्तावशेषे आयुषि तमस्तमायां सप्तमनरकपृथिव्यां वर्तमान औपशमिकं सम्यक्त्वमुत्पाद्य दीर्घेण च गुणसंक्रमकालेन वेदकसम्यक्त्वपुञ्जं समापूर्य सम्यक्त्वात्पतित्वा मिथ्यात्वं प्रपद्यमानस्तत्प्रथमसमय एव वेदकसम्यक्त्वस्य मिथ्यात्वे उत्कृष्टप्रदेशसंक्रमं करोति ॥ ८२ ॥

**भिन्नमुहुत्ते सेसे तच्चरमावास्सगाणि किच्चेत्थ। संजोयणाविसंजोयगस्स संछोभणे एसिं ॥ ८३ ॥**

(चू०)—'भिण्णमुहुत्ते सेसे'–सत्तमाए पुढवीए णिरतिगो सव्वणिरुद्धे जीविए सेसे, 'तच्चरिमावास्सगाणि किच्चा'–गुणितकम्मंसिगस्स अन्ते जे किरियाविसेसा ते तच्चरिमावास्सगाणि, के ते? "जोगजवमज्झउवरिं मुहुत्तमच्छित्तु जीवियवसाणे। तिचरिमदुचरिमसमए पूरेत्तु कसायउक्कस्सं॥ जोगुक्कसं चरिमदुचरिमे" इच्चेवमादि, 'किच्चेत्थ'–काउं एत्थ उप्पातितसम्मत्तो वेदगसम्मद्दिट्ठिस्स 'संजोयणाविसंजोयगस्स' अणंताणुबंधिणो विसंजोयमाणस्स, 'संछोभणे'–एसिं चरिमसंछोभणे उक्कोसो पदेससंकमो सव्वसंछोभणेण लब्भति। 'एसिं' ति–एएसिं अणंताणुबंधीणं ॥ ८३ ॥

(मलय०)–'भिन्नमुहुत्ते त्ति'। स गुणितकर्मांशः सप्तमपृथिव्यां वर्तमानो भिन्नमुहूर्तावशेषे आयुषि तस्मिन् भवे यानि चरमावश्यकानि–"जोगजवमज्झउवरि मुहुत्तमच्छित्तु जीवियवसाणे। तिचरिमदुचरिमसमए पूरित्तु कसायउक्कस्सं"॥ इत्यादिलक्षणानि तानि कृत्वा। तस्याश्च सप्तमपृथिव्या उद्वृत्य सम्यक्त्वं चोत्पाद्य वेदकसम्यग्दृष्टिः सन् 'संयोजनान्'–अनन्तानुबन्धिनो विसंयोजयति, विसंयो-

जना क्षपणा, तत एषाम्–अनन्तानुबन्धिनां चरमसंछोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति ॥ ८३ ॥

(उ०) स गुणितकर्मांशः सप्तमक्षितौ वर्तमानो भिन्नमुहूर्त्ते शेषे आयुषि तच्चरमावश्यकानि तस्मिन् भवे यानि चरमावश्यकानि योगयवमध्यादुपरि मुहूर्तावस्थानादिलक्षणानि तानि कृत्वेह तस्याः सप्तमपृथिव्या उद्वृत्यानन्तरभवे सम्यक्त्वमुत्पाद्य वेदकसम्यग्दृष्टिः सन् संयोजनान्–अनन्तानुबन्धिनो विसंयोजयति, विसंयोजना क्षपणा, तत एतस्य संयोजनाविसंयोजकस्यैषाम्–अनन्तानुबन्धिनां चरमसंछोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति ॥ ८३ ॥

## ईसाणागयपुरिसस्स इत्थियाए व अट्ठवासाए । मासपुहुत्तब्भहिए नपुंसगे सव्वसंकमणे ॥ ८४ ॥

(चू०)—'ईसाणागयपुरिसस्स इत्थियाए व'–ईसाणदेवो गुणितकम्मंसिगो चेव संकिलेसेणं एगिंदियपाओग्गं बंधमाणो णपुंसगवेदं भूयो २ बंधित ततो चुतो इत्थी वा पुरिसो वा जातो 'अट्ठवासाए मासपुहुत्तब्भहिते'–अट्ठवासिगो सत्तमासब्भतिगो तस्स खवणाए अब्भुट्ठितस्स 'णपुंसगे सव्वसंकमेण'–णपुंसगवेदस्स सव्वसंछोभे गुणितकंमंसितस्स उक्कोसो पदेससंकमो लब्भति ॥ ८४ ॥

(मलय०)–'ईसाणागय' त्ति–ईशानदेवो गुणितकर्मांशः संक्लेशपरिणामेनैकेन्द्रियप्रायोग्यं बध्नन् नपुंसकवेदं भूयो भूयो बद्ध्वा तत ईशानाच्च्युतः सन् स्त्री वा पुरुषो वा जातः । ततो मासपृथक्त्वाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु क्षपणायोद्यतते । तस्य नपुंसकवेदं क्षपयतश्चरमसंछोभे सर्वसंक्रमेण नपुंसकवेदस्योत्कृष्टः प्रदेशसंक्रमो भवति ॥ ८४ ॥

(उ०)–ईशानदेवो गुणितकर्मांशः संक्लेशपरिणामेनैकेन्द्रियप्रायोग्यं बध्नन्नपुंसकवेदं भूयो भूयो बद्ध्वा ततश्च्युतः सन् स्त्री वा पु-

रुपो वा जातो यो मासपृथक्त्वाभ्यधिकवर्षाष्टकेऽतिक्रान्ते क्षपणायोद्यतते। तस्य नपुंसकवेदं क्षपयतश्चरमसंच्छोभे सर्वसंक्रमेण नपुंसकवेदस्योत्कृष्टः प्रदेशसंक्रमः ॥ ८४ ॥

**इत्थीए भोगभूमिसु जीविय वासाणसंखियाणि तओ। हस्सठिइं देवत्ता सव्वलहुं सव्वसंछोभे ॥८५॥**

(चू०)—'इत्थीए'–इत्थिवेदस्स 'भोगभूमिसु'त्ति–भोगभूमिगेसु'जीवियवासाणसंखियाणि'–तत्थ असंखेज्जाणि वरिसाणि इत्थिवेदं पूरेत्तु 'तओ हस्सट्ठितिंदेवत्ता'–ततो पलितोवमस्स असंखेज्जतिभागेणं अकालमच्चुणा हस्सठितिएसु देवेसु उववण्णो। तत्थ दसवाससहस्साणि जीवितूणं ततो–तिण्ह अण्णयरवेतो मणुस्सो जातो। 'सव्वलहुं'ति–अट्ठवासिगो सत्तमासब्भहिगो खवणाए अब्भुट्ठितो सो। 'सव्वसंछोभे' इति–गुणियकम्मंसिगो चरिमसंच्छो(भे) वट्टमाणो इत्थिवेदस्स उक्कोसपदेससंकमगो ॥ ८५ ॥

(मलय०)–'इत्थीए' त्ति। भोगभूमिषु भूयो भूयोऽसंख्येयवर्षाणि यावत् स्त्रीवेदं बद्ध्वा ततः पल्योपमासंख्येयभागे गते सति अकालमृत्युना मृत्वा ह्रस्वस्थितिं दशवर्षसहस्रप्रमाणां देवायुषो बद्ध्वा देवत्वेनोत्पन्नः। तत्रापि तमेव स्त्रीवेदमापूर्य स्वायुःपर्यन्ते मनुजेषु मध्येऽन्यतरवेदसहितो जातः। ततो लघु–शीघ्रं क्षपणायोद्यतः। ततः 'इत्थीए' त्ति–तस्य स्त्रीवेदस्य क्षपणसमये चरमसंच्छोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति। इहैवमेव स्त्रीवेदस्योत्कृष्टमापूरणमुत्कृष्टश्च प्रदेशसंक्रमः केवलज्ञानेनोपलब्धो नान्यथेत्येषैव युक्तिरत्रानुसर्तव्या, न युक्त्यन्तराणि, युक्त्यन्तराणां चिरन्तनग्रन्थेष्वदर्शनतो निर्मूलतयाऽन्यथापि कर्तुमशक्यत्वात्। एवमुत्तरत्रापि यथायोगं तथैव केवलज्ञानेनोपलम्भादित्युत्तरमनुसरणीयम् ॥८५॥

(उ०) यो भोगभूमिषु भूयो भूयोऽसङ्ख्येयानि वर्षाणि यावत्संक्लेशेन स्त्रीवेदं बद्ध्वाऽऽपूर्य च प्रकृत्यन्तरदलिकसंक्रमेण पल्योपमासङ्ख्येयभागे गते मन्यकालमृत्युना मृत्वा ह्रस्वस्थितिं दशवर्षसहस्रप्रमाणां देवायुषो बद्ध्वा देवत्वेनोत्पन्नस्तत्रापि तमेव स्त्रीवेदमापूर्य स्वायुःक्षये मनुजेषु मध्येऽन्यतरवेदसहितो जातः। ततो लघु–शीघ्रं क्षपणायोद्यतः। तस्य स्त्रीवेदस्य क्षपणसमये चरमसंच्छोभे 'सव्व' त्ति-सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति। इहेत्थमेव स्त्रीवेदस्योत्कृष्टापूरणोत्कृष्टप्रदेशसंक्रमसंभवः केवलज्ञानेनोपलब्धो नान्यथेति नान्या युक्तिर्मृग्या। इयमेव युक्तिरुत्तरत्रापि यथायोगमनुसर्त्तव्या ॥ ८५ ॥

**वरिसवरित्थिं पूरिय सम्मत्तमसंखवासियं लहियं। गंता मिच्छत्तमओ जहन्नदेवट्ठिई भोच्चा ॥ ८६ ॥**

(चू०)—'वरिसवरं'-नपुंसगवेदं। णपुंसगं ईसाणे पूरित्तु इत्थिवेयं भोगभूमिगेसु पूरित्तु तओ संमत्तं लद्धूणं पलिओवमस्स असंखेज्जतिभागं जीवित्ता 'गंता मिच्छत्तमओ'-अंते मिच्छत्तं गंतूण जहण्णिगं देवठितिं बंधित्तु कालगतो जहण्णगठितिगेसु देवेसु उप्पण्णो, ततो अन्तोमुहुत्तेण सम्मत्तं पडिवण्णो ॥ ८६ ॥

(मलय०)-'वरिसवर' त्ति। वर्षवरो नपुंसकवेदः, तमीशानदेवलोके प्रभूतकालमापूर्य भूयो भूयो बन्धेन दलिकान्तरसंक्रमणेन च स्वायुःक्षये नत-मृत्वा संख्येयवर्षायुष्केषु मध्ये समागत्य पुनरसंख्येयवर्षायुष्केषु मध्ये समुत्पन्नः। तत्रासंख्येयवर्षाणि यावत् स्त्रीवेदमापूर्य ततोऽसंख्येयवर्षाणि यावत् सम्यक्त्वं लब्ध्वा–आसाद्य तद्धेतुकं च पुरुषवेदं तावन्ति वर्षाणि यावत् बध्नन् तत्र स्त्रीवेदनपुंसकवेदयोर्दलिकं निरन्तर संक्रमयति। ततः पल्योपमासंख्येयभागमात्रं सर्वायुःप्रमाणं जीवित्वा पर्यन्ते च मिथ्यात्वमासाद्य ततो जघन्यस्थितिषु दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये समुत्पन्नः। तत्र समुत्पन्नः सन् अन्तर्मुहूर्तेन कालेन सम्यक्त्वं प्रतिपद्यते ॥८६॥

(उ०)-वर्षवरो—नपुंसकवेदस्तमीशानदेवलोके भूयो भूयो बन्धेन दलिकान्तरसंक्रमणेन च प्रभूतकालमापूर्य स्वायुःक्षये ततश्च्युत्वा सङ्ख्येयवर्षायुष्केषु समुत्पद्य पुनरसङ्ख्येयवर्षायुष्केषु गत्वा तत्रासङ्ख्येयानि वर्षाणि यावत्स्त्रीवेदमापूर्य ततोऽसङ्ख्येयानि वर्षाणि यावत्सम्यक्त्वं लब्ध्वा-आसाद्य तद्धेतुकं च पुरुषवेदं तावन्ति वर्षाणि बध्नंस्तत्र स्त्रीवेदनपुंसकवेदयोर्दलिकं निरन्तरं संक्रमयति। ततः पल्योपमासङ्ख्येयभागमात्रं सर्वायुःकालं जीवित्वा पर्यन्ते च मिथ्यात्वं गत्वा ततो जघन्यस्थितिषु दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये समुत्पद्यते। तत्र च समुत्पन्नः सन्नन्तर्मुहूर्त्तेन कालेन सम्यक्त्वं प्रतिपद्यते ॥ ८६ ॥

**आगंतु लहुं पुरिसं संछुभमाणस्स पुरिसवेयस्स। तस्सेव सगे कोहस्स माणमायाणमवि कसिणो ॥८७॥**

(चू०)—'आगंतु'त्ति। ततो चुतो 'लहुं' ति मासपुहुत्तट्ठवासिगो 'पुरिसं संछुभमाणस्स'त्ति—खवणाए उवट्ठियस्स पुरिसवेदं चरिमसंछोभणाए संछुभमाणस्स पुरिसवेदस्स उक्कोस्सगो पदेससंकमो संसारे उवचियस्स दलियस्स गुणसंकमेण संचियस्स चरिमसंछोभे होइ। दोहिं आवलियाहिं बन्धवोच्छेदो होहिति त्ति जं तंमि काले दलितं बद्धं तण्णं [होति संसारोवचियं] मोत्तुं सेसस्स उक्कोसो पदेससंकमो भवति। 'तस्सेव सगे कोहस्स'—तस्सेव पुरिसवेदउक्कोससंकमसामिगस्सेवसगे—कोहस्स—अप्पप्पणो चरिमसंछोभे, कोहस्स—कोह संजलणाए। 'माणमायाणमवि कसिणो'—तस्सेव खवगस्स माणसंजलणाए अप्पप्पणो चरिमसंच्छोभे, एवं मायाए वि कसिणो-सव्वसंकमो अप्पप्पणो जहा पुरिसवेदस्स ॥ ८७ ॥

(मलय०)-'आगतु'त्ति—ततो देवभवाच्च्युत्वा मनुष्येषु मध्ये समुत्पन्नः। ततो माससप्तकाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु लघु—शीघ्रं

क्षपणायोद्यतते। केवलं बन्धव्यवच्छेदादर्वाक् आवलिकाद्विकेन कालेन यद्बद्धं पुरुषवेददलिकं तदतीव स्तोकमिति कृत्वा तत्परित्यज्य शेषस्य चरमसंछोभे उत्कृष्टः प्रदेशसंक्रमो वेदितव्यः। तथा तस्यैव–पुरुषवेदोत्कृष्टप्रदेशसंक्रमस्वामिनः संज्वलनक्रोधस्य संसार परिभ्रमता उपचितस्य–क्षपणकाले प्रकृत्यन्तरदलिकानां गुणसंक्रमेण प्रचुरीकृतस्य स्वके–आत्मीये चरमसंछोभे उत्कृष्टः प्रदेशसंक्रमो भवति। अत्रापि बन्धव्यवच्छेदादर्वाक् आवलिकाद्विकेन कालेन यद्बद्धं तन्मुक्त्वा शेषस्य चरमसंछोभे उत्कृष्टः प्रदेशसंक्रमो द्रष्टव्यः। एवं मानमाययोरपि वाच्यम् ॥८७॥

(उ०)–नां देवस्थितिं भुक्त्वा ततो देवभवाच्च्युत्वा मनुष्येष्वागत्य माससप्तकाभ्यधिके वर्षाष्टकेऽतिक्रान्ते लघु–शीघ्रं क्षपणायोद्यतते, तस्य पुरुषवेदं चरमसंछोभे संछुभतस्तस्योत्कृष्टप्रदेशसंक्रमो भवति, केवलमेष बन्धव्यवच्छेदादर्वागावलिकाद्विकेन कालेन यद्बद्धं पुरुषवेददलिकं तदतीव स्तोकमिति कृत्वा तत्परित्यज्य शेषस्य द्रष्टव्यः। तथा तस्यैव–पुरुषवेदोत्कृष्टप्रदेशसंक्रमस्वामिनः संज्वलनक्रोधस्य संसारपरिभ्रमणेनोपचितस्य–क्षपणकाले प्रकृत्यन्तरदलिकानां गुणसंक्रमेण प्रचुरीकृतस्य स्वके–आत्मीये चरमसंछोभे उत्कृष्टः प्रदेशसंक्रमो भवति। अत्रापि बन्धव्यवच्छेदादर्वागावलिकाद्विकमानेन कालेन यद्बद्धं तन्मुक्त्वा शेषस्य चरमसंछोभे उत्कृष्टः प्रदेशसंक्रमो द्रष्टव्यः। एवं मानमाययोरपि वाच्यम् ॥ ८७ ॥

चउरुवसमित्तु खिप्पं लोभजसाणं ससंकमस्संते। सुभधुववंधिगनामा णावलिगं गंतु बंधंता ॥ ८८ ॥

(चू०)—'चतुरुवसमित्तु'। चत्तारिवारे कसाए उवसामित्तु 'खिप्पं' ति–लहुमेव खवगसेढिं पडिवण्णस्स तस्सेव गुणितकंमंसिगस्स लोभजसाणं उक्कोसो पदेसंकमो लब्भति। कहं? भण्णइ–उवसमसेढिं पडिवण्णस्स

गुणसंकमेण वे वि पूरिज्जंति त्ति अप्पप्पणो संकमस्संते–लोभसंजलणाए अंतरकरणस्स चरिमसमए परतो संकमो णत्थि त्ति किचा उक्कोसो पदेससंकमो भवति, जसकीत्तिए अपुव्वकरणंमि तीसाए बंधवोच्छेयकालसमयंमि परतो संकमो णत्थि त्ति काउं उक्कोसो पदेससंकमो भवति। 'सुभधुवबन्धिगनामाणं' जे सुभा धुवबन्धी तेसिं सुभधुवबन्धीणं। के ते? भण्णइ–तेजयिगसत्तगसुभवण्णएक्कारसगअगुरुलहुगणिमेणमिति एतासिं वीसाए पगतीणं चतुरूवसमादिपुव्वप्पउएणेव 'आवलियं गन्तू बन्धंताउ' त्ति–बंधच्छेदातो आवलियं गंतूणं जसकीत्तिए संकमंति। किं कारणं? संकमेण लद्धं आवलियाए गयाए संकमयति ॥८८॥

(मलय०)–'चउर' त्ति–अनेकभवभ्रमणेन चतुरो वारान् यावन्मोहनीयमुपशमय्य चतुर्थोपशमनानन्तरं शीघ्रमेव क्षपकश्रेणि प्रतिपन्नस्य तस्यैव गुणितकर्मांशस्य स्वसंक्रमस्यान्ते–चरमसंच्छोभे इत्यर्थः, संज्वलनलोभयशःकीर्त्योरुत्कृष्टः प्रदेशसंक्रमो भवति। इहोपशमश्रेणिं प्रतिपन्नेन सता प्रकृत्यन्तरदलिकानां प्रभूतानां गुणसंक्रमेण तत्र प्रक्षेपात् द्वे अपि संज्वलनलोभयशःकीर्तिप्रकृती निरन्तरमापूर्येते तत उपशमश्रेणिग्रहणम्। आसंसारं च परिभ्रमता जन्तुना मोहनीयस्य चतुर एव वारान् यावदुपशमः क्रियते, न पञ्चममपि वारम्, ततश्चतुरुपशमय्येत्युक्तम्। तथा संज्वलनलोभस्य चरमसंच्छोभोऽन्तरकरणचरमसमये द्रष्टव्यः, न परतः, परतस्तस्य संक्रमाभावात्, "अंतरकरणम्मि कए चरित्तमोहेऽणुपुव्विसंकमणं" इति वचनात्। यशःकीर्तिरपूर्वकरणगुणस्थानके त्रिंशत्प्रकृतिबन्धव्यवच्छेदसमयेऽवगन्तव्या, परतस्तस्याः संक्रमस्याभावात्। 'सुभे' इत्यादि। याः शुभध्रुवबन्धिन्यो नामप्रकृतयः–तैजससप्तकशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धोष्णागुरुलघुनिर्माणलक्षणा विंशतिसंख्याः तासां चतुष्कृत्वो मोहनीयोपशमानन्तरं बन्धा-

न्तान्–बन्धव्यवच्छेदादूर्ध्वमावलिकां गन्तुमावलिकायाः परतो यशःकीर्तौ प्रक्षिप्यमाणानामुत्कृष्टः प्रदेशसंक्रमो लभ्यते। इह गुणसंक्रमेण संक्रान्तं प्रकृत्यन्तरदलिकमावलिकायामतीतायां सत्यामन्यत्र संक्रमणयोग्यं भवति, नान्यथेत्यत उक्तम्–'आवलियं गंतु बंधंता' इति ॥८८॥

(उ०)–अनेकभवभ्रमणेन चतुरो वारान् मोहनीयमुपशमय्य चतुर्थवारोपशमनानन्तरं शीघ्रमेव क्षपकश्रेणि प्रतिपन्नस्य गुणितकर्मांशस्य स्वसंक्रमस्यान्ते–चरमसंछोभ इत्यर्थः, संज्वलनलोभयशःकीर्त्योरुत्कृष्टप्रदेशसंक्रमो भवति। उपशमश्रेणिप्रतिपन्नेन प्रकृत्यन्तरदलिकाना प्रभूतानां गुणसंक्रमेण प्रक्षेपात्संज्वलनलोभयशःकीर्त्योर्निरन्तरमापूरणं भवतीति तत्प्रतिपत्तये चतुरुपशमश्रेणिप्रतिपत्तिग्रहणम्। आसंसार परिभ्रमतश्च जन्तोरुत्कर्षतोऽपि चतुर्वारमेव मोहोपशमः स्यादिति नाधिकग्रहणम्। तथा संज्वलनलोभस्य चरमसंछोभोऽन्तरकरणपूर्वसमये द्रष्टव्यो न परतः, परतस्तत्संक्रमासंभवात्, अन्तरकरणे कृते चारित्रमोहनीयप्रकृतीनामानुपूर्व्यैव संक्रमोपदेशात्। यशःकीर्तेरपूर्वकरणगुणस्थानके त्रिंशत्प्रकृतिबन्धव्यवच्छेदसमये ज्ञातव्यः, परतस्तस्याः पतद्ग्रहाभावेन संक्रमाभावात्। शुभध्रुवबन्धिनामप्रकृतीना–तैजसकार्मणशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धोष्णागुरुलघुनिर्माणलक्षणानां विंशतिसंख्यानां चतुष्कृत्वो मोहनीयोपशमानन्तरं बन्धान्ताद्–बन्धव्यवच्छेदादूर्ध्वमावलिकां गत्वा आवलिकायाः परतो यशःकीर्तौ प्रक्षिप्यमाणानामुत्कृष्टः प्रदेशसंक्रमो लभ्यते। गुणसंक्रमेण संक्रान्तस्य प्रकृत्यन्तरदलिकस्यावलिकायां व्यतीतायामेवान्यत्र संक्रमणयोग्यत्वाद्बन्धान्तादावलिकां गत्वेत्युक्तम्।

**निद्दसमा य थिरसुभा सम्मद्दिट्ठिस्स सुभधुवाओ वि। सुभसंघयणजुयाओ बत्तीससयोदहिचियाओ ॥८९॥**

(चू०)—णिद्दणामसरिसाणि थिरसुभणामाणि। पृथग्ग्रहणं किमर्थ ? अधुवबन्धीति। 'सम्मद्दिट्ठिस्स सुभ-

धुवातो वि'–सम्मद्दिट्ठिस्स जे सुभधुवा, के ते? भण्णइ–पंचिंदियजातिसमचउरंससंठाणपराघायउस्सास पसत्थविहायगतितसबादरपज्जत्तगपत्तेयसुभगसुस्सरादेज्जभिति, एते बारस सम्मदिट्ठिस्स सुभधुवा। 'सुभ संघयणजुतातो'–वज्जरिसभसंजुत्ता ता, देवलोगे वट्टमाणो वज्जरिसभमेव बंधति त्ति। 'बत्तीससयोदहिचितातो' छावट्ठिसागरोपमसम्मत्तकालो अंतोमुहुत्तं सम्माभिच्छत्तं गतो पुणो सम्मत्तं पडिवण्णो छावट्ठी सागरोवमाई अणुपालेइ तेण बत्तीससतोदहि वि तातो पिण्डितातो बन्धवोच्छेदातो आवलियं गंतूणं जसकित्तिए संकामंतस्स उक्कोसो पदेससंकमो भवति। कहं? भण्णइ–गुणसंकमेण लब्भति त्ति। वज्जरिसहस्स देवलोगातो चुतस्स आवलियं गंतूणं जसकित्तीए देवपातोग्गं बन्धमाणस्स उक्कोसो पदेससंकमो भवति॥ ८९॥

(मलय०)–'निद्धसम'त्ति–स्निग्धलक्षणस्पर्शसमे स्थिरशुभनामनी द्रष्टव्ये। इदमुक्तं भवति–यथाऽनन्तरं शुभध्रुवबन्धिनामप्रकृतीनामन्तर्गतस्य स्निग्धस्पर्शस्योत्कृष्टप्रदेशसंक्रमभावना कृता तथैतयोरपि स्थिरशुभनाम्नोरवगन्तव्या। एते च स्थिरशुभनामनी अध्रुवबन्धित्वात् पृथगुपात्ते। 'सम्मद्दिट्ठिस्स' इत्यादि। सम्यग्दृष्टेर्याः शुभध्रुवबन्धिन्यः–पञ्चेन्द्रियजातिसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकसुभगसुस्वरादेयलक्षणा द्वादश प्रकृतयः शुभसंहननयुताः–वज्रर्षभनाराचसंहननसहिताः, वज्रर्षभनाराचं हि देवभवे नारकभवे वा वर्तमानाः सम्यग्दृष्टयो बध्नन्ति, न मनुजतिर्यग्भवे, तत्र वर्तमानानां सम्यग्दृष्टीनां देवगतिप्रायोग्यबन्धसंभवेन संहननबन्धासंभवात्, ततो नैतत्सम्यग्दृष्टेः शुभध्रुवबन्धीति पृथगुपात्तम्। तथा द्वात्रिंशदधिकसागरोपमशतचिताः, तथाहि–षट्षष्टिसागरोपमाणि यावत्सम्यक्त्वमनुपालयन् एता बध्नाति। ततोऽन्तर्मुहूर्तं कालं यावत् सम्यग्मिथ्यात्वमनुभूय पुनरपि सम्यक्त्व प्र-

तिपद्यते । ततो भूयोऽपि सम्यक्त्वमनुभवन् षट्षष्टिसागरोपमाणि यावदेताः प्रकृतीर्बध्नातीति । तदेवं द्वात्रिंशदभ्यधिकं सागरोपमशतं यावत् सम्यग्दृष्टिर्ध्रुवा आपूर्य, वज्रर्षभनाराचसंहननं तु मनुष्यभवहीनं यथासंभवमुत्कृष्टं कालमापूर्य, ततः सम्यग्दृष्टेर्भूत्वा अपूर्वकरणगुणस्थानके बन्धव्यवच्छेदानन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ संक्रमयतस्तासामुत्कृष्टः प्रदेशसंक्रमः, तदानीं प्रकृत्यन्तरदलिकानामप्यतिप्रभूतानां गुणसंक्रमेण लब्धानां संक्रमावलिकातिक्रान्तत्वेन संक्रमसंभवात्। वज्रर्षभनाराचसंहननस्य तु देवभवाच्च्युतः सन् सम्यग्दृष्टिर्देवगतिप्रायोग्यं बध्नन् आवलिकामात्रं कालमतिक्रम्योत्कृष्टं प्रदेशसंक्रमं करोति ॥८९॥

(३०)-स्निग्धलक्षणस्पर्शसमे स्थिरशुभनामनी द्रष्टव्ये, यथाऽनन्तरं शुभध्रुवबन्धिनामप्रकृत्यन्तर्गतस्य स्निग्धस्पर्शस्योत्कृष्टप्रदेशसंक्रमभावना कृता तथैवैतयोरपि कर्तव्येत्यर्थः। अध्रुवबन्धित्वादनयोः पृथगुपादानम्। सम्यग्दृष्टेः शुभध्रुवबन्धिन्योऽपि पञ्चेन्द्रियजात्याद्यसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसचतुष्कसुभगत्रिकलक्षणा द्वादश शुभसंहननयुता वज्रर्षभनाराचसंहननसहिताः, वज्रर्षभनाराच हि न सम्यग्दृष्टेर्ध्रुवबन्धि, मनुजतिर्यग्भवे वर्तमानस्य सम्यग्दृष्टेर्देवगतिप्रायोग्यस्यैव बन्धसंभवेन संहननबन्धानुपपत्तेरिति पृथगुक्तम्। द्वात्रिंशदधिकसागरोपमशतचिता उत्कृष्टप्रदेशसंक्रमयोग्याः। तथाहि—षट्षष्टिसागरोपमाणि यावत्सम्यक्त्वमनुपालयन्नेता बध्नाति, ततोऽन्तर्मुहूर्तं कालं यावत्सम्यग्मिथ्यात्वमनुभूय भूयोऽपि सम्यक्त्वं प्रतिपद्य तदनुभवन् षट्षष्टिसागरोपमाणि यावदेताः प्रकृतीर्बध्नाति। तदेवं द्वात्रिंशं शतं सागरोपमाणां सम्यग्दृष्टिर्ध्रुवा आपूर्य, वज्रर्षभनाराचसंहनन तु मनुष्यभवहीनं यथासंभवमुत्कृष्टं कालमापूर्यापूर्वकरणगुणस्थाने बन्धव्यवच्छेदानन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ ध्रुवाः संक्रमयंस्तासामुत्कृष्टप्रदेशसंक्रमं करोति, गुणसंक्रमेण लब्धस्य प्रकृत्यन्तरदलिकराशेरप्यतिप्रभूतस्य संक्रमावलिकातीतस्य तदानीं संक्रमसंभवात्। वज्रर्षभनाराचसंहननस्य तु

सुरभवाच्च्युतः सन् सम्यग्दृष्टिः सुरगतिप्रायोग्यं बध्नन्नावलिकामात्रमतिक्रम्योत्कृष्टं प्रदेशसंक्रमं करोति ॥ ८९ ॥

**पूरित्तु पुव्वकोडीपुहुत्त संछोभगस्स निरयदुगं। देवगईनवगस्स य सगबंधंतालिगं गंतुं ॥ ९० ॥**

(चू०)—'पूरित्तु'–भरिय, संकिलेसेण पुव्वकोडिपुहत्तं पूरेत्तु 'पुव्वकोडीपुहुत्तं'–सत्तपुव्वकोडीतो, 'संछोभगस्स'–खवणाए चरिमसंछोभणं करेन्तस्स, 'णिरयदुगं'ति–णिरयगतिनिरयाणुपुव्वीणं उक्कोसो पदेससंकमो भवति। [कहं ? भण्णइ–कम्मभूमिं मोत्तूणं अण्णहिं एतेहिं बन्धो णत्थि। खवेंतस्स] 'देवगतिणवगस्स च' देवगति देवाणुपुव्वी वेउव्वियसत्तगं एयं देवगतिणवगं भण्णति, तं देवगतिणवगं पुव्वकोडिपुहत्तं पूरेत्तु सेढीपडिवण्णस्स 'सगबंधंतालियं गंतुं'–अप्पप्पणो बंधवोच्छेदातो आवलितं गंतूणं जसकित्तिम्मि च्छुत्तस्स उक्कोसपदेससंकमो भवति ॥ ९० ॥

(मलय०)–'पूरित्तु' त्ति–नरकद्विकम्–नरकगतिनरकानुपूर्वीलक्षणं पूर्वकोटीपृथक्त्वं यावत्पूरयित्वा, सप्तसु पूर्वकोट्यायुष्केषु तिर्यग्भवेषु भूयो भूयो बद्ध्वेत्यर्थः, ततोऽष्टमभवे मनुष्यो भूत्वा क्षपकश्रेणिं प्रतिपन्नोऽन्यत्र तन्नरकद्विकं संक्रमयन् चरमसंछोभे सर्वसंक्रमेण तस्योत्कृष्टं प्रदेशसंक्रमं करोति। तथा देवगतिनवकं देवगतिदेवानुपूर्वीवैक्रियसप्तकलक्षणं यदा पूर्वकोटिपृथक्त्वं यावदापूर्याष्टमभवे क्षपकश्रेणिं प्रतिपन्नः सन् स्वकबन्धान्तात्–स्वबन्धव्यवच्छेदादनन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ प्रक्षिपति तदा तस्योत्कृष्टप्रदेशसंक्रमो भवति। तदानीं हि प्रकृत्यन्तरदलिकानामपि गुणसंक्रमेण लब्धानां संक्रमावलिकातिक्रान्तत्वेन संक्रमः प्राप्यत इति कृत्वा ॥ ९० ॥

(उ०)–नरकद्विकम्–नरकगतिनरकानुपूर्वीलक्षणं पूर्वकोटिपृथक्त्वं यावत्पूरयित्वा, पूर्वकोट्यायुष्कतिर्यग्भवसप्तके भूयो भूयो बन्धेनापूर्येत्यर्थः। ततोऽष्टमे भवे मनुष्यो भूत्वा क्षपकश्रेणिमारुह्यान्यत्र तत्संक्रमयन् चरमसंछोभे सर्वसंक्रमेण तस्योत्कृष्टं प्रदेशसंक्रमं करोति। तथा देवगतिदेवानुपूर्वीवैक्रियसप्तकलक्षणं देवगतिनवकं पूर्वकोटिपृथक्त्वं यावदापूर्याष्टमे भवे क्षपकश्रेणिं प्रतिपन्नः सन् बन्धान्तान्-बन्धव्यवच्छेदानन्तरमावलिकां गत्वा–आवलिकामात्रं कालमतीत्य यदा तद्यशःकीर्त्तौ प्रक्षिप्यते तदा प्रकृत्यन्तरदलिकानामपि गुणसंक्रमोपनीतानां संक्रमावलिकातिक्रान्तत्वेन संक्रम इति तस्योत्कृष्टप्रदेशसंक्रमो भवति ॥ ९० ॥

**सव्वचिरं सम्मत्तं अणुपालिय पूरइत्तु मणुयदुगं। सत्तमखिइनिग्गइए पढमे समए नरदुगस्स ॥९१॥**

(चू०)—'सव्वचिरं' ति। सव्वुक्कस्सं कालं नारगो तित्तीसं सागरोवमाइं अंतोमुहुत्तूणाइं संमत्तं अणुपालिय पूरित्तु मणुयगतिमणुयाणुपुव्वीओ बन्धित्तु तेत्तीससागरोवमा अन्तोमुहुत्तूणा चरिमे अन्तोमुहुत्ते मिच्छत्तं गतो 'सत्तमखिइनिग्गइए' सत्तमपुढवीतो णिग्गयस्स पढमसमये वट्टमाणस्स णरदुगस्स–मणुतगतिमणुताणुपुव्वीणं उक्कोसो पदेससंकमो भवति, अहापवत्तो त्ति किच्चा ॥ ९१ ॥

(मलय०)–'सर्वचिर' ति। सर्वचिर–सर्वोत्कृष्टं कालं–अन्तर्मुहूर्तोनानि त्रयस्त्रिंशत्सागरोपमाणीत्यर्थः, सम्यक्त्वमनुपाल्य नारकः सप्तमपृथिवीगतो वर्तमानः सम्यक्त्वप्रत्ययं तावन्तं कालं मनुजद्विक–मनुजगतिमनुजानुपूर्वीलक्षणमापूर्य बद्ध्वा चरमेऽन्तर्मुहूर्ते मिथ्यात्वं गतः। ततस्तन्निमित्तं तिर्यग्द्विकं तस्य बध्नतो गुणितकर्मांशस्य सप्तमपृथिव्याः सकाशाद्विनिर्गतस्य प्रथमसमये एव मनुजद्विकं यथाप्रवृत्तसंक्रमेण तस्मिन् तिर्यग्द्विके बध्यमाने संक्रमयतस्तस्य मनुजद्विकस्योत्कृष्टः प्रदेशसंक्रमो भवति ॥ ९१ ॥

(उ०)-सर्वचिरं-सर्वोत्कृष्टं कालमन्तर्मुहूर्त्तोनानि त्रयस्त्रिंशत्सागरोपमाणीत्यर्थः, सम्यक्त्वमनुपाल्य नारकः सप्तमपृथिव्यां वर्तमानः सम्यक्त्वप्रत्ययं तावन्तं कालं मनुजद्विकं पूरयित्वा बद्ध्वा चरमेऽन्तर्मुहूर्त्ते मिथ्यात्वं गतस्तन्निमित्तं तिर्यग्द्विकं बध्नन् गुणितकर्मांशः सप्तमपृथिव्या निर्गत्य प्रथमसमय एव मनुजद्विकं यथाप्रवृत्तसंक्रमेण तस्मिँस्तिर्यग्द्विके बध्यमाने संक्रमयति यस्तस्य मनुजद्विकस्योत्कृष्टप्रदेशसंक्रमो भवति ॥९१॥

**थावरतज्जाआयावुज्जोयाओ नपुंसगसमाओ। आहारगतित्थयरं थिरसममुक्कस्ससगकालं ॥ ९२ ॥**

(चू०)—'थावरतज्जाआयावुज्जोयाओ'। तज्जाती-एगिंदियजाती। थावरएगिंदियजातीआयवुज्जोवाओ नपुंसकसमाओ-नपुंसकसदृशाः। जहा णपुंसकवेदस्स विही तहा एतेसिं पि अप्पप्पणो चरिमखंडगे। 'आहारगतित्थगरं थिरसमं' ति-आहारगसत्तगतित्थगरणामाति थिरणामसरिसा। तं किं भणियं होति? भण्णइ-बन्धवोच्छेदातो आवलियं गंतूण उक्कोसो पदेससंकमो त्ति भणितं होति। 'उक्कससगकालं' ति-उक्कोसं अप्पप्पणो कालं पुरेत्तु सेढिं पडिवण्णस्स। केत्तियं उक्कोसकालं? भण्णइ-देसूणं पुव्वकोडिं संजमं अणुपालेमाणु जंमि जंमि काले अपमत्तो भवति तंमि तंमि काले आहारसत्तगं बंधति अप्पमत्तद्धा य छउमत्थस्स अन्तोमुहुत्तातो परतो णत्थि, एस आहारसत्तगस्स उक्कोसो सगबन्धकालो। तित्थकरणामाए तेत्तीससागरोवमाइं दोहिं पुव्वकोडीहिं देसूणाहिं अब्भतिताइं उक्कोसगो सगबन्धकालो॥ ९२॥

(मलय०)-'थावर' त्ति—स्थावरनाम, तथा तज्जातिः स्थावरजातिः, एकेन्द्रियजातिरित्यर्थः, तथा आतपनाम, उद्योतनाम, एता-

भतस्रः प्रकृतयो नपुंसकसमाः—नपुंसकवेदस्येव आसामपि प्रकृतीनामुत्कृष्टः प्रदेशसंक्रमो भावनीय इत्यर्थः। तथा आहारकसप्तकं तीर्थकरनाम च स्थिरसमं वक्तव्यम्। केवलं तदुत्कृष्टस्वकबन्धकालं यावदापूरणीयमभिधातव्यम्। इयमत्र भावना—आहारकसप्तकं तीर्थकरनाम चोत्कृष्ट स्वबन्धकालं यावदापूर्य; तत्राहारकसप्तकस्य स्वबन्धकाल उत्कृष्टो देशोनां पूर्वकोटीं यावत्संयममनुपालयतो यावानप्रमत्तताकालस्तावान् सर्वो वेदितव्यः। तीर्थकरनाम्नश्च स्वबन्धकाल उत्कृष्टो देशोनपूर्वकोटीद्वयाभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि। तत एतावन्तं कालं यावदापूर्य क्षपकश्रेणिं प्रतिपन्नो यदा बन्धव्यवच्छेदादनन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ संक्रमयति तदा तयोरुत्कृष्टः प्रदेशसंक्रमः ॥ ९२ ॥

(उ०)—स्थावरनाम, तज्जातिस्तस्य स्थावरस्य जातिरेकेन्द्रियजातिरित्यर्थः, आतपनाम, उद्योतनाम, एताश्चतस्रः प्रकृतयो नपुंसकसमास्तदुत्कृष्टप्रदेशसंक्रमभावनासमभावना इत्यर्थः। तथाऽऽहारकसप्तकं तीर्थकरनाम च स्थिरसमं वक्तव्यम्, केवलं तदुत्कृष्टस्वकबन्धकालं यावदापूर्यमाणं वक्तव्यम्। तत्राहारकसप्तकस्य स्वबन्धकाल उत्कृष्टो देशोनां पूर्वकोटिं यावत्संयममनुपालयतो यावानप्रमत्तताकालस्तावान् सर्वोऽप्यवसेयः। तीर्थकरनाम्नश्च देशोनपूर्वकोटिद्वयाधिकानि त्रयस्त्रिंशत्सागरोपमाणि, तत एतावन्तं कालं तयोरापूरणं कृत्वा क्षपकश्रेणिं प्रतिपद्य बन्धव्यवच्छेदानन्तरमावलिकामात्रमतिक्रम्य यदा यशःकीर्त्तौ तयोः संक्रमं करोति तदा तदुत्कृष्टप्रदेशसंक्रमलाभः।

**चउरुवसमित्तु मोहं मिच्छत्तगयस्स नीयबंधंते। उच्चागोउक्कोसो तत्तो लहु सिज्झओ होइ ॥ ९३ ॥**

(चू०)—चत्तारि वारे चरित्तमोहउवसामेत्तस्स उच्चागोतं चेव बंधतस्स पुणो पुणो णीयागोतं–गुणसंकमणेण (संकमंतस्स तओ तइय भवे मिच्छत्तं गयस्स णीयागो)तं बंधति उच्चागोतं (संकमति), एवं एतेण विहिणा

णीउचाति बंधमाणस्स 'नीयबंधंते'–णीयागोत्तस्स अंतिमे बन्धे वट्टमाणस्स तत्थ वि अंतिमसमए वट्टमाणस्स उच्चागोयस्स उक्कोसपदेससंकमो। 'ततो' त्ति णीयागोत्तस्स बंधवोच्छेदे जाए 'लहु सिज्झतो' त्ति लहुं चेव सिद्धिं जातु कामस्स ॥९३॥

(मलय०)—'चउ' त्ति–इह मोहोपशमं कुर्वन् उच्चैर्गोत्रमेव बध्नाति, न नीचैर्गोत्रम्, नीचैर्गोत्रसत्कानि च दलिकानि गुणसंक्रमेणोच्चैर्गोत्रे संक्रमयति। ततश्चतुष्कृत्वो मोहोपशमग्रहणमवश्यं कर्तव्यम्। तत्र चतुरो वारान् मोहनीयमुपशमयन् उच्चैर्गोत्रं च बध्नन् तत्र नीचैर्गोत्रं गुणसंक्रमेण संक्रमयति। चतुष्कृत्वश्च मोहोपशमः किल भवद्वयेन भवति। ततस्तृतीये भवे मिथ्यात्वं गतः सन् नीचैर्गोत्रं बध्नाति, तच्च बध्नन् तत्रोच्चैर्गोत्रं संक्रमयति। ततः पुनरपि सम्यक्त्वमासाद्योच्चैर्गोत्रं बध्नन् तत्र नीचैर्गोत्रं संक्रमयति। एवं भूयो भूय उच्चैर्गोत्रं नीचैर्गोत्रं च बध्नतो नीचैर्गोत्रबन्धव्यवच्छेदानन्तरं शीघ्रमेव सिद्धिं गन्तुकामस्य नीचैर्गोत्रबन्धचरमसमये उच्चैर्गोत्रस्य गुणसंक्रमेण बन्धेन चोपचितीकृतस्योत्कृष्टः प्रदेशसंक्रमो भवति ॥ ९३ ॥

(उ०)–यश्चतुष्कृत्वो मोहमुपशमय्यस्तत्काले उच्चैर्गोत्रमेव बध्नन्नुच्चैर्गोत्रे नीचैर्गोत्रसत्कानि दलिकानि गुणसंक्रमेण संक्रमयति। चतुष्कृत्वश्च मोहोपशमो भवद्वयेन भवति, "मोहोपशम एकस्मिन् भवे द्विः स्यात्" इतिवचनात्। ततस्तृतीते भवे मिथ्यात्वं गतः सन्नीचैर्गोत्रं बध्नाति, तच्च बध्नँस्तत्रोच्चैर्गोत्रं संक्रमयति। ततो भूयः सम्यक्त्वमासाद्योच्चैर्गोत्रं बध्नँस्तत्र नीचैर्गोत्रं संक्रमयति। एवं तस्य मुहुर्मुहुरुच्चैर्गोत्रं नीचैर्गोत्रं च बध्नतो नीचैर्गोत्रबन्धव्यवच्छेदानन्तरं लघु–शीघ्रमेव 'सिज्झओ त्ति'–सेत्स्यतो नीचैर्गोत्रबन्धान्त्यसमये उच्चैर्गोत्रस्य गुणसंक्रमबन्धाभ्यामुपचितस्योत्कृष्टः प्रदेशसंक्रमो भवति ॥ ९३ ॥

उत्कृष्टप्रदेशसंक्रमस्वामिनः।

| | |
|---|---|
| ज्ञाना० ५-दर्श० ४-विघ्न० ५-औदा० ७ (२१) | सप्तम्या उद्वृत्य प्राप्तपर्या० पञ्चे० तिर्यग्भवो गुणितकर्मांश· प्रथमावलिकान्त्यसमये (नारकभवान्त्यसमयबद्धमप्यत्र संक्रामतीति) |
| निद्रा २-असात-अनाद्यसंस्थानसंहननानि १०-पत्वर्णादि ९-उपघा०-कुखग०-अपर्या०-अस्थिरादि-६-नी० (३०) | दशमान्ते गुणितक्षपकाः |
| मध्यकषाय० ८-स्त्यान० ३-तिर्य० २-विकल० ३-सू०-साधा० नाक-६ (२४) | नवमे गुणितक्षपकाः स्वस्वचरमप्रक्षेपे |
| सातस्य | नरकादागत्य प्रथमसमयादुत्कृष्टबन्धकालेन सातं बद्ध्वा असातं बध्नन् असातस्य बन्धावलिकाऽन्त्यसमये |
| मिथ्यात्वमिश्रयो· | क्षपक· स्वचरमप्रक्षेपे (सर्वसंक्रमेण) |
| सम्यक्त्वस्य | सप्तम्यामन्तर्मु० शेपे औप० सम्य० लब्ध्वा दीर्घगुणसंक्रमेण सम्यक्त्वमापूर्य पुनर्मिथ्यात्वं प्राप्तानां प्रथमसमये |
| अनंतानुबन्धिचतुर्णाम् | सप्तम्यामन्तर्मु० शेपे चरमावश्यकानि कृत्वाऽनंतरभवे सम्यक्त्वं प्राप्य अनता० नाम विसंयोजकाः चरमप्रक्षेपे (सर्वसंक्रमेण) |

| | |
|---|---|
| स्था० आत० उद्यो० एके० नपुंसकानाम् | गुणितेशानः एके० प्रायो० नपुंसकं भूयो भूयो बद्ध्वाऽनंतरभवे जातः स्त्री पुरुषो वा शीघ्रक्षपणोद्यतः चरमप्रक्षेपे ( सर्वसं० ) |
| स्त्रीवेदस्य | पुनः पुनर्युगलिकभवेन स्त्रीवेदं बद्ध्वाऽऽपूर्य च पल्यो० सं० भागे व्यतिक्रान्ते अकालेन मृत्वा जघ०स्थितिकदेवो भूत्वा तत्रापि तमापूर्याऽन्यतरवेदेन मनुष्यत्वं लब्ध्वा शीघ्रक्षपणायोद्यतस्य चरमप्रक्षेपे (सर्वसंक्रमेण) |
| पुरुषवेदस्य | ईशाने नपुंसकमापूर्य संख्येयायुषि गत्वा असंख्येयायुषि गत्वा च स्त्रीमापूर्यासंख्येयवर्षाणि प्राप्तसम्यक्त्वेन पुंवेदमापूर्य पुनर्मिथ्यात्वं प्राप्य जघ० स्थितिदेवत्वेनोत्पद्यान्तर्मुहूर्तेन सम्यक्त्वं प्राप्य नृगतावागत्य शीघ्रक्षपणायोद्यतस्य ( च० प्र० सर्वसं० ) |
| संज्वलनक्रोधमानमायानाम् | क्षपणकाले पुंवेदोत्कृ० प्र० सं० स्वामिनाम् |
| सं० लोभयशसोः | चतुर्मोहोपशमं कृत्वा शीघ्रक्षपकाणां (च० प्र० स० सं०) |
| तै० ७-अगु०-निर्माण-शुभवर्णादि ११ (२०) स्थिर-शुभयोश्च | चतुर्मोहोपशमं कृत्वा वन्धविच्छेदादावलिकापरतः यशसि प्रक्षेपकानां |
| पञ्चे०-समच० परा०-उच्छ्वास-सुखग०-त्रसादि ४-सुभगादि ३ (१२) | १३२ सागराणि यावद् सम्य० कालेनापूर्य ८ मे वन्धविच्छेदानन्तरमावलिकापरतः यशसि प्रक्षेपकः |

| | |
|---|---|
| वज्रर्षभस्य | मनुष्यभवहीनं १३२ सागरं यावदापूर्य सुरभवाच्च्युतः सम्यग्दृष्टिः सन् देवप्रा० वध्नन्नावलिकापरतो देवप्रायोग्ये प्रक्षेपकः |
| नरकद्विकस्य | सप्तवारानुत्कृष्टायुषाऽऽपूर्याष्टमे भवे मनुष्यत्वं प्राप्य जातक्षपकः (च० प्र० स० सं०) |
| देव २-वै० ७ कयोः | वन्धान्तावलिकापरतः नरकद्विकस्योत्कृ० प्र० संक्रमकविधिवत् |
| मनुष्यद्विकस्य | अन्तर्मु० हीन० ३३ सा० यावत् सम्यक्त्वेन सह सप्तमनारकत्वेनापूर्यान्तिमान्तर्मुहूर्त्त मिथ्यात्व प्राप्तस्तन्निमित्त तिर्यग्द्विकं वध्नन् गुणितकर्मांशः सप्तम्या निर्गत्य प्रथमे समये यथाप्रवृत्तेन तिर्यग्द्विके संक्रमकः |
| आद्य० ७ कस्य | समुदितोत्कृष्टाप्रमत्तकालं यावद् आपूरकाः ( शेषं स्थिरसमं ) |
| जिननाम्न. | स्थिरसमं (परं स किंचिदूनपूर्वकोटीद्वयाधिक ३३ सागरमापूर्य जातक्षपकाणां वन्धान्तादावलिकापरतः यशसि संक्रमकः ) |
| उच्चगोत्रस्य | चतुर्मोहोपशमं कृत्वा पुनः पुनः उच्चैर्नीचैश्च परस्परं संक्रमयन् नीचर्वन्धविच्छेदसमये नीचैर्गोत्रे संक्रमकः |

भणियं उक्कोसपदेससामित्तं इयाणिं जहन्नसामित्तपरिकम्मणानिमित्तं खवियकम्मंसियो भण्णइ—

पल्लासंखियभागोण कम्मठिइमच्छिओ निगोएसु । सुहुमेसुऽभवियजोग्गं जहन्नयं कट्टु निग्गम्म ॥९४॥

जोग्गेसुऽसंखवारे सम्मत्तं लभिय देसविरइं च। अट्ठक्खुत्तो विरइं संजोयणहा तइयवारे ॥ ९५ ॥

चउरुवसामित्तु मोहं लहुं खवंतो भवे खवियकम्मो। पाएण तहिं पगयं पडुच्च काओ वि सविसेसं॥९६॥

(चू०)—जो जीवो पलिओवमस्स असंखिज्जतिभागेण ऊणिगं 'कम्मट्ठितिं' ति–सत्तरि सागरोवमकोडाकोडिप्पमाणं 'अच्छित्तो'–वसितो 'णिगोएसु सुहुमेसु'–अणंतकायसुहुमेसु त्ति जं भणियं भवति। किं कारणं सुहुमणिगोतगहणं? भण्णइ–मन्दजोगित्वान्मन्दसंकिलेसत्वाच्च गुणितकम्मंसिगंमि जो विही वुत्तो तस्स पडिवेक्खो भणितव्वो। 'अभवियजोग्गं जहण्णगं कट्टु णिग्गम्म' ति–अभवियजोग्गं जहण्णगं कम्मपदेससंचयं किच्चा ततो थोवतरा कम्मपदेसा अभवसिद्धिओ जहण्णगं ण करोति त्ति 'णिग्गम्म' ति–ततो सुहुमणिगोयातो णिफिड्डिय 'जोग्गेसु'–सम्मत्तदेसविरतिसंजमजोगेसु 'असंखवारे सम्मत्तं लभित देसविरतिं च'–तंमि पलितोवमअसंखेज्जतिभागे असंखेज्जवारा सम्मत्तं देसविरतिं च लभित। किह भणियं? भण्णइ–ततो सुहुमणिगोदेहिंतो उव्वट्टित्तु बादरपुढविकाइएसु उप्पण्णो अन्तोमुहुत्तेण कालं गतो पुव्वकोडाउगेसु मणुस्सेसु उववण्णो सव्वलक्खणेहिं जोणिजम्मणणिक्खमणेण अट्ठवासिगो संजमपडिवण्णो तत्थ देसूणं पुव्वकोडी संजमं अणुपालित्ता थोवावसेसे जीविये मिच्छत्तं गतो सव्वत्थोवाए मिच्छत्तअसंजमद्धाए मिच्छत्तेण कालगतो समाणो दसवाससहस्सट्ठितिएसु देवेसु उववण्णो। ततो अन्तोमुहुत्तेण समत्तं पडिवण्णो दसवाससहस्साणि जीवित्तु ततो अन्ते

मिच्छत्तेण कालगतो बादरपुढविकाईएसु उववण्णो ततो अंतोमुहुत्तेण उव्वट्टिता मणुस्सेसु उववण्णो पुणो सम्मत्तं वा देसविरतिं वा विरतिं वा पडिवज्जति। एवं जत्थ जत्थ सम्मत्तं पडिवज्जति तत्थ तत्थ बहुप्पदेसातो पगतीतो अप्पप्पदेसातो पगरेति। एयाणिमित्तं सम्मत्तादिपडिवज्जाविज्जइ। देवमणुएसु सम्मत्तादि गेण्हंतो मुत्तंतो य जत्थ तसेसु उववज्जत्ति तत्थ सम्मत्तादी णियमा पडिवज्जति, कयाति देसविरतिं पडिवज्जति, कयाति संजमंपि, कताति अणंताणुबन्धी विसंजोएतित्ति, कताति उवसामगसेढिं पडिवज्जति। 'अट्ठक्खुत्तो विरतिं संजोयणाय तइयवारे'–एएसु असंखेज्जेसु भवग्गहणेसु अट्ठवारे संजमं लब्भति, अट्ठवारे अणंताणुबंधिणो विसंजोएत्ति। 'चतुरुवसमित्तु मोहं'ति–एतेसु भवग्गहणेसु चत्तारि वारा चरित्तमोहं उवसामेउ 'लहुं खवेंतो भवे खवितकम्मो'त्ति 'लहुं खवेंतो'–लहुखवगसेढिं पडिवज्जमाणो 'भवे खवियकम्मो'त्ति–एरिसेण विहिणा आगतो खवियकम्मो वुच्चति। 'पाएण तहिं पगयं'ति–सामण्णेण तंमि जीवे अहिगारो, 'पडुच्च कातो वि सविसेसं'ति–कातो वि पगतीतो अहिकिच्च सविसेसं पि भणामि ॥ ९४–९५–९६ ॥

(मलय०)–तदेवमुक्तमुत्कृष्टप्रदेशसंक्रमस्वामित्वम्। सम्प्रति जघन्यप्रदेशसंक्रमस्वामित्वमभिधानीयम्। तच्च प्रायः क्षपितकर्मांशे प्राप्यत इति तस्यैव स्वरूपमाह—'पल्ल'त्ति। यो जीवः पल्योपमासंख्येयभागन्यूनां कर्मस्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणां यावत् पल्योपमासंख्येयभागहीनं सप्ततिसागरोपमकोटीकोटीप्रमाणं कालं यावदित्यर्थः, सूक्ष्मनिगोदेषु–सूक्ष्मानन्तकायिकेषु मध्ये उषित्वा; सूक्ष्मनिगोदा हि स्वल्पायुषो भवन्ति, ततस्तेषां प्रभूतजन्ममरणभावेन वेदनार्तानां प्रभूतपुद्गलपरिसाट उपजायते, अपि च सूक्ष्मनिगोद-

जीवानां मन्दयोगता मन्दकषायत्वं च भवति, ततोऽभिनवकर्मपुद्गलोपादानमपि तेषां स्तोकतरमेव प्राप्यत इति सूक्ष्मनिगोदग्रहणम् । 'अभवियजोग्गं जहन्नयं कट्टु निग्गम्म'त्ति–अभव्यप्रायोग्यं जघन्यं अभव्यप्रायोग्यजघन्यकल्पं प्रदेशसंचयं कृत्वा ततः सूक्ष्मनिगोदेभ्यो निर्गत्य । 'योग्येषु'–सम्यक्त्वदेशविरतिसर्वविरतियोग्येषु त्रसेषु मध्ये उत्पद्य पल्योपमासंख्येयभागमध्ये संख्यातीतान् वारान् यावत् सम्यक्त्वं स्वल्पकालिकीं देशविरतिं च लब्ध्वा; कथं लब्ध्वेति चेत्, उच्यते–सूक्ष्मनिगोदेभ्यो निर्गत्य बादरपृथ्वीकायेषु मध्ये समुत्पन्नस्ततोऽन्तर्मुहूर्तेन कालेन विनिर्गत्य मनुष्येषु पूर्वकोट्यायुष्केषु मध्ये समुत्पन्नः । तत्रापि शीघ्रमेव माससप्तकानन्तरं योनिविनिर्गमनेन जातः । ततोऽष्टवार्षिकः सन् संयमं प्रतिपन्नः । ततो देशोनां पूर्वकोटीं यावत् संयममनुपाल्य स्तोकावशेषे जीविते सति मिथ्यात्वं प्रतिपन्नस्ततो मिथ्यात्वेनैव कालगतः सन् दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये देवत्वेनोपजातः । ततोऽन्तर्मुहूर्तमात्रे गते सति सम्यक्त्वं प्रतिपद्यते । ततो दशवर्षसहस्राणि जीवित्वा तावन्तं च कालं सम्यक्त्वमनुपाल्य पर्यवसानावसरे मिथ्यात्वेन कालगतः सन् बादरपृथिवीकायिकेषु मध्ये समुत्पन्नः । ततोऽन्तर्मुहूर्तेन ततोऽप्युद्वृत्य मनुष्येषु मध्ये समुत्पद्यते । ततः पुनरपि सम्यक्त्वं वा देशविरतिं वा सर्वविरतिं वा प्रतिपद्यते । एवं देवमनुष्यभवेषु सम्यक्त्वादि गृह्णन् मुञ्चंश्च तावद्वक्तव्यो यावत्पल्योपमासंख्येयभागमध्ये संख्यातीतान् वारान् यावत् सम्यक्त्वलाभः स्वल्पकालिकश्च देशविरतिलाभो भवति। इह यदा यदा सम्यक्त्वादिप्रतिपत्तिस्तदा तदा बहुप्रदेशाः प्रकृतीरल्पप्रदेशाः करोति, ततो बहुशः सम्यक्त्वादिप्रतिपत्तिग्रहणम् । एतेषु च सम्यक्त्वादियोग्येषु भवेषु मध्येऽष्टौ वारान् सर्वविरतिं प्रतिपद्यते, तावत एव वारान्–अष्टौ वारानित्यर्थः, विसंयोजनहा–अनन्तानुबन्धिविघातको भूत्वा तथा चतुरो वारान्मोहनीयमुपशमय्य ततोऽन्यस्मिन् भवे लघु शीघ्रं कर्माणि क्षपयन् क्षपितकर्मांश इत्यभिधीयते; एतेन च

क्षपितकर्मांशेनेह जघन्यप्रदेशसंक्रमस्वामित्वे चिन्त्यमाने प्रायेण बाहुल्येन प्रकृतम्—अधिकारः, काश्चित्पुनः प्रकृतीरधिकृत्य सविशेषं भणिष्यामि ॥ ९४–९५–९६ ॥

(उ०)–तदेवमभिहितमुत्कृष्टप्रदेशसंक्रमस्वामित्वम्, अथ जघन्यप्रदेशसंक्रमस्वामित्वमभिधेयम्। तच्च क्षपितकर्मांशे प्रायो लभ्यत इति तत्स्वरूपं निरूपयति—यो जीवः पल्योपमासङ्ख्येयभागेनोनां कर्मस्थितिं सप्ततिसागरोपमकोटाकोटिप्रमाणां यावत्—पल्योपमासङ्ख्येयभागोनसप्ततिसागरोपमकोटाकोटिप्रमाणां कालं यावदित्यर्थः, सूक्ष्मनिगोदेषु—सूक्ष्मानन्तकायिकेषु मध्ये स्थित्वा; सूक्ष्मनिगोदा हि स्वल्पायुषो भवन्ति, ततस्तेषां निरन्तरप्रभूतजन्ममरणवेदनार्त्तत्वेन प्रभूतपुद्गलपरिशाटः स्यादिति सूक्ष्मनिगोदग्रहणम्। सोऽपि शेषनिगोदजीवानपेक्ष्यात्यल्पकषायोऽत्यल्पयोगश्च गृह्यते, मन्दकषायतायां स्वल्पतरां स्थितिं बध्नाति स्तोकां चोद्वर्तयति, मन्दयोगतायां च नवकर्मपुद्गलोपादानमतिस्तोकं भवतीति कृत्वा। ईदृशः सूक्ष्मनिगोदो भूत्वाऽभव्यप्रायोग्यजघन्यकल्पं प्रदेशसञ्चयं कृत्वा ततः सूक्ष्मनिगोदेभ्यो निर्गत्य। 'योग्येषु'—सम्यक्त्वदेशविरतिसर्वविरतियोग्येषु त्रसेषु मध्ये समुत्पद्य पल्योपमासङ्ख्येयभागमध्येऽसङ्ख्येयवारान् यावत्सम्यक्त्वं तावत एव वारान् किञ्चिदूनान् देशविरतिं च लब्ध्वा; कथं लब्ध्वेति चेत्, उच्यते—सूक्ष्मनिगोदेभ्यो निर्गत्य बादरपृथ्वीकायिकेषु मध्ये समुत्पन्नस्ततोऽन्तर्मुहूर्त्तेन कालेन निर्गत्य मनुष्येषु पूर्वकोट्यायुष्केषु मध्ये समुत्पन्नः, तत्रापि शीघ्रमेव माससप्तकानन्तरं योनिनिर्गमनेन जातोऽष्टवार्षिकः सन् संयमं प्रतिपन्नः, ततो देशोनां पूर्वकोटिं यावत्संयममनुपाल्य स्तोकशेषे जीविते मिथ्यात्वं प्राप्तः। ततो मिथ्यात्वसहित एव मृत्वा दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये देवत्वेनोत्पन्नः। ततोऽन्तर्मुहूर्त्तमात्रे गते सम्यक्त्वं प्राप्नोति। ततो दशवर्षसहस्राणि जीवित्वा तावन्तं च कालं सम्यक्त्वमनुपाल्यान्ते मिथ्यात्वेन कालं गतः सन् बादरपृथ्वीकायिकेषु समुत्पन्नः।

ततोऽन्तर्मुहूर्त्तेन ततोऽप्युद्वृत्य मनुष्येषु समुत्पद्यते। ततः पुनरपि सम्यक्त्वं देशविरतिं वा प्रतिपद्यते। एवं देवमनुष्यभवेषु सम्यक्त्वादि गृह्णन् मुञ्चंश्च तावद्वाच्यो यावत्पल्योपमासङ्ख्येयभागमात्रकालमध्ये सङ्ख्यातीतान्वारान् यावत्सम्यक्त्वलाभः स्वल्पकालिकश्च देशविरतिलाभो भवति। सम्यक्त्वादिप्रतिपत्तिकाले बहुप्रदेशाः प्रकृतीरल्पप्रदेशाः करोतीति बहुशः सम्यक्त्वादिप्रतिपत्तिग्रहणम्। एतेषु च सम्यक्त्वादियोग्येषु भवेष्वष्टकृत्वोऽष्टौ वारान् यावद्विरतिमिति—सर्वविरतिं लभते, 'तइयवारे'त्ति—तावत एव वारानष्टौ वारानित्यर्थः, 'संयोजणहा' उद्वलनेनानन्तानुबन्धिविघातको भूत्वा, उक्तं च—[1]'अणउव्वलणं च अडवारा' इति। तथा चतुरो वारान्मोहनीयमुपशमय्य ततोऽन्यस्मिन् भवे लघु शीघ्रं कर्माणि क्षपयन् क्षपितकर्मांश उच्यते; तेन च क्षपितकर्मांशेनेह जघन्यप्रदेशसङ्क्रमस्वामित्वचिन्तायां प्रायेण बाहुल्येन प्रकृतम्—अधिकारः, काश्चित्पुनः प्रकृतीरधिकृत्य सविशेषं भणिष्यामि ॥ ९४–९५–९६ ॥

**आवरणसत्तगम्मि उ सहोहिणा तं विणोहिजुयलम्मि। निद्दादुगंतराइयहासचउक्के य बंधंते ॥ ९७ ॥**

(चू०)—'आवरणसत्तगंमि उ सहोहिण'त्ति—ओहिणाणओहिदंसणरहिता णाणावरणदंसणावरणा सत्त तेसिं 'सहोहिण'त्ति ओहिणाणेण जो वट्टइ, किं कारणं? भण्णइ—ओहिणाणं वुप्पाएमाणस्स अणेगे पोग्गला परिसडंति। 'तं विणोहिजुगलंमि'-तं विणा—ओहिणाणेण विणा, सेढिं पडिवण्णस्स 'ओहिजुगलंमि'त्ति-ओहिणाणओहिदरिसणंमि जहण्णगं। किं कारणं? ओहिणाणं ओहिदंसणं उप्पाएमाणस्स अतिरुक्खा कम्मपोग्गला होंति त्ति अंते बहुगा परिसडंति तेण जहण्णो ण होति पदेससंकमो। एएसिं च णवण्हं कम्माणं अप्पप्पणो बन्धवोच्छेदसमयंमि जहण्णतो पदेससंकमो भवति। किं कारणं? जाव चरिमसमतो ताव हेट्ठतो थूलट्ठितिगता पोग्गला खि-

1 प० स० संक्रमकरणे गा० १०४

झंनित्ति किया। 'णिद्दादुगंतराइहासचउक्केय'त्ति-निद्दा पयलं च अंतराईतहासरइभयदुगंछाणं अप्पप्पणो
धंधवोच्छेयकालसमयंमि णिद्दादुगहासचउक्काणं परतो गुणसंकमो भवति। 'यंधंते' इति सव्वेसिं सामण्णं ॥९७॥
(मऌय०)-तत्र जघन्यप्रदेशसंक्रमस्वामित्वमाह—'आवरण'त्ति। अवधिना सह वर्तते यो जीवः तस्य अवधिज्ञानावरणरहितं ज्ञाना-
वरणचतुष्टयम्, अवधिदर्शनावरणरहितं दर्शनावरणत्रयम्, एतासां सप्तानां प्रकृतीनामात्मीयात्मीयबन्धव्यवच्छेदसमये यथाप्रवृत्तसंक्रमेण
जघन्यः प्रदेशसंक्रमो भवति। अवधिज्ञानमुत्पादयन् प्रभूतान् कर्मपुद्गलान् परिसाटयति स। तत एतासां स्वस्वबन्धव्यवच्छेदसमये
स्तोका एव पुद्गलाः प्राप्यन्ते। अत्रापि च जघन्यप्रदेशसंक्रमेणाधिकारः। ततोऽवधिना सह यो वर्तत इत्युक्तम्। तथा तमवधिं विनाऽ-
वधिज्ञानावधिदर्शनरहित इत्यर्थः। अवधियुगले-अवधिज्ञानावरणावधिदर्शनावरणरूपे स्वस्वबन्धव्यवच्छेदसमये जघन्यः प्रदेशसंक्रमो
भवति। अवधिज्ञानमवधिदर्शनं चोत्पादयतः प्रबलक्षयोपशमभावतोऽवधिज्ञानावरणावधिदर्शनावरणयोरतीव रूक्षाः कर्मपुद्गला जाय-
न्ते। ततो बन्धव्यवच्छेदकालेऽपि प्रभूताः परिसटन्ति। तथा च सति जघन्यः प्रदेशसंक्रमो न लभ्यत इति तं विनेत्युक्तम्।
'निद्दा'इत्यादि-निद्राद्विकं-निद्राप्रचलारूपम्, अन्तरायपञ्चकम्, हास्यचतुष्कं-हास्यरतिभयजुगुप्सालक्षणं, एतासामेकादशप्रकृतीनां स्वबन्धा-
न्तसमये यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति। निद्राद्विकहास्यचतुष्टययोर्बन्धव्यवच्छेदानन्तरं गुणसंक्रमेण संक्रमो जायते।
ततः प्रभूतं दलिकं लभ्यते। अन्तरायपञ्चकस्य बन्धव्यवच्छेदानन्तरं संक्रम एव न भवति, पतद्ग्रहाभावात्, ततो बन्धान्तसमयग्रहणम् ॥९७॥
(उ०) तत्र जघन्यप्रदेशसंक्रमस्वामित्वं पृथक् पृथक् विवृणोति—सहावधिना वर्तते यो जीवस्तस्येति गम्यम्, आवरणसप्तके
सप्तम्याः षष्ठ्यर्थत्वादवधिज्ञानावरणरहितज्ञानावरणचतुष्टयावधिदर्शनावरणरहितदर्शनावरणत्रयरूपावरणसप्तकस्य स्वस्वबन्धव्यवच्छे-

दसमये यथाप्रवृत्तसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति। अवधिज्ञानमुत्पादयता प्रभूताः कर्मपुद्गलाः परिशाटिताः, तत एतासां स्वस्वबन्धव्यवच्छेदसमये स्तोका एव पुद्गलाः प्राप्यन्ते, जघन्यप्रदेशसङ्क्रमेण चाधिकार इत्यवधिना सह यो वर्तत इत्युक्तम्। तथा तमवधिं विनाऽवधिज्ञानावधिदर्शनरहितस्येत्यर्थः, अवधिज्ञानावरणावधिदर्शनावरणरूपस्य स्वस्वबन्धव्यवच्छेदसमये जघन्यः प्रदेशसङ्क्रमो भवति। अवधिज्ञानमवधिदर्शनं चोत्पादयतः क्षयोपशमप्राबल्यादवधिज्ञानावधिदर्शनावरणकर्मपुद्गला अतीव रूक्षा जायन्ते, ततो बन्धव्यवच्छेदकालेऽपि प्रभूताः परिशटन्ति, तथा च सति जघन्यप्रदेशसङ्क्रमाभाव इति तं विनेत्युक्तम्। 'निद्दा'त्ति–निद्राद्विकस्य निद्राप्रचलारूपस्यान्तरायपञ्चकस्य हास्यचतुष्टयस्य च हास्यरतिभयजुगुप्सालक्षणस्य सर्वसङ्ख्ययैकादशप्रकृतीनां स्वबन्धान्तसमये यथाप्रवृत्तसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति। निद्राद्विकहास्यचतुष्टययोर्बन्धव्यवच्छेदानन्तरं गुणसङ्क्रमेण सङ्क्रमो जायते, ततः प्रभूतं दलिकं लभ्यते, अन्तरायपञ्चकस्य तु बन्धव्यवच्छेदानन्तरं पतद्ग्रहाप्राप्तेः सङ्क्रम एव न संभवति, ततो बन्धान्तसमयग्रहणम् ॥ ९७ ॥

**सायस्सणुवसमित्ता असायबंधाण चरिमबंधंते। खवणाए लोभस्स वि अपुव्वकरणालिगा अते ॥९८॥**

(चू०)—सातस्सणुवसमित्ता असातबन्धाण चरिमबंधंते'त्ति–सातावेयणिज्जस्स अणुवसमित्ता–चरित्तमोहं अणुवसमित्ता, उवसामितस्स सायं बहुपएसा लब्भंति, खवणाए उज्झयंतस्स 'असातबंधाण चरिमबंधंते'–असायबंधगाण चरिमबंधस्स अंतिमे समए। 'खवणाए'त्ति–खवणाए अब्भुट्ठियस्स सातस्स जहण्णतो पदेससंकमो भवति। हेट्ठातो बहुगं खिज्जइत्ति किच्चा। 'लोभस्स वि'–लोभसंजलणाए वि, अणुपसामि-

गस्सेव खवणाए अब्भुट्ठियस्स 'अपुव्वकरणालियाअंते'त्ति। किं कारणं? भण्णइ—अपुव्वकरणद्धाए पढमावलियाए अंतिमे समये लोभसंजलणाए जहण्णो पदेसंकमो भवति। परतो गुणसंकमेण लद्धं बहुगं संकमतित्ति किचा ॥ ९८ ॥

(मलय०)—'सायस्स'त्ति—अनुपशमय्य—मोहनीयोपशममकृत्वा, उपशमश्रेणिमकृत्वेत्यर्थः, असातबन्धानां मध्ये यश्चरमोऽसातबन्धस्तस्यान्तिमे समये वर्तमानस्य क्षपणायोद्यतस्य सातस्य जघन्यः प्रदेशसंक्रमो भवति। परतो हि सातस्य पतद्ग्रहता भवति, न संक्रमः। 'खवणाए' इत्यादि—मोहनीयोपशममकृत्वा क्षपणायोद्यतस्यापूर्वकरणाद्धायाः प्रथमावलिकाया अन्तसमये संज्वलनलोभस्य जघन्यः प्रदेशसंक्रमः। परतो गुणसंक्रमेण लब्धस्यातिप्रभूतस्य दलिकस्य संक्रमावलिकातिक्रान्तत्वेन संक्रमसंभवात् जघन्यप्रदेशसंक्रमाभावः॥९८॥

(उ०)—अनुपशमय्योपशमश्रेण्यां मोहोपशममकृत्वाऽसातबन्धानां मध्ये यश्चरमोऽसातबन्धस्तस्यान्तिमसमये वर्तमानस्य क्षपणायोद्यतस्य सातस्य जघन्यः प्रदेशसङ्क्रमो भवति, परतो हि सातस्य पतद्ग्रहतैव भवति, न सङ्क्रमः। मोहनीयोपशममकृत्वा क्षपणायोद्यतस्यापूर्वकरणाद्धायाः प्रथमावलिकाया अन्तसमये सञ्ज्वलनलोभस्य जघन्यः प्रदेशसङ्क्रमः, परतो गुणसङ्क्रमलब्धस्यातिप्रभूतस्य दलिकस्य सङ्क्रमावलिकातिक्रान्तस्य सङ्क्रमसंभवाज्जघन्यप्रदेशसङ्क्रमाभावः ॥ ९८ ॥

**अयरछावट्ठिदुगं गालिय थीवेयथीणगिद्धितिगे। सगखवणहापवत्तस्संते एमेव मिच्छत्ते ॥ ९९ ॥**

(चू०)—'अयरछावट्ठिदुगं'—सागरोवमाणं वे छावट्ठीतो 'गालिय'—परिसाडित 'थीवेयथीणगिद्धितिगे' इत्थिवेदथीणगिद्धितिगबन्धाभावा 'सगखवणहापवत्तस्संते'—अप्पणो खवणाए अब्भुट्ठियस्स अप्पणो अहापवत्तकर-

णस्स अंतिमे समए वट्टमाणस्स एतेसिं चतुण्हं जहण्णओ पदेससंकमो भवति। परतो गुणसंकमोत्ति। 'एवमेव मिच्छत्ते'ति–एवमेवंति सागरोवमाणं वे छावट्ठीतो गालित अप्पणो खवणाए अहापवत्तकरणस्स अंतिमे समए जहण्णगो पदेससंकमो भवइ। परतो गुणसंकमो भवतित्ति किचा ॥ ९९ ॥

(मलय०)—'अयर'त्ति–सागरोपमाणां द्वे षट्षष्टी यावत्सम्यक्त्वमनुपालयन् स्त्रीवेदस्त्यानर्द्धित्रिकलक्षणाश्चतस्रः प्रकृतीर्गालयित्वा तासां संबन्धि प्रभूतं कर्मदलिकं परिसाट्य किञ्चिच्छेषाणां सतीनां तासां क्षपणाय समभ्युद्यतस्य यथाप्रवृत्तकरणान्तिमसमये विध्यातसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति। परतोऽपूर्वकरणे गुणसंक्रमेण प्रभूतकर्मदलिकसंक्रमसंभवात् जघन्यप्रदेशसंक्रमो न लभ्यत इति यथाप्रवृत्तकरणान्तसमयग्रहणम्। 'एमेव मिच्छत्त' इति–एवमेव पूर्वोक्तेनैव प्रकारेण मिथ्यात्वस्य जघन्यः प्रदेशसंक्रमोऽवगन्तव्यः। तद्यथा–द्वे षट्षष्टी सागरोपमाणां यावत्सम्यक्त्वमनुपाल्य तावन्तं कालं मिथ्यात्वं गालयित्वा किञ्चिच्छेषस्य मिथ्यात्वस्य क्षपणाय समुद्यतस्य स्वकीययथाप्रवृत्तकरणान्तसमये वर्तमानस्य विध्यातसंक्रमेण मिथ्यात्वस्य जघन्यः प्रदेशसंक्रमो भवति, परतो गुणसंक्रमः प्रवर्तते, तेन स न प्राप्यते ॥ ९९ ॥

(उ०)—सागरोपमाणां षट्षष्टिद्विकं यावत्सम्यक्त्वं परिपाल्य स्त्रीवेदस्त्यानर्द्धित्रिकलक्षणाः प्रकृतीर्गालयित्वा सम्यक्त्वप्रभावेण तासां सम्बन्धि प्रभूतं कर्मदलिकं परिशाट्येत्यर्थः। ततः किञ्चिच्छेषाणां तासां क्षपणायोद्यतस्य यथाप्रवृत्तकरणान्तिमसमये विध्यातसङ्क्रमेण जघन्यः प्रदेशसङ्क्रमो भवति। परतोऽपूर्वकरणे गुणसङ्क्रमेण प्रभूतकर्मदलिकसङ्क्रमसंभवाज्जघन्यप्रदेशसंक्रमालाभ इति यथाप्रवृत्तकरणान्तसमयग्रहणम्। एवमेव मिथ्यात्वेऽपि भावनीयम्। मिथ्यात्वस्यापि सागरोपमाणां षट्षष्टिद्विकं यावत्स-

म्यक्त्वानुपालनेन गालयित्वा किञ्चिच्छेषीकृतस्य क्षपणोद्यतस्य स्वकीययथाप्रवृत्तकरणान्तसमये विध्यातसंक्रमेण जघन्यप्रदेशसंक्रमः। पतन्तु गुणसंक्रमप्राप्तः स न प्राप्यत इत्येवोपयुज्य वाच्यमित्यर्थः ॥ ९९ ॥

**हस्सगुणसंकमद्धाइ पूरयित्ता समीससम्मत्तं । चिरसंमत्ता मिच्छत्तगयस्सुव्वलणथोगे सिं ॥१००॥**

(चू०)—सम्मत्तं उप्पाएत्ता हस्सेण गुणसंकमकालेण संमत्तसम्माभिच्छत्ते पूरेत्तु 'चिरसम्मत्ता'—सागरोवमाणं बे छावट्ठीओ सम्मत्तं अणुपालित्तु 'भिच्छत्तगयस्स'—भिच्छत्तं पडिवण्णस्स पलितोवमस्स असंखेज्जतिभागेण सम्मत्तसम्माभिच्छत्ते उव्वलमाणस्स 'उव्वलणथोगे सिं'ति उव्वलणसंकमस्स जं थोगं, किं तं? भण्णइ—जं दुचरिमखंडगस्स चरिमसमए सम्मत्तसम्माभिच्छत्ताणं दलितं भिच्छत्ते संकामेति सो संमत्तसम्माभिच्छत्ताणं जहण्णगो पदेससंकमो उव्वलणसंकमेणं ॥ १०० ॥

(मलय०)—'हस्स'त्ति—सम्यक्त्वमुत्पाद्य ह्रस्वया गुणसंक्रमाद्धया—स्तोककालेन गुणसंक्रमेणेत्यर्थः, समिश्रं सम्यक्त्वं—सम्यक्त्वसम्यग्मिथ्यात्वे इत्यर्थः, मिथ्यात्वदलेन पूरयित्वा—आपूर्य चिरेण—प्रभूतेन कालेन सम्यक्त्वान्मिथ्यात्वं गतस्य द्वे षट्षष्टी सागरोपमाणां यावत्सम्यक्त्वमनुपाल्य मिथ्यात्वं गतस्येत्यर्थः। पल्योपमासंख्येयभागमात्रेण कालेन ते सम्यक्त्वसम्यग्मिथ्यात्वे उद्वलयतः स्तोके उद्वलनसंक्रमे तयोर्जघन्यः प्रदेशसंक्रमो—द्विचरमखण्डस्य चरमसमये सम्यक्त्वसम्यग्मिथ्यात्वयोर्यद्दलिकं परस्थाने मिथ्यात्वप्रकृतिरूपे प्रक्षिप्यते स तयोर्जघन्यः प्रदेशसंक्रम इत्यर्थः॥ १०० ॥

(उ०)—ह्रस्वगुणसंक्रमाद्धया—स्तोककालेन गुणसंक्रमेण समिश्रं सम्यक्त्वं—सम्यक्त्वसम्यग्मिथ्यात्वे इत्यर्थः, पूरयित्वा—मिथ्या-

त्वदलेन द्वे पट्षष्टी सागरोपमाणां सम्यक्त्वं धृत्वा इयता चिरेण प्रभूतेन कालेन सम्यक्त्वान्मिथ्यात्वं गतस्य पल्योपमासङ्ख्येयभागमात्रेण कालेन ते सम्यक्त्वसम्यग्मिथ्यात्वे उद्वलयतः स्तोके उद्वलनसंक्रमे द्विचरमखण्डस्य चरमसमये मिथ्यात्वरूपपरस्थाने दलिकप्रक्षेपरूपस्तयोर्जघन्यप्रदेशसंक्रमो भवति ॥ १०० ॥

**संजोयणाण चतुरुवसमित्तु संजोयइत्तु अप्पद्धं । अयरच्छावट्ठिदुगं पालिय सकहप्पवत्तंते ॥ १०१ ॥**

(चू०)—'संजोयणाण चउरुवसमित्तु'—चरित्तमोहं चत्तारि वारे उवसामेत्तु । उवसामिएण किं पतोतणं ? भण्णइ—उवसामितस्स चरित्तमोहदलितं ठितिघातरसघायगुणसेढिगुणसंकमेहिं बहुप्पदेसग्गा अप्पप्पदेसग्गातो य करेति तेण उवसमसेढिग्गहणं । ततो मिच्छत्तं गंतूण 'संजोयतित्तु अप्पद्धं'ति बंधित्तु अंतोमुहुत्तं अणंताणुबंधिणो । ते य बन्धमाणस्स अप्पप्पदेसग्गं कतं चरित्तमोहदलितं अहापवत्तसंकमेण थोवं अणंताणुबंधिसु संकमति । अंतोमुहुत्तेण सम्मत्तं पडिवण्णो । 'अयरच्छावट्ठिदुगं पालिय'—सागरोपमाणं वे छावट्ठीतो सम्मत्तं अणुपालित खवणाए अब्भुट्ठियस्स 'सकहप्पवत्तंते'ति—अप्पणो अहापवत्तकरणस्स चरिमे समए अणंताणुबंधिणं जहण्णतो पदेससंकमो होति । परतो गुणसंकमो भवतित्ति तेण जहन्नओ पदेससंकमो ण होत्ति ॥१०१॥

(मलय०)—'संजोयणाण'त्ति—चतुरो वारान् मोहनीयमुपशमय्य, चतुष्कृत्वो मोहनीयोपशमनेन किं प्रयोजनमिति चेत्,उच्यते—प्रभूतपुद्गलपरिसाटः । तथाहि—चारित्रमोहनीयप्रकृतीनामुपशमं कुर्वन् स्थितिघातरसघातगुणश्रेणिगुणसंक्रमैः प्रभूतान् पुद्गलान् परिसाटयतीति । ततश्चतुष्कृत्वो मोहनीयोपशमं कृत्वा मिथ्यात्वं गच्छति । मिथ्यात्वं गतश्च सन् अल्पाद्धां—अल्पं कालं यावत् संयोजनान् संयोज्य—अ-

नन्तानुबन्धिनो बद्ध्वा । तदानीं च चारित्रमोहनीयदलिकं स्वल्पमेव विद्यते, चतुष्कृत्वो मोहोपशमकाले तस्य स्थितिघातादिभिर्घाति-
त्वात् । ततोऽनन्तानुबन्धिनो बध्नन् तेषु यथाप्रवृत्तसंक्रमेण स्तोकमेव चारित्रमोहनीयदलिकं संक्रमयति । ततोऽन्तर्मुहूर्ते गते मति
पुनरपि सम्यक्त्वं प्रतिपद्यते । तच्च द्वे षट्षष्टी सागरोपमाणां यावदनुपाल्यानन्तानुबन्धिनां क्षपणाय समुद्यतते । तस्य स्वकयथाप्रवृत्तक-
रणान्तसमये तेषामनन्तानुबन्धिनां विध्यातसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति । परतोऽपूर्वकरणे गुणसंक्रमः प्रवर्तत इति स न
प्राप्यते ॥ १०१ ॥

(उ०)—चतुरो वारान् मोहनीयमुपशमय्य; चारित्रमोहनीयप्रकृतीरुपशमयन् स्थितिघातरसघातगुणश्रेणिगुणसंक्रमैस्तासां प्रभूतान्
पुद्गलान् परिशाटयतीति चतुर्वार मोहोपशमग्रहणम् । ततो मिथ्यात्वं गत्वाऽल्पाद्धाम्—अल्पकालं यावत्संयोजनान् संयोज्य—अनन्ता-
नुबन्धिनो बद्ध्वा बध्यमानेषु तेषु चतुर्वार मोहोपशमेन स्थितिघातादिभिर्घातितत्वेन स्तोकमेव चारित्रमोहनीयदलिकं संक्रमय्य ततो-
ऽन्तर्मुहूर्ते गते पुनरपि सम्यक्त्वमासाद्य द्वे षट्षष्टी सागरोपमाणां यावत्तदनुपाल्य योऽनन्तानुबन्धिक्षपणायोद्यतते तस्य स्वकयथाप्रवृ-
त्तकरणान्तसमये तेषामनन्तानुबन्धिनां विध्यातसंक्रमेण जघन्यप्रदेशसंक्रमो भवति । परतोऽपूर्वकरणे गुणसंक्रमप्रवृत्तेस्तदप्राप्तिः ॥१०१॥

**अट्ठकसायासाए य असुभधुवबंधि अत्थिरतिगे य । सव्वलहुं खवणाए अहापवत्तस्स चरिमम्मि ॥१०२॥**

(चू०)—अपच्चक्खाणावरण, पच्चक्खाणावरण, असात, कुवण्णनवगं उवघातं वा एता दस असुभधुवा, अथि-
र असुभ-अजसं च एतं अथिरतिगं भण्णति, एतासिं बावीसाए पगतीणं अट्ठकसायवज्जाणं 'सव्वलहुं'त्ति—लहुमेव
सर्वाद्धं पच्चिवण्णम्म खवणाते अब्भुट्ठियस्स 'अहापवत्तस्स चरिमम्मि'त्ति—अप्पणो अहापवत्तस्स चरिमसमए

विज्झायसंकमेणं जहण्णओ पदेससंकमो। परतो गुणसंकमो होतित्ति जहण्णतो पदेससंकमो ण होति। अट्ठण्हं कसायाणं देसूणं पुव्वकोडि संजमं अणुपालेऊण अंते खवगसेढिं पडिवण्णस्स जहण्णगं भाणितव्वं ॥ १०२ ॥

(मलय०)—'अट्ठ'त्ति–अप्रत्याख्यानप्रत्याख्यानावरणरूपा अष्टौ कपायाः, असातवेदनीयं, अशुभध्रुवबन्धिन्यः–कुवर्णादिनवकोपघातरूपाः, अस्थिरत्रिकं–अस्थिराशुभायशःकीर्तिसंज्ञम्, एतासां द्वाविंशतिप्रकृतीनां कपायाष्टकरहितानां 'सव्वलहुं'ति–सर्वेभ्योऽन्येभ्यः शीघ्रमेव क्षपणायोत्थितस्य मासपृथक्त्वाभ्यधिकेषु अष्टसु वर्षेष्वतिक्रान्तेषु क्षपणायोद्यतस्येत्यर्थः। अष्टौ कपायान् प्रति देशोनां पूर्वकोटीं यावत् संयममनुपाल्य। पञ्चसंग्रहे पुनः सर्वा अप्येताः प्रकृतीरधिकृत्य देशोनां पूर्वकोटीं यावत् संयममनुपाल्येत्युक्तम्। क्षपकश्रेणि प्रतिपन्नस्य यथाप्रवृत्तकरणचरमसमये कपायाष्टकस्य विध्यातसंक्रमेण शेषाणां यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति ॥ १०२ ॥

(उ०)—अष्टानां कपायाणां मध्यमानामसातवेदनीयस्याशुभध्रुवबन्धिनीनां–कुवर्णादिनवकोपघातलक्षणानामस्थिरत्रिकस्य–अस्थिराशुभायशःकीर्त्तिसंज्ञस्य सर्वसङ्ख्यया द्वाविंशतिप्रकृतीनां 'सव्वलहुं'ति–सर्वेभ्योऽन्येभ्यः शीघ्रमेव क्षपणायोत्थितस्य कपायाष्टकरहितस्य मासपृथक्त्वाधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु, कपायाष्टकं प्रति च देशोनां पूर्वकोटिं यावत्संयममनुपाल्य क्षपणायोद्यतस्येत्यर्थः। पञ्चसंग्रहमूलटीकायां तु सर्वा अप्येताः प्रकृतीरधिकृत्य देशोनां पूर्वकोटिं यावत्संयममनुपाल्येत्युक्तम्। एवं क्षपकश्रेणिं प्रतिपन्नस्य यथाप्रवृत्तकरणचरमसमये कपायाष्टकस्य विध्यानसंक्रमेण शेषाणां च यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति ॥ १०२ ॥



**पुरिसे संजलणातिगेय घोलमाणेण चरमबद्धस्स। सगअंतिमे असाएण समा अरई य सोगो य ॥ १०३ ॥**

(चू०)—पुरिसकोहमाणमायसंजलणाणं 'घोलमाणेणं'ति—जहण्णगजोगिणा चरिमबद्धस्स खवणाए अब्भुट्ठि- यस्स अप्पप्पणो चरिमसमयबद्धस्स 'सगअंतिमे'त्ति—अप्पप्पणो चरिमसमए छोभे सव्वसंकमेणं जहण्णतो पदे- ससंकमो होतित्ति । कहं ? भण्णइ—एतेसिं चतुण्हं बंधवोच्छेयकाले दुआवलियबद्धलतं मोत्तूण अण्णं णत्थि पदेसग्गं । तं च समए समए खीयमाणं अंतिमे समए अंतिमसमयबद्धस्स असंखेज्जतिभागो सेसो भवति । तेण चरिमसमए जहण्णतो पदेससंकमो होइ । 'असाएण समा अरती य सोगो य'त्ति—अरतिसोगाणं जहा असायस्स जहण्णतो पदेससंकमो तहेव सामी वि सो चेव ॥ १०३ ॥

(मलय०)—'पुरिसे'त्ति—पुरिसे इत्यादौ षष्ठ्यर्थे सप्तमी । पुरुषवेदस्य संज्वलनत्रिकस्य च क्रोधमानमायारूपस्य क्षपणाय समुद्यतेन क्षपणश्रेणिं प्रतिपन्नेन स्वस्वबन्धचरमसमये 'घोलमाणेणं'ति—जघन्ययोगिना यद् बद्धं दलिकं तस्य चरमसंछोभे जघन्यः प्रदेशसंक्रमो भवति । तथाहि—आसां चतसृणामपि प्रकृतीनां बन्धव्यवच्छेदसमये समयोनावलिकाद्विकबद्धं मुक्त्वाऽन्यत् प्रदेशसत्कर्म न विद्यते । तदपि च प्रतिसमयं संक्रमेण क्षयमुपगच्छति तावत् यावच्चरमसमयबद्धस्यासंख्येयो भागः शेषो भवति । ततस्तं सर्वसंक्रमेण संक्रमयतो जघन्यः प्रदेशसंक्रमः । 'असाएण समा अरई य सोगो य'त्ति अरतिशोकावसातसमौ असातवेदनीयस्येव;अरतिशोकयोर्जघन्यः प्रदेश- संक्रमो भावनीय इत्यर्थः ॥ १०३ ॥

(उ०)—पुरुषवेदस्य संज्वलनत्रिकस्य च क्रोधमानमायारूपस्य क्षपणार्थमुद्यतेन क्षपकश्रेणिं प्रतिपन्नेन स्वस्वबन्धान्तसमये 'घोल- माणेणं'ति—घोलमानेन—जघन्ययोगिना सता यद्बद्धं दलिकं तस्य चरमसंछोभे जघन्यप्रदेशसंक्रमो भवति । आसां हि चतसृ-

णामपि प्रकृतीनां बन्धव्यवच्छेदसमये समयोनावलिकाद्विकबद्धं मुक्त्वा अन्यत् प्रदेशसत्कर्म न विद्यते। तदपि च प्रतिसमयं गुणसंक्रमेण समयोनावलिकाद्विकमात्रेण कालेन क्षयमुपगच्छति तावद्यावच्चरमसमयबद्धस्यासङ्ख्येयो भागः शेषोऽवतिष्ठते, ततस्तं सर्वसंक्रमेण संक्रमयतो जघन्यः प्रदेशसंक्रम इति। अरतिशोकावसातसमौ—असातवेदनीयवदेवारतिशोकौ जघन्यप्रदेशसंक्रममाश्रित्य भावनीयावित्यर्थः ॥ १०३ ॥

**वेउव्विक्कारसगं उव्वलियं बंधिऊण अप्पद्धं। जिट्ठठिई निरयाओ उव्वट्टित्ता अबंधित्तु ॥ १०४ ॥**
**थावरगयस्स चिरउव्वलणे एयस्स एव उच्चस्स। मणुयदुगस्स य तेउसु वाउसु वा सुहुमबद्धाणं ॥१०५**

(चू०)—'विउव्विक्कारसगं' णिरतगतिदेवगतिवेउव्वितसत्तगं देवाणुपुव्विणिरताणुपुव्वी य एवं विउव्वियक्कारसगं। एतं एगिंदियाएसु उव्वलितं पुणो पंचिंदिएण होत्तु अंतोमुहुत्तं बंधित्तु 'जेट्ठट्ठिइ निरताती'—उक्कोसकालट्ठितीतो अहे सत्तमाए णेरतितो जातो ततो उव्वट्टित्ता पंचिंदियतिरिएसु उववण्णो 'अबंधित्तु' त्ति—तत्थ वेउव्वेक्कारसगं अबन्धित्ताए एगिंदिएसु उववण्णो। 'थावरगयस्स चिरउव्वलणे' त्ति—तत्थ थावरेसु पलितोवमस्स असंखेज्जतिभागेण वेउव्वेक्कारसगं उव्वल्लेमाणस्स जं दुचरिमकण्डगस्स चरिमसमए अग्गणपगतिं दलितं संकामेति सो वेउव्वेक्कारसगस्स जहण्णो उ पएससंकमो भवति। 'एतस्स एवं उच्चस्स'—एयस्सेवं जीवस्स एतेण विहिणा आगतस्स तेउवाउसु उववण्णस्स चिरउव्वलणेण उच्चागोयं उव्वल्लंतस्स दुचरिमखंडस्स चरिमसमए जहण्णओ पदेससंकमो भवति। 'मणुयदुगस्स य तेउसु वाउसु वा सुहुमबद्धाणं'—मणुयगतिमणुयाणुपुव्वीणं पि

एवं चेव, णवरं तेउवाउउव्वलंतस्स जहण्णो पदेससंकमो; सुहुमबद्धाणं–सुहुमेण बद्धाणं उच्चागोतमणुतदुगाणं एस जहण्णगो पदेससंकमो ॥ १०४–१०५ ॥

(मलय०)—'वेउव्वि'त्ति–देवद्विकनरकद्विकवैक्रियसप्तकलक्षणं वैक्रियैकादशकं एकेन्द्रियभवे वर्तमानेनोद्वलितं पुनरपि पञ्चेन्द्रियत्वमुपागतेन सता अल्पाद्धम्–अल्पकालं अन्तर्मुहूर्तकालं यावदित्यर्थः, बद्ध्वा, ततो ज्येष्ठस्थितिरुत्कृष्टस्थितिः–त्रयस्त्रिंशत्सागरोपमस्थितिक इत्यर्थः, सप्तमनरकपृथिव्यां नारको जातः, ततस्तावन्तं कालं यावत् यथायोगं तद्वैक्रियैकादशकमनुभूय ततो नरकादुद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नः, तत्र च तद्वैक्रियैकादशकमबद्ध्वा स्थावरेष्वेकेन्द्रियेषु मध्ये समुत्पन्नः। तस्य चिरोद्वलनया–पल्योपमासंख्येयभागमात्रेण कालेनोद्वलनया तदुद्वलयतो यत् द्विचरमखण्डस्य चरमसमये प्रकृत्यन्तरे दलिकं संक्रामति स तस्य वैक्रियैकादशकस्य जघन्यः प्रदेशसंक्रमः। 'एयस्स' इत्यादि–एतस्यैवानन्तरोक्तस्य जीवस्य पूर्वोक्तेन विधिना तेजोवायुषु मध्ये समागतस्य सूक्ष्मैकेन्द्रियभवे वर्तमानेन यद्बद्धमुच्चैर्गोत्रं मनुजद्विकं च–मनुजगतिमनुजानुपूर्वीलक्षणं ते चिरोद्वलनयोद्वलयतो द्विचरमखण्ड य चरमसमये परप्रकृतौ यद्दलिकं संक्रामति स तयोर्जघन्यः प्रदेशसंक्रमः। इयमत्र भावना–मनुजद्विकमुच्चैर्गोत्रं च प्रथमतस्तेजोवायुभवे वर्तमानेनोद्वलितं, पुनरपि सूक्ष्मैकेन्द्रियभवमुपागतेनान्तर्मुहूर्तं यावद्बद्धं, ततः पञ्चेन्द्रियभवं गत्वा सप्तमनरकपृथिव्यामुत्कृष्टस्थितिको नारको जातः, तत उद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नः, एतावन्तं च कालमबद्ध्वा प्रदेशसंक्रमेण चानुभूय तेजोवायुषु मध्ये समागतः, तस्य मनुजद्विकोच्चैर्गोत्रे चिरोद्वलनयोद्वलयतो द्विचरमखण्डस्य चरमसमये परप्रकृतौ यद्दलं संक्रामति स तयोर्जघन्यः प्रदेशसंक्रमः ॥ १०४–१०५ ॥

(उ०)—वैक्रियैकादशक–सुरद्विकनरकद्विकवैक्रियसप्तकलक्षणं एकेन्द्रियभवे वर्तमानेनोद्वलितं भूयस्तत्पञ्चेन्द्रियत्वं प्राप्तेन सताऽल्पाद्धम्–अल्पकालमन्तर्मुहूर्तं यावदित्यर्थः, बद्ध्वा ततो ज्येष्ठस्थितिः–त्रयस्त्रिंशत्सागरोपमायुष्को नारकः सप्तमपृथिव्यां जातस्तत्र तावन्तं कालं यावद्यथासंभवं तद्वैक्रियैकादशकमनुभूय ततो नरकादुद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पद्य तत्र तद्वैक्रियैकादशकमबद्ध्वा स्थावरेष्वेकेन्द्रियेषु मध्ये यः समुत्पन्नस्तस्य चिरया–पल्योपमासङ्ख्येयभागमात्रकालयोद्वलनया तदुद्वलयतो द्विचरमखण्डस्य चरमसमये यः प्रकृत्यन्तरे दलिकसंछोभः स तस्य जघन्यप्रदेशसंक्रमः।'एयस्स' इत्यादि—एतस्यैवानन्तरोक्तजीवस्य प्रागुक्तविधिना तेजोवायुषु मध्ये समागतस्य सूक्ष्मैकेन्द्रियभवे वर्तमानेन यद्बद्धमुच्चैर्गोत्रं मनुजद्विकं च ते चिरोद्वलनयोद्वलयतो द्विचरमखण्डस्य चरमसमये परप्रकृतौ यद्दलिकं संक्रामति स तयोर्जघन्यप्रदेशसंक्रमः। इयमिह प्रणाली—मनुजद्विकमुच्चैर्गोत्रं चादौ तेजोवायुभवे वर्तमानेनोद्वलितम्, भूयः सूक्ष्मैकेन्द्रियभवं प्राप्तेनान्तर्मुहूर्तं यावद्बद्धं, ततः पञ्चेन्द्रियभवं गत्वा सप्तमपृथिव्यां नारको जात उत्कृष्टायुष्कः, तत उद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नः, इयन्तं च कालं तदबद्ध्वा प्रदेशसंक्रमेण चानुभूय तेजोवायुषु मध्ये समागतस्य मनुजद्विकमुच्चैर्गोत्रं च चिरोद्वलनयोद्वलयतो द्विचरमस्थितिखण्डचरमसमये परप्रकृतौ दलिकप्रक्षेपे तज्जघन्यप्रदेशसंक्रमसंभव इति ॥ १०४–१०५ ॥

**हस्सं कालं बंधिय विरओ आहारसत्तगं गतु । अविरइमहुव्वलंतस्स तस्स जा थोवउव्वलणा ॥१०६॥**

(चू०)—'हस्सं कालं बंधिय'–थोवं कालं बंधित्तु अपमत्तसंजतो आहारसत्तगं 'गंतु अविरतिं'–असंजतभावं गंतु अंतोमुहुत्तपरतो आहारसत्तगं दीहेणं पलितोवमस्स असंखेज्जतिभागेणं उव्वलमाणस्स 'तस्स जा थोव उव्वलण'त्ति–तस्स–जीवस्स 'जा थोव उव्वलण'त्ति जं दुचरिमकंडगस्स चरिमसमए अण्णपगतिं संकामेति

दलिमं सो आहारसत्तगस्स जहण्णतो पदेससंकमो होति ॥ १०६ ॥

(मलय०)—'हस्सं'ति–हस्वं कालं स्तोकं कालं यावत् विरतोऽप्रमत्तसंयतः सन् आहारकसप्तकं बद्ध्वा कर्मोदयपरिणतिवशात् पुनरप्यविरतिं गतः, ततोऽन्तर्मुहूर्तात्परतो महोद्वलनया–चिरोद्वलनया पल्योपमासंख्येयभागप्रमाणेन कालेनोद्वलनयोद्वलयतः सतो या स्तोकोद्वलना द्विचरमखण्डस्य चरमसमये यत्कर्मदलिकं परप्रकृतिषु प्रक्षिप्यते सा स्तोकोद्वलना, सा आहारकस्य जघन्यः प्रदेशसंक्रमः।

(उ०)—'हस्सं कालं'–स्तोकं कालं यावद्विरतोऽप्रमत्तसंयतः सन्नाहारकसप्तकं बद्ध्वा कर्मोदयवैचित्र्याद् भूयोऽप्यविरतिं गतो यस्तस्य ततो गत्वाऽन्तर्मुहूर्तात्परतो महोद्वलनया–पल्योपमासङ्ख्येयभागप्रमाणकालयोद्वलनयोद्वलयतः सतो या स्तोकोद्वलना–द्विचरमखण्डचरमसमये परप्रकृतिषु प्रक्षेपरूपा साहारकसप्तकस्य जघन्यप्रदेशसंक्रमः ॥ १०६ ॥

तेवट्ठिसयं उदहीण सचउपल्लाहिगं अबंधित्ता । अंते अहापवत्तकरणस्स उज्जोयातिरियदुगे ॥ १०७ ॥

(चू०)—तिरियगतितिरियाणुपुव्विउज्जोवाणं जो जहण्णेणं संतकम्मेणं तिपलितोवमट्ठितिगेसु मणुस्सेसु उववण्णो, तत्थ अंतोमुहुत्तसेसे आउगे सम्मत्तं लद्धं, ततो उवट्टित्ता पलितोवमट्ठितीतो देवो जातो, ततो अपरिवडितेणं सम्मत्तेणं मणुस्सगतिं आगतो, ततो अपरिवडिएणं सम्मत्तेणं एक्कतीससागरोवमट्ठितिगो देवो जातो, तत्थ अंतोमुहुत्तोववण्णो मिच्छत्तं गतो, तस्स देवभवस्स अंतोमुहुत्तसेसे सम्मत्तं लद्धं, ततो वेछावट्ठितो अणुपालेतूणं ततो तीसे उवरिमिगा सम्मत्तअद्धाए अंतोमुहुत्तसेसे खवणाए अब्भुट्ठितो, एएण विहिणा तेवट्ठसतं सागरोवमाणं सचतुपल्लाहियं तिरितदुगं उज्जोवनामं अबंधितु 'अंते अहापवत्तकरणस्स'–अप्पणो अहापवत्तकरणस्स अंते

उज्जोयतिरियदुगाणं जहण्णओ पदेससंकमो भवति ॥ १०७ ॥

(मलय०)—'तेवट्ठिसयं'ति–त्रिषष्ट्यधिकमुदधिशतं सागरोपमाणां चतुष्पल्योपमाधिकं च यावत् स क्षपितकर्मांशः सर्वजघन्य-तिर्यग्द्विकोद्योतसत्कर्मा उद्योततिर्यग्द्विकमबद्ध्वा यथाप्रवृत्तकरणस्यान्ते चरमसमये उद्योततिर्यग्द्विकयोर्जघन्यं प्रदेशसंक्रमं करोति। कथं त्रिषष्ट्यधिकं सागरोपमाणां शतं चतुष्पल्याधिकं च यावदबद्ध्वेति चेद्, उच्यते–स क्षपितकर्मांशस्त्रिपल्योपमायुष्केषु मनुजेषु मध्ये समुत्पन्नस्तत्र देवद्विकमेव बध्नाति, न तिर्यग्द्विकम्, नाप्युद्योतम् , तत्र चान्तर्मुहूर्ते शेषे सत्यायुषि सम्यक्त्वमवाप्य ततोऽप्रतिपतित-सम्यक्त्व एव पल्योपमस्थितिको देवो जातः। ततोऽप्यप्रतिपतितसम्यक्त्वो देवभवाच्च्युत्वा मनुष्येषु मध्ये समुत्पन्नः। ततस्तेनैवाप्रति-पतितेन सम्यक्त्वेन सहित एकत्रिंशत्सागरोपमस्थितिको ग्रैवेयकेषु मध्ये देवो जातः। तत्र चोत्पत्त्यनन्तरमन्तर्मुहूर्तादूर्ध्वं मिथ्यात्वं गतः। ततोऽन्तर्मुहूर्तावशेषे आयुषि पुनरपि सम्यक्त्वं लभते। ततो द्वे षट्षष्टी सागरोपमाणां यावन्मनुष्यानुत्तरसुरादिषु सम्यक्त्वमनु-पाल्य तस्याः सम्यक्त्वाद्धाया अन्तर्मुहूर्ते शेषे शीघ्रमेव क्षपणाय समुद्यतः। ततोऽनेन विधिना त्रिषष्ट्यधिकं सागरोपमाणां शतं चतुष्प-ल्याधिकं च यावत्तिर्यग्द्विकमुद्योतं च बन्धरहितं भवतीति ॥ १०७ ॥

(उ०)—त्रिषष्ट्यधिक शतमुदधीनां सागरोपमाणां चतुष्पल्याधिकं च यावत् स क्षपितकर्मांशः सर्वजघन्यतिर्यग्द्विकोद्योतसत्कर्मो-द्योतं तिर्यग्द्विकं चाबद्ध्वा यथाप्रवृत्तकरणस्यान्ते चरमसमये उद्योततिर्यग्द्विकयोर्जघन्यं प्रदेशसंक्रमं करोति। कथमुक्तकालं यावदब-न्ध इति चेद्, इत्थं–स क्षपितकर्मांशस्त्रिपल्योपमायुष्केषु मनुजेषु समुत्पन्नस्तत्र देवद्विकमेव बध्नाति, न तिर्यग्द्विकं नाप्युद्योतम्, तत्र चान्तर्मुहूर्त्तावशिष्टायुष्कः सन् सम्यक्त्वमवाप्य ततोऽप्रतिपतितसम्यक्त्व एव पल्योपमस्थितिको देवो जातः। तत्र च सम्यक्त्वप्रत्यया-

देवद्वन्धः । गतोऽप्यप्रतिपतितसम्यक्त्वो देवभवाच्च्युत्वा मनुष्येषु समुत्पन्नः ततस्तेनैवाप्रतिपतितेन सम्यक्त्वेन समन्वित एकत्रिंशत्सागरोपमस्थितिको ग्रैवेयकदेवो जातः।तत्र चोत्पत्त्यनन्तरमन्तर्मुहूर्त्तादूर्ध्वं मिथ्यात्वं गतः।ततो भवप्रत्ययादेवैतद्बन्धः। ततोऽन्तर्मुहूर्त्तावशेषे आयुषि भूयोऽपि सम्यक्त्वं प्रतिपद्यते। ततः सागरोपमाणां द्वे षट्षष्टी यावन्मनुष्यानुत्तरसुरादिभवेषु सम्यक्त्वमनुवर्त्तमानः सम्यक्त्वाद्धाया अन्तर्मुहूर्त्ते शेषे शीघ्रमेव क्षपणायोद्यतते। ततोऽमुना प्रकारेण त्रिषष्ट्यधिकं सागरोपमाणां शतं चतुष्पल्याधिकं यावत्तिर्यग्द्विकोद्योतबन्धाभावो भवतीति ॥ १०७ ॥

एगविगलिंदियजोग्गा अट्ठ अपज्जत्तगेण सह तासिं। तिरियगईसम णवरं पंचासीयउदहिसयं तु॥१०८॥

(चू०)—एगिंदिगविगलिंदियजोग्गा अट्ठपगतितो। तं जहा–एगिंदिय बेइंदिय तेइंदिय चउरिंदियजाति आयावं थावरं सुहुमं साहारणं। एतासिं अप्पज्जत्तगसहिताणं णवण्हं पगतीणं जो जहण्णगो संतकम्मिगो बावीससागरोवमट्ठितीतो छट्ठाए पुढवीए णेरतितो जातो, तत्थ अंतोमुहुत्तावसेसाउएण सम्मत्तं लद्धं। ततो उवट्टित्ता मणुस्सो उववण्णो। ततो अपरिवडंतेण सम्मत्तेण देसविरतिं अणुपालेत्तु सोहम्मे चतुपलिओवमट्ठितितो देवो जातो। ततो अपरिवडितसम्मत्तो मणुस्सो जातो। ततो मणुस्सभवातो संजमं अणुपालेत्तु गेवेज्जे स एक्कतीससागरोवमट्ठितिगो देवो जातो। तत्थ अंतोमुहुत्तोववण्णो मिच्छत्तं गतो तस्स देवभवस्स अंतोमुहुत्तसेसे सम्मत्तं लद्ध ततो बेच्छावट्ठिट्ठितितो अणुपालेत्तु ततो तीसे छावट्ठिगाए सम्मत्तअद्धाए अंतोमुहुत्तसेसे खवणाए अब्भुट्ठितो एएण विहीणा पंचासीयं सागरोवमसतं सचतुपल्लाहितं अबंधित्तु अहापवत्तकरणस्स अंते एयासिं

णवण्हं पगतीणं जहण्णगो पदेससंकमो। परतो गुणसंकमो होति ॥ १०८ ॥

(मलय०)—'इग'त्ति–एकेन्द्रियविकलेन्द्रिययोग्या अष्टौ याः प्रकृतयः–एकद्वित्रिचतुरिन्द्रियजातिस्थावरातपसूक्ष्मसाधारणलक्षणाः, तासामपर्याप्तकसहितानां नवानां प्रकृतीनां तिर्यग्गतिसमं वक्तव्यम्। नवरमत्र पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं यावदबद्ध्वेति वक्तव्यम्। कथमेतावन्तं कालं यावदबन्ध इति चेद्, उच्यते–इह क्षपितकर्मांशो द्वाविंशतिसागरोपमस्थितिकः षष्ठपृथिव्यां नारको जातः। तत्राप्यन्तर्मुहूर्तावशेषे आयुषि सम्यक्त्वं प्राप्तवान्। ततोऽप्रतिपतितसम्यक्त्व एव मनुष्यो जातः। ततस्तेनाप्रतिपतितेन सम्यक्त्वेन देशविरतिमनुपाल्य चतुष्पल्योपमस्थितिकः सौधर्मदेवलोके देवो जातः। ततस्तेनापतितेन सम्यक्त्वेन सह देवभवाच्च्युत्वा मनुष्यो जातः। तस्मिंश्च मनुष्यभवे संयममनुपाल्य ग्रैवेयकेष्वेकत्रिंशत्सागरोपमस्थितिको देवो जातः। तत्र चोत्पत्त्यनन्तरमन्तर्मुहूर्तादूर्ध्वं मिथ्यात्वं गतः। ततोऽन्तर्मुहूर्तावशेषे आयुषि भूयोऽपि सम्यक्त्वं प्रतिपद्यते। ततो द्वे षट्षष्टी सागरोपमाणां यावत् सम्यक्त्वमनुपाल्य तस्याः सम्यक्त्वाद्धाया अन्तर्मुहूर्ते शेषे क्षपणाय समुद्यतते। तदेवं पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं यावत्पूर्वोक्तानां नवप्रकृतीनां बन्धाभावः ॥ १०८ ॥

(उ०)—एकेन्द्रियविकलेन्द्रिययोग्या या अष्टौ प्रकृतयः–एकद्वित्रिचतुरिन्द्रियजातिस्थावरातपसूक्ष्मसाधारणलक्षणास्तासामपर्याप्तकसहितानां नवानां प्रकृतीनां तिर्यग्गतिसमं जघन्यप्रदेशसंक्रमस्थानं वक्तव्यम्। नवरमत्र पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं यावदबद्ध्वेति वक्तव्यम्। कथमियन्तं कालं यावदबन्ध इति चेद्, उच्यते–इह क्षपितकर्मांशो द्वाविंशतिसागरोपमस्थितिकः षष्ठपृथिव्यां नारको जातः। तत्रैताः प्रकृतीर्भवप्रत्ययादेवाबद्ध्वा पर्यन्तान्तर्मुहूर्त्ते सम्यक्त्वमासाद्य मनुष्येष्वप्रतिपतितसम्यक्त्व एवोत्पद्य देशविर-

तिमागाद्य चतुष्पल्योपमस्थितिकः सौधर्मदेवो भूत्वाऽप्रतिपतितसम्यक्त्व एव मनुष्येषूत्पद्य संपूर्णसंयमं परिपाल्य नवमग्रैवेयक एक-त्रिंशत्सागरोपमस्थितिको देवोऽजनि । तत्र चान्तर्मुहूर्त्तोर्ध्वं मिथ्यात्वं गतोऽपि भवप्रत्ययादेवैताः प्रकृतीर्न बध्नाति । ततः पर्यन्तान्तर्मुहूर्त्ते सम्यक्त्वमवाप्याप्रतिपतितसम्यक्त्वो मनुष्येषूत्पद्य सर्वविरतिमनुपाल्य वारद्वय विजयादिषु गमनेन षट्षष्टिसागरोपमाणि सम्यक्त्वकालं पूरयित्वा मनुष्येष्वन्तर्मुहूर्त्तं सम्यग्मिथ्यात्वमनुभूय तदन्तरितं द्वितीयं षट्षष्टिप्रमाणं सम्यक्त्वकालं वारत्रयमच्युतगमनेन पूरयति । तदेवं सम्यक्त्वमनुपाल्य तस्याः सम्यक्त्वाद्धाया अन्तर्मुहूर्त्ते शेषे क्षपणायोद्यतते । एवं पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं प्रागुक्तानां प्रकृतीनां बन्धाभावः । इह भावनायां सम्यक्त्वात्प्रच्युतस्य मिश्रगमनं यदुच्यते तत्कार्मग्रन्थिकमतेनाविरुद्धम् । सैद्धान्तिकानां तु न सम्मतमिदम् । यत उक्तं कल्पभाष्ये—"मिच्छत्ता संकंती अविरुद्धा होइ सम्ममीसेसु । मीसाओ वा दोसु सम्मा मिच्छं न उण मीसं" ॥ इति ॥ १०८ ॥

छत्तीसाए सुभाणं सेढिमणारुहिय सेसगविहीहिं । कट्टु जहन्नं खवणं अपुव्वकरणालिया अंते ॥१०९॥

(चू०)—'छत्तीसाए सुभाणं' कतरासिं? भण्णति—पंचिंदियजाति समचउरंससंठाणं तेजतिगसत्तगं वज्जरिसभणारायसंघयणं वण्णादिएक्कारसगं अगुरुलहुगं परघातं उस्सासं पसत्थविहायोगति तसादिदसगं णिमिणमिति एतासिं छत्तीसाए सुभपगतीणं 'सेढिमणारुहित सेसगविहीहिं'ति—चरित्तमोहं अणुवसामित्तु अविसेसेणं खवित्तकंमंसियविहिणा कम्मजहण्णं पदेसगं खवणाए अब्भुट्ठियस्स अपुव्वकरणस्स पढमआवलियाए अंते जहण्णतो पदेससंकमो, परतो गुणसंकमेण लद्धं बहु संकमंति तेण जहण्णतो ण होति ॥ १०९ ॥

(मलय०)–'छत्तीसाए'त्ति। श्रेणिमनारुह्य–उपशमश्रेणिमकृत्वा शेषैर्विधिभिः क्षपितकर्मांशसत्कैः-षट्त्रिंशत्संख्यानां शुभप्रकृतीनां-पञ्चेन्द्रियजातिसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननतैजससप्तकप्रशस्तविहायोगतिशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धोष्णागुरुलघुपराघातोच्छ्वासत्रसादिदशकनिर्माणलक्षणानां जघन्यं प्रदेशाग्रं कृत्वा क्षपणायोत्थितस्य क्षपितकर्मांशस्यापूर्वकरणसत्कायाः प्रथमावलिकाया अन्ते चरमसमये तासां जघन्यः प्रदेशसंक्रमो भवति। तत ऊर्ध्वं तु गुणसंक्रमेण लब्धस्यातिप्रभूतस्य दलिकस्य संक्रमावलिकातिक्रान्तत्वेन संक्रमसंभवात् स न प्राप्यते। पञ्चसंग्रहे तु 'वज्रर्षभनाराचवर्जितानां शेषाणां पञ्चत्रिंशत्प्रकृतीनामेवापूर्वकरणप्रथमावलिकान्ते जघन्यः प्रदेशसंक्रम उक्तः, वज्रर्षभनाराचसंहननस्य तु स्वबन्धव्यवच्छेदसमये' इति ॥ १०९ ॥

(उ०)–'श्रेणिमनारुह्य'-उपशमश्रेणिमकृत्वा शेषैर्विधिभिः क्षपितकर्मांशसत्कैः षट्त्रिंशत्सङ्ख्यानां-पञ्चेन्द्रियजात्याद्यसंस्थानाद्यसंहननतैजससप्तकप्रशस्तविहायोगतिशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धोष्णागुरुलघुपराघातोच्छ्वासत्रसदशकनिर्माणलक्षणानां जघन्यं प्रदेशाग्रं कृत्वा क्षपणं कर्तुमुद्यतस्य क्षपितकर्मांशस्यापूर्वकरणसत्कप्रथमावलिकान्तसमये तासां जघन्यः प्रदेशसंक्रमो भवति। तत ऊर्ध्वं तु गुणसंक्रमेण लब्धस्यातिप्रभूतस्य दलिकस्य संक्रमावलिकातिक्रान्तत्वेन संक्रमसंभवात्स न प्राप्यते। पञ्चसंग्रहे तु–"पणतीसाएँ सुभाणं अपुव्वकरणालिगा अंते"त्ति प्रतीकेन वज्रर्षभनाराचवर्जितानां पञ्चत्रिंशत्प्रकृतीनामेवापूर्वकरणप्रथमावलिकान्ते जघन्यप्रदेशसंक्रम उक्तः। वज्रर्षभनाराचसंहननस्य तु स्वबन्धव्यवच्छेदसमये तन्मूलटीकायां स उक्त इति॥ १०९ ॥

**सम्मद्दिट्ठिअजोग्गाण सोलसण्हंपि असुभपगतीणं। थीवेएण सरिसगं नवरं पढमं तिपल्लेसु ॥ ११० ॥**

(चू०)—'सम्मद्दिट्ठिअजोग्गाण'त्ति–आदिल्लवज्जसंठाणसंघयणा अपसत्थविहायगति दुभगं दुस्सरं अणा-

दिज्जं णपुंसगं नीतागोयं एतासिं सोलसण्हं असुभपगतीणं जहा इत्थिवेदस्स विही भणिता तहेव भाणितव्वा। 'नवरं पढमं तिपल्लेसु'—जो एयासिं सोलसण्हं असुभपगतीणं जहण्णसंतकंमिगो तिपलितोवमट्ठितिएसु माणुस्सेसु उववण्णो अंतोमुहुत्तावसेसाऊ सम्मत्तं पडिवण्णो सेसं जहा पुव्वं तहा ॥ ११० ॥

(मलय०)-'सम्मदिट्ठि'त्ति-सम्यग्दृष्टेरयोग्यानां-षोडशानामशुभप्रकृतीनां प्रथमवर्जसंस्थानप्रथमवर्जसंहननाप्रशस्तविहायोगतिदुर्भग-दुःस्वरानादेयनपुंसकवेदनीचैर्गोत्रलक्षणानां स्त्रीवेदेन सदृशं वक्तव्यम् । यथा प्राक् स्त्रीवेदस्य जघन्यप्रदेशसंक्रमभावना कृता तथाऽत्रापि कर्तव्या । नवरमेतासां जघन्यप्रदेशसंक्रमस्वामी प्रथमं त्रिपल्योपमायुष्केषु मनुष्येषु मध्ये समुत्पन्नो वक्तव्यः अन्तर्मुहूर्तावशेषे चायुषि प्राप्तसम्यक्त्वः । शेषं तथैव वक्तव्यम् ॥ ११० ॥

(उ०)—सम्यग्दृष्टेरयोग्यानां षोडशानामप्यशुभप्रकृतीनामनाद्यसंस्थानसंहननाप्रशस्तविहायोगतिदुर्भगदुःस्वरानादेयनपुंसकवेदनीचैर्गोत्रलक्षणाना स्त्रीवेदेन समं वक्तव्यम् । नवरमेतासां जघन्यप्रदेशसंक्रमस्वामी प्रथमं त्रिपल्योपमायुष्केषु मनुष्येषु मध्ये समुत्पन्नो वाच्यः अन्तर्मुहूर्ते चायुषि । शेषे प्राप्तसम्यक्त्वः शेषं तथैव वाच्यम् ॥ ११० ॥

**णरातिरियाण तिपल्लस्संते ओरालियस्स पाउग्गा । तित्थयरस्स य बंधा जहन्नओ आलिगं गंतुं ॥१११॥**

(चू०)—जो जीवो ओरालियसत्तगजहण्णप्पदेससंतकम्मिगो तिपलितोवमट्ठितिएसु णरातिरिएसु उववण्णो तस्स उरालियसत्तगं वेदेमाणस्स विज्झायसंकमेण य परपगतिं संकामेमाणस्स तिपलितोवमचरिमसमए उरालियसत्तगस्स विज्झायसंकमेणं जहण्णओ पदेससंकमो भवति । 'तित्थयरस्स य बंधा जहण्णतो आलितं गंतुं—'

तित्थगरणामं बन्धमाणस्स बन्धावलिताए गताए जं बंधावलियपढमसमयबद्धं तित्थकरदलितं परपगतिं संकामेमाणस्स जहण्णपदेससंकमो अहा(पवत्त)संकमेण होति । जहण्णपदेससंकमो खवितकम्मंसितो जोएतव्वो । पएससंकमो सम्मत्तो ॥ १११ ॥

सम्मत्तं च संकमकरणम् ॥

(मलय०)—'नर'त्ति–नरतिरश्चां त्रिपल्योपमस्यान्ते औदारिकस्य प्रायोग्याः प्रकृतयो जघन्यप्रदेशसंक्रमयोग्याः । इयमत्र भावना–यो जीवः सकलान्यजीवापेक्षया सर्वजघन्यौदारिकसत्कर्मा सन् त्रिपल्योपमायुष्केषु तिर्यग्मनुष्येषु मध्ये समुत्पन्नस्तस्यौदारिकसप्तकमनुभवतो विध्यातसंक्रमेण परप्रकृतौ संक्रमयतश्च स्वायुषश्चरमसमये तस्यौदारिकसप्तकस्य जघन्यः प्रदेशसंक्रमो भवति । औदारिकस्य प्रायोग्या इत्यौदारिकसप्तकम् । 'तित्थयरस्स' इत्यादि–तीर्थकरनामकर्मणो बन्धं कुर्वता यत्प्रथमसमये बद्धं दलिकं तत् यदा परप्रकृतिषु यथाप्रवृत्तसंक्रमेण संक्रमयति तदा तीर्थकरनाम्नो जघन्यः प्रदेशसंक्रमो भवति । तदेवमुक्तः प्रदेशसंक्रमः, तदुक्तौ च समर्थितं संक्रमकरणम्॥

इत्याचार्यश्रीमलयगिरिविरचितायां कर्मप्रकृतिटीकायां संक्रमकरणं समाप्तम् ॥

(उ०)—नरतिरश्चां त्रिपल्योपमस्यान्ते औदारिकस्य प्रायोग्याः प्रकृतय औदारिकसप्तकलक्षणा जघन्यप्रदेशसंक्रमयोग्याः । एषाऽत्र भावना–यो जीवः सर्वान्यजीवापेक्षया सर्वजघन्यौदारिकसप्तकसत्कर्मा सन् त्रिपल्योपमायुष्केषु तिर्यङ्मनुष्येषु मध्ये समुत्पन्नस्तस्यौदारिकसप्तकमनुभवतो विध्यातसंक्रमेण तत्परप्रकृतौ संक्रमयतश्च स्वायुपश्चरमसमये तस्यौदारिकसप्तकस्य जघन्यः प्रदेशसंक्रमो भवति ।

तीर्थकरनामकर्मणो बन्धं कुर्वता यत्प्रथमसमये बद्धं दलिकं तद्बन्धावलिकातीतं सद्यदा परप्रकृतिषु यथाप्रवृत्तसंक्रमेण संक्रम्यते तदा तस्य जघन्यप्रदेशसंक्रमः । तदेवमुक्तः प्रदेशसंक्रमः, तदुक्तौ च समर्थितं संक्रमकरणम् ॥ १११ ॥

इत्युपाध्यायश्रीयशोविजयगणिविरचितायां कर्मप्रकृतिटीकायां संक्रमकरणम् ॥

जघन्यप्रदेशसंक्रमस्वामिनः । अयं प्रायः क्षपितकर्मांशानां बोध्य ।

| | |
|---|---|
| ज्ञाना० ४-दर्शना० ३ अवधिद्विकस्य | स्वस्वबन्धविच्छेदसमये अवधिलब्धिमताम् (यथाप्र० सं०)<br>" अवधिलब्धिरहितानाम् |
| निद्रा २ विघ्न ५-हास्य-रति-भय-जुगुप्सानाम् (११) | " यथाप्रवृत्तसंक्रमेण |
| ज्ञातस्य | असातस्यान्त्यबन्धसमये वर्त्तमानोऽनुपशमितमोहः क्षपणोद्यतः |
| सं० लोभस्य | क्षपणोद्यतानुपशमितमोहानामपूर्वकरणप्रथमावलिकान्त्यसमये |
| स्त्रीवेद-स्त्यानर्द्धित्रिकयोः | क्षपणोद्यतानां परिपालित १३२ सा० सम्यक्त्वानां यथाप्रवृत्तकरणान्ते विध्यातेन |
| मिथ्यात्वस्य | " " " " |
| सम्यक्त्व-मिश्रयोः | ह्रस्वगुणसंक्रमेणापूर्य १३२ सा० सम्यक्त्वं धृत्वा मिथ्यात्वप्राप्तानां उद्वलनेन उपान्त्यखण्डस्यान्तिमसमये परप्रक्षेपेण |

| | |
|---|---|
| अनन्तानुबन्धिचतुर्णाम् | चतुर्मोहोपशमं कृत्वा मिथ्यात्वं प्राप्य पुन. १३२ सा० सम्यक्त्वं प्राप्य क्षपणोद्यतानां यथाप्र० करणान्ते विध्यातेन |
| असात-कुवर्णादि ९-उपघात-अस्थिरअशुभ-अयशसां (१४) | देशोनपूर्वकोटिसंयमितानां क्षपकाणां यथाप्र० करणान्त्यसमये यथाप्रवृत्तसंक्रमेण |
| मध्यमाष्टकषायाणाम् | शीघ्रक्षपकाणां (पञ्चसं० मतेन देशोनपू० को० सयमितानां क्षपकाणां) यथाप्र० करणान्ते (विध्यातेन) |
| संज्व० ३-पुवेदानाम् | क्षपकाणां स्वस्ववन्धान्तसमये चरमप्रक्षेपे ( सर्वसं० ) |
| अरति-शोकयोः | असाताज० प्र० संक्रामकवत् |
| सुर २-नरक २-वै० ७ कानाम् (११) | पञ्चेन्द्रियत्वे सादिह्रस्वबन्धं कृत्वा उ० स्थि० नारकत्वं प्राप्य पं० तिर्यक्षु उत्पद्यैकेन्द्रियत्व प्राप्तानां चिरोद्वलनयोपान्त्यखण्डान्तिमसमये परप्रक्षेपे |
| मनुष्यद्विकोच्चैर्गोत्रयो | पूर्वोक्त (सुरद्विकविधिना) विधिना अग्निवायुमध्ये प्राप्तानां (नवरं सू० एकें० भवे वद्धं इति आदौ वक्तव्यं) |
| आहारकसप्तकस्य | ह्रस्वकालं वध्वा अविरतिं प्राप्तानां चिरोद्वलनयोपान्त्यखण्डस्यान्तिमसमये परप्रक्षेपे |
| तिर्यग् २-उद्योतयोः | १६३ सा० ४ प यं यावदवध्वा क्षपितकर्मांशः यथा प्र० करणान्ते |

| | |
|---|---|
| भूजाति ४-स्थाo-आतo-सूo-साधारणानाम् अपर्याप्ताना च (९) | १८८ साo ४ पल्यं ” ” ” ” |
| पंचेo-वज्रर्षo-समचo-तैo ७-सुखगति सुवर्णादि ११-अगुo-पराo-उच्छ्वाo-निर्माo त्रस १० (३६) | क्षपितकर्मांशानां क्षपकाणां ८ मे प्रथमावलिकान्ते (पंचसंo मतेन वज्रर्षभस्य स्वबन्धान्ते) |
| शुभसंहननसंस्थान १०-कुखगति-दुर्भगदुःस्वर-अनादेय-नपुo-नीचै. (१६) | स्त्रीवेदतुल्यं वाच्यं (नवरं त्रिपल्यायुर्नृगतावुत्पद्यान्तर्मुo शेषे प्राप्तसम्यक्त्वः, शेषं स्त्रीसमं ) |
| औदारिकसप्तकस्य | सर्वजघन्यौदाo ७ प्रदेशसत्ताकः त्रिपल्यायुर्नरतिर्यक्त्वं प्राप्यायुरन्तसमये विध्यातेन संक्रामकः |
| जिननाम्न | प्रथमसमयबद्धदलिकं यथाप्रवृत्तसंक्रमेण संक्रामकः |

इति कर्मप्रकृतौ संक्रमकरणं समाप्तम् ॥

## अथोद्वर्त्तनापवर्त्तनाकरणे ॥

भणियं संकमकरणं। इदाणिं ततियचउत्थातो वट्टणा(ओवट्टणा)तो भण्णंति। ताओ उवट्टणओवट्टणातो ठ्विति-अणुभागाणं भण्णति—

**उव्वट्टणा ठिईए उदयावलियाइ बाहिरठिईणं । होइ अबाहा अइत्थावणा उ जावालिया हस्सा ॥ १ ॥**

(चू०)—'उवट्टणा ठ्वितीए'–जा ठ्वितीए उवट्टणा 'उदतावलिताए बाहिरट्ठितीणं'–उदयावलियापविट्ठा ठ्विती ण उवट्टेज्जति, उदयावलितागतं दलितं करणाय ण भवति त्ति, एतेण णिमित्तेणं उदयावलिताबाहिरट्ठिती उवट्टिज्जनि। सा केत्तियं उवट्टिज्जति ? भण्णइ–जाए ठिइए जेत्तिएणं ठितिकालो पूरति सा ठ्विती तत्तित उवट्टिज्जति । एस णियमो–वज्झमाणपगतीए जा अबाहा ताए अबाहाए तुल्ला वा हीणा वा जासिं पुव्वबद्धाणं पगतीणं ठ्विती सा ण उव्वट्टिज्जति, जासिं समयादिणा अबाहातो अहिता ठ्विती तासिं अत्थि उव्वट्टणा। अतित्थवणाणियमणत्थं भण्णाति–'होति अबाहा अतित्थावणाउ'त्ति। जत्तिता अबाहा तत्तिनं अतित्थावेत्तु परतोत्थ भवति उक्कोसेणं। 'जावालिया हस्स'त्ति–समए समए परिहीयमाणा हेट्ठओ होइ अबाहा जाव आवलियाए सेसाए हस्सा अबाहातित्थावणा भवति । परतो आवलिया अतित्थावणा सव्वत्थ जाव अंतं ताव भावितव्वं ॥ १ ॥

(मलय०)–तदेवमुक्तं संक्रमकरणम् । संप्रत्युद्देशक्रमेणोद्वर्तनापवर्तने वक्तुमवसरप्राप्ते । ते च द्वे अपि स्थित्यनुभागविषये । तत्र

प्रथमतः स्थितेरुद्वर्तनापवर्तने वक्तव्ये, स्थितौ सत्यामनुभागसंभवात् । तत्राप्युद्देशक्रमप्रामाण्यानुसरणात् प्रथमतः स्थितेरुद्वर्तनामेवाह—'उव्वट्टण'त्ति—स्थितेरुद्वर्तना उदयावलिकाया बाह्यानां स्थितीनामवगन्तव्या । उदयावलिका तु सकलकरणायोग्येति कृत्वा सा प्रतिषिध्यते । अपि च बध्यमानप्रकृतेर्यावती अबाधा तया तुल्या वा हीना वा पूर्वबद्धप्रकृतीनां या स्थितिः सा नोद्वर्त्यते—सा उत्पाट्य तत ऊर्ध्वं बध्यमानप्रकृतेरबाधाया उपरि न निक्षिप्यत इत्यर्थः, अबाधाकालान्तःप्रविष्टत्वात् । या पुनरबाधाकालादुपरितनी सा उद्वर्त्यत एव । तदेवमबाधान्तःप्रविष्टाः सर्वा अपि स्थितय उद्वर्तनामधिकृत्यातिक्रमणीया भवन्ति—परित्याज्या भवन्तीत्यर्थः । अतिक्रमणीयस्थितिप्रमाणनिरूपणार्थमेवाह—'होइ' इत्यादि—भवति अबाधा अतीत्थापना—उल्लंघनीया । एषोत्कर्षतोऽतीत्थापना । सा च हीना हीनतरा तावदवगन्तव्या यावत् इस्वा जघन्याऽतीत्थापना आवलिका—आवलिकामात्रा भवति । इयमत्र भावना—अबाधान्तर्गतं कर्मदलिकमुद्वर्तनायोग्यं न भवति किं त्वबाधायाः परत एव । तथा च सति यैवोत्कृष्टाऽबाधा सैवोत्कृष्टाऽतीत्थापना, समयोना उत्कृष्टाऽबाधा समयोनोत्कृष्टाऽतीत्थापना, द्विसमयोनोत्कृष्टाऽबाधा द्विसमयोनोत्कृष्टाऽतीत्थापना । एवं समयसमयहान्याऽतीत्थापना तावद्वाच्या यावज्जघन्याऽबाधाऽन्तर्मुहूर्तप्रमाणा । ततोऽपि जघन्यतराऽतीत्थापना आवलिकामात्रं भवति, तच्चोदयावलिकालक्षणमवसेयम् । तथाहि—उदयावलिकान्तर्गताः स्थितयो नोद्वर्त्यन्ते "उव्वट्टणा ठिईए उदयावलियाए बाहिरठिईणं" इति वचनात् । ननु यदा तदा वा बन्धे सत्युद्वर्तना प्रवर्तिष्यते "आबंधा उक्कड्ढइ" इति वचनात्, तत उदयावलिकागताः स्थितयोऽबाधान्तर्गतत्वेन नोद्वर्तिष्यन्ते, किमुदयावलिकाग्रहणेन ? तदयुक्तम्, अभिप्रायापरिज्ञानात् । अबाधान्तर्गताः स्थितयो नोद्वर्त्यन्त इति । किमुक्तं भवति ? अबाधान्तर्गताः स्थितयः स्वस्थानादुत्पाट्याबाधाया उपरि न निक्षिप्यते । अबाधाया मध्ये पुनस्तासां वक्ष्यमाणक्रमेणोद्वर्तनानिक्षेपौ प्रवर्तमानौ न विरुध्येते । तत

उदयावलिकान्तर्गता अप्युद्वर्तनीयाः प्राप्नुवन्तीति प्रतिषिध्यन्ते ॥ १ ॥

(उ०)—अथोद्देशक्रमेणोद्वर्त्तनापवर्त्तने वक्तुमवसरप्राप्ते । ते च द्वे अपि स्थित्यनुभागविषये । तत्र प्रथमतः स्थितेरुद्वर्त्तनामाह—स्थितेरुद्वर्त्तनोदयावलिकाया बाह्यानां स्थितीनां ज्ञेया, उदयावलिकायाः सकलकरणायोग्यत्वेन प्रतिषेधात् । अपि च बध्यमानप्रकृतेरबाधायास्तुल्या हीना वा पूर्वबद्धप्रकृतीनां स्थितिर्नोद्वर्त्तनीया—सोत्पाट्य तत ऊर्ध्वं बध्यमानप्रकृतेरबाधाया उपरि न निक्षिप्यत इत्यर्थः,अबाधाकालान्तः प्रविष्टत्वात् । या पुनरबाधाकालादुपरितनी सा स्थितिपर्यन्तमुद्वर्त्यत एव । तदेवमबाधान्तःप्रविष्टाः सर्वा अपि स्थितय ऊर्ध्वमुद्वर्त्तनामधिकृत्यातिक्रमणीया भवन्ति—त्याज्या भवन्तीत्यर्थः । अतिक्रमणीयस्थितिप्रमाणमाह—भवत्यबाधाऽतीत्थापना—अतिक्रमणीयेत्यर्थः । तथा चाबाधान्तर्गतं कर्मदलिकं नोद्वर्त्तनायोग्यं किंत्वबाधायाः परत एवेति । यैवोत्कृष्टाऽबाधा सैवोत्कृष्टाऽतीत्थापनेति ।तत एकादिसमयहीनयाऽबाधया हीनहीनतराऽतीत्थापना तावद्वाच्या यावज्जघन्याऽबाधान्तर्मुहूर्त्तप्रमाणा जघन्यातीत्थापना । ततोऽपि जघन्यतराऽतीत्थापना यावदावलिका नामोदयावलिका तावद्वाच्या, उदयावलिकान्तर्गतानां स्थितीनामनुद्वर्त्तयनीयत्वप्रतिपादनात् । ननु 'आबंधाउक्कड्ढइ त्ति—वचनाद्बन्धे सत्येवोद्वर्त्तना प्रवर्तिष्यते, तत उदयावलिकागताः स्थितयोऽबाधान्तर्गतत्वेनैव नोद्वर्त्तिष्यन्ते, किं तासां पृथग्ग्रहणेन ? मैवम्, अबाधान्तर्गतानां स्थितीनामबाधाया उपर्येवोत्पाट्य निक्षेपप्रतिषेधात्, अबाधाया मध्ये पुनस्तासां वक्ष्यमाणक्रमेणोद्वर्त्तनानिक्षेपप्रवृत्त्यविरोधात्, तत एवमुदयावलिकान्तर्गतानामप्युद्वर्त्तना प्रसक्तेति तन्निराकरणे नाप्रसक्तप्रतिषेधः ॥ १ ॥

इदाणिं णिक्खेवपरूवणत्थं भण्णति—

**आवलियअसंखभागाइ जाव कम्मट्ठिइ त्ति णिक्खेवो । समउत्तरालियाए साबाहाए भवे ऊणे ॥ २ ॥**

(चू०)—'आवलियअसंखभागादि'त्ति—जहण्णेणं आवलिताए असंखेज्जतिभागमेत्तासु ठिदिसु निक्खेवो ट्ठिनिमंतग्गानो आवलितं आवलिनअसंखेज्जतिभागं च ओतरेत्तु जा ठिति उवट्टेइ तं पडुच आवलिता अतित्थावणा आवलियाए असंखेज्जत्तिभागो णिक्खेवो। तओ हिट्ठिल्लं ठितिं पडुच समयुत्तरगे णिक्खेवो अतित्थावणा नत्तिया चेव। एवं समए समए णिक्खेवो वड्ढमाणो जाव कम्मट्ठिति त्ति ताव णिक्खेवो। जा कम्मस्स उक्कोसा ट्ठिति सा सव्वा णिक्खेवो भवति। 'समउत्तरालियाए सावाहाए भवे ऊणे'त्ति—सा कम्मट्ठिति समउत्तराए आवलिताए उक्कोसअवाहाए य ऊणा सव्वो णिक्खेवो भवति। कहं? भण्णइ—वन्धावलियाए गयाए वितियसमए उवट्टेति एवं समउत्तरिआ आवलिया गया, अवाहाए णिक्खेवो णत्थि त्ति अवाहा य तहा, तेण समउत्तराए आवलिआए सावाहाए(ऊ)णा भवति ॥ २ ॥

(मलय०)—संप्रतिनिक्षेपप्ररूपणार्थमाह—'आवलिय'त्ति। इह निक्षेपो द्विधा—जघन्य उत्कृष्टश्च। तत्रावलिकाया असंख्येयभागमात्रासु स्थितिषु यः कर्मदलिकनिक्षेपः स जघन्यः। तथाहि—सर्वोत्कृष्टात् स्थित्यग्रादध आवलिकामावलिकाया असंख्येयं च भागमधोऽवतीर्य ततोऽधस्तनी या स्थितिस्तस्या दलिकमतीत्थापनावलिकामात्रमतिक्रम्योपरितनीष्वेवावलिकाया असंख्येयभागभाविनीषु स्थितिषु निक्षिप्यते, नावलिकाया मध्येऽपि, तथास्वाभाव्यात्। ततोऽसौ जघन्यो दलिकनिक्षेपः। एवं च सति आवलिकाया असंख्येयतमेन भागेनाधिकास्वावलिकामात्रासु स्थितिषु उद्वर्तनं न भवतीति सिद्धम्। तथा च सत्युत्कृष्टस्थितिवन्धे उद्वर्तनायोग्याः स्थितयो वन्धावलिकामवाधामुपरितनीमावलिकामसंख्येयभागाधिकां मुक्त्वा शेषा एव द्रष्टव्याः। तथाहि—वधावलि-

कान्तर्गतं सकलकरणायोग्यमिति कृत्वा बन्धावलिकान्तर्गताः स्थितयो नोद्वर्तनायोग्याः । तथाऽबाधान्तर्गता अपि नोद्वर्तनायोग्याः, तासामतीत्थापनात्वेन प्राक् प्रतिपादितत्वात् । असंख्येयभागाधिकावलिकामात्रभाविन्यश्चोपरितन्यः स्थितयः प्रागुक्तयुक्तेरेव नोद्वर्तनायोग्याः । इदानीं निक्षेपश्चिन्त्यते । तत्र यदावलिकामावलिकाया असंख्येयभागं चोपरिष्टादधोऽवतीर्य द्वितीयाऽधस्तनी स्थितिरुद्वर्त्यते, तदा समयाधिक आवलिकाया असंख्येयभागो निक्षेपविषयः । यदा तु तृतीया स्थितिरुद्वर्त्यते तदा द्विसमयाधिकः । एवं समयवृद्ध्या तावद्दलिकनिक्षेपो वर्धते यावदुत्कृष्टो भवति । स च कियान् भवतीति चेत्, उच्यते—'समय' इत्यादि । समयाधिकावलिकयाऽबाधया च हीना सर्वा कर्मस्थितिः । तथाहि—अबाधोपरिस्थस्थितीनामुद्वर्तना भवति । तत्राप्यबाधाया उपरितने स्थितिस्थाने उद्वर्त्यमानेऽबाधाया उपरि दलिकनिक्षेपो भवति, नाबाधाया मध्येऽपि, उद्वर्त्यमानदलिकस्योद्वर्त्यमानस्थितेरूर्ध्वमेव निक्षेपात् । तत्राप्युद्वर्त्यमानस्थितेरुपरि आवलिकामात्राः स्थितीरतिक्रम्योपरितनीषु स्थितिषु सर्वासु दलिकनिक्षेपो भवति । अतोऽतीत्थापनावलिकामुद्वर्त्यमानां च समयमात्रां स्थितिमबाधां च वर्जयित्वा शेषा सर्वापि कर्मस्थितिरुत्कृष्टो दलिकनिक्षेपविषयः । उक्तं च पञ्चसंग्रहमूलटीकायां—"[1]समयोत्तरावलिकाया साबाधाया हीना यावदुत्कृष्टा कर्मस्थितिस्तावद्दलिकनिक्षेपो भवति" । यतोऽबाधोपरिस्थस्थितीनामुद्वर्त्तना भवति, सापि अतीत्थापनामुल्लङ्घ्योद्वर्त्यमानायामपि स्थितौ न दलिकनिक्षेपो भवति, अतः समयाधिकावलिकाबाधावर्जितासु शेषासु सर्वासु स्थितिषु दलिकनिक्षेपो भवतीति । तदेवमबाधाया उपरितनं समयमात्रमुद्वर्त्यमानं स्थितिस्थानमधिकृत्योत्कृष्टो दलिकनिक्षेपविषयः प्राप्यते । सर्वोपरितनं तु स्थितिस्थानमुद्वर्त्यमानमपेक्ष्य जघन्यो दलिकनिक्षेपविषयः । उक्तं च—"[2]आवाहोवरिठाणगदलं पडुच्चेह परमनिक्खेवो । चरिमुव्वट्टणठाणं पडुच्च इह जायइ जहण्णो ॥" इति ॥ २ ॥

---

१ पञ्चसंग्रहः उद्वर्त्तनाकरणे गा० ३     २ प० सं० उद्व० करणे गा० ४

(उ०)–सम्प्रति निक्षेपनिरूपणायाह—इह निक्षेपो द्विधा जघन्य उत्कृष्टश्च । तत्रावलिकाया असंख्येयभागमात्रासु स्थितिषु यः कर्मदलिकनिक्षेपः स जघन्यः, तथाहि–सर्वोत्कृष्टात् स्थित्यग्रादध आवलिकामावलिकाया असंख्येयं च भागमवतीर्य याऽधस्तनी स्थितिरायाति तस्या दलिकमतीत्थापनारूपमावलिकामतिक्रम्योपरितनीष्वेवावलिकाया असंख्येयभागभाविनीषु निक्षिप्यते, नावलिकाया मध्येऽपि, आवलिकां मुक्त्वैवाधस्तनस्थितीनामुपरि संक्रमणस्वाभाव्यात्, ततोऽसावेतावान् जघन्यो दलिकनिक्षेपविषयः । एवं च सत्यावलिकाया असंख्येयतमेन भागेनाधिकास्वावलिकामात्रासु स्थितिषूद्वर्त्तनं न भवतीति सिद्धम् । तथा च सत्युत्कृष्टस्थितिबन्धे उद्वर्त्तनायोग्याः स्थितयो बन्धावलिकामबाधामुपरितनीं चावलिकामसंख्येयभागाधिकां मुक्त्वा शेषा एव द्रष्टव्याः, बन्धावलिकायाः सकलकरणायोग्यत्वेनाबाधायाश्च प्रागतीत्थापनात्वप्रतिपादनेन बन्धावलिकान्तर्गतानामबाधान्तर्गतानां च स्थितीनामुद्वर्त्तनायोग्यत्वात्, असंख्येयभागाधिकावलिकामात्रभाविनीनां चोपरितनीनां स्थितीनां प्रागुक्तयुक्तेरेव तथात्वात् । तत्र यदावलिकामावलिकाया असंख्येयभागं चोपरितनस्थानादधोऽवतीर्य द्वितीयाऽधस्तनी स्थितिरुद्वर्त्यते तदा समयाधिक आवलिकाया असंख्येयभागो निक्षेपविषयः । यदा तु तृतीया स्थितिरुद्वर्त्यते तदा द्विसमयाधिकः । एवं समयप्रवृद्ध्या वर्धमानो दलिकनिक्षेपस्तावद्वाच्यो यावदुत्कृष्टो भवति । तस्य च प्रमाणं समयाधिकावलिकयाऽबाधया च हीना सर्वा कर्मस्थितिः । तथाहि–अबाधाया उपरि स्वस्थितीनामुद्वर्त्तना भवति, तत्राप्यबाधोपरितनस्य स्थितिस्थानस्योद्वर्त्यमानस्य दलिकमबाधाया उपरि निक्षिप्यते, न तु तन्मध्येऽपि, उद्वर्त्यमानदलिकस्योद्वर्त्यमानस्थितेरूर्ध्वमेव निक्षेपात् । तत्राप्युद्वर्त्यमानस्थितेरुपर्यावलिकामात्राः स्थितीरतिक्रम्योपरितनीषु स्थितिषु सर्वासु दलिकनिक्षेपो भवति । ततोऽतीत्थापनावलिकामुद्वर्त्यमानां समयमात्रां स्थितिमबाधां च वर्जयित्वा शेषा सर्वाऽपि स्थितिरुत्कृष्टो दलिकनिक्षेपविषय इति । अयमुत्कृष्टो

दलिकनिक्षेपविषयोऽबाधाया उपरितनं समयमात्रमुद्वर्त्यमानं स्थितिस्थानं प्रतीत्य प्राप्यते। सर्वोपरितनं तु स्थितिस्थानमुद्वर्त्यमानं प्रतीत्य जघन्यो दलिकनिक्षेपविषयो लभ्यते। उक्तं च पञ्चसंग्रहे—"आवाहोवरि ठाणगदलं पडुच्चेह परमणिक्खेवो। चरिमुव्वट्टण ठाणं पडुच्च इह जायइ जहन्नो॥" इति॥ २॥

इयाणिं तस्स अववातो भण्णति—

**णिव्वाघाएणेवं वाघाए संतकम्महिगबंधे। आवलिअसंखभागाइ होइ अइत्थावणा नवरं॥ ३॥**

(चू०)—जति णिव्वाघातो भवति तो एवं उव्वट्टणा भवति। जदा वाघातो भवति तदा अण्णो जहण्णो णिक्खेवो भवति, अण्णा जहण्णिता अतित्थावणा भवति। तं णिरूवेति—'वाघाते'त्ति। वग्घोक्कोसो भण्णति—संतकम्म[आवलियाए] हिगबन्धेति'त्ति। जति संतकम्माओ ठितिं आवड्ढिगं (अब्भहिगं) बन्धति तो वग्घातो वुच्चति। तंमि वाघाए 'आवलिअसंखभागाइ होइ अइत्थावणा णवरि'त्ति संतकम्मठितिओ समउत्तरं ठितिं बन्धमाणस्स जो संतकम्मस्स चरिमा ठिती सा ण उवट्टिज्जति, दुचरिमा ठिती ण उवट्टिज्जति, एवं जाव आवलिया अन्नाए य आवलियाए असंखेज्जतिभागो। एवं समयाहिगं ठितिगंमि। समयाहियं ठितिं बन्धमाणस्स जाव आवलिताए असंखेज्जतिभागाहितं ठितिं बन्धमाणस्स तहा वि संतकम्मस्स चरिमट्ठिति न उव्वट्टिज्जति। पुणो वि समताहिगादि जाव आवलियाए बिहिं असंखेज्जतिभागेहिं अहियं संतकम्मातो ट्ठितिं बन्धमाणस्स एगो आवलियाए असंखेज्जतिभागो अतित्थावणा, एगो आवलियाए असंखेज्जतिभागो णिक्खेवो, ताहे संतकम्मस्स

चरिमट्ठिती उव्वट्टिज्जति, ततो समयाहियादिए विसुं सव्वेहिं उवट्टत्ति। ततो अतित्थावणा वड्ढति जाव आवलिया पुण्णा। ततो पच्छा णिक्खेवो पवड्ढति पुव्वकमेण। इदाणिं एएसिं अप्पाबहुगं—उव्वट्टिज्जमाणीणं ठितीणं जहन्निया अतित्थावणा जहण्णतो त णिक्खेवो, एते णं दो वि तुल्ला सव्वत्थोवा, एक्केक्को आवलियाए असंखेज्जतिभागो त्ति काउं। उक्कोसिया अतित्थावणा असंखेज्जगुणा, सा य अबाहा। उक्कोसतो ट्ठितिनिक्खेवो असंखेज्जगुणो, सो य कम्मट्ठिति वि समउत्तरावलियाए अवाहाए य ऊणा। सव्वाय कम्मट्ठिती विसेसाहिता ॥३॥

(मलय०)-एषोऽव्याघाते दलिकनिक्षेपविधिरुक्तः। व्याघाते पुनरेवं—'निव्वाघाएण'त्ति एवं-पूर्वोक्तेन प्रकारेण दलिकनिक्षेपो निर्व्याघातेन-व्याघाताभावेन द्रष्टव्यः। व्याघाते पुनः प्राक्तनस्थितिसत्कर्मापेक्षयाऽभ्यधिकाभिनवकर्मबन्धरूपे आवलिकाऽसंख्येयभागादिकाऽतीत्थापना भवति। निक्षेपोऽप्यावलिकागतासंख्येभागादिकः। इयमत्र भावना—प्राक्तनसत्कर्मस्थित्यपेक्षया समयादिनाऽभ्यधिको योऽभिनवकर्मबन्धः स व्याघात उच्यते। तस्मिन् सत्यतीत्थापना आवलिकासंख्येयभागादिका भवति। तथाहि—प्राक्तनसत्कर्मस्थितेः सकाशात् समयमात्रेणाभ्यधिकेऽभिनवकर्मबन्धे सति प्राक्तनसत्कर्मणोऽन्त्या वा द्विचरमा वा स्थितिर्नोद्वर्त्यते। एवं समयद्वयेन समयत्रयेण यावदावलिकाया असंख्येयतमेनापि भागेनाभ्यधिकेऽभिनवकर्मबन्धे द्रष्टव्यम्। यदा पुनर्द्वाभ्यामावलिकाया असंख्येयतमाभ्यां भागाभ्यामभ्यधिकोऽभिनवकर्मबन्ध उपजायते तदा प्राक्तनसत्कर्मणोऽन्त्या स्थितिरुद्वर्त्यते। उद्वर्त्य चावलिकायाः प्रथममसंख्येयतमं भागमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते। एतावतीत्थापनानिक्षेपौ जघन्यौ। यदा पुनः समयाधिकाभ्यां द्वाभ्यामावलिकाया असंख्येयतमाभ्यां भागाभ्यामधिकोऽभिनवकर्मबन्धस्तदा आवलिकायाः प्रथममसंख्येयतमं भागं सम-

याधिकमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते। एवमभिनवकर्मबन्धस्य समयादिवृद्ध्यावतीत्थापना प्रवर्धते। सा च तावद्याव-दावलिका परिपूर्णा भवति। निक्षेपस्तु सर्वत्रापि तावन्मात्र एव भवति। तत ऊर्ध्वं पुनरभिनवकर्मबन्धवृद्धौ निक्षेप एव केवलो वर्धते, नातीत्थापना। यावच्चाभिनवकर्मबन्धः प्राक्तनस्थितिसत्कर्मणः सकाशात् द्वाभ्यामावलिकाया असंख्येयतमाभ्यां भागाभ्यामधिको न भवति तावत् प्राक्तनसत्कर्मणश्चरमस्थितेरध आवलिकामसंख्येयभागाधिकामतिक्रम्य ततोऽधस्तनीरेव स्थितीरुद्वर्तयति। तत्रापि यदा आवलिकामसंख्येयभागाधिकामतिक्रम्य ततोऽनन्तरमेवाधस्तनीं स्थितिमुद्वर्तयति तदा आवलिकामतिक्रम्योपरितने आवलिकाया असंख्येयतमे भागे निक्षिपति। यदा तु द्वितीयामधस्तनीं स्थितिमुद्वर्तयति तदा समयाधिकेऽसंख्येयतमे भागे निक्षिपति। एवंप्रकारेण द्रष्टव्यम्। संप्रत्यल्पबहुत्वमुच्यते—या जघन्याऽतीत्थापना यश्च जघन्यो निक्षेपः एतौ द्वावपि सर्वस्तोकौ परस्परं च तुल्यौ, यतो द्वावप्येतौ आवलिकासत्कासंख्येयतमभागमात्रौ। ताभ्यामसंख्येयगुणोत्कृष्टाऽतीत्थापना, तस्या उत्कृष्टाबाधारूपत्वात्। ततोऽप्युत्कृष्टो निक्षेपोऽसंख्येयगुणः, यतोऽसौ समयाधिकावलिकयाऽबाधया च हीना सर्वा कर्मस्थितिः। ततोऽपि सर्वा कर्मस्थितिर्विशेषाधिका ॥ ३ ॥

(उ०)—एवमेषोऽव्याघाते दलिकनिक्षेपविधिरुक्तः। व्याघाते पुनरेवं—प्राक्तनस्थितिसत्कर्मापेक्षयाऽभ्यधिकाभिनवकर्मबन्धरूपे आव-लिकाऽसंख्येयभागादिकातीत्थापना भवति, निक्षेपोऽप्यावलिकागतासंख्येयभागादिः। नवरमिति पुनरर्थे भिन्नक्रमेण योज्यते, तच्च योजितमेव। अयमिह भावार्थः—प्राक्तनसत्कर्मस्थित्यपेक्षया समयादिनाऽभ्यधिको योऽभिनवकर्मबन्धः स इह व्याघातोऽभिप्रेतः, तत्राती-त्थापना जघन्यावलिकाऽसंख्येयभागमात्रा। तथाहि—प्राक्तनसत्कर्मस्थितेः समयमात्राधिकेऽभिनवकर्मबन्धे सति प्राक्तनकर्मणश्चरमा वा द्विचरमा वा स्थितिर्नोद्वर्त्यते, एवं यावदावलिकाऽन्यस्याश्चावलिकाया असङ्ख्येयतमो भाग इति। एवं समयद्वयेन समयत्रयेण यावदा-

वलिकाया असङ्ख्येयतमेनापि भागेनाभ्यधिकेऽभिनवकर्मबन्धे द्रष्टव्यम् । यदा पुनर्द्वाभ्यामावलिकाया असङ्ख्येयतमाभ्यां भागाभ्यामधिको नूतनः कर्मबन्धो जायते तदा प्राक्तनसत्कर्मणोऽन्त्यस्थितिरुद्वर्त्यते, उद्वर्त्य चावलिकाया आद्यमसङ्ख्येयभागमतिक्रम्य द्वितीयेऽसङ्ख्येयतमे भागे निक्षिप्यते । एतावतीत्थापनानिक्षेपौ जघन्यौ । यदा तु समयाधिकाभ्यां द्वाभ्यामावलिकाया असङ्ख्येयतमाभ्यां भागाभ्यामधिकोऽभिनवकर्मबन्धस्तदावलिकायाः प्रथममसङ्ख्येयतमं भागं समयाधिकमतिक्रम्य द्वितीयेऽसङ्ख्येयतमे भागे निक्षिप्यते । एवमभिनवकर्मबन्धस्य समयादिवृद्धावतीत्थापना प्रवर्धते, सा च तावद्यावदावलिका परिपूर्णा भवति, निक्षेपस्त्वेतावत्यतीत्थापनाविधौ तावन्मात्र एव भवति । तत ऊर्ध्वं पुनरपि नवकर्मबन्धवृद्धौ निक्षेप एव केवलो वर्धते, नातीत्थापना । उक्तं च–"[1]आवलिदोसंखसा अइ वड्ढइ अहिणवो उ ठिइबंधो । उव्वट्टइ तो चरमा एव जावलिया अइत्थवणा ॥१॥ अइत्थावणालिआए पुण्णाए वड्ढइ त्ति णिक्खेवो ।" यावद्याभिनवकर्मबन्धः प्राक्तनस्थितिसत्कर्मणः सकाशादावलिकाया असङ्ख्येयतमभागाभ्यां द्वाभ्यामधिको न भवति, तावत्प्राक्तनसत्कर्मणश्चरमस्थितेरध आवलिकामसङ्ख्येयभागाधिकामुल्लङ्घ्य ततोऽधस्तनीरेव स्थितीरुद्वर्त्तयति । तत्राप्यसङ्ख्येयभागाधिकामावलिकामतिक्रम्य तदनन्तरमेवाधस्तनीं स्थितिमुद्वर्त्तयन्नावलिकामतिक्रम्योपरितने आवलिकाया असङ्ख्येयतमे भागे निक्षिपति, द्वितीयां चाधस्तनीं स्थितिमुद्वर्त्तयन् समयाधिकेऽसङ्ख्येयतमे भागे निक्षिपतीत्येवंप्रकारेण भावनीयम् । अल्पबहुत्वमुच्यते–सर्वस्तोकौ जघन्यातीत्थापनाजघन्यनिक्षेपौ, मिथश्च तुल्यौ, द्वयोरप्यावलिकासत्कासङ्ख्येतमभागमात्रत्वात् । ताभ्यामुत्कृष्टातीत्थापनाऽसङ्ख्येयगुणा, तस्या उत्कृष्टाबाधारूपत्वात् । ततोऽप्युत्कृष्टो निक्षेपोऽसङ्ख्येयगुणः, समयाधिकयाऽऽवलिकयाऽबाधया च हीना या सर्वकर्मस्थितिस्तत्प्रमाणत्वात् । ततोऽपि सर्वा कर्मस्थितिर्विशेषाधिका, उत्कृष्टनिक्षेपान्न्यूनीकृतस्थितेः पूरणात् ॥ २ ॥

१ पं० सं० उद्व० करणे गा० ७

## निर्व्याघातोद्वर्त्तनाविधेश्चित्रम् ॥




⁑ अनुद्वर्त्तनीयाऽपि अवाधासत्का अवाधायामेव उद्वर्त्यन्ते नावाधोपरितनासु इति उद्वर्त्तनव्यपदेशानर्हाऽवाधा ।

यावत् भागद्वयाधिको बन्धो न तावदुद्वर्त्तनाविधिः ॥

[ व्याघातोद्वर्त्तनायाम् ] इमा सर्वाः स्थितयः आवलिकामतिक्रम्याग्रेतनासु सर्वासु संक्रामन्ति



इयाणिं ठितिओवट्टणा भणति—

**उव्वट्टंतो य ठिइं उदयावलिबाहिरा ठिइविसेसा । णिक्खिवइ तइयभागे समयहिगे सेसमइवइय ॥४॥**

**वड्ढइ तत्तोऽइत्थावणाओ जावालिगा हवइ पुन्ना । तो णिक्खेवो समयाहिगालिगदुगूणकम्मठिई ॥५॥**

(चू०)—'उव्वट्टंतो य ठिइं'ति–ठितिउव्वट्टंतो वि उदयावलिता गता ण उवट्टेति । 'उदयावलिबाहिरा ट्ठितिविसेसा' इति–उदयावलियाए बाहिरा जे ठितिविसेसा ते उवट्टेति । 'ठितिविसेसा' इति ठितिविकप्पा । समयाहियआवलियाठितीयं, एवं बिसमयाहियं तिसमयाहियं ति जाव बन्धुदयदुगावलिनूणं उक्कोसियं ठितिं उव्वट्टेति । 'णिक्खिवइ तइयभागे समयहिए सेसमइवइय'त्ति–'णिक्खेवति' छुभति, 'ततिलभागे समयाहिगे' आवलियाए हेट्ठिमे तिभागे समयाहिगे णिक्खेवेइ, आवलियाए दोभागे समयूणे अतित्थावेउणं आवलियाए उवरिमं ट्ठितिं णिक्खेवति । ततो समयाहिताए ट्ठितिए तत्तिओ चेव णिक्खिवो । 'वड्ढति तत्तो अतित्थावणाओ' । ततो अतित्थावणा वड्ढति णिक्खेवो तत्तिओ चेव । 'जावालिगा हवइ पुन्न'त्ति–जाव आवलिका पुण्णा भवति ताव । तो णिक्खेवो'त्ति–ततो णिक्खेवो वड्ढति समए समए । केत्तितं जाव वड्ढति? 'समयाहिगावलिगदुगूणकम्मट्ठिति'–दोहिं आवलिगाहिं समयाहिताहि ऊणा कम्मट्ठिति ताव वड्ढति । कहं ? भण्णइ–बन्धावलिय अतित्थावणावलिय उपरिल्लसमएणय ऊणा कम्मट्ठिति उक्कोसो णिक्खेवो होति ॥ ४–५ ॥

(मलय०)–तदेवमुक्ता स्थित्युद्वर्तना, संप्रति स्थित्यपवर्तनामाह–'उव्वट्टंतो'त्ति–स्थितिमपवर्तयन् उदयावलिकाया बाह्यान् स्थितिविशेषान्–स्थितिभेदानपवर्तयति। के ते स्थितिविशेषा? इति चेत्, उच्यते–उदयावलिकाया उपरि समयमात्रा स्थितिः, द्विसमयमात्रा, तावद्वाच्यं यावद्बन्धावलिकोदयावलिकाहीना सर्वा कर्मस्थितिः। एते स्थितिविशेषाः। उदयावलिकायां गता च स्थितिः सकलकरणायोग्येति कृत्वा तां नापवर्तयति तत उक्तं 'उदयावलिकाबाह्यानि'ति। कुत्र निक्षिपति? इति चेदत आह–निक्षिपति आवलिकायास्त्रिभागे तृतीये भागे समयाधिके शेषं समयोनमुपरितनं त्रिभागद्वयमतिक्रम्य। इयमत्र भावना–उदयावलिकाया उपरितनी या स्थितिस्तस्याः दलिकमपवर्तयन् उदयावलिकाया उपरितनौ द्वौ त्रिभागौ समयोनावतिक्रम्याधस्तने समयाधिके तृतीये भागे निक्षिपति। एष जघन्यो निक्षेपः, जघन्या चातीत्थापना। यदोदयावलिकाया उपरितनी द्वितीया स्थितिरपवर्त्यते तदाऽतीत्थापना प्रागुक्तप्रमाणा समयाधिका भवति, निक्षेपस्तु तावन्मात्र एव। यदा तूदयावलिका उपरितनी तृतीया स्थितिरपवर्त्यते तदाऽतीत्थापना प्रागुक्तप्रमाणा द्विसमयाधिका भवति, निक्षेपस्तु तावन्मात्र एव। एवमतीत्थापना प्रतिसमयं तावद्वृद्धिमुपनेतव्या यावदावलिका परिपूर्णा भवति। ततः परमतीत्थापना सर्वत्रापि तावन्मात्रैव भवति, निक्षेपस्तु वर्धते, स च तावद्यावद्बन्धावलिकातीत्थापनावलिकारहिता अपवर्त्यमानस्थितिरहिता च सकलापि कर्मस्थितिः। तथाहि–बन्धावलिकायामतीतायां सत्यां कर्मापवर्तयितुमारभते। तत्रापि च यदा सर्वोपरितनं स्थितिस्थानमपवर्तयति तदावलिकामात्रमधोऽवतीर्याधस्तनेषु सर्वेष्वपि स्थितिस्थानेषु निक्षिपति। तस्मादुत्कृष्टो निक्षेपोऽपवर्त्यमानस्थितिसमयरहिता बन्धावलिकातीत्थापनावलिकारहिता च सर्वापि कर्मस्थितिः। उक्तं च–"[1]समयाहिअइत्थवणा बंधावलिया

[1] पञ्चसंग्रह. उद्वर्तनाकरण गा० १२

य मोत्तु निक्खेवो । कम्मठिई बंधोदयआवलिया मोत्तु ओवट्टे ॥१॥ " कर्मस्थितिं बन्धावलिकामुदयावलिकां च मुक्त्वा शेषां सर्वामपि अपवर्तयतीत्यर्थः। तदेवमुदयावलिकाया उपरितन समयमात्रं स्थितिस्थानं प्रतीत्य प्रवर्तमानायामपवर्तनायां समयाधिकावलिकात्रिभागो निक्षेपः प्राप्यते, स च सर्वजघन्यः, सर्वोपरितनं च स्थितिस्थानं प्रतीत्य प्रवर्तमानायामपवर्तनायां यथोक्तरूप उत्कृष्टो निक्षेपः। ऊक्तं च-"उदयावलिमुपरित्थं ठाणं अहिगिच्च होइ अइहीणो। निक्खेवो सव्वोवरि ठिइठाणवसा भवे परमो " ॥ ४-५ ॥

(उ०)-तदेवमुक्ता स्थित्युद्वर्त्तना, अथ स्थित्यपवर्त्तनामाह—स्थितिमपवर्त्तयन्नुदयावलिकाया बाह्यान् स्थितिविशेषान्—समयमात्रद्विसमयमात्रादिस्थितिभेदानपवर्त्तयति। ते चापवर्त्यमानाः स्थितिविशेषास्तावल्लभ्यन्ते यावद्बन्धावलिकोदयावलिकाहीना सर्वा कर्मस्थितिः। तानपवर्त्यमानान् स्थितिविशेषान् कुत्र निक्षिपति ? इत्याह-निक्षिपत्यावलिकायास्त्रिभागे-तृतीये भागे समयाधिके, शेषं-समयोनमुपरितनं त्रिभागद्वयमतिक्रम्य। अयमिह भावार्थः-उदयावलिकाया उपरितनी या समयमात्रा स्थितिस्तस्या दलिकमपवर्त्तयन्नुदयावलिकाया उपरितनौ द्वौ त्रिभागौ समयोनावतिक्रम्याधस्तने समयाधिके तृतीये भागे निक्षिपति, एष जघन्यो निक्षेपो जघन्या चातीत्थापना। यदा चोदयावलिकाया उपरितनी द्वितीया स्थितिरपवर्त्यते तदातीत्थापना प्रागुक्तप्रमाणा समयाधिका भवति, निक्षेपस्तु तावन्मात्र एव। यदा तूदयावलिकाया उपरितनी तृतीया स्थितिरपवर्त्यते तदा प्रागुक्तमानातित्थापना द्विसमयाधिका भवति-द्वौ त्रिभागौ समयाधिकावतीत्थापना भवतीत्यर्थः, निक्षेपस्तु तावानेव। एवमतीत्थापना प्रतिसमयं तावद्वर्धयितव्या यावदावलिका परिपूर्यते। निक्षेपविषयाणां च स्थितीनां समयाधिकआवलिकात्रिभाग एवानुवर्त्तते, ततः परमतीत्थापना सर्वत्र तावन्मात्रैव प्रवर्त्तते, निक्षेपस्तु वर्धते

१ पं० सं० उद्व०करणे गा० १२

तावद्यावद्बन्धावलिकातीत्थापनावलिकारहिताऽपवर्त्यमानस्थितिसमयरहिता च सकलापि कर्मस्थितिः। यतो बन्धावलिकायामतीतायां सत्यां कर्मापवर्त्तयितुमारभ्यते, तत्रापि च सर्वोपरितनस्थितिस्थानापवर्त्तनारम्भे आवलिकामात्रमधोऽवतीर्याधस्तनेषु सर्वेष्वपि स्थितिस्थानेषु निक्षेप इत्युत्कृष्टो निक्षेपो यथोक्तप्रमाण उपपद्यत इति। उक्तं च पञ्चसंग्रहे—"समयाहिअइत्थवणा बंधावलिया य मोत्तु निक्खेवो। कम्मठिइ बधोदयआवलिया मोत्तु ओवट्टे ॥ १३ ॥" समयाधिकामतीत्थापनावलिकां बन्धावलिकां च मुक्त्वा शेषासु सर्वास्वपि स्थितिष्वपवर्त्तनायामुत्कृष्टो निक्षेपो भवति। तथा बन्धावलिकामुदयावलिकां च मुक्त्वा शेषां सर्वामपि कर्मस्थितिमपवर्त्तयतीत्येतदर्थः। तदेवमुदयावलिकाया उपरितनं समयमात्रं स्थितिस्थानमपवर्त्यमानं प्रतीत्य यथोक्तसमयाधिकावलिकात्रिभागमानो यो निक्षेपः प्राप्यते स सर्वजघन्यः, सर्वोपरितनं च स्थितिस्थानमपवर्त्यमानं प्रतीत्य यथोक्तरूप उत्कृष्टो निक्षेप इति स्थितम् ॥ ४–५ ॥

इयाणिं तस्सावयातो—

वाघाए समऊणं कंडगमुक्कस्सिया अइत्थवणा। डायठिई किंचूणा ठिइकंडुक्कस्सगपमाणं ॥ ६ ॥

(चू०)—एत्थ वाघात इति ट्ठितिघातो। ट्ठितिघातं करेमाणो किं अतित्थवेति? समयूणं कण्डगं उक्कसिया अतित्थावणा भवति। उप्परिल्लं समयं पडुच्च एयं सव्वं अतित्थावेत्तु हेट्ठतो छुभतित्ति कातू तेणूणा। तस्स ट्ठितीकंडगस्स परिमाणं क्रियते—'डायट्ठिई किंचूणा ठिइकंडुकस्सगपमाणं'। जत्थ ठितिठाणट्ठितो तीए चेव पगतीए उक्कोसिनं ट्ठितिं बंधति सा डायट्ठिति वुचति। सा किंचूणा डायट्ठिती ठितिकंडगस्स उक्कोसगं पमाणं। ततो जहण्णयरं पि ठितिकंडगं भवति; जाव जहण्णगं ठितिकंडगं पलितोवमस्स असंखेज्जतिभागमेत्तं ठिदिति।

इदाणिं उव्वट्टिज्जमाणीणं ठितीणं णिक्खेवअतित्थावणाणं अप्पाबहुगं–सव्वत्थोवो जहण्णतो णिक्खेवो, आवलियातिभागो समयाहिगो। जहण्णिया अतित्थावणा जहण्णणिक्खेवाओ दुगुणा तिसमयूणा। उक्कोसिया अतित्थावणा [जिणा ट्ठितिकंडगेण] विसेसाहिया–सा आवलिया। ट्ठितिकंडगस्स अतित्थावणा असंखेज्जगुणा। उक्कोसगो निक्खेवो विसेसाहितो–सव्वकम्मट्ठिती समयाहितदुगावलितऊणा। सव्वा कम्मट्ठिति विसेसाहिता। इदानिं दोण्ह वि संजोगप्पाबहुगं भण्णति–उव्वट्टणाए वाघाए जहण्णओ णिक्खेवो जहण्णिया य अतित्थावणा दोवि तुल्ला सव्वत्थोवा, ते आवलियाए असंखेज्जतिभागो। ओवट्टणाए जहण्णतो णिक्खेवो असंखेज्जगुणो। तस्सेव जहण्णिया अतित्थावणा बिगुणा तिसमयूणा–आवलियाए दोततिभागा समययूणा। ओवट्टणाए उक्कोसिया अतित्थावणा विसेसाहिता। उव्वट्टणाए उक्कस्सिता अतित्थावणा अबाहा–सा य संखेज्जगुणा। ओवट्टणाए वाघातट्ठितिकंडगअतित्थावणा असंखेज्जगुणा। उव्वट्टणाए उक्कोस्सातो णिक्खेवो विसेसाहितो। ओवट्टणाए उक्कोसतो णिक्खेवो विसेसाहितो। सव्वट्ठिती विसेसाहिता ॥ ६ ॥

(मलय०)–एवं निर्व्याघातेऽपवर्तनाविधिरुक्तः, संप्रति व्याघाते तमाह—'वाघाए'त्ति। अत्र व्याघातो नाम स्थितिघातः। तस्मिन् सति तं कुर्वत इत्यर्थः, समयोनं कण्डकमात्रमुत्कृष्टाऽतीत्थापना। कथं समयोनमिति चेद्, उच्यते–उपरितनेन समयमात्रेण स्थितिस्थानेनापवर्त्यमानेन सहाधस्तात् कण्डकमतिक्रम्यते ततस्तेन विना कण्डकं समयोनमेव भवति। कण्डकमानमाह–'डायठिई' इत्यादि। यस्याः स्थितेरारभ्य तस्या एव प्रकृतेरुत्कृष्टं स्थितिबन्धमाधत्ते ततः प्रभृति सर्वापि स्थितिर्डायस्थितिरित्युच्यते। उक्तं च पञ्चसंग्रह-

मूलटीकायां—"¹यस्याः स्थितेरारभ्योत्कृष्टं स्थितिबन्धं विधत्ते–निर्मापयति तस्या आरभ्योपरितनानि सर्वाण्यपि स्थितिस्थानानि डायस्थितिस्थानानि भवन्ति"। सा डायस्थितिः किंचिदूना कण्डकस्योत्कृष्टं प्रमाणम्। पञ्चसंग्रहे पुनरेवं मूलटीकाकृता व्याख्या कृता—"सा डायस्थितिरुत्कर्षतः किंचिदूना-किंचिदूनकर्मस्थितिप्रमाणा। तथाहि—अन्त.कोटीकोटीप्रमाणं स्थितिबन्धं कृत्वा पर्याप्तसंज्ञिपञ्चेन्द्रिय उत्कृष्टसंक्लेशवशादुत्कृष्टां स्थितिं विधत्ते इति सा डायस्थिति. किंचिदूनकर्मस्थितिप्रमाणा कण्डकस्योत्कृष्टं प्रमाणमिति"। एतदेवोत्कृष्टं कण्डकं समयमात्रेणापि न्यूनं कण्डकमुच्यते। एवं समयद्वयेन समयत्रयेण एवं तावन्न्यूनं वाच्यं यावत्पल्योपमासंख्येयभागमात्रप्रमाणं भवति, तच्च जघन्यं कण्डकम्। इदं च समयोनं जघन्या व्याघातेऽतीत्थापना। संप्रत्यल्पबहुत्वमुच्यते—तत्रापवर्तनायां जघन्यो निक्षेपः सर्वस्तोकः, तस्य समयाधिकावलिकात्रिभागमात्रत्वात्। ततोऽपि जघन्यातीत्थापना द्विगुणा त्रिसमयोना। कथं त्रिसमयोनं द्विगुणत्वमिति चेद्, उच्यते—व्याघातमन्तरेण जघन्याऽतीत्थापना आवलिकात्रिभागद्वयं समयोनं भवति। आवलिका चासत्कल्पनया नवसमयप्रमाणा कल्प्यते। ततस्त्रिभागद्वयं समयोनं पञ्चसमयप्रमाणमवगन्तव्यम्। निक्षेपोऽपि जघन्यः समयाधिकावलिकात्रिभागरूपोऽसत्कल्पनया चतुःसमयप्रमाणो द्विगुणीकृतस्त्रिसमयोनः सन् एतावानेव भवतीति। ततोऽपि व्याघातं विनोत्कृष्टाऽतीत्थापना विशेषाधिका, तस्याः परिपूर्णावलिकामात्रत्वात्। ततो व्याघाते उत्कृष्टाऽतीत्थापनाऽसंख्येयगुणा, किञ्चिदूनडायस्थितिप्रमाणत्वात्तस्याः। ततोऽप्युत्कृष्टो निक्षेपो विशेषाधिकः, तस्य समयाधिकावलिकाद्विकोनसकलकर्मस्थितिप्रमाणत्वात्। ततः सर्वा कर्मस्थितिर्विशेषाधिका। संप्रत्युद्वर्तनापवर्तनयोः संयोगेनाल्पबहुत्वमुच्यते—तत्रोद्वर्तनाया व्याघाते जघन्यातीत्थापनानिक्षेपौ सर्वस्तोकौ,

१ पञ्चसंग्रहस्वोपज्ञटीका, उद्वर्तनाकरणे गा० १५

स्वस्थाने तु परस्परं तुल्यौ, आवलिकाऽसंख्येयभागमात्रत्वात् । ततोऽपवर्तनायां जघन्यो निक्षेपोऽसंख्येयगुणः, तस्य समयाधिकावलिकात्रिभागमात्रत्वात् । ततोऽप्यपवर्तनायामेव जघन्यातीत्थापना द्विगुणा त्रिसमयोना । अत्र भावना प्रागेव कृता । ततोऽप्यपवर्तनायामेव व्याघातं विनोत्कृष्टाऽतीत्थापना विशेषाधिका, तस्याः परिपूर्णावलिकाप्रमाणत्वात् । तत उद्वर्तनायामुत्कृष्टातीत्थापना संख्येयगुणा, तस्या उत्कृष्टाबाधारूपत्वात् । ततोऽपवर्तनायां व्याघाते उत्कृष्टाऽतीत्थापनाऽसंख्येयगुणा, तस्याः किंचिदूनडायस्थितिप्रमाणत्वात् । तत उद्वर्तनायामुत्कृष्टो निक्षेपो विशेषाधिकः । ततोऽप्यपवर्तनायामुत्कृष्टो निक्षेपो विशेषाधिकः । ततोऽपि सर्वा स्थितिर्विशेषाधिका ॥६ ॥

(उ०)–एष निर्व्याघातेऽपवर्तनाविधिरुक्तः,अथ व्याघाते तमाह—अत्र व्याघातो नाम स्थितिघातः । उक्तं च–"ठिइघाओ एत्थ होइ वाघाओ"। तस्मिन् क्रियमाणे सति समयोनं कण्डकमात्रमुत्कृष्टातीत्थापना । उपरितनेन समयमात्रेण स्थितिस्थानेनापवर्त्यमानेन सहाधस्तात्कण्डकमतिक्रम्यते ततस्तेन विना समयोनं कण्डकमेवोत्कृष्टातीत्थापना भवतीति । कण्डकमानं किमिति चेद्, उच्यते–यस्याः स्थितेरारभ्य तस्या एव प्रकृतेरुत्कृष्टस्थितिबन्ध उत्प्लुत्य विधीयते ततः प्रभृति सर्वाऽपि स्थितिर्डायस्थितिरिति परिभाष्यते । सा किञ्चिदूना स्थितिः कण्डकस्योत्कृष्टं प्रमाणम् । पञ्चसंग्रहटीकायां त्वेवं व्याख्यातम्–"डायस्थितिरुत्कर्षतः किञ्चिदूना–किञ्चिदूनकर्मप्रमाणा । तथाहि–अन्तःकोटाकोटीप्रमाण स्थितिबन्धं कृत्वा पर्याप्तसंज्ञिपञ्चेन्द्रिय उत्कृष्टसंक्लेशवशादुत्कृष्टां स्थितिं विधत्त इति सा डायस्थितिः किञ्चिदूनकर्मस्थितिप्रमाणा कण्डकस्योत्कृष्टं प्रमाणमिति" । एतच्चोत्कृष्टं कण्डकमेकद्व्यादिसमयन्यूनमपि कण्डकमुच्यते । एवं हीयमानं यावत्पल्योपमासङ्ख्येयभागमात्रप्रमाणं भवति तज्जघन्यकण्डकम् । इदमेव समयोनं जघन्या व्याघातेऽतीत्थापना । सम्प्रत्य-

ल्पबहुत्वमुच्यते—तत्रापवर्त्तनायां जघन्यो निक्षेपः सर्वस्तोकः, तस्य समयाधिकावलिकात्रिभागप्रमाणत्वात् । ततोऽपि जघन्यातीत्थापना
द्विगुणा त्रिसमयोना । त्रिसमयोनद्विगुणत्वं कथमवसेयमिति चेद्, उच्यते—व्याघातमन्तरेण जघन्यातीत्थापनाऽऽवलिकात्रिभागद्वयं
समयोनं भवति । आवलिका चासत्कल्पनया त्रिंशत्समयप्रमाणा कल्प्यते । ततस्त्रिभागद्वयमेकस्थानीयं समयोनमेकोनविंशतिसमय-
प्रमाणम् । निक्षेपोऽपि जघन्यः समयाधिकावलिकात्रिभागरूपोऽसत्कल्पनया एकादशसमयप्रमाणः । द्विगुणीकृतस्त्रिसमयोन एतावानेव
भवतीति । ततोऽपि व्याघातं विनोत्कृष्टाऽतीत्थापना विशेषाधिका, तस्याः परिपूर्णावलिकाप्रमाणत्वात् । ततो व्याघाते उत्कृष्टातीत्थापना-
ऽसङ्ख्येयगुणा, तस्याः किञ्चिदूनडायस्थितिकण्डकप्रमाणत्वात् । ततोऽप्युत्कृष्टो निक्षेपो विशेषाधिकः, तस्य समयाधिकावलिकाद्विको-
नसकलकर्मस्थितिप्रमाणत्वात् । ततः सर्वा कर्मस्थितिर्विशेषाधिका । सम्प्रत्युद्वर्तनापवर्त्तनयोः संयोगेनाल्पबहुत्वमुच्यते—तत्रोद्वर्त्तनायां
जघन्यातीत्थापनानिक्षेपौ व्याघातभाविनौ सर्वस्तोकौ, स्वस्थाने तु परस्परं तुल्यौ, आवलिकाया असङ्ख्येयभागमात्रत्वात् । ततोऽप-
वर्तनाया जघन्यो निक्षेपोऽसङ्ख्येयगुणः, तस्य समयाधिकावलिकात्रिभागमात्रत्वात् । ततोऽप्यपवर्त्तनायामेव जघन्यातीत्थापना द्विगुणा
त्रिसमयोना । अत्र भावना कृतैव । ततोऽप्यपवर्त्तनायामेव व्याघाताभावभाविन्युत्कृष्टातीत्थापना विशेषाधिका, तस्याः परिपूर्णावलि-
काप्रमाणत्वात् । तत उद्वर्त्तनायामुत्कृष्टातीत्थापना सङ्ख्येयगुणा, तस्या उत्कृष्टाबाधारूपत्वात् । ततोऽपवर्त्तनायां व्याघाते उत्कृष्टाती-
त्थापनाऽसङ्ख्येयगुणा, तस्याः किञ्चिदूनडायस्थितिप्रमाणत्वात् । तत उद्वर्त्तनायामुत्कृष्टो निक्षेपो विशेषाधिकः । ततोऽप्यपवर्त्तनाया-
मुत्कृष्टो निक्षेपो विशेषाधिकः । ततोऽपि सर्वा स्थितिर्विशेषाधिका ॥ ६ ॥

वद्धलता— ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ०

उद्वर्त्यमाना चरमा स्थितिः

यदा प्राक्तनस्थित्यपेक्षया द्वाभ्यामावलिकाऽसंख्येयभागाभ्यामभ्यधिकोऽभिनवस्थितिवन्धो जायते तदा प्राक्तनसत्कर्मणोऽन्त्यस्थितिरुद्वर्त्यते, उद्वर्त्य चावलिकाया आद्यमतीत्थापनारूपमसंख्येयभागमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते। एतावन्तावतीत्थापनानिक्षेपौ जघन्यौ। अत्र स्थापना—

वध्यमानलता— ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ०।० ० ०॥० ० ०।

द्वाभ्यामावलिकासंख्येयभागाभ्यामभ्यधिकोऽभिनवबन्धः। ज० अतीत्था० ज० नि०

वद्धलता— ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ०

उद्वर्त्यमाना चरमा स्थितिः

यदा समयाधिकाभ्यां द्वाभ्यामावलिकासंख्येयतमाभ्यां भागाभ्यामभ्यधिकोऽभिनवस्थितबन्धस्तदावलिकायाः प्रथममसंख्येयतमं भागं समयाधिकमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते। अत्र स्थापना—

वध्यमानलता— ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ०।० ० ० ०।।० ० ०।

समयाधिकाभ्यां द्वाभ्यामावलिकाऽसंख्येयभागाभ्यामभ्यधिकोऽभिनवबन्धः। समयाधि० अ० नि०स एव

बद्धलता--○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○

एवमभिनवकर्मबन्धस्य समयादिवृद्धावती-
त्थापना वर्द्धते, सा च तावद्यावदावलिका-
परिपूर्णा भवति । निक्षेपस्तु सर्वत्र ताव-
न्मात्र एव भवति । अत्रापि स्थापना--

उद्वर्त्यमाना चर-
मा स्थितिः

बध्यमानलता--○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○|○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○||○ ○ ○|

असंख्येयभागाधिकावलिकाभ्यधिकबन्धः ।

अतीत्था० तु परिपूर्णाऽऽवलिका नि० स एव

बद्धलता--○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○

तत ऊर्ध्वं पुनरपि नवकर्मबन्धवृद्धो निक्षे-
प एव केवलो वर्द्धते, नातीत्थापना ।

○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○|○ ○ ○ ○ ○ ○ ○ ○ ○ ○ ○||○ ○ ○ ○|

बध्यमानसमयाधिकावलिकासंख्येयभागाधिकावलिकाबन्ध ।

अतीत्थापना सैवावलिकामात्रा । समयाधिक० उ० नि०

निर्व्याघातापवर्त्तनायाश्चित्रम् ॥




अत्र शून्यनवकेनावलिका.

○ इति शून्यमावलिकातीत्थापनाप्रारम्भदर्शकम्

◌ इति घनपरिमंडलशून्यं तु निक्षेपवृद्धिप्रारंभसूचकम्

व्याघातभाव्यपवर्तनाचित्रम् ॥




○ अपवर्त्यमानासु प्रथमा

◌ अपवर्त्यमानासु सर्वान्तिमा

इदाणिं अणुभागउव्वट्टणा(ओवट्टणा)उ भण्णंति । तत्थ धुरं उवट्टणा भण्णति—

**चरमं णोव्वट्टिज्जइ जावाणंताणि फड्डगाणि तओ । उस्सक्किय उक्कड्ढइ एवं ओवट्टणाईओ ।। ७ ॥**

(चू०)—'चरमं नोव्वट्टिज्जइ जावाणंताणि फड्डगाणि'त्ति । चरिमं फड्डगं ण उव्वट्टिज्जति,(बि)चरिमं पि फड्डगं ण उव्वट्टिज्जइ । एवं जाव अणंताणि फड्डगाणि चरिमफड्डगातो ण उव्वट्टिज्जंति । एतेसिं पमाणं जत्तिया जहण्णाए अतित्थावणाए जहण्णए य णिक्खेवे फड्डगा एतियाणि फड्डगाणि चरिमफड्डगातो ण उव्वट्टिज्जंति । ततो 'उस्सक्किय उक्कड्डइ'—चरिमफड्डगातो अणंताणि फड्डगाणि उस्सक्कित्तु 'उक्कड्डति'—उव्वट्टेति । जं तं फड्डगं उव्वट्टेति तं अणंताणि फड्डगाणि अतित्थावेत्तु अणंतेसु फड्डगेसु णिक्खिवति । एवं अतित्थावणा अवट्ठिया । जह जह हेट्ठहुत्तीतो सरति तह तह णिक्खेवो वड्ढति, जाव अणंतेसु सो उवरिल्लो सव्वो णिक्खेवो भवति । उक्कोसतो वि एस चेव णिक्खेवो ।अतित्थावणा तप्पमाणा चेव आदिफड्डगातीएसु अणंतेसु फड्डगेसु ठिता।अप्पाबहुगं—सव्वत्थोवो जहण्णओ णिक्खेवो।अजहण्णुक्कोसिया अतित्थावणा अणंतगुणा।उक्कोसतो णिक्खेवो अणंतगुणो।सव्वो वि अणुभागो विसेसाहिओ। इदाणीं ओवट्टणा—'एवं ओवट्टणादीतो'। एवं ओवट्टणाए वि,आदितो भाणियव्वं। आदिफड्डगा ण ओवट्टिज्जति, बितितं पि ण ओवट्टिज्जति, एवं जाव अणंताइं फड्डगाइं आदिफड्डगाओ ण ओवट्टिज्जंति। एतेसिं पमाणं जत्तिया जहण्णिया अतित्थावणा जहण्ण य निक्खेव [फड्डगाणि] एत्तियाणि फड्डगाणि आदिफड्डगातो ण ओवट्टि-

ज्झंति। ['ततो अवट्ठितातित्थावणा। उवरिहुत्ती उक्कस्सति। अवट्ठितअतित्थावणाए उवरिहुत्तीए उक्कस्समाणीए निक्खेवो वड्ढति अतित्थावणा ताव उक्कस्सति जाव अणंता फड्डगा सेसत्ति।] एवं णिव्वाघाते। वाघाते–अणुभागकंडगं जत्थ ट्ठितीए तत्थ भाणितव्वं। एत्थ अप्पाबहुगं–सव्वत्थोवं पदेसगुणहाणिट्ठाणंतरं। जहण्णओ णिक्खेवो अणंतगुणो। जहण्णिता अतित्थावणा अणंतगुणा। उक्कस्सियतित्थावणा अणंतगुणा। उक्कस्सगं अणुभागखण्डं विसेसाहियं। उक्कोसो णिक्खेवो विसेसाहिओ। सव्वो विसेसाहिओ ॥ ७ ॥

(मलय०)–तदेवमुक्ते स्थित्युद्वर्तनापवर्तने, सम्प्रत्यनुभागोद्वर्तनापवर्तने वाच्ये। तत्र प्रथमतोऽनुभागोद्वर्तनामाह—'चरमं'ति। चरमं स्पर्धकं नोद्वर्त्यते, नापि द्विचरमम्, एवं तावद्वाच्यं यावच्चरमात्स्पर्धकादधोऽनन्तानि स्पर्धकानि। इदमत्र तात्पर्यम्–यो जघन्यो निक्षेप आवलिकाया असंख्येयभागः सर्वोपरितनो या च तस्याध आवलिकामात्रातीत्थापना तत्स्थितिस्थानगतानि स्पर्धकानि सर्वाण्यपि नोद्वर्त्यन्ते किंतु तेभ्योऽवष्वक्य–अधस्तादवतीर्य यानि स्पर्धकानि समयमात्रस्थितिगतानि तान्युद्वर्तयति। तानि चोद्वर्त्यावलिकामात्रस्थितिगतानि अनन्तानि स्पर्धकान्यतिक्रम्योपरितनेष्वेवावलिकासत्कासंख्येयभागमात्रगतेषु स्पर्धकेषु निक्षिपति। यदा पुनरधोऽवतीर्य द्वितीयसमयमात्रस्थितिगतानि स्पर्धकान्युद्वर्तयति तदावलिकामात्रस्थितिगतानि स्पर्धकान्यतिक्रम्योपरितनेषु समयाधिकावलिकासत्कासंख्येयभागमात्रगतेषु स्पर्धकेषु निक्षिपति। एवं यथा यथाऽधोऽवतरति तथा तथा निक्षेपो वर्धते। अतीत्थापना पुनः सर्वत्रापि आव-

१ अस्य कोष्ठान्तर्गतस्य पाठस्य स्थाने एषः पाठः समीचीनः प्रतीयते—"उवरिहुत्ती उक्कसति। अतित्थावणा वड्ढति जाव अणंता फड्डगा। ततो अवट्ठितातित्थावणा। अवट्ठितअतित्थावणाए उवरिहुत्तीए उक्कस्समाणीए निक्खेवो वड्ढति जाव अणंता फड्डगा सेसत्ति।"

लिकामात्रस्थितिगतान्येव स्पर्धकानि। कियान् पुनरुत्कृष्टो निक्षेपविषय इति चेद्,उच्यते—बन्धावलिकायामतीतायां समयाधिकावलिकाबाधागतानि स्पर्धकानि व्यतिरिच्य शेषाणि सर्वाण्यपि निक्षेपविषयः। तथाहि—अबाधागतानि स्पर्धकानि नोद्वर्त्यन्ते। उद्वर्त्यमानानि च समयमात्रस्थितिगतानि स्पर्धकानि न तत्रैव निक्षिपति। आवलिकामात्रगतानि त्वतीत्थापना। ततो बन्धावलिकायामतीतायां समयाधिकावलिकागतानि अबाधागतानि च स्पर्धकानि व्यतिरिच्य शेषाणि सर्वाणि निक्षेपविषयः। संप्रत्यत्रैवाल्पबहुत्वमुच्यते—तत्र सर्वस्तोको जघन्यनिक्षेपः,तस्यावलिकासत्कासंख्येयभागगतस्पर्धकमात्रत्वात्। ततोऽतीत्थापनाऽनन्तगुणा, निक्षेपविषयस्पर्धकेभ्य आवलिकामात्रस्थितिगतानां स्पर्धकानामनन्तगुणत्वात्। एवं सर्वत्राप्यनन्तगुणता स्पर्धकापेक्षया द्रष्टव्या। तत उत्कृष्टो निक्षेपोऽनन्तगुणः। ततोऽपि सर्वोऽनुभागो विशेषाधिकः। तदेवमुक्तानुभागोद्वर्तना। संप्रत्यनुभागापवर्तनामतिदेशेनाह—एवं 'ओव्वट्टणाईओ'। एवमुद्वर्तनाप्रकारेणापवर्तनाप्यनुभागविषया वक्तव्या, केवलमादित आरभ्य। तद्यथा—प्रथमं स्पर्धकं नापवर्त्यते, नापि द्वितीयम्, नापि तृतीयम्। एवं तावद्वाच्यं यावदुदयावलिकामात्रस्थितिगतानि स्पर्धकानि भवन्ति। तेभ्य उपरितनानि तु स्पर्धकान्यपवर्त्यन्ते। तत्र यदोदयावलिकात उपरि समयमात्रस्थितिगतानि स्पर्धकान्यपवर्तयति तदा समयोनावलिकात्रिभागद्वयगतानि स्पर्धकान्यतिक्रम्याधस्तनेष्वावलिकासत्कसमयाधिकत्रिभागगतेषु स्पर्धकेषु निक्षिपति। यदा तूदयावलिकाया उपरि द्वितीयसमयमात्रस्थितिगतानि स्पर्धकान्यपवर्तयति तदा प्रागुक्ताऽतीत्थापना समयोनावलिकात्रिभागद्वयप्रमाणा समयमात्रस्थितिगतैः स्पर्धकैरधिकावगन्तव्या। निक्षेपस्तु तावन्मात्र एव। एवं समयसमयवृद्ध्याऽतीत्थापना तावद् वृद्धिमुपनेतव्या यावदावलिका परिपूर्णा भवति। ततः परमतीत्थापना सर्वत्रापि तावन्मात्रैव, निक्षेपस्तु वर्धते। एवं निर्व्याघाते सति द्रष्टव्यम्। व्याघाते पुनः अनुभागकण्डकं समयमात्रस्थितिग-

उद्वर्तनाऽपवर्तना करणे।

तस्पर्धकन्यूनमतीत्थापना द्रष्टव्या। कण्डकमानं समयमात्रन्यूनत्वं च यथा प्राक् स्थित्यपवर्तनायामुक्तं तथात्रापि द्रष्टव्यम्। अत्राल्पब-
हुत्वमुच्यते-सर्वस्तोको जघन्यनिक्षेपः। ततो जघन्यातित्थापनाऽनन्तगुणा। ततो व्याघातेऽतीत्थापनाऽनन्तगुणा। तत उत्कृष्टमनु-
भागकण्डकं विशेषाधिकम्, तस्य समयगतैः स्पर्धकैरतीत्थापनातोऽधिकत्वात्। तत उत्कृष्टो निक्षेपो विशेषाधिकः। ततोऽपि सर्वोऽ-
नुभागो विशेषाधिकः ॥ ७ ॥

(उ०)-तदेवमुक्ता स्थित्यपवर्तना, साम्प्रतमनुभागोद्वर्तनापवर्तने वाच्ये, तत्रादावनुभागोद्वर्तनामाह—चरमं स्पर्धकं नोद्वर्त्यते,
नापि द्विचरमादीनि, यावच्चरमात्स्पर्धकादधोऽनन्तानि स्पर्धकानि नोद्वर्त्यन्ते। यो जघन्यो निक्षेप आवलिकाया असङ्ख्येयभागः सर्वो-
परितनो या चावलिकामात्राऽतीत्थापना तत्स्थितिस्थानगतानि सर्वाण्यप्यनन्तानि स्पर्धकानि नोद्वर्त्यन्त इति रहस्यम्, किंतु तेभ्योऽव-
पश्य-अधस्तादवतीर्य यानि स्पर्धकानि समयमात्रस्थितिगतानि लभ्यन्ते तान्युद्वर्तयति। तानि चोद्वर्त्यावलिकामात्रस्थितिगतान्यनन्तानि
स्पर्धकान्यतिक्रम्योपरितनेष्वेवावलिकासत्कासङ्ख्येयभागमात्रगतेषु स्पर्धकेषु निक्षिपति। ततोऽप्यधोऽवतीर्य यदा द्वितीयसमयमात्र-
स्थितिगतानि स्पर्धकान्युद्वर्तयति तदाऽऽवलिकामात्रस्थितिगतानि स्पर्धकान्यतिक्रम्योपरितनेषु समयाधिकावलिकासत्कासङ्ख्येयभाग-
मात्रगतस्पर्धकेषु निक्षिपति। एवं यथा यथाऽधोऽवतीर्यते तथा तथा निक्षेपो वर्धमानः प्राप्यते। अतीत्थापना पुनः सर्वत्राप्यावलिकामा-
त्रस्थितिगतान्येव स्पर्धकानि। कियान् पुनरुत्कृष्टो निक्षेपविषय इति चेत्, समयाधिकातित्थापनावलिकाऽबाधागतानि च मुक्त्वा शेषाणि
स्पर्धकानि। तथाहि-अबाधागतानि स्पर्धकानि नोद्वर्त्यन्ते, उद्वर्त्यमानानि च समयमात्रस्थितिगतानि स्पर्धकानि न तत्रैव निक्षिप्य-
न्ते, आवलिकामात्रगतानि त्वतीत्थापना, तत एतदतिरिक्तानि सर्वाणि स्पर्धकान्युत्कृष्टनिक्षेपविषय इति। अत्रैवाल्पबहुत्वमुच्यते-सर्व-

स्तोको जघन्यनिक्षेपः, तस्यावलिकासत्कासङ्ख्येयभागगतस्पर्धकप्रमाणत्वात् । ततोऽतीत्थापनाऽनन्तगुणा, निक्षेपविषयस्पर्धकेभ्य आवलिकामात्रस्थितिगतानां स्पर्धकानामनन्तगुणत्वात् । तत उत्कृष्टो निक्षेपोऽनन्तगुणः । ततोऽपि सर्वोऽनुभागो विशेषाधिक इति । तदेवमुक्तानुभागोद्वर्त्तना । अथानुभागापवर्तनामतिदिशन्नाह–'एवमपर्तनादितः'–एवमुद्वर्त्तनाप्रकारेणापवर्तनाऽप्यनुभागविषया वाच्या, केवलमादित आरभ्य । तथाहि–प्रथमं स्पर्धकं नापवर्त्यते, नापि द्वीतीयम्, नापि तृतीयम्, एवं तावदभिधेयं यावदुदयावलिकामात्रस्थितिगतानि स्पर्धकानि भवन्ति । तेभ्य उपरितनानि स्पर्धकान्यपवर्त्यन्ते । तत्र यदोदयावलिकात उपरि समयमात्रस्थितिगताति स्पर्धकान्यपवर्तयति तदा समयोनावलिकात्रिभागद्वयगतानि स्पर्धकान्यतिक्रम्याधस्तनेषु समयाधिकावलिकात्रिभागगतेषु स्पर्धकेषु निक्षिपति । यदा तूदयावलिकाया उपरि द्वितीयसमयमात्रस्थितिगतानि स्पर्धकान्युद्वर्त्यन्ते तदा प्रागुक्तातीत्थापना समयमात्रस्थितिगतैः स्पर्धकैरधिका भवति, निक्षेपस्तु तावानेव । एवं समयसमयवृद्ध्याऽतीत्थापना तावत्प्रवर्धनीया यावदावलिका पूर्णा भवति । ततः परमतीत्थापना सर्वत्रापि तावन्मात्रैव, निक्षेपस्तु वर्धते । एवं च निर्व्याघाते द्रष्टव्यम् । व्याघाते त्वनुभागकण्डकं समयमात्रस्थितिगतस्पर्धकन्यूनमतीत्थापना द्रष्टव्या । अत्राल्पबहुत्वमुच्यते–सर्वस्तोको जघन्यनिक्षेपः । ततो जघन्यातीत्थापनाऽनन्तगुणा । ततो व्याघातभाविन्यतीत्थापनाऽनन्तगुणा । तत उत्कृष्टमनुभागकण्डकं विशेषाधिकं, समयगतैः स्पर्धकैरतीत्थापनातोऽधिकत्वात् । ततः उत्कृष्टो निक्षेपो विशेषाधिकः । ततोऽपि सर्वोऽनुभागो विशेषाधिकः ॥ ७ ॥

इदाणिं दोण्हवि अप्पाबहुगं सुत्तेण भण्णति—

**थोवं पएसगुणहाणिअंतरं दुसु जहन्ननिक्खेवो । कमसो अणंतगुणिओ दुसु वि अइत्थावणा तुल्ला ॥८॥**

वाघाएणणुभागकंडगमेक्काइ वग्गणाऊणं । उक्कस्सो णिक्खेवो ससंतवंधो य सविसेसो ॥ ९ ॥

(चू०)—'थोवं'–अप्पं अंतरं । 'पदेसगुणहाणि'त्ति–एगिए ठितिए एगंमि पदेसगुणहाणिठाणंतरे फड्डगाणि थोवाणि । अहवा णेहपच्चतितफड्डगस्स एगंमि अणुभागदुगुणहाणिठाणंतरे अणुभागा सव्वथोवा । 'दुसु जहण्णणिक्खेवो कमसो अणंतगुणय'त्ति–उव्वट्टणाए ओव्वट्टणाए य जहण्णतो णिक्खेवो दोण्ह वि तुल्लो अणंतगुणो । 'दुसु वि अतित्थावणा तुल्ल'त्ति–ततो उव्वट्टणाणं (ओवट्टणाणं) अतित्थावणा दोण्ह वि तुल्ला अणंतगुणा । 'वाघाएणणुभागकंडगं एक्काए वग्गणाए ऊणं'–वाघातेण जं उक्कोसगअणुभागकंडगं तं एक्काए वग्गणाए ऊणं ऊक्कोसिया अतित्थावणा अणंतगुणा । 'उक्कोसो णिक्खेवो'त्ति–ततो उव्वट्टणतोवट्टणाणं उक्कस्सतो णिक्खेवो दोण्हवि तुल्लो विसेसाहितो 'स संतबन्धोय सविसेसो'त्ति–ततो संतकम्मेणं सह अणुभागबन्धो विसेसाहितो ॥

(मलय०)–सम्प्रति द्वयोरप्युद्वर्तनापवर्तनयोरल्पबहुत्वं सूत्रकृत्प्रतिपादयति—'थोवं' ति । एकस्यां स्थितौ यानि स्पर्धकानि तानि क्रमशः स्थाप्यन्ते । तद्यथा–सर्वजघन्यं रसस्पर्धकमादौ, ततो विशेपाधिकरसं द्वितीयम्, ततो विशेपाधिकरसं तृतीयम्, एवं यावत्सर्वोत्कृष्टरसमन्ते । तत्रादिस्पर्धकादारभ्योत्तरोत्तरस्पर्धकानि प्रदेशापेक्षया विशेपहीनानि विशेपहीनानि, अन्तिमस्पर्धकादारभ्य पुनरधोऽधः क्रमेण प्रदेशापेक्षया विशेपाधिकानि विशेपाधिकानि । तेपां मध्ये एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा यत्स्पर्धकजातं तत् सर्वस्तोकम् । अथवा स्नेहप्रत्ययस्पर्धकस्यानुभागद्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा यदनुभागपटलं तत्सर्वस्तोकम् । ततः 'दुसु' त्ति–द्वयोरप्युद्वर्तनापवर्तनयोर्जघन्यो निक्षेपोऽनन्तगुणः, स्वस्थाने तुल्यः । तत्र यद्यप्युद्वर्तनायामावलिकाऽसंख्येयभागगतानि स्पर्धकानि

निक्षेपः,अपवर्तनायां समयाधिकावलिकात्रिभागगतानि स्पर्धकानि, तथाप्यादिमस्थितिषु स्पर्धकानि स्तोकान्येव प्राप्यन्ते, अन्तिमस्थितिषु प्रभूतानीति स्पर्धकसंख्यापेक्षया द्वयोरपि निक्षेपस्तुल्यः । एवमतीत्थापनायामुत्कृष्टनिक्षेपेऽपि च भावनीयम् । क्रमश इति च सकलगाथापेक्षया योजनीयम् । ततो द्वयोरप्यतीत्थापना व्याघातबाह्याऽनन्तगुणा, स्वस्थाने तु परस्परं तुल्या । ततः 'वाघाएण'इत्यादि-व्याघातेन यदुत्कृष्टमनुभागकण्डकमेकया वर्गणया—एकसमयमात्रस्थितिगतस्पर्धकसंहतिरूपयोनं, एषोत्कृष्टाऽतीत्थापना साऽनन्तगुणा । तत उद्वर्तनापवर्तनयोरुत्कृष्टो निक्षेपो विशेषाधिकः, स्वस्थाने तु परस्परं तुल्यः । ततः 'ससंतबंधो य सविसेसो' त्ति—पूर्वबद्धोत्कृष्टस्थितिकर्मानुभागेन सहोत्कृष्टस्थित्यनुभागबन्धो विशेषाधिक इति ॥ ८–९ ॥

(उ०)—सम्प्रति द्वयोरप्युद्वर्त्तनापवर्त्तनयोरल्पबहुत्वं सूत्रकृदाह—एकस्यां स्थितौ यानि स्पर्धकानि तानि क्रमेण स्थापयित्वा गण्यन्ते । तथाहि—सर्वजघन्यं रसस्पर्धकमादौ, ततो विशेषाधिकरसं द्वितीयम्,ततोऽपि विशेषाधिकरसं तृतीयम्,एवं यावत्सर्वोत्कृष्टरसमन्ते । तत्रादिस्पर्धकादारभ्योत्तरोत्तरस्पर्धकानि प्रदेशापेक्षया विशेषहीनानि, अन्तिमस्पर्धकादारभ्य पुनरधोऽधः क्रमेण प्रदेशापेक्षया विशेषाधिकानि । एतेषां मध्ये एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा वर्तमानं स्पर्धकपटलं सर्वस्तोकम् । अथवा प्रागुक्तस्य स्नेहप्रत्ययस्पर्धकस्यानुभागद्विगुणवृद्ध्यन्तरेऽनुभागद्विगुणहान्यन्तरे वा यदनुभागकदम्बकं तत्सर्वस्तोकम् । ततो 'दुसु' त्ति—द्वयोरप्युद्वर्त्तनापवर्त्तनयोर्जघन्यो निक्षेपोऽनन्तगुणः, स्वस्थाने तु तुल्यः । यद्यप्युद्वर्त्तनायां जघन्यो निक्षेप आवलिकाऽसङ्ख्येयभागगतस्पर्धकपटलप्रमाणोऽपवर्त्तनायां च समयाधिकावलिकात्रिभागगतस्पर्धकजातमानस्तथाऽप्यादिमस्थितिषु स्तोकान्येव स्पर्धकानि लभ्यन्ते, अन्तिमस्थितिषु च प्रभूतानीति स्पर्धकसङ्ख्यापेक्षया द्वयोरपि निक्षेपस्य तौल्यमविरुद्धम् । इयमेव भावनाऽतीत्थापनायामुत्कृष्टनिक्षेपेऽपि च

विधया । 'क्रमशः' इति चाद्यापेक्षया योजनीयम्, न तु द्वयोस्तुल्यत्वेनाभिमतयोर्मध्ये । ततो द्वयोरप्यतीत्थापना व्याघातबहिर्भूताऽनन्तगुणा, स्वस्थाने तु द्वे अपि परस्परं तुल्ये । ततो व्याघातेनोत्कृष्टातीत्थापनात्वेनोपजायमानं यदनुभागकण्डकमेकया वर्गणया-एकसमयमात्रस्थितिगतस्पर्धकसंहतिरूपयोनं तदनन्तगुणम् । तत उद्वर्त्तनापवर्त्तनयोरुत्कृष्टो निक्षेपो विशेषाधिकः, स्वस्थाने तु द्वावप्युत्कृष्टनिक्षेपौ परस्परं तुल्यौ । ततः समद्वन्धः-पूर्वबद्धोत्कृष्टस्थित्यनुभागसत्कर्मसहित उत्कृष्टस्थित्यनुभागबन्धः सविशेषो-विशेषाधिकः, समयाधिकातीत्थापनावलिकागतैः पूर्वबद्धैर्वध्यमानैश्च स्पर्धकैरधिकत्वात् ॥ ८-९ ॥

इदाणीं उव्वट्टणोव्वट्टणाणं कालणियमो दव्वणियमो य कीरति—

**आवंधा उक्कड्ढइ सव्वहितोकड्ढणा ठिइरसाणं । किट्टीवज्जे उभयं किट्टिसु ओवट्टणा एक्का ॥ १० ॥**

(चू०)—'आवन्धा' इति-जाव बन्धो अत्थि ताव 'उक्कड्ढति' उव्वट्टेति । 'सव्वहितोकड्ढणा'त्ति-बंधकाले अबंधकाले य उक्कड्ढणा भवति 'ठिइरसाणं'ति-ठितिअणुभागाणं । अहवा 'आवन्धा उक्कड्ढइ'त्ति-जावतितो बन्धो तावति तस्स संतकम्मस्स उव्वट्टणा, उवरिल्लसंतकम्मस्स ठितिअणुभागुव्वट्टणा णत्थि । 'सव्वहितोकड्ढण'त्ति-बन्धमाणहेट्ठउपरउ व ठितिअणुभागाणं ओवट्टणा भवति। 'किट्टिवज्जे उभयं'ति-किट्टीकतं दव्वं मोत्तूण'उभयं'त्ति-उव्वट्टणओव्वट्टणाओ भवंति ।'किट्टीसु'-किट्टीकयदव्वेसु उव्वट्टणा णवरिं,उव्वट्टणा णत्थि। उव्वट्टणतोवट्टणकरणा सम्मत्ता ॥ १० ॥

(मलय०)-संप्रत्युद्वर्तनापवर्तनयोः कालनियमं विषयनियमं च प्रतिपादयति—'आवंध'त्ति । आ बन्धात्-बन्धं यावद् उत्कर्षयति,

यावद्बन्धस्तावदुद्वर्तना भवति, परतो न भवतीत्यर्थः । तथा सर्वत्र बन्धकरणकालेऽबन्धकाले वाऽपकर्षणा—अपवर्तना स्थितिरसानां—स्थित्यनुभागानां प्रवर्तते, एष कालनियमः, अथवा आबन्धादिति यावन्मात्रस्थितिबन्धस्तावन्मात्रस्य स्थितिसत्कर्मणः स्थित्युद्वर्तनानुभागोद्वर्तना चोपजायते । उपरितनस्य कर्मणः स्थित्यनुभागोद्वर्तना न भवति । अपकर्षणा—अपवर्तना पुनः सर्वत्र बन्धप्रमाणादर्वाक् परतो वा स्थित्यनुभागयोः प्रवर्तते । तथा किट्टीकृतवर्जे कर्मदलिके उभयम्—उद्वर्तनापवर्तनारूपं भवति । किट्टीकृते त्वपवर्तनैव केवला, नोद्वर्तनेति । एष विषयनियमः ॥ १० ॥

॥ इत्याचार्य श्रीमलयगिरिविरचितायां कर्मप्रकृतिटीकायामुद्वर्तनापवर्तने समाप्ते ॥

(उ०)—सम्प्रत्युद्वर्त्तनापवर्त्तनयोः कालनियमं चाह—आबन्धात्—बन्धं यावदुत्कर्षयति, यावद्बन्धस्तावदेवोद्वर्त्तना भवति न परतोऽपीत्यर्थः । तथा सर्वत्र बन्धकालेऽबन्धकाले वाऽपवर्त्तना स्थितिरसानां प्रवर्तते, कालनियमोऽयम् । यद्वा आबन्धादिति यावन्मात्रः स्थितिबन्धस्तावन्मात्रस्य स्थितिसत्कर्मणः स्थित्युद्वर्त्तनानुभागोद्वर्त्तना च भवति, उपरितनस्य तु न भवति । अपकर्षणा—अपवर्तना पुनः सर्वत्र बन्धप्रमाणादर्वाक् परतो वा स्थित्यनुभागयोर्भवतीत्यर्थः । तथा किट्टीकृतवर्जे कर्मदलिके उभयम्—उद्वर्तनापवर्तनालक्षणं भवति, किट्टीकृतेषु तु कर्मस्वपवर्तनैव केवला प्रवर्तते नोद्वर्तनेति विषयनियमोऽयम् ॥ १० ॥

॥ इत्युपाध्यायश्रीयशोविजयगणिविरचितायां कर्मप्रकृतिटीकायामुद्वर्त्तनापर्तने समाप्ते ॥

## इति उद्वर्त्तनापवर्त्तने समाप्ते ॥

उद्वर्तनाऽपवर्तना करणे ।

नमोत्थु णं समणस्स भगवओ महावीरस्स।

सिद्धान्तकोविदसुविहिताचार्यश्रीविजयदानसूरीश्वरगुरुभ्यो नमः।

## कर्मप्रकृतौ उदीरणाकरणम्।

इदाणीं उदीरणाकरणं भण्णति। तत्थ इमे अत्थाहिगारा। तं जहा–लक्खणं, भेदो, सादिअणादिपरूवणा, सामित्तं, पगतिठाणसमुक्कित्तणा, तस्सामित्तमिति। लक्खणभेदणिरूवणत्थं भण्णति—

जं करणेणोकड्ढिय उदए दिज्जइ उदीरणा एसा। पगइठिइअणुभागप्पएसमूलुत्तरविभागा ॥१॥

(चू०)—पुव्वद्धेण लक्खणं भणियं, बिइएण भेओ। 'जं'इति–पाउग्गं दव्वं, 'करणेण'–संकिलेसविसोहिजोगकरणेण, 'उक्कड्ढिय'–उक्कड्ढित्तु उदयसमए पक्खिप्पइ, 'उदीरणा एसा'–उदीरणा वुच्चति। 'पगतिट्ठिइअणुभागपएसमूलुत्तरविभाग'त्ति। तस्स इमे भेदा–पगतिउदीरणा, ठितिउदीरणा, अणुभागउदीरणा, पदेसउदीरणा य। एक्केक्का दुविहा–मूलपगतीउदीरणा, (उत्तरपगतीउदीरणा) य। मूलपगतिउदीरणा अट्ठविहा–णाणावरणादि। उत्तरपगतिउदीरणा अट्ठावण्णुत्तरसतभेदा–आभिणिबोहियणाणावरणादि ॥ १ ॥

(मलय०)—तदेवमुक्ते उद्वर्तनापवर्तने । सम्प्रत्युद्देशक्रमेणोदीरणा वक्तव्या । तत्र चैतेऽर्थाधिकाराः । तद्यथा–लक्षणं, भेदः, साद्यनादिप्ररूपणा, स्वामित्वं, उदीरणाप्रकृतिस्थानानि, तत्स्वामित्वं चेति । तत्र प्रथमतो लक्षणभेदयोः प्ररूपणार्थमाह—'जं'ति । अत्र पूर्वार्धेन लक्षणमभिहितमुत्तरार्धेन तु भेदः । तत्र यत्परमाण्वात्मकं दलिकं करणेन–योगसंज्ञकेन वीर्यविशेषेण कषायसहितेनासहितेन वा उदयावलिकाबहिर्वर्तिनीभ्यः स्थितिभ्योऽपकृष्योदये दीयते–उदयावलिकायां प्रक्षिप्यते एषोदीरणा । उक्तं च–" उदयावलियबाहिरिल्लठिईहिंतो कसायसहिपणं असहिपण वा जोगसन्नेण करणेणं दलियमाकड्ढिय उदयावलियाए पवेसणं उदीरणत्ति "। सा च किंभूता ? इत्यत आह–'प्रकृतिस्थित्यनुभागप्रदेशमूलोत्तरविभागा' । प्रकृतिस्थित्यनुभागप्रदेशैर्मूलप्रकृतिभिरुत्तरप्रकृतिभिश्च कृत्वा विभागो भेदो यस्याः सा तथा । इदमुक्तं भवति–सोदीरणा चतुर्विधा, तद्यथा–प्रकृत्युदीरणा, स्थित्युदीरणा, अनुभागोदीरणा, प्रदेशोदीरणा च । एकैकापि द्विधा–मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च । तत्र मूलप्रकृतिविषयाऽष्टधा, उत्तरप्रकृतिविषया चाष्टपञ्चाशदधिकशतभेदा ॥ १ ॥

(उ०)—तदेवमुक्ते उद्वर्तनापवर्तने, अथोद्देशक्रमागतोदीरणा वक्तव्या । तत्र चैतेऽर्थाधिकाराः–लक्षणं, भेदः, साद्यनादिप्ररूपणा, स्वामित्वं, उदीरणाप्रकृतिस्थानानि, तत्स्वामित्वं चेति । तत्रादौ लक्षणभेदप्ररूपणार्थमाह—अत्र पूर्वार्धेन लक्षणमुत्तरार्धेन च भेदोऽभिधीयते । तत्र यत्परमाण्वात्मकं दलिकं करणेन–योगसंज्ञवीर्यविशेषेण कषायसहितेन वा तद्रहितेन वा उदयावलिकाबहिर्वर्तिनीभ्यः स्थितिभ्योऽपकृष्योदये दीयते उदयावलिकायां प्रक्षिप्यते एषोदीरणा । सा चतुर्विधा । तथाहि–प्रकृत्युदीरणा, स्थित्युदीरणा, अनुभागोदीरणा, प्रदेशोदीरणा च । पुनरेकैका द्विविधा–मूलप्रकृतिविषयोत्तरप्रकृतिविषया च । तत्र मूलप्रकृतिविषयाऽष्टधा, उत्तरप्रकृतिविषया चाष्टपञ्चाशदधिकशतभेदा तथा चाह–'प्रकृतिस्थित्यनुभागप्रदेशमूलोत्तरविभागा' प्रकृतिस्थित्यनुभागप्रदेशैर्मूलप्रकृत्युत्तरप्रकृतिभेदैश्च

यद्यप्युदीरणायामुदयसमकक्षतया प्रकृतीनां द्वाविंशं शतं कर्मस्तवटीकादावुक्तम्, इह त्वष्टपञ्चाशं शतं,
कृत्वा विभागो यस्याः सा तथा। यद्यप्युदीरणायामुदयसमकक्षतया प्रकृतीनां द्वाविंशं शतं कर्मस्तवटीकादावुक्तम्, इह त्वष्टपञ्चाशं शतं,
तथापि तत्र बन्धनादीनां पृथग् विवक्षा, इह तु पृथग्विवक्षेति न दोष इति भावनीयम् ॥ १ ॥

तत्थ पढमं ताव एतेसिं चेव मूलुत्तरपगतीणं सा-
तत्थ पढमं मूलपगतीउत्तरपगतीणं उदीरणा भण्णति। तत्थ पढमं ताव एतेसिं चेव मूलुत्तरपगतीणं सा-
दिअणादिपरूवणा भण्णति—

**मूलपगईसु पंचण्ह तिहा दोण्हं चउव्विहा होइ। आउस्स साइ अधुवा दसुत्तरसउत्तरासिं पि ॥ २ ॥**

(चू०)—'मूलपगईसु' त्ति। मूलपगतिसु पगतिउदीरणा पंचण्हं तिविहा—णाणावरणदंसणावरणणामगोय-
अन्तराइयाणं एतासिं पंचण्हं मूलपगतीणं पगतिउदीरणा तिविहा भवति—अणादिता, धुवा, (अधुवा य)। कहं?
भण्णइ—णाणावरणदंसणावरणअंतरातिताणं खीणकसायस्स समयाहिया आवलिया सेसा ताव सव्वजीवाणं
धुवा उदीरणा तम्हा अणादिता। धुवा अभवियाणं, अधुवा भवियाणं। णामगोयाणं जाव सजोगिचरिमसमउ
ताव सव्वेसिं धुवा उदीरणा तम्हा अणादिता, धुवाधुवा पुव्वुत्ता। 'दोण्हं चउव्विहा होति'। दोण्हं ति-वेयणिताणं
(मोहणीयाणं) सादियादि चउव्विहा। कहं? भण्णइ-वेदणितस्स जाव पमत्तो ताव उदीरणा, परउ णत्थि।
मोहणीयस्स जाव सुहुमरागो ताव उदीरणा, परतो णत्थि। ततो परिवडमाणाणं सादिआ। तं ठाणमपत्तपुव्वस्स
अणादिता, धुवाधुवा पुव्वुत्ता। 'आउस्स साइ अधुवा'-आउगस्स सादितअधुवा एव। कहं? भण्णइ-अंते णि-
यमा उदीरणा णत्थि त्ति काउं। मूलपगतिअहिगारे उत्तरपगतीणमवि णिद्देसं करेति लाघवत्थं। 'दसुत्तरसउत्त-

रासिंपि'त्ति—दसुत्तरस्स उत्तरपगतिसतस्स सादितअधुवा एव उदीरणा। कहं ? भण्णइ—अधुवोदयत्तातो। कयरं दसुत्तरं पगतिसतं ? भण्णइ—पंचणाणावरणा चत्तारि दंसणावरण मिच्छत्तं तेजतिगसत्तगं वण्णातिवीस अगुरुलहुगं थिराथिरसुभासुभा णिमेण पंचअंतरातिगाए ततो अडयालीसं मोत्तूणं सेसं दसुत्तरं पगतिसतं ॥ २ ॥

(मलय०)—तदेवमुक्तौ लक्षणभेदौ। सम्प्रति साद्यनादिप्ररूपणा कर्त्तव्या। सा च द्विधा—मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र प्रथमतो मूलप्रकृतिविषयामाह—'मूलपगईसु'त्ति। मूलप्रकृतिषु मध्ये पञ्चानां मूलप्रकृतीनां ज्ञानावरणदर्शनावरणनामगोत्रान्तरायरूपाणामुदीरणा 'त्रिधा'—त्रिप्रकारा, तद्यथा—अनादिर्ध्रुवाऽध्रुवा च। तथाहि—ज्ञानावरणदर्शनावरणान्तरायाणां यावत् क्षीणमोहगुणस्थानकस्य समयाधिकावलिकाशेषो न भवति तावत्सर्वजीवानामुदीरणाऽवश्यंभाविनी। नामगोत्रयोस्तु यावत्सयोगिचरमसमयस्तावत्। तत एषामनादिरुदीरणा, ध्रुवाऽभव्यानां, अध्रुवा भव्यानाम्। तथा द्वयोर्वेदनीयमोहनीययोरुदीरणा चतुर्विधा। तद्यथा—सादिरनादिर्ध्रुवाऽध्रुवा च। तत्र वेदनीयस्य प्रमत्तगुणस्थानकं यावदुदीरणा, न परतः। मोहनीयस्य सूक्ष्मसंपरायगुणस्थानकं यावत् न परतः। ततोऽप्रमत्तादिगुणस्थानकेभ्यः प्रतिपततो वेदनीयस्योपशान्तमोहगुणस्थानकाच्च प्रतिपततो मोहनीयस्योदीरणा सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत्। आयुषः पुनरुदीरणा सादिरध्रुवा च। तथाहि—आयुषः पर्यन्तावलिकायां नियमादुदीरणा न भवति ततोऽध्रुवा, पुनरपि परभवोत्पत्तिप्रथमसमये प्रवर्तते ततः सादिरिति। तदेवं कृता मूलप्रकृतिषु साद्यनादिप्ररूपणा। सम्प्रत्युत्तरप्रकृतिषु तां चिकीर्षुराह—'दसुत्तरसउत्तरासिं पि,' सादिरध्रुवा चेत्यनुवर्तते। उत्तरासामपि उत्तरप्रकृतीनामपि—दशोत्तरशतसंख्यानां, पञ्चविधज्ञानावरणदर्शनावरणचतुष्टयमिथ्यात्वतैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणान्तरायपञ्चकरूपाष्टाचत्वारिंशद्वर्जानां सर्वेशे-

पप्रकृतीनामित्यर्थः । उदीरणा द्विधा, तद्यथा–सादिरध्रुवा च । सा च साद्यध्रुवताऽध्रुवोदयत्वादेव सिद्धा ॥ २ ॥
(३०)—तदेवमुक्तौ लक्षणभेदौ, अथ साद्यनादिप्ररूपणा कर्तव्या । सा च द्विधा–मूलोत्तरप्रकृतिविषयभेदात् । तत्र प्रथमतो मूल-
प्रकृतिविषया तामाह— मूलप्रकृतिषु मध्ये पञ्चानां ज्ञानावरणदर्शनावरणनामगोत्रान्तरायरूपाणामुदीरणा 'त्रिधा'–त्रिप्रकारा, तद्यथा–
अनादिर्ध्रुवाऽध्रुवा च । तथाहि–ज्ञानावरणदर्शनावरणान्तरायाणां यावत्क्षीणमोहगुणस्थानकस्य समयाधिकावलिका नावशिष्यते, नाम-
गोत्रयोस्तु यावत्सयोगिचरमसमयस्तावत्सर्वजीवानामुदीरणाऽवश्यंभाविनीति अनादिरेषामुदीरणा । ध्रुवाऽभव्यानां, अध्रुवा भव्याना-
मिति । तथा द्वयोर्वेदनीयमोहनीययोरुदीरणा चतुर्विधा । तद्यथा–सादिरनादिर्ध्रुवाऽध्रुवा च । तत्र वेदनीयस्य प्रमत्तगुणस्थानकं याव-
दुदीरणा, न परतः । मोहनीयस्य सूक्ष्मसम्परायगुणस्थानकं यावन्न परतः । ततोऽप्रमत्तादिगुणस्थानकेभ्यः प्रतिपततो वेदनीयस्योपशा-
न्तमोहगुणस्थानकाच्च प्रतिपततो मोहनीयस्योदीरणा सादिः, तत्तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत् । आयुषः पुनरुदीरणा
सादिरध्रुवा च । तथाहि–आयुषः पर्यन्तावलिकायां नियमादुदीरणा न भवति ततोऽध्रुवा, परभवोत्पत्तिप्रथमसमय एव च भूयः प्रवर्त्तते
ततः सादिरिति । तदेवं कृता मूलप्रकृतिषु साद्यनादिप्ररूपणा । अथोत्तरप्रकृतिषु तां विधित्सुराह–'दसुत्तर' इत्यादि, उत्तरासामप्युत्तरप्रकृती-
नामपि, दशोत्तरशतसंख्याना–ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयमिथ्यात्वतैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्मा-
णान्तरायपञ्चकरूपाष्टचत्वारिंशद्वर्जसर्वशेषप्रकृतीनामित्यर्थः, उदीरणा सादिरध्रुवा च, सा च साद्यध्रुवताऽध्रुवोदयत्वादेव सिद्धा ॥ २ ॥

इदानीं उत्तरपगतीणं सादिअणादिपरूवणत्थं भण्णाति–

**मिच्छत्तस्स चउद्धा तिहा य आवरणविग्घचउदसगे । थिरसुभसेयर उवघायवज्जधुवबंधिनामे य ॥ ३ ॥**

(चू०)—'मिच्छत्तस्स चउद्धा' इति–मिच्छत्तस्स सादिआदि चउव्विहा उदीरणा। कहं? भण्णइ–पढमसम्मत्तं उप्पाएमाणस्स उदीरणा णत्थि ततो पुणो परिवडमाणस्स सादिया। तं ठाणमपत्तपुव्वस्स अणादिता, धुवाधुवा पुव्वुत्ता। 'तिहा य आवरणविग्घचोद्दसगे'त्ति, तिहा इति–अणादितधुवअधुवा। कहं? भण्णइ–पंचणाणावरण चत्तारि दंसणावरण पंच अन्तराइयाणं एतासिं चोद्दसण्हं पगतीणं जाव खीणकसातो ताव हेट्ठिल्ला णियमा उदीरगा तम्हाऽणादिता, धुवाधुवा पुव्वुत्ता। 'थिरसुभसेतर उवघायवज्जधुवबन्धिनामेय'त्ति, थिरसुभसेतरेत्ति–सपडिवक्खा अथिरअसुभसहिता, उवघातवज्जधुवबन्धिणामा–उपघातं मोत्तूणं सेसा णामम्मि धुवबन्धिणो सव्वे गहिता। के ते? भण्णइ–तेजतिगसत्तगं वण्णादिवीस अगुरुलहुगं णिम्मेणमिति एतासिं पि तेत्तीसाए धुवपगतीणं अणादितधुवअधुवा एव उदीरणा। कहं? भण्णइ–जावसजोगिचरिमसमतो ताव सव्वेसिं धुवो एव उदयो तम्हा अणादिता, धुवाधुवा पुव्वुत्ता ॥ ३ ॥

(मलय०)—'मिच्छत्तस्स'त्ति–मिथ्यात्वस्योदीरणा चतुर्धा, तद्यथा–सादिरनादिर्ध्रुवाऽध्रुवा च। तत्र सम्यक्त्वं प्रतिपद्यमानस्योदीरणा मिथ्यात्वस्य न भवति, उदयाभावात्। सम्यक्त्वात्प्रतिपतितस्य मिथ्यात्वं गतस्य पुनरपि भवति ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य त्वनादिः, अभव्यानां ध्रुवा, भव्यानामध्रुवा। तथा ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकरूपाणां चतुर्दशप्रकृतीनामुदीरणा त्रिप्रकारा। तद्यथा–अनादिर्ध्रुवाऽध्रुवा च। तथाहि–एतासां प्रकृतीनां ध्रुवोदयत्वादनादिरुदीरणा, अभव्यानां ध्रुवा, भव्यानां तु क्षीणमोहगुणस्थानके आवलिकाशेषे व्यवच्छेदभावादध्रुवा। तथा स्थिरशुभे सेतरे–अस्थिराशुभसहिते तयोः, उपघातं वर्ज-

## प्रकृत्युदीरणायां साद्यादिभंगयन्त्रम् मूलप्रकृतिषु

| प्रकृतिनामानि | सादिः | अध्रुवा | अनादिः | ध्रुवा |
|---|---|---|---|---|
| ज्ञाना० दर्श० विघ्नानाम् | ० | भव्यानाम् | १२ मे समयाधिकाव॰शेषं यावत् | अभव्यानाम् |
| नामगोत्रयोः | ० | ,, | त्रयोदशचरमसमय यावत् | ,, |
| वेदनीयस्य | अप्रमतात्प्रतिपतताम् | ,, | सादिस्थानमप्राप्तानां | ,, |
| मोहस्य | ११ तः प्रतिपतताम् | ,, | ,, | ,, |
| आयुषः | भवप्रथमसमये प्रवर्त्तमानत्वात् | भवान्त्यावलिकायामभवनात् | ० | ० |

### उत्तरप्रकृतिषु

| | | | | |
|---|---|---|---|---|
| मिथ्यात्वस्य | सम्यक्त्वात् प्रतिपतताम् | भव्यानाम् | सम्यक्त्वाप्राप्तानां (अनादिमिथ्यादृशां) | अभव्यानाम् |
| ज्ञाना० ५—दर्श० ४—विघ्न० ५ रूपाणाम् (१४) | ० | १२ मे समयाधिकाव० शेषे व्यवच्छेदात् | ध्रुवोदयत्वात् (विच्छेदात्प्राक्) | ,, |
| स्थिर-अस्थिर-शुभ-अशुभ-तै० ७-वर्णादि २०-अगु० निर्माणानाम् ३३ | ० | १३ मेव्यवच्छेदात् | ,, | ,, |
| शेषाणाम् (११०) | अध्रुवोदयत्वात् | अध्रुवोदयत्वात् | | |

द्रष्टव्यम् । तथा द्वयोर्नामगोत्रयोर्योग्यन्ताः सयोगिकेवलिपर्यवसानाः सर्वेऽप्युदीरकाः । इतिशब्दो भिन्नक्रमो गाथान्ते योजनीयः, स च मूलप्रकृत्युदीरणाभिधानपरिसमाप्तिद्योतकः ॥ ४ ॥

इदाणिं उत्तरपगतीणं भण्णइ—

**विग्घावरणधुवाणं छउमत्था जोगिणो उ धुवगाणं । उवघायस्स तणुत्था तणुकिट्टीणं तणुगरागा ॥५॥**

(चू०)—अंतरातियणाणावरणदंसणावरण चउक्का एते धुवा, एयासिं चोदसण्हं पगतीणं सव्वे छउमत्था उदीरगा। 'जोगिणो तु धुवगाणं'त्ति, सहजोगेण जोगिणा, धुवगाणं ति–धुवोदतीणं तेतीसाए पुव्वुत्ताणं सव्वे जोगिणो उदीरगा । 'उवघायस्स तणुत्था'–उवघातस्स सरीरणामाए उदए वट्टमाणस्स सव्वे उदीरगा । 'तणुकिट्टीणं' ति–सुहुमकिट्टीणं 'तणुगरागो'त्ति–चरिमावलिगं मोत्तूणं सव्वे सुहुमरागा उदीरगा ॥ ५ ॥

(मलय०)—तदेवं मूलप्रकृत्युदीरणास्वाम्युक्तः। साम्प्रतमुत्तरप्रकृत्युदीरणास्वामिनमाह—'विग्घ' त्ति। 'विग्घ' त्ति–अन्तरायं, ततोऽन्तरायपञ्चकज्ञानावरणपञ्चकदर्शनावरणचतुष्टयरूपाणां चतुर्दशानां ध्रुवोदयप्रकृतीनां सर्वे छद्मस्था उदीरकाः। तथा 'धुवगाणं' ति–नामध्रुवोदयानां त्रयस्त्रिंशत्संख्यानां तैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणरूपाणां योगिनः–सयोगिकेवलिपर्यन्ता उदीरकाः। उपघातनाम्नस्तु तनुस्थाः शरीरस्थाः–शरीरपर्याप्त्या पर्याप्ता उदीरकाः। तनुकिट्टीनां–सूक्ष्मकिट्टीनां, अर्थात् लोभसत्कानां, तनुकरागाः–सूक्ष्मसम्पराया यावच्चरमावलिका न भवति तावदुदीरकाः ॥५॥

(उ०)—तदेवं मूलप्रकृत्युदीरणास्वाम्यभिहितः, अथोत्तरप्रकृत्युदीरणास्वामिनमाह—विघ्नाः पञ्चाऽन्तरायप्रकृतयः, आवरणानि

ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयरूपाणि, तेषां चतुर्दशानां ध्रुवोदयकर्मणां सर्वे छद्मस्था उदीरकाः। तथा 'धुवगाणं'ति–नामध्रुवोदयानां त्रयस्त्रिंशत्संख्यानां तैजसमसृकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणरूपाणां योगिनः–सयोगिकेवलिपर्यन्ता उदीरकाः। तनुकिट्टीनां–सूक्ष्मकिट्टीनामर्थाल्लोभसत्कानां तनुकरागाः–सूक्ष्मसंपराया उपशानतानामनुताः–शरीरपर्याप्त्या पर्याप्ता उदीरकाः। यावदावलिका न भवति तावदुदीरकाः ॥ ५ ॥

**तसबायरपज्जत्तग सेयर गइजाइदिट्ठिवेयाणं। आऊण य तन्नामा पत्तेगियरस्स उ तणुत्था ॥ ६ ॥**

(चू०)—'तसबादरपज्जत्तगा सेतर'त्ति। सपडिवक्खो तसथावरबादरसुहुमपज्जत्तअपज्जत्त चत्तारि गतीतो एवं पंच जातीतो मिच्छदंसणातितिण्णिदिट्ठीतो तिण्णि वेदा चत्तारि आउगाणि, एतासिं पणुवीसाए पगतीणं 'तण्णामा'–तण्णामा सव्वे उदीरगा। तं जहा–तसणामाए तसा। एवं सव्वे सरीरत्था वा अंतरगतीए वट्टमाणा वा उदीरगा। एवं सव्वेसिं भाणियव्वं। 'पत्तेगियरस्स उ तणुत्था'–पत्तेयसरीरणामाए साहारणसरीरणामाए य सव्वे सरीरोदए वट्टमाणा उदीरगा ॥ ६ ॥

(मलय०)—'तस' त्ति–त्रसबादरपर्याप्तानां सेतराणां सप्रतिपक्षाणां स्थावरसूक्ष्मापर्याप्तसहितानामित्यर्थः। तथा चतसृणां गतीनां, पञ्चानां च जातीनां, तिसृणां दृष्टीनां–दर्शनानां मिथ्यादर्शनादीनां, त्रयाणां च वेदानां नपुंसकवेदादीनां, चतुर्णां चायुषां, सर्वसंख्यया पञ्चविंशतिप्रकृतीनां यथास्वं तन्नामानस्तत्तत्प्रकृतिनामान उदीरकाः, तद्यथा–त्रसनाम्नस्त्रसाः, ते च शरीरेऽपान्तरालगतौ च वर्तमाना उदीरकाः, एवं शेषाणामपि भावनीयम्। तथा प्रत्येकनाम्न इतरस्य च साधारणनाम्नः तनुस्थाः–शरीरस्थाः शरीरपर्याप्त्या पर्याप्ता यथाक्रमं

प्रत्येकशरीरिणः साधारणशरीरिणश्च सर्वे उदीरकाः ॥ ६ ॥

(उ०)—त्रसबादरपर्याप्तानां सेतराणां—सप्रतिपक्षाणां स्थावरसूक्ष्मापर्याप्तसहितानामित्यर्थः, तथा गतीनां चतसृणां, जातीनां पञ्चानां, दृष्टीनां तिसृणां मिथ्यात्वसम्यक्त्वमिश्रदृष्टिलक्षणानां, वेदानां त्रयाणां, आयुषां च चतुर्णां, सर्वसंख्यया पञ्चविंशतिप्रकृतीनां यथास्वं तन्नामानस्तत्तत्प्रकृतिनिष्पन्ननामान उदीरकाः, तथाहि—त्रसनाम्नस्त्रसाः, बादरनाम्नो बादराः, ते च शरीरेऽपान्तरालगतौ च वर्तमाना उदीरकाः । एवं सर्वेषामपि भावनीयम् । तथा प्रत्येकनाम्न इतरस्य च साधारणनाम्नस्तनुस्थाः शरीरपर्याप्त्या पर्याप्ता इत्यर्थः । यथाक्रमं प्रत्येकशरीरिणः साधारणशरीरिणश्च सर्वे उदीरकाः ॥ ६ ॥

**आहारग नरतिरिया सरीरदुगवेयए पमोत्तूणं । ओरालाए एवं यदुवंगाए तसजियाउं ॥७॥**

(चू०)—'आहारगनरतिरिया' इति—अणाहारगाणं पडिसेहो कीरइ, आहरगा जे णरतिरिता 'सरीरदुगवेदए पमोत्तूणं'—तत्थ वेउव्वियआहारसरीरवेदेण मोत्तूणं 'उरालिए'त्ति—उरालियसरीरणामाए सव्वे उदीरगा। 'एवं तदुवंगाए'—एमेव उरालितसरीरअङ्गोवंगणामाए, णवरिं 'तसजियाओ'—तसकाइगा उदिरेंति ॥ ७ ॥

(मलय०)—'आहारग' त्ति—ये नरा मनुष्यास्तिर्यञ्चश्च आहारका ओजोलोमप्रक्षेपाहारणामन्यतममाहारं गृह्णन्तस्ते औदारिकशरीरनाम्नः । उपलक्षणमेतदौदारिकबन्धनचतुष्टयस्यौदारिकसंघातस्य चोदीरकाः, किं सर्वेऽपि ? नेत्याह—शरीरद्विकवेदकान् प्रमुच्य, शरीरद्विकमाहारकवैक्रियलक्षणं तत्स्थान् परित्यज्य । ते हि नौदारिकशरीरनामोदये वर्तन्ते, तत्कथं तस्योदीरकाः स्युः ? । तथवमुक्तेन प्रकारेण 'तदुवंगाए' त्ति तदंगोपांगनाम्न औदारिकांगोपांगनाम्न उदीरका वेदितव्याः । केवलं ते त्रसकायिका एव, न स्थावराः,

तेषां तदुदयाभावात् ॥ ७ ॥ मनुष्यास्तिर्यञ्चश्च । 'ओरालाए' त्ति–औदारिकशरीर-

(उ०)—आहारका ओजोलोमप्रक्षेपाहाराणामन्यतमाहारग्राहिणो ये नरा किमविशेषेण सर्वेऽपि ? नेत्याह–शरीरद्विकमाहारकवैक्रिय-
नाम्नः, उपलक्षणादौदारिकबन्धनचतुष्टयस्यौदारिकसङ्घातनस्य च, उदीरकाः । तथा एव-
लक्षणं तद्वेदकान्–तत्स्थान् परित्यज्य । ते औदारिकशरीरनामोदय एव न वर्तन्त इति सुतरां न तदुदीरका इति त्यज्यन्ते । तेषां तदुदयाभा-
प्रकारेण, 'तदुवंगाए' त्ति–तदङ्गोपाङ्गनाम्नस्त एवोदीरका ज्ञातव्याः । केवलं ते त्रसजीवा एव, न स्थावरा अपि, अत्राहारीत्याहारक-
वात् । उक्तं च–"[1]आहारगी उत्तरतणु नरतिरि तव्वेयए पमोत्तूणं । उदीरंति उरल ते चेव तसा उवंगं से ॥"
शरीरिणः, 'उत्तरतणु' त्ति–वैक्रियशरीरिणो देवान्नारकांश्च नरतिरश्चोऽपि तद्वेदकान् प्रमुच्येति पूर्वार्धार्थः ॥ ७ ॥

**वेउव्विगाइ सुरनेरईया आहारगा नरो तिरिओ । सन्नी वायरपवणो य लद्धिपज्जत्तगो होज्जा ॥८॥**

(चू०)—[आहारगा] वेउव्वितसरीरणामाए सव्वे सुरनेरतिगा उदीरगा आहारगा। अणाहारगे तु वेउव्विय-
सरीरस्स उदयो णत्थि तेण आहारग्गहणं । 'णरो तिरितो वा सण्णी'–जो नरो तिरितो वेउव्वियसरीरलद्धी सो
उदीरेइ, सो णियमा सण्णी, असण्णीसु णत्थि । 'वायरपवणो य लद्धीपज्जत्तगो होज्जा'–वादरपवणोत्ति वादर-
वाउक्कातितो, लद्धिपज्जत्तगोत्ति णियमा लद्धीए पज्जत्तगो, उदीरेति । लद्धिपज्जत्तगग्गहण वेउव्वितसरीरेण
असंपुण्णो विरमइ ॥ ८ ॥

(मलय०)—'वेउव्विगाए' त्ति-वैक्रियशरीरनाम्नः, उपलक्षणमेतद्वैक्रियबन्धनचतुष्टयस्य वैक्रियसंघातस्य च, सुरा नरयिका वा आहारका-ओजोलोमाद्यन्यतममाहारं गृह्णन्तः, यश्च नरस्तिर्यङ् वा संज्ञी वैक्रियलब्धिमान्, यश्च बादरपवनो दुर्भगनामोदयी लब्धि-पर्याप्तको-वैक्रियशरीरलब्ध्या पर्याप्तः, ते सर्वेऽप्युदीरकाः ॥ ८ ॥

(उ०)—वैक्रियशरीरनाम्न उपलक्षणाद्वैक्रियबन्धनचतुष्टयस्य वैक्रियसङ्घातनस्य च सुरा नैरयिका वाऽऽहारका ओजोलोमान्यतमा-हारग्राहिण आहारपर्याप्ता इतियावत्, यश्च नरस्तिर्यङ् वा संज्ञी वैक्रियलब्धिसंपन्नो, यश्च बादरपवनो दुर्भगनामोदयी लब्धिपर्याप्तको वैक्रियशरीरलब्ध्या पर्याप्तो भवेत्ते सर्वेऽप्युदीरकाः ॥ ८ ॥

**वेउव्विउवंगाए तणुतुल्ला पवणबायरं हिच्चा । आहारगाए विरओ विउव्वयंतो पमत्तो य ॥९॥**

(चू०)—वेउव्वितअंगोवंगणामाए विउव्वितसरीरतुल्लं ।-'पवणबायरं हिच्च'त्ति-बादरवाउक्कातितं मोत्तूणं, तंमि णत्थि। 'आहारगाए विरओ विउव्वयंतो पमत्तो य'। आहारजातं (गाए) आहारसरीरणामाए, विरतो-संजतो, विउव्वयंतोत्ति-वेउव्वियभावे वट्टमाणो, पमत्तो-पमायसहितो, उदीरेति तं आहारसरीरं ॥९॥

(मलय०)—'वेउव्विउ' त्ति-वैक्रियाङ्गोपाङ्गनाम्न उदीरकास्तनुतुल्या-वैक्रियशरीरतुल्या वेदितव्याः। ये वैक्रियशरीरनाम्न उदीरकाः प्रागुपदिष्टास्त एव वैक्रियाङ्गोपाङ्गनाम्नोऽपि वेदितव्या इत्यर्थः। किं सर्वेऽपि ? नेत्याह-बादरपवनं-बादरवायुकायिकं हित्वा-परित्यज्य शेषा द्रष्टव्याः। 'आहारगाए' इत्यादि-आहारकशरीरनाम्नो विरतः-संयतस्तदाहारकशरीरं कुर्वन् प्रमत्तः प्रमादभावमुपगतः सन् उदीरको भवति ॥ ९ ॥

(उ०)—वैक्रियाङ्गोपाङ्गनाम्न उदीरकास्तत्तुल्या वैक्रियशरीरतुल्या ज्ञातव्याः, ये वैक्रियनाम्न उदीरका उक्तास्ते एवास्यापि ज्ञेया इत्यर्थः। केवलं बादरपवनं-बादरवायुकायिकं हित्वा-परित्यज्य शेषा द्रष्टव्याः। 'आहारगाए' त्ति-आहारकशरीरनाम्न उपलक्षणादाहारकाङ्गोपाङ्गस्याहारकबन्धनस्याहारकसङ्घातस्य च विरतः-संयतः विकुर्वन्-आहारकशरीरं कुर्वन् प्रमत्तः-प्रमादभावमुपगतः सन्नुदीरको भवति। उक्तं च-"[1]आहारसत्तगस्स वि कुणइ पमत्तो विकुव्वंतो" त्ति ॥ ९ ॥

**छण्हं संठाणाणं संघयणाणं च सगलतिरियनरा। देहत्था पज्जत्ता उत्तमसंघयणिणो सेढी ॥१०॥**

(चू०)—छण्हं संठाणाणं संघयणाणं सगलतिरियनरो-पंचिंदियतिरिक्खो मणुस्सो वा देहत्थो-सरीरणामाए उदये वट्टमाणो 'पज्जत्तो' त्ति-लद्धिए णियमा पज्जत्तो उदीरेति। एगवयणग्गहणा-एगो सव्वाणि संघयणसंठाणाणि न उदीरेति, जं चेव उदिण्णं तं चेव उदीरेति। 'उत्तमसंघयणिणो सेढि' त्ति-वज्जरिसभसंघयणी सेढि पडिवज्जति, सेससंघयणिणो न पडिवज्जंतित्ति णिदरिसेइ ॥१०॥

(मलय०)—'छण्हं' ति। सकलाः पञ्चेन्द्रियास्तिर्यञ्चो मनुष्याश्च देहस्थाः-शरीरनामोदये वर्तमाना लब्ध्या पर्याप्ताः षण्णां संस्थानानां षण्णां च संहनननामुदीरका भवन्ति। इहोदयप्राप्तानामेवोदीरणा प्रवर्तते, नान्येषाम्। ततो यदा यत्संस्थानं संहननं वोदयप्राप्तं भवति तत्तदोदीर्यते, नान्यदन्यदेति द्रष्टव्यम्। तथोत्तमसंहननिनो-वज्रर्षभनाराचसंहननिनः श्रेणिः-क्षपकश्रेणिर्भवति, न शेषसंहनिनः, तेन क्षपकश्रेणिं प्रतिपन्ना वज्रर्षभनाराचसंहननमेवोदीरयन्ति, न शेषसंहननानि, उदयाभावादित्यवसेयम् ॥ १० ॥

---

[1] पञ्चसंग्रहः उदीरणाकरणगाथा ९.

(उ०)—सकलाः पञ्चेन्द्रियास्तिर्यञ्चो नराश्च शरीरपर्याप्त्या पर्याप्ता देहस्थाः–शरीरनामोदये वर्तमानाः षण्णां संस्थानानां षण्णां च संहनननामुदीरका भवन्ति । इह येषामुदयस्तेषामेवोदीरणा प्रवर्तत इति यदा यत्संस्थानं संहननं वोदयप्राप्तं भवति तत्तदोदीर्यते नान्यदन्यदेति द्रष्टव्यम् । तथोत्तमसंहनननिनो वज्रर्षभनाराचसंहनननिनः श्रेणिः–क्षपकश्रेणिर्भवति, न शेषसंहनननिनः, तेन क्षपकश्रेण्यारूढा वज्रर्षभनाराचसंहननमेवोदीरयन्ति, न शेषसंहननानि, उदयाभावादित्यवसेयम् ॥१०॥

**चउरंससस्स तणुत्था उत्तरतणु सगल भोगभूमिगया । देवा इयरे हुंडा तसतिरियनरा य सेवट्टा ॥११॥**

(चू०)—'चउरंससस्स'–समचउरससंठाणस्स 'तणुत्था'–सरीरत्था 'उत्तरतणु सगल'त्ति–उत्तरसरीरा, वेउव्वियाहारगा उत्तरसरीरे वट्टमाणा पंचिंदिया, भोगभूमिगया–भोगभूमिगा य तिरिय मणुया, देवा य एए सव्वे उदीरगा। 'इतरे हुंडा,' इतरेत्ति–भणित सेसा। के ते ? एगिंदिता विगलिंदिता णेरतिगा सगलतिरियणरेसु वि अप्पज्जत्ता एते सव्वे सरीरत्था हुंडसंठाणस्स उदीरगा। 'तसतिरियनरा य सेवट्टा,' इयरेत्ति अहिगारो, [पति]तसतिरिया (य नरा) यत्ति तिरिक्खेसु जे तसकाइया विगलिंदिता, सगलतिरियणरेसु वि जे अपज्जत्तगा, एते सव्वे सेवट्टसंघयणस्स उदीरगा ॥११॥

(मलय०)—'चउरंससस' त्ति–चतुरस्रस्यैव, समचतुरस्रसंस्थानस्यैव, तनुस्थाः–शरीरस्था उत्तरतनवः–आहारकोत्तरवैक्रियशरीरिणो मनुष्यास्तिर्यञ्चश्च, सकलाः–सकलेन्द्रियाः, पञ्चेन्द्रिया इत्यर्थः । तथा भोगभूमिगता देवाश्चोदीरका भवन्ति । 'इयरे हुंड' त्ति–इतरे उक्तशेषा एकेन्द्रियविकलेन्द्रियनैरयिका अपर्याप्तकाश्च पञ्चेन्द्रियतिर्यग्मनुष्याः एते सर्वेऽपि शरीरस्था हुंडसंस्थानस्योदीरका भवन्ति।

'तसतिरियनरा य सेवट्ट' त्ति–अनेतरे इत्यनुवर्तते, इतरे उक्तशेपास्त्रसा द्वीन्द्रियादयः पञ्चेन्द्रियतिर्यङ्मनुष्याश्च सेवार्ताः–सेवार्तसंहननोपेताः सेवार्तसंहननस्योदीरकाः ॥११॥

(उ०)—चतुरस्रस्यैव–समचतुरस्रसंस्थानस्यैव तनुस्थाः–शरीरपर्याप्त्या पर्याप्ता उत्तरतनवः-आहारकोत्तरवैक्रियशरीरिणो मनुष्यास्तिर्यञ्चश्च, सकलाः–पञ्चेन्द्रिया भोगभूमिगता देवाश्चोदीरका भवन्ति। इतरे–उक्तशेपा एकेन्द्रियविकलेन्द्रियनैरयिका अपर्याप्ताश्च पञ्चेन्द्रियतिर्यङ्मनुष्याः शरीरस्था हुण्डसंस्थानस्योदीरका भवन्ति, त्रसतिर्यग्नराश्च, अत्रापीतरे इत्यनुवृत्त्या योज्यते, तत इतरे–उक्तशेपास्त्रसा द्वीन्द्रियादयः पञ्चेन्द्रियतिर्यग्मनुष्याश्च सेवार्ताः–सेवार्तसंहननोदयभाजः सेवार्तसंहननस्योदीरकाः। विकलेन्द्रियेपु लब्ध्यपर्याप्तेष्वेव च पञ्चेन्द्रियतिर्यग्मनुष्येपु सेवार्तोदीरणानियमाभिधानतात्पर्यकमेतदन्येपां प्रागुक्तत्वात्। उक्तं च–"छेवट्टगं तु वियला अपज्जत्ता"[1] ॥११॥

संघयणाणि न उत्तरतणूसु तन्नामगा भवंतरगा। अणुपुव्वीणं पराघायस्स उ देहेण पज्जत्ता ॥१२॥

(चू०)—'संघयणाणि ण उत्तरतणूसु' त्ति–वेउव्वियआहारगसरीरेसु णत्थि। 'तण्णामगा भवंतरगा अणुपुव्वीणं,' तण्णामगा–तग्गतिणामगा भवंतरे वट्टमाणा अणुपुव्वीणं ति–अणुपुव्विणामाणं। किं भणियं होति ? णिरतगति आणुपुव्वीए णिरतित्तो अन्तरगतीए वट्टमाणो उदीरगो। एवं सेसाण वि भाणियव्वं। 'पराघायस्स उ देहेण पज्जत्त'-त्ति–पराघातणामाए देहेण पज्जत्तत्ति–सरीरपज्जति, सरीरपज्जत्तीए पज्जतिं गया सरीरोदए वट्टमाणा सव्वे उदीरगा ॥१२॥

1. पञ्चसंग्रह उदीरणाकरणगाथा १२

(मलय०)—'संघयणाणि' त्ति। उत्तरतनुषु—वैक्रियाहारकशरीरेषु संहननानि न भवन्तीति—षण्णां संहननानामेकतमदपि संहननं न भवति, तेनैकस्यापि संहननस्योदीरका न भवन्ति। तथानुपूर्वीणां—नरकानुपूर्व्यादीनां चतसृणां तन्नामकास्तत्तदानुपूर्व्यनुयायिनारकादिनामानो भवान्तरगाः—भवापान्तरालगतौ वर्तमाना उदीरकाः वेदितव्याः। तद्यथा—नारकानुपूर्व्या नारको भवापान्तरालगतौ वर्त्तमान उदीरकः, तिर्यगानुपूर्व्यास्तिर्यगित्यादि। तथा पराघातनाम्नः शरीरपर्याप्त्या पर्याप्ताः सर्वेऽप्युदीरकाः ॥१२॥

(उ०)—उत्तरतनुषु--वैक्रियाहारकशरीरेषु नरतिर्यक्ष्वपि संहननानि न भवन्ति, षण्णां संहननानामेकतरमपि संहननं न भवतीत्यर्थः, तेन ते उदयाभावादेकस्यापि संहननस्योदीरका न भवन्ति। उक्तं च—"वेउव्वियआहारगउदये न णरा वि हुंति संघयण"[1]। अत्रापिशब्देन वैक्रियशरीरिणस्तिर्यञ्चो गृह्यन्ते। तथानुपूर्वीणां नरकानुपूर्व्यादीनां चतसृणां तन्नामकाः--तत्तदानुपूर्वीपर्यायघटितनारकादिनामानो भवान्तरगाः--भवान्तरालगतौ वर्तमाना उदीरका बोद्धव्याः। तथाहि—नरकानुपूर्व्या नारको भवान्तरालगतौ वर्तमान उदीरकः, तिर्यङ् तिर्यगानुपूर्व्या इत्यादि। तथा पराघातनाम्नः शरीरपर्याप्त्या पर्याप्ताः सर्वेऽप्युदीरकाः ॥ १२ ॥

**बायरपुढवी आयावस्स य वज्जित्तु सुहुमसुहुमतसे। उज्जोयस्स य तिरिओ उत्तरदेहो य देवजई ॥१३॥**

(चू०)—'बायरपुढवी आतावस्स त' बादरपुढविकातितो पज्जत्तगो आतवणामाए उदीरगो। यसद्देण पज्जत्तगो अणुकड्ढिज्जति। 'वज्जित्तु सुहुम सुहुमतसे उज्जोयस्स य तिरिओ उत्तरदेहो य देवजइ,' सव्वे सुहुमा वज्जेत्तु, तेउकातिया वाउकातिया य सव्वे वज्जेत्तु, उज्जोवणामाए पज्जत्ततिरिउत्ति—एगिंदियविगलिंदियपंचिंदिएसु, एग-

१ पञ्चसंग्रह उदीरणाकरणगाथा १३

पयणत्थो पुव्वुत्तो, उत्तरदेहो य देवजती, जो वि उत्तरसरीरे वट्टति देवो जति वा, सो वि उज्जोवणामस्स उदीरगो ॥

(मलय०)—'बायरपुढवि'त्ति। आतपनाम्नो बादरपृथ्वीकायिक उदीरकः। चशब्दस्यानुक्तार्थसमुच्चायकत्वात् बादरपृथ्वीकायिकोऽपि पर्याप्तो द्रष्टव्यः। तथा सूक्ष्मान्–सूक्ष्मैकेन्द्रियान् सूक्ष्मत्रसांश्च–तेजोवायुकायिकान् वर्जयित्वा शेषास्तिर्यञ्चः–पृथिव्यम्बुवनस्पतयो विकलेन्द्रियाः पञ्चेन्द्रियाश्च लब्धिपर्याप्ता उद्योतनाम्नो यथासंभवमुदीरकाः। तथोत्तरदेहे–उत्तरशरीरे यथासंभवं विक्रिये आहारके च वर्तमानो देवो यतिश्चोद्योतनाम्न उदीरको भवति ॥१३॥

(उ०)—आतपनाम्नो बादरपृथ्वीकायिक उदीरकः। चशब्दस्यानुक्तसमुच्चयार्थत्वात् सोऽपि पर्याप्तो द्रष्टव्यः। तथा सूक्ष्मान्–सूक्ष्मैकेन्द्रियान् सूक्ष्मत्रसांश्च–तेजोवायुकायिकान् द्विविधानपि वर्जयित्वा शेषास्तिर्यञ्चः–पृथिव्यम्बुवनस्पतयो विकलेन्द्रियाः पञ्चेन्द्रियाश्च लब्धिपर्याप्ता उद्योतनाम्नो यथासंभवमुदीरकाः। तथोत्तरदेहे–उत्तरशरीरे यथासंभवं वैक्रिये आहारके च वर्तमानो देवो यतिश्चोद्योतनाम्न उदीरको भवति। उक्तं च–"पुढवीआउवणस्सइ बायरपज्जत्तउत्तरतणू य। विगलपणिंदियतिरिया उज्जोवुदीरगा भणिया"[1] इति ॥१३॥

**सगलो य इट्ठखगई उत्तरतणूदेवभोगभूमिगया। इट्ठसराएँ तसो वि इयरासि तसा सनेरइया ॥१४॥**

(चू०)—'सगलो य'त्ति–पंचिंदितो तिरियणरा। चसद्दा सरीरपज्जत्तीए पज्जत्तगो 'इट्ठखगइए'–पसत्थविहायगतीणामाए। 'उत्तरतणु'त्ति–उत्तरवेउव्वितए वट्टमाणा तिरियमणुया सव्वे, 'देवभोगभूमिगया'–सव्वे देवा, सव्वे भोगभूमिगा, उदीरगा 'इट्ठसराए तसो वि य'त्ति, इट्ठसराएत्ति–सुस्सरणामाए सगलतिरियणरउत्तरतणुदेवभोग-

१ पञ्चसंग्रह उदीरणाकरण गाथा१४

भोमाय भासापज्जत्तीए पज्जत्तगा एते सव्वे उदीरगा। 'तसो वि य'त्ति–बिंतिंदियादिणो वि तसकातिगा भासा पज्जत्तगा सुस्सरनामाए केइ उदीरगा। 'इयरासिं तसा सणेरतिय'त्ति, इयरासिं ति–अपसत्थविहायगतिदूसरणामाणं तसा, सणेरइयत्ति–विगलिंदिता णेरतिता य पंचिंदिया वि केइ अपसत्थविहायगतिनामाए सरीरपज्जत्तीए पज्जत्तगा उदीरगा। दुस्सरणामाए वि सव्वणेरइता भासापज्जत्तीए पज्जत्तगा उदीरगा। विगलपंचिंदियतिरियमणुया भयणिज्जा ॥१४॥

(मलय०)—'सगलो'त्ति सकलः–पञ्चेन्द्रियस्तिर्यङ्मनुष्यो वा शरीरपर्याप्त्या पर्याप्तः प्रशस्तविहायोगत्युदये वर्तमानः। तथोत्तरस्यां तनौ–वैक्रियशरीररूपायां वर्तमानाः सर्वे तिर्यञ्चो मनुष्याश्च। तथा सर्वे देवाः–सर्वे च भोगभूमिगताः। इष्टखगतेः प्रशस्तविहायोगतेरुदीरकाः। तथेष्टस्वरनाम्नः–सुस्वरनाम्नस्त्रसाः–द्वीन्द्रियादयः। अपिशब्दात्प्रागुक्ताश्च पञ्चेन्द्रियतिर्यगादयो भाषापर्याप्त्या पर्याप्ता यथासंभवमुदीरकाः। तथेतरयोरप्रशस्तविहायोगतिदुःस्वरनाम्नोस्त्रसाः–विकलेन्द्रियाः सनैरयिकाः–नैरयिकसहिताः। तथा पञ्चेन्द्रियतियङ्मनुष्याः केचन यथासंभवमुदीरका वेदितव्याः ॥१४॥

(उ०)—सकलः पञ्चेन्द्रियस्तिर्यङ्मनुष्यो वा शरीरपर्याप्तिपर्याप्त उदितप्रशस्तविहायोगतिः, तथोत्तरस्यां तनौ वैक्रियाहारकशरीररूपायां वर्तमानाः सर्वे तिर्यङ्मनुष्याः, तथा सर्वे देवाः, सर्वे च भोगभूमिगता इष्टखगतेः–प्रशस्तविहायोगतेरुदीरकाः। तथेष्टस्वरनाम्नः–सुस्वरनाम्नस्त्रसा द्वीन्द्रियादयः, अपिशब्दात्प्रागुक्ताश्च पञ्चेन्द्रियादयो भाषापर्याप्त्या पर्याप्ता यथायोगमुदीरकाः। तथेतरयोरप्रशस्तविहायोगतिदुःस्वरनाम्नोस्त्रसाः–विकलेन्द्रियाः, यथासंभवं केचन च पञ्चेन्द्रियतिर्यङ्मनुष्याः, सनैरयिका नैरयिकसहिता उदीरकाः ॥१४॥

**उस्सासस्स सराण य पज्जत्ता आणपाणभासासु। सव्वण्णुस्सासो भासा वि य जा न रुज्झंति ॥१५॥**

(चू०)—उस्सासणामस्स आणापाणुपज्जत्तीए पज्जत्ता सव्वे उदीरगा। सुस्सरदुस्सराणं भासापज्जत्तीए पज्जत्तगा उदीरगा। 'सव्वण्णुस्सासो भासा वि य जा ण रुज्झंति'—सव्वण्णूणं केवलीणं ऊस्सासभासातो जाव ण णिरुज्झंति ताव उदीरेंति, परत्थ उदयाभावातो णत्थि उदीरणा ॥१५॥

(मलय०)—'उस्सासस्स' त्ति। उच्छ्वासस्वरशब्दयोरानप्राणभाषाशब्दाभ्यां सह यथासंख्येन योजना। सा चैवं—उच्छ्वासनाम्नः प्राणापानपर्याप्त्या पर्याप्ताः सर्वेऽप्युदीरकाः। 'सराण य' त्ति—द्वित्वेऽपि बहुवचनं प्राकृतत्वात्, ततः स्वरयोः सुस्वरदुःस्वरयोः प्रागुक्ता उदीरकाः सर्वेऽपि भाषापर्याप्त्या पर्याप्ता द्रष्टव्याः। यद्यपि स्वरयोः प्रागेवोदीरका उक्तास्तथापि ते भाषापर्याप्त्या पर्याप्ता एवोदीरका वेदितव्या इति विशेषोपदेशनार्थं पुनरुपादानम्। तथा सर्वज्ञानां—केवलिनामुच्छ्वासभाषे यावन्नाद्यापि निरोधमुपगच्छतस्तावदुदीर्येते, तन्निरोधानन्तर तूदयाभावान्नोदीरणा भवति ॥१५॥

(उ०)—उच्छ्वासस्य स्वरयोश्चानप्राणभाषापर्याप्तिभ्यां पर्याप्ताः सर्वेऽप्युदीरकाः। यथासंख्येन योजनात् सप्तम्याश्च तृतीयार्थत्वात् उच्छ्वासनाम्नः प्राणापानपर्याप्त्या पर्याप्ताः सुस्वदुःस्वरयोश्च भाषापर्याप्त्या पर्याप्ता उदीरका द्रष्टव्या इत्यर्थः। यद्यपि स्वरयोरुदीरकाः प्रागवोक्तास्तथापि भाषापर्याप्त्या एवोदीरका इति विशेषोद्योतनाय पुनरुपादानम्। तथा सर्वज्ञानां—केवलिनामुच्छ्वासभाषे यावन्न निरोधमुपगच्छतस्तावदुदीर्येते, तन्निरोधानन्तरं तूदयाभावादेव नोदीरणा ॥१५॥

**देवो सुभगाइज्जाण गब्भवक्कंतिओ य कित्तीए। पज्जत्तो वज्जित्ताससुहुमणेरइयसुहुमतसे ॥१६॥**

(चू०)—'देवो सुभगादेज्जाण गब्भवक्कंतिओ य'–सुभगनामाणं आदेज्जनामाण य केदि देवा 'गब्भवक्कंतितो' त्ति–गब्भवक्कंतितो य तिरियमणुयो उदीरगो। 'कित्तीए पज्जत्तो'–जसकीत्तिणामाए पज्जत्तगणामोदए वट्टमाणा उदीरगा। 'वज्जित्ता ससुहुमनेरइयसुहुमतसे'–सव्वे ससुहुमणेरतिए तेउवकातियं वाउक्कातिय मोत्तुण सेसा केवि उदीरगा ॥१६॥

(मलय०)—'देवो' त्ति। देवो इत्यादौ जातावेकवचनम्। केचिद्देवाः केचित्तिर्यङ्मनुष्याः गर्भव्युत्क्रान्ताः सुभगादेयनाम्नोरुदीरकाः ये तदुदये वर्तन्ते। तथा सूक्ष्मैकेन्द्रियसहितान् नैरयिकान् सूक्ष्मत्रसांश्च वर्जयित्वा शेषाः पर्याप्तकनामोदये वर्तमाना यशःकीर्तेरुदीरकाः ॥१६॥

(उ०)—'देवो' इत्यादौ जात्यपेक्षमेकवचनं, केचिद्देवाः केचित्तिर्यग्मनुष्या गर्भव्युत्क्रान्ताः सुभगादेयनाम्नोरुदीरकाः, ये तदुदयभाजो भवन्ति। तथा सूक्ष्मैकेन्द्रियसहितान्नैरयिकान् सूक्ष्मत्रसाँश्च वर्जयित्वा शेषाः पर्याप्तकनामोदये वर्तमाना यशःकीर्तेरुदीरकाः ॥१६॥

**गोउत्तमस्स देवा णरा य वइणो चउण्हमियरासिं। तव्वइरित्ता तित्थगरस्स उ सव्वणुआए भवे ॥१७॥**



(चू०)—'गोउत्तमस्स देवा नरा य' त्ति–उच्चागोयस्स सव्वे देवा उदीरगा 'णरा य' त्ति–मणुयाण वि कोति उच्चागोयं उदीरेति। 'वइणो' यत्ति–जोवि णीज्जातितो यती सो वि उच्चागोयं उदीरेति। चसद्दो पत्तेयं पत्तेयं। 'चतुण्ह-

मियरामि तव्वइरित्ता' चतुण्ह मियरासित्ति–दूभगअणादिज्जअजसकित्तीणियागोयाणं 'तव्वतिरित्तं'ति–भणिय मियरामि तव्वइरित्ता' चतुण्ह मियरासित्ति–दूभगअणादेज्जाणं सेसा। के ते? भण्णइ–एगिंदिया विगलिंदिया समुच्छिममणुयतिरियणेरतिया एते सव्वे दूभगअणादेज्जाणं उदीरगा। सव्वे सुहुमा णेरतिया सव्वे य अपज्जत्तगा एते अजसकित्तिणामाए उदीरगा। सव्वे णेरतिया सव्वे निरिक्खजोणिया मणुएसु य जातिमंते वयमंते मोत्तूणं सेसा णीयागोयस्स उदीरगा सव्वे। 'तित्थगरस्स उ सव्वन्नूयाए भवे'–तित्थकरणामाए सव्वण्णुआय–[किवल] केवलणाणाउप्पण्णे उदीरगो भवति ॥१७॥

(मलय०)—'गोउत्तमस्स'त्ति। सर्वे देवा मनुष्या अपि च केचिदुच्चैःकुलसमुत्पन्नास्तथा व्रतिनो–नीचैर्गोत्रिणोऽपि पञ्चमहाव्रतसमलंकृतगात्रयष्टय उच्चैर्गोत्रस्योदीरकाः। तथा इतरासां चतसृणां प्रकृतीनां–दुर्भगानादेयायशःकीर्तिनीचैर्गोत्राणां तद्व्यतिरिक्ता–उक्तव्यतिरिक्ता वेदितव्याः। तत्र दुर्भगानादेययोरेकेन्द्रियविकलेन्द्रियसंमूर्छिमतिर्यङ्मनुष्यनैरयिकाः, अयशःकीर्तेश्च सर्वे सूक्ष्माः सर्वे च नैरयिकाः सर्वे च सूक्ष्मत्रसाः सर्वेऽप्यपर्याप्तकनामोदये वर्तमानाः। नीचैर्गोत्रस्य पुनः सर्वे नैरयिकाः सर्वे तिर्यञ्चो मनुष्या अपि विशिष्टकुलोत्पन्नान् व्रतिनश्च मुक्त्वा शेषाः सर्वेऽप्युदीरका द्रष्टव्याः। तथा तीर्थकरनाम्नः सर्वज्ञतायां सत्यां भवेदुदीरणा, नान्यदा, उदयाभावात् ॥१७॥

(उ०)—सर्वे देवा नरा अपि केचिदुच्चैःकुलसमुत्पन्ना व्रतिनश्च–नीचैर्गोत्रोत्पन्ना अपि पञ्चमहाव्रतभारोद्वहनवृषभा उच्चैर्गोत्रस्योदीरकाः। तथेतरासां चतसृणां प्रकृतीनां दुर्भगानादेयायशःकीर्तिनीचैर्गोत्राणां तद्व्यतिरिक्ता भणितोद्धरिता बोद्धव्याः। तत्र दुर्भगानादेययोरेकेन्द्रियसंमूर्छिमतिर्यग्मनुष्यनैरयिकाः, अयशःकीर्तेश्च सर्वे सूक्ष्माः सर्वे च नैरयिकाः सर्वे च सूक्ष्मत्रसाः सर्वेऽप्यपर्याप्तकनामक-

र्मोदये वर्तमानाः, नीचैर्गोत्रस्य तु सर्वे नरयिकाः सर्वे तिर्यञ्चो विशिष्टकुलोत्पन्नान् व्रतिनश्च विहाय सर्वेऽपि मनुष्याश्चोदीरका द्रष्टव्याः। तीर्थकरनाम्नस्तु सर्वज्ञतायां सत्यां भवेदुदीरणा, नान्यदा, उदयाभावात् ॥१७॥

**इंदियपज्जत्तीए दुसमयपज्जत्तगाए पाउग्गा । निद्दापयलाणं खीणरागखवगे परिच्चज्ज ॥ १८ ॥**

(चू०)—इंदियपज्जत्तीए पज्जत्तो दुसमयातो आढवेत्तु णिद्दापयलाणं उदीरणाए पाउग्गो भवति। खीणराग खवगखीणकसायखवगे मोत्तूणं तेसु उदओ णत्थि त्ति ॥१८॥

(मलय०)—'इंदिय'त्ति—इन्द्रियपर्याप्त्या पर्याप्ताः सन्तो द्वितीयसमयादारभ्येन्द्रियपर्याप्त्यनन्तरसमयादारभ्येत्यर्थः। निद्रापचलयोरुदीरणाप्रायोग्या भवन्ति। किं सर्वेऽपि ? नेत्याह—क्षीणरागान् क्षपकांश्च परित्यज्य। उदीरणा हि उदये सति भवति, नान्यथा। न च क्षीणरागक्षपकयोर्निद्राप्रचलोदयः संभवति 'निद्दादुगस्स उदओ खीणगखवगे परिच्चज्ज' इतिवचनाप्रमाण्यात्। ततस्तान् वर्जयित्वा शेषा निद्रापचलयोरुदीरका वेदितव्याः ॥ १८ ॥

(उ०)—इन्द्रियपर्याप्त्या पर्याप्ताः सन्तो द्वितीयसमयादारभ्येन्द्रियपर्याप्त्यनन्तरसमयादारभ्येत्यर्थः, निद्राप्रचलयोरुदीरणाप्रायोग्या भवन्ति। सर्वत्राविशेषप्राप्तौ नियममाह—क्षीणरागान् क्षपकाँश्च परित्यज्य। उदीरणा ह्युदयाविनाभाविनी, न च क्षीणरागक्षपकयोर्निद्राप्रचलोदयः संभवति, 'णिद्दादुगस्स उदयए खीणा खवगे परिच्चज्ज' इति वचनप्रामाण्यात्। ततस्तान् वर्जयित्वा शेषा निद्राप्रचलयोरुदीरका बोद्धव्याः। एतच्च सत्कर्मग्रन्थादिप्रसिद्ध ग्रन्थकृन्मतं। ये तु कर्मस्तवकारादयः क्षपकक्षीणमोहयोरपि निद्राद्विकस्योदयमिच्छन्ति तन्मते उदये सत्युदीरणाया अवश्यंभावात् क्षीणरागमन्तावलिकाभाविनं मुक्त्वा तदारतः सर्वेऽपि जीवा इन्द्रियपर्याप्त्या

पर्याप्ता निद्राप्रचलयोरुदीरका द्रष्टव्याः । तदुक्तं तन्मतानुसारेणैव पञ्चसंग्रहे—"मोत्तूण खीणरागं इंदियपज्जत्तगा उदीरंति । निद्दापयला" ॥१९॥ इति ॥ १८ ॥

**निद्दानिद्दाईण वि असंखवासा य मणुयतिरिया य । वेउव्वाहारतणू वज्जित्ता अप्पमत्ते य ॥१९॥**

(चू०)—णिद्दाणिद्दादिणं पि–णिद्दाणिद्दापयलापयलाथीणगिद्धीणं पि एमेव। इंदियपज्जत्तीए दुसमयपज्जत्तगादी उदीरणाए पातोग्गो भवति। असंखवासाउ मणुया य तिरिया य 'वेउव्वाहारतणूवज्जित्ता' संखवासाउगतिरियमणुवेउव्वियसरीरिणो (आहारगसरीरिणो) अपमत्तसंजए मोत्तूण एतेसिं थीणगिद्धितिगस्स उदओ णत्थित्ति किचा सेसा सव्वे उदीरगा ॥१९॥

(मलय०)—'निद्द'त्ति–असंख्येयवर्षायुषो मनुष्यतिरश्चो वैक्रियशरीरिण आहारकशरीरिणोऽप्रमत्तसंयतांश्च मुक्त्वा शेषाः सर्वेऽपि निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धीनामुदीरका वेदितव्याः ॥ १९ ॥

(उ०)—असंख्येयवर्षायुषो मनुष्यतिरश्चो वैक्रियशरीरिण आहारकशरीरिणोऽप्रमत्तसंयतांश्च मुक्त्वा शेषाः सर्वेऽपि निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धीनामुदीरकाः ॥ १९ ॥

**वेयणियाण पमत्ता ते ते बंधंतगा कसायाणं । हासाईछक्कस्स य अपुव्वकरणस्स चरमंते ॥२०॥**

(चू०)—सातावेयणीयाणं एतेसिं उदए वट्टमाणा पमत्तजीवा सव्वे उदीरगा । 'ते ते वन्धंतगा कसायाणं'ति–

जे जे जीवा बन्धंतगा कसायाणं ते ते कम्माणं उदीरगा। तं जहा–अणंताणुबन्धीणं मिच्छदिट्ठी सासायणसम्मदिट्ठी य, जं वेयगा अणंताणुबन्धीणं तो णियमा उदीरगा। अपच्चक्खाणावरणीयाणं असंजया सव्वे उदीरगा। पच्चक्खाणावरणीयाणं जाव संजयासंजए ताव सव्वे उदीरगा। संजलणकोहमाणमायालोभाणं अप्पप्पणो जाव बन्धवोच्छेयसमओ ताव हेट्ठिल्ला सव्वे उदीरगा। 'हासाइ छक्कस्स य अपुव्वकरणस्स चरिमंते'–हासरतिअरतिसोगभयदुगंछाण जाव अपुव्वकरणस्स चरिमसमओ ताव सव्वे हेट्ठिल्ला उदीरगा॥ २०॥

(मलय०)—'वेयणियाण'त्ति–वेदनीययोः सातासातरूपयोः प्रमत्ताः–प्रमत्तगुणस्थानकपर्यन्ताः सर्वेऽप्युदीरकाः। तथा ये ये जीवा येषां येषां कषायाणां बन्धकास्ते ते तेषां तेषां कषायाणामुदीरका वेदितव्याः, यतो यानेव कषायान् वेदयते तानेव बध्नाति 'जे वेयइ से बंधइ' इतिवचनात्, उदये च सत्युदीरणा, ततो युक्तमुक्तं 'ते ते बंधंतगा कसायाणं' इति। तत्र मिथ्यादृष्टिसासादना अनन्तानुबन्धिनामुदीरकाः तेषां तद्वेदकत्वात्। अप्रत्याख्यानानामविरतसम्यग्दृष्टिपर्यन्ताः, प्रत्याख्यानावरणानां देशविरतिपर्यन्ताः, संज्वलनक्रोधमानमायालोभानां स्वस्वबन्धव्यवच्छेदादर्वाक् उदीरकाः, हास्यादिषट्कस्यापूर्वगुणस्थानकान्ता उदीरकाः ॥ २० ॥

(उ०)—वेदनीययोः सातासातरूपयोः प्रमत्तगुणस्थानकपर्यन्ताः सर्वेऽप्युदीरकाः, नान्ये, अन्येषामतिविशुद्धत्वेन सातासातोदीरणायोग्याध्यवसायस्थानाभावात्। तथा ये ये येषां येषां कषायाणां बन्धकास्ते ते तेषां तेषां कषायाणामुदीरकाः, 'जे वेयइ से बंधइ' इतिवचनात्, वेद्यमानानामेव कषायाणां बन्धसंभवात्, उदये च सत्युदीरणासंभव इति युक्तमुक्तं ते ते बध्नन्तः कषायाणामुदीरका इति। तत्रानन्तानुबन्धिनां सासादनान्ताः, अप्रत्याख्यानकषायाणामविरतसम्यग्दृष्ट्यन्ताः, प्रत्याख्यानावरणकषायाणां देशविरतान्ताः, लोभ-

वर्जानां संज्वलनानां स्वबन्धं यावत्संज्वलनलोभस्य च बादरस्यानिवृत्तिबादरसंपरायान्ता उदीरकाः। किट्टीकृतस्य तु लोभस्य सूक्ष्मसंपराया उदीरका इत्युक्तं प्रागेव। हास्यादिषट्कस्य तु अपूर्वकरणगुणस्थानकान्ता उदीरकाः ॥ २० ॥

जावूणखणो पढमो सुहरइहासाणमेवमियरासिं। देवा नेरइया वि य भवठिई केइ नेरइया ॥२१॥

(चू०)—'ऊण खणो'त्ति–जाव पढमो अन्तोमुहुत्तो ताव सव्वे देवा 'सुहरतिहासाणं'ति उदीरगा हवंनि। परतो विवज्जासएण वि उदीरंति। 'एवमियरासिं'ति–असायअरइसोगाणं जाव पढमो अन्तोमुहुत्तो ताव असानअरतिसोगाणं सव्वे णेरइगा उदीरगा भवंति। 'भवट्टिति केति णेरतिगा'–भवट्टितिं ति सव्वाउगकालोत्ति–केनी णेरइगा सव्वमेव नेरइगभवट्टितिं असायअरतिसोगाणं उदीरगा भवंति। एगेगपगती उदीरणासामित्तं भणितं ॥ २१ ॥

(मलय०)—'ज'त्ति–यावत्प्रथमः क्षणः किंचिदूनो भवति, प्रथममन्तर्मुहूर्तं यावदित्यर्थः, तावन्नियमाद्देवाः सुखरतिहास्यानामुदीरका वेदीतव्याः, परतस्त्वनियमः। एवं किंचिदूनं प्रथमं क्षणं यावत् नैरयिका इतरामामसातवेदनीयारतिशोकप्रकृतीनां नियमादुदीरकाः, परतस्तु तीर्थकरकेवलज्ञानलाभादौ विपर्यासोऽपि भवति। केचित्पुनर्नैरयिकाः सकलामपि भवस्थितिं यावदसातवेदनीयारतिशोकानामुदीरका भवन्ति ॥ २१ ॥

# उत्तरप्रकृत्युदीरणास्वामिनः

| | | | |
|---|---|---|---|
| ५ विघ्न ९ आवरणानाम् | सर्वे छद्मस्थाः | वैक्रियोपांगस्य | वैक्रियदेहषट्कोदीरका अपवनाः |
| तै० ७-वर्णादि २०-स्थिर-अस्थिर-शुभ-अशुभ-अगुरुलघु-निर्माणानां (३३) | सयोग्यन्ताः | आहारकसप्तकस्य | प्रमत्तगुणस्थाः |
| उपघात-पराघातयोः | सर्वे देहपर्याप्ताः | संघयणसंस्थानषट्कयोः | देहस्थास्तत्तन्नामोदयवर्तिन |
| लोभस्य | दशमान्ताः | ४ आनुपूर्वीणाम् | भवापान्तराले तदुदयवन्तः |
| त्रसादि ३-स्था० ३-४ गति-५ जाति-३ दर्श० मोह०-वेद ३-आयु ४ (२५) र्णाम् | तत्तन्नामोदय वर्तिनः यथा त्रसस्य त्रसाः बादरस्य बादराः (भवस्था अपातरालगाश्च) | आतपस्य | पर्याप्तबादरपृथ्वीकाया |
| प्रत्येक-साधारणयो | देहस्थाः तदुदयवन्तः | उद्योतस्य | बा० पृथ्वी-अप्-वनस्पति-विकलेंद्रिय-लब्धिपर्याप्तपंचेन्द्रिया उत्तरदेहिनः देवा मुनयश्च. |
| औदारिकषट्कस्य | आहारका नृतिर्यंचः वैक्रियाहारकदेहावेदकाः | सुखगते | देहपर्याप्ता अनारकपंचेन्द्रियाः (उत्तरवै०तिर्यग्मनुष्याणाम् युगलिकानां च नियमात्) |
| औदा० उपांगस्य | औदारिकषट्कोदीरकास्त्रसाः | सुस्वरस्य | भाषापर्याप्तास्त्रसाः |
| वैक्रियषट्कस्य | आहारका देवा नारकाश्च तल्लब्धिकाः संज्ञिनृतिर्यंचः लब्धिपर्याप्तबादरवायवोऽपि | कुखगति-दुःस्वरयोः | विकलेन्द्रियाः-केचन पंचे० तिर्यग्मनुष्याः सर्वेनारकाश्च. |

| | | | |
|---|---|---|---|
| उच्छ्वासस्य | उच्छ्वासपर्याप्ता. (सर्वज्ञाना त्वनिरोधं यावत्) | स्त्यानर्धित्रिकस्य | युगलिकाहारकवैक्रियदेह-प्रमत्तादिवर्जाः |
| सुभगादेययोः | केचिद्देवाः केचित्गर्भजाश्च | वेदनीयद्विकस्य | प्रमत्तान्ताः ( तत्रापि प्रथमान्तर्मुहूर्त्ते देवाः सातस्यैव नारकास्त्वसातस्यैव नारकाणां सातोदयो जिनकल्याणके केचित्तु नारकाः सकलमपि भवं यावदसातोदीरका एव. |
| यशसः | सूक्ष्मैकेन्द्रियनारकाग्निवायु-वर्जपर्याप्ताः | | |
| उच्चैर्गोत्रस्य | सर्वदेवाः कुलजा नरा व्रतिनश्च. | | |
| दुर्भगानादेययोः | अगर्भजा नारकाश्च नियमेन शेषा अनियमेन | | |
| अयशसः | सूक्ष्मनारकाग्निवायवोऽपर्याप्ताश्च नियमेन शेषा अनियमेन. | अनंता० ४ र्णाम् | सास्वादनान्ताः |
| नीचैर्गोत्रस्य | अदेवाः (तत्र मनुष्या कुलजान् व्रतिनश्च विहाय) | अप्रत्या० ४ र्णाम् | अविरतसम्यग्दृष्ट्यन्ताः |
| जिननाम्नः | केचित्सर्वज्ञाः | प्रत्या० ४ र्णाम् | देशविरतान्ताः |
| निद्राप्रचलयोः | इन्द्रियपर्याप्त्यनंतरमक्षपक-क्षीणरागाः ( पंचसं० कर्मस्तवादौ क्षीणरागान्त्यावलिकार्वाग्वर्त्तिनः) | अलोभसंज्वलनत्रिकस्य | ९ मान्ताः स्वस्वबंधं यावत् |
| | | हास्यषट्कस्य | ८ मान्ताः (तत्र प्रथमान्तर्मुहूर्त्ते देवा हास्यरत्योरेव नारकास्तु शोकारत्योरेव) |

(उ०)—यावत्प्रथमः क्षणः किञ्चिदूनो भवति, यावत्प्रथममन्तर्मुहूर्त्तं भवतीत्यर्थः, तावन्नियमाद्देवाः सातवेदनीयरतिहास्यानामुदीरकाः । एवं किञ्चिदूनं प्रथमक्षणं यावन्नैरयिका इतरासामसातवेदनीयारतिशोकप्रकृतीनां नियमादुदीरकाः । आदिमान्तर्मुहूर्तादूर्ध्वं तु देवा नारकाश्च प्रत्येकं परिवर्तनविधिना षण्णामपि प्रकृतीनामुदीरका भवन्ति । तत्र नारकाणां सातवेदनीयाद्युदयसंभवस्तीर्थकरजन्मादाववसेयः, देवानां त्वसातवेदनीयाद्युदयसंभवः परगुणमत्सरविषादप्रियविप्रयोगस्वच्यवनादौ । केचित्पुनर्नैरयिकाः सकलामपि भवस्थितिं यावदसातवेदनीयारतिशोकानामुदीरका भवन्ति ॥ २१ ॥

इयाणिं पगतिट्ठाणउदीरणा भण्णइ—

**पंचण्हं च चउण्हं बिइए एक्काइ जा दसण्हं तु । तिगहीणाइ मोहे मिच्छे सत्ताइ जाव दस ॥ २२ ॥**

(चू०)—(बिइए—दरिसणावरणे दंसणचउक्कं उदीरइ) एतेसिं धुवोदयो छउमत्थे। एयंमि धुवोदये णिद्दापणगाणं अण्णयरे छूढे पंचोदओ भवइ दरिसणावरणे । इयाणिं मोहोदीरणठाणा भण्णंति—'एगाइ जा दसण्हं तु तिगहीणाइ मोहे'त्ति—एगं दोण्णि चत्तारि पंच छ सत्त अट्ठ णव दस एयाइ मोहणीज्ज सामण्णेण सव्वजीवाणं उदीरणाठाणाइं । इयाणिं साभित्तं भण्णइ—'मिच्छे सत्ताइ जाव दस'—मिच्छदिट्ठिस्स सत्त अट्ठ णव दसेत्ति । एते उदीरणा ठाणा—मिच्छत्तं, अपच्चक्खाणावरणाणं चउण्हं एगयरं, पच्चक्खाणावरणाणं चउण्हं एगतरं, संजलणाणं चउण्हं एगयरं । कोहम्मि उदीरिज्जमाणे सव्वे कोहा उदीरिज्जंति, एवं माणा माया लोभाणवि । तिण्ह वेयाण ए(ग)यरं, हासरइअरईसोगाणं तु दोण्हं जुगलाण एगयरं उदीरेइ । एतेसिं सत्तण्हं धुवा उदीरणा मिच्छादिट्ठि-

हस्सरनिअरतिसोगजु-
स्स। एताए सत्तोदीरणाए चउव्वीसं भंगा। चत्तारि कोहमाणमायालोभेत्ति तिण्णि य वेदे अणंताणुवन्धिएग-
गले अहिकिच चउव्वीसभंगा भवंति। एयंमि चेव सत्तगे भये वा छूढे दुगंच्छाए वा छूढाए चउवीसातो होंति।
गरे वा (छुढे) अट्ठविह उदीरणा भवति। तत्थ भय दुगंछाअणंताणुवन्धीहिं तिण्णि अट्ठगे अणंताणुवन्धिणो विसंजोइय
अणंताणुवन्धिणा विणा मिच्छादिट्ठी कम्मि काले भवइ? भण्णइ—सम्मदिट्ठीणा अणंताणुवंधीणं उदीरणा णत्थि
ततो पुणो मिच्छत्तं गयस्स अणंताणुवन्धिवंधमाणस्स वन्धावलिगाए अगयाए दुगंच्छाअणंताणुबन्धिणा वा सह ण-
त्ति। ताए चेव सत्तोदीरणाए भयदुगंछाए वा भयअणंताणुवन्धिणा वा ता चेव सत्तोदीरणा भयदुगं-
छोदीरणा भवइ। ताए वि ते चेव तिन्नि विगप्पा, एक्केक्कम्मि चउवीसं भंगा। ताए एगा चेव चउव्वीसा ॥ २२ ॥
छाअणंताणुवन्धिम्मिया एयंमि वा पयम्मि पक्खित्ते दसोदीरणा भवति।

(मलय०)—एवमेकैकप्रकृत्युदीरणास्वामित्वमुक्तं, सम्प्रति प्रकृत्युदीरणास्थानान्याह—'पंचण्हं'ति। द्वितीयकर्मणि दर्शनावरणीयलक्षणे चक्षुरचक्षुरवधिकेवलदर्शनावरणरूपाणां ध्रुवा छद्मस्थानामुदीरणा। तत्र चतसृणां पञ्चानां चतसृणां वा प्रकृतीनां युगपदुदीरणा भवति। एतासां मध्ये निद्रापञ्चकमध्यादन्यतमप्रकृतिप्रक्षेपे पञ्चानामुदीरणा। तथा मोहे—मोहनीये एकादिका त्रिकहीना तावद्द्रष्टव्या यावद्दशानाम्। एतदुक्तं भवति—मोहनीये कर्मणि उदीरणामधिकृत्यैकादीनि त्रिकहीनानि दशपर्यन्तानि नव प्रकृतिस्थानानि भवन्ति। तद्यथा—एका द्वे चतस्रः पञ्च षट् सप्त अष्ट नव दश। सम्प्रत्येषामुदीरणास्थानानां स्वामिनमाह—'मिच्छे सत्ताइ जाव दस'। मिथ्यादृष्टौ सप्तादीनि दशपर्यन्तानि चत्वार्युदीरणास्थानानि भवन्ति, तद्यथा—सप्त, अष्टौ, नव, दश। तत्र मिथ्यात्वमप्रत्याख्यानप्रत्याख्यानावरणसं-

ज्वलनक्रोधादीनामन्यतमे त्रयः क्रोधादिकाः, यत एकस्मिन् क्रोधे उदीर्यमाणे सर्वक्रोधा उदीर्यन्ते, एवं मानमायालोभा अपि द्रष्टव्याः, न च युगपत् क्रोधमानमायालोभानामुदीरणा, युगपदुदयाभावात्, किं तु त्रयाणां क्रोधानां, त्रयाणां वा मानानां, यद्वा तिसृणां मायानां, अथवा त्रयाणां लोभानां युगपदुदीरणेत्यन्यतमे त्रयो गृह्यन्ते। तथा त्रयाणां वेदानामन्यतमो वेदः, तथा हास्यरतियुगलारतिशोकयुगलयोरन्यतरद्युगलम्। एतासां सप्तप्रकृतीनां मिथ्यादृष्टौ उदीरणा ध्रुवा। अत्र च भंगाश्चतुर्विंशतिस्तद्यथा–हास्यरतियुगले अरतिशोकयुगले च प्रत्येकमेकैको भङ्गः प्राप्यत इति द्वौ भङ्गौ। तौ च प्रत्येकं त्रिष्वपि वेदेषु प्राप्यत इति द्वौ त्रिभिर्गुणितौ जाताः षट्। ते च प्रत्येकं क्रोधादिषु चतुर्षु प्राप्यन्ते इति षट् चतुर्भिर्गुणिता जाता चतुर्विंशतिरिति। एतस्मिन्नेव सप्तके भये वा जुगुप्सायां वाऽनन्तानुबन्धिनि वा क्षिप्तेऽष्टानामुदीरणा। तत्र भयादौ प्रत्येकमेकैका भङ्गकानां चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयोऽत्र द्रष्टव्याः। ननु च मिथ्यादृष्टेरवश्यमनन्तानुबन्धिनामुदयः संभवति, उदये च सत्यवश्यमुदीरणा तत्कथं मिथ्यादृष्टिरनन्तानुबन्ध्युदयरहितः प्राप्यते येन तस्य सप्तानामष्टानां वाऽनन्तानुबन्धिरहितानामुदीरणा संभवेत्? उच्यते–इह सम्यग्दृष्टिना सता केनचित्प्रथमतोऽनन्तानुबन्धिनो विसंयोजिताः, एतावतैव च स विश्रान्तो न मिथ्यात्वादिक्षयायोद्युक्तः, तथाविधसामग्र्यभावात्। ततः कालान्तरे मिथ्यात्वं गतः सन् मिथ्यात्वप्रत्ययतो भूयोऽप्यनन्तानुबन्धिनो बध्नाति, ततो बन्धावलिका यावन्नाद्याप्यतिक्रामति तावत्तेषामुदयो न भवति, उदयाभावाच्चोदीरणाया अप्यभावः। बन्धावलिकायां पुनरतीतायामुदयसंभवाद्भवत्येवोदीरणा। ननु कथं बन्धसमयादारभ्यावलिकायामतीतायामुदयोऽपि संभवति? यतोऽबाधाकालक्षये सत्युदयः, अबाधाकालश्चानन्तानुबन्धिनां जघन्यतोऽन्तर्मुहूर्तमुत्कर्षतश्चत्वारि वर्षसहस्राणि इति? नैष दोषः, यतो बन्धसमयादारभ्य तेषां तावत्सत्ता भवति, सत्तायां च सत्यां पतद्ग्रहता,

तस्यां च सत्यां शेषप्रकृतिदलिकसंक्रान्तिः, संक्रान्तस्य च संक्रमावलिकायामतीतायामुदयः, उदये च सत्युदीरणा। ततो बन्धसमयादनन्तरमावलिकायामतीतायामुदीरणाऽभिधीयमाना न विरुध्यत इति। तथा तस्मिन्नेव सप्तके भयजुगुप्सयोरथवा भयानन्तानुबन्धिनोर्यद्वा जुगुप्सानन्तानुबन्धिनोः प्रक्षिप्तयोर्नवानामुदीरणा। अत्रापि चैकैकस्मिन् विकल्पे प्रागुक्तक्रमेण भङ्गकानां चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयोऽत्र द्रष्टव्याः। तथा तस्मिन्नेव सप्तके भयजुगुप्सानन्तानुबन्धिषु प्रक्षिप्तेषु दशानामुदीरणा। अत्रैकैव भङ्गकानां चतुर्विंशतिः ॥ २२ ॥

(उ०)—एवमेकैकप्रकृत्युदीरणास्वामित्वमुक्तं, अथ प्रकृत्युदीरणास्थानान्याह—द्वितीयकर्मणि दर्शनावरणीये पञ्चानां चतसृणां वा प्रकृतीनां युगपदुदीरणा भवति। तत्र चतसृणां चक्षुरचक्षुरवधिकेवलदर्शनावरणरूपाणां ध्रुवा छद्मस्थानामुदीरणा। एतासां मध्ये निद्रापञ्चकान्यतरप्रकृतिप्रक्षेपे च पञ्चानामुदीरणा। तथा मोहे—मोहनीये एकादिका त्रिकहीनोदीरणा तावद्द्रष्टव्या यावद्दशानां, मोहनीयस्योदीरणायामेकादीनि त्रिकहीनानि दशान्तानि नव प्रकृतिस्थानानि भवन्तीत्यर्थः, १-२-४-५-६-७-८-९-१०। एषामुदीरणास्थानानां स्वामिनमाह—'मिच्छे' इत्यादि। मिथ्यादृष्टौ सप्तादीनि यावद्दशेति दशपर्यन्तानि चत्वार्युदीरणास्थानानि भवन्ति, सप्ताष्टौ नव दश चेति। तत्र मिथ्यात्वमप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनक्रोधादीनामन्यतमे क्रोधादयः, सजातीयकषायाणां सर्वेषां युगपदुदयात् युगपदुदीरणा, विजातीयाना तु क्रोधमानादीनां युगपदुदयाभावादेव नोदीरणेति त्रयाणां क्रोधानां, त्रयाणां वा मानानां, तिसृणां वा मायानां, त्रयाणां वा लोभानां युगपदुदीरणेत्यन्यतमे त्रयो गृह्यन्ते। तथा त्रयाणां वेदानामन्यतमो वेदः, तथा हास्यरत्यरतिशोकरूपयोर्युगलयोरन्यतरद्युगलम्। एताः सप्त प्रकृतयो मिथ्यादृष्टौ ध्रुवोदीरणाः। अत्र भङ्गाश्चतुर्विंशतिः। तथाहि—द्वयोर्युगलयोः परावर्तनेनैकैको भङ्गो

लभ्यते ततो द्वौ भङ्गौ जातौ, तौ च प्रत्येकं त्रिष्वपि वेदेषु प्राप्येते इति द्वौ त्रिगुणितौ षड् भवन्ति, ते च प्रत्येकं क्रोधादिषु चतुर्षु प्राप्यन्त इति षट् चतुर्भिर्गुणिताश्चतुर्विंशतिरिति । एतस्मिन्नेव सप्तके भये वा जुगुप्सायां वाऽनन्तानुबन्धिनि वा क्षिप्तेऽष्टानामुदीरणा । तत्र प्रत्येकमेकैकचतुर्विंशतिप्राप्तेर्भङ्गानां तिस्रश्चतुर्विंशतयो द्रष्टव्याः । ननु मिथ्यादृष्टेरनन्तानुबन्ध्युदयरहितस्याप्राप्तेरुदये च सत्यवश्यमुदीरणेत्यनन्तानुबन्धिरहितानां सप्तानामष्टानां वोदीरणाभिधानमसङ्गतमिति चेन्न, यः सम्यग्दृष्टिरादावनन्तानुबन्धिविसंयोजनां कृत्वैव विश्रान्तस्तादृशसामग्र्यभावान्मिथ्यात्वादिक्षयाय नोद्युक्तवान्, कालान्तरे च मिथ्यात्वं गतस्तत्प्रत्ययतो भूयोऽप्यनन्तानुबन्धिनो बध्नाति, तेषां च बन्धावलिकां यावदुदयो न भवति, तदभावाच्च नोदीरणेत्यनन्तानुबन्धिना रहिताया उदीरणाया अपि मिथ्यादृष्टेः संभवात्, बन्धावलिकात्यये चोदये संभवाद्भवत्येवोदीरणा । ननु कथं बन्धसमयादारभ्यावलिकायामतीतायामुदयोऽपि संभवति यावताऽबाधाकालस्य क्षये सत्युदयः, स च जघन्यतोऽप्यनन्तानुबन्धिनामन्तर्मुहूर्त्तप्रमाण इति, नायं दोषः, यतो बन्धसमयादारभ्य तेषां तावत्पतद्ग्रहता भवति, तस्यां च सत्यां शेषचारित्रमोहनीयप्रकृतिदलिकसंक्रान्तिः, संक्रान्तस्य च तस्य स्वबन्धावलिकारूपसंक्रम्यमाणदलिकसंक्रमावलिकायामतीतायायुदयः, उदये च सत्युदीरणा । ततो बन्धसमयादनन्तरमावलिकायामतीतायामुदीरणाभिधानं न विरुध्यत इति । तथा तस्मिन्नेव सप्तके भयजुगुप्सयोरथवा भयानन्तानुबन्धिनोर्यद्वा जुगुप्सानन्तानुबन्धिनोर्मिलितयोः प्रक्षिप्तयोर्नवानामुदीरणा । अत्राप्युक्तरीत्यैकैकविकल्पे भङ्गानां चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयो द्रष्टव्याः । तस्मिन्नेव सप्तके भयजुगुप्सानन्तानुबन्धिषु मिलितेषु प्रक्षिप्तेषु दशानामुदीरणा । अत्रैकैव भङ्गानां चतुर्विंशतिः ॥ २२ ॥

**इयाणिं सासायणसम्मामिच्छदिट्ठीणं भण्णति–**

सासणमीसे नव अविरए छाई परम्मि पंचाई। अट्ठ विरए य चउराइ सत्त छच्चोवरिल्लंमि ॥ २३ ॥

सासायणमीसे णव'त्ति-सासायणसम्मामिच्छदिट्ठीणं सत्त अट्ठ णवत्ति तिण्णि उदीरणा ठाणा।
(चू०)—'सासायणमीसे णव'त्ति-सासायणसम्मामिच्छदिट्ठीणं सत्त अट्ठ णवत्ति तिण्णि उदीरणा ठाणा। दोण्हं
तत्थ सासायणस्स अणंताणुबन्धिअपच्चक्खाणावरणा पच्चक्खाणावरणसंजलणा य, तिण्हं वेयाणं एगयरं, दोण्हं
जुयलाणं एगयरमिति एतेसिं सत्तण्हं धुवोदीरणा। एयंभि सत्तए एगा चउव्वीसा। एयाए चेव सत्तोदीरणाए
भए वा च्छूढे दुगंछाए वा च्छूढाए अट्ठा होंति। तस्स भयदुगंच्छाहिं दो चउवीसाओ अट्ठगाणं। ताए चेव सत्तो-
दीरणाए भयदुगंच्छाहिं छूढाहिं णवोदीरणा होति। एयासिं णवोदीरणाइं एगा चउव्वीसा।

इदाणिं सम्मामिच्छद्दिट्ठिस्स-सम्मामिच्छत्तं अणंताणुवज्ज तिण्णि कसाया, तिण्हं वेताणं एगयरं, दोण्हं जुय-
लाणं एगयरमिति एतेसिं सत्तण्हं सम्मामिच्छदिट्ठस्स धुवोदीरणा। एयंमि सत्तगे एगा चउवीसा। एयंमि चेव
सत्तए भए दुगंच्छाए वा च्छूढाए अट्ठ होंति। तस्स भयदुगुंच्छाहिं दो चउव्वीसा अट्ठगाणं। ताते चेव सत्तो-
दीरणाए भयदुगंच्छाहिं च्छूढाहिं णवोदीरणा होति। एयासिं णवोदीरणाणं एगा चउवीसा।

इयाणिं अविरयसम्मद्दिट्ठिस्स भण्णति-'अविरए' त्ति। 'छाति'त्ति-छादीणं णवं ति असंजयसम्मदिट्ठिस्स
छ सत्तग अट्ठ णवत्ति चत्तारि उदीरणा ठाणा। तत्थ उवसमसम्मदिट्ठिस्स वा खातियसम्मद्दिट्ठिस्स वा अणंता-
णुबन्धिवज्जा तिण्णि कसाया, तिण्हं वेयाणं एगयरं, दोण्हं जुगलाणं एगयरमिति एते छ। एतेसिं छण्हं अवि-
रयसम्मदिट्ठिस्स धुवोदीरणा। एत्थ एगा चउवीसा। एयंभि चेव छक्कगे भये वा छूढे दुगंछाए वा छूढाए संम-

त्ते वा च्छूढे सत्त होंति। एत्थ भयदुगंछासम्मत्तेहिं सत्तगाणं तिण्णि चउवीसाओ होंति। तंमि चेव छक्कए भयदुगंच्छाए वा च्छूढाए भयसम्मत्ते वा छूढे दुगंच्छासम्मत्तए वा छूढे अट्ठ होत्ति। एत्थ एतेहिं तिहिं दुगेहिं अट्ठगाणं तिण्णि चउवीसाओ होंति। तंमि चेव छक्कए भयदुगंच्छासम्मत्तेहिं छूढेहिं णव होति। एत्थ णवगाणं एक्का चउवीसा होति॥

इयाणिं देसविरयस्स भण्णइ–'परंमि पंचादी अट्ठ'। परो–देसविरतो तस्स पंचादी अट्ठंता उदीरणठाणा। पंच छ सत्त अट्ठ ति चत्तारि ठाणा। तस्स पच्चक्खाणावरणा संजलणा, तिण्हं वेदाण एगयरं, दोण्हं जुगलाणं एगयरमिति एते पंच खाइयसम्मदिट्ठिस्स वा उवसमसम्मदिट्ठिस्स वा धुवोदीरणा। एतेसिं पंचगाणं एगा चउवीसा। एते चेव पंच भयदुगुंच्छसम्मत्ताणं एगयरजुत्ता छ। एतेहिं चेव भयदुगुंच्छसम्मत्तेहिं छक्कगाणं तिण्णि चउवीसातो। तंमि चेव पंचए भयदुगुंच्छाए वा भयसम्मत्ते वा दुगंच्छासम्मत्ते वा एतेसिं तिण्हं दुगाणं एगयरे च्छूढे सत्त होति। एताहिं तिहिं दुगेहिं तिण्णि चउव्वीसातो सत्तगाणं। तंभि चेव पंचए भयदुगुंछसम्मत्तेहिं छूढेहिं अट्ठ होति। एतेसिं अट्ठगाणं एगा चउव्वीमा॥

इयाणिं पमत्तअपमत्तसंजयाणं भेयाभावाउ जुगवं भण्णति–'विरए य चउराइ सत्त'त्ति। विरए चउरादि सत्तंता उदीरणा ठाणा। तंजहा–चत्तारि पंच छ सत्तत्ति। तत्थ चउण्हं संजलणाणं एगयरं, तिण्ह वेदाण, एगयरं दोण्हं जुगलाणामेगयरमिति एते चत्तारि। एतेसिं चउण्हं धुवोदीरणा खातियसम्मउवसमदिट्ठिस्स वा। एतेसिं

चउक्काणं एगा य चउव्वीसा। एतंपि चेव छक्कए भयदुगुंछसम्मत्ताए एगयरेण पंच होत्ति। एते चेव भयदुगुंछसम्मत्तेहिं पंचगाणं तिण्णि चउव्वीसातो होति। तंमि चेव चउक्काए भयदुगुंछाहिं छूढाहिं छ होति। एवं भयसम्मत्तेहिं पि छ, दुगुंच्छासम्मत्तेहिं वि छ। एवं छक्कगाणं तिण्णि चउवीसाओ। तंमि चेव चउक्के भयदुगुंछसम्मत्तेहिं तिहिंपि छूढाहिं सत्त होति। एतेसिं सत्तगाणं एगा चउव्वीसा।

इदाणिं अपुव्वकरणस्स भण्णइ–'छचोवरिल्लंमि'। उवरिल्लंमित्ति–अपुव्वकरणंमि चउराति छक्कंता उदीरणाटाण तिण्णि। तंजहा–चत्तारि पंच छत्ति। तत्थ चतुण्हं संजलणाणं एगयरं, तिण्ह वेदाण एगयरं, दोण्हं जुगलाणं एगयरं एते चत्तारि। एतेसिं चतुण्हं धुवोदीरणा अपुव्वकरणस्स खाइयसम्मदिट्ठिस्स वा उवसमसम्मदिट्ठिस्स वा। तत्थ चउक्के एक्का चउवीसा। एयंमि चेव चउक्के भए वा दुगुंच्छाए वा पंच भवति। एत्थ भयदुगंच्छाहिं दो चउव्वीसा। एयंमि चेव चउक्के भयदुगुंच्छाहिं च्छूढाहिं छ भवति, एत्थ एगा चउव्वीसा ॥ २३ ॥

(मलय०)—तदेवं मिथ्यादृष्टेर्मोहनीयस्योदीरणास्थानान्युक्तानि, सांप्रतं सासादनसम्यग्दृष्टयादीनामाह—'सासणमीसे' त्ति। सासादनसम्यग्दृष्टौ सम्यग्मिथ्यादृष्टौ च सप्तादीनि नवपर्यन्तानि त्रीणि त्रीण्युदीरणास्थानानि भवन्ति। तद्यथा–सप्त अष्टौ नव। तत्र सासादनसम्यग्दृष्टौ अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनक्रोधादीनामन्यतमे चत्वारः क्रोधादिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति सप्तानामुदीरणा ध्रुवा। अत्र प्रागुक्तक्रमेण भङ्गकानामेका चतुर्विंशतिः। तथाऽस्मिन्नेव सप्तके भये वा जुगुप्सायां वा क्षिप्तायामष्टानामुदीरणा। अत्र च द्वे चतुर्विंशती भङ्गकानाम्। भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोर्नवानामु-

दीरणा। अत्र चैका भंगकानां चतुर्विंशतिः। सम्यग्मिथ्यादृष्टावनन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादयः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलं, सम्यग्मिथ्यात्वं चेति सप्तानामुदीरणा ध्रुवा। अत्र प्रागुक्तक्रमेण भंगकानामेका चतुर्विंशतिः। तथाऽस्मिन्नेव सप्तके भयजुगुप्सयोरन्यतरस्मिन् प्रक्षिप्तेऽष्टानामुदीरणा। अत्र च द्वे चतुर्विंशती भंगकानाम्। भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोर्नवानामुदीरणा। अत्र चैका चतुर्विंशतिर्भंगकानाम्।

तथाऽविरतेऽविरतसम्यग्दृष्टौ षडादीनि नवपर्यन्तानि चत्वार्युदीरणास्थानानि भवन्ति। तद्यथा—षट् सप्त अष्टौ नव। तत्रौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वाऽविरतस्यानन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमिति षण्णामुदीरणा ध्रुवा। अत्र प्रागिव भङ्गकानामेका चतुर्विंशतिः। अस्मिन्नेव षट्के भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते सप्तानामुदीरणा। अत्र भङ्गकानां तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव षट्के भयजुगुप्सयोरथवा भयवेदकसम्यक्त्वयोर्यद्वा जुगुप्सावेदकसम्यक्त्वयोर्युगपत् प्रक्षिप्तयोरष्टानामुदीरणा। अत्राप्येकैकस्मिन् विकल्पे भङ्गकानां चतुर्विंशतिः प्राप्यते इति तिस्रश्चतुर्विंशतयः। भयजुगुप्सावेदकसम्यक्त्वेषु युगपत्प्रक्षिप्तेषु नवानामुदीरणा। अत्र चैका चतुर्विंशतिर्भङ्गकानाम्।

'परम्मि पंचाइ अट्ठ' इति। अविरतसम्यग्दृष्टेः परस्मिन्—देशविरते पञ्चादीनि अष्टपर्यन्तानि चत्वारि उदीरणास्थानानि। तद्यथा—पञ्च षट् सप्त अष्टौ। तत्र प्रत्याख्यानावरणसंज्वलनसंज्ञौ क्रोधादीनामन्यतमौ द्वौ क्रोधादिकौ, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलम्, एतासां पञ्चानां प्रकृतीनां देशविरतस्योदीरणा ध्रुवा। एषा चौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वाऽवगन्तव्या। अत्र च प्रागुक्तक्रमेण भङ्गकानामेका चतुर्विंशतिः। भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिंस्तु प्रक्षिप्ते षण्णामुदीरणा। अत्र भयादि-

भिस्त्रयो विकल्पाः। एकैकस्मिंश्च त्रिकल्पे भङ्गकानां चतुर्विंशतिरिति तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव पञ्चके भयजुगुप्सयोरथवा जुगुप्सावेदकसम्यक्त्वयोर्यद्वा भयवेदकसम्यक्त्वयोर्युगपत्प्रक्षिप्तयोः सप्तानामुदीरणा। अत्रापि तिस्रश्चतुर्विंशतयो भङ्गकानाम्। भयजुगुप्सावेदकसम्यक्त्वेषु तु युगपत्प्रक्षिप्तेषु अष्टानामुदीरणा। अत्र चैका चतुर्विंशतिर्भंगकानाम्।

साम्प्रतं प्रमत्ताप्रमत्तयोर्भेदाभावाद्युगपदुदीरणास्थानान्याह—'विरए य चउराइ सत्त'त्ति। विरते प्रमत्तेऽप्रमत्ते च चतुरादीनि सप्तपर्यन्तानि चत्वार्युदीरणास्थानानि भवन्ति। तद्यथा—चत्वारि पञ्च षट् सप्त। तत्र संज्वलनक्रोधादीनामन्यतम एकः क्रोधादिः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलम्, इत्येतासां चतसृणां प्रकृतीनां विरतस्य क्षायिकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेर्वा उदीरणा ध्रुवा। अत्रैका भङ्गकानां चतुर्विंशतिः। एतस्मिन्नेव चतुष्के भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते पञ्चानामुदीरणा। अत्र भङ्गकानां तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव चतुष्के भयजुगुप्सयोरथवा भयवेदकसम्यक्त्वयोर्यद्वा जुगुप्सावेदकसम्यक्त्वयोर्युगपत्प्रक्षिप्तयोः षण्णामुदीरणा। अत्रापि तिस्रश्चतुर्विंशतयो भङ्गकानाम्। भयजुगुप्सावेदकसम्यक्त्वेषु च युगपत्प्रक्षिप्तेषु सप्तानामुदीरणा। अत्र चैका चतुर्विंशतिर्भङ्गकानाम्।

साम्प्रतमपूर्वकरणस्योदीरणास्थानान्याह—'छच्चोवरिल्लम्मि'। विरतादुपरितनेऽपूर्वकरणे चतुरादीनि षट्पर्यन्तानि त्रीण्युदीरणास्थानानि भवन्ति। तद्यथा—चतस्रः पञ्च षट्। तत्र चतुर्णां संज्वलनक्रोधादीनामेकतमः क्रोधादिः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलम्, इत्येतासां चतसृणां प्रकृतीनामपूर्वकरणे उदीरणा ध्रुवा। अत्रैका भङ्गकानां चतुर्विंशतिः। अस्मिन्नेव चतुष्के भये वा जुगुप्सायां वा क्षिप्तायां पञ्चानामुदीरणा। अत्र द्वे चतुर्विंशती भङ्गकानाम्। भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोः षण्णामुदीरणा। अत्र

चैका चतुर्विंशतिर्भङ्गकानाम् । एताश्चापूर्वकरणसत्काश्चतुर्विंशतयः परमार्थतः प्रमत्ताप्रमत्तचतुर्विंशतिकातोऽभिन्नस्वरूपा इति न पृथगग्रे गणयिष्यन्ते ॥२३॥

(उ०)—तदेवं मिथ्यादृष्टौ मोहनीयस्योदीरणास्थानान्युक्तानि, अथ सासादनादिषु तान्याह—सासादनसम्यग्दृष्टौ च सप्तादीनि नवपर्यन्तानि त्रीणि त्रीण्युदीरणास्थानानि भवन्ति, सप्ताष्टौ नव चेति । तत्र सासादनसम्यग्दृष्टावनन्तानुबन्ध्यादीनामन्यतमे चत्वारः क्रोधादिकाः, त्रयाणां वेदानामन्यतमो वेदः, द्वयोर्युगलयोरन्यतरद्युगलमित्येताः सप्त नियमादुदीर्यन्ते । अत्र प्रागुक्तनीत्या भङ्गानामेका चतुर्विंशतिः । तथाऽस्मिन्नेव सप्तके भये जुगुप्सायां वा क्षिप्तायामष्टानामुदीरणा । अत्र द्वे चतुर्विंशती भङ्गानाम् । भयजुगुप्सयोर्युगपत् क्षेपे च नवानामुदीरणा । तत्र भङ्गानामेका चतुर्विंशतिः । सम्यग्मिथ्यादृष्टावनन्तानुबन्धिवर्जानां त्रयाणां क्रोधादीनामन्यतमवेदस्यान्यतरयुगलस्य सम्यग्मिथ्यात्वस्य चेति सर्वसंख्यया सप्तानामुदीरणा ध्रुवा । अत्र प्राग्वदेव भङ्गानामेका चतुर्विंशतिः । तथाऽत्रैव सप्तके भयजुगुप्सयोरन्यतरप्रक्षेपेऽष्टानामुदीरणा । अत्र भङ्गानां द्वे चतुर्विंशती । भयजुगुप्सयोर्युगपत्प्रक्षेपे च नवानामुदीरणा । अत्र चैका चतुर्विंशतिर्भङ्गानाम् । तथाऽविरतेऽविरतसम्यग्दृष्टौ षडादीनि नवपर्यन्तानि चत्वार्युदीरणास्थानानि, षट् सप्ताष्टौ नव चेति । तत्रौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वाऽविरतस्यानन्तानुबन्धिवर्जान्यतमक्रोधादित्रयान्यतमवेदान्यतरयुगललक्षणानां षण्णां प्रकृतीनामुदीरणा ध्रुवा । अत्र प्रागिव भङ्गानामेका चतुर्विंशतिः । अस्मिन्नेव षट्के भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते सप्तानामुदीरणा । अत्र भङ्गानां तिस्रश्चतुर्विंशतयः । तस्मिन्नेव षट्के भयजुगुप्सयोर्यद्वा भयवेदकसम्यक्त्वयोर्यद्वा जुगुप्सावेदकसम्यक्त्वयोर्युगपत्प्रक्षेपेऽष्टानामुदीरणा । अत्राप्येकैकस्मिन् विकल्पे भङ्गानां चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयः । भयजुगुप्सावेदकस-

म्यक्त्वेषु युगपत्प्रक्षेपेषु नवानामुदीरणा । अत्र भङ्गानामेका चतुर्विंशतिः ।

परस्मिन्नविरतसम्यग्दृष्ट्युत्तरे–देशविरते पञ्चादीनि 'अट्ठ' त्ति–अष्टान्तानि चत्वार्युदीरणास्थानानि । तथाहि—पञ्च षट् सप्ताष्टौ चेति । तत्र तृतीयचतुर्थकषायस्यान्यतमक्रोधादिद्वयान्यतमवेदान्यतरयुगललक्षणानां पञ्चानां प्रकृतीनां देशविरतस्य ध्रुवोदीरणा । इयं चौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वाऽवसेया। अत्र प्राग्वद्भङ्गानामेका चतुर्विंशतिः । भयजुगुप्सावेदकसम्यक्त्वानामन्यतमप्रक्षेपे तु षण्णामुदीरणा, भङ्गानां च तिस्रश्चतुर्विंशतयः, एकैकप्रक्षेपविकल्पे चतुर्विंशतिप्राप्तेः । तस्मिन्नेव पञ्चके भयजुगुप्सयोर्यद्वा जुगुप्सा-वेदकसम्यक्त्वयोर्यद्वा भयवेदकसम्यक्त्वयोर्युगपत्प्रक्षेपे सप्तानामुदीरणा । अत्रापि तिस्रश्चतुर्विंशतयो भङ्गानाम् । भयजुगुप्सावेदकसम्य-क्त्वानां युगपत्प्रक्षेपे चाष्टानामुदीरणा । अत्र चैका चतुर्विंशतिर्भङ्गानाम् ।

विरते–प्रमत्तेऽप्रमत्ते च चतुरादीनि 'सत्त'त्ति–सप्तपर्यन्तानि चत्वार्युदीरणास्थानानि भवन्ति, चत्वारि पञ्च षट् सप्त चेति । तत्र संज्वलनान्यतमक्रोधाद्यन्यतमवेदान्यतरयुगललक्षणानां चतसृणां प्रकृतीनां क्षायिकसम्यक्त्ववत औपशमिकसम्यक्त्ववतो वा प्रमत्तस्याप्रमत्तस्य वोदीरणा ध्रुवा । अत्रैका भङ्गानां चतुर्विंशतिः । अस्मिन्नेव चतुष्के भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते पञ्चानामुदीरणा । अत्र भङ्गानां तिस्रश्चतुर्विंशतयः । तथा तस्मिन्नेव चतुष्के भयजुगुप्सयोरथवा भयवेदकसम्यक्त्वयोरथवा जुगुप्सावेदकसम्यक्त्वयोर्युगपत्प्रक्षेपे षण्णामुदीरणा । अत्रापि तिस्रश्चतुर्विंशतयो भङ्गानाम् । भयजुगुप्सावेदकसम्यक्त्वानां युगपत्प्रक्षेपे च सप्तानामुदीरणा । अत्र चैका चतुर्विंशतिर्भङ्गानाम् ।

'छच्चोवरिल्लम्मि'त्ति । विरतादुपरितनेऽपूर्वकरणे चतुरादीनि षट्पर्यन्तानि त्रीण्युदीरणास्थानानि भवन्ति, चतस्रः पञ्च षट् चेति ।

तत्र संज्वलनान्यतमैकक्रोधाद्यन्यतमवेदान्यतरयुगललक्षणानां चतसृणां प्रकृतीनामपूर्वकरणे उदीरणा ध्रुवा। अत्रैका भङ्गानां चतुर्विंशतिः। अस्मिन्नेव चतुष्के भये जुगुप्सायां वा क्षिप्तायां पञ्चानामुदीरणा। अत्र द्वे चतुर्विंशती भङ्गानाम्। भयजुगुप्सयोर्युगपत्प्रक्षेपे तु षण्णामुदीरणा। अत्र चैका चतुर्विंशतिर्भङ्गानाम्। एताश्चतुर्विंशतयः प्रमत्ताप्रमत्तचतुर्विंशतिकातोऽभिन्ना इति न पृथगग्रे गणयिष्यन्ते ॥ २३ ॥

इयाणिं अणियट्टिस्स भण्णइ—

**आनियट्टिम्मि दुगेगं लोभो तणुरागेगो चउवीसा। एक्कगच्छक्केक्कारस दस सत्त चउक्क एक्काओ ॥ २४ ॥**

'अणियट्टिम्मि दुगेगं' इति। अणियट्टिस्स दो वा एगो वा दो उदीरणाट्ठाणे। चउण्हं संजलणाणं एगयरं, तिण्हं वेयाणं एगयरं उदीरेइ। एत्थ चउहिं संजलणाइ तीहिं वेदेहिं बारस दुयसंजोय होंति। एगं उदीरमाणे चउण्हं संजलणाणं एगयरं उदीरेइ। एवं चउसंजलणेहिं एक्कगसंजोगा चत्तारि।

इदाणिं सुहुमरागस्स भण्णइ—'लोभो तणुरागेगो' त्ति। लोभसंजलणाए सुहुमरागो उदीरगा सुहुमकिट्टिं वेयेमाणो।

इयाणिं दसोदयाइसु चउरुदयपज्जवसाणेसु कम्मिकेत्तियाउ चउव्वीसाउ तं णिरूपणत्थं भण्णइ—'चउवीसा-एक्कगछक्केक्कारस दससत्त चउक्क एक्काओ' दसोदीरणाए एगा चउवीसा, णवोदीरणाए छ चउव्वीसाउ, अट्ठोदीरणाए एक्कारस, सत्तोदीरणाए दस च, छण्णोदीरणाए सत्त चउवीसाउ, पंचोदीरणाए चत्तारि, चउरुदीरणाए एगा चउवीसा। भणियं मोहणियं ॥२४॥

(मलय०)—सम्प्रत्यनिवृत्तिबादरस्योदीरणास्थानान्याह—'अनियट्टिम्मि'त्ति। अनिवृत्तिवादरे द्वे उदीरणास्थाने। तद्यथा—द्वे प्रकृती, एका च। तत्र चतुर्णां संज्वलनक्रोधादीनामेकतमः क्रोधादिः, त्रयाणां वेदानामन्यतमो वेदः। अत्र त्रिभिर्वेदैश्चतुर्भिः संज्वलनैर्द्वादश भङ्गाः। वेदेषु च क्षीणेषु उपशान्तेषु वा संज्वलनक्रोधादीनामेकतमं क्रोधादिकमुदीरयति। तत्र च चत्वारो भङ्गाः। 'लोभो तणुरागो'—तनुरागे—तनुरागस्य सूक्ष्मसंपरायस्य सूक्ष्मलोभकिट्टीर्वेदयमानस्य लोभ एवैको मोहनीयमध्ये उदीरणायोग्यो भवति। सम्प्रति चतुरादिषु दशपर्यन्तेषु उदीरणास्थानेषु विरतान्तानां यावत्यश्चतुर्विंशतयो भवन्ति तावतीर्निरूपयति—'चउवीस' इत्यादि। दशोदीरणायामेका चतुर्विंशतिः, नवोदीरणायां षट्, अष्टोदीरणायामेकादश, सप्तोदीरणायां दश, षडुदीरणायां सप्त, पञ्चकोदीरणायां चतस्रः, चतुरुदीरणायामेकेति। एताश्चतुर्विंशतयः प्रागेव भाविताः, केवलं संकलनमात्रमिह, एवं स्वधिया परिभावनीयम्॥ २४॥

(उ०)—अनिवृत्तिबादरे द्वे उदयस्थाने—द्वे प्रकृती, एका चेति। तत्र संज्वलनैकतमक्रोधाद्यन्यतमवेदलक्षणे द्वे। अत्र वेदत्रयेण संज्वलनचतुष्टयेन च द्वादश भङ्गाः। वेदानां क्षये उपशमे वा एकतमसंज्वलनक्रोधाद्युदीरणैव प्रवर्तते। तत्र चत्वारो भङ्गाः। तनुरागे—तनुरागस्य सूक्ष्मलोभकिट्टीरनुभवतः सूक्ष्मसंपरायस्य लोभ एवैको मोहनीयप्रकृतिषूदीरणायोग्यो भवति। अत्र चतुरादिषु दशान्तेषूदीरणास्थानेषु चतुर्विंशतिसङ्ख्यां विरतान्तानामाह—'चउव्वीसा' इत्यादि। दशोदीरणायामेका चतुर्विंशतिः, नवोदीरणायां षट्, अष्टोदीरणायामेकादश, सप्तोदीरणायां दश, षडुदीरणायां सप्त, पञ्चकोदीरणायां चतस्रः, चतुरुदीरणायामेकेति। एताश्च प्रागेव भाविताः, संकलनमात्रं त्वेतत्॥ २४॥

इयाणिं णामस्स पगतिउदीरणाए ठाणसमुक्कित्तणा सामित्तं भंगा य भण्णंति—

एगबियाला पण्णाइसत्तपण्णात्ति गुणिसु नामस्स। नव सत्त तिन्नि अट्ठ य छप्पंच य अप्पमत्ते दो ॥२५॥
एगं पंचसु एक्कम्मि अट्ठ ट्ठाणक्कमेण भंगा वि। एक्कग तीसेक्कारस इगवीस सबार तिसए य ॥२६॥
इगवीसा छच्च सया छहिअहिया नवसया य एगहिया। अउणुत्तराणि चउद्स सयाणि गुणनउइ पंचसया ॥

(चू०)—'एगबियाला पण्णादिसत्तपण्णत्ति' एते ठाणा भणिया। तत्थ णामस्स उदीरणाठाणाइं। तंजहा–इगयाला बायाला पण्णासा एकपण्णा बापण्णा तेपण्णा चउपण्णा पण्णपण्णा छपण्णा सत्तावण्णा वेति। तत्थ इगयाला-तेजतिगसत्तगं वण्णातिवीस अगुरुलहुगं थिरगं अथिर सुभासुभणिमेणमिति। एतेसिं तेत्तीसाए धुवोदीरणा। ततो मणुयगति पंचिंदियजाति तसं बायर पज्जत्तगं सुभ आदिज्ज जसकित्ती चेव। ताहिं अट्ठहिं तेत्तीसाए पक्खित्तेहिं होइ इयालिसा। एयं एयालीसं सजोगिकेवली समोहाए कम्मदिगकायजोगे वट्टमाणो उदीरेति। एसो चेव इतालीस तीत्थकरसहिता बायालीसा होति। तंपि तित्थगरो तहेव सम्मोहेउ उदीरेइ। ओरालियं सत्तगं, छण्हं संठाणाणं एगयरं, वज्जतिसभणारायसंघयणं, उवघायपत्तेयमिति एयाणि एक्कारस एक्काचत्तालीसाए होति बावण्णा। एवं बावण्णा सजोगिकेवलि समोहातोरालियमीसकायजोगे वट्टमाणो उदीरेति। एसा चेव बावण्णा तित्थगरसहिता तेवण्णा होति। णवरि संठाणं समचउरंसं तित्थकरो तहेव समोहेउ उदीरेइ। पराघाय उस्सास पसत्थापसत्थविहायपगतीणं एगयरेण सुस्सरदुस्सराणं एगयरेणं सहिता बावण्णा छप्पण्णा होति।

एयं छप्पण्णं सजोगिकेवली ओरालियकायओगे वट्टमाणो उदीरेति। परघायउस्सासपसत्थविहायगतिसुस्सर-सहिता तेवण्णा सत्तावण्णा होंति एयं सत्तावण्णं तित्थगरो उरालियसरीरे वट्टमाणो उदीरेति। सत्तावण्णाए वइजोगे णिरुद्धे छप्पण्णा होइ। ततो उसासे णिरुद्धे पणपण्णा होइ। इयाणिं अतित्थकरकेवलिस्स छप्पण्णाउ वइजोगे णिरुद्धे पणपण्णा होंति वइविरहिता। ततो पण्णपण्णातो उसासे णिरुद्धे चउप्पण्णा होइ उस्सासनामर-हिया। गओ केवली।

इयाणिं एगिंदियाण पंच उदीरणा ठाणा। तं जहा–बायाला पण्णा एकापण्णा बावण्णा तेवण्णा। तत्थ बायाला–तिरियगति एगिंदियजाती तिरियाणुपुव्वी थावरं बायरसुहुमाण एगयरं, पज्जत्तापज्जत्ताण एगयरं, दूभगं, अणादिज्जं, जसाजसाण एगयरं, एयाणि णव धुवोदीरणाए सहिया होंति बायालीसा। एत्थ पंच भंगा–बायर-सुहुमेहिं पज्जत्तापज्जत्तेहिं अजसेण य चत्तारि भंगा, बायरपज्जत्तगा जसेणं एगो भंगो। ततो बायालातो सरीरत्थ-स्स आणुपुव्वि अवणेत्तुरालियसत्तगं अङ्गोवङ्गरहितं हुण्डं संठाणं, उवघाय, पत्तेयसाहारणा एगयरं एतेण य सहिया एगचत्ताल पण्णासा होंति। एत्थ दस भंगा। तत्थ बादरपज्जत्तगपत्तेयसाहारणजसाजसेहिं चत्तारि पण्णासातो। बायरअपज्जत्तगपत्तेयसाहारणअजसेहिं दोण्णि पण्णासातो। सुहुमपज्जत्तापज्जत्तेण पत्तेयसाहा-रणअजसेहिं चत्तारि पण्णासातो। सव्वग्गं दस। बादरवाउक्काइयस्स य वेउव्वियस्स सच्चेव पण्णासा ओरा-लियछक्करहिया वेउव्वियछक्कसहिया पण्णासा होंति। एत्थ एगो भंगो बायरपज्जत्तपत्तेयअजसेणेवं। सव्वग्गं

पण्णासाए एक्कारस भंगा। सच्चेव पण्णासा सामण्णेगिंदियाणं सरीरपज्जत्तीए पज्जत्तगाणं पराघाए च्छूढे एक्कावण्णा होइ। एत्थ छभंगा। तत्थ बायरपत्तेयसाहारणजसाजसेहिं चत्तारि। सुहुमपत्तेयसाहारणाजसेहिं दोण्णि। सव्वग्गं छ। वेउव्वियस्स वि अप्पणो पण्णासाए सरीरपज्जत्तीए पज्जत्तस्स पराघाए च्छूढे एक्कापण्णा होति। तत्थ सो चेव एक्को पुव्वुत्तो भंगो। सव्वेवि एक्कापण्णाए सत्त भंगा। सच्चेव सामण्णेक्कावण्णा आणापाणुपज्जत्तीए पज्जत्तस्स उसासे च्छूढे बावण्णा होइ। एत्थ वि छभंगा। उज्जोयबायरपत्तेयसाहारणजसाजसेहिं चत्तारि भंगा, आतपबादरपत्तेयजसाजसेहिं दोण्णि भंगा, सव्वग्गं छ। सव्वसमुदायो बारस भंगा। वेउव्वियस्स वि अप्पणो एक्कापण्णाए आणापाणुपज्जत्तीए पज्जत्तस्स उस्सासे च्छूढे बावण्णा होति, एक्को चेव भंगो। सव्वे वि बावण्णाए तेरस भंगा। इयाणिं सामण्णएगिंदियाणं उस्सासेण बावण्णाए आतावुज्जोवाणं एगयरे छूढे तेवण्णा होति। एत्थ वि आतावुज्जोवसहिते बावण्णाए जे भंगा भणिया ते चेव छभंगा भणियव्वा तेवण्णाए। एवं एगिंदियाणं सव्वोदीरणासमुच्चयो, बायालीसं भंगा। एगिंदिया समत्ता।

इयाणिं बेइंदियाणं छ उदीरणठाणाणि, तंजहा—बायाला, बावण्णा, चउवण्णा, पणपण्णा, छप्पण्णा, सत्तावण्णा। तत्थ बायाला—तिरियगती बेइंदियजाती तिरियाणुपुव्वी तसं बायरं पज्जत्तापज्जत्ताणं एगयरं दूभगं अणादेज्जं जसाजसाण एगयरं, एयाणि धुवोदीरणा सहिता बायाला होति विग्गहगतीए वट्टमाणस्स। एत्थ तिन्नि भंगा—पज्जत्तगजसाजसेहिं दोण्णि भंगा, अपज्जत्तगअजसेण एगो भङ्गो, सव्वग्गं तिण्णि भङ्गा। ततो सरीरत्थस्स

आणुपुव्वी अवणेत्तु उरालियसत्तगं हुंडसंठाणं सेवट्टसंघयणं उवघायपत्तेएहिं एक्कारसहिं छूढेहिं बावण्णा होइ। एत्थवि पुव्वुत्ता तिण्णि भङ्गा। ततो सरीरपज्जत्तीए पज्जत्तस्स विहगगतिउवघाएहिं छूढेहिं बावण्णा चउवण्णा होइ। एत्थ पज्जत्तगजसाजसेहिं दो भङ्गा। ततो उसासपज्जत्तीए पज्जत्तस्स ऊसासे छूढे चउवण्णा पणपण्णा होइ, एत्थ पज्जत्तगजसाजसेहिं दो भंगा। अहवा सरीरपज्जत्तीए पज्जत्तगस्स उस्सासे अणुइण्णे उज्जोवे उइण्णे चउवण्णा पणपण्णा होइ, एत्थ वि पज्जत्तगजसाजसेहिं दो भंगा। सव्वग्गं चत्तारि भंगा। ततो भासापज्जत्तीए पज्जत्तगस्स उस्सासससहियाए पणपण्णाए सुस्सरदूस्सराणं एगयरे छूढे पणपण्णा छप्पण्णा होइ, एत्थ पज्जत्तगस्स सुसरदूसरजसाजसेहिं चत्तारि भंगा। अहवा आणापाणुपज्जत्तीए पज्जत्तगस्स सरे अणुदिण्णे (उज्जोवे उइण्णे) पणपण्णा छप्पण्णा होइ, एत्थ पज्जत्तगजसाजसेहिं दो भंगा, सव्वग्गं छ भंगा। ततो भासापज्जत्तीए पज्जत्तस्स सरछप्पण्णाओ उज्जोवे छूढे छप्पण्णाओ सत्तावण्णा होति। एत्थ सूसरदूसरजसाजसेहिं चत्तारि भंगा। एवं सव्वेसिं अग्गं बावीसा। एवं तेइंदियचउरिंदियाणवि बावीसा। सव्वग्गं विगलाणं छावट्ठि भंगा।

इयाणिं पंचिंदिय तिरियाणं उदीरणा भण्णइ–तेसिं अट्ठ उदीरणाठाणाणि। तं जहा–बायाला एक्कावण्णा, बावण्णा, तेवण्णा, चउपण्णा, पणपण्णा, छप्पण्णा, सत्तावण्णा। एत्थ सभावोदया छ–बायाला, बावण्णा, चउपण्णा, पणपण्णा, छप्पण्णा, सत्तावण्णा। तत्थ बायाला–तिरितगई पंचिंदियजाइ, तिरियाणुपुव्वी, तसं बायर पज्जत्तापज्जत्ताणं एगयरं, सुभगाएज्ज दुभगअणादेज्ज दोण्ह जुवलाणं एगयरं, जसाजसाण एगयरं एते

णव धुवोदीरणा सहिया बायाला होति अंतरगतीए वट्टमाणस्स । एत्थ पज्जत्तग सुभग आदेज्ज दुभगअणादेज्जाणं दोण्हं जुवलाण एगयरेणं जसाजसेण चत्तारि भंगा, अपज्जत्तगदूभगअणादेज्जअजसेणं एगो भंगो, सव्वग्गं पंच भंगा। ततो सरीरत्थस्स आणुपुव्विरहिया उरालियसत्तगं, छण्हं संघयणाणं एगयरं, छण्हं संठाणाणं एगयरं, उवघायं, पत्तेयं एतेहिं एक्कारसहिं सहिया बायाला बावण्णा होति। एत्थ पज्जत्तस्स छहिं संठाणेहिं छहिं संघयणेहिं सुभगआदेज्ज दुभगअणादेज्जाण जुवलाणं जसाजसाणं च एगयरेणं चोयालं भंगसतं, अपज्जत्तगस्स हुंडसंठाण सेवट्टसंघयण दुभगअणादेज्जजुवलाणं अजसेणं च एक्को भंगो, सव्वग्गं सतं पणयालं भंगाणं बावण्णाए जायते । ततो सरीरपज्जत्तीए पज्जत्तस्स पराघाए विहायगइदुगस्स य एगयरे छूढे बावण्णा चउपण्णा होइ । एत्थ तमेव पज्जत्तगस्स चोयालं सयं विहायगतिजुगलगुणिया दो सया अट्ठासीया भंगाणं होति । ततो आणपाणपज्जत्तीए पज्जत्तस्स उस्सासे छूढे चउपण्णा पणपण्णा होति । एत्थ वि दोसया अट्ठासीया । (अहवा सरीरपज्जत्तीए पज्जत्तगस्स उस्सासे अणूदिए उज्जोवे उदिण्णे य चउपण्णा पणपण्णा होति एत्थ वि दोसया अट्ठासीया।) पणपण्णाए सव्वसमुदयो पंच सया छावत्तरा भंगाणं। ततो भासाए पज्जत्तस्स उस्सास पणपण्णाए सुस्सरदुस्सराणं एगयरे छूढे पणपण्णा छप्पण्णा होति । एत्थ पणपण्णाए उस्सासेण दोसया अट्ठासीया लद्धा तेय सरदुगेण दुगुणिता पंचसता छावत्तरा भंगाणं। अहवा आणपाणुपज्जत्तीए पज्जत्तस्स सरे अणुदिण्णे उज्जोवे उदिण्णे पणपण्णाए छप्पण्णा होति। एत्थ जे चेव उज्जोय पणपण्णाए भंगाणं दोसया अट्ठासीया ते चेव उज्जोय-

छप्पण्णाए वि भाणियव्वा। सव्वसमुदयो अट्टसया चउसट्ठा भंगाणं छप्पण्णाए। ततो सरसहियछप्पण्णाए उज्जोए छूढे छप्पन्ना सत्तावन्ना होइ। एत्थ जे चेव सरछप्पण्णाए पंचसता छावत्तरा भंगाणं भणिया ते चेय भाणियव्वा। (तेसामेव तिरियपंचेंदियाणं वेउव्विय कुव्वाणं उइरणा ठाणा पंच हवन्ति, तं जहा–एक्कावण्णा तेवण्णा चउवण्णा पणपण्णा छप्पण्णा।) एत्थ एक्कावण्णा–वेउव्वियसत्तगं समचउरंससंठाणं उवघायं पत्तेयं एते पंचिंदियतिरियाणं च अंतरगतिवायालीसा आणुपुव्वीरहिया दस सहिया एक्कावण्णा होइ। एत्थ पज्जत्तगस्स सुभगाएज्ज दूभगअणाएज्जजुवलेगयरेण जसाजसेक्कयरेण य चत्तारि भंगा। ततो सरीरपज्जत्तीए पज्जत्तस्स पराघायपसत्थविहायगतिए छूढाए एकापण्णा तेवण्णा होति। एत्थ वि एकापण्णा सरिसा चत्तारि भंगा। ततो आणुपाणुपज्जत्तीए पज्जत्तस्स उस्सासे च्छूढे तेवण्णा चउपण्णा होइ। एत्थ वि एक्कापण्ण सरिसा चत्तारि भंगा। अहवा सरीरपज्जत्तीए पज्जत्तस्स उस्सासे अणुइण्णे उज्जोवे उइण्णे तेवण्णा चउवण्णा होति। एत्थ वि ते चेव एक्कावण्णसरिसा चत्तारि भंगा। चउपण्णाए सव्वग्गं भंगाण अट्ठ होत्ति। ततो भासापज्जत्तीए पज्जत्तस्स उस्सासचउपण्णाए सुस्सरे छूढे चउपण्णा पणपण्णा होति। एत्थवि एक्कावण्ण सरिसा चत्तारि भंगा। अहवा आणापाणुपज्जत्तीए पज्जत्तस्स सरे अणुदिण्णे उज्जोवे उदिण्णे चउपण्णा पणपण्णा होइ। एत्थवि एक्कापण्ण सरिसा चत्तारि भंगा। पणपण्णाए भंगाणं सव्वग्गं अट्ठ। ततो सुस्सरपणपण्णाए उज्जोए च्छूढे पणपण्णा छप्पण्णा होति। तत्थ वि एक्कावण्ण सरिसा चत्तारि भंगा॥

इयाणिं मणुयाण भण्णइ–तत्थ मणुयाणं णव उदीरणा ठाणा पण्णास वज्जा। सेसा सव्वे केवलीणं भणिया पढमं। तत्थ सहावमणुस्सोदया पंच, तंजहा–४२–५२–५४–५५–५६। तत्थ बायाला जहा पंचिंदियाणं तिरियाणं तहेव णवरि मणुयगति मणुयाणुपुव्वीउ भाणियव्वा। उववण्णाएवि जहा पंचिंदियतिरियाणं तहा भंगा भाणियव्वा। एवं चउपण्णाए वि। एवं पणपण्णाए वि, णवरि उज्जोवरहियाणं भंगाणं वे सता अट्ठासीता। एवं छप्पण्णाए वि उज्जोवरहिया भंगा भाणियव्वा, उज्जोवरहियाणं भंगाणं ५७६। वेउव्विय उदीरणा ठाणा जे चेव पंचिंदिततिरियाणं ते चेव मणुयाणंवि। तत्थ एक्कापण्णाए तिपण्णाए जहा पंचिंदियतिरियस्स तहेव भाणियव्वा। चउप्पण्णाए वि उस्सासेण चत्तारि भंगा। उत्तरवेउव्विए संजयस्स उज्जोवं होइ अण्णेसिं ण होतित्ति काउं। तेण एगा पसत्थेहि चउपण्णा उज्जोएण, सव्वग्गं पंच। एवं पणपण्णाए वि सरेण चत्तारि भंगा, उज्जोएण एक्का, सव्वग्गं पंच। छप्पण्णाए उज्जोएण एक्को भंगो संजयस्सेव। मणुयस्स वेउव्वियोदयाणं सव्वग्गं एगूणवीसा। इदाणीं आहारसंजयस्स भण्णइ। तस्स पंच उदीरणा ठाणाणि, तं जहा–५१–५३–५४–५५ ५६। तत्थ एगावण्णा–आहारसत्तगं समचउरंसं उवघायं पत्तेयं एते दस। जा मणुयाणं अंतरगतीए बायालीसा सा आणुपुव्वी रहिया आहारसत्तगादि सहिया एक्कापण्णा होइ। णवरि सव्वे पसत्था एक्को भंगो होइ। ततो सरीरपज्जत्तीए पज्जत्तस्स पराघाय पसत्थविहायगतिए च्छूढाए एक्कापण्णा तेपण्णा भवति। एत्थवि सव्वे पसत्था एगो भंगो। ततो आणपाणुपज्जत्तीय पज्जत्तस्स उस्सासे छूढे तेपण्णा चउपण्णा होइ। एत्थ वि एगो

भंगो। अहवा सरीरपज्जत्तीए पज्जत्तस्स उस्सासे अणुदिण्णे उज्जोवे उदिण्णे तेवण्णा चउपण्णा होइत्ति। तत्थ वि एगो भंगो, सव्वग्गं चउप्पणाए दो भंगा। ततो भासापज्जत्तीए पज्जत्तस्स उस्सासखउपण्णाए सूसरे छूढे चउपण्णा पणपण्णा होइ। एत्थवि एगो भंगो। अहवा आणपाणुपज्जत्तीए पज्जत्तस्स सरे अणुइण्णे उज्जोवे उइण्णे चउपण्णा पणपण्णा भवति। एत्थवि एगो भंगो, सव्वग्गं दो भंगा। ततो भासापज्जत्तीए पज्जत्तस्स उज्जोए छूढे पणपण्णा छप्पण्णा होइ। एत्थ वि एगो भंगो। एवं आहारगसंजयस्स सव्वग्गं सत्तभंगा। एवं केवली वेउव्विय आहार सभावोदयाणं च सव्वग्गेण तेरससत्ताणि छत्तीसाणि। गया मणुया॥

इयाणिं देवाणं छ उदीरणाठाणा। तं जहा-४२-५१-५३-५४-५५-५६। तत्थ वायालीसा-देवगति पंचिंदियजाति देवाणुपुव्वि तसं बायरं पज्जत्तगं सुभगाएज्ज दूभगअणाएज्ज जूवलाणं एगयरं जसाजसाण एक्कयरं। एते णव धुवोदीरणा सहिया वायालीसा होंति। एत्थ सुभगाएज्ज दूभगाणाएज्ज एक्कयरेण जसाजसाणं च एक्कयरेण चत्तारि भंगा। ततो सरीरत्थस्स वेउव्वियसत्तगं समचउरंसं उवघायं पत्तेयं एते दस आणुपुव्विरहियाए वायालीसाए पक्खित्ता ततो जाया एक्कावण्णा। एत्थ वि वायालीसा सरिसा चत्तारि भंगा। ततो सरीरपज्जत्तीए पज्जत्तस्स पराघातपसत्थविहायगतीए छूढाए एक्कावण्णा तेवण्णा होइ। एत्थवि वायालीसासरिसा चत्तारि भंगा। ततो आणपाणुपज्जत्तीए पज्जत्तस्स उस्सासे छूढे तेवण्णा चउप्पण्णा होंति। एत्थवि वायालीसा सरिसा चत्तारि भंगा। अहवा सरीरपत्तीए पज्जत्तस्स उस्सासे अणुदिण्णे उज्जोवे उतिण्णे तेवण्णा चउपण्णा होंति तत्थवि

बायालीसा सरिसा चत्तारि भंगा। सव्वग्गं अट्ठ भंगा। ततो भासापज्जत्तीए पज्जत्तस्स उस्सास चउपण्णाए सुसरे च्छूढे चउप्पण्णा पणपण्णा भवति, एत्थवि बायालीसा सरिसा चत्तारि भंगा। अहवा आणपाणुपज्जत्तीए पज्जत्तस्स सरे अणुदिण्णे उज्जोवे उदिण्णे चउप्पण्णा पणपण्णा होति। एत्थवि बायालीसा सरिसा चत्तारि भंगा, सव्वग्गं अट्ठ। ततो भासापणपण्णाए उज्जोवे छूढे पणपण्णा होइ। तत्थवि बायालसरिसा चत्तारि भंगा। सव्वोदता बत्तीसं। गया देवा ॥

इयाणिं णेरइयाणं भण्णइ–एतेसिं पंच उदीरणा ठाणा, तं जहा–४२–५१–५३–५४–५५। तत्थ बायाला-णिरयगती पंचिंदियजाती णिरयाणुपुव्वी तसं बायरं पज्जत्तगं दूभगं अणादिज्जं अजसकित्ती एते णव धुवोदी-रणा सहिया बातालीसा भवति अंतरगतीए वट्टमाणाणं, एगो भंगो। ततो सरीरत्थस्स वेउव्वियसत्तगं हुंडसंठाणं उवघायं पत्तेयं एते दस आणुपुव्विरहियाए बायालाए च्छूढा एक्कापण्णा होति। एक्को भङ्गो। ततो सरीरपज्जत्तीए पज्जत्तस्स पराघात अप्पसत्थविहायगतिए य छूढाए एगावण्णा तेवण्णा होति। एगो भङ्गो। (ततो आणपाणुपज्जत्तीए पज्जत्तस्स उस्सासे छूढे तेवण्णा चउप्पण्णा होइ, एगो भंगो। ततो भासापज्जत्तीए पज्जत्तस्स उस्सासचउपण्णाए दुस्सरे छूढे चउपण्णा पण्णपण्णा होइ, एगो भंगो।) सव्वग्गं पंचभंगा ॥ गया णेरइया ॥ ठाण समुक्कित्तणा सम्मत्ता ॥

इयाणिं साभित्तं भण्णइ–'गुणिसु णामस्स'त्ति। गुणेसु–गुणठाणकेसु मिच्छादिट्ठिपभिति जाव सजोगि केव-

ली एतेसु जहासंखेणं भणणति-'नव सत्त तिन्नि अट्ट य, छपंच य अप्पमत्ते दो एक्कं पंचसु एकम्मि अट्ट' इति।
मिच्छादिट्ठिस्स णव उदीरणा ठाणाणि। तं जहा-एगिंदियाइसु सव्वजीवेसु मिच्छादिट्ठीसु जोएज्जे।
सासायणस्स सत्त[ट्ठा]। तं जहा-४२-५०-५१-५२-५५-५६-५७। बायाला बायरएगिंदियबेइंदियतेइंदिय-
चउरिंदियपंचिंदियतिरियमणुयदेवाणं अंतरगतीए वट्टमाणाणं होति। पण्णासा एगिंदियाणं सरीरत्थाणं किंचूण
छ आवलियकालं। एक्कावण्णा देवाण सरीरत्थाणं एगसमयादी किंचूण छावलियकालं। बावण्णा सरीरत्थे
विगलपंचिंदियतिरियमणुए अहिकिच्च तहेव होति। पणपण्णा देवनेरइए पज्जत्तए अहिकिच्च समयाइ छावलिय-
कालं। छप्पण्णा पंचिंदिय तिरिय मणुयदेवे य पज्जत्तये अहिगिच्च तहेव होइ। सत्तावण्णा पंचिंदियतिरिय
उज्जोववेदये अहिकिच्च तहेव होइ॥
सम्मामिच्छादिट्ठिस्स तिण्णि ठाणाणि। तं जहा-पणपण्णा छप्पण्णा सत्तावण्णा। तत्थ पणपण्णा णेरइय-
देवे पडुच्च, छप्पण्णा पंचिंदियतिरियमणुयदेवेय पडुच्च। सत्तावण्णा पंचिंदियतिरिय उज्जोयवेयगे पडुच्च॥
असंजयसम्मद्दिट्ठिस्स अट्ठठाणाणि। तं जहा-बायाला, एक्कावण्णा बावण्णा तेवण्णा चउप्पन्ना पणपन्ना
छप्पण्णा सत्तावण्णा। तत्थ बायाला णेरतियतिरियदेवमणुयपडुच्च। एक्कावण्णा देवे णेरतिए पडुच्च। बावण्णा
पंचिंदिय(तिरिय)मणुयपडुच्च। तेवण्णा देवणेरइए पडुच्च। चउवण्णा देवणारयतिरियमणुए पडुच्च। एवं पण-
पण्णावि। छप्पण्णा देवमणुयतिरिक्खे पडुच्च। सत्तावण्णा उज्जोववेदगे पंचिंदियतिरिए पडुच्च। अपज्जत्तोदया

तिरियणेरइयाणं वेदगखाइयसम्मदिट्ठिणं होति ॥

संजयासंजयस्स छ उदीरणाणि । तं जहा–५१–५३–५४–५५–५६–५७। एक्कावण्णा तिपण्णा चउपण्णा पंचपण्णातो तिरियमणुयाणं वेउव्वियसरीरे वट्टमाणाणं होंति। छप्पण्णा तिरियमणुयाणुए सभावोदए वट्टमाणाणं। सत्तावण्णा उज्जोवसहिया देसविरयतिरियाणं होति ।

पमत्तसंजयस्स पंचठाणा। तं जहा–५१–५३–५४–५५–५६–वेउव्वियसरीरआहारससरीरवेदए पडुच्च पंचवि ठाणा होंति । छप्पण्णा उरालियसरीरस्स वि होति ।

अप्पमत्तसंजयस्स दोण्णि ठाणा–५५–५६ । तत्थ छप्पण्णा सभावोदउ अप्पमत्तसंजयाणं। उत्तरवेउव्वियाणं (आहारगाणं) पणपण्णछप्पण्णोदएसु वट्टमाणाणं चरिमकाले अप्पमत्तभावो लब्भति केसिंचि तेण पणपण्ण छप्पणाउ लब्भन्ति ॥

'एक्कं पंचसु गुणठाणेसुं । एक्कं उदीरणाठाणं छप्पन्ना एव अपुव्वकरणअणियट्टि सुहुमरागउवसंतमोहखीणमोहाणं एतेसिं छप्पण्णा । 'एक्कम्मि अट्ठा' सजोगिकेवलिस्स अट्ठ उदीरणठाणाणि । तं जहा–४१–४२–५२–५३–५४–५५–५६–५७ । एतेसिं परूवणा पुव्वुत्ता । सामित्तं गयं ।

इयाणिं कंमि उदए केवत्तिया भेया सामित्तं पडुच्च उपज्जंति तं णिरूवणत्थं भण्णइ–'ठाणक्कमेण भंगा वि' त्ति–ठाणपरिवाडीए भंगा जहक्कमेण णायव्वा। 'इक्कगतीसेक्कारस इगवीससयारतिसई य इगवीसा छच्चसया

च्छहिं अहिया णवसयाय एगहिया अउणत्तराणि चोद्दस सयाणि गुणणउइ पंच सता'। तत्थ एक्कचत्तालाए एगो भङ्गो अतित्थकरकेवलिस्स। इदाणीं बायालीसाए तीस भंगा–णेरतिया १, एगिंदिय ५, विगल९, पंचिंदियतिरियाणं ९, मणुयाणं ५, तित्थगरस्स १, देवाण ४, सव्वसमुदए तीसा। पण्णा एगिंदियाणं तत्थ एक्कारस भंगा। एक्कापण्णाए एक्कवीस। तत्थ णेरइए १, एगिंदियए ७, पंचिंदियतिरिय ४, मणुयाणं ४, आहारसंजयस्स १, देवाणं ४, सव्वग्गं एक्कवीसा। बावण्णाए एगिंदियाणं १३, विगल ९, पंचिंदियतिरियाणं १४५, मणुयाणं १४९, सव्वग्गं तिन्नि सता बारसुत्तरा। तेवण्णाए णारय० १, एगिंदिय ६, पंचिंदियतिरि ४, मणुय ४, आहारसंजयस्स १, तित्थगरस्स १, देवाणं ४, सव्वग्गं एक्कवीसा। चउपण्णाए णेरतिए १, विगल ६, पंचिंदियतिरियाणं २९६, मणुयाणं २९२, वेउव्वियसंजयस्स उज्जोवेणेगो १, आहारसंजयस्स २, देवाणं ८, सव्वग्गं छसता छत्तरा (छुत्तरा)। पणपण्णाए णेरइए १, विगल० १२ पंचिंदियतिरियए ५८४, मणुए २९२, वेउव्वियसंजयस्स उज्जोवेण १, आहारासंजयस्स २, तित्थकरस्स १, देवाणं ८, सव्वग्गं णवसया एगुत्तरा। छप्पण्णाए विगल० १८, पंचिंदियतिरिय ८६८, मणुए ५७६, वेउव्वियसंजयस्स उज्जोवेण १, आहारसंजयस्स उज्जोवेण सह १, तित्थकरस्स १, देवाणं ४, सव्वग्गं चोद्दससया एगुणसत्तरा। सत्तावण्णाए विगल० १२, पंचिंदियतिरिय० ५७६, तित्थकरस्स १, सव्वग्गं पंचसया एगूणणउया ॥२५–२६–२७॥

(मलय०)—तदेवमुक्तानि मोहनीयस्योदीरणास्थानानि, सम्प्रति नामकर्मण उदीरणास्थानानि प्रतिपिपादयिषुराह—'एग' इत्यादि।

नामकर्मण उदीरणास्थानानि दश, तद्यथा–एकचत्वारिंशत्, द्विचत्वारिंशत्, पञ्चाशत्, एकपञ्चाशत्, द्विपञ्चाशत्, त्रिपञ्चाशत्, चतुःपञ्चाशत्, पञ्चपञ्चाशत्, षट्पञ्चाशत्, सप्तपञ्चाशच्चेति। तत्र तैजससप्तकं वर्णादिविंशतिरगुरुलघु स्थिरास्थिरे शुभाशुभे निर्माणमित्येतासां त्रयस्त्रिंशत्प्रकृतीनामुदीरणा ध्रुवा। तत्र मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तिरूपेऽष्टके प्रक्षिप्ते सति एकचत्वारिंशद्भवति। एतासां चैकचत्वारिंशत्प्रकृतीनां केवलिसमुद्घातगतः कार्मणकाययोगे वर्तमानः केवली उदीरको भवति। एषैव चैकचत्वारिंशत्तीर्थकरनामसहिता द्विचत्वारिंशद्भवति। तस्याश्च तीर्थकरः केवलिसमुद्घातगतः कार्मणकाययोगे वर्तमान उदीरकः। तस्यामेवैकचत्वारिंशति औदारिकसप्तकं षण्णां संस्थानानामेकतमत् संस्थानं वज्रर्षभनाराचसंहननमुपघातं प्रत्येकमित्येकादशके प्रक्षिप्ते सति द्विपञ्चाशद्भवति। अत्र षड्भिः संस्थानैः षड्भङ्गाः, ते च वक्ष्यमाणसामान्यमनुष्यभङ्गग्रहणेन गृहीता द्रष्टव्याः, एवमुत्तरत्रापि। एतस्याश्च द्विपञ्चाशतः सयोगिकेवली समुद्घातगत औदारिकमिश्रकाययोगे वर्तमान उदीरकः। एषैव च द्विपञ्चाशत्तीर्थकरनामसहिता त्रिपञ्चाशत्। केवलमिह संस्थानं समचतुरस्रमेव वक्तव्यम्। अस्या अप्युदीरकः सयोगिकेवली तीर्थकर औदारिकमिश्रकाययोगे वर्तमानो वेदितव्यः। तथा सैव द्विपञ्चाशत् पराघातनामोच्छ्वासनाम प्रशस्ताप्रशस्तविहायोगत्योरन्यतरा विहायोगतिः सुस्वरदुःस्वरयोरन्यतरस्वरनामेतिचतुष्टयप्रक्षेपात् षट्पञ्चाशद्भवति। एनां च सयोगिकेवली औदारिककाययोगे वर्तमान उदीरयति। पराघातोच्छ्वासप्रशस्तविहायोगतिसुस्वरप्रक्षेपात्रिपञ्चाशत् सप्तपञ्चाशद्भवति। एतस्याश्च तीर्थकरः सयोगिकेवली औदारिककाययोगे वर्तमान उदीरकः। सप्तपञ्चाशदेव वाग्योगनिरोधे षट्पञ्चाशद्भवति। उच्छ्वासेऽपि च निरुद्धे पञ्चपञ्चाशत्। अतीर्थकरकेवलिनः प्रागुक्ताः षट्पञ्चाशद्वागयोगे निरुद्धे पञ्चपञ्चाशद्भवति। उच्छ्वासेऽपि च निरुद्धे चतुःपञ्चाशत्। अत्र द्विपञ्चाशच्चतुःपञ्चाशद्वर्जेषु शेषेषु षट्सु प्रत्येकमेकैको विशेष-

भङ्गः प्राप्यत इति सर्वसंख्यया केवलिनां षड्भङ्गाः । तत्रैकचत्वारिंशत्यतीर्थकृत एकः, शेषेषु तु पञ्चसु तीर्थकृतः । तदेवमुक्तानि केवलिनामुदीरणास्थानानि ।

सम्प्रत्येकेन्द्रियाणामभिधीयन्ते—एकेन्द्रियाणामुदीरणास्थानानि पञ्च, तद्यथा—द्विचत्वारिंशत् पञ्चाशत् एकपञ्चाशत् द्विपञ्चाशत् त्रिपञ्चाशच्चेति । तत्र तिर्यग्गतितिर्यगानुपूर्व्यौ स्थावरनामैकेन्द्रियजातिर्बादरसूक्ष्मयोरेकतरत् पर्याप्तापर्याप्तयोरेकतरत् दुर्भगमनादेयं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नव प्रकृतयः प्रागुक्ताभिर्ध्रुवोदीरणाभिस्त्रयस्त्रिंशत्संख्याकाभिः सह सन्मिश्रा द्विचत्वारिंशद्भवति । अत्र च भङ्गाः पञ्च, तद्यथा—बादरसूक्ष्माभ्यां प्रत्येकं पर्याप्तापर्याप्ताभ्यामयशःकीर्त्या सह चत्वारः, बादरपर्याप्तयशःकीर्तिभिश्चैकः । सूक्ष्मापर्याप्ताभ्यां सह यशःकीर्तेरुदयो न भवति, तदभावाच्च नोदीरणेति कृत्वा तदाश्रिता विकल्पा न भवन्ति । एषा द्विचत्वारिंशदपान्तरालगतौ वर्तमानस्य वेदितव्या । ततः शरीरस्थस्यौदारिकशरीरौदारिकसंघातौदारिकबन्धनचतुष्टयहुण्डसंस्थानोपघातप्रत्येकसाधारणान्यतररूपं नवकं प्रक्षिप्यते, तिर्यगानुपूर्वी चापनीयते, ततः पञ्चाशद्भवति । अत्र च भङ्गा दश, तद्यथा—बादरपर्याप्तस्य प्रत्येकसाधारणाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च चत्वारो भङ्गाः, अपर्याप्तबादरस्य प्रत्येकसाधारणाभ्यामयशःकीर्त्या सह द्वौ, सूक्ष्मस्य च पर्याप्तापर्याप्तप्रत्येकसाधारणैरयशःकीर्त्या सह चत्वार इति दश । बादरवायुकायिकस्य वैक्रियं कुर्वत औदारिकषट्कस्थाने वैक्रियषट्कमवगन्तव्यम् । ततश्च तस्यापि पञ्चाशदेवोदीरणायोग्या भवति । केवलमिह बादरपर्याप्तप्रत्येकायशःकीर्तिभिरेक एव भङ्गः । तेजस्कायिकवायुकायिकयोर्हि साधारणयशःकीर्त्योरुदयो न भवति, तदभावाच्च नाप्युदीरणा, ततस्तदाश्रिता भङ्गा न प्राप्यन्ते । तदेवं सर्वसंख्यया पञ्चाशत्येकादश भङ्गाः । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते एकपञ्चाशद्भवति । अत्र च भङ्गाः षट्, तद्यथा—बाद-

रस्य प्रत्येकसाधारणयशःकीर्त्ययशःकीर्तिपदैश्चत्वारः, सूक्ष्मस्य प्रत्येकसाधारणाभ्यामयशःकीर्त्या सह द्वौ। बादरवायुकायिकस्य च वैक्रियं कुर्वतः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते प्रागुक्ता पञ्चाशत् एकपञ्चाशद्भवति। अत्र च प्राग्वदेक एव भङ्गः। सर्वसंख्यया चैकपञ्चाशति सप्त भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते द्विपञ्चाशद्भवति। अत्रापि भङ्गः प्राग्वत् षट्। अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते आतपोद्योतयोरन्यतरस्मिन् उदिते द्विपञ्चाशद् भवति। अत्रापि भङ्गाः षट्, तद्यथा–बादरस्योद्योतेन सहितस्य प्रत्येकसाधारणयशःकीर्त्ययशःकीर्तिपदैश्चत्वारः, आतपसहितस्य प्रत्येकयशःकीर्त्ययशःकीर्तिपदैर्द्वौ भङ्गौ। बादरवायुकायिकस्य च वैक्रियं कुर्वतः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते प्रागुक्ता एकपञ्चाशत् द्विपञ्चाशद्भवति। तत्र च प्राग्वदेक एव भङ्गः। तैजसवायुकायिकयोर्हि आतपोद्योतयशःकीर्तीनामुदयाभावादुदीरणा न भवति, ततस्तदाश्रिता भङ्गा अत्र न प्राप्यन्ते। सर्वसंख्यया द्विपञ्चाशति भङ्गास्त्रयोदश। तथा प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां द्विपञ्चाशति आतपोद्योतयोरन्यतरस्मिन् क्षिप्ते त्रिपञ्चाशद्भवति। एत्र भंगाः षट् ये प्रागातपोद्योतान्यतरसहितायां द्विपञ्चाशत्यभिहिताः। सर्वसंख्यया चैकेन्द्रियाणां भङ्गा द्विचत्वारिंशत्।

द्वीन्द्रियाणामुदीरणास्थानानि षट्, तद्यथा–द्विचत्वारिंशत् द्विपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्र तिर्यग्गतितिर्यगानुपूर्व्यौ द्वीन्द्रियजातिस्त्रसनाम बादरनाम पर्याप्तापर्याप्तयोरेकतरत् दुर्भगमनादेयं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नव प्रकृतयः प्रागुक्ताभिस्त्रयस्त्रिंशत्संख्याकाभिर्ध्रुवोदीरणाभिः सह द्विचत्वारिंशद्भवति। एषा च द्विचत्वारिंशदपान्तरालगतौ वर्तमानस्यावसेया। अत्र च भङ्गास्त्रयः, तद्यथा–अपर्याप्तकनामोदये वर्तमानस्यायशःकीर्त्या सहैको भङ्गः, पर्याप्तकना-

णोदये वर्तमानस्य यशःकीर्त्ययशःकीर्तिभ्यां द्वाविति । ततः शरीरस्थस्यौदारिकसप्तकं हुंडसंस्थानं सेवार्तसंहननं उपघातनाम प्रत्येकनामेत्येतत्षट्कं प्रक्षिप्यते, तिर्यगानुपूर्वी चापनीयते, ततो जाता द्विपञ्चाशत् । अत्र च भङ्गास्त्रयः, ते च प्रागिव द्रष्टव्याः । ततः शरीरपर्याप्त्या पर्याप्तस्य विहायोगतिपराघातयोः प्रक्षिप्तयोश्चतुःपञ्चाशद्भवति। अत्र यशःकीर्त्ययशःकीर्तिभ्यां द्वौ भङ्गौ । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते पञ्चपञ्चाशद्भवति । अत्रापि प्रागिव द्वौ भङ्गौ । अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति । अत्रापि प्रागिव द्वौ भंगौ । सर्वेऽपि पञ्चपञ्चाशति चत्वारो भंगाः । ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां पञ्चपञ्चाशति सुस्वरदुःस्वरयोरेकतरस्मिन् प्रक्षिप्ते षट्पञ्चाशद्भवति । अत्र सुस्वरदुःस्वरयशःकीर्त्ययशःकीर्तिपदैश्चत्वारो भंगाः । अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते षट्पञ्चाशद्भवति । अत्र यशःकीर्त्ययशःकीर्तिभ्यां द्वौ भंगौ । सर्वे षट्पञ्चाशति षड्भंगाः । ततो भाषापर्याप्त्या पर्याप्तस्य स्वरसहितायां षट्पञ्चाशति उद्योतनाम्नि प्रक्षिप्ते सप्तपञ्चाशद्भवति । अत्र सुस्वरदुःस्वरयशःकीर्त्ययशःकीर्तिपदैश्चत्वारो भंगाः । सर्वे द्वीन्द्रियाणां भंगा द्वाविंशतिः । एवं त्रीन्द्रियाणां चतुरिन्द्रियाणां च प्रत्येकमुदीरणास्थानानि भावनीयानि । नवरं द्वीन्द्रियजातिस्थाने त्रीन्द्रियाणां त्रीन्द्रियजातिश्चतुरिन्द्रियाणां चतुरिन्द्रियजातिरभिधातव्या । प्रत्येकं च भंगा द्वाविंशतिरवसेयाः ।सर्वसंख्यया विकलेन्द्रियाणां भंगाः षट्षष्टिः ।

तिर्यक्पञ्चेन्द्रियाणां वैक्रियलब्धिरहितानामुदीरणास्थानानि षट् । तद्यथा—द्विचत्वारिंशत् द्विपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति । तत्र तिर्यग्गतितिर्यगानुपूर्व्यौ पञ्चेन्द्रियजातिस्त्रसनाम बादरनाम पर्याप्तापर्याप्तयोरेकतरत् सुभगादेययुगलदुर्भगानादेययुगलयोरेकतरत् युगलं यशःकीर्त्ययशःकीर्त्योरेकतरदित्येता नव प्रकृतयः प्रागुक्ताभिस्त्रयस्त्रिंशत्संख्याकाभिर्ध्रुवो-

दीरणाभिः सह द्विचत्वारिंशद्भवति। एषा च द्विचत्वारिंशदपान्तरालगतौ वर्तमानस्य वेदितव्या। अत्र च भंगाः पञ्च। तत्र पर्याप्तकनामोदये वर्तमानस्य सुभगादेययुगलदुर्भगानादेययुगलयशःकीर्त्ययशःकीर्तिभिश्चत्वारो भंगाः, अपर्याप्तकनामोदये वर्तमानस्य तु दुर्भगानादेयायशःकीर्तिभिरेक एव भंगः। इह सुभगादेये दुर्भगानादेये वा युगपदुदयमायातः। तत उदीरणापि युगपदेवेति पञ्चैव भंगाः। अपरे पुनराहुः—सुभगादेययोर्दुर्भगानादेययोर्वा नैकान्तेन युगपदुदयभावनियमः, अन्यथापि दर्शनात्। ततः पर्याप्तकनामोदये वर्तमानस्य सुभगदुर्भगादेयानादेययशःकीर्त्ययशःकीर्तिभिरष्टौ भंगाः, अपर्याप्तकनामोदये वर्तमानस्य तु दुर्भगानादेयायशःकीर्तिभिरेक इति सर्वसंख्यया द्विचत्वारिंशति नव। ततः शरीरस्थस्यौदारिकसप्तकं षण्णां संस्थानानामेकतमत् संस्थानं षण्णां संहननानामेकतमत्संहननं, उपघातं, प्रत्येकनामेत्येकादशकं प्रक्षिप्यते तिर्यगानुपूर्वी चापनीयते ततो द्विपञ्चाशद्भवति। अत्र भंगानां पञ्चचत्वारिंशं शतं, तद्यथा—पर्याप्तकस्य षड्भिः संस्थानैः षड्भिः संहननैः सुभगादेयदुर्भगानादेययुगलाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च भंगानां चतुश्चत्वारिंशं शतं, अपर्याप्तस्य च हुंडसंस्थानसेवार्तसंहननदुर्भगानादेयायशःकीर्तिभिरेक इति। ये पुनः सुभगादेययोर्दुर्भगानादेययोर्वा केवलाकेवलयोरप्युदयमिच्छन्ति तन्मतेन द्विपञ्चाशति भंगानां द्वे शते एकोननवत्यधिके वेदितव्ये। तत्र पर्याप्तस्य षड्भिः संस्थानैः षड्भिः संहननैः सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च भङ्गा द्वे शते अष्टाशीत्यधिके, अपर्याप्तकस्य तु प्रागुक्तस्वरूप एक इति। तस्यामेव द्विपञ्चाशति शरीरपर्याप्त्या पर्याप्तस्य पराघाते प्रशस्ताप्रशस्तान्यतरविहायोगतौ च प्रक्षिप्तायां चतुःपञ्चाशद्भवति। अत्र पर्याप्तानां प्राक् चतुश्चत्वारिंशं शतं भङ्गकानामुक्तं, तदेव विहायोगतिद्विकगुणितमवगन्तव्यम्। तथा च सत्यत्र भङ्गानां द्वे शते अष्टाशीत्यधिके भवतः। मतान्तरेण पुनः पञ्चशतानि षट्सप्तत्यधिकानि।

ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते पञ्चपञ्चाशद्भवति । अत्रापि प्रागिव भङ्गानां द्वे शते अष्टाशीत्यधिके, मतान्तरेण पञ्च शतानि षट्सप्तत्यधिकानि । अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति । अत्रापि भङ्गाना द्वे शते अष्टाशीत्यधिके, मतान्तरेण पञ्च शतानि षट्सप्तत्यधिकानि । सर्वसंख्यया पञ्चपञ्चाशति स्वमतेन भङ्गकानां पञ्च शतानि षट्सप्तत्यधिकानि, मतान्तरेण तु द्विपञ्चाशदधिकानि एकादश शतानि । ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरदुःस्वरयोरन्यतरस्मिन् क्षिप्ते षट्पञ्चाशद्भवति । तत्र स्वमतचिन्तायां ये उच्छ्वासेन द्वे शते अष्टाशीत्यधिके भङ्गकानां प्राक् लब्धे ते इह स्वरद्विकेन गुण्यते, ततो लब्धानि पञ्च शतानि षट्सप्तत्यधिकानि, मतान्तरेण पुनरिह द्विपञ्चाशदधिकान्येकादश शतानि भङ्गकानां भवन्ति । अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते षट्पञ्चाशद्भवति । अत्र च स्वमतचिन्तायां प्रागिव द्वे शते अष्टाशीत्यधिके भङ्गकाना, मतान्तरेण पञ्च शतानि षट्सप्तत्यधिकानि । सर्वसंख्यया स्वमतेन षट्पञ्चाशति भङ्गा अष्टौ शतानि चतुःषष्ट्यधिकानि, मतान्तरेण सप्तदश शतान्यष्टाविंशत्यधिकानि । ततः स्वरसहितायां षट्पञ्चाशति उद्योतनाम्नि प्रक्षिप्ते सप्तपञ्चाशद्भवति । अत्र ये प्राक् स्वरसहितायां षट्पञ्चाशति भङ्गा अभिहिताः स्वमतेन पञ्च शतानि षट्सप्तत्यधिकानि, मतान्तरेण द्विपञ्चाशदधिकान्येकादश शतानि, त एवात्रापि द्रष्टव्याः । तथा तेषामेव तिर्यक्पञ्चेन्द्रियाणां वैक्रियं कुर्वतामुदीरणास्थानानि पञ्च भवन्ति । तद्यथा—एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र वैक्रियसप्तकं समचतुरस्रसंस्थानं उपघातं प्रत्येकमिति प्रकृतिदशकं प्रागुक्तायां तिर्यक्पञ्चेन्द्रियप्रायोग्यायां द्विचत्वारिंशति प्रक्षिप्यते, तिर्यगानुपूर्वी चापनीयते, तत एकपञ्चाशद्भवति । अत्र सुभगादेययुगलदुर्भगानादेययुगलयशःकीर्त्ययशःकीर्तिपर्याप्तपदैश्चत्वारो भङ्गाः, मतान्तरेण पुनः सुभगदुर्भगाभ्यामा-

देयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च पर्याप्तकेन सहाष्टौ भङ्गाः । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च प्रक्षिप्तायां त्रिपञ्चाशद्भवति । अत्रापि प्रागिव चत्वारो भङ्गाः, मतान्तरेण पुनरष्टौ । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासनाम्नि प्रक्षिप्ते चतुःपञ्चाशद्भवति । अत्रापि प्रागिव स्वमतेन भङ्गाश्चत्वारो मतान्तरेण पुनरष्टौ । अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते चतुःपञ्चाशद्भवति । अत्रापि स्वमतेन भङ्गाश्चत्वारो मतान्तरेणाष्टौ । सर्वसंख्यया चतुःपञ्चाशति स्वमतेनाष्टौ भङ्गाः, मतान्तरेण षोडश । ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां चतुःपञ्चाशति स्वरे प्रक्षिप्ते पञ्चपञ्चाशद्भवति अत्रापि स्वमतेन भङ्गाश्चत्वारो मतान्तरेण पुनरष्टौ । अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति । अत्रापि स्वमतेन भङ्गाश्चत्वारो मतान्तरेणाष्टौ । सर्वसंख्यया स्वमतेन पञ्चपञ्चाशति भङ्गा अष्टौ, मतान्तरेण षोडश । ततः स्वरसहितायां पञ्चपञ्चाशति उद्योते क्षिप्ते षट्पञ्चाशद्भवति । अत्रापि भङ्गाः स्वमतेन चत्वारो मतान्तरेणाष्टौ। सर्वसंख्यया वैक्रियं कुर्वतां तिर्यक्पञ्चेन्द्रियाणां भङ्गा अष्टाविंशतिः, मतान्तरेण षट्पञ्चाशत् । सामान्येन सर्वतिर्यक्पञ्चेन्द्रियाणां स्वमतेन भङ्गाश्चतुर्विंशतिशतानि द्व्यशीत्यधिकानि मतान्तरेण एकोनपञ्चाशच्छतानि द्विषष्ट्यधिकानि ।

सम्प्रति मनुष्याणामुदीरणास्थानानि प्रतिपाद्यन्ते—तत्र केवलिनां प्रागेवोक्तानि । अन्येषां तु पञ्च, तद्यथा—द्विचत्वारिंशत् द्विपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । एतानि सर्वाण्यपि यथा प्राक् तिर्यक्पञ्चेन्द्रियाणामुक्तानि तथैवात्रापि वक्तव्यानि, नवरं तिर्यग्गतितिर्यगानुपूर्व्योः स्थाने मनुष्यगतिमनुष्यानुपूर्व्यौ वक्तव्ये । पञ्चपञ्चाशद् षट्पञ्चाशच्चोद्योतरहिता वक्तव्या । वैक्रियाहारकसंयतान्मुक्त्वा शेषमनुष्याणामुद्योतोदयाभावात् । भङ्गा अपि सर्वत्राप्युद्योतरहितास्तथैव स्वमतपरमतापेक्षया वक्तव्या-

स्यथा-स्वमतेन द्विचत्वारिंशति पञ्च, द्विपञ्चाशति पञ्चचत्वारिंशं शतं, चतुःपञ्चाशति द्वे शते अष्टाशीत्यधिके, पञ्चपञ्चाशत्यपि द्वे शते अष्टाशीत्यधिके, षट्पञ्चाशति पञ्च शतानि षट्सप्तत्यधिकानि। परमतेन तु यथाक्रमं ९।२८९।५७६।५७६।११५२। वैक्रियमपि कुर्वतां मनुष्याणामुदीरणास्थानानि पञ्च भवन्ति, तद्यथा—एकपञ्चाशत्, त्रिपञ्चाशत्, चतुःपञ्चाशत्, पञ्चपञ्चाशत्, षट्पञ्चाशच्चेति। तत्रैकपञ्चाशत्त्रिपञ्चाशच्च यथा प्राग्वैक्रियतिर्यक्पञ्चेन्द्रियाणामुक्तास्तथात्रापि द्रष्टव्याः। चतुःपञ्चाशत्युच्छ्वाससहितायां प्रागिव स्वमतेन चत्वारो भङ्गा मतान्तरेणाष्टौ। उत्तरवैक्रियं कुर्वतां संयतानामुद्योतनामोदयमागच्छति, नान्येषां, ततस्तेन सह चतुःपञ्चाशति प्रशस्त एवैको भङ्गो भवति, संयतानां दुर्भगानादेयायशःकीर्त्युदयाभावात्। सर्वसंख्यया चतुःपञ्चाशति स्वमतेन पञ्च भङ्गाः मतान्तरेण नव। ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां सुस्वरे क्षिप्ते पञ्चपञ्चाशद्भवति। अत्रापि प्रागिव स्वमतेन भंगाश्चत्वारो मतान्तरेणाष्टौ। अथवा संयतानां स्वरेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति। अत्रापि प्रागिव एक एव भङ्गः। सर्वसंख्यया पञ्चपञ्चाशति स्वमतेन पञ्च भङ्गा मतान्तरेण नव। पञ्चपञ्चाशति सुस्वरसहितायामुद्योते क्षिप्ते षट्पञ्चाशद्भवति। तस्यां चैक एव प्रशस्तो भंगः। सर्वसंख्यया वैक्रियमनुष्याणां स्वमतेनैकोनविंशतिभङ्गाः मतान्तरेण पञ्चत्रिंशत्। संप्रत्याहारकं कुर्वतामुदीरणास्थानान्युच्यन्ते—आहारकसंयतानामुदीरणास्थानानि पञ्च, तद्यथा—एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति। तत्राहारकसप्तकं समचतुरस्रसंस्थानमुपघातं प्रत्येकमिति प्रकृतिदशकं प्रागुक्तायां मनुष्यगतिप्रायोग्यायां द्विचत्वारिंशति प्रक्षिप्यते, मनुष्यानुपूर्वी चापनीयते, तत एकपञ्चाशद्भवति। केवलमिह सर्वाण्यपि पदानि प्रशस्तान्येवेति कृत्वा एक एव भंगः। शरीरपर्याप्त्या पर्याप्तस्य प्रशस्तविहायोगतिपराघातयोः प्रक्षिप्तयोस्त्रिपञ्चाशद्भवति।

अत्राप्येक एव भङ्गः । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते चतुःपञ्चाशद्भवति । अत्राप्येक एव भंगः । अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते चतुःपञ्चाशद्भवति । अत्रापि प्रागिवैक एव भंगः । सर्वसंख्यया चतुःपञ्चाशति द्वौ भङ्गौ । ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां चतुःपञ्चाशति सुस्वरे क्षिप्ते पञ्चपञ्चाशद्भवति । अत्रापि प्रागवदेक एव भङ्गः । अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति । अत्राप्येक एव भंगः । सर्वसंख्यया पञ्चपञ्चाशति द्वौ भंगौ । ततो भाषापर्याप्त्या पर्याप्तस्य स्वरसहितायां पञ्चपञ्चाशत्युद्योते क्षिप्ते षट्पञ्चाशद्भवति । अत्राप्येक एव भंगः । आहारकशरीरिणः सर्वसंख्यया सप्त भंगाः । तदेवं मनुष्याणां सामान्यवैक्रियशरीराहारकशरीरिकेवलिनां भंगाः सर्वसंख्यया त्रयोदश शतानि चतुस्त्रिंशदधिकानि भवन्ति । परमतेन तु षड्विंशतिशतानि पञ्चाशदधिकानि ।

देवानामुदीरणास्थानानि षट्, तद्यथा—द्विचत्वारिंशत् एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र देवगतिदेवानुपूर्व्यौ पञ्चेन्द्रियजातित्रसनाम बादरनाम पर्याप्तनाम सुभगादेययुगलदुर्भगानादेययुगलयोरेकतरद्युगलं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नव प्रकृतयो ध्रुवोदीरणाभिस्त्रयस्त्रिंशत्संख्याकाभिः सह सम्मिश्रा द्विचत्वारिंशद्भवति । अत्र सुभगादेययुगलदुर्भगानादेययुगलयशःकीर्त्ययशःकीर्तिभिश्चत्वारो भङ्गाः, मतान्तरेण पुनः सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशः कीर्तिभ्यां चाष्टौ भङ्गाः। ततः शरीरस्थस्य वैक्रियसप्तकं समचतुरस्रसंस्थानं उपघातं प्रत्येकमित्येता दश प्रकृतयः प्रक्षिप्यन्ते, देवानुपूर्वी चापनीयते, तत एकपञ्चाशद्भवति । अत्रापि प्रागिव स्वमतेन चत्वारो भङ्गा मतान्तरेणाष्टौ । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघातप्रशस्तविहायोगत्योः प्रक्षिप्तयोस्त्रिपञ्चाशद्भवति । अत्रापि प्रागिव स्वमतेन चत्वारो भङ्गा मतान्तरेणाष्टौ । देवानामप्रशस्तविहायोगतेरुदयाभावात्तदाश्रिता

तत: प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते चतु:पञ्चाशद्भवति । अत्रापि स्वमतेन चत्वारो भङ्गा:, मतान्तरे-
भङ्गा न प्राप्यन्ते । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते चतु:पञ्चाशद्भवति । अत्रापि प्रागिव स्वमतेन भंगाश्चत्वारो
णाष्टौ । अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते चतु:पञ्चाशद्भवति । अत्रापि प्रागिव स्वमतेन भंगाश्चत्वारो
मतान्तरेणाष्टौ । सर्वसंख्यया चतु:पञ्चाशति स्वमतेनाष्टौ भङ्गा मतान्तरेण षोडश । ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां
चतु:पञ्चाशति सुस्वरे क्षिप्ते पञ्चपञ्चाशद्भवति । अत्रापि स्वमतेन प्रागिव चत्वारो भंगा मतान्तरेणाष्टौ । अथवा प्राणापानपर्याप्त्या प-
र्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति । अत्रापि स्वमतेन भंगाश्चत्वारो मतान्तरेणाष्टौ । सर्वसंख्यया पञ्चपञ्चाशति
स्वमतेनाष्टौ भङ्गा मतान्तरेण तु षोडश । ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरसहितायां पञ्चपञ्चाशति उद्योते क्षिप्ते षट्पञ्चाशद्भव-
ति । अत्रापि स्वमतेन त एव चत्वारो भङ्गा मतान्तरेणाष्टौ । सर्वसंख्यया देवानां स्वमतेन द्वात्रिंशद्भङ्गा मतान्तरेण चतु:षष्टि: ।

नैरयिकाणामुदीरणास्थानानि पञ्च, तद्यथा—द्विचत्वारिंशत् एकपञ्चाशत् त्रिपञ्चाशत् चतु:पञ्चाशत् पञ्चपञ्चाशच्चेति । तत्र नरकगति-
नरकानुपूर्व्यौ पञ्चेन्द्रियजातित्रसबादरपर्याप्तदुर्भगानादेयायश:कीर्तय इत्येता नव प्रकृतयो ध्रुवोदीरणाभिस्त्रयस्त्रिंशत्संख्याकाभि: सह स-
म्मिश्रा द्विचत्वारिंशद्भवति । अत्र च सर्वाण्यपि पदानि अप्रशस्तान्येवेति कृत्वा एक एव भङ्ग: । तत: शरीरस्थस्य वैक्रियसप्तकं हुंड-
संस्थानं उपघातं प्रत्येकमिति दश प्रकृतय: प्रक्षिप्यन्ते, नरकानुपूर्वी चापनीयते, तत एकपञ्चाशद्भवति । अत्राप्येक एव भंग: । तत:
शरीरपर्याप्त्या पर्याप्तस्य पराघाताप्रशस्तविहायोगत्यो: प्रक्षिप्तयोस्त्रिपञ्चाशद्भवति । अत्राप्येक एव भंग: । तत: प्राणापानपर्याप्त्या
पर्याप्तस्योच्छ्वासे क्षिप्ते चतु:पञ्चाशद् भवति, अत्राप्येक एव भङ्ग: । ततो भाषापर्याप्त्या पर्याप्तस्य दु:स्वरे क्षिप्ते पञ्चपञ्चा-
शद्भवति । अत्राप्येक एव भंग: । सर्वसंख्यया नैरयिकाणां पञ्च भङ्गा: ।

तदेवमुक्तानि नामकर्मण उदीरणास्थानानि। संप्रत्येतान्येव गुणस्थानकेषु दर्शयति–'गुणिसु'त्ति नाम्नो नामकर्मणो गुणिषु गुणस्थानेषु मिथ्यादृष्टिप्रभृतिषु सयोगिकेवलिपर्यन्तेषु यथासंख्यं नवादिसंख्यान्युदीरणास्थानानि भवन्ति। तत्र मिथ्यादृष्टेर्नवोदीरणास्थानानि, तद्यथा–द्विचत्वारिंशत् पञ्चाशत् एकपञ्चाशत् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। अमूनि च सर्वाण्यपि मिथ्यादृष्टीनेकेन्द्रियादीनधिकृत्य स्वयं परिभावनीयानि। सासादनसम्यग्दृष्टेरुदीरणास्थानानि सप्त, तद्यथा–द्विचत्वारिंशत् पञ्चाशत् एकपञ्चाशत् द्विपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्र द्विचत्वारिंशत् बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानां सासादनसम्यग्दृष्टीनामपान्तरालगतौ वर्तमानानामवसेया। तथा एकेन्द्रियाणां शरीरस्थानां पञ्चाशत्। देवानां शरीरस्थानामेकपञ्चाशत्। विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां शरीरस्थानां द्विपञ्चाशत्। देवनैरयिकाणां पर्याप्तानां सासादनसम्यक्त्वे वर्तमानानां पञ्चपञ्चाशत्। तिर्यक्पञ्चेन्द्रियमनुष्यदेवानां पर्याप्तानां षट्पञ्चाशत्। तिर्यक्पञ्चेन्द्रियाणामुद्योतवेदकानां पर्याप्तानां सप्तपञ्चाशत्। सम्यग्मिथ्यादृष्टेस्त्रीण्युदीरणास्थानानि, तद्यथा–पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्र देवनैरयिकाणां पञ्चपञ्चाशत्। तिर्यग्मनुष्यदेवानां षट्पञ्चाशत्। तिर्यक्पञ्चेन्द्रियाणामुद्योतवेदकानां सप्तपञ्चाशत्। अविरतसम्यग्दृष्टेरष्टावुदीरणास्थानानि, तद्यथा–द्विचत्वारिंशत् एकपञ्चाशत् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्र नैरयिकदेवतिर्यक्पञ्चेन्द्रियमनुष्याणां द्विचत्वारिंशत्। देवनैरयिकाणामेकपञ्चाशत्। तिर्यक्पञ्चेन्द्रियमनुष्याणां द्विपञ्चाशत्। देवनैरयिकतिर्यङ्मनुष्याणां त्रिपञ्चाशत्। देवनैरयिकपञ्चेन्द्रियवैक्रियतिर्यग्मनुष्याणां चतुःपञ्चाशत्। एतेषामेव पञ्चपञ्चाशदपि। देवतिर्यक्पञ्चेन्द्रियमनुष्याणां षट्पञ्चाशत्। तिर्यक्पञ्चेन्द्रियाणामुद्योतवेदकानां सप्तपञ्चाशत्। देश-

त्तिगतस्योदीरणास्थानानि षट्, तद्यथा—एकपञ्चाशत्, त्रिपञ्चाशत्, चतुःपञ्चाशत्, पञ्चपञ्चाशत्, षट्पञ्चाशत्, सप्तपञ्चाशच्चेति। तत्रैकपञ्चाशत्त्रिपञ्चाशच्चतुःपञ्चाशत्पञ्चपञ्चाशच्च तिर्यङ्मनुष्याणां वैक्रियशरीरे वर्तमानानामवसेया। तिर्यङ्मनुष्याणामेव स्वभावस्थानां वैक्रियशरीरिणां च षट्पञ्चाशत्। तेषामेव तिर्यक्पञ्चेन्द्रियाणामुद्योतसहितानां सप्तपञ्चाशत्। प्रमत्तसंयतानामुदीरणास्थानानि पञ्च, तद्यथा—एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति। तत्र पञ्चाप्येतानि वैक्रियशरीरिणामाहारकशरीरिणां वा द्रष्टव्यानि। षट्पञ्चाशत्पुनरौदारिकस्थानामप्यवगन्तव्या। अप्रमत्तसंयतानां द्वे उदीरणास्थाने, तद्यथा—पञ्चपञ्चाशत् षट्पञ्चाशच्चेति। तत्र षट्पञ्चाशदौदारिकशरीरस्थानां। इह केषांचित् वैक्रियशरीरस्थानामाहारकशरीरस्थानां वा संयतानां सर्वपर्याप्त्या पर्याप्तानां कियत्कालमप्रमत्तभावोऽपि लभ्यत इति तेषां द्वे अप्युक्तरूपे उदीरणास्थाने। 'एकं पञ्चसु' त्ति—पञ्चसु गुणस्थानकेषु अपूर्वकरणनिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहरूपेषु एकमुदीरणास्थानं भवति—षट्पञ्चाशत्, सा चौदारिकशरीरस्थानामिति। 'एकस्मिन् अट्ठ' त्ति—एकस्मिन् सयोगिकेवलिगुणस्थानकेऽष्टावुदीरणास्थानानि, तद्यथा—एकचत्वारिंशत् द्विचत्वारिंशत् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। एतानि च प्रागेव सप्रपञ्चं भावितानीति नेह भूयो भाव्यन्ते।

तदेवं चिन्तितानि गुणस्थानकेषूदीरणास्थानानि। सम्प्रति कस्मिन्नुदीरणास्थाने कति भङ्गाः प्राप्यन्त इति चिन्तायां तन्निरूपणार्थमाह—'ठाण' इत्यादि—स्थानक्रमेणैकचत्वारिंशदाद्युदीरणास्थानक्रमेण भङ्गा अपि च वक्ष्यमाणसंख्यया ज्ञातव्याः, तद्यथा—एकचत्वारिंशत्येको भङ्गः, स चार्तीर्थकरकेवलिनः। द्विचत्वारिंशति त्रिंशद्भङ्गाः, तत्र नैरयिकानधिकृत्यैकः, एकेन्द्रियानधिकृत्य पञ्च, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं त्रिकं त्रिकं प्राप्यत इति नव, तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्च, मनुष्यानप्यधिकृत्य पञ्च, तीर्थकरमधि-

कृत्यैकः, देवानधिकृत्य चत्वारः। ये पुनः सुभगादेययोर्दुर्भगानादेययोश्च केवलाकेवलयोरप्युदयमिच्छन्ति, तन्मतेन द्विचत्वारिंशति द्विचत्वारिंशद्भङ्गाः, यतस्तन्मतेन तिर्यक्पञ्चेन्द्रियानधिकृत्य नव, मनुष्यानधिकृत्य नव, देवानधिकृत्याष्टौ भङ्गाः प्राप्यन्ते, शेषं तथैव। पञ्चाशत्येकादश भङ्गाः, ते चैकेन्द्रियानेवाधिकृत्य प्राप्यन्ते, अन्यत्र पञ्चाशतोऽप्राप्यमाणत्वात्। एकपञ्चाशत्येकविंशतिभङ्गाः, तत्र नैरयिकानधिकृत्यैकः, पञ्चेन्द्रियानधिकृत्य सप्त, वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य चत्वारः, वैक्रियमनुष्यानप्यधिकृत्य चत्वारः, आहारकशरीरिणः संयतानधिकृत्यैकः, देवानाश्रित्य चत्वारः, इत्येकविंशतिः। मतान्तरेण पुनर्वैक्रियतिर्यङ्मनुष्यदेवानधिकृत्य प्रत्येकमष्टावष्टौ भङ्गाः प्राप्यन्ते इत्येकपञ्चाशति तदपेक्षया त्रयस्त्रिंशद्भङ्गाः। 'सबार तिसए य'–त्ति–सद्वादशा सद्वादशाधिका त्रिशती भङ्गानां द्विपञ्चाशत्यवगन्तव्याः, तत्रैकेन्द्रियानाश्रित्य त्रयोदश, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं त्रिकं प्राप्यत इति नव, तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्चचत्वारिंशं शतं, मनुष्यानप्यधिकृत्य पञ्चचत्वारिंशं शतमिति। अत्रापि मतान्तरेण तिर्यक्पञ्चेन्द्रियान्मनुष्यांश्चाधिकृत्य प्रत्येकं द्वे द्वे शते भङ्गानामेकोननवत्यधिके प्राप्येते इति तदपेक्षया द्विपञ्चाशति भङ्गानां षट् शतानि प्राप्यन्ते। त्रिपञ्चाशति भङ्गानामेकविंशतिः, तद्यथा–नैरयिकानधिकृत्यैकः, एकेन्द्रियानधिकृत्य षट्, वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य चवारः, वैक्रियमनुष्यानप्यधिकृत्य चत्वारः, आहारकशरीरिणोऽधिकृत्य पुनरेकः, तीर्थकरमप्याश्रित्यैकः, देवानप्यधिकृत्य चत्वारः। अत्रापि मतान्तरेण वैक्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य प्रत्येकमष्टावष्टौ भङ्गाः प्राप्यन्ते इति तदपेक्षया त्रिपञ्चाशति त्रयस्त्रिंशद्भङ्गाः। चतुःपञ्चाशति भङ्गानां षट् शतानि षडुत्तराणि, तद्यथा–नैरयिकानधिकृत्यैकः द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं द्वौ द्वौ प्राप्येते इति षट्, तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्य द्वे शते अष्टाशीत्यधिके, वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्याष्टौ,

स्वभावस्थान्मनुष्यानधिकृत्य द्वे शते अष्टाशीत्यधिके, वैक्रियमनुष्यानधिकृत्य चत्वारः, संयतान् वैक्रियशरीरिणोऽधिकृत्योद्योतेन सहैकः, आहारकशरीरिणः संयतानधिकृत्य द्वौ, देवानधिकृत्याष्टाविति। अत्रापि मतान्तरेण प्राकृततिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्चशतानि पट्सप्तत्यधिकानि, वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य षोडश, मनुष्यानधिकृत्य पञ्च शतानि पट्सप्तत्यधिकानि, वैक्रियमनुष्यानधिकृत्य नव, देवानधिकृत्य षोडश भङ्गाः प्राप्यन्ते, शेषं तथैवेति तदपेक्षया चतुःपञ्चाशति द्व्यधिकानि द्वादश शतानि । पञ्चपञ्चाशति भङ्गानां नव शतानि एकाधिकानि, तद्यथा–नैरयिकानधिकृत्यैकः, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं चत्वारः प्राप्यन्ते इति द्वादश, तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्य पञ्च शतानि पट्सप्तत्यधिकानि, वैक्रियशरीरिणोऽधिकृत्याष्टौ, मनुष्यान् स्वभावस्थानधिकृत्य द्वे शते अष्टाशीत्यधिके, वैक्रियशरीरिणोऽधिकृत्य चत्वारः, वैक्रियसंयतानधिकृत्योद्योतेन सहैकः, आहारकशरीरिणोऽधिकृत्य द्वौ, तीर्थकरमधिकृत्यैकः, देवानधिकृत्याष्टाविति । मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य द्विपञ्चाशदधिकान्येकादशशतानि, वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य षोडश, मनुष्यान् स्वभावस्थानधिकृत्य पञ्च शतानि पट्सप्तत्यधिकानि, वैक्रियमनुष्यानधिकृत्य नव, देवानधिकृत्य षोडश भङ्गाः प्राप्यन्ते, शेषं तथैवेति तदपेक्षया पञ्चपञ्चाशति पञ्चाशीत्यधिकानि सप्तदश शतानि । पट्पञ्चाशति भङ्गानामेकोनसप्तत्यधिकानि चतुर्दश शतानि, तद्यथा–द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं पट् पट् प्राप्यन्ते इत्यष्टादश, तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्याष्टौ शतानि चतुःषष्ट्यधिकानि, वैक्रियशरीरिणोऽधिकृत्य चत्वारः, मनुष्यानधिकृत्य पञ्च शतानि पट्सप्तत्यधिकानि, वैक्रियशरीरिणः संयतानधिकृत्योद्योतेन सहैकः, आहारकशरीरिणः संयतानधिकृत्यैकः, तीर्थकरमाश्रित्यैकः, देवानाश्रित्य चत्वारः । अत्र मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य सप्तदशशतान्यष्टाविंशत्यधिकानि, वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृ-

त्याष्टौ, मनुष्यानधिकृत्य द्विपञ्चाशदधिकानि एकादश शतानि, देवानधिकृत्याष्टौ भङ्गाः प्राप्यन्ते, शेषं तथैवेति तदपेक्षया षट्पञ्चाशति एकोनत्रिंशच्छतानि सप्तदशाधिकानि भङ्गानां भवन्ति। सप्तपञ्चाशति भङ्गानां पञ्चशती एकोननवत्यधिका, तद्यथा—द्वीन्द्रिय त्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं चत्वारश्चत्वारः प्राप्यन्त इति द्वादश, तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्च शतानि षट्सप्तत्यधिकानि, तीर्थकरमाश्रित्यैक इति। अत्रापि मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य द्विपञ्चाशदधिकानि एकादश शतानि भङ्गानां प्राप्यन्ते, शेषं तथैवेति तदपेक्षया सप्तपञ्चाशति पञ्चषष्ट्यधिकानि एकादश शतानि भङ्गानां भवन्ति ॥ २५–२६–२७॥

(उ०)—तदेवमुक्तानि मोहनीयस्योदीरणास्थानानि, अथ नामकर्मणस्तान्याह—एकचत्वारिंशत्, द्विचत्वारिंशत्, ततः पञ्चाशदादयः सप्तपञ्चाशत्–पञ्चाशदेकपञ्चाशत् द्विपञ्चाशत्त्रिपञ्चाशच्चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत्सप्तपञ्चाशच्चेति नामकर्मण उदीरणास्थानानि दश भवन्ति। तत्र तैजससप्तकं वर्णादिविंशतिरगुरुलघु स्थिरास्थिरे शुभाशुभे निर्माणमित्येतास्त्रयस्त्रिंशत्प्रकृतयो ध्रुवोदीरणाः। तत्र नरगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तिरूपेऽष्टके क्षिप्ते एकचत्वारिंशद्भवति । एतस्य चैकचत्वारिंशद्वर्गस्य सयोगिकेवली केवलिसमुद्घाते कार्मणकाययोगे वर्तमान उदीरको भवति। एषैव चैकचत्वारिंशज्जिननामसहिता द्विचत्वारिंशद्भवति। तस्याश्च तीर्थकरकेवली केवलिसमुद्घाते कार्मणकाययोगस्थ उदीरकः। एकचत्वारिंशद्वर्गे औदारिकसप्तकषडन्यतमसंस्थानवज्रर्षभनाराचसंहननोपघातप्रत्येकलक्षणैकादशकक्षेपे द्विपञ्चाषद्भवति। अत्र षड्भिः संस्थानैः षड्भङ्गाः। ते च वक्ष्यमाणसामान्यमनुष्यभङ्गान्तर्गता द्रष्टव्याः। एवमग्रेऽपि। एनां द्विपञ्चाशतं समुद्घाते औदारिकमिश्रकाययोगस्थः सयोगी केवल्युदीरयति। अत्रैव तीर्थकरनाम क्षेपे त्रिपञ्चाशत्। केवलमिह संस्थानमाद्यमेवाभिधातव्यम्। अस्या उदीरकस्तीर्थकरकेवली समुद्घाते औदारिकमिश्रकाययोगे वर्तमानो

च सयोगिकेवल्यौदारिककाययोगे वर्तमान उदीरयति । [illegible]
शङ्कवति । तां च सयोगिकेवली तीर्थंकर औदारिककाययोगे वर्तमान उदीरयति । सप्तपञ्चाशदेव वाग्योगनिरोधे षट्पञ्चाशद्भवति । उच्छ्वासेऽपि निरुद्धे पञ्चपञ्चाशत् । अतीर्थंकरकेवलिनः प्रागुक्ता षट्पञ्चाशद्वाग्योगनिरोधे कृते पञ्चपञ्चाशद्भवति । उच्छ्वासेऽपि च रुद्धे चतुःपञ्चाशत् । अत्र द्विपञ्चाशच्चतुःपञ्चाशद्वर्जेषु शेषेषु षट्सु प्रत्येकमेकैकः सामान्यमनुष्यवैलक्षण्येन विशेषभङ्गो लभ्यत इति सर्वसङ्ख्यया केवलिनां षड्भङ्गाः । तत्रैकचत्वारिंशद्वर्गेऽतीर्थंकृत एको भङ्गः, शेषेषु तु पञ्चसु तीर्थकृतः । तदेवमुक्तानि केवलिनामुदीरणास्थानानि ।

सम्प्रत्येकेन्द्रियाणामुच्यन्ते—एकेन्द्रियाणामुदीरणास्थानानि पञ्च—द्विचत्वारिंशत् पञ्चाशदेकपञ्चाशत् द्विपञ्चाशत्त्रिपञ्चाशच्चेति । तत्र तिर्यग्गतितिर्यगानुपूर्व्यौ स्थावरनामैकेन्द्रियजातिबादरसूक्ष्मयोरेकतरं पर्याप्तापर्याप्तयोरेकतरं दुर्भगमनादेयं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नव प्रकृतयः प्रागुक्ताभिर्ध्रुवोदीरणाभिस्त्रयस्त्रिंशत्सङ्ख्याभिः सह मिश्रिता द्विचत्वारिंशद्भवति । अत्र भङ्गपञ्चकं, तथाहि—बादरसूक्ष्माभ्यां प्रत्येकं पर्याप्तापर्याप्ताभ्यामयशःकीर्त्या सह चत्वारो भङ्गाः, बादरपर्याप्तयशःकीर्तिभिश्चैक इति । सूक्ष्मेणापर्याप्तेन च सह यशःकीर्त्युदयो न भवति, तदभावाच्च नोदीरणेति तदाश्रितविकल्पाभावः । एषा द्विचत्वारिंशदपान्तरालगतावयसेया । ततः शरीरस्थस्यौदारिकशरीरौदारिकसङ्घातनौदारिकबन्धनचतुष्टयहुण्डसंस्थानोपघातप्रत्येकसाधारणान्यतररूपनवकक्षेपे तिर्यगानुपूर्व्याश्चापनयने पञ्चाशद्भवति । अत्र भङ्गा दश, तथाहि—बादरपर्याप्तस्य प्रत्येकसाधारणाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च चत्वारो भङ्गाः, बादरापर्याप्तस्य प्रत्येक-

साधारणाभ्यामयशःकीर्तिनियताभ्यां द्वौ, सूक्ष्मस्य च पर्याप्तापर्याप्तप्रत्येकसाधारणैरयशःकीर्तिनियतैश्चत्वार इति। बादरवायुकायिकस्य वैक्रियं कुर्वन् औदारिकषट्कस्थाने वैक्रियषट्कमवगन्तव्यं, ततश्च तस्यापि पञ्चाशत एवोदीरणा भवति, केवलमिह बादरपर्याप्तप्रत्येकायशःकीर्तिपदैरेक एव भङ्गः। तैजसकायिकवायुकायिकयोर्हि साधारणयशःकीर्त्युदयाभावात्तदुदीरणाभाव इति तदाश्रितभङ्गाप्राप्तिः। तदेवं पञ्चाशद्वर्गे सर्वसङ्ख्ययैकादश भङ्गाः। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते एकपञ्चाशद्भवति, अत्र च भङ्गाः षट्—बादरस्य प्रत्येकसाधारणयशःकीर्त्ययशःकीर्तिपदैश्चत्वारः, सूक्ष्मस्य च प्रत्येकसाधारणाभ्यामयशःकीर्तिनियताभ्यां द्वाविति। बादरवायुकायिकस्य च वैक्रियं कुर्वतः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते प्रागुक्ता पञ्चाशदेकपञ्चाशद्भवतीति। भङ्गश्चात्र प्राग्वदेक एवेति। सर्वसङ्ख्ययैकपञ्चाशति सप्त भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते द्विपञ्चाशद्भवति। अत्रापि प्राग्वत् षड्भङ्गाः। यद्वा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते आतपोद्योतयोरन्यतरस्मिन्नुदितेऽपि द्विपञ्चाशद्भवति, तत्रापि भङ्गाः षट्—बादरस्योद्योतेन सहितस्य प्रत्येकसाधारणयशःकीर्त्ययशःकीर्तिपदैश्चत्वारः, आतपसहितस्य च प्रत्येकं यशःकीर्त्ययशःकीर्तिपदैर्द्वौ भङ्गाविति। बादरवायुकायिकस्य वैक्रियं कुर्वतः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते प्रागुक्ता एकपञ्चाशत् द्विपञ्चाशद्भवति, तत्र प्राग्वदेक एव भङ्गः। तैजसकायिकवायुकायिकयोर्ह्यातपोद्योतयशःकीर्तीनामुदयाभावादुदीरणाभाव इति तदाश्रितभङ्गाप्राप्तिः। सर्वाग्रेण द्विपञ्चाशति त्रयोदश भङ्गाः। तथा प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासान्वितायां द्विपञ्चाशति आतपोद्योतान्यतरक्षेपे त्रिपञ्चाशद्भवति। अत्र ये प्रागातपोद्योतान्यतरयुक्तायां द्विपञ्चाशत्युक्तास्त एव षड्भङ्गाः। सर्वसङ्ख्यया चैकेन्द्रियाणां भङ्गा द्विचत्वारिंशत्।

द्वीन्द्रियाणामुदीरणास्थानानि षट्—द्विचत्वारिंशत् द्विपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्र तिर्य-

ग्गतितिर्यगानुपूर्व्यौ द्वीन्द्रियजातिस्त्रसनाम बादरनाम पर्याप्तापर्याप्तयोरेकतरं दुर्भगमनादेयं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नव प्रकृतयः प्रागुक्ताभिस्त्रयस्त्रिंशत्सङ्ख्याभिर्ध्रुवोदीरणाभिः सह द्विचत्वारिंशद्भवति। एषा च द्विचत्वारिंशदपान्तरालगतावपसेया। अत्र च भङ्गत्रयी—अपर्याप्तकनामोदयेऽयशःकीर्त्या सहैको भङ्गः, पर्याप्तकनामोदये च यशःकीर्त्ययशःकीर्तिभ्यां द्वाविति। ततः शरीरस्थस्यौदारिकसप्तकहुण्डसंस्थानान्त्यसंहननोपघातप्रत्येकरूपैकादशप्रकृतिक्षेपे तिर्यगानुपूर्व्याश्चोत्सारणे द्विपञ्चाशज्जायते। अत्र च प्राग्वदेव भङ्गत्रयी। ततः शरीरपर्याप्त्या पर्याप्तस्य अप्रशस्तविहायोगतिपराघातप्रक्षेपे चतुःपञ्चाशत्, अत्र यशःकीर्त्ययशःकीर्तिभ्यां द्वौ भङ्गौ। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते पञ्चपञ्चाशत्। अत्रापि प्राग्वद् द्वौ भङ्गौ। अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशत्। अत्रापि प्राग्वद् द्वौ भङ्गौ। सर्वाग्रेण पञ्चपञ्चाशति चतुर्भङ्गी। ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां पञ्चपञ्चाशति सुस्वरदुःस्वरयोरेकतरप्रक्षेपे षट्पञ्चाशत्। अत्र सुस्वरदुःस्वरयशःकीर्त्ययशःकीर्तिपदैश्चत्वारो भङ्गाः। यद्वा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते षट्पञ्चाशद्भवति। अत्र यशःकीर्त्ययशःकीर्तिभ्यां द्वौ भङ्गौ। सर्वाग्रेण षट्पञ्चाशति षड्भङ्गी। ततो भाषापर्याप्त्या पर्याप्तस्य स्वरसहितायां षट्पञ्चाशत्युद्योतनामक्षेपे सप्तपञ्चाशद्भवति। अत्र सुस्वरदुःस्वरयशःकीर्त्ययशःकीर्तिपदैश्चत्वारो भङ्गाः। सर्वे भङ्गा द्वीन्द्रियाणां द्वाविंशतिः। एवं त्रीन्द्रियचतुरिन्द्रिययोरपीयन्त्येवोदीरणास्थानानीयन्त एव च भङ्गा भावनीयाः। सर्वाग्रेण विकलेन्द्रियाणां भङ्गाः षट्षष्टिः।

तिर्यक्पञ्चेन्द्रियाणां वैक्रियलब्धिविकलानां षडुदीरणास्थानानि—द्विचत्वारिंशत् द्विपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्र तिर्यग्गतितिर्यगानुपूर्व्यौ पञ्चेन्द्रियजातिस्त्रसबादरे पर्याप्तापर्याप्तयोरेकतरं सुभगादेययुगलदुर्भगानादेययुगलयो-

रेकतरयुगलं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नव प्रकृतयस्त्रयस्त्रिंशद्ध्रुवोदीरणाभिः सह द्विचत्वारिंशद्भवति । एषा चान्तरालगतौ द्रष्टव्या । अत्र भङ्गाः पञ्च, तत्र पर्याप्तकनामोदये सुभगादेययुगलदुर्भगानादेययुगलयशःकीर्त्ययशःकीर्तिपरावर्तनैश्चत्वारो भङ्गाः, अपर्याप्तकनामोदयस्थस्य तु दुर्भगानादेयायशःकीर्तिभिरेक एवेति । इह सुभगादेययोर्दुर्भगानादेययोर्वा मिलितयोर्युगपदेवोदय इति पञ्चभङ्ग्यभिधानं । अपरे त्वाहुः—नानयोर्युगपदुदयभावनियमोऽन्यथाऽपि दर्शनात् । ततः पर्याप्तकनामोदये वर्तमानस्य सुभगादेय दुर्भगानादेययशःकीर्त्ययशःकीर्तिभिरष्टभङ्गी, अपर्याप्तकनामोदये तु दुर्भगानादेयायशःकीर्तिभिरेक एव भङ्गः । सर्वाग्रेण द्विचत्वारिंशति नव भङ्गाः । ततः शरीरस्थस्यौदारिकसप्तकषडन्यतमसंस्थानषडन्यतमसंहननोपघातप्रत्येकलक्षणैकादशकक्षेपे तिर्यगानुपूर्व्याश्चोत्सारणे द्विपञ्चाशत् । तत्र भङ्गानां पञ्चचत्वारिंशं शतं । तथाहि—पर्याप्तस्य षड्भिः संस्थानैः षड्भिः संहननैः सुभगादेयदुर्भगानादेययुगलद्वयेन यशःकीर्त्ययशःकीर्तिभ्यां च परस्परं गुणने भङ्गानां चतुश्चत्वारिंशं शतं, अपर्याप्तस्य चान्त्यसंस्थानसंहननदुर्भगानादेयायशःकीर्तिभिरेक इति । ये तु सुभगादेययोदुर्भगानादेययोर्वा केवलयोरप्युदयमिच्छन्ति तन्मतेन भङ्गानां द्विपञ्चाशति द्विशत्येकोननवत्यधिका ज्ञातव्या । तत्र पर्याप्तस्य षड्भिः संस्थानैः षड्भिः संहननैः सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशकीर्तिभ्यां द्वे शते अष्टाशीत्यधिके, अपर्याप्तस्य तु प्रागुक्तस्वरूप एक इति । ततः शरीरपर्याप्त्या पर्याप्तस्य द्विपञ्चाशति पराघातप्रशस्ताप्रशस्तविहायोगत्यन्यतरप्रक्षेपे चतुःपञ्चाशत् । अत्र च यत्पर्याप्तानां प्राक् चतुश्चत्वारिंशं भङ्गशतमुक्तं, तदेव विहायोगतिद्विकेन द्विगुणितं कर्तव्यं । तथा च सत्यत्र भङ्गानां द्विशत्यष्टाशीत्यधिका, मतान्तरेण तु पञ्चशती षट्सप्तत्यधिका । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासक्षेपे पञ्चपञ्चाशत् । अत्र प्रागिव भङ्गानां द्विशत्यष्टाशीत्यधिका, मतान्तरेण तु पञ्चशती षट्सप्तत्यधिका । अथवा शरीरपर्याप्त्या पर्याप्तस्यो-

च्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति । अत्रापि भङ्गानां द्विशत्यष्टाशीत्यधिका, मतान्तरेण तु पञ्चशती षट्सप्तत्यधिका । सर्वसङ्ख्यया पञ्चपञ्चाशति स्वमते भङ्गानां पञ्चशती षट्सप्तत्यधिका, मतान्तरेण तु द्विपञ्चाशदधिकान्येकादश शतानि । ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरदुःस्वरान्यतरप्रक्षेपे षट्पञ्चाशत् । तत्र स्वमतेनोच्छ्वासेन लब्धे द्वे शते अष्टाशीत्यधिके, स्वरद्विकेन गुणिते सती पञ्च शतानि षट्सप्तत्यधिकानि भवन्ति । मतान्तरेण तु भङ्गानां द्विपञ्चाशदधिकान्येकादश शतानि । अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते षट्पञ्चाशत्, तत्र च स्वमते भङ्गानां द्विशत्यष्टाशीत्यधिका प्राग्वत्, मतान्तरेण च पञ्चशती षट्सप्तत्यधिका । सर्वसङ्ख्यया षट्पञ्चाशति स्वमतेन भङ्गानामष्टशती चतुःषष्ट्यधिका, मतान्तरेण तु सप्तदशशत्यष्टाविंशत्यधिका । ततः स्वरसहितायां षट्पञ्चाशति उद्योतनाम्नि क्षिप्ते सप्तपञ्चाशत् । तत्र भङ्गाः स्वरसहितायां षट्पञ्चाशति मतद्वयेन यावन्त उक्तास्तावन्त एव ५७६।११५२। तथा तेषामेव तिर्यक्पञ्चेन्द्रियाणां वैक्रियं कुर्वतामुदीरणास्थानानि पञ्च भवन्ति—एकपञ्चाशत् त्रिपञ्चाशच्चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र वैक्रियसप्तकमाद्यसंस्थानमुपघातं प्रत्येकमिति प्रकृतिदशकमपनीततिर्यगानुपूर्वीकं तिर्यक्पञ्चेन्द्रिययोग्यद्विचत्वारिंशति क्षिप्तमेकपञ्चाशत्प्रकृतिवर्गं निष्पादयति । अत्र सुभगादेययुगलदुर्भगानादेययुगलयशःकीर्त्ययशःकीर्तिपदैश्चत्वारो भङ्गाः । मतान्तरेण तु सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च प्रत्येकेन सदाष्टौ भङ्गाः । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघातप्रशस्तविहायोगतिक्षेपे त्रिपञ्चाशत् । अत्र प्राग्वत् स्वमते चत्वारो भङ्गाः, मतान्तरे त्वष्टौ । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासनाम्नि प्रक्षिप्ते चतुःपञ्चाशत् । अत्रापि स्वमते प्राग्वच्चतुर्भङ्गी, मतान्तरे त्वष्टभङ्गी । अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते चतुःपञ्चाशत् । अत्र स्वमते चतुर्भङ्गी, मतान्तरेण त्वष्ट-

भङ्गी । सर्वाग्रेण चतुःपञ्चाशति स्वमतेनाष्टौ, मतान्तरेण तु षोडश भङ्गाः । ततो भाषापर्याप्तया पर्याप्तस्योच्छ्वाससहितायां चतुःपञ्चाशति सुस्वरप्रक्षेपे पञ्चपञ्चाशत् । अत्रापि स्वमते भङ्गाश्चत्वारः, मतान्तरेणाष्टौ । अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशत् भवति, अत्रापि स्वमतेन भङ्गाश्चत्वारो मतान्तरेणाष्टौ, सर्वाग्रेण पञ्चपञ्चाशत्यष्टौ भङ्गाः स्वमते, मतान्तरे तु षोडश । ततः स्वरसहितायां पञ्चपञ्चाशत्युद्योते क्षिप्ते षट्पञ्चाशत् । अत्रापि भङ्गाः स्वमते चत्वारः, मतान्तरेऽष्टौ । सर्वसंख्यया वैक्रियं कुर्वतां तिर्यक्पञ्चेन्द्रियाणां भङ्गा अष्टाविंशतिः, मतान्तरेण षट्पञ्चाशत् । सर्वतिर्यक्पञ्चेन्द्रियाणां स्वमतेन भङ्गाश्चतुर्विंशतिशतानि द्व्यशीत्यधिकानि, मतान्तरेणैकोनपञ्चाशच्छतानि द्विषष्ट्यधिकानि ।

अथ मनुष्याणामुदीरणास्थानान्युच्यन्ते—तत्र केवलिनां प्रागेवोक्तानि, अन्येषां तु पञ्च, तथाहि—द्विचत्वारिंशत् द्विपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । एतानि सर्वाण्यपि यथा तिर्यक्पञ्चेन्द्रियाणां प्रागुक्तानि तथैव भाव्यानि । नवरं तिर्यग्गतितिर्यगानुपूर्व्योः स्थाने मनुष्यगतिमनुष्यानुपूर्व्यौ वाच्ये । पञ्चपञ्चाशत् षट्पञ्चाशच्चोद्योतरहिता वाच्या, वैक्रियाहारकलब्धिशालिसंयतान् विहायान्येषां मनुष्याणामुद्योतोदयाभावात् । भङ्गा अपि सर्वत्रोद्योतविनाकृतास्तथैव मतद्वयेऽपि वाच्याः । तथाहि—स्वमतेन द्विचत्वारिंशति पञ्चकं, द्विपञ्चाशति पञ्चचत्वारिंशं शतं, चतुपञ्चाशति द्विशत्यष्टाशीत्यधिका, पञ्चपञ्चाशत्यपि द्विशत्यष्टाशीत्यधिका, षट्पञ्चाशति पञ्चशती षट्सप्तत्यधिका । परमते तु यथाक्रमं नव, द्वे शते एकोननवत्यधिके, पञ्चशतानि षट्सप्तत्यधिकानि, पुनरपि पञ्च शतानि षट्सप्तत्यधिकानि, एकादश शतानि च द्विपपञ्चाशदधिकानि । वैक्रियं कुर्वतामपि मनुष्याणामुदीरणास्थानानि पञ्च भवन्ति, तथाहि—एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्रैकपञ्चाशत्रि-

पञ्चाशत् यथा प्राग्वैक्रियकारितिर्यक्पञ्चेन्द्रियाणामुक्ता तथाऽत्रापि ज्ञेया। चतुःपञ्चाशत्युच्छ्वाससहितायां प्राग्वत् स्वमते चतुर्भङ्गी, मतान्तरे त्वष्टभङ्गी। उत्तरवैक्रियं कुर्वतां च चारित्रिणामुद्योतनामोदयमेति, नान्येषाम्। ततस्तत्सहितायां चतुःपञ्चाशति शुभ एवैको भङ्गः, चारित्रिणां दुर्भगानादेयायशःकीर्त्युदयाभावात्। सर्वाग्रेण चतुःपञ्चाशति स्वमते पञ्चभंगी, मतान्तरेण तु नवभङ्गी। ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां चतुःपञ्चाशति सुस्वरप्रक्षेपे पञ्चपञ्चाशत्। अत्रापि प्राग्वत् स्वमतेन चतुर्भङ्गी, मतान्तरेण त्वष्टभङ्गी। अथवा संयतानां स्वरेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशत्। अत्रैकः शुभ एव भङ्गः। सर्वाग्रेण पञ्चपञ्चाशति स्वमते पञ्चभङ्गी, मतान्तरे तु नवभङ्गी। सुस्वरसहितायां पञ्चपञ्चाशत्युद्योतक्षेपे षट्पञ्चाशत्, अस्यां चैक एव प्रशस्तो भङ्गः। सर्वाग्रेण वैक्रियमनुष्याणां स्वमतेनैकोनविंशतिर्भङ्गाः, मतान्तरेण पञ्चत्रिंशत्। अथाहारकं कुर्वतामुदीरणास्थानान्युच्यन्ते—आहारकसंयतानामुदीरणास्थानानि पञ्च, तथाहि—एकपञ्चाशत्त्रिपञ्चाशच्चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति। तत्राहारकशरीरसमचतुरस्रसंस्थानमुपघातं प्रत्येकमिति प्रकृतिदशकमपनीतमनुष्यानुपूर्वीकं मनुष्यगतिप्रायोग्यद्विचत्वारिंशति क्षिप्तमेकपञ्चाशत्प्रकृतिवर्गनिष्पादकम्। अत्र च सर्वाण्यपि पदानि प्रशस्तानीत्येक एव भङ्गः। ततः शरीरपर्याप्त्या पर्याप्तस्य प्रशस्तविहायोगतिपराघातप्रक्षेपे त्रिपञ्चाशत्, भङ्गोऽत्राप्येक एव। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते चतुःपञ्चाशत्। अत्राप्येक एव भङ्गः। अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते चतुःपञ्चाशत्। अत्राप्येक एव भङ्गः। सर्वसंख्यया चतुःपञ्चाशति द्वौ भङ्गौ। ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां चतुःपञ्चाशति सुस्वरप्रक्षेपे पञ्चपञ्चाशद्भवति। भङ्गोऽत्राप्येक एव। अथवा प्राणापानपर्याप्त्या पर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते पञ्चपञ्चाशत्। अत्राप्येक एव भङ्गः। सर्वाग्रेण पञ्चपञ्चाशति द्वौ

भङ्गौ । ततो भाषापर्याप्त्या पर्याप्तस्य स्वरसहितायां पञ्चपञ्चाशत्युद्योते क्षिप्ते षट्पञ्चाशद्भवति । भङ्गोऽत्राप्येक एव । सर्वसङ्ख्यया ऽऽहारकशरीरिणां सप्त भङ्गाः । तदेवं मनुष्यानपेक्ष्य सामान्यमनुष्यवैक्रियशरीर्याहारकशरीरिकेवलिनां भङ्गाः सर्वसंख्यया त्रयोदश शतानि चतुस्त्रिंशदधिकानि । परमतेन तु षड्विंशतिशतानि पञ्चाशदधिकानि ।

देवानामुदीरणास्थानानि षट्–द्विचत्वारिंशत् एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र देवगतिदेवानुपूर्व्यौ पञ्चेन्द्रियजातिः त्रसबादरपर्याप्तानि सुभगादेययोर्दुर्भगानादेययोश्चैकतरयुगलं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नव प्रकृतयो ध्रुवोदीरणाभिस्त्रयस्त्रिंशत्संख्याभिर्मिश्रिता द्विचत्वारिंशद्वर्गनिष्पादिका भवन्ति । अत्र सुभगादेययुगलदुर्भगानादेययुगलयशःकीर्त्ययशःकीर्तिभिश्चत्वारो भङ्गाः, मतान्तरेण तु सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां चाष्टौ भङ्गाः । ततः शरीरस्थस्य वैक्रियसप्तकाद्यसंस्थानोपघातप्रत्येकलक्षणप्रकृतिदशकस्य क्षेपे देवानुपूर्व्याश्चापनयने एकपञ्चाशद्भवति । अत्रापि प्राग्वत्स्वमतेन चतुर्भङ्गी, मतान्तरेणाष्टभङ्गी । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघातप्रशस्तविहायोगतिक्षेपे त्रिपञ्चाशत् । अत्रापि प्राग्वत्स्वमतेन चतुर्भङ्गी, मतान्तरेणाष्टभङ्गी, देवनामप्रशस्तविहायोगत्युदयाभावात् तदाश्रितभङ्गाप्राप्तिः । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते चतुःपञ्चाशत् । अत्रापि स्वमते चतुर्भङ्गी, मतान्तरेणाष्टभङ्गी । यद्वा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते चतुःपञ्चाशत् । अत्रापि स्वमते चत्वारो, मतान्तरे त्वष्टौ भङ्गाः । सर्वसंख्यया चतुःपञ्चाशति स्वमतेनाष्टौ, मतान्तरेण च षोडश भङ्गाः । ततो भाषापर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां चतुःपञ्चाशति सुस्वरे क्षिप्ते पञ्चपञ्चाशत् । अत्रापि स्वमते चत्वारो, मतान्तरे त्वष्टौ भङ्गाः । यद्वा प्राणापानपर्याप्तस्य स्वरस्यानुदये उद्योतनाम्नस्तूदये पञ्चपञ्चाशत् । अत्रापि स्वमते चत्वारो, मतान्तरे

मतान्तरेण षोडश। ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरसहितायां पञ्चपञ्चाश-
न्तरेऽष्टौ भङ्गाः। सर्वाग्रेण पञ्चपञ्चाशति स्वमतेनाष्टौ, मतान्तरेण षोडश। सर्वसंख्यया देवानां स्वमतेन द्वात्रिंशद्भङ्गाः, मतान्तरे चतुःषष्टिः।
त्युद्योतक्षेपे षट्पञ्चाशत्। अत्रापि स्वमते चत्वारो, मतान्तरेऽष्टौ भङ्गाः। सर्वसंख्यया देवानां स्वमतेन द्वात्रिंशद्भङ्गाः, मतान्तरे चतुःषष्टिः।

नैरयिकाणामुदीरणास्थानानि पञ्च, तथाहि—द्विचत्वारिंशदेकपञ्चाशत्त्रिपञ्चाशच्चतुःपञ्चाशत् पञ्चपञ्चाशच्चेति। तत्र नरकगतिनरका-
नुपूर्व्यौ पञ्चेन्द्रियजातिस्त्रसबादरपर्याप्तदुर्भगानादेयायशःकीर्तय इत्येता नव प्रकृतयस्त्रयस्त्रिंशद्ध्रुवोदीरणाभिर्मिश्रिता द्विचत्वारिंशद्भ-
वति। अत्र सर्वाणि पदान्यप्रशस्तानीत्येक एव भङ्गः। ततः शरीरस्थस्य वैक्रियसप्तकहुण्डसंस्थानोपघातप्रत्येकलक्षणदशप्रकृतिक्षेपे नर-
कानुपूर्व्यपनयने एकपञ्चाशत्। अत्राप्येक एव भङ्गः। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाताप्रशस्तविहायोगतिप्रक्षेपे त्रिपञ्चाशत्।
अत्राप्येक एव भङ्गः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते चतुःपञ्चाशत्। अत्राप्येक एव भङ्गः। ततो भाषापर्याप्त्या
पर्याप्तस्य दुःस्वरे क्षिप्ते पञ्चपञ्चाशत्। अत्राप्येक एव भङ्गः। सर्वसंख्यया नैरयिकाणां पञ्च भङ्गाः। तदेवमुक्तानि नामकर्मण उदी-
रणास्थानानि।

अथैतान्येव गुणस्थानकेषु योजयन्नाह—'गुणिसु णामस्स' इत्यादि। मिथ्यादृष्टिप्रभृतिषु सयोगिकेवलिपर्यन्तेषु गुणिषु—गुणस्थान-
केषु यथासङ्ख्यं नवादिसङ्ख्यान्युदीरणास्थानानि भवन्ति। तत्र मिथ्यादृष्टेर्नवोदीरणास्थानानि। तथाहि—द्विचत्वारिंशत् पञ्चाशत्
एकपञ्चाशत् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशत् चेति। अमूनि सर्वाण्यपि मिथ्या-
दृष्टीनेकेन्द्रियादीनधिकृत्य स्वयं भाव्यानि। सासादनसम्यग्दृष्टेः सप्तोदीरणास्थानानि। तथाहि—द्विचत्वारिंशत् पञ्चाशत् एकपञ्चाशत्
द्विपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्र बादरैकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानां सासादनसम्यग्दृशा-

मन्तरालगतौ द्विचत्वारिंशदवसेया। तथा पञ्चाशदेकेन्द्रियाणां शरीरस्थानां। देवानां शरीरस्थानामेकपञ्चाशत्। विकलेन्द्रियतिर्यक्पञ्चेन्द्रियनराणां शरीरस्थानां द्विपञ्चाशत्। पर्याप्तानां सुरनैरयिकाणां सासादनसम्यक्त्वस्थानां पञ्चपञ्चाशत्। तिर्यक्पञ्चेन्द्रियमनुष्यदेवानां पर्याप्तानां षट्पञ्चाशत्। पर्याप्ततिर्यकपञ्चेन्द्रियाणां उद्योतोदयिनां सप्तपञ्चाशत्। सम्यग्मिथ्यादृष्टेस्त्रीण्युदीरणास्थानानि—पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशत् चेति। तत्र देवनैरयिकाणां पञ्चपञ्चाशत्। तिर्यग्नृदेवानां षट्पञ्चाशत्। तिर्यक्पञ्चेन्द्रियाणामुद्योतोदयिनां सप्तपञ्चाशत्। अविरतसम्यग्दृष्टेरष्टावुदीरणास्थानानि द्विचत्वारिंशदेकपञ्चाशदादीनि सप्त च। तत्र नैरयिकसुरतिर्यक्पञ्चेन्द्रियनराणां द्विचत्वारिंशत्। देवनैरयिकाणामेकपञ्चाशत्। तिर्यक्पञ्चेन्द्रियमनुष्याणां द्विपञ्चाशत्। नैरयिकसुरवैक्रियतिर्यग्नराणां त्रिपञ्चाशत्। देवनैरयिकतिर्यक्पञ्चेन्द्रियवैक्रियतिर्यग्नराणां चतुःपञ्चाशत्। एषामेव पञ्चपञ्चाशदपि। देवतिर्यक्पञ्चेन्द्रियमनुष्याणां षट्पञ्चाशत्। तिर्यक्पञ्चेन्द्रियाणामुद्योतोदयिनां सप्तपञ्चाशत्। देशविरतस्योदीरणास्थानानि षट्—एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति। तत्रैकपञ्चाशत्रिपञ्चाशच्चतुःपञ्चाशत्पञ्चपञ्चाशाच्च तिर्यङ्मनुष्याणां वैक्रियशरीरस्थानामवसेया। तेषामेव स्वभावस्थानां वैक्रियशरीरिणां च षट्पञ्चाशत्। सप्तपञ्चाशत्तिर्यक्पञ्चेन्द्रियाणामुद्योतसहितानाम्। प्रमत्तसंयतानां पञ्चोदीरणास्थानानि—एकपञ्चाशत्रिपञ्चाशदादीनि चत्वारि च। पञ्चाप्येतानि वैक्रियशरीरिणामाहारकशरीरिणां वा। षट्पञ्चाशच्चौदारिकस्थानामपि। अप्रमत्तसंयतानां पञ्चपञ्चाशत् षट्पञ्चाशच्चेति द्वे उदीरणास्थाने। तत्र षट्पञ्चाशदौदारिकस्थानां, वैक्रियाहारकस्थानामपि केषाञ्चित्संयतानां सर्वपर्याप्त्या पर्याप्तानां कियत्कालमप्रमत्तत्वमपि प्राप्यत इति तेषां द्वे उदीरणास्थाने। अपूर्वकरणादिषु पञ्चसु गुणस्थानेष्वेकं षट्पञ्चाशल्लक्षणमुदीरणास्थानम्। तच्चौदारिकस्थानामवसेयम्। एकस्मिन् सयोगिकेवलिगुणस्थानकेऽष्टावुदी-

रणास्थानानि—एकचत्वारिंशत् द्विचत्वारिंशत् द्विपञ्चाशदादीनि षट् चेति । एतानि च प्रागेव भावितानि ।

तदेवं गुणस्थानेषु नाम्न उदीरणास्थानानि भावितानि । अथ कस्मिन्नुदीरणास्थाने कति भङ्गाः प्राप्यन्त इति संचिकलयिषुराह—'ठाणक्कमेण' इत्यादि—स्थानकक्रमेण—एकचत्वारिंशदाद्युदीरणास्थानक्रमेण भङ्गा अपि वक्ष्यमाणरीत्या ज्ञेयाः । तथाहि—एकचत्वारिंशत्येको भङ्गः, स चार्तीर्थकृत्केवलिनः । द्विचत्वारिंशति त्रिंशद्भङ्गाः, तत्र नैरयिकानधिकृत्यैकः, एकेन्द्रियानधिकृत्य पञ्च, विकलेन्द्रियानधिकृत्य प्रत्येकं त्रिकप्राप्तेर्नव, तिर्यक्पञ्चेन्द्रियान्मनुष्यांश्चाधिकृत्य पञ्च पञ्च, जिनमधिकृत्यैकः, सुरानधिकृत्य चत्वार इति । मतान्तरेण तु तिर्यक्पञ्चेन्द्रियान्मनुष्यांश्चाश्रित्य नव नव, देवानधिकृत्य चाष्टौ भङ्गाः प्राप्यन्त इति द्विचत्वारिंशति द्विचत्वारिंशद्भङ्गाः । पञ्चाशत्येकादश भङ्गाः, ते चैकेन्द्रियेष्वेव प्राप्यन्तेऽन्यत्र पञ्चाशतोऽप्राप्तेः । एकपञ्चाशत्येकविंशतिर्भङ्गाः । तत्र नैरयिकेष्वेकः, एकेन्द्रियेषु सप्त, वैक्रियतिर्यक्पञ्चेन्द्रियनरेषु चत्वारश्चत्वारः, आहारकशरीरिसंयतेष्वेकः, देवेषु चत्वार इति । मतान्तरेण तु वैक्रियतिर्यङ्मनुष्यदेवेषु प्रत्येकमष्टावष्टौ भङ्गाः प्राप्यन्त इति त्रयस्त्रिंशद्भङ्गाः । 'सबार तिसई य' त्ति—सद्वादश द्वादशाधिका त्रिशती भङ्गानां द्विपञ्चाशत्यवसेया । तत्रैकेन्द्रियानधिकृत्य त्रयोदश, विकलेन्द्रियेषु प्रत्येकं त्रिकत्रिकप्राप्तेर्नव भवन्ति, तिर्यक्पञ्चेन्द्रियेषु पञ्चचत्वारिंशं शतं, मनुष्येष्वपि पञ्चचत्वारिंशं शतमिति । मतान्तरेण तु भङ्गानां षट्शती द्विपञ्चाशति वेदितव्या, तिर्यक्पञ्चेन्द्रियेषु मनुष्येषु च प्रत्येकं भङ्गानामेकोननवत्यधिकशतद्वयप्राप्तेः । त्रिपञ्चाशत्येकविंशतिर्भङ्गाः, तत्र नैरयिकेष्वेकः, एकेन्द्रियेषु षट्, वैक्रियतिर्यक्पञ्चेन्द्रियेषु चत्वारः, वैक्रिय मनुष्येष्वपि चत्वारः, आहारकशरीरिणस्त्वधिकृत्यैकः, तीर्थकरेऽप्येकः, देवेषु च चत्वार इति । अत्रापि मतान्तरेण वैक्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवेषु प्रत्येकमष्टावष्टौ भङ्गा इति त्रिपञ्चाशति त्रयस्त्रिंशद्भङ्गाः । चतुःपञ्चाशति भङ्गानां षडुत्तराणि षट् शतानि, तथाहि—

नैरयिकेष्वेकः, विकलेन्द्रियेषु प्रत्येकं द्विकद्विकप्राप्तेः षट्, स्वभावस्थेषु तिर्यक्पञ्चेन्द्रियमनुष्येषु प्रत्येकं द्वे शते अष्टाशीत्यधिके, वैक्रियतिर्यक्पञ्चेन्द्रियेष्वष्टौ, वैक्रियमनुष्येषु चत्वारः, संयतान् वैक्रियशरीरिण आश्रित्योद्योतेन सहैकः, आहारकशरीरिषु संयतेषु द्वौ, देवेष्वष्टाविति । मतान्तरे तु प्राकृततिर्यक्पञ्चेन्द्रियेषु पञ्च शतानि षट्सप्तत्यधिकानि, वैक्रियतिर्यक्पञ्चेन्द्रियेषु षोडश, सामान्यमनुष्येषु पञ्च शतानि षट्सप्तत्यधिकानि, वैक्रियमनुष्येषु नव, देवेषु च षोडश भङ्गाः प्राप्यन्ते, शेषं तु तथैवेति चतुःपञ्चाशति द्व्यधिकानि द्वादश शतानि । पञ्चपञ्चाशति भङ्गानां नव शतान्येकाधिकानि । तथाहि—नैरयिकेष्वेकः, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु प्रत्येक चतुष्कप्राप्तेर्द्वादश, स्वभावस्थेषु तिर्यक्पञ्चेन्द्रियेषु पञ्च शतानि षट्सप्तत्यधिकानि, वैक्रियशरीरिष्वष्टौ, मनुष्येषु स्वभावस्थेषु द्वे शते अष्टाशीत्यधिके, वैक्रियशरीरिषु चत्वारः वैक्रियसंयतेषूद्योतेन सहैकः, आहारकशरीरिषु द्वौ, तीर्थंकरे एकः, देवेष्वष्टाविति । मतान्तरे तु तिर्यक्पञ्चेन्द्रियेषु भङ्गाना द्विपञ्चाशं शतैकादशकं, वैक्रियतिर्यक्पञ्चेन्द्रियेषु षोडशकं, मनुष्येषु स्वभावस्थेषु षट्सप्तत्यधिकं शतपञ्चकं, वैक्रियमनुष्येषु नवकं, देवेषु च षोडशकं प्राप्यते, शेषं तथैवेति पञ्चपञ्चाशति पञ्चाशीत्यधिकानि सप्तदश शतानि । षट्पञ्चाशति भङ्गानां चतुर्दशशत्येकोनसप्तत्यधिका । तथाहि—विकलेन्द्रियेषु प्रत्येकं षट्कप्राप्तेरष्टादश, तिर्यक्पञ्चेन्द्रियेषु स्वभावस्थेषु अष्टशती चतुःषष्ट्यधिका, वैक्रियशरीरिषु चत्वारः, मनुष्येषु पञ्चशती षट्सप्तत्यधिका, वैक्रियशरीरिसंयतेषूद्योतेन सहैकः, आहारकशरीरिष्वेकः, तीर्थंकरेऽप्येकः, देवेषु च चत्वार इति । मतान्तरे तु तिर्यक्पञ्चेन्द्रियेषु सप्तदश शतान्यष्टाविंशत्यधिकानि, वैक्रियतिर्यक्पञ्चेन्द्रियेष्वष्टौ, मनुष्येषु द्विपञ्चाशदधिकैकादश शतानि, देवेषु चाष्टौ भङ्गाः प्राप्यन्ते, शेषं तथैवेति षट्पञ्चाशत्येकोनत्रिंशच्छतानि सप्तदशाधिकानि भङ्गानां भवन्ति । सप्तपञ्चाशति भङ्गानां पञ्चशत्येकोननवत्यधिका । तथाहि—विकलेन्द्रियेषु प्रतिभेदं चतुष्कप्राप्तेर्द्वा-

दश, तिर्यक्पञ्चेन्द्रियेषु पञ्चशती पट्सप्तत्यधिका, तीर्थङ्करे चैक इति । अत्रापि मतान्तरेण तिर्यक्पञ्चेन्द्रियेषु द्विपञ्चाशदधिकैकाद-

सप्ततभङ्गप्राप्तेः सर्वाग्रेण सप्तपञ्चाशति पञ्चषष्ट्यधिकैकादशशती भङ्गानां भवति ॥ २५–२६–२७ ॥

इयाणिं गति पडुच भण्णइ–

पण णव णवगच्छक्काणि गइसु ठाणाणि सेसकम्माणं । एगेगमेव णेय साहित्तेगेगपगइउ ॥२८॥

(चू०)—णिरयगतीए पंच ठाणाणि । जे णेरइयउदया ते चेव । अण्णे य चत्तारि तिरियाणं सव्वोदया

नामण्णेण। मणुयाणं पंचासवज्जा सव्वोदया केवलिछउमत्थे पडुच। देवाणं छ उदीरणाठाणा। पुव्वुत्ता सव्वे भंगा

भाणियव्वा। णामं सम्मत्तं

'सेसकम्माणं एगेगमेव'त्ति–णाणावरणवेयणियआउगोयअंतराइयाणं एगेगमेव पगतिठाणं तं च 'णेयं 'सा-

हित्तेगेगपगइउ' ततो गुणठाणे सुरातिसु य एगेगपगतीउदीरणासामित्ताउ साहेतु णेयव्वा। भणिया पगतिग-

उदीरणा ॥२८॥

(मलय०)—सम्प्रति गतीराश्रित्य स्थानप्ररूपणां करोति–'पंच'त्ति। निरयगतावुदीरणास्थानानि पञ्च, तद्यथा–द्विचत्वारिंशत्, एक-

पञ्चाशत्, त्रिपञ्चाशत्, चतुःपञ्चाशत्, पञ्चपञ्चाशच्चेति। तिर्यग्गतावेकचत्वारिंशद्वर्जानि शेषाणि नवोदीरणास्थानानि। मनुष्यगताव-

पि सयोगिकेवल्यादीनधिकृत्य पञ्चाशद्वर्जानि शेषाणि नवोदीरणास्थाननि। देवगतौ षडुदीरणास्थानानि, तद्यथा–द्विचत्वारिंशत् एकप-

ञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति। एतानि च सर्वाण्यपि प्राक् सप्रपञ्चं भावितानीति नेह भूयो

भाव्यन्ते ।

तदेवमुक्तानि नामकर्मणः सप्रपञ्चमुदीरणास्थानानि । साम्प्रतं शेषकर्मणामुदीरणास्थानप्रतिपादनार्थमाह-'सेसं' इत्यादि । शेषकर्मणां ज्ञानावरणवेदनीयायुर्गोत्रान्तरायलक्षणानामुदीरणास्थानमेकैकमवगन्तव्यं, तद्यथा-ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकमेकैकमुदीरणास्थानम्। वेदनीयायुर्गोत्राणां तु वेद्यमानैकप्रकृत्यात्मकम्। न ह्यमीषां द्वित्र्यादिकाः प्रकृतयो युगपदुदीर्यन्ते, युगपदुदयाभावात्। एतच्च ज्ञानावरणादीनामेकैकमुदीरणास्थानं प्रागुक्तैकैकप्रकृत्युदीरणायाः स्वामित्वं साधयित्वा-निश्चित्य गुणस्थानकेषु नारकादिगतिषु स्वयमेव ज्ञेयं ज्ञातव्यम् ॥२८॥

(उ०)—अथ गतीराश्रित्य स्थानप्ररूपणामाह—निरयगतावुदीरणास्थानानि पञ्च । तथाहि-द्विचत्वारिंशदेकपञ्चाशत् त्रिपञ्चाशदादीनि त्रीणि च । तिर्यग्गतावेकचत्वारिंशद्वर्जानि नवाप्युदीरणास्थानानि। मनुजगतावपि सयोगिकेवल्यादीनाश्रित्य पञ्चाशद्वर्जानि नव । देवगतावपि द्विचत्वारिंशदेकपञ्चाशत्रिपञ्चाशदादीनि चत्वारि चेति षट् । एतानि सर्वाण्यपि प्राग्भावितान्येव ।

तदेवमुक्तानि प्रपञ्चेन नाम्न उदीरणास्थानानि । अथ शेषकर्मणां तान्याह-'सेसकम्माणं' इत्यादि । शेषकर्मणां ज्ञानावरणवेदनीयायुर्गोत्रान्तरायाणामुदीरणास्थानमेकैकमवसेयम् । तथाहि-ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकमेकैकमुदीरणास्थानम् । वेदनीयायुर्गोत्राणां त्वनुभूयमानैकैकप्रकृत्यात्मकम् । न ह्यमीषां द्वित्र्यादिप्रकृतयो युगपदुदीर्यन्ते, युगपदुदयाभावात् । एतच्चामीषामेकैकमुदीरणास्थानं एकैकप्रकृत्युदीरणायाः स्वामित्वं 'साधयित्वा'-निश्चित्य गुणस्थानकेषु निरयादिगतिषु च स्वयमेव ज्ञेयम् ॥ २८ ॥

इदाणिं ठितिउदीरणा भण्णइ । तीसे इमे अत्थाहिगारा । तं जहा-लक्खणं भेदो सादिअणादिपरूवणा

अद्धाछेदो सामित्तमिति। तत्थ लक्खणभेयणिरूवणत्थं भण्णति–

**संपत्तिए य उदए पओगओ दिस्सए उईरणा सा। सेवीकाठिइहिंतो जाहिंतो तत्तिगा एसा॥२९॥**

(चू०)—उदयो दुविहो–संपत्तिउदगो य असंपत्तिउदयो य। संपत्तिउदयो णाम सभावेण कालपत्तं दलितं वोदिज्जति, सभावोदय इत्यर्थः। असंपत्तउदयो णाम अपत्तकालियं पओगेण कालपत्तेण समं वोदिज्जत्ति सच्चेव ठिइउदीरणा वुचइ। 'संपत्तिए य उदए पओगओ दिस्सए उदीरणा सा'–जा ठिती 'पओगओ'–उदीरणापओगेण दीस्सए उदये सा ठितीउदीरणा वुचइ। 'सेविकाठिइहिंतो'त्ति–जासिं ठितीणं विगप्पो अत्थि ता सेविकाठितिउ वुचंति, ताहे सेविकाठितिहिंतो 'जाहिंतो'त्ति–उदीरणापओगेहिंतो। के ते उदीरणापातोग्गा वा अपातोग्गा वा? भण्णइ–आवलियागयं ण उदीरिज्जतित्ति एयं अपाउग्गं, आवलियातिरित्तं पातोग्गं उदीरणाए। तस्स इमा भेदा, तं जहा–समयाहियावलिया, दुगसमयाहियावलिया, एवं जाव दोहिं आवलियाहिं ऊणा उक्कोसिया ठिती उदीरणा पातोग्गा। 'तत्तिया एस'त्ति–तत्तिया इति भेया भणिया। जावइया ठितिभेया तावइया उदीरणाविकप्पा इत्यर्थः॥२९॥

(मलय०)—तदेवमुक्ता प्रकृत्युदीरणा, साम्प्रतं स्थित्युदीरणाभिधानावसरः, तत्र चैतेऽर्थाधिकारास्तद्यथा–लक्षणं, भेदः, साद्यनादिप्ररूपणा, अद्धाच्छेदः, स्वामित्वं चेति। तत्र लक्षणभेदयोः प्रतिपादनार्थमाह—'संपत्तिए'त्ति। इह द्विविध उदयः–सम्प्राप्त्युदयोऽसम्प्राप्त्युदयश्च। तत्र यत्कर्मदलिकं कालप्राप्तं सत् अनुभूयते स संप्राप्त्युदयः। तथाहि–कालक्रमेण कर्मदलिकस्योदयहेतुद्रव्यक्षेत्रादिसामग्रीसम्प्राप्तौ सत्या-

मुदयः सम्प्राप्त्युदयः। यत्पुनरकालप्राप्तं कर्मदलिकमुदीरणाप्रयोगेण वीर्यविशेषसंज्ञितेन समाकृष्य कालप्राप्तेन दलिकेन सहानुभूयते सोऽसम्प्राप्त्युदयः। एषैव चोदीरणा। तथा चाह—या स्थितिरकालप्राप्तापि सती प्रयोगत उदीरणा प्रयोगेण संप्राप्त्युदये पूर्वोक्तस्वरूपे प्रक्षिप्ता सती दृश्यते केवलचक्षुषा सा स्थित्युदीरणा। एष लक्षणनिर्देशः। अधुना भेद उच्यते—'सेवीका' इत्यादि। इह यासां स्थितीनां भेदपरिकल्पना संभवति ताः पूर्वपुरुषपरिभाषया सेवीका इत्युच्यते। ताश्च द्विधा—उदीरणायाः प्रायोग्या अप्रायोग्याश्च। काः प्रायोग्याः काश्चाप्रायोग्या इति चेद्? उच्यते—बन्धावलिकागता संक्रमावलिकागता उदयावलिकागताश्चाप्रायोग्याः 'संकमबन्धुदयुवट्टणाल्गिाईणकरणाइं' इतिवचनप्रामाण्यात्। शेषाश्च सर्वा अपि प्रायः प्रायोग्याः। तत्रोदये सति यासां प्रकृतीनामुत्कृष्टो बन्धः संभवति तासामुत्कर्षत आवलिकाद्विकहीना सर्वाप्युत्कृष्टा स्थितिरुदीरणाप्रायोग्या। तथाहि—उदयोत्कृष्टबन्धकानां प्रकृतीनां बन्धावलिकायामतीतायामुदयावलिकाबहिर्वर्तिनीः स्थितीः सर्वा अप्युदीरयति। अनुदयोत्कृष्टबन्धानां तु यथासंभवमुदीरणाप्रायोग्याः। आवलिकाद्विकहीनायाश्चोत्कृष्टस्थितेर्यावन्तः समयास्तावन्त उदीरणायाः प्रभेदाः। तथाहि—उदयावलिकाया उपरिवर्तिनी समयमात्रा स्थितिः कस्याप्युदीरणाप्रायोग्या यस्य तावत्येव शेषीभूता तिष्ठति, एवं कस्यापि द्विसमयमात्रा, कस्यापि त्रिसमयमात्रा, एवं तावद्वाच्यं यावदावलिकाद्विकहीना कस्यापि सर्वाप्युत्कृष्टा स्थितिरिति। अक्षरयोजना त्वियं—सेवीकास्थितिभ्य—उदीरणाप्रायोग्याभ्यो, यकाभ्यो—यावतीभ्य आवलिकाद्विकहीनोत्कृष्टस्थितिसमयप्रमाणाभ्य इत्यर्थः, उदीरणाप्रयोगेण समाकृष्य स्थितिः संप्राप्त्युदये दीयते, तावती—तावद्भेदप्रमाणा सैवोदीरणा ॥२९॥

(उ०)—तदेवमुक्ता प्रकृत्युदीरणा, अथ स्थित्युदीरणाऽभिधेया। तत्र चैतेऽर्थाधिकाराः—लक्षणं, भेदः, साद्यनादिप्ररूपणा, अद्धा-

तत्र यस्य कर्मदलिकस्य
च्छेदः, स्वामित्वं चेति। तत्र लक्षणभेदौ प्रतिपादयन्नाह—इह द्विविध उदयः—सम्प्राप्त्युदयोऽसंप्राप्त्युदयश्च। तत्र यस्य कर्मदलिकस्य
कालक्रमेणोदयहेतुद्रव्यक्षेत्रादिसामग्रीसंपत्तावनुभूयमानस्योदयः स सम्प्राप्त्युदयः, यत्पुनरकालप्राप्तं कर्मदलिकमुदीरणाख्यवीर्यविशेषेणा-
कृष्य कालप्राप्तेन दलिकेन सहानुभूयते सोऽसम्प्राप्त्युदयः। एपैव चोदीरणा। तथा चाह—या स्थितिरकालप्राप्तापि 'प्रयोगतः'—उदीर-
णाप्रयोगेण सम्प्राप्त्युदये प्रक्षिप्ता दृश्यते केवलचक्षुपा सा स्थित्युदीरणा, लक्षणनिदर्शोऽयम्। सेवीकास्थितिभ्य उदीरणाप्रायोग्याभ्यो
'यकाभ्यो'—यावतीभ्य आवलिकाद्विकहीनोत्कृष्टस्थितिसमयप्रमाणाभ्यः प्रयोगविशेषेणाकृष्य सम्प्राप्त्युदये दीयते 'तत्तिग' त्ति—तावती
तावद्भेदप्रमाणा एपा स्थित्युदीरणा। अयं भावः—इह भेदकल्पनायोग्याः स्थितयः पूर्वपुरुपपरिभापया सेवीका इत्युच्यते, सेव्यन्ते
भेदकल्पनां प्रत्याश्रीयन्ते इति सेवीका इत्यौणादिकव्युत्पत्तेः। ताश्च द्विधा—उदीरणायाः प्रायोग्या अप्रायोग्याश्च। तत्र बन्धसंक्रमो-
दयावलिकात्रयगता अप्रायोग्याः, करणासाध्यत्वात्। शेपाश्च सर्वा अपि प्रायः प्रायोग्याः। तत्रोदये सति यासां प्रकृतीनामुत्कृष्टबन्धसं-
भवस्तासामुत्कर्पत आवलिकाद्विकहीना सर्वाप्युत्कृष्टा स्थितिरुदीरणाप्रायोग्या, उदयोत्कृष्टबन्धानां प्रकृतीनां बन्धावलिकात्यय एवोदयाव-
लिकाबहिर्वर्तिनीनां सर्वासामेवोदीरणाप्रवृत्तेः। अनुदयोत्कृष्टबन्धानां तु स्थितय उदीर्यमाणस्थितिदलिकसहभाविकालप्राप्तदलिकानुभ-
वसंभवानतिक्रमेणोदीरणाप्रायोग्याः। आवलिकाद्विकहीनायाश्चोत्कृष्टस्थितेर्यावन्तः समयास्तावन्त उदीरणाया भेदाः। तथाहि—उदया-
वलिकाया उपरिवर्तिनी समयमात्रा स्थितिः कस्यचिदुदीरणाप्रायोग्या यस्य तावत्येव शेपीभूता तिष्ठति, एवं कस्यापि द्विसमयमात्रा,
कस्यापि त्रिसमयमात्रा, एवं तावद्वाच्यं यावदावलिकाद्विकहीना कस्याप्युत्कृष्टा स्थितिरिति। भेदनिर्देशोऽयम् ॥२९॥

इदाणिं साइअणाइ परूवणा। सा दुविहा—मूलपगतिठितिसादिअणादिपरूवणा, उत्तरपगतिठितिसादिअ-

णादिपरूवणा य। तत्थ मूलठिति सादि अणादि य परूवणत्थं भण्णइ—

**मूल ठिई अजहन्ना मोहस्स चउव्विहा तिहा सेसा। वेयणियाऊण दुहा सेसविगप्पा च सव्वासिं ॥३०॥**

(चू०)—मूलपगतीणं ठिति मूलट्ठिति, ताए मूलपगतिट्ठितीए अजहण्णा उदीरणा मोहणीयस्स चउव्विहा। केयं? भण्णइ—जहण्णिया ट्ठितिउदीरणा सुहुमरागस्स समयावलियसेसे वट्टमाणस्स उवसामगस्स वा होति। तं मोत्तूण सेसा सव्वा अजहण्णा ठितीउदीरणा। उवसंतकसायस्स उदीरणा य णत्थि। ततो परिवडमाणस्स अजहण्णगट्ठितीए उदीरणा सादिया, तं ठाणमपत्तपुव्वस्स अणादिया ठितीउदीरणा, धुवाधुवा पुव्वुत्ता। 'तिहा सेस' त्ति—णाणावरणदंसणावरणणामगोयअंतराइयाणं एतेसिं पंचण्हं अजहण्णिया ठितिउदीरणा अणादियधुवाधुव इति तिहा। कहं? भण्णइ—णाणावरणदंसणावरणअंतरादीयाणं खीणकसायस्स समयाहियावलियसेसे जहण्णिया ठितिउदीरणा होइ। सा य सादितअधुवा। तं मोत्तुण सेसा (अ)जहण्णा ठितीउदीरणा। अजहण्णाए आदि णत्थि, धुवोदीरणात्ताउ, धुवाधुवा पुव्वुत्ता। णामगोयाणं सजोगिकेवलिस्स चरिमसमए जहण्णिया ठितीउदीरणा, सा य सादिया अधुवा। तं मोत्तुण सेसा सव्वा अजहण्णा। अजहण्णाए ठितीउदीरणाए आदि णत्थि, धुवोदीरणत्तातो, धुवाधुवा पुव्वुत्ता। 'वेयणीयाऊण दुह' त्ति—वेयाणियआऊण सादिगअधुवमिति दुविहा भवति। कहं? भण्णइ—वेयणियस्स जहण्णिया ठितीउदीरणा एगिंदियस्स सव्वखुड्डगट्ठितिसंकम्मियस्स लब्भइ ततो अजहण्णट्ठितिं उदीरेति, पुणो जहण्णं जातित्ति सादिता अधुवा य। आउगस्स अंते ठितीउदीरणा णियमा

णन्थित्ति तेण सादिय अधुवा ठितिउदीरणा। 'सेसविगप्पा य सव्वासिं' ति–सेसविगप्पत्ति उक्कोसो (अणु-
क्कसो) जहण्णा सादिय अधुवा। कहं? भण्णइ–सव्वेसिं कम्माणं आउगवज्जाणं उक्कोसियट्ठितिउदीरणा
मिच्छादिट्ठिस्स लब्भइ। उक्कोसियाउ ठितीउदीरणाउ अणुक्कोसं जाति, अणुक्कोसियातो पुणो उक्कोसं
जातित्ति, तम्हा सातियअधुवो। जहण्णिया ठितिउदीरणा एगसमयत्ति तेण सादिय अधुवा ॥३०॥

(मलय०)—तदेवं कृता भेदप्ररूपणा। सम्प्रति साद्यनादिप्ररूपणा कर्त्तव्या। सा च द्विधा–मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषयसाद्यनादिप्ररूपणार्थमाह—'मूलठिइ' त्ति। मूलस्थितिशब्दाभ्यां प्राकृतत्वात् प्रत्येकं षष्ठीविभक्तिलोपः। ततोऽयमर्थः–मूलप्रकृतीनां मध्ये मोहस्य–मोहनीयस्य स्थितेरुदीरणाऽजघन्या चतुर्विधा–चतुष्प्रकारा। तद्यथा–सादिरनादिर्ध्रुवाऽध्रुवा च। तथाहि–मोहनीयस्य जघन्या स्थित्युदीरणा सूक्ष्मसंपरायस्य क्षपकस्य स्वगुणस्थानकसमयाधिकावलिकाशेषे वर्तमानस्य भवति। ततोऽन्यत्र सर्वत्राप्यजघन्या, सा चोपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाऽभव्यानां, अध्रुवा भव्यानाम्। शेषा ज्ञानावरणदर्शनावरणनामगोत्रान्तरायाणां स्थित्युदीरणाऽजघन्या त्रिधा–त्रिप्रकारा, तद्यथा–अनादिर्ध्रुवाऽध्रुवा च। तथाहि–ज्ञानावरणदर्शनावरणान्तरायाणां जघन्या स्थित्युदीरणा क्षीणकषायस्य स्वगुणस्थानसमयाधिकावलिकाशेषे वर्तमानस्य भवति, शेषकालं त्वजघन्या। सा चानादिः, सदैव भावात्। ध्रुवाध्रुवे पूर्ववत्। नामगोत्रयोस्तु जघन्या स्थित्युदीरणा सयोगिकेवलिचरमसमये। सा च सादिरध्रुवा च। ततोऽन्या सर्वाप्यजघन्या। सा चानादिः। ध्रुवाध्रुवे पूर्ववत्। वेदनीयायुषोरजघन्या स्थित्युदीरणा द्विधा, तद्यथा–सादिरध्रुवा च। तथाहि–वेदनीयस्य जघन्या स्थित्युदीरणा एकेन्द्रियस्य सर्वस्तोक-

स्थितिसत्कर्मणो लभ्यते। ततः तस्यैव समयान्तरे प्रवर्धमानसत्कर्मणोऽजघन्या, ततः पुनरपि जघन्येति जघन्याऽजघन्या च सादिरध्रुवा च। आयुषः पर्यन्तावलिकायां न भवति, परभवोत्पत्तिप्रथमसमये च भवति, ततः सादिरध्रुवा च। तथा सर्वासां प्रकृतीनां शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणा द्विधा–द्विप्रकाराः, तद्यथा–सादयोऽध्रुवाश्च। तथाहि–सर्वेषामपि कर्मणामायुर्वर्जानामुत्कृष्टा स्थित्युदीरणा मिथ्यादृष्टेरुत्कृष्टे संक्लेशे वर्तमानस्य कियत्कालं प्राप्यते, ततः समयान्तरे तस्याप्यनुत्कृष्टा, ततः पुनरपि समयान्तरे उत्कृष्टा, संक्लेशविशुद्ध्योः प्रायः प्रतिसमयमन्यथाभावात्, ततो द्वे अपि साद्यध्रुवे। जघन्या च द्विधा प्रागेव भाविता। आयुषां तु विकल्पत्रयेऽपि युक्तिः प्राक्तन्येव प्रायोऽवसेया ॥३०॥

(उ०)—अथ साद्यनादिप्ररूपणा कार्या, सा द्विधा–मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्राद्यं साद्यनादिप्ररूपणार्थमाह—इह मूलस्थितिशब्दौ द्वावपि लुप्तषष्ठीविभक्तिकौ। ततोऽयमर्थः–मूलप्रकृतीनां मध्ये मोहस्य स्थितेरुदीरणाऽजघन्या चतुर्विधा–सादिरनादिर्ध्रुवाऽध्रुवा चेति। तथाहि—मोहनीयस्य जघन्या स्थित्युदीरणा सूक्ष्मसंपरायक्षपकस्य स्वगुणस्थाने समयाधिकावलिकाशेषे भवति, ततोऽन्यत्र सर्वत्राप्यजघन्या, स चोपशान्तमोहे न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाऽभव्यानां, अध्रुवा भव्यानाम्। शेषा ज्ञानावरणदर्शनावरणनामगोत्रान्तरायाणां स्थित्युदीरणाऽजघन्या त्रिधा–अनादिर्ध्रुवाऽध्रुवा चेति। तथाहि–ज्ञानावरणदर्शनावरणान्तरायाणां जघन्या स्थित्युदीरणा क्षीणकषायस्य स्वगुणस्थाने समयाधिकावलिकाशेषे भवति, शेषकालं त्वजघन्या, सा चानादिः, सदैव भावात्। ध्रुवाध्रुवे पूर्ववत्। नामगोत्रयोस्तु जघन्या स्थित्युदीरणा सयोगिकेवलिचरमसमये, सा च सादिरध्रुवा च, ततोऽन्या सर्वाऽप्यजघन्या, सा चानादिः, सदा भावात्। ध्रुवाध्रुवे पूर्ववत्। वेदनीयायुषोरजघन्या स्थित्युदीरणा द्विधा, तथाहि–

वेदनीयस्य जघन्या स्थित्युदीरणैकेन्द्रियस्य सर्वाल्पस्थितिसत्कर्मणो लभ्यते, ततस्तस्यैव समयान्तरे वर्धमानस्थितिसत्कर्मणोऽजघन्या, ततः पुनरपि जघन्येति जघन्याऽजघन्या च सादिरध्रुवा च। आयुषोऽजघन्या स्थित्युदीरणा पर्यन्तावलिकायां न भवति, परभवोत्पत्तिप्रथमसमये च भवतीति सादिरध्रुवा च। तथा सर्वासां प्रकृतीनां शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणा द्विधा, सादयोऽध्रुवाश्चेति। तथाहि—सर्वेषामप्यायुर्वर्जकर्मणामुत्कृष्टा स्थित्युदीरणा मिथ्यादृष्टेरुत्कृष्टसंक्लेशवतः कियत्कालं प्राप्यते, समयान्तरेऽध्यवसायपरावृत्तेः, तस्याप्यनुत्कृष्टा समयान्तरे, भूयोऽप्युत्कृष्टा, संक्लेशविशुद्ध्योः प्रायः प्रतिसमयं परावृत्तेः। ततो द्वे अपि साद्यध्रुवे। जघन्याया द्विप्रकारत्वं च प्रागेव भावितम्। आयुषां तु विकल्पत्रयेऽपि युक्तिः प्रायः प्राक्तन्येवावसेया ॥३०॥

इयाणिं उत्तरपगतीणं भण्णइ

**मिच्छत्तस्स चउद्धा अजहण्णा धुवउदीरणाण तिहा। सेस विगप्पा दुविहा सव्वविगप्पा य सेसाणं ॥३१॥**

(चू०)—'मिच्छत्तस्स चउद्धा अजहण्ण'त्ति–मिच्छत्तस्स अजहण्णा ठितिउदीरणा सादियादि चउव्विहा। कहं? भण्णइ–मिच्छादिट्ठिस्स पढमसमत्तं पडिवज्जमाणस्स पढमठितीए समयाहियावलिया सेसाए जहण्णिया ठितीउदीरणा। सा य सादि य अधुवा। तं मोत्तुण सेसा सव्वा अजहण्णिया ठितीउदीरणा। तस्स चेव सम्मत्ताउ परिवडमाणस्स मिच्छत्तं वेदेमाणस्स सादिया। अणादिया तं ठाणमपत्तपुव्वस्स। धुवा धुवा य पुव्वुत्ता। 'धुवउदीरणाण तिह'त्ति, धुवउदीरणा–विग्घावरणा चोद्दस, णामंमि य तेत्तीसा, एतेसिं सत्तचत्तालाए कम्माणं अणादिधुवअधुवा तिविहा। कहं? भण्णइ–विग्घावरणचोद्दसाण खीणकसायस्स समहियावलियसेसाए

## मूलप्रकृतेः स्थित्युदीरणायाः साद्यादि भंगयन्त्रम्

| प्रकृतयः | अजघन्यः |  |  |  | जघन्यः |  | अनुत्कृष्टः |  | उत्कृष्टः |  |
|---|---|---|---|---|---|---|---|---|---|---|
|  | सादिः | अध्रुवः | अना० | ध्रु० | सादिः | अध्रु० | सादिः | अध्रु० | सादिः | अध्रुवः |
| मोहनीयस्य | ११ तःपतितानां | भव्यानां | साद्यप्राप्तानां | अभ० | क्षपकाणां १० मे ० | विच्छेदत्वात् | उत्कृष्टोदीरणातः पतितमिथ्यादृशां | परावृत्तित्वात् | उत्कृष्टसंक्लेशेनमिथ्यादृशा | परावृत्तित्वात् |
| ज्ञाना० दर्श० विघ्नानाम् | —— | ,, | सादेरभावात् | ,, | क्षपकानां १२ मे .० | ,, | ,, | ,, | ,, | ,, |
| नामगोत्रयोः | —— | ,, | ,, | ,, | १३ मान्ते | ,, | ,, | ,, | ,, | ,, |
| वेदनीयस्स | सर्वाल्पस्थितिसत्तात: पतितानामेकेन्द्रियाणां | परावृत्तितः | — | — | सर्वाल्पस्थितिकैकेन्द्रियाणाम् | परावृत्तित्वात् | ,, | ,, | ,, | ,, |
| आयुषः | भवप्रथमसमये | अन्त्यावलिकायामभवनात् | — | — | भवप्रथमसमये | अन्त्यावलिकायामभवनात् | भवप्रथमसमये | अन्त्यावलिकायामभवनात् | भवप्रथमसमये | अन्त्यावलिकायामभवनात् |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| मिथ्यात्वस्य | सम्यक्त्वात्पतितानाम् | भव्यानां | साद्यप्राप्तानाम् | अभ० | प्रथमसम्यक्त्वस्य ,, लाभे ० | सादित्वात् | उत्कृष्टोदीरणात् पतितानां मिथ्या० | परावृत्तित्वात् | उ० संक्लेशेन मिथ्यादृशाम् | परावृत्तित्वात् |
| ज्ञा० ५-दर्श० ४ विघ्न ५ नाम् (१४) | —— | ,, | सादेरभावात् | ,, | १२ मे ० | विच्छेदत्वात् | ,, | ,, | ,, | ,, |
| तैज० ७-वर्णादि २०-स्थि०-अ स्थि०-शुभ-अशुभ-अगु०-निर्माणानाम् (३३) | —— | ,, | ,, | ,, | १३ मान्ते | ,, | ,, | ,, | ,, | ,, |
| शेषाणाम् ११० | अध्रुवोदीरणत्वात् | अध्रु० | — | — | अध्रु० | अध्रु० | अध्रु० | अध्रु० | अध्रु० | अध्रु० |

.० -समयाधिकावलिकाशेषे

कम्मट्ठितीए जहण्णा ठितीउदीरणा। सा य सादिय अधुवा। तं मोत्तुण सेसा सव्वा अजहण्णठितिउदीरणा। तम्हा अजहण्णस्स आदि णत्थि, धुवउदीरणत्तादेव। धुवाधुवा पुव्वुत्ता। णामंमि जे तेत्तीसं धुवोदया तेसिं सजोगिचरिमसमए जहण्णा ठितिउदीरणा, सा य सादिय अधुवा। तं मोत्तुण सेसा सव्वा अजहण्णा ठितीउदीरणा विग्घावरणं व णेयव्वा। 'सेस विगप्पा दुविह'त्ति–एतेसिं चेव अट्ठचत्तालीसाए कम्माणं, सेसविगप्पत्ति उक्कोसअणुक्कोसजहण्णा, एतेसिं ठितिउदीरणा सादिय अधुवा। उक्कोसा ठितिउदीरणा मिच्छद्दिट्ठिम्मि लब्भतित्ति काउं। अणुक्कोसा वि तंमि चेव ठिति(ए समयन्तरे,) तम्हा सादिय अधुवा। 'सव्वविगप्पा य सेसाणं'ति–'सव्व विगप्पा य' इति उक्कोसाणुक्कोसजहण्णाजहण्णा, सेसाणंति सेसकम्माणं धुवोदीरणवज्जाणं दसूत्तरस्स पगतिसतस्स ठितीउदीरणा साइयअधुवा अधुवोदयत्तादेव लब्भति। सादि अणादिपरूवणा गता ॥३१॥

(मलय०)—तदेवं कृता मूलप्रकृतिविषया साद्यनादिप्ररूपणा, सम्प्रत्युत्तरप्रकृतिविषयां तां चिकीर्षुराह—'मिच्छत्तस्स' त्ति। मिथ्यात्वस्याजघन्या स्थित्युदीरणा चतुर्विधा, तद्यथा–सादिरनादिर्ध्रुवाऽध्रुवा च। तत्र मिथ्यादृष्टेः प्रथममम्यक्त्वमुत्पादयतो मिथ्यात्वस्य प्रथमस्थितौ समयाधिकावलिकाशेषायां जघन्या स्थित्युदीरणा सादिरध्रुवा च। सम्यक्त्वाच्च प्रतिपततोऽजघन्या। सा च सादिः। तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवे अभव्यभव्यापेक्षया। तथा ध्रुवोदीरणानां पञ्चविधज्ञानावरणचक्षुरचक्षुरवधिकेवलदर्शनावरणपञ्चविधान्तरायतैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणाख्यानामजघन्या स्थित्युदीरणा त्रिधा। तद्यथा–अनादिर्ध्रुवाऽध्रुवा च। तथाहि–ज्ञानावरणपञ्चकान्तरायपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरणरूपाणां चतुर्दशप्रकृतीनां क्षीणकषायस्य स्वगुणस्थानकस-

मयाधिकावलिकाशेषे वर्तमानस्य जघन्या स्थित्युदीरणा, सा च सादिरध्रुवा च । शेषा सर्वाप्यजघन्या । सा चानादिः, सदैव भावात् ।
मयाधिकावलिकाशेषे वर्तमानस्य जघन्या स्थित्युदीरणा, सा च सादिरध्रुवा च । शेषा सर्वाप्यजघन्या । सा चानादिः, सदैव भावात् । ध्रुवाध्रुवे पूर्ववत् । तैजससप्तकादीनां च त्रयस्त्रिंशत्संख्याकानां नामप्रकृतीनां जघन्या स्थित्युदीरणा सयोगिकेवलिचरमसमये । सा च
ध्रुवाध्रुवे पूर्ववत् । तैजससप्तकादीनां च त्रयस्त्रिंशत्संख्याकानां नामप्रकृतीनां जघन्या स्थित्युदीरणा सयोगिकेवलिचरमसमये । सा च
सादिरध्रुवा च । ततोऽन्या सर्वाप्यजघन्या, सा चानादिः । ध्रुवाध्रुवे पूर्ववत् । एतासामेव मिथ्यात्वादिप्रकृतीनामष्टचत्वारिंशत्संख्या-
कानां शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणा द्विप्रकाराः, तद्यथा—सादयोऽध्रुवाश्च । तथाहि—एतासामुत्कृष्टा स्थित्युदीरणा मिथ्यादृष्टे-
रुत्कृष्टे संक्लेशे वर्तमानस्य कियत्कालं लभ्यते । ततः समयान्तरे तस्याप्यनुत्कृष्टा । ततो द्वे अपि साद्यध्रुवे । जघन्या च प्रागेव भा-
विता । 'सव्वविगप्पा य सेसाणं' ति—शेषाणां शेषप्रकृतीनां दशोत्तरशतसंख्यानां सर्वे विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपा द्विविधाः,
तद्यथा—सादयोऽध्रुवाश्च । साद्यध्रुवत्वं चाध्रुवोदयत्वाद्भावनीयमिति ॥३१॥
(उ०)—तदेवं कृता मूलप्रकृतिविषया साद्यनादिप्ररूपणा, अथोत्तरप्रकृतिविषयां तां चिकीर्षुराह—मिथ्यात्वस्याजघन्या स्थित्यु-
दीरणा चतुर्धा—साद्यनादिध्रुवाध्रुवभेदात् । तत्र मिथ्यादृष्टेराद्यसम्यक्त्वमुत्पादयतो मिथ्यात्वस्याद्यस्थितौ समयाधिकावलिकाशेषायां
जघन्या स्थित्युदीरणा, सा च सादिरध्रुवा च । सम्यक्त्वाच्च पततोऽजघन्या, सा च सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे
अभव्यभव्यापेक्षया । तथा ध्रुवोदीरणानां ज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकतैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभा-
गुरुलघुनिर्माणाख्यानामजघन्या स्थित्युदीरणा त्रिधा—अनादिध्रुवाध्रुवभेदात् । तथाहि—ज्ञानावरणान्तरायपञ्चकदर्शनावरणचतुष्काणां
क्षीणकषायस्य स्वगुणस्थाने समयाधिकावलिकाशेषे जघन्या स्थित्युदीरणा, सा च सादिरध्रुवा च । शेषा सर्वाऽप्यजघन्या, सा
चानादिः, सदैव भावात् । ध्रुवाध्रुवे पूर्ववत् । तैजससप्तकादित्रयस्त्रिंशन्नामप्रकृतीनां जघन्या स्थित्युदीरणा सयोगिकेवलिचरमसमये,

सा च सादिरध्रुवा च । ततोऽन्या सर्वाऽप्यजघन्या, सा चानादिः । ध्रुवाध्रुवे प्राग्वत् । एतासामेव मिथ्यात्वाद्यष्टचत्वारिंशत्प्रकृतीनां शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणा द्विविधाः साद्यध्रुवभेदात्, यत एतासामुत्कृष्टा स्थित्युदीरणा मिथ्यादृष्टेरुत्कृष्टसंक्लेशे वर्तमानस्य कियत्कालं लभ्यते, समयान्तरे च तस्याप्यनुत्कृष्टेति द्वे अप्येते साद्यध्रुवे । जघन्या तु प्रागेव भावितेति । शेषाणां दशोत्तरशतसंख्यानां सर्वे विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपा द्विविधाः साद्यध्रुवभेदात्, तथात्वं चाध्रुवोदयत्वादेव भाव्यम् ॥३१॥

इयाणिं अद्धाच्छेओ सामित्तं च दो वि भण्णंति—

**अद्धाच्छेओ सामित्तं पि य ठिइसंकमे जहा नवरं । तव्वेइसु निरयगईए वा तिसु हिट्ठिमखिईसु ॥३२॥**

(चू०)— अद्धाच्छेओ सामित्तं च जहा ठितिसंकमे भणियं तहा भाणियव्वं इह वि, तहावि अइसंखित्तंति काउं उल्लोविज्जइ । जेसिं कम्माणं बन्धुक्कस्सठिती तेसिं बन्धावलियदुगूणे ठिती उक्कोसिया ट्ठितीउदीरणे होइ । तंमि य समये सव्वट्ठितीए बन्धावलिया गया तेण आवलियूणा सव्वट्ठिती जट्ठिती । जेसिं कम्माणं संकमुक्कसा ठिती तेसिं तीयावलिगूणा सव्वट्ठिती उक्कोसिया ठितीउदीरणा होइ । तंमि समये बन्धसंकमावलियदुगूणा (जट्ठि)ती होइ । सम्मत्तसम्माभिच्छत्ताणं सत्तरिसागरोवमकोडाकोडीओ अंतोमुहुत्तूणा उक्कोसिया ठिति, ठितिउदीरणा वि उक्कोसिता तत्तिया चेव । (मिच्छत्तस्स उक्कोसट्ठितिं बंधिऊण तत्थेवअंतोमुहुत्तं ट्ठिचातओ परिवडिऊण उदीरेइत्ति) सम्मत्तस्स अंतोमुहुत्तूणा ठिती उक्कोसिया ठितीउदीरणा होइ । इदाणिं सम्मा-

उक्कोसिया ठितीउदीरणा होति। सम्मदिट्ठिस्स सम्मत्तसम्माभिच्छत्ताणं दो-मिच्छत्तस्स-ततो अंतोमुहुत्तूणा उक्कोसिया ठिती (अन्तोमुहुत्तूणा मिच्छत्तस्स) लब्भइ ततो अंतोमुहुत्तेण सम्मत्तातो सम्मामिच्छत्तं गतस्स उक्कोसिया ठिती (अन्तोमुहुत्तूणा मिच्छत्तस्स) लब्भइ। एसो अद्धाच्छेओ। आहारसरीरणामाए आहारसरीरगयस्स सम्मामिच्छत्तं उक्कोसिया ठितीउदीरणा लब्भइ। एसो अद्धाच्छेओ। आहारसरीरणामाए आहारसरीरं उप्पाएमाणस्स अंतोमुहुत्तूणा उक्कोसिय ठिती उदीरणा लब्भति। अन्भातो अंतोमुहुत्तं परिवड्ढियस्स आहारसरीरं उप्पाएमाणस्स अंतोमुहुत्तूणा उक्कोसिय ठिती उदीरणा लब्भति। एसो अद्धाच्छेदो।

इयाणिं सामित्तं भण्णति-जेसिं बंधुक्कसा ठिती तेसिं बन्धातो आवलियं गंतूण उदयवतीणं उक्कोसिया ठितीउदीरणा भवति। जेसिं संकमुक्कस्सा ठिती तेसिं बन्धातो दुआवलियं गंतूणं उदयवतीणं उक्कोसिया ठितीउदीरणा भवइ। सम्मत्तसम्माभिच्छत्ताणं उक्कोसट्ठितीसंतकम्मंसिगा सम्मदिट्ठी। सम्मामिच्छदिट्ठी सम्मत्तसम्माभिच्छत्ताणं उक्कोसट्ठितीउदीरगा। आहारसरीरणामाए पमत्तसंजतो तप्पाओगुक्कस्साए ठितीए वट्टमाणो उक्कोसट्ठितीउदीरगो। अवसेसाणं कम्माणं सुत्तेणेव विसेसो भण्णइ। 'णवरं तव्वेइसु'त्ति-संकमे तव्वेदसु अतव्वेदिसु वि उक्कोसो ठितिसंकमो लब्भति, एत्थ उदीरणाए णियमा तव्वेदिसु उक्कोसा ठिती-उदीरणा भवति, अणुदिण्णे ण भवति। कम्मा? तं उदयउदीरणा भवतित्ति। 'णिरयगतिए वा तिसु हेट्ठिम-खितिसु'त्ति-णिरयगतिणिरयाणुपुव्वीणं तिरियो वा मणुयो वा उक्कोसं ठितिं बंधित्ता हेट्ठिल्लाणं तिण्हं

१ सम्यक्त्वस्थिते। २ 'आहारसत्तकम' इत्यन्यम्।

पुढवीणं अण्णयराए उववण्णो तस्स पढमसमयाउ आढत्तं जाव आवलिया ताव उक्कोसा ठितीउदीरणा णिरयगतीए भवति। एवं णिरयाणुपुव्वीए वि। णवरि तिण्णि समया उक्कोसा ठितिउदीरणा होति। हेट्ठिल्लपुढविग्गहणं किं कारणं? भण्णइ–उक्कोसं णिरयगतीपातोग्गं ट्ठितिं बंधमाणो णियमा किण्हलेसिओ भवति। तम्हा तस्स कालगयस्स णेरइएसु उववज्जमाणस्स जहण्णेणं किण्हलेसापरिणामेणं [छ] पंचमाए पुढवीए, मसि-(ज्झि)मेणं (छ)ट्ठाए पुढवीए, उक्कोसेणं किण्हलेसापरिणामेणं सत्तमाए पुढवीए उववातो, तेण हिट्ठिमपुढविग्गहणं॥ ३२॥

(मलय०)—कृता साद्यनादिप्ररूपणा। संप्रत्यद्धाच्छेदस्य स्वामित्वस्य च प्रतिपादनार्थमाह—'अद्धाच्छेओ'त्ति। अद्धाच्छेदः स्वामित्वं च यथा स्थितिसंक्रमेऽभिहितं तथैवात्राप्यवगन्तव्यम्। नवरमयं विशेषः–संक्रमकरणे तदवेदिष्वपि स्थितिसंक्रम उक्तः, उदयाभावेऽपि संक्रमस्य भावात्, उदीरणा पुनरियं तद्वेदिष्वेव वेदितव्या, उदयाभावे उदीरणाया अभावात्। इदमतिसंक्षिप्तमुक्तमिति किञ्चिद्विशेषतो भाव्यते–तत्र येषां कर्मणामुदये सति बन्धोत्कृष्टा स्थितिस्तेषां ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयतैजससप्तकवर्णादिविंशतिनिर्माणास्थिराशुभागुरुलघुमिथ्यात्वषोडशकषायत्रसबादरपर्याप्तप्रत्येकदुःस्वरदुर्भगानादेयायशःकीर्तिवैक्रियसप्तकपञ्चेन्द्रियजातिहुण्डोपघातपराघातोच्छ्वासातपोद्योताशुभविहायोगतिनीचैर्गोत्ररूपाणां षडशीतिसंख्यानां बन्धावलिकायामतीतायामुदयावलिकात उपरितनी सर्वापि स्थितिरुदीरणाप्रायोग्या, केवलं तानि कर्माणि वेदयमानानां वेदितव्या, उदये सत्येवोदीरणाया भावात्। बन्धावलिकारहिता च सर्वा स्थितिर्यत्स्थितिः। इहावलिकाद्विकरूपोऽद्धाच्छेदः तदुदयवन्तस्तूदीरणास्वामिनः। येषां तु कर्मणां मनु-

जगतिसातवेदनीयस्थिरादिषट्कहास्यादिषट्कवेदत्रयशुभविहायोगतिप्रथमसंस्थानपञ्चकप्रथमसंहननपञ्चकोच्चैर्गोत्ररूपाणामेकोनत्रिंशत्संख्याकानामुदये सति संक्रमेणोत्कृष्टा स्थितिः तेषामावलिकात्रिकहीना सर्वा स्थितिरुदीरणाप्रायोग्या, केवलं तानि कर्माणि वेदयमानानां वेदितव्या । अत्र बन्धावलिकासंक्रमावलिकारहिता च सर्वा स्थितिर्यत्स्थितिः । इहावलिकात्रिकरूपोऽद्धाच्छेदः, तदुदयवन्तस्तूदीरणास्वामिनः । एवमुत्तरत्रापि यावान् यावानुदीरणाया अयोग्यः कालस्तावान् तावानद्धाच्छेदः, तदुदयवन्तस्तूदीरणास्वामिनो वेदितव्याः । तथा सप्ततिसागरोपमकोटीकोटीप्रमाणा मिथ्यात्वस्य स्थितिर्मिथ्यादृष्टिना सता बद्धा, ततोऽन्तर्मुहूर्तं कालं यावन्मिथ्यात्वमनुभूय सम्यक्त्वं प्रतिपद्यते । ततः सम्यक्त्वे सम्यग्मिथ्यात्वे चान्तर्मुहूर्तोनां मिथ्यात्वस्थितिं सकलामपि संक्रमयति । संक्रमावलिकाया चातीतायामुदीरणा योग्या, तत्र संक्रमावलिकातिक्रमेऽपि सान्तर्मुहूर्तोनैव । ततः सम्यक्त्वमनुभवतः सम्यक्त्वस्यान्तर्मुहूर्तोना सप्ततिसागरोपमकोटीकोटीप्रमाणोत्कृष्टा स्थितिरुदीरणायोग्या । ततः कश्चित् सम्यक्त्वेऽप्यन्तर्मुहूर्तं स्थित्वा सम्यग्मिथ्यात्वं प्रतिपद्यते । ततः सम्यग्मिथ्यात्वमनुभवतः सम्यग्मिथ्यात्वस्यान्तर्मुहूर्तद्विकोना सप्ततिसागरोपमकोटीकोटीप्रमाणोत्कृष्टा स्थितिरुदीरणायोग्या भवति । तथाहारकसप्तकमप्रमत्तेन सता तद्योग्योत्कृष्टसंक्लेशेनोत्कृष्टस्थितिकं बद्धं तत्कालोत्कृष्टस्थितिकमूलप्रकृत्यभिन्नप्रकृत्यन्तरदलिकं च तत्र संक्रमितं ततस्तत्सर्वोत्कृष्टान्तःसागरोपमकोटीकोटीस्थितिकं जातं, बन्धानन्तरं चान्तर्मुहूर्तमतिक्रम्याहारकशरीरमारभते, तच्चारभमाणो लब्ध्युपजीवनेनौत्सुक्यभावतः प्रमादभाग्भवति । ततस्तस्य प्रमत्तस्य सत आहारकशरीरमुत्पादयत आहारकसप्तकस्यान्तर्मुहूर्तोनोत्कृष्टा स्थितिरुदीरणायोग्या । अत्र प्रमत्तस्य सत आहारकशरीरारम्भकत्वादुत्कृष्टस्थित्युदीरणास्वामी प्रमत्तसंयत एव वेदितव्यः । शेषप्रकृतीनां ग्रन्थकृदेव विशेषमाचष्टे—'निरयेत्यादि' । नरकगतेः, अपिशब्दान्नरकानुपूर्व्याश्च, तिर्यक्पञ्चेन्द्रियो मनुष्यो वोत्कृष्टां स्थितिं बद्ध्वा उत्कृ-

त्कृष्टस्थितिबन्धानन्तरं चान्तर्मुहूर्ते व्यतिक्रान्ते सति तिसृष्वधस्तनपृथिवीषु मध्येऽन्यतरस्यां पृथिव्यां समुत्पन्नः, तस्य प्रथमसमये नरकगतेरन्तर्मुहूर्तहीना सर्वाऽपि स्थितिर्विंशतिसागरोपमकोटीकोटीप्रमाणा उदीरणायोग्या भवति। नरकानुपूर्व्याश्चापान्तरालगतौ समयत्रयं यावदुत्कृष्टा स्थितिरुदीरणायोग्या। अधस्तनपृथिवीत्रयग्रहणे किं प्रयोजनमिति चेद्, उच्यते–इह नरकगत्यादीनामुत्कृष्टां स्थितिं बध्नन्नवश्यं कृष्णलेश्यापरिणामोपेतो भवति। कृष्णलेश्यापरिणामोपेतश्च कालं कृत्वा नरकेषूत्पद्यमानो जघन्यकृष्णलेश्यापरिणामः पञ्चमपृथिव्यामुत्पद्यते। मध्यमकृष्णलेश्यापरिणामः षष्ठपृथिव्यां। उत्कृष्टकृष्णलेश्यापरिणामः सप्तमपृथिव्यामित्यधस्तनपृथिवीत्रयग्रहणं ॥३२॥

(उ०)—कृता साद्यनादिप्ररूपणा, अथाद्धाच्छेदं स्वामित्वं च प्रतिपादयन्नाह—अद्धाच्छेदः स्वामित्वं च यथा स्थितिसंक्रमे प्रोक्तं तथैवात्राप्यवसेयम्। नवरमयं भेदः–संक्रमकरणे तदवेदिष्वपि स्थितिसंक्रम उक्तः, उदयाभावेऽपि संक्रमोपपत्तेः, उदीरणा त्वेषां तद्वेदिष्वेव द्रष्टव्या, उदयाभावे उदीरणाया अभावात्। इदमतिसंक्षिप्योक्तमिति किञ्चिद्वितत्योच्यते–तत्र स्वोदयबन्धोत्कृष्टानां ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयतैजससप्तकवर्णादिविंशतिनिर्माणास्थिराशुभागुरुलघुमिथ्यात्वकशायषोडशकत्रसचतुष्कदुर्भगचतुष्कवैक्रियसप्तकपञ्चेन्द्रियजातिहुण्डोपघातपराघातोच्छ्वासातपोद्योताशुभविहायोगतिनीचैर्गोत्ररूपाणां षडशीतिप्रकृतीनां बन्धावलिकायामतीतायामुदयावलिकात उपरितनी सर्वाऽपि स्थितिरुदीरणाप्रायोग्या तानि कर्माणि वेदयमानानां वेदितव्या। बन्धावलिकारहिता च सर्वा स्थितिर्यत्स्थितिः। इहावलिकाद्विकरूपोऽद्धाच्छेदस्तदुदयवन्त उदीरणास्वामिनः। उदये सति संक्रमोत्कृष्टस्थितिकानां तु मनुजगतिसातवेदनीयस्थिरादिषट्कहास्यादिषट्कवेदत्रयशुभविहायोगतिप्रथमसंस्थानपञ्चकप्रथमसंहननपञ्चकोच्चैर्गोत्ररूपाणामेकोनत्रिंशत्प्रकृतीनामाव-

लिकात्रिकहीना सर्वा स्थितिरुदीरणाप्रायोग्या तानि कर्माणि वेद्यमानानां वेदितव्या । अत्र बन्धावलिकासंक्रमावलिकारहिता सर्वा स्थितिर्यत्स्थितिः, इहावलिकात्रिकरूपोऽद्धाच्छेदस्तदुदयवन्त उदीरणास्वामिनः । एवमग्रेऽपि यावान् यावानुदीरणानर्हः कालस्तावाँस्तावानद्धाच्छेदस्तदुदयवन्तश्चोदीरणास्वामिनोऽवसेयाः । तथा सप्ततिसागरोपमकोटीकोटीप्रमाणां मिथ्यादृष्टिर्मिथ्यात्वस्थितिं बद्ध्वाऽन्तर्मुहूर्तं यावन्मिथ्यात्व एव स्थित्वा सम्यक्त्वं प्रतिपद्यते । ततः सम्यक्त्वे सम्यग्मिथ्यात्वे चान्तर्मुहूर्त्तोनां मिथ्यात्वस्थितिं सकलामपि संक्रमयति, संक्रमावलिकायां चातीतायां तदुदीरणा प्रवर्त्तते, ततः संक्रमावलिकातिक्रमेऽपि साऽन्तर्मुहूर्त्तोनैवेति सम्यक्त्वमनुभवतः सम्यक्त्वस्यान्तर्मुहूर्त्तोना सप्ततिसागरोपमकोटाकोटीप्रमाणोत्कृष्टा स्थितिरुदीरणायोग्या। ततः कश्चित्सम्यक्त्वेऽप्यन्तर्मुहूर्त्तं स्थित्वा सम्यग्मिथ्यात्वं गच्छति । ततः सम्यग्मिथ्यात्वमनुभवतः सम्यग्मिथ्यात्वस्यान्तर्मुहूर्त्तद्विकोना सप्ततिसागरोपमकोटाकोटिप्रमाणोत्कृष्टा स्थितिरुदीरणायोग्या। उक्तं च—"अंतोमुहुत्तहीणा सम्मे मीसम्मि दोहिं मिच्छस्स" । मिथ्यात्वस्योत्कृष्टस्थितिरन्तर्मुहूर्त्तोना सम्यक्त्वे, मिश्रे च द्वाभ्यामन्तर्मुहूर्त्ताभ्यामूनोदीरणायोग्येत्येतदक्षरार्थः । तथाऽऽहारकसप्तकं स्वयोग्योत्कृष्टसंक्लेशेनाप्रमत्तेन सतोत्कृष्टस्थितिकं बद्ध्वा तत्कालोत्कृष्टस्थितिकस्वमूलप्रकृत्यभिन्नप्रकृत्यन्तरदलिकं च तत्र संक्रमय्य सर्वोत्कृष्टान्तःसागरोपमकोटाकोटिस्थितिकं करोति । ततो बन्धानन्तरमन्तर्मुहूर्त्तमतिक्रम्याहारकशरीरं कर्तुमुद्यतते, तच्च कुर्वन् लब्ध्युपजीवनोत्सुक्यभावेन प्रमादं भजते, ततस्तस्य प्रमत्तस्य सत आहारकशरीरं कुर्वत आहारकसप्तकस्यान्तर्मुहूर्त्तोनोत्कृष्टा स्थितिरुदीरणायोग्या । अत्र प्रमत्तस्याहारकशरीरारम्भकत्वादुत्कृष्टस्थित्युदीरणास्वामी प्रमत्तसंयत एव द्रष्टव्यः । अवशिष्टप्रकृतीनां सूत्रकृदेव विशेषमाचष्टे—'निरयगईइ वा वि'

१ पञ्चसंग्रह उदीरणाकरण गा० २९.

## उदीरणायामद्धाच्छेदस्य चित्राणि ।



सम्यक्त्वस्योदीरणायत्स्थितिः आवलिकाधिकान्तर्मुहूर्तैन्यून ७० को० को० सा० प्रमाणा

OOOOO | OOOOO | OOOOOOOOOOOOOOOOOOOOOOO

सम्यक्त्वस्यलता (मिथ्या० संक्रमेण) अन्तर्मु० हीना ७० को० को० प्रमाणा

संक्रमा० उदयाव० (अद्धाच्छेदः) २ आव० न्यूनान्तर्मु०

सम्यक्त्वस्य उदीरणाप्रायोग्याः स्थितयः +द्व्यावलिकाधिकान्तर्मुहूर्त-न्यून ७० को० को० सा० प्रमाणाः

OOOOOOOOOOO | OOOOO | OOOOOOOOOOOOOOOOOOOOOO

मिश्रस्य लता (सम्यक्त्वसंक्रमेण) अन्तर्मुहूर्तहीन ७० को० को० सागरप्रमाणा.

अन्तर्मुहूर्त (सम्यक्त्वोदय-फालीनं) उदयावलि०

अद्धाच्छेद. आवलिकाधिकान्तर्मुहूर्त्तम्

उदीरणाप्रा० स्थितयः ( +आवलिकाधिकान्तर्मुहूर्त-द्वयोन७०कोडाकोडीसागरप्रमाणाः )

इति पद्धत्या शेषाणामपि अद्धाच्छेदः स्वयमभ्यूह्यः

+ग्रन्थकारेणोदयावलिकासत्कावलिकाधिकत्वं न कथितं पर पद्धतिक्रमेणावलिकाधिकत्वग्रहणमावश्यकम्

इत्यादि। नरकगतेरपिशब्दान्नरकानुपूर्व्याश्च तिर्यक्पञ्चेन्द्रियो मनुष्यो वोत्कृष्टां स्थितिं बद्ध्वोत्कृष्टस्थितिबन्धानन्तरं चान्तर्मुहूर्त्ते व्यतीते तिसृष्वधस्तनपृथिवीषु मध्येऽन्यतरस्यां समुत्पत्स्यते, तस्य प्रथमसमये नरकगतेरन्तर्मुहूर्त्तहीना सर्वाऽपि स्थितिर्विंशतिसागरोपमकोटाकोटीमानोदीरणायोग्या भवति। नरकानुपूर्व्याश्चान्तरालगतौ समयत्रयं यावदुत्कृष्टा स्थितिरुदीरणायोग्या। इह नरकगत्यादीनामुत्कृष्टा स्थितिः कृष्णलेश्यापरिणामेनैव बध्यते, तदुपेतश्च कालं कृत्वा नरकेषूत्पद्यमानो जघन्यादिभावेन पञ्चमपृथिव्यादित्रय एवोत्पद्यत इतीहाधस्तनपृथिवीत्रयग्रहणप्रयोजनम् ॥३२॥

देवगतिदेवमणुयाणुपुव्विआयावविगलसुहुमतिगे। अंतोमुहुत्तभग्गा तावइ ऊणं तदुक्कस्सं ॥३३॥

(चू०)—देवगति देवाणुपुव्वी विगलतिगजाती सुहुमअपज्जत्तसाहारणेणं एतेसिं णवण्हं कंमाणं अंतोमुहुत्तूणा उक्कोसिया ठितीउदीरणा भवति। कम्हा? जम्हा जो जत्थ (उ)ववज्जइ सो तप्पाउग्गं पगतिं अंतोमुहुत्तं बन्धिऊणं उववज्जतित्ति एतासिं पगतीणं उक्कोसिया ठिती ठितीसंकमा लब्भति तम्हा अंतोमुहुत्तूणाणि दरिसव्वं। जहा असुभपरिणामवड्ढि वीससागरोवमकोडाकोडी बितिया णिरयगति बद्धा। ततो बन्धावसाणे तप्पाउग्गसंकिलिट्ठपरिणामो दससागरोवमकोडाकोडीठितीयं देवगति बन्धित्तुमाढत्तो। ततो देवगतिं बन्धमाणस्स णिरयगती बज्झमाणपगतिं संकमतित्ति काउं देवगतीए संकमति। सो अंतोमुहुत्तं बन्धिऊण कालगतो देवलोएसु उववण्णो ताव णिरयगतीबन्धकालस्स अंतोमुहुत्तो अतीतो। ततो देवलोएसु उववण्णस्स देवगती उव्वट्टिज्जति ताहे णिरयगतिठितिए वि देवगतिठितिए संकामियाए ठितीउदीरणा लब्भति। एवं अंतोमुहुत्तोणा लब्भइ।

'अंतोमुहुत्त भग्गा' इति–उक्कोसट्ठितिबन्धज्झवसाणातो जो परिवडितो सो भग्गोत्ति वुचति । 'तावति ऊणं तदुक्कस्सं' ति–एतासिं ठिती वीसं सागरोवमकोडाकोडीतो आवलिऊण संकमे लब्भइ । सा ताव अंतोमुहुत्तूणा भवति । बन्धकालअंतोमुहुत्तेण ऊणा तेसिं कम्माणं उक्कोसा ठितीउदीरणा भवति। आयावणामाए वि, आयवणामाए बंधुक्कस्सा एव उक्कोसट्ठिती, जहा देवो उक्कोससंकिलेससंकिलिट्ठो एगिंदियपातोग्गाणं पगतीणं उक्कोसट्ठिति बन्धमाणो बायरपुढविकाएसु उववण्णो । ततो सरीरपज्जत्तीए पज्जत्तस्स आयावणामाए उक्कोसट्ठितीउदीरणा भवति । सा वि ठिति पुव्वलद्धातो अंतोमुहुत्तूणा भवति ॥३३॥

(मलय०)–'देवगति'त्ति। देवगतिदेवानुपूर्वीमनुष्यानुपूर्वीनामातपस्य विकलत्रिकस्य–द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिरूपस्य सूक्ष्मत्रिकस्य च–सूक्ष्मसाधारणापर्याप्तकलक्षणस्य स्वस्वोदये वर्तमाना अन्तर्मुहूर्तभग्नाः–उत्कृष्टस्थितिबन्धाध्यवसायादन्तरमन्तर्मुहूर्तं कालं यावत् परिभ्रष्टाः सन्तस्तावदूनाम्–अन्तर्मुहूर्तोनां तदुत्कृष्टां–देवगत्यादीनामुत्कृष्टां स्थितिमुदीरयन्ति। इयमत्र भावना–इह कश्चित्तथाविधपरिणामविशेषभावतो नरकगतेरुत्कृष्टां स्थितिं विंशतिसागरोपमकोटीकोटीप्रमाणां बद्ध्वा ततः शुभपरिणामविशेषभावतो देवगतेरुत्कृष्टां स्थितिं दशसागरोपमकोटीकोटीप्रमाणां बद्धुमारभते । ततस्तस्यां देवगतिस्थितौ बध्यमानायामावलिकाया उपरि बन्धावलिकाहीनामावलिकात उपरितनीं सर्वामपि नरकगतिस्थितिं संक्रमयति। ततो देवगतेरपि विंशतिसागरोपमकोटीकोटीप्रमाणा स्थितिरावलिकामात्रहीना जाता। देवगतिं च बध्नन् जघन्येनाप्यन्तर्मुहूर्तं कालं यावद्बध्नाति । बन्धानन्तर च कालं कृत्वाऽनन्तरसमये देवो जातः । ततस्तस्य देवत्वमनुभवतो देवगतेरन्तर्मुहूर्तोना विंशतिसागरोपमकोटीकोटीप्रमाणा उत्कृष्टा स्थितिरुदीरणायोग्या भवति । ननूक्तयुक्त्यनुसारेणावलिका-

ऽधिकान्तर्मुहूर्तोनेति प्राप्नोति कथमुच्यतेऽन्तर्मुहूर्तोनेति ? नैष दोषः, यत आवलिकाप्रक्षेपेऽपि तदन्तर्मुहूर्तमेव, केवलं बृहत्तरमवगन्तव्यमिति । एवं देवानुपूर्व्या अपि वाच्यम् । तथा कश्चिन्नरकानुपूर्व्या उत्कृष्टां स्थितिं विंशतिसागरोपमकोटीकोटीप्रमाणां बद्ध्वा ततः शुभपरिणामविशेषतो मनुष्यानुपूर्व्या उत्कृष्टां स्थितिं पञ्चदशसागरोपमकोटीकोटीप्रमाणां बद्धुमारभते। ततस्तस्यां मनुष्यानुपूर्वीस्थितौ बध्यमानायामावलिकाया उपरि बन्धावलिकाहीनामावलिकात उपरितनीं सकलामपि नरकानुपूर्वीस्थितिं संक्रमयति। ततो मनुष्यानुपूर्व्या अपि विंशतिसागरोपमकोटीकोटीप्रमाणा स्थितिरावलिकामात्रहीना जाता । मनुष्यानुपूर्वीं च बध्नन् जघन्येनाप्यन्तर्मुहूर्तं कालं यावद्बध्नाति, तच्चान्तर्मुहूर्तमावलिकोनविंशतिसागरोपमकोटीकोट्यास्त्रुट्यति । बन्धानन्तरं च कालं कृत्वा मनुष्यानुपूर्वीमनुभवतस्तस्या उत्कृष्टा स्थितिरन्तर्मुहूर्तोना विंशतिसागरोपमकोटीकोटीप्रमाणा उदीरणायोग्या। ननु मनुष्यगतेरपि पञ्चदशसागरोपमकोटीकोट्यो बन्धेनोत्कृष्टा स्थितिः प्राप्यते, तथा मनुष्यानुपूर्व्या अपि, न त्वेकस्या अपि विंशतिः । तत उभे अपि संक्रमोत्कृष्टे, संक्रमोत्कृष्टत्वाविशेषे च कथं मनुष्यगतेरिव मनुष्यानुपूर्व्या अपि आवलिकात्रिकहीनोत्कृष्टा स्थितिरुदीरणायोग्या न भवति ? तदयुक्तं, मनुष्यानुपूर्व्या अनुदयसंक्रमोत्कृष्टत्वात् । तदुक्तं—"[1]मणुयाणुपुव्वि मीसग-आहारग-देवजुयल-विगलाणि । सुहुमातितिगं-तित्थं अणुदयसंकमणुक्कोसा ॥" अनुदयसंक्रमोत्कृष्टानां च जघन्यतोऽप्यन्तर्मुहूर्तोनाया एवोत्कृष्टस्थितेरुदीरणायोग्यत्वात् । मनुष्यगतिस्तूदयसंक्रमोत्कृष्टा । तदुक्तं—"[2]मणुगइ सायं सम्मं थिर हासाइच्छ वेय सुभखगई। रिसभचउरंसगाईपणुच्चुदयसंकमुक्कोसा ॥" ततस्तस्या आवलिकात्रिकहीनैवोत्कृष्टा स्थितिरुदीरणायोग्या भवतीति । एवमातपादीनामप्यन्तर्मुहूर्तोना उत्कृष्टा स्थितिरुदीरणायोग्या भावनीया । नन्वनुदयसंक्रमोत्कृष्टस्थि-

१ पञ्चसंग्रह बन्धव्यद्वार गा० ६३ २ गा० ६२

तांनां प्रकृतीनामन्तर्मुहूर्तोना उत्कृष्टा स्थितिरुदीरणायोग्या भवतु, आतपनाम तु बन्धोत्कृष्टं ततस्तस्य बन्धोदयावलिकाद्विकरहितवोत्कृष्टा
म्थितिरुदीरणाप्रायोग्या प्राप्नोति, कथमुच्यतेऽन्तर्मुहूर्तोनेति ? उच्यते—इह देव एवोत्कृष्टे संक्लेशे वर्तमान एकेन्द्रियप्रायोग्याणा-
मातपस्थावरैकेन्द्रियजातीनामुत्कृष्टां स्थितिं बध्नाति, नान्यः। स च तां बद्ध्वा तत्रैव देवभवेऽन्तर्मुहूर्तं कालं यावदवतिष्ठते। ततः
कालं कृत्वा बादरपृथ्वीकायिकेषु मध्ये समुत्पद्यते। समुत्पन्नः सन् शरीरपर्याप्त्या पर्याप्त आतपनामोदये वर्तमानस्तदुदीरयति। तत
एवं सति तस्यान्तर्मुहूर्तोनैवोत्कृष्टा स्थितिरुदीरणायोग्या भवति। आतपग्रहणं चोपलक्षणम्। तेनान्यासामपि स्थावरैकेन्द्रियजातिनरक-
द्विकतिर्यग्द्विकौदारिकसप्तकान्त्यसंहनननिद्रापञ्चकरूपाणामेकोनविंशतिसंख्याकानामनुदयबन्धोत्कृष्टानामन्तर्मुहूर्तोना उत्कृष्टा स्थिति-
रुदीरणायोग्या वेदितव्या। तत्र स्थावरैकेन्द्रियजातिनरकद्विकानां भावना कृता। शेषाणां क्रियते—तत्र नारकः तिर्यग्द्विकौदारिकसप्त
कान्त्यसंहननानामुत्कृष्टां स्थितिं बद्ध्वा ततो मध्यमपरिणामः सन् तत्रैवान्तर्मुहूर्तं स्थित्वा तिर्यक्षूत्पन्न उत्कृष्टामुदीरणां करोति। नि-
द्रापञ्चकस्याप्युदये उत्कृष्टां स्थितिमुत्कृष्टेन संक्लेशेन बद्ध्वा ततोऽन्तर्मुहूर्ते गते सति निद्रोदये उत्कृष्टामुदीरणां करोति ॥२३॥

(३०)—देवगतिदेवानुपूर्वीमनुष्यानुपूर्वीणामातपस्य विकलत्रिकस्य द्वित्रिचतुरिन्द्रियजातिरूपस्य सूक्ष्मत्रिकस्य च सूक्ष्मापर्याप्त-
साधारणस्य स्वस्वोदये वर्त्तमाना अन्तर्मुहूर्त्तभग्नाः—उत्कृष्टस्थितिबन्धाध्यवसायानन्तरमन्तर्मुहूर्त्तमात्रव्यवधानभाज इत्यर्थः, तावदूना-
मन्तर्मुहूर्त्तोनां तदुत्कृष्टां—देवगत्यादीनामुत्कृष्टां स्थितिमुदीरयन्ति। अत्रेयं भावना—इह कश्चित्परिणामविशेषेण नरकगतेरुत्कृष्टां स्थितिं
विंशतिसागरोपमकोटाकोटिप्रमाणां बद्ध्वा ततः शुभपरिणामविशेषसंपन्नया देवगतेरुत्कृष्टां स्थितिं दशसागरोपमकोटीकोटीप्रमाणां
बद्धुमारभते, तस्यां देवगतिस्थितौ बध्यमानायां स्वबन्धकालरूपावलिकाया उपरि बन्धावलिकाहीनामुपरितनीं सर्वामपि नरकगति-

स्थितिं संक्रमयति, ततो देवगतेरपि विंशतिसागरोपमकोटीकोटीप्रमाणा स्थितिरावलिकामात्रहीना जायते, देवगतिं च बध्नन् जघन्येनाप्यन्तर्मुहूर्त्तं यावद्बध्नाति, बन्धानन्तरं च कालं कृत्वाऽनन्तरसमये देवो जातः, देवत्वं चानुभवतस्तस्य देवगतेरन्तर्मुहूर्त्तोना विंशतिसागरोपमकोटाकोटीप्रमाणोत्कृष्टस्थितिरुदीरणायोग्या भवति, आवलिकाद्विकान्तर्मुहूर्त्तोनत्वेऽप्यावलिकाप्रक्षेपकृतबृहत्तरान्तर्मुहूर्त्तोनत्वमविरुद्धमेवेति नावलिकोनत्वमपि पृथग्गृहीतम्, एवं देवानुपूर्व्या अपि वाच्यम्। तथा कश्चित्संक्लेशविशेषेण नरकानुपूर्व्या उत्कृष्टां स्थितिं विंशतिसागरोपमकोटाकोटीप्रमाणां बद्ध्वा ततः शुभपरिणामविशेषेण मनुष्यानुपूर्व्या उत्कृष्टां स्थितिं पञ्चदशसागरोपम कोटाकोटीमानां बद्धुमारभते, तस्यां मनुष्यानुपूर्वीस्थितौ बध्यमानायामावलिकात उपरितनीं बन्धावलिकाहीनां सकलामपि नरकानुपूर्वीस्थितिं संक्रमयति, ततो मनुष्यानुपूर्व्या अपि स्थितिरावलिकामात्रहीनविंशतिसागरोपमकोटाकोटिप्रमाणा जाता। मनुष्यानुपूर्वीं च बध्नन् जघन्येनाप्यन्तर्मुहूर्त्तं यावद्बध्नाति, तच्चान्तर्मुहूर्त्तं संक्रमलब्धोत्कृष्टस्थितेस्त्रुटचति, ततो बन्धानन्तरं कालं कृत्वा मनुष्यानुपूर्वीमनुभवतस्तस्या उत्कृष्टस्थितिरन्तर्मुहूर्त्तोनविंशतिसागरोपमकोटाकोटिप्रमाणोदीरणायोग्या। ननु मनुष्यगतिमनुष्यानुपूर्व्योरुभयोरपि बन्धेन पञ्चदशसागरोपमकोटीकोटच उत्कृष्टा स्थितिः प्राप्यते, न त्वेकस्या अपि विंशतिः, तत उभयोरपि संक्रमोत्कृष्टत्वाविशेषात् कथं मनुष्यगतेरिव मनुष्यापूर्व्या अपि नावलिकात्रिकहीनोत्कृष्टा स्थितिरुदीरणायोग्येष्यते इति चेत् ?, मैवं, मनुष्यानुपूर्व्या अनुदयसंक्रमोत्कृष्टत्वात्, अनुदयसंक्रमोत्कृष्टानां च जघन्यतोऽप्यन्तर्मुहूर्त्तोनाया एवोत्कृष्टस्थितेरुदीरणायोग्यत्वात्, मनुष्यगतेस्तूदयसंक्रमोत्कृष्टत्वेन तस्या आवलिकात्रिकहीनोत्कृष्टस्थितेरेवोदीरणायोग्यत्वसंभवात्। एवमातपादीनामप्यन्तर्मुहूर्त्तोनोत्कृष्टस्थितेरुदीरणायोग्यत्वं भावनीयम्। नन्वनुदयसंक्रमोत्कृष्टस्थितिप्रकृतीनामन्तर्मुहूर्त्तोना भवतूत्कृष्टस्थितिरुदीरणायोग्या, आत-

पनाम्नस्तु बन्धोत्कृष्टत्वेन बन्धोदयावलिकाद्विकरहितेवोत्कृष्टस्थितिरुदीरणायोग्या भवतीति कथमुच्यतेऽन्तर्मुहूर्त्तोनेति ? उच्यते, इह देव एवोत्कृष्टसंक्लेशवानेकेन्द्रिययोग्यानामातपस्थावरैकेन्द्रियजातीनामुत्कृष्टां स्थितिं बध्नाति, नान्यः, स च तां बद्ध्वा तत्रैव देवभवेऽन्तर्मुहूर्त्तं यावत्तिष्ठति, ततः कालं कृत्वा बादरपृथ्वीकायिकेषूत्पद्य शरीरपर्याप्त्या पर्याप्तः सन्नातपनामोदये वर्तमानस्तदुदीरयति, ततस्तस्यैवमन्तर्मुहूर्त्तहीनैवोत्कृष्टस्थितिरुदीरणायोग्या भवतीति। आतपग्रहणं चोपलक्षणं, तेनान्यासामपि स्थावरैकेन्द्रियजातिनरकद्विकतिर्यग्द्विकौदारिकसप्तकान्त्यसंहनननिद्रापञ्चकरूपाणामेकोनविंशतिप्रकृतीनामनुदये बन्धोत्कृष्टानामन्तर्मुहूर्त्तोनोत्कृष्टस्थितिरुदीरणायोग्या ज्ञातव्या। तत्र स्थावरैकेन्द्रियजातिनरकद्विकानां भावना जातैव, शेषाणां क्रियते—तत्र नारकस्तिर्यग्द्विकौदारिकसप्तकान्त्यसंहननानामुत्कृष्टां स्थितिं बद्ध्वा ततो मध्यमपरिणामः संस्तत्रैवान्तर्मुहूर्तं स्थित्वा तिर्यक्षूत्पन्न उत्कृष्टामुदीरणां करोति, निद्रापञ्चकस्य चानुदये उत्कृष्टसंक्लेशेनोत्कृष्टस्थितिं बद्ध्वा ततोऽन्तर्मुहूर्त्तात्यये निद्रोदये उत्कृष्टामुदीरणां करोतीति ॥२३॥

तित्थयरस्स य पल्लासंखिज्जइमे जहन्नगे इत्तो। थावरजहन्नसंतेण समं अहिगं व बंधंतो ॥३४॥
गंतूणावलिमित्तं कसायबारसगभयदुगंच्छाणं। निद्दाइपंचगस्स य आयावुज्जोयनामस्स ॥३५॥

(चू०)—तित्थगरणामाए खवियसेसाए पलितोवमस्स असंखेज्जभागमेत्ता ठिती सजोगिपढमसमए चेव उक्कोसिया ठितीउदीरणा होति। उक्कोससामित्तं भणियं॥

इयाणिं जहण्णसामित्तं भण्णइ—'जहण्णगे एत्तो'। जहण्णट्ठितीउदीरणासामित्तं भण्णइ। 'थावरजहण्णसंतेण

समं अहिगं व बंधंतो'त्ति। एगिंदियस्स सव्वखुड्डगं सत्तं, थावरजहण्णसंतेण समं, समं णाम सरिसं, ततो तुल्लं वा, अहियं वा बन्धमाणो 'गंतूणावलियमित्तो'त्ति–एगिंदियपातोग्गे सव्वजहण्णे संतकम्मे जाए आवलियमेत्तं गंतूण 'कसायबारसगभयदुगंछाणं णिद्दातिपंचगस्सयआतावुज्जोवणामस्स'-संजलणवज्जा बारस वि कसाया भय दुगंच्छा णिद्दापणगं आयावउज्जोवं एतेसिं एक्कवीसाए कम्माणं सो चेव एगिंदियउ जहन्नियं ठितिउदीरणं करेति। कहं ? भण्णइ–बारसकसाय(भय)दुगंछाणं णिद्दापणगाणं च धुवबन्धित्ताउ खुड्डगयरा ठिति ण लब्भति। आयावुज्जोवाणं ठिति पडिवक्खस्स अभावातो ततो अण्णा जहण्णा ण लब्भतित्ति ॥३४–३५॥

(मलय०)—'तित्थयरस्स'त्ति। इह पूर्वं तीर्थकरनाम्नः स्थितिं शुभैरध्यवसायैरपवर्त्यापवर्त्य पल्योपमासंख्येयभागमात्रा शेषीकृता। ततोऽनन्तरसमये उत्पन्नकेवलज्ञानः सन् तामुदीरयति। उदीरयतश्च प्रथमसमये उत्कृष्टोदीरणा। सर्वदैव चेयन्मात्रैव स्थितिरुत्कृष्टा तीर्थकरनाम्न उदीरणाप्रायोग्या प्राप्यते, नाधिकेति। तदेवमुक्तमुत्कृष्टस्थित्युदीरणास्वामित्वम्। सम्प्रति जघन्यस्थित्युदीरणास्वामित्वमाह–'जहन्नगे इत्तो'। इत ऊर्ध्वं जघन्ये–जघन्यस्थित्युदीरणायां स्वामित्वमभिधीयते। प्रतिज्ञातमेव निर्वाहयति–'थावर'इत्यादि। स्थावरस्य सतो यज्जघन्यं–सर्वस्तोकं स्थितिसत्कर्म तेन सममधिकं वा मनाग्मात्रेणाभिनवं कर्म स एव सर्वजघन्यस्थितिकर्मा स्थावर एकेन्द्रियो बध्नन् बन्धावलिकां गत्वा–बन्धावलिकायामतीतायामित्यर्थः, आद्यद्वादशकषायभयजुगुप्सानिद्रापञ्चकातपोद्योतनाम्नामेकविंशतिप्रकृतीनां जघन्यां स्थित्युदीरणां करोति। इहातपोद्योतवर्जानामेकोनविंशतिप्रकृतीनां ध्रुवबन्धित्वादातपोद्योतयोस्तु प्रतिपक्षाभावात् अन्यत्र जघन्यतरा स्थितिर्न प्राप्यते, तत एकेन्द्रिय एव यथोक्तस्वरूप आसां प्रकृतीनां जघन्यस्थित्युदीरणास्वामी ॥३४–३५॥

(उ०)—तीर्थंकरस्य पूर्वं शुभैरध्यवसायैरपवर्त्यापवर्त्य शेषीकृते पल्योपमासंख्येयभागमात्रे सयोगिकेवलिनः प्रथमसमये उत्कृष्टो- दीरणा प्रवर्तते, सर्वदैवोत्कर्षतोऽपीयन्मात्रैव स्थितिरुदीरणायोग्या तीर्थंकरनाम्नः प्राप्यते, नाधिका, उक्तं च—"[1]इयसेसा तित्थठिई पल्लासंखिज्जमित्तिया जाया । तीसे सजोगिपढमे समए उदीरणुक्कोसा ॥" आयुषां तु चतुर्णामपि स्वस्वोत्कृष्टस्थितिबन्धादूर्ध्व- मुदयाद्यसमये उत्कृष्टा स्थित्युदीरणा। तदेवमभिहितमुत्कृष्टस्थित्युदीरणास्वामित्वम्, अथ जघन्यस्थित्युदीरणास्वामित्वनिरूपणं प्रतिजा- नीते—'जहन्नगे इत्तो'। इतः—ऊर्ध्वं 'जघन्ये'—जघन्यस्थित्युदीरणायां स्वामित्वमभिधीयते। प्रतिज्ञातमेवाह—'स्थावर'इत्यादि। स्थावरस्य सतो यज्जघन्यमतिहीनं 'सदिति'—स्थितिसत्कर्म तेन सममीपन्मात्रेणाधिकं वाऽभिनवं कर्म बध्नन् स एव सर्वजघन्यस्थितिसत्कर्मा स्थावरो बन्धावलिकां गत्वा—बन्धावलिकायां व्यतीतायामित्यर्थः, आद्यद्वादशकषायभयजुगुप्सानिद्रापञ्चकातपोद्योतनाम्नामेकविंशति- प्रकृतीनां जघन्यां स्थित्युदीरणां करोति । इहातपोद्योतरहितानामेकोनविंशतिप्रकृतीनां ध्रुवबन्धित्वादातपोद्योतयोस्त्वप्रतिपक्षत्वात्प्रका- रान्तरेणान्यत्र जघन्यतरस्थित्युदीरणाया अप्राप्तेर्यथोक्तस्वरूप एकेन्द्रिय एवासां प्रकृतीनां जघन्यस्थित्युदीरणास्वामी प्रोक्तः ॥३४–३५॥

**एगिंदियजोग्गाणं इयरा वंधित्तु आलिगं गंतुं। एगिंदियागए तट्ठिइए जाईणमवि एवं ॥३६॥**

(चू०)—'एगिंदियजोग्गाणं इयरा बन्धितु आलिगं गंतु'त्ति। एगिंदियस्स उदीरणाजोग्गा जे कम्मा ते एगिं- दियजोग्गा, 'इयरा बन्धित्तु'त्ति—तेसिं पडिवक्खे बन्धित्तूणं अंतोमुहुत्तं ततो वेदिज्जमाणकम्मं बन्धित्तुमाढत्तस्स आवलियं गंतुत्ति—आवलियं गंतूणं, आवलियापढमसमयबद्धा लया बितीयावलियाए पढमसमए उदीरणं एति-

[1] पञ्चसंग्रह उदीरणाकरण गा० ३१

त्ति तम्मि समए जहन्निया ठिती उदीरणा ण लब्भति, तम्हा पढमावलियाए चेव चरिमसमए पुव्वकालबद्धस्स कम्मस्स जहण्णिया ठ्ठितीउदीरणा लब्भति। के ते एगिंदियजोग्गा कम्मा? भण्णइ–एगिंदियजातीथावर-सुहूमसहारणाणि, एते[ण] एगिंदियजोग्गा। कम्मा? भण्णइ–एगिंदियजातीए जहण्णठितीसंतकम्मिगो इयराउ चत्तारि जातीतो पडिवाडीए बंधित्तु एगिंदियजाति बंधित्तुमाढत्तो, ततो बन्धपढमसमयाउ आवलियं गंतुं बन्धावलियाए चरिमसमए पुव्वबद्धा एगिंदियजातीए जहण्णियं ठ्ठितिं उदीरेति। थावरसुहुमसाहारणाणं पि अप्पप्पणो पडिवक्खं बन्धिऊणं पुणो तं पगतिं बन्धिउमाढत्तो, ततो बन्धावलियाए चरिमसमए पुव्वबद्धाए एगिंदियपाउग्गाए जहण्णियाए ठितीउदीरणा लब्भति। 'एगिंदियागए तट्ठितीए जाईणमवि एवं'–एगिंदियाओ आगओ एगिंदियागओ, तंमि एगिंदियागए एगिंदियपातोग्गा जहण्णिया ठ्ठितीउदीरणा लब्भति। 'जातिणमवि एवं च'त्ति–बेइंदियतेइंदियचउरिंदियजातीणं पि एवं चेव कित्तणयं होइ। एगिंदियो जहण्णगट्ठितिसंतकम्मितो तओ उवट्टित्तु बेइंदिएसु उववण्णो। तओ पुव्वगट्ठं (बद्धां)बेइंदियजाइं वेइत्तुमाढत्तो। तम्मि चेव समए एगिंदियजाइ बन्धित्तुमाढत्तो, सो सव्वमहं ति बन्धगद्धं बंधिउं तओ तेइंदियचउरिंदियपंचिंदियजाइउ एवं चेव बन्धित्तु उक्कोसं बन्धगद्धं सव्वासिं बन्धगद्धाणं अंतोमुहुत्तं, तओ बेइंदियजाइं बंधिउमाढत्तो, ततो बेइंदियजाति बन्धावलियाए चरिमसमए एगिंदियजहण्णसंतकम्माउ एवतिकालेण ऊणियाए बेइंदियजातीए जहण्णिया ठ्ठितीउदीरणा। एवं तेइंदियचउरिंदियजातीणं पि भाणियव्वं ॥३६॥ ॥५६॥

(मलय०)—'एगिंदिय'त्ति। एकेन्द्रियाणामेवोदीरणां प्रति या योग्याः प्रकृतयस्ता एकेन्द्रिययोग्याः—एकेन्द्रियजातिस्थावरसूक्ष्मसाधारणनामानस्तासामेकेन्द्रियो जघन्यस्थितिसत्कर्मा, इतरा–एकेन्द्रियजात्यादिप्रतिपक्षभूता द्वीन्द्रियजात्यादिकाः प्रकृतीर्बद्ध्वा, तद्यथा–एकेन्द्रियजातेर्द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातीः, स्थावरसूक्ष्मसाधारणानां त्रसबादरप्रत्येकनामानि, तत एकेन्द्रियजात्यादीर्बध्नाति, ततो बन्धावलिका गत्वाऽतिक्रम्य बन्धावलिकायाश्चरमसमये एकेन्द्रियजात्यादीनां जघन्यां स्थित्युदीरणां करोति। इयमत्र भावना–एकेन्द्रियः सर्वजघन्यस्थितिसत्कर्मा द्वीन्द्रियादिजातीः सर्वा अपि परिपाटया बध्नाति, ततस्तद्बन्धानन्तरमेकेन्द्रियजातिं बद्धुमारभते, ततो बन्धावलिकायाश्चरमसमये पूर्वबद्धायास्तस्या एकेन्द्रियजातेर्जघन्यां स्थित्युदीरणां करोति। इह बन्धावलिकाया अनन्तरसमये बन्धावलिकाप्रथमसमयबद्धा अपि लता उदीरणामायाति, ततो जघन्या स्थित्युदीरणा न प्राप्यते इति कृत्वा बन्धावलिकायाश्चरमसमये इत्युक्तम्। यावता कालेन प्रतिपक्षभूताः प्रकृतीर्बध्नाति तावता कालेन न्यूना एकेन्द्रियजातेः स्थितिर्भवति, ततः स्तोकतरा प्राप्यते इति प्रतिपक्षभूतप्रकृतिबन्धोपादानम्। एवं स्थावरसूक्ष्मसाधारणानामपि भावना कर्तव्या। केवलमेतेषां प्रतिपक्षभूताः प्रकृतयः त्रसबादरप्रत्येकनामानो वेदितव्याः। 'एगिंदिय'इत्यादि। जातीनामपि–द्वीन्द्रियादिजातीनामपि एवं पूर्वोक्तेन प्रकारेण एकेन्द्रियादागतस्तत्स्थितिकः–एकेन्द्रियप्रायोग्यजघन्यस्थितिको जघन्यां स्थित्युदीरणां करोति। अत्रापीयं भावना–एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य द्वीन्द्रियेषु मध्ये समुत्पन्नस्ततः पूर्वबद्धां द्वीन्द्रियजातिमनुभवितुमारभते। अनुभवप्रथमसमयादारभ्य चैकेन्द्रियजातिं दीर्घकालं बद्धुं लग्नः। ततस्तथैव त्रीन्द्रियजातिं चतुरिन्द्रियजातिं पञ्चेन्द्रियजातिं च क्रमेण बध्नाति। एवं च महान्ति चत्वार्यन्तर्मुहूर्तानि अतिक्रान्तानि। ततो द्वीन्द्रियजातिं बद्धुमारभते। ततो बन्धावलिकायाश्चरमसमये तस्या द्वीन्द्रियजातेरेकेन्द्रियभवोपा-

र्जितस्थितिसत्कर्मापेक्षयाऽन्तर्मुहूर्तचतुष्टयबन्धावलिकान्यूनाया जघन्यां स्थित्युदीरणां करोति। बन्धावलिकाचरमसमयग्रहणे च कारणं प्रागेवोक्तम्। एवं त्रीन्द्रियचतुरिन्द्रियजात्योरपि भावना कार्या ॥३६॥

(उ०)—'एकेन्द्रिययोग्यानाम्'। एकेन्द्रियाणामेवोदीरणां प्रति योग्यानामेकेन्द्रियजातिस्थावरसूक्ष्मसाधारणनामप्रकृतीनामेकेन्द्रियो जघन्यस्थितिसत्कर्मा इतरा–एकेन्द्रियजातिप्रतिपक्षा द्वित्रिचतुरिन्द्रियपञ्चेन्द्रियजातीः स्थावरसूक्ष्मसाधारणप्रतिपक्षाश्च–त्रसबादरप्रत्येकप्रकृतीर्बद्ध्वा तत एकेन्द्रियजात्यादिप्रकृतीर्बध्नन्नावलिकां–बन्धावलिकामतिक्रम्य बन्धावलिकायाश्चरमसमये एकेन्द्रियजात्यादीनां जघन्यां स्थित्युदीरणां करोति। इहेयं भावना–एकेन्द्रियः सर्वजघन्यस्थितिसत्कर्मा द्वीन्द्रियादिजातीः सर्वा अपि क्रमेण बद्ध्वा तदनन्तरमेकेन्द्रियजातिं बद्धुमारभते, तद्बन्धावलिकान्तसमये प्राग्बद्धाया एकेन्द्रियजातेर्जघन्यां स्थित्युदीरणां करोति। इह बन्धावलिकानन्तरसमये बन्धावलिकाप्रथमसमयबद्धानामपि लतानामुदीरणाप्राप्तेर्जघन्या स्थित्युदीरणा न प्राप्यते इति बन्धावलिकान्तसमयग्रहणम्। प्रतिपक्षभूतप्रकृतिबन्धोपादानं च तद्बन्धे यावान् कालः संभवति तावन्न्यूनतयैकेन्द्रियजातिस्थित्युदीरणायाः स्तोकतरत्वप्रतिपत्तये, एवं स्थावरसूक्ष्मसाधारणेष्वपि प्रतिपक्षत्रसबादरप्रत्येकबन्धान्तरिततया भावना कर्तव्या। 'एगिंदियागए' त्ति। जातीनामपि–द्वीन्द्रियादिजातीनामपि, एवं–प्रागुक्तप्रकारेणैकेन्द्रियादागतस्य 'तत्स्थितिकस्य'–एकेन्द्रियप्रायोग्यजघन्यस्थितिकस्य जघन्या स्थित्युदीरणा भवति। तथाहि–एकेन्द्रियो जघन्यस्थितिसत्कर्मैकेन्द्रियभवादुद्धृत्य द्वीन्द्रियेषूत्पन्नः, ततः पूर्वबद्धां द्वीन्द्रियजातिमनुभवितुमारभते, अनुभवाद्यसमयादारभ्यैव चैकेन्द्रियजातिं द्राघीयसा कालेन बद्धुं प्रवृत्तः, ततस्तथैव त्रिचतुःपञ्चेन्द्रियजातीः क्रमेण बध्नाति, एवं च बृहदन्तर्मुहूर्तचतुष्कमपगच्छति, ततो द्वीन्द्रियजातिं बद्धुमारभते, ततो बन्धावलिकान्तसमये तस्या द्वीन्द्रियजातेरेकेन्द्रियभ-

पार्जितस्थितिसत्कर्मापेक्षयाऽन्तर्मुहूर्त्तचतुष्टयबन्धावलिकान्यूनाया जघन्यां स्थित्युदीरणां करोति । एवं त्रीन्द्रियचतुरिन्द्रियजात्योरपि भावना कार्या ॥ ३६ ॥

**वेयणिया नोकसायाऽसमत्तसंघयणपंचनीयाण । तिरियदुगअयसदूभगणाइज्जाणं च संनिगए ॥३७॥**

(चू०)—सायावेअणिअ असायावेअणिअ हासरति अरतिसोग अपज्जत्तगं अंतिमा पंच संघयणा णीयागोयं तिरियगति तिरियाणुपुव्वी अजसं दूभगं अणाएज्जं एतेसिं अट्ठारसण्हं कम्माणं संणिपंचिंदियंमि जहण्णिया ठितीउदीरणा लब्भइ। कम्हा ? परियत्तमाणीणं पगतीणं संणिपंचिंदियंमि सेसजीवेहिंतो ठितिबन्धगद्धा सव्वमहतित्ति काउं । तम्हा एगिंदियादि उदयो लब्भमाणो वि ण घेप्पइ। एगिंदिउ जहण्णसंतकम्मिउ सातस्स ततो उव्वट्टित्तु सन्निपंचिंदियपज्जत्तगेसु उववण्णो । तंमि चेव समए सायवेयगो असातं बंधिउमाढत्तो । अंतोमुहुत्तं दीहं बंधगद्धं असायं बन्धित्तु ततो पुणो सायं बंधित्तुमाढत्तस्स सायबन्धावलियाए चरिमसमए पुव्वबद्धसायजहण्णसंतकम्मस्स जहण्णिया ट्ठितीउदीरणा भवति। एवं असायस्स विवज्जासो भाणियव्वो । हस्सरतीणं जहा सायस्स तहा भाणियव्वं। अरतिसोगाणं जहा असायस्स तहा भाणियव्वं । असमत्तं–अपज्जत्तगं, तस्स एगिंदिउ जहण्णट्ठिती संतकम्मिगो ततो उव्वट्टित्तु सण्णिपज्जत्तकेसु उववण्णो अपज्जत्तगो तंमि चेव समए पज्जत्तगणामं बंधिउमाढत्तो चिरं बन्धित्तु ततो पुणो अपज्जत्तगं बंधमाणस्स अपज्जत्तगबन्धावलियाचरिमसमए पुव्वबद्धस्स अपज्जत्तगजहण्णसंतकम्मस्स जहण्णिया ट्ठितीउदीरणा लभति। संघयणपंचगस्स वि वेदिज्जमाणं मोत्तु सेसा

पंच वि बन्धावियव्वा। ततो वेदिज्जमाणं बन्धिउमाढत्तस्स बन्धावलियाए चरिमसमए जहण्णिया ठ्ठितीउदीरणा भाणियव्वा। णीयागोयस्स सो चेव एगिंदिउ णीयागोयजहण्णसंतकंमिगो एगिंदिएहिंतो उव्वट्टित्तु सण्णिपंचिंदियपज्जत्तगेसु उववण्णो जहा असायस्स तहा भाणियव्वं। तिरियगतिणामाए सो चेव, णवरि बायरे तेउकाइउ वाउकायिउ विसोहिए हयसमुप्पत्तिं कम्मं काऊणं ततो उव्वट्टित्तु सण्णिपज्जत्तगतिरिएसु उववण्णो। तंमि चेव समए मणुयगतिं बंधित्तुमाढत्तो दीहाए बन्धगद्धापुण्णाए तिरियगति बन्धित्तुमाढत्तस्स तिरियगति बंधावलियाए चरिमसमए तिरियगति जहण्णियं ठ्ठितिं उदीरेइ। तिरियाणुपुव्वीए सो चेव बायरतेऊवाऊपज्जत्तगातो आगतो सण्णीतिरियो ततियसमए वट्टमाणो तिरियाणुपुव्वीजहण्णगो उदीरगो। सण्णिगहणं विसुद्धो तं बहुगं खवेति। अजसदूभगअणादेज्जाणं अप्पणो पडिवक्खं बन्धवियव्वो। ततो वेदिज्जमाणं बंधमाणस्स बंधावलियाए चरिमसमए जहण्णिया ठ्ठितीउदीरणा ॥३७॥

(मलय०)—'वेयणिय'त्ति। सातासातवेदनीयस्य हास्यरत्यरतिशोकापर्याप्तकान्तिमपञ्चसंहनननीचैर्गोत्रतिर्यग्गतितिर्यगानुपूर्व्ययशःकीर्तिदुर्भगानादेयरूपाणामष्टादशप्रकृतीनां संज्ञिपञ्चेन्द्रियगतौ जघन्या स्थित्युदीरणा। भावना त्वियम्—एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य पर्याप्तसंज्ञिपञ्चेन्द्रियेषु मध्ये समुत्पन्नः, उत्पत्तिप्रथमसमयादारभ्य च सातवेदनीयमनुभवन् असातवेदनीयं बृहत्तरमन्तर्मुहूर्तकालं यावद्बध्नाति। ततः पुनरपि सातं बद्धुमारभते। ततो बन्धावलिकायाश्चरमसमये पूर्वबद्धस्य सातवेदनीयस्य जघन्यां स्थित्युदीरणां करोति। एवमसातवेदनीयस्यापि द्रष्टव्यम्। केवलं सातवेदनीयस्थानेऽसातवेदनीयमुच्चारणीयम्—असातवेदनीयमिति। हास्य-

न्योः सातवत्, अरतिशोकयोरसातवद्भावना कार्या। असमाप्तमपर्याप्तकं नाम एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्या-पर्याप्तसंज्ञिपञ्चेन्द्रियमध्ये समुत्पन्न उत्पत्तिप्रथमसमयादारभ्य च पर्याप्तकनाम बृहत्तरमन्तर्मुहूर्तं कालं यावद्बध्नाति। ततः पुनरपि अपर्याप्तकनाम बद्धुमारभते। ततो बन्धावलिकायाश्चरमसमये पूर्वबद्धस्यापर्याप्तकनाम्नो जघन्यां स्थित्युदीरणां करोति। संहननपञ्च-कस्य तु मध्ये वेद्यमानं संहननं मुक्त्वा शेषसंहननानां प्रत्येकं बन्धकालोऽतिदीर्घो वक्तव्यः। ततो वेद्यमानसंहननस्य बन्धे बन्धावलि-काचरमसमये जघन्या स्थित्युदीरणा। नीचैर्गोत्रमसातवद्वेदितव्यम्। तथा तैजस्कायिको वायुकायिको वा बादरः सर्वजघन्यस्थितिसत्क-र्मा पर्याप्तसंज्ञितिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पन्नः। ततो बृहत्तरमन्तर्मुहूर्तं कालं यावन्मनुजगतिं बध्नाति। तद्बन्धानन्तरं च तिर्यग्ग-तिं बद्धुमारभते। ततो बन्धावलिकायाश्चरमसमये तस्यास्तिर्यग्गतेर्जघन्यां स्थित्युदीरणां करोति। एवं तिर्यगानुपूर्व्या अपि वक्तव्यम्। नवरमपान्तरालगतौ तृतीयसमये जघन्या स्थित्युदीरणा वाच्या। अयशःकीर्तिदुर्भगानादेयानां चासातस्येव भावना कार्या। केवल-मिह प्रतिपक्षप्रकृतीनां यशःकीर्तिसुभगादेयानां बन्धो वाच्यः ॥३७॥

(उ०)—वेदनीयस्य–सातासातयोर्नोकषायाणां–हास्यरत्यरतिशोकानां, शेषाणां वक्ष्यमाणत्वात्, असमाप्तस्यापर्याप्तकनाम्नः, संहन-नपञ्चकस्य वज्रर्षभनाराचवर्जानां पञ्चानां संहननानां नीचैर्गोत्रस्य तिर्यग्द्विकस्य–तिर्यग्गतितिर्यगानुपूर्वीरूपस्य तथाऽयशःकीर्तिदुर्भ-गानादेयानां सर्वसङ्ख्ययाऽष्टादशप्रकृतीनां संज्ञिपञ्चेन्द्रिये जघन्या स्थित्युदीरणा। भावना त्वियम्–एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य पर्याप्तसंज्ञिपञ्चेन्द्रियमध्ये समुत्पन्न उत्पत्तिप्रथमसमयादारभ्य सातवेदनीयमनुभवन् बृहत्तरान्तर्मुहूर्तं यावदसा-तवेदनीयं बध्नाति, ततो भूयोऽपि सातं बद्धुमारभते, ततो बन्धावलिकान्तसमये पूर्वबद्धस्य सातवेदनीयस्य जघन्यस्थित्युदीरको

भवति, एवमसातस्यापि दृश्यं, केवलं सातस्थानेऽसातमसातस्थाने च सातं वाच्यम् । हास्यरत्योः सातवदरतिशोकयोरसातवद्भावना कार्या। अपर्याप्तकनाम्न एकेन्द्रियस्य जघन्यस्थितिसत्कर्मण एकेन्द्रियभवादुद्धृत्यापर्याप्तसंज्ञिपञ्चेन्द्रियमध्ये समुत्पन्नस्योत्पत्तिप्रथमसमयादारभ्य पर्याप्तकनाम बृहत्तरान्तर्मुहूर्तकालेन बद्ध्वा भूयोऽप्यपर्याप्तकनाम बध्नतो बन्धावलिकान्तसमये प्राग्बद्धस्य जघन्यस्थित्युदीरकत्वं द्रष्टव्यम्। संहननपञ्चकस्य तु मध्ये वेद्यमानसंहननवर्जशेषसंहनननानां प्रत्येकमतिदीर्घबन्धकालं ततश्च वेद्यमानसंहननस्य बन्धमभिधाय बन्धावलिकान्तसमये जघन्या स्थित्युदीरणा वाच्या । नीचैर्गोत्रमसातवद्वाच्यम् । तथा यस्तैजस्कायिको वायुकायिको वा बादरः सर्वजघन्यस्थितिसत्कर्मा पर्याप्तसंज्ञिपञ्चेन्द्रियतिर्यङ्मध्ये समुत्पद्य बृहत्तरमन्तर्मुहूर्तं यावन्मनुजगतिं बध्नाति, तद्बन्धानन्तरं च तिर्यग्गतिं बद्धुमारभते । ततो बन्धावलिकान्तसमये तस्य प्राग्बद्धतिर्यग्गतेर्जघन्यस्थित्युदीरकत्वं द्रष्टव्यम् । एवं तिर्यगानुपूर्व्या अपि वाच्यं, नवरं तस्या जघन्यस्थित्युदीरणाऽन्तरालगतौ तृतीयसमये वाच्या । अयशःकीर्तिदुर्भगानादेयानां च भावनाऽसातवत्कार्या । विरोधिप्रकृतीनां बन्धश्चेह यशःकीर्तिसुभगादेयाख्यानां दृश्यः ॥३७॥

**अमणागयस्स चिरट्ठिइअंत सुरनरयगइउवंगाणं। अणुपुव्वी तिसमइगे नराण एगिंदियागयगे ॥३८॥**

(चू०)—असण्णिपंचिंदियातो आगयस्स 'चिरट्ठिइ अंते'त्ति–अप्पणा दीहाए ठितीए अंते णिरयगति–देवगति–वेउव्वियअंगोवंगणामाण एतेसिं असण्णिपंचिंदिउ सव्वजहण्णसंतकम्मिगो देवेसु णिरएसु वा चिरकालट्ठिई उप्पण्णो, तस्स णारगभवस्स वा देवभवस्स वा चरिमे समए वट्टमाणस्स णिरयगति–देवगति–वेउव्वियअंगोवंगाणं जहण्णिया ट्ठितिउदीरणा लब्भति। वेउव्वियअंगोवंगणामाए नारगसुरेसु अविरुद्धं। 'अणुपुव्वी तिसमइगे'

त्ति–सो चेव अमणिपंचिंदिउ देवणिरयाणुपुव्वीणं देवणेरईएसु उववज्जमाणो तिसमतिएणं विग्गहेणं ततियसमये जहण्णट्ठितीउदीरगो। 'णराण एगिंदियागयगे'त्ति–मणुयाणुपुव्वीए एगिंदियागतेत्ति सो चेवेगिंदियाउ मणुयाणुपुव्वीए सव्वजहण्णाट्ठितिसंतकंमिउ उव्वट्टिऊण मणुस्सो जाओ तिसमएणं विग्गहेणं तस्स तइयसमए वट्टमाणस्स मणुयाणुपुव्वीए जहण्णिया ठितिउदीरणा ॥३८॥

(मलय०)—'अमणागयस्स'त्ति। अमनस्कादसंज्ञिपञ्चेन्द्रियादुद्धृत्य देवेषु नारकेषु वा मध्ये समागतस्य सुरगतिनिरयगतिवैक्रियाङ्गोपाङ्गनाम्नां स्वस्वायुर्दीर्घस्थित्यन्ते जघन्या स्थित्युदीरणा। एतदुक्तं भवति–असंज्ञिपञ्चेन्द्रियः सर्वजघन्यां सुरगत्यादिस्थितिं बद्ध्वा बन्धानन्तरं च दीर्घकालं तत्रैव स्थित्वा देवेषु नारकेषु वा मध्ये पल्योपमासंख्येयभागमात्रायुःस्थितिकः समुत्पन्नः, ततस्तस्य देवस्य नारकस्य वा स्वस्वायुषश्चिरस्थित्यन्ते–चरमसमये वर्तमानस्य यथायोगं देवगतिनरकगतिवैक्रियाङ्गोपाङ्गनाम्नां जघन्या स्थित्युदीरणा। तथा स एवासंज्ञिपञ्चेन्द्रियो देवस्य नारकस्य वा भवस्यापान्तरालगतो वर्तमानो यथासंख्यं देवानुपूर्व्या नारकानुपूर्व्याश्च तृतीयसमये जघन्यां स्थित्युदीरणां करोति। 'नराण एगिदियागयगे' त्ति–एकेन्द्रियः सर्वजघन्यमनुष्यानुपूर्वीस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य मनुष्येषु मध्ये उत्पद्यमानोऽपान्तरालगतो वर्तमानो मनुष्यानुपूर्व्यास्तृतीयसमये जघन्यस्थित्युदीरणास्वामी भवति ॥३८॥

(उ०)—अमनस्कादसंज्ञिपञ्चेन्द्रियादुद्धृत्य देवेषु नारकेषु वा समागतस्य सुरगतिनिरयगतिवैक्रियाङ्गोपाङ्गनाम्नां चिरस्थित्यन्ते स्वस्वायुर्दीर्घस्थित्यन्ते जघन्या स्थित्युदीरणा। इदमुक्तं भवति–असंज्ञिपञ्चेन्द्रियः सर्वजघन्यां सुरगत्यादिस्थितिं बद्ध्वा बन्धानन्तरं दीर्घकालं तत्रैव स्थित्वा भवक्षयाद्देवेषु नारकेषु वा मध्ये पल्योपमासंख्येयभागप्रमाणायुःस्थितिः संजातः, तस्य देवस्य नारकस्य वा

स्वस्वायुश्चरमसमये वर्तमानस्य यथायोगं देवगतिनरकगतिवैक्रियाङ्गोपाङ्गनाम्नां जघन्या स्थित्युदीरणा भवति। तथा तस्यैवासंज्ञिपञ्चेन्द्रियस्य स्वभवक्षयाद्देवभवस्य नारकभवस्य वाऽपान्तरालगतौ वर्तमानस्यानुपूर्व्या—देवानुपूर्व्या नरकानुपूर्व्याश्च यथायोगं 'तिसमइगे'त्ति—तृतीयसमये जघन्यस्थित्युदीरकत्वं वाच्यम्। 'नराण'त्ति—नराणामानुपूर्व्या एकेन्द्रियागतस्य—एकेन्द्रियस्य सर्वजघन्यमनुष्यानुपूर्वीस्थितिसत्कर्मणः स्वभवादुद्धृत्य मनुष्यभवे समुत्पद्यमानस्यान्तरालगतौ तृतीयसमये जघन्यस्थित्युदीरकत्वं वाच्यम् ॥३८॥

**समयाहिगालिगाए पढमठिईए उ सेसवेलाए। मिच्छत्ते वेएसु य संजलणासु वि य सम्मत्ते ॥३९॥**

(चू०)—समएण अहिया आवलिया समयाहिआवलिया ताए समएण अहिगाए आवलियाए 'पढमठितीए उ सेसवेलाए'त्ति। अंतरकरणे कए मूलिल्ला ठिती पढमठिती, उवरिल्ला ठिती बितीय ठिती। ताए पढमठितीए समयाहियावलियसेसाए मिच्छत्तस्स, तिण्हं वेयाणं, चउण्हं संजलणाणं, सम्मत्तस्स य जहण्णिया ठितिउदीरणा भवति। सम्मत्तस्स उवसमसेढिं पडिवज्जमाणं उवसमसम्मद्दिट्ठिं (खाइय)दिट्ठिं वा पडुच्च जहण्णिया ठितिउदीरणा, लोभसंजलणसम्मत्ताणं अप्पप्पणो उदीरणं तेवि लब्भति ॥३९॥

(मलय०)—इहान्तरकरणे कृतेऽधस्तनी स्थितिः प्रथमा स्थितिरित्युच्यते, उपरितनी तु द्वितीयेति। तत्र प्रथमस्थितेः शेषवेलायां समयाधिकावलिकाप्रमाणायां मिथ्यात्ववेदत्रिकसंज्वलनचतुष्टयसम्यक्त्वानां जघन्या स्थित्युदीरणा भवति। नवरं सम्यक्त्वसंज्वलनलोभयोः क्षये उपशमे वा जघन्या स्थित्युदीरणा द्रष्टव्या ॥३९॥

(उ०)—अन्तरकरणे कृते सत्यधस्तनी स्थितिः प्रथमा स्थितिरित्युच्यते, उपरितनी तु द्वितीया, ततः प्रथमस्थितेः शेषवेलायां

मिथ्यात्वस्य वेदानां च त्रयाणामपि संज्वलनानां च चतुर्णामपि सम्यक्त्वस्यापि च जघन्या स्थित्युदी-
समयाधिकावलिकाप्रमाणायां मिथ्यात्वस्य वेदानां च त्रयाणामपि संज्वलनानां च चतुर्णामपि सम्यक्त्वस्यापि च जघन्या स्थित्युदी-
रणा भवति । केवलं ( मिथ्यात्वस्य सम्यक्त्वाभिमुखस्य प्रथमस्थितेः समयाधिकावलिकाशेषायां, ) सम्यक्त्वसंज्वलनलोभयोः क्षये
उपशमे च जघन्या स्थित्युदीरणा वाच्या, शेषाणां तु क्षपकश्रेण्यामेव । उक्तं च- 'उवसमे वि दुसु', द्वयोः-सम्यक्त्वलोभयोरुपशमे,
अपिशब्दात्क्षयेऽपीत्येतदर्थः ॥३९॥

पल्लासंखियभागूणुदही एगिंदियागए मिस्से । वेसत्तभागवेउव्वियाइ पवणस्स तस्संते ॥४०॥

(चू०)—पलिओवमस्स जं असंखेज्जतिभागेण ऊणं उदधिं पल्लासंखियभागूणुदहिं तारिसेणं सम्मामि-
च्छत्तसंतकम्मेणं एगिंदिएहिंतो आगतो एगिंदियागओ तस्स एगिंदिएहिंतो आगयस्स जीवस्स अंतोमुहुत्तेणं
सम्मामिच्छत्तं अणुदीरणापातोग्गं भवतित्ति तंमि समए सम्मामिच्छत्तं पडिवण्णस्स 'मिस्से'त्ति-सम्मामिच्छ-
द्दिट्ठिस्स चरिमसमए सम्मामिच्छत्तस्स जहण्णिया ठितिउदीरणा होति, एगिंदियजहण्णठितिसंतकम्मस्स
हेट्ठाउ ठिया ठिती उदीरणाए अपातोग्गा भवंति। 'वेसत्तभागवेउव्वियाइ'त्ति-वे सागरोवमस्स सत्त भागा पलि-
ओवमस्स असंखेज्जइभागेण ऊणगा जस्स वेउव्वियस्स ठिती सा वेसत्तभागवेउव्विया वि(से),'पवणस्स'त्ति-वाद-
रवाउकाइयस्स, तस्स 'अंते'त्ति-किं भणियं होइ ? वेउव्वियछक्कगस्स यादरवाउकाइओ बहुसो बहुसो वेऊव्विणं
चरिमसमए वट्टमाणो जहण्णठितीउदीरगो। से (वि)काले अप्पाउग्गं उदीरणाए भविस्सइत्ति तंमि काले जहण्णिया
ठितीउदीरणा। अप्पणो संतकम्माउ हेट्ठातो जा ठिती सा उदीरणा जोग्गा ण भवति जउ उवलिस्सति ॥४०॥

(मलय०)—'पल्ल' त्ति-पल्योपमासंख्येयभागेन न्यूनं यदेकं सागरोपमं तावन्मात्रसम्यग्मिथ्यात्वस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य संज्ञिपञ्चेन्द्रियमध्ये समायातः। तस्य यतः समयादारभ्यान्तर्मुहूर्तानन्तरं सम्यग्मिथ्यात्वस्योदीरणाऽपगमिष्यति तस्मिन् समये सम्यग्मिथ्यात्वप्रतिपन्नस्य चरमसमये सम्यग्मिथ्यात्वस्य जघन्या स्थित्युदीरणा। एकेन्द्रियसत्कजघन्यस्थितिसत्कर्मणश्च सकाशादधो वर्तमानं सम्यग्मिथ्यात्वमुदीरणायोग्यं न भवति। तावन्मात्रस्थितिके तस्मिन्नवश्यं मिथ्यात्वोदयसंभवतस्तदुद्वलनसंभवात्। तथा यैः सप्तभिर्भागैः सागरोपमं भवति तौ द्वौ सप्तभागौ यस्य वैक्रियषट्कस्य—वैक्रियशरीरवैक्रियसंघातवैक्रियबन्धनचतुष्टयरूपस्य तत् द्विसप्तभागं वैक्रियं, ततो विशेषणसमासः, प्राकृतत्वात्स्त्रीत्वनिर्देशः, इहापि च 'पल्लासंखियभागेण' इत्यनुवर्तते, ततश्च तस्य द्विसप्तभागवैक्रियषट्कस्य पल्योपमासंख्येयभागहीनस्य पवनस्य—बादरवायुकायिकस्य तस्य—वैक्रियस्य पर्यन्तसमये जघन्या स्थित्युदीरणा। एतदुक्तं भवति—बादरवायुकायिकः पल्योपमासंख्येयभागहीनसागरोपमद्विसप्तभागप्रमाणवैक्रियषट्कजघन्यस्थितिसत्कर्मा बहुशो वैक्रियमारभ्य चरमे वैक्रियारम्भे चरमसमये वर्तमानो जघन्यां स्थित्युदीरणां करोति। अनन्तरसमये च वैक्रियषट्कमेकेन्द्रियसत्कजघन्यसत्कर्मापेक्षया स्तोकतरमिति कृत्वा उदीरणायोग्यं न भवति किन्तूद्वलनायोग्यम्॥४२॥

(उ०)—पल्यासंख्येयभागोनोदधेः पल्योपमासंख्येयभागेन न्यूनं यदेकसागरोपमं तावन्मात्रसम्यग्मिथ्यात्वस्थितिसत्कर्मण एकेन्द्रियागतस्यैकेन्द्रियभवादुद्धृत्य संज्ञिपञ्चेन्द्रियमध्ये समायातस्य यतः समयादारभ्यान्तर्मुहूर्त्तानन्तरं सम्यग्मिथ्यात्वस्योदीरणां निवर्तिष्यते तस्मिन् समये सम्यग्मिथ्यात्वं प्रतिपन्नस्य चरमसमये सम्यग्मिथ्यात्वस्य जघन्या स्थित्युदीरणा, एकेन्द्रियसम्बन्धिजघन्यस्थितिसत्कर्मणः सकाशादधो वर्तमानं च सम्यग्मिथ्यात्वं नोदीरणायोग्यं, तदधस्तनस्थितिके तस्मिन् सत्यवश्यं मिथ्यात्वोदयसंभवेन तदुद्वलन-

स्यत्र सम्भवात् । तथा यः सप्तभिर्भागैः सागरोपमं भवति तौ द्वौ सप्तभागौ स्थितिरूपौ यस्य वैक्रियस्य—वैक्रियशरीरवैक्रियसंघातवैक्रिय-
बन्धनचतुष्टयरूपस्य वैक्रियषट्कस्य तद्द्विसप्तभागवैक्रियं, तदपि प्राक्तनानुवृत्त्या पल्योपमासंख्येयभागोनं गृह्यते, तस्य स्त्रीत्वनिर्देशः
प्राकृतत्वात्, पवनस्य—बादरवायुकायिकस्य वैक्रियस्यान्ते—पर्यन्तसमये जघन्या स्थित्युदीरणा । इयमत्र भावना—बादरवायुकायिकः पल्यो-
पमासंख्येयभागहीनसागरोपमद्विसप्तभागप्रमाणवैक्रियषट्कजघन्यस्थितिसत्कर्मा बहुशो वैक्रियं निर्माय चरमे वैक्रियारम्भे चरमसमये
वर्तमानो जघन्यस्थित्युदीरणां करोति । तदनन्तरसमये च वैक्रियषट्कमेकेन्द्रियसम्बन्धिजघन्यसत्कर्मापेक्षया स्तोकतरमिति कृत्वोदी-
रणायोग्यं न भवति, किं तूद्वलनायोग्यम् ॥४०॥

चउरुवसमेत्तु पेज्जं पच्छा मिच्छं खवेत्तु तेत्तीसा । उक्कोससंजमद्धा अंते सुतणूउवंगाणं ॥४१॥

(चू०)—'पेज्जं'-मोहं, तं चत्तारि वारे उवसामइत्तु 'पच्छा मिच्छत्तं खवेत्तु'त्ति-चत्तारि वारे उवसामित्तु पच्छा
मिच्छत्तादिदंसणमोहं खवेत्तु 'तेत्तीसा' इति-ततो उक्कोसठितिगेसु देवेसु तेत्तीसं सागरोवमादीं जीविय ततो
चुतो मणूसो जातो अठवासितो संजमं पडिवण्णो 'उक्कोससंजमद्धा अंते'त्ति-पुव्वकोडिं देसूणं संजमं अणुपालेत्तु
तस्स अंते आहारगसरीरी जातो तस्स अंते 'सुतणूउवंगाणं'ति-सुतणुत्ति आहारसरीरं, ताए चेव अंगोवंगं, एएसिं
सपरिचाराणं जहण्णिया ठितिउदीरणा । किं कारणं ? संतकम्मं पत्तियं कालं हेट्ठातो खयं जातित्ति किच्चा ॥४१॥

(मलय०)—'चउ'त्ति । संसारपरिभ्रमणेन चतुरो वारान् प्रेम—मोहनीयमुपशमय्य ततो मिथ्यात्वं, उपलक्षणमेतत्, सम्यक्त्वं सम्यग्मि-
थ्यात्वं च क्षपितं, क्षपयित्वा च त्रयस्त्रिंशत्सागरोपमस्थितिको देवो जातः । ततो देवभवाच्च्युत्वा मनुष्येषु मध्ये समुत्पन्नः । ततो

वर्षाष्टकानन्तरं संयमं प्रतिपन्नोऽप्रमत्तभावे चाहारकसप्तकं बद्धवान् । ततो देशोनां पूर्वकोटिं यावत्संयमं परिपालितवान् । ततो देशोनपूर्वकोटिपर्यन्ते आहारकशरीरं कृत्वा–'सुतणु'त्ति–आहारकशरीरं, 'उवंग'त्ति–आहारकाङ्गोपाङ्गं, बहुवचनादाहारकबन्धनचतुष्टयाहारकसङ्घातपरिग्रहः, तेषां जघन्यां स्थित्युदीरणां करोति । इह मोहोपशमं कुर्वन् शेषनामकर्मप्रकृतीनां घातादिभिः प्रभूतं स्थितिसत्कर्म घातयति । देवभवे चापवर्तनाकरणेनापवर्तयति । तत आहारकसप्तकबन्धकाले स्तोकमेव स्थितिसत्कर्म संक्रमयतीति चतुष्कृत्वो मोहादिग्रहणम् । आहारकसप्तकस्थितिसत्कर्म च देशोनपूर्वकोटिप्रमाणेन कालेन प्रभूतं क्षयमुपयाति ततो देशोनपूर्वकोट्युपादानम् ॥४१॥

(उ०)—बहुशो भवभ्रमणेन चतुरो वारान् 'पेज्जं'ति–मोहनीयमुपशमय्य ततः पश्चान्मिथ्यात्वमुपलक्षणात्सम्यक्त्वं सम्यग्मिथ्यात्वं च क्षपयित्वा, 'तेत्तीस'त्ति सर्वार्थसिद्धे त्रयस्त्रिंशत्सागरोपमस्थितिको देवो जातः, ततो देवभवाच्च्युत्वा मनुष्येषु मध्ये समुत्पन्नः, ततो वर्षाष्टकानन्तरमुत्कृष्टाद्धां–देशोनां पूर्वकोटिं यावत्संयममनुपालितवान्, ततोऽन्ते देशोनपूर्वकोटिपर्यन्ते आहारकशरीरं कृत्वा सुतनोराहारकशरीरस्य, तथोपाङ्गानामाहारकोपाङ्गानां, बहुवचनादाहारकबन्धनचतुष्टयाहारकसंघातग्रहः, एतस्याहारकसप्तकस्य जघन्यां स्थित्युदीरणां करोति । इह मोहोपशमं कुर्वन् शेषनामप्रकृतीनां स्थितिघातादिभिः प्रभूतं स्थितिसत्कर्म घातयति, देवभवे चापवर्तनाकरणेनापवर्तयति, तत आहारकसप्तकबन्धकाले स्तोकमेव स्थितिसत्कर्म तत्र संक्रामतीति चतुष्कृत्वो मोहोपशमस्योत्कृष्टस्थितिकदेवभवस्य च ग्रहणं, देशोनपूर्वकोटिप्रमाणेन चारित्रकालेन चाहारकसप्तकस्थितिसत्कर्म प्रभूतं क्षयमुपयातीति देशोनपूर्वकोट्युपादानम् ॥४१॥

**छउमत्थखीणरागे चउदस समयाहिगालिगठिईए । सेसाणुदीरणंते भिन्नमुहुत्तो ठिईकालो ॥४२॥**

(चू०)—'छउमत्थखीणरागे'त्ति–खीणकसायत्ति 'चउदस समयाहियावलियठितिए'–णाणावरणदंसणावरण-

चउक्कं पंचण्हमंतराइयाणं एतासिं चोदसण्हं कम्माणं समयाहियावलियसेसाए ठितिए जहण्णिया ठितिउदीरणा भवति। 'सेसाणुदीरणंते भिण्णमुहुत्तो ठिइकालो'त्ति–सेसाणं पगतीणं उदीरणंते, के ? भण्णइ–मणुयगति पंचिंदियजाति उरालियसत्तगं छसंठाण पढमसंघयणं उवघायं परघायं उस्सासं पसत्थापसत्थविहायगति तसं बायरं पज्जत्तगं पत्तेयसरीरं सुभगं सुसरं दुसरं आएज्जं जसं तित्थकरं उच्चागोयं एत्ताओ बत्तीसं, धुवोदीरणातेत्तीसम्मत्तितानो पण्णट्ठि होंति, एतासिं 'उदीरणंते'त्ति–सजोगिकेवलिचरिमसमए जहण्णिया ठितिउदीरणा होइ। तीसे जहण्णगट्ठितीए किं पमाणं ? भण्णइ–'भिण्णमुहुत्तो'–अंतोमुहुत्तोत्ति जं भणियं होइ। आउगाणं पि उदीरणांतवयणातो सिद्धं अप्पप्पणो उदीरणंते जहण्णिता ट्ठितीउदीरणा भवतित्ति ॥४२॥

(मलय०)—'छउमत्थ' त्ति–छद्मस्थक्षीणरागस्य पञ्चविधज्ञानावरणचक्षुरचक्षुरवधिकेवलदर्शनावरणपञ्चविधान्तरायलक्षणानां चतुर्दशप्रकृतीनां समयाधिकावलिकाशेषायां स्थितौ जघन्या स्थित्युदीरणा। शेषाणां च प्रकृतीनां मनुजगतिपञ्चेन्द्रियजातिप्रथमसंहननौदारिकसप्तकसंस्थानषट्कोपघातपराघातोच्छ्वासप्रशस्ताप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकसुभगसुस्वरादेययशःकीर्तितीर्थकरोच्चैर्गोत्रदुःस्वरलक्षणानां द्वात्रिंशत्प्रकृतीनां, पूर्वोक्तानां च नामध्रुवोदीरणानां त्रयस्त्रिंशत्प्रकृतीनां, सर्वसंख्यया पञ्चषष्टिसंख्यानां सयोगिकेवलिचरमसमये जघन्या स्थित्युदीरणा। तस्याश्च जघन्यायाः कालो भिन्नमुहूर्तोऽन्तर्मुहूर्त्तमित्यर्थः। आयुषामप्युदीरणान्ते जघन्या स्थित्युदीरणा ॥४२॥

(उ०)—छद्मस्थक्षीणरागस्य ज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकलक्षणानां चतुर्दशप्रकृतीनां समयाधिकावलिकाशेषायां

स्थितौ जघन्या स्थित्युदीरणा । शेषाणां च मनुजगतिपञ्चेन्द्रियजात्याद्यसंहननौदारिकसप्तकसंस्थानषट्कोपघातपराघातोच्छ्वासविहायोगतिद्विकत्रसचतुष्कसुभगचतुष्कतीर्थकरोच्चैर्गोत्रदुःस्वररूपाणां द्वात्रिंशत्प्रकृतीनां प्रागुक्तानां नामध्रुवोदीरणानां च त्रयस्त्रिंशत्प्रकृतीनां सर्वसङ्ख्यया पञ्चषष्टिप्रकृतीनां सयोगिकेवलिचरमसमये जघन्या स्थित्युदीरणा । तस्याश्च स्थितिकालो भिन्नमुहूर्त्तमन्तर्मुहूर्त्तमित्यर्थः । आयुषामप्युदीरणान्ते जघन्या स्थित्युदीरणा द्रष्टव्या ॥४२॥

भणिया ठ्ठिती उदीरणा । इयाणिं अणुभागुदीरणा भण्णति। तीसे इमे अत्थाहिगारा, तंजहा–सण्णा, सुभासुभपरूवणा, विपागपरूवणा, पच्चयपरूवणा, सादिय अणाइयपरूवणा, सामित्तमिति । सण्णासुभासुभविपागणिरूवणत्थं भण्णति—

**अणुभागुदीरणाए सन्ना य सुभासुभा विवागो य । अणुभागबंधभणिया नाणत्तं पच्चया चेमे ॥४३॥**

(चू०)—अणुभागुदीरणाए सण्णाए भेदा–ट्ठाणसण्णा घातिसण्णा य । ट्ठाणसण्णा चउव्विहा, तंजहा–चउठाणिका, तिठाणिका, विठाणिका, एगट्ठाणिका य । घातिसण्णा तिविहा–सव्वघाती, देसघाती, अघाती सण्णा य। 'सुभासुभा' इति–पसत्थकम्माण अणुभागो सुभो, अपसत्थकम्माणं अणुभागो असुभो। 'विवागो य'त्ति–विवागो चउव्विहो, तंजहा–पोग्गलविवागो, खेत्तविवागो, भवविवागो, जीवविवागो य। एतेसिं परूवणा 'अणुभागबन्धभणिय'त्ति–बंधसयगस्स अणुभागबन्धे भणिया तहेव भाणियव्वा। 'णाणत्तं पच्चया चेमे'त्ति–णाणत्तं विसेसो जं तहिं ण भणियं तं भण्णइ, भणियस्स य विसेसो य भण्णइ, 'पच्चया चेमे'त्ति–तत्थ बन्धं

पडुच्च पचया भणिया, इह उदीरणं पडुच्च पचया भण्णंति ॥४३॥
(मलय०)—तदेवमुक्ता स्थित्युदीरणा, सम्प्रत्यनुभागोदीरणावसरः। तत्र चेमेऽर्थाधिकाराः, तद्यथा—संज्ञा, शुभाशुभप्ररूपणा, विपा-
कप्ररूपणा, प्रत्ययप्ररूपणा, साद्यनादिप्ररूपणा, स्वामित्वप्ररूपणा चेति। तत्र संज्ञाशुभाशुभविपाकसूचनार्थमाह—'अणुभाग'त्ति। अनुभा-
गोदीरणायां संज्ञा शुभाशुभा विपाकाश्च यथा शतकाख्ये ग्रन्थेऽनुभागवन्धाभिधानावसरे भणितास्तथाऽत्रापि द्रष्टव्याः। तत्र संज्ञा द्विभेदा—
स्थानसंज्ञा, घातिसंज्ञा च। स्थानसंज्ञा चतुर्विधा—एकस्थानको द्विस्थानकस्त्रिस्थानकश्चतुःस्थानकश्च। घातिसंज्ञा त्रिप्रकारा, तद्यथा—सर्वघाती
देशघाती अघाती च। तथा शुभकर्मणामनुभागः क्षीरखण्डोपमः, अशुभकर्मणां त्वशुभो घोषातकीनिंबरसोपमः। एषा च स्थानसंज्ञा
घातिसंज्ञा शुभाशुभप्ररूपणा च प्रागनुभागसंक्रमाभिधानावसरे सप्रपञ्चं कृतेति न भूयो वितन्यते। विपाकश्चतुर्विधः, तद्यथा—पुद्गलवि-
पाकः, क्षेत्रविपाकः, भवविपाको, जीवविपाकश्च। तत्र पुद्गलानधिकृत्य यस्य रसस्य विपाकोदयः स पुद्गलविपाकः। स च संस्थानप-
ट्कसंहननषट्कातपशरीरपञ्चकाङ्गोपाङ्गत्रयोद्योतनिर्माणस्थिरास्थिरवर्णादिचतुष्कागुरुलघुशुभाशुभपराघातोपघातप्रत्येकसाधारणनाम्नां षट्
त्रिंशत्प्रकृतीनामवगन्तव्यः। तथाहि—संस्थाननामादीनि औदारिकादिपुद्गलानेवाधिकृत्य स्वविपाकमुपदर्शयन्ति, तत आसां रसः पुद्ग-
लविपाक एव। नन्वनया युक्त्या रत्यरत्योरपि रसः पुद्गलविपाक एव प्राप्नोति, तथाहि—कंटकादिस्पर्शादरतेर्विपाकोदयो भवति,
स्रक्चन्दनादिसंस्पर्शात्तु रतेः, ततः कथं स नोक्तः? उच्यते—रत्यरतिविपाकस्य पुद्गलव्यभिचारात्, तथाहि—कंटकादिसंस्पर्शव्यति-
रेकेऽपि प्रियाप्रियस्मरणादिना कदाचिद्रत्यरत्योर्विपाकोदयो दृश्यते, ततोऽनयोरनुभागो जीवविपाक एव युक्तः, न पुद्गलविपाकः।
एवं क्रोधादिविपाकोऽपि भावनीयः। उक्तं च—"अरइरईणं उदओ किन्न भवे पोग्गलानि संपप्प। अप्पुट्ठेहि वि किन्नो एवं कोहा-

इयाणं पि" ॥ अस्याश्चाक्षरगमनिका—अरतिरत्योरुदयो विपाकोदयः पुद्गलान् प्राप्य किं न भवति ? भवत्येवेति भावः, ततः कथं तयो रसः पुद्गलविपाको नोच्यते ? अत्राचार्यः काक्वा प्रत्युत्तरमाह—'अप्पुट्ठेहि वि किन्नो' ? अत्र सप्तम्यर्थे तृतीया, ततोऽयमर्थः—अस्पृष्टेष्वपि पुद्गलेषु किं तयो रत्यरत्योर्विपाकोदयो न भवति ? भवत्येवेति भावः । ततः पुद्गलव्यभिचारान्न तयो रसः पुद्गलविपाको भवति, किं तु जीवविपाक एव । एवं क्रोधादीनामपि वाच्यम् । तथा क्षेत्रमधिकृत्य यस्य रसस्य विपाकोदयः स रसः क्षेत्रविपाकः, स च चतसृणामानुपूर्वीणामवगन्तव्यः । तथा भवमधिकृत्य यस्य रसस्य विपाकोदयः स रसो भवविपाकः । स च चतुर्णामायुषामवसेयः । अथोच्येत गतीनामपि भवमधिकृत्य विपाकोदयो वर्तते, ततः कथं तासां रसो भवविपाको नाभिधीयते ? तदयुक्तं, व्यभिचारात् । तथाहि—आयुषां स्वभवमन्तरेण परभवे संक्रमेणाप्युदयो न भवति, ततः सर्वथा स्वभवाव्यभिचारात्तानि भवविपाकान्युच्यन्ते । गतीनां पुनः परभवेऽपि संक्रमेणोदयो भवति, ततः स्वभवव्यभिचारान्न ता भवविपाकिन्यः । उक्तं च—"आउव्व भवविवागा गई न आउस्स परभवे जम्हा । नो सव्वहा वि उदओ गईण पुण संकमेणत्थि" ॥ सुगमा । शेषाणां त्वष्टसप्ततिसंख्यानां प्रकृतीनां जीवविपाको रसः, जीवमेवाधिकृत्य विपाको यस्यासौ जीवविपाकः । 'नाणत्तं'इत्यादि—नानात्वं विशेषः, यत्तत्र शतकाख्ये ग्रन्थेऽनुभागबन्धे नोक्तं तदिह वक्ष्ये, उक्तस्य च विशेषमित्यर्थः । तथा तत्र बन्धमाश्रित्यान्ये एव मिथ्यात्वादयः प्रत्यया उक्ताः, इह तूदीरणामाश्रित्यान्ये एवेमे वक्ष्यमाणा ज्ञातव्याः ॥४३॥

(उ०)—तदेवमुक्ता स्थित्युदीरणा, सम्प्रत्यनुभागोदीरणावसरः । तत्र चेमेऽर्थाधिकाराः—संज्ञाप्ररूपणा, शुभाशुभप्ररूपणा, विपाकप्ररूपणा, प्रत्ययप्ररूपणा, साद्यनादिप्ररूपणा, स्वामित्वप्ररूपणा चेति । तत्र संज्ञाशुभाशुभविपाकप्ररूपणां ग्रन्थान्तरोक्त्याऽतिदिशन्नाह—

अनुभागोदीरणायां संज्ञा शुभाशुभा विपाकाश्च यथा शतकग्रन्थेऽनुभागबन्धाभिधानावसरे भणितास्तथाऽत्रापि द्रष्टव्याः। अयं चार्थः प्राटिकायामुक्तप्रायः। नानात्वं-विशेषो यत्तत्र शतकाख्यग्रन्थेऽनुभागबन्धे नोक्तं तदिह वक्ष्ये। तथा तत्र बन्धमाश्रित्यान्ये एव मिथ्यात्वादयः प्रत्यया उक्ताः, इह तूदीरणामाश्रित्यान्ये एवेमे वक्ष्यमाणा ज्ञातव्याः ॥४३॥

इमं णाणत्तणिरूवणत्थं भण्णति—

**मीसं दुट्ठाणिय सव्वघाइ दुट्ठाणएगठाणे य। सम्मत्तमंतरायं च देसघाई अचक्खू य ॥४४॥**

(चू०)—'मीसं दुट्ठाणिय सव्वघाति'त्ति। सम्मामिच्छत्तं ट्ठाणसण्णं पडुच्च दुठाणियं, घातिसण्णं पडुच्च सव्वघाती। 'दुट्ठाणएगठाणे य सम्मत्तमंतरायं च देसघाती अचक्खू य'त्ति-सम्मत्तं ट्ठाणं पडुच्च उक्कोस्सयं दुट्ठाणियं जहण्णयं एगट्ठाणियं, घातिसण्णाए देसघाति। एए वेऽवि सम्मत्तसम्मामिच्छत्ता तहिं ण भणिया इहं भणिया। पंच अंतराइया अचक्खूदंसणं च ठाणसण्णाए उक्कोसा दुट्ठाणिया, अणुक्कोसा दुट्ठाणिया एगट्ठाणिया वा, घातीसण्णाए उक्कोसा वा देसघाती। बन्धे एगट्ठाण बिट्ठाण तिट्ठाण चउट्ठाणा वि भणिया ॥४४॥

(मलय०)— तत्र नानात्वप्ररूपणार्थमाह-'मीसं'ति। सम्यग्मिथ्यात्वं स्थानसंज्ञामधिकृत्य द्विस्थानकं-द्विस्थानकरसोपेतं, घातिसंज्ञामधिकृत्य सर्वघाति, सम्यक्त्वं पुनरुत्कृष्टोदीरणामधिकृत्य द्विस्थानकरसे, जघन्योदीरणां त्वधिकृत्यैकस्थानके, घातिसंज्ञामधिकृत्य च देशघाति वेदितव्यम्। एतच्च तत्र सर्वथा नोक्तं, किं त्विहैव। यतस्तत्रानुभागबन्धमाश्रित्य शुभाशुभप्ररूपणा कृता। न च सम्यक्त्वसम्यग्मिथ्यात्वयोर्बन्धः संभवति, तत एतद्वर्जा एव तत्राशुभप्रकृतयो निर्दिष्टाः। उदीरणा त्वेतयोरपि भवति। तत इह विशेषेणैतयोरुपादानम्।

तथाऽन्तरायं पञ्चप्रकारमुत्कृष्टामनुभागोदीरणामधिकृत्य द्विस्थानके एकस्थानके च, घातिसंज्ञामधिकृत्य देशघाति वेदितव्यम्। बन्धं प्रतीत्य पुनश्चतुष्प्रकारेऽपि रसे । तद्यथा—चतुःस्थानके, त्रिस्थानके, द्विस्थानके, एकस्थानके च । अचक्षुर्दर्शनं घातिसंज्ञामधिकृत्य देशघाति ॥ ४४ ॥

(उ०)—मिश्रं-सम्यग्मिथ्यात्वं स्थानसंज्ञामधिकृत्य द्विस्थानकरसोपेतं, घातिसंज्ञामधिकृत्य सर्वघाति, सम्यक्त्वं पुनरुत्कृष्टोदीरणामधिकृत्य द्विस्थानकरसे, जघन्योदीरणां त्वधिकृत्यैकस्थानके, घातिसंज्ञामधिकृत्य च देशघाति वेदितव्यम् । एतच्च तत्र सर्वथा नोक्तं, यतस्तत्रानुभागबन्धमाश्रित्य शुभाशुभप्ररूपणा कृता, न च सम्यक्त्वसम्यग्मिथ्यात्वयोर्बन्धः संभवति, तत एतद्वर्जिता एवाशुभप्रकृतयस्तत्रोक्ताः । उदीरणा त्वेतयोरपि भवतीतीह तयोर्विशेषेणोपादानम् । तथाऽन्तरायं पञ्चप्रकारं अचक्षुर्दर्शनं चोत्कृष्टामनुभागोदीरणामधिकृत्य सर्वोत्कृष्टे द्विस्थानकरसे, जघन्यां त्वधिकृत्यैकस्थानके द्विस्थानके च कस्मिंश्चिद्, घातिसंज्ञामधिकृत्य च देशघाति वेदितव्यम्, बन्धं प्रतीत्य त्वेकद्वित्रिचतुःस्थानकभेदाच्चतुष्प्रकारेऽपि रसे प्राप्यते ॥४४॥

**ठाणेसु चउसु अपुमं दुठाणे कक्कडं च गुरुकं च । अणुपुव्वीओ तीसं नरतिरिएगंतजोग्गा य ॥४५॥**

(चू०)—ठाणेसु चउसु अपुमंति—णपुंसगवेओ बन्धं पडुच्च तिविहो—चउट्ठाणीओ, तिट्ठाणीओ, बिठाणीओ य । उदीरणं पडुच्च उक्कोसिया अणुभागुदीरणा चउट्ठाणिया, अणुक्कसा चउट्ठाणिया, तिट्ठाणिया, बिट्ठाणिया, एगट्ठाणिया वि। 'दुट्ठाणे कक्कडं च गुरुकं च'त्ति—खुड्डगुरुयणामा बन्धे तिविहा—४-३-२। उदीरणं पडुच्च उक्कोसो वा अणुक्कोसो वा अणुभागो दुठाणिगो। 'अणुपुव्वीउ तीसं णरतिरिएगंतजोग्गा य'त्ति—चत्तारि आणुपुव्वीउ,

मणुयतिरियाणमेया एगंतजोग्गातो तीसं पगतीतो--मणुयाउगं तिरियाउगं मणुयगति तिरियगति चत्तारि जातीतो
उरालियसत्तगं मज्झिल्ला चत्तारि संठाणा छ संघयणा आतावं थावरं सहुमं अपज्जत्तगं साहारणमिति, एतासिं
सव्वासिं बन्धे तिण्णि ट्ठाणा ४-३-२, उदीरणाए उक्कोसो वा अणुभागो दुठाणितो ॥४५॥

(मलय०)—'ठाणेसु' त्ति–नपुंसकवेदो बन्धं प्रतीत्य त्रिप्रकारे रसे। तद्यथा–चतुःस्थानके, त्रिस्थानके, द्विस्थानके, च। अत्र
तूत्कृष्टामनुभागोदीरणामधिकृत्य चतुःस्थानके, अनुत्कृष्टां त्वधिकृत्य चतुःस्थानके त्रिस्थानके द्विस्थानके एकस्थानके च। ननु ब-
न्धाभावे कथमुदीरणायामेकस्थानको रसो नपुंसकवेदस्य प्राप्यते? उच्यते–क्षपणकाले रसघातं कुर्वतस्तस्यैकस्थानकस्यापि रससंभ-
वात्। तथा कर्कशनाम गुरुनाम च बन्धं प्रतीत्य चतुःस्थानके त्रिस्थानके द्विस्थानके च। इह त्वनुभागोदीरणामधिकृत्य द्विस्थानके।
तथा चतस्र आनुपूर्व्यो याश्च नरतिरश्चामुदयं प्रत्येकान्तयोग्यास्त्रिंशत्प्रकृतयः, तद्यथा–मनुष्यायुस्तिर्यगायुस्तिर्यग्गतिर्मनुष्यगतिरेके-
न्द्रियजातिर्द्वीन्द्रियजातिस्त्रीन्द्रियजातिश्चतुरिन्द्रियजातिश्चौदारिकसप्तकमाद्यन्तवर्जसंस्थानचतुष्टयं संहननषट्कमातपं स्थावरं सूक्ष्ममपर्याप्तं
साधारणं चेति ता अपि बन्धं प्रतीत्य चतुःस्थानके त्रिस्थानके द्विस्थानके च। इह त्वनुभागोदीरणामुत्कृष्टामनुत्कृष्टां चाऽधिकृत्य द्वि-
स्थानके रसे वेदितव्याः ॥ ४५ ॥

(उ०)—अपुमान्–नपुंसकवेदोऽनुभागोदीरणायामेकद्वित्रिचतुःस्थानकरूपेषु चतुर्ष्वपि स्थानेषु ज्ञेयः। तत्रोत्कृष्टामनुभागोदीरणामधि-
कृत्य चतुःस्थानके, अनुत्कृष्टां त्वधिकृत्य चतुःस्थानके त्रिस्थानके द्विस्थानके एकस्थानके च ज्ञेयः। बन्धं प्रतीत्य पुनरयमेकस्थानकवर्जे
त्रिप्रकारे रसे प्रोक्तः। अथ बन्धाभावे नपुंसकवेदस्यैकस्थानको रसः कथमुदीरणायां प्राप्यते? उच्यते–क्षपणकाले रसघातं कुर्वतस्तस्यै-

कस्थानकस्यापि रसस्य संभवात् । तथा कर्कशनाम गुरुनाम च बन्धं प्रतीत्य चतुःस्थानके त्रिस्थानके द्विस्थानके च प्राप्यते, इह त्वनुभागोदीरणायां द्विस्थानके । तथाऽऽनुपूर्व्यश्चतस्रोऽपि, नरतिरश्चायुदयं प्रत्येकान्तयोग्याश्च त्रिंशत्प्रकृतयस्तिर्यग्द्विकनरद्विकाद्यजातिचतुष्टयौदारिकसप्तकमध्यमसंस्थानचतुष्कसंहननषट्कातपस्थावरसूक्ष्मापर्याप्तसाधारणलक्षणा बन्धं प्रत्येकस्थानकवर्जत्रिप्रकारे रसे प्राप्यमाणा अप्युत्कृष्टामनुत्कृष्टां चोदीरणामधिकृत्येह द्विस्थानक एव रसे ज्ञेयाः ॥४५॥

**वेया एगट्ठाणे दुट्ठाणे वा अचक्खुचक्खू य । जस्सऽत्थि एगमवि अक्खरं तु तस्सेगठाणाणि ॥४६॥**

(चू०)—'वेया एगट्ठाणे दुट्ठाणे वा' इत्थिवेदपुरिसवेयाणं इत्थिवेदस्स बंधे तिन्नि ट्ठाणा ४–३–२, पुरिसवेयगस्स बन्धे चत्तारि ठाणा ४-३-२-१। उदीरणा दोण्ह वि उक्कोसा दुठाणिया, अणुक्कोसा एगठाणिया वा दुठाणिया वा अणुभागुदीरणा । 'अचक्खुचक्खु य'त्ति–एतेसिं बन्धे चत्तारि ट्ठाणा ४-३-२-१, उदीरणाए पुरिसवेदसरिसा। 'देसघाती अचक्खुय'त्ति पुव्वं भणियं, पुणो अचक्खुग्गहणं किमत्थं? भण्णति-ठाणणियमणत्थं। 'जस्सत्थि एगमवि अक्खरं तु तस्सेगट्ठाणाणि' त्ति–जस्स जीवस्स एक्कंपि अक्खरविण्णाणं अत्थि तस्स णियमा एगट्ठाणिया अणुभागुदीरणा होति । अण्णे भणंति -एगमवि अक्खरं जो सव्वपज्जवेहिं जाणइ तस्स एगट्ठाणिया उदीरणा आभिणिबोहियसुयणाणओहिणाणावरणओहिदंसणावरणाणं । चउण्हं संजलणाणं जहा बंधे ४-३-२-१ तहा उदीरणा एवं चेव ४-३-२-१ ॥

(मलय०)—'वेय' त्ति–वेदौ–स्त्रीवेदपुरुषवेदौ अनुभागोदीरणामुत्कृष्टामधिकृत्य द्विस्थानके, अनुत्कृष्टां त्वधिकृत्य द्विस्थानके एक-

स्थानके वावगन्तव्यौ। एवमचक्षुश्चक्षुर्दर्शनावरणे च। बन्धं प्रतीत्य पुनः स्त्रीवेदश्चतुःस्थानके त्रिस्थानके द्विस्थानके वा। पुरुषवेदोऽचक्षुर्दर्शनावरणचक्षुर्दर्शनावरणे च चतुष्प्रकारेऽपि, तद्यथा—चतुःस्थानके त्रिस्थानके द्विस्थानके एकस्थानके च। ननु 'देसघाई अचक्खू य'त्ति प्रागेवोक्तं तत्किमर्थं पुनरिहाचक्षुर्दर्शनावरणोपादानम्? उच्यते—स्थाननियमार्थम्। पूर्वं हि देशघातित्वमेवाचक्षुर्दर्शनावरणस्योक्तम्, अत्र तु रसस्थाननियमः। 'जस्स'इत्यादि—यस्य जीवस्यैकमप्यक्षरं सर्वपर्यायैः परिज्ञातं वर्तते तस्य श्रुतकेवलिनो मतिश्रुतावधिज्ञानावरणावधिदर्शनावरणप्रकृतीनामनुभागोदीरणायामेकस्थानको रसः प्राप्यते। संज्वलनानां तु बन्धेऽनुभागोदीरणायां च चतुष्प्रकारोऽपि रसः, तद्यथा—चतुःस्थानकस्त्रिस्थानको द्विस्थानक एकस्थानकश्च ॥ ४६ ॥

(उ०)—वेदौ-स्त्रीवेदपुरुषवेदावनुभागोदीरणामुत्कृष्टामधिकृत्य द्विस्थानकेऽनुत्कृष्टां त्वधिकृत्य द्विस्थानके एकस्थानके वाऽवगन्तव्यौ। एवमचक्षुर्दर्शनावरणं चक्षुर्दर्शनावरणं च। बन्धं प्रतीत्य पुनः स्त्रीवेदश्चतुःस्थानके त्रिस्थानके द्विस्थानके च। पुरुषवेदोऽचक्षुर्दर्शनावरणं चक्षुर्दर्शनावरणं चैकद्वित्रिचतुःस्थानकभेदेन चतुष्प्रकारेऽपि। ननु 'देसघाई अचक्खू य'त्तिं प्रागेवोक्तमिति किमर्थं पुनरिहाचक्षुर्दर्शनावरणमुपादानम्? उच्यते—सप्तदशप्रकृत्यधिकारादिह संपातायातमेतत्, घातिसंज्ञानियमार्थं प्रागभिधानमिह तु रसस्थाननियमार्थमिति तु मलयगिरिचरणाः। यस्य जीवस्यैकमप्यक्षरं सर्वपर्यायैः परिज्ञातं वर्तते तस्य संपूर्णश्रुताक्षरस्य श्रुतकेवलिनो मतिश्रुतावधिज्ञानावरणावधिदर्शनावरणप्रकृतीनामनुभागोदीरणायामेकस्थानको रसः प्राप्यते, संज्वलनानां तु बन्धेऽनुभागोदीरणायां चैकद्वित्रिचतुष्प्रकारोऽपि रसः प्राप्यते ॥४६॥

मणनाणं सेससमं मीसगसम्मत्तमवि य पावेसु। छट्ठाणवडियहीणा संतुक्कस्सा उदीरणया ॥४७॥

(चू०)—'मणनाणं सेससमं'ति—मणपज्जवणाणस्स अणुभागउदीरणा सेसकंमेहिं समं—सरिसा, जं भणियं होति—सेसा कम्मा बन्धे वि ४-३-२, उदीरणे वि ४-३-२, मणपज्जवणाणस्स बन्धे ४-३-२-१, उदीरणा ४-३-२। के ते? भण्णइ—मणपज्जवणाणाकेवलणाणावरण णिद्दापणग केवलदंसणावरण सायासाय मिच्छत्त बारसकसाय छण्णोकसाय णिरयाउ देवाउ णिरयगति देवगति पंचिंदियजाती तेजइगसत्तग वेउव्वियसत्तग आहारसत्तग समचउरंसं हुंडसंठाण वण्ण५ गंध२ रस५ सिउण्हणिद्धलुक्खमउअलहुगणामाण६ अगुरुलहुगं उवघायपरघाय उस्सास उज्जोव पसत्थापसत्थविहायगति तस बादर पज्जत्तग पतेयसरीर थिराथिर सुभासुभं सुभगदुभग सुसरदुसर आएज्जाणाएज्ज जसाजस णिम्माणातित्थयरणीउच्चागोयाणं, एयस्स बिउत्तर पगतिसयस्स उक्कस्सिया चउट्ठाणिया, तिट्ठाणिया दुट्ठाणिया वा अणुभागुदीरणा। आभिणिबोहियणाण—सुयणाण—ओहिमणपज्जवणाणावरणाणं चक्खुदंसण—अचक्खुदंसण—ओहिदंसणावरणाणं घातिसंण्णाए उक्कसाणुभागउदीरणा सव्वघाति अणुक्कसा सव्वघाति वा देसघाति वा। केवलणाणावरण णिद्दापणग केवलदंसणावरण मिच्छत्तं बारसण्हं कसायाणं उक्कस्स वा अणुक्कस्स वा अणुभागउदीरणा सव्वघाती। सातासात चउण्हं आउगाणं णामकम्माणं सव्वेसिं णीउच्चागोयाणं च एतेसिं कम्माणं उक्कस्स वा अणुक्कस्स वा अणुभागउदीरणा सव्वघातीपडिभागी। चउण्हं संजलणाणं णवण्हं णोकसायाणं उक्कस्साणुभागउदीरणा सव्वघाती, अणुक्कस्सा सव्वघाती वा देसघाती वा। एए बंधसतगे भणिया तहावि असंमोहत्थं उल्लोइया। ठाणसण्णा घातिसण्णा वि सूइया।

ण्याणि पावेसु विसेसो सुतिज्जंति—'मीसगसम्मत्तमवि य पावेसु'त्ति। सम्मामिच्छत्तसमत्ताति असुभाणं
मज्झ भवन्ति, तत्थ एते ण भणिया। केरिसेणं संतकम्मेणं वट्टमाणो उक्कोस्साणुभागं उदीरेतित्ति तन्निरू-
वणत्थं भण्णइ—'छट्टाणवडियहीणा संतुक्कस्साउदीरणया'त्ति। छट्टाणवडियहीणत्ति—अणंतभागहीणसंतातो वा,
एवं असंखेज्ज(भागहीण)संखेज्ज(भागहीण) संखेज्जगुणअसंखेज्जगुणअणंतगुणहीणसंताउ वा संतुक्कस्साउ वा,
उक्कोसिया अणुभागुदीरणा लब्भइ। कहं? भण्णइ—अणंताणंताणं फड्डगाणं अणुभागो खविउ, अणंताणं न
खविउत्ति, खवेंतो एतेण विहिणा खवेति, तम्हा छट्टाणपडियहीणातो संतुक्कस्सातो वा उक्कोसिया अणुभाग-
उदीरणा लब्भतित्ति। थोवाउ वा बहुगातो वा तिव्वाउ तिव्वो अणुभागो लब्भइ सो उक्कोसो भण्णइ ॥४७॥

(मलय०)—'मणनाणं'ति—मनःपर्यायज्ञानं शेषैः कर्मभिः समं वेदितव्यम्। इयमत्र भावना—यथा शेषकर्मणामनुभागोदीरणा च-
तुःस्थानकस्य त्रिस्थानकस्य द्विस्थानकस्य च रसस्य भवति तथा मनःपर्यायज्ञानावरणस्यापि द्रष्टव्या। बन्धे पुनर्मनःपर्यायज्ञानाव-
रणस्य चतुष्प्रकारोऽपि रसो भवति। शेषकर्मणां तु बन्धे त्रिप्रकारः, तद्यथा—चतुःस्थानकस्त्रिस्थानको द्विस्थानकश्च। तानि च शेषक-
र्माण्यमूनि, तद्यथा—केवलज्ञानावरणं निद्रापञ्चकं केवलदर्शनावरणं सातासातवेदनीये मिथ्यात्वं द्वादश कषायाः षट् नोकषायाः नर-
कायुर्देवायुर्नरकगतिर्देवगतिः पञ्चेन्द्रियजातिस्तैजससप्तकं वैक्रियसप्तकमाहारकसप्तकं समचतुरस्रसंस्थानं हुंडसंस्थानं वर्णपञ्चकं गन्ध-
द्विकं रसपञ्चकं स्निग्धरूक्षमृदुलघुशीतोष्णरूपं स्पर्शषट्कं अगुरुलघूपघातं पराघातमुच्छ्वासोद्योतप्रशस्ताप्रशस्तविहायोगतित्रसबादरपर्या-
प्तप्रत्येकस्थिरास्थिरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरादेयानादेययशःकीर्त्ययशःकीर्तिनिर्माणतीर्थकरोच्चैर्गोत्रनीचैर्गोत्राणि चैतेषां चैको-

त्तरशतसंख्यानां शेषकर्मणामुत्कृष्टामनुभागोदीरणामधिकृत्य चतुःस्थानको रसः, अनुत्कृष्टां त्वधिकृत्य चतुःस्थानकत्रिस्थानको द्विस्थानकश्च । तथा मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणानामुत्कृष्टामनुभागोदीरणामधिकृत्य रसः सर्वघाती, अनुत्कृष्टां त्वधिकृत्य सर्वघाती देशघाती वा । केवलज्ञानावरणकेवलदर्शनावरणनिद्रापञ्चकमिथ्यात्वद्वादशकषायाणामुत्कृष्टामनुत्कृष्टां वानुभागोदीरणामधिकृत्य रसः सर्वघाती । सातासातवेदनीयायुश्चतुष्टयसकलनामप्रकृतिगोत्रद्विकानामुत्कृष्टामनुत्कृष्टां वोदीरणामधिकृत्य रसः सर्वघातिप्रतिभागः । तथा चतुर्णां संज्वलनानां नवानां नोकषायाणामुत्कृष्टामनुभागोदीरणामधिकृत्य रसः सर्वघाती, अनुत्कृष्टां त्वधिकृत्य सर्वघाती देशघाती वा प्रतिपत्तव्यः । इदानीमशुभप्रकृतिविषये विशेषमाह—'मीसग'इत्यादि । अपि च सम्यग्मिथ्यात्वं सम्यक्त्वं चानुभागोदीरणामधिकृत्य पापेषु—पापकर्मसु मध्येऽवगन्तव्यं, घातिस्वभावतया तयो रसस्याशुभत्वात् । शेषप्रकृतयस्तु यथा शतकग्रन्थेऽनुभागबन्धे शुभा अशुभाश्चोक्तास्तथाऽत्राप्यवगन्तव्याः । अथ कीदृशेऽनुभागसत्कर्मणि वर्तमान उत्कृष्टामनुभागोदीरणां करोति? उच्यते—'छट्ठाण'इत्यादि । अनुभागसत्कर्मणः षट्स्थानपतितहीनादपि उत्कृष्टानुभागोदीरणा प्रवर्तते । एतदुक्तं भवति—यत्सर्वोत्कृष्टमनुभागसत्कर्म तस्मिन्ननन्तभागहीने वाऽसंख्येयभागहीने वा संख्येयभागहीने वा संख्येयगुणहीने वाऽसंख्येयगुणहीने वाऽनन्तगुणहीने वोत्कृष्टानुभागोदीरणा प्रवर्तते । यतोऽनन्तानन्तानां स्पर्धकानामनुभागे क्षपितेऽपि अनन्तानि स्पर्धकानि उत्कृष्टरसान्यद्यापि तिष्ठन्ति, ततोऽनन्तभागेऽपि शेषे मूलानुभागसत्कर्मापेक्षयाऽनन्तगुणहीने उत्कृष्टानुभागोदीरणा लभ्यते, किं पुनरसंख्येयगुणहीनादावनुभागकर्मणीति ॥ ४७ ॥

(उ०)—मनःपर्यायज्ञानं शेषैः कर्मभिः समं वेदितव्यम् । अयं भावः—यथा शेषकर्मणामनुभागोदीरणा चतुस्त्रिद्विस्थानकविषया प्रव-

वंते तथा मनःपर्यायज्ञानावरणस्यापि द्रष्टव्या । तत्रोत्कृष्टा चतुःस्थाने, अनुत्कृष्टा तु चतुःस्थानके त्रिस्थानके द्विस्थानके वा । बन्धे तु
मनःपर्यायज्ञानावरणस्य चतुष्प्रकारोऽपि रसो भवति, शेषकर्मणां त्वेकस्थानकं विना त्रिप्रकारः । तानि च शेषकर्माण्यमूनि–केवल-
ज्ञानावरणं केवलदर्शनावरणं निद्रापञ्चकं सातासातवेदनीये मिथ्यात्वं द्वादश कपाया षट् नोकषायाः नरकगत्यानुपूर्वी देवगत्यानुपूर्वी
पञ्चेन्द्रियजातिस्तैजससप्तकं वैक्रियसप्तकमाहारकसप्तकमाद्यान्त्यसंस्थाने वर्णपञ्चकं गन्धद्विकं रसपञ्चकं स्निग्धरूक्षमृदुलघुशीतोष्णरूपं
स्पर्शपट्कमगुरुलघूपघातं पराघातं उच्छ्वासोद्योतविहायोगतिद्विकानि त्रसचतुष्कं स्थिरादिषट्कमस्थिरादिषट्कं निर्माणं तीर्थकरं गोत्रद्वि-
कं चेति । एतासां चैकोत्तरशतसङ्ख्यानां शेपकर्मप्रकृतीनामुत्कृष्टामनुभागोदीरणामधिकृत्य चतुःस्थानको रसोऽनुत्कृष्टां त्वधिकृत्य च-
तुःस्थानकस्त्रिस्थानको द्विस्थानकश्च । तथा मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणसंज्वलनचतुष्टयनोकपायनवकाना-
मुत्कृष्टानुभागोदीरणामधिकृत्य रसः सर्वघाती, अनुत्कृष्टां त्वधिकृत्य देशघाती सर्वघाती च । उक्तं च–"[1]देसोवघाइयाणं उदये देसो व
होइ सव्वो वा । देसोवघाइओ च्चिय अचक्खुसम्मत्तविग्घाणं" ॥ अत्रोदय इत्यसंप्राप्त्युदये उदीरणायामित्यर्थः । तथा केवलज्ञानावरण-
केवलदर्शनावरणनिद्रापञ्चकमिथ्यात्वद्वादशकपायाणामुत्कृष्टामनुत्कृष्टां वाऽनुभागोदीरणामधिकृत्य रसः सर्वघात्येव । सातासातवेदनीया-
युश्चतुष्टयसकलनामप्रकृतिगोत्रद्विकानामुत्कृष्टामनुत्कृष्टां चोदीरणामधिकृत्य रसः सर्वघातिप्रतिभागः । शुभाशुभत्वे विशेषमाह–मिश्रं
सम्यग्मिथ्यात्वं सम्यक्त्वमपि चानुभागोदीरणामधिकृत्य पापेषु–पापकर्मस्वधिगन्तव्यम् । अनयोर्घातिकर्मतया रसस्याशुभत्वात् । शेषप्र-
कृतयस्तु यथा शतकग्रन्थेऽनुभागबन्धे शुभाशुभतयाऽभिहितास्तथाऽत्रापि वक्तव्याः । अथ कीदृशेऽनुभागसत्कर्मणि वर्तमाने उत्कृष्टानुभा-

१ पञ्चसंग्रह उदीरणाकरण गा० ४२

गोदीरणां करोतीत्युच्यते-अनुभागसत्कर्मणः षट्स्थानपतितहीनादप्युत्कृष्टाऽनुभागोदीरणा प्रवर्तते । इदमुक्तं भवति-यत्सर्वोत्कृष्टमनुभागसत्कर्म तस्मिन्ननन्तभागहीने वाऽसंख्येयभागहीने वा संख्येयभागहीने वा संख्येयगुणहीने वाऽसंख्येयगुणहीने वाऽनन्तगुणहीने वोत्कृष्टानुभागोदीरणा प्रवर्तते । यतोऽनन्तानन्तानां स्पर्धकानामनुभागे क्षपितेऽप्यनन्तानन्तान्युत्कृष्टरसानि पश्चादवतिष्ठन्ते, ततो मूलानुभागसत्कर्मापेक्षयाऽनन्तगुणहीनेऽनन्तभागेऽपि शेषे सति यद्युत्कृष्टानुभागोदीरणा लभ्यते तदा किं वाच्यमसंख्येयगुणहीनादावनुभागसत्कर्मणि सतीति ॥४७॥

इयाणिं विवागे विसेसो भण्णइ—

**विरियंतरायकेवलदंसणमोहणियणाणवरणाणं । असमत्तपज्जएसु य सव्वदव्वेसु उ विवागो ॥४८॥**

(चू०)—वीरियंतराय केवलदंसणावरण अट्ठावीसाए मोहपगतीणं पंचण्हं णाणावरणियाणं एयासिं पणतीसाए पगतीणं 'असमत्तपज्जएसु य सव्वदव्वेसु तु विवागो'त्ति-जीवदव्वे विवागो दव्वतो ताव सव्वं जीवदव्वं आवरियं, भावउ वीरियाइ पज्जवा जीवस्स ण सव्वपज्जवा वीरियंतरायादीहिं पणतीसाए कम्मेहिं आवरिया, जहा-'सुट्ठुवि मेहसमुदए होइ पहा चंदसूराणं'। विवागोत्ति फलं-उदयो ॥४८॥

(मलय०)—सम्प्रति विपाके विशेषमाह—वीर्यान्तरायकेवलदर्शनावरणाष्टाविंशतिविधमोहनीयपञ्चविधज्ञानावरणानां पञ्चत्रिंशत्प्रकृतीनां असमस्तपर्यायेषु सर्वद्रव्येषु-सर्वजीवद्रव्येषु विपाकः । तथाहि-इमा वीर्यान्तरायादयः पञ्चत्रिंशत्प्रकृतयो द्रव्यतः सकलमपि जीवद्रव्यमुपघ्नन्ति, पर्यायांस्तु न सर्वानपि । यथा मेघैरतिनिचिततरैरपि सर्वात्मनान्तरितयोरपि सूर्याचन्द्रमसोर्न तत्प्रभा सर्वथाऽप-

नेतुं शक्यते । उक्तं च-'सुट्ठु वि मेहसमुदए होइ पहा चंदसूराणं' ति, तथाऽत्रापि भावनीयम् ॥४८॥

नेतुं शक्यते । उक्तं च-'सुट्ठु वि मेहसमुदए होइ पहा चंदसूराणं' त्ति, तथाऽत्रापि भावनीयम् ॥४८॥ सर्वसंख्यया पञ्चत्रिंश-

(उ०)—अथ विपाके विशेषमाह-वीर्यान्तरायकेवलदर्शनावरणाष्टाविंशतिविधमोहनीयपञ्चविधज्ञानावरणानां सर्वसंख्यया पञ्चत्रिंश-त्प्रकृतीनामसमस्तपर्यायेषु सर्वद्रव्येषु-सर्वजीवद्रव्येषु विपाकः । तथाहि इमा वीर्यान्तरायाद्याः पञ्चत्रिंशत्प्रकृतयः सकलमपि जीवद्रव्य-मुपघ्नन्ति पर्यायांस्तु न सर्वानपि, यथा मेघैः सर्वात्मनाऽऽच्छादितयोरपि सूर्याचन्द्रमसोस्तत्प्रभा सर्वथा नापनेतुं शक्यते तथैताभिः सर्वात्मनाऽऽवृतेऽपि जीवद्रव्ये तत्पर्यायाः सर्वथा नापनेतुं शक्यन्त इति भावनीयम् ॥४८॥

**गुरुलघुगाऽणंतपएसिएसु चक्खुस्स रूविदव्वेसु । ओहिस्स गहणधारणजोग्गे सेसंतरायाणं ॥४९॥**

(चू०)—'गुरुलहुगाणंतपदेसिकेसु' त्ति । चक्खुस्स जे गुरुलहुया अणंतपदेसिया खंधा तेसु चक्खुदंसणस्स विवागो, न सेसेसु दव्वेसु । 'रूविदव्वेसु ओहिस्स' त्ति-सव्वरूविदव्वेसु ओहिदंसणस्स विवागो ण सव्वदव्वेसु । 'गहणधारणजोग्गे सेसंतरायाणं' जे गहणधारणजोग्गा पोग्गलदव्वा तेसु दाणलाभभोगपरिभोगांतराइयाणं विवागो, ण सेसदव्वेसु । अवसेसाणं कम्माणं जहा बंधसतगे तहा चेव । विवाग विसेसो भणिओ ॥४९॥

(मलय०)—'चक्षुषः'-चक्षुर्दर्शनावरणस्य ये गुरुलघुका अनन्तप्रादेशिकाः स्कन्धास्तेषु विपाकः । अवधिदर्शनावरणस्य रूपिद्रव्येषु । शेषान्तरायाणां दानलाभभोगोपभोगान्तरायाणां ग्रहणधारणयोग्येषु पुद्गलद्रव्येषु विपाको न शेषेषु । यावत्स्वेव हि विषये चक्षुर्दर्शनादीनि व्याप्रियन्ते तावत्स्वेव विषये चक्षुर्दर्शनावरणादीन्यपि । तत उक्तरूपो विषयनियमो न विरुध्येत । शेषप्रकृतीनां तु यथा प्राक् विपाको-ऽभिहितः पुद्गलविपाकादिस्तथथावगन्तव्यः ॥४९॥

(उ०)—चक्षुषः—चक्षुर्दर्शनावरणस्य गुरुलघुकेष्वनन्तप्रादेशिकेषु स्कन्धेषु विपाकः। अवधिदर्शनावरणस्य रूपिद्रव्येषु। शेषान्तरायाणां—वीर्यान्तरायव्यतिरिक्तानां दानलाभभोगोपभोगान्तरायाणां ग्रहणधारणयोग्येषु पुद्गलद्रव्येषु विपाको न शेषेषु। यावानेव हि चक्षुर्दर्शनादीनां विषयस्तावानेव तदुपघातककर्मणामित्युक्तरूपविषयनियमाविरोधः। शेषप्रकृतीनां तु पुद्गलविपाकादिर्यथा प्रागभिहितस्तथैवावगन्तव्यः ॥४९॥

इदाणिं पच्चयपरूवणा भण्णइ। सा दुविहा—गुणपच्चइया य, भवपच्चइया य। गुणकारणेण जा अणुभागुदीरणा जहा आहारसत्तगस्स सा गुणपच्चइया, भवपच्चइया नाम जहा णिरयभवं पडुच्च णिरयाउगस्स अणुभागुदीरणा सा भवपच्चइगा वुच्चइ, एवमादि—

वेउव्वियतेयगकम्मवन्नरसगंधनिद्धलुखाओ। सीउण्हथिरसुभेयरअगुरुलघुगो य नरतिरीए ॥५०॥

(चू०)—वेउव्वियसत्तगं तेयगकम्मग्गहणेणं तेजइगसत्तगं गहियं, वण्णा पंच, गंधा दोण्णि, रसा य पंच, णिद्धलुक्खसीयउण्हथिराथिरसुभासुभ अगुरुलहुगं एताउ पणतीसं पगइउ तिरियमणुयाणं परिणामपच्चइगा ॥

(मलय०)—सम्प्रति प्रत्ययप्ररूपणा कर्तव्या। प्रत्ययोऽपि द्विधा—परिणामप्रत्ययो भवप्रत्ययश्च। तत्र परिणामप्रत्ययमधिकृत्याह—'वेउव्विय' त्ति। वैक्रियसप्तकं, तैजसकार्मणग्रहणात्तैजससप्तकं गृहीतम्, तथा वर्णपञ्चकं गन्धद्विकं रसपञ्चकं स्निग्धरूक्षशीतोष्णस्थिरास्थिरशुभाशुभागुरुलघूनि चानुभागोदीरणामधिकृत्य तिर्यङ्मनुष्याणां परिणामप्रत्ययानि। वैक्रियसप्तकं हि तिर्यङ्मनुष्याणां गुणविशेषसमुत्थलब्धिप्रत्ययं ततस्तदुदीरणापि तेषां गुणपरिणामप्रत्यया। तैजससप्तकादयस्तु तिर्यङ्मनुष्यैरन्यथान्यथा परिणमय्योदीर्यन्ते,

ततस्तासामपि प्रकृतीनामनुभागोदीरणा तिर्यङ्मनुष्याणां परिणामप्रत्यया ॥५०॥

(उ०)—अथ प्रत्ययस्य प्ररूपणा कर्तव्या। प्रत्ययश्चोदीरणायाः कषायेण सहितोऽसहितो वा योगसंज्ञो वीर्यविशेषः। स च परिणामभवकृतभेदाद्विधा। तत्र परिणामप्रत्ययोऽपि द्विधा–सगुणानां निर्गुणानां च परिणत्या सगुणपरिणामकृतो निर्गुणपरिणामकृत-श्चेति। एतदुभयभेदसंलुलितपरिणामप्रत्ययमधिकृत्याह—वैक्रियसप्तकं 'तेयगकम्म' त्ति–कार्मणसमभिव्याहृततैजसशब्देन तैजससप्तकं गृह्यते, तथा वर्णपञ्चकं रसपञ्चकं स्निग्धरूक्षे शीतोष्णे स्थिरशुभे इतरे–अस्थिराशुभे अगुरुलघु च, एताः प्रकृतयोऽनुभागोदीरणाम-धिकृत्य नरतिर्यक्षु परिणामप्रत्ययाः। वैक्रियसप्तकं हि नरतिरश्चां गुणविशेषसमुत्थलब्धिप्रत्ययं, ततस्तदुदीरणापि तेषां गुणपरिणामप्र-त्यया। तैजससप्तकादिप्रकृतयस्तु तिर्यग्नरैरन्यथाऽन्यथाविपरिणमय्योदीर्यन्त इति तासामपि प्रकृतीनामनुभागोदीरणा तिर्यङ्नराणां परिणामप्रत्ययेति ॥५०॥

चउरंसमउयलहुगापरघाउज्जोयइट्ठखगइसरा। पत्तेग तणू उत्तरतणूसु दोसु वि [य] तणू तइया ॥५१॥

(चू०)—समचउरंसं मउगं लहुगं पराघातं उज्जोवं पसत्थविहायगति सुस्सरं पत्तेयं एएसिं अट्ठण्हं कम्माणं 'उत्तरतणुसु दोसु वि' त्ति–वेउव्वियं आहारगं च उप्पाएमाणस्स अट्ठ वि चउरंसादि परिणामपच्चइगा भवन्ति। पुव्वं अविज्जमाणा वि उप्पाएमाणस्स होंति। 'तणू तइया वि' त्ति तइया तणू आहारसरीरं मणुयाणं गुणपरिणाम-पच्चइयं भवति, अविज्जमाणं उप्पज्जइ ॥५१॥

(मलय०)—समचतुरस्रसंस्थानमृदुलघुपराघातोद्योतप्रशस्तविहायोगतिसुस्वरप्रत्येकनामानोऽष्टौ प्रकृतय उत्तरतन्वोः–वैक्रियाहारक-

लक्षणयोरनुभागोदीरणामधिकृत्य परिणामप्रत्यया वेदीतव्याः । यत उत्तरवैक्रिये आहारके वा शरीरे सति समचतुरस्रादीनामनुभागोदीरणा प्रवर्तमाना उत्तरवैक्रियादिशरीरपरिणामापेक्षा, तत एषापि परिणामप्रत्यया वेदितव्या। तथा तृतीया तनुः—आहारकशरीरम्, आहारकशरीरग्रहणाच्चाहारकसप्तकं गृहीतं द्रष्टव्यम् । ततोऽनुभागोदीरणामधिकृत्य परिणामप्रत्ययं वेदितव्यम्। आहारकसप्तकं हि मनुष्याणां गुणपरिणामप्रत्ययं भवति. ततस्तदनुभागोदीरणापि गुणपरिणामप्रत्ययैवेति ॥५१॥

(उ०)—सम्प्रति यासां प्रकृतीनामनुभागोदीरणा न गुणागुणपरिणामकृता नापि भवकृता ता निर्दिदिक्षुराह—समचतुरस्रसंस्थान-मृदुलघुपराघातोद्योतप्रशस्तविहायोगतिसुस्वरप्रत्येकाख्या अष्टौ प्रकृतयः 'तणू' त्ति—अनुभागोदीरणामधिकृत्य तनुपरिणामप्रत्यया, 'उत्तरतणूसु दोसु वि' त्ति—उत्तरतन्वोर्वैक्रियाहारकलक्षणयोर्द्वयोरपि करणपरिणामे सतीत्यर्थः, उत्तरवैक्रिये आहारके वा क्रियमाणे तद्बलादेव समचतुरस्रादीनामनुभागोदीरणा प्रवर्तमाना न गुणागुणपरिणामकृता, नापि भवकृता, किंतूत्तरवैक्रियादिशरीरपरिणाम-कृतेत्यर्थः । केवलगुणपरिणाममधिकृत्याह—'तणू तइया' इत्यादि । तृतीया तनुराहारकशरीरं, उपलक्षणादाहारकसप्तकं, अनुभागोदीरणामधिकृत्य गुणपरिणामप्रत्ययं, एतद्धि गुणपरिणामेनैव भवतीत्येतदुदीरणापि गुणपरिणामप्रत्ययैवेति ॥५१॥

**देसविरयविरयाणं सुभगाएज्जजसकित्तिउच्चाणं । पुव्वाणुपुव्विगाए असंखभागो थियाईणं ॥५२॥**

(चू०)—'देसविरयविरयाणं सुभगादेज्जजसकित्तिउच्चाणं' च—देसविरयसंजयाणं सुभगआदेज्जजसकित्ति-उच्चागोय गुणपरिणामपच्चइगा भवंति। तेसिं पडिवक्खजुत्तो वि जो देसविरइं (विरइं) वा पडिवज्जइ तस्स सुभगादेज्जजसकित्तिउच्चाणी चेवत्ति। 'पुव्वाणुपुव्वीयाए असंखभागो थियादीणं'ति।पुव्वाणुपुव्वीयाएत्ति जहण्णा-

णुभागफड्डगाओ आइवेत्तु असंखिज्जतिभागो थियादीणं णवण्हं णोकसायाणं उदीरिज्जइ । सेसा उवरिल्ला
ण उदीरिज्जंति, देसविरयविरयाणं परिणामपच्चइगो ॥५२॥
(मलय०)—'देसविरय'त्ति। देशविरतानां विरतानां च सुभगादेययशःकीर्त्युच्चैर्गोत्राणामनुभागोदीरणा परिणामकृता। तथाहि–
सुभगादिप्रतिपक्षभूतदुर्भगादिप्रकृत्युदययुक्तोऽपि यो देशविरतिं सर्वविरतिं वा प्रतिपद्यते तस्यापि देशविरत्यादिगुणप्रभावतः सुभगा-
दीनामेव प्रकृतीनामुदयपूर्वकमुदीरणा प्रवर्तत इति। तथा स्त्रीवेदादीनां नवानां नोकषायाणां पूर्वानुपूर्व्याऽसंख्येयो भागो देशविरतानां
सर्वविरतानां च प्रत्येकमुदीरणायोग्यो गुणपरिणामप्रत्ययो वेदितव्यः। इदमुक्तं भवति–स्त्रीवेदादीनामतिजघन्यानुभागस्पर्धकादारभ्य
क्रमेणासंख्येयो भागो देशविरतादीनामुदीरणायोग्यो गुणप्रत्ययो भवति, परस्त्वनुभागो नोदीरणामेति ॥५२॥
(उ०)—देशविरतानां विरतानां च सुभगादेययशःकीर्त्युच्चैर्गोत्राणामनुभागोदीरणा गुणपरिणामकृता। तथाहि–सुभगादिविरोधि-
दुर्भगादिप्रकृत्युदययुक्तोऽपि यो देशविरतिं सर्वविरतिं वा प्रतिपद्यते, तस्यापि देशविरत्यादिगुणमहिम्ना सुभगादिप्रकृतीनामेवोदयपूर्व-
दीरणा प्रवर्तत इति। तथा 'थियाईणं' ति–स्त्रीवेदादीनां नवानां नोकषायाणां पूर्वानुपूर्व्याऽतिजघन्यानुभागस्पर्धकादारभ्य, क्रमेणो-
त्यर्थः, असंख्येयो भागो देशविरतानां सर्वविरतानां च प्रत्येकमुदीरणायोग्यो गुणपरिणामकृतो वेदितव्यः, परतस्त्वनुभागो नोदीरणा-
मेति। पञ्चसंग्रहे त्वेतेषां जघन्यानुभागस्पर्धकादारभ्यानन्ता भागा उदीरणायोग्या गुणपरिणामकृता उक्ताः, तथा च तद्गाथा–"सुभ-
गाइउच्चगोए गुणपरिणामा उ देसमाईणं। अइहीणफड्डगाओ णंतसो णोकसायाणं" ॥५२॥

१ पञ्चसंग्रह उदीरणाकरण गा. ५१

तित्थयरं घाईणि य परिणाम पच्च(इ)याणि सेसाओ। भवपच्चइया पुव्वुत्ता वि य पुव्वुत्तसेसाणं ॥५३॥

(चू०)—तित्थगरणाम पंचणाणावरण नवदंसणावरणं णोकसायाणं मोहणिज्जं पंचण्हं अंतराइयाणं एतेसिं एगूणचत्तालीसाए कम्माणं अणुभागुदीरणा परिणामपच्चईया तिरियमणुयाणं। परिणामो णाम अण्णहिभावगमणं, गुणपच्चएणं अण्णहि भावे णिज्जंति। 'सेसाओ भवपच्चइयातो'त्ति–सेसाउ पगतीउ, कयरा? भण्णइ–सातासातं, आउयचउक्कं, गतिचउक्कं, जाइपंचगं, उरालियसत्तगं, छसंघयणा, पढमवज्जा पंचसंठाणा, कक्खडं, गुरुगं, चत्तारि आणुपुव्वीउ, उवघायं, उस्सासं, आयावं, अपसत्थविहायगति, तसं, थावरं, बायरं, सुहुमं, पज्जत्तगं, अपज्जत्तगं, साहारणं, दुभगं, दुस्सरं, अणादेज्जं, अजसं, णिम्मेणं, णीयागोयमिति एतासिं छप्पण्णाए पगतीणं अणुभागुदीरणा भवपच्चया। जं जस्स अत्थि तं तस्स जोजेयव्वं।'पुव्वुत्ता वि य पुव्वुत्तसेसाणं'ति–पुवुत्ता कम्मा, पुव्वुत्तसेसाणं ति–देवणेरइया, सभावसरीरिणो अपच्चइणो य–एतेसिं भवपच्चइयाणि चेव भवंति। तं जहा–णवण्हं णोकसायाणं पच्छाणुपुव्वीए उक्कस्सगाउ अणुभागफड्डगाउ आढवेत्तु असंखेज्जा अणुभागभागा भवपच्चइयातो उदीरिज्जंति। वेउव्वियसत्तगं तेजइगसत्तगं पंचवण्णा दो गंधा पंच रसा सीउण्हणिद्धलुक्खा थिराथिर सुभासुभ अगुरुलहुगं च एताणि देवणेरइयाणं भवपच्चइयाणि। समचउरंसं भवधारणिज्जसरीरे भवपच्चइयं। मउयलहुय–पराघायुज्जोव–पसत्थविहायगति–सुस्सर–पत्तेयसरीरणामाणं उत्तरवेउव्वियं मोत्तु सेसेसु भवपच्चइया अणुभागुदीरणा। सुभगआएज्जजसकित्तिउच्चागोयाणं अगुणपडिवण्णस्स भवपच्चइया अणुभाग-

भवपच्चइया । पच्चयपरूवणा भणिया ॥५३॥
उदीरणा। सव्वेसिं घातिकम्माणं उदीरणा देवणेरइयाणं

(मलय०)—'तित्थयर'त्ति–तीर्थकर घातिकर्माणि च–पञ्चविधज्ञानावरणनवविधदर्शनावरणनोकपायवर्जमोहनीयपञ्चविधान्तरायरूपाणि सर्वसंख्ययैकोनचत्वारिंशत्प्रकृतयोऽनुभागोदीरणामधिकृत्य तिर्यङ्मनुष्याणां परिणामप्रत्ययाः। एतदुक्तं भवति–आसां प्रकृतीनामनुभागोदीरणा तिर्यङ्मनुष्याणां परिणामप्रत्यया भवति। परिणामो ह्यन्यथाभावनयनम्। तत्र तिर्यञ्चो मनुष्या वा गुणप्रत्ययेनान्यथावद्धानामन्यथा परिणमय्यतासामुदीरणां कुर्वन्तीति। 'सेसा उ'त्ति–शेषाः प्रकृतयः, सातासातवेदनीयायुश्चतुष्टयगतिचतुष्टयजातिपञ्चकौदारिकसप्तकसंहननषट्कप्रथमवर्जसंस्थानपञ्चककर्कशगुरुस्पर्शानुपूर्वीचतुष्टयोपघातातपोच्छ्वासाप्रशस्तविहायोगतित्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तसाधारणदुर्भगदुःस्वरानादेयायशःकीर्तिनिर्माणनीचैर्गोत्ररूपाः षट्पञ्चाशत्संख्या अनुभागोदीरणामधिकृत्य भवप्रत्यया वेदितव्याः। एतासामनुभागोदीरणा भवप्रत्ययतो भवतीत्यर्थः। 'पुव्वुत्त'इत्यादि। पूर्वोक्ता अपि प्रकृतयः पूर्वोक्तशेषाणां–प्रागुक्ततिर्यङ्मनुष्यव्यतिरिक्तानां भवप्रत्ययाऽनुभागोदीरणा वेदितव्या। तथाहि–देवनारकैरन्तरहितैश्च तिर्यङ्मनुष्यैर्नवानां नोकपायाणां पश्चानुपूर्व्या, उत्कृष्टानुभागस्पर्धकादारभ्येत्यर्थः, असंख्येया अनुभागा भवप्रत्ययादेवोदीर्यन्ते। तथा वैक्रियसप्तकतैजससप्तकवर्णपञ्चकगन्धद्विकरसपञ्चकस्निग्धरूक्षशीतोष्णस्पर्शस्थिरास्थिरशुभाशुभागुरुलघुप्रकृतीनां देवा नैरयिकाश्च भवप्रत्ययादनुभागोदीरणां कुर्वन्ति। तथा समचतुरस्रसंस्थानस्य भवधारणीये शरीरे वर्तमाना भवप्रत्ययादनुभागोदीरणां देवाः कुर्वन्ति। मृदुलघुस्पर्शपराघातोद्योतप्रशस्तविहायोगतिसुस्वरप्रत्येकनाम्नामुत्तरवैक्रियशरीरिणं मुक्त्वा शेषाणां भवप्रत्ययादनुभागोदीरणा प्रवर्तते। सुभगादेययशःकीर्त्युच्चैर्गोत्राणामनुभागोदीरणा गुणहीनस्य भवप्रत्ययादपरेषां, गुणवतां तु गुणप्रत्यया। तथा सर्वेषां घातिकर्मणामनुभागोदीरणा भवप्रत्ययादेव देवनारकाणाम् ॥५३॥

(उ०)—तीर्थकरं घातिकर्माणि च पञ्चविधज्ञानावरणनवविधदर्शनावरणनोकषायवर्जमोहनीयपञ्चविधान्तरायरूपाणि अनुभागोदीरणामधिकृत्य तिर्यङ्मनुष्याणां परिणामप्रत्ययानि । परिणामो ह्यन्यथाभावनयनम् । तत्र तिर्यञ्चो मनुष्या वा गुणप्रत्ययेनान्यथा बद्धा अप्यन्यथा परिणमय्योदीरयन्तीत्येता एकोनचत्वारिंशत्प्रकृतय उदीरणायां गुणपरिणामप्रत्यया इति भावः । भवप्रत्यया आह—'सेसा उ'इत्यादि—शेषाः प्रकृतयः सातासातवेदनीयायुश्चतुष्टयगतिचतुष्टयजातिपञ्चकौदारिकसप्तकसंहननषट्कानाद्यसंस्थानपञ्चककर्कशगुरुस्पर्शानुपूर्वीचतुष्टयोपघातातपोच्छ्वासाप्रशस्तविहायोगतित्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तसाधारणदुर्भगदुःस्वरानादेयायशःकीर्त्तिनिर्माणनीचैर्गोत्ररूपाः षट्पञ्चाशत्संख्या अनुभागोदीरणामधिकृत्य भवप्रत्यया वेदितव्याः, एतासामनुभागोदीरणाया गुणप्रत्ययत्वाभावेन भवप्रत्ययत्वात् । तथा पूर्वोक्ता अपि प्रकृतयः पूर्वोक्तशेषाणां प्रागुक्ततिर्यङ्मनुष्यव्यतिरिक्तानां भवप्रत्ययोदीरणा ज्ञातव्याः । तथाहि—देवनारकैर्व्रतरहितैश्च तिर्यङ्मनुष्यैर्नवानां नोकषायाणां पश्चानुपूर्व्या -उत्कृष्टानुभागस्पर्धकादारभ्येत्यर्थः, असंख्येया अनुभागा उदीर्यन्ते भवप्रत्ययादेव । तथा वैक्रियसप्तकतैजससप्तकवर्णपञ्चकगन्धद्विकरसपञ्चकस्निग्धरूक्षशीतोष्णस्पर्शस्थिरास्थिरशुभाशुभागुरुलघुप्रकृतीनां देवा नारकाश्चानुभागं भवप्रत्ययादेवोदीरयन्ति । तथा समचतुरस्रसंस्थानस्य भवधारणीये शरीरे वर्तमाना देवा भवप्रत्ययादनुभागोदीरणां कुर्वन्ति । मृदुलघुस्पर्शपराघातोद्योतप्रशस्तविहायोगतिसुस्वरप्रत्येकनाम्नामुत्तरवैक्रियशरीरिणो विहाय शेषाणां भवप्रत्ययादनुभागोदीरणा प्रवर्तते । सुभगादेययशःकीर्त्युच्चैर्गोत्राणामनुभागोदीरणा गुणहीनस्य भवप्रत्यया, गुणवतां तु गुणप्रत्यया । तथा सर्वेषां घातिकर्मणामनुभागोदीरणा देवनारकाणां भवप्रत्यया । शेषभावना तु सुगमेति । पञ्चसंग्रहे त्वेवमुक्तम्—'जा जम्मि भवे णियमा उदीरए ताओ भवणिमित्ताओ । परिणामपच्चयाओ सेसाओ सईससव्वत्थ ॥'(उ० क० ५२) अस्या अर्थः—याः प्रकृतीर्यस्मिन् भवे नियमा-

व्-निश्चयेनोदीरयन्ति ता भवनिमित्ता-भवप्रत्ययोदीरणा इति भावः। तत्र नरकभवप्रत्यया नरकत्रिकस्योदीरणा, देवभवप्रत्यया देव-
त्रिकस्य, तिर्यग्भवप्रत्यया तिर्यक्त्रिकाद्यजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपनाम्नां, मनुष्यभवप्रत्यया मनुष्यत्रिकस्य । शेषा एता-
भ्यो विंशतिप्रकृतिभ्यो व्यतिरिक्ताः परिणामप्रत्ययोदीरणाः । ताश्च ध्रुवोदया एव, यतः सती विद्यमाना सोदीरणा सर्वेषु भवेषु,
सा चैतासामुदीरणा निर्गुणपरिणामा द्रष्टव्येति। न चैतदपि विरुद्धं, विवक्षाभेदेनेत्थमप्युक्तेर्युक्तत्वादिति । किं च सर्वा अपि प्रकृतयो
यथायोगं भव एवोदीर्यन्ते, तिर्यग्गतियोग्यास्तिर्यग्भवे, मनुष्यगतियोग्या मनुष्यभवे, नरकगतियोग्या नरकभवे, देवगतियोग्याश्च
देवभवे इत्यतः सर्वा अपि भवप्रत्ययोदीरणा । यद्वा सर्वा अपि प्रकृतीस्तत्तत्परिणामवशेन प्रभूतरसाः सतीरल्परसाः कृत्वाऽल्परसाश्च
सतीः प्रभूतरसाः कृत्वोदीरयन्ति सर्वेऽपि जीवा इति सर्वा अपि प्रकृतयः परिणामप्रत्ययोदीरणा वेदित-व्याः। उक्तं च-'भवपच्चइया सव्वा तहेव परिणामपच्चइया' तस्मादत्र विचित्रोक्तौ विवक्षाभेद एव शरणमिति भावनीयम् ॥५३॥

अनुभागोदीरणायां प्रत्ययप्ररूपणा ।

प्रत्ययः ( तस्य भेदस्थापना )
( सकाषायिकोऽकाषायिको वा )

- परिणामकृतः
  - सगुणपरिणामप्रत्यय
  - निर्गुणपरिणामप्रत्ययः
- भवकृतः

| | | |
|---|---|---|
| वै० ७-तै० ७-वर्ण ५-रस ५ स्नि०-उष्ण-रुक्ष-शीत-स्थि०-अस्थि०-शुभ-अशुभ-अगु०-गंध २ (३५) | नृतिरश्चाम् गुणपरिणामप्रत्यया (देवनारकाणाम् भवप्रत्ययापि) | वै० सप्तकं गुणसमुत्थलब्धिप्रत्ययं। शेषास्त्वन्यथाऽन्यथाविपरिणमय्योदीर्यन्ते इति। |
| समच०-मृदु-लघु-परा०-उद्योत-सुखग०-सुस्वर-प्रत्येकानाम् (८) | तनुपरिणामप्रत्यया (मूलदेहिनाम् भवप्रत्ययापि) | उत्तरदेहे क्रियमाणे बलादेवोदीर्यन्त इति। |
| आहारकसप्तकस्य | केवलगुणपरिणामप्रत्यया | गुणोत्थलब्धिप्रत्ययत्वात्। |
| सुभग-आदेय-यश-उच्चैर्गोत्राणाम् (४) | गुणपरिणामप्रत्यया (भवप्रत्ययाऽपि अविरतानाम्) | देशविरतादिभिर्दुर्भगाद्युदयं निरुध्योदीर्यन्ते इति। |
| ९ नोकषायाणाम् | प्रथमोऽसंख्येयभागः[1] गुणप० प्र० (शेषो भ० प्र० अविरतानाम्) | देशसर्वविरतानां एतदेवोदीरणायामायान्तीति। |
| जिन-घातिनीनाम् ३८ | नृतिरश्चाम् गुणप० प्र० (देवनारकाणां भ० प्र०) | अन्यथापरिणमय्योदीर्यन्ते इति। |
| शेष ५६ नाम् | भवप्रत्ययाः | गुणप्रत्ययाभावत्वात्। |

विशेष —स्वस्वभवेऽवश्योदयवतीप्रकृतयः याः ताः भवप्रत्ययापि। १ पञ्चसंग्रहे "अनंतमो भाग" इति।

इदाणिं सादि अणादि परूवणा। सा दुविहा–मूलपगडीण उत्तरपयडीण य। तत्थ मूलपगईणं भण्णइ—

घाईणं अजहन्ना दोण्हमणुक्कोसिया य तिविहाओ। वेयणिएणुक्कोसा अजहन्ना मोहणीए उ ॥५४॥
साइअणाई धुवा अधुवा य तस्सेसगा य दुविगप्पा। आउस्स साइ अधुवा सव्वविगप्पा उ विन्नेया ॥५५॥

(चू०)—'घातीणं अजहण्ण'त्ति। मोहणिज्जवज्जाणं तिण्हं घातीकम्माणं अजहण्णा अणुभागउदीरणा अणादिया धुवअधुवा तिविहा। कहं? भण्णइ–तिण्हं घातीकम्माणं जहण्णा अणुभागउदीरणा खीणकसायस्स समयावलियाए सेसाए भवति। सा य सादि य अधुवा। तं मोत्तूण सेसा सव्वा अजहण्णा। तीसे आदी णत्थि, धुवउदीरणत्ताए, धुवाधुवा पुव्वुत्ता। 'दोण्हमणुक्कोसियाओ तिविहाओ'त्ति–दोण्हं णामगोयाणं अणुक्कोसिया अणुभागुदीरणा अणादियादि तिहा। कहं? भण्णइ–णामगोयाणं उक्कस्साणुभागउदीरणा सजोगिकेवलिस्स अंते, सा य सातिया अधुवा। तं मोत्तु सेसा अणुक्कसा। अणुक्कस्साए आदी णत्थि, धुवउदीरणत्ताउ, धुवाधुवा पुव्वुत्ता। 'वेयणिएणुक्कसा अजहण्णा मोहणीए उ सादिअणादि धुवा अधुवा य'त्ति–वेयणीए अणुक्कसा अणुभागउदीरणा सादियादि चउव्विहा। कहं? भण्णइ–वेयणियस्स सुहुमरागउवसामगेण बद्धं सव्वट्ठसिद्धे देवत्ते सातं तस्स देवो होत्तउक्कोसं अणुभागं उदीरेइ। सा य सादि य अधुवा। तं मोत्तूणं सेसा अणुक्कस्सा। अपमत्तभावं पडिवण्णस्स उदीरणा णत्थि, ततो परिवडमाणो अणुक्कोसं अणुभागुदीरणं सातियं उदीरेइ। अपमत्त-

भावं अपत्तपुव्वस्स अणादिया। धुवाधुवा पुव्वुत्ता। 'अजहण्णा मोहणीए'त्ति–मोहणिज्जस्स अजहण्णा अणुभागउदीरणा सादियादि चउव्विहा। कहं? भण्णइ–मोहणिज्जस्स जहण्णा अणुभागुदीरणा खवगस्स चरिमाए उदीरणाए भवति। सा य सादिया अधुवा। तं मोत्तुं सेसा अजहण्णा। उवसंतभावं पडिवंतस्साणुभागुदीरणा णत्थि। ततो परिवडमाणस्स अजहण्णा सादिया अणुभागुदीरणा। तं ठाणमपत्तपुव्वस्स अणादिया अजहण्णा, धुवाधुवा पुव्वुत्ता। 'तस्सेसगा उ दुविकप्प'त्ति। तेसिं चउण्हं घातिकम्माणं सेसगा भंगा उक्कोसाणुक्कोसाजहन्ना सादिगा अधुवा। कहं? भण्णइ–एतेसिं उक्कोस्साणुक्कोसा य अणुभागुदीरणा मिच्छद्दिठिम्मि लब्भति तम्हा साति य अधुवा। जहण्णगउदीरणाए पुव्वभणियं कारणं। णामगोयवेयणीयाणं जहण्णाजहण्णा उक्कोसा य सादिया अधुवा। कहं? भण्णइ–जहण्णाजहण्णा मिच्छद्दिट्ठिम्मि लब्भतित्ति काउं, उक्कोसस्स पुव्वभणियं। 'आउगस्स सादिगअधुवा सव्वविगप्पा उ विण्णेय'त्ति। आउगस्स सादियअधुवातो उक्कोसाणुक्कोसाजहण्णाअजहण्णातो अणुभागोदीरणातो अधुवोदीरणात्तातो ॥५४–५५॥

(मलय०)—तदेवं कृता प्रत्ययप्ररूपणा। सम्प्रति साद्यनादिप्ररूपणा कर्तव्या। सा च द्विधा–मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र प्रथमतो मूलप्रकृतिविषयां तां कुर्वन्नाह–'घाईणं'ति। मोहनीयवर्जानां त्रयाणां घातिकर्मणामजघन्याऽनुभागोदीरणा त्रिधा–त्रिप्रकारा। तद्यथा–अनादिर्ध्रुवाऽध्रुवा च। तथाहि–एषां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ जघन्यानुभागोदीरणा। सा च सादिरध्रुवा च। शेषकालं त्वजघन्या, सा चानादिर्ध्रुवोदीरणत्वात्। ध्रुवाध्रुवे अभव्यभव्यापेक्षया। तथा द्वयोर्नामगोत्रयोरनुत्कृष्टानु-

भागोदीरणा त्रिधा। तद्यथा—अनादिर्ध्रुवाऽध्रुवा च। तथाहि—अनयोरुत्कृष्टानुभागोदीरणा सयोगिकेवलिनि। सा च सादिरध्रुवा च। शेपकाले त्वनुत्कृष्टा। सा चानादिः, ध्रुवोदीरणत्वात्। ध्रुवाध्रुवे पूर्ववत्। तथा वेदनीयेऽनुत्कृष्टा, मोहनीये चाजघन्यानुभागोदीरणा चतुष्प्रकारा। तद्यथा—सादिरनादिरध्रुवा ध्रुवा च। तथाहि—उपशमश्रेण्यां सूक्ष्मसंपरायगुणस्थाने यद्बद्धं सातवेदनीयं तस्य सर्वार्थसिद्धिसंप्राप्तौ प्रथमसमये योदीरणा प्रवर्तते सोत्कृष्टा। सा च सादिरध्रुवा च। ततोऽन्या सर्वाप्यनुत्कृष्टा। सा चाप्रमत्तगुणस्थानकादौ न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत्। तथा मोहनीयस्य जघन्यानुभागोदीरणा सूक्ष्मसंपरायस्य क्षपकस्य समयाधिकावलिकाशेपायां स्थितौ भवति, सा च सादिः। तदनन्तरसमये चाभावादध्रुवा। शेपकाले त्वजघन्या। सा चोपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत्। 'तस्सेसगा य दुविगप्प'त्ति—तच्छेपा उक्तव्यतिरिक्ता विकल्पाः द्विविकल्पा—द्विप्रकारा ज्ञातव्याः। तद्यथा—साद्योऽध्रुवाश्च। तथाहि—चतुर्णां घातिकर्मणामुत्कृष्टाऽनुत्कृष्टा चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण प्राप्यते, ततो द्वे अपि साद्यध्रुवे। जघन्या च प्रागेव भाविता। तथा नामगोत्रवेदनीयानां जघन्याऽजघन्या चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्यते। ततो द्वे अपि साद्यध्रुवे। उत्कृष्टा च प्रागेव भाविता। आयुषां तु सर्वेऽपि विकल्पाः साद्यध्रुवाः। सा च साद्यध्रुवताऽध्रुवोदीरणत्वादवसेया॥

(३०)—तदेवं कृता प्रत्ययप्ररूपणा, अथ साद्यनादिप्ररूपणा कर्तव्या, सा च द्विधा—मूलप्रकृतिविपया, उत्तरप्रकृतिविपया च। तत्र प्रथमतो मूलप्रकृतिविपयां तां कुर्वन्नाह—मोहनीयरहितानां त्रयाणां घातिकर्मणामजघन्यानुभागोदीरणा त्रिविधा—अनादिर्ध्रुवाऽध्रुवा चेति। एषां हि क्षीणकपायस्य समयाधिकावलिकाशेपायां स्थितौ जघन्यानुभागोदीरणा भवति, सा च सादिरध्रुवा च। शेपकाले त्वजघन्या

सा चानादिर्ध्रुवोदीरणेति कृत्वा, ध्रुवाऽध्रुवे अभव्यभव्यापेक्षया। तथा द्वयोर्नामगोत्रयोरनुत्कृष्टानुभागोदीरणा त्रिविधा–अनादिर्ध्रुवाऽध्रुवा चेति । अनयोर्ह्युत्कृष्टानुभागोदीरणा सयोगिकेवलिनि, सा च सादिरध्रुवा च, शेषकालं त्वनुत्कृष्टा, सा चानादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे प्राग्वत् । तथा वेदनीयेऽनुत्कृष्टा, मोहनीये चाजघन्यानुभागोदीरणा सादिरनादिरध्रुवा ध्रुवा च। तथाहि–उपशमश्रेण्यां सूक्ष्मसंपरायगुणस्थाने यद्‌बद्धं सातवेदनीयं तस्य सर्वार्थसिद्धविमानप्राप्तौ प्रथमसमये योदीरणा प्रवर्तते सोत्कृष्टा, सा च सादिरध्रुवा च । ततोऽन्या सर्वाऽप्यनुत्कृष्टा, सा चाप्रमत्तगुणस्थानादौ न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । तथा मोहनीयस्य जघन्यानुभागोदीरणा सूक्ष्मसंपरायक्षपकस्य समयाधिकावलिकाशेषायां स्थितौ, सा च सादिः, तदनन्तरसमये चाभावादध्रुवा, शेषकालं चाजघन्या, सा चोपशान्तमोहगुणस्थाने न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । तच्छेषा उक्तव्यतिरिक्ता भेदाः सादयोऽध्रुवाश्चेति द्विविकल्पाः। तथाहि–चतुर्णां घातिकर्मणामुत्कृष्टानुत्कृष्टे अनुभागोदीरणे मिथ्यादृष्टौ पर्यायेण प्राप्यमाणत्वात्साद्यध्रुवे, जघन्या चाजघन्यावसरे एव भाविता। तथा नामगोत्रवेदनीयानां जघन्याजघन्ये अनुभागोदीरणे मिथ्यादृष्टौ पर्यायेण प्राप्यमाणत्वात् साद्यध्रुवे, उत्कृष्टा चानुत्कृष्टावसरे एव भाविता। आयुषां तु सर्वेऽपि विकल्पा अध्रुवोदीरणत्वादेव साद्यध्रुवाः ॥५४–५५॥

इदाणिं उत्तरपगतीण सादियअणादियपरूवणा भण्णइ—

**मउलहुगाणुक्कोसा चउव्विहा तिण्हमवि य अजहन्ना। णाइगधुवा य अधुवा वीसाए होयणुक्कोसा ॥५६॥**

तेवीसाएँ अजहण्णा विय एयासि सेसगविगप्पा । सव्वविगप्पा सेसाण वात्ति अधुवा य साईय ॥५७॥

(चू०)—'मउलहुगाणुक्कोसा चउविह'त्ति–मउयलहुयाणं अणुक्कोसा अणुभागउदीरणा सादियादि चउव्विहा। कहं ? भण्णइ–आहारसंजयस्स एतेसिं दोण्हं उक्कोसाणुभागउदीरणा, सा य सादियअधुवा। तं मोत्तुणं सेसा अणुक्कोसा अणुभागोदीरणा। सो चेव आहारसंजतो ततो परिवडमाणो अणुक्कोसस्स सादिया अणुभागउदीरणा, तं ठाणमपत्तपुव्वस्स अणादिया। धुवाअधुवा पुव्वुत्ता। 'तिण्हमवि य अजहन्न'त्ति–मिच्छत्तगुरुकक्खडाणं अजहण्णा अणुभागुदीरणा सादियादि चउव्विहा। कहं ? भण्णइ–मिच्छत्तस्स से काले सम्मत्तं ससंजमं पडिवज्जंतस्स जहण्णिया अणुभागउदीरणा। सा य सादिया अधुवा। तं मोत्तूणं सेसा अजहण्णा अणुभागुदीरणा। सो चेव सम्मत्ताओ परिवडमाणो पुणो मिच्छत्तं उदीरेति तस्स अजहण्णा अणुभागउदीरणा सादिया, तं ठाणमपत्तपुव्वस्स अणादिया, धुवाधुवा पुव्वुत्ता। कक्खडगुरुगाणं जहण्णा अणुभागउदीरणा केवलिस्स समुग्घायातो णियत्तमाणस्स मंथे भवति। सा य सादिय अधुवा। मंथाउ परिवडमाणस्स अजहन्ना सातिया, तं ठाणमपत्तपुव्वस्स अणादिया, धुवाधुवापुव्वुत्ता। 'णाइय धुवा य अधुवा वीसाए होयणुक्कोस'त्ति—तेजइगसत्तगं, सुभवण्णेक्कारसगं मउयलहुयवज्जं, अगुरूलहुगं, थिरसुभणिमेणभिति, एतासिं वीसाए पगईणं अणुक्कसा अणुभागउदीरणा तिविहा–अणाइया धुव अधुवा। कहं ? भण्णइ–एयासिं उक्कोसिया अणुभागउदीरणा सजोगिकेवलिस्स अंते, सा य साइ अधुवा। तं मोत्तूणं सेसा अणुक्कोसा

अणुभागोदीरणा, तीसे आदि णत्थि धुवउदीरणत्ताउ, धुवाधुवा पुव्वुत्ता। 'तेवीसाए अजहण्णा विय'त्ति। पंचणाणावरण चउदंसणावरण कक्खडगुरुवज्जं कुवण्णणवगं अथिर असुभं पंच अंतराइयमिति एयासिं तेवीसाए पगईणं अजहण्णा अणुभागुदीरणा अणाइयधुवाअधुवा। कहं ? भण्णइ–अप्पप्पणो उदीरणंते एतासिं जहण्णाणुभागउदीरणा होति। सा य सादिया अधुवा। तं मोत्तुणं सेसा अजहण्णाणुभाग-उदीरणा। तीसे आदि णत्थि धुवउदीरणत्ताउ, धुवाधुवा पुव्वुत्ता। 'एयासि सेसविगप्पा सव्वविग-प्पा सेसाण वा वि अधुवा य साईय'त्ति। एयासिं ति–भणियाणं सेसविगप्पत्ति–अभणियविगप्पा, मउग-लहुगवीसाए कम्माणं जहण्णाजहण्णउक्कोसा अणुभागउदीरणा सादिय अधुवा, कहं ? भण्णइ–एतासिं जहण्णाजहण्णअणुभागउदीरणा मिच्छादिट्ठिम्मि लब्भतित्ति काउं सादियअधुवा, उक्कोसाणुभागउदीरणाए कारणं भणियं। मिच्छत्तकक्खडगुरुगतेवीसाए य कम्मपगडीणं उक्कोसाणुक्कोसजहण्णा अणुभागउदीरणा सादिय अधुवा। कहं ? भण्णइ–एयासिं उक्कोसाणुक्कोसा अणुभागउदीरणा मिच्छादिट्ठिम्मि लब्भति, असु-भकंमाणित्ति काउं, तम्हा सादियअधुवा। जहण्णाणुभागउदीरणाए कारणं भणियं। 'सव्वविगप्पा सेसाण वावि'त्ति–सव्वविगप्पा इति उक्कोसाणुक्कोसजहण्णाजहण्णअणुभागउदीरणाविगप्पा, सेसाणंति दसुत्तर-पगतिसयस्स सादियअधुवा एव, अधुवोदयत्ताउ ॥५६-५७॥

(मलय०)—तदेवं कृता मूलप्रकृतिविषया साद्यनादिप्ररूपणा। सम्प्रत्युत्तरप्रकृतिविषयां तां चिकीर्षुराह–मृदुलघुस्पर्शयोरनुत्कृष्टा-

ऽनुभागोदीरणा चतुर्विधा, तद्यथा—सादिरनादिर्ध्रुवाऽध्रुवा च । तथाहि—अनयोरुत्कृष्टानुभागोदीरणा आहारकशरीरस्थस्य संयतस्य भवति । सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यनुत्कृष्टा । सापि चाहारकशरीरमुपसंहरतः सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवे पूर्ववत् । तथा त्रयाणां मिथ्यात्वगुरुकर्कशानामजघन्यानुभागोदीरणा चतुर्विधा । तद्यथा—सादिरनादिर्ध्रुवाऽध्रुवा च । तत्र सम्यक्त्वं संयमं च युगपत्प्रतिपत्तुकामस्य जन्तोर्मिथ्यात्वस्य जघन्यानुभागोदीरणा । सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यजघन्या । सा च सम्यक्त्वात्प्रतिपततः सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत् । कर्कशगुरुस्पर्शयोर्जघन्यानुभागोदीरणा केवलिसमुद्घातान्निवर्तमानस्य षष्ठसमये भवति । सा च सादिरध्रुवा च, समयमात्रत्वात् । ततोऽन्या सर्वाप्यजघन्या । सापि केवलिसमुद्घातान्निवर्तमानस्य सप्तमसमये भवन्ती सादिः ध्रुवाध्रुवे पूर्ववत् । तथा तैजससप्तकमृदुलघुवर्जशुभवर्गाद्येकादशकागुरुलघुस्थिरशुभनिर्माणनाम्नां विंशतिप्रकृतीनामनुत्कृष्टानुभागोदीरणा त्रिधा । तद्यथा—अनादिर्ध्रुवाऽध्रुवा च । तथाहि—एतासामुत्कृष्टानुभागोदीरणा सयोगिकेवलिचरमसमये । ततोऽन्या सर्वाप्यनुत्कृष्टा । सा चानादिः, ध्रुवोदीरणत्वात् । ध्रुवाध्रुवे पूर्ववत् । तथा पञ्चविधज्ञानावरणचक्षुरचक्षुरवधिकेवलदर्शनावरणकृष्णनीलदुरभिगन्धतिक्तकटुरूक्षशीतास्थिराशुभपञ्चविधान्तरायरूपाणां त्रयोविंशतिप्रकृतीनामजघन्यानुभागोदीरणा त्रिधा । तद्यथा—अनादिर्ध्रुवाऽध्रुवा च । तथाहि—एतासां स्वस्वोदीरणापर्यवसाने जघन्यानुभागोदीरणा । सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यजघन्या । सा चानादिः, ध्रुवोदीरणत्वात् । ध्रुवाध्रुवे पूर्ववत् । 'एयासि' इत्यादि । एतासां पूर्वोक्तानां प्रकृतीनां शेषविकल्पा—उक्तव्यतिरिक्ता विकल्पाः मृदुलघुविंशतीनां जघन्याजघन्योत्कृष्टाः, मिथ्यात्वगुरुकर्कशत्रयोविंशतीनां चोत्कृष्टानुत्कृष्टजघन्याः सादयोऽध्रुवाश्च भवन्ति । तथाहि—मृदुलघुविंशतीनां जघन्याऽजघन्या चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्यते ।

## मूलप्रकृतेरनुभागोदीरणायाः साद्यादिभङ्गयन्त्रम्

| प्रकृतयः | अजघन्यः | | | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुव. | अना० | ध्रु० | सादिः | अध्रु० | सादिः | अध्रु० | अना० | ध्रु० | सादिः | अध्रुवः |
| (मूलप्रकृतिषु) ज्ञान०-दर्श०-वि० | —— | भव्यानाम् | सादेरभावात् | अभ० | १२मे गुणस्थाने.० | सादित्वात् | परावृत्तित्वात् | परावृ० | — | — | परावृत्तित्वात् | परावृ० |
| नामगोत्रयोः | परावृत्तित्वान्मिथ्यादृशि | परा० मिथ्या० | — | — | परावृत्तित्वान्मिथ्यादृशि | परावृ० मिथ्या० | — | भव्यानाम् | आदेरभावात् | अभ० | १३ मे | सादित्वात् |
| वेदनीयस्य | ,, | ,, | — | — | ,, | ,, | अप्रमत्तादितः पतताम् | ,, | साद्यप्राप्तानाम् | ,, | १०मबद्धसर्वार्थसुराणाम् | ,, |
| मोहनीयस्य | ११तः पतितानाम् (१०मे) | भव्यानाम् | साद्यप्राप्तानाम् | अभव्या० | क्षपकानां १०मे ० | सादिसमयादनंतरं | परावृत्तित्वात् | परावृ० | — | — | परावृत्तित्वात् | परावृ० |
| आयुषः | अध्रुवत्वात् | अध्रु० | — | — | अध्रुवत्वात् | अध्रु० | अध्रुवत्वात् | अध्रु० | — | — | अध्रुवत्वात् | अध्रु० |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| (उत्तमप्रकृतिषु) मृदु-लघ्वोः | परावृत्तित्वान्मिथ्यादृशि | परावृ० मिथ्या० | — | — | परावृत्तित्वान्मिथ्यादृशि | परावृ० मिथ्या० | आहारकदेहोपसंहृतः | भव्यानां | साद्यप्राप्तानाम् | अभव्यानां | आहारकदेहस्थमुनीनाम् | सादित्वात् |
| मिथ्यात्वस्य | सम्यक्त्वतः पतितानाम् | भव्यानां | साद्यप्राप्ताना | अभव्यानां | सम्य०संयमौ युगपत्प्रतिपित्सोः (समयमात्रत्वात्) | सादित्वात् | परावृत्तित्वात् मिथ्यादृशि | परावृ० मिथ्या० | — | — | परावृत्तित्वात् मिथ्यादृशि | परावृत्तित्वात् |
| गुरु-कर्कशयोः | समुद्घातस्य ७ मे समये | " | " | " | समुद्घातस्य षष्ठ समये | " | " | " | — | — | " | " |
| नर० ७-सुवर्ण ९-धनु० स्थि० शुभ निर्माणानां (२०) | परावृत्तित्वान्मिथ्यादृशि | परावृ० मिथ्या | — | — | परावृत्तित्वान्मिथ्यादृशि | परावृ० मिथ्या० | —— | भव्यानां | आदेरभावात् | अभव्यानां | १३मान्ते | विच्छेदत्वात् |
| ज्ञा०५-द०४ वि०५ कुवर्ण०७ अस्थिराशुभानाम् (२३) | —— | भव्यानाम् | आदेरभावात् | अभव्यानाम् | स्वोदीरणान्ते | सादित्वात् | परावृत्तित्वात् मिथ्यादृशि | परावृ० मिथ्या० | — | — | परावृत्तित्वात् मिथ्यादृशि | परावृ० मिथ्या० |
| ११०उत्तरोपाणाम् | अध्रुवोदीरणत्वात् | अध्रुवोदी० | — | — | अध्रुवोदीरणत्वात् | अध्रुवोदी० | अध्रुवोदीरणत्वात् | अध्रुवोदी० | — | — | अध्रुवोदीरणत्वात् | अध्रुवोदी० |

०. "समयाधिकावलिकाशेषे" इति संभावसूचकम्

ततो द्वे अपि साद्यध्रुवे । उत्कृष्टा च प्रागेव भाविता । तथा कर्कशगुरुमिथ्यात्वत्रयोविंशतीनामुत्कृष्टानुत्कृष्टा चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्यते, अशुभप्रकृतित्वात् । ततो द्वे अपि साद्यध्रुवे । जघन्या च प्रागेव भाविता । शेषाणामुक्तव्यतिरिक्तानां प्रकृतीनां दशोत्तरशतसंख्यानां सर्वे विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपाः सादयोऽध्रुवाश्चावगन्तव्याः । सा च साद्यध्रुवताऽध्रुवोदीरणत्वादवसेया ॥५६-५७॥

(उ०)—तदेवं कृता मूलप्रकृतिविषिया साद्यादिप्ररूपणा, अथोत्तरप्रकृतिविषयां तामाह—मृदुलघुस्पर्शयोरनुत्कृष्टानुभागोदीरणा चतुर्विधा—सादिरनादिर्ध्रुवाऽध्रुवा चेति। अनयोर्ह्युत्कृष्टानुभागोदीरणाऽऽहारकशरीरस्थस्य मुनेर्भवति, सा च सादिरध्रुवा च । ततोऽन्या सर्वाऽप्यनुत्कृष्टा, सापि चाहारकशरीरमुपसंहरतः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । तथा त्रयाणां मिथ्यात्वगुरुकर्कशानामजघन्यानुभागोदीरणाऽपि चतुर्विधा सादिरनादिर्ध्रुवाऽध्रुवा चेति । तत्र सम्यक्त्वसंयमौ युगत्प्रतिपित्सोर्मिथ्यात्वस्य जघन्यानुभागोदीरणा, सा च साद्यध्रुवा समयमात्रत्वात्, ततोऽन्या सर्वाऽप्यजघन्या, सा च सम्यक्त्वात्प्रतिपततः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । कर्कशगुरुस्पर्शयोर्जघन्यानुभागोदीरणा केवलिसमुद्घातान्निवर्तमानस्य षष्ठसमये भवति, सा चैकसामयिकीति साद्यध्रुवा । ततोऽन्या सर्वाप्यजघन्या । साऽपि केवलिसमुद्घातान्निवर्तमानस्य सप्तमे समये भवन्ती सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत्। तथा तैजससप्तकमृदुलघुवर्जशुभवर्णाद्येकादशकागुरुलघुस्थिरशुभनिर्माणलक्षणानां विंशतिप्रकृतीनामनुत्कृष्टानुभागोदीरणाऽनादिर्ध्रुवाऽध्रुवा चेति त्रिविधा । यत एतासामुत्कृष्टानुभागोदीरणा सयोगिकेवलिचरमसमये, ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चानादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे प्राग्वदिति । तथा त्रयोविंशतिप्रकृतीनां ज्ञानावरणपञ्चकदर्शनावरणचतुष्ककृष्णनीलदुरभिगन्ध-

तिक्तकटुरूक्षशीतास्थिराशुभान्तरायपञ्चकरूपाणामजघन्यानुभागोदीरणाऽप्यनादिध्रुवाध्रुवभेदेन त्रिधा। यत आसां स्वस्वोदीरणान्ते
जघन्यानुभागोदीरणा, सा च साद्यध्रुवा, ततोऽन्या सर्वाप्यजघन्या, सा चानादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे प्राग्वत्। एतासामुक्तप्रकृ-
तीनां शेषविकल्पा मृदुलघुविंशतीनां जघन्याजघन्योत्कृष्टा मिथ्यात्वगुरुकर्कशत्रयोविंशतीनां चोत्कृष्टानुत्कृष्टजघन्याः सादयोऽध्रुवाश्च
भवन्ति। तथाहि-मृदुलघुविंशतीनां जघन्याजघन्ये अनुभागोदीरणे, कर्कशगुरुमिथ्यात्वत्रयोविंशतीनां चोत्कृष्टानुत्कृष्टे मिथ्यादृष्टौ
पर्यायेण प्राप्यमाणत्वात्साद्यध्रुवे। उत्कृष्टा जघन्या च क्रमादुभयविषया प्रागेव भाविता। शेषाणामुक्तव्यतिरिक्तानां दशोत्तरशतसं-
ख्यानां सर्वेऽपि विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपा अध्रुवोदयत्वादेव साद्यध्रुवाः ॥५६-५७॥

भणिया सादिअणादिपरूवणा, इयाणिं उदीरणासामित्तं भण्णइ। सा दुविहा-उक्कोसिया, जहण्णिया य।
तत्थ पुव्वं तावुक्कोसउदीरणासामित्तं भण्णइ—

**दाणाइअचक्खूणं जिट्ठा आइम्मि हीणलद्धिस्स। सुहुमस्स चक्खुणो पुण तेइंदिय सव्वपज्जत्ते ॥५८॥**

(चू०)—'दाणादि'त्ति। पंचण्हं अंतराइयाणं अचक्खुदंसणस्स य जेट्ठत्ति-उक्कस्सा अणुभागउदीरणा 'हीण-
लद्धिस्स सुहुमस्स'त्ति-दाणाइलद्धिओ अचक्खुदंसणविण्णाणलद्धी य जस्स अचंतहीणा तस्स सुहुमस्स 'आइ-
म्मि'त्ति-पढमसमए वट्टमाणस्स एतेसिं छण्हं कम्माणं उक्कोसिया अणुभागउदीरणा भवइ। 'चक्खुणो पुण
तेइंदियसव्वपज्जत्ते'-चक्खुदंसणावरणस्स उक्कोसिया अणुभागउदीरणा तेइंदियस्स सव्वाहिं पज्जत्तीहिं पज्ज-
त्तस्स पज्जत्तिचरिमसमए होइ, जं लब्भमाणं न लब्भंति तं वड्डेणं दोसेणं भवतित्ति काउं ॥५८॥

(मलय०)—कृता साद्यनादिप्ररूपणा। सम्प्रति स्वामित्वमभिधातव्यम्। तच्च द्विधा–उत्कृष्टोदीरणाविषयं, जघन्योदीरणाविषयं च। तत्र प्रथमत उत्कृष्टोदीरणाविषयं स्वामित्वमाह—'दाणाइ'त्ति। सूक्ष्मस्य–सूक्ष्मैकेन्द्रियस्य हीनलब्धिकस्य सर्वस्तोकदानाद्यचक्षुर्दर्शनविज्ञानलब्धियुक्तस्यादौ प्रथमसमये वर्तमानस्य पञ्चविधान्तरायाचक्षुदर्शनावरणरूपाणां षण्णां प्रकृतीनामुत्कृष्टानुभागोदीरणा भवति। तथा त्रीन्द्रियस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य पर्याप्तिचरमसमये चक्षुर्दर्शनावरणस्योत्कृष्टानुभागोदीरणा ॥५८॥

(उ०)—कृता साद्यनादिप्ररूपणा, अथ स्वामित्वं वक्तव्यं, तच्च द्विधा–उत्कृष्टोदीरणाविषयं, जघन्योदीरणाविषयं च। तत्राद्यस्वामित्वमाह—सूक्ष्मस्य सूक्ष्मैकेन्द्रियस्य हीनलब्धिकस्य सर्वस्तोकदानाद्यचक्षुर्दर्शनविज्ञानलब्धियुक्तस्यादौ प्रथमसमये वर्त्तमानस्यान्तरायपञ्चकाचक्षुर्दर्शनावरणरूपाणां षण्णां प्रकृतीनामुत्कृष्टानुभागोदीरणा भवति। चक्षुर्दर्शनावरणस्य पुनस्त्रीन्द्रियस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य पर्याप्तिचरमसमये उत्कृष्टानुभागोदीरणा, दानान्तरायादिकृतलब्ध्यपकर्षस्य चक्षुर्दर्शनावरणकृतलब्धिप्रतिबन्धस्य च परमकाष्ठायाः प्रतिनियतसमय एव संभवात्तदुपादानम् ॥५८॥

**निद्दाइपंचगस्स य मज्झिमपरिणामसंकिलिट्ठस्स। अपुमादिअसायाणं निरए जेट्ठाठिइसमत्ते ॥५९॥**

(चू०)—णिद्दाइपणगाणं मज्झिमपरिणामस्स–तप्पाउगसंकिलिट्ठस्स सव्वाहिं पज्जत्तीहिं पज्जत्तस्स उक्कोसिया अणुभागउदीरणा भवति। अच्चंतविसुद्धसंकिलिट्ठंमि उदयो णत्थित्ति काउं मज्झिमपरिणामगहणं। 'अपुमाइ असाताणं'ति–णपुंसकवेयअरइसोयभयदुगंच्छाणं असातस्स य नेरइओ उक्कोसट्ठितीओ सव्वाहिं पज्जत्तीहिं पज्जत्तो सव्वसंकिलिट्ठो उक्कोसाणुभागउदीरगो। 'समत्तो'त्ति–पज्जत्तगो ॥५९॥

तत्प्रायोग्यसंक्लेशयुक्तस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य निद्रापञ्चकस्योत्कृष्टानु-

(मलय०) —'निद्दाइ'त्ति । मध्यमपरिणामस्य तत्प्रायोग्यसंक्लेशयुक्तस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य निद्रापञ्चकस्योदय एव न भवतीति कृत्वा मध्यमपरिणामग्रहणम् । तथाऽपुमादीनां-

भागोदीरणा, अत्यन्तविशुद्धस्यात्यन्तसंक्लिष्टस्य वा निद्रापञ्चकस्योदय एव न भवतीति कृत्वा मध्यमपरिणामग्रहणम् । नैरयिको ज्येष्ठस्थितिकः-उत्कृष्टस्थितिकः

नपुंसकवेदादीनां-नपुंसकवेदारतिशोकभयजुगुप्सानामसातस्य चोत्कृष्टानुभागोदीरणास्वामी नैरयिको ज्येष्ठस्थितिकः-उत्कृष्टस्थितिकः

समाप्तः-सर्वाभिः पर्याप्तिभिः पर्याप्तः सर्वसंक्लिष्टो वेदितव्यः ॥५९॥

(उ०)—मध्यमपरिणामस्य तत्प्रायोग्यसंक्लेशवतः सर्वपर्याप्तिपर्याप्तस्य निद्रापञ्चकस्योत्कृष्टानुभागोदीरणा, अतिविशुद्धस्यातिसं-

क्लिष्टस्य वा निद्रापञ्चकस्योदय एव न भवतीति कृत्वा मध्यमपरिणामग्रहणम् । तथाऽपुमादीनां-नपुंसकवेदादीनां नपुंसकवेदारतिशोक-

भयजुगुप्सानामसातस्य चोत्कृष्टानुभागोदीरणास्वामी नैरयिको ज्येष्ठस्थितिकः-उत्कृष्टायुष्कः समाप्तः-सर्वपर्याप्तिपर्याप्तः सर्वसंक्लिष्टो ज्ञातव्यः ॥५९॥

**पंचिंदियतसबायरपज्जत्तगसायसुस्सरगईणं । वेउव्वुस्सासाणं देवो जेट्ठट्ठिइसमत्तो ॥६०॥**

(चू०)—पंचिंदियजातितसबादरपज्जत्तगसायसुस्सरदेवगतिवेउव्वियसत्तगउस्सासणामाणं देवो तेत्तीससा-

गरोवमट्ठितिगो सव्वाहिं पज्जत्तीहिं पज्जत्तो सव्वविसुद्धो एतेसिं पण्णरसण्हं कम्माणं उक्कोसाणुभागउदीरगो।

(मलय०)—'पंचिंदिय'त्ति। देवो ज्येष्ठस्थितिकः-उत्कृष्टस्थितिकस्त्रयस्त्रिंशत्सागरोपमस्थितिकः समाप्तः-सर्वाभिः पर्याप्तिभिः

पर्याप्तः सर्वविशुद्धः पञ्चेन्द्रियजातित्रसबादरपर्याप्तसातवेदनीयसुस्वरदेवगतिवैक्रियसप्तकोच्छ्वासरूपाणां पञ्चदशप्रकृतीनामुत्कृष्टानुभा-

गोदीरणास्वामी ॥६०॥

(उ०)—देवो ज्येष्ठस्थितिकस्त्रयस्त्रिंशत्सागरोपमायुः समाप्तः-सर्वपर्याप्तिभिः पर्याप्तः सर्वविशुद्धः पञ्चेन्द्रियजातित्रसबादरपर्याप्तसातवेदनीयसुस्वरदेवगतिवैक्रियसप्तकोच्छ्वासरूपाणां पञ्चदशप्रकृतीनामुत्कृष्टानुभागोदीरणास्वामी ॥६०॥

**सम्मत्तमीसगाणं से काले गहिहिइत्ति मिच्छत्तं । हासरइणं सहस्सारगस्स पज्जत्तदेवस्स ॥६१॥**

(चू०)—सम्मत्तमीसगाणं से काले गहिहित्ती-बीतियसमए मिच्छत्तं जाहितित्ति सव्वसंकिलिट्ठो तंमि समए उक्कोसाणुभागउदीरगो। 'हासरतीणं सहस्सारगस्स पज्जत्तदेवस्स'-हासरतीणं सहस्सारगो देवो सव्वाहिं पज्जत्तीहिं पज्जत्तो उक्कोसाणुभागउदीरगो ॥६१॥

(मलय०)—'सम्मत्त'त्ति। योऽनन्तरे समये मिथ्यात्वं गृहीष्यति तस्य सर्वसंक्लिष्टस्य सम्यक्त्वसम्यग्मिथ्यात्वयोर्यथासंभवमुदये सत्युत्कृष्टानुभागोदीरणा। तथा सहस्रारदेवस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य हास्यरत्योरुत्कृष्टानुभागोदीरणा ॥६१॥

(उ०)—'से काले' त्ति-अनन्तरसमये यो मिथ्यात्वं ग्रहीष्यति तस्य सर्वसंक्लिष्टस्य सम्यक्त्वसम्यग्मिथ्यात्वयोर्यथासंभवमुदये सत्युत्कृष्टानुभागोदीरणा। तथा सहस्रारदेवस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य हास्यरत्योरुत्कृष्टानुभागोदीरणा ॥६१॥

**गइहुंडुवघायाणिट्ठखगइनीयाण दुहचउक्कस्स । निरउक्कस्स समत्ते असमत्ताए नरस्सन्ते ॥६२॥**

(चू०)—णिरयगतिहुण्डसंठाणउवघायअपसत्थविहायगतिणीयागोय, 'दुहगचउक्कस्स'त्ति-दुभगदूसरअणाएज्जअजसाणं, 'निरउक्कस्स समत्तो'त्ति-णेरइओ उक्कोसठितीए वट्टमाणो सव्वाहिं पज्जत्तिहिं पज्जत्तो सव्व-

संकिलिट्ठो एतेसिं णवण्हं कम्माणं उक्कोसाणुभागउदीरतो। 'असमत्ताए णरस्संते'त्ति–अपज्जत्तगणामाए मणु-
स्सो अपज्जत्तगो चरिमसमए वट्टमाणो सव्वसंकिलिट्ठो उक्कोसाणुभागुदीरतो, सण्णिपंचिंदियतिरियअपज्ज-
त्तगातो मणुस्सो संकिलिट्ठयरो लब्भतित्ति काउं ॥६२॥

(मलय०)—'गइ'त्ति। नैरयिक उत्कृष्टस्थितौ वर्तमानः सर्वाभिः पर्याप्तिभिः पर्याप्तः सर्वोत्कृष्टसंक्लेशयुक्तो नरकगतिहुंडसंस्थानो-
पघाताप्रशस्तविहायोगतिर्नीचैर्गोत्राणां 'दुहचउक्कस्स'त्ति–दुर्भगचतुष्कस्य–दुर्भगदुःस्वरानादेयायशःकीर्तिरूपस्य सर्वसंख्यया नवानां
प्रकृतीनामुत्कृष्टानुभागोदीरणास्वामी। तथाऽपर्याप्तकनाम्नो मनुष्योऽपर्याप्तचरमसमये वर्तमानः सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी।
संज्ञितिर्यक्पञ्चेन्द्रियादपर्याप्तान्मनुष्योऽपर्याप्तोऽतिसंक्लिष्टतर इति मनुष्यग्रहणम् ॥६२॥

(उ०)—नैरयिक उत्कृष्टस्थितौ वर्तमानः सर्वपर्याप्तिपर्याप्तः सर्वोत्कृष्टसंक्लेशयुक्तो नरकगतिहुण्डसंस्थानोपघाताप्रशस्तविहायोगति-
नीचैर्गोत्राणां 'दुहचउक्कस्स'त्ति–दुर्भगचतुष्कस्य–दुर्भगदुःस्वरानादेयायशःकीर्तिरूपस्य सर्वसंख्यया नवानां प्रकृतीनामुत्कृष्टानुभागो-
दीरणास्वामी। तथाऽपर्याप्तकनाम्नो मनुष्योऽपर्याप्तचरमसमये वर्तमानः सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी। अपर्याप्तकसंज्ञितिर्य-
क्पञ्चेन्द्रियादपर्याप्तमनुष्योऽतिसंक्लिष्ट इति मनुष्यग्रहणम् ॥६२॥

कक्खडगुरुसंघयणाथीपुमसंठाणतिरियनामाणं। पंचिंदिओ तिरिक्खो अट्ठमवासट्ठवासाओ ॥६३॥

(चू०)—कक्खडं गुरुगं आदिवज्जा पंचसंघयणा इत्थिवेय पुरिसवेय आदिअंतवज्जा चत्तारि संठाणा तिरिय-
गतिए य एतेसिं चोद्दसण्हं कम्माणं सण्णिपंचिंदियतिरिक्खो अट्ठवरिसाउ अट्ठमे वरिसे वट्टमाणो सव्वसंकि-

लिट्ठो उक्कोसाणुभागउदीरगो ॥६३॥

(मलय०)—'कक्खड' त्ति–कर्कशगुरुस्पर्शयोरादिवर्जानां च पञ्चानां संहननानां स्त्रीपुरुषवेदयोराद्यन्तवर्जानां चतुर्णां संस्थानानां तिर्यग्गतेश्च सर्वसंख्यया चतुर्दशप्रकृतीनां तिर्यक्संज्ञिपञ्चेन्द्रियोऽष्टवर्षायुरष्टमे वर्षे वर्तमानः सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी ॥६३॥

(उ०)—कर्कशगुरुस्पर्शयोः संहननानामादिवर्जानां पञ्चानां स्त्रीपुरुषवेदयोः संस्थानानामाद्यन्तवर्जानां चतुर्णां तिर्यङ्नाम्नश्च तिर्यग्गतेः सर्वसंख्यया चतुर्दशप्रकृतीनां तिर्यक्संज्ञिपञ्चेन्द्रियोऽष्टवर्षायुरष्टमे वर्षे वर्तमानः सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी ॥६३॥

**मणुओरालियवज्जरिसहाण मणुओ तिपल्लपज्जत्तो । नियगाठिई उक्कोसो पज्जत्तो आउगाणंपि ॥६४॥**

(चू०)—'मणूओरालियवज्जरिसभाण मणूओ तिपल्लपज्जत्तो' त्ति। मणुयगतिओरालियसत्तगवज्जरिसभनारायसंघयणस्स य एतेसिं णवण्हं कम्माणं मणुओ तिपलिउवमठितीउ सव्वाहिं पज्जत्तीहिं पज्जत्तगो सव्वविसुद्धो उक्कोसाणुभागुदीरगो। 'णियगठिती उक्कस्सो पज्जत्तो आउगाणंपि' त्ति–अप्पप्पणो उक्कोसे ठितीए वट्टमाणो सव्वाहिं पज्जत्तीहिं पज्जत्तो तिण्हं आउगाणं सव्वविसुद्धो णिरयाउगस्स सव्वसंकिलिट्ठो उक्कोसाणुभागउदीरगो ॥६४॥

(मलय०)—'मणु' त्ति–मनुष्यः पल्योपमत्रयायुःस्थितिकः सर्वाभिः पर्याप्तिभिः पर्याप्तः सर्वविशुद्धो मनुष्यगत्यौदारिकसप्तकवज्रर्षभनाराचसंहननरूपाणां नवानां प्रकृतीनामुत्कृष्टानुभागोदीरणास्वामी । तथा सर्वोत्कृष्टस्वस्वस्थितौ वर्तमानः सर्वाभिः पर्याप्तिभिः पर्याप्तस्त्रयाणामायुषां सर्वविशुद्धो, नारकायुषस्तु सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरको भवति ॥६४॥

(उ०)—मनुष्यस्त्रिपल्यः पल्योपमत्रयप्रमाणायुष्कः पर्याप्तः सर्वाभिः पर्याप्तिभिः सर्वविशुद्धो मनुष्यगत्यौदारिकसप्तकवज्रर्षभनाराच-

संहननानां सर्वसंख्यया नवप्रकृतीनामुत्कृष्टानुभागोदीरणास्वामी । तथा सर्वोत्कृष्टनिजस्थितौ वर्तमानः पर्याप्तः सर्वपर्याप्तिभिः सर्वविशुद्धस्त्रयाणामायुषां, नरकायुषस्तु सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरको भवति ॥६४॥

हस्सट्ठिइ पज्जत्ता तन्नामा विगलजाइसुहुमाणं । थावरनिगोयएगिंदियाणमवि बायरो नवरिं ॥६५॥

(चू०)—'हस्सठिई पज्जत्ता तन्नामा विगलजातिसुहुमाणं'ति–जहन्नठितीका पज्जत्तगा 'तं नाम'त्ति विगलिंदिया सुहुमा य तस्स तस्स नामस्स उक्कोसउदीरगा । किं भणियं होइ ? भन्नइ–विगला सुहुमा य जहन्नठितीते वट्टमाणा सव्वाहिं पज्जत्तीहिं पज्जत्तगा सव्वसंकिलिट्ठा वेतिंदिय–तेइंदिय–चउरिंदियनामाणं सुहुमस्स य उक्कोसं अणुभागुदीरणं करेंति, हस्सठितीते वट्टमाणो संकिलिट्ठो लब्भतित्ति काउं । 'थावरनिगोयएगिंदियाणमवि बायरा नवरिं'–थावरनामाते 'निगोय'त्ति साहारणनामाए एगेंदियजातिनामाते य जहन्नठितिए वट्टमाणो बायरो पज्जत्तो सव्वसंकिलिट्ठो थावरनामाते थावरो, सहारणनामाए साहारणो, एगिंदियनामाए एगिंदिओ, उक्कोसाणुभागउदीरगो भवति । बायरग्गहणं संकिलेसो महंतोत्ति काउं ॥६५॥

(मलय०)—'हस्सट्ठिइ'त्ति–हस्वस्थितिकाः पर्याप्तकास्तन्नामानो द्वीन्द्रियादिजातिसूक्ष्मकर्मानुसारिनामानो विकलेन्द्रियजातीनां सूक्ष्मनाम्नश्चोत्कृष्टानुभागोदीरणास्वामिनः । एतदुक्तं भवति–द्वित्रिचतुरिन्द्रियाः सूक्ष्माश्च सर्वजघन्यस्थितौ वर्तमानाः सर्वपर्याप्तिभिः पर्याप्ताः सर्वसंक्लिष्टा यथासंख्यं द्वित्रिचतुरिन्द्रियजातिनाम्नां सूक्ष्मनाम्नश्चोत्कृष्टानुभागोदीरणास्वामिनः । हस्वस्थितौ वर्तमानाः सर्वसंक्लिष्टा भवन्तीति कृत्वा तदुपादानम् । तथा स्थावरसाधारणैकेन्द्रियजातिनाम्नां जघन्यस्थितौ वर्तमानो बादरैकेन्द्रियः सर्वपर्याप्तिभिः पर्याप्तः सर्व-

संक्लिष्टः स्थावरनाम्नः स्थावरः, साधारणनाम्नः साधारणः, एकेन्द्रियजातेर्द्वावपि उत्कृष्टानुभागोदीरणास्वामिनौ भवतः, बादरस्य महान् संक्लेशो भवतीति कृत्वा तदुपादानम् ॥६५॥

(उ०)—ह्रस्वस्थितिकाः पर्याप्ताः स्वनामानो द्वीन्द्रियादिजातिसूक्ष्मनामकर्मपर्याप्तनिष्पन्ननामानो विकलेन्द्रियजातीनां सूक्ष्मनाम्नश्चोत्कृष्टानुभागोदीरकाः। द्वित्रिचतुरिन्द्रियाः सर्वजघन्यस्थितिकाः सर्वपर्याप्तिपर्याप्ताः सर्वसंक्लिष्टा द्वित्रिचतुरिन्द्रियजातिनाम्नां सूक्ष्माश्च तादृशाः सूक्ष्मनाम्न उत्कृष्टानुभागोदीरका इति संमुखोऽर्थः । ह्रस्वस्थितौ वर्तमानाः सर्वसंक्लिष्टा भवन्तीति कृत्वा तदुपादानम् । तथा स्थावरसाधारणैकेन्द्रियजातिनाम्नां जघन्यस्थितौ वर्तमानो बादर एकेन्द्रियः सर्वपर्याप्तिपर्याप्तः सर्वसंक्लिष्टस्तत्र स्थावरनाम्नः स्थावरः साधारणनाम्नः साधारण एकेन्द्रियजातेर्द्वावप्युत्कृष्टानुभागोदीरणास्वामिनौ भवतः, बादरस्य महान् संक्लेशो भवतीति इह बादरोपादानम् ॥

**आहारतणू पज्जत्तगो य चउरंसमउयलहुगाणं । पत्तेयखगइपरघायाहारतणूण य विसुद्धो ॥६६॥**

(चू०)—'आहारतणू पज्जत्तग[स्स]'त्ति–आहारसंजतो आहारसरीरं उप्पाएतो सव्वाहिं पज्जत्तीहिं पज्जत्तगो [तस्स] 'चउरंसमउगलहुगाणं पत्तेगखगतिपराघायाहारतणूण य विसुद्धो'त्ति–पढमसंठाणमउगलहुगपत्तेयसरीरपसत्थविहायगतिपराघायआहारसत्तगस्स य तेरसण्हं कंमाणं आहारसंजओ पज्जत्तो सव्वविसुद्धो उक्कोसाणुभागउदीरगो ॥६६॥

(मलय०)—'आहारतणु'त्ति–समचतुरस्रसंस्थानमृदुलघुस्पर्शप्रत्येकप्रशस्तविहायोगतिपराघाताहारकसप्तकरूपाणां त्रयोदशप्रकृतीनामाहारकशरीरी संयतः सर्वाभिः पर्याप्तिभिः पर्याप्तः सर्वविशुद्ध उत्कृष्टानुभागोदीरणास्वामी ॥६६॥

(उ०)—समचतुरस्रसंस्थानमृदुलघुस्पर्शप्रत्येकप्रशस्तविहायोगतिपराघाताहारकसप्तकानां सर्वसंख्यया त्रयोदशप्रकृतीनामाहारकशरीरी संयतः पर्याप्तः सर्वपर्याप्तिभिः सर्वविशुद्ध उत्कृष्टानुभागोदीरणास्वामी ॥६६॥

**उत्तरवेउव्विजई उज्जोवस्सायवस्स खरपुढवी । नियगगईणं भणिया तइए समए णुपुव्वीणं ॥६७॥**

(चू०)—'उत्तरवेउव्विजई उज्जोवस्स'त्ति–उत्तरवेउव्विए वट्टमाणो साहू सव्वाहिं पज्जत्तीहिं पज्जत्तो सव्वविसुद्धो उज्जोवनामाए उक्कोसाणुभागुदीरगो। 'आयवस्स खरपुढवि'त्ति–खरबायरपुढविकातितो उक्कोसठितिए वट्टमाणो सव्वाहिं पज्जत्तीहिं पज्जत्तो सव्वविसुद्धो आतवनामाए उक्कोसाणुभागुदीरतो। 'नियगगतीणं भणिया ततिते समतेऽणुपुव्वीणं'त्ति–अप्पप्पणो गतीणं ततिअसमते वट्टमाणो अणुपुव्वीणं दोण्हं विसुद्धो, निरयतिरियाणुपुव्वीणं संकिलिट्ठो उक्कोसाणुभागुदीरतो भवति ॥६७॥

(मलय०)—'उत्तर'त्ति–उत्तरवैक्रिये वर्तमानो यतिः सर्वाभिः पर्याप्तिभिः पर्याप्तः सर्वविशुद्ध उद्योतनाम्न उत्कृष्टानुभागोदीरणास्वामी। तथा खरपृथ्वीकायिको–बादरपृथ्वीकायिक उत्कृष्टायां स्थितौ वर्तमानः सर्वपर्याप्तिपर्याप्तः सर्वविशुद्ध आतपनाम्न उत्कृष्टानुभागोदीरणास्वामी। तथा मनुष्यदेवानुपूर्व्योर्विशुद्धा नरकतिर्यगानुपूर्व्योः संक्लिष्टा निजकगतीनां तृतीये समये वर्तमाना उत्कृष्टानुभागोदीरका भवन्ति ॥६७॥

(उ०)—उत्तरवैक्रिये वर्तमानो यतिः सर्वपर्याप्तिपर्याप्तः सर्वविशुद्ध उद्योतनाम्न उत्कृष्टानुभागोदीरणास्वामी। तथा खरपृथ्वीकायिक उत्कृष्टायां स्थितौ वर्तमानः सर्वपर्याप्तिपर्याप्तः सर्वविशुद्ध आतपनाम्न उत्कृष्टानुभागोदीरणास्वामी। तथा नरसुरानुपूर्व्योर्विशुद्धा

निरयतिर्यगानुपूर्व्योः संक्लिष्टा निजकगतीनां तृतीये समये वर्तमाना उत्कृष्टानुभागोदीरणास्वामिनः ॥६७॥

**जोगंते सेसाणं सुभाणमियरासि चउसु वि गईसु । पज्जत्तुक्कडमिच्छस्सोहीणमणोहिलद्धिस्स ॥६८॥**

(चू०)—'जोगंते सेसाणं सुभाणं'ति। सजोगिकेवलिस्स अंते सव्वोवट्टणाए वट्टमाणस्स 'सेसाणं'ति भणियसेसाणं सुभपगतीणं, कयरासिं? भन्नइ–तेजतिगसत्तगं, सुभवन्नेक्कारसगं मउयलहुयहीणं, अगुरुलहुगं, थिरसुभसुभगं, आएज्जं, जसं, निमिणं, उच्चागोयं, तित्थकरनामाणं, एयासिं पणुवीसाणं पगतीणं उक्कोसाणुभागउदीरणा लब्भति।'इयरासिं चउसु वि गतीसु पज्जत्तुक्कडमिच्छस्स'त्ति। इयरासिं अपसत्थपगतीणं चउगतिगो मिच्छादिट्ठी सव्वाहिं पज्जत्तीहिं पज्जत्तो ओहिनाणवज्जाणं चउण्हं नाणावरणाणं केवलदंसणावरण मिच्छत्त सोलस कसाय कुवन्ननवगं कक्खडगरुगहीणं अथिरअसुभाणं च एयासिं एक्कतीसाए पगईणं उक्कोससंकिलिट्ठो उक्कोसं अणुभागं उदीरेइ। 'ओहीणमणोहिलद्धिस्स'त्ति–ओहिणाणओहिदंसणावरणाणं सो चेव चउग्गतितो मिच्छादिट्ठी ओहिलद्धिरहिउ उक्कोसं अणुभागं उदीरेइ। जस्स ओहिलद्धी अत्थि तस्स अणुभागो खिज्जइ, खिज्जमाणो न उक्कोसो लब्भइत्ति काउं तेण ओहिरहियग्गहणं कतं ॥६८॥

(मलय०)—'जोगंते'त्ति–योगिनः सयोगिकेवलिनोऽन्ते सर्वापवर्तनरूपे वर्तमानस्य 'शेषाणां' उक्तव्यतिरिक्तानां शुभप्रकृतीनां तैजससप्तकमृदुलघुवर्जशुभवर्णाद्येकादशकागुरुलघुस्थिरशुभसुभगादेययशःकीर्तिनिर्माणोच्चैर्गोत्रतीर्थकरनाम्नां पञ्चविंशतिसंख्यानामुत्कृष्टानुभागोदीरणा भवति । इतरासां चाशुभप्रकृतीनां–मतिश्रुतमनःपर्यायज्ञानकेवलज्ञानावरणकेवलदर्शनावरणमिथ्यात्वषोडशकषायकर्कशगु-

## उत्कृष्टानुभागोदीरणा स्वामिनः

| प्रकृतयः | स्वामिन | प्रकृतय | स्वामिन |
|---|---|---|---|
| विघ्नपञ्चकाचक्षुषाम् चक्षुष | सर्वोत्पदानादिलब्धिकाःसूक्ष्मा प्रथमसमये पर्याप्त्यन्त्यसमये पर्याप्तत्रीन्द्रिया. | ३ आयुषाम् | पर्याप्ताः स्वदीर्घस्थितिकाः सर्वविशुद्धा तदुदयवन्तः |
| निद्रापञ्चकस्य | मध्यमपरिणामपर्याप्ता. | नारकायुषः | पर्या०दीर्घस्थितिका अतिसंक्लिष्टनारकाः |
| नपु०-अरति-शोक भय-जुगुप्सा असातानाम् (६) | सर्वसंक्लिष्टदीर्घायुःपर्याप्तनारकाः | विकल ३-सूक्ष्माणाम् | अल्पस्थितिकसंक्लिष्टपर्याप्ताःतदुदयवन्त. |
| पंच०-प्रमादि: सात सुस्वर सुभग-दे ७-उच्चैर्गोत्राणा(१५ | सर्वविशुद्धदीर्घायुःपर्याप्तदेवाः | स्था० साधा०-एके०-नाम् | अल्पस्थितिकपर्याप्तबादरैकेन्द्रियाः सर्वसं. |
| सम्यक्त्व-मिश्रयो. | सर्वसंक्लिष्टाः मिथ्यात्वोन्मुखा. | समच०-मृ०-लघु० प्रत्ये० सुखग-परा०-आहा० ७ कानाम्(१३) | पर्याप्तविशुद्धाहारकदेहिन. |
| हास्य-रत्यो. | पर्याप्तसहस्रारसुरा | उद्योतस्य | उत्तरवैक्रियाः पर्याप्ता. संयता विशुद्धाः |
| नरकग० हुंडक-उपघात-कु-खग-नीचैः-दुर्भगादि चतुष्कानाम् (९) | सर्वसंक्लिष्टदीर्घायुःपर्याप्तनारकाः | आतपस्य | सर्वविशुद्धपर्या०दीर्घायुः खरपृथ्वीकायाः |
| | | नरानुपूर्व्वीसुरानुपूर्व्योः | गत्यन्तराले तृतीयसमये विशुद्धाःस्वोदयवन्तः |
| | | नरकानुपूर्व्वीतिर्यगानुपूर्व्यो. | " संक्लिष्टा. " |
| अपर्याप्तस्य | सर्वसंक्लिष्टा अपर्याप्तनराः | नं०७-सुर्णादि ९-अगु०-स्थिर-शुभ-सुभग-आदेय-यशः-निर्माण-उच्चै — जिननाम्नाम् (२५) | सयोगिकेवलिनः (स्वसर्वापवर्त्तने) |
| ऋ०-गुरु-पु.संह० ५-संस्था०-पु०-मध्यसंस्था० ४ तिर्यग्गतीनाम् (१४) | अष्टमे वर्षे वर्त्तमाना अष्टवर्षायु.सर्वसंक्लिष्टतिर्यक्संज्ञिपंचेन्द्रियाः | अवधिद्विकस्य | अनवधिलब्धिका |
| नृगति औदा० ७-वज्रर्ष मानाम (९) | सर्वविशुद्धदीर्घायु.[३पल्यायुः]पर्या०नरा | ३१ उत्कर्षेपाणाम् | सर्वसंक्लिष्टाःपर्याप्ताःचातुर्गतिका.मिथ्यादृश. |

रुवर्जशेषकुवर्णादिसप्तकास्थिराशुभरूपाणामेकत्रिंशत्प्रकृतीनां चतसृष्वपि गतिषु मिथ्यादृष्टेः सर्वपर्याप्तिपर्याप्तस्योत्कृष्टे संक्लेशे वर्तमानस्योत्कृष्टानुभागोदीरणा भवति। तथाऽवधिज्ञानावरणावधिदर्शनावरणयोस्तस्यैव चतुर्गतिकस्य मिथ्यादृष्टेः 'अनवधिलब्धिकस्य'—अवधिलब्धिरहितस्योत्कृष्टानुभागोदीरणा भवति । अवधिलब्धियुक्तस्य हि प्रभूतोऽनुभागः क्षयं याति, तत उत्कृष्टो न लभ्यत इत्यनवधिलब्धिकस्येत्युक्तम् ॥६८॥

(उ०)—योगिनः-सयोगिकेवलिनोऽन्ते सर्वापवर्तनरूपे वर्तमानस्य शेषाणां भणितोद्धरितानां शुभप्रकृतीनां तैजससप्तकमृदुलघुवर्जशुभवर्णाद्येकादशकागुरुलघुस्थिरशुभसुभगादेययशःकीर्तिनिर्माणोच्चैर्गोत्रतीर्थकरप्रकृतीनां पञ्चविंशतिसंख्यानामुत्कृष्टानुभागोदीरणा भवति । इतरासां चाशुभप्रकृतीनां मतिश्रुतमनःपर्यायकेवलज्ञानकेवलदर्शनावरणमिथ्यात्वषोडशकषायकर्कशगुरुवर्जशेषकुवर्णादिसप्तकास्थिराशुभरूपाणामेकत्रिंशत्प्रकृतीनां चतसृष्वपि गतिषु मिथ्यादृष्टेः सर्वपर्याप्तिपर्याप्तस्योत्कटसंक्लेशवत उत्कृष्टानुभागोदीरणा भवति । तथाऽवधिज्ञानावरणावधिदर्शनावरणयोरनवधिलब्धिकस्यावधिलब्धिरहितस्योत्कृष्टानुभागोदीरणा भवति तस्यैव चतुर्गतिकस्य मिथ्यादृष्टेः, अवधिलब्धियुक्तस्य हि प्रभूतोऽवधिज्ञानदर्शनावरणानुभागः क्षीयत इत्युत्कृष्टो न लभ्यते, ततोऽनवधिलब्धिकस्येत्युक्तम् ॥६८॥

उक्कोसाणुभागउदीरणा भणिया, इयाणिं जहण्णाणुभागउदीरणा भण्णइ—

**सुयकेवलिणो मइसुयचक्खुअचक्खुणुदीरणा मंदा । विपुलपरमोहिगाणं मणणाणोहिदुगस्सावि ॥६९॥**

(चू०)—सुयकेवलि-चउद्दसपुव्वी सव्वुक्कोसपज्जवेहिं तस्स मइसुयचक्खुअचक्खुणं उदीरणा मंदत्ति काउं तेण आभिणिबोहियणाणावरणसुयणाणावरणचक्खुदंसणावरणाणं अचक्खुदंसणावरणाणं जहण्णाणुभागुदी-

रणा व्यवणाए अब्भुट्ठियस्स खीणकसायस्स समयाहियावलियासेसे वट्टमाणस्स। 'विपुलपरमोहिगाणं मणणाणोदीरुगस्सावि'त्ति–विपुलमणपज्जवणाणिस्स मणपज्जवणाणावरणस्स तस्सेव खीणकसायस्स। ओहिणाणावरणाणं ओहिदंसणावरणाणं वि परमोहिस्स खीणकसायस्स समयाहियावलियसेसे वट्टमाणस्स। किं कारणं? भण्णइ–तं तं णाणं उप्पाएमाणस्स अणुभागो खिज्जइत्ति काउं पच्छा सेढिं पडिवण्णस्स जहण्णा अणुभाग-उदीरणा ॥६९॥

(मलय०)—तदेवमुक्तमुत्कृष्टानुभागोदीरणास्वामित्वम्। सम्प्रति जघन्यानुभागोदीरणास्वामित्वं प्रतिपादयन्नाह—'सुयकेवलिणो' इ। मतिश्रुतज्ञानावरणचक्षुरचक्षुर्दर्शनावरणानां श्रुतकेवलिनश्चतुर्दशपूर्वधरस्य क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य 'मन्दा' जघन्यानुभागोदीरणा वर्तते। तथा क्षीणकषायस्य विपुलमतिमनःपर्यायज्ञानस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य मनःपर्यायज्ञानावरणस्य जघन्यानुभागोदीरणा। परमावधियुक्तस्य क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्यावधिज्ञानावरणावधिदर्शनावरणयोर्जघन्यानुभागोदीरणा ॥६९॥

(उ०)—तदेवमुक्तमुत्कृष्टोदीरणास्वामित्वम्, अथ जघन्योदीरणास्वामित्वं प्रतिपादयन्नाह—मतिश्रुतज्ञानावरणचक्षुरचक्षुर्दर्शनावरणानां श्रुतकेवलिनश्चतुर्दशपूर्विणः क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य मन्दा–जघन्यानुभागोदीरणा भवति। तथा क्षीणकषायस्य विपुलमतिमनःपर्यायज्ञानभृतः समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य मनःपर्यायज्ञानावरणस्य जघन्यानुभागोदीरणा। तथा परमावधियुक्तस्य क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्यावधिज्ञानावधिदर्शनावरणयोर्जघन्यानु-

भागोदीरणा ॥६९॥

**खवणाएँ विग्घकेवलसंजलणाण य सनोकसायाणं । सयसयउदीरणंते निद्दापयलाणमुवसंते ॥७०॥**

(चू०)—'खवणाए'त्ति–खवणाए अब्भुट्ठियस्स, 'विग्घकेवलसंजलणाण य सनोकसायाणं सयसयउदीरणंते' त्ति–पंचविहअंतराइयकेवलणाणकेवलदंसणावरण चउण्हं संजलणाणं णवण्हं णोकसायाणं एयासिं वीसाए पगईणं अप्पप्पणो उदीरणंते जहण्णिया अणुभागउदीरणा होति। कहं ? भण्णइ–अंतराइयाणं केवलदुगावरणाण य खीणकसायस्स उदीरणंते जहण्णाणुभागउदीरणा होइ, छण्हं नोकसायाणं अपुव्वकरणस्स चरिमसमते जहन्नानुभागुदीरणा होति, 'णिद्दापयलाणं उवसंते'त्ति–णिद्दापयलाणं उवसंतमोहे जहण्णाणुभागउदीरणा, सव्वविसुद्धोत्ति काउं ॥७०॥

(मलय०)—'खवणाए'त्ति–क्षपणायोत्थितस्य पञ्चविधान्तरायकेवलज्ञानावरणकेवलदर्शनावरणसंज्वलनचतुष्टयनवनोकषायरूपाणां विंशतिप्रकृतीनां स्वस्वोदीरणापर्यवसाने जघन्यानुभागोदीरणा। तत्र पञ्चविधान्तरायकेवलज्ञानावरणकेवलदर्शनावरणानां क्षीणकषायस्य, चतुर्णां तु संज्वलनानां त्रयाणां च वेदानां अनिवृत्तिबादरस्य स्वस्वोदीरणापर्यवसाने, षण्णां नोकषायाणामपूर्वकरणगुणस्थानकचरमसमये जघन्यानुभागोदीरणा। तथा निद्राप्रचलयोरुपशान्तमोहे जघन्यानुभागोदीरणा लभ्यते, तस्य सर्वविशुद्धत्वात् ॥७०॥

(उ०)—क्षपणायोत्थितस्यान्तरायपञ्चककेवलज्ञानकेवलदर्शनावरणसंज्वलनचतुष्टयनोकषायनवकरूपाणां विंशतिप्रकृतीनां स्वकस्वकोदीरणान्ते जघन्यानुभागोदीरणा भवति। तत्रान्तरायपञ्चककेवलज्ञानकेवलदर्शनावरणानां क्षीणकषायस्य, संज्वलनानां वेदानां च

त्रयाणामनिवृत्तिबादरस्य स्वस्वोदीरणापर्यवसाने, संज्वलनलोभस्य सूक्ष्मसंपरायस्य, षण्णां नोकषायाणामपूर्वकरणगुणस्थानकचरमसमये जघन्यानुभागोदीरणा, निद्राप्रचलयोरुपशान्तमोहे तस्य सर्वविशुद्धत्वात् ॥७०॥

**निद्दानिद्दाईणं पमत्तविरए विसुज्झमाणम्मि । वेयगसम्मत्तस्स उ सगखवणोदीरणाचरमे ॥७१॥**

(चू०)—'निद्दानिद्दाईणं पमत्तविरते विसुज्झमाणम्मि'त्ति–निद्दानिद्दापयलपयलाथीणगिद्धीणं पमत्तसंजओ विसुज्झमाणो अपमत्ताभिमुहो जहण्णाणुभाग उदीरतो । 'वेयगसम्मत्तस्स उ सगखवणोदीरणा चरमे'त्ति–खाइयसम्मत्तं उप्पाएमाणस्स मिच्छत्तसम्मामिच्छत्ते खविए सम्मत्तस्स समयाहियावलियसेसाए ठितीए जहण्णाणुभागउदीरणा अण्णयरस्स चउगतिगस्स विसुद्धस्स होइ ॥७१॥

(मलय०)—'निद्दानिद्दाईणं'ति । निद्रानिद्रादीनां–निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धीनां प्रमत्तसंयतस्य 'विशुद्ध्यमानस्य' अप्रमत्तभावाभिमुखस्य जघन्यानुभागोदीरणा प्रवर्तते । तथा क्षायिकसम्यक्त्वमुत्पादयतो मिथ्यात्वसम्यग्मिथ्यात्वयोः क्षपितयोः वेदकसम्यक्त्वस्य–क्षायोपशमिकस्य सम्यक्त्वस्य क्षपणकाले 'चरमोदीरणायां'–समयाधिकावलिकाशेषायां स्थितौ सत्यां प्रवर्तमानायां जघन्यानुभागोदीरणा भवति । सा च चतुर्गतिकानामन्यतरस्य वेदितव्या ॥७१॥

(उ०)—निद्रानिद्रादीनां–निद्रानिद्राप्रचलाप्रचलास्त्यानर्धीनां प्रमत्तविरतस्य विशुध्यमानस्याप्रमत्तभावाभिमुखस्य जघन्यानुभागोदीरणा प्रवर्तते । तथा वेदकसम्यक्त्वस्य–क्षायोपशमिकसम्यक्त्वस्य क्षायिकसम्यक्त्वमुत्पादयतो मिथ्यात्वसम्यग्मिथ्यात्वक्षपणानन्तरं स्वकक्षपणकाले उदीरणा चरमे–चरमोदीरणायां समयाधिकावलिकाशेषायां स्थितौ सत्यां प्रवर्तमानायां जघन्यानुभागोदीरणा

भवति, सा च चतुर्गतिकानामन्यतमस्य वेदितव्या ॥७१॥

**से काले सम्मत्तं ससंजमं गिण्हओ य तेरसगं । सम्मत्तमेव मीसे आऊण जहन्नगठिईसु ॥७२॥**

(चू०)—'से काले सम्मत्तं ससंजमं गिण्हओ य तेरसगं'ति । बितियसमए सम्मत्तं ससंजमं पडिवज्जिहित्ति तंमि काले भिच्छत्तअणंताणुबंधीणं मिच्छद्दिट्ठिस्स जहण्णिया अणुभागुदीरणा। अपच्चक्खाणावरणीयाणं असंजयसम्मदिट्ठी बितियसमए संजमं पडिवज्जिहित्ति तंमि समए जहण्णाणुभागुदीरणा, पच्चक्खाणावरणीयाणं संजयासंजओ बीतीयसमए संजमं पडिवज्जिहित्ति जहण्णाणुभागुदीरणा। 'से काले सम्मत्तं ससंजमं गेण्हतो तु तेरसगभिति वयणाओ मिच्छदिट्ठिम्मि संभवती'ति चेत्, तन्न, किं कारणं ? भण्णइ–भिच्छदिट्ठीउ असंजयसम्मदिट्ठी अणंतगुणविसुद्धो, असंजयसम्मदिट्ठीतो संजयासंजतो अणंतगुणविसुद्धोत्ति वयणातो। 'सम्मत्तमेव मिस्से'ति–सम्माभिच्छद्दिट्ठी वितीयसमये सम्मत्तं पडिवज्जिहित्ति तंमि समए (मीसस्स) जहण्णाणुभागुदीरतो। दो वि जुगवं ण पडिवज्जंति, मंदविसोहित्तातो। 'आउण जहन्नगठिइसु'त्ति–चउण्हं आउगाणं अप्पप्पणो जहन्नगठितिम्मि वट्टमाणो जहण्णाणुभागउदीरतो, तिण्हं आउगाणं संकिलेस्सातो जहण्णतो ठितिबंधोत्ति तंमि चेव जहण्णाणुभागोवि लब्भति, णिरयाउगस्स विसुद्धीतो जहण्णगट्ठिती भवति तंमि चेव अणुभागो जहण्णो भवति, तेण तिण्हं संकिलेट्ठो जहण्णाणुभागुदीरगो, णीरयाउगस्स विसुद्धोत्ति ॥७२॥

(मलय०)—'से'त्ति–अनन्तरे काले–द्वितीये समये यः सम्यक्त्वं 'ससंयमं'–संयमसहितं ग्रहीष्यति तस्य त्रयोदशानां–मिथ्यात्वान-

न्तानुबन्धिचतुष्टयाप्रत्याख्यानप्रत्याख्यानावरणरूपाणां प्रकृतीनां जघन्यानुभागोदीरणा । अयमिह सम्प्रदायः—योऽनन्तरसमये सम्यक्त्वं संयमसहितं ग्रहीष्यति तस्य मिथ्यादृष्टेर्मिथ्यात्वानन्तानुबन्धिनां जघन्यानुभागोदीरणा । तथा योऽविरतसम्यग्दृष्टिरनन्तरसमये संयमं प्रतिपत्स्यते तस्याप्रत्याख्यानकपायाणां जघन्यानुभागोदीरणा । यश्च देशविरतोऽनन्तरसमये संयमं ग्रहीष्यति तस्य प्रत्याख्यानावरणकपायाणां जघन्यानुभागोदीरणा । मिथ्यादृष्टयपेक्षया हि अविरतसम्यग्दृष्टिरनन्तगुणविशुद्धस्ततोऽपि देशविरतोऽनन्तगुणविशुद्ध इत्युक्तक्रमेणैव जघन्यानुभागोदीरणासंभवः । तथा 'सम्मत्तमेव मीसे' इति यः सम्यग्मिथ्यादृष्टिरनन्तरसमये सम्यक्त्वं प्रतिपत्स्यते, तस्य सम्यग्मिथ्यात्वस्य जघन्यानुभागोदीरणा । सम्यग्मिथ्यादृष्टिर्युगपत् सम्यक्त्वं संयमं च न प्रतिपद्यते तथाविशुद्धेरभावात्, किंतु केवलं सम्यक्त्वमेवेति कृत्वा तदेव केवलमुक्तम् । तथा चतुर्णामायुषामात्मीयात्मीयजघन्यस्थितौ वर्तमानो जघन्यमनुभागमुदीरयति । तत्र त्रयाणामायुषां संक्लेशादेव जघन्यस्थितिवन्धो भवतीति कृत्वा जघन्यानुभागोऽपि तत्रैव लभ्यते । तथा नरकायुषो विशुद्धिवशाज्जघन्यः स्थितिबन्धः ततो जघन्यानुभागोऽपि नरकायुषस्तत्रैव लभ्यते । तथा च सति त्रयाणामायुषामतिसंक्लिष्टो जघन्यानुभागोदीरकः, नरकायुषस्त्वतिविशुद्ध इति ॥७२॥

(उ०)—से–अनन्तरे काले–द्वितीयसमये यः सम्यक्त्वं ससंयमं ग्रहीष्यति तस्य त्रयोदशानां–मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणरूपाणां प्रकृतीनां जघन्यानुभागोदीरणा भवति । अत्रायं सम्प्रदायः—योऽनन्तरसमये सम्यक्त्वसंयमौ युगपत्प्रतिपद्यते तस्य मिथ्यादृष्टेर्मिथ्यात्वानन्तानुबन्धिनां जघन्यानुभागोदीरणा, अविरतसम्यग्दृष्टिश्च सन् यः संयमं प्रतिपत्स्यते तस्याप्रत्याख्यानकपायाणां, देशविरतश्च सन् यः संयमं प्रतिपत्स्यते तस्य प्रत्याख्यानावरणकपायाणामिति । मिथ्यादृष्टयपेक्षया ह्यविरतसम्यग्दृष्टिर-

नन्तगुणविशुद्धः, ततोऽपि देशविरतोऽनन्तगुणविशुद्ध इत्युक्तक्रमेणैवासां जघन्यानुभागोदीरणासंभवः। उक्तं च—"सम्मपडिवत्तिकाले पंचण्ह वि संजमस्स चउचउसु"। तथा यः सम्यग्मिथ्यादृष्टिर्यदनन्तरसमये सम्यक्त्वमेव प्रतिपत्स्यते तस्य तत्समये सम्यग्मिथ्यात्वस्य जघन्यानुभागोदीरणा। सम्यग्मिथ्यादृष्टिस्तथाविधविशुद्ध्यभावात्सम्यक्त्वसंयमौ युगपन्न प्रतिपद्यते किंतु केवलं सम्यक्त्वमेवेति तदेव केवलमुक्तम्। तथा चतुर्णामायुषां निजनिजजघन्यस्थितौ वर्तमानो जघन्यमनुभागमुदीरयति, तत्र त्रयाणामायुषां संक्लेशादेव जघन्यस्थितिबन्धात्तत्रैव जघन्यानुभाग इत्यतिसंक्लिष्टो जघन्यानुभागोदीरकः, नरकायुषस्तु विशुद्धिमहिम्ना जघन्यस्थितिबन्धो जघन्यानुभागलाभोऽपि तत्रैवेत्यतिविशुद्धो जघन्यानुभागोदीरकः ॥७२॥

**पोग्गलविवागियाणं भवाइसमये विसेसमवि चासिं। आइतणूणं दोण्हं सुहुमो वाऊ य अप्पाऊ ॥७३॥**

(चू०)—'पोग्गलविवागिआणं भवाइसमए'त्ति। जे पोग्गलविवागिणो कम्मा तेसिं सव्वेसिं भवादिसमए सामण्णेणं जहण्णाणुभागुदीरणा। 'विसेसमवि चासिं'ति—विसेसम्भिति अमुकस्स अमुकं संभवति एवं विसेसं भणति—'आइतणूणं दोण्हं सुहुमो वायू य अप्पाउ'त्ति। आदितणूणंति—उरालियवेउव्वियाणं जहासंखेणं 'सुहुमो वायू य' उरालियछक्कगस्स अपज्जत्तगो सुहुमो वाउकाईओ, वेउव्वियछक्कगस्स पज्जत्तगो लद्धिए 'वायु' त्ति वायरवायू पढिओ न सुहुमो। 'अप्पाउ'त्ति—एते वेवि अप्पायुगा पढमे समए वट्टमाणा संकिलिट्ठा जहण्णाणुभागउदीरगा, अप्पाउगस्स संकिलेस्सो भवइत्ति तेण अप्पाउग्गहणं ॥७३॥

(मलय०)—'पोग्गल'त्ति—पुद्गलविपाकिन्यः प्रकृतयः, तासां सर्वासामपि भवादिसमये—भवप्रथमसमये जघन्यानुभागोदीरणा।

एतच्च सामान्येनोक्तं ततोऽमुकस्यामुक उदीरक इत्येवंरूपं विशेषमपि चासां प्रकृतीनां वक्ष्यामि। प्रतिज्ञातमेव निर्वाहयति–'आई'इत्यादि। आद्योः द्वयोः तन्वोः–शरीरयोरौदारिकवैक्रियरूपयोर्यथासंख्यं सूक्ष्मो वायुकायिकश्चाल्पायुर्जघन्यानुभागोदीरकः। इह शरीरग्रहणेन बन्धनसंघाता अपि गृहीता द्रष्टव्याः। तत एतदुक्तं भवति–औदारिकशरीरौदारिकसंघातौदारिकबन्धनचतुष्टयरूपस्यौदारिकषट्कस्यापर्याप्तसूक्ष्मैकेन्द्रियो वायुकायिको, वैक्रियषट्कस्य च पर्याप्तो बादरो वायुकायिकोऽल्पायुर्जघन्यानुभागोदीरको भवति ॥७३॥

(उ०)—पुद्गलविपाकिनीनां सर्वासामपि भवादिसमये जघन्यानुभागोदीरणा। एतच्च सामान्यवचनम्। ततोऽमुकस्या अमुक उदीरक इत्येवंरूपं विशेषमपि चासां प्रकृतीनां वक्ष्यामि। प्रतिज्ञातमेवाह–'आइ' इत्यादि। आद्ययोर्द्वयोस्तन्वोरौदारिकवैक्रियरूपयोर्यथासंख्यं सूक्ष्मो वायुश्चाल्पायुर्जघन्यानुभागोदीरकः। इह शरीरग्रहणं बन्धनसङ्घातोपलक्षणं, तेनायमर्थः–औदारिकशरीरौदारिकसंघातौदारिकबन्धनचतुष्टयरूपस्यौदारिकषट्कस्यापर्याप्तसूक्ष्मैकेन्द्रियो वायुकायिको, वैक्रियषट्कस्य च पर्याप्तबादरो वायुकायिकोऽल्पायुर्जघन्यानुभागोदीरक इति। उक्तं च–"उरलस्स सुहुमापज्जो वाऊ वायरपज्जत वेउव्वे' इति ॥७३॥

**वेइंदिय अप्पाउग निरय चिरठिई असण्णिणो वा वि। अंगोवंगाणाहारगाइ जइणोऽप्पकालम्मि ॥७४॥**

(चू०)—'वेइंदिय अप्पाउग णिरय चिरठीती असण्णिणो वावि अंगोवंगाणं'ति–जहासंखेणं एतेसिं दोण्ह वि, पढमसमए वेइंदिओ अप्पाउगो उरालियअंगोवंगस्स पढमसमए जहण्णाणुभागुदीरगो, 'णिरय चिरट्ठिती असण्णीणो'–असण्णिपंचिंदियो पुव्वुव्वलियं वेउव्वियअंगोवंगं बंधेत्तु अप्पद्धं णेरइगेसु अप्पणो चिरठितिगेसु उव-

1 पञ्चसंग्रह उदीरणाकरण गा. ७३

## जघन्यानुभागोदीरणास्वामिनः

| प्रकृतयः | स्वामिनः | प्रकृतय | स्वामिनः |
|---|---|---|---|
| मतिश्रुत-अचक्षुः-चक्षुषाम् | क्षीणमोहाः १४पूर्विण | अप्रत्या०४ र्णाम् | अनन्तरसमये संयमोत्पादकाः ४ र्थस्थाः |
| मनःपर्यवस्य | क्षीणमोहा विपुलमतय | प्रत्या० ४ र्णाम् | ,, ,, पञ्चमस्था |
| अवधिद्विकस्य | क्षीणमोहाः परमावधिलब्धिकाः | मिश्रस्य | अनन्तरसमये सम्यक्त्वोत्पादकाः मिश्रा |
| वि०५-केवलद्विकयोः | १२ मे स्वोदीरणान्ते | ३ आयुषाम् | स्वस्वाल्पस्थितिका अतिसंक्लिष्टा |
| वेद३-संज्वलनत्रिकयो· | ९ मे क्षपका स्वोदीरणान्ते | नरकायुष· | ,, ,, ,, विशुद्धाः |
| संज्व० लोभस्य | १० मे क्षपका ,, | औदा०देह६-प्रत्येकानां | अल्पायुषोऽपर्याप्तसूक्ष्माः भवादिसमये |
| ६ नोकषाणायाम् | ८ मान्ते | वैक्रियषट्कस्य | अल्पायुषः पर्याप्तबादरा वायुकायिकाः |
| निद्राद्विकयोः | ११ मे. | औदा० उपांगस्य | अल्पायुषो द्वीन्द्रियाः उदयाद्यसमये |
| स्त्यानर्द्धित्रिकस्य | अप्रमत्तोन्मुखा प्रमत्ता | वै० उपांगस्य | पूर्वोद्वलितवैक्रियोपांगवद्धस्तोककालासंज्ञिपंचे० भवादागत्य जातसंक्लिष्टदीर्घस्थितिकनारका उदयाद्यसमये |
| सम्यक्त्वस्य | स्वक्षपणकाले चतुर्गतिकाः | आहा० ७ कस्य | आहारक विकुर्वन्तः संयताः प्रथमसमये |
| मिथ्या०अनन्ता०४र्णाम् | अनन्तरसमये सम्यक्त्वसंयमौ युगपत्प्रतिपित्सवो मिथ्यादृशः | समच-वज्रर्षभयोः | अल्पायुषोऽतिसंक्लिष्टाः संज्ञिपञ्चेन्द्रियाःदेहस्था· |
| | | मध्यसंस्था०४र्णाम् | दीर्घायुषोऽसंज्ञिपंचेन्द्रिया भवाद्यसमये |

| | | | |
|---|---|---|---|
| हुंडक-उप०-साधा० | दीर्घायुष सूक्ष्मा· भवाद्यसमये | पराघातस्य | शिघ्रपर्याप्तात्पायुषोऽतिसंक्लिष्टसूक्ष्मा· पर्याप्त्यन्त्यसमये |
| मध्यमसंहनन ४ णाम् | देहस्था पूर्वकोटयायुर्मनुष्याः | आतप-उद्योतयो | देहपर्याप्त्याद्यसमये संक्लिष्टा· पृथ्वीकायिकाः |
| संस्थानस्य | द्वीन्द्रिया दीर्घायुरन्ते | जिननाम्न | आयोजिकाकरणादर्वाग्समये तीर्थकराः |
| मृदु-लघ्वो· | तत्प्रायोग्यविशुद्धाः संज्ञिपंचेन्द्रियाः [अनाहारका गत्यन्तराले] | कुवर्णादि७-अस्थिर-अशुभानाम् [९] | १३ मान्ते |
| त०७-सुवर्णादि ९ अगु०-स्थिर०-शुभ-निर्माणानाम् (२०) | भवान्तरालवर्त्तिनः मिथ्यादृशः | गुरु-कर्कशयो | मथिसंहारसमये सर्वज्ञाः समुद्घातगताः |
| | | ३४ उत्कृशेपाणाम् | मध्यमपरिणामाः तदुदयवन्तः सर्वेपि जीवा· |

**वण्णो तस्स पढमसमए वट्टमाणस्स जहण्णियाणुभागुदीरणा। अंगोवंगस्स दीग्घाउग्गहणं संकिलिट्ठो लब्भतित्ति काउं। 'आहारगाइ जइणो अप्पकालंमि'त्ति-आहारगसत्तगस्स थोवकालं विउव्वमाणस्स संकिलिट्ठस्स पढमसमए जहण्णिया अणुभागुदीरणा ॥७४॥**

(मलय०)—'वेइंदिय'त्ति। द्वयोः 'अङ्गोपाङ्गयोः'-औदारिकाङ्गोपाङ्गवैक्रियाङ्गोपाङ्गनाम्नोर्यथासंख्यमल्पायुर्द्वीन्द्रियस्तथाऽसंज्ञी सन् यो जातो नारकश्चिरस्थितिकः स च जघन्यानुभागोदीरको भवति। इयमत्र भावना-द्वीन्द्रियोऽल्पायुरौदारिकाङ्गोपाङ्गनाम्न उदयप्रथमसमये जघन्यमनुभागमुदीरयति । तथाऽसंज्ञिपञ्चेन्द्रियः पूर्वोद्वलितवैक्रियो वैक्रियाङ्गोपाङ्गं स्तोककालं बद्ध्वा स्वभूमिकानुसारेण चिरस्थितिको नरयिको जातस्तस्य वैक्रियाङ्गोपाङ्गनाम्न उदयप्रथमसमये वर्तमानस्य जघन्यानुभागोदीरणा । तथा आहारकस्य प्राकृतत्वादत्र

स्त्रीत्वनिर्देशः। शरीरग्रहणेन च बन्धनसंघाता अपि गृह्यन्ते। तत आहारकसप्तकस्य यतेराहारकशरीरमुत्पादयतः संक्लिष्टस्याल्पे काले-प्रथमसमय इत्यर्थः, जघन्यानुभागोदीरणा ॥७४॥

(उ०)—द्वयोरङ्गोपाङ्गयोरौदारिकाङ्गोपाङ्गवैक्रियाङ्गोपाङ्गनाम्नोर्यथाक्रममल्पायुर्द्वीन्द्रियस्तथाऽसंज्ञिभवादुद्धृत्य जातो नारकश्चिरस्थितिको जघन्यानुभागोदीरको भवति। इहेयं भावना—द्वीन्द्रियोऽल्पायुरौदारिकाङ्गोपाङ्गनाम्न उदयप्रथमसमये जघन्यमनुभागमुदीरयति। तथाऽसंज्ञिपञ्चेन्द्रियः पूर्वोद्वलितवैक्रियाङ्गोपाङ्गं स्तोककालं बद्ध्वा स्वस्थितियोग्यतानुसारेण चिरस्थितिको नैरयिको जातः, तस्यातिसंक्लिष्टस्य वैक्रियाङ्गोपाङ्गनाम्न उदयाद्यसमये वर्तमानस्य जघन्यानुभागोदीरणा। द्वीन्द्रियस्याल्पायुष्कत्वं नैरयिकस्य च चिरस्थितिकत्वं संक्लेशनिमित्तमिति संक्लेशव्यक्तये तयोपादानम्। तथा 'आहारगाए'त्ति स्त्रीत्वनिर्देशोऽयं सौत्रः, तत आहारकस्योपलक्षणादाहारकसप्तकस्य यतेराहारकशरीरं कुर्वतः संक्लिष्टस्याल्पे काले—प्रथमे समये इत्यर्थः, जघन्यानुभागोदीरणा ॥७४॥

**अमणो चउरंसुसभाण प्पाऊ सगचिरट्ठिई सेसे। संघयणाण य मणुओ हुंडुवघायाणमवि सुहुमो ॥७५॥**

(चू०)—'अमणो चउरंसुसभाणप्पाऊ'त्ति—असण्णिपंचिंदियो समचउरंसवज्जरिसभणामाणं 'अप्पाऊ'त्ति जहण्णियाए पज्जत्तगणिवत्तीए उववण्णो पढमसमते तब्भवत्थो आहारगो संकिलिट्ठो जहण्णाणुभागुदीरगो। अप्पाउग्गहणं संकिलेसत्थं। 'सगचिरट्ठिती सेसे'त्ति—सो चेव असण्णिपंचिंदियो अप्पणो उक्कोसठितीए वट्टमाणो सेसाणं हुंडवज्जाणं संठाणाणं पढमसमयतब्भवत्थो आहारगो सव्वविसुद्धो जहण्णाणुभागउदीरगो। 'संघयणाण य मणुओ' [सेसाणं]ति—सेसाणं संघयणाणं छेवट्ठवज्जाणं चउण्हं मणुओ पुव्वकोडिआऊगो पढमसमयतब्भ-

यत्थो आहारगो सव्वविसुद्धो जहण्णाणुभागुदीरतो। दिहाउग्गहणं विसुद्धिणिमित्तं। पंचिंदियतिरिएहिंतो मणुया अप्पबला तेण मणुयग्गहणं। 'हुंडउववायाण सुहुमो' त्ति–हुंडउवघायाणं सुहुमो उक्कोसिए पज्जत्तगणिवत्तीए पढमसमयोववण्णो आहारगो जहण्णाणुभागुदीरउ, दीहाउग्गहणं विसुद्धिणिमित्तं ॥७५॥

(मलय०)—'अमणु' त्ति–असंज्ञिपञ्चेन्द्रियोऽल्पायुरतिसंक्लिष्टः प्रथमसमयतद्भवस्थ आहारकः समचतुरस्रसंस्थानवज्रर्षभनाराचसंहननयोर्जघन्यमनुभागमुदीरयति, अल्पायुर्ग्रहणं संक्लेशार्थम्। तथाऽसंज्ञिपञ्चेन्द्रिय एवात्मीयायामायुरुत्कृष्टस्थितौ वर्तमान आहारको भवप्रथमसमये 'शेषे' इति अत्र षष्ठ्यर्थे सप्तमी, जातौ चैकवचनम्, ततोऽयमर्थः–शेषाणां हुण्डवर्जानां चतुर्णां संस्थानानां जघन्यमनुभागमुदीरयति। तथा शेषाणां संहननानां सेवार्तवज्रर्षभनाराचवर्जानां पूर्वकोट्यायुर्मनुष्य आहारकः स्वभवप्रथमसमये वर्तमानो जघन्यानुभागोदीरकः। इह दीर्घायुर्ग्रहणं विशुद्ध्यर्थम्। तिर्यक्पञ्चेन्द्रियापेक्षया च प्रायो मनुष्या अल्पबला इति मनुष्योपादानम्। तथा सूक्ष्मैकेन्द्रियः सुदीर्घायुःस्थितिक आहारकः प्रथमसमये हुण्डोपघातनाम्नोर्जघन्यानुभागोदीरकः ॥७५॥

(उ०)—अमना असंज्ञिपञ्चेन्द्रियोऽल्पायुरतिसंक्लिष्टः प्रथमसमयतद्भवस्थ आहारकः समचतुरस्रसंस्थानवज्रर्षभनाराचसंहननयोर्जघन्यानुभागोदीरकः। अल्पायुर्ग्रहणं संक्लेशप्रतिपत्तये। तथाऽसंज्ञिपञ्चेन्द्रिय एव 'सगचिरठिइ' त्ति–स्वायुरुत्कृष्टस्थितौ वर्तमानो भवप्रथमसमये, 'शेषे' अत्र षष्ठ्यर्थे सप्तमी, जातौ चैकवचनं, तदयमर्थः–शेषाणां हुण्डवर्जानां चतुर्णां संस्थानानां जघन्यमनुभागमुदीरयति। तथा शेषाणां संहननानां सेवार्तवज्रर्षभनाराचवर्जानां पूर्वकोट्यायुर्मनुष्य आहारकः स्वभवप्रथमसमये वर्तमानो जघन्यमनुभागमुदीरयति। इह दीर्घायुर्ग्रहणं विशुद्धिप्रतिपत्तये तिर्यक्पञ्चेन्द्रियापेक्षया च प्रायो मनुष्या अल्पबला इति मनुष्योपादानम्। तथा

सूक्ष्मैकेन्द्रियः सुदीर्घायुःस्थितिक आहारकः प्रथमसमये हुण्डोपघातनाम्नोर्जघन्यानुभागोदीरकः ॥७५॥

**सेवट्टस्स बिइंदिय बारसवासस्स मउयलहुगाणं। सन्नि विसुद्धाणाहारगस्स वीसा अइकिलिट्ठो ॥७६॥**

(चू०)—'सेवट्टस्स बिइंदिय बारसवासस्स'त्ति–सेवट्टस्स बेइंदिउ बारसवासिगाए ठितीए उववण्णो आहारगो जहण्णाणुभागुदीरओ। 'मडयलहुगाणं सण्णि विसुद्धाणाहारगस्स'त्ति–मउगलहुगाणं सण्णिस्स अणाहारगस्स तप्पाउग्गविसुद्धस्स जहण्णिया अणुभागुदीरणा। 'वीसा अइकिलिट्ठो'त्ति–तेजइगसत्तगं मउयलहुगवज्जं सुभवण्णेक्कारसगं अगुरुलहुगथिरसुभणिमेणमिति एतासिं वीसाए पगईणं सव्वसंकिलिट्ठो अंतरगतीए वट्टमाणो अणाहारतो मिच्छद्दिट्ठी जहण्णाणुभागउदीरगो, सुभाए पगईणं सव्वसंकिलिट्ठो थोवं उदीरेत्तिति काउं ॥७६॥

(मलय०)—'सेवट्टस्स'त्ति। द्वीन्द्रियस्य द्वादशवर्षायुषो द्वादशे वर्षे वर्तमानस्य सेवार्तसंहननसत्का जघन्यानुभागोदीरणा भवति। तथा मृदुलघुस्पर्शयोः संज्ञिपञ्चेन्द्रियस्य स्वभूमिकानुसारेणातिविशुद्धस्यानाहारकस्य जघन्यानुभागोदीरणा। तथा तैजससप्तकमृदुलघुवर्जशुभवर्णाद्येकादशकागुरुलघुस्थिरशुभनिर्माणरूपाणां विंशतिप्रकृतीनामतिसंक्लिष्टोऽपान्तरालगतौ वर्तमानोऽनाहारको मिथ्यादृष्टिर्जघन्यानुभागोदीरणास्वामी वेदितव्यः ॥७६॥

(उ०)—द्वीन्द्रियस्य द्वादशवर्षायुषो द्वादशे वर्षे वर्तमानस्य सेवार्तसंहननसत्कजघन्योदीरणास्वामित्वम्। तथा मृदुलघुस्पर्शयोः संज्ञिपञ्चेन्द्रियस्य स्वभूमिकानुसारेणातिविशुद्धस्यानाहारकस्य जघन्यानुभागोदीरणास्वामित्वम्। तथा तैजससप्तकमृदुलघुवर्जशुभवर्णाद्येकादशकागुरुलघुस्थिरशुभनिर्माणरूपाणां विंशतिप्रकृतीनामतिसंक्लिष्टोऽन्तरालगतौ वर्तमानोऽनाहारको मिथ्यादृष्टिर्जघन्यानुभागो-

रगणाम्यामी ज्ञातव्यः ॥७६॥

पत्तेगमुरालसमं इयरं हुंडेण तस्स परघाओ । अप्पाउस्स य आयावुज्जोयाणमवि तज्जोगो ॥७७॥

तं च सुहुमो जहण्णियाए पज्जत्तगणि-

(चू०)—'पत्तेयमुरालसमं'ति–पत्तेयसरीरस्स जहा उरालियस्स।

'इयरं हुंडेण'त्ति–इयरं साहारणसरीरं तं हुंड-

वत्तीए उववण्णो पढमसमए आहारतो जहण्णाणुभागुदीरगो।

'तस्स परघाओ अप्पाउस्स य'त्ति–तस्स सुहुमस्स जहण्णियाए पज्जत्तगणिवत्तीए उव-

संठाणेण समं भणियं।

'आतावुज्जोवाणमवि

वण्णस्स पढमसमयपज्जत्तस्स संकिलिट्ठस्स पराघायणामाए जहण्णियाणुभागुदीरणा।

तज्जोगो'त्ति–आतावुज्जोवाणं बायरो अप्पप्पणो पाउग्गाए जहण्णियाए पज्जत्तगणिवत्तीए उववण्णो सरीरप-

ज्जत्तीए पज्जत्तो पढमसमए वट्टमाणो संकिलिट्ठो जहण्णाणुभागुदीरगो ॥७७॥

(मलय०)—'पत्तेग'त्ति। प्रत्येकनाम औदारिकेण समं वक्तव्यं, औदारिकस्येव प्रत्येकनाम्नोऽपि सूक्ष्मैकेन्द्रियः प्रथमसमये वर्तमानो

जघन्यानुभागोदीरको वेदितव्य इत्यर्थः। तथा हुण्डेन समानमितरत् साधारणनाम वक्तव्यम्, यथा सूक्ष्मैकेन्द्रियस्याहारकस्य प्रथम-

समये हुण्डनाम्नो जघन्यानुभागोदीरणा प्रागभिहिता तथा साधारणनाम्नोऽपि वक्तव्येत्यर्थः। तथा तस्य सूक्ष्मैकेन्द्रियस्य शीघ्रपर्याप्त-

स्याल्पायुषोऽतिसंक्लिष्टस्य पर्याप्तचरमसमये वर्तमानस्य पराघातनाम्नो जघन्यानुभागोदीरणा। तथा आतपोद्योतनाम्नोस्तद्योग्यः पृथ्वी-

कायिकः शरीरपर्याप्त्या पर्याप्तः प्रथमसमये वर्तमानः संक्लिष्टो जघन्यानुभागोदीरकः ॥७७॥

(उ०)—प्रत्येकनामौदारिकसमं वक्तव्यं, औदारिकस्येव प्रत्येकनाम्नोऽपि सूक्ष्मैकेन्द्रियः प्रथमसमये वर्तमानो जघन्यानुभागोदीरको

ज्ञातव्य इत्यर्थः । तथेतरत्साधारणनाम हुण्डेन समं वक्तव्यं, यथा सूक्ष्मैकेन्द्रियस्याहारकस्य प्रथमसमये हुण्डनाम्नो जघन्यानुभागोदीरणा प्रागुक्ता तथा साधारणनाम्नोऽपि वाच्येत्यर्थः । तथा तस्य सूक्ष्मैकेन्द्रियस्य शीघ्रपर्याप्तस्याल्पायुषोऽतिसंक्लिष्टस्य पर्याप्तिचरमसमये वर्तमानस्य पराघातनाम्नो जघन्यानुभागोदीरणा । तथाऽऽतपोद्योतनाम्नोस्तद्योग्यः पृथिवीकायिकः शरीरपर्याप्त्या पर्याप्तः प्रथमे समये वर्तमानः संक्लिष्टो जघन्यानुभागोदीरकः ॥७७॥

**जा नाउज्जियकरणं तित्थगरस्स नवगस्स जोगंते । कक्खडगुरूणमंते नियत्तमाणस्स केवलिणो ॥७८॥**

(चू०)—'जा णाउज्जियकरणं तित्थकरस्स'त्ति–जाव आउज्जीकरणं ण आढवेति ताव तित्थकरणामाए जहण्णाणुभागुदीरणा, सव्वकालं आउज्जीकरणे बहुगं अणुभागं उदीरेति । 'णवगस्स जोगंते'त्ति–कक्खडगुरुगहीणं कुवण्णणवगं अथिरं असुभं एतेसिं णवण्हं कम्माणं सजोगिकेवलिचरिमसमए जहण्णाणुभागुदीरणा । 'कक्खडगुरुण मंथे णियत्तमाणस्स केवलिणो'त्ति–कक्खडगुरुगाणं केवलिसमुग्घायाओ णियत्तमाणस्स मंथे वट्टमाणस्स समुग्घाएण खविए जहण्णियाणुभागउदीरणा ॥७८॥

(मलय०)—'ज' त्ति । आयोजिकाकरणं नाम केवलिसमुद्घातादर्वाग् भवति । तत्राङ् मर्यादायाम्, आ मर्यादया केवलिदृष्ट्या योजनं व्यापारणं आयोजनम् । तच्चातिशुभयोगानामवसेयम् । आयोजनमायोजिका तस्याः करणं आयोजिकाकरणम् । केचिदावर्जितकरणमाहुः, तत्रायं शब्दार्थः–आवर्जितो नाम अभिमुखीकृतः । तथा च लोके वक्तारः–आवर्जितोऽयं मया, संमुखीकृत इत्यर्थः । ततश्च तथाभव्यत्वेनावर्जितस्य मोक्षगमनं प्रत्यभिमुखीकृतस्य करणं शुभयोगव्यापारणं आवर्जितकरणम् । अपरे 'जा नाउस्सयकरणं'

इति पठन्ति। तत्रायं शब्दसंस्कारः–आवश्यककरणमिति। अन्वर्थश्चायं–आवश्यकेनावश्यंभावेन करणमावश्यककरणम्। तथाहि—समुद्घातं केचित्कुर्वन्ति, केचिच्च न कुर्वन्ति, इदं त्वावश्यककरणं, सर्वेऽपि केवलिनः कुर्वन्तीति। तच्चायोजिकाकरणमसंख्येयसमयात्मकमन्तर्मुहूर्तप्रमाणम्। यत उक्तं प्रज्ञापनायां–'कइसमएणं भन्ते आउंजियाकरणे पन्नत्ते? गोयमा! असंखिज्जसमइए अन्तोमुहुत्तिए पन्नत्ते' इति। तद्यावन्नाद्याप्यारभ्यते तावत्तीर्थकरकेवलिनस्तीर्थकरनाम्नो जघन्यानुभागोदीरणा। आयोजिकाकरणे हि प्रभूतानुभागोदीरणा प्रवर्तत इत्यर्वाग्ग्रहणम्। तथा नीलकृष्णदुरभिगन्धतिक्तकटुशीतरूक्षास्थिराशुभरूपस्य प्रकृतिनवकस्य सयोगिकेवलिचरमसमये जघन्यानुभागोदीरणा, तस्यैव सर्वविशुद्धत्वात्। कर्कशगुरुस्पर्शयोस्तु केवलिसमुद्घातान्निवर्तमानस्य केवलिनो मथः संहारसमये जघन्यानुभागोदीरणा ॥७८॥

(उ०)—आयोजिकाकरणं नाम केवलिसमुद्घातादर्वाग्भवति, तत्र आ–मर्यादया केवलिदृष्टया योजनमतिशुभयोगानामायोजिका तस्याः करणं आयोजिकाकरणम्। केचिदावर्जितकरणमित्याहुः, तत्रायमर्थः–आवर्जितो नामाभिमुखीकृतः, तथा च वक्तारो भवन्ति–आवर्जितोऽयं जनो मया सम्मुखीकृत इत्यर्थः। ततश्च तथाभव्यत्वेनावर्जितस्य सिद्धिगमनं प्रत्यगिमुखीकृतस्य करणमुदीरणावलिकायां कर्मप्रक्षेपणरूपं शुभयोगव्यापारणं आवर्जितकरणम्। अपरे त्वावश्यककरणमिति पठन्ति। तत्रायमर्थः–आवश्यकेनावश्यभावेन करणमावश्यककरणम्। तथाहि–समुद्घातं केचित्कुर्वन्ति केचिच्च न कुर्वन्ति, इदं तु सर्वेऽपि केवलिनः कुर्वन्तीति। तच्चायोजिकाकरणमसंख्येयसमयात्मकमन्तर्मुहूर्तप्रमाणम्। यदाह भगवानार्यश्यामः–"कइ समइए णं भन्ते आउंजियाकरणे पन्नत्ते? गोयमा! असंखेज्जसमइए अन्तोमुहुत्तिए पन्नत्ते"। तद्यावन्नाद्याप्यारभ्यते तावत्तीर्थकरकेवलिनस्तीर्थकरनाम्नो जघन्यानुभागोदीरणा, आयोजिका-

करणे ह्यनुभागोदीरणा बह्वी प्रवर्तत इत्यर्वाग्ग्रहणम्। तथा नवकस्य नीलकृष्णदुरभिगन्धतिक्तकटुशीतरूक्षास्थिराशुभरूपस्य योग्यन्ते-सयोगिकेवलिचरमसमये जघन्यानुभागोदीरणा, एतदुदीरकमध्येऽस्यैव सर्वविशुद्धत्वात्। कर्कशगुरुस्पर्शयोस्तु केवलिसमुद्घातान्निवर्तमानस्य केवलिनो मथः संहारसमये जघन्यानुभागोदीरणा ॥७८॥



**सेसाण पगइवेई मज्झिमपरिणामपरिणओ होज्जा। पच्चयसुभासुभा वि य चिंतिय नेओ विवागे य ॥७९॥**

(चू०)—'सेसाण पगत्तिवेदी मज्झिमपरिणामपरिणतो होज्ज'त्ति। सेसाणं–सायासाय चत्तारि गति पंच जाति चत्तारि आणुपुव्वी उस्सासं विहायगतिदुगं तस थावर बायर सुहुम पज्जत्तापज्जत्तगं सुभगदूभगसुसर-दुसर आदेज्जअणादेज्जं जसाजसं णीउच्चागोयमिति एतासिं चोत्तीसाए पगतीणं जत्तिया वेयगा सव्वे मज्झिम-परिणामा जहण्णाणुभागुदीरगा। 'पच्चयसुभासुभा वि य चिंतिय नेओ विवागे य'त्ति–एयासिं सव्वासिं लक्खणवेयणं सामण्णं पच्चओ गुणपच्चयो भवपच्चयो य, सुभाणि असुभाणि य, विवागे य त्ति–पोग्गलविवागा जीवविवागा भवविवागा खेत्तविवागा, पच्चयसुभासुभविवागे य चिंतेऊणं साभित्तं सव्वकम्माणं भाणियव्वं।

(मलय०)—'सेसाण'त्ति। शेषाणां–सातासातवेदनीयगतिचतुष्टयजातिपञ्चकानुपूर्वीचतुष्टयोच्छ्वासविहायोगतिद्विकत्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तसुभगदुर्भगसुस्वरदुःस्वरादेयानादेययशःकीर्त्ययशःकीर्त्युच्चैर्गोत्रनीचैर्गोत्राख्यानांचतुस्त्रिंशत्संख्यानां प्रकृतीनां तत्तत्प्रकृत्युदये वर्तमानाः सर्वेऽपि जीवा मध्यमपरिणामपरिणता जघन्यानुभागोदीरणास्वामिनो भवन्ति। सम्प्रति सर्वासां प्रकृतीनां सामान्येन जघन्योत्कृष्टानुभागोदीरणास्वामित्वपरिज्ञानार्थमुपायोपदेशमाह–'पच्चय'इत्यादि। प्रत्ययः–परिणामप्रत्ययो भवप्रत्ययश्च तथा प्रकृतीनां

शुभत्वमशुभत्वं च, विपाकश्चतुर्विधः–पुद्गलविपाकादिः, एतान् सम्यक् चिन्तयित्वा परिभाव्य जघन्योत्कृष्टानुभागोदीरणास्वामी यथायोग्योऽवगन्तव्यः। तथाहि–परिणामप्रत्ययानुभागोदीरणा प्राय उत्कृष्टा भवति, भवप्रत्यया तु जघन्या। शुभानां च संक्लेशे प्रायो जघन्यानुभागोदीरणा, अशुभानां च विशुद्धौ, विपर्यासे तूत्कृष्टा इत्यादि परिभाव्य तत्तत्प्रकृत्युदयवतां जघन्योत्कृष्टानुभागोदीरणास्वामित्वमवगन्तव्यमिति ॥७९॥

(उ०)—शेषाणां सातासातवेदनीयगतिचतुष्कजातिपञ्चकानुपूर्वीचतुष्कोच्छ्वासखगतिद्विकत्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तसुभगदुर्भगसुस्वरदुःस्वरादेयानादेययशःकीर्त्ययशःकीर्त्युच्चैर्गोत्रनीचैर्गोत्रलक्षणानां चतुस्त्रिंशत्प्रकृतीनां तत्तत्प्रकृत्युदये वर्तमानाः सर्वेऽपि जीवा मध्यमपरिणामपरिणता जघन्यानुभागोदीरणास्वामिनो भवन्ति। अथ सर्वत्र सामान्येन जघन्योत्कृष्टानुभागोदीरणास्वामित्वपरिज्ञानोपायमुपदिशति–'पच्चय' त्ति। प्रत्ययं परिणामप्रत्ययभवप्रत्ययलक्षणं तथा प्रकृतीनां शुभत्वमशुभत्वं च विपाकांश्च पुद्गलविपाकादीन् चिन्तयित्वा सम्यक् परिभाव्य जघन्योत्कृष्टानुभागोदीरणास्वामी यथावज्ज्ञेयः। तथाहि–परिणामप्रत्ययानुभागोदीरणा प्राय उत्कृष्टा, भवप्रत्यया तु जघन्या, शुभानां च संक्लेशे जघन्यानुभागोदीरणाऽशुभानां च विशुद्धौ, विपर्यासे तूत्कृष्टा, पुद्गलादिविपाकानां पुद्गलादिप्रत्ययोत्कर्षे उत्कृष्टाऽऽद्यसमये तु जघन्येत्यादि परिभाव्य तत्तत्प्रकृत्युदयवति जघन्योत्कृष्टानुभागोदीरणास्वामित्वं निर्धारणीयमिति ॥७९॥

भणिया अणुभागुदीरणा। इयाणिं पएसुदीरणा भण्णइ। तीसे इमे अत्थाहिगारा। तं जहा–सादियअणादिपरूवणा, सामित्तमिति। तत्थ सादि य अणादि परूवणा दुविहा–मूलपगतिसादियअणादिपरूवणा य, उत्तर-

पगतिसादिअणादिपरूवणा य। तत्थ मूलपगतिसादि य अणादि य परूवणत्थं भण्णइ—

**पंचण्हमणुक्कोसा तिहा पएसे चउव्विहा दोण्हं । सेसविगप्पा दुविहा सव्वविगप्पा य आउस्स ॥८०॥**

(चू०)—'पंचण्हमणुक्कोसा तिहापएसे'त्ति। णाणावरणदंसणावरणणामगोअअंतराइआणं अणुक्कोसा पएसउदीरणा अणादियधुवाधुवा तिविहा। कहं? भण्णइ—एतेसिं पंचण्हं कम्माणं उक्कोसपदेसउदीरणा गुणियकंमंसिगं पडुच्च अप्पप्पणो उदीरणंते, सा य सादियअधुवा। तं मोत्तूणं सेसा अणुक्कोसा, ताए आदि णत्थि धुवउदीरणत्ताउ, धुवाधुवा पुव्वुत्ता। 'चउव्विहा दोण्हं'ति—वेदणीयमोहणीयाणं अणुक्कोसा पएसउदीरणा सादियादि चउव्विहा। कहं? भण्णइ—वेयणीयस्स पमत्तसंजओ अपमत्ताभिमुहो सव्वविसुद्धो उक्कोसपदेसउदीरगो। मोहणीयस्स अप्पणो उदीरणंते उक्कोसपदेसउदीरणा, सा य सादियअधुवा। तं मोत्तूणं सेसा अणुक्कोसा पदेसउदीरणा। वेयणिज्जस्स अपमत्तभावतो पडिवडमाणस्स अणुक्कोसा पदेसउदीरणा सादिया, तं ठाणमपत्तपुव्वस्स अणादिया, धुवाधुवा पुव्वुत्ता। मोहणीयस्स उवसंतकसायठाणातो परिवडमाणस्स अणुक्कोसा पदेसउदीरणा सादिया, तं ठाणमपत्तपुव्वस्स अणादिया, धुवाधुवा पुव्वुत्ता। 'सेसविगप्पा दुविह'त्ति—एतेसिं कम्माणं भणियसेसा विगप्पा जहण्णाजहण्णउक्कोसा सादिता अधुवा। कहं? भण्णइ—जो सव्वसंकिलिट्ठो मिच्छदिट्ठी तंमि एतेसिं कम्माणं जहण्णिया पदेसउदीरणा, तम्हा जहण्णिया पदेसउदीरणा सादिया अधुवा। अजहण्णिया मिच्छदिट्ठिम्मि चेव लब्भति, सा य सादिया अधुवा य। उक्कोसाए भणियं। 'सव्वविगप्पा य आउस्स'त्ति—

(आउम्म)उक्कोसाणुक्कोसजहण्णाजहण्णविगप्पा सादिया अधुवा एव अधुवउदीरणत्तातो ॥८०॥

(मलय०)—तदेवमुक्ताऽनुभागोदीरणा। सम्प्रति प्रदेशोदीरणाभिधानावसरः। तत्र च द्वावर्थाधिकारौ—तद्यथा—साद्यनादिप्ररूपणा स्वामित्वप्ररूपणा च। साद्यनादिप्ररूपणापि च द्विधा—मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषयां साद्यनादिप्ररूपणा चिकीर्षुराह—'पञ्चण्हं'ति। ज्ञानावरणदर्शनावरणनामगोत्रान्तरायरूपाणां पञ्चानां मूलप्रकृतीनामनुत्कृष्टा प्रदेशे—प्रदेशविषया उदीरणा त्रिधा—त्रिप्रकारा। तद्यथा—अनादिर्ध्रुवाऽध्रुवा च। तथाहि—एतासामुत्कृष्टा प्रदेशोदीरणा गुणितकर्मांशे स्वस्वोदीरणापर्यवसाने लभ्यते। सा च सादिरध्रुवा च। ततोऽन्या सर्वाऽप्यनुत्कृष्टा। सा चानादिः, ध्रुवोदीरणत्वात्। ध्रुवाध्रुवे अभव्यभव्यापेक्षया। तथा द्वयोर्वेदनीयमोहनीययोरनुत्कृष्टा प्रदेशोदीरणा चतुर्विधा। तद्यथा—सादिरनादिर्ध्रुवाऽध्रुवा च। तथाहि—वेदनीयस्योत्कृष्टा प्रदेशोदीरणा प्रमत्तसंयतस्याप्रमत्तभावाभिमुखस्य सर्वविशुद्धस्य, मोहनीयस्य पुनः स्वोदीरणापर्यवसाने सूक्ष्मसंपरायस्य। ततो द्वयोरप्येषा साद्यध्रुवा। ततोऽन्या सर्वाप्यनुत्कृष्टा। सापि चाप्रमत्तगुणस्थानकात्प्रतिपततो वेदनीयस्योपशान्तमोहगुणस्थानकाच्च प्रतिपततो मोहनीयस्य सादिः, तत्स्थानमप्राप्तस्य द्वयोरप्यनादिः ध्रुवाध्रुवे पूर्ववत्। 'सेसविगप्पा दुविह' त्ति—एतासां सप्तानामपि मूलप्रकृतीनां शेषा उक्तव्यतिरिक्ता विकल्पा जघन्याजघन्योत्कृष्टा द्विविधा द्विप्रकाराः। तद्यथा—सादयोऽध्रुवाश्च। तथाहि—एतासां सप्तानामतिसंक्लिष्टे मिथ्यादृष्टौ जघन्या प्रदेशोदीरणा। सा च सादिरध्रुवा च। संक्लेशपरिणामाच्च च्युतस्य मिथ्यादृष्टेरप्यजघन्या। ततः सापि सादिरध्रुवा च। उत्कृष्टा च प्रागेव भाविता। आयुषः सर्वेऽपि विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टा द्विविधाः, तद्यथा—सादयोऽध्रुवाश्च। सा च साध्रुवताऽध्रुवोदीरणत्वादवसेया ॥८०॥

(उ०)—तदेवमुक्ताऽनुभागोदीरणा, अथ प्रदेशोदीरणाऽभिधातव्या । तत्र द्वावर्थाधिकारौ–साद्यनादिप्ररूपणा स्वामित्वप्ररूपणा च । साद्यनादिप्ररूपणा च द्विधा मूलोत्तरप्रकृतिविषयभेदात् । तत्र मूलप्रकृतिविषयां साद्यनादिप्ररूपणां तावदाह—मोहायुर्वेदनीयवर्जानां पञ्चानां मूलप्रकृतीनां प्रदेशे–प्रदेशविषयानुत्कृष्टोदीरणा त्रिविधा–अनादिध्रुवाध्रुवभेदात् । तथाहि–एतासामुत्कृष्टा प्रदेशोदीरणा गुणितकर्मांशे स्वस्वोदीरणान्ते लभ्यते, सा च साद्यध्रुवा, ततोऽन्या सर्वाऽप्यनुत्कृष्टा, सा चानादिर्ध्रुवोदीरणत्वात् । ध्रुवाध्रुवे अभव्यभव्यापेक्षया । तथा द्वयोर्वेदनीयमोहनीययोरनुत्कृष्टा प्रदेशोदीरणा चतुर्विधा साद्यनादिध्रुवाध्रुवभेदात् । तथाहि–वेदनीयस्योत्कृष्टा प्रदेशोदीरणा प्रमत्तयतेरप्रमत्तभावाभिमुखस्य सर्वविशुद्धस्य, मोहनीयस्य तु स्वोदीरणान्ते सूक्ष्मसंपरायस्येति, द्वयोरप्येषा साद्यध्रुवा, ततोऽन्या सर्वाऽप्यनुत्कृष्टा, सा च वेदनीयस्य प्रमत्तगुणस्थानान्मोहनीयस्य चोपशान्तमोहगुणस्थानात् पततः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । एतासां सप्तानामपि मूलप्रकृतीनां शेषविकल्पा–जघन्याजघन्योत्कृष्टा द्विविधाः, साद्यध्रुवभेदात् । तथाहि–एतासां सप्तानामपि जघन्याजघन्ये प्रदेशोदीरणे मिथ्यादृष्टावतिसंक्लेशपरिणामभावाभावाभ्यां परावर्तमाने प्राप्येते इति साद्यध्रुवे । उत्कृष्टा च प्रागेव भाविता । आयुषश्च सर्वेऽपि विकल्पा अध्रुवोदीरणत्वादेव साद्यध्रुवाः ॥८०॥

इदाणिं उत्तरपगईणं सादिअणादिपरूवणा भण्णइ—

**मिच्छत्तस्स चउद्धा सगयालाए तिहा अणुक्कोसा । सेसविगप्पा दुविहा सव्वविगप्पा य सेसाणं ॥८१॥**

(चू०)—'मिच्छतस्स चउद्धा सगयालाए तिहा अणुक्कस्स'त्ति। मिच्छत्तस्स अणुक्कसा पदेसउदीरणा सादियादि चउव्विहा। कहं ? भण्णइ–मिच्छत्तस्स उक्कोसिया पदेसउदीरणा वितियसमए सम्मत्तं ससंजमं

पडिवज्जमाणस्स सा य सादिया अधुवा। तं मोत्तूणं सेसा अणुक्कस्सा पदेसउदीरणा। तस्स चेव संमत्तातो परिवडमाणस्स सादिया अणुक्कस्सा पदेसउदीरणा। तं ठाणमपत्तपुव्वस्स अणादिया, अधुवाधुवा पुव्वुत्ता। 'सगयालाए तिहा अणुक्कस्स'त्ति–मिच्छत्तवज्जा धुवोदया कम्मा सत्तचत्तालीसा तेसिं अणुक्कसा पदेसउदीरणा तिविहा–अणादिया धुवा अधुवा। कहं? भण्णइ–आवरणविग्घचोद्दसगाणं गुणियकम्मंसिगस्स खीणकसायस्स उदीरणंते वट्टमाणस्स उक्कोसिया पदेसउदीरणा, सा य सादिय अधुवा। तेत्तीसाए णामधुवोदयीणं गुणियकम्मंसिगस्स सजोगिकेवलिस्स चरिमसमए वट्टमाणस्स उक्कोसिया पदेसउदीरणा। सा य सादिय अधुवा। तं मोत्तूणं एतेसिं सव्वकम्माणं सेसा अणुक्कोसा पदेसउदीरणा, तीसे आई णत्थि धुवउदीरणत्ताओ तम्हा अणादिता, धुवाधुवा पुव्वुत्ता। 'सेस विगप्पा दुविह'त्ति–भणियसेसा विकप्पा जहण्णाजहण्णउक्कोसिता सादिता अधुवा। कहं? भण्णइ–एतेसिं जहण्णा पदेसउदीरणा मिच्छद्दिट्ठिस्स सव्व संकिलिट्ठस्स, तस्सेव अजहण्णा वि पदेसउदीरणा, तम्हा सादि य अधुवा। उक्कोसाए कारणं पुव्वुत्तं। 'सव्व विगप्पा य सेसाणं'ति–उक्कोसाणुक्कोसजहण्णाजहण्णा सेसकम्माणंति–दसुत्तरस्स पगतिसयस्स सादिय अधुवा, अधुवउदीरणत्तातो ॥८१॥

(मलय०)—सम्प्रत्युत्तरप्रकृतीनां साद्यनादिप्ररूपणार्थमाह–'मिच्छत्तस्स'त्ति। मिथ्यात्वस्यानुत्कृष्टा प्रदेशोदीरणा चतुर्विधा। तद्यथा–सादिरनादिर्ध्रुवाऽध्रुवा च। तथाहि–योऽनन्तरसमये सम्यक्त्वं संयमसहितं प्रतिपत्स्यते तस्य मिथ्यादृष्टेर्मिथ्यात्वस्योत्कृष्टा प्रदेशोदी-

रणा । सा च सादिरध्रुवा च, समयमात्रत्वात् । ततोऽन्या सर्वाप्यनुत्कृष्टा । सापि च सम्यक्त्वात्प्रतिपततो भवन्ती सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवे पूर्ववत् । तथा सप्तचत्वारिंशतः प्रकृतीनामनुत्कृष्टा प्रदेशोदीरणा त्रिधा । तद्यथा–अनादिर्ध्रुवाऽध्रुवा च । तथाहि–पञ्चविधज्ञानावरणपञ्चविधान्तरायचतुर्विधदर्शनावरणरूपाणां चतुर्दशप्रकृतीनां क्षीणकषायस्य गुणितकर्मांशस्य स्वस्वोदीरणापर्यवसाने उत्कृष्टा प्रदेशोदीरणा । सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यनुत्कृष्टा, सा चानादिः ध्रुवोदीरणत्वात् । ध्रुवाध्रुवे पूर्ववत् । तथा तैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणनाम्नां त्रयस्त्रिंशत्संख्याकानां प्रकृतीनां गुणितकर्मांशस्य सयोगिकेवलिनः चरमसमये उत्कृष्टा प्रदेशोदीरणा । सा च सादिरध्रुवा च । ततोऽन्यथा सर्वाऽप्यनुत्कृष्टा । सा चानादिः, ध्रुवोदीरणत्वात् । आसां ध्रुवाध्रुवे पूर्ववत् । 'सेसविगप्पा दुविह'त्ति–उक्तशेषा विकल्पा जघन्याजघन्योत्कृष्टरूपा द्विविधाः । तद्यथा–सादयोऽध्रुवाश्च । तथाहि–सर्वासामप्युक्तप्रकृतीनामतिसंक्लिष्टपरिणामे मिथ्यादृष्टौ जघन्या प्रदेशोदीरणा लभ्यते । अतिसंक्लिष्टपरिणामप्रच्यवने चाजघन्या । ततो द्वे अपि साद्यध्रुवे । उत्कृष्टा च प्रागेव भाविता । शेषाणां चोक्तव्यतिरिक्तानां प्रकृतीनां दशोत्तरशतसंख्यानां सर्वेऽपि विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टा द्विविधाः । तद्यथा–सादयोऽध्रुवाश्च । साद्यध्रुवता चाध्रुवोदीरणत्वादवसेया ॥८१॥

(उ०)—उत्तरप्रकृतीनां साद्यादिप्ररूपणार्थमाह–मिथ्यात्वस्यानुत्कृष्टा प्रदेशोदीरणा चतुर्विधा–साद्यनादिध्रुवाध्रुवभेदात् । तथाहि–अनन्तरसमये संयमसहितं सम्यक्त्वं प्रतिपित्सोर्मिथ्यात्वस्योत्कृष्टा प्रदेशोदीरणा, सा चैकसामयिकीति साद्यध्रुवा, ततोऽन्या सर्वाऽप्यनुत्कृष्टा, साऽपि सम्यक्त्वात्प्रतिपततो भवन्ती सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवे प्राग्वत् । तथा सप्तचत्वारिंशतः प्रकृतीनामनुत्कृष्टा प्रदेशोदीरणा त्रिविधा–अनादिध्रुवाध्रुवभेदात् । तथाहि–ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपचतुर्दशप्रकृतीनां

क्षीणकषायस्य गुणितकर्मांशस्य स्वस्वोदीरणान्ते उत्कृष्टा प्रदेशोदीरणा, सा च साद्यध्रुवा, ततोऽन्या सर्वाऽप्यनुत्कृष्टा, सा चानादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे प्राग्वत्। तथा तैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभागुरुलघुनिर्माणलक्षणानां त्रयस्त्रिंशत्प्रकृतीनां गुणितकर्मांशस्य सयोगिकेवलिनश्चरमसमये उत्कृष्टा प्रदेशोदीरणा, सा च सादिरध्रुवा च, ततोऽन्या सर्वाऽप्यनुत्कृष्टा, सा चानादिर्ध्रुवोदीरणत्वात्, ध्रुवाध्रुवे प्राग्वत्। आसां शेषविकल्पा जघन्याजघन्योत्कृष्टरूपा द्विविधा–साद्यध्रुवभेदात्। तथाहि–सर्वासामप्युक्तप्रकृतीनां मिथ्यादृष्टावतिसंक्लेशपरिणामे तत्प्रच्यवने च जघन्याजघन्ये परावृत्त्या प्राप्यत इति साद्यध्रुवे। उत्कृष्टा च प्रागेव भाविता। शेषाणां च दशोत्तरशतप्रकृतीनां सर्वेऽपि विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टा अध्रुवोदीरणत्वादेव द्विविधाः सादयोऽध्रुवाश्चेति ॥८१॥

साइअणाइपरूवणा भणिया। इदाणिं सामित्तं भण्णइ। तं दुविहं–उक्कोसपदेसउदीरणासामित्तं, जहण्णपदेसउदीरणासामित्तं च। तत्थ पुव्वं उक्कोसपदेसउदीरणासामित्तं भण्णइ—

अणुभागुदीरणाए जहण्णसामी पएसजिट्ठाए। घाईणं अन्नयरो ओहीण विणोहिलंभेण ॥८२॥

(चू०)—घातिकम्माणं सव्वेसिं अणुभागउदीरणम्मि जस्स जस्स जो जो जहण्णसामी भणितो सो चेव उक्कोसपदेसउदीरणाए उक्कोससामी गुणियकम्मंसिगो य जाणियव्वो। णवरि 'अन्नयरो'त्ति–चउण्हं णाणावरणीयाणं तिण्हं दंसणावरणीयाणं सुतकेवली वा इयरो वा सव्वे वि उक्कोसउदीरणासामी। मणपज्जवणाणावरणीयस्स वि लद्धीसहिओ वा इयरो वा उक्कोसउदीरणासामी। ओहिनाणओहिदंसणावरणीयाणं (जस्स) लंभो णत्थि तस्स उक्कोसिया पदेसउदीरणा। लद्धिसहियस्स बहुया ओहिदुगावरणपदेसा खिज्जंतित्ति णेच्छि-

## अथ प्रदेशोदीरणायाः साद्यादिभङ्गयन्त्रम् ।

( मूलप्रकृतिषु )

| प्रकृतयः | अजघन्यः | | जघन्यः | | अनुत्कृष्टः | | | | उत्कृष्टः | |
|---|---|---|---|---|---|---|---|---|---|---|
| | सादिः | अध्रुवः | सादिः | अध्रुवः | सादिः | अध्रुवः | अनादिः | ध्रुवः | सादिः | अध्रुवः |
| ज्ञानावरणादिपञ्चकस्य | संक्लेशपरावृत्तितः, मिथ्यादृशाम् | सं०परावृत्तितः, मिथ्या० | संक्लेशपरावृत्तितः, मिथ्यादृशाम् | सं०परा मिथ्यादृशाम् | ० | भव्यानाम् | आदेरभावात् | अभव्यानाम् | गुणितकर्मांशानां स्वस्वोदीरणान्ते | सादित्वात् |
| वेदनीयस्य | ,, | ,, | ,, | ,, | प्रमत्तात्पतताम् | ,, | साद्यप्राप्तानाम् | ,, | अप्रमत्तोन्मुख प्रमत्तानां | ,, |
| मोहनीयस्य | ,, | ,, | ,, | ,, | ११ त. पतताम् | ,, | ,, | ,, | उप० १० मानां स्वस्वोदीरणान्ते | ,, |
| आयुषः | अध्रुवत्वात् | अध्रु० | अध्रुवत्वात् | अध्रु० | अध्रुवत्वात् | अध्रु० | ० | ० | अध्रुवत्वात् | अध्रुवत्वात् |

( उत्तरप्रकृतिषु )

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| मिथ्यात्वस्य | संक्लेशपरावृत्तित. मिथ्या. दृशाम् | सं०परा० मिथ्या० | संक्लेशपरावृत्तितः मिथ्यादृशाम् | सं०परा० मिथ्या० | सम्यक्त्वात्पतताम् | भव्यानाम् | साद्यप्राप्तानाम् | अभव्यानाम् | अनन्तरसमये ससम्यक्त्वसंयममुत्पादकाना १ सामयिकत्वात् | सादित्वात् |
| ज्ञा० ५-दर्श० ८-विघ्न ५. नाम् | ,, | ,, | ,, | ,, | ० | ,, | आदेरभावात् | ,, | गुणित० १२ मानां स्वस्वोदीरणान्ते | ,, |
| तै० ७-वर्णादि २०-स्थि० अस्थि० शु०-अशु०-अगु०-निर्मा० (३३) | ,, | ,, | ,, | ,, | ० | ,, | ,, | ,, | गुणितकर्मांशानां १२ मान्ते | ,, |
| ११० उत्कर्षाणाम् | अध्रुवोदीरणत्वात् | अध्रुवो० | अध्रुवोदीरणत्वात् | अध्रुवोदी० | अध्रुवोदी० | अध्रुवो० | ० | ० | अध्रुवोदी० | अध्रुवोदी० |

ज्जइ लद्धी। एवं संखेवेण भणियं तहावि असंमोहणिमित्तं विसेसयरं भणामि–ओहिणाणावरणवज्जाणं चउण्हं णाणावरणाणं चक्खुअचक्खुकेवलदंसणावरणीयाणं एतेसिं सत्तण्हं उक्कोसिया पदेसउदीरणा समयावलियसेसे छउमत्थस्स, तस्सेव ओहिदुगस्स ओहिरहियस्स उक्कोसिया पदेसुदीरणा। णिद्दादुगस्स उवसंतकसायस्स

गुणितकम्मंसियस्स उवसंतकाले उक्कोसपदेसउदीरणा। थीणगिद्धितिगस्स पमत्तसंजओ से काले अपमत्तो होहित्ति तंमि पमत्तचरिमसमए उक्कोसिया पदेसउदीरणा। मिच्छत्तअणंताणुबन्धीणं से काले सम्मत्तं ससंजमं पडिवज्जिहित्ति तम्मि मिच्छत्तचरिमसमए उक्कोसिया पदेसउदीरणा। सम्मामिच्छत्तस्स से काले सम्मत्तं पडिवज्जिहीत्ति तम्मि सम्मामिच्छत्तचरिमसमए उक्कोसिया पदेसुदीरणा। एवं अपच्चक्खाणावरणीयाणं असंजयसम्मादिट्ठी से काले संजमं पडिवज्जिहित्ति तम्मि असंजयसम्मदिट्ठीचरिमसमए उदीरेति। पच्चक्खाणावरणीयाणं देसविरओ से काले संजमं पडिवज्जिहित्ति तम्मि देसविरयचरिमसमए उक्कोसपदेसुदीरणा। कोहसंजलणाए चरिमसमए वेयगो, एवं माणमायाणं अप्पप्पणो चरिमसमयवेयगो उक्कोसपदेसुदीरगो। लोभसंजलणाए समयाहियावलियचरिमसमयकसातो। वेयाणं तिण्हंपि अप्पप्पणो समयाहियावलियचरिमसमयवेयगो। छण्हं णोकसायाणं अपुव्वकरणखवगो चरिमसमए वट्टमाणो सव्वविशुद्धो। अंतराथितपंचगस्स समयाहियावलियचरिमसमयछउमत्थो पगतीतो सव्वत्थ गुणियकम्मंसिगो भाणियव्वो। घातीणं भणिया ॥८२॥

(मलय०)—कृता साद्यनादिप्ररूपणा। सम्प्रति स्वामित्वमभिधातव्यम्। तच्च द्विधा—उत्कृष्टप्रदेशोदीरणास्वामित्वं, जघन्यप्रदेशोदीरणास्वामित्वं च। तत्र प्रथमत उत्कृष्टोदीरणास्वामित्वमाह—'अणुभाग' त्ति। घातिकर्मणां सर्वेषामपि अनुभागोदीरणायां यो यो जघन्यानुभागोदीरणास्वामी प्राक् प्रतिपादितः स स एवोत्कृष्टप्रदेशोदीरणास्वामी गुणितकर्मांशो वेदितव्यः। नवरं 'अन्यतर' इति—श्रुतकेवली इतरो वा। अवधिज्ञानावरणावधिदर्शनावरणयोरवधिलब्धिहीन उत्कृष्टप्रदेशोदीरकोऽवसेयः। अतीवेदं संक्षिप्तमुक्तमिति विशे-

पतो विभाव्यते—अवधिज्ञानावरणवर्जानां चतुर्णां ज्ञानावरणानां चक्षुरचक्षुःकेवलदर्शनावरणानां क्षीणकषायस्य श्रुतकेवलिन इतरस्य वा गुणितकर्मांशस्य समयाधिकावलिकाशेषायां स्थितावुत्कृष्टा प्रदेशोदीरणा । अवधिज्ञानावरणावधिदर्शनावरणयोः पुनरवधिलब्धिरहितस्य क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितावुत्कृष्टा प्रदेशोदीरणा । निद्राप्रचलयोरुपशान्तकषायस्य, प्रमत्तसंयतेऽप्रमत्तभावाभिमुखे स्त्यानर्द्धित्रिकस्य, मिथ्यात्वानन्तानुबन्धिकषायाणामनन्तरसमये सम्यक्त्वं संयमसहितं प्रतिपत्तुकामस्य मिथ्यादृष्टेश्चरमसमये, सम्यग्मिथ्यात्वस्य सम्यक्त्वप्रतिपत्त्युपान्त्यसमये, अप्रत्याख्यानावरणकषायाणामविरतसम्यग्दृष्टेरनन्तरसमये देशविरतिं प्रतिपत्तुकामस्य, प्रत्याख्यानावरणकषायाणा देशविरतस्यानन्तरसमये संयमं प्रतिपत्तुकामस्य, संज्वलनक्रोधमानमायानां तत्तद्वेदकस्य स्वस्वोदयपर्यवसाने, वेदत्रयसंज्वलनलोभानां तत्तद्वेदकस्य समयाधिकावलिकाचरमसमये, क्षपकस्य हास्यादिषट्कस्यापूर्वकरणगुणस्थानकचरमसमये, सर्वत्र गुणितकर्मांशस्योत्कृष्टा प्रदेशोदीरणा वेदितव्या ॥८२॥

(३०)—कृता साद्यादिप्ररूपणा, अथ स्वामित्वमभिधेयम् । तच्चोत्कृष्टप्रदेशोदीरणास्वामित्वं, जघन्यप्रदेशोदीरणास्वामित्वं चेति द्विविधम् । तत्राद्यं तावदाह—घातिकर्मणां सर्वेषामप्यनुभागोदीरणायां यो यो जघन्यानुभागोदीरणास्वामी प्रागुक्तः स स एवोत्कृष्टप्रदेशोदीरणास्वामी गुणितकर्मांशो ज्ञातव्यः, नवरमन्यतर इति श्रुतकेवलीतरो वा, अवधिज्ञानावधिदर्शनावरणयोरवधिलब्धिहीन उत्कृष्टप्रदेशोदीरको भाव्यः । इदमतीव संक्षिप्तमिति वितत्य व्याख्यायते—अवधिज्ञानदर्शनावरणवर्जज्ञानावरणपञ्चकदर्शनावरणचतुष्टयानां क्षीणकषायस्य श्रुतकेवलिन इतरस्य वा गुणितकर्मांशस्य समयाधिकावलिकाशेषायां स्थितावुत्कृष्टा प्रदेशोदीरणा । अवधिज्ञानदर्शनावरणयोः पुनरवधिलब्धिरहितस्य तस्यैव तदा सा । निद्राप्रचलयोरुपशान्तकषायस्य, स्त्यानर्द्धित्रिकस्य प्रमत्तसंयतेऽप्रमत्तभावाभिमुखे, मिथ्या-

त्वानन्तानुबन्धिकषायाणामनन्तरसमये ससंयमं सम्यक्त्वं प्रतिपित्सोर्मिथ्यादृष्टेश्चरमसमये, सम्यग्मिथ्यात्वस्य सम्यक्त्वप्रतिपत्त्यव्यवहितप्राक्समये, अप्रत्याख्यानावरणकषायाणामनन्तरसमये सर्वविरतिं प्रतिपित्सोरविरतसम्यग्दृष्टेः, प्रत्याख्यानावरणानां तादृशस्य देशविरतस्य, संज्वलनक्रोधमानमायानां तत्तद्वेदकस्य स्वस्वोदयपर्यवसाने, वेदत्रयसंज्वलनलोभयोस्तत्तद्वेदकस्य क्षपकस्य समयाधिकावलिकाचरमसमये, हास्यादिषट्कस्यापूर्वकरणचरमसमये, सर्वत्र गुणितकर्मांशस्योत्कृष्टा प्रदेशोदीरणा भाव्या ॥८२॥

**वेयणियाणं गहिहिई से काले अप्पमायमिय विरओ। संघयणपणगतणुदुगउज्जोया अप्पमत्तस्स ॥८३॥**

(चू०)—'वेयणियाणं गहिहिई से काले अप्पमायमिय विरओ'त्ति–सातासाताणं से काले अपमत्तो होहित्ति पमत्तचरिमसमए उक्कोसपदेसउदीरणा, वेदणिज्जउदीरगेसु अइविशुद्धोत्ति काउं। 'संघयणपणगतणुदुगउज्जोया अपमत्तस्स'त्ति। आदिवज्जाणं पंचण्हं संघयणाणं तणुदुगत्ति वेउव्वियआहारगसत्तगाणं उज्जोयस्स य अप्पमत्तसंजयो सव्वविसुद्धो उक्कोसपदेसउदीरगो ॥८३॥

(मलय०)—'वेयणियाणं'ति। यः प्रमत्तो द्वितीये समये 'अप्रमादं ग्रहीष्यति' अप्रमत्तो भविष्यति स प्रमत्तो विरतो वेदनीययोः सातासातरूपयोरुत्कृष्टप्रदेशोदीरको भवति, तस्य सर्वविशुद्धत्वात्। तथा अप्रमत्तस्य प्रथमवर्जसंहननपञ्चकवैक्रियसप्तकाहारकसप्तकोद्योतनाम्नामुत्कृष्टा प्रदेशोदीरणा ॥८३॥

(उ०)—'से काले' अनन्तरसमये योऽप्रमादं ग्रहीष्यत्यप्रमत्तगुणस्थानं प्राप्स्यति स प्रमत्तो विरतो वेदनीययोः–सातासातरूपयोरुत्कृष्टप्रदेशोदीरको भवति, तस्य सर्वविशुद्धत्वात्। तथाऽप्रमत्तस्य प्रथमवर्जसंहननपञ्चकवैक्रियसप्तकाहारकसप्तकोद्योतनाम्नामुत्कृष्टा

प्रदेशोदीरणा ॥८३॥

देवनिरयाउगाणं जहन्नजेट्ठट्ठिई गुरुअसाए । इयराऊण वि अट्ठमवासे णेयोऽट्ठवासाऊ ॥८४॥

(चू०)—'देव निरयाउगाणं जहण्णजेट्ठठिती गुरुअसाय' त्ति–देवनेरइयाउणं उक्कोसपदेसउदीरगो जहण्णठिती-जेट्ठठिती य जहासंखं गुरुअसायत्ति तिव्वेणं असातउदयेणं वट्टमाणो उक्कोसपदेसुदीरगो । किं भणियं होइ ? भण्णइ–देवाउगस्स देवो दसवाससहस्स ठितीतो उक्कोसए असातउदए वट्टमाणो उक्कोसपदेसउदीरगो, जहण्णठिती गुरुअसाउदयी लब्भतित्ति काउं जहण्णग्गहणं । णिरयाउगस्स णेरइओ तेत्तीससागरोवमठितीउ उक्कोसअसाउदए वट्टमाणो उक्कोसपदेसुदीरगो, असायं वेदमाणस्स बहुगा पदेसा सडंतित्ति असायगहणं, तं च जेट्ठट्ठितीए लब्भइ । 'इयराऊण वि अट्ठम वासे णेयो अट्ठवासाऊ'–इयरायूणं तिरियमणुयायूणं अट्ठमे वासे वट्टमाणो अट्ठवरिसाणि जीवन्तो तिव्वअसाउदये वट्टमाणो तिरयायुगस्स तिरियो मणुयाउगस्स मणुओ उक्कोसपदेसुदीरतो ॥८४॥

(मलय०)—'देव' त्ति–देवनारकायुषोर्यथाक्रमं देवनारकौ जघन्योत्कृष्टस्थितिकौ गुरुदुःखोदये वर्तमानौ उत्कृष्टप्रदेशोदीरकौ वेदितव्यौ । एतदुक्तं भवति–देवो दशवर्षसहस्रायुःस्थितिको गुरुदुःखोदये वर्तमानो देवायुष उत्कृष्टप्रदेशोदीरकः । तथा नैरयिकस्त्रयस्त्रिंशत्सागरोपमायुःस्थितिको गुरुदुःखोदये वर्तमानो नरकायुष उत्कृष्टप्रदेशोदीरकः । प्रभूतं हि दुःखमनुभवन् प्रभूतान् पुद्गलान् परिशाटयतीति तदुपादानम् । इतरायुषोः–तिर्यग्मनुष्यायुषोर्यथासंख्यं तिर्यङ्मनुष्यौ अष्टवर्षायुषौ अष्टमे वर्षे वर्तमानौ गुरुदुःखोदययुक्तौ उत्कृ-

ष्टप्रदेशोदीरकौ भवतः ॥८४॥

(उ०)—देवनारकायुषोर्यथाक्रमं देवनारकौ दशवर्षसहस्रत्रयस्त्रिंशत्सागरोपमलक्षणजघन्योत्कृष्टस्थितिकौ गुरुदुःखोदये वर्तमानावुत्कृष्टप्रदेशोदीरकौ, प्रभूतदुःखानुभवे प्रभूतायुःपुद्गलपरिशाट इति तदुपादानं, तन्मूलातिसंक्लेशसमर्थनाय च स्थितिव्यत्यासग्रहणम् । इतरायुषोः-तिर्यङ्मनुष्यायुषोर्यथासंख्यं तिर्यङ्मनुष्यावष्टवर्षायुषौ अष्टमे वर्षे वर्तमानौ गुरुदुःखोदययुक्तावुत्कृष्टप्रदेशोदीरकौ ॥८४॥

**एगंततिरियजोग्गा नियगविसिट्ठेसु तह अपज्जत्ता । संमुच्छिममणुयंते तिरियगई देसविरयस्स ॥८५॥**

(चू०)—'एगंततिरियजोग्गा णियगविसिट्ठेसु'त्ति-एगंततिरियजोग्गाणि जाणि तेसिं अप्पप्पणो विसिट्ठेसु एगिंदियजातिबेइंदियजातितेइंदियजातिचउरिंदियजातिआयवथावरसुहुमसाहारणमिति एते अट्ठ एगंततिरियजोग्गा । तत्थ एगिंदियथावराणं बायरो सव्वविसुद्धो उक्कोसपदेसुदीरगो। आयावस्स खरबायरपुढविकाइयो सव्वविसुद्धो उक्कोसपदेसुदीरगो। सुहुमस्स सुहुमो पत्तेओ पज्जत्तगो सव्वविसुद्धो उक्कोसपदेसुदीरगो। विगलिंदियसाहारणाणं तण्णामगो पज्जत्तगो सव्वविसुद्धो उक्कोसपदेसुदीरगो। 'तह अपज्जत्ता संमुच्छिममणुयंते'त्ति। 'तह'त्ति विसुद्ध एव अप्पज्जत्तगणामाए संमुच्छिममणुयस्स अंतिमसमए वट्टमाणस्स सव्वविसुद्धस्स उक्कोसपदेसुदीरणा। तिरियातो मणुओ विसुद्धयरोत्ति काउं। 'तिरियगती देसविरयस्स'त्ति-तिरिगगतिनामाते तिरिओ देसविरओ उक्कोसपदेसउदीरओ सव्वविसुद्धोत्ति काउं ॥८५॥

(मलय०)—'एगंत'त्ति-एकान्तेन तिरश्चामेवोदयं प्रति या योग्याः प्रकृतयस्तासामेकेन्द्रियजातिद्वीन्द्रियजातित्रीन्द्रियजातिचतुरि-

न्द्रियजात्यातपस्थावरसूक्ष्मसाधारणनाम्नामष्टानां निजकविशिष्टेषु—निजनिजप्रकृतिविशिष्टेषु, यथा—एकेन्द्रियजातिस्थावरनाम्नोर्बादरपृथ्वीकायिके सर्वविशुद्धे, आतपनाम्नः खरबादरपृथ्वीकायिके, सूक्ष्मस्य पर्याप्तसूक्ष्मे, साधारणविकलेन्द्रियजातिनाम्नां तन्नामसु पर्याप्तेषु सर्वविशुद्धेषु उत्कृष्टा प्रदेशोदीरणा भवति। तथाऽपर्याप्तनाम्नः संमूर्छिमो मनुष्योऽपर्याप्तश्चरमसमये वर्तमान उत्कृष्टप्रदेशोदीरकः। तथा तिर्यग्गतेरुत्कृष्टा प्रदेशोदीरणा देशविरतस्य, तस्य सर्वविशुद्धत्वात् ॥८५॥

(उ०)—एकान्तेन तिरश्चामेवोदयं प्रति या योग्याः प्रकृतयः, ता एकान्ततिर्यग्योग्याः आद्यजातिचतुष्टयातपस्थावरसूक्ष्मसाधारणलक्षणा अष्टौ, निजकविशिष्टेषु—स्वस्वप्रकृतिविशिष्टेषूत्कृष्टप्रदेशोदीरणाः प्राप्यन्ते। तथाहि—एकेन्द्रियजातिस्थावरनाम्नोर्बादरपृथ्वीकायिके सर्वविशुद्धे, आतपनाम्नः खरबादरपृथ्वीकायिके. सूक्ष्मस्य पर्याप्तसूक्ष्मे, साधारणविकलेन्द्रियजातिनाम्नां तत्तन्नामसु पर्याप्तेषु सर्वविशुद्धेषूत्कृष्टा प्रदेशोदीरणा भवतीति। तथाऽपर्याप्तनाम्नः संमूर्छिममनुष्योऽपर्याप्तश्चरमसमये वर्तमान उत्कृष्टप्रदेशोदीरकः। तथा तिर्यग्गतेरुत्कृष्टा प्रदेशोदीरणा देशविरतस्य तिरश्चस्तस्य सर्वविशुद्धत्वात् ॥८५॥

**अणुपुव्विगइदुगाणं सम्मद्दिट्ठी उ दूभगमाईणं। नीयस्स य से काले गहिहिइ विरइत्ति सो चेव ॥८६॥**

(चू०)—'अणुपुव्विगतिदुगाणं सम्मद्दिट्ठी उ'त्ति—चउण्हं आणुपुव्वीणं तम्मि तम्मि गतिम्मि तइयसमए वट्टमाणो सव्वविसुद्धो सम्मद्दिट्ठी उक्कोसपदेसुदीरओ। निरयगइतिरियाणुपुव्वीणं खाइयसम्मद्दिट्ठी (ग्रन्थाग्रं ४५००) उक्कोसपदेसुदीरगो एस विसेसो। णिरयगतीए सम्मद्दिट्ठी णेरइओ सव्वविसुद्धो उक्कोसपदेसउदीरओ। देवगतिए वि एरिसो चेव देवो उक्कोसपदेसउदीरतो। 'दुभगादीणं णीयस्स य से काले गहिहि विरइत्ति सो

चेव' त्ति–सो चेव सम्मदिट्ठी दुभगअणाएज्जअजसणीयागोयाणं से काले संजमं पडिवज्जिहीत्ति असंजयचरिमसमए उक्कोस पदेसउदीरओ ॥८६॥

(मलय०)—'अणुपुव्वि'त्ति–चतसृणामानुपूर्वीणां तस्यां तस्यां गतौ वर्तमानरतृतीये समये सर्वविशुद्धः सम्यग्दृष्टिरुत्कृष्टप्रदेशोदीरकः। केवलं नरकतिर्यगानुपूर्व्योः क्षायिकसम्यग्दृष्टिर्वक्तव्यः। देवनारकगत्योरपि स एव क्षायिकसम्यग्दृष्टिरुत्कृष्टप्रदेशोदीरकः। तथा योऽनन्तरसमये संयमं प्रतिपत्स्यते स एवाविरतसम्यग्दृष्टिर्दुर्भगादीनां दुर्भगानादेयायशःकीर्त्तीनां नीचैर्गोत्रस्य चोत्कृष्टप्रदेशोदीरकः ॥८६॥

(उ०)—चतसृणामानुपूर्वीणां तत्तद्गतौ तृतीयसमये सर्वविशुद्धः सम्यग्दृष्टिरुत्कृष्टप्रदेशोदीरकः। केवलं नरतिर्यगानुपूर्व्योः क्षायिकसम्यग्दृष्टिर्वाच्यः, देवनारकगत्योरपि स एव क्षायिकसम्यग्दृष्टिरुत्कृष्टप्रदेशोदीरकः। पञ्चसंग्रहे तु–"अणुपुव्विगइण खाइओ सम्मो त्ति" अविशेषेणैवोक्तमविशेषेणैव च व्याख्यातम्। तथाऽनन्तरसमये यः सर्वविरतिं ग्रहीष्यति स एवाविरतसम्यग्दृष्टिः दुर्भगादीनां दुर्भगानादेयायशःकीर्तीनां नीचैर्गोत्रस्य चोत्कृष्टप्रदेशोदीरकः ॥८६॥

**जोगंतुदीरगाणं जोगंते सरदुगाणुपाणूणं। नियगंते केवलिणो सव्वविसुद्धो य सव्वासिं[१] ॥८७॥**

१ अत्र चूर्णिमलयगिर्युपाध्यायटीकासु सम्यक्त्वमोहनीयस्योत्कृष्टा प्रदेशोदीरणोक्ता न लभ्यते। पर विचार्यमाणा सा सम्यक्त्वस्योत्कृष्टप्रदेशोदीरणा यदा सर्वसंक्रमेण सम्यक्त्वे मीश्र संक्रान्तं तदोत्कृष्टप्रदेशसत्ताकत्वेनावलिकानन्तरं संभाव्यते। स एव तस्या स्वामीति चिन्तयन्तु कृतधियः।

(चू०)—'जोगंतुदीरगाणं जोगन्ते'त्ति। मणुयगतिपंचिंदियजाती उरालियसत्तगं तेजइसत्तगं छसंठाणा पढमसंघयणा वण्णाइ वीस अगुरुलहुउवघायपराघाय विहायगतिदुगं तसबायरपज्जत्तगपत्तेयथिराथिरसुभासुभसुभगआएज्जं जस णिम्मेणं तित्थगरउच्चागोयाणं एतासिं बासट्ठिए पगईणं सजोगिकेवलिचरिमसमए उक्कोसपदेसउदीरणा। 'सरदुगाणुपाणूणं णियगंते'त्ति। सरणिरोहकालम्मि सुस्सरदुस्सराणं सो चेवुक्कोसपदेसुदीरतो। आणापाणुणिरोहसमते सो चेव केवली आणपाणूणं। 'सव्वविसुद्धो य सव्वासिं'ति–सव्वकम्माणं एसा परिभासा अप्पप्पणो उदीरगेसु जो सव्वविसुद्धो सो उक्कोसपदेसउदीरगो लभति, आउवज्जासु सव्वपगतीसु गुणियकम्मंसिगो भाणियव्वो ॥८७॥

(मलय०)—'जोगंतुदीरगाणं'ति–योग्यन्तोदीरकाणां, 'योगी'–सयोगीकेवली 'अन्ते'–चरमसमये, उदीरको यासां ता योग्यन्तोदीरकास्तासां–मनुजगतिपञ्चेन्द्रियजात्यौदारिकसप्तकतैजससप्तकसंस्थानषट्कप्रथमसंहननवर्णादिविंशत्यगुरुलघूपघातपराघातविहायोगतिद्विकत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभसुभगादेययशःकीर्तिनिर्माणतीर्थकरोच्चैर्गोत्राणां द्विषष्टिसंख्यानां प्रकृतीनां सयोगिकेवली चरमसमये उत्कृष्टप्रदेशोदीरकः। तथा केवलिनः स्वरद्विकप्राणापानयोः 'निजकान्ते'–स्वस्वनिरोधकाले उत्कृष्टा प्रदेशोदीरणा। तथाहि–स्वरनिरोधकाले सुस्वरदुःस्वरयोः, प्राणापाननिरोधकाले च प्राणापाननाम्न उत्कृष्टा प्रदेशोदीरणा। इह सर्वकर्मणामुत्कृष्टप्रदेशोदीरणाया एषा परिभाषा–यो यः स्वस्वोदीरणाधिकारी स स तस्य कर्मणः सर्वविशुद्ध उत्कृष्टप्रदेशोदीरणास्वामी वेदितव्यः, आयुर्व्यतिरेकेण चान्यत्र सर्वत्रापि गुणितकर्मांशः, तेन दानान्तरायादीनामपि पञ्चानां प्रकृतीनामुत्कृष्टा प्रदेशोदीरणा गुणितकर्मांशस्य क्षीणकषायस्य

## ॥ उत्कृष्टप्रदेशोदीरणास्वामिनः ॥

| प्रकृतय | स्वामिन | प्रकृतयः | स्वामिनः |
|---|---|---|---|
| ज्ञा० ४ दर्श० ३ | गु०क० श्रुतकेवलिन इतरे वा १२ मे | देवायुषः | १०००० वर्षस्थितिका अतिदुःखिनो देवाः |
| अवधिद्विकस्य | गु०क० अनवधिलब्धिकाः | नरकायुषः | ३३ सागर० स्थितिका अतिदुःखिनो नारका |
| निद्राद्विकस्य | गु०क० उपशांतकषायाः | तिर्यग्नरायुषोः | अष्टमेवर्षेऽतिदुःखिनोऽष्टवर्षायुस्तिर्यग्नराः |
| स्त्यान० त्रिकस्य | अप्रमत्तोन्मुखाः प्रमत्ता गु० कर्मांशाः | एके० स्था० | विशुद्धाः बादरपृथ्विकायाः |
| मिथ्या०, अनन्ता० | अनन्तरसमये ससम्यक्त्वसंयममुत्पादकाः | आतपस्य | खरपृथ्विकायाः |
| ४र्णाम् | गु०क० मिथ्यादृश | सूक्ष्मस्य | पर्याप्तसूक्ष्माः |
| मिश्रस्य | सम्यक्त्वप्राप्तिपूर्वानंतरसमये गु०क०मिश्राः | साधा०-विकलेन्द्रिय ३ | विशुद्धा पर्याप्ता तदुदयवन्तः |
| अप्र० ४ | सर्वविरतिप्राप्ति पूर्वानंतरसमये गु०क० ४र्थाः | अपर्याप्तस्य | अप०समुर्छिमनराः अन्त्यसमये. |
| प्रत्या० ४ | अनन्तरोक्तविशेषणाः ५मा | तिर्यग्गतेः | विशुद्धा देशविरतास्तिर्यञ्चः |
| संज्व० ३ | स्वस्वोदयान्ते गु० कर्मांशाः | आनुपूर्व्या २ | गत्यन्तराले तृतीयसमये विशुद्धा सम्यग्दृशः ) (पंचसंग्रहे क्षा० सम्य०) |
| वेद ३-सं० लोभाणाम् | तद्वेदकक्षपकाः गु०कर्मांशा. | नृतिर्यगानुपूर्व्योः | क्षायिकसम्यग्दृशः ते एव. |
| हास्यादि ६ | अपूर्वकरणान्तसमयवर्त्तिन | देवनरकगत्योः | " |
| वेदनीयद्विकस्य | अप्रमत्तोन्मुखा प्रमत्ता (अन्त्यसमये) | दुर्भगादि ४ नीचैर्गोत्रस्य | सर्वविरतिप्राप्तिपूर्वानन्तरसमये ४र्थाः |
| कुसंहनन ५ वै०७- आहा० ७-उद्योतानाम् | गु०क० अप्रमत्ता | स्वर १-उश्वा० | स्वरनिरोधकाले सर्वज्ञाः |
| | | विघ्नपञ्चकस्य | क्षीणमोहाः |
| | | ६२ उत्कर्षेपाणाम् | सयोगिकेवलिनः |

समयाधिकावलिकाशेषे वर्तमानस्यावगन्तव्या ॥८७॥

(उ०)—'योगी'-सयोगिकेवली, 'अन्ते'-चरमसमये, उदीरको यासां ता योग्यन्तोदीरकास्तासां—नरगतिपञ्चेन्द्रियजात्यौदारिकसप्तकतैजससप्तकसंस्थानषट्काद्यसंहननवर्णादिविंशत्यगुरुलघूपघातपराघातविहायोगतिद्विकत्रसचतुष्कस्थिरास्थिरशुभाशुभसुभगादेययशःकीर्तिनिर्माणतीर्थकरोच्चगोत्राणां द्विषष्टिप्रकृतीनां सयोगिकेवली चरमसमये उत्कृष्टप्रदेशोदीरकः। तथा स्वरद्विकप्राणापानयोर्निजकान्ते स्वस्वनिरोधकाले केवलिन उत्कृष्टा प्रदेशोदीरणा। इह सर्वकर्मणामुत्कृष्टप्रदेशोदीरणायां परिभाषेयम्—यः स्वस्वोदीरणाधिकारी स तत्तत्कर्मणः सर्वविशुद्ध उत्कृष्टप्रदेशोदीरणास्वामी ज्ञातव्यः, आयुर्व्यतिरेकेण चान्यत्र सर्वत्रापि गुणितकर्मांशः, तेन दानान्तरायादिपञ्चकस्याप्युत्कृष्टा प्रदेशोदीरणा गुणितकर्मांशे क्षीणकषाये समयाधिकावलिकाशेषस्थे द्रष्टव्या ॥८७॥

उक्कोसपदेसउदीरणासामित्तं भणियं। इयाणिं जहण्णपदेसउदीरणा सामित्तं भन्नति—

**तप्पगउदीरगातिसंकिलिट्ठभावो अ सव्वपगईणं। नेयो जहणसामी अणुभागुत्तो य तित्थयरे ॥८८॥**

(चू०)—'तप्पगउदीरगतिसंकिलिट्ठभावोउ सव्वपगतीणं णेओ जहन्नसामि'त्ति। तं तं पगतिं उदीरगा तप्पगउदीरगा, तेसु अतिसंकिलिट्ठभावो उ सो सव्वपगतीणं जहन्नपदेस उदीरणासामी जाणियव्वो। तहावि उच्चारिज्जति-सव्वत्थ य खवियं कंमंसितेण अहिगारो। ओहिनाणावरणवज्जाणं चउण्हं नाणावरणाणं ओहिदंसणावरणवज्जाणं तिण्हं दंसणावरणाणं सातासाताणं मिच्छत्तस्स सोलसण्हं कसायाणं णवण्हं नोकसायाणं एएसिं पणतीसाते कंमाणं जहन्नपदेसुदीरतो मिच्छद्दिट्ठी सव्वाहिं पज्जत्तीहिं पज्जत्तगो

सव्वसंकिलिट्ठो। निद्दापणगस्स तप्पाउग्गसंकिलिट्ठो सन्नी पज्जत्तगो जहण्णपदेसउदीरगो। सम्मत्तसम्मामिच्छत्ताणं से काले मिच्छत्तं जाहित्ति सव्वसंकिलिट्ठो तस्स जहन्नपदेसुदीरणा। चउण्हं गतीणं पंचिंदियजातिते उरालियसत्तगवेउव्वियसत्तगतेजतिगसत्तग छसंठाण छ संघयण वण्णादिवीस अगुरुलहुगं उवघायपराघातउज्जोवउस्सासविहायगतिदुगतसबायरपज्जत्तगपत्तेयथिराथिरसुभासुभसुभगदुभगसुस्सरदुस्सरआदेज्जअणादेज्जजसाजसणिमेणनीउच्चागोयाणं पंचण्हमंतराइयाणं एएसिं एगूणनउतीते कंमाणं जहन्नपदेसुदीरतो सन्नी पज्जत्तगो उक्कोससंकिलिट्ठो। आहारसत्तगस्स आहारसरीरी तप्पाउग्गसंकिलिट्ठो जहण्णपदेसउदीरगो। चउण्हं आणुपुव्वीणं तप्पाउग्गसंकिलिट्ठो अन्नयरो जहण्णपदेसुदीरगो। आयावस्स बायरपुढविजीवो सव्वसंकिलिट्ठो जहण्णपदेसुदीरगो। एगिंदियजातीते थावरसाहारण एएसिं बायरएगिंदिओ सव्वसंकिलिट्ठो जहण्णपदेसुदीरगो। सुहुमनामाते सुहुमो सव्वसंकिलिट्ठो जहन्नपदेसुदीरगो। अपज्जत्तगस्स मणुस्सो जहन्नियाए अपज्जत्तगनिव्वित्तीते उवन्नो चरिमसमयतब्भवत्थो उक्कोससंकिलिट्ठो जहण्णपदेसुदीरगो। तिण्हं विगलिंदियजातिनामाणं तं नामगो सव्वसंकिलिट्ठो जहण्णपदेसुउदीरगो। 'अणुभागुत्तोय तित्थयरे'त्ति–तित्थकरनामाते जहन्नानुभागसाभी जो सो चेव जहन्नगपदेसुदीरणाभामी वि। कहं? भन्नइ–तित्थकरनामाए पढमसमते केवलिमादिकाउं जाव आजोजीकरणस्स अकारगो ताव जहण्णपदेसुदीरगा ॥८८॥

(मलय०)—तदेवमुक्तमुत्कृष्टप्रदेशोदीरणास्वामित्वम्। सम्प्रति जघन्यप्रदेशोदीरणास्वामित्वमाह–'तप्पगउ'त्ति। यस्तासां तासां प्रकृ-

नीनामुदीरकः सोऽतिसंक्लिष्टभावोऽतिसंक्लिष्टपरिणामः क्षपितकर्मांशः सर्वप्रकृतीनां स्वस्वयोग्यानां जघन्यप्रदेशोदीरणास्वामी वेदित-
व्यः । तत्रावधिज्ञानावरणवर्जानां चतुर्णां ज्ञानावरणीयानां, अवधिदर्शनावरणवर्जानां त्रयाणां दर्शनावरणीयानां, सातासातवेदनीययोः,
मिथ्यात्वस्य, षोडशानां कषायाणां, नवानां नोकषायाणां, सर्वसंख्यया पञ्चत्रिंशत्संख्यानां प्रकृतीनां मिथ्यादृष्टिः सर्वसंक्लिष्टो, निद्रा-
पञ्चकस्य तत्प्रायोग्यसंक्लेशयुक्तो जघन्यप्रदेशोदीरणास्वामी । तथा योऽनन्तरसमये मिथ्यात्वं यास्यति सोऽतिसंक्लिष्टः सम्यक्त्वसम्य-
ग्मिथ्यात्वयोर्जघन्यप्रदेशोदीरणास्वामी भवति । तथा गतिचतुष्टयपञ्चेन्द्रियजात्यौदारिकसप्तकवैक्रियसप्तकतैजससप्तकसंस्थानषट्कसंहन-
नषट्कवर्णादिविंशतिपराघातोपघातागुरुलघूच्छ्वासोद्योतविहायोगतिद्विकत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभसुभगदुर्भगसुस्वरदुःस्व-
रादेयानादेययशःकीर्त्ययशःकीर्तिनिर्माणोच्चैर्गोत्रनीचैर्गोत्रपञ्चविधान्तरायरूपाणामेकोननवतिसंख्यानां प्रकृतीनां संज्ञी पर्याप्तः सर्वोत्कृ-
ष्टसंक्लेशयुक्तो जघन्यप्रदेशोदीरणास्वामी । आहारकसप्तकस्य चाहारकशरीरी तत्प्रायोग्यसंक्लेशयुक्तः, आनुपूर्वीणामपि तत्प्रायोग्यसंक्ले-
शयुक्तः, आतपस्य खरबादरपृथ्वीकायिकः सर्वसंक्लिष्टः, एकेन्द्रियजातिस्थावरसाधारणनाम्नामेकेन्द्रियः सर्वोत्कृष्टसंक्लेशयुक्तः, सूक्ष्मनाम्नः
सूक्ष्मैकेन्द्रियः सर्वसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी। अपर्याप्तकनाम्नः पुनरपर्याप्तमनुष्यः सर्वसंक्लिष्टश्चरमसमये वर्तमानो जघन्यप्रदेशो-
दीरको भवति । तथा द्वित्रिचतुरिन्द्रियजातीनां यथाक्रमं द्वित्रिचतुरिन्द्रियाः सर्वसंक्लिष्टा जघन्यप्रदेशोदीरणास्वामिनः । 'अणुभागुत्तो
य तित्थयरे' त्ति-तीर्थकरनाम्नो य एव जघन्यानुभागोदीरणास्वामी प्राक् प्रतिपादितः स एव जघन्यप्रदेशोदीरणास्वामी अपि वेदि-
तव्यः, तीर्थकरकेवली यावन्नायोजिकाकरणमारभते तावत्तीर्थकरनाम्नो जघन्यप्रदेशोदीरको वेदितव्य इत्यर्थः ॥८८॥
(७०)—तदेवमुक्तमुत्कृष्टप्रदेशोदीरणास्वामित्वं, अथ जघन्यप्रदेशोदीरणास्वामित्वमाह—तत्तत्प्रकृत्युदीरकोऽतिसंक्लिष्टभावः क्षपित-

## ॥ जघन्यप्रदेशोदीरणास्वामिनः ॥

| | | | |
|---|---|---|---|
| ज्ञाना०४-दर्श०३-वेदनीय २-मिथ्या०-१६ कषाय-९ नोकषायाणाम् (३५) | पर्याप्ताः संक्लिष्टमिथ्यादृशः | सूक्ष्मस्य | „ सूक्ष्माः |
| | | अपर्याप्तस्य | अपर्याप्तमनुष्या अन्त्यसमये |
| निद्रापञ्चकस्य | तत्प्रायो० सं० पर्या०मिथ्यादृशः | विकलत्रिकस्य | सर्वसंक्लिष्टा विकलेन्द्रियाः |
| सम्यक्त्व-मिश्रयोः | अतिसंक्लिष्टा अनन्तरसमये मिथ्यात्वोत्पादका | जिननाम्न | आयोजिकाकरणादर्वाग्समये तीर्थकरा |
| आहारकसप्तकस्य | तत्प्रायोग्यसंक्लिष्टा आहारकदेहिनः | अवधिद्विकस्य | सर्वसंक्लिष्टा अवधिलब्धिमन्तः |
| आनुपूर्विचतुर्णाम् | तत्प्रायो०सं०तदुदयवन्त | आयुःत्रिकस्य | दीर्घस्थितिका अतिसुखिनः तदुदयवन्त |
| आतपस्य | अतिसंक्लिष्टबादरखरपृथ्विकायिकाः | नारकायुषः | अल्पस्थितिकाः अतिसुखिनो नारकाः |
| एके०-स्था०-साधारणानाम् | सर्वसंक्लिष्टा एकेन्द्रियाः | ८९ उक्तशेषाणां | सर्वसंक्लिष्टाः संज्ञिपर्याप्ताः |

कर्मांशः सर्वप्रकृतीनां स्वस्वयोग्यानां जघन्यप्रदेशोदीरणास्वामी ज्ञेयः। तत्रावधिज्ञानावरणवर्जज्ञानावरणीयचतुष्कावधिदर्शनावरणवर्जदर्शनावरणीयत्रयसातासातवेदनीयमिथ्यात्वषोडशकषायनोकषायनवकलक्षणानां पञ्चत्रिंशत्प्रकृतीनां मिथ्यादृष्टिः सर्वपर्याप्तिपर्याप्तः सर्वसंक्लिष्टः, निद्रापञ्चकस्य च तत्प्रायोग्यसंक्लेशयुक्तो जघन्यप्रदेशोदीरणास्वामी। तथा सम्यक्त्वसम्यग्मिथ्यात्वयोरनन्तरसमये मिथ्यात्वं

प्रतिपित्सुरतिसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी । तथा गतिचतुष्टयपञ्चेन्द्रियजात्यौदारिकसप्तकवैक्रियसप्तकतैजससप्तकसंस्थानषट्कसंहननषट्कवर्णादिविंशतिपराघातोपघातागुरुलघूच्छ्वासोद्योतविहायोगतिद्विकत्रसचतुष्कस्थिरषट्कास्थिरषट्कनिर्माणगोत्रद्विकान्तरायपञ्चकरूपाणामेकोननवतिसंख्यानां प्रकृतीनां संज्ञी पर्याप्तः सर्वोत्कृष्टसंक्लेशवान् जघन्यप्रदेशोदीरणास्वामी । आहारकसप्तकस्य चाहारकशरीरी तत्प्रायोग्यसंक्लेशयुक्तः, आनुपूर्वीणामपि तत्प्रायोग्यसंक्लेशयुक्तः, आतपस्यातिसंक्लिष्टः खरबादरपृथ्वीकायिकः, एकेन्द्रियजातिस्थावरसाधारणनाम्नामेकेन्द्रियः सर्वोत्कृष्टसंक्लेशयुक्तः, सूक्ष्मनाम्नः सूक्ष्मकेन्द्रियः सर्वसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी । अपर्याप्तकनाम्नोऽपर्याप्तकमनुष्यः सर्वसंक्लिष्टश्चरमसमये वर्तमानः, तथा द्वित्रिचतुरिन्द्रियजातीनां द्वित्रिचतुरिन्द्रियाः सर्वसंक्लिष्टा जघन्यप्रदेशोदीरकाः । तीर्थकरनाम्नो य एव जघन्यानुभागोदीरणास्वाम्युक्तः स एव जघन्यप्रदेशोदीरणास्वाम्यपि ज्ञेयः, तीर्थकरकेवल्यायोजिकाकरणारम्भात्प्राक् तीर्थकरनाम्नो जघन्यप्रदेशोदीरको ज्ञेय इत्यर्थः ॥८८॥

ओहीणं ओहिजुए अइसुहवेई यआउगाणं तु । पढमस्स जहण्णठिई सेसाणुक्कोसगठिईसु ॥८९॥

(चू०)—'ओहीणं ओहिजुए'त्ति–ओहिदुगावरणाणं ओहिदुगसहितो सव्वसंकिलिट्ठो जहण्णपदेसुदीरतो । ओहिनाणं उप्पातेमाणस्स बहुगा ओहिदुगावरणपोग्गला खिज्जन्तित्ति काउं । 'अतिसुहवेतीय आउगाणं तु पढमस्स जहण्णट्ठिई सेसाणुक्कोसगट्ठितीसु'–चउण्ह आउगाणं पढमस्स नेरतियायुगस्स दसवाससहस्साते जहन्निगाते ठितिते वट्टमाणो सेसनिरयट्ठितीउ पडुच सुहं वेदेति तस्स सुहं वेएज्जमाणस्स जहन्निया पदेसुदीरणा । सेसाणं तिरियमणुयदेवाउयाणं उक्कोसट्ठितीते वट्टमाणस्स अतीवसातावेयमाणस्स तिण्हं आउगाणं

जहन्निया पएसुदीरणा। सायावेयगस्स बहुगा पोग्गला ण उदीरिज्जन्तित्ति काउं। भणितं उदीरणाकरणम् ॥

॥ इति कर्मप्रकृतिचूर्ण्यामुदीरणाकरणं समाप्तम् ॥

(मलय०)—अवधिज्ञानावरणावधिदर्शनावरणयोरवधिलब्धियुक्तः सर्वसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी। अवधिद्विकं ह्युत्पादयतो बहवः पुद्गलाः परिक्षीणाः इत्यवधिलब्धिग्रहणम्। तथा चतुर्णामप्यायुषां स्वस्वभूमिकानुसारेणातीव सुखमनुभवन् जघन्यप्रदेशोदीरको भवति। तत्र प्रथमस्य नरकायुषो दशवर्षसहस्रप्रमाणायां जघन्यस्थितौ वर्तमानो नैरयिकः। स हि शेषनारकापेक्षयाऽतिशयेन सुखी। शेषाणां च तिर्यङ्मनुष्यदेवायुषामुत्कृष्टस्थितौ वर्तमानाः स्वस्वयोग्यतानुसारेण परमसुखिनो यथासंख्यं तिर्यङ्मनुष्यदेवा जघन्यपदेशोदीरणास्वामिनो वेदितव्याः ॥८९॥

॥ इत्याचार्य श्रीमलयगिरिविरचितायां कर्मप्रकृतिटीकायामुदीरणाकरणं समाप्तम् ॥

(उ०)—अवधिज्ञानावरणावधिदर्शनावरणयोरवधिलब्धियुक्तः सर्वसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी। अवधिद्विकोत्पत्तौ बहुपुद्गलपरिक्षय इत्यवधिलब्धिग्रहणम्। तथा चतुर्णामप्यायुषां स्वस्वभूमिकौचित्येनातीव सुखमनुभवन् जघन्यप्रदेशोदीरको भवति, तत्र प्रथमस्य नरकायुषो जघन्यस्थितौ दशवर्षसहस्रप्रमाणायां वर्तमानो नैरयिकस्तथा, यतोऽसौ शेषनारकापेक्षयाऽतिशयेन सुखी। शेषाणां तिर्यङ्मनुष्यदेवायुषामुत्कृष्टस्थितौ वर्तमानाः स्वस्वौचित्येन परमसुखिनो यथाक्रमं तिर्यङ्मनुष्यदेवाः तज्जघन्यप्रदेशोदीरणास्वामिनो ज्ञातव्याः ॥८९॥

॥ इत्युपाध्यायश्रीयशोविजयगणिविरचितायां कर्मप्रकृतिटीकायामुदीरणाकरणं समाप्तम् ॥

नमोत्थु णं समणस्स भगवओ महावीरस्स।

सिद्धान्तकोविदसुविहिताचार्यश्रीविजयदानसुरीश्वरगुरुभ्यो नमः।

# कर्मप्रकृतौ उपशमनाकरणम्।

इयाणिं उवसामणाकरणं भण्णइ। तस्स इमे अत्थाहिगारा। तंजहा-पढमसम्मतस्स उप्पायणा, देसविरतिलम्भो, अणंताणुबन्धिविसंजोयणा, दंसणमोहक्खवणा, दंसणमोहस्स उवसामणा, (चरितमोहस्स उवसामणा,) देसोपसमणावि सभेदा। उवसामणाकरणभेयदरिसणत्थं मज्झमंगलनिमित्तं च भण्णइ-

**करणकयाऽकरणा वि य दुविहा उवसामणत्थ विइयाए। अकरणअणुइन्नाए अणुओगधरे पणिवयामि ॥१॥**

(चू०)—'करणकय'त्ति-करणोवसमणा, 'अकरणकय'त्ति-अकरणोवसामणा दुविहा उवसामणत्थ। 'वितियाए अकरणअणुइन्नाए'त्ति-बितिया अकरणोपसमणा तीसे दुवे नामधिज्जाणि-अकरणोपसमणा अणुदिन्नोपसमणा य, ताते अकरणोपसमणाते 'अणुओगधरे पणिवयामि'त्ति-किं भणियं होति? करणं क्रिया, ताए विणा जा उवसामणा अकरणोवसामणा, गिरनदीपापाणवट्टसंसारत्थस्स जीवस्स वेदनादिभिःकारणैरुपशांतता भवति, सा अकरणोपसामणा, ताते अणुओगो वोच्छिन्नो, तो तं अजाणंतो आयरिओ जाणंतस्स नमोक्कारं करेति।

करणुपसमणाते अहिगारोत्थ ॥१॥

(मलय०)—तदेवमभिहिता सप्रपञ्चमुदीरणा। सम्प्रति उपशमनाप्रतिपादनावसरः। तत्र चैतेऽधिकाराः, तद्यथा-प्रथमसम्यक्त्वोत्पादप्ररूपणा, देशविरतलाभप्ररूपणा, सर्वविरतिलाभप्ररूपणा, अनन्तानुबन्धिविसंयोजना, दर्शनमोहनीयक्षपणा, दर्शनमोहनीयोपशमना, चारित्रमोहनीयोपशमना, देशोपशमना पुनः सप्रभेदेति। तत्रेदमुपशमनाकरणं सप्रभेदं सर्वात्मना व्याख्यातुमशक्यम्। ततो यत्रांशे व्याख्यातुमात्मनोऽशक्तिस्तत्रांशे तद्वेदितॄणामाचार्यो नमस्कारं चिकीर्षुराह—'करणकय'त्ति। इह द्विविधा उपशमना—करणकृताऽकरणकृता च। तत्र करण क्रिया यथाप्रवृत्तापूर्वानिवृत्तिकरणसाध्यः क्रियाविशेषः, तेन कृता करणकृता। तद्विपरीताऽकरणकृता। या संसारिणां जीवानां गिरिनदीपाषाणवृत्ततादिसंभववद्यथाप्रवृत्तादिकरणक्रियाविशेपमन्तरेणापि वेदनानुभवनादिभिः कारणैरुपशमनोपजायते साऽकरणकृतेत्यर्थः। इदं च करणकृताकरणकृतत्वरूपं द्वैविध्यं देशोपशमनाया एव द्रष्टव्यम्, न सर्वोपशमनायाः, तस्याः करणेभ्य एव भावात्। उक्तं च पञ्चसंग्रहमूलटीकायां—"देशोपशमना करणकृता करणरहिता च, सर्वोपशमना तु करणकृतैवेति"। अस्याश्चाकरणकृतोपशमनाया नामधेयं द्वयं, तद्यथा-अकरणोपशमना, अनुदीर्णोपशमना च। तस्याश्च सम्प्रत्यनुयोगो व्यवच्छिन्नः, तत आचार्यः स्वयं तस्या अनुयोगमजानानस्तद्वेदितॄणां विशिष्टमतिप्रभाकलितचतुर्दशपूर्ववेदिनां नमस्कारमाह—'बिइयाए' इत्यादि, द्वितीयाया अकरणकृताया उपशमनाया अकरणानुदीर्णरूपनामधेयद्वययुक्ताया अनुयोगधरान्—व्याख्याकुशलान् प्रणिपतामि, तेषु प्रणिपातं करोमि। तस्मादिह करणकृतोपशमनयाऽधिकारः ॥१॥

(उ०)—तदेवमुक्ता सप्रपञ्चमुदीरणाऽथोपशमनाभिधानावसरः। तत्र चैतेऽर्थाधिकाराः-प्रथमसम्यक्त्वोत्पादप्ररूपणा, देशविरतिलाभ-

प्ररूपणा, सर्वविरतिलाभप्ररूपणा, अनन्तानुबन्धिविसंयोजना, दर्शनमोहनीयक्षपणा, दर्शनमोहनीयोपशमना, चारित्रमोहनीयोपशमना, देशोपशमना च मप्रभेदेति । तत्रेदमुपशमनाकरणं सर्वात्मना व्याख्यातुमशक्यमिति यदंशे स्वस्य व्याख्यानाशक्तिस्तदंशे तज्ज्ञातॄणां बहुमानमाविर्भावयितुमाचार्यो नमस्कारं चिकीर्षुराह—इह द्विविधोपशमना—करणकृताऽकरणकृता च । तत्र करणं यथाप्रवृत्तापूर्वा-निवृत्तिकरणमाध्यः क्रियाविशेषस्तेन कृता करणकृता, तद्विपरीताऽकरणकृता या यथाप्रवृत्तादिकरणं विनापि वेदनानुभवा-दिकारणैः संसारिणां गिरिनदीपाषाणवृत्ततामख्योपजायते । इदं च करणकृताकरणकृतत्वरूपं द्वैविध्यं देशोपशमनाया एव, न सर्वो-पशमनायास्तस्याः करणेभ्य एव भावात् । उक्तं च पञ्चसंग्रहमूलटीकायां—"देशोपशमना करणकृता करणरहिता च, सर्वोपशमना तु करणकृतैवेति"। अस्याश्च द्वितीयाया अकरणकृतोपशमनाया अकरणोपशमनानुदीर्णोपशमनालक्षणनामधेयद्वयभाजः सम्प्रत्यनुयोगो व्यव-च्छिन्नस्ततस्तज्ज्ञातॄन् विशिष्टप्रतिभाकलितांश्चतुर्दशपूर्वविदोऽनुयोगधरान् प्रणिपतामि, तस्मादिह करणकृतोपशमनयाऽधिकार इति सिद्धम्।

**सव्वस्स य देसस्स य करणुवसमणा दुसन्नि एक्किक्का । सव्वस्स गुणपसत्था देसस्स वि तासि विवरीया ॥२॥**

(चू०)—सा करणोपसामणा दुविहा—सव्वकरणोपसामणा देसकरणोपसामणा य । 'दुसन्नि इक्किक्क'त्ति—एक्के-क्का दो दो णामा । 'सव्वस्स गुणपसत्थ'त्ति—सव्वोपसमणाते गुणोपसमणा पसत्थोपसमणा य दो णामा । 'देसस्स य तासि विपरीय'त्ति—देसोपसमणादे तासिं विवरीया दो नामा—अगुणोपसमणा अपसत्थोपसमणा य ॥

(मलय०)—सापि च द्विधा । द्वैविध्यमेवाह—'सव्वस्स'त्ति । सा करणकृतोपशमना द्विविधा—सर्वस्य विषये देशस्य च, सर्व-विषया देशविषया चेत्यर्थः । एकैकस्या अपि द्वे द्वे नामधेये । तद्यथा—'सर्वस्य' सर्वोपशमनाया गुणोपशमना प्रशस्तोपशमना चेति,

तथा 'देशस्य' देशोपशमनायास्तयोर्द्वयोः पूर्वोक्तयोर्नामधेययोर्विपरीते नामधेये । तद्यथा—अगुणोपशमनाऽप्रशस्तोपशमना च ॥२॥

(उ०)—साऽपि द्विविधेत्याह—करणकृतोपशमना द्विविधा सर्वस्य देशस्य च—सर्वविषया देशविषया चेत्यर्थः । एकैका द्विसंज्ञानामधेयद्वययुक्ता, तद्यथा—सर्वस्य—सर्वोपशमना गुणप्रशस्ता—गुणोपशमनाप्रशस्तोपशमनालक्षणनामद्वयवती, देशस्य च—देशोपशमना च ताभ्यां विपरीताऽगुणोपशमनाऽप्रशस्तोपशमनालक्षणनामद्वयवतीत्यर्थः ॥२॥

सव्वुवसमणा मोहस्सेव उ तस्सुवसमक्कियाजोग्गो । पंचेंदिओ उ सन्नी पज्जत्तो लद्धितिगजुत्तो ॥३॥
पुव्वं पि विसुज्झंतो गंठियसत्ताणइक्कमिय सोहिं । अन्नयरे सागारे जोगे य विसुद्धलेसासु ॥४॥
ठिइ सत्तकम्म अन्तोकोडीकोडी करेत्तु सत्तण्हं । दुट्ठाणचउट्ठाणे असुभसुभाणं च अणुभागं ॥५॥
बंधंतो धुवपगडी भवपाउग्गा सुभा अणाऊ य । जोगवसा य पएसं उक्कोसं मज्झिम जहण्णं ॥६॥
ठिइबंधद्धापूण्णे नवबंधं पल्लसंखभागूणं । असुभसुभाणणुभागं अणंतगुणहाणिवुड्ढीहिं ॥७॥
करणं अहापवत्तं अपुव्वकरणमनियट्टिकरणं च । अंतोमुहुत्तियाइं उवसंतद्धं च लहइ कमा ॥८॥

(चू०)—तत्थ सव्वोवसमणा मोहणिज्जस्सेव ण अन्नेसिं कम्माणं, देसुवसमणा सव्वेसिं । 'तस्सुवसमक्किया जोग्गो'त्ति—तस्स सव्वोपसमणक्रियाजोग्गो को? सो 'पंचेन्दिओ उ सन्नी पज्जत्तो'त्ति—अन्नयरो पंचेंदिओ सन्नी

मव्वाहिं पज्जत्तीहिं पज्जत्तो, 'लद्धितिगजुत्तो'त्ति-पंचिंदितो सण्णि पज्जत्तो एयाहिं लद्धीहिं सहितो, अहवा उवसमलद्धी(उवएसस्सवणलद्धी)पउग्गलद्धिरिति एयाहिं सहिओ। 'पुव्वंपि'त्ति-करणकालातो पुव्विंपि विसुज्झन्तो अणंतगुणातें विसोहीते वट्टन्तो, 'गंठियसत्ताणइक्कमिय सोहिं'ति-गंठियसत्ता अभवसिद्धिया तेसिं जा विसोही ततो अणंतगुणविसुद्धो। 'अन्नयरे सागारे जोगे य विसुद्धलेसासु'त्ति-अन्नयरे मतिसुयविभङ्गअन्नाणसागारोव योगे वट्टमाणो, जोगे-मणजोगे वा वचिकायजोगे वा वट्टमाणो, तिण्हं विसुद्धलेसाणं अन्नयरीए वट्टमाणो, जहण्णेण तेउलेसे, मज्झिमेणं पम्हलेसे, उक्कोसेणं सुक्कलेस्साते वट्टमाणो। आउगवज्जाणं सत्तण्ह कम्माणं संतकम्मस्स ठिति अन्तोकोडाकोडि काउं 'दुट्ठाणं चउट्ठाणं असुभसुभाणं च अणुभागं'ति-असुभाणं कम्माणं चउट्ठाणियं रसं दुट्ठाणियं करेइ, सुभाणं कम्माणं दुट्ठाणीयं रसं चउट्ठाणीयं करेति। 'बन्धंतो धुवपगडी भवपाउग्गा सुभा अणाऊ य'त्ति-पंचविहं नाणावरणं नवविहं दंसणावरणं मिच्छत्तं सोलसकसाया भयं दुगंच्छा तेयगं कम्मगं वन्नं गंधं रसं फासं अगुरुलहुगं उवघातं निमेणं पंचविहं अंतरातियं। एयातो सत्तचत्तालीसं धुवपगतीतो बंधमाणो सेसातो परियट्टमाणीओ तासिं भवपाउग्गातो सुभाओ बंधति, 'अणाऊ य'त्ति-आउगवज्जातो, आउगं अतिविसुद्धो ण बंधति। जति मणुतो तिरिओ वा पढमसम्मत्तं उप्पातेति देवगतिपाउग्गातिं सुहाइं कम्मातिं बंधति-देवगति पंचिंदियजाति वेउव्वियसरीरं समचउरंसं विउव्वियअङ्गोवङ्गं देवाणुपुव्वि पराघातं उस्सासं पसत्थविहायगति तसादिदसगं पसत्थं एयाइं एगूणवीसं नामस्स, सायं, उच्चागोयं, एयातिं एक्कवीसं

अधुवातिं बंधति। देवनेरतिया पढमसंमत्तं उप्पातेमाणा मणुजगतिपाउग्गातिं सुभाइं–मणुयदुगउरालियदुग-पढमसंघयणसहियातिं सुभातिं बावीसं बंधति, नवरि तमतमानेरतितो तिरियगतितिरियाणुपुव्वीणीयागोय सहियाइं सव्वसुभाइं नामे बंधति। एवं पगतिबंधं बंधति। ठिइबंधन्ति–ठिइबंधं अंतोकोडाकोडीतो पकरेति। अणुभागं असुभं हसति सुभं वड्ढेति। 'जोगवसा य पदेसं'ति–जहण्णजोगिस्स जहण्णप्पदेसबंधो, एवं मज्झस्स मज्झो, उक्कोसस्स उक्कोसो पदेसबंधो। ठितिबंधस्स पुणो विसेसं भणाति–'ट्ठिइबंधद्धापूण्णे णवबंधं पल्लसंखभागूणं'ति। ठितिबंधे पुन्ने अन्नं ठितिबंधं पलिउवमस्स संखेज्जतिभागहीणं बंधति, ततो अन्नं संखेज्जतिभागहीणं बंधति, एवं संखेज्जाइं पलिओवमसंखेज्जतिभागहाणिट्ठाणातिं बंधति। 'असुभसुभाणणुभागं अणंतगुण हाणिवड्ढिहिं'ति–समते समते असुभकम्माणं दुट्ठाणीयं अणंतगुणहीणं असुभाणुभागं बन्धति, सुभकम्माणं चउट्ठाणीयं अणुभागं अणंतगुणं च समते समते बंधति। एवं एतेण विहिणा संजुत्तो करणाइं अहापवत्तमादीणि आढवेति। आहापवत्तकरणं अपुव्वकरणं अणियट्टिकरणं एक्केक्कं अंतोमुहुत्तं पडिवज्जति। तिण्हवि करणाणं कालो अंतोमुहुत्तो। जहकम्मेणं तिन्नि वि करेत्तु 'उवसंतद्धं च लहति कम'त्ति–चउत्थी उवसंतद्धा तं पि कमेणं पावति ॥३–४–५–६–७–८॥

(मलय०)—'सव्वुवसमणा'इत्यादि। इह सर्वोपशमना 'मोहस्यैव'–मोहनीयस्यैव, शेषाणां तु कर्मणां देशोपशमना। तत्र तस्य मोहनीयस्य सर्वोपशमनाक्रियायोग्यः पञ्चेन्द्रियः संज्ञी सर्वाभिः पर्याप्तिभिः पर्याप्तः इत्येवं 'लब्धित्रिकयुक्तः'–पञ्चेन्द्रियत्वसंज्ञित्वपर्याप्तत्व-

रूपाभिस्तिसृभिर्लब्धिभिर्युक्तः, अथवा उपशमलब्ध्युपदेशश्रवणलब्धिकरणत्रयहेतुप्रकृष्टयोगलब्धिरूपलब्धित्रिकयुक्तः । करणकाला-
त्पूर्वमपि अन्तर्मुहूर्तकालं यावत् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या 'विशुद्ध्यमानः'–अवदायमानचित्तसन्ततिः 'ग्रन्थिकसत्त्वानाम्'–
अभव्यसिद्धिकानां या विशोधिस्तामतिक्रम्य वर्तमानः ततोऽनन्तगुणविशुद्ध इत्यर्थः । तथाऽन्यतरस्मिन्मतिश्रुताज्ञानविभङ्गज्ञानानाम-
न्यतमस्मिन् 'साकारे'–साकारोपयोगे, योगे चान्यतमस्मिन्मनोयोगे वाग्योगे काययोगे वा वर्तमानः, तिसृणां विशुद्धानां लेश्यानाम-
न्यतमस्यां लेश्यायां वर्तमानो, जघन्येन तेजोलेश्यायां, मध्यमपरिणामेन पद्मलेश्यायां, उत्कृष्टपरिणामेन शुक्ललेश्यायाम्। तथाऽऽयुर्वर्जानां
सप्तानां कर्मणां स्थितिमन्तःसागरोपमकोटीकोटीप्रमाणां कृत्वा अशुभानां कर्मणामनुभागं चतुःस्थानकं सन्तं द्विस्थानकं करोति,
शुभानां च कर्मणां द्विस्थानकं सन्तं चतुःस्थानकं करोति । तथा ध्रुवप्रकृतीः–पञ्चविधज्ञानावरणनवविधदर्शनावरणमिथ्यात्वषोडशक-
षायभयजुगुप्सातैजसकार्मणवर्णगन्धरसस्पर्शागुरुलघूपघातनिर्माणपञ्चविधान्तरायरूपाः सप्तचत्वारिंशत्संख्या बध्नन् परावर्तमानाः स्व-
स्वभवप्रायोग्याः प्रकृतीः शुभा एव बध्नाति, ता अप्यायुर्वर्जाः । अतीव विशुद्धपरिणामो हि नायुर्बन्धमारभते इति कृत्वा तद्वर्जनम् ।
भवप्रायोग्य इतिवचनाच्चैतदवगन्तव्यं–यदुत तिर्यङ् मनुष्यो वा प्रथमसम्यक्त्वमुत्पादयन् देवगतिप्रायोग्याः शुभाः प्रकृतीर्देवगतिदेवा-
नुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकसातवेदनीयोच्चैर्गोत्ररू-
पा एकविंशतिसंख्या बध्नाति । देवो नैरयिको वा प्रथमसम्यक्त्वमुत्पादयन् मनुजगतिप्रायोग्या मनुजगतिमनुजानुपूर्वीपञ्चेन्द्रियजाति-
समचतुरस्रसंस्थानप्रथमसंहननौदारिकशरीरौदारिकाङ्गोपाङ्गपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकसातवेदनीयोच्चैर्गोत्ररूपा द्वा-
त्रिंशतिसंख्या बध्नाति। केवलं यदि सप्तमपृथिवीनारकः प्रथमसम्यक्त्वमुत्पादयति ततस्तिर्यग्गतितिर्यगानुपूर्वीनीचर्गोत्राणि वक्तव्यानि,

शेषं तदेव। तथा बध्यमानप्रकृतीनां स्थितिं बध्नाति अन्तःसागरोपमकोटीकोटीप्रमाणामेव नाधिकाम्। योगवशाच्च प्रदेशाग्रमुत्कृष्टं मध्यमं जघन्यं च बध्नाति। तथाहि–जघन्ये योगे वर्तमानो जघन्यं प्रदेशाग्रं बध्नाति, मध्यमे मध्यमं, उत्कृष्टे तूत्कृष्टमिति। स्थितिबन्धेऽपि च पूर्णे सत्यन्यं स्थितिबन्धं प्राक्तनस्थितिबन्धापेक्षया पल्योपमसंख्येयभागन्यूनं करोति। तस्मिन्नपि च परिपूर्णे सत्यन्यं स्थितिबन्धं प्राक्तनस्थितिबन्धापेक्षया पल्योपमसंख्येयभागन्यूनं करोति। एवमन्यमन्यं स्थितिबन्धं पूर्वपूर्वापेक्षया पल्योपमसंख्येयभागन्यूनं करोति, अशुभानां च प्रकृतीनां बध्यमानानामनुभागं द्विस्थानकं बध्नाति, तमपि प्रतिसमयमनन्तगुणहीनम्। शुभानां च चतुःस्थानकं बध्नाति, तमपि प्रतिसमयमनन्तगुणवृद्धम्। एवमसौ कुर्वन् किं करोतीत्यत आह–'करणं'इत्यादि। 'करणं'-यथाप्रवृत्तं करोति। ततोऽपूर्वकरणम्, ततोऽपि अनिवृत्तिकरणम्। करणमिति परिणामविशेषः, 'करणं परिणामोऽत्र' इतिवचनप्रामाण्यात्। एतानि च त्रीण्यपि करणानि प्रत्येकमान्तर्मौहूर्तिकानि। सर्वेषामपि करणानां कालोऽन्तर्मुहूर्तप्रमाणः। ततोऽनेन क्रमेण चतुर्थीमुपशान्ताद्धां लभते। सापि चान्तर्मुहूर्तिकी ॥२–४–५–६–७–८॥

(उ०)—इह सर्वोपशमना मोहस्यैव, शेषाणां तु कर्मणां देशोपशमना भवति। तत्र तस्य मोहनीयस्य सर्वोपशमनाक्रियायोग्यः पञ्चेन्द्रियः संज्ञी सर्वाभिः पर्याप्तिभिः पर्याप्त इत्येवं पञ्चेन्द्रियत्वसंज्ञित्वपर्याप्तत्वरूपेण लब्धित्रिकेण युक्तः, यद्वोपशमलब्ध्युपदेशश्रवणलब्धिकरणत्रयहेतुप्रकृष्टयोगलब्धित्रिकयुक्तः। पूर्वमपि करणकालादन्तर्मुहूर्त्तं कालं यावत्प्रतिसमयमनन्तगुणवृद्धविशुद्ध्या विशुध्यमानो ग्रन्थिकसत्त्वानामभव्यसिद्धिकानां शोधिमतिक्रम्य वर्तमानस्ततोऽनन्तगुणविशुद्ध इत्यर्थः। तथाऽन्यतरस्मिन्मत्यज्ञाने श्रुताज्ञाने विभङ्गज्ञाने वा साकारे साकारोपयोगे, योगे चान्यतरस्मिन् मनोयोगे वाग्योगे काययोगे वा वर्तमानः, तथा विशुद्धलेश्यासु विशुद्धानां

लेश्यानामन्यतमस्यां विशुद्धलेश्यायां वर्तमानो जघन्यपरिणामेन तेजोलेश्यायां, मध्यमपरिणामेन पद्मलेश्यायां, उत्कृष्टपरिणामेन च शुक्ललेश्यायामित्यर्थः। तथाऽऽयुर्वर्जानां सप्ताना कर्मणां स्थितिमन्तःसागरोपमकोटाकोटिप्रमाणां कुर्वन्नशुभानां कर्मणामनुभागं चतुःस्थानकं सन्तं द्विस्थानकं कुर्वन् शुभानां च कर्मणां द्विस्थानकं सन्तं चतुःस्थानकं कुर्वन्, तथा ध्रुवप्रकृतीर्ज्ञानावरणपञ्चकदर्शनावरणनवकमिथ्यात्वकषायषोडशकभयजुगुप्सातैजसकार्मणवर्णगन्धरसस्पर्शागुरुलघूपघातनिर्माणान्तरायपञ्चकरूपाः सप्तचत्वारिंशत्स्वस्वभवयोग्याः परावर्तमानमध्यस्थाः शुभा एव बध्नंस्ता अप्यायुर्वर्जा एव, अतिविशुद्धपरिणामो हि नायुर्बन्धमारभत इति तद्वर्जनम्। भवप्रायोग्या इति वदता चैवं सूच्यते-यदुत तिर्यङ्मनुष्यो वा प्रथमसम्यक्त्वमुत्पादयन् देवगतिप्रायोग्याः शुभाः प्रकृतीर्देवद्विकपञ्चेन्द्रियजातिवैक्रियद्विकाद्यसंस्थानपराघातोच्छ्वासप्रशस्तखगतित्रसदशकसातवेदनीयोच्चैर्गोत्ररूपा एकविंशतिसंख्या बध्नाति। देवो नैरयिको वा प्रथमसम्यक्त्वमुत्पादयन् मनुजगतिप्रायोग्या मनुजद्विकपञ्चेन्द्रियजातिप्रथमसंस्थानप्रथमसंहननौदारिकद्विकपराघातोच्छ्वासप्रशस्तखगतित्रसदशकसातवेदनीयोच्चैर्गोत्ररूपा द्वाविंशतिसंख्या बध्नाति। केवलं यदि सप्तमपृथ्वीनारकः प्रथमसम्यक्त्वमुत्पादयति तदा तिर्यग्द्विकनीचैर्गोत्राणि वाच्यानि, शेषं तथैवेति। तथा बध्यमानप्रकृतीनां स्थितिमन्तःसागरोपमकोटाकोटिप्रमाणामेव बध्नन्नासां योगवशाच्च प्रदेशाग्रमुत्कृष्टं मध्यमं जघन्यं च बध्नन् जघन्ययोगे वर्तमानो जघन्य, मध्यमे मध्यममुत्कृष्टे चोत्कृष्टमितिरीत्या, तथा स्थितिबन्धे परिपूर्णे सत्यन्यं स्थितिबन्धं प्राक्तनस्थितिबन्धापेक्षया पल्योपमसंख्येयभागन्यूनं कुर्वन् तस्मिन्नपि पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागन्यूनं कुर्वन्, एवमन्यमन्यं स्थितिबन्धं पूर्वापेक्षया पल्योपमसंख्येयभागन्यूनं कुर्वन्, अशुभानां च प्रकृतीनां बध्यमानानामनुभागं द्विस्थानकं बध्नंस्तमपि प्रतिसमयमनन्तगुणहीनं, शुभानां च चतुःस्थानकं बध्नंस्तमपि प्रतिसमयमनन्त-

गुणवृद्धं करणकालात्पूर्वमन्तर्मुहूर्त्तं कालं यावदीदृशेतिकर्तव्यताव्यापृतो भूत्वा करणं—परिणामविशेषलक्षणं यथाप्रवृत्तं करोति, ततोऽपूर्वकरणं, ततोऽप्यनिवृत्तिकरणं, एतानि च त्रीण्यपि करणानि प्रत्येकमान्तर्मौहूर्त्तिकानि, करणत्रयकालोऽप्यन्तर्मुहूर्त्तप्रमाण एव, एतत्करणत्रयनिष्पादनक्रमादनन्तरं चतुर्थीमुपशान्ताद्धां लभते, साऽपि चान्तर्मौहूर्तिकी द्रष्टव्या ॥३-४-५-६-७-८॥

एएसिं करणाणं लक्खणं—

**अणुसमयं वड्ढंतो अज्झवसाणाण णंतगुणणाए । परिणामट्ठाणाणं दोसु वि लोगा असंखिज्जा ॥९॥**



(चू०)—समए समते अज्झवसाणसुद्धीते अणंतगुणाए वड्ढंतो जाव करणपडिसमत्ती ताव विसुज्झमाणो विसुज्झमाणो वड्ढति। 'परिणामट्ठाणाणं दोसुवि लोगा असंखेज्ज'त्ति—अहापवत्तकरणस्स विसोहीट्ठाणाणि असंखेज्जलोगागासपदेसमेत्ताणि चरिमसमओत्ति। एमेव अपुव्वकरणस्स वि। तम्हा असंखेज्जलोगट्ठाणाणि उप्परिहुत्तं अणंतगुणाते वड्ढीए वड्ढंति, तिरियं छट्ठाणापडियाते वड्ढंति। दोण्हं अहापव्वत्तअपुव्वकरणाणं परिणामट्ठाणा विसमचउरंसागिरिहिं खेत्तं निम्मवेंति तेसिं उप्पिं अणियट्टिस्स परिणामट्ठाणा मुत्तावलिसंट्ठियातो उड्ढ(हे)यव्वा। तिण्हंवि ट्ठवणा ॥९॥

(मलय०)—सम्प्रति करणानामेव स्वरूपमाविश्चिकीर्षुराह—अणुममयं' ति। अनुसमयं समये समयेऽध्यवसानानामनन्तगुणनया विशुद्ध्या प्रतिसमयमनन्तगुणवृद्ध्याऽध्यवसानानां विशुद्ध्येत्यर्थः प्रवर्धमानो यावत् करणसमाप्तिर्भवति तावन्निरन्तरं वर्धते । कियन्ति पुनरध्यवसानानि करणेसु प्रत्येकं भवन्तीति चेद्,उच्यते—'परिणाम'इत्यादि। द्वयोरपि यथाप्रवृत्तापूर्वकरणयोः परिणामस्थानानामनुसमयं

लोका असंख्येया भवन्ति । एतदुक्तं भवति–यथाप्रवृत्तकरणेऽपूर्वकरणे च प्रतिसमयमसंख्येयलोकाकाशप्रदेशराशिप्रमाणानि अध्यवसायस्थानानि भवन्ति । तथाहि–यथाप्रवृत्तकरणे प्रथमसमये विशोधिस्थानानि नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणानि । द्वितीयसमये विशेषाधिकानि । ततोऽपि तृतीयसमये विशेषाधिकानि । एवं तावद्वाच्यं यावच्चरमसमयः । एवमपूर्वकरणेऽपि द्रष्टव्यम् । अमूनि चाध्यवसायस्थानानि यथाप्रवृत्तापूर्वकरणयोः सम्बन्धीनि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति । उपर्युपरिमुखानि चामून्यनुचिन्त्यमानानि प्रतिसमयमनन्तगुणवृद्ध्या प्रवर्धमानान्यवगन्तव्यानि, तिर्यक्पट्स्थानपतितानि च । तयोरुपरि चानिवृत्तिकरणाध्यवसायस्थानानि मुक्तावलीसंस्थानानि भवन्ति । स्थापना चेयम् ॥९॥

स्थापना ।

१२०००००००००००००१६
१०००००००००००००१५
८००००००००००००१४
६००००००००००१३
४०००००००००११
२०३०००००००९
२००००००७
१०००००५

(३०)—करणानामेव स्वरूपं विशदीकुर्वन्नाह–अनुसमयं समये समयेऽध्यवसानानामनन्तगुणनया विशुध्या प्रवर्धमानो यावत्करणसमाप्तिर्भवति तावन्निरन्तरं वर्धते । कियन्ति पुनरध्यवसायस्थानानि प्रत्येकं करणेषु लभ्यन्ते इति चेद्, उच्यते–द्वयोरपि यथाप्रवृत्तापूर्वकरणयोः परिणामस्थानानामनुसमयमसंख्येया लोका भवन्ति । तथाहि–यथाप्रवृत्तकरणप्रथमसमये विशोधिस्थानानि नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणानि, ततो द्वितीयसमये विशेषाधिकानि, ततोऽपि तृतीयसमये विशेषाधिकानि, एवं चरमसमयं यावद्वाच्यम् । एवमेवापूर्वकरणेऽपि द्रष्ट-

स्थापना ।

५००००००००००००१०
४००००००००००८
३०००००००००६
२००००००००४
१०००००००२

व्यम् । अमूनि च यथाप्रवृत्तापूर्वकरणसम्बन्धीन्यध्यवसायस्थानानि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति, उपर्युपरि चामून्यनुचिन्त्यमानानि अनन्तगुणवृध्या वर्धमानान्यवगन्तव्यानि तिर्यक् च षट्स्थानपतितानि. तयोरुपर्यनिवृत्तिकरणाध्यवसायस्थानानि मुक्तावलीसंस्थानानि स्थाप्यानि । (स्थापना चेयम् ।) ॥९॥

**मन्दविसोही पढमस्स संखभागाहि पढमसमयम्मि। उक्कस्सं उप्पिमहो एक्केक्कं दोण्ह जीवाणं॥१०॥**
**आ चरमाओ सेसुक्कोसं पुव्वप्पवत्तमिइनामं । बिइयस्स बिइयसमए जहण्णमवि अणंतरुक्कस्सा ॥११॥**



(चू०)—जहण्णुक्कोसाणं ठ्ठाणाणं तिव्वमंदया जाणणत्थं भन्नति निदरिसणं। जहा–दो जीवा जुगवं सेढिं पडिवन्ना एक्को सव्वजहन्नाते पढमसमयसोहीते पडिवन्नो, एक्को सव्वुक्कोसाते पढमसमयविसोहीते पडिवन्नो। ततो पढमसमयजहन्नविसोहिओ बिइयसमयजहण्णविसोही अणंतगुणा । बितियसमयजहण्णविसोहीओ ततियसमयजहन्नविसोही अणंतगुणा। एवं ततीयसमयातो चउत्थसमयाजहन्नविसोही अणंतगुणा। एवं एएण कमेण जाव अहापवत्तकरणस्स संखेज्जतिभागो गतो। 'पढमसमते उक्कोसं'ति–ततो करणसंखेज्जतिभागजहन्नविसोहीओ पढमसमयउक्कोसविसोही अणंतगुणा। 'उप्पिमहो एक्केक्कं'ति–पढमसमते उक्कोसविसोहीओ करणसंखेज्जतिभागस्स उप्पिं अणंतरे समते जहन्निया विसोही अणंतगुणा। ततो करणसंखेज्जतिभागस्स उप्पिं अणंतरसमयसोहीओ बीयसमयस्स उक्कोसिया विसोही अणंतगुणा, ततो बितियसमयउक्कोसविसोहिओ कर-

णसंखेज्जतिभागम्म उप्पिं बीतियसमते जहन्निया सोही अणंतगुणा, ततो करणसंखेज्जतिभागुप्पिं बितीयसमयजहन्नविसोहिओ करणततियसमयस्स उक्कोसिया विसोही अणंतगुणा, ततो करणततियसमयउक्कोसविसोहिनो करणसंखेज्जतिभागस्स उप्पिं ततियसमयस्स जहन्निया विसोही अणंतगुणा, ततो करणसंखेज्जतिभागस्स उप्पिं ततियसमयजहन्नियासोहितो करणचउत्थसमयउक्कोसविसोही अणंतगुणा, एवं हेट्ठुवरि नेयव्वं जाव जहन्नियानो विसोहिओ। अहापवत्तकरणसमयाणं भणियातो। 'आ चरमाओ सेसुक्कोसं'ति-ततो जहन्नसोहिते समत्तानो उक्कोस्सानो अणंतरा उ उक्कोसा अणंतगुणा, एवं अणंतगुणवड्ढीते जाव अहापवत्तदुचरिम उक्कोसविसोहिओ चरिमसमय उक्कोसविसोही अणंतगुणा। 'पुव्वपव्वत्तमिति णामं'ति-पढमस्स करणस्स पूर्वप्रवृत्तमिति नामं, किं भणियं होति? भन्नइ-जहासंसारत्था जीवा अणंतगुणाते सोहीते वड्ढंति तहा अहापवत्तकरणे ठितिखंडगं वा अणुभागखंडगं वा गुणसेढी वा नत्थि केवलं अणंतगुणाते विसोहिते विसुज्झन्तित्ति। अपसत्थकम्मंसो जे बंधंति ते दुट्ठाणीते अणंतगुणहीणे बन्धन्ति, जे पसत्थकम्मंसे ते चउट्ठाणीते बन्धन्ति अणंतगुणा य। समते ठितिबन्धे पुन्ने पुन्ने पलिओवमस्स संखेज्जभागहीणं अन्नं ट्ठिति बन्धन्ति, भणियं अहापवत्तकरणलक्खणं। इयाणिं अपुव्वकरणस्स भण्णति-'बितियस्स बितियसमते जहण्णमवि अणंतरुक्कस्स'त्ति-बितियस्स करणस्स बितियसमते जहन्नमवि अणंतरुक्कस्सत्ति-पढमसमयउक्कोसातो, किं भणियं होति? भण्णइ-अपुव्वकरणस्स पढमसमते जहण्णिया विसोही अहापवत्तकरणउक्कोसविसोहीओ अणंतगुणा, ततो

पढमसमयउक्कोससोही अणंतगुणा। एवं जहण्णुक्कोसो अप्पप्पणो नेयव्वो जाव बितियकरणस्स चरिमसमतोत्ति।

(मलय०)—'मन्दविसोही'इत्यादि। इह कल्पनया द्वौ पुरुषौ युगपत्करणप्रतिपन्नौ विवक्ष्येते। तत्रैकः सर्वजघन्या श्रेण्या प्रतिपन्नः, अपरस्तु सर्वोत्कृष्टया विशोधिश्रेण्या। तत्र प्रथमस्य जीवस्य प्रथमसमये मन्दा सर्वजघन्या विशोधिः सर्वस्तोका, ततो द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा। एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणस्य संख्येयो भागो गतो भवति। ततः प्रथमसमये द्वितीयस्य जीवस्योत्कृष्टं विशोधिस्थानमनन्तगुणं वक्तव्यम्। ततोऽपि यतो जघन्यस्थानान्निवृत्तस्तस्योपरितनी जघन्या विशोधिरनन्तगुणा। ततोऽपि द्वितीये समये उत्कृष्टा विशोधिरनन्तगुणा। तत उपरि जघन्या विशोधिरनन्तगुणा। एवमुपर्यधश्चैकैकं विशोधिस्थानमनन्तगुणतया द्वयोर्जीवयोस्तावन्नेयं यावच्चरमसमये जघन्या विशोधिः। तत आ चरमात्-चरममभिव्याप्य यान्यनुक्तानि उत्कृष्टानि विशोधिस्थानानि तानि क्रमेण निरन्तरमनन्तगुणानि वक्तव्यानि। तदेवं समाप्तं यथाप्रवृत्तकरणम्। अस्य च यथाप्रवृत्तकरणस्य पूर्वप्रवृत्तमिति द्वितीयं नाम, शेषकरणाभ्यां पूर्व-प्रथमं प्रवृत्त पूर्वप्रवृत्तमिति। अस्मिंश्च यथाप्रवृत्तकरणे स्थितिघातो रसघातो गुणश्रेणिर्वा न प्रवर्तते, केवलमुक्तरूपा विशोधिरनन्तगुणा। यानि चाप्रशस्तानि कर्माण्यत्र स्थितो बध्नाति तेषामनुभागं द्विस्थानकं बध्नाति, यानि च शुभानि तेषां चतुःस्थानकम्। स्थितिबन्धेऽपि च पूर्णे पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागन्यूनं बध्नाति। सम्प्रत्यपूर्वकरणमभिधीयते-'बिइयस्से'त्यादि। द्वितीयस्य करणस्यापूर्वकरणाख्यस्य यो द्वितीयः समयस्तत्र जघन्यमपि विशोधिस्थानमनन्तरोत्कृष्टात्-प्रथमसमयभाविन उत्कृष्टात् विशोधिस्थानात् अनन्तगुणं वक्तव्यम्। एतदुक्तं भवति-नेह यथाप्रवृत्तकरणे इव प्रथमतो निरन्तरं जघन्यानि विशोधिस्थानान्यनन्तगुगतया वक्तव्यानि, किन्तु प्रथमसमये

प्रथमतो जघन्या विशोधिः सर्वस्तोका वाच्या । सापि च यथाप्रवृत्तकरणचरमसमयभाविन उत्कृष्टाद्विशोधिस्थानादनन्तगुणा । ततः
प्रथमसमय एवोत्कृष्टा विशोधिरनन्तगुणा । ततोऽपि द्वितीयसमये जघन्या विशोधिरनन्तगुणा । ततोऽपि तस्मिन्नेव द्वितीयसमये
उत्कृष्टा विशोधिरनन्तगुणा । ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा । ततोऽपि तस्मिन्नेव तृतीयसमये उत्कृष्टा विशोधिरन-
न्तगुणा । एव प्रतिसमयं तावद्वाच्यं यावच्चरमसमये उत्कृष्टा विशोधिरिति ॥१०–११॥

(३०)—इह द्वौ पुरुषौ युगपत्करणप्रतिपन्नौ बुद्धावारोप्येते, एकः सर्वजघन्यया श्रेण्या प्रतिपन्नोऽपरस्तु सर्वोत्कृष्टया विशोधिश्रेण्या ।
तत्र प्रथमस्य पुरुषस्य प्रथमसमये मन्दा सर्वजघन्या विशोधिः सर्वस्तोका, ततो द्वितीयसमये जघन्या विशोधिरनन्तगुणाऽनन्तगुण-
वृद्धविशोधिस्थानयुक्तेत्यर्थः । ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा, एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणस्य संख्येयो
भागो गतो भवति । ततः प्रथमसमये द्वितीयस्य जीवस्योत्कृष्टं विशोधिस्थानमनन्तगुणं वाच्यं । ततोऽपि जघन्यस्थानाद्यतः पश्चा
द्वलितं तत उपरितनी जघन्या विशोधिरनन्तगुणा । ततो द्वितीये समये उत्कृष्टा विशोधिरनन्तगुणा । तत उपरि जघन्या विशोधिर-
नन्तगुणा । एवमूपर्यधश्चैकैकं विशोधिस्थानं द्वयोर्जीवयोरनन्तगुणतया तावद्वाच्यं यावच्चरमसमये जघन्या विशोधिः । तत आचर-
माच्चरममभिव्याप्य यानि चरमसंख्येयभागगतान्यनुक्तानि शेषाण्युत्कृष्टानि विशोधिस्थानानि तानि निरन्तरमनन्तगुणानि वक्तव्यानि।
तदेवं समाप्तं यथाप्रवृत्तकरणम् । अस्य च पूर्वप्रवृत्तमिति द्वितीयं नाम, शेषकरणाभ्यां पूर्वं प्रवृत्तत्वात् । अत्र च स्थितिघातो रसघातो
गुणश्रेणिर्गुणसंक्रमो वा न प्रवर्तते, तद्योग्यविशुध्यभावात्, केवलमुक्तरूपा विशोधिरेवानन्तगुणा प्रवर्तते । यानि चाप्रशस्तानि कर्मा-
ण्यत्र स्थितो बध्नाति तेषामनुभागं द्विस्थानकं बध्नाति, यानि च शुभानि बध्नाति तेषामनुभागं चतुःस्थानकम् । स्थितिबन्धेऽपि च

यथाप्रवृत्तकरणविशुद्धिः ( प्ररूपणा त्वधोमुखीकार्या )

| संख्येयतमो भागः | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | १ | समये | जघन्या | विशोधिः सर्वस्तोका | | | |
| | ततः | २ | ,, | ,, | अनन्तगुणा | | | |
| | ,, | ३ | ,, | ,, | ,, | | | |
| | ,, | ४ | ,, | ,, | ,, — | ततः १ | समये उत्कृष्टाविशोधिः | अनन्तगुणा |
| | ,, | ५ | ,, | ,, | ,, — | ,, २ | ,, | ,, |
| | ,, | ६ | ,, | ,, | ,, — | ,, ३ | ,, | ,, |
| | ,, | ७ | ,, | ,, | ,, — | ,, ४ | ,, | ,, |
| | ,, | ८ | ,, | ,, | ,, — | ,, ५ | ,, | ,, |
| | ,, | ९ | ,, | ,, | ,, — | ,, ६ | ,, | ,, |
| | ,, | १० | ,, | ,, | ,, — | ,, ७ | ,, | ,, |
| | ,, | ११ | ,, | ,, | ,, — | ,, ८ | ,, | ,, |
| | ,, | १२ | ,, | ,, | ,, — | ,, ९ | ,, | ,, |
| | ,, | १३ | ,, | ,, | ,, — | संख्येयतमो भागः ,, १० | ,, | ,, |
| | | | | | | ,, ११ | ,, | ,, |
| | | | | | | ,, १२ | ,, | ,, |
| | | | | | | ,, १३ | ,, | ,, |

इत्थं—रेखायुक्तसमयस्थानेषु परस्पराक्रान्तप्ररूपणा कर्त्तव्येति ॥



उपशमसम्यक्त्वाधिकारः

पूर्णे पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागन्यूनं करोति । अथापूर्वकरणमभिधत्ते—'बिइयस्स' इत्यादि, द्वितीयस्यापूर्वकरणस्य द्वितीयसमये जघन्यमपि विशोधिस्थानमनन्तरोत्कृष्टात्प्रथमसमयभाविन उत्कृष्टाद्विशोधिस्थानादनन्तगुणं वाच्यम् । इदमुक्तं भवति–इह यथाप्रवृत्तकरण इवादितो निरन्तरं जघन्यानि विशोधिस्थानान्यनन्तगुणतया न वाच्यानि, किन्तु प्रथमसमये जघन्या विशोधिः प्रथमतः सर्वस्तोका वाच्या, सापि यथाप्रवृत्तचरमसमयभाव्युत्कृष्टविशोधिस्थानादनन्तगुणा ।

ततः प्रथमसमय एवोत्कृष्टा विशोधिरनन्तगुणा। ततोऽपि द्वितीयसमये जघन्या विशोधिरनन्तगुणा। ततोऽपि तस्मिन्नेव द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा। एवं प्रतिसमयं जघन्योत्कृष्टा अनन्तगुणा विशोधयस्तावद्वाच्या यावच्चरसमये उत्कृष्टा विशोधिरिति ॥

**निव्वयणमवि ततो से टिइरसघायठिइवन्धगद्धा ऊ। गुणसेढी विय समगं पढमे समये पवत्तंति ॥१२॥**

(चू०)—'निव्वयणमवि ततो से'त्ति। अपुव्वअपुव्वाइं करणाइं पडिवज्जतित्ति अपुव्वकरणो, कहं? भण्णइ—'ट्ठितिरसघायट्ठितियन्धगद्धा य गुणसेढी वि य समगं पढमसमते पवत्तंति'। अपुव्वकरणस्स पढमसमते चेव ठितिघातो रसघाओ अन्ना ट्ठितिबन्धगद्धा गुणसेढीया एएचत्तारि वि अहिगारा जुग(वं) पवट्टन्ति ॥१२॥

अपूर्वकरणविशुद्धिः (अत्र सर्वसमयेषु परस्पराक्रान्तप्ररूपणा कार्येति)

प्रथमे १ समये जघन्या विशोधिः सर्वस्तोका (सापि यथाप्रवृत्तसर्वोत्कृष्टविशोधेरनन्तगुणा)
ततस्तस्यैवोत्कृष्टा विशोधिरनन्तगुणा

| | | | | | | |
|---|---|---|---|---|---|---|
| ततः | २ | समये | जघन्या | विशोधिरनन्तगुणा— | ततः उत्कृष्टा | विशोधिरनन्तगुणा |
| ततः | ३ | समये | ” | ” | — ” | ” |
| ततः | ४ | समये | ” | ” | — ” | ” |
| ततः | ५ | समये | ” | ” | — ” | ” |
| ततः | ६ | समये | ” | ” | — ” | ” |
| ततः | ७ | समये | ” | ” | — ” | ” |
| ततः | ८ | समये | ” | ” | — ” | ” |
| ततः | ९ | समये | ” | ” | — ” | ” |

(मलय०)—'निव्वयणं'ति। ततः 'से'। तस्यापूर्वकरणस्य निर्वचनं–निश्चयमन्वर्थानुयायि वचनमभिधानं वक्तव्यम्। तद्यथा–अपूर्वाणि अपूर्वाणि करणानि स्थितिघातरसघातगुणश्रेणिस्थितिबन्धादीनां निर्वर्तनानि यस्मिन् तत् अपूर्वकरणम्। तथाहि–अपूर्वकरणे प्रविशन् प्रथमसमय एव स्थितिघातं रसघातं गुणश्रेणिं स्थितिबन्धं चान्यं युगपदारभते। तथा चाह–'ठिइरस'इत्यादि। स्थितिघातो रसघातः स्थितिबन्धाद्धा गुणश्रेणिरपि च। एते चत्वारः पदार्थाः समकं–युगपत् प्रथमे समये प्रवर्तन्ते ॥१२॥



(उ०)—ततः 'से'–तस्यापूर्वकरणस्य निर्वचनं निश्चितमन्वर्थानुयायि वचनं प्रतिपादनीयम्। तद्यथा–अपूर्वाण्यभिनवानि करणानि स्थितिघातरसघातगुणश्रेणिस्थितिबन्धादीनां निर्वर्त्तनानि यस्मिँस्तदपूर्वकरणम्। अत्र हि स्थितिघातो रसघातः स्थितिबन्धाद्धा गुणश्रेणिरपि चेत्येते चत्वारः पदार्था अभिनवाः समकं युगपत्प्रथमसमय एव प्रवर्तन्ते ॥१२॥

तत्थ ट्ठितिकंडगस्स पमाणं भण्णति

**उयहिपुहत्तुक्कस्सं इयरं पल्लस्स संखतमभागो। ठिइकण्डगमणुभागाणणंतभागा मुहुत्तंत्तं ॥१३॥**

**अणुभागकण्डगाणं बहुहिं सहस्सेहिं पूरए एक्कं। ठिइकण्ड सहस्सेहिं तेसिं बीयं समाणेहिं ॥१४॥**

(चू०)—'उयहिपुहुत्त'न्ति–बहुणि सागरोवमाणि, उक्कोसेणं अणेगाइं सागरोवमाइं छिंदति, ता तं पि अंतोसागरोवमकोडाकोडीते कट्टंति। इयरं–जहण्णगं जहन्नेणं पलिओवमस्स संखेज्जतिभागं ट्ठितिखण्डगं करेति। इयाणि रसघातो–'अणुभागाणं अणंतभागा मुहुत्तन्तो'। अंतोमुहुत्तेणं कालेणं अणंताणुभागभागा खविज्जन्ति,

णगो भागो वर्धते। किं भणियं होति ? भण्णइ-अपुव्वकरणस्स पढमट्ठितिखण्डगे असुभकम्माणं अणंता अणुभागभागा अन्तोमुहुत्तेण खविज्जन्ति। पुणो सेसस्स अणंतभागो अन्तोमुहुत्तेणं खवेति। एवं 'अणुभागकण्डगाणं बहुहिं सहस्सेहिं पूरए एक्कं ट्ठितिकण्डग'न्ति-एगम्मि ट्ठितिकण्डगे अणेगा अणुभागकण्डगा भवन्ति, 'सहस्सेहिं तेसिं वितियं समाणेहि'ति-'सहस्सेहिं तेसिं'ति-एवं ठितिकण्डगसहस्सेहिं गतेहिं वितियं करणं परिसमप्पति। जं अपुव्वकरणस्स पढमसमते ट्ठितिसंतकम्मं ते(तं)चरिमसमते ट्ठितिकण्डगाई खविज्जमाणं संखेज्जगुणहीणं भवति। अपुव्वकरणस्स पढमसमते ट्ठितिबन्धो अपुव्वो भवति। ट्ठितिबन्धो ट्ठितिखण्डगं च वे वि जुगवं आढवेति जुगवं समप्पति। अणुभागखण्डसहस्सा यणेगा तम्मि खंडगे गता ताव खवेति। तिन्नि वि जुगवं समावणेति ॥१३-१४॥

(मलय०)—तत्र स्थितिघातप्रतिपादनार्थमाह—'उयहि'त्ति। स्थितिसत्कर्मणोऽग्रिमभागादुत्कर्षत उदधिपृथक्त्वप्रमाणं प्रभूतसागरोपमशतप्रमाणमित्यर्थः। जघन्येन पुनः पल्योपमसंख्येयभागमात्रं स्थितिकण्डकमुत्किरति, उत्कीर्य च याः स्थितीरधो न खण्डयिष्यति तत्र तद्दलिकं प्रक्षिपति, अन्तर्मुहूर्त्तेन च कालेन तत् स्थितिकण्डकमुत्कीर्यते। ततः पुनरप्यधस्तात् पल्योपमसंख्येयभागमात्रं स्थितिखण्डकमन्तर्मुहूर्त्तेन कालेनोत्किरति, प्रागुक्तप्रकारेणैव च निक्षिपति। एवमपूर्वकरणाद्धायां प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति। तथा च सति यत् अपूर्वकरणस्य प्रथमसमये स्थितिसत्कर्मासीत् तत्तस्यैव चरमसमये संख्येयगुणहीनं जातम्। सम्प्रतिरसघातोऽभिधीयते-'अणुभागाणे'त्यादि। अशुभानां प्रकृतीनां यदनुभागसत्कर्म तस्यानन्ततमं भागं मुक्त्वा शेषाननन्ताननुभागभागान्

अन्तर्मुहूर्त्तेन कालेनाशेषानपि विनाशयति । ततः पुनरपि तस्य प्राग्मुक्तस्यानन्ततमस्यानन्ततमं भागं मुक्त्वा शेषान् अनुभागभागान् अन्तर्मुहूर्त्तेन कालेन विनाशयति । एवमनेकान्यनुभागखण्डसहस्राणि एकस्मिन् स्थितिखण्डे व्यतिक्रामन्ति । तेषां च स्थितिखण्डानां सहस्रैर्द्वितीयमपूर्वकरणं परिसमाप्यते। सम्प्रति स्थितिबन्धाद्धा भण्यते–अपूर्वकरणस्य प्रथमसमयेऽन्य एवापूर्वः पल्योपमसंख्येयभागहीनः स्थितिबन्ध आरभ्यते । स्थितिघातस्थितिबन्धौ युगपदेवारभ्येते, युगपदेव च निष्ठां यातः ॥१३–१४॥

(उ०)—तत्र स्थितिघातं प्रतिपिपादयिषुराह–स्थितिसत्कर्मणोऽग्रिमभागादुत्कर्षत उदधिपृथक्त्वं–प्रभूतसागरोपमशतप्रमाणं जघन्येन च पल्योपमसंख्येयभागमात्रं स्थितिकण्डकमुत्किरति खण्डयतीत्यर्थः । उत्कीर्य च याः स्थितीरधो न खण्डयति तत्र तद्दलिकं प्रक्षिपति, अन्तर्मुहूर्त्तेन च कालेन तत्स्थितिकण्डकमुत्कीर्यते । उक्तं च–[1]"उक्कोसेणं वहुसागराणि इयरेण पल्लसंखंस। ठितिअग्गाओ घायइ अन्तमुहुत्तेण ठिइकण्डं" ॥ ततः पुनरप्यधस्तात्पल्योपमसंख्येयभागमात्रं स्थितिकण्डकमन्तर्मुहूर्त्तेन कालेनोत्किरति, प्रागुक्तरीत्यैव च निक्षिपति । एवमपूर्वकरणाद्धायां प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति । इत्थं चापूर्वकरणस्याद्यसमये यत्स्थितिकर्मासीत्तत्स्यैवान्त्यसमये संख्येयगुणहीनं जातम्। अथ रसघातोऽभिधीयते–'अणुभाग'इत्यादि, अनुभागानां रसप्रकृतीनां यदनुभागसत्कर्म तस्यानन्ततमं भागं मुक्त्वा शेषाननन्तान् भागाननुभागस्यान्तर्मुहूर्त्तेन कालेन निःशेषानपि विनाशयति, ततो भूयोऽपि तस्य मुक्तस्यानन्ततमस्य भागस्यानन्ततमं भागं मुक्त्वा शेषाननुभागभागानन्तर्मुहूर्त्तेन कालेन नाशयति, एवं अनेकान्यनुभागखण्डसहस्राण्येकस्मिन् स्थितिखण्डे व्यतिक्रामन्ति, तेषां च स्थितिखण्डानां सहस्रैर्द्वितीयमपूर्वकरणं समानयति परिसमापयति । अथ स्थितिबन्धाद्धा भण्यते–

१ पञ्चसंग्रह उपशमनाकरण गा १२

अपूर्वकरणस्य प्रथमसमयेऽन्य एवापूर्वः पल्योपमसंख्येयभागहीनः स्थितिबन्ध आरभ्यते । स्थितिघातस्थितिबन्धयोश्च युगपदेवारब्ध-योर्युगपदेव परिनिष्ठा भवति । तथा च स्थितिबन्धाद्धा कालतः संख्यया च स्थितिघाततुल्या प्रवर्तते । उक्तं च–[1]"करणाइए अपुव्वो जो बन्धो सो न होइ जो अण्णो । बन्धगअद्धा सा तुल्लिगा उ ठिइकण्डगद्धाए ॥१॥" इति ॥१३–१४॥

इयाणिं गुणसेढी भण्णति—

**गुणसेढी निक्खेवो समये समये असंखगुणणाए । अद्धादुगाइरित्तो सेसे सेसे य निक्खेवो ॥१५॥**

(चू०)—'गुणसेढी निक्खेवो समते समते असंखगुणणाए'त्ति–उवरिल्लाओ ट्ठितिउ पोग्गले घेत्तूण उदयसमये थोवा पक्खिवति, बितियसमते असंखेज्जगुणा, ततियसमते असंखेज्जगुणा एवं जाव अन्तोमुहुत्तं । अन्नं च ट्ठितिखण्डगं च, पढमे समते घेप्पमाणे पोग्गला थोवा, बीयसमए असंखेज्जगुणा, एवं जाव ट्ठितिरसघाता परिसमप्पन्ति ताव गुणसेढी । तस्स गुणसेढीकालस्स परिमाणं भन्नति–'अद्धादुगातिरित्तो'त्ति । अपुव्वकरणद्धातो अणियट्टिअद्धा उपरि विसेसाहिया गुणसेढिअद्धा, 'सेसे सेसे य निक्खेवो'त्ति–पढमसमते जावतितो गुणसेढिकालो सो समते समते हस्सीभवति उदयातो, खीणद्धा सेसे निक्खेवो कीरति । एवं अपुव्वकरणद्धा समत्ता।

(मलय०)—अधुना गुणश्रेणिस्वरूपमाह—'गुणसेढि'त्ति । यत्स्थितिकण्डकं घातयति तन्मध्याद्दलिकं गृहीत्वा उदयसमयादारभ्य प्रतिसमयमसंख्येयगुणनया निक्षिपति । तद्यथा–उदयसमये स्तोकम्, द्वितीयसमयेऽसंख्येयगुणम् ततोऽपि तृतीयसमयेऽसंख्येयगुणं,

[1] पञ्चसंग्रह उपशमनाकरण गा. १५

एवं तावद्वक्तव्यं यावदन्तर्मुहूर्तम्। तच्चान्तर्मुहूर्त्तमपूर्वकरणानिवृत्तिकरणकालात् मनागतिरिक्तं वेदितव्यम्। अक्षरयोजना त्वियं–गुणश्रेण्यां निक्षेपः समये समयेऽसंख्येयगुणनया पूर्वपूर्वसमयापेक्षया उत्तरोत्तरसमये वृद्ध्यात्मकया। सोऽपि च निक्षेपोऽद्धाद्विकातिरिक्तः अपूर्वकरणानिवृत्तिकरणकालाभ्यामभ्यधिकः। एष प्रथमसमयगृहीतदलिकनिक्षेपविधिः। एवं द्वितीयादिसमयगृहीतानामपि दलिकानां निक्षेपविधिर्द्रष्टव्यः। अन्यच्चगुणश्रेणिरचनाय प्रथमसमये दलिकं यद्गृह्यते तत्स्तोकम्, द्वितीयसमयेऽसंख्येयगुणम्, ततोऽपि तृतीयसमयेऽसंख्येयगुणम्, एवं तावद्वाच्यं यावद्गुणश्रेणिकरणचरमसमयः। तथाऽपूर्वकरणसमयेषु अनिवृत्तिकरणसमयेषु चानुभवतः क्रमशः क्षीयमाणेषु सत्सु गुणश्रेणिदलिकनिक्षेपः शेषे शेषे भवति, उपरि च न वर्धते ॥१८॥



(उ०)—अधुना गुणश्रेणिस्वरूपमाह- यत्स्थितिकण्डकं घातयति तन्मध्याद्दलिकं गृहीत्वोदयसमयादारभ्यान्तर्मुहूर्त्तचरमसमयं यावत्प्रतिसमयमसंख्येयगुणनया निक्षिपति। उक्तं च- "उवरिल्लठिइहिंतो घित्तूणं पुग्गले उ सो खिवइ। उदयसमयम्मि थोवे तत्तो अ असंखगुणिए उ ॥१॥ बीयम्मि खिवइ समए तइए तत्तो असंखगुणिए उ। एवं समए समए अन्तमुहुत्तं तु जा पुन्नं ॥२॥" एष प्रथमसमयगृहीतदलिकनिक्षेपविधिः। एवमेव द्वितीयादिसमयगृहीतानामपि दलिकानां निक्षेपविधिर्द्रष्टव्यः। किंच–गुणश्रेणिरचनाय प्रथमसमयादारभ्य गुणश्रेणिचरमसमयं यावद्गृह्यमाणं दलिकं यथोत्तरमसंख्येयगुणं द्रष्टव्यम्। उक्तं च–"दलियं तु गिण्हमाणो पढमे समयम्मि थोवयं गिण्हे। उवरिल्लठिइहिंतो बियम्मि असंखगुणियं तु ॥१॥ गिण्हइ समए दलियं तइए समए असंखगुणियं तु। एवं समए समए जा चरिमो अन्तसमओ त्ति ॥२॥" इहान्तर्मुहूर्त्तप्रमाणो निक्षेपकालो दलरचनारूपगुणश्रेणिकालश्चापूर्वकरणानिवृत्तिकरणाद्धाद्विकात् किञ्चिदधिको द्रष्टव्यः, तावत्कालमध्ये चाधस्तनाधस्तनोदयक्षणे वेदनतः क्षीणे शेषक्षणेषु दलिकं रचयति, न पुनरु-

॥ उदयवतीनां स्थितिघातेनानुभागघातेन चावतारितदलिकानां गुणश्रेणिचित्रकम् ॥



उदयावलिका अन्तर्मुहूर्त्तम्

अपवर्त्तनया घात्यमानस्थितिकंडकस्य प्रक्षेपविषयः ( घात्यमानानुभागकंडकस्यापि प्रक्षेपविषयः )

पर्वं त्रिचरिमादीन्य- उपान्त्यं स्थि०कंडकं घात्यमानं स्थि०
प्यग्रे वाच्यानि अनु०कंडकं वा कंडकं अन्तिमं

{ उ० सागरशतप्रमाणं ज० पल्यसंख्येयभागं ( दलिकोत्किरणा प्रतिसमयमसंख्येयगुणा ) घात्यमानमनुभागस्पर्धकस्य कंडकं च

॥ अनुदयवतीनां स्थितिघातेनानुभागघातेन वावतारितस्य चरमस्थितिखण्डसत्कदलिकस्य गुणश्रेणिचित्रकम् ॥

उदयावलिकाया उपरितनसमयादारभ्य दलिकं प्रतिसमयमसंख्येयगुणतयाऽनुभागमनन्तगुणतया संक्रामति



उदयावलिका

अन्तर्मुहूर्तम् अपवर्तनया घात्यमानस्थितिकण्डकस्यानुभागकण्डकस्य वा प्रक्षेपविषयः

चतुश्चरमं स्थितिखण्डं अनुभागकण्डकं वा

त्रिचरमं स्थितिखण्डं अनुभागकण्डकं वा

द्विचरमं स्थितिखण्डं अनुभागकण्डकं वा

एवं शेषखण्डानामपि द्रष्टव्यम्

घात्यमानं चरमं स्थितिखण्डं उत्कृष्टत सागरोपमशतप्रमाणं जघन्यतः पल्योपमसंख्येयभागं प्रतिसमयं दलिकोत्किरणमसंख्येयगुणम् । अनुभागस्पर्द्धकान्यनन्तभागप्रमाणानि मुक्त्वा शेषाणि घातयति.

परि गुणश्रेणिं वर्धयति। उक्तं च-"सेढीइ कालमाणं दुण्ण य करणाण समहियं जाण। खिज्जइ सा उदयणं जं सेसं तम्मि णिक्खेवो"॥ ति, सूत्रगाथाक्षरयोजना त्वियम्-गुणश्रेण्यां निक्षेपः समये समयेऽसंख्येयगुणनया पूर्वपूर्वसमयापेक्षयोत्तरोत्तरसमये वृद्ध्यात्मकया, सोऽपि च निक्षेपोऽद्धाद्विकातिरिक्तः अपूर्वकरणानिवृत्तिकरणकालाभ्यां मनागधिककालमानः, तथाऽपूर्वकरणानिवृत्तिकरणसमयेष्वनुभवतः क्रमशः क्षीयमाणेषु सत्सु गुणश्रेणिदलिकनिक्षेपः शेपे शेपे भवत्युपरि च न वर्धते ॥१५॥

इयाणि अणियट्टिकरणद्धा भण्णइ—

**अनियट्टिम्मि वि एवं तुल्ले काले समा तओ नामं। संखिज्जइमे सेसे भिन्नमुहुत्तं अहो मुच्चा ॥१६॥**
**किंचूणमुहुत्तसमं ठिइबन्धद्धाए अन्तरं किच्चा। आवलिदुगेक्कसेसे आगाल उदीरणा समिया ॥१७॥**

(चू०)—'अणियट्टिम्मि वि एवं'ति-अणियट्टिकरणमवि एवं चेव जहा ट्ठितिघायरसघायट्ठितिवन्धगद्धागुणसेढी य जहा अपुव्वकरणपढमसमते पव्वत्ता तहा अणियट्टिकरणेवि एए चत्तारि वि जुगवं आढवेति। ततो आढत्तं जहा अपुव्वकरणद्धाते भणियं तहा एत्थ वि सव्वं भाणियव्वं।'तुल्ले काले समा तओ णामं'ति। 'तुल्ले'काले सम'त्ति-पढमसमयाति तुल्ले काले समा सरिसा विसोहीते ततो नामं अणियट्टित्ति। किं भन्नति-पढमसमते अणियट्टिकरणं जत्तिया पट्टिवन्ना सव्वे परिणामादीहिं तुल्ला। एवं वितियसमयातिसु वट्टमाणा सरिसा अन्नोन्नं नातिवत्तन्ति परिणामविसोहिमादीहिं तेण अणियट्टी ते(ए)वं अणियट्टिकरणा ट्ठितिखण्डगसहस्साणि गयाणि

णेगाणि, ततो अणिअट्टिअद्धाए संखेज्जेसु भागेसु 'संखेज्जतिमे सेसे'त्ति–संखेज्जतिभागावसेसाते अणियट्टिअद्धाते एवं अंतरकरणं करेति, भिन्नमुहुत्तं अहो मुचति–मिच्छत्तस्स ट्ठितिं अन्तोमुहूत्तं हेट्ठतो ठविय ततो उवरिं 'किंचूणमुहूत्तसमं'ति–किंचूणमुहूत्तप्पमाणं अंतरं करेति। 'ट्ठितिबन्धद्धाते अंतरं किच'ति–अंतरकरणआढवणकालसमते जहन्नं ट्ठितिबंध आढवेति मिच्छत्तस्स, सो य ट्ठितिबन्धो अंतरकरणकालो य जुगवं समप्पतित्ति भणियं होति। अंतरकरेमाणे अणियट्टि(ट्टी)गुणसेढीनिक्खेवस्स अग्गग्गातो असंखेज्जतिभागं खण्डेति। ततु(त्तू)क्किरिज्जमाणं दलियं पढमट्ठितीते बितियट्ठितिते य छुभति। एवं अंतरकरणं कयं भवति। ततो पभितिं उवसामगो लभति। मिच्छत्तस्स ततो पढमठितीतो जं एति सा उदीरणा वुचति, जं बितीय ठितीतो आणेउ पोग्गले छुभति तस्स आगालत्ति संण्णा, तेण विहिणा अंतोमुहुत्तो दुगावलिगूणो गतो। 'आवलिदुक्केक्कसेसे आगाल उदीरणा समिय'त्ति–पढमट्ठीतीते दुआवलियसेसाते आगालो फिट्टति, एगावलियसेसाते उदीरणा। ततो उदतेण व मिच्छत्तं आवलियामेत्तं वेतेति, ताहे मिच्छत्तस्स उदतो फिट्टति ॥१६–१७॥

(मलय०)—सम्प्रत्यनिवृत्तिकरणस्वरूपमाह–'अनियट्टिम्मि'त्ति। यथाऽपूर्वकरणप्रथमसमयादारभ्य स्थितिघातादयो युगपत्प्रवर्तमाना उक्ता एवमनिवृत्तिकरणेऽपि वक्तव्याः। 'तुल्ले काले समा तओ नाम'ति–तुल्ये समाने काले यतः समा सर्वेषामपि तत्प्रविष्टानां विशोधिर्भवति, न विषमा, ततो नाम सान्वयं निर्वचनीयमनिवृत्तिकरणमिति। एतदुक्तं भवति–अनिवृत्तिकरणस्य प्रथमसमये ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते तेषां सर्वेषामपि समा एकरूपा विशोधिः। द्वितीयसमयेऽपि च ये वर्तन्ते ये च वृत्ता ये च वर्तिष्य-

न्ते तेषामपि सर्वेषां परस्परं समा विशोधिः, नवरं प्रथमसमयभाविविशोध्यपेक्षयाऽनन्तगुणा। एवं तावद्वक्तव्यं यावदनिवृत्तिकरणचरमसमयः। तत एवमस्मिन् करणे प्रविष्टानां तुल्यकालानामसुमतां परस्परमध्यवसानानां या निवृत्तिर्व्यावृत्तिः सा न विद्यत इत्यनिवृत्तिकरणमिति नाम। अस्मिंश्चानिवृत्तिकरणे यावन्तः समयास्तावन्ति अध्यवसायस्थानानि पूर्वस्मात् पूर्वस्मादनन्तगुणवृद्धानि भवन्ति। 'संखिज्ज' इत्यादि। अनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु एकस्मिंश्च भागे संख्येयतमे शेषे तिष्ठति अन्तर्मुहूर्तमात्रमधो मुक्त्वा मिथ्यात्वस्यान्तरकरणं करोति। अन्तरकरणकालश्चान्तर्मुहूर्तप्रमाणः प्रथमस्थितेः किञ्चिन्न्यूनोऽभिनवस्थितिबन्धाद्धया समः। तथाहि—अन्तरकरणप्रथमसमये एवान्यं स्थितिबन्धं मिथ्यात्वस्यारभते। स्थितिबन्धान्तरकरणे च युगपदेव परिसमापयति। अन्तरकरणे च क्रियमाणे गुणश्रेणेः संख्येयतमं भागमन्तरकरणदलिकेन सहोत्किरति, उत्कीर्यमाणं च दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति। अन्तरकरणाचाधस्तनी स्थितिः प्रथमा स्थितिरित्युच्यते, उपरितनी तु द्वितीया। प्रथमस्थितौ च वर्तमान उदीरणाप्रयोगेण प्रथमस्थितिगतं दलिकं समाकृष्योदयसमये प्रक्षिपति सा उदीरणा। यत्पुनः द्वितीयस्थितेः सकाशादुदीरणाप्रयोगेण समाकृष्योदये प्रक्षिपति स आगाल इति। उदीरणाया एव विशेषप्रतिपत्त्यर्थमिदं द्वितीयं नाम पूर्वसूरिभिरावेदितम्। उदयोदीरणाभ्यां च प्रथमां स्थितिमनुभवन् तावद्गतो यावदावलिकाद्विकं शेषं तिष्ठति। तस्मिंश्च स्थिते आगालो न भवति, किन्तु केवलोदीरणैव। साप्युदीरणा तावद्यावदावलिकाशेषो न भवति। आवलिकायां च शेषीभूतायामुदीरणापि निवर्तते। ततः केवलेनैवोदयेन तामावलिकामनुभवति। तस्यामपि चापगतायामुदयोऽपि मिथ्यात्वस्य विनिवर्तते, तद्दलिकाभावात्। तस्मिंश्चापगते सत्यौपशमिकं सम्यक्त्वमवाप्नोति ॥ १६–१७ ॥

(उ०)—अधुनाऽनिवृत्तिकरणस्वरूपमाह-यथापूर्वकरणप्रथमसमयादारभ्य स्थितिघातादयो युगपत्प्रवर्तमाना उक्ता एवमनिवृत्तिकरणेऽपि वक्तव्याः। तथा तुल्ये समाने काले यतः समा सर्वेषामपि तत्प्रविष्टानां विशोधिर्भवति, न विषमा, ततो नाम सान्वर्थं वक्तव्यमनिवृत्तिकरणमिति। इदमुक्तं भवति-अनिवृत्तिकरणस्य प्रथमसमये ये वृत्ता ये वर्तन्ते ये च वर्तिष्यन्ते तेषां सर्वेषामप्यन्यूनाधिकत्वेन समा विशोधिः, द्वितीयसमयेऽपि वृत्तवर्तमानवर्तिष्यमाणानां समा विशोधिः, प्रथमसमयभाविविशोध्यपेक्षया त्वनन्तगुणा, एवमनिवृत्तिकरणचरमसमयं यावद्वाच्यम्। तदेवमस्मिन् करणे प्रविष्टानां जीवानां तुल्यकालानामध्यवसायानां मिथो निवृत्तिस्तिर्यक्षट्स्थानपतितवैषम्यलक्षणा नास्तीत्यनिवृत्तकरणमिति नाम। ऊर्ध्वमुखी त्वत्राध्यवसायस्थानानामनन्तगुणवृद्धिः सर्वेषु समयेषु विद्यते। अनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वेकस्मिंश्च संख्येयतमे भागे शेषे तिष्ठति मिथ्यात्वस्यान्तरकरणं करोति, अन्तरकरणं नामोदयक्षणादुपरि मिथ्यात्वस्थितिमन्तर्मुहूर्त्तमानामतिक्रम्योपरितनीं च विष्कम्भयित्वा मध्येऽन्तर्मुहूर्त्तमानं तत्प्रदेशवेद्यदलिकाभावकरणं, तन्निष्पादनकालोऽप्यन्तरकरणकाल एव, यथा तन्तुसंयोजनादिकालः पटकरणकालः, सोऽप्यन्तर्मुहूर्त्तप्रमाणः प्रथमस्थितेः किञ्चिन्न्यूनोऽभिनवस्थितिबन्धाद्धया समानः। तथाहि-प्रथमस्थित्यन्तरकरणे द्वे अप्यन्तर्मुहूर्त्तप्रमाणे युगपदारभते, अन्तरकरणप्रथमसमय एव चान्यं स्थितिबन्धं मिथ्यात्वस्यारभ्य स्थितिबन्धान्तरकरणे युगपदेव परिसमापयति, अन्तरकरणे च क्रियमाणे गुणश्रेणिसम्बन्धिनः संख्येया भागाः प्रथमद्वितीयस्थित्याश्रितास्तिष्ठन्ति, एकं तु गुणश्रेणेः संख्येयतमं भागमन्तरकरणदलिकेन सहोत्किरति विनाशयतीत्यर्थः। तदुत्किरणविधिश्चायम्-यदुतान्तरकरणस्थितेर्मध्याद्दलिकं कर्मपरमाण्वात्मकं गृहीत्वा गृहीत्वा प्रथमस्थितौ प्रक्षिपति, उपरि द्वितीयस्थितौ च, एवं प्रतिसमयं तावत्प्रक्षिपति यावदन्तकरणदलिकं सकलमपि क्षीयते, अन्तर्मुहूर्त्तेन च कालेन सकलतद्दलि-

कश्य इति। इहान्तरकरणादधस्तनी स्थितिः प्रथमा स्थितिरित्युच्यते, उपरितनी तु द्वितीया। तत्र प्रथमस्थितौ वर्तमान उदीरणाप्रयोगेण प्रथमस्थितिसत्कं दलिकं समाकृष्य यदुदयसमये प्रक्षिपति सोदीरणा, यत्तु द्वितीयस्थितेः सकाशादुदीरणाप्रयोगेण समाकृष्योदये प्रक्षिपति तस्या उदीरणाया अप्यागाल इति विशेषप्रतिपत्तये नामान्तरं पूर्वसूरिभिरुच्यते। उदयोदीरणाभ्यां च प्रथमस्थितिमनुभवंस्तावद्गच्छति यावदावलिकाद्विकं शेषं तिष्ठति, तस्मिंश्च स्थिते आगालः शान्तो भवति–निवर्तत इत्यर्थः। ततः परं केवलैवोदीरणा प्रवर्तते, साऽपि तावद्यावदावलिकाशेषो न भवति। तस्यां च शेषीभूतायामुदीरणाऽपि शान्ता भवति। ततः केवलेनैवोदयेन तामावलिकामनुभवति। तस्यामपि चापगतायामुदयोऽपि मिथ्यात्वस्य निवर्तते, तद्दलिकाभावात्, ततो मिथ्यात्वोदयनिवृत्तावुपशमाद्धायां प्रविशति, तस्यां चोपशमाद्धायां प्रविष्टस्य सतः प्रथमसमय एव मोक्षबीजमौपशमिकं सम्यक्त्वमुपजायते। उक्तं च–"आवलिमेत्तं उदएण वेइउं ठाइ उवसमद्धाए। उवसमियं तत्थ भवे सम्मत्तं मोक्खबीयं जं" ॥ इयं चोपशान्ताद्धा परिनिष्ठितान्तरकरणाद्धैव, तदिदमुक्तं अन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमवाप्नोति, मिथ्यात्वदलिकवेदनाभावादिति ॥१६–१७॥

**मिच्छत्तुदए खीणे लहए सम्मत्तमोवसमियं सो लंभेण जस्स लब्भइ आयहियमलद्धपुव्वं जं ॥१८॥**

(चू०)—मिच्छत्तस्स उदते खिट्टे उवसमियं संमत्तं लब्भति। 'लम्भेण जस्स'त्ति–सम्मत्तस्स लंभेण, 'लब्भति आयहियमलद्धपुव्वं जं'ति–आयहियं–सद्दंसणायि(दि) संसारे ण लद्धपुव्वंति ॥१८॥

(मलय०)—'मिच्छत्तुदए'त्ति–मिथ्यात्वस्योदये क्षीणे सति स जीव उक्तेन प्रकारेणौपशमिकं सम्यक्त्वं लभते, 'यस्य'–सम्यक्त्वस्य लाभेन यदात्महितमलब्धपूर्वमर्हदादितत्त्वप्रतिपत्त्यादि तल्लभते। तथाहि–सम्यक्त्वलाभे सति जात्यन्धस्य पुंसश्चक्षुर्लाभे इव

जन्तोर्यथावस्थितवस्तुतत्त्वावलोको भवति, महाव्याध्यभिभूतस्य व्याध्यपगमे इव महांश्च प्रमोदः, तदुक्तं—"जात्यंधस्य यथा पुंसश्चक्षुर्लाभे शुभोदये। सद्दर्शनं तथैवास्य सम्यक्त्वे सति जायते ॥१॥ आनन्दो जायतेऽत्यन्तं तात्त्विकोऽस्य महात्मनः। सद्व्याध्यपगमे यद्वद्व्याधितस्य सदौषधात् ॥२॥" इति ॥१८॥

(उ०)—उक्तमेवार्थं सूत्रकृदाह–मिथ्यात्वस्योदये क्षीणे सति स जीव उक्तेन प्रकारेणौपशमिकं सम्यक्त्वं लभते, यस्य सम्यक्त्वस्य लाभेन यदात्महितमलब्धपूर्वमर्हदादितत्त्वप्रतिपत्त्यादि तल्लभ्यते ॥१८॥

**तं कालं बीयठिइं तिहाणुभागेण देसघाइ त्थ । सम्मत्तं सम्मिस्सं मिच्छत्तं सव्वघाईओ ॥१९॥**



(चू०)—चरिमसमय मिच्छद्दिट्ठी से काले उवसमसम्मदिट्ठि होहित्ति ताहे बितीयट्ठितीते तिहा अणुभागं करेति, तं जहा–सम्मत्तं सम्माभिच्छत्तं मिच्छत्तमिति। 'देसघाइ त्थ सम्मत्तं'ति–सम्मत्तं देसघाति। 'सम्मिस्सं मिच्छत्तं सव्वघाईओ'त्ति–सम्माभिच्छत्तमिच्छत्ताइं दोवि सव्वघातीणि ॥१९॥

(मलय०)—'तं'ति। 'तं कालं'–तस्मिन् काले यतोऽनन्तरसमये औपशमिकसम्यग्दृष्टिर्भविष्यति, तस्मिन् प्रथमस्थितौ चरमसमये इत्यर्थः, मिथ्यादृष्टिः सन् द्वितीयं द्वितीयस्थितिगतं दलिकमनुभागेनानुभागभेदेन त्रिधा करोति। तद्यथा–शुद्धमर्धविशुद्धमविशुद्धं च। तत्र शुद्धं सम्यक्त्वम्, तच्च देशघाति, देशघातिरसोपेतत्वात्। अर्धविशुद्धं सम्यग्मिथ्यात्वम्, तच्च सर्वघाति, सर्वघातिरसोपेतत्वात्। अशुद्धं मिथ्यात्वम्, तदपि सर्वघाति। तथा चाह–'सम्मिश्रं' मिश्रसहितं मिथ्यात्वं सर्वघाति ॥१९॥

(उ०)—तस्मिन् काले यतोऽनन्तरसमये औपशमिकसम्यग्दृष्टिर्भविष्यति तस्मिन् प्रथमस्थितिचरमसमय इत्यर्थः, मिथ्यादृष्टिः सन्

द्वितीयस्थितिगतं दलिकमनुभागभेदेन त्रिधा करोति–शुद्धमर्द्धविशुद्धमविशुद्धं चेति। तत्र शुद्धं सम्यक्त्वं, तच्च देशघाति, देशघातिरसान्वितत्वात्, अर्धविशुद्धं सम्यग्मिथ्यात्वं, अशुद्धं च मिथ्यात्वं, एतदुभयमपि सर्वघाति, सर्वघातिरसान्वितत्वात् । सम्मिस्सं–मिश्रसहितं मिथ्यात्वं सर्वघातीत्यक्षरार्थः ॥ १९ ॥

**पढमे समए थोवो सम्मत्ते मीसए असंखगुणो। अणुसमयमवि य कमसो भिन्नमुहुत्ता हि विज्झाओ ॥२०॥**

(चू०)—उवसमसम्मत्तपढमसमयातो आढत्तं मिच्छत्तं सम्मत्तसम्मामिच्छत्तेसु दोसुवि गुणसंकमेण संकमति। 'पढमे समते थोवो सम्मत्ते मीसगे असंखगुणो'त्ति–पढमसमते घा(जा)व संमत्ते थोवं छुभति, तम्मि चेव समते सम्मामिच्छत्ते असंखेज्जगुणं छुभति। ततो वितियसमए सम्मामिच्छत्तपक्खित्तेहिंतो सम्मत्ते असंखेज्जगुणे पक्खिवति, तम्मि चेव समते संमामिच्छत्ते संमत्तपक्खित्तेहिंतो असंखेज्जगुणे पक्खिवति। 'अणुसमयमवि य कमसो'त्ति–एवं अणुसमयं ति समत्तसमते परिवाडीते असंखेज्जगुणा असंखेज्जगुणा पक्खिवत्ति। 'भिन्नमुहुत्ता हि विज्झाओ'त्ति–ततो अंतोमुहुत्ता हि 'विज्झाउ'त्ति–ततो अन्तोमुहुत्ते गए पच्छा विज्झायसंकमो होति, तेण तं दलियं संकामेति ॥२०॥

(मलय०)—'पढमे'त्ति–औपशमिकसम्यक्त्वलाभप्रथमसमयादारभ्य मिथ्यात्वदलिकं गुणसंक्रमेण सम्यक्त्वसम्यग्मिथ्यात्वयोः संक्रमयति । तद्यथा–प्रथमसमये स्तोको दलिकनिक्षेपः सम्यक्त्वे, ततो मिश्रेऽसंख्येयगुणः, ततोऽपि द्वितीये समये सम्यक्त्वेऽसंख्येयगुणः, ततोऽपि तस्मिन्नेव द्वितीये समये सम्यग्मिथ्यात्वेऽसंख्येयगुणः । एवमनुसमयं–प्रतिसमयं क्रमशः–क्रमेण तावद्वक्तव्यं याव-

दन्तर्मुहूर्त्तं, ततः परं विध्यातसंक्रमः प्रागभिहितस्वरूपः प्रवर्तते ॥२०॥

(उ०)—औपशमिकसम्यक्त्वलाभप्रथमसमयादारभ्य मिथ्यात्वदलिकं सम्यक्त्वसम्यग्मिथ्यात्वयोः संक्रमयति। तद्विधिश्चायम्—प्रथमे समये स्तोको दलिकनिक्षेपः सम्यक्त्वे, ततो मिश्रेऽसंख्येयगुणः, ततोऽपि द्वितीयसमये सम्यक्त्वेऽसंख्येयगुणः, ततोऽपि तस्मिन्नेव द्वीतीयसमये सम्यग्मिथ्यात्वेऽसंख्येयगुणः। एवमनुसमयं क्रमशः—क्रमेण तावद्वाच्यं यावदन्तर्मुहूर्त्तम्। एष च संक्रमोऽन्तरकरणस्थितेनौपशमिकसम्यक्त्वलक्षणप्रशस्तगुणान्वितेन क्रियत इति गुणसंक्रम उच्यते। तथा चोक्तम्—"गुणसंकमेण पसो संकमो होई सम्ममीसेसु। अंतरकरणम्मि ठिओ कुणइ जओ सप्पसत्थगुणो" भिन्नमुहूर्ताद्गुणसंक्रमसम्बन्धिनश्च पुरतो विध्यातसंक्रमो प्रवर्तते॥

**ठिइरसघाओ गुणसेढी विय तावं पि आउवज्जाणं। पढमठिइए एगदुगावलिसेसम्मि मिच्छत्ते ॥२१॥**

(चू०)—'ठिइरसघातो गुणसेढी वि य तावंति आउवज्जाणं' ति—जाव गुणसंकमो ताव आउवज्जाणं सत्तण्हं कम्माणं ठितिघातो रसघातो गुणसेढी अ अत्थि परओ नत्थि। 'पढमठिइए एगदुगावलियसेसम्मि मिच्छत्ते' ति—मिच्छत्तस्स पढमट्ठिती जाव एगावलिसेसा ताव ठितिघातो रसघातो य अत्थि परउ नत्थि। पढमट्ठिती जाव दुगावलियसेसा ताव मिच्छत्तस्स गुणसेढी अत्थि परतो दुसु आवलियासु गुणसेढी णत्थि। एवं उवसमदिट्ठी अंतोमुहुत्तं होति। ॥२१॥

(मलय०)—'ठिइ' त्ति। यावद्गुणसंक्रमस्तावदायुर्वर्जानां सप्तानां कर्मणां स्थितिघातो रसघातो गुणश्रेणिर्वा प्रवर्तते। गुणसंक्रमे च निवर्तमाने ता अपि निवर्तन्ते। मिथ्यात्वस्य पुनः प्रथमस्थितौ यावदेका आवलिका शेषा न भवति तावन्मिथ्यात्वस्य स्थितिघात-

रसघातौ भवतः। आवलिकायां तु शेषीभूतायां तौ निवृत्तौ। यावच्च प्रथमस्थितौ द्वे आवलिके शेषे न भवतस्तावद्गुणश्रेणिरपि मिथ्यात्वस्य प्रावर्तिष्ट, आवलिकाद्विके तु शेषीभूते गुणश्रेणिर्निवृत्ता। तदेवमन्तरकरणे प्रविष्टः सन् प्रथमसमयादारभ्य औपशमिकसम्यग्दृष्टिस्तावदभूत् यावदन्तर्मुहूर्त्तम् ॥२१॥

(उ०)—यावद्गुणसंक्रमस्तावदायुर्वर्जानां सप्तानां कर्मणां स्थितिघातो रसघातो गुणश्रेणिरपि च प्रवर्तते। गुणसंक्रमे च निवर्तमाने स्थितिघातरसघातगुणश्रेणयोऽपि निवर्तन्ते। मिथ्यात्वस्य तु प्रथमस्थितौ यावदेकावलिका शेषा न भवति तावत् स्थितिघातरसघातौ भवतः। आवलिकायां तु शेषीभूतायां स्थितौ तौ निवर्तेते। यावच्च प्रथमस्थितावावलिके शेषे न भवतः तावन्मिथ्यात्वस्य गुणश्रेणिरपि प्रवर्त्तते, आवलिकाद्विके तु शेषीभूते गुणश्रेणिर्निवर्तते, तदेवमन्तरकरणे प्रविष्टः सन् प्रथमसमयादारभ्यौपशमिकसम्यग्दृष्टिस्तावदभूद्यावदन्तर्मुहूर्त्तम् ॥२१॥

इयाणिं अन्तरकरणअंतपत्तस्स विही भण्णति—

उवसंतद्धा अंते विहिणा ओकड्ढियस्स दलियस्स। अज्झवसाणणुरूवस्सुदओ तिसु एक्कयरयस्स ॥२२॥

(चू०)—उवसमसम्मत्तअद्धाते अंते सातिरेगावलियसेसे वट्टमाणो तिण्ह वि कम्माणं बितीयावलीयट्ठितीतो दलितं अंतरकरणअद्धाते आवलियं पवेसेइ। तं जहा–आवलियाते पढमसमते बहुं देति, बितियसमते थोवं, ततिते थोवतरं एवं जाव आवलिय पुन्ना, एतेण विहिणा तोकड्ढिय उदयावलियस्स दलियस्स अज्झवसाणाणुरूवस्स उदओ 'तिसु एक्कयरयस्स' त्ति–विसुद्धेणं अज्झवसाणेणं सम्मत्तं पडिवज्जति, अविसुद्धेण मिच्छं पडिवज्जति,

**मज्झिम उ परिणामेणं संमामिच्छत्तं पडिवज्जति ॥२२॥**

(मलय०)—ततः सम्प्रति यत्करोति तदाह—'उवसंतद्ध'त्ति—औपशमिकसम्यक्त्वाद्धाया 'अन्ते' पर्यन्ते किञ्चित्समधिकावलिकाशेषे वर्तमानस्त्रयाणामपि द्वितीयस्थितिगतानां सम्यक्त्वादिपुञ्जानां दलिकमध्यवसायविशेषेण समाकृष्यान्तरकरणपर्यन्तावलिकायां प्रक्षिपति । तत्र प्रथमसमये प्रभूतम्, द्वितीयसमये स्तोकम्, तृतीयसमये स्तोकतरम्, एवं तावद्वाच्यं यावदावलिकाचरमसमयः । तानि चैवं दलिकानि निक्षिप्यमाणानि गोपुच्छसंस्थानसंस्थितानि भवन्ति । तत आवलिकामात्रे कालेऽन्तरकरणस्य शेषे अमीषां त्रयाणामेकतरस्य दलिकस्योदयो भवति । किंविशिष्टस्येत्याह—अध्यवसायानुरूपस्य । एतदुक्तं भवति—यदि तदानीं शुभः परिणामस्तर्हि सम्यक्त्वदलिकस्योदयः, मध्यमश्चेत्परिणामस्तर्हि सम्यग्मिथ्यात्वदलिकस्य, जघन्यश्चेत्ततो मिथ्यात्वदलिकस्येति ॥२२॥



(उ०)—अथ तदन्ते यत्करोति तदाह—औपशमिकसम्यक्त्वाद्धाया अन्ते—पर्यन्ते किञ्चित्समधिकावलिकाशेषे वर्तमानस्त्रयाणामपि द्वितीयस्थितिगतानां सम्यक्त्वादिपुञ्जानां दलिकमध्यवसायविशेषेण समाकृष्यान्तरकरणपर्यन्तावलिकायां प्रक्षिपति । तत्र प्रथमसमये प्रभूतं, द्वितीयसमये स्तोकं, तृतीयसमये स्तोकतरं, एवं तावद्वाच्यं यावदावलिकाचरमसमयः । तानि चैवं प्रक्षिप्यमाणानि दलिकानि गोपुच्छसंस्थानसंस्थितानि भवन्ति। तत आवलिकामात्रे कालेऽन्तरकरणस्य शेषे सति विधिनाऽनुपदोक्तेन 'ओकड्डियस्स त्ति'—अवतारितस्य दलिकस्य सम्यक्त्वादिपुञ्जत्रयाणामेकतरसम्बन्धिन उदयो भवति । किंविशिष्टस्येत्याह—अध्यवसायानुरूपस्य, यदि तदानीं शुभः परिणामस्तदा सम्यक्त्वदलिकस्योदयः, मध्यमश्चेत्तदा सम्यग्मिथ्यात्वदलिकस्य, अशुभश्चेत्तदा मिथ्यात्वदलिकस्येति भावः ॥२२॥

**सम्मत्तपढमलम्भो सव्वोवसमा तहा विगिट्ठो य । छालिगसेसा परं आसाणं कोइ गच्छेज्जा ॥२३॥**

(चू०)—'सम्मत्त'त्ति–उवसमसम्मत्तं तस्स पढमलम्भो सव्वोवसमतो होति, तहा चिकिलिट्ठोय'त्ति दीहो अन्तोमुहुत्तो। 'छावलियसेसाते परं आसाणं कोति गच्छेज्ज'त्ति–उवसंमत्तद्धातो पडमाणो छावलिगसेसाए उवसमसंमत्तद्धाते परंति उक्कोसाते, जहन्नेण एगसमयसेसाए उवसमसंमत्तद्धाए सासायणसम्मत्तं कोति गच्छेज्जा, णो मव्वे गच्छेज्जा। जो सासायणत्तं जाति सो णियमा मिच्छत्तं जाति ॥२३॥

(मलय०)—'सम्मत्त'त्ति–एष औपशमिकसम्यक्त्वप्रथमलाभो मिथ्यात्वस्य सर्वोपशमाद् भवति, नान्यथा। तथा प्रथमस्थित्यपेक्षया विप्रकर्षश्च–बृहत्तरान्तर्मुहूर्तकालप्रमाणश्च एष सम्यक्त्वप्रथमलाभः। अस्मिंश्च सम्यक्त्वे लभ्यमाने सति कश्चित्सम्यक्त्वेन समं देशविरतिं सर्वविरतिं वा प्रतिपद्यते। उक्तं च शतकबृहच्चूर्णौ–"उवसमसंमद्दिट्ठी अन्तरकरणे ठिओ कोई देसविरयं पि लभेइ, कोई पमत्तापमत्तभावं पि, सासायणो पुण न किं पि लहेइ त्ति"। एतत्सम्यक्त्वाद्धायां च जघन्यतः समयशेषायां 'परं'–उत्कर्षतः षडावलिकाशेषायां कश्चित् आसादनं सासादनत्वं याति। स च नियमात्तदनन्तरं मिथ्यात्वमेव प्रतिपद्यते ॥२३॥

(उ०)—एष औपशमिकसम्यक्त्वप्रथमलाभो मोहनीयस्य सर्वोपशमाद्भवति, नान्यथा। तथा प्रथमस्थित्यपेक्षया विप्रकृष्टः, बृहत्तरान्तर्मुहूर्तकालप्रमाणश्च। अस्मिंश्च सम्यक्त्वे लभ्यमाने कश्चित्सम्यक्त्वेन समं देशविरतिं सर्वविरतिं वा प्रतिपद्यते। आह च शतकचूर्णिकृत्–"उवसमसम्मद्दिट्ठी अन्तरकरणे ठिओ कोई देसविरइं पि लभेइ, कोई पमत्तापमत्तभावं पि, सासायणो पुण ण किं पि लभेइ त्ति"। अस्यां च सम्यक्त्वाद्धायां जघन्यतः समयमात्रशेषायामुत्कर्षतः षडावलिकाशेषायां कश्चिदासादनं गच्छेत्सासादनभावं प्रतिपद्येत। तदनन्तरं च नियमान्मिथ्यात्वं प्रतिपद्यते। औपशमिकसम्यग्दृष्टिश्च तावदवगन्तव्यो यावदन्तकरणेऽवतिष्ठते। उक्तं च–'उवसंतदसणो

सो अन्तरकरणे ठिओ जाव" ॥२३॥

**सम्मादिट्ठी नियमा उवइट्ठं पवयणं तु सद्दहइ । सद्दहइ असब्भावं अजाणमाणो गुरुनियोगा ॥२४॥**

(चू०)—'**सम्मद्दिट्ठी नियमा**' गाहासिद्धं ॥२४॥

(मलय०)—सम्प्रति सम्यग्दृष्टेः स्वरूपमाह–'सम्मद्दिट्ठि' त्ति । सम्यग्दृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमात् यथावत् श्रद्धत्ते एव तुरेवकारार्थो भिन्नक्रमश्च । यः पुनः सम्यग्दृष्टिरपि 'असब्भावं' असद्भूतं प्रवचनं श्रद्दधाति सोऽवश्यमजानन्–स्वयं सम्यक्परिज्ञान-विकलः सन्, यद्वा गुरोस्तथाविधसम्यक्परिज्ञानविकलस्य मिथ्यादृष्टेर्वा जमालिप्रख्यस्य नियोगादाज्ञापारतन्त्र्यात्, नान्यथा ॥२४॥

(उ०)—अथ सम्यग्दृष्टिस्वरूपमाह–सम्यग्दृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमाद्यथावत् श्रद्धत्त एव तुरेवकारार्थो भिन्नक्रमश्च । यः पुनः सम्यग्दृष्टिरप्यसद्भावमसद्भूतं प्रवचनं श्रद्धाति सोऽवश्यमजानन् स्वयं परिज्ञानविकलः सन् यद्वा गुरोस्तथाविधसम्यक्परिज्ञानविकलस्य मिथ्यादृष्टेर्वा जमालिप्रख्यस्य नियोगादाज्ञापारतन्त्र्यात्, नान्यथा । अत्र च साहजिकमज्ञानं ज्ञानावरणविपाकोदय-सान्निध्यमात्रादुपजायमानं न सम्यक्त्वप्रतिबन्धकम् । गुरुनियोगजनितं तु मध्यस्थस्य विनेयस्य नानामतदर्शिनो मिथ्यात्वप्रदेशोदय-महिम्ना विप्रतिपत्त्युपनीतप्रवचनार्थसंशयरूपं सम्यक्त्वप्रतिबन्धाभिमुखमपि तमेव सच्चमित्याद्यालम्बनरूपोत्तेजकप्रभावान्न सम्यक्त्वं प्रतिबद्धुमलम्, इत्यज्ञानाद्गुरुनियोगाद्वाऽसद्भूतार्थश्रद्धानेऽपि भावतो जिनाज्ञाप्रामाण्याभ्युपगन्तुर्न शुभात्मपरिणामरूपसम्यक्त्वोपघात इति भावनीयम् । एतेन यदुच्यते केनचित् परपक्षनिश्रितस्य सर्वथा सम्यक्त्वं न भवत्येवेति तदपास्तं द्रष्टव्यं, अनभिनिविष्टस्य मिथ्या-दृष्टिनिश्रयाऽपि तदुपनीतासद्भूतार्थश्रद्धानस्यास्वारसिकत्वेन स्वारसिकजिनवचनश्रद्धानाविरोधित्वात् । अभिनिविष्टस्य तु स्वपक्षपति-

गुस्य परपक्षपतितस्य वा मिथ्यादृष्टित्वानपायादित्यलं प्रपञ्चेन ॥२४॥

**मिच्छद्दिट्ठी नियमा उवइट्ठं पवयणं न सद्दहइ । सद्दहइ असब्भावं उवइट्ठं वा अणुवइट्ठं ॥२५॥**

(मलय०)—मिथ्यादृष्टेः स्वरूपमाह–'मिच्छद्दिट्ठी'त्ति। मिथ्यादृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमात् 'न श्रद्धत्ते'–न सम्यग्भावेनात्मनि परिणमयति, श्रद्धत्ते चेत् उपदिष्टमनुपदिष्टं वा प्रवचनं तर्हि 'असद्भूतं' मिथ्यारूपमित्यर्थः श्रद्धत्ते, न सम्यग्यथावदिति।

(उ०)—मिथ्यादृष्टेः स्वरूपमाह—मिथ्यादृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमान्न श्रद्धत्ते–इदं तत्त्वमित्यात्मनि न सम्यक् परिणमयति, किं तूपदिष्टमनुपदिष्टं वा प्रवचनमसद्भूतं विपरीतार्थं श्रद्धत्ते, एकस्मिन्नपि प्रवचनार्थेऽभिनिवेशेनासद्भूतश्रद्धाने तदितरसकलसद्भूतार्थश्रद्धानस्याप्यश्रद्धानकल्पत्वात्। यत्त्वभिन्नसूत्रार्थचारिणो बहोरज्ञानतपसि पतनं स्वल्पस्य च मार्गानुसारित्वमुद्घुष्यते तदगीतार्थस्य गीतार्थानिश्रितस्यानभिनिवेशे सति फलमधिकृत्येति ध्येयम् ॥ २५ ॥

**सम्मामिच्छद्दिट्ठी सागारे वा तहा अणागारे । अह वंजणोग्गहम्मि य सागारे होइ नायव्वो ॥२६॥**

(चू०)—सम्मामिच्छद्दिट्ठी सागारे वा अणागारे वा उवओगे भवति। 'अह वंजणोग्गहम्मि उ'त्ति–जति सागारे होति वंजणोग्गहो होइ ण अत्थोग्गहो होइ। जम्हा संसयनाणी अव्वत्तनाणी वुच्चति ॥२६॥

(मलय०)—'सम्मामिच्छद्दिट्ठि'त्ति–सम्यग्मिथ्यादृष्टिरुपयोगे चिन्त्यमानः साकारोपयोगे वा भवति, अनाकारोपयोगे वा। यदि साकारोपयोगे तर्हि व्यञ्जनावग्रह एव व्यावहारिकेऽव्यक्तज्ञानरूपे भवति, नार्थावग्रहे। यस्मात्संशयज्ञानिप्ररूपो जिनप्रवचनानुरागवि-

द्वेषविकलः सम्यग्मिथ्यादृष्टिर्वर्ण्यते, न सम्यग्निश्चयज्ञानी । संशयज्ञानिप्रख्यता च व्यञ्जनावग्रह एवेति ॥२६॥

(उ०)—सम्यग्मिथ्यादृष्टिस्वरूपमाह—सम्यग्मिथ्यादृष्टिरुपयोगे चिन्त्यमानः साकारोपयोगे वा भवत्यनाकारोपयोगे वा। अथशब्दो यद्यर्थः । ततश्च यदि साकारोपयोगे तर्हि व्यञ्जनावग्रह एव व्यावहारिकेऽव्यक्तज्ञानरूपे ज्ञातव्यः, नार्थावग्रहे । यतः संशयज्ञानिप्रख्यो जिनवचनरुचिद्वेषविकलः सम्यग्मिथ्यादृष्टिर्वर्ण्यते, न सम्यग्निश्चयज्ञानी, संशयज्ञानप्रख्यतावानध्यवसायरूपव्यञ्जनावग्रह एवेति ।

दंसणमोहस्स उवसामणा भणिया, इयाणिं चरित्तमोहणिज्जस्स उवसामणा भन्नति, उवसामेउं आढवको को ? भण्णति–

देशसर्वविरतिप्राप्तिक्रमः

**वेयगसम्मदिट्ठी चरित्तमोहुवसमाइ चिट्ठंतो । अजऊ देसजई वा विरतो व विसोहिअद्धाए ॥२७॥**

(चू०)—वेयगसम्मदिट्ठी चरित्तमोवहुसमाय 'चेट्ठंतो'त्ति–आढवेति, 'अजतो देसजती वा विरओ व विसोहिअद्धाए'त्ति–सो वेयगसम्मदिट्ठी अविरतो वा देसविरओ वा विरओ वा होज्जा । 'विसोहिअद्धाए'त्ति–तेसिं दो अद्धातो–विसोहीअद्धा संकिलेसअद्धा य, एक्केक्का अन्तोमुहुत्तिया, तत्थ विसोहिअद्धाते वट्टमाणो चरित्तउवसामणाए आढवगो भवति ॥२७॥

(मलय०)—तदेवं कृता सम्यक्त्वोत्पादप्ररूपणा । सम्प्रति चारित्रमोहनीयस्योपशमनाऽभिधीयते, तत्र यश्चारित्रमोहनीयोपशमनामारभते तमाह–'वेयग'त्ति। चारित्रमोहनीयोपशमनाय 'चेट्टते'–यतते, 'वेदकसम्यग्दृष्टिः'-क्षायोपशमिकसम्यग्दृष्टिर्न प्राग्व्यावर्णितौपशमिकसम्यक्त्वयुक्तः । स च यतो विरतः 'देशयतिर्वा'–देशविरतो वा सर्वविरतो वा, एतेषां च प्रत्येकं द्वे द्वे अद्धे भवतः । तद्यथा–

संक्लेशाद्धा विशोध्यद्धा च। तत्र विशोध्यद्धायां वर्तमानश्चारित्रमोहनीयोपशमनाय यतते न संक्लेशाद्धायाम् ॥२७॥

(उ०)—तदेवं कृता सम्यक्त्वोत्पादप्ररूपणा, अथ चारित्रमोहनीयस्योपशमनाऽभिधातव्या। तत्र चारित्रमोहनीयोपशमनाधिकारिणमाह—वेदकसम्यग्दृष्टिः-क्षायोपशमिकसम्यग्दृष्टिश्चारित्रमोहनीयोपशमनाय चेष्टते, न प्रागुक्तस्वरूपौपशमिकसम्यक्त्वयुक्तः। स चायतोऽविरतो, देशयतिर्वा देशविरतो वा, विरतः- सर्वविरतो वा एव च, कदाचित्संक्लेशाद्धायां वर्तन्ते कदाचिच्च विशोध्यद्धायां, तत्र विशोध्यद्धाया वर्तमान एतदन्यतरश्चारित्रमोहनीयोपशमनाय यतते, न संक्लेशाद्धायाम् ॥ २७ ॥

अविरयादीण तिण्ह वि लक्खणं भण्णति—

अन्नाणाणब्भुवगमजयणाहजओ अवज्जविरईए। एगव्वयाइ चरिमो अणुमइमित्तो त्ति देसजई ॥२८॥
अणुमइविरओ य जई दोण्ह वि करणाणि दोण्णि न उ तईयं। पच्छा गुणसेढी सिं तावइया आलिगा उप्पिं॥

(चू०)—'अन्नाणाणब्भुवगमअजयणाहि अजतो' गाहा सिद्धा, तो वि विसेसो भन्नति-वया ण याणति ण गिण्हति ण परिहरति अट्ठभङ्गा। आदिमेसु सत्तसु वट्टमाणो अजतो वुच्चति, चरिमभंगे जतो लब्भति। 'अवज्जविरतीए एगव्वयाइ चरिमो अणुमतिमेत्तोत्ति देसजई'-अवज्जं पापं, पापविरतो व्रती भवति। जहण्णेणं पंचण्ह अणुव्वयाणं अन्नयरं छण्हं भङ्गाणं एगयरेणं एगं गेण्हति, सो एगवती। ततो पभिति दुगातिसंजोगा कायव्वा जाव अन्तिमो अणुमइ। अणुमती तिविहा-पडिसेवणाणुमती पडिसुणणाणुमती संवासाणुमती य। (सयं

देशसर्वविरतिप्राप्तिक्रमः

परेहिं 'वा' कयं पावं पसंसइ सावज्जारंभनिप्फन्नं वा असणादियं भुंजति सो पडिसेवणा अणुमई, पुत्ताईहिं कयं पावं सुणइ सुच्चा अणुमोएइ न पडिसेहेइ सो पडिसुणणाणुमई ) सावज्जसंकिलिट्ठे ममत्तभावो उ संवासाणुमती। उक्कोसेण सावगो संवासाणुमतिं मोत्तूण सेसपावेहिं विरतो। एयं देसविरयस्स लक्खणं। 'अणुमतिविरओ य जती'त्ति–चरिमाणुमतीतो वि विरतो जती भवति। एयं विरयस्स लक्खणं। इयाणिं देसविरतिविरतीणं लंभं दोण्ह वि भणाति–'करणाणि दोण्णि न उ तईयं'ति। दोण्हवि देसविरयविरयाणं देसविरतिविरतित्तं पडिवज्जमाणाणं दोन्नि करणाणि अहापवत्तं अपुव्वकरणं च काऊणं देसविरतिं विरतिं वा पडिवज्जति। 'न उ ततियन्ति'–ततियं अणियट्टिकरणं णत्थि। कहं? भन्नति–देसविरति विरति वा अन्तोमुहुत्तेण लभिहिति ताहे ठितिसंतकम्ममन्तोकोडाकोडिट्ठितीयं करेति, अणुभागसंतकम्मं असुभकम्माणं दुट्ठाणियं करेति अणंतगुणहीणं च, सुभकम्माणं जहा संमत्तुप्पायगस्स तहा भाणितव्वं। ततो अपुव्वकरणं, तंपि तहेव अणूणमणतिरित्तं भाणियव्वं। णवरि गुणसेढि नत्थि। ततो अपुव्वकरणद्धाते समत्ताते से काले पढमसमयदेसविरतो विरतो वा भविस्सति, ताहे अपुव्वं ठितिखंडगं अपुव्वमणुभागखंडगं अपुव्वं ठितिबन्धं च बन्धति। 'पच्छा गुणसेढी सिं'ति–दोहिं वि करणेहि कएहि देसविरतिं वा विरतिं वा पडिवन्नस्स गुणसेढी पवत्तति तावतियं कालं पडुच्च तत्तिया चेव'। 'आवलिगा उप्पिं'ति–उदयावलिगाते उवरि गुणसेढि रतेति असंखेज्जगुणा जाव अंतोमुहुत्तो ताव वड्ढति, एवं ठितिखंडगेसु बहुसु गतेसु ताहे सभावत्थो देसविरतो वा विरओ वा भवति। सभाव-

देसविरयस्स विरयस्स वा ठितिघायरसघाया णत्थि, परिणामपच(या ठिइ)घायरसघाया णत्थि ॥२९॥

(मलय०)—एतेषां चाविरतादीनां त्रयाणामपीदं लक्षणं–'अन्नाण'इत्यादि। तत्र यो व्रतानि न जानाति, न चाभ्युपगच्छति, न तत्पालनाय यतते, सोऽज्ञानानभ्युपगमायतनाभिरविरतः। अत्र च त्रिभिः पदैरष्टौ भङ्गाः। तत्राद्येषु सप्तसु भङ्गेषु नियमादविरतो,यतो व्रतानि गृणाक्षरन्यायेन पालितान्यपि न फलवन्ति भवन्ति किंतु सम्यग्ज्ञानसम्यग्ग्रहणपुरस्सरपालितानि। तत्राद्येषु चतुर्षु सम्यग्ज्ञानाभावः, उत्तरेषु च त्रिषु सम्यग्ग्रहणसम्यक्पालनाभावः, इति आद्येषु सप्तसु भङ्गेषु वर्तमानो नियमादविरतः। चरमे तु भङ्गे वर्तमानो देशविरतो भवति, देशतोऽवद्यस्य पापस्य विरतेर्विरतिसद्भावात्। स चैकव्रतादिः एकव्रतग्राही, द्विव्रतग्राही, एवं तावज्ज्ञेयो यावच्चरमोऽनुमतिमात्रोऽनुमतिमात्रसेवी। शेषं तु पापं सकलमपि तेन प्रत्याख्यातम्। अनुमतिरपि त्रिधा–प्रतिसेवनानुमतिः, प्रतिश्रवणानुमतिः, संवासानुमतिश्च। तत्र यः स्वयं परैर्वा कृतं पापं श्लाघते, सावद्यारम्भोपपन्नं चाऽशनाद्युपभुङ्क्ते, तदा तस्य प्रतिसेवनानुमतिः। यदा तु पुत्रादिभिः कृतं पापं शृणोति, श्रुत्वा चानुमन्यते, न च प्रतिषेधति, तदा प्रतिश्रवणानुमतिः। यदा पुनः सावद्यारम्भप्रवृत्तेषु पुत्रादिषु केवलं ममत्वमात्रयुक्तो भवति, नान्यत् किञ्चित्प्रतिशृणोति श्लाघते वा, तदा संवासानुमतिः। तत्र यः संवासानुमतिमात्रमेव सेवते स चरमो देशविरतः, स चान्यसर्वश्रावकाणां गुणोत्तमः। यः पुनः संवासानुमतेरपि विरतः स यतिरित्युच्यते। कथं पुनर्देशविरतिसर्वविरत्योर्लाभः ? उच्यते–'दोण्ह'इत्यादि। द्वयोरपि देशविरतिसर्वविरत्योः प्रतिपत्तौ द्वे करणे यथाप्रवृत्तकरणापूर्वकरणाख्ये भवतः, न तु तृतीयमनिवृत्तिकरणम्। कथमिति चेत्, उच्यते–इह करणकालात्प्रागप्यन्तर्मुहूर्तं यावत् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रवर्धमानोऽशुभाना कर्मणामनुभागं द्विस्थानकं करोतीत्यादि तदेव वक्तव्यं यावद्यथाप्रवृत्तं करणं, तदपि तथैव वक्तव्यम्, ततोऽपूर्वकरणं तदपि

तथैव । नवरमिह गुणश्रेणिर्न वक्तव्या । अपूर्वकरणाद्धायां च परिसमाप्तायामनन्तरसमये नियमाद्देशविरतिं सर्वविरतिं वा प्रतिपद्यते । ततोऽनिवृत्तिकरणं तृतीयमिति नावाप्यते । इह यद्यविरतः सन् यथोक्ते करणे करोति ततो देशविरतिं सर्वविरतिं वा प्रतिपद्यते । अथ देशविरतस्तर्हि सर्वविरतिमेव । 'पच्छ' इत्यादि–द्वयोः करणयोर्गतयोः सतोः पश्चाद्देशविरतिं सर्वविरतिं वा प्रतिपन्नः सन् उदयावलिकाया उपरि गुणश्रेणिमपि रचयति । तां च तावतीमन्तर्मुहूर्तप्रमाणां प्रतिसमयं दलिकरचनामधिकृत्यासंख्येयगुणवृद्धामारचयति । तथा देशविरतः सर्वविरतो वा स्वप्रतिपत्त्यनन्तरमन्तर्मुहूर्तं कालं यावदवश्यं प्रवर्धमानपरिणामो भवति तत उर्ध्वं त्वनियमः । कोऽपि हि प्रवर्धमानपरिणाम एव भवति, कोऽपि स्वभावस्थः, कोऽपि हीनपरिणामः, तत्र स्वभावस्थे हीनपरिणामे वा देशविरते सर्वविरते वा स्थितिघातरसघातौ न भवतः ॥ २८–२९ ॥

देशसर्वविरतिप्राप्तिक्रमः

(३०)—एतेषां चाविरतादीनां त्रयाणामप्येतल्लक्षणम्–यो व्रतानि न जानाति न चाभ्युपगच्छति नापि तत्पालनाय यतते सोऽज्ञानानभ्युपगमायतनाभिरविरतः । इह ज्ञानग्रहणपालनारूपपदत्रयेणाष्टौ भङ्गाः । स्थापना । तत्राद्येषु सप्तसु भङ्गेषु नियमादविरतो, यतो व्रतानि घुणाक्षरन्यायेन पालितान्यपि न फलवन्ति भवन्ति, किंतु सम्यग्ज्ञानसम्यग्ग्रहणपुरस्सरं पालितानि । केवलं चतुर्ष्वाद्येषु भङ्गेषु सम्यग्ज्ञानाभाव उत्तरेषु च सम्यग्ज्ञानानपायेऽपि सम्यग्ग्रहणसम्यक्पालनाभावः, इति प्रथमेषु सप्तसु भङ्गेषु वर्तमानो नियमादविरतः, चरमे तु भङ्गे वर्तमानोऽवद्यस्य पापस्य विरतेर्देशोपरमाद्देशयतिर्भवति, स चैकव्रतादिरेकव्रतग्राही द्विव्रतग्राहीत्येवं तावद्वाच्यो यावच्चरमोऽनुमतिमात्रः–परिपूर्णद्वादशव्रतधारी प्रत्याख्यातसकलसावद्यकर्मा केवलमनुमतिमात्रप्रतिसेवकः । अनुमतिरपि त्रिविधा–प्रतिसेवनानुमतिः प्रतिश्रवणानुमतिः, संवासानुमतिश्च । तत्र यः स्वयं परैर्वा कृतं पापं श्लाघते सावद्यारम्भनिष्पादितं वाऽशनाद्युपभुङ्क्ते

| | |
|---|---|
| १ न जाणइ, न आदरइ न पालइ, सर्वलोक | ५ जाणइ, न आदरइ न पालइ, श्रेणिकादिक |
| २ न जाणइ, न आदरइ पालइ, तपस्वी | ६ जाणइ, न आदरइ पालइ, अनुत्तरदेव |
| ३ न जाणइ, आदरइ न पालइ पार्श्वस्थ | ७ जाणइ, आदरइ न पालइ, संविग्नपाक्षिक |
| ४ न जाणइ, आदरइ पालइ, अगीतार्थ | ८ जाणइ, आदरइ पालइ, अणुमहाव्रतधारी |

तस्य प्रतिसेवनानुमतिः, यदा तु पुत्रादिभिः कृतं पापं शृणोति श्रुत्वा चानुमन्यते न च प्रतिषेधति तदा प्रतिश्रवणानुमतिः, यदा तु सावद्यारम्भप्रवृत्तेषु पुत्रादिषु केवलं ममत्वमात्रयुक्तो भवति नान्यत्किञ्चित्प्रतिशृणोति श्लाघते वा तदा संवासानुमतिः । तत्र यः संवासानुमतिमात्रमेव सेवते स चरमो देशविरतः, स च सर्वश्रावकाणां मध्ये गुणोत्तमः । यस्तु संवासानुमतेरपि विरतो भवति स यतिरित्युच्यते । कः पुनर्देशविरतिसर्वविरत्योर्लाभक्रमः ? उच्यते—'दोण्ह वी'त्यादि—द्वयोरपि देशविरतिसर्वविरत्योः प्रतिपत्तौ द्वे करणे—यथाप्रवृत्तकरणापूर्वकरणाख्ये भवतः, न तु तृतीयमनिवृत्तिकरणं, यतः करणकालात्प्रागप्यन्तर्मुहूर्त्तं यावत्प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रवर्धमानोऽशुभप्रकृत्यनुभागद्विस्थानकभावकरणादिक्रमेणेह यथाप्रवृत्तकरणं प्राग्वत्करोति, तथैव चापूर्वकरणं नवरमिह गुणश्रेणिर्न वाच्या, अपूर्वकरणाद्धासमाप्त्यनन्तरसमय एव च देशविरतिं सर्वविरतिं वा प्रतिपद्यत इत्यनिवृत्तिकरणस्यावकाश एव नास्तीति । तत्राविरतः सन् करणद्वयं कृत्वा देशविरतिं सर्वविरतिं वा लभते । यदि च देशविरतः सन् करणद्वयं करोति तदा सर्वविरतिमेव । तथा द्वयोः करणयोर्निष्ठितयोः सतोः पश्चाद्देशविरतिं सर्वविरतिं वा प्रतिपन्नः सन्नुदयावलिकाया उपरि गुणश्रेणिमारचयति, तां चानयोस्तावतीमन्तर्मुहूर्तप्रमाणां प्रतिसमयं दलिकरचनापेक्षयाऽसंख्येयगुणवृद्धां विदधाति । कस्मादन्तर्मुहूर्त्तं यावद्गुणश्रेणिमारचयति परतोऽपि नेत्युच्यते—देशविरतः सर्वविरतेर्वा प्रतिपत्त्यनन्तरं देशविरतः सर्वविरतो वाऽन्तर्मुहूर्त्तं कालं यावदवश्यं वर्धमानपरिणामो भवति, तत-

स्तावन्मात्रामेव गुणश्रेणिं विधत्ते, तत ऊर्ध्वं त्वनियमः । तथाहि—कोऽपि वर्धमानपरिणामो भवति, कोऽपि हीयमानपरिणामः, कोऽप्यवस्थितपरिणामः । ततो यदि वर्धमानपरिणामो भवति तत ऊर्ध्वमपि गुणश्रेणिं वर्धमानां करोति, अथ हीयमानपरिणामस्तर्हि हीयमानां, अवस्थितपरिणामश्चेदवस्थितां, स्वभावस्थे हीनपरिणामे वा देशविरते सर्वविरते वा स्थितिघातरसघातौ न भवतः ॥२८-२९॥

**परिणामपच्चयाओ णाभोगगया गया अकरणा उ । गुणसेढी सिं निच्चं परिणामा हाणिवुड्ढिजुया ॥३०॥**

(चू०)—'परिणामपच्चयाओ णाभोगगया गया अकरणा उ'त्ति । जति परिणामपच्चतेणं निग्गतो देसविरतीतो विरतीतो वा पुणो परिणामपच्चयेणं चेव जतो पडिओ तं पडिवज्जमाणस्स णत्थि ठ्ठितिघातो रसघातो वा । अह पुण आभोएणं देसविरतितो विरतीतो वा वि पडिओ आभोएणं मिच्छत्तं गंतु पुणो देसविरतिं वा विरतिं वा पडिवज्जेति अन्तोमुहुत्तेणं वा विगिट्ठेण वा कालेण तस्स पडिवज्जमाणस्स एयाणि चेव करणाणि णियमा काऊण पडिवज्जियव्वं । 'गुणसेढी सिं निच्चं परिणामा हाणिवुड्ढिजुय'त्ति—जाव देसविरतिं वा विरतिं वा ताव गुणसेढीं समते समते करेति, जावतियं खवेति तावतियं उवरिं रएति, 'परिणामवड्ढिहाणिजुत्त'त्ति—विसुज्झन्तो संखेज्जगुणं वा असंखेज्जगुणं वा संखेज्जभागुत्तरं वा असंखेज्जभागुत्तरं वा करेइ, संकिलिस्समाणो एतेणेव कमेण परिहावेइ, अवट्ठियपरिणामस्स तत्तिया चेय गुणसेढी, गहणं पडुच्च दलियनिक्खेवं पडुच्च पूर्ववत्, कालं पडुच्च सव्वकालं तत्तिया चेव ॥३०॥

(मलय०)—परिणाम त्ति । 'परिणामप्रत्ययात्'—परिणामहासात् कारणादित्यर्थः । 'अनाभोगगता'—आभोगरहिता ये देशविरतिपरि-

णामात् सर्वविरतिपरिणामाद्वा 'गताः'-परिभ्रष्टास्ते 'अकरणाः'-करणरहिता एव भूयोऽपि तां पूर्वप्रतिपन्नां देशविरतिं सर्वविरतिं वा प्रतिपद्यन्ते। एतदुक्तं भवति-ये आभोगमन्तरेण कथञ्चित् परिणामह्रासतो देशविरता अविरतिं गताः, सर्वविरताश्च देशविरतिमविरतिं वा गताः, ते परिणामवशेन भूयोऽपि तामेव पूर्वप्रतिपन्नां देशविरतिं सर्वविरतिं वा प्रतिपद्यमाना अकृतकरणा एव प्रतिपद्यन्ते। ये पुनराभोगतो देशविरतेः सर्वविरतेर्वा प्रतिपतिताः, आभोगेनैव च मिथ्यात्वं गताः, ते पुनरपि जघन्यतोऽन्तर्मुहूर्तेन कालेन उत्कर्षतः प्रभूतेन कालेन देशविरतिं सर्वविरतिं वा प्रतिपत्तुकामा उक्तप्रकारेण करणपुरःसरमेव प्रतिपद्यन्ते। तथा यावद्देशविरतिं सर्वविरतिं वा प्रतिपालयति तावद्गुणश्रेणिमपि समये समये करोति। नवरं प्रवर्धमानपरिणामस्तत्तत्परिणामानुसारेण कदाचिदसंख्येयभागाधिकां कदाचित्संख्येयभागाधिकां कदाचित्संख्येयगुणां कदाचिदसंख्येयगुणां करोति। हीयमानपरिणामस्तूक्तप्रकारेण हीयमानां, अवस्थितपरिणामस्तु तावन्मात्रामिति। एषा चैवं दलिकापेक्षया द्रष्टव्या। कालतः पुनः सर्वदापि तावन्मात्रैव। अथच क्रमशोऽनुभवतः क्षीयमाणेषु समयेषूपर्युपरि वर्धत इति ॥ ३० ॥

(३०)—परिणामप्रत्ययात्परिणामह्रासलक्षणकारणादित्यर्थः-अनाभोगेनाभोगाभावेन गता देशविरतिपरिणामात्परिभ्रश्याविरतिं गताः, सर्वविरतिपरिणामाच्च च्युत्वा देशविरतिमविरतिं वा गता भूयोऽपि तामेव प्रागभ्युपगतां देशविरतिं सर्वविरतिं वा प्रतिपद्यमाना अकरणा एवाकृतकरणा एव सन्तः प्रतिपद्यन्ते। ये त्वाभोगतो देशविरतेः सर्वविरतेर्वा प्रतिपतिता आभोगेनैव च मिथ्यात्वं गतास्ते भूयोऽपि जघन्यतोऽन्तर्मुहूर्तेन कालेनोत्कर्षतः प्रभूतेन कालेन देशविरतिं सर्वविरतिं वा प्रतिपत्तुमिच्छव उक्तरीत्या करणपुरस्सरमेव प्रतिपद्यन्ते। किंच यावद्देशविरतिं सर्वविरतिं वा प्रतिपालयन्ति तावदेषां देशविरतानां सर्वविरतानां वा गुणश्रेणिरपि

समये समये प्राप्यते। नवरमत्र परिणामा हानिवृद्धियुता भवन्ति। तथाहि—वर्धमानपरिणामश्चेत्कदाचिदसंख्येयभागाधिकां, कदाचित्संख्येयभागाधिकां, कदाचित्संख्येयगुणां, कदाचिदसंख्येयगुणां प्रतिसमयं गुणश्रेणिं करोति। हीयमानपरिणामश्चेदित्थमेव चतुर्धा हीयमानां, अवस्थितपरिणामस्तु तावन्मात्रामिति। उक्तं च—"परिणामपच्चयणं चउव्विहं हाइ वड्ढए वा वि। परिणामवड्ढियाए गुणसेढि तत्तियं रयइ"। एषा चैवं दलिकापेक्षया द्रष्टव्या। कालतस्तु सर्वदाऽपि तावन्मात्रैव। अथश्च क्रमशोऽनुभवतः क्षीयमाणेषु समयेषूपर्युपरि वर्धत इति ॥ ३० ॥



देसविरतिविरतिलम्भो भणिओ देस(विरय)विरयाणं। इयाणिं अणंताणुबन्धिविसंयोजणा भन्नति। चरित्तुवसमणं काउं कामो जति वेयगसम्मदिट्ठी तो पुव्वं अणंताणुबंधिणो नियमा विसंजोएति। एएण कारणेण विरयाणं अणंताणुबन्धिविसंजोयणा भन्नति। अणंताणुबन्धिणो चउगतिया संमदिट्ठी सेढिमपडिवज्जमाणा अपि केति विसंजोएंति तं दरिसेति—

अनन्तानुबन्धिविसंयोजना

**चउगइया पज्जत्ता तिन्नि वि संयोयणा विजोयंति। करणेहिं तीहिँ सहिया नंतरकरणं उवसमो वा ॥३१॥**

(चू०)—नेरइयतिरियमणुयदेवा सव्वाहिं पज्जतीहिं पज्जत्ता 'तिन्निवि'त्ति—असंजयओ देसविरतो विरतो, असंजयसम्मदिट्ठी सव्वाहिं गतीहिं, देसविरतो तिरियमणुएसु, संजओ मणुएसु, 'संजोयण'त्ति—अणंताणुबन्धिणो, ते चउगतिया पज्जत्ता त्रिप्रकारा वि विणासेंति। 'करणेहिं तिहिं सहिय'त्ति—अहापवत्तअपुव्वकरणअणियट्टिकरणेहिं सहिय विणासेंति, अन्तरकरणं उवसमो वा नत्थि। अणंताणुबन्धीणं विणासणाए जहा पढमसंमत्त

उप्पादेनस्स निण्ह वि करणाण लक्खणं भणियं तहा अणंताणुबन्धिविणासणे वि। णवरि अपुव्वकरणस्स पढमसमते अणंताणुबन्धीणं गुणसंकमो आढवेंति। उव्वल(णाल)क्खणेणं अणियट्टिकरणे वट्टमाणो णिरवसेसे विणासेंति। ततो अणंताणुबंधिविसंजोतिनो अन्तोमुहुत्तेण ठितिघातरसघायगुणसेढी एतेहिं रहितो सभावत्थो होति ॥८१॥

(मलय०)—तदेवमुक्तो देशविरतिसर्वविरतिलाभः। सम्प्रत्यनन्तानुबन्धिनां विसंयोजना भण्यते। अथ चारित्रमोहनीयोपशमनाधिकारे किमर्थमनन्तानुबन्धिनां विसंयोजनाऽभिधीयते? उच्यते—इह यश्चारित्रमोहनीयमुपशमयितुमारभते सोऽवश्यमनन्तानुबन्धिनो विसंयोजयति, तेन तद्विसंयोजना नियमादिह वक्तव्या। तांश्चानन्तानुबन्धिनः श्रेणिमप्रतिपद्यमाना अपि वेदकसम्यग्दृष्टयश्चतुर्गतिका विसंयोजयन्ति। तथा चाह—'चउगइय'त्ति—चतुर्गतिका—नैरयिकतिर्यङ्मनुष्यदेवाः सर्वाभिः पर्याप्तिभिः पर्याप्ताः त्रयोऽपि—अविरतदेशविरतसर्वविरताः। तत्राविरतसम्यग्दृष्टयश्चतुर्गतिकाः, देशविरतास्तिर्यञ्चो मनुष्या वा, सर्वविरता मनुष्या एव, 'संयोजनान्' अनन्तानुबन्धिनो वियोजयन्ति—विनाशयन्ति। किंविशिष्टाः सन्त इत्याह—करणैस्त्रिभिः सहिताः। करणानि प्रागिव वक्तव्यानि। नवरमिहान्तरकरणं न वक्तव्यम्, उपशमो वा। उपशमश्चानन्तानुबन्धिनां न भवतीति गाथाक्षरार्थः। भावनात्वियम्—अनन्तानुबन्धिनः क्षपयितुं यथाप्रवृत्तादीनि त्रीणि करणानि प्रारभन्ते। करणवक्तव्यता च सर्वापि प्रागिवात्रापि वेदितव्या। नवरमिहापूर्वकरणे प्रथमसमयादारभ्यानन्तानुबन्धिनां गुणसंक्रमोऽपि वक्तव्यः। तद्यथा—अपूर्वकरणस्य प्रथमसमयेऽनन्तानुबन्धिनां दलिकं शेषकषायरूपपरप्रकृतौ स्तोकं संक्रमयति, ततो द्वितीयसमयेऽसंख्येयगुणम्, ततोऽपि तृतीयसमयेऽसंख्येयगुणमित्येवं वक्तव्यम्। एष गुणसंक्रमः।

अनिवृत्तिकरणे च प्रविष्टः सन् प्रागुक्तस्वरूपेणोद्वलनासंक्रमेण निरवशेषान् विनाशयति। किन्त्वधस्तादावलिकामात्रं मुञ्चति। तदपि च स्तिवुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति। ततोऽन्तर्मुहूर्तात्परतोऽनिवृत्तिकरणपर्यवसाने शेषकर्मणां स्थितिघातरसघातगुणश्रेणयो न भवन्ति, किन्तु स्वभावस्थ एव भवति ॥३१॥

अनन्तानुबन्धिविसंयोजना

(उ०)—तदेवमुक्तो देशविरतिसर्वविरतिलाभः,अधुनाऽनन्तानुबन्धिनां विसंयोजना प्रतिपाद्यते। अथ चारित्रमोहनीयोपशमनाभिधानेऽधिकृतेऽस्या अभिधानमसङ्गतमिति चेन्न, यश्चारित्रमोहनीयमुपशमयितुमारभते सोऽवश्यमनन्तानुबन्धिनो विसंयोजयतीति तद्विसंयोजनाया इहावश्यवक्तव्यत्वात्। प्रतिज्ञातविधिमेवाह—चतुर्गतिका नैरयिकतिर्यङ्मनुष्यदेवाः पर्याप्ताः सर्वाभिः पर्याप्तिभिः त्रयोऽप्यविरतदेशविरतसर्वविरता अनन्तानुबन्धिनो विसंयोजयन्ति—विनाशयन्ति। तत्राविरतसम्यग्दृष्टयश्चतुर्गतिकाः, देशविरतास्तिर्यङ्मनुष्या एव, सर्वविरतास्तु मनुष्या एव। किंविशिष्टाः सन्तो विसंयोजयन्तीत्याह—करणैस्त्रिभिः सहिताः, करणत्रयवक्तव्यता च यथा सम्यक्त्वोत्पादनाधिकारे प्रोक्ता तथैवेहापि वक्तव्या। नवरमिहान्तरकरणं न वक्तव्यं, तदभावादुपशमोऽपि न वक्तव्यः। वाशब्दोऽप्यर्थः। इत्यक्षरार्थः। भावार्थस्त्वयम्—अनन्तानुबन्धिनां क्षपणाय प्रवृत्तो यथाप्रवृत्तादीनि त्रीणि करणानि प्राग्वत् करोति, नवरमिहापूर्वकरणे प्रथमसमयादेवारभ्यानन्तानुबन्धिनां गुणसंक्रमोऽपि वक्तव्यः। तथाहि—अपूर्वकरणस्य प्रथमसमयेऽनन्तानुबन्धिनां दलिकं शेषकषायरूपपरप्रकृतौ स्तोकं संक्रमयति, ततो द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं तावद्वाच्यं यावदपूर्वकरणचरमसमयः, एष गुणसंक्रमः। एष च प्रथमस्थितिखण्डस्य स्थित्यपेक्षया बृहत्तरस्य द्वितीयादिस्थितिखण्डानां च विशेषविशेषहीनानां यद् घातनं तेन निष्पन्नो य उद्वलनासंक्रमस्तदनुविद्धो द्रष्टव्यः। तदनेनोद्वलनासंक्रमानुविद्धेन गुणसंक्रमेणापूर्वकरणेऽनन्तानुबन्धिनः शेष-

प्रकृतिरूपतास्थापनेन विनाशयति । अनिवृत्तिकरणे च वर्तमानः सन् गुणसंक्रमानुविद्धनोद्वलनासंक्रमेण निरवशेषान् विनाशयति, किं त्वधस्तादावलिकामात्रं मुञ्चति, तदपि च स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति । ततोऽन्तर्मुहूर्तात्परतोऽनिवृत्तिकरणपर्यवसाने शेषकर्मणामपि स्थितिघातरसघातगुणश्रेणयो न भवन्ति, किं तु स्वभावस्थ एव भवति, चतुर्विंशतिसत्कर्मा । तदेवमुक्ताऽनन्तानुबन्धिनां क्षपणा । ये त्वाचार्या अनन्तानुबन्धिनामुपशमनां मन्यन्ते तन्मतेनायमुपशमनाविधिर्द्रष्टव्यः—अविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानामन्यतमोऽनन्तानुबन्ध्युपशमनां चिकीर्षुः प्रागुक्तक्रमेण यथाप्रवृत्तकरणमपूर्वकरणं च करोति। केवलमिहापूर्वकरणे गुणश्रेणिरन्तर्मुहूर्तप्रमाणानां स्थितीनामुपरि याः स्थितयस्तन्मध्याद्दलिकं गृहीत्वोदयावलिकाया उपरितनीषु स्थितिषु प्रतिसमयमसंख्येयगुणनया निक्षेपरूपा द्रष्टव्या, शेषं तथैव । ततोऽनिवृत्तिकरणे प्रविष्टोऽनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वेकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनामधस्तादावलिकामात्रं मुक्त्वाऽन्तर्मुहूर्तप्रमाणमन्तरकरणमभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्तप्रमाणेन कालेन करोति। । अन्तरकरणगतं च दलिकमुत्कीर्यमाणं परप्रकृतिषु बध्यमानासु प्रक्षिपति । प्रथमस्थितिगतं च दलिकमावलिकामात्रं वेद्यमानासु परप्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति । अन्तरकरणे च कृते सति द्वितीयसमयेऽनन्तानुबन्धिनामुपरितनस्थितिदलिकमुपशमयितुमारभते। तद्यथा—प्रथमसमये स्तोकमुपशमयति, द्वितीयसमयेऽसंख्येयगुणं, तृतीयसमयेऽसंख्येयगुणं, एवं तावद्वाच्यं यावदन्तर्मुहूर्तम्। एतावता च कालेन साकल्येनानन्तानुबन्धिन उपशमिता भवन्ति। उपशमिता नाम यथा रेणुनिकरः सलिलबिन्दुनिवहैरभिषिच्याभिषिच्य द्रुघणादिभिर्निकुट्टितो निष्पन्दो भवति तथा कर्मरेणुनिकरोऽपि विशोधिसलिलप्रवाहेण परिषिच्य परिषिच्यानिवृत्तिकरणरूपद्रुघणनिकुट्टितः संक्रमणोदयोदीरणानिधत्तिनिकाचनाकरणानामयोग्यो भवति । तदेवमाचार्यान्तरमतेनानन्तानुबन्धिनामुपशमनाऽप्यभिहिता ॥३१॥

अणंताणुबन्धिविसंजोयणा भणिया, इयाणिं दंसणमोहक्खवणा भण्णइ–

दंसणमोहे वि तहा कयकरणद्धा य पच्छिमे होइ । जिणकालगो मणुस्सो पट्ठवगो अट्ठवासुप्पिं ॥३२॥

(चू०)––'दंसणमोहे वि तह'त्ति–जहा अणंताणुबन्धिविसंजोयणा तहा दंसणमोहक्खवणा वि भाणियव्वा। तहा वि अतिसंखित्तमिति काउं उल्लोतिज्जति–दंसणमोहं खवेंतस्स तिन्नि करणाणि–अहापवत्तकरणं अपुव्वकरणं अणियट्टिकरणं च, अंतरकरणं नत्थि, एएसिं तिण्हं करणाणं लक्खणाणि जारिसाणि दंसणमोहउवसामगस्स तारिसाणि चेव । नवरिं अपुव्वकरणस्स पढमसमए दंसणदुगस्स गुणसंकमो आढवेति, अन्नं च उव्वलणालक्खणेण पढमट्ठितिखण्डगं सव्वमहन्तं, बिइयं विसेसहीणं, ततियं विसेसहीणं, जाव अपुव्वकरणस्स अंतिमट्ठितिखण्डगं विसेसहीणं। अपुव्वकरणद्धाए पढमसमयट्ठितिसंतकम्मातो चरिमसमयट्ठितिसंतकम्मं संखेज्जगुणहीणं। ट्ठितिबन्धो वि पढमसमए बहुगो, अपुव्वकरणचरिमसमते संखेज्जगुणहीणो । पढमसमयअणियट्टिपविट्ठस्स अपुव्वं ट्ठितिखण्डगं अपुव्वं अणुभागखण्डगं अपुव्वो ट्ठितिबन्धो अपुव्वा गुणसेढी । अणियट्टिस्स पढमसमते दंसणमोहणीयं अपसत्थुपसामणणिहत्तणिकायणेहिं अणुपसंतं, सेसाणि कम्माणि उवसंताणि अणुवसन्ताणि य । अणियट्टिपढमसमते दंसणमोहणियस्स ट्ठितिसंतकम्मं खण्डिज्जमाणं खण्डिज्जमाणं असन्निपंचेंदियसंतकम्मट्ठितिसमगं होति। ततो ट्ठितिखंडगपुहुत्ते गते चउरिंदियसंतकंमट्ठितिसमगं होति, ततो तत्तिएहिं चेव ठितिकंडगेहिं गएहिं तेइंदियसंतसमगं, ततो तत्तिएहिं चेव ट्ठितिखंडगेहिं गएहिं बेइंदियसंतसमगं,

दर्शनमोह क्षपणा

एवं एगिंदियसत्तममगं ट्ठिइसंतकम्मं होइ। ततो ट्ठितिखंडगपुहुत्तेणं जायं पलिओवमट्टितियं दंसणमोहणिज्ज-
ट्ठिनिसंतकम्मं, तंमि कए ट्ठितिसंतकम्मस्स संखेज्ज भागा आघायिज्जंति, आघायिज्जंति णाम खंडिज्जंति अहवा
छिज्जंति, एगो सेसो भागो गतो दंसणमोहणिजस्स, ततो ट्ठितिखंडगसहस्साणि, ततो पलिओवमस्स संखेज्जति-
भागे संतकम्मस्स सेसे [ततो ट्ठितिखंडगं] मिच्छत्तस्स ट्ठितिसंतकम्मस्स असंखेज्जभागा आघातिज्जंति
सम्मत्तमीसाणं संखेज्जा चेव आघातिज्जंति, ततो बहुसु ट्ठितिखंडगेसु गएसु मिच्छत्तस्स आवलिगावाहिरं दलियं
सव्वं आघातियं भवति-सम्मत्तसम्मामिच्छत्ते संछुढमित्यर्थः। संमत्तसम्मामिच्छत्ताणं ठितिए पलिओवमस्स
असंखेज्जतिभागो सेसो [मिच्छत्ते पढमसमयसंकंते णिठिए संमत्ते संमाभिच्छत्ताणं असंखेज्जभागातिया भवंति सं-
खेज्जभागिया भवंति जं वुत्तहोति] (खविज्जमाणं मिच्छत्तं संमाभिच्छत्तसंमत्तेसु खिवइ, मिस्सं सम्मत्ते सम्मत्तं सट्ठाणे-
य अहो छुभइ आवलिमेत्तं मिच्छत्तं थीवुगेण सम्मत्ते पखिप्पइ) एवं संखेज्जेहिं सम्मामिच्छत्तठितिखंडगेहिं गएहिं
सम्मामिच्छत्तं आवलीया वाहिरं सव्वं आघातियं भवति। ताहे चेव संमत्तसंतकम्मं अट्ठवासठीइयं होति। ताहे दं-
सणमोहणिजस्स खवगोत्ति भवति, अपत्तापाओ संमत्तस्स अंतोमुहुत्तियं ठितिखडगं करेति। ततो पभिति उवट्टि
ज्जमाणासु ठितीसु जं पदेसग्गं तं उदते सव्वथोवं देति, से काले असंखेज्जगुणे एव जाव गुणसेढी सीसगत्ति ताव
असंखेज्जगुणं असंखेज्जगुणं, एत्तो उवरिल्लाते ठितीते पएसा विसेसहीणा जाव उक्कोसिया ठितित्ति, एवं जाव दुचरि-
मं खंडगंनि सम्मत्तदुचरिमखंडगातो चरिमखंडगं संखेज्जगुणं, चरिमखंडगं आघातिज्जमाणं गुणसेढीए संखेज्जति-

भागो अन्नाओ य उवरि संखेज्जगुणाओ ठितीतो आघातिज्जंति, संमत्तस्स चरिमे ठितिखंडगे पढमसमये आघातिए वट्टिज्जमाणीसु ठितीसु जं पदेसग्गं उदये दिज्जति तं थोवं से काले असंखेज्जगुणं असंखेज्जगुणं जाव ठ्ठितीखंडगस्स पढमसमयं पत्तोत्ति। सा चेव ठ्ठिती गुणसेढीसीसगं जातं। एवं समए समए उक्किरिज्जमाणं दलियं चरिमसमए उक्कड्डमाणो उदए पदेसग्गं थोवं देति, से काले असंखेज्जगुणं जाव गुणसेढीसीसगं। चरिमठ्ठितिखंडगे निठ्ठिए कयकरणिज्जोत्ति भण्णति। 'कयकरणद्धा य पच्छिमे होति'–एवं तिहि वि करणेहि कएहिं पच्छिमे भागे चउगइओ वि होज्जा। कहं? भण्णइ–कयकरणो तंमि काले कालं पि करेज्जा तेण चउगति लब्भति। लेसापरिणामं विपरिणामेज्जा–पुव्वं सुक्कलेसा आसि संपयं अन्नयरीए वि होज्जा। 'जिणकालगों मणूसो पट्ठवगो अट्ठवासुप्पि'ति–खातियसंमत्तं उप्पाएउं को आढवेइ? भण्णइ–जिणकाले वट्टमाणो मणुस्सो अट्ठवासाउओ उप्परिं वट्टमाणो मणुस्सो पट्ठवेंतो, निट्ठवगो चउसु वि गतीसु भवति। भणिया दंसणमोहखवणा एसो, चरित्तमोहस्स उवसामओ वि भवति जइ बद्धाउगो, अह न बद्धाउओ तो खवगसेढिमेव पडिवज्जति जति ण तित्थयरसंतकंमिगो।



(मलय०)—तदेवमुक्ताऽनन्तानुबन्धिनां विसंयोजना। ये त्वाचार्या अनन्तानुबन्धिनामप्युपशमनां मन्यन्ते तन्मतेनोपशमनाविधिः षडशीतिवृत्तेरवसेयः। सम्प्रति दर्शनमोहनीयक्षपणाविधिमाह—'दंसणमोहे वि'त्ति–इह दर्शनमोहनीयक्षपणायाः प्रस्थापकः–आरम्भको मनुष्यो जिनकालको–जिनकालसंभवी। जिनकालश्च ऋषभजिनकालप्रभृतिको जम्बूस्वामिकेवलोत्पत्तिलाभपर्यवसानो वेदितव्यः। तथा वर्षाष्टकस्योपरि वर्तमानो वज्रर्षभनाराचसंहननश्च भवति। दर्शनमोहेऽपि च क्षपणा तथैव वक्तव्या, यथा प्रागनन्तानुब-

न्धिनामुक्ता। तत्र यद्यप्येवं सामान्येनोक्तं तथापि किञ्चिद्विशेषतोऽभिधीयते—इह दर्शनमोहनीयक्षपणार्थमभ्युद्यतस्त्रीणि करणान्यारभते।
तद्यथा—यथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं च। एतानि च त्रीण्यपि करणानि प्रागिव वक्तव्यानि, नवरमपूर्वकरणस्य प्रथमसमये
एवानुदितयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोर्दलिकं गुणसंक्रमेण सम्यक्त्वे प्रक्षिपति। उद्वलनासंक्रममपि तयोरेवमारभते, तद्यथा—प्रथमस्थि-
तिखण्डं बृहत्तरमुद्वलयति, ततो द्वितीयं विशेषहीनम्, ततोऽपि तृतीयं विशेषहीनम्, एवं तावद्वक्तव्यं यावदपूर्वकरणचरमसमयः।
अपूर्वकरणप्रथमसमये च यत् स्थितिसत्कर्मासीत् तत्तस्यैव चरमसमये संख्येयगुणहीनं जातम्। ततोऽनिवृत्तिकरणे प्रविशति। अत्रापि
स्थितिघातादीन् सर्वानपि तथैव करोति। अनिवृत्तिकरणप्रथमसमये च दर्शनत्रिकस्यापि देशोपशमनानिधत्तिनिकाचना व्यवच्छिद्य-
न्ते। दर्शनमोहनीयत्रिकस्य च स्थितिसत्कर्म अनिवृत्तिकरणप्रथमसमयादारभ्य स्थितिघातादिभिर्घात्यमानं स्थितिखण्डसहस्रेषु गते-
ष्वसंज्ञिपञ्चेन्द्रियस्थितिसत्कर्मसमानं भवति। ततः स्थितिखण्डसहस्रपृथक्त्वे गते सति चतुरिन्द्रियस्थितिसत्कर्मसमानं भवति। ततोऽ-
पि तावन्मात्रेषु खण्डेषु त्रीन्द्रियस्थितिसत्कर्मसमानम्। ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु द्वीन्द्रियस्थितिसत्कर्मसमानम्। ततोऽपि
तावन्मात्रेषु खण्डेषु गतेष्वेकेन्द्रियस्थितिसत्कर्मसमानम्। ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु पल्योपममात्रप्रमाणं भवति। एतच्चूर्णिका-
रमतेनोक्तम्। पञ्चसंग्रहकारमतेन तु पल्योपमसंख्येयभागमात्रम्। तदुक्तं पञ्चसंग्रहे—"ठितिखण्डसहस्साइं एक्केक्के अंतरम्मि ग
च्छन्ति। पलिओवमसंखसे दंसणसंते तओ जाए॥१॥ (संखेज्जम)संखेज्जा भागा खण्डे इत्यादि"। 'एकैकस्मिन्नन्तरे' इति असंज्ञि-
पञ्चेन्द्रियचतुरिन्द्रियादिसमानस्थितिसत्कर्मभवनानामपान्तराले इति। तत एकं संख्येयतमं भागं मुक्त्वा शेषं सर्वमपि त्रयाणां दर्श-
नमोहनीयानां विनाशयति। ततस्तस्यापि प्राग्मुक्तसंख्येयभागस्यैकं संख्येयभागं मुक्त्वा शेषान् संख्येयान् भागान् विनाशयति। एवं

दर्शनमोहक्षपणा

स्थितिघाताः सहस्रशो व्रजन्ति । तदनन्तरं च मिथ्यात्वस्यासंख्येयान् भागान् खण्डयति, सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु संख्येयान् भागान् खण्डयति । तत एवं स्थितिखण्डेषु प्रभूतेषु गतेषु सत्सु मिथ्यात्वस्य दलिकमावलिकामात्रं जातम्, सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु पल्योपमासंख्येयभागमात्रम् । अमूनि च स्थितिखण्डानि खण्ड्यमानानि मिथ्यात्वसत्कानि सम्यक्त्वसम्यङ्मिथ्यात्वयोः प्रक्षिपति, सम्यङ्मिथ्यात्वसत्कानि सम्यक्त्वे, सम्यक्त्वसत्कानि त्वधस्तात् स्वस्थाने इति । तदपि च मिथ्यात्वदलिकमावलिकामात्रं स्तिबुकसंक्रमेण सम्यक्त्वे प्रक्षिपति । तदनन्तरं सम्यक्त्वसम्यङ्मिथ्यात्वयोरसंख्येयान् भागान् खण्डयति, एकोऽवशिष्यते'। ततस्तस्याप्यसंख्येयान् भागान् खण्डयति, एकं मुञ्चति । एवं कतिपयेषु स्थितिखण्डेषु गतेषु सम्यङ्मिथ्यात्वमावलिकामात्रं जातम् । तदानीं च सम्यक्त्वस्य स्थितिसत्कर्म अष्टवर्षप्रमाणं भवति । तस्मिन्नेव च काले सकलप्रत्यूहापगमतो निश्चयनयमतेन दर्शनमोहनीयक्षपक उच्यते । अत ऊर्ध्वं सम्यक्त्वस्य स्थितिखण्डमन्तर्मुहूर्तप्रमाणमुत्किरति । तद्दलिकं तूदयसमयादारभ्य प्रक्षिपति । केवलमुदयसमये सर्वस्तोकम्, ततो द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं तावद्वक्तव्यं यावद्गुणश्रेणीशिरः । तत ऊर्ध्वं तु विशेषहीनं विशेषहीनं तावद्यावच्चरमा स्थितिः । एवमान्तर्मौहूर्तिकान्यनेकानि खण्डान्युत्किरति निक्षिपति च तावद्यावद्द्विचरमं स्थितिखण्डम् । द्विचरमात्तु खण्डाच्चरमखण्डं संख्येयगुणम् । तदपि च गुणश्रेण्याः संख्येयतमो भागः । अन्याश्च तदुपरि संख्येयगुणाः स्थितयः । उत्कीर्य च तद्दलिकमुदयसमयादारभ्यासंख्येयगुणतया प्रक्षिपति । तद्यथा–उदयसमये स्तोकम्, ततो द्वितीयसमयेऽसंख्येयगुणम्, ततोऽपि तृतीयसमयेऽसङ्ख्येय गुणम्, एवं तावद्वाच्यं यावद्गुणश्रेणिशिरः । अत ऊर्ध्वमुत्कीर्यमाणमेव चरमस्थितिखण्डं ततो न तत्र प्रक्षिपति । चरमे च स्थितिखण्डे उत्कीर्णे सत्यसौ क्षपकः कृतकरण इत्युच्यते । तथा चाह—'कयकरणद्धाए पच्छिमे

कृतकरणाद्धायां वर्तमानः कश्चित्कालमपि
होइ त्ति' पश्चिमे चरमखण्डे उत्कीर्णे कृतकरणाद्धायां वर्तते कृतकरणो भवतीत्यर्थः। अस्यां कृतकरणाद्धायां वर्तमानः कश्चित्कालमपि
कृत्वा चतसृणां गतीनामन्यतमस्यां गतावुत्पद्यते। लेश्यायामपि च पूर्वं शुक्ललेश्यायामासीत्, सम्प्रति त्वन्यतमस्यां गच्छति। तदेवं
प्रस्थापको मनुष्यो निष्ठापकस्तु चतसृष्वपि गतिषु भवति। उक्तं च—"पट्ठवगो य मणुस्सो निट्ठवगो चउसु वि गईसु"। अथोच्येत
क्षीणसप्तको गत्यन्तरं संक्रामन् कतितमे भवे मोक्षमुपयाति? उच्यते—तृतीये चतुर्थे वा भवे। तथाहि—यदि देवगतिं नरकगतिं वा
संक्रामति ततो देवभवान्तरितो नरकभवान्तरितो वा तृतीयभवे मोक्षमुपयाति। अथ तिर्यक्षु मनुष्येषु वा समुत्पद्यते तर्हि सोऽवश्यम-
संख्येयवर्षायुष्केषु मध्ये समुत्पद्यते, न संख्येयवर्षायुष्केषु, ततस्तद्भवानन्तरं देवभवे, तस्माच्च देवभवाच्च्युत्वा मनुष्यभवम्, ततो
मोक्षं यातीति चतुर्थे भवे मोक्षगमनम्। उक्तं च—"तइयचउत्थे तम्मि व भवम्मि सिज्झंति दंसणे खीणे। जं देवनिरईअसंखाउचर-
मदेहेसु ते होंति"॥ तथा क्षीणसप्तकः पूर्ववद्धायुष्कोऽपि यदि तदानीं कालं न करोति तर्हि कश्चिद्वैमानिकेष्वेव, बद्धायुष्कः चारित्रमो-
हनीयस्योपशमनार्थमप्युद्यतते। अथाबद्धायुष्कस्ततः सप्तकक्षयानन्तर क्षपकश्रेणिमेव प्रतिपद्यते ॥३२॥

(३०)—अथ दर्शनमोहनीयक्षपणाविधिमाह—इह दर्शनमोहनीयक्षपणाया आरम्भको मनुष्यो जिनकालको—जिनकालसम्भवी,
जिनकालश्च प्रथमतीर्थंकरविहरणकालादिर्जम्बूस्वामिकेवलोत्पत्तिपर्यवसानो ज्ञातव्यः। तथा वर्षाष्टकस्योपरि वर्तमानो वज्रर्षभनाराच-
संहननश्च भवति। दर्शनमोहेऽपि च क्षपणा तथैव वक्तव्या यथा प्रागनन्तानुबन्धिनामुक्ता। इत्थं सामान्येनातिदिष्टेऽपि य इह
विशेषः स उच्यते—इह दर्शनमोहनीयक्षपणायोद्यतो यथाप्रवृत्तादीनि त्रीणि करणानि करोति, तानि च प्रागिव वक्तव्यानि, नवरम-
पूर्वकरणस्य प्रथमसमय एवानुदितयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोर्दलिकं गुणसंक्रमेण सम्यक्त्वे प्रक्षिपति। उद्वलनासंक्रममपि तयोरे-

वमारभते–प्रथमं स्थितिखण्डं बृहत्तरमुद्वलयति, ततो द्वितीयं विशेषहीनं, ततोऽपि तृतीयं विशेषहीनं, एवं तावद्वाच्यं यावदपूर्वकरणचरमसमयः । अपूर्वकरणप्रथमसमये च यत्स्थितिकर्मासीत्तत्तस्यैव चरमसमये संख्येयगुणहीनं जातम् । एवं स्थितिबन्धोऽपि वेदितव्यः, अपूर्वकरणस्य प्रथमसमये यावान् स्थितिबन्ध आसीत्तदपेक्षया तस्यैवापूर्वकरणस्य चरमसमये संख्येयगुणहीनो भवतीत्यर्थः। ततोऽनिवृत्तिकरणे प्रविशति । तत्र च प्रविष्टः सन् प्रथमसमयादेवारभ्यापूर्वां गुणश्रेणिमपूर्वं स्थितिघातमपूर्वं रसघातमपूर्वं च स्थितिबन्धं कर्तुमारभते, अनिवृत्तिकरणप्रथमसमय एव च दर्शनत्रिकस्य देशोपशमनानिधत्तिनिकाचना व्यवच्छिद्यन्ते, देशोपशमनादीनां त्रयाणां करणानां नैकमपि दर्शनत्रिकस्य ततः प्रभृति प्रवर्तते इत्यर्थः । किंच तत्त्रयस्य स्थितिसत्कर्मानिवृत्तिकरणप्रथमसमयादारभ्य स्थितिघातादिभिर्घात्यमान स्थितिखण्डसहस्रेषु गतेष्वसंज्ञिपञ्चेन्द्रियस्थितिसत्कर्मसमानं भवति । ततः स्थितिखण्डसहस्रपृथक्त्वे गते सति चतुरिन्द्रियस्थितिसत्कर्मसमानं भवति । ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु त्रीन्द्रियस्थितिसत्कर्मसमानं, ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु द्वीन्द्रियस्थितिसत्कर्मसमानम्, ततोऽपि तावन्मात्रेषु खण्डेषु गतेष्वेकेन्द्रियस्थितिसत्कर्मसमानं भवति । ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु पल्योपममात्रप्रमाणं भवति । एतच्च चूर्णिकृन्मतेनोक्तं । पञ्चसंग्रहकृन्मते तु पल्योपमसंख्येयभागमात्रं , तदुक्तं पञ्चसंग्रहे–''ठिइखण्डसहस्साइं एक्केक्के अन्तरम्मि गच्छन्ति । पलिओवमसंखंसे दंसणसंते तओ जाए ॥१॥'' इत्यादि । 'एकैकस्मिन्नन्तरे' इति–असंज्ञिपञ्चेन्द्रियचतुरिन्द्रियादिसमानस्थितिसत्कर्मभवनानामपान्तराले, तत एकं संख्येयतमं भागं मुक्त्वा शेषं सर्वमपि त्रयाणामपि दर्शनमोहनीयानां विनाशयति, ततस्तस्यापि प्राग्मुक्तस्य संख्येयतमभागस्यैकं संख्येयभागं मुक्त्वा शेषान् संख्येयान् भागान् विनाशयति, एवं स्थितिघाताः सहस्रशो व्रजन्ति, तदनन्तरं च मिथ्यात्वस्यासंख्येयान् भागान्, सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु सं-

रव्येयान् भागान् खण्डयति । अनेन विधिना स्थितिखण्डेषु प्रभूतेषु परिगलितेषु सत्सु मिथ्यात्वमुदयावलिकारहितं सकलमपि क्षीणं, आवलिकामात्रं तु तिष्ठति। सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु पल्योपमासंख्येयभागमात्रशेषीभूतं तिष्ठति । अमूनि च स्थितिखण्डानि खण्ड्यमानानि मिथ्यात्वसत्कानि सम्यक्त्वसम्यग्मिथ्यात्वयोः प्रक्षिपति, सम्यग्मिथ्यात्वसत्कानि सम्यक्त्वे, सम्यक्त्वसत्कानि त्वधस्तात्स्वस्थाने इति । यदपि मिथ्यात्वदलिकमावलिकामात्रमुद्धरितं तिष्ठति तदपि स्तिबुकसंक्रमेण सम्यक्त्वे प्रक्षिपति, तदनन्तरं सम्यक्त्वसम्यग्मिथ्यात्वयोरसंख्येयान् भागान् खण्डयत्येकं मुञ्चति, ततस्तस्याप्यसंख्येयान् भागान् खण्डयत्येकं मुञ्चति, एवं कतिपयेषु स्थितिखण्डेषु गतेषु सम्यग्मिथ्यात्वमावलिकामात्रं तिष्ठति, तदानीं च सम्यक्त्वस्थितिसत्कर्माष्टवर्षप्रमाणं भवति । स चाष्टवर्षप्रमाणसम्यक्त्वसत्कर्मा निश्चयनयमतेन सकलप्रत्यूहविलयाद्दर्शनमोहनीयक्षपक उच्यते । ततो निश्चयनयाभिमतक्षपकत्वभवनादूर्ध्वं सम्यक्त्वस्य स्थितिखण्डमन्तर्मुहूर्त्तप्रमाणमुत्किरति–घातयतीत्यर्थः, तद्दलिकं तूदयसमयादारभ्य प्रक्षिपति, तच्चैवम्–उदयसमये स्तोकं, ततो द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं तावद्वाच्यं यावद्गुणश्रेणीशिरः, तत ऊर्ध्वं विशेषहीनं विशेषहीनं तावद्यावच्चरमा स्थितिः, ततो द्वितीयं स्थितिखण्डमन्तर्मुहूर्त्तप्रमाणं पूर्वस्मादसंख्येयगुणमुत्किरति, उत्कीर्य च प्रागुक्तप्रकारेणोदयसमयादारभ्य निक्षिपति, एवं पूर्वस्मात्पूर्वस्मादसंख्येयगुणान्यान्तर्मौहूर्त्तिकान्यनेकानि स्थितिखण्डान्युत्किरति निक्षिपति च तावद्यावद्द्विचरमं स्थितिखण्डम् । द्विचरमाच्च स्थितिखण्डादन्तिमं स्थितिखण्डं संख्येयगुणं, तस्मिंश्चान्तिमे स्थितिखण्डे खण्ड्यमाने संख्येयभागं गुणश्रेण्याः खण्डयति, अन्याश्च तदुपरितनीः संख्येयगुणाः स्थितीः तावन्मानत्वादेव चरमखण्डस्य, उत्कीर्य च तद्दलिकमुदयसमयादारभ्यासंख्येयगुणनया प्रक्षिपति, तद्यथा–उदयसमये स्तोकं, ततो द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणं, एवं ताव-

द्धाच्यं यावद्गुणश्रेणीशिरः । अत ऊर्ध्वं तूत्कीर्यमाणमेव दलिकं प्राप्यते, न तत्प्रक्षेपाधारभूतमिति न तत् क्वापि प्रक्षिपति, चरमे च स्थितिखण्डे उत्कीर्णे सत्यसौ क्षपकः कृतकरण इति परिभाष्यते । तथा चाह–"कयकरणद्धाइ पच्छिमे होइ" पश्चिमे चरमे खण्डे उत्कीर्णे कृतकरणाद्धायां वर्तते कृतकरणो भवतीत्यर्थः । अस्यां च कृतकरणाद्धायां वर्तमानः कश्चित्कालमपि कृत्वा चतसृणां गतीनामन्यतमस्यां गतावुत्पद्यते । लेश्यायामपि पूर्वं शुक्लायामेवासीत्, सम्प्रति त्वन्यतमस्यां गच्छति । तदेवं प्रस्थापको मनुष्यो निष्ठापकस्तु चतसृष्वपि गतिषु भवतीत्यागतः। उक्तं च –"पट्ठवगो उ मणूसो निट्ठवगो होइ चउसु वि गईसु"। यदि पुनस्तदानीं कालं न करोति तदा वेदितसम्यक्त्वशेषः क्षायिकसम्यग्दृष्टिः सन्नुपशमश्रेणिं क्षपकश्रेणिं वा समारोहति । तत्र यो वैमानिकेष्वेव बद्धायुष्कः क्षीणसप्तकः स उपशमश्रेणिमारोहति, अबद्धायुष्कस्तु क्षपकश्रेणिं, अन्यगतिबद्धायुष्कस्तु न कामपि श्रेणिमारभते श्रेणिकादिवदिति ज्ञेयम् । अथ क्षीणसप्तको गत्यन्तरं संक्रामन् कतितमे भवे मोक्षमुपयाति ? उच्यते–तृतीये चतुर्थे वा । तथाहि–यदि स्वर्गे नरके वा गच्छति तदा स्वर्गभवान्तरितो नरकभवान्तरितो वा तृतीयभवे मोक्षमुपयाति, यदि चासौ तिर्यक्षु मनुष्येषु वा मध्ये समुत्पद्यते तदाऽवश्यमसंख्येयवर्षायुष्केष्वेव न संख्येयवर्षायुष्केषु, ततस्तद् भवानन्तरं देवभवं, तस्माच्च देवभवाच्च्युत्वा मनुष्यभवं ततो मोक्षं यातीति चतुर्थभवे मोक्षगमनम्, उक्तं च पञ्चसंग्रहे–"तइयचउत्थे तम्मि व भवम्मि सिज्झन्ति दंसणे खीणे । जं देवणिरयसंखाउचरमदेहेसु ते हुंति ॥१॥" अत्र तृतीयभवे मोक्षगमने देवनारकेषु मध्ये उत्पत्तिर्हेतुश्चतुर्थभवे च मोक्षगमनेऽसंख्येयवर्षायुष्केषूत्पत्तिस्तद्भवमोक्षगमने च चरमदेहत्वमिति क्रमेण योजनीयम्। इदं च प्रायोवृत्त्योक्तमिति सम्भाव्यते, यतः क्षीणसप्तकस्य कृष्णस्य पञ्चमभवेऽपि मोक्षगमनं श्रूयते । उक्तं च—"नरयाउ नरभवम्मि देवो होऊण पंचमे कप्पे । तत्तो चुओ समाणो बारसमो अममतित्थयरो ॥१॥" इति । इत्थमेव दुःप्रसहादीनामपि क्षायिकसम्यक्त्वमागमोक्तं युज्यत इति यथागमं विभावनीयम् ॥३२॥

| + ॥ – ++ | | | × |

६ आवलिका

(मिथ्यात्वोदयाभाव)
उ प शा न्ता द्धा
(अन्तरप्रवेशन औपशमिकसम्य० प्राप्तिश्च)
(अन्तर्मु०)

० ० ० ० ० ० ० ० ० ०
(त्रिपुञ्जयुक्ता)
मिथ्यात्वस्य द्वितीया स्थिति

अन्त र म्

–अत्र मिथ्यात्वस्य गु० सक्रमप्रारम्भ । + एतत्विभागो गुणश्रेणिसत्क प्रथमस्थितिगतोपि अन्तरकरणदलिकेन सहोत्कीर्णो भवति । = अत्रान्तरकरणे केचित् ५–६–७ वा गुणस्थानमपि लभन्ते । अत्र मिथ्यात्वस्य गु० सक्रमविच्छेद विध्यातसक्रमस्य प्रवृत्तिश्च तथा ७ कर्मणा स्थि०घातरसघातगु०श्रेणिविच्छेद । ++ अतः प्रारभ्य केचिरसयोजनोदयात्सास्वादना अपि भवन्ति । + अत्र त्रिपुञ्जमाकृष्यान्त्यावलिकाया विशेषवि०हीनक्रमेण प्रक्षिपति । : अत्रान्यतमपुञ्जोदय स्यात् ।

## अनिवृत्तिकरणविशुद्धिः

प्रथमे समयेऽजघन्योत्कृष्टाविशुद्धिः सर्वाल्पा (सापि अपूर्वकरणसर्वोत्कृष्टविशुद्धेरनन्तगुणा)

ततः २ समयेऽनन्तगुणा
ततः ३ समये ,,
ततः ४ समये ,,
ततः ५ समये ,,
ततः ६ समये ,,
ततः ७ समये ,,
ततः ८ समये ,,
ततः ९ समये ,,
ततः १० समये ,,
ततः ११ समये ,,

विशुद्धेर्जघन्योत्कृष्टत्वसमानत्वादुत्कृष्टविशोधिर्भिन्नतया नोक्ता

### रसप्रतिघाते घात्यमानानुभागस्पर्धकसंख्या

| घात्यमाना स्थितिकण्डकाः | | | घातितानुभाग-स्पर्धकानि | | अवशिष्टानि अनुभाग स्पर्धकानि | |
|---|---|---|---|---|---|---|
| प्रथमे० | कण्डके | घातिते | ९,०० | फोट्यः | १०० | फोट्यः |
| द्वितीये | ,, | ,, | ९० | ,, | १० | ,, |
| तृतीये | ,, | ,, | ९ | ,, | १ | कोटिः |
| चतुर्थे | ,, | ,, | ९० | लक्षाणि | १० | लक्षाणि |
| पञ्चमे | ,, | ,, | ९ | लक्षाणि | १ | लक्षम् |
| षष्ठे | ,, | ,, | ९० | सहस्राणि | १० | सहस्राणि |
| सप्तमे | ,, | ,, | ९ | ,, | १ | सहस्रम् |
| अष्टमे | ,, | ,, | ९ | शतानि | १ | शतम् |
| नवमे | ,, | ,, | | नवतिः (९०) | | दश (१०) |

प्ररूपणा चैवं—प्रथमे स्थितिकण्डके घातिते सति तदनुगतानुभागस्पर्धकाण्यप्यनन्तानि कल्पनया '९,०० फोट्य' घातितानि अवशिष्टश्चैकोऽनन्ततमो भागः कल्पनया '१०० फोट्यः' एवं द्वितीयादिस्थितिघातेऽप्येकमनन्ततमभागं मुक्त्वा शेषसर्वानुभागस्य विनाशो वक्तव्यः

एवमनेकसहस्राण्यनुभागघातानि

### गुणसंक्रमः

अबध्यमानाशुभानां दलस्य संख्याक्रम·

| समयाः | बध्यमानपरप्रकृतौ सङ्क्रम्यमाणदलिकसंख्या | अवशिष्टदलिकसंख्या (अबध्यमानाशुभायाः) |
|---|---|---|
| १ मे समये | अनन्तंसर्वतःस्तोकं | अनन्तगुणं ततो- |
| २ ये ,, | ततोऽसंख्यगुणं | ऽसंख्येयभागहीनं |
| ३ ये ,, | ,, | ,, |
| ४ र्थे ,, | ,, | ,, |
| ५ मे ,, | ,, | ,, |
| ६ ष्ठे ,, | ,, | ,, |
| ७ मे ,, | ,, | ,, |
| ८ मे ,, | ,, | ,, |

एवमन्तर्मुहूर्तं यावत्

॥ चतुर्थादिगुणस्थानके क्रियमाणा सामान्या करणत्रयस्य स्थापना ॥

| समया. | विशोधिस्थानानि जघन्यतः | क्रमेण विशोधिवर्धि-कानि करणानां अध्य०स्थानानि | विशुद्धिस्थानानि उत्कृष्टत |
|---|---|---|---|
| प्र १ | | ०००० पूर्व ००००० | करणकालात्पूर्वं जघन्या लब्धिविशुद्धिः कर्मप्रकृत्यादौ नोक्ताऽतोऽत्रापि नोच्यते. |
| द्वि २ | | ०००० वि ०००००० | |
| तृ ३ | | ०००० शु ००००००० | |
| च ४ | | ०००० ०००००००० | |
| पं ५ | | ०००० द्धि ०००००००० | |

**य था प्र वृ त्त क०** (अन्तर्मुहूर्त्तप्रमाणम्)

प्रतिसमयमसख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि षट्स्थानपतितानि (अत्रान्यस्थितिवन्ध पल्योपमसख्येयभागहीनोऽध्यवसायक्षेत्र च विषमचतुरस्रम्)

अत्र यत्पश्चाधिकत्वं तदनन्तगुणमिति ज्ञापनार्थं

| समया. | विशोधिस्थानानि जघन्यतः | विशुद्धिस्थानानि उत्कृष्टत |
|---|---|---|
| प्र १ | ३० | ५० |
| द्वि २ | ३५ | ६० |
| तृ ३ | ४० | ७० |
| च ४ | ४५ | ८० |
| पं ५ | ५५ | ९० |
| ष ६ | ६५ | १०० |
| स ७ | ७५ | ११० |
| अ ८ | ८५ | १२० |
| न ९ | ९५ | १३० |
| द १० | १०५ | १४० |
| ए ११ | ११५ | १४५ |
| द्वा १२ | १२५ | १५० |
| त्र १३ | १३५ | १५५ |

(जघन्यतः ३०–४५:) नैरन्तर्येण वक्तव्यानि (१ सख्ये० भा०)

(उत्कृष्टत १४०–१५५:) १ सख्ये०भाग

**अ पू र्व क०** (अन्तर्मुहूर्त्तप्रमाणम्)

(प्रतिसमयमसख्येयलोकाकाशप्रदेशप्रमाणान्यध्य०स्थानानि तिर्यक् षट्स्थानपतितानि । अत्र प्रथमसमयात् स्थितिघात रसघात -गुणश्रेणि —गुणसक्रमः अन्यस्थितिबन्धश्चप्रवर्तन्ते।अध्य क्षे वि.चतु ।

| समया. | विशोधिस्थानानि जघन्यतः | विशुद्धिस्थानानि उत्कृष्टत |
|---|---|---|
| प्र १ | १६० | १६५ |
| द्वि २ | १७० | १७५ |
| तृ ३ | १८० | १८५ |
| च ४ | १९० | १९५ |
| पं ५ | २०० | २०५ |
| ष ६ | २१० | २१५ |
| स ७ | २२० | २२५ |
| अ ८ | २३० | २३५ |
| न ९ | २४० | २४५ |

अनन्तगुणविशुद्धि

**अ नि वृ त्ति क०** (अन्तर्मुहूर्त्तप्रमाणम्)

प्रतिसमयमेकैकमध्यवसायस्थानमतराप्यमानानि मुक्तावलिस्थानगस्थितानि भवन्ति । विशुद्धयपेक्षया न क्षेत्र विषमचतुरस्र भवति ।

| समया. | विशोधिस्थानानि जघन्यतः | विशुद्धिस्थानानि उत्कृष्टत |
|---|---|---|
| प्र १ | २५० | २५० " |
| द्वि २ | २५५ | २५५ " |
| तृ ३ | २६० | २६० " |
| च ४ | २६५ | २६५ " |
| पं ५ | २७० | २७० " |
| ष ६ | २७५ | २७५ " |
| स ७ | २८० | २८० " |
| अ ८ | २८५ | २८५ " |
| न ९ | २९० | २९० " |
| द १० | २९५ | २९५ " |
| ए ११ | ३०० | ३०० " |

○ ○ ○ ○ ○ एतानि शून्यानि अध्यवसायस्थानानि । oooooo एते बिन्दव विशुद्धयशा । शून्यबिन्दो सख्यानियमो नास्ति । ⊖ ⊖ ⊖ इति मुक्तावलिसस्थानम्

# अनन्तानुबन्धिनामुपशमनाक्रमः

प्रस्थापकाः-अविरताश्चातुर्गतिकाः देशविरतास्तिर्यग्नराः सर्वविरता मनुष्या एव। (अत्र विन्दवः प्रदेशोदयसूचकाः)

| क्रियाक्रम. | |
|---|---|
| विशुद्धि (अन्तर्मु०) | अत्र प्रथमसमयादन्यस्थितिबन्धः। |
| यथाप्रवृत्तम् (अन्तर्मु०) | अत्रापि प्रथमसमयादन्यस्थितिबन्धः। |
| अपूर्वकरणम् (अन्तर्मु०) | अत्र प्रथमसमयात् स्थितिघातादि५पदार्था युगपत् प्रवर्तन्ते। (नवरं गु०श्रे० दलिकप्रक्षेप उदयावलिकाया उपरि) |
| अनिवृत्तिकरणम् (अन्तर्मु०) — संख्येया भागाः | अत्रापि पूर्वोक्ता. ५ पदार्था युगपत् प्रवर्तन्ते। |
| अनिवृत्तिकरणम् (अन्तर्मु०) — १ संख्येयो भागः अन्तर्मु० | अतः प्रारभ्यान्तरकरणं प्रथमस्थितेः प्रारभ्यते, द्वितीयसमयादुपशमनाऽपि प्रारभ्यते। स्तिबुकेन अनुदयवतीनामावलिकामात्राया प्रथमस्थितेः प्रथम(=पूर्व)समयो यथायथा क्षीयते तथातथोपरितनसमय(=परसमयः) आवलिकायां प्रविशति। |
| अन्तरम् (अनन्तानुबन्धिनाम्) (अन्तर्मु०) | अत्र अन्तरकरणक्रियासमाप्ता, उपशान्ता अनन्तानुबन्धिनोऽपि, निवृत्ता स्थितिघातादयोऽपि। |
| [illegible] | अत्रागतस्य पुनरपि प्रदेशोदयो नास्ति। |

# अनन्तानुबन्धिनां विसंयोजनाक्रमः

प्रस्थापका—अविरताश्चातुर्गतिका पर्याप्ताः, देशविरतास्तिर्यग्मनुष्याः, सर्वविरता मनुष्या एव ।

क्रियाक्रमः

| | |
|---|---|
| विशुद्धिः (अन्तर्मु०) | अत्र प्रथमसमयादेवान्यस्थितिबन्ध । |
| यथाप्रवृत्तम् (अन्तर्मु०) | अत्रापि प्रथमसमयादेवान्यस्थितिबन्ध । |
| अपूर्वकरणम् (अन्तर्मु०) | अत्र प्रथमसमयादेव स्थितिघातादि५पदार्था युगपत् प्रवर्तन्ते, नवरं गुणसङ्क्रमानुविद्धोद्वलनासङ्क्रमोऽपि । |
| अनिवृत्तिकरणम् (अन्तर्मुहूर्तप्रमाण) | अत्र गुणसङ्क्रमानुविद्धोद्वलनासङ्क्रमेणाधस्तनावलिकामात्र मुक्त्वा निरवशेष विनाशयति, आवलिकामात्र तु वेद्यमानपरप्रकृतिषु स्तिबुकसङ्क्रमेण ( नव्यशतकप्रणेतृभिस्तु अनन्ततम भाग मिथ्यात्वे प्रक्षिप्य ) वेदयति । |
| आवलि० | |

अनन्तानुबन्धिना क्षय·

# श्रेणिसत्कदर्शनमोहोपशमनाक्रमः

क्रियाक्रमः




अत्र प्रथमसमयादन्यस्थितिबन्ध ।

अत्रापि प्रथमसमयादेवान्यस्थितिबन्धः ।

अत्र प्रथमसमयादेव स्थितिघात-रसघातौ-
गुणश्रेणि अन्यस्थितिबन्धश्च प्रवर्त्तन्ते
एव गुणसंक्रमोऽपि ।

अत्र त्रयाणामन्तरकरणक्रिया सम्यक्त्वगालश्च प्रवर्तते।

अत्र द्वितीयसम्यक्त्वत्रयाणामप्युपशमना प्रवर्तते।

अत्र सम्यक्त्वगालगुणश्रेण्योर्विच्छेदः।

अत्र सम्यक्त्वोदीरणा स्थितिघातरसघातौ च निवृत्ताः।

अत्र सम्यक्त्वोदयविच्छेद उपशान्त दर्शनत्रिकम्।

अथ प्र० स्थि० गतोऽपि गुणश्रेणिविभागोऽन्तरकरणेन सहोत्कीर्णो भवति।

अत्र मिथ्यात्वमिश्रयोर्गु० सं० विच्छेद, विध्या० सं० प्रवृत्तिश्च तथा ७ कर्मणां स्थि० घात–रसघात–गुणश्रे० निवृत्ता।

| | | | | | | |
|---|---|---|---|---|---|---|
| ० ० ० ० ० ० ० | ० ० ० ० ० ० | ० ० | ० ० | | | ० ० ० ० ० ० ० ० ० ० ० ० |
| आवलिका | | आव० | आव० | गु० श्रे० भागः | | |
| सङ्ख्येयतमभागरूपा सम्यक्त्वस्य प्रथमा स्थितिः वृ त्ति क र ण म् | | | | अन्तर्मुहूर्त्त उ प श म स म्य क्त्वा द्धा अ न्त र म् वा (अन्तर्मु०) | | उ प श मि ता द्वि ती या स्थिति. सम्यक्त्वस्य |
| मिथ्यात्वस्यावलिकास्थि० प्रथमास्थिति | मि थ्या त्व स्य अ न्त र म् (अन्तर्मु०) | | | | | उपशमिता द्वितीया स्थितिः मिथ्यात्वस्य ० ० ० ० ० ० ० ० ० ० ० ० ० |
| मिश्रस्यावलिकाप्रथमास्थि० | मि श्र स्य अ न्त र म् (अन्तर्मु०) | | | | | उपशमिता द्वितीया स्थितिः मिश्रस्य ० ० ० ० ० ० ० ० ० ० ० ० ० |

मिथ्यामिश्रयोः १ आव० स्तिबुकेन क्षपयति.

अहवा दंसणमोहं पुव्वं उवसामइत्तु सामन्ने । पढमठिइमावलियं करेइ दोण्हं अणुदियाणं ॥२३॥

(चू०)—अहवत्ति अन्नाहिगारे, जइ वेयगसम्मदिट्ठी सेढिं पडिवज्जति तो पुव्वं दंसणतिगं जुगवं उवसामेति 'पुव्वं उवसामित्तु'त्ति—जहा पुव्वं दंसणमोहस्स उवसामणा भणिया तहेवत्ति सामन्ने मिच्छत्तोवसमेइ, नवरि विसेसो पढमट्ठितिं आवलियं करेति 'दोण्ह अणुदियाणं'ति—मिच्छत्तसंमामिच्छत्ताणं अणुदियाणं आवलियं पढमट्ठितिं करेति, सम्मत्तस्स अंतोमुहुत्तं पढमट्ठितिं करेति । उक्किरिज्जमाणं दलियं सम्मत्तस्स पढमट्ठितीते चेव छुभति सेसं जहा पुव्वं तहेव उवसमसंमदिट्ठी जातो अंतोमुहुत्तो ता विज्झायसंकमो भवति ॥२३॥

(मलय०)—उपशमश्रेणिं प्रतिपत्तुकामस्यैव प्रकारान्तरमाह—'अहव' त्ति—अथवेति प्रकारान्तरे । इह यदि वेदकसम्यग्दृष्टिः सन् उपशमश्रेणिं प्रतिपद्यते ततो नियमाद्दर्शनमोहनीयत्रितयं पूर्वमुपशमयति । तच्च श्रामण्ये स्थितः सन्नुपशमयति । तथा चाह—श्रामण्ये—संयमे स्थितः सन् दर्शनमोहनीयत्रितयमुपशमय्य, उपशमनाविधिः सकलोऽपि प्रागिव करणत्रयानुगो वेदितव्यः । नवरमन्तरकरणं कुर्वन्ननुदितयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोः प्रथमां स्थितिमावलिकामात्रां करोति, सम्यक्त्वस्य चान्तर्मुहूर्तप्रमाणाम् । उत्कीर्यमाणं च दलिकमन्तरकरणसत्कं त्रयाणामपि सम्यक्त्वस्य प्रथमस्थितौ प्रक्षिपति । शेषं तथैव वक्तव्यम् ॥२३॥

(उ०)—तदेवं दर्शनमोहनीयं क्षपयित्वोपशमश्रेणिर्भवतीति प्रकार उक्तः, अथ दर्शनमोहनीयमुपशमय्याप्युपशमश्रेणिप्रतिपत्तिर्भवतीति प्रकारान्तरमाह—'अथवा' इति प्रकारान्तरे । इह यदि वेदकसम्यग्दृष्टिः सन्नुपशमश्रेणिं प्रतिपद्यते ततो नियमाद्दर्शनमोहनीयत्रितयं पूर्वमुपशमयति, तच्च श्रामण्ये स्थितः सन्नुपशमयति । तथा चाह—श्रामण्ये स्थितः सन् दर्शनमोहनीयमुपशमय्यान्तरकरणं कुर्वन्ननुदि-

तयोर्मिथ्यात्वसम्यङ्मिथ्यात्वयोः प्रथमां स्थितिमावलिकामात्रां करोति, सम्यक्त्वस्य चान्तर्मुहूर्त्तप्रमाणां, उत्कीर्यमाणं च दलिकमन्तरकरणसत्कं त्रयणामपि सम्यक्त्वप्रथमस्थितौ प्रक्षिपति । अयमेवात्र विशेषः । शेष उपशमनाविधिरशेषोऽपि प्राग्वदेव करणत्रयानुगोऽवसेयः । अत्र मुखं व्यादाय स्वपीतीत्यत्रेव क्त्वाप्रत्ययस्य व्यत्ययेन प्रयोग इति प्रथमस्थितिमावलिकां कृत्वा पूर्वं दर्शनमोहनीयमुपशमयतीति संमुखोऽर्थः । अन्तरकरणप्रवेशसमयादारभ्यान्तर्मुहूर्त्तेऽतिक्रान्ते गुणसंक्रमावसाने चात्र विध्यातसंक्रमः सम्यक्त्वस्य भवति, विध्यातसंक्रमेण मिथ्यात्वसम्यङ्मिथ्यात्वयोर्दलिकं सम्यक्त्वे प्रविशतीत्यर्थः । उक्तं च—"पढमुवसमं व सेसं अंतमुहुत्ताउ अस्स विज्झाओ इति ॥३३॥



**अद्धापरिवित्ताऊ पमत्त इयरे सहस्ससो किच्चा । करणाणि तिन्नि कुणए तइयविसेसे इमे सुणसु ॥३४॥**

(चू०)—'अद्धा पडिवत्तीतो पमत्तइयरे सहस्स सो किच्च'त्ति एवं संकिलेसविसोहीए पमत्तअपमत्तभावे सहस्ससो काउं 'करणाणि तिन्नि'त्ति चरित्तमोहउवसामणाणिमित्तं तिन्नि करणाणि करेति–अहापवत्तकरणं, अपुव्वकरणं अनियट्टीकरणं । अहापवत्तपरूवणा जहा हेट्ठा अपुव्वकरणट्ठितिघायादि सव्वे निरवसेसा भाणियव्वा । 'तइयविसेसे इमे सुणसु'—ततियं अणियट्टिकरणं, तस्स जे विसेसा ते सुणसु ॥३४॥

(मलय०)—दर्शनत्रितयमुपशमय्य किं करोतीत्यत आह–'अद्ध'त्ति–अद्धापरिवृत्तीः संक्लेशविशोधिवशात् प्रमत्तभावे इतरस्मिंश्चाप्रमत्तभावे कालपरावृत्तीः सहस्रशः कृत्वा चारित्रमोहनीयोपशमनाय त्रीणि करणानि यथाप्रवृत्तादीनि करोति । तानि च प्रागिव वक्तव्यानि । केवलं तृतीयेऽनिवृत्तिकरणे इमान् वक्ष्यमाणान् विशेषान् शृणुत ॥३४॥

(उ०)—दर्शनत्रिपतमुपशमय्य किं करोतीत्याह—प्रमत्तभावे इतरस्मिंश्चाप्रमत्तभावे संक्लेशविशोधिवशादद्धापरावृत्तीः—कालपरिवर्तनानि सहस्रशः कृत्वा चारित्रमोहनीयोपशमनाय पुनरपि त्रीणि करणानि यथाप्रवृत्तादीनि करोति, तानि च प्राग्वद्वक्तव्यानि, केवलमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थानके द्रष्टव्यं, अपूर्वकरणमपूर्वगुणस्थाने, अनिवृत्तिकरणमनिवृत्तिबादरसंपरायगुणस्थानके। अत्रापि स्थितिघातादयः पूर्ववदेव प्रवर्त्तन्ते। नवरमिह सर्वासामशुभप्रकृतीनामबध्यमानानां गुणसंक्रमः प्रवर्त्तत इति वक्तव्यम्। अपूर्वकरणाद्धायाश्च संख्येयतमे भागे गते सति निद्राप्रचलयोर्बन्धव्यवच्छेदः। ततः प्रभूतेषु स्थितिखण्डसहस्रेषु गतेषु सत्स्वपूर्वकरणाद्धायाः संख्येया भागा गता भवन्त्येकोऽवशिष्यते। अत्रान्तरे सुरद्विकपञ्चेन्द्रियजातिवैक्रियद्विकाहारकद्विकतैजसकार्मणसमचतुरस्रवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासत्रसचतुष्कशुभखगतिस्थिरपञ्चकनिर्माणतीर्थकरलक्षणानां त्रिंशत्प्रकृतीनां बन्धव्यवच्छेदः। ततः स्थितिखण्डपृथक्त्वे गते सत्यपूर्वकरणाद्धायाश्चरमसमये हास्यरतिभयजुगुप्सानां बन्धव्यवच्छेदः, हास्यरत्यरतिभयशोकजुगुप्सानामुदयव्यवच्छेदः, सर्वकर्मणां देशोपशमनानिधत्तिनिकाचनाकरणव्यवच्छेदश्च। ततोऽनन्तरसमये तृतीयेऽनिवृत्तिकरणे प्रविशति। तत्र चेमान् वक्ष्यमाणान् विशेषान् शृणुत ॥ ३४ ॥

अन्तोकोडाकोडी संतं अनियट्टिणो य उदहीणं। बन्धो अन्तोकोडी पुव्वकमा हाणि अप्पबहू ॥३५॥

(चू०)—'अंतोकोटाकोटी संतं' ति—अणियट्टीकरणस्स पढमसमते अंतोकोडाकोडी संतं 'अणियट्टिणो उ उदहीणं' ति—अणियट्टीकरणस्स पढमसमते अंतोकोडाकोडीट्ठितियं संतकम्मं बंधो वि तस्स पढमसमते अंतोकोडी भवति। 'पुव्वकमा हाणि'त्ति—पुव्वक्कमेणेव परिहानि। कहं? भन्नति—ट्ठितिबंधे पुन्ने पलिओव-

मस्स संखेज्जतिभागं उसरित्ता अन्नं ठितिबंधं ति । 'अप्पबहु'त्ति–पुव्वकमेणेव अप्पाबहुगंपि, सव्वथोवाणि णामगोयाणि, नाणावरणदंसणावरणवेयणियअंतराइयाणि चत्तारि वि तुल्लाणि विसेसाहिगाणि, चरित्तमोहणिज्जं विसेसाहियं, सव्वकालं जाव एवं अप्पाबहुगं ॥ ३५ ॥

(मलय०)—तानेवाह–'अन्तो'त्ति । अनिवृत्तिकरणस्य प्रथमसमये आयुर्वर्जानां सप्तानां कर्मणां स्थितिसत्कर्म अन्तःसागरोपमकोटीकोटीप्रमाणम् । बन्धः पुनरन्तःसागरोपमकोटीप्रमाणः। सोऽपि च पूर्वक्रमेण हानिं गच्छति। तद्यथा–स्थितिबन्धे पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागहीनं करोति, तस्मिन्नपि पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागहीनं करोतीत्यादि । अल्पबहुत्वमपि पूर्वक्रमेणैव वेदितव्यम् । तद्यथा–सर्वस्तोके नामगोत्रे, स्वस्थाने तु परस्परं तुल्ये । ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणि विशेषाधिकानि, स्वस्थाने तु परस्परं तुल्यानि । ततोऽपि चारित्रमोहनीयं विशेषाधिकम् । एतच्चाल्पबहुत्वं सर्वकालमपि द्रष्टव्यम्, यावदेतत्स्थानमिति ॥३५॥



(उ०)—अनिवृत्तिकरणस्य प्रथमसमये आयुर्वर्जानां सप्तानां कर्मणां स्थितिसत्कर्मान्तःसागरोपमकोटाकोटिप्रमाणं, बन्धः पुनरन्तःसागरोपमकोटिप्रमाणः । पञ्चसंग्रहे त्वत्र—"अन्तो कोडाकोडी बंधं सन्तं च सत्तण्हं" इतिग्रन्थेनायुर्वर्जानां सप्तकर्मणां प्राप्यते बन्धस्य सत्तायाश्चाविशेषेणान्तःकोटाकोटीप्रमाणत्वमेवोक्तं, तत्र यद्यपि प्रागुक्तेष्वपि करणेष्वेतावान् बन्ध एतावदेव च सत्कर्म सप्तकर्मणां प्राप्यते तथाप्यत्र बन्धसत्कर्मणी तदपेक्षया संख्येयगुणहीने द्रष्टव्ये इति विशेषः । सोऽपि च बन्धः पूर्वक्रमेण हानिं गच्छति, तद्यथा–स्थितिबन्धे पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागहीनं करोति, तस्मिन्नपि पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्ये-

यभागहीनं करोतीत्यादि। अल्पबहुत्वमपि बन्धसत्तापकर्षेऽपि पूर्वक्रमेणैव वेदितव्यम्। तद्यथा—सर्वस्तोके नामगोत्रे, स्वस्थाने तु परस्परं
तुल्ये। ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणि विशेषाधिकानि, स्वस्थाने तु परस्परं तुल्यानि। ततोऽपि मोहनीयं विशेषाधि-
कम्। एतच्चाल्पबहुत्वं सर्वकालमपि द्रष्टव्यं यावदेतत्स्थानमिति ॥ ३५ ॥ ठिइबन्धबहुसहस्से सेक्केक्कं जं भणिस्सामो ॥३६॥

**ठिइकण्डगमुक्कस्सं पि तस्स पल्लस्स संखतमभागो।**

(चू०)—'ट्ठितिकंडगमुक्कस्सं पि तस्स पल्लस्स संखतमभागो'त्ति। उक्कोसगं ठितिकंडगं पलिओवमस्स संखेज्जतिभाग एव, तीसे चेव अणियट्टिअद्धाए पढमसमए अप्पसत्थुवसामणाकरणं णिद्धत्तिकरणं, णिकायणाकरणं च वोच्छिन्नाणि। आउगवज्जाणं सत्तण्ह कंमाणं ट्ठितिसंतकम्मं अंतोकोडाकोडी भवति, ट्ठितिबंधो अंतोकोडीति—सागरोवमसयसहस्सपुहुत्तंति भणियं होति, ततो ठितिकंडगसहस्सेसु गएसु वज्झमाणट्ठितिबंधो सागरोपमसहस्सपुहुत्तं भवति। ततो अणिअट्टिअद्धाए संखेज्जेसु भागेसु गएसु असन्निपंचिंदिअसमगो ट्ठितिबंधो भवति। ततो पुणो वि ट्ठितिखंडगपुहुत्तेसु गतेसु चउरिंदियसमगो ट्ठितिबंधो होइ, एवं तेइंदियसमगो, (ततो बेइंदियसमगो), ततो एगिंदियसमगो। 'ट्ठितिबंधबहुसहस्से सेक्केक्कं जं भणिस्सामो'त्ति—एवं अणेगेसु ट्ठितिबंधसहस्सेसु गएसु एक्केक्कं अहिगारं पुरस्ताद्वक्ष्यामः ॥ ३६ ॥

(मलय०)—'ठिइ' त्ति। उत्कृष्टमपि स्थितिकण्डकं हन्यमानं तस्य चारित्रमोहनीयोपशमकस्यानिवृत्तिकरणे प्रविष्टस्य पल्योपमसंख्येयतमो भागः, जघन्यमपि तस्यैतावदेव, केवलं तल्लघुतरं द्रष्टव्यम्। एतदुक्तं भवति—अनिवृत्तिकरणे प्रविष्टस्य स्थितिघात-

उत्कर्षतोऽपि पल्योपमसंख्येयतमभागप्रमाण एव प्रवर्तते, नाधिकः। अनिवृत्तिकरणप्रथमसमये च तस्याप्रशस्तोपशमनाकरणनिधत्तिकरणनिकाचनाकरणानि व्यवच्छेदमायान्ति। स्थितिघातेषु सहस्रशो गतेषु सत्सु बध्यमानप्रकृतीनां बन्धः सागरोपमसहस्रपृथक्त्वप्रमाणो भवति। ततोऽनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु असंज्ञिपञ्चेन्द्रियबन्धतुल्यः स्थितिबन्धो भवति। तदनन्तरं स्थितिखण्डपृथक्त्वे गते सति चतुरिन्द्रियबन्धसमानः स्थितिबन्धः। ततो भूयोऽपि स्थितिखण्डपृथक्त्वे गते सति त्रीन्द्रियबन्धतुल्यः स्थितिबन्धः। तत एवमेव द्वीन्द्रियतुल्यः। ततोऽप्येवमेवैकेन्द्रियबन्धतुल्यः। इत ऊर्ध्वं स्थितिबन्धसहस्रेषु गतेषु सत्सु आयुर्वर्जानां सप्तानां कर्मणामेकैकं यद्भवति वक्तव्यं तद् भणिष्यामि ॥३६॥



(उ०)—उत्कृष्टमपि स्थितिकण्डकं हन्यमानं तस्य चारित्रमोहनीयोपशमकस्यानिवृत्तिकरणे प्रविष्टस्य पल्योपमस्य संख्येयतमो भागः, जघन्यमपि तस्यैतावदेव, केवलमुत्कृष्टपल्योपमसंख्येयतमभागप्रमाणस्थितिघाताज्जघन्योऽसौ लघुतरो वेदितव्यः। स्थितिघातेषु च सहस्रशो गतेषु सत्सु बध्यमानप्रकृतीनां बन्धः सागरोपमसहस्रपृथक्त्वप्रमाणो भवति। ततोऽनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वेकस्मिँश्चावशिष्टे सत्यसंज्ञिपञ्चेन्द्रियबन्धतुल्यः स्थितिबन्धो भवति। तदनन्तरं स्थितिखण्डपृथक्त्वे गते सति चतुरिन्द्रियबन्धतुल्यः, ततो भूयः स्थितिखण्डपृथक्त्वे गते सति त्रीन्द्रियबन्धतुल्यः, ततोऽमुनैव क्रमेण द्वीन्द्रियबन्धतुल्यः, ततोऽप्येवमेवैकेन्द्रियबन्धतुल्यः। इत ऊर्ध्वं स्थितिबन्धसहस्रेषु गतेष्वायुर्वर्जानां सप्तानां कर्मणामेकैकं यद्वक्तव्यं भवति तद्भणिष्यामः ॥ ३६ ॥



**पल्लदिवड्ढबिपल्लाणि जाव पल्लस्स संखगुणहाणी। मोहस्स जाव पल्लं संखेज्जइभागहाऽमोहा ॥३७॥**

**तो नवरमसंखगुणा एक्कपहारेण तीसगाणमहो। मोहे वीसग हेट्ठा य तीसगाणुप्पि तइयं च ॥३८॥**

तो तीन्नगाणमुप्पिं च वीसगाइं असंखगुणणाए । तइयं च वीसगाहि य विसेसमहियं कमेणोति ॥३९॥

(चू०)—'पल्लदिवड्ढबिपल्लाणि जाव'त्ति–ताव पूर्वप्रक्रमादेव हाणी, अप्पावहुगाणं च नत्थि विसेसो। एगिंदियसमगातो ट्ठितिबंधातो ट्ठितिखंडगपुहुत्ते णामगोयाणं पलिओवमट्ठितिगो बंधो, नाणावरणदंसणावरणवेयणिज्जंतराइयाणं चउण्ह वि दिवड्ढपलिओवमट्ठितीतो बंधो, मोहणिज्जस्स बिपलिओवमट्ठितीतो बंधो। सव्वेसिं संताणि जहक्कमहीणाणि अंतोकोडाकोडीए, तं कालं 'पल्लस्स संखगुणहाणि'त्ति–जस्स जस्स पलिओवमसमगो ट्ठितिबंधो होति तप्पभिति तस्स तस्स संखेज्जगुणहाणीए ट्ठितिबंधो ओसरति। कहं? भण्णइ–नामगोयाणं पलिओवमट्ठितिगाओ बंधातो अन्नं जं ट्ठितिं बंधिहिति तप्पलिओवमस्स संखेज्जगुणहीणं बंधति, सेसाणं कम्माणं पलिओवमस्स संखेज्जतीभागहीणं चेव ट्ठितिं बंधति। एवं संखेज्जेसु ठितिबंधसहस्सेसु गएसु नाणावरणदंसणावरणवेयणीयअंतराईयाणं पलिओवमट्ठितितो बंधो, मोहणिज्जस्स दिवड्ढ पलिओवमट्ठितिबंधो, ताहे नाणावरणदंसणावरणवेयणिज्जअंतराइयाणं पि जो अन्नो ट्ठितिबंधो सो संखेज्जगुणहीणो पलिओवमस्स आढवेइ। मोहणिज्जस्स संखेज्जतिभागहीणो चेव ट्ठितिबंधो। ततो अन्नेण ट्ठितिखंडगपुहुत्तेण मोहणिज्जस्स ट्ठितिबंधो पलिओवमं, ताहे मोहाउयवज्जाणं छण्हं कम्माणं पलिओवमस्स संखेज्जतिभागो ट्ठितिबंधो। तत्थ अप्पावहुगं–णामगोयाणं थोवाणि, मोहणिज्जाउयवज्जा चत्तारि कम्मा तुल्ला संखेज्जगुणा, मोहणिजस्स संखेज्जगुणं।' मोहस्स जाव पल्लं संखेज्जतिभागहा'इति–जाव मोहणिज्जं पलिओवमट्ठितिगं होइ ताव मोहणिजस्स ठितिबंधो पलिओवमस्स संखेज्जतिभागेण

चेव ओसरति । 'अमोहातो नवरिमसंखगुण'त्ति सव्वेसिं पलिओवमस्स संखेज्जतिभागे ट्ठितिबंधे जाते, 'अमोहाउ नवरिमसंखेज्जगुणा' अमोहत्ति मोहणिज्जवज्जाणं गहणं, ततो नामगोयाणं असंखेज्जगुणं हीणमाढवेति, सेसाणं संखेज्जगुणमेव बंधति । तत्थप्पबहुगं–सव्वथोवा नामगोया, मोहाउ य वज्जा सेसा चत्तारि वि तुल्ला असंखेज्जगुणा, मोहणिज्जं संखेज्जगुणं । ततो ठितिखंडगसहस्सेसु गतेसु अन्नो ट्ठितिबंधो नाणावरणादीणं तिण्हं अंतराइयस्स य असंखेज्जगुणहीणो आढवेति, ताहे अप्पाबहुगं–सव्वथोवा नामगोया, णाणावरणादि तिन्नि अंतरातिय च एए चत्तारि वि तुल्ला असंखेज्जगुणा, मोहणिज्जं असंखेज्जगुणं। ततो ट्ठितिबंधसहस्सेसु बहुसु गएसु 'एक्कप्पहारेण तीसगाणमहो मोहे'त्ति–एक्कप्पहारेणं चेवत्ति एक्कहेल्लाए 'तीसगाणं'ति–नाणावरणदंसणावरणवेयणियअंतराईयाणि एएसिं ट्ठितीतो मोहणिज्जस्स ट्ठिती असंखेज्जगुणहीणा य। नत्थि अन्नो विकप्पो जाव मोहणीज्जं उवरि आसी असंखेज्जगुणसामी असंखेज्जगुणाओ चेव असंखेज्जगुणहीणं जातं । एत्थ अप्पाबहुगं–सव्वथोवाणि नामगोयाणि, मोहणिज्जं असंखेज्जगुणं, तीसगाणि चत्तारि तुल्लाणि असंखेज्जगुणाणि । 'वीसगहेट्ठा य' त्ति–वीसगार्ति नामगोयाइं, एएण अप्पाबहुविहिणा ट्ठितिबंधसहस्साणि गयाणि बहूणि, ततो अन्नो ट्ठितिबंधो नामगोयाण हेट्ठतो एकप्पहारेण मोहणिज्जं जायं । एत्थ अप्पाबहुगं–ट्ठितिबंधं पडुच सव्वत्थोवं मोहणिज्जं, नामगोयाणि दोवि तुल्लाणि असंखेज्जगुणाणि , तीसगाणि चत्तारि वि तुल्लाणि असंखेज्जगुणाणि । एएण कमेण संखेज्जाणि ठितिबंधसहस्साणि गताणि ततो अन्नो ट्ठितिबंधो 'तीसगाणि उप्पिं ततियं च' त्ति–ततियं वेय-

णिज्जं तं ट्ठिति पडुच्च सव्वोवरि जायं, तस्स अप्पाबहुगं-सव्वथोवं मोहणिज्जं, णामगोयाणि दोन्निवि तुल्लाणि असंखेज्जगुणाणि, णाणावरण दंसणावरणअंतरातियाणि तिन्नि वि तुल्लाणि असंखेज्जगुणाणि, वेयणिज्जं असंखेज्जगुणं। नाणावरणं दंसणावरणं अंतराइगाणं वेयणिज्जं ट्ठितिबंधातो उसरंताणं णत्थि विकप्पो संखेज्जगुणहीणं वा विसेसहीणं वा एकप्पहारेण असंखेज्जगुणहीणाणि तिन्नि वि। एएण अप्पाबहुगविहिणा संखेज्जाणि ट्ठितिबंधसहस्साणि गयाणि 'तो तीसगाणमुप्पि च वीसगाति'त्ति। ततो नाणावरणदंसणावरण अंतराइयाणं बंधट्ठितीतो उवरिं नामगोयाणं ट्ठिति जाया। एत्थ ट्ठितीणं अप्पाबहुगं-सव्वत्थोवा मोहणिज्जट्ठिति, णाणावरणदंसणावरण-अंतराइयाणं तिण्हवि ट्ठितीतो तुल्लातो असंखेज्जगुणातो. नामगोयाणं दोण्ह वि ट्ठितीतो असंखेज्जगुणातो, वेयणिज्जट्ठिती विसेसाहिया। 'असंखगुणणाए'त्ति जह मोहणिज्जं नाणावरणादीहिं असंखेज्जगुणं(हीणं) आसि ततो पभिति सव्वत्थ असंखेज्जगुणहीणं गति 'ततियं च वीसगाहिय विसेसमहिगं कमेणेइ'-त्ति ततियं वेयणिज्जं नामगोएहिंतो विसेसाहियं जायं कमेणेति त्ति सव्वत्थ संभवति [तंमि संम० एसिं पुव्वं सतं अंतोकोडाकोडीए जाव्वमहीयत्ति] ॥३७-३८-३९॥

(मलय०)—तदेवाह-'पल्ल' इत्यादि-पल्योपमसार्धपल्योपमद्विपल्योपमानि यावत् पूर्वक्रमेणैव हानिरल्पबहुत्वं च। इयमत्र भावना-एकेन्द्रियबन्धतुल्यात् बन्धादनन्तरं स्थितिखण्डसहस्रेषु गतेषु नामगोत्रयोः स्थितिबन्धः पल्योपममात्रः, ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां सार्धपल्योपमप्रमाणः, मोहनीयस्य द्विपल्योपममानः। अमुं च पल्योपमसार्धपल्योपमादिकं स्थितिबन्धं यावत् प्राक्तनः

चारित्रमोहोपशमना

चेव ओसरति । ‘अमोहातो नवरिमसंखगुण’त्ति सव्वेसिं पलिओवमस्स संखेज्जतिभागे ट्ठितिबंधे जाते, ‘अमोहाउ नवरिमसंखेज्जगुणा’ अमोहत्ति मोहणिज्जवज्जाणं गहणं, ततो नामगोयाणं असंखेज्जगुणं हीणमाढवेति, सेसाणं संखेज्जगुणमेव बंधति । तत्थप्पबहुगं–सव्वथोवा नामगोया, मोहाउ य वज्जा सेसा चत्तारि वि तुल्ला असंखेज्जगुणा, मोहणिज्जं संखेज्जगुणं । ततो ठितिखंडगसहस्सेसु गतेसु अन्नो ट्ठितिबंधो नाणावरणादीणं तिण्हं अंतराइयस्स य असंखेज्जगुणहीणो आढवेति, ताहे अप्पाबहुगं–सव्वथोवा नामगोया, णाणावरणादि तिन्नि अंतरातिय च एए चत्तारि वि तुल्ला असंखेज्जगुणा, मोहणिज्जं असंखेज्जगुणं। ततो ट्ठितिबंधसहस्सेसु बहुसु गएसु ‘एक्कप्पहारेण तीसगाणमहो मोहे’त्ति–एक्कप्पहारेणं चेवत्ति एक्कहेल्लाए ‘तीसगाणं’ति–नाणावरणदंसणावरणवेयणियअंतराईयाणि एएसिं ट्ठितीतो मोहणिज्जस्स ट्ठिती असंखेज्जगुणहीणा य। नत्थि अन्नो विकप्पो जाव मोहणीज्जं उवरि आसी असंखेज्जगुणसामी असंखेज्जगुणाओ चेव असंखेज्जगुणहीणं जातं। एत्थ अप्पाबहुगं–सव्वथोवाणि नामगोयाणि, मोहणिज्जं असंखेज्जगुणं, तीसगाणि चत्तारि तुल्लाणि असंखेज्जगुणाणि। ‘वीसगहेट्ठा य’ त्ति–वीसगाति नामगोयाइं, एएण अप्पाबहुविहिणा ट्ठितिबंधसहस्साणि गयाणि बहूणि, ततो अन्नो ट्ठितिबंधो नामगोयाण हेट्ठतो एकप्पहारेण मोहणिज्जं जायं। एत्थ अप्पाबहुगं–ट्ठितिबंधं पडुच सव्वत्थोवं मोहणिज्जं, नामगोयाणि दोवि तुल्लाणि असंखेज्जगुणाणि, तीसगाणि चत्तारि वि तुल्लाणि असंखेज्जगुणाणि। एएण कमेण संखेज्जाणि ठितिबंधसहस्साणि गताणि ततो अन्नो ट्ठितिबंधो ‘तीसगाणि उप्पिं ततियं च’ त्ति–ततियं वेय-

स्थितिबन्धः सर्वोऽपि पूर्वस्मात् पूर्वस्मात् पल्योपमस्य संख्येयतमेन भागेन हीनो हीनतरो वेदितव्यः। स्थितिसत्कर्मणोऽपि चाल्पबहुत्वं तथैव। 'पल्लस्स संखगुणहाणि'त्ति–पल्यस्य पल्योपमस्याधः स्थितिबन्धः संख्येयगुणहान्या भवति, एतदुक्तं भवति–यस्य कर्मणो यदा पल्योपमप्रमाणः स्थितिबन्धस्तस्य तदा तत्कालादारभ्यान्योऽन्यः स्थितिबन्धः संख्येयगुणहीनो भवति। ततश्चेदानीं नामगोत्रयोः पल्योपमप्रमाणात् स्थितिबन्धात् अन्यं स्थितिबन्धं संख्येयगुणहीनं करोति, शेषाणां तु कर्मणां पल्योपमसंख्येयभागहीनम्। एवं कतिपयेषु स्थितिबन्धसहस्रेषु गतेषु ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां पल्योपममात्रः स्थितिबन्धः, मोहनीयस्य च सार्धपल्योपममात्रः। ततो ज्ञानावरणादीनामन्यः स्थितिबन्धः संख्येयगुणहीनः, मोहनीयस्य तु संख्येयभागहीनः। तत ऊर्ध्वं स्थितिबन्धसहस्रेषु गतेषु मोहनीयस्य स्थितिबन्धः पल्योपमप्रमाणो भवति। ततो मोहनीयस्यान्यः स्थितिबन्धः संख्येयगुणहीनः प्रवर्तते। तदानीं च शेषकर्मणां स्थितिबन्धः पल्योपमसंख्येयभागप्रमाणः। अत्राल्पबहुत्वं चिन्त्यते–नामगोत्रयोः स्थितिसत्कर्म सर्वस्तोकम्। ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां संख्येयगुणम्, स्वस्थाने तु परस्परं तुल्यम्। ततोऽपि मोहनीयस्य संख्येयगुणम्। 'मोहस्स जाव पल्लं संखिज्जभागहं' त्ति यावन्मोहस्य मोहनीयस्य पल्योपममात्रः स्थितिबन्धो न भवति तावत्प्राक्तनः सर्वोऽपि मोहनीयस्य स्थितिबन्धः पल्योपमसंख्येयतमेन भागेन हीनो हीनतरो वेदितव्यः, पल्योपममात्रे स्थितिबन्धे सत्यन्यं स्थितिबन्धं संख्येयगुणहीनं करोति। एतच्च प्रागेवोक्तम्। अस्माच्च संख्येयगुणहीनात् मोहनीयस्य स्थितिबन्धात् प्रभूतेषु स्थितिबन्धेषु गतेषु सत्सु मोहनीयस्यापि स्थितिबन्धः पल्योपमस्य संख्येयभागमात्रो भवति। तदानीं च यद्भवति तदाह–'अमोहा तो नवर मसंखिज्जगुण'त्ति 'अमोह' त्ति–मोहनीयवर्जयोर्नामगोत्रयोर्ग्रहणम्, सर्वेषां कर्मणां पल्योपमसंख्येयभागमात्रे स्थितिबन्धे सति अमोहयोर्नामगोत्रयोरसंख्येयगुणहीन-

गन्ध स्थितिबन्धमारभते, शेषाणां तु संख्येयगुणहीनम् । अत्र स्थितिसत्कर्मापेक्षयाऽल्पबहुत्वं चिन्त्यते–सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामसंख्येयगुणं, स्वस्थाने तु परस्परं तुल्यं ततोऽपि मोहनीयस्य संख्येयगुणम् । ततः स्थितिघातसहस्रेषु गतेषु सत्सु ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धोऽसंख्येयगुणहीनो भवति । तदानीं च स्थितिसत्कर्मापेक्षयाऽल्पबहुत्वं चिन्त्यते–सर्वस्तोकं नामगोत्रयोः सत्कर्म, ज्ञानावरणीयादीनां चतुर्णामसंख्येयगुणं, स्वस्थाने तु परस्परं तुल्यम्, ततो मोहनीयस्यासंख्येयगुणम् । ततः स्थितिघातसहस्रेषु गतेषु सत्सु 'एकपहारेण तीसगाणमहो मोहे'त्ति–एकपहारेण एकहेलयैव त्रिंशत्कानां–त्रिंशत्सागरोपमकोटीकोटीस्थितिकानां ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामधस्तान्मोहनीयस्य स्थितिरसंख्येयगुणहीना भवति । नैवात्रान्यो विकल्पः कश्चित्करणीयः । इयमत्र भावना–पूर्वं मोहनीयस्य सत्कर्म ज्ञानावरणीयादीनामुपरिष्टादसंख्येयगुणमासीत्, सम्प्रति पुनरेकहेलयैव तेषामधस्तादसंख्येयगुणहीनं जातमिति । अत्राल्पबहुत्वमुच्यते–सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो मोहनीयस्यासंख्येयगुणं, ततोऽपि ज्ञानावरणीयादीनां चतुर्णामसंख्येयगुणं, स्वस्थाने तु परस्परं तुल्यम् । ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु 'वीसग हेट्ठा य'–मोहनीयस्य स्थितिबन्ध एकहेलयैव विंशतिकयोर्विंशतिसागरोपमकोटीकोटीस्थितिकयोर्नामगोत्रयोरधस्तादसंख्येयगुणहीनो जातः । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते–सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततो ज्ञानावरणीयादीनां चतुर्णामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः । ततः कतिपयेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु 'तीसगाणुप्पि तइयं च'–तृतीयं वेदनीयं स्थितिसत्कर्माधिकृत्य त्रिंशत्कानां त्रिंशत्सागरोपमकोटीकोटिस्थितिकानां ज्ञानावरणदर्शनावरणान्तरायाणामुपरि जातम् । एतदुक्तं भवति–मोहनीयनामगोत्राणि स्थिति-

सत्कर्माधिकृत्य प्राक् त्रिंशत्कानामधस्ताज्जातानि, सम्प्रति पुनस्त्रिंशत्कानामपि मध्ये ज्ञानावरणदर्शनावरणान्तरायाणि वेदनीयस्याधस्ताज्जातानि, वेदनीयं तु सर्वोपरि जातम्। तदनन्तरं च तस्य वेदनीयस्यान्यः स्थितिबन्धः सर्वेभ्योऽप्यसंख्येयगुणो जायते। स्थितिबन्धमेवाश्रित्याल्पबहुत्वमुच्यते—सर्वस्तोको मोहनीयस्य स्थितिबन्धः। ततो नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः। ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः। ततोऽपि वेदनीयस्यासंख्येयगुणः। ततोऽनेनैव विधिना स्थितिबन्धसहस्रेषु गतेषु सत्सु 'तो'ति इति—ततः 'त्रिंशत्कानां' त्रिंशत्सागरोपमकोटीकोटीस्थितिकानां ज्ञानावरणदर्शनावरणान्तरायाणां स्थितिबन्धमधिकृत्योपरि विंशतिके नामगोत्रे जाते। अत्राल्पबहुत्वं—सर्वस्तोको मोहनीयस्य स्थितिबन्धः। ततो ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः ततोऽपि नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः। ततोऽपि वेदनीयस्य विशेषाधिकः। 'असंखगुणणाए'त्ति—यत्र मोहनीयं ज्ञानावरणादिभ्योऽसंख्येयगुणहीनं जातम् ततःप्रभृति सर्वत्राप्यसंख्येयगुणहीनमेव क्रमेण एति आगच्छति। तथा 'तृतीयं' च—वेदनीयं 'विंशतिकाभ्यां'—विंशतिसागरोपमकोटीकोटीप्रमाणस्थितिकाभ्यां नामगोत्राभ्यां विशेषाधिकं संजातं सत् सर्वत्रापि विशेषाधिकमेव क्रमेण एति—अनुवर्तते ॥३७–३८–३९॥

(उ०)—पल्योपमसार्धपल्योपमद्विपल्योपमानि यावत्पूर्वक्रमेणैव हानिरल्पबहुत्वं च। अयमिह भावार्थः—एकेन्द्रियबन्धतुल्यबन्धानन्तरं स्थितिखण्डसहस्रेषु गतेषु सत्सु नामगोत्रयोः स्थितिबन्धः पल्योपममात्रः, ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां सार्धपल्योपममानः, मोहनीयस्य द्विपल्योपमप्रमाणो भवति। अमुं च पल्योपमसार्धपल्योपमादिकं स्थितिबन्धं यावत्प्राक्तनः स्थितिबन्धः सर्वोऽपि पूर्वस्मात्पूर्वस्मात् पल्योपमस्य संख्येयतमेन भागेन हीनो हीनतरो ज्ञातव्यः। स्थितिसत्कर्मणोऽपि चाल्पबहुत्वं बन्धक्रमेण तथैवेति।

पल्यस्येति षष्ठी पञ्चम्यर्थे , अध इति चाध्याहर्तव्यं । ततः पल्योपमादधः स्थितिबन्धस्य संख्येयगुणहानिर्भवतीत्यर्थः । इदमुक्तं भवति-यस्य कर्मणो यदा पल्योपमप्रमाणः स्थितिबन्धस्तस्य तत्कालादनन्तरमन्योऽन्यः स्थितिबन्धो जायमानः संख्येयगुणहीनो पमसंख्येयभागहीनं करोति । एवं कतिपयेषु स्थितिबन्धसहस्रेषु गतेषु ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां पल्योपममात्रः स्थिति- बन्धः, मोहनीयस्य च सार्धपल्योपममात्रः स्यात् । ततो ज्ञानावरणीयादीनामन्यः स्थितिबन्धः संख्येयगुणहीनः, मोहनीयस्य तु संख्येयभागहीनः, तत ऊर्ध्वं स्थितिबन्धसहस्रेषु गतेषु मोहनीयस्य स्थितिबन्धः पल्योपमप्रमाणो भवति । ततो मोहनीयस्यान्यः स्थितिबन्धः संख्येयगुणहीनः प्रवर्तते । तदानीं च शेषकर्मणां पल्योपमसंख्येयभागप्रमाणः स्थितिबन्धो भवति । अत्राल्पबहुत्वमेत- त्-नामगोत्रयोः स्थितिसत्कर्म सर्वस्तोकं, ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां संख्येयगुणं, स्वस्थाने तु परस्परं तुल्यं, ततोऽपि मोहनीयस्य संख्येयगुणं । ' मोहस्स जाव पल्लं संखेज्जइभागहा 'त्ति-यावन्मोहस्य मोहनीयस्य पल्यं पल्योपममात्रः स्थितिबन्धो न भवति तावत्प्राक्तनः सर्वोऽपि मोहनीयस्य स्थितिबन्धः संख्येयभागहाः पल्योपमस्य संख्येयतमेन भागेन हीनो हीनतरो वेदितव्यः, पल्योपममात्रे च स्थितिबन्धे जाते सत्यन्यं स्थितिबन्ध संख्येयगुणहीनं करोति, एतच्च भावितमेव । अस्माच्च संख्येयगुणहीनान्मोह- नीयस्य स्थितिबन्धात्प्रभृतेषु स्थितिबन्धेषु गतेषु सत्सु मोहनीयस्यापि स्थितिबन्धः पल्योपमसंख्येयभागमात्रो भवति । तदानीं च य- त्भवति तदाह—'अमोहा तो णवरमसंखगुणेत्यादि' 'तो' त्ति-ततः सर्वेषां कर्मणां पल्योपमसंख्येयभागमात्रस्थितिबन्धभवनानन्तरं ' अमोहे ' इति द्विवचनतात्पर्यान्मोहनीयवर्जे नामगोत्रे गृह्येते, नवरं केवलं अन्यं स्थितिबन्धमधिकृत्यासंख्येयगुणहीने भवतः,

भवति । ततश्चेदानीं नामगोत्रयोः पल्योपमप्रमाणात् स्थितिबन्धादन्यं स्थितिबन्धं संख्येयगुणहीनं करोति, शेषाणां तु कर्मणां पल्यो-

अन्यं स्थितिबन्धं नामगोत्रयोरसंख्येयगुणहीनमारभते, शेषाणां तु संख्येयगुणहीनमित्यर्थः । अत्र स्थितिसत्कर्मापेक्षयाऽल्पबहुत्वं चिन्त्यते--सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिसत्कर्मासंख्येयगुणं स्वस्थाने तु परस्परं तुल्यं, ततोऽपि मोहनीयस्य संख्येयगुणम् । ततः स्थितिघातसहस्रेषु गतेषु सत्सु ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धोऽसंख्येयगुणहीनो भवति । तदानीं स्थितिसत्कर्माधिकृत्येदमल्पबहुत्वं--सर्वस्तोकं नामगोत्रयोः सत्कर्म, ज्ञानावरणीयादीनां चतुर्णां ततोऽसंख्येयगुणं स्वस्थाने तु मिथः समानं, ततो मोहनीयस्यासंख्येयगुणम् । ततः स्थितिघातसहस्रेषु गतेषु सत्सु 'एक्कपहारेण तीसगाणमहो मोहे' त्ति-एकप्रहारेणैकहेलयैव त्रिंशत्कानां त्रिंशत्सागरोपमकोटाकोटिस्थितिकानां ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामधस्तान्मोहनीये कर्मणि स्थितिबन्धं सत्तां चाधिकृत्यासंख्येयगुणहानिर्भवति, नात्र कश्चिदन्यो विकल्पः करणीयः। पूर्वं हि मोहनीयस्य सत्कर्म ज्ञानावरणीयादीनामुपरिष्टादसंख्येयगुणमासीत्, सम्प्रति पुनरेकहेलयैव तेषामधस्तादसंख्येयगुणहीनं जातमिति, बृहत्तरस्थितिखण्डापवर्तनमेतदिति भावः । अत्राल्पबहुत्वमुच्यते – सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो मोहनीयस्यासंख्येयगुणं, ततोऽपि ज्ञानावरणीयादीनां चतुर्णामसंख्येयगुणमिति । ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु ' वीसगहेट्ठा य' त्ति-मोहनीयस्य स्थितिबन्ध एकहेलयैव विंशतिकयोर्विंशतिसागरोपमकोटाकोटिस्थितिकयोर्नामगोत्रयोरधस्तादसंख्येयगुणहीनो जातः । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते—सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः स्वस्थाने तु परस्परं तुल्यः, ततो ज्ञानावरणादीनां चतुर्णामसंख्येयगुणः स्वस्थाने तु परस्परं तुल्यः । ततः कतिपयेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु 'तीसगाणुप्पि तइयं च' त्ति-तृतीयं वेदनीयं स्थितिसत्कर्माधिकृत्य त्रिंशत्कानां त्रिंशत्सागरोपमकोटाकोटिस्थितिकानां ज्ञानावरणदर्शनावरणान्तरायाणामुपरि

ज्ञानम् । इदमुक्तं भवति–मोहनीयनामगोत्राणि स्थितिमत्कर्माधिकृत्य प्राक् त्रिंशत्कानामधस्ताज्जातानि सम्प्रति तु त्रिंशत्कानामपि मध्ये ज्ञानावरणदर्शनावरणान्तरायाणि वेदनीयस्याधस्ताज्जातानि, वेदनीयं तु सर्वोपरि जातम् । तदनन्तरं च तस्य वेदनीयस्यान्यः स्थितिबन्धः सर्वेभ्योऽप्यसंख्येयगुणो जायते । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वमुच्यते–सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु मिथः समानः, ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः, स्वस्थाने तु मिथस्तुल्यः, ततोऽपि वेदनीयस्यासंख्येयगुणः । ततोऽनेनैव विधिना स्थितिबन्धसहस्रेषु गतेषु सत्सु त्रिंशत्कानां–त्रिंशत्सागरोपमकोटाकोटिस्थितिकानां ज्ञानावरणदर्शनावरणान्तरायाणामुपरि स्थितिबन्धमधिकृत्य विंशतिके नामगोत्रे जाते । अत्राल्पबहुत्वमिदं–सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि वेदनीयस्य विशेषाधिकः । 'असंखगुणणाए'त्ति–यत्र मोहनीयं ज्ञानावरणादिभ्योऽसंख्येयगुणहीनं कृतं ततः प्रभृति सर्वत्राप्यसंख्येयगुणहीनमेव क्रमेण एत्यागच्छति । तथा तृतीयं वेदनीयं विंशतिकाभ्यां नामगोत्राभ्यां विशेषाधिकं जातं सत्सर्वत्रापि विशेषाधिकमेव क्रमेण एत्यनुवर्तते ॥३७–३८–३९॥

जंमि काले एरिसो ठितिबंधो तंमि काले केवति कालट्ठितीगा उदीरणा एइ तं निरूवणत्थं भवति—

अह उदीरणा असंखेज्जसमयबद्धाण देसघाइ त्थ । दाणंतरायमणपज्जवं च तो ओहिदुगलाभो ॥४०॥

सुयभोगाचक्खूओ चक्खू य ततो मई सपरिभोगा । विरियं च असेढिगया बंधंति ऊ सव्वघाईणि ॥४१॥

(चू०)—'अह उदीरणा असंखेज्जसमयबद्धाण'त्ति–अहसद्दो अन्नाहिगारे, असंखेज्जसमयबद्धाणं कम्माणं उदीरणा । किहं भण्णइ–जाहे पलिओवमस्स असंखेज्जतिभागं ट्ठिती बन्धन्ति तम्मि काले जातो कंमट्ठितीतो बज्झ-

माणट्ठितीओ समयादिहीणातो तालो ट्ठितीतो उदीरणं एन्ति उपरिमाउं न इंति उदीरणं। 'देसघाति त्थ'त्ति-तो ट्ठितिबन्धसहस्सेसु गएसु 'दाणंतरायमणपज्जवं च'त्ति-दाणंतरायमणपज्जवनाणावरणाणं बन्धो देसघातिं करेइ। 'ओहिदुगलाभ'त्ति-ततो संखेज्जेसु ट्ठितीबन्धसहस्सेसु गतेसु ओहिनाणावरणीज्जं ओहिदंसणावरणीज्जं लाभंतराट्ठितीयाणं बन्धो देसघाती करेइ। 'सुयभोगाचक्खूओ'त्ति-ततो संखेज्जेसु ट्ठितीबन्धसहस्सेसु गतेसु सुयनाणावरणीज्जं अचक्खुदंसणावरणीज्जं भोगन्तरातियं च बन्धेणं देसघाइं करेइ। 'चक्खु य'त्ति-ततो संखेज्जेसु ट्ठितिबन्धसहस्सेसु गतेसु चक्खुदंसणावरणिज्जं बंधेणं देसघाइं करेइ। 'ततो मति सपरिभोग'त्ति-ततो संखेज्जेसु ट्ठितिबन्धसहस्सेसु गतेसु मतिणाणावरणीयं परिभोगतराइयं च बंधेण देसघाइं करेइ। 'वीरियं च'त्ति-तत्तो संखेज्जेसु ठितिबंधसहस्सेसु गतेसु वीरियन्तराइतं बंधेणं देसघाति करेति। 'असेढिगया बन्धन्ति उ सव्वघाईणि'त्ति-अक्खवगअणुवसामगा सव्वे सव्वघाइं बन्धन्ति ॥४०-४१॥



(मलय०)—'अह'इत्यादि। अथशब्दोऽधिकारान्तरसूचकः। यस्मिन् काले सर्वकर्मणां पल्योपमासंख्येयभागमात्रः स्थितिबन्धस्तस्मिन् कालेऽसंख्येयसमयबद्धानामेव कर्मणामुदीरणा प्रवर्तते। कथमेतदवसीयत इति चेद्,उच्यते-इह यदा पल्योपमासंख्येयभागमात्रं स्थितिबन्धं करोति तदा बध्यमानप्रकृतिस्थित्यपेक्षया याः पूर्वबद्धाः समयादिहीनाः स्थितयस्ता एवोदीरणामुपगच्छन्ति, नान्याः। ताश्च चिरकालबद्धा एव क्षीणशेषाः संभवन्तीत्यसंख्येयसमयबद्धानां तदानीमुदीरणा। 'देसघाइ त्थ' इत्यादि-ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु 'अत्र'-अस्मिन् प्रस्तावे दानान्तरायं मनःपर्यवज्ञानावरणं च देशघाति बध्नाति, दानान्तरायमनःपर्यायज्ञानावरणयोरनुभागबन्धं देशघातिनं करोतीत्यर्थः। ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु अवधिज्ञानावरणावधिदर्शनावरणलाभान्तरायाणामनुभागं देश-

घातिनं वध्नाति। ततोऽपि संख्येयेषु स्थितिवन्धसहस्रेषु गतेषु सत्सु श्रुतज्ञानावरणाचक्षुर्दर्शनावरणभोगान्तरायाणामनुभागं देशघातिनं
वध्नाति। ततः संख्येयेषु स्थितिवन्धसहस्रेषु गतेषु सत्सु चक्षुर्दर्शनावरणीयस्यानुभागं देशघातिनं वध्नाति। ततोऽपि संख्येयेषु स्थिति-
वन्धसहस्रेषु गतेषु सत्सु मतेः-मतिज्ञानावरणीयस्य 'सपरिभोग' त्ति-सपरिभोगान्तरायस्यानुभागं देशघातिनं वध्नाति। ततः पुनरपि
स्थितिवन्धसहस्रेषु गतेषु सत्सु वीर्यान्तरायानुभागं देशघातिनं वध्नाति। 'असेढिगया' इत्यादि-अश्रेणिगताः क्षपकश्रेणिरहिता उप-
शमश्रेणिरहिता वा वन्धकाः पूर्वोक्तान्यपि कर्माणि सर्वघातीनि वध्नन्ति, पूर्वोक्तप्रकृतीनामनुभागं सर्वघातिनं वध्नन्तीत्यर्थः ॥४०-४१॥

(३०)—अथशब्दोऽधिकारान्तरसूचकः, यस्मिन् काले सर्वकर्मणां पल्योपमासंख्येयभागमात्रः स्थितिवन्धस्तस्मिन् कालेऽसंख्य-
समयवद्धानामेव कर्मणामुदीरणा प्रवर्तते, यतस्तावन्मात्रस्थितिवन्धकरणे वध्यमानप्रकृतिस्थित्यपेक्षया याः पूर्ववद्धाः समयादिहीनाः
स्थितयस्ता एवोदीरणामुपगच्छन्ति, नान्याः, ताश्च चिरकालवद्धाः क्षीणशेषाः संभवन्तीत्यसंख्येयसमयवद्धानां तदानीमुदीरणा।
ततः स्थितिवन्धसहस्रेषु परिगलितेष्वत्रास्मिन् प्रस्तावे दानान्तरायं मनःपर्यायज्ञानावरणं च देशघाति वध्नाति, अनयोरनुभागं देश-
घातिनं वध्नातीत्यर्थः। ततः स्थितिवन्धसहस्रेषु गतेषु सत्सु अवधिज्ञानावरणावधिदर्शनावरणलाभान्तरायाणामनुभागं देशघातिनं
वध्नाति। ततोऽपि संख्येयेषु स्थितिवन्धसहस्रेषु गतेषु सत्सु श्रुतज्ञानावरणभोगान्तरायाचक्षुर्दर्शनावरणानामनुभागं देशघातिनं वध्नाति।
ततोऽपि संख्येयेषु स्थितिवन्धसहस्रेष्वतिक्रान्तेषु चक्षुर्दर्शनावरणीयस्यानुभागं देशघातिनं वध्नाति। ततोऽपि संख्येयेषु स्थितिवन्ध-
सहस्रेष्वतीतेषु 'मई सपरिभोग' त्ति-मतिज्ञानावरणीयस्य परिभोगान्तरायसहितस्यानुभागं देशघातिनं वध्नाति। ततोऽपि स्थितिव-
न्धसहस्रेषु व्यतीतेषु सत्सु वीर्यान्तरायानुभागं देशघातिनं वध्नाति। अश्रेणिगताः क्षपकश्रेणिमुपशमश्रेणिं वाऽप्राप्ताः पूर्वोक्तान्यपि
दानान्तरायादीनि कर्माणि सर्वघातीनि वध्नन्ति, तेषामनुभागं सर्वघातिनं वध्नन्तीत्यर्थः ॥४०-४१॥

## ॥ चारित्रमोहस्य सर्वोपशमनानुक्रमः ॥
### ( पुंवेदसंज्वलेनक्रोधोदयाभ्याम )

**प्रस्थापकः**—उपशमसम्यग्दृष्टि क्षायिकसम्यग्दृष्टिर्वा । प्ररूपणा त्वधोमुखी कार्या ।

**संज्ञार्थः**—स० व०=सङ्ख्येयानि वर्षाणि । शेषवर्ज=प्रथमस्थितेश्चरमावलिका-समयोनावलिकाद्विकेन वद्ध दलिक च वर्जयित्वा । ० ० ० ० ० ० ०=स्थितिघातसहस्राणि । '० ० ० ०' इत्यत्र विन्तवस्तदावारककर्मोदयसूचका , तदधस्तन्यो रेखास्तु स्थितिघा-तसूचनार्थम् ।

**क्रियाक्रमः**




अतोऽन्यस्थितिवन्ध । (पल्यसङ्ख्येय-भागहीनक्रमेण)

अत्र प्रथमसमयादारभ्य स्थितिघाता-दि ५ पदार्था युगपत् प्रवर्तन्ते ।

अत्र निद्राप्रचलयोर्वन्धविच्छेद ।

अत्र देव२-पञ्चे०वै२ तै का०-समच०-वर्णादि ४-अगु० उप०-परा०-उश्वा०-त्रस ९-सुभग०-निर्माण-जिन-आहा० २–इति ३० प्रकृतीना वन्धविच्छेद ।

अत्र चरमसमये हास्यरतिभयकुत्साना वन्धविच्छेदः । हास्यषट्कस्योदयवि-च्छेद । सर्वेषा देशोप –निध –नि-काचनाया अपि विच्छेद ।

महाकायास्त्रिधा राजन्प्रस्रवन्तो मदं बहु ।
तेजोवीर्यबलोपेता महाबलपराक्रमाः ॥ ५२
घटोत्कचस्तु स्वं नागं चोदयामास तं ततः ।
सगजं भगदत्तं तु हन्तुकामः परंतपः ॥ ५३
ते चान्ये चोदिता नागा राक्षसैस्तैर्महाबलैः ।
परिपेतुः सुसंरब्धाश्चतुर्दंष्ट्राश्चतुर्दिशम् ।
भगदत्तस्य तं नागं विषाणैस्तेऽभ्यपीडयन् ॥ ५४

---

प्रणम्य विकच पादावगृह्णात्पितरं तदा ।
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ।
घटोत्कचस्योत्कपूर्वं माता तं प्रत्यभाषत । [७]
अब्रवीत्तेन नामास्य घटोत्कच इति स्म ह ।
न हि सृष्टो मघवता कर्णहेतोर्महात्मना ।
कर्णस्याप्रतिवीर्यस्य प्रतियोद्धा महारथः ।

सो अन्तरकरणे ठिओ जाव" ॥२३॥

**सम्मादिट्ठी नियमा उवइट्ठं पवयणं तु सद्दहइ । सद्दहइ असब्भावं अजाणमाणो गुरुनियोगा ॥२४॥**

(चू०)—'सम्मद्दिट्ठी नियमा' गाहासिद्धं ॥२४॥

(मलय०)—सम्प्रति सम्यग्दृष्टेः स्वरूपमाह–'सम्मद्दिट्ठि' त्ति । सम्यग्दृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमात् यथावत् श्रद्धत्ते एव तुरेवकारार्थो भिन्नक्रमश्च । यः पुनः सम्यग्दृष्टिरपि 'असब्भावं' असद्भूतं प्रवचनं श्रद्दधाति सोऽवश्यमजानन्–स्वयं सम्यक्परिज्ञानविकलः सन्, यद्वा गुरोस्तथाविधसम्यक्परिज्ञानविकलस्य मिथ्यादृष्टेर्वा जमालिप्रख्यस्य नियोगादाज्ञापारतन्त्र्यात्, नान्यथा ॥२४॥

(उ०)—अथ सम्यग्दृष्टिस्वरूपमाह–सम्यग्दृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमाद्यथावत् श्रद्धत्त एव तुरेवकारार्थो भिन्नक्रमश्च । यः पुनः सम्यग्दृष्टिरप्यसद्भावमसद्भूतं प्रवचनं श्रद्धाति सोऽवश्यमजानन् स्वयं परिज्ञानविकलः सन् यद्वा गुरोस्तथाविधसम्यक्परिज्ञानविकलस्य मिथ्यादृष्टेर्वा जमालिप्रख्यस्य नियोगादाज्ञापारतन्त्र्यात्, नान्यथा । अत्र च साहजिकमज्ञानं ज्ञानावरणविपाकोदयसान्निध्यमात्रादुपजायमानं न सम्यक्त्वप्रतिबन्धकम् । गुरुनियोगजनितं तु मध्यस्थस्य विनेयस्य नानामतदर्शिनो मिथ्यात्वप्रदेशोदयमहिम्ना विप्रतिपत्त्युपनीतप्रवचनार्थसंशयरूपं सम्यक्त्वप्रतिबन्धाभिमुखमपि तमेव सच्चमित्याद्यालम्बनरूपोत्तेजकप्रभावान्न सम्यक्त्वं प्रतिबद्धुमलम्,इत्यज्ञानाद्गुरुनियोगाद्वाऽसद्भूतार्थश्रद्धानेऽपि भावतो जिनाज्ञाप्रामाण्याभ्युपगन्तुर्न शुभात्मपरिणामरूपसम्यक्त्वोपघात इति भावनीयम् । एतेन यदुच्यते केनचित् परपक्षनिश्रितस्य सर्वथा सम्यक्त्वं न भवत्येवेति तदपास्तं द्रष्टव्यं, अनभिनिविष्टस्य मिथ्यादृष्टिनिश्रयाऽपि तदुपनीतासद्भूतार्थश्रद्धानस्यास्वारसिकत्वेन स्वारसिकजिनवचनश्रद्धानाविरोधित्वात् । अभिनिविष्टस्य तु स्वपक्षपति-



अत्रापि प्रथमसमयत पूर्ववत् ५ पदार्था प्रवर्तन्ते। (परमस्य प्रथमसमये पञ्चसंग्रहमतेन बन्धः सत्ता च अन्त को. को सागरप्रमाणा, कर्मप्रकृतिमतेन बन्ध. कोटिसागरप्रमाण सत्ता त्वन्त को. को. प्रमाणा। यद्यपि प्रागुक्तेष्वपि करणेष्वेतावान् बन्ध एतावदेव सत्कर्म सदा कर्मणा प्राप्यते, तथाप्यत्र बन्धसत्कर्मणी तदपेक्षया सङ्ख्येयगुणहीने द्रष्टव्ये इति विशेष। सोऽपि बन्ध. पूर्वक्रमेण हानिं गच्छति)

अत्र सागरोपमसहस्रपृथक्त्वः स्थितिबन्ध (७कर्मणाम्)

अत्रासञ्ज्ञिपञ्चे. तुल्यस्थि बन्ध।

अत्र चतुरिन्द्रियतुल्यस्थितिबन्ध.।

अत्र त्रीन्द्रियतुल्यस्थितिबन्ध।

अत्र द्वीन्द्रियतुल्यस्थितिबन्ध।

अत्रैकेन्द्रियतुल्यस्थितिबन्ध।

इतः प्रारभ्य ७ कर्मणां यस्य कर्मण. पल्यो. मात्रस्थि. बन्ध. तस्यान्तःस्थि. बन्ध सत्त्वे गु. हीनः, शेषाग. पूर्ववत्। अथ तस्मादपि स्तोकतरा-

अत २१मोहनामन्तकरण प्रारभते अनन्तरसमये मोहस्य ७ पदार्था युगपत् प्रवर्तन्ते–१ अनुभागवन्ध १ स्थानक । २ उदीरणा स वा । ३ स्थि व स वा० । ४ पु. –सज्व.ना आनुपू सक्रम । ५ स. लोभस्य शमक्रम । ६ सर्वासामप्युदीरणा वन्धत आव अनन्तर । ७ मोहान्यस्थि. वन्ध स गु हीन, शेषाणा अस गु हीनः । नपुसकोपशमना च ।

अत्र नपु उपशान्त । अतः स- वशिष्ठ उदी तः उदयदलिकमस. गु अतः स्त्रीवेदोपशमनाप्रारम्भः ।

अतः सस दे. घाति ज्ञा. द. नाम् १ स्थान. अनु वन्धः ।

अत्र स्त्रीवेद उपशान्तः । अन- न्तरसमयात् ६ नोक पुवे उप- शमनाप्रारम्भः ।

स ना अतः स गु हान्या स्थि. वन्ध
अत असं. गु. हान्या ,,
अत अस गु हान्या ,, — स.ना. अतः स. गु हान्या
अत अस गु. हान्या ,,

| ० ० ० ० ० ० ० ० ० ० ० ० ० ० | ० ० ० ० ० ० ० ० ० ० ० | ० ० ० ० ० ० ० ० ० ० ० | ० ० ० ० ० ० ० ० ० |
|---|---|---|---|
| स्थि. वन्धसहस्राणि ( अन्तमुहूर्त्त वा ) नपुसकोपशमनाद्धा | उपशमनाद्धाया १ सख्येयभाग | स्थि वन्धसहस्राणि | नोकषायोपशमनाद्धाया १ स भाग ६ नो क षा यो– पु वे– |
| | स्त्रीवेदोपशमनाद्धा ( अन्तर्मु ) | | |

अ न्त र क र ण म्




अत्र स क्रोधागालविच्छेद ।

स.४र्णो ८मासा — अतोऽनन्तरसमये सं. क्रोधस्य वन्धोदयोदीरणाविच्छेद । अप्र. प्र क्रोधावुपशान्तौ । वद्धद वर्जेस क्रोधः उपशान्त. । स क्रोधस्य चरमावलिकावशिष्टा । स मानोदयः । मान३ कोपशमनाप्रारम्भश्च ।

अत्र स. क्रोधस्य चरमावलिकास्तिवुकेन सं माने सक्रान्ता ।

अत्र स क्रोधस्य वद्धदलिक उपशान्त सक्रान्तं च । तेन स क्रोध सर्वथा उपशातः ।

अत्र स मानपतद्ग्रहता भग्ना ।

अत्र स मानागालविच्छेदः ।

स त्रिकस्य २ मासौ — अत्र स मानस्य वन्धोदयोदीरणाविच्छेदः । अप्र प्र मानौ उपशान्तौ । शेषीभूतावलिकावद्धद० वर्जमानोपशान्तिः । स मायाया उदय । माया३कोपशमनाप्रारम्भ ।

अत्र स मानस्य चरमावलिकास्तिवुकेन स मायाया सक्रान्ता ।

अत्र मानः सर्वोपशान्त. । वद्धदलिकमुपशान्त सक्रान्त च ।

भव्यलोभो सर्वोपशान्तो । लोभ-बन्धविच्छेदेन मोहस्याबन्ध [वा], लोभोदयोदीरणाविच्छेद । अनि-वृत्तिकरण. समाप्त । किट्टिकरण समाप्त । अनन्तरसमयात्सूक्ष्मकिट्टि वेदनमुपशमन च ।

अत्र बादरलोभस्य चरमावलिका स्तिबुकेन सक्रान्ता ।

अत्र बद्धदलिकोपशान्तिः ।

अत्र सू. लोभस्य (किट्टे) उदयवि-च्छेद. । मोहस्य सर्वोपशमना । अत्रोपशान्ताद्धाया प्रविष्टो जीव उपशमयथाख्यातचारित्रमुपशान्त-वीतरागत्व च प्राप्नोति । चारित्र-मोहनीय सर्वकरणासाध्य दर्शन-मोहद्विक न सक्रमापवर्तनामात्रसा-ध्य सम्यक्त्व च अपवर्तनामात्रसा-ध्य भवति । भवक्षेण समयावनन्त-रमनुत्तरे गच्छति ।

अत्र उपशान्ताद्धाक्षयेण च यथै-वाऽऽरूढस्तथैव प्रतिपतन् प्रमत्त यावत् गच्छति ।

| | | |
|---|---|---|
| | २४ मु अतः प्रारभ्य सामयिकस्थितिबन्धः प्रवर्तते प्रतिसमय | २४ मुहूर्तादिस्थितिबन्ध पुनः प्रवर्तते |
| | अन्तर्मु (अबन्ध) | अन्तर्मुहूर्तादिस्थितिबन्ध॰ पुनः प्रवर्तते |
| | १६ मु (अबन्ध) | १६ मुहूर्तादिस्थितिबन्ध पुन॰ प्रवर्तते |
| o o o o o o o o o o o o o o<br>आवलिका \| आवलिका<br>कि ट्टि वे द ना द्धा (तृतीयो भाग॰)<br>म ना द्धा (अन्तर्मु.)<br>सू क्ष्म स प रा यः<br>(१०मगुणस्थानमन्तर्मुहूर्त्तम्) | (११ मगुणस्थान अन्तर्मु.)<br>अ न्त र म् (मो ह स्य)<br>(मोहस्य) उ प शा न्ता द्धा | o o o o o o o o o o o o o o o o<br>मोहस्य द्वितीया स्थितिः<br>(अत्रागताना पुनर्मोहोदय उपशमनातो विपर्ययक्रमेण भवति) |




संक्षेपतो मोहोपशमनाक्रमस्य चित्रं ४७ तमपृष्ठादूर्ध्वमुखं वाच्यम्

| | | |
|---|---|---|
| मध्यलोभो सर्वोपशान्तो । लोभबन्धविच्छेदेन मोहस्याबन्ध ।वा. लोभोदयोदीरणाविच्छेद. । अनिवृत्तिकरण. समाप्त । किट्टीकरण समाप्त । अनन्तरसमयात्सूक्ष्मकिट्टिवेदनमुपशमन च ।<br>अत्र बादरलोभस्य चरमावलिका स्तिवुकेन सक्रान्ता ।<br>अत्र बद्धदलिकोपशान्तिः । | अत्र सू लोभस्य (किट्टे) उदयविच्छेद । मोहस्य सर्वोपशमना। अत्रोपशान्ताद्धाया प्रविष्टो जीव उपशमयथाख्यातचारित्रमुपशान्तवीतरागत्वं च प्राप्नोति । चारित्रमोहनीय सर्वकरणासाध्य, दर्शनमोहद्विक च सक्रमापवर्त्तनामात्रसाध्य सम्यक्त्व च अपवर्तनामात्रसाध्य भवति । भवक्षेण समयाद्यनन्तरमनुत्तरे गच्छति । | अत्र उपशान्ताद्धाक्षयेण च यथैवारूढस्तथैव प्रतिपतन् प्रमत्त यावत् गच्छति । |
| | २४ मु अत: प्रारभ्य सामयिकस्थितिबन्धः प्रवर्तते प्रतिसमय | २४ मुहूर्तादिस्थितिबन्ध पुनः प्रवर्तते |
| | अन्तर्मु ( अबन्ध ) | अन्तर्मुहूर्तादिस्थितिबन्धः पुनः प्रवर्तते |
| | १६ मु ( अबन्ध ) | १६ मुहूर्तादिस्थितिबन्ध. पुन प्रवर्तते |
| o o o o o o o o o o o o o o o o<br>आवलिका \| आवलिका<br>कि ट्टि वे द ना द्धा (तृतीयो भाग )<br>म ना द्धा ( अन्तर्मु. )<br>सू क्ष्म स प रा यः<br>( १०मगुणस्थानमन्तर्मुहूर्त्तम् ) | ( ११ मगुणस्थान अन्तर्मु. )<br>अ न्त र म् ( मो ह स्य )<br>( मोहस्य ) उ प शा न्ता द्धा | o o o o o o o o o o o o o o o o<br>मोहस्य द्वितीया स्थितिः<br>( अत्रागताना पुनर्मोहोदय उपशमनातो विपर्ययक्रमेण भवति ) |

संक्षेपतो मोहोपशमनाक्रमस्य चित्रं ४७ तमपृष्ठादुपलभ्य वाच्यम्

**उ प शा न्त मो ह म्**
(अन्तर्मु०)

११मगुणस्थानम्

○
(स लोभशान्तिः)

किट्टिवेदनाद्धा

१०मगुणस्थानम्

| | |
|---|---|
| ○○<br>(मध्यलोभशान्ति) | ○○○○○○<br>○○○○○○<br>○○○○○○<br>(किट्टीकरणाद्धा) |

○
(सं. मायाशान्ति) (अश्वकर्णकरणाद्धा)

| | |
|---|---|
| ○○<br>(मध्यमाये शान्ते) | ○ ○ ○<br>(लोभ३कोपशमना) |

○
(स० मानशान्ति.)

| | |
|---|---|
| ○○<br>(मध्यमानौ शान्तौ) | ○ ○ ○<br>(माया३कोपशमना) |

○
(स० क्रोधोपशान्ति)

| | |
|---|---|
| ○○<br>(मध्यक्रोधौ शान्तौ) | ○ ○ ○<br>(मान३कोपशमना) |

○
(पुंवेदोपशान्ति)

○ ○ ○
(क्रोध३कोपशमना)

(९ म गु ण स्था न म्)

संजमघाईणंतरमेत्थ उ पढमठिई य अन्नयरे । संजलणावेयाणं वेइज्जंतीण कालसमा ॥४२॥

(चू०)—'संजमघातीणंतरमेत्थ तु'त्ति। ततो देसघातीकरणातो संखेज्जेसु ट्ठितिबन्धसहस्सेसु गतेसु 'संजमघा-
तीणं'ति–चरित्तमोहाणं अणंताणुबन्धिवज्जाणं बारसण्हं कसायाणं नवण्हं णोकसायाणं एएसिं एक्कवीसाए कम्माणं
अन्तरं करेति। 'पढमट्ठिइ य अन्नयरे संजलणावेयाणं वेइज्जन्तीण कालसम'त्ति–चउण्हं संजलणाणं तिण्हं वेयाणं
अन्नयरस्स वेतिज्जमाणस्स अप्पप्पणो वेयणाकालतुल्लं पढमं ट्ठितिं करेति। कहं ? भण्णइ–'वेइज्जन्तीणं कालसम'
त्ति–पुरिसवेयस्स दीहो वेयणाकालो, इत्थिवेयनपुंसगवेयाणं वेयणाकालो दोण्ह वि तुल्लो संखेज्ज भागहीणो, कोह
संजलणाए सव्वथोवो, माणसंजलणाए विसेसाहितो, मायासंजलणाए विसेसाहिओ, ततो लोभसंजलणाए वि-
सेसाहिनो। कोहसंजलणाए उवट्ठियस्स जाव दोण्हं कोहाणं उवसमतो तद्दूरं वेयगद्धा, माणसंजलणाए
उवट्ठियस्स जावतिया दोण्ह माणाणं उवसामणद्धा एत्तिया पढमट्ठिती, मायाए उवट्ठियस्स जावतिया दोण्ह मा-
याणं उवसामणद्धा तत्तिया पढमट्ठिति, लोभसंजलणाए उवट्ठियस्स जावतिया दोण्हं लोभाणं उवसामणद्धा
एवतिया पढमट्ठिति। ततो परेण सुहुमरागद्धा। पढमट्ठितितो संखेज्जगुणातो ट्ठितितो उक्किरति। सेसाणं एक्कार
सण्हं कसायाणं अट्ठण्हं णोकसायाणं उदयावलियं मोत्तूणं अन्तरं करेति, उवरिं समट्ठितीयं अन्तरं, हेट्ठा विस
मट्ठितीयं। जाहे अन्तरं करेउमाढत्तो ताहे अन्नं ट्ठितिं च बन्धति अन्नं ट्ठितिखण्डगं अणुभागखण्डगं च करेति।
अणुभागसहस्सेसु गतेसु अन्नं अणुभागखण्डगं तं चेव ट्ठितिखण्डगं सो चेव ट्ठितिबन्धो अन्तरस्स उक्किर-

णद्धा य समगं समप्पेति । अन्तरं करेन्तो जे कम्मंसे बन्धति वेदेति तेसिं उक्किरिज्जमाणं दलियं पढमे बिइए च ट्ठिईए देति। जे कम्मंसा ण बज्झन्ति वेतिज्जन्ति तेसिं उक्किरिज्जमाणा पोग्गले पढमट्ठितीसु अणुक्किरिज्जमाणीसु देति । जे कम्मंसा बज्झंति न वेतिज्जन्ति तेसिं उक्किरिज्जमाणगं दलियं अणुक्किरिज्जमाणीसु बितियट्ठितीसु देति । जे कम्मंसा ण बज्झन्ति ण वेतिज्जन्ति तेसिं उक्किरिज्जमाणं पदेसग्गं सट्ठाणे ण दिज्जति परट्ठाणे दिज्जति । एएण विहिणा अंतरं उच्छिन्नं भवति ॥४२॥

(मलय०)—'संजमघाईणं'ति–वीर्यान्तरायदेशघात्यनुभागबन्धानन्तरं संख्येयेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु संयमघातिनां कर्मणामनन्तानुबन्धिवर्जानां द्वादशानां कषायाणां नवानां च नोकषायाणां सर्वसंख्यया एकविंशतिप्रकृतीनामन्तरकरणं करोति। तत्र च चतुर्णां संज्वलनानामन्यतमस्य वेद्यमानस्य संज्वलनस्य त्रयाणां च वेदानामन्यतमस्य वेदस्य वेद्यमानस्य प्रथमा स्थितिः स्वोदयकालप्रमाणा । अन्येषां चैकादशकषायाणां अष्टानां च नोकषायाणां प्रथमस्थितिरावलिकामात्रा। स्वोदयकालप्रमाणं च चतुर्णां संज्वलनानां त्रयाणां च वेदानामिदं—स्त्रीवेदनपुंसकवेदयोरुदयकालः सर्वस्तोकः, स्वस्थाने तु परस्परं तुल्यः, ततः पुरुषवेदस्य संख्येयगुणः। ततोऽपि संज्वलनक्रोधस्य विशेषाधिकः। ततोऽपि संज्वलनमानस्य विशेषाधिकः। ततोऽपि संज्वलनमायाया विशेषाधिकः। ततोऽपि संज्वलन लोभस्य विशेषाधिकः। उक्तं च–"थीअपुमोदयकालो संखेज्जगुणो उ पुरिसवेदस्स। तस्स वि विसेसअहिओ कोहे तत्तो वि जहकमसो" तत्र संज्वलनक्रोधेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणक्रोधोपशमो न भवति तावत्संज्वलनक्रोधस्योदयः। संज्वलनमानेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमानोपशमो न भवति तावत्संज्वलनमानस्योदयः । मायया

चोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमायोपशमो न भवति, तावत्संज्वलनमायाया उदयः। संज्वलनलोभेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणलोभोपशमो न भवति तावद्बादरसंज्वलनलोभस्योदयः। ततः परं सूक्ष्मसंपरायाद्धा। तदेवमन्तरकरणमुपरितनभागापेक्षया समस्थितिकम्, अधोभागापेक्षया चोक्तनीत्या विषमस्थितिकमिति। यावता च कालेन स्थितिखण्डं घातयति यद्वाऽन्यं स्थितिबन्धं करोति तावता कालेनान्तरकरणमपि करोति, त्रीण्यपि युगपदारभते युगपदेव च निष्ठां नयति। तच्चान्तरं प्रथमस्थितेः संख्येयगुणम्। अन्तरकरणसत्कदलिकप्रक्षेपविधिश्चायं—येषां कर्मणां तदानीं बन्ध उदयश्च विद्यते तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, यथा पुरुषवेदोदयारूढः पुरुषवेदस्य। येषां तु कर्मणामुदय एव केवलो न बन्धस्तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितावेव प्रक्षिपति, न द्वितीयस्थितावपि, यथा स्त्रीवेदोदयारूढः स्त्रीवेदस्य। येषां पुनरुदयो न विद्यते किन्तु केवलो बन्धः तेषामन्तरकरणसत्कं दलिकं द्वितीयस्थितावेव प्रक्षिपति, न प्रथमस्थितौ, यथा संज्वलनक्रोधोदयारूढः शेषसंज्वलनानाम्। येषां पुनर्न बन्धो नाप्युदयः तेषामन्तरकरणसत्कं दलिकं परप्रकृतिषु प्रक्षिपति, यथा द्वितीयतृतीयकषायाणाम्। 'अन्नयरे' इति आर्षत्वात् पुंस्त्वनिर्देश एकवचनं च। ततोऽयमर्थः—संज्वलनवेदानामन्यतरयोर्वेद्यमानयोः प्रकृत्योः प्रथमा स्थितिः 'कालसमा'—उदयकालसमा ॥४२॥

(उ०)—वीर्यान्तरायदेशघात्यनुभागबन्धानन्तरं संख्येयेषु स्थितिबन्धसहस्रेषु परिगलितेषु संयमघातिनां कर्मणामनन्तानुबन्धिवर्जानां द्वादशानां कषायाणां नवानां च नोकषायाणां 'अंतरं' ति—अन्तरकरणं करोति। तत्र चतुर्णां संज्वलनानामन्यतमस्य यस्य संज्वलनस्योदयो, यस्य च त्रयाणां वेदानामन्यतमस्य वेदस्योदयस्तयोर्वेदकषायान्यतरयोः कर्मणोः प्रथमा स्थितिः स्वोदयकालप्रमाणा

## चारित्रमोहानामन्तरकरणविषमतायाश्चित्रं

### इदमन्तरवैषम्यमन्तरकरणक्रियाप्रारम्भे ( प्र० स्थितौ वर्त्तमानस्य )

इदमन्तरवैषम्यमेकस्य जीवस्यैकस्मिन् समये न भवेत् परमनेकजीवापेक्षया प्राप्यते, एकजीवस्यैकस्मिन् समयेऽन्यतरस्यैकवेदस्य कषायस्य चान्तरकरणभवनात् ।




## अन्तरकरणदलिकप्रक्षेपविषयस्य चित्रम् ॥



अन्यतरस्यैकस्योदयो भवति

| | | | |
|---|---|---|---|
| | प्र. स्थिति· अन्तर्मु. | | |
| सं. क्रोधस्य– | … … … . | अ न्त र म् (अन्तर्मु.) | … . .. … .. … . |
| | पु. वेदत: विशेषाधिका | | द्वि. स्थि स व. |
| सं. मानस्य– | . .. . … | अ न्त र म् (अन्तर्मु.) | . . . .. .. … .. .. |
| | प्र. स्थि. अन्तर्मु. (क्रोधत विशेषाधिका) | | द्वि. स्थि स. व. |
| सं. मायाया– | … .. .. … … | अ न्त र म् (अन्तर्मु) | … .. . … .. … . |
| | प्र. स्थि. अन्तर्मु (मानस्य प्र. स्थितित. विशे.) | | द्वि. स्थि. स व. |
| सं. लोभस्य– | … … .. … … . . | अ न्त र म् (अन्तर्मु.) | .. … … … … . . |
| | प्र. स्थि. अन्तर्मु. (मायाया विशे.) | | द्वि. स्थि. स. व. |

. . . . इति बिन्दुयुक्ता: स्थितय: सपौद्गलिका: ।

इत्थ प्रथमस्थितेर्वैषम्यादन्तरकरणमधोभागे विषममुपरितन-भागे समस्थितिक (परस्परापेक्षया) ज्ञेयम्.

## ॥ चारित्रमोहनीयान्तरकरणकाले

तदानीं मोहस्य बन्धो-दयप्रकृतीना स्थि ल-ताया अन्त. द. प्रक्षे-पविधि –

| | |
|---|---|
| ○○○○○○○○○○ | प्रथमा स्थिति । (अन्तर्मु) |
| | अन्तरकरणदलिकप्रक्षेपविषयरूपा |

अन्तरकरणकाले मोहस्य उदयनात्रगतानां प्रकृतीना स्थि० लताया अन्त० क० द० प्रक्षेपविधि.—



प्रक्षेपविषयरूपा प्रथमा स्थिति । ( अन्तर्मु० )

उत्कीर्यमाणा. स्थितिय । ( अन्तरकरणस्थान अन्तर्मु० प्रमाण वा )

द्वितीया स्थि० । (उत्कृष्टा सख्येयवर्षप्रमाणा ) (अन्तरक० दलिक अत्र न सक्रामति ।

अन्तरकरणकाले वध्यमानमाहृनीयस्य स्थितिलताया अन्त० क. द प्र. वि —



प्रथमा स्थिति । (अन्तर्मु. प्रमाणा)

उत्कीर्यमाणा स्थितय । (अन्तरकरणस्थानम्)

प्रक्षेपविषयरूपा द्वितीया स्थितिरुत्कृष्ट सख्येयवर्षप्रमाणा ।

अन्तरकरणकाले वन्धोदयशून्यमोहप्रकृतीनां स्थितिलताया परप्रकृतौ अन्त. क. द. प्र. वि.—

प्रथमास्थिति ( अन्तर्मु० प्रमाणा )

उत्कीर्यमाणमन्तरकरणस्थानम्(अन्तर्मु प्रमाण)

द्वि स्थितिः संख्येयवर्षप्रमाणा ।





बन्धावलिः। मोहनीयस्य बध्यमानप्रकृतेर्बन्धावलि० वर्जसर्वास्थिति । (सप्ततिकोटाकोटीसागरोपमप्रमाणा)

भवति, अन्येषां चैकादशानां कषायाणामष्टानां च नोकषायाणां प्रथमा स्थितिरावलिकामात्रा । स्वोदयकालप्रमाणं च चतुर्णां संज्वलनानां त्रयाणां च वेदानामिदम्—स्त्रीवेदनपुंसकवेदयोरुदयकाल सर्वस्तोकः, स्वस्थाने तु मिथः समानः, ततः पुरुषवेदस्य संख्येयगुणः, ततोऽपि संज्वलनक्रोधस्य विशेषाधिकः, ततोऽपि संज्वलनमानस्य विशेषाधिकः, ततोऽपि संज्वलनमायाया विशेषाधिकः, ततोऽपि संज्वलनलोभस्य विशेषाधिकः । उक्तं च पञ्चसंग्रहे—"थीअपुमोदयकालो संखेज्जगुणो उ पुरिसवेयस्स। तस्स वि विसेसअहिओ कोहे तत्तो वि जहकमसो" ॥ तत्र संज्वलनक्रोधेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणक्रोधोपशमो न भवति तावत्संज्वलनक्रोधस्योदयः । संज्वलमानेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमानोपशमो न भवति तावत्संज्वलनमानस्योदयः । मायया चोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमायोपशमो न भवति तावत्संज्वलनमायाया उदयः । संज्वलनलोभेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणलोभोपशमो न भवति तावद्बादरसंज्वलनलोभस्योदयः । ततः परं सूक्ष्मसंपरायाद्धा । तदेवमन्तरकरणमुपरितनभागापेक्षया समस्थितिकमधोभागापेक्षया चोक्तनीत्या प्रथमस्थितिप्रतियोगिकतिपयप्रकृ-

त्युदयकालवैषम्याद्विषमस्थितिकम् । यावता कालेनान्यं स्थितिखण्डं घातयति यद्वान्यं स्थितिबन्धं कुरुते तावता कालेनान्तरकरणं करोति, त्रीण्यपि युगपदारभते युगपदेव च निष्ठां नयतीत्यर्थः, अन्तरकरणकाले चानुभागखण्डसहस्राणि व्यतिक्रामन्ति । तच्चान्तरं प्रथमस्थितेः संख्येयगुणं भवति । अन्तरकरणसत्कदलिकप्रक्षेपविधिश्चायम्—येषां कर्मणां तदानीं बन्ध उदयश्च विद्यते तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, यथा पुरुषवेदारूढः पुरुषवेदस्य । येषां तु कर्मणामुदय एव केवलो विद्यते न बन्धस्तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितावेव प्रक्षिपति न द्वितीयस्थितावपि, यथा स्त्रीवेदस्य । येषां पुनरुदयो न विद्यते किं तु केवलो बन्धस्तेषामन्तरकरणसत्कं दलिकं द्वितीयस्थितावेव प्रक्षिपति न प्रथमस्थितौ, यथा संज्वलनक्रोधोदयारूढः संज्वलनमानादीनाम् । येषां पुनर्न बन्धो नाप्युदयस्तेषामन्तरकरणसत्कं दलिकं परप्रकृतौ प्रक्षिपति, यथा द्वितीयतृतीयकषायाणामिति द्रष्टव्यम् । 'अन्नयरे' इत्यार्षत्वादेकवचनं पुंस्त्वनिर्देशश्च, ततोऽयमक्षरार्थः—संज्वलनवेदानामन्यतरयोर्वेद्यमानयोः प्रकृत्योः प्रथमा स्थितिः कालसमा उदयकालतुल्या ॥ ४२ ॥

दुसमयकयंतरे आलिगाण छण्हं उदीरणाभिनवे । मोहे एक्कट्ठाणे बंधुदया संखवासाणि ॥४३॥
संखगुणहाणिबंधो एत्तो सेसाण संखगुणहाणी । पउवसमए नपुंसं असंखगुणणाइ जावंतो ॥४४॥

(चू०)—'दुसमयकयंतरे'ति–अंतरकरणे उक्किण्णे ततो अणंतरे समते इमे सत्त अहिगारा जुगवं पयट्टंति । तं जहा–मोहणिज्जस्स आणुपुव्वीसंकमो, लोभस्स असंकमो, छण्हं आवलिगाणं परतो उदीरणा । कहं ? भन्नति–

जहा बज्झमाणी पगती आवलियाते गयाते उदीरणा एति एवं अंतरकरणे उक्किन्ने ततो अणंतरे समते जाणि कम्माणि तंमि मोहणिज्जं वा अमोहणिज्जं वा ताणि आवलियाए अतीताते ण एती उदीरणं, ताणि छसु आवलिगासु उदीरणं एती, एस छण्हं आवलिगाणं उदीरणाभिणवेति। मोहणिज्जस्स एगट्ठाणिगो बन्धो, नपुंसगवेयस्स पढमसमयउवसामणा, मोहणिज्जस्स संखेज्जवासिया उदीरणा, मोहणिज्जस्स संखेज्जवरिसगो बन्धोत्ति। 'संखगुणहाणिबन्धो एत्तो'त्ति-जप्पभिति मोहणिज्जस्स संखेज्जवासिगो ट्ठितिबन्धो आढत्तो ततो पभितिं ट्ठितिबन्धे पुन्ने पुन्ने संखेज्जगुणहीणो ट्ठितिबन्धो मोहस्स 'सेसाण असंखगुणहाणि'त्ति-मोहणिज्जवज्जाणं सेसकम्माण तंमि काले ठिति(असंखेज्जगुणहीणा।)तंमि किन्ने ततो अणंतरे समते णपुंसवेयं पउवसामति। तस्स उवसामणपढमसमयपभिति जस्स व तस्स व कम्मस्स उदीरणा थोवा, उदओ असंखेज्जगुणो। उवसामिज्जमाणणपुंसगवेयस्स पदेसग्गं असंखेज्जगुणं, नपुंसवेयस्स अन्नपगातिं संकाभिज्जमाणगं पदेसग्गं असंखेज्जगुणं। एवं समदे समदे असंखेज्जगुणं असंखेज्जगुणं भाणियव्वं जाव दुचरिमसमउत्ति। चरिमसमए उवसाभिज्जमाणगं संकाभिज्जमाणगातो असंखेज्जगुणं। 'जावन्तो'त्ति-जाव नपुंसगवेयउवसामणाए चरिमसमतो। एवं संखेज्जेसु ट्ठितिबन्धसहस्सेसु गएसु नपुंसगवेओ उवसंतो भवति। जहा धूलि सलिलेण उवसामिज्जति एवं कम्मदव्वं भावविसोहीए उवसामिज्जति ॥४३-४४॥

(मलय०)—'दुसमय'इत्यादि। 'दुसमयकयंतरे'इति-अन्तरकरणे कृते सति द्वितीये समये इमे सप्ताधिकारा युगपत्प्रवर्तन्ते, तद्यथा-पुरुषवेदसंज्वलनानामानुपूर्व्येव संक्रमः, संज्वलनलोभस्य च संक्रमाभावः। तथाऽन्तरकरणे कृते सति अनन्तरादिपु समयेपु याः प्रकृतयो

मोहनीयसत्का अमोहनीयसत्का वा बध्यन्ते तासां षण्णामावलिकानां मध्ये उदीरणा न भवति, किं तु षट्स्वावलिकास्वतिक्रान्तासु । तथा 'मोहे'–मोहनीये रसबन्ध एकस्थानकः । तथा मोहनीयस्य संख्येयवार्षिकः स्थितिबन्धः संख्येयवार्षिकश्च उदीरणोदयः । संख्येयवार्षिकात् स्थितिबन्धात् परतोऽन्योऽन्यः स्थितिबन्धः सर्वोऽपि पूर्वस्मात् पूर्वस्मात् संख्येयगुणहीनो भावी, शेषाणां तु कर्मणामसंख्येयगुणहीनः । तथा 'पउवसमए नपुंस'त्ति–अन्तरकरणे कृते सति द्वितीये समये नपुंसकवेदं प्रोपशमयति–उपशमयितुमारभते असंख्येयगुणतया, तं च तावद्यावदन्तश्चरमसमयः । तथाहि–नपुंसकवेदस्य प्रथमसमये स्तोकं प्रदेशाग्रमुपशमयति, ततो द्वितीयसमयेऽसंख्येयगुणम्, तृतीयसमयेऽसंख्येयगुणम्, एवं प्रतिसमयमसंख्येयगुणं तावद्वक्तव्यं यावच्चरमसमयः, परप्रकृतिषु च प्रतिसमयमुपशमितदलिकापेक्षयाऽसंख्येयगुणं तावत्संक्रमयति यावद्विचरमसमयः । चरमसमये पुनरुपशम्यमानं दलिकं परप्रकृतिषु संक्रम्यमाणदलिकापेक्षयाऽसंख्येयगुणं द्रष्टव्यम् । नपुंसकवेदोपशमनारम्भप्रथमसमयादारभ्य च सर्वकर्मणामुदीरणा दलिकापेक्षया स्तोका, उदयस्त्वसंख्येयगुणः ॥ ४३–४४ ॥

(उ०)— 'द्विसमयकृतान्तरे'–उत्पत्तितदनन्तरलक्षणाभ्यां द्वाभ्यां समयाभ्यां कृतेऽन्तरे सत्यन्तरकरणे कृते सति द्वितीयसमय इत्यर्थः, इमे सप्ताधिकारा युगपत्प्रवर्तन्ते, तथाहि–पुरुषवेदसंज्वलनानामानुपूर्व्येव संक्रमः १ । संज्वलनलोभस्य च संक्रमाभावः २ । तथान्तरकरणे कृते सत्यनन्तरादिषु समयेषु याः प्रकृतयो मोहनीयसत्का अमोहनीयसत्का वा बध्यन्ते तासां षण्णामावलिकानां मध्ये उदीरणा न भवति, किं तु षट्स्वावलिकास्वतिक्रान्तासु, इतः पूर्वं तु बद्धं बद्धं कर्म बन्धावलिकायामतीतायां प्राक्तनोदयसत्कर्मानुविद्धमुदीरणायामायाति स ३ । तथा मोहे मोहनीये रसबन्ध एकस्थानकोऽभिनवो भवति ४ । तथा संख्येयवार्षिको मोहस्य स्थिति-

## ॥ नपुंसकोपशमनाक्रमस्य चित्रम् ॥

(स्त्रीवेदषट्नोकषायाणामप्युपशमनविधिर्नपुं०वेदतुल्या)अन्तर्मुहूर्त्तेन




अत्र अन्तर्मु०स्य १७ समयाः कल्पनीयाः । तथात्र 'यच्चतुरधिकस्य' तत् असं० गुणं ज्ञेयम्।

बन्धः ५। तथोदयोऽसंप्राप्त्युदय उदीरणाख्यः सोऽपि संख्येयवार्षिको मोहस्य, उक्तं च—" उद्दीरणा य संखखमा " ६। तथा इतो मोहनीयस्य संख्येयवार्षिकात् स्थितिबन्धात्परतोऽन्योऽन्यः स्थितिबन्धः सर्वोऽपि पूर्वस्मात्पूर्वस्मात्संख्येयगुणहीनो भवति , शेषाणां तु कर्मणामसंख्येयगुणहीनः ७। तथाऽन्तरकरणे कृते सति द्वितीये समये नपुंसकवेदं प्रोपशमयति उपशमयितुमारभतेऽसंख्येयगुणनया, इत्थं च तं तावदुपशमयति यावदन्तश्चरमसमयः। तथाहि—नपुंसकवेदस्य प्रथमसमये स्तोकं प्रदेशाग्रमुपशमयति, ततो द्वितीयसमयेऽसंख्येयगुणं, ततस्तृतीयसमयेऽसंख्येयगुणं, एवं प्रतिसमयमसंख्येयगुणं तावद्वाच्यं यावच्चरमसमयः। परप्रकृतिषु च प्रतिसमयमुपशमितदलिकापेक्षयाऽसंख्येयगुणं तावत्संक्रमयति यावद्द्विचरमसमयः। चरमसमये तूपशम्यमानं दलिकं परप्रकृतिषु यत्संक्रम्यमाणं दलिकं तदपेक्षयाऽसंख्येयगुणं द्रष्टव्यम्। नपुंसकवेदोपशमनारम्भप्रथमसमयादारभ्य च सर्वकर्मणामुदीरणायां दलिकं स्तोकं प्राप्यते, उदये त्वसंख्येयगुणम् ॥ ४३-४४ ॥

**एवित्थी संखतमे गयम्मि घाईण संखवासाणि। संखगुणहाणि एत्तो देसावरणाणुदगराई ॥४५॥**

(चू०)—'एवित्थि'त्ति-नपुंसगवेए उवसंते से काले इत्थिवेयस्स उवसाभगो, ताहे चेव अप्पुव्वं ठितिखण्डगं अन्नं अणुभागखण्डगं अन्नं ठितिबन्धं बन्धतो जहा नपुंसकवेओ उवसामिओ तेणेव विहिणा इत्थिवेयं [गुणसेढीण] उवसामेइ। ततो ठितिखण्डगसहस्सेसु गएसु 'संखतमे गयम्मि'त्ति-इत्थिवेयस्स उवसामणद्धाते संखेज्जति भागे गते 'घाईण संखवासाणि'त्ति नाणावरणदंसणावरणन्तराईयाणं संखेज्जवासिगतो ठितिबन्धातो अन्नो संखेज्जगुणहीणो ठितिबन्धो पयट्टति, 'देसावरणाणुदगराई' त्ति-जं समयं संखिज्जवरिसगो ठितिबन्धो तं समयं चेव

केवलणाणावरणकेवलदंसणावरणवज्जाणं पगतीणं एगट्ठाणिगो वन्धो पयट्टति। एएण विहिणा संखेज्जेहिं ट्ठितिवन्धसहस्सेहिं गएहिं इत्थिवेनो,उवसामितो ॥४५॥

(मलय०)—नपुंसकवेदे चोपशान्ते स्त्रीवेदं पूर्वोक्तेनैव विधिनोपमशयितुमारभते–'एविरिथ' त्ति–एवं पूर्वोक्तेन प्रकारेण स्त्रीवेदस्योपशम्यमानस्योपशमनाद्धायाः संख्येयतमे भागे गते सति घातिकर्मणां ज्ञानावरणदर्शनावरणान्तरायाणां संख्येयानि वर्षाणि संख्येयवर्षप्रमाणः स्थितिबन्धो भवति। इतश्च संख्येयवर्षप्रमाणात् स्थितिबन्धात् अन्योऽन्यः स्थितिबन्धो घातिकर्मणां पूर्वस्मात् पूर्वस्मात् संख्येयगुणहीनो भवति। अस्मादेव च संख्येयवर्षप्रमाणात् स्थितिबन्धादारभ्य देशघातिनां केवलज्ञानावरणकेवलदर्शनावरणवर्जानां ज्ञानावरणदर्शनावरणानां 'उदकराजि' उदकराजिसमानं रसं वध्नाति एकस्थानकं रसं वध्नातीत्यर्थः। तत एवं स्थितिबन्धसहस्रेषु गतेषु सत्सु स्त्रीवेद उपशान्तो भवति ॥ ४५॥

(उ०)—नपुंसकवेदे उपशान्ते सति तदनन्तरं स्थितिबन्धसहस्रेषु गतेषु पूर्वोक्तेन प्रकारेण स्त्रीवेदमुपशमयतीति तद्विध्यतिदेशं शेषविशेषं चाह—एवं पूर्वोक्तेन प्रकारेण स्त्रीवेदे उपशम्यमाने तदुपशमनाद्धायाः संख्येयतमे भागे गते सति घातिनां ज्ञानावरणदर्शनावरणान्तरायाणां संख्येयानि वर्षाणि संख्येयवर्षप्रमाणः स्थितिबन्धो भवति। इतश्च संख्येयवर्षप्रमाणात् स्थितिबन्धादारभ्यान्योऽन्यः स्थितिबन्धो घातिकर्मणां पूर्वस्मात् पूर्वस्मात्संख्येयगुणहीनो भवति। अस्मादेव च संख्येयवर्षप्रमाणघातिकर्मस्थितिबन्धादारभ्य देशघातिनां–केवलज्ञानावरणकेवलदर्शनावरणवर्जानां ज्ञानावरणदर्शनावरणानामुदकराजिम्–उदकराजिसमानकपायकृतं रसं वध्नात्येकस्थानकमित्यर्थः ॥ ४५ ॥

## ॥ पुंवेदोपशमनाक्रमस्य चित्रम् ॥

पुवेदद्वि० स्थितिगतप्रदेशोपचय

| समय | सद्धकोपशमना | सद्धद्रसंक्रान्तिः |
|---|---|---|
| १ मेसमये | १० | १४ |
| २ ये | १५ | १९ |
| ३ ये | २० | २४ |
| ४ थे | २५ | २९ |
| ५ मे | ३० | ३४ |
| ६ ष्ठे | ३५ | ३९ |
| ७ मे | ४० | ४४ |
| ८ मे | ४५ | ४९ |
| ९ मे | ५० | ५४ |
| १० मे | ५५ | ५९ |
| ११ मे | ६० | ६४ |
| १२ मे | ६५ | ६९ |
| १३ मे | ७० | ७४ |
| १४ मे | ७५ | ७९ |
| १५ मे | ८७ | ८३ |
| १६ मे | ९१ | ८२ |
| १७ मे | ९५ | ८१ |
| १८ मे | ९९ | ८० |
| १९ मे | १०३ | ७९ |
| २० मे | १०७ | ७८ |
| २१ मे | १११ | ७७ |
| २२ मे | ११५ | ७६ |

प्रतिसमयमसंख्येयगुणोपशमना (नपु० वेदवत्)
अन्तर्मुहूर्तेनोपशमना
सद्धकोपशमना
प्रतिसमयमसंख्येयगुणसंक्रान्तिः (नपु० वेदवत्)
सद्धद्रसंक्रान्तिः
अन्तर्मुहूर्तेन संक्रान्तिः
प्रतिसमयमस गुणोपशमना
वद्धमानस्योपशमना
द्विसमयोनाव० द्विकेनोपशमना
प्रतिसमय विशेषहीन संक्रामति
वद्धमानस्य संक्रान्ति
द्विसमयोनाव० द्विकेन संक्रान्ति

अत्र यत् 'चतुरधिकत्व' तदसंख्येयगुणत्व ज्ञेयं, तथा 'एकहीनत्व' तत् विशेषहीनत्व ज्ञेयम् ।

१ त १५= अन्तर्मु० समया । १६ त २२ = द्विसमयोनाव० द्विकमसमया ।

नो सत्तण्हं एवं संखतमे संखवासितो दोण्हं । विइयो पुण ठिइबंधो सव्वेसिं संखवासाणि ॥४६॥

(चू०)—'नो सत्तण्हं एवं'ति। ततो इत्थिवेए उवसंते से काले नपुंसगवेयइत्थिवेयवज्जा सत्त णोकसाते उवसामेउं आढवेति। ताहे चेव अन्नं ट्ठितिखण्डगं अन्नं अणुभागखण्डगं अन्नं च ट्ठितिबन्धं पवट्टई। एवं संखेज्जेसु ट्ठितिबन्धसहस्सेसु गतेसु 'संखतमे संखवासितो दोण्हं'ति–सत्तण्हं नोकसायाणं उवसामणद्धाए संखेज्जतिभागे गए, तो 'दोण्हं'ति–णामगोयाणं, एएसिं तंमि काले संखेज्जवासिगो चेव ठितिबंधो।'वितितो पुण ट्ठितिबन्धो सव्वेसिं संखवासाणि'त्ति–तम्मि ट्ठितिबन्धे पुन्ने तो अन्नो वितितो ट्ठितिबन्धो तम्मि काले सव्वकम्माणं संखेज्जवरिसगो 'ट्ठितिबन्धो'त्ति जं भणियं वेयणिज्जस्स वि संखेज्जवरिसगो ट्ठितिबन्धो। सव्वकम्माणं संखिज्जवरिसगातो ट्ठितिबन्धातो संखेज्जगुणहीणट्ठितिबन्धो पवट्टति। एएण विहिणा संखेज्जेसु ट्ठितिबन्धसहस्सेसु गतेसु सत्त वि णोकसाया उवसन्ता भवन्ति ॥४६॥

(मलय०)—'तो'त्ति–स्त्रीवेदे उपशान्ते ततः शेषान् सप्त नोकषायान् उपशमयितुमारभते। तेषां चैवं पूर्वोक्तेन प्रकारेणोपशम्यमानानामुपशमनाद्धायाः संख्येयतमे भागे गते सति 'द्वयोः'–नामगोत्रयोः संख्येयवार्षिकः स्थितिबन्धो भवति। वेदनीयस्य पुनरसंख्येयवार्षिक एव। तस्मिश्च स्थितिबन्धे पूर्णे सति अन्यो द्वितीयस्थितिबन्धो वेदनीयस्यापि संख्येयवार्षिको भवति। तथा च सति सर्वेषामपि कर्मणां ततः प्रभृति संख्येयवार्षिक एव स्थितिबन्धः। पूर्वस्माच्च पूर्वस्माच्चान्योऽन्यः स्थितिबन्धः प्रवर्तमानः संख्येयगुणहीनः प्रवर्तते। ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु सप्तापि नोकषाया उपशान्ता भवन्ति ॥४६॥

(उ०)—ततः स्त्रीवेदोपशमनानन्तरं शेषान् सप्त नोकषायानुपशमयितुमारभते। तेषां च सप्तानामप्येवं—नपुंसकवेदोक्तप्रकारेणोपशम्यमानानामुपशमनाद्धायाः संख्येयतमे भागे गते सति द्वयोर्नामगोत्रयोः संख्येयवार्षिकः स्थितिबन्धो भवति, वेदनीयस्य पुनरसंख्येयवार्षिक एव तिष्ठति। तस्मिंश्च स्थितिबन्धे पूर्णे सत्यन्यो द्वितीयः स्थितिबन्धो वेदनीयस्यापि संख्येयवार्षिको भवति। एवं च सति सर्वेषामपि कर्मणां तत आरभ्य संख्येयवार्षिक एव स्थितिबन्धः पूर्वस्मात्पूर्वस्माच्चान्योऽन्यः स्थितिबन्धः संख्येयगुणहीनः प्रवर्तते। ततः स्थितिबन्धसहस्रेषु परिगलितेषु सत्सु सप्तापि नोकषाया उपशान्ता भवन्ति ॥४६॥



**छस्सुवसमिज्जमाणे सेक्का उदयट्ठिई पुरिससेसा। समऊणावलिगदुगे बद्धा वि य तावदद्धाए ॥४७॥**

(चू०)—'छस्सुवसमिज्जमाणे सेक्का उदयट्ठिती पुरिससेसा समयूणावलिगदुगे वद्धा वि य'त्ति। नवरि छ नोकसाया जंमि काले उवसंता तंमि समते पुरिसवेयस्स पढमट्ठितीते एगा ठिति सेसा, सो य समतो, अन्ना उ य इमा 'समऊणावलीयदुगे वद्धा वि'त्ति—पुरिसवेयस्स पढमठितिते समऊणदुयावलीयसेसाए जं वद्धं पुरिसवेयदलियं तं च ण उवसंतं। जंमि समते छ नोकसाया उवसंता तंमि समते पुरिसवेयस्स ट्ठितिबन्धो सोलसवरिसाणि, संजलणाणं बंधो संखेज्जाणि वाससहस्साणि। पुरिसवेयस्स पढमट्ठितिते दुयावलियसेसाए आगालो वोच्छिन्नो, अणंतरावलिगातो उदीरणा एति, ताहे छण्हं नोकसायाणं संछोभो णत्थि पुरिसवेदे, संजलणेसु संछुभंति। जाहे पढमसमय अवेयओ ताहे पुरिसवेयसंतस्स समऊणदुआवलियवद्धा लया अणुवसंता 'तावदद्धाए' त्ति—तातो वि लयातो समउणदुआवलियमेत्तेण उवसामिस्सति। अवेयगो जं तं समऊण दुयावलियवंधं अणु-

वसंतं तं असंखेज्जगुणसेढीए उवसामिज्जति, परपगतिए पुण अहापवत्तसंकमेण संकामेति । पढमसमयवेयगस्स संकमो बहुगो, से काले विसेसहीणो, एवं जाव उवसामणंतो। पढमसमयअवेयगस्स संजलणाणं ट्ठितिबंधो बत्तीसं वरिसाणि अंतोमुहुत्तूणाणि, सेसाणं णाणावरणीयाणं संखेज्जाणि वाससहस्साणि ट्ठितिबंधो। पुरिसवेयपढमट्ठितीते समऊणदुयावलियसेसाते जं पुरिसवेयदलियं बद्धं अणुवसंत तं कोहातिगउवसामणद्धाए वट्टमाणो समऊणाहिं दोहिं आवलियाहिं उवसामेहित्ति ॥ ४७ ॥

(मलय०)—नवरं 'छस्सु'त्ति। षट्सु नोकषायेषु उपशम्यमानेषु यस्मिन् समये षड् नोकषाया उपशान्तास्तस्मिन् समये पुरुषवेदस्य प्रथमस्थितौ शेषा एकैवोदयस्थितिः समयमात्राऽवतिष्ठते। तदानीं च पुरुषवेदस्य स्थितिबन्धः षोडश वर्षाणि भवति। संज्वलनानां पुनः संख्येयानि वर्षसहस्राणि। तथा पुरुषवेदस्य प्रथमस्थितौ द्व्यावलिकाशेषायां प्रागुक्तस्वरूप आगालो व्यवच्छिद्यते, उदीरणा तु भवति। तस्मादेव च समयादारभ्य षण्णां नोकषायाणां सत्कं दलिकं पुरुषवेदे न संक्रमयति, किंतु संज्वलनेषु। यदा च प्रागुक्ता पुरुषवेदस्य सत्का एकाप्युदयस्थितिरतिक्रान्ता तदाऽसाववेदको भवति। अवेदकाद्धायाश्च प्रथमसमये समयद्वयोनावलिकाद्विकेन कालेन यद्बद्धं तदेव केवलमनुपशान्तं तिष्ठति। शेष पुनः सकलमपि नपुंसकवेदोक्तप्रकारेणोपशान्तम्। तदपि च समयद्वयोनावलिकाद्विककालबद्धं तावदद्धया-तावता कालेन समयद्वयोनावलिकाद्विकप्रमाणेन कालेनेत्यर्थः उपशमयति। तदुपशमनाविधिश्चायम्-प्रथमसमये स्तोकमुपशमयति, द्वितीयसमयेऽसंख्येयगुणम्, तृतीयसमयेऽसंख्येयगुणम्, एवं तावद्वाच्यं यावत्समयद्वयोनावलिकाद्विकचरमसमयः। परप्रकृतिषु च प्रतिसमयं समयद्वयोनावलिकाद्विककालं यावद्यथाप्रवृत्तसंक्रमेण संक्रमयति। परं प्रथमसमये प्रभूतम्, द्वितीयसमये

विशेषहीनम्। तृतीयसमये विशेषहीनम्। एवं तावद्यावच्चरमसमयः ततः पुरुषवेद उपशान्तः। तदानीं च संज्वलनानां द्वात्रिंशद्वर्षप्रमाणोऽन्तर्मुहूर्तोनः स्थितिबन्धो भवति। शेषाणां च ज्ञानावरणदर्शनावरणान्तरायाणां संख्येयानि वर्षसहस्राणि ॥४७॥

(उ०)—अयं तु विशेषः—षट्सु नोकषायेषूपशम्यमानेषु यस्मिन् समये षड् नोकषाया उपशान्तास्तस्मिन् समये पुरुषवेदस्य प्रथमस्थितौ शेषैकैवोदयस्थितिः समयमात्राऽवतिष्ठते। तदानीं च पुरुषवेदस्य स्थितिबन्धः षोडशवार्षिकः, संज्वलनानां तु संख्येयानि वर्षसहस्राणि। तथा पुरुषवेदस्य प्रथमस्थितौ द्व्यावलिकाशेषायां प्राग्भणितस्वरूप आगालो व्यवच्छिद्यते, उदीरणा तु भवति। तथा पुरुषवेदस्यागालव्यवच्छेदसमय एव शेषदलिकसंक्रमाधारतालक्षणा पतद्ग्रहताऽपि व्यवच्छिद्यत इति, ततः प्रभृति नोकषायसत्कं दलिकं पुरुषवेदे न संक्रमयति, किं तु संज्वलनेषु। यदा च पुरुषवेदस्य शेषीभूतैकाऽप्युदयस्थितिरतिक्रान्ता भवति तदाऽसाववेदको भवति। अवेदकाद्धायाश्च प्रथमसमये समयद्वयोनावलिकाद्विकेन कालेन यद्बद्धं तदेव केवलमनुपशान्तं तिष्ठति, शेषं तु सर्वमपि नपुंसकवेदोक्तप्रकारेणोपशान्तम्। योऽपि चरमः पुरुषवेदस्य षोडशवार्षिकः स्थितिबन्धः सोऽपि प्रथमस्थितिचरमसमयभाविना चरमोदयेन सहापगच्छति। यदपि समयद्वयोनावलिकाद्विककालबद्धमनुपशान्तमवशिष्यते तदपि तावदद्धया—तावता कालेन समयद्वयोनावलिकाद्विकप्रमाणेन कालेनेत्यर्थः, उपशमयति। तदुपशमनाविधिश्चायम्—प्रथमसमये स्तोकमुपशमयति, द्वितीयसमयेऽसंख्येयगुणं, तृतीयसमयेऽसंख्येयगुणं, एवं तावद्वाच्यं यावत्समयद्वयोनावलिकाद्विकचरमसमयः। परप्रकृतिषु च प्रतिसमयं समयद्वयोनावलिकाद्विककालं यावद्यथाप्रवृत्तसंक्रमेण संक्रमयति, तद्यथा—प्रथमसमये प्रभूतं, द्वितीयसमये विशेषहीनं, तृतीयसमये विशेषहीनं, एवं तावदभिधातव्यं यावच्चरमसमयः। ततः पुरुषवेद उपशान्तः। तदानीं च संज्वलनानां द्वात्रिंशद्वर्षप्रमाणोऽन्तर्मुहूर्तोनः स्थितिबन्धो भवति। शेषाणां च

ज्ञानावरणदर्शनावरणान्तरायवेदनीयनामगोत्राणां संख्येयानि वर्षसहस्राणि। उक्तं च–"वन्धो वत्तीससमा संजलणियराण उ सहस्सा"॥

**तिविहमवेओ कोहं कमेण सेसे वि तिविहातिविहे वि। पुरिससमा संजलणा पढमठिई आलिगा अहिगा**

(चू०)—'तिविहमवेतो कोहं'ति–अपच्चक्खाणावरणपच्चक्खाणावरणसंजलणं च तिन्नि वि कोहा अवेयगपढमसमते चेव जुगवं आढवेइ उवसामेउं, कोहसंजलणाए सव्वे पराणिया पढमठिति(ए)भवंति। निण्ह कोहाणं उवसामणद्धाए वट्टमाणस्स पढमट्ठितिबंधे पुन्ने वितियातिसु ट्ठितिबंधेसु संजलणाणं संखेज्जभागहीणो ट्ठितिबंधो सेसाणं संखेज्जगुणहीणो चेव ट्ठितिबंधो, सेसं जहा पुव्वं तहेव उवसामिज्जइ। जाव आवलियपडिआवलिगसेसा कोहसंजलणाए ताहे वितियट्ठितितो आगालो वोच्छिन्नो, पडिआवलिगातो उदीरणा एति, कोहसंजलणाए पडिआवलिगाते एगंमि समते सेसे कोहसंजलणाए जहन्निगा ट्ठितिउदीरणा, तंमि समते चत्तारि मासा ठिईबंधो संजलणाणं, सेसकम्माणं संखेज्जाणि वरिससहस्साणि ट्ठितिबंधो। पडिआवलियवोच्छेयसमये चेव दो कोहा उवसंता, कोहसंजलणाए पढमट्ठितीते आवलियं, समऊणदुआवलियं वद्धं च मोत्तूणं सेसं सव्वं उवसंतं दलियं, संजलणकोहंमि इयरे दो कोहा संछुभंति जाव कोहसंलणाए पढमट्ठितीते तिन्नि आवलिगातो सेसातो, तिसु आवलिगासु समऊणिगासु सेसासु ततो पभिति कोहसंजलणाए दुवे कोहा ण छुभंति, माणसंजलणादिसु संछुभंति। कोहस्स पढमट्ठितीते आवलिगावसेसाते ताहे कोहस्स बंधो उदतो उदीरणा य तिन्नि वि वोच्छिन्नाणि। 'कमेण सेसे वि तिविहातिविहे वि'त्ति–एएण कोहतिगउवसामणाकमेणं तिविहं माणं, तिविहं मायं, तिविहं लोभं

उवसामेति।'पुरिससमा संजलण'त्ति–पुरिसवेयसरिसा। अपच्चक्खाणावरणं पच्चक्खाणावरणं कोहमाणमायालोभा छन्नोकसायसरिसा। कहं ? भन्नति–दोसु कोहेसु उवसामिज्जमाणेसु एवं माणेसु दोसु, दोसु य मायासु, दोसु य लोभेसु उवसामिज्जमाणेसु समऊणदुगावलियबद्धं न उवसंतं। 'पढमट्ठिति आलिगा अहिअ'त्ति–छसु नोकसाएसु उवसंतेसु पुरिसवेयस्स पढमट्ठितीए एगा ट्ठिती अणुवसंता। संजलणाणं पुण आवलिगा पढमट्ठिती सेसा। कहं ? भण्णइ–आवलियं च समऊणदुगावलियबद्धं च मोत्तूण सेसं संजलणाणं सव्वं उवसंतत्ति भणियं होति। अति संखित्तं ति काउं पुणो भण्णइ–जाहे चेव कोहस्स बंधो उदओ उदीरणा य वोच्छिन्नाणि ताहे चेव माणस्स पढमट्ठितिं बीयट्ठितीतो दलियं घेत्तूण करेति, पढमसमयवेयगो पढमट्ठितिं करेमाणो पढमसमते उदते पदेसग्गं थोवं देति, से काले असंखेज्जगुणाए सेढीए देति, जाव पढमट्ठितीए चरमसमतोत्ति। ताहे चेव माणस्स तिविहस्स उवसामगो। तंमि समते माणसंजलणाए ट्ठितीए बंधो चत्तारि मासा अंतोमुहुत्तूणा, सेसाणं संखेज्जाणि वाससहस्साणि। माणस्स पढमट्ठितीते समऊणतियावलियसेसाते दुवे माणा माणसंजलणाते ण संकमंति, मायासंजलणाए संकमंति। सेसकरणं जहा कोह संजलणाते, नवरि चरमसमते मायालोभाणं दो मासा ट्ठितिबंधो, सेसाणं कम्माणं संखेज्जाणि वासाणि। ततो से काले मायाते बितियं ट्ठितीतो दलियं घेत्तूण मायाए पढमट्ठिती करेति, दलियनिक्खेवो जहा माणस्स। ताहे तिण्ह मायाणं उवसामगो, ट्ठितिबंधो दो मासा अंतोमुहुत्तूणा, सेसकंमाणं संखेज्जवासाणि। जं माणस्स उदयावलियाए समगूणाए दलियं तं थिवुगसंकमेणं मायोदते संकमति।

एवं ट्ठितिबंधसहस्साणि गयाणि। ततो मायाते पढमट्ठितीतो समयूणतिआवलियसेसाए दो माया संजलणाए ण संकमंति, लोभसंजलणाए संकमंति। आवलिगपडिआवलिगासेसागालो वोच्छिन्नो, आवलिगातो उदीरणा एति, सेसं जहा पुव्वं, णवरि चरिमसमयउवसामगस्स मायालोभाणं ट्ठितीबंधो मासो, सेसाणं कम्माणं संखेज्जाणि वासाणि। ततो से काले मायाए बंधो उदओ उदीरणा य वोच्छिन्नाणि। ताहे चेव लोभसंजलणाए बिइयट्ठितीतो दलियं घेत्तुं लोभसंजलणाते पढमट्ठितिं करेति, दलियनिक्खेवो जहा माणस्स, जं मायाते उदयावलियाते समयूणाए दलियं तं थिवुगसंकमेणं लोभाते संकमति ॥४८॥

(मलय०)—'तिविहमवेओ'त्ति। यस्मिन् समये पुरुषवेदस्यावेदको जातस्तस्मादेव समयादारभ्याप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनक्रोधान् युगपदुपशमयितुमारभते। उपशमनां च कुर्वतः प्रथमस्थितिबन्धे पूर्णे सत्यन्यः स्थितिबन्धः संज्वलनानां संख्येयभागहीनो भवति, शेषाणां च संख्येयगुणहीनः। शेषं स्थितिघातादि तथैव। संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां अप्रत्याख्यानप्रत्याख्यानावरणक्रोधदलिक न संज्वलनक्रोधे प्रक्षिपति किं तु संज्वलनमानादौ। द्व्यावलिकाशेषायां त्वागालो न भवति किंतूदीरणैव। साप्युदीरणा तावत्प्रवर्तते यावदावलिका शेषा भवति। उदीरणावलिकायाश्च चरमसमये संज्वलनानां स्थितिबन्धश्चत्वारो मासाः, शेषकर्मणां तु संख्येयानि वर्षसहस्राणि। संज्वलनक्रोधस्य च बन्धोदयोदीरणाव्यवच्छेदः। अप्रत्याख्यानप्रत्याख्यानावरणौ च क्रोधावुपशान्तौ। तदानीमेकामावलिकां समयोनावलिकाद्विकबद्धं च दलिकं मुक्त्वा शेषमन्यत्सर्वं संज्वलनक्रोधस्योपशान्तं, सापि चैका प्रथमस्थितिसत्का चरमावलिका स्तिबुकसंक्रमेण माने प्रक्षिप्यते। समयोनावलिकाद्विकबद्धं च दलिकं पुरुषवेदोक्तप्रकारेणोपशम-

यति संक्रमयति च। अनेनैव क्रमेण शेषानपि कषायान् त्रिविधान्–त्रिप्रकारान् मानमायालोभरूपान्, पुनः कथभूतानित्याह–त्रिविधान्, प्रत्येकं त्रिप्रकारान्। तथाहि–अप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदात् त्रिविधो मानः, एवं मायालोभावपि, तान् उपशमयति। तत्र संज्वलनोपशमना पुरुषवेदसमाऽवसेया। अप्रत्याख्यानप्रत्याख्यानावरणमानादीनां चोपशमना षड्नोकषायसमा। नवरं 'पढमठिई आलिगा अहिग त्ति'–संज्वलनानां प्रथमस्थितौ पुरुषवेदापेक्षया एका आवलिकाधिका। तथाहि—षट्सु नोकषायेषूपशान्तेषु पुरुषवेदस्य प्रथमा स्थितिरेका समयमात्रा स्थितिरनुपशान्ता आसीत्। अप्रत्याख्यानप्रत्याख्यानावरणमानादिषु पुनरुपशान्तेषु संज्वलनमानादीनामनुपशान्ता प्रथमस्थितेरेकावलिकेति। इदं चातिसंक्षिप्तमुक्तमिति विशेषतो भाव्यते—यदा संज्वलनक्रोधस्य बन्धोदयोदीरणा व्यवच्छिन्नाः तदैव संज्वलनमानस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च। तत्रोदयसमये स्तोकं प्रक्षिपति, द्वितीयस्थितावसंख्येयगुणम्, तृतीयस्थितावसंख्येयगुणम्। एवं तावद्यावत्प्रथमस्थितेश्चरमसमयः। प्रथमस्थितिप्रथमसमये एव संज्वलनमानस्य स्थितिबन्धश्चत्वारो मासाः, शेषाणां तु ज्ञानावरणीयादीनां संख्येयानि वर्षसहस्राणि। तदानीमेव च त्रीनपि मानान् युगपदुपशमयितुमारभते। संज्वलनमानस्य च प्रथमस्थितौ समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणमानदलिकं न संज्वलमाने प्रक्षिपति, किंतु संज्वलनमायादौ। आवलिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते। तत उदीरणैव केवला प्रवर्तते। सापि तावद्यावदावलिकाचरमसमयः। तत एका प्रथमस्थितेरावलिका शेषीभूता तिष्ठति। तस्मिंश्च समये संज्वलनानां द्वौ मासौ स्थितिबन्धः, शेषकर्मणां तु संख्येयानि वर्षाणि। तदानीं च संज्वलनमानस्य बन्धोदयोदीरणा व्यवच्छिन्नाः। अप्रत्याख्यानप्रत्यानावरणमानौ चोपशान्तौ। संज्वलनमानस्यापि च प्रथमस्थितेरेकामावलिकां समयोनावलिकाद्विकबद्धाश्च लता मुक्त्वा शेषमन्यत्सर्वमु-

पशान्तम् । तदानीमेव संज्वलनमायाद्वितीयस्थितेर्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च । पूर्वोक्तां च संज्वलनमानस्य प्रथमस्थितिसत्कामेकामावलिकां स्तिबुकसंक्रमेणास्या संज्वलनमायायां प्रक्षिपति । समयोनावलिकाद्विकबद्धाश्च लताः पुरुषवेदक्रमेणोपशमयति संक्रमयति च । संज्वलनमायोदयप्रथमसमये च मायालोभयोर्द्वौ मासौ स्थितिबन्धः, शेषकर्मणां संख्येयानि वर्षाणि । तत्समयादेव चारभ्य तिस्रोऽपि माया युगपदुपशमयितुमारभते । ततः संज्वलनमायायाः प्रथमस्थितौ समयोनाऽऽवलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणमायादलिकं संज्वलनमायायां न प्रक्षिपति, किन्तु संज्वलनलोभे । आवलिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते। तत उदीरणैव केवला प्रवर्तते । सापि तावद्यावदावलिकाचरमसमयः । तस्मिंश्च समये संज्वलनमायालोभयोः स्थितिबन्ध एको मासः, शेषकर्मणां तु संख्येयानि वर्षाणि । ततोऽनन्तरसमये संज्वलनमायायां बन्धोदयोदीरणा व्यवच्छिन्नाः । अप्रत्याख्यानप्रत्याख्यानावरणमाये चोपशान्ते । संज्वलनमायायाश्च प्रथमस्थितिसत्कामेकामावलिकां समयोनावलिकाद्विकबद्धाश्च लता मुक्त्वा शेषमन्यत् सर्वमुपशान्तम् । तदानीमेव च संज्वलनलोभस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च । पूर्वोक्तां च मायायाः प्रथमस्थितिसत्कामेकामावलिकां स्तिबुकसंक्रमेण संज्वलनलोभे संक्रमयति । समयोनावलिकाद्विकबद्धाश्च लताः पुरुषवेदक्रमेणोपशमयति संक्रमयति च ॥४८॥

(३०)—यस्मिन् समये पुरुषवेदस्यावेदको जातस्तस्मादेव समयादारभ्य त्रिविधं क्रोधमप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनक्रोधानित्यर्थः, युगपदुपशमयितुमारभते । तदुपशमनां च कुर्वतः प्रथमस्थितिबन्धे पूर्णे सत्यन्यः स्थितिबन्धः संज्वलनानां संख्येयभागहीनो भवति, शेषाणां च संख्येयगुणहीनः । शेषं स्थितिघातादि पूर्वोक्तरीत्यैव वाच्यम् । संज्वलनक्रोधस्य च प्रथमस्थितौ समयोनाव-

लिकात्रिकशेषायां सत्यां पतद्ग्रहताऽपगच्छति । अप्रत्याख्यानप्रत्याख्यानावरणक्रोधस्य दलिकं न तत्र प्रक्षिपति, किं तु संज्वलनमानादाविति भावः । ततो द्व्यावलिकाशेषायां प्रथमस्थितौ संज्वलनक्रोधस्यागालो न भवति, किं तूदीरणैव । साऽप्युदीरणा तावत्प्रवर्त्तते यावदेकावलिका शेषा भवति । उदीरणावलिकायाश्च चरमसमये संज्वलनानां स्थितिबन्धश्चत्वारो मासाः, शेषकर्मणां तु संख्येयानि वर्षसहस्राणि । सञ्ज्वलनक्रोधस्य च तदा बन्धोदयोदीरणाव्यवच्छेदः । अप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्वयस्य चोपशमः । तदानीं चैकामावलिकां समयोनावलिकाद्विकबद्धं च दलिकं मुक्त्वा शेषमन्यत्सर्वं संज्वलनक्रोधस्योपशान्तम् । साऽपि चैका प्रथमस्थितिसत्का चरमावलिका स्तिबुकसंक्रमेण माने प्रक्षिप्यते । समयोनावलिकाद्विकबद्धं च दलिकं पुरुषवेदोक्तप्रकारेणोपशमयति संक्रमयति च । अनेनैव क्रमेण शेषानपि कषायाँस्त्रिविधान् मानमायालोभरूपतया त्रिप्रकारान् पुनस्त्रिविधानप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनरूपतया प्रत्येकं त्रिभेदानुपशमयति । तत्र संज्वलनोपशमना पुरुषवेदसमाऽवसेया, अप्रत्याख्यानप्रत्याख्यानावरणमानादीनां चोपशमना षण्नोकषायसमा, नवरं संज्वलनानां प्रथमस्थितावेकावलिकाधिका पुरुषवेदापेक्षयाऽवशिष्टा द्रष्टव्या । तथाहि—पुरुषवेदस्य प्रथमस्थितिः षट्सु नोकषायेषूपशान्तेष्वेकसमयमात्राऽनुपशान्ताऽऽसीत् , अप्रत्याख्यानप्रत्याख्यानावरणमानादिषु पुनरुपशान्तेषु संज्वलनमानादीनामनुपशान्ता प्रथमस्थितिरेकावलिकाप्रमाणाऽवशिष्यत इति । इदमतिसंक्षिप्तमिति वितत्य प्रदर्श्यते—संज्वलनक्रोधस्य बन्धोदयोदीरणाव्यवच्छेदसमय एव संज्वलनमानस्य द्वितीयस्थितेः सकाशाद्दलिकं समाकृष्य प्रथमस्थितिं करोति वेदयते च । तत्रोदयसमये स्तोकं प्रक्षिपति, द्वितीयादिस्थितिषु पुनः प्रथमस्थितिचरमसमयं यावद्यथोत्तरमसंख्येयगुणम् । प्रथमस्थितिप्रथमसमय एव च संज्वलनमानस्य स्थितिबन्धश्चातुर्मासिकः, शेषाणां तु ज्ञानावरणीयादीनां संख्येयवर्षसहस्रप्रमाणः । तदानीमेव च त्रीनपि मानान् युगपदु-

प्रत्याख्यानप्रत्याख्यानावरणदलिकप्रक्षेपः संज्वलमाने
पशमयितुमारभते। संज्वलनमानस्य च प्रथमस्थितौ समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणदलिकप्रक्षेपः संज्वलमाने
न प्रवर्तते, किं तु संज्वलनमायादौ। आवलिकाद्विकशेषायां च संज्वलनमानस्थितावागालो व्यवच्छिद्यते, तत उदीरणैव केवला प्रवर्तते,
साऽपि तावद्यावदावलिकाचरमसमयः। तत एका प्रथमस्थितेरावलिका शेषीभूताऽवतिष्ठते। तस्मिंश्च समये संज्वलनानां द्वैमासिकः
स्थितिबन्धः, शेषकर्मणां तु संख्येयानि वर्षाणि। तदानीं च संज्वलनमानस्य बन्धोदयोदीरणा व्यवच्छिन्नाः। अप्रत्याख्यानप्रत्याख्या
नावरणमानौ चोपशान्तौ। संज्वलनमानस्यापि प्रथमस्थितेरेकामावलिकां समयोनावलिकाद्विकबद्धाश्च लता मुक्त्वा शेषमन्यत्सर्वमुपशा-
न्तं, तदानीमेव च संज्वलनमायाया द्वितीयस्थितेर्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च, प्रागुक्तां च संज्वलनमानप्रथमस्थिति-
सम्बन्धिनीमेकामावलिकामुदयनिर्मुक्तामुदयवत्यामस्यां संज्वलनमायायां स्तिबुकसंक्रमेण प्रक्षिपति, समयोनावलिकाद्विकबद्धाश्च लताः
पुरुषवेदक्रमेणोपशमयति संक्रमयति च। संज्वलनमायोदयप्रथमसमये च मायालोभयोर्द्वौ मासौ स्थितिबन्धः। शेषकर्मणां संख्येयानि
वर्षाणि। तत्समयादेव चारभ्य तिस्रोऽपि माया युगपदुपशमयितुमारभते। ततः संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशे-
षायामप्रत्याख्यानप्रत्याख्यानावरणमायादलिकं संज्वलन्यां मायायां न प्रक्षिपति, किं तु संज्वलनलोभे। आवलिकाद्विकशेषायां त्वागालो
व्यवच्छिद्यते। तत उदीरणैव केवला प्रवर्तते, साऽपि तावद्यावदावलिकाचरमसमयः। तस्मिंश्च समये संज्वलनमायालोभयोः स्थितिबन्ध
एको मासः, शेषकर्मणां तु संख्येयानि वर्षाणि। तदानीमेव च संज्वलनमायाया बन्धोदयोदीरणा व्यवच्छिन्नाः। अप्रत्याख्यानप्रत्या-
नावरणमाये चोपशान्ते। संज्वलन्या मायायाश्च प्रथमस्थितिसम्बन्धिनीमेकामावलिकां समयोनावलिकाद्विकबद्धाश्च लता विना नि-
खिलमन्यदुपशान्तम्। तदानीमेव च संज्वलनलोभस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च। पूर्वोक्तां

च मायायाः प्रथमस्थितिसम्बन्धिनीमेकामावलिकां स्तिबुकसंक्रमेण संज्वलनलोभे संक्रमयति। समयोनावलिकाद्विकबद्धाश्च लताः पूर्वोक्तपुरुषवेदक्रमेणोपशमयति संक्रमयति च संज्वलनलोभे ॥४८॥

तस्सेव पढमट्ठितीते पमाणणिरूवणत्थं भण्णति—

**लोभस्य बेतिभागा बिइयतिभागोत्थ किट्टिकरणद्धा। एगफड्डुगवग्गणअणंतभागो उ ता हेट्ठा ॥४९॥**

(चू०)—'लोभस्स बेतिभाग' त्ति। तिसे लोभवेयगद्धाए बेतिभागमेत्ता लोभस्स पढमट्ठिती करेति। तत्थ पढमो भागो अस्सकन्नकरणद्धा, बितितो किट्टिकरणद्धा। एतेसु दोसु दलियनिक्खेवो। ताहे लोभसंजलणाए ठितिबंधो मासो अंतोमुहुत्तूणो, सेसाणं कम्माणं संखेज्जाणि वासाणि। तंमि चेव समए तिण्णि लोभ उवसामेउं-पयट्टो, पुव्वकमेणेव उवसामणा। अस्सकंनकरणद्धाते वट्टमाणो लोभसंजलणाए पुव्वफड्डुगेहिंतो समते समते अपुव्वाणि फड्डुगाणि करेति, अपुव्वाणि नाम बंधसरूपेण उप्पातियाणि ण होंति, विसोहिए अन्नहा फड्डुगस्सरूपेणेव णिवत्तियाणि, ततो संखेज्जेसु ट्ठितीणं बंधसु गतेसु अस्सकन्नकरणद्धा गता भवति [हयकन्नकरणद्धा] इयाणिं किट्टीकरणद्धा–तिसे पढमसमते लोभसंजलणाए ट्ठितिबंधो दिवसपुहुत्तं, सेसाणं कम्माणं ट्ठितिबंधो वाससहस्सपुहुत्तं। 'बितीयतिभागोत्थकिट्टिकरणद्ध'त्ति–तीसे लोभवेयगद्धाते बितितो तिभागो किट्टीकरणद्धा वुच्चति, लोभवेयगद्धाते जाव एयं ठाणं ण पावति ताव पुव्वफड्डुगं अपुव्वफड्डुगस्सरूवेणेव अणुभागसंतकम्मं आसि, तीए पढमं समते किट्टिओ पकरेइ। किट्टी णाम अणुभागबंधलक्खणस्वरूपविपर्यासेन अणुभागरचना

केवतियातो णिव्वत्तेति चेत्? भण्णइ—एगस्स अणु- 'ागफद्दगवग्गणअणंतभागो उ'-तातो किट्टीतो पढमसमते केवतियातो णिव्वत्तेति चेत्? भण्णइ—एगस्स अणुभागफद्दगस्स अणंतातो वग्गणातो तासिं अणंतभागे जत्तियातो वग्गणातो तत्तियातो किट्टीतो निव्वत्तिनि, किं सरिसातो निव्वेतेति उदाहु हीणाओ? भण्णइ—'हेट्ठा'त्ति, जं अणुभागसंतकम्मस्स सव्वजहन्नगफद्दगं तस्स हेट्ठतो अणंतगुणहीणरसातो णिव्वत्तेत्ति भणियं होति।

(मलय०)—संज्वलनलोभस्य प्रथमस्थितेः प्रमाणनिरूपणार्थमाह—'लोभस्स'त्ति। संज्वलनलोभस्य प्रथमस्थितेस्त्रयो भागाः। तत्र प्रथमतो द्वौ त्रिभागौ प्रथमस्थितिं करोति, द्वयोस्त्रिभागयोर्द्वितीयस्थितेः समाकृष्य दलिकं निक्षिपतीत्यर्थः। तत्र प्रथमस्त्रिभागोऽश्वकर्णकरणाद्धासंज्ञः, द्वितीयः किट्टिकरणाद्धासंज्ञः। संज्वलनलोभोदयप्रथमसमय एव च त्रीनपि लोभान् अप्रत्याख्यानादीन् युगपदुपशमयितुमारभते। उपशमनाविधिः प्राग्वत्। तत्राश्वकर्णकरणाद्धासंज्ञे प्रथमे त्रिभागे वर्तमानः पूर्वस्पर्धकेभ्यः प्रतिसमयं दलिकं गृहीत्वा तस्य चात्यन्तहीनरसतामापाद्यापूर्वाणि स्पर्धकानि करोति। आसंसारं हि परिभ्रमता न कदाचनापि बन्धमाश्रित्येदृशानि स्पर्धकानि कृतानि किन्तु सम्प्रत्येव विशुद्धिप्रकर्षवशात् करोतीत्यपूर्वाण्युच्यन्ते। तत एवमपूर्वस्पर्धकानि कुर्वतः संख्येयेषु स्थितिबन्धेषु गतेषु सत्सु अश्वकर्णकरणाद्धा व्यतिक्रामति। ततः किट्टिकरणाद्धायां प्रविशति। तदानीं च संज्वलनलोभस्य स्थितिबन्धो दिनपृथक्त्वप्रमाणः, शेषकर्मणां तु वर्षपृथक्त्वमानः। किट्टिकरणाद्धायां च पूर्वस्पर्धकेभ्योऽपूर्वस्पर्धकेभ्यश्च दलिकं गृहीत्वा प्रतिसमयमनन्ताः किट्टीः करोति। किट्टयो नाम पूर्वस्पर्धकापूर्वस्पर्धकेभ्यो वर्गणा गृहीत्वा तासामनन्तगुणहीनरसतामापाद्य बृहदन्तरालतया यद्व्यवस्थापनम्। यथा यासामेवासत्कल्पनयाऽनुभागभागानां शतमेकोत्तरं द्व्युत्तरं चासीत् तासामेवानुभागभागानां पञ्चकं पञ्चदशकं पञ्चविंशतिरिति। सम्प्रति एता-

सामेव किट्टीनां विशेषप्ररूपणार्थमाह–'एगफड्डग' इत्यादि। ताः किट्टीः एकस्मिन् अनुभागस्पर्धके या अनन्तवर्गणास्तासामनन्ततमे भागे यावत्यो वर्गणास्तावत्प्रमाणः प्रथमसमये करोति। ताश्चानन्ताः। ननु ताः किं सर्वजघन्यानुभागस्पर्धकानुभागेन सदृशाः करोति, उत ततोऽपि हीनाः? उच्यते–ततोऽपि हीनाः, तथा चाह–'हेट्ठा', यत्सर्वजघन्यमनुभागस्पर्धकं तस्याधस्तात् करोति–ततोऽप्यनन्तगुणहीनरसाः करोतीत्यर्थः ॥४९॥

(उ०)—संज्वलनलोभस्य प्रथमस्थितेः प्रमाणं निरुपयन्नाह—संज्वलनलोभस्य प्रथमस्थितेस्त्रयो भागाः, द्वितीयस्थितेर्दलिकमाकृष्य प्रथमस्थितिर्विभागत्रयोपेता क्रियत इत्यर्थः। तत्र प्रथमतो द्वौ त्रिभागौ प्रथमस्थितिं करोति, द्वयोस्त्रिभागयोर्द्वितीयस्थितेः समाकृष्य दलिकं निक्षपतीत्यर्थः। तत्र प्रथमस्त्रिभागोऽश्वकर्णकरणाद्धासंज्ञो, द्वितीयः किट्टिकरणाद्धासंज्ञः, त्रिविभागोपेतलोभवेदनाद्धायाश्च प्रथमसमय एव त्रीनपि लोभानप्रत्याख्यानादीन् युगपदुपशमयितुमारभते। उपशमनाविधिश्च प्राग्वत्। तत्राश्वकर्णकरणाद्धासंज्ञे प्रथमे त्रिभागे वर्तमानः पूर्वस्पर्धकेभ्यः प्रतिसमयं दलिकं गृहीत्वा तस्यात्यन्तनीरसतामापाद्यापूर्वस्पर्धकानि करोति। संक्रमितमायादलिकसम्बन्धिभ्यः पूर्वबद्धसंज्वलनलोभसत्केभ्यो वा पूर्वस्पर्धकेभ्यः प्रतिसमयं दलिकं गृहीत्वा तस्य तत्कालबध्यमानसंज्वलनलोभस्पर्धकवदत्यन्तनीरसतामापादयन्नपूर्वं च दलिकं प्रतिसमयं गृह्णन्नपूर्वस्पर्धकानि करोतीत्यर्थः। इह तावदनन्तानन्तपरमाणुनिष्पन्नान् स्कन्धान् जीवः कर्मतया गृह्णाति। तत्र चैकैकस्मिन् स्कन्धे यः सर्वजघन्यो रसः सोऽपि सर्वजीवानन्तगुणान् रसाविभागान् प्रयच्छति। तदुपेतपरमाणूनां समुदायः प्रथमा वर्गणा। ततः क्रमेणैकोत्तररसाविभागवृद्ध्या सिद्धानन्तभागाभव्यानन्तगुणा वर्गणा वाच्याः, तावद्वर्गणासमुदायः स्पर्धकमुच्यते। इत ऊर्ध्वमेकोत्तरवृद्ध्या वर्धमानो रसो न लभ्यते किंतु सर्वजीवानन्तगुणै-

रेव रसाविभागः । ततः प्राक्तनक्रमेण द्वितीयं स्पर्धकमारभ्यते । एवं तृतीयादीनि तावद्वाच्यानि यावदनन्तस्पर्धकानि । एतेभ्य एव चेदानीं प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादनन्तगुणहीनरसाः कृत्वा पूर्ववत्स्पर्धकानि करोति । न चैवंभूतानि कदापि पूर्वं कृतानि ततोऽपूर्वाणीत्युच्यते इति प्रकटोऽर्थः । तत एवमपूर्वस्पर्धकानि कुर्वतः संख्येयेषु स्थितिबन्धेषु गतेषु सत्स्वश्वकर्णकरणाद्धा व्यतिक्रामति, ततः किट्टिकरणाद्धायां प्रविशति । तदानीं च संज्वलनलोभस्य स्थितिबन्धो दिनपृथक्त्वप्रमाणः, शेषकर्मणां तु वर्षपृथक्त्वप्रमाणः । किट्टिकरणाद्धायां च पूर्वस्पर्धकेभ्योऽपूर्वस्पर्धकेभ्यश्च दलिकं गृहीत्वा प्रतिसमयमनन्ताः किट्टीः करोति । किट्टयो नाम पूर्वस्पर्धकेभ्योऽपूर्वस्पर्धकेभ्यश्च वर्गणा गृहीत्वा तासामनन्तगुणहीनरसतामापाद्यैकोत्तरवृद्धित्यागेन बृहदन्तरालतया व्यवस्थापनं, यथा यासामेव वर्गणानामसत्कल्पनयाऽनुभागभागानां शतमेकोत्तरं द्व्युत्तरादि वाऽऽसीत् तासामेवानुभागभागानां पञ्चकस्य दशकस्य पञ्चदशकादेश्च व्यवस्थापनमिति । तासामेव किट्टीनां विशेषं प्रदिदर्शयिषुराह—'एगफड्डग'इत्यादि। ताः किट्टीरेकस्मिन्ननुभागस्पर्धके या अनन्ता वर्गणास्तासामनन्ततमे भागे यावत्यो वर्गणास्तावत्प्रमाणाः प्रथमसमये करोति, ता अप्यनन्ताः, तत्किं जघन्यानुभागस्पर्धकानुभागेन सदृशीः करोत्युत ततोऽपि हीनाः? उच्यते—ततोऽपि हीनाः । तथा चाह—'हेट्ठा', यत्सर्वजघन्यमनुभागस्पर्धकं तस्याधस्तात्क रोति—ततोऽप्यनन्तगुणहीनरसाः करोतीत्यर्थः ॥४९॥

**अणुसमयं सेढीए असंखगुणहाणि जा अपुव्वाओ । तव्विवरीयं दलियं जहन्नगाई विसेसूणं ॥५०॥**

(चू०)—'अणुसमयं सेढीए असंखगुणहाणि जा अपुव्वाओ'त्ति—जातो अपुव्वातो करेंति तातो गणणातो असंखेज्जगुणहीणातो करेन्ति । ततिते समते असंखेज्जगुणहीणातो करेति एवं नेयव्वं ताव जाव किट्टीकरणद्धाए चरिम-

समतोत्ति। 'तव्विवरीयं दलयं'ति–पढमसमयकिट्टीकयं दलियं सव्वकिट्टीमयं सव्वथोवं, बियसमए किट्टीकयं दलियं सव्वकिट्टीमयं असंखेज्जगुणं, ततियसमए किट्टीकयं दलियं सव्वकिट्टीमयं असंखेज्जगुणं, एवं नेयव्वं ताव जाव किट्टीकरणद्धाते चरिमसमयकयं ति। 'जहन्नगाई विसेसूणं'ति–पढमसमयकयाणं किट्टीणं दव्वाणुभागपरिमाणनिरूवणं कीरति–जा पढमसमयकया पुव्वमन्दाणुभागा किट्टी तीसे पदेसग्गं सव्वबहुगं, ततो अणंतरेण अणुभागाहिगाते किट्टीए दलियं विसेसहीणं, एवं अणंतराणंतरेण विसेसहीणं विसेसहीणं णेयव्वं ताव जाव पढमकयाणं तप्पाउ(ग्गु)क्कस्साणुभागकिट्टीत्ति ॥५०॥

(मलय०)—'अणुसमयं'ति–या अपूर्वाः प्रतिसमयं नवा नवाः किट्टीः करोति ताः प्रतिसमयं गणनातोऽसंख्येयगुणहानेः श्रेण्या द्रष्टव्याः। नवत्वं च प्रतिसमयं यथोत्तरमनन्तगुणहीनरसत्वादवसेयम्। इयमत्र भावना–प्रथमसमये प्रभूताः किट्टीः करोति, द्वितीयसमयेऽसंख्येयगुणहीनाः, ततोऽपि तृतीयसमयेऽसंख्येयगुणहीनाः, एवं तावद्वाच्यं यावत् किट्टीकरणाद्धायाश्चरमसमयः। 'तव्विवरीयं दलियं ति'–दलिकं तद्विपरीत–किट्टिसंख्याविपरीतमत्रगन्तव्यम्। तद्यथा–प्रथमसमये सकलकिट्टिगतं दलिकं सर्वस्तोकम्, ततो द्वितीयसमये सकलकिट्टिगतं दलिकमसंख्येयगुणम्, ततोऽपि तृतीयसमये समस्तकिट्टिगतं दलिकमसंख्येयगुणम्, एवं तावद्वाच्यं यावत् किट्टिकरणाद्धायाश्चरमसमयः। तथा प्रथमसमयकृतासु किट्टिषु सामान्येनानुभागः सर्वप्रभूतः, ततो द्वितीयसमयकृतासु किट्टिष्वनन्तगुणहीनः, ततोऽपि तृतीयसमयकृतासु अनन्तगुणहीनः, एवं तावद्वाच्यं यावत् किट्टिकरणाद्धाचरमसमयः। सम्प्रति प्रथमसमये कृतानां किट्टीनां परस्परं प्रदेशप्रमाणनिरूपणार्थमाह–'जहन्नगाई विसेसूणं' ति। जघन्यां किट्टिमादिं कृत्वा परतः क्रमेण प्रतिकिट्टि विशेपोनं

विशेषोनं प्रदेशाग्रमभिधानीयम् । इयमत्र भावना—प्रथमसमयकृतासु किट्टिषु मध्ये या सर्वमन्दानुभागा किट्टी तस्याः प्रदेशाग्रं सर्वप्रभूतम्, ततोऽनन्तरेणानन्तगुणेनानुभागेनाधिकायां द्वितीयकिट्टौ प्रदेशाग्रं विशेषहीनम्, ततोऽप्यनन्तरेणानन्तगुणानुभागेनाधिकायां तृतीयकिट्टौ विशेषहीनं, एवमनन्तरानन्तरानुभागाधिकासु किट्टिषु विशेषहीनं विशेषहीनं तावद्वक्तव्यं यावत्प्रथमसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टा किट्टिरिति । एवं सर्वेष्वपि समयेषु प्रत्येकं भावनीयम् ॥५०॥

(३८)—या अनुसमयं—समयं समयं प्रत्यपूर्वा नवनवाः किट्टीः करोति ताः प्रतिसमयमसंख्येयगुणहानियुक्तश्रेणिभाजो द्रष्टव्याः । नवत्वं च प्रतिसमयं यथोत्तरमनन्तगुणहीनरसत्वापादनेन द्रष्टव्यम् । अयं भावार्थः—प्रथमसमये प्रभूताः किट्टीः करोति, द्वितीयसमयेऽसंख्येयगुणहीनाः, ततोऽपि तृतीयसमयेऽसंख्येयगुणहीनाः, एवं तावदभिधातव्यं यावत्किट्टिकरणाद्धायाश्चरमसमयः । दलिकं तद्विपरीतं—किट्टिसंख्याविपरीतं द्रष्टव्यम् । तथाहि—प्रथमसमये सकलकिट्टिगतं दलिकं सर्वस्तोकं, ततो द्वितीयसमये सकलकिट्टिगतं दलिकमसंख्येयगुणं, ततोऽपि तृतीयसमये सकलकिट्टिगतं दलिकमसंख्येयगुणं, एवं तावदभिधातव्यं यावत्किट्टिकरणाद्धायाश्चरमसमयः । तथा प्रथमसमयकृतासु किट्टिषु सामान्येनानुभागः सर्वप्रभूतः, ततो द्वितीयसमयकृतासु किट्टिषु सामस्त्येनानन्तगुणहीनः, ततोऽपि तृतीयसमयकृतास्वनन्तगुणहीनः, एवं तावद्वाच्यं यावत्किट्टिकरणाद्धाचरमसमयः । अथ प्रथमसमयकृतासु सर्वजघन्याद्यासर्वोत्कृष्टान्तासु किट्टिषु परस्परं प्रदेशाल्पबहुत्वं कियत्संख्ययेति चेद्?उच्यते, जघन्यकादिविशेषोनं—जघन्यामादिं कृत्वा परतः क्रमेण प्रतिकिट्टि विशेषोनं विशेषोनं प्रदेशाग्रमभिधातव्यम् । अत्रेयं भावना—प्रथमसमयकृतासु किट्टिषु मध्ये या सर्वमन्दानुभागा किट्टिस्तस्याः प्रदेशाग्रं सर्वप्रभूतं, ततस्तन्मध्यगतद्वितीयकिट्टावनन्तरेणानन्तगुणेनानुभागेनाधिकायां प्रदेशाग्रं विशेषहीनं, ततोऽप्यनन्तरेणानन्तगुणेनानुभागेनाधिकायां

तन्मध्यगततृतीयकिट्टौ विशेषहीनं, एवमनन्तरानन्तरानन्तगुणानुभागाधिकासु किट्टिषु विशेषहीनं तावदभिदध्यात् यावत्प्रथमसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टा किट्टिरिति । इयमेव रीतिः सर्वेष्वपि समयेषु प्रत्येकं किट्टिसमुदाये भावनीया ॥५०॥

**अणुभागोणंतगुणो चाउम्मासाइ संखभागूणो । मोहे दिवसपुहुत्तं किट्टीकरणाइसमयम्मि ॥५१॥**

(चू०)—'अणुभागोणंतगुणो'त्ति–पढमसमयकयाणं चेव किट्टीणं जा सव्वमन्दाणुभागा किट्टी सा सव्वत्थोवाणुभागा, ततो अणंतराणंतगुणाणुभागा, ततिया अणंतगुणाणुभागा, एवं णेयव्वं जाव पढमसमयकयाणं तप्पातोग्गुक्कस्साणुभागा किट्टीति । एवं सेव गमो बितियसमयातिसु कयाणं किट्टीणं चरिमसमयकयपज्जत्ताणंपि । इयाणिं पढमसमयकयाणं बितियसमयकयाणं च किट्टीणं अप्पबहुगं भण्णति–जा पढमसमयकयाणं किट्टीणं सव्वबहुपदेसा सा बितियसमयकयाणं सव्व बहुपदेसातो किट्टीतो असंखेज्जगुणहीणाए, एवं अणंतराणंतरेण णेयव्वं । जा पढमसमयकयाणं किट्टीणं सव्वमन्दाणुभागा किट्टी सा बितियसमयकयसव्वोक्कसाणुभागातो किट्टीतो अणंतगुणब्भहिगा । एवं अणंतराणंतरेण णेयव्वं ताव जाव किट्टीकरणद्धाते चरिमसमयकया किट्टित्ति । 'चाउम्मासाति संखभागूणो'त्ति–संजलणाणं चाउमासट्ठितिबन्धातो आढत्तं संखेज्जतिभागेण ऊणो ठितिबंधो भवति, कहं ? भन्नइ–चाउम्मासातो आढत्तं ठितिबंधे पुन्ने संखेज्जति भागेण उसरित्तु बंधति ठिति । 'मोहे दिवसपुहत्तं किट्टीकरणाईसमयंमि'त्ति–एवं परिहायमाणो ट्ठितिबन्धो मोहणिज्जस्स दिवसपुहुत्तं ट्ठितिबन्धो भवति किट्टीकरणस्स पढमसमयम्मि ॥५१॥

(मलय०)—'अणुभागो'त्ति–प्रथमसमयकृतानां किट्टीनामनुभागो यथोत्तरमनन्तगुणो वाच्यः। तद्यथा–प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टी सा सर्वस्तोकानुभागा। ततो द्वितीयाऽनन्तगुणानुभागा। ततोऽपि तृतीयाऽनन्तगुणानुभागा। एवं तावद्वाच्यं यावत्प्रथमसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टानुभागा किट्टिरिति। एवं द्वितीयादिष्वपि समयेषु किट्टीनां प्ररूपणा कर्तव्या। संप्रत्यासामेव किट्टीनां परस्परमल्पबहुत्वमुच्यते–प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वबहुप्रदेशा किट्टी सा स्तोकप्रदेशा। ततो द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वाल्पप्रदेशा किट्टी साऽसंख्येयगुणप्रदेशा। ततोऽपि तृतीयसमयकृतानां किट्टीनां मध्ये या सर्वाल्पप्रदेशा साऽसंख्येयगुणप्रदेशा। एवं तावद्वक्तव्यं यावच्चरमसमयः। तथा प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टी सा सर्वप्रभूतानुभागा। ततो द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वोत्कृष्टानुभागा किट्टी साऽनन्तगुणहीना। ततोऽपि तृतीयसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टानुभागाऽनन्तगुणहीना। एवं तावद्वक्तव्यं यावच्चरमसमयः। 'चाउम्मासे'त्यादि। 'मोहे' मोहनीये संज्वलनानां चातुर्मासिकात् स्थितिबन्धादारभ्यान्योऽन्यः स्थितिबन्धः संख्येयेन भागेनोन ऊनतरस्तावद्वक्तव्यो यावत् किट्टीकरणाद्धायाः प्रथमसमये दिवसपृथक्त्वप्रमाणः स्थितिबन्धो भवति। स च प्रायस्तथैवोक्तः ॥५१॥

(उ०)—प्रथमसमयकृतानां किट्टीनामनुभागो यथोत्तरमनन्तगुणो वाच्यः। तथाहि—प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टी सा सर्वस्तोकानुभागा, ततो द्वितीयाऽनन्तगुणानुभागा, ततोऽपि तृतीयाऽनन्तगुणानुभागा, एवं तावद्वाच्यं यावत्प्रथमसमयकृताना किट्टीनां मध्ये सर्वोत्कृष्टा किट्टिः। उक्तं चान्यत्रापि—"आइसमयकयाणं मंदाईणं रसो अणतगुणो"। एवं द्वितीयादिसमयेष्वपि किट्टीनां प्ररूपणा विधेया। सम्प्रत्यासामेव किट्टीनां प्रदेशाल्पबहुत्वं परस्परमुच्यते—प्रथमसमयकृतानां किट्टीनां

मध्ये या सर्वबहुप्रदेशा किट्टिः सा स्तोकप्रदेशा । तदपेक्षया द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वाल्पप्रदेशा साऽसंख्येयगुणप्रदेशा, एवं तावद्वाच्यं यावच्चरमसमयः । अनुभागापेक्षया च प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टिः सा सर्वप्रभूतानुभागा, ततो द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वोत्कृष्टानुभागा साऽनन्तगुणहीना, ततोऽपि तृतीयसमयकृतकिट्टिषु या सर्वोत्कृष्टानुभागा साऽनन्तगुणहीना, एवं तावद्वाच्यं यावच्चरमसमयः । मोहे-मोहनीयकर्मेति संज्वलनानां चातुर्मासिकात् स्थितिबन्धादारभ्यान्योऽन्यः स्थितिबन्धः संख्येयेन भागेनोन ऊनतरस्तावद्वक्तव्यो यावत्किट्टिकरणाद्धायाः प्रथमसमये दिवसपृथक्त्वप्रमाणो भवति, स च प्रायस्तथैव यथास्थानं भावितः ॥ ५१ ॥

**भिन्नमुहुत्तो संखेज्जेसु य घाईण दिणपुहुत्तं तु । वाससहस्सपुहुत्तं अन्तो दिवसस्स अंते सिं ॥५२॥**

**वाससहस्सपुहुत्ता बिवरिसअन्तो अघाइकम्माणं । लोभस्स अणुवसंतं किट्टीओ जं च पुव्वुत्तं ॥५३॥**

(चू०)—'भिन्नमुहुत्तं संखेज्जेसु य घादीण दिणपुहुत्तं तु'त्ति-किट्टीकरणद्धाते संखेज्जेसु भागेसु गतेसु लोभसंजलणाते अन्तोमुहुत्तितो ट्ठितिबन्धोत्ति, तिण्हं घातिकम्माणं दिवसपुहुत्तं ट्ठितिबन्धो । जाव किट्टीकरणद्धाते दुचरिमो ट्ठितिबन्धो ताव 'वाससहस्सपुहुत्त'न्ति-अणेगाणि वाससहस्साणि णामगोयावेयणिज्जाणं ट्ठितिबन्धो । पुहुत्तसद्दो बहुवाची । 'अन्तो दिवसस्स अन्ते सिं'ति-किट्टीकरणद्धाए चरिमो ट्ठितीबन्धो लोभसंजलणाए अन्तोमुहुत्तित्तो, 'दिवसस्स'त्ति-तिण्हं घातिकंमाणं अहोरत्तस्स ट्ठितिबंधो । 'वाससहस्सपुहुत्ता बिवरिसअंतो अघा-

निकंमाणं'ति-वाससहस्सपुहुत्तातो परिहायमाणा परिहायमाणा किट्टीकरणद्धाते अंते दोण्हं वासाणं अंतो भवति ट्टितिबंधो 'अघातिकम्माणं'ति-नामगोयवेयणिज्जाणं। तिस्से किट्टीकरणद्धाते तिसु आवलियासु समयूणासु सेसासु दुवे लोभा संजलणाते ण संकमंति सत्थाणे चेव उवसामिज्जंति । किट्टीकरणद्धाते आवलिगपडिआवलिगसेसाते आगालो वोच्छिन्नो । पडिआवलियातो उदीरणा एति। पडियावलियाए एगंमि समए सेसे लोभसंजलणाए जहन्निया ट्टितिउदीरणा। 'लोभस्स अणुवसंतं किट्टीतो जं च पुव्वुत्तं'ति-लोभसंजलणाए एयंमि समते अणुवसंतं जं किट्टिकयं तं सव्वं दव्वं, 'जं च पुव्वुत्तं'ति-समऊणादुगावलियबद्धं दलियं, पढमट्टितीते आवलियं दव्वं च, एयव्वतिरित्तं लोभसंजलणाते पएसग्गं सव्वं उवसंतं, दुविहो लोभो सव्वो चेव तंमि उवसंतो, एसो चेव चरिमसमयबायररागो ॥८२-८३॥

(मलय०)—'भिन्नमुहुत्तो' त्ति-अत्रेति षष्ठीसप्तम्योरर्थं प्रत्यभेदात् अस्या इति द्रष्टव्यम्। ततश्चास्याः किट्टिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु संज्वलनलोभस्य स्थितिबन्धो 'भिन्नमुहूर्तो'-अन्तर्मुहूर्त्तप्रमाणो भवति। त्रयाणां च घातिकर्मणां 'दिनपृथक्त्वं'-दिनपृथक्त्वमानः, नामगोत्रवेदनीयानां च 'वर्षसहस्रपृथक्त्वं' प्रभूतवर्षसहस्रप्रमाणः। पृथक्त्वशब्दोऽत्र बहुत्ववाची। तथा किट्टिकरणाद्धाया 'अन्ते'-चरमसमये संज्वलनलोभस्य स्थितिबन्धोऽन्तर्मुहूर्तप्रमाणः, केवलमिदमन्तर्मुहूर्तं स्तोकतरमवसेयम्। तथा 'सिं'ति-तेषां घातिकर्मणां 'अन्तर्दिवसस्य'-अहोरात्रस्य स्थितिबन्धः। अघातिनां पुनर्नामगोत्रवेदनीयानां 'वर्षसहस्रपृथक्त्वात्'-वर्षसहस्रपृथक्त्वप्रमाणात् स्थितिबन्धात् अन्यो हीनो हीनतरः स्थितिबन्धो भवन् तस्मिन् किट्टिकरणाद्धाचरमसमये 'द्विवर्षस्य'-द्वयोर्वर्षयोरन्तर्मध्ये भवति। तथा

किट्टिकरणाद्धायां समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणलोभदलिकं संज्वलनलोभे न संक्रमयति किन्तु स्वस्थान एव स्थितमुपशमं नीयते। द्व्यावलिकाशेषायां पुनः किट्टिकरणाद्धायां बादरसंज्वलनलोभस्यागालो न भवति, किं तूदीरणैव, सापि तावद्यावदावलिका। तस्याश्च उदीरणावलिकायाश्चरमसमये यत् किट्टीकृतं द्वितीयस्थितिगतम्, 'यच्च पूर्वोक्तं'–समयोनावलिकाद्विकबद्धमित्यर्थः, या चैकावलिका किट्टिकरणाद्धायाः शेषीभूता, एतत्सर्वं 'लोभस्य'–संज्वलनलोभस्यानुपशान्तं वर्तते, शेषं पुनरुपशान्तम्। तथा तस्मिन्नेव समये द्वावप्यप्रत्याख्यानप्रत्याख्यानावरणलोभावुपशान्तौ। संज्वलनलोभबन्धव्यवच्छेदो बादरसंज्वलनलोभोदयोदीरणाव्यवच्छेदश्च। एष एव चानिवृत्तिबादरसंपरायगुणस्थानकचरमसमयः ॥५२–५३॥

(उ०)—अस्याः किट्टिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु संज्वलनलोभस्य स्थितिबन्धो भिन्नमुहूर्त्तप्रमाणो भवति। त्रयाणां च घातिकर्मणां दिनपृथक्त्वप्रमाणः। नामगोत्रवेदनीयानां च वर्षसहस्रपृथक्त्वं–प्रभूतवर्षसहस्रप्रमाणः। पृथक्त्वशब्दोऽत्र बहुत्ववाची। तथा किट्टिकरणाद्धाया अन्ते चरमसमये संज्वलनलोभस्य स्थितिबन्धोऽन्तर्मुहूर्त्तमित्यध्याहारः। केवलमिदमन्तर्मुहूर्त्तं स्तोकतरमवसेयम्। तथा 'सिं' ति–तेषां घातिकर्मणामन्तर्दिवसस्यान्तरहोरात्रस्य स्थितिबन्धः। अघातिनां तु नामगोत्रवेदनीयानां वर्षसहस्रपृथक्त्वप्रमाणात् किट्टिकरणाद्धासंख्येयभागातिक्रमभाविनः स्थितिबन्धादन्योऽन्यो हीनः हीनतरः स्थितिबन्धो भवँस्तस्मिन् किट्टिकरणाद्धाचरमसमये द्विवर्षस्य द्वयोर्वर्षयोरन्तर्मध्ये भवति। तथा किट्टिकरणाद्धायां समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणलोभदलिकं संज्वलनलोभे न संक्रमयति, तदानीं तस्य पतद्ग्रहतानिवृत्तेः, किंतु स्वस्थान एव स्थितमुपशमं नीयते। द्व्यावलिकाशेषायां च किट्टिकरणाद्धायां बादरसंज्वलनलोभस्यागालो न भवति, कि तूदीरणैव, साऽपि तावद्यावदावलिकाऽवशिष्यते। तस्याश्चोदीर

णावलिकायाश्चरमसमये यत् 'विट्टीऊ'त्ति–किट्टीकृतं द्वितीयस्थितिगतं दलिकं, यच्च पूर्वोक्तं–समयोनावलिकाद्विकबद्धं, या चोदयावलि-
र्वका किट्टिकरणाद्धायाः शेषीभूता, एतत्सर्वं लोभस्य संज्वलनलोभस्यानुपशान्तं वर्त्तते, शेषं पुनरुपशान्तम्। तथा तस्मिन्नेव समये
द्वावप्यप्रत्याख्यानप्रत्याख्यानावरणलोभावुपशान्तौ, तस्मिन्नेव च समयेऽनिवृत्तिबादरसंपरायगुणस्थानकव्यवच्छेदः, संज्वलनलोभबन्ध-
व्यवच्छेदो बादरसंज्वलनलोभोदयोदीरणाव्यवच्छेदश्चेति द्रष्टव्यम् ॥५३॥

**सेसद्धं तणुरागो तावइया किट्टीऊ य पढमठिइं। वज्जिय असंखभागं हेट्ठुवरिमुदीरए सेसा ॥५४॥**

(चू०)—'सेसद्धं तणुरागो' त्ति–सेसतिभागे सुहुमरागो भवति। 'तावइया किट्टिओ य पढमट्ठिति' त्ति–ताव-
तिगाति त्ति तत्तुल्ला सुहुमरागद्धा तुल्ला, 'किट्टीतो य पढमट्ठिति' त्ति–किट्टीदव्वातो पढमट्ठिति करेई जहा मायाए,
पढमसमयसुहुमरागस्स किट्टीकरणद्धाते अंतिमा आवलिगा थिवुगसंकमेण संकमति। 'वज्जिय असंखभागे
हेट्टुवरिमुदीरई सेस' त्ति–पढमसमयसुहुमरागो किट्टीणं असंखेज्जं भागं वेयति, जाओ अपढमसमयअचरिमेसु
समएसु अपुव्वातो कयातो तातो सव्वतो पढमसमते उदिन्नातो। 'वज्जिय असंखभागं हेट्ठुवरिं'ति–जातो पढम-
समते कयातो तासिं अग्गग्गातो असंखेज्जतिभागं मोत्तूणं, जातो य चरिमसमयकयाओ किट्टीतो तासिं च जह-
न्नगपभिइं असंखेज्जतिभागं मोत्तूणं सेसातो उदीरेति। पढमसमयकयाणं हेट्ठतो असंखेज्जतिभागं मोत्तूणं जातो
य चरिमसमयकया किट्टीतो तासिं च जहन्नगपभितिइं असंखेज्जतिभागं मोत्तूणं सेसातो उदीरेति। पढमसमय-
कयाणं उवरिं चरिमसमयकयाणं हेट्ठतो असंखेज्जतिभागं मोत्तूणं उदीरेति ॥५४॥

(मलय०)—'सेसद्धं'ति-'शेषाद्धं', शेषकालं तृतीये विभागे इत्यर्थः। 'सूक्ष्मरागः' सूक्ष्मसंपरायो भवति। ताश्च प्राक्कृताः किट्टीर्द्वितीयस्थितेः सकाशात् कियतीः समाकृष्य प्रथमस्थितिं 'तावतीं'-सूक्ष्मसंपरायाद्धातुल्यां करोति। किट्टिकरणाद्धायाश्चान्तिममावलिकामात्रं स्तिबुकसंक्रमेण संक्रमयति। तथा प्रथमान्तिमसमयकृताः किट्टीर्वर्जयित्वा शेषाः किट्टयः सूक्ष्मसंपरायाद्धायाः प्रथमसमये उदयमागच्छन्ति। 'वज्जिय'इत्यादि-चरमसमयकृतानां किट्टीनां अधस्तादसंख्येयं भागं प्रथमसमयकृतानां चोपरितनमसंख्येयतमं भागं वर्जयित्वा शेषाः किट्टीरुदीरयति ॥ ५४ ॥

(उ०)—शेषाद्धां शेषकालं, तृतीये विभाग इत्यर्थः, तनुराग इति सूक्ष्मसम्परायो भवति। ताश्च प्राक्कृताः किट्टीर्द्वितीयस्थितेः सकाशात् कियतीः समाकृष्य प्रथमस्थितिं तावतीं-सूक्ष्मसम्परायाद्धातुल्यां करोति, किट्टिकरणाद्धायाश्चावशिष्टचरमावलिकामात्रस्थितिं स्तिबुकसंक्रमेण संक्रमयति। तथा प्रथमान्तिमसमयकृताः किट्टीर्वर्जयित्वा शेषसमयकृताः किट्टयः सूक्ष्मसम्परायाद्धायाः प्रथमसमये प्राय उदयमागच्छन्ति। प्रथमस्थितिभावानाक्रान्तकिट्टिव्यवच्छेदार्थं प्रायः पदम्। तथा चरमसमयकृतानां किट्टीनामधस्तादसंख्येयभागं प्रथमसमयकृतानां चोपरितनमसंख्येयभागं वर्जयित्वा शेषाः किट्टीरुदीरयति ॥५४॥

**गेण्हंतो य मुयंतो असंखभागो य चरिमसमयम्मि। उवसामेई बीयट्ठिइं पि पुव्वं व सव्वद्धं ॥५५॥**

(चू०)—'गेण्हंतो य मुयंतो असंखभागो य चरिमसमयम्मि'-बितियसमते उदिन्नाणं असंखेज्जइभागं मुयंति, हेट्ठतो अपुव्वं असंखेज्जतिभागं गेण्हति, एवं जाव सुहुमरागचरिमसमतो। 'उवसामेति य बितियट्ठितिं पि पुव्वं व सव्वद्धं'ति-ताहे चेव सव्वासिं किट्टीणं पदेसग्गं उवसामेउं आढवेइ समयूण दुयावलियं वद्धं च असंखेज्जगुण-

णाते ताव उवसामेति जाव सुहुमरागचरमसमए। सुहुमरागस्स नाणावरणदंसणावरणअंतरातियाणं अंतोमुहुत्तिगो ठ्तिबंधो, नामगोयाणं सोलसमुहुत्तिगो ठ्तिबंधो, वेयणिज्जस्स चउवीसमुहुत्तितो ठ्तिबंधो, से काले सव्व मोहं उवसंतं भवति ॥५५॥

(मलय०)—'गिण्हंतो य'त्ति-द्वितीये समये उदयप्राप्तानां किट्टीनामसंख्येयं भागं मुञ्चति उपशान्तत्वादुदये न ददातीत्यर्थः। अपूर्वं चासंख्येयभागमनुभवनार्थमुदीरणाकरणेन गृह्णाति। एवं ग्रहणमोक्षौ कुर्वन् तावज्ज्ञातव्यो यावत्सूक्ष्मसंपरायाद्धायाश्चरमसमयः। द्वितीयस्थितिगतमपि दलिकं सूक्ष्मसम्परायाद्धाप्रथमसमयादारभ्य 'सर्वाद्धं'—सकलामपि सूक्ष्मसंपरायाद्धां यावत् पूर्ववदुपशमयति। समयोनावलिकाद्विकबद्धमपि दलिकमुपशमयति। सूक्ष्मसंपरायाद्धायाश्च चरमसमये ज्ञानावरणदर्शनावरणान्तरायाणामान्तर्मौहूर्तिकः स्थितिबन्धः, नामगोत्रयोश्च षोडशमुहूर्तप्रमाणः, वेदनीयस्य च चतुर्विंशतिमुहूर्तमानः। तस्मिन्नेव चरमसमये सकलमपि मोहनीयमुपशान्तम्। ततोऽनन्तरसमये उपशान्तमोहगुणस्थानकमवाप्नोति ॥ ५५ ॥

(उ०)—द्वितीयसमये उदयप्राप्तानां किट्टीनामसंख्येयं भागं मुञ्चति, तावान् भाग उपशान्त इति तमुदये न ददातीत्यर्थः। अपूर्वं चासंख्येयं भागमनुभवनार्थमुदीरणाकरणेन गृह्णाति। एवं प्रतिसमयमियतो भागस्य ग्रहणमोक्षौ कुर्वता तावद्गन्तव्यं यावत्सूक्ष्मसंपरायाद्धाचरमसमयः। द्वितीयस्थितिमपि द्वितीयस्थितिगतं दलिकमपि सूक्ष्मसम्परायाद्धाप्रथमसमयादारभ्य सर्वाद्धां—सकलामपि सूक्ष्मसम्परायाद्धां यावत् पूर्ववदुपशमयति। समयोनावलिकाद्विकबद्धमपि च दलिकमुपशमयति। सूक्ष्मसम्परायाद्धायाश्चरमसमये ज्ञानावरणदर्शनावरणान्तरायाणामान्तर्मौहूर्त्तिकः स्थितिबन्धो, नामगोत्रयोश्च षोडशमुहूर्त्तप्रमाणः, वेदनीयस्य चतुर्विंशतिमुहूर्त्तप्रमाणः, तस्मिन्नेव चरमसमये सकलमपि मोहनीयमुपशान्तं, ततोऽनन्तरसमये उपशान्तमोहगुणस्थानकमवाप्नोति ॥५५॥

किट्टिकरणाद्धायां सं० लोभद्वि० स्थितौ किट्टिकरणविधेश्चित्रम् ।



इति अनुभागकिट्टिरूपा रेखा।

प्रथमसमयकृता. किट्टयः १२ (वस्तुतोऽनन्ता.) अनुभागसमुदायसर्वोत्कृष्टस्तदपि जघन्यानुभागस्पर्धकतोऽनन्तगुणहीन. प्रदेशसमुदाय सर्वस्तोक ।

द्वि० समयकृताः किट्टय' १० (वस्तुतोऽनन्ता ) परं प्र०स० कृतकिट्टिभ्योऽसख्येयगुण०हीना । अनुभागसमुदायोऽनन्तगुणहीन । प्रदेशसमुदायोऽसख्येयगुणः (प्र० समयतः)

तृतियसमयकृता किट्टयोऽनन्ता पर द्वि० स०कृतकिट्टिभ्योऽस०गु०हीनास्तदपि ८। अनुभागसमु० अनं०गु०हीन । प्रदे०समु०अस०गुण' ।

चतुर्थसमयकृतकिट्टयोऽनन्ताः पर तृ० समयतोऽस०गु०हीनास्तदपि ६। अनु० समु०अन०गु० हीन । प्रदे०समु०असगुणः ।

पञ्चमसमयकृतकिट्टयोऽनन्ताः पर च० समयतोऽस०गु०हीना तदप्यसत्कल्पनया ४ । अनु०समु०अन०गु० हीन । प्रदे०समु० अस०गुणः ।

**उवसंतद्धा भिन्नमुहुत्तो तीसे य संखतमतुल्ला । गुणसेढी सव्वद्धं तुल्ला य पएसकालेहिं ॥५६॥**

(चू०)—'उवसंतद्धा भिन्नमुहुत्तो'त्ति–ततो पभिर्तिं अंतोमुहुत्तं वुच्चति, 'तिस्से य संखतमतुल्ला गुणसेढी' त्ति–उवसंतद्धाते संखिज्जतिभागतुल्लं गुणसेढि करेति। सव्वं उवसंतद्धं अवट्ठितो गुणसेढीकालो 'सव्वद्धं तुल्ला य पदेसकालेहिं' ति–पदेसगेण वि कालेण वि तुल्लो। सव्वकालं सव्वं उवसंतद्धं अवट्ठितो परिणामो भवति ॥



(मलय०)—'उवसंतद्ध'त्ति–भिन्नमुहूर्तो–अन्तर्मुहूर्तं 'उपशान्ताद्धा' उपशान्तमोहगुणस्थानकाद्धा, तत्र च गुणश्रेणिमारचयति, तस्या उपशान्ताद्धाया यः संख्येयतमो भागस्तावत्प्रमाणाम्, ताश्च गुणश्रेणीः सर्वा अपि 'सर्वाद्धां'–सकलामपि उपशान्ताद्धां यावत् प्रदेशापेक्षया कालापेक्षया च तुल्याः करोति, अवस्थितपरिणामत्वात् ॥ ५६ ॥

(उ०)—उपशान्ताद्धा–उपशान्तमोहगुणस्थानकालो भिन्नमुहूर्त्तं, तत्र च गुणश्रेणिमारचयति, तस्या उपशान्ताद्धाया यः संख्येयतमो भागस्तत्तुल्या–उपशान्ताद्धासंख्येयतमभागसमयप्रमाणा गुणश्रेणीः करोतीत्यर्थः। ताश्च गुणश्रेणीः सर्वा अपि सर्वाद्धां सकलमप्युपशान्तमोहगुणस्थानकालं यावत्प्रदेशापेक्षया कालापेक्षया च तुल्याः करोति, अवस्थितपरिणामरूपहेतोरेकरूपत्वात् ॥५६॥

**उवसंता य अकरणा संकमणोवट्टणा य दिट्ठितिगे । पच्छाणुपुव्विगाए परिवडइ पमत्तावरितो त्ति ॥५७॥**

(चू०)—'उवसंता य अकरण'त्ति–उवसंतातो मोहपगडीतो करणाय ण भवंति, संकमणाते उव्वट्टणाए ओव्वट्टणाते उदीरणाते णिहत्तिए णिकायणाए य ण जायंति। 'संकमणोवट्टणाउ दिट्ठितिगे'त्ति–संकमणं च ऊव्वट्टणं च

दिट्ठिनिगस्स अत्थि। कहं? भण्णइ–तंमि काले मिच्छत्तसंमामिच्छत्ताणं संमत्ते संकमो, तिण्ह वि उव्वट्टणा अत्थि चेव। इयाणि पडिवातो सो दुविहो–भवक्खएण उवसमद्धक्खएण य। जो भवक्खएण पडिवडइ तस्स सव्वाणि करणाणि एगसमतेण उग्घाटियाणि भवंति। पढमसमते जाणि उदीरिज्जंति कम्माणि ताणि उदयावलिगं पवेसियाणि, जाणि ण उदीरिज्जंति ताणि उक्कड्ढिऊण उदयावलियबाहिरतो उवरिं गोपुच्छागितीते सेढीते रतेति। जो उवसमद्धाक्खएणं परिपडति तस्स विभासा 'पच्छाणुपुव्विगाए परिवडति पमत्तविरउ'त्ति–जेणेव विहिणा आरूढो तेणेव विहिणा पच्छाणुपुव्वीए परिवडति जाव पमत्तसंजतो ॥५७॥

(मलय०)—'उवसंत'त्ति–उपशान्ता मोहनीयप्रकृतयो 'अकरणाः'–करणरहिता भवन्ति, संक्रमणोद्वर्तनापवर्तनोदीरणानिधत्तिनिकाचनाकरणानामयोग्या भवन्तीत्यर्थः। 'दिट्ठितिगे'–दर्शनमोहनीयत्रिके पुनरुपशान्तेऽपि संक्रमणापवर्तने भवतः। तत्र संक्रमो मिथ्यात्वसम्यग्मिथ्यात्वयोः सम्यक्त्वे, अपवर्तना पुनस्त्रयाणामपि। एवं क्रोधेन श्रेणिं प्रतिपन्नस्य द्रष्टव्यम्। यदा तु मानेन श्रेणिं प्रतिपद्यते तदा मानं वेदयन्नेव प्रथमतो नपुंसकवेदोक्तक्रमेण क्रोधत्रिकमुपशमयति, ततः क्रोधोक्तप्रकारेण मानत्रिकम्, शेषं तथैव। यदा तु मायया श्रेणिं प्रतिपद्यते तदा मायां वेदयन्नेव प्रथमतो नपुंसकवेदोक्तप्रकारेण क्रोधत्रिकं, ततो मानत्रिकं, ततः क्रोधोक्तप्रकारेण मायात्रिकं, शेषं तथैव। यदा तु लोभेन श्रेणिं प्रतिपद्यते तदा लोभं वेदयन्नेव प्रथमतः क्रोधत्रिकं नपुंसकवेदोक्तक्रमेणोपशमयति, ततो मानत्रिकं, ततो मायात्रिकं, तत उक्तप्रकारेण लोभत्रिकमिति। सम्प्रति प्रतिपात उच्यते–सोऽपि द्विधा, भवक्षयेण अद्धाक्षयेण च। तत्र भवक्षयो म्रियमाणस्य, अद्धाक्षय उपशान्ताद्धाया व्यवच्छेदः। तत्र यो भवक्षयेण प्रतिपतति तस्य प्रथमसमये एव सर्वाण्यपि करणानि प्रवर्तन्ते।

प्रथमसमये च यानि कर्माण्युदीर्यन्ते तान्युदयावलिकायां प्रवेशयति। यानि च नोदीरणामागच्छन्ति तेषां दलिकानि उदयावलिकाया बहिस्ताद्गोपुच्छाकारसंस्थितानि विरचयति। यः पुनरुपशान्तमोहगुणस्थानकाद्धापरिक्षयेण प्रतिपतति स येनैव क्रमेण स्थितिघातादीन् कुर्वन्नारूढस्तेनैव क्रमेण पश्चानुपूर्व्या स्थितिघातादीन् कुर्वन् प्रतिपतति। स च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकम् ॥५७॥

(उ०)—उपशान्ता मोहनीयप्रकृतयोऽकरणा भवन्ति, संक्रमणोद्वर्त्तनापवर्त्तनोदीरणानिधत्तिनिकाचनाकरणानामयोग्या भवन्तीत्यर्थः। दृष्टित्रिके दर्शनमोहनीयत्रिके पुनरुपशान्तेऽपि संक्रमणापर्त्तने भवतः, न तदन्यत्करणम्। तत्र संक्रमो मिथ्यात्वसम्यङ्मिथ्यात्वयोः सम्यक्त्वेऽपवर्त्तना तु त्रयाणामपि। इत्थं चैतत्क्रोधेन श्रेणिं प्रतिपन्नस्य द्रष्टव्यम्। यदा तु मानेन श्रेणिं प्रतिपद्यते तदा मानमनुभवन्नेव प्रथमतो नपुंसकवेदोक्तक्रमेण क्रोधत्रिकमुपशमयति, ततः क्रोधोक्तप्रकारेण मानत्रिकं, शेषं तथैव। यदा तु मायया श्रेणिं प्रतिपद्यते तदा मायां वेदयन्नेव नपुंसकवेदोक्तप्रकारेण क्रोधत्रिकं, ततो मानत्रिकं, ततः क्रोधोक्तप्रकारेण मायात्रिकं, शेषं तथैव। यदा तु लोभेन श्रेणिं प्रतिपद्यते तदा लोभं वेदयन्नेव प्रथमतो नपुंसकवेदोक्तक्रमेण क्रोधत्रिकं, ततो मानत्रिकं, ततो मायात्रिकं, तत उक्तप्रकारेण लोभत्रिकमुपशमयति। अथ प्रतिपात उच्यते, स च द्विधा—भवक्षयेणाद्धाक्षयेण च। तत्र भवक्षयो म्रियमाणस्य, अद्धाक्षय उपशान्ताद्धासमाप्तिः। तत्र यो भवक्षयेण प्रतिपतति तस्य प्रथमसमय एव सर्वाण्यपि करणानि प्रवर्त्तन्ते, अविरतसम्यग्दृष्टित्वभावात्, प्रथमसमये च यानि कर्माण्युदीर्यन्ते तान्युदयावलिकायां प्रवेशयति, यानि च नोदीरणायां निविशन्ते तेषां कर्मणां दलिकान्युदयावलिकाया बहिस्ताद्गोपुच्छाकारसंस्थितानि रचयति। यस्तूपशान्तमोहगुणस्थानादद्धाक्षयेण प्रतिपतति स येनैव क्रमेण स्थितिघातादीन् कुर्वन्नारूढस्तेनैव क्रमेण पश्चानुपूर्व्या स्थितिघातादीन् कुर्वन् पतति, स च तावत्प्रतिपतन्नायाति यावत्प्रमत्तसंयतगुणस्थानकम् ॥५७॥

श्रेणेः प्रतिपातक्रमः

एत्थ विसेसं भणामि

उक्कड्ढित्ता बीइय ठिईहि उदयाइसुं खिवइ दव्वं । सेढीइ विसेसूणं आवलिउप्पिं असंखगुणं ॥५८॥

(चू०)—'उक्कड्ढित्ता वितीयट्ठितीहि उदयादिसुं खिवति दव्वं'ति–परिवडमाणो लोभाइणा क्कमेण वेयमाणो तंसि वितियट्ठितितो दलियं घेत्तूण पढमट्ठिती करेति, 'उदयादिसु'त्ति–उदयादिसु ट्ठितिसु निक्खवइ। 'सेढीए विसेसूणं'ति–पढमसमए बहुगं वितियसमते विसेसहीणं जाव आवलिगा, आवलिगाते परतो गुणसेढीक्कमेण 'आवलिगुप्पिं असंखगुण'त्ति–आवलिगा उवरिं असंखेज्जगुणाए सेढीए जाव गुणसेढीसीसगमिति, परओ विसेसहीणा चेव ठिति ॥५८॥

णिक्खिवइ। तस्स ठवणा।

(मलय०)—'उक्कड्ढित्त'त्ति–उपशान्तमोहगुणस्थानकात् प्रतिपतन् क्रमेण संज्वलनलोभादीनि कर्माण्यनुभवति । तद्यथा—प्रथमतः संज्वलनलोभम् , ततो यत्र मायोदयव्यवच्छेदस्तत आरभ्य माया । ततो यत्र मानोदयव्यवच्छेदस्ततोऽर्वाक् मानम् । ततो यत्र क्रोधोदयव्यवच्छेदस्तत आरभ्य क्रोधम् । इत्थं च क्रमेणोदयसमयप्राप्तानामनुभवनार्थं तेषां द्वितीयस्थितेः सकाशाद्दलिकमपकृष्य समाकृष्य प्रथमस्थितिं करोति । उदयादिषु चोदयसमयप्रभृतिषु च स्थितिषु श्रेण्या विशेषोनं विशेषोनं प्रक्षिपति। तद्यथा—उदयसमये प्रभूतम् । ततो द्वितीयसमये विशेषहीनम्, ततोऽपि तृतीयसमये विशेषहीनम्, एवं तावद्वाच्यं यावदुदयावलिकायाश्चरमसमयः । तत उदयावलिकाया उपरि असंख्येयगुणम् । तद्यथा—उदयावलिकाया उपरि प्रथमसमये प्राक्तनानन्तरसमयदलिकनिक्षेपापेक्षयाऽसंख्येयगुणम् , ततोऽपि द्वितीयसमयेऽसंख्येयगुणम् , ततोऽपि तृतीयसमयेऽसंख्येयगुणम् , एवं तावद्वक्तव्यं यावद्गुणश्रेणीशिरः । ततः

परतः पुनरपि प्रागुक्तक्रमेण विशेषविशेषहीनो दलिकनिक्षेपः ॥ ५८ ॥

(उ०)—उपशान्तमोहगुणस्थानात्प्रतिपतन् संज्वलनलोभादीनि कर्माणि क्रमेणानुभवति । तथाहि—आदितः संज्वलनलोभं, ततो मायोदयव्यवच्छेदस्थानादारतो मायां, ततो यत्र मानोदयव्यवच्छेदस्ततोऽर्वाग्मानं, ततो यत्र क्रोधोदयव्यवच्छेदस्ततः प्रभृति क्रोधमिति । अनेन क्रमेणोदयसमयप्राप्तानां तेषामनुभवनार्थं द्वितीयस्थितेः सकाशाद्दलिकमाकृष्याकृष्य प्रथमस्थितिं करोति, उदयादिषु चोदयसमयप्रभृतिषु च स्थितिषु श्रेण्या विशेषोनं विशेषोनं प्रक्षिपति । तथाहि—उदयसमये प्रभूतं प्रक्षिपति, ततो द्वितीयादिसमयेषु यथोत्तरं विशेषहीनं यावदुदयावलिकायाश्चरमसमयः । तत उदयावलिकाया उपर्यसंख्येयगुणम् । तथाहि—उदयावलिकाया उपरि प्रथमसमये तदव्यवहितप्राक्तनसमयभाविदलिकनिक्षेपापेक्षयाऽसंख्येयगुणं, ततोऽपि द्वितीयादिसमयेषु यथोत्तरमसंख्येयगुणं वाच्यं यावद्गुणश्रेणिशिरः । ततः परतो भूयोऽप्युदयावलिकोक्तक्रमेण विशेषविशेषहीनो दलिकनिक्षेपः ॥५८॥



**वेइज्जंतीणेवं इयरासिं आलिगाइ बाहिरओ । ण हि संकमाणुपुव्वी छावलिगोदीरणाणुप्पिं ॥५९॥**

(चू०)—'वेइज्जंतीणेवं इयरासिं आलिगाइ बाहिरओ'त्ति—एवं वेईज्जंतिण णिक्खेवो, 'इयरासिं'ति—अवेईज्जंतीणं आवलिगाते बाहिरओ निक्खेवति गुणसेढीकमेणं, सेढीओ उपरि विसेसहीणा ट्ठिती । 'ण हि संकमाणुपुव्वि' ति—परिवडमाणस्स आणुपुव्विसंकमो नत्थि । 'छावलिगोदीरणा उप्पिं'ति—'बद्धं छण्हं आवलिगाणं परओ उदीरिज्जंति' त्ति तं पि नत्थि, बंधावलियाए गयाते उदिरिज्जति ॥५९॥

(मलय०)—'वेइज्जंतीणेवं'ति—एष पूर्वोक्तो दलिकनिक्षेपस्तत्कालवेद्यमानप्रकृतीनामवसेयः । इतरासां त्ववेद्यमानानामावलिकाया

उपर्येव दलिकनिक्षेपः । सोऽप्यसंख्येयगुणतया तावद्यावद्गुणश्रेणीशिरः । ततः परतः पुनरपि प्रागुक्तक्रमेण विशेषहीनो विशेषहीनः । 'न हि' इत्यादि–हिशब्दोऽवधारणे, ततोऽयमर्थः–आनुपूर्व्येव संक्रमो न भवति किन्त्वनानुपूर्व्याऽपि भवति, तथा बन्धानन्तरं षण्णामावलिकानामुपरि उदीरणा भवतीति प्राक् यदुक्तं तन्न भवति किन्तु बन्धावलिकामात्रातिक्रमेऽपि उदीरणा भवतीति ॥५९॥

(उ०)—एप पूर्वोक्तो दलिकनिक्षेपस्तत्कालवेद्यमानप्रकृतीनामवसेयः । इतरासामवेद्यमानानां प्रकृतीनामावलिकाबाह्यः, तासामुदयाभावादुदयावलिकायां दलिकनिक्षेपमकृत्वा तस्या उपर्येव दलिकनिक्षेपः प्रवर्त्तते इत्यर्थः । सोऽप्यसंख्येयगुणतया तावत्प्रवर्तते यावद्गुणश्रेणिशिरः । ततः परतः पुनर्विशेषहीनो विशेषहीनः । 'न ही'त्यादि–हिशब्दोऽवधारणे, किमवधार्यते ? यः पूर्वमुपशमश्रेण्यारोहे आनुपूर्व्येव संक्रम उक्तः स इह न भवति, किं त्वनानुपूर्व्याऽपि भवति । तथा बन्धानन्तरं षण्णामावलिकानामुपर्युदीरणा भवतीति यत्प्रागुक्तं तदपीह न भवति, किं तु बन्धावलिकामात्रातिक्रमेऽप्युदीरणा भवतीति । शेषं तु यत् यत्रस्थाने व्यवच्छिन्नं बन्धनसंक्रमणापवर्त्तनोदीरणादेशोपशमनाऽऽगालनिधत्तिनिकाचनादि तत्तत्र स्थाने तथैव भवति ॥ ५९ ॥

वेइज्जमाणसंजलणद्धा अहिगा उ मोहगुणसेढी। तुल्ला य जयारूढो अतो य सेसेहि तुल्लत्ति ॥६०॥

(चू०)—'वेतिज्जमाणसंजलणद्धा अहिगा उ मोहगुणसेढी तुल्ला य जयारूढो'त्ति–वेतिज्जमाणसंजलणद्धाए अहिगा मोहणिज्जगुणसेढी कालं पडुच्च, तुल्ला य 'जयारूढो'त्ति–जाए संजलणाए सेढिं पडिवन्नो तातो चेव नं कम्मं पत्तस्स सेसयंमेहि सरिसा गुणसेढी। सेसं कम्माणं पुण आरुहंतस्स जं भणियं तारिसं चेव अणूणमतिरित्तं भाणियव्वं। कालतो अब्भहिगा तत्तिया य गुणसेढी कालं पडुच्च कोहं पत्ते। 'अतो य सेसेहिं तुल्लत्ति'–जाहे कोहं

पत्तो ततो पभिति सेसं कंमेहिं सरिसा गुणसेढी ॥ ६० ॥

॥ श्रेणितः प्रतिपततो द्वितीयस्थितेः प्रथमस्थितीकरणचित्रम् ॥



(मलय०)—'वेइज्जमाण'त्ति। 'मोहनीयस्य'-मोहनीयप्रकृतीनां गुणश्रेणिः कालमाश्रित्य वेद्यमानसंज्वलनकालादभ्यधिका प्रतिपतता सता प्रारभ्यते, समारोहकालगुणश्रेण्यपेक्षया तु तुल्या। तथा 'जय'त्ति प्राकृतत्वात् स्त्रीत्वनिर्देशः, येन संज्वलनेनोपशमश्रेणिं 'प्रतिपन्नस्तमुदयेन प्राप्तः सन् ततः प्रभृति तस्य गुणश्रेणिं शेषकर्मसत्कगुणश्रेणिभिः सह तुल्यामारभते। यथा कश्चित्संज्वलनक्रोधेनोपशमश्रेणिं प्रतिपन्नस्ततः श्रेणेः प्रतिपतन् यदा संज्वलनक्रोधमुदयेन प्राप्तस्ततः प्रभृति तस्य गुणश्रेणिः शेषकर्मभिः समाना भवति। एवं मानमाययोरपि वाच्यम्। संज्वलनलोभेन पुनरुपशमश्रेणिं प्रतिपन्नस्य प्रतिपातकाले प्रथमसमयादेवारभ्य संज्वलनलोभस्य गुणश्रेणिः शेषकर्मगुणश्रेणिभिः सह तुल्या प्रवर्तते। शेषकर्मणां पुनरुपशमश्रेणिमारोहतो यत् यत्र बन्धसंक्रमादि वृत्तं तत्तथैव प्रतिपततोऽपि क्रमेण पश्चानुपूर्व्या अन्यूनातिरिक्तं वेदितव्यम् ॥ ६० ॥



(उ०)—मोहस्य मोहनीयप्रकृतीनां गुणश्रेणिः कालमाश्रित्य वेद्यमानसंज्वलनकालादभ्यधिका प्रतिपतता सता प्रारभ्यते, समारोहकालगुणश्रेण्यपेक्षया तु तुल्या। तथा 'जय' त्ति प्राकृतत्वात् स्त्रीत्वनिर्देशः। ततोऽयमर्थः—येन संज्वलनेनोदयप्राप्तेनोपशमश्रेणिप्रतिपत्तिरासीत्तमुदयेन प्राप्तः सँस्तदनन्तरं तस्य गुणश्रेणिं शेषकर्मसत्कगुणश्रेणिभिः सह तुल्यामारभते, यथा संज्वलनक्रोधोदयेनोपशमश्रेणिं प्रतिपन्नस्ततः श्रेणेः प्रतिपतन् संज्वलनक्रोधोदयप्राप्तौ सत्यां तदनन्तरं संज्वलनक्रोधगुणश्रेणिं शेषकर्मगुणश्रेणीसमानां निर्वर्तयतीति, एव मानमाययोरपि वाच्यम्। संज्वलनलोभेन पुनरुपशमश्रेणिं प्रतिपन्नस्य प्रतिपातकाले प्रथमसमयादेवारभ्य संज्वलनलोभस्य गुणश्रेणिः शेषकर्मगुणश्रेणिभिः सह तुल्या प्रवर्तते ॥६०॥

**खवगुवसामणपडिवयमाणदुगुणो य तहिं तहिं बन्धो। अणुभागोणंतगुणो असुभाण सुभाण विवरीओ ॥६१॥**

(चू०)—'खवगुवसामगपडिवडमाणाणं दुगुणो य तहिं तहिं बंधो' त्ति–जंमि समते खवगस्स ट्ठितिबंधो आदि मज्झे अवसाणे वा दिट्ठो तंमि चेव ठाणे उवसामगाणं दुगुणो ट्ठितिबंधो आदि मज्झे अवसाणे वा दिट्ठो, तंमि चेव ट्ठाणे परिवडमाणस्स तओ दुगुणो। 'अणुभागोणंतगुणो असुभाण सुभाण विवरीओ'–तेसिं खवगउवसामगपरिवडमाणेणं अणुभागो अणंतगुणो, असुभाणं सव्वत्थोवो खवगस्स, उवसामगस्स तंमि चेव ट्ठाणे अणंतगुणो, परिवडमाणस्स तंमि चेव ट्ठाणे अणंतगुणो। 'सुभाण विवरीतो' त्ति–सुभाणणुभागो सव्वत्थोवो परिवडमाणस्स, उवसामगस्स तंमि चेव ट्ठाणे अणंतगुणो, खवगस्स तंमि चेव ट्ठाणे ततो अणंतगुणो। अवसेसो विही जहा आरुहंतस्स तहा उयरंतस्स वि। एवं जाव पमत्तट्ठाणं पत्तो ॥ ६१ ॥

(मलय०)—'खवगुवसामग' त्ति–क्षपकस्य क्षपकश्रेणिमारोहतो यस्मिन् स्थाने यावान् स्थितिबन्धस्तस्मिन्नेव स्थाने उपशमश्रेणिमारोहतस्तावान् स्थितिबन्धो द्विगुणो भवति। ततोऽपि तस्मिन्नेव स्थाने उपशमश्रेणीतः प्रतिपततो द्विगुणो भवतीति। क्षपकसत्कस्थितिबन्धापेक्षया चतुर्गुणो भवतीत्यर्थः। तथा क्षपकस्य यस्मिन् स्थानेऽशुभप्रकृतीनामनुभागो यावान् भवति तदपेक्षया तस्मिन्नेव स्थाने तासामेवाशुभप्रकृतीनामुपशमकस्यानुभागोऽनन्तगुणः। ततोऽपि तस्मिन्नेव स्थाने तासामेवाशुभप्रकृतीनामुपशमश्रेणीतः प्रतिपततोऽनन्तगुणः। 'सुभाण विवरीओ' त्ति शुभप्रकृतीनां पुनरनुभागो विपरीतो वाच्यः। स चैवं—उपशमश्रेणीतः प्रतिपततो यस्मिन् स्थाने शुभप्रकृतीनां यावान् अनुभागो भवति तदपेक्षया तस्मिन् स्थाने तासामेव शुभप्रकृतीनामुपशमकस्यानुभागोऽनन्तगुणः। ततोऽपि तस्मिन्नेव स्थाने तासामेव शुभप्रकृतीनां क्षपकस्यानन्तगुणः। शेषं यथाऽऽरोहतस्तथा प्रतिपततोऽपि वेदितव्यम्,

यावत्प्रमत्तसंयतगुणस्थानम् ॥ ६१ ॥

(उ०)—क्षपकस्य क्षपकश्रेणिमारोहतो यत्र स्थाने यावान् स्थितिबन्धस्तस्मिन्नेव स्थाने उपशमश्रेणिमारोहतस्तावान् स्थितिबन्धो द्विगुणो भवति, क्षपकापेक्षयोपशमकस्य मन्दपरिणामत्वात् । ततोऽपि तस्मिन्नेव स्थाने उपशमश्रेणितः प्रतिपततो द्विगुणो भवति, आरोहादवतरणपरिणामस्य मन्दत्वात् , क्षपकसत्कस्थितिबन्धापेक्षया चायं चतुर्गुणो भवतीत्यर्थः । तथा क्षपकस्य यस्मिन् स्थानेऽशुभप्रकृतीनामनुभागो यावान् भवति तदपेक्षया तस्मिन्नेव स्थाने तासामेवाशुभप्रकृतीनामुपशमकस्यानुभागोऽनन्तगुणस्ततोऽपि तस्मिन्नेव स्थाने तासामेवाशुभप्रकृतीनामुपशमश्रेणितः प्रतिपततोऽनन्तगुणः । शुभानां—शुभप्रकृतीनां पुनरनुभागो विपरीतो वाच्यः । तथाहि—उपशमश्रेणीतः प्रतिपततो यस्मिन् स्थाने शुभप्रकृतीनां यावाननुभागो भवति तदपेक्षया तस्मिन्नेव स्थाने तासामेव शुभप्रकृतीनामुपशमकस्यानुभागोऽनन्तगुणः, ततोऽपि तस्मिन्नेव स्थाने तासामेव शुभप्रकृतीनां क्षपकस्यानन्तगुणः । शेषमारोहत इव प्रतिपततोऽपि ज्ञेयं यावत्प्रमत्तसंयतगुणस्थानम् ॥ ६१ ॥



**किच्चा पमत्ततदियरठाणे परिवत्ति बहुसहस्साणि । हिट्ठिल्लाणंतरदुगं आसाण वा वि गच्छेज्जा ॥६२॥**

(चू०)—'किच्चा पमत्ततदियरट्ठाणे परिवत्ति बहुसहस्साणि' त्ति—पमत्तापमत्तसंजयट्ठाणेसु अणेगाओ परिवत्तीतो काउं, 'हेट्ठिल्लाणंतरदुगं आसाणं वा वि गच्छिज्ज' त्ति—हिट्ठिल्लाणंतरदुगं ति देसविरओ असंजयसंमदिट्ठी वा होज्जा, ततो परिवडमाणो आसाणं वा वि गच्छेज्जत्ति—कोति सासायणत्तणं गच्छेज्जा ॥ ६२ ॥

(मलय०)—'किच्च' त्ति—प्रमत्ताप्रमत्तसंयतगुणस्थानकयोः प्रभूतानि सहस्राणि यावत् परिवृत्तीः कृत्वा कश्चिदधस्तनमनन्तरं गुण-

स्थानकद्विकं याति । कोऽपि देशविरतोऽपि भवति, कोऽपि अविरतसम्यग्दृष्टिरपि भवतीत्यर्थः । येषां मतेनानन्तानुबन्धिनामुपशमना भवति तेषां मतेन कश्चित्सासादनभावमपि गच्छति ॥ ६२ ॥

(उ०)—एवं परिपाट्या पतितः प्रमत्तगुणस्थाने आगत्य तत्र विश्रम्य प्रमत्ततदितरस्थान इति प्रमत्ताप्रमत्तसंयतगुणस्थानकयोः प्रभूतानि सहस्राणि यावत्परिवृत्तीः कृत्वा कश्चिदनन्तरगुणस्थानद्विकमधस्तनं देशविरताविरतसम्यग्दृष्टिलक्षणं गच्छेत् । येषां च मतेनानन्तानुबन्धिनामुपशमना भवति तेषां मतेन कश्चित्सासादनभावमपि गच्छेत् ॥ ६२ ॥

**उवसमसम्मत्तद्धा अन्तो आउक्खया धुवं देवो । तिसु आउगेसु बद्धेसु जेण सेढिं न आरुहइ ॥६३॥**

(चू०)—'उवसमसंमतद्धा अंतो आउक्खया धुवं देवो' त्ति–उवसमसंमत्तद्धाए वट्टमाणो जति कालं करेइ धुवं देवो भवति । जई सासायणो कालं करेति सो वि नियमा देवो भवति । किं कारणं ? भन्नति–'तिसु आउगेसु बद्धेसु जेण सेढिं न आरुहइ' त्ति–देवाउगवज्जेसु आउगेसु बद्धेसु जम्हा उवसामगो सेढीते अणुरुहो भवति तम्हा सासायणो वि देवलोगं जाति ॥ ६३ ॥

(मलय०)—'उवसम' त्ति–औपशमिकसम्यक्त्वाद्धायां वर्तमानो यदि कश्चिदायुःक्षयात्कालं करोति, तर्ह्यवश्यं देवो भवति । अपि च सास्वादनभावमपि गतः सन् कालं करोति तथापि स देव एव भवति । यत आह–येन कारणेन देवायुर्वर्जितेषु शेषेषु त्रिष्वायुःषु मध्येऽन्यतमस्मिन्नायुषि बद्धे श्रेणिमुपशमश्रेणिं नारोहति । ततः श्रेणिस्थितः श्रेणीतः प्रतिपतन् वा कालं कृत्वा देव एव भवति ॥६३॥

(उ०)—औपशमिकसम्यक्त्वाद्धाया अन्तर्मध्ये वर्त्तमानो यदि कश्चिदायुःक्षयात् कालं करोति तर्हि स ध्रुवमवश्यं देवो

भवति। किं च सासादनभावं गतः सन्नपि यदि कालं करोति तथापि देव एव भवति। येन कारणेन देवायुर्वर्जेषु शेषेषु त्रिष्वायुःषु मध्येऽन्यतमस्मिन्नायुषि बद्धे श्रेणिं नारोहति, ततः श्रेणिस्थितः श्रेणीतः पतन् वा कालं कृत्वा देव एव भवति ॥ ६३ ॥

**उग्घाडियाणि करणाणि उदयठिइमाइगं इयरतुल्लं। एगभवे दुक्खुत्तो चरित्तमोहं उवसमेज्जा ॥६४॥**

(चू०)—'उग्घाडियाणि करणाणि उदयट्ठिइमाइगं इयरतुल्लं' ति–जं जं करणं आरुहंतस्स जत्थ जत्थ वोच्छिन्नं तं तं ट्ठाणं पत्तस्स तं तं करणं उग्घाडियं भवति। तं जहा–अपसत्थउवसामणाकरणं णिहत्तीकरणं णिकायणाकरणं बंधनकरणं उदीरणाकरणं उवट्टणोवट्टणाकरणं२ संकामणाकरणं इति अट्ठ करणाणि उग्घाडियाणि भवन्ति तट्ठाणं पत्तस्स। 'उदयट्ठिनिमादिगं'ति–उदयट्ठिती उवसामणा ट्ठितिबंधो एवमादीणि इयरतुल्लं ति–जहा य आरुहंतस्स तहा परिवडंतस्स वि। 'एगभवे दो खुत्तो चरित्तमोहं उवसमेज्ज'त्ति–एगंमि भवे उक्कोसेणं दो वारा चरित्तमोहं उवसामेज्जा। एवं पुरिसवेएण पडिवन्नस्स ॥६४॥

(मलय०)—'उग्घाडियाणि'त्ति–'करणानि' बन्धनसंक्रमणादीनि उपशमश्रेणिमारोहतो यत्र यत्र स्थाने यानि यानि व्यवच्छिन्नस्थानानि उपशमश्रेणीतः प्रतिपततः सतस्तत्तत्स्थानं प्राप्तस्य तानि तानि उद्घाटितानि भवन्ति, तानि तानि तत्र प्रवर्तन्त इत्यर्थः। तथा 'उदयस्थित्यादिकं'–उदयस्थितिबन्धादिकम् इतरतुल्यम्–उपशमश्रेण्यारोहभाव्युदयस्थित्यादितुल्यम्, उपशमश्रेणिमारोहतो यत्र यत्र यद्यत् उदयस्थित्यादिकं व्यवच्छिन्नं प्रतिपातेऽपि तत्र तत्र तत्तत् उदयस्थित्यादिकं प्रवर्तत इत्यर्थः। तथैकस्मिन् भवे द्वौ वारौ चारित्रमोहमुपशमयति उपशमश्रेणिं प्रतिपद्यते इत्यर्थः। न तु तृतीयमपि वारम् ॥ ६४ ॥



श्रेणेः प्रतिपातक्रमः

(उ०)—करणानि बन्धनादीन्युपशमश्रेणिमारोहतो यत्र यत्र स्थले यानि यानि व्यवच्छिद्यन्ते उपशमश्रेणीतः पततस्तत्तत्स्थानं प्राप्तस्य तानि तान्युद्घाटितानि भवन्ति प्रवर्तन्त इत्यर्थः । तथोदयस्थित्यादिकमुदयस्थितिवन्धादिकमितरतुल्यम्–उपशमश्रेण्यारोहभाव्युदयावलितुल्यम्, आरोहे यत्र यत्र तद्व्यवच्छेदः प्रतिपाते तत्र तत्र तत्प्रवृत्तिरित्यर्थः । एतच्च प्रागप्यर्थप्रसङ्गादुक्तमेव । तथा एकस्मिन् भवे द्वौ वारौ चारित्रमोहनीयमुपशमयति–उपशमश्रेणिं प्रतिपद्यत इत्यर्थः, न तु तृतीयमपि वारम् । यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते स तस्मिन् भवे क्षपकश्रेणिं न प्रतिपद्यते । यस्त्वेकवारमुपशमश्रेणिं प्रतिपद्यते, तस्य भवेदपि तस्मिन् भवे क्षपकश्रेणिः, एष कार्मग्रन्थिकाभिप्रायः, आगमाभिप्रायेण त्वेकस्मिन् भवे एकैव श्रेणिर्न तु द्वे अपि ।तदुक्तं–'अन्नयरसेढिवज्जं एगभवेणं च सव्वाइ' इति ।

इयाणि इत्थिवेएण पडिवन्नस्स भण्णति–

उदयं वज्जिय इत्थी इत्थिं समयइ अवेयगा सत्त । तह वरिसवरो वरिसवरित्थिं समगं कमारद्धे ॥६५॥

(चू०)—'उदयं वज्जिय इत्थी इत्थि समयइ'त्ति–इत्थिवेएण पडिवन्नस्स पढमट्ठितीए एगं उदयट्ठितिं मोत्तूणं सेसो सव्वो इत्थिवेओ उवसंतो भवति । 'अवेयगा सत्त'त्ति–अवेतिगा संति छन्नोकसाते पुरिसवेयं च सत्तकंमपगडीओ जुवगं उवसामेति । एसो विसेसो इत्थिवेएण पडिवण्णस्स, सेसं जहा पुरिसवेएण पडिवन्नस्स । इयाणिं नपुंसकवेएण पडिवन्नस्स विसेसो भन्नति–'तह वरिसवरो वरिसवरित्थि समगं कमारद्धे'त्ति । तह चेव वरिसवरो उदयट्ठिति मोत्तूणं वरिसवरित्थित्ति–नपुंसगवेयं इत्थिवेयं जुगवं उवसामेत्ति, कमारद्धेत्ति–पुरिसवेएण वा पडिवण्णो जंमि ट्ठाणे णपुंसगवेयं उवसामेइ तद्दूरं नपुंसगवेएण पडिवन्नो नपुंसगवेयं उवसामेति, ततो पभिइं

॥ भिन्नकषायोदयेन श्रेणौ विशेषः ॥

| संज्व०क्रोधोदयेन | संज्व०मानोदयेन | सं०मायोदयेन | सं०लोभोदयेन |
|---|---|---|---|
| प्रथमं सं क्रोधं वेदयमानः क्रोधत्रिकं | सं० मानं वेदयमानः क्रोधत्रिकम् (नपुं० वत्) | सं०मायां वेदयमानः प्रथमं क्रोधत्रिकम् | संलोभं वेदयमानः प्रथमं क्रोधत्रिकम् |
| ततो मानत्रिक (क्रोधवत्) | ततो मानत्रिकम् | ततो मानत्रिकम् | ततो मानत्रिकम् |
| ततो मायात्रिकम् | ततो मायात्रिकम् | ततो मायात्रिकम् | ततो मायात्रिकम् |
| ततो लोभत्रिकमुपशमयति | ततो लोभत्रिकमुपशम० | ततो लोभत्रिकम् | ततो लोभत्रिकम् |

यदि स्त्री प्रारम्भिका

प्रथमं नपुं० वेदं० शमयति
ततः स्त्रीवेदं शमयति
ततः समयानन्तरं पुंवेदहास्य
६ षट्कोपशमना प्रारम्भः
शेषविधिः पुंवेदवत् ।

॥ भिन्नवेदेन श्रेणौ विशेषः ॥

यदि नपुंसकः प्रारम्भकः

प्रथमं नपुं० वेदोपशमनाप्रारम्भः ततः नपुं०स्त्रीवेदौ युगपदुपशमयति
ततः स्त्रीवेदोपशान्तिः, नपुंसः १ स्थि० अवशिष्टा
ततः समयानन्तर नपुं०वेदोपशान्तिः ततः समयानन्तरं पुंहास्य ६
कोपशमनाप्रारम्भः शेषविधिः पुवेदवत् ।

यदा पुरुषः प्रारम्भकः

प्रथमं नपुं०वेदं शमयति ततोऽन्तर्मुहूर्त्तानन्तरं स्त्रीवेदं शमयति
ततः समयानन्तरं पुंवेदहास्य ६ कोपशमनाप्रारम्भः ततो
हास्य ६ कोपशान्तिः पुं० १ स्थितिरवशिष्टा ततः पुंवेदोदयशान्ति
ततः उदयावलिका समयोनावलिकाद्विकबद्धं च मुक्त्वा सर्वपुंवेदशान्तिः

तत्र यस्याः प्रकृतेरुपशमे नोक्तस्तस्याः तत्स्थान एवान्तर्मुहूर्त्तेनोपशमो भवतीति ज्ञेयम् ॥

इत्थिवेयं नपुंसगवेयंपि उवसामित्तो जाति जाव नपुंसगवेयद्धाए दुचरिमो समतो, तंमि समते दोवि जुगवं उवसामेति। नपुंसगवेयस्स एगा उदयट्ठिती सेसा भवति। अवेयगो सत्तकम्मपगडीतो उवसामेति, सेसं जहा पुरिसवेयउवसामगस्स ॥ ६५ ॥

(मलय०)—एवं पुरुषवेदोदयेनोपशमश्रेणिं प्रतिपन्नस्य विधिरुक्तः, सम्प्रति स्त्रीवेदेन प्रतिपन्नस्योच्यते—'उदयं'ति। इह स्त्री उपशमश्रेणिं प्रतिपन्ना सती प्रथमतो नपुंसकवेदमुपशमयति, पश्चात् स्त्रीवेदम्। तं च तावदुपशमयति यावत्स्वोदयस्य द्विचरमसमयः। तस्मिश्च समये एकां चरमसमयमात्रामुदयस्थितिं वर्जयित्वा शेषं सकलमपि स्त्रीवेदस्य सत्कं दलिकमुपशमितम्। ततश्चरमसमये व्यतिक्रान्ते अवेदका सती पुरुषवेदहास्यादिकाः सप्त प्रकृतीर्युगपदुपशमयितुमारभते। शेषं पुरुषवेदेन श्रेणिं प्रतिपन्नस्येव वेदितव्यम्। सम्प्रति नपुंसकवेदेनोपशमश्रेणिं प्रतिपन्नस्य विधिमाह—'तह' इत्यादि। वर्षवरो नपुंसक उपशमश्रेणिं प्रतिपन्नः सन् तथेति एकामुदयस्थितिं मुक्त्वेत्यर्थः, समकं युगपत् नपुंसकवेदस्त्रीवेदावुपशमयति। 'कमारद्धे' इति—क्रमेणारब्धे सति। तत्रायं सम्प्रदायः—स्त्रीवेदेन पुरुषवेदेन वा उपशमश्रेणिं प्रतिपद्यमानो यस्मिन् स्थाने नपुंसकवेदमुपशमयति तद्दूरं यावन्नपुंसकवेदेनापि श्रेणिं प्रतिपन्नः सन् नपुंसकवेदमेव केवलमुपशमयति। तत ऊर्ध्वं पुनर्नपुंसकवेदं स्त्रीवेदं च युगपदुपशमयितुं लग्नः। स च तावद्गतो यावन्नपुंसकवेदाद्धाया द्विचरमसमयः। तस्मिश्च समये स्त्रीवेद उपशान्तः। नपुंसकवेदस्य च एका समयमात्रोदयस्थितिर्वर्तते। शेषं सर्वमुपशान्तम्। तस्यामप्युदयस्थितावतिक्रान्तायामवेदको भवति। ततः पुरुषवेदादिकाः सप्त प्रकृतीर्युगपदुपशमयितुं यतते, शेषं तथैव ॥ ६५॥

(उ०)—तदयं पुरुषवेदोदयेनोपशमश्रेणिं प्रतिपन्नस्य विधिरुक्तः, सम्प्रति स्त्रीवेदेन नपुंसकवेदेन चोपशमश्रेणिं प्रतिपद्यमानस्य

विधिमाह–इह स्त्री उपशमश्रेणिं प्रतिपन्ना सती प्रथमतो नपुंसकवेदमुपशमयति पश्चात्स्त्रीवेदं, तं च तावदुपशमयति यावत् स्वोदयस्य द्विचरमसमयः, तस्मिँश्च समये एकां चरमसमयमात्रामुदयस्थितिं वर्जयित्वा शेषं सकलमपि स्त्रीवेदसत्कं दलिकमुपशमितम्। ततश्चरमसमये व्यतीतेऽवेदका सती पुरुषवेदहास्यादिकाः सप्त प्रकृतीर्युगपदुपशमयितुमुद्यतते। शेषं पुरुषवेदेन श्रेणिं प्रतिपन्नस्येव भावनीयम्। वर्षवरो नपुंसक उपशमश्रेणिं प्रतिपन्नः सँस्तथैत्येकामुदयस्थितिं मुक्त्वेत्यर्थः, वर्षवरस्त्रीवेदौ समकं युगपदुपशमयति। 'कमारद्धे' इति–क्रमेणारब्धे सति, अत्रायं सम्प्रदायः–स्त्रीवेदेन पुरुषवेदेन चोपशमश्रेणिं प्रतिपद्यमानो यस्मिन् स्थाने नपुंसकवेदमुपशमयति तद्दूरं यावन्नपुंसकवेदेनापि श्रेणिं प्रतिपन्नः सन् केवलं नपुंसकवेदमेवोपशमयति, तत ऊर्ध्वं तु नपुंसकवेदं स्त्रीवेदं च युगपदुपशमयितुं लग्नः सँस्तावद्गतो यावन्नपुंसकवेदोदयाद्धाया द्विचरमसमयः। तस्मिँश्च समये स्त्रीवेद उपशान्तो नपुंसकवेदस्य चैका समयमात्रोदयस्थितिरवशिष्यते। शेषं सर्वमुपशान्तम्। तस्यामप्युदयस्थितावतिक्रान्तायामवेदको भूत्वा पुरुषवेदादिकाः सप्तप्रकृतीर्युगपदुपशमयितुं प्रक्रमते। शेषं तथैव ॥ ६५ ॥

सव्वुवसमणा सम्मत्ता इयाणिं देसोपसमणा। तीसे इमे भेया—

**पगइठिई अणुभागप्पएसमूलुत्तराहि पविभत्ता। देसकरणोवसमणा तीए सामियस्स अट्ठपयं ॥६६॥**

(चू०)—'पगतिठिति अणुभागप्पएसमूलुत्तराहि पविभत्त'त्ति–पगतिदेसोपसमणा ट्ठितिदेसोपसमणा अणुभागदेसोपसमणा पदेसदेसोपसमणा य। 'मूलुत्तराहि पविभत्त'त्ति–पुणो एक्केक्क दुविहा–मूलपगतिदेसोपसमणा उत्तरपगतिदेसोपसमणा य। 'देसकरणोवसमण'त्ति–देसकरणोपसमणा अणेगभेया, किं भणियं होति?

उपशमनाकरणम्

श्रेणेः प्रतिपातक्रमः

देसकरणोपसमणा भण्णति, पगइठितिअणुभागपदेसाणमज्झवसाणविसेसेणं थोवं उवसामिज्जति ण सव्वं तम्हा देसकरणोपसमणा वुच्चति। 'तीए समियस्स अट्ठपय'त्ति–तातो देसकरणोपसामणाए उवसामियस्स पगतिट्ठितिअणुभागप्पदेसस्स 'अट्ठपय'त्ति–अट्ठपयं लक्खणं ॥६६॥

(मलय०)—तदेवमुक्ता सर्वोपशमना। सम्प्रति देशोपशमनामभिधातुकाम आह–'पगइ'त्ति। देशतः 'करणाभ्यां'–यथाप्रवृत्तापूर्वकरणसंज्ञाभ्यां कृत्वा प्रकृत्यादीनामुपशमना देशकरणोपशमना। इदमुक्तं भवति–यथाप्रवृत्तकरणापूर्वकरणाभ्यां यत् प्रकृत्यादिकं देशतः उपशमयति न सर्वात्मना सा देशकरणोपशमना। सा च चतुर्विधा, तद्यथा–प्रकृतिदेशोपशमना, स्थितिदेशोपशमना, अनुभागदेशोपशमना, प्रदेशदेशोपशमना चेति। पुनरप्येकैका द्विधा–मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तया च देशकरणोपशमनाया 'शमितस्य' उपशमं नीतस्य। इदमर्थपदमिदम् तात्पर्यम् ॥ ६६ ॥

(उ०)—तदेवमुक्ता सर्वोपशमना, अथ देशोपशमनामभिधित्सुराह–देशभूताभ्यां करणाभ्यां यथाप्रवृत्तापूर्वकरणसंज्ञिताभ्यामुपशमना देशकरणोपशमना। यद्वा करणाभ्यामुक्तरूपाभ्यामुपशमना करणोपशमना, ततो देशस्य प्रकृत्यादीनामेकदेशस्य करणोपशमना देशकरणोपशमनेति समासः, करणद्वयेन यत्प्रकृत्यादिकं देशत उपशमयति न सर्वात्मना सा देशोपशमनेत्यर्थः। सा च चतुर्विधा, तथाहि–प्रकृतिदेशोपशमना, स्थितिदेशोपशमना, अनुभागदेशोपशमना, प्रदेशदेशोपशमना चेति। पुनरप्येकैका द्विविधा–मूलप्रकृतिविषयोत्तरप्रकृतिविषया च। तया च देशोपशमनया शमितस्योपशमं नीतस्येदमर्थपदं इदं विशेषाकृतम् ॥६६॥

तस्स इमं लक्खणं—

उव्वट्टणओवट्टणसंकमणाइं च नंन्नकरणाइं । पगइतया उवसामिऊ पहू नियट्टिम्मि वट्टंतो ॥६७॥

'उव्वट्टणओवट्टणसंकमणाइं च'त्ति–देसोपसमणाते उवसामियस्स उव्वट्टणओवट्टणाए अन्नं पगतिसंकामणं च अत्थि । 'नन्नकरणाइं'ति–उदीरणादीणि सेसकरणाणि णत्थि । 'पगतितया समईऊ पहू नियट्टिंमि वट्टंतो' त्ति–मूलपगती वा उत्तरपगती वा मूलपगतिट्ठाणं वा उत्तरपगतिट्ठाणं वा तया समइतुत्ति देसोपसमणाते उवसमयितुं पभू सामी 'णियट्टिंमि वट्टंतो'त्ति अपुव्वकरणे वट्टमाणो, णियट्टिग्गहणेण हेट्ठिल्ला सव्वे एगिंदियादी सव्वावत्थासु वट्टमाणा जाव अपुव्वकरणचरिमसमतो ताव सव्वे देसोवसामगा ॥६७॥

देशोप-शमना

(मलय०)—तदेवाह–'उवट्टणउ'त्ति । देशोपशमनया उपशमितस्य कर्मण उद्वर्तनापवर्तनासंक्रमरूपाणि त्रीणि करणानि प्रवर्तन्ते, नान्यानि करणानि उदीरणाप्रभृतीनि । एष देशोपशमनाया विशेषः । तथा मूलप्रकृतिमुत्तरप्रकृतिं वा तया देशोपशमनया उपशमयितुं 'प्रभुः' समर्थो निवृत्तिकरणे–अपूर्वकरणे वर्त्तमानः । इह निवृत्तिग्रहणं पर्यवसानार्थं वेदितव्यम् । तत इदमुक्तं भवति–सर्वेप्येकद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियतिर्यङ्नारकदेवा मनुष्याश्च यथासंभवमपूर्वकरणपर्यवसानाः सर्वकर्मणां देशोपशमनास्वामिनोऽवसेयाः ॥

(उ०)—देशोपशमनयोपशमितस्य कर्मण उद्वर्तनापवर्तनासंक्रमणरूपाणि त्रीणि करणानि प्रवर्तन्ते, नान्यान्युदीरणादीनि, एष देशोपशमनायाः सर्वोपशमनातो विशेषः । तथा तया देशोपशमनया 'पगइ' त्ति–मूलप्रकृतिमुत्तरप्रकृतिं वोपशमयितुं प्रभुः समर्थो निवृत्तिकरणेऽपूर्वकरणगुणस्थानकचरमसमये पर्यवसानलक्षणसम्बन्धेन वर्त्तमानो वेदितव्यः । इदमुक्तं भवति–सर्वेऽप्येकद्वित्रिचतुरि-

१ 'तिन्नि करणाइ' इति प्र०

न्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियतिर्यङ्नारकदेवा मनुष्याश्च यथासंभवमपूर्वकरणपर्यवसाना देशोपशमनास्वामिनोऽवसेयाः । इयं चैतेषां देशोपशमना सर्वकर्मणां द्रष्टव्या, न मोहस्यैव केवलस्य ॥६७॥

जा उवसमे चउद्धा मूलुत्तरणाइसंताओ ॥६८॥

दंसणमोहाणंताणुवन्धिणं सगणियट्टिओ णुप्पिं ।

(चू०)—'दंसणमोहाणंताणुवंधिणं सगणियट्टिओ णुप्पिं'ति। 'दंसणमोह'त्ति दिट्ठितिगं गहियं, पढमं समत्तं वा भिच्छत्तस्स वा मीसस्स वा खानियसम्मत्तं वा उप्पाएमाणो जाव अप्पणो अपुव्वकरणस्स चरिमसमतो ताव सम्मत्तस्स वा देसोवसामणा, अणियट्टिकरणंमि णत्थि। अणंताणुवन्धिसंजोयगस्स वि एवं चेव। 'सगणियट्टिओ णुप्पिं'त्ति—अप्पप्पणो णियट्टिकरणातो उपरि नत्थि। कहं? भण्णइ—चउगतिया वि पढमं सम्मत्तं उप्पादेन्ति अणंताणुवन्धिणो विसंजोएंति तम्हा तेसिं अप्पप्पणो जाव अपुव्वकरणे वट्टमाणो उवसामगत्ति परओ नत्थि। खातियसम्मत्तं असंजयदेसविरयविरया उप्पाएंति, ते वि तस्स अपुव्वकरणे वट्टमाणा उवसामगा परतो नत्थि। विरतो वेयगसम्मदिट्ठि उवसमसेढीं पडिवज्जउकामो उवसमसम्मत्तं उप्पादेति तस्स वा अप्पणो अपुव्वकरणे वट्टमाणस्स दंसोपसामणा अत्थि परतो नत्थि। अवसेसाणं कम्माणं सव्वहि उवसामणा अत्थि, नवरि चरित्तमोहस्स उवसामणाते खवणाते वा अब्भुट्ठियस्स जाव अपुव्वकरणस्स चरिमसमतो ताव उवसामणा, परओ नत्थि। 'जा उवसमे चउद्धा मूलुत्तरणाइ संताओ'त्ति—जातो पगतीतो उवसमे चउद्धत्ति देसोपसमणं पडुच्च चउव्विहातो भवन्ति, मूलुत्तरणादिसंतानोत्ति मूलपगतिउत्तरपगतीसु अणादिसंतकंमातो, कहं ? भण्णइ—जातो मूलुत्तरपगतीसु

अणातिसंततो ता उवसामणं पडुच्च चउव्विहाओ। कहं ति? भण्णइ—मूलपगतिं पडुच्च अट्ठवि जाव अपुव्वकरणस्स चरिमसमतो ताव उवसामेति परतो नत्थि, पुणो उवसमसेढीओ परिवडमाणस्स सादितो, तं ट्ठाणमपत्तपुव्वस्स अणादितो अणादिसंतकम्मत्तादेव, धुवो अभव्वाणं, अधुवो भव्वाणं। इयाणिं उत्तरपगतीणं भन्नति—उव्वल्लिमाणिगतित्थकरआउगवज्जाणं तीसुत्तरपगतिसयस्स अणादिगसंतस्स उवसामणा चउव्विहा। कहं? भण्णइ—मिच्छत्तअणंताणुबन्धीणं अप्पप्पणो अपुव्वकरणस्स चरिमसमते, सेसाणं कम्माणं चरिमसेढिं पडिवन्नस्स जाव अपुव्वकरणस्स चरिमसमतो ताव उवसामणा अत्थि परतो णत्थि, पुणो ततो परिवडमाणस्स सादिया, तं ट्ठाणमपत्तपुव्वस्स अणातिया, धुवसंतकम्मत्तातो। अभव्वाणं धुवो, अधुवो भव्वाणं। सेसाणं अट्ठावीसाते अधुवसंतकम्माणं उवसामणा सादी अधुवा य। सामित्तं जस्स अत्थि सो तस्स कम्मस्स उवसामगो ॥६८॥

उपशमनाकरणम्

(मलय०)—एतदेव भावयति—'दंसण'त्ति—दर्शनमोहनीयानन्तानुबन्धिनां स्वकीयात् अपूर्वकरणात् परतो देशोपशमना न भवति। तत्र दर्शनत्रिकस्य क्षपका अविरता देशविरता विरता वा, उपशमकास्तु विरताः स्वापूर्वकरणान्तसमयं यावद्देशोपशमनां कुर्वन्ति। अनन्तानुबन्धिनां पुनर्विसंयोजने चातुर्गतिका अपि स्वापूर्वकरणान्तिमसमयं यावद्देशोपशमकाः, न परतः। शेषाणां पुनश्चारित्रमोहनीयप्रकृतीनामुपशमनायां क्षपणायां वा यावदपूर्वकरणगुणस्थानकचरमसमयस्तावद्देशोपशमना। शेषाणां सर्वोपशमना न भवति, किन्तु देशोपशमनैव। सापि चापूर्वकरणगुणस्थानकं यावदवगन्तव्या। तथा या मूलप्रकृतय उत्तरप्रकृतयो वाऽनादिसत्ताकास्ता उपशमे देशोपशमनामधिकृत्य चतुर्विधाः, तद्यथा—सादयोऽनादयो ध्रुवा अध्रुवाश्च। तत्र मूलप्रकृतयोऽष्टावपि चतुर्विधाः। तथाहि—अपूर्वकरणगुणस्थानात्

देशोपशमना

परतो गत्वा प्रतिपततां सा देशोपशमना प्रवर्त्तमाना सादिः । तत्स्थानमप्राप्तानां पुनरनादिः । ध्रुवा अभव्यानां । भव्यानां त्वध्रुवा ।
कृता मूलप्रकृतीनां साधनादिप्ररूपणा, सम्प्रत्युत्तरप्रकृतीनां सा क्रियते—तत्र वैक्रियसप्तकाहारकसप्तकमनुष्यद्विकदेवद्विकनरकद्विकसम्यक्त्व-
सम्यग्मिथ्यात्वोच्चगोत्ररूपोद्वलनयोग्यत्रयोविंशतितीर्थकरायुश्चतुष्टयवर्जितं शेषं त्रिंशदुत्तरं प्रकृतिशतं ध्रुवसत्कर्म, तस्य देशोपशमना च-
तुर्विधा, तद्यथा—सादिरनादिर्ध्रुवाऽध्रुवा च । तथाहि—मिथ्यात्वानन्तानुबन्धिनां स्वस्वापूर्वकरणात्परतो देशोपशमना न भवति । शेषक-
र्मणां त्वपूर्वकरणगुणस्थानकात्परतो न भवति । ततः परतः स्थानात् प्रच्यवमानानां प्रवर्तमाना सादिः । तत्स्थानमप्राप्तानां पुनरनादिः ।
ध्रुवाध्रुवे पूर्ववत् । शेषाणां तूद्वलनयोग्यत्रयोविंशत्यादीनामष्टाविंशतिप्रकृतीनामध्रुवसत्कर्मत्वादेव देशोपशमना सादिरध्रुवा च विज्ञेया ॥
(उ०)—एतद्विषयमेव कञ्चिद्विशेषमाह—दर्शनमोहनीयानन्तानुबन्धिनां स्वकनिवृत्तेः स्वकीयस्वकीयापूर्वकरणात्परतो देशोपशमना
न भवति । तत्र दर्शनत्रिकस्य क्षपका अविरतसम्यग्दृष्टयो देशविरताः सर्वविरता वा, उपशमकास्तु मनुष्याः प्रतिपन्नसर्वविरतयस्ताव-
द्देशोपशमनां कुर्वन्ति यावत्स्वापूर्वकरणचरमसमयः । अनन्तानुबन्धिनां विसंयोजने प्रवृत्तास्तु चातुर्गतिका अपि स्वापूर्वकरणान्तिम-
समयं यावद्देशोपशमकाः, न परतः । शेषाणां चारित्रमोहनीयप्रकृतीनामुपशमनायां क्षपणायां वा यावदपूर्वकरणगुणस्थानकचरमसमय-
स्तावद्देशोपशमना । शेषकर्मप्रकृतीनां च सर्वोपशमना न भवत्येव, किं तु देशोपशमनैव, साऽपि चापूर्वकरणगुणस्थानं यावदवगन्त-
व्या, न परतः । अथ साद्यादिप्ररूपणा क्रियते—'जा' इत्यादि, या मूलप्रकृतय उत्तरप्रकृतयो वाऽनादिसत्ताकास्ता उपशमे देशोपशम-
नाधिकारे चतुर्विधाः साधनादिध्रुवाध्रुवभेदात् । तत्र मूलप्रकृतीनामष्टानामपि देशोपशमनाऽपूर्वकरणगुणस्थानकादूर्ध्वं गत्वा पततां
प्रवर्तमाना सादिः, तत्स्थानमप्राप्तानामनादिः, ध्रुवाऽभव्यानां, भव्यानां त्वध्रुवेति । कृता मूलप्रकृतीनां साद्यादिप्ररूपणा । अथोत्तरप्रकृ-

देशोपशमना

तीनां सा क्रियते–तत्र वैक्रियसप्तकाहारकसप्तकमनुष्यद्विकदेवद्विकनरकद्विकसम्यक्त्वमिश्रोच्चैर्गोत्ररूपोद्वलनयोग्यत्रयोविंशतिप्रकृतिजिननामायुश्चतुष्करहितं शेषं त्रिंशदुत्तरं प्रकृतिशतं ध्रुवसत्कर्म। तस्य देशोपशमना साद्यनादिध्रुवाध्रुवभेदेन चतुर्विधा, तथाहि–मिथ्यात्वानन्तानुबन्धिनां स्वस्वापूर्वकरणात्परतो देशोपशमना न भवति, शेषकर्मणां त्वपूर्वकरणगुणस्थानात्परतो न भवति, ततो व्यवच्छेदस्थानात्प्रच्यवमानानां सा प्रवर्तमाना सादिः, तत्स्थानमप्राप्तानामनादिः, ध्रुवाध्रुवे पूर्ववत्। शेषाणां तूद्वलनयोग्याद्यष्टाविंशतिप्रकृतीनामध्रुवसत्कर्मत्वादेव देशोपशमना सादिरध्रुवा च ज्ञेया ॥६८॥

इयाणिं पगतिट्ठाणउवसामणा—

**चउराइजुआ वीसा एक्कवीसा य मोहठाणाणि। संकमणियट्टिपाउग्गाइं सजसाइं णामस्स ॥६९॥**

(चू०)—'चउरादिजुता वीसा एक्कवीसा य मोहट्ठाणाणि'त्ति। चत्तारि–आदि काउं तेहि जुया वीसा ते इमे–चउवीसा पणवीसा छव्वीसा सत्तावीसा अट्ठावीसा एक्कवीसा य एयाणि छ मोहट्ठाणाणि देसोपसामणापाउग्गाणि, सेसाणि न होंति। कहं ? भण्णइ–अणियट्टीकरणे संभवंति त्ति काउं। चउवीसा ताव अट्ठावीससंतकम्मिगस्स अणंताणुबन्धीविसंजोएमाणस्स अणंताणुबन्धीउवसामणाभावातो चउव्वीसं उवसामेति, चउव्वीसं संतकम्मिगस्स वा। अहवा दंसणमोहखवणाए अब्भुट्ठियस्स अणियट्टीकरणं अपत्तस्स चउवीसाए देसोपसमणा भवति। अणियट्टीकरणे वट्टमाणस्स दंसणतिगस्स उवसामणाभावातो एक्कवीसा होति। एक्कवीसं संतकंमिगस्स वा एक्कवीसा उवसमति। पंचवीसाए उवसामणा मिच्छद्दिट्ठिस्स छव्वीससंतकम्मिगस्स

उवसामणाभावातो पणुवीसाए उवसामणा।
संमत्तं उप्पाएमाणस्स अणियट्टीकरणे वट्टमाणस्स मिच्छत्तस्स उवसामणाभावातो पणुवीसाए उवसामणा। सम्मामिच्छदिट्ठिस्स वा सम्मत्ते छव्वीसाए उवसामणा मिच्छद्दिट्ठिस्स, सत्तावीसा तस्सेव संमत्ते उव्वलिते, सम्मामिच्छद्दिट्ठी य सव्वे उवसामेंति। उव्वलिए सत्तावीसा। अट्ठावीसाते उवसामणा मिच्छदिट्ठिसासायणसंमामिच्छद्दिट्ठी य सव्वे उवसामेंति। एक्कवीसा खातीयसंमद्दिट्ठिस्स अपुव्वकरणे वट्टमाणस्स, अहवा चउवीससंतकंमिगो सेढि पडिवज्जति, तस्स पुण तिन्नि उवसामेंतस्स णियट्टिकरणे वट्टमाणस्स भवति। खातियं संमत्तं उप्पातितस्स पुव्वुत्तं। इयाणिं नामस्स पगतिट्ठाणउवसामणा भन्नति–'संकमनियट्टिपाउग्गाई सजसाइं नामस्स'त्ति। पगतिट्ठाणसंकमो जाणि-ट्ठाणाणि जसकित्तीए सह ताणि ट्ठाणाणि णामस्स पगतिट्ठाणउवसामणे णियट्टिं पाउग्गाइं भवंति। ताणि य इमाणि १०३–१०२–९६–९५–९३–८४–८२। एए अपसत्थोपसमणा पातोग्गा। आतिल्ला चत्तारि ट्ठाणा जाव अपुव्वकरणस्स चरिमसमतो ताव उवसमिज्जति परतो नत्थि। तेणउति चउरासीती बासीतो एते तिन्नि ट्ठाणा संसारत्थाणं जीवाणं एगिंदियादीणं सेढिं अपडिवज्जमाणाण य संभवंति। सेसा ट्ठाणा अणियट्टिकरणातो आर-ब्भ परतो लब्भंति, णियट्टिपाउग्गा ण भवंति। नाणावरणदंसणवेयणिज्जंतराइयाणं एक्केक्कं पगतिट्ठाणं। आउ-गगोयाणं दोन्नि दोन्नि ट्ठाणा, एकाए दोण्हं वा पगदीणं समुदातो उवसामणाजोग्गो ॥६९॥

(मलय०)—सम्प्रति देशोपशमनामधिकृत्य प्रकृतिस्थानप्ररूपणामाह–'चउरादिजुय'त्ति। मोहनीयस्य देशोपशमनामधिकृत्य पट् प्रकृतिस्थानानि। तद्यथा–'चतुरादियुता विंशतिरेकविंशतिश्च', चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः,

एकविंशतिश्चेत्यर्थः । शेपाणि पुनरनिवृत्तिवादरे प्राप्यन्ते इति कृत्वा न संभवन्ति । तत्राष्टाविंशतिस्थानं मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टिवेदकसम्यग्दृष्टीनां प्राप्यते । सप्तविंशतिस्थानमुद्वलितसम्यक्त्वस्य मिथ्यादृष्टेः सम्यग्मिथ्यादृष्टेर्वा । पड्विंशतिस्थानमुद्वलितसम्यक्त्वसम्यग्मिथ्यात्वस्यानादिमिथ्यादृष्टेर्वा । पञ्चविंशतिस्थानं पड्विंशतिसत्कर्मणो मिथ्यादृष्टेः सम्यक्त्वमुत्पादयतोऽपूर्वकरणात्परतो वेदितव्यम्, तस्य मिथ्यात्वप्रदेशोपशमनाया अभावात् । तथाऽनन्तानुबन्धिनामुद्वलनेऽपूर्वकरणात्परतो वर्तमानस्य चतुर्विंशतिस्थानम्, चतुर्विंशतिसत्कर्मणो वा चतुर्विंशतिस्थानम् । क्षपितसप्तकस्य एकविंशतिस्थानम् । सम्प्रति नामकर्मणः प्रकृतिस्थानान्याह– 'संकमे'त्यादि । प्रकृतिस्थानसंक्रमे नाम्नो यानि यशःकीर्त्या सह स्थानान्युक्तानि तान्येव 'निवृत्तिप्रायोग्यानि'–अपूर्वकरणप्रायोग्यानि भवन्ति,  देशोपशमनायोग्यानि भवन्तीत्यर्थः । तानि चेमानि, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, पणवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीति, द्व्यशीतिश्चेति । तत्रादिमानि चत्वारि यावदपूर्वकरणगुणस्थानकचरमसमयस्तावद्वेदितव्यानि, न परतः । शेपाणि च त्रीणि त्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि एकेन्द्रियादीनां भवन्ति, श्रेणिं प्रतिपद्यमानानां तु न संभवति । शेपाणि तु स्थानानि अपूर्वकरणगुणस्थानकात्परतो लभ्यन्ते नार्वागिति देशोपशमनाऽयोग्यानि । ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामेकैकं प्रकृतिस्थानं देशोपशमनायोग्यम् । तत्र ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकम्, दर्शनावरणस्य नवप्रकृत्यात्मकम्, वेदनीयस्य द्विप्रकृत्यात्मकम्–आयुर्गोत्रयोर्द्वे द्वे स्थाने एका द्वे च प्रकृती ॥ ६९ ॥

(उ०)––अथ देशोपशमनामधिकृत्य प्रकृतिस्थानप्ररूपणामाह–मोहनीयस्य देशोपशमनायां पट् प्रकृतिस्थानानि भवन्ति । तद्यथा–एकविंशतिः, तथा चतुरादियुता विंशतिरिति चतुर्विंशतिः, पञ्चविंशतिः, पड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिश्चेत्यर्थः । शेपाणि

त्वनिवृत्तिबादरसंभवीनीतीह न भवन्ति । तत्राष्टाविंशतिरूपं देशोपशमनास्थानमाद्यगुणस्थानत्रयस्थेषु वेदकसम्यग्दृष्टिषु च प्राप्यते । सप्तविंशतिस्थानमुद्वलितसम्यक्त्वस्य मिथ्यादृष्टेः सम्यग्मिथ्यादृष्टेर्वा । षड्विंशतिस्थानमुद्वलितसम्यक्त्वमिश्रपुञ्जद्वयस्यानादिमिथ्यादृष्टेर्वा । पञ्चविंशतिस्थानं षड्विंशतिसत्कर्मणो मिथ्यादृष्टेः सम्यक्त्वमुत्पादयतोऽपूर्वकरणादूर्ध्वं ज्ञातव्यं, तदा मिथ्यात्वदेशोपशमनाया निवृत्तेः । तथाऽनन्तानुबन्धिनामुद्वलनेऽपूर्वकरणादूर्ध्वं वर्तमानस्य चतुर्विंशतिस्थानं, चतुर्विंशतिसत्कर्मणो वा चतुर्विंशतिस्थानम् । क्षपितसप्तकस्यैकविंशतिस्थानम् । उक्तानि मोहनीयप्रकृतिस्थानानि । अथ नामकर्मप्रकृतिस्थानान्याह—'संकम' इत्यादि । नाम्नः प्रकृतिस्थानसंक्रमे यानि सयशांसि यशःकीर्तिसहितानि स्थानान्युक्तानि तान्येव निवृत्तिप्रायोग्यान्यपूर्वकरणप्रायोग्यानि—देशोपशमनायोग्यानि भवन्तीत्यर्थः । तानि चेमानि—त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिश्च । तत्रादिमानि चत्वारि स्थानानि यावदपूर्वकरणगुणस्थानकचरमसमयस्तावद्वेदितव्यानि, न परतः । शेषाणि च त्रीणि—त्रिनवतिचतुरशीतिद्व्यशीतिरूपाण्येकेन्द्रियादीनां भवन्ति, न श्रेणिप्रतिपद्यमानानाम् । अन्यानि तु स्थानान्यपूर्वकरणगुणस्थानात्परतो लभ्यन्ते, नार्वागिति न देशोपशमनायोग्यानि । ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामेकैकं प्रकृतिस्थानं देशोपशमनायोग्यम् । तत्र ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकं, दर्शनावरणस्य नवप्रकृत्यात्मकं, वेदनीयस्य द्विप्रकृत्यात्मकं, गोत्रस्य देशोपशमनायोग्ये द्वे प्रकृतिस्थाने, तथाहि—द्वे एका चेति, तत्रानुद्वलितोच्चैर्गोत्रस्य द्वे, उद्वलितोच्चैर्गोत्रस्य चैका । आयुषोऽपि द्वे प्रकृतिस्थाने, तद्यथा—द्वे प्रकृती एका चेति । तत्राबद्धपरभवायुष्कस्यैका, बद्धपरभवायुषस्तु द्वे इति ॥६०॥

इयाणि ठिइउवसामणा भन्नइ—

ठिइसंकमो व्व ठिइउवसमणा नवरिं जहन्नया कज्जा । अब्भव्वसिद्धि जहन्ना उव्वलगणियट्टिगे वियरा ॥

(चू०)—'ठितिसंकमो व्व ट्ठिइउवसमण'त्ति । मूलपगतिउत्तरपगतिट्ठितीणं उक्कोसाणं जो संकमे सामी भणिओ सो चेव उक्कोसट्ठितिउवसामणाते सामी भाणियव्वो । 'णवरिं जहन्निया कज्जा अब्भवसिद्धि जहन्न' त्ति–जहन्नगठितिउवसामणासामी नवरिं अभवसिद्धियपाउग्गाजहन्नगट्ठितीते वट्टमाणो कायव्वो। किं भणितं भवति ? अभवसिद्धियस्स खुड्डुलिया ट्ठिति एगिंदियस्स भवति । तत्थ सव्वेसिं कम्माणं जहन्निया ट्ठिति-उवसामणा कायव्वा । 'उव्वलगनियट्टिगे वियरा'इति–जातो उव्वलमाणीतो तासिं जो उव्वलगो अंतिमे ट्ठिति-खंडगे पलितोवमस्स असंखेज्जतिभागे वट्टमाणो जहन्नियं ट्ठितिं उवसामणं करेति । एगिंदिओ अणेगिंदिओ वा आहारसत्तगसंमत्तसम्मामिच्छत्ताणं उव्वलगा। सेसाणं एगिंदिओ चेव। जातो अभवसिद्धियजहन्नट्ठिति-पाउग्गा ण भवंति तासिं 'नियट्टिके व'त्ति–अपुव्वकरणस्स अंते वट्टमाणो जहन्नट्ठितिउवसामगो । किं तं कम्मं ? भण्णति–तित्थकरणामं, 'इयरा' इति पगती संबज्झति, जासिं अभव्वसिद्धिपाउग्गो जहन्नो न भवति तासिं उव्वलगे य णियट्टिम्मि य जहन्निया ट्ठितिउवसामणा भवतित्ति भणियं होति ॥ ७० ॥



(मलय०)—उक्ता प्रकृतिदेशोपशमना । सम्प्रति स्थितिदेशोपशमनामाह–'ठिइसंकमव्व'त्ति । स्थितिसंक्रमवत् स्थितिदेशोपशमना द्रष्टव्या । नवरमिह 'जघन्या'–जघन्यस्थितिदेशोपशमनायोग्या कार्या, अभवसिद्धिकप्रायोग्या जघन्या स्थितिः । एतदुक्तं भवति–स्थितिदेशोपशमना द्विविधा–मूलप्रकृतीनामुत्तरप्रकृतीनां च । एकैकापि द्विधा–जघन्योत्कृष्टा च । तत्र मूलप्रकृतीनामुत्तरप्रकृतीनां वा

उत्कृष्टस्थितिदेशोपशमनास्वामी यः प्रागुत्कृष्टस्थितिसंक्रमस्वामी प्रतिपादितः स एव वेदितव्यः । जघन्यस्थितिदेशोपशमनास्वाम्यपि जघन्यस्थितिसंक्रमस्वाम्येव प्रतिपत्तव्यः, केवलं जघन्यस्थितिदेशोपशमनास्वामी अभवसिद्धिकप्रायोग्यजघन्यस्थितौ वर्त्तमान एकेन्द्रियो द्रष्टव्यः, तस्यैव प्रायः सर्वकर्मणामतिजघन्यायाः स्थितेः प्राप्यमाणत्वात् । याश्चेतराः प्रकृतयोऽभवसिद्धिकप्रायोग्यजघन्यस्थितयो न भवन्ति तासामुद्वलकेऽपूर्वकरणे वा जघन्यस्थितिदेशोपशमना वेदितव्या। तत्रोद्वलके उद्वलनप्रायोग्यानां प्रकृतीनामन्तिमे स्थितिखण्डे पल्योपमासंख्येयभागमात्रे वर्तमानः, तत्राप्याहारकसप्तकसम्यक्त्वसम्यग्मिथ्यात्वानामेकेन्द्रियोऽनेकेन्द्रियो वा, शेषप्रकृतीना तूद्वलनयोग्यानां वैक्रियसप्तकदेवद्विकनरकद्विकमनुष्यद्विकोच्चैर्गोत्ररूपाणामेकेन्द्रिय एव, अन्यासां त्वपूर्वकरणचरमसमये वर्तमानो जघन्यां देशोपशमनां करोति ॥७०॥

(उ०)—उक्ता प्रकृतिदेशोपशमना, अथ स्थितिदेशोपशमनामाह—स्थितिसंक्रमवत् स्थितिदेशोपशमना द्रष्टव्या । तत्रोत्कृष्टस्थितिसंक्रमप्ररूपणात उत्कृष्टस्थितिदेशोपशमनाप्ररूपणाया न कोऽपि विशेषः । जघन्यस्थितिदेशोपशमनाऽपि जघन्यस्थितितुल्यैव प्रायो, नवरमिह जघन्यस्थितिदेशोपशमनास्वामित्वप्ररूपणाऽभवसिद्धिकप्रायोग्यजघन्यस्थितौ वर्तमानस्यैकेन्द्रियस्य कार्या, तस्यैव प्रायः सर्वकर्मणामतिजघन्यायाः स्थितेः प्राप्यमाणत्वात् । याश्चेतराः प्रकृतयोऽभवसिद्धिकप्रायोग्यजघन्यस्थितयो न भवन्ति तासामुद्वलकेऽपूर्वकरणे वा जघन्यस्थितिदेशोपशमना द्रष्टव्या । तत्रोद्वलके उद्वलनप्रायोग्यप्रकृतीनामन्तिमे स्थितिखण्डे पल्योपमासंख्येयभागप्रमाणे उद्वलनाय व्यापृतः, तत्राप्याहारकसप्तकसम्यक्त्वमिश्राणामेकेन्द्रियोऽनेकेन्द्रियो वा। शेषप्रकृतीनां तूद्वलनयोग्यानां वैक्रियसप्तकदेवद्विकनरकद्विकमनुजद्विकोच्चैर्गोत्ररूपाणामेकेन्द्रिय एव । अन्यासां त्वपूर्वकरणान्त्यसमये जघन्यां देशोपशमनां करोति ॥७०॥

**अणुभागसंकमसमा अणुभागुवसामणा णियट्टिम्मि । संकमपएसतुल्ला पएसउवसामणा चेत्थ ॥७१॥**

(चू०)—'अणुभागसंकमसमा अणुभागुवसामण'त्ति—उक्कोसअणुभागसंकमेण तुल्ला उक्कोसअणुभागुवसामणा। णवरि 'नियट्टिम्मि'त्ति—अपुव्वकरणंमि वट्टमाणो भाणियव्वो। असुभकम्माणं मिच्छादिट्ठी चेव उक्कोसअणुभागउवसामगो। सुभाणं पातेण संमदिट्ठी करेति। जासिं अपुव्वकरणस्स उवरि उक्कोसो अणुभागसंकमो भणितो सादावेदजसकित्तिउच्चागोयाणं तेसिंपि अपुव्वकरणंमि चेव भाणियव्वो, उवरिं न संभवतित्ति काउं। जहन्नाणुभागसंकमतुल्ला जहन्नाणुभागउवसामणा, णवरि अभवसिद्धियजहन्नगंमि कायव्वं। पंचण्ह नाणावरणाणं चउण्हं दरिसणावरणाणं चउण्हं संजलणाणं नवण्हं नोकसायाणं पंचण्हं अंतराइयाणमिति एतेसिं सत्तावीसाए कम्माणं अप्पप्पणो अंते जहन्नाणुभागसंकमो भणितो, त्थं जहन्नाणुभागउवसामणं पडुच एगिंदियंमि चेव भवति। सेसाणं कम्माणं जहन्नाणुभागसंकमो एगिंदियंमि तंमि चेव उवसामणा वि। 'संकमपएसतुल्ला पएसुवसामणा चेत्थं'ति—उक्कोसपदेसउवसामणा णवरि अपुव्वकरणस्स हेट्ठउ चेव कायव्वं, जेसिं अपुव्वकरणस्स उवरिं लब्भति तेसिं अपुव्वकरणस्स अंते भाणियव्वं। एवं जहण्णपदेसुवसामणा वि भाणियव्वा। देसोवसामणा भणिता। उवसामणा सम्मत्ता॥ ७१ ॥



(मलय०)—'अणुभाग' त्ति—अनुभागसंक्रमसमा अनुभागदेशोपशमना वक्तव्या। नवरं 'निवृत्तौ'—अपूर्वकरणचरमसमयं यावत्। इयमत्र भावना—य एवोत्कृष्टानुभागसंक्रमस्वामी प्राक् प्रतिपादितः स एवोत्कृष्टानुभागदेशोपशमनाया अपि स्वामी। तत्राशुभप्रकृतीनां

मिथ्यादृष्टिः, शुभप्रकृतीनां तु सम्यग्दृष्टिः। नवरं सातवेदनीययशः कीर्त्युच्चैर्गोत्राणामुत्कृष्टानुभागसंक्रमस्वामीनोऽपूर्वकरणस्थानकात्परतोऽपि भवन्ति। उत्कृष्टानुभागदेशोपशमनायाः पुनरुत्कर्षतोऽप्यपूर्वकरणगुणस्थानकपर्यवसाना एव वेदितव्याः। जघन्यानुभागदेशोपशमना तीर्थकरवर्जानां सर्वासामपि प्रकृतीनामेकेन्द्रिये अभवसिद्धिकप्रायोग्यजघन्यस्थितौ वर्तमाने द्रष्टव्या। तीर्थकरनाम्नस्तु जघन्यानुभागसंक्रमवत्। प्रदेशदेशोपशमना चात्र प्रदेशसंक्रमतुल्या वेदितव्या। एतदुक्तं भवति–उत्कृष्टप्रदेशदेशोपशमना उत्कृष्टप्रदेशसंक्रमतुल्या। नवर येषां कर्मणामपूर्वकरणात्परतोऽपि उत्कृष्टः प्रदेशसंक्रमः प्राप्यते, तेषामप्यपूर्वकरणगुणस्थानकचरमसमयमेव यावत् उत्कृष्टप्रदेशदेशोपशमना वाच्या। जघन्या पुनः प्रदेशदेशोपशमना जघन्यप्रदेशसंक्रमतुल्यैवेति ॥७१॥

(उ०)—अनुभागसंक्रमसमाऽनुभागदेशोपशमना वाच्या, सा च कियत्पर्यन्तमित्याह–निवृत्तावपूर्वकरणचरमसमयं यावदित्यर्थः। इदमुक्तं भवति–य एवोत्कृष्टानुभागसंक्रमस्वामी प्रागुक्तः स एवोत्कृष्टानुभागदेशोपशमनाया अपि स्वामी। तत्राशुभप्रकृतीनां मिथ्यादृष्टिः, शुभप्रकृतीनां तु सम्यग्दृष्टिः, केवलं सातवेदनीययशःकीर्त्युच्चैर्गोत्राणामुत्कृष्टानुभागसंक्रमस्वामिनोऽपूर्वकरणगुणस्थानकात्परतोऽपि भवन्ति। उत्कृष्टानुभागदेशोपशमनायास्तूत्कर्षतोऽप्यपूर्वकरणगुणस्थानकान्ता एव ज्ञेयाः। जघन्यानुभागदेशोपशमना च जिननामवर्जिताना सर्वासामपि प्रकृतीनामेकेन्द्रियेऽभवसिद्धिकप्रायोग्यजघन्यस्थितौ वर्तमाने द्रष्टव्या। जिननाम्नस्तु य एव जघन्यानुभागसंक्रमस्वामी स एव जघन्यानुभागदेशोपशमनास्वामी द्रष्टव्यः। प्रदेशदेशोपशमना चात्र प्रदेशसंक्रमतुल्या ज्ञातव्या। अयमिह परमार्थः–उत्कृष्टप्रदेशदेशोपशमनोत्कृष्टप्रदेशसंक्रमतुल्या। नवर येषां कर्मणामपूर्वकरणात्परतोऽप्युत्कृष्टः प्रदेशसंक्रमः प्राप्यते तेषामप्यपूर्वकरणगुणस्थानान्त्यसमयमेव यावदुत्कृष्टप्रदेशदेशोपशमना वाच्या। जघन्या तु प्रदेशदेशोपशमना जघन्यप्रदेशसंक्रमतुल्यैवेति ॥७१॥

## निधत्तिनिकाचनाकरणे–

इयाणिं णिहत्तणिकायणा करणाइं भन्नंति—

**देसोवसमणतुल्ला होइ णिहत्ती णिकायणा णवरं। संकमणं पि णिहत्तीइ णत्थि सेसाणि वियरस्स ॥७२॥**

(चू०)—'देसोवसमणतुल्ला होइ निहत्ती नियायण'त्ति–देसोपसमणाए जे भेदा जे य सामिणो भणिया ते चेव भेया ते चेव सामिणो णिहत्तीकरणनिकायणाणं अणूणमतिरित्ता भाणियव्वा। णवरि अट्ठपदं णिहत्तीकरणनिकायणाकरणाणं भण्णति–'संकमणं पि णिहत्तीइ नत्थि'त्ति। परपगतिसंकमणं पि णिहत्तीकरणस्स णत्थि उदीरणाइणो वि णत्थि। 'सेसाण'त्ति–उव्वट्टणाइंपि नत्थि 'वियरस्स'त्ति–णिकाइयस्स णत्थि। किं भणियं भवति? भण्णइ–उव्वट्टओव्वट्टणसंकमणउदीरणातिं वि णिकायणाए णत्थित्ति भणियं भवति ॥ ७२ ॥

(मलय०)—तदेवमुक्तमुपशमनाकरणम्, सम्प्रति निधत्तिनिकाचनाकरणे प्रतिपिपादयिषुराह–'देसोवसमण'त्ति। निधत्तिर्निकाचना च देशोपशमनातुल्या। इदमुक्तं भवति–ये देशोपशमनाया भेदा ये च स्वामिनस्तेऽन्यूनातिरिक्ता निधत्तिनिकाचनयोरपि वेदितव्याः। नवरं अर्थपदं निधत्तिनिकाचनयोः इदं–संक्रमणमपि–परप्रकृतिसंक्रमणमपि, अपिशब्दादुदीरणादीन्यपि निधत्तौ सत्यां न भवन्ति, उद्वर्तनापवर्तने पुनर्भवत एव, 'इतरस्यां'–निकाचनायां 'शेषे अपि'–उद्वर्तनापवर्तने अपि न भवतः। सकलकरणायोग्यं निकाचितमित्यर्थः ॥७२॥

(उ०)—तदेवमभिहितमुपशमनाकरणम्। अथ निधत्तिनिकाचनाकरणे अतिदेशेनाभिधित्सुराह–निधत्तिर्निकाचना च देशोपशमना-

अज्झवसाणाण परिमाणम्

तुल्या, ये देशोपशमनाया भेदा ये च स्वामिनस्तेऽन्यूनातिरिक्ता निधत्तिनिकाचनयोरपि ज्ञेया इत्यर्थः । नवरं निधत्तिनिकाचनयोरि-
दमर्थपदं–संक्रमणं अपिशब्दादुदीरणादीन्यपि निधत्तिविषये कर्मणि न भवन्ति, उद्वर्तनापवर्तने तु भवत एव । इतरस्यां निकाचनायां
शेषे अपि उद्वर्तनापवर्तने अपि न भवतः, सकलकरणायोग्यं निकाचितमित्यर्थः ।।७२।।

जत्थ गुणसेढी अत्थि तत्थ अप्पसत्थओवसमणा णिहत्ती णिकायणा अहप्पवत्तसंकमो य अत्थि, तस्स अप्पाबहुगं–

**गुणसेढिपएसग्गं थोवं पत्तेगसो असंखगुणं । उवसमणाइसु तीसु वि संकमणेहापवत्ते य ।।७३।।**

(चू०)—'गुणसेढिपएसग्गं थोवं'–जस्स वा तस्स कम्मस्स गुणसेढीकतं दलियं थोवं, 'पत्तेगसो'त्ति–पत्तेयं२ असं-
खेज्जगुणं, 'उवसामणादिसु तीसु वि संकमणे अहापवत्तय'त्ति–देसोपसामणाते उवसंतपदेसग्गं ततो असंखेज्ज-
गुणं, ततो निहत्तं असंखेज्जगुणं, निकातियं असंखेज्जगुणं, अहापवत्तसंकमेण संकंतं असंखेज्जगुणं णिहत्तिणिका-
यणातो भणियातो ।।७३।।

(मलय०)—इह यत्र गुणश्रेणिस्तत्र प्रायो देशोपशमनानिधत्तिनिकाचनायथाप्रवृत्तसंक्रमा अपि संभवन्ति, ततस्तत्राल्पबहुत्वमाह–
'गुणसेढि' त्ति–गुणश्रेणीप्रदेशाग्रं स्तोकम् । ततः 'प्रत्येकशः' प्रत्येकं प्रत्येकं उपशमनादिषु त्रिषु यथाप्रवृत्ते च संक्रमणेऽसंख्येयगुणं
वक्तव्यम् । इयमत्र भावना–यस्य तस्य वा कर्मणो गुणश्रेणीप्रदेशाग्रं सर्वस्तोकम्, ततो देशोपशमनायामसंख्येयगुणम्, ततो निध-
त्तायामसंख्येयगुणम्, ततोऽपि निकाचितमसंख्येयगुणम्, ततोऽपि यथाप्रवृत्तसंक्रमेण संक्रान्तमसंख्येयगुणम् ।।७३।।

(उ०)—इह यत्र गुणश्रेणिस्तत्र प्रायो देशोपशमनानिधत्तिनिकाचनायथाप्रवृत्तसंक्रमा अपि सम्भवन्त्यत एतत्सकलाश्रितमल्पबहुत्वमाह—गुणश्रेणिप्रदेशाग्रं स्तोकं, ततः प्रत्येकश इति प्रत्येकं प्रत्येकमुपशमादिषु त्रिषु यथाप्रवृत्ते च संक्रमणेऽसंख्येयगुणं वक्तव्यम् । इयमत्र क्रमव्यक्तिः—यस्य तस्य वा कर्मणो गुणश्रेणिप्रदेशाग्रं सर्वस्तोकं, ततो देशोपशमनायां प्रदेशाग्रमसंख्येयगुणं, ततो निधत्तमसंख्येयगुणं, ततोऽपि निकाचितमसंख्येयगुणं, ततोऽपि यथाप्रवृत्तसंक्रमेण संक्रान्तमसंख्येयगुणम् ॥७३॥

इयाणिं अट्ठण्हं करणाणं जे अज्झवसाणा तेसिं परिमाणनिरूवणत्थं भण्णइ—

**थोवा कसायउदया ठिइबन्धोदीरणा य संकमणे । उवसमणाइसु अज्झवसाया कमसो असंखगुणा ॥७४॥**

(चू०)—'थोवा कसायउदया ठितिबंध'त्ति—ठितिबंधे अज्झवसाणट्ठाणाणि सव्वथोवाणि, ठितिबंधज्झवसाणट्ठाणातो उदीरणाअज्झवसाणट्ठाणा असंखेज्जगुणा, 'संकमणे'त्ति—संकमग्गहणेण उव्वलणा (उव्वट्टओव्वट्टणा) वि गहिया, एतेसिं तिण्हं अज्झवसाणा असंखेज्जगुणा, 'उवसामणाइसु'त्ति—उवसामणाणिद्धत्तिणिकायणासु कमसो असंखेज्जगुणोत्ति—संकामणातो उवसामणा अज्झवसाणा असंखेज्जगुणा, ततो णिद्धत्ति असंखेज्जगुणं, निकायणा असंखेज्जगुणा । एवं अट्ठवि करणाणि समत्ताणि ॥७४॥

॥ इति श्रीचिरन्तनाचार्यविरचितायां कर्मप्रकृतिचूर्णौ करणाष्टकम् ॥

(मलय०)—सम्प्रत्यष्टानामपि करणानां येऽध्यवसायास्तेषां परिमाणनिरूपणार्थमाह—'थोव'त्ति । स्थितिबन्धे, उपलक्षणमेतत्, अनुभागबन्धे वा ये कषायोदीरणास्ते सर्वस्तोकाः । प्रकृतिप्रदेशबन्धौ च योगाद्भवत इति ताविह न गृह्येते, अनुभागबन्धश्चोपलक्षणव्या-

न्यानाद्गृहीतः । ततश्च स्थितिबन्धे कषायोदयाः स्तोका इति । किमुक्तं भवति ? बन्धनकरणाध्यवसायाः सर्वस्तोकाः, तेभ्य उदीरणाध्यवसाया असंख्येयगुणाः । ततोऽपि संक्रमाध्यवसाया असंख्येयगुणाः । संक्रमग्रहणेन चात्रोद्वर्तनापवर्तने अपि गृहीते द्रष्टव्ये, संक्रमभेदत्वात्तयोः । तत उपशमनाध्यवसाया असंख्येयगुणाः । ततोऽपि निधत्त्यध्यवसाया असंख्येयगुणाः । ततोऽपि निकाचनाध्यवसाया असंख्येयगुणाः ॥७४॥

॥ इति श्रीमलयगिरिविरचितायां कर्मप्रकृतिटीकायां करणाष्टकम् ॥

(उ०)—अधुनाऽष्टानामपि करणानां येऽध्यवसायास्तेषां प्रतिनियतपरिमाणप्ररूपणार्थमाह—स्थितिबन्धे उपलक्षणादनुभागबन्धे च ये कषायोदया बन्धनकरणाध्यवसायास्ते सर्वस्तोकाः । प्रकृतिप्रदेशबन्धयोश्च योगप्रत्ययत्वादिहाग्रहणं, तेभ्य उदीरणाध्यवसाया असंख्येयगुणाः । ततोऽपि संक्रमाध्यवसायाः—संक्रमोद्वर्तनापवर्तनाकरणाध्यवसायाः समुदिता असंख्येयगुणाः । ततोऽप्युपशमनाध्यवसाया असंख्येयगुणाः । ततोऽपि निधत्त्यध्यवसाया असंख्येयगुणाः । ततोऽपि निकाचनाध्यवसाया असंख्येयगुणाः ॥७४॥

॥ इति श्रीन्यायाचार्योपाध्याययशोविजयगणिविरचितायां कर्मप्रकृतिटीकायां करणाष्टकम् ॥

## ॥ दर्शनमोहक्षपणानुक्रमः ॥

| प्रस्थापकः | निष्ठापका |
|---|---|
| सर्वङ्कालसम्भवी संज्ञिपर्याप्तनरो जघन्यत ८ वार्षिक उत्कृष्टत पूर्वकोट्यायु. प्रथमसहननी । | देवा नारका युगलिकातिर्यञ्चो युगलिकनराश्चैवं चातुर्गतिका |

—० स्थितिघातसहस्राणि सूचनार्थं रेखा बिन्दवस्तु तदावारकर्मोदयसूचका इति सङ्केतार्थं ।

### क्रियाक्रमः

| | | |
|---|---|---|
| यथाप्रवृत्तम् (अन्तर्मु०) | ० ० ० ० ० ० | अत्र प्रथमसमयादन्यस्थितिबन्ध । |
| अपूर्वकरणम् (अन्तर्मु०) | ० ० ० ० ० ० | अत्रापि प्रथमसमयादन्यस्थितिबन्ध । |
| अपूर्वकरणम् अन्तर्मु० | ० ० ० ० ० ० | अत्र प्रथमसमयादेव स्थितिघात —रसघात —गुणश्रेणि —उद्वलनानुविद्धगुणसंक्रम —अन्यस्थितिबन्धश्च युगपत् प्रवर्तन्ते । अत्र चरमसमये प्रथमसमयापेक्षया सङ्ख्येयगुणहीनसत्ता बन्धश्चजायतः । |
| अ- स्थितिघातसहस्राणि— | —० —० —० —० —० —० —० —० —० —० —० —० —० | अत्र प्रथमसमयतः पूर्ववत् पञ्चापि पदार्थां युगपत् प्रवर्तन्ते । अत्र दर्शनत्रिकस्य स्थितिसत्ता असंज्ञिपञ्चेन्द्रियतुल्या । अत्र चतुरिन्द्रियतुल्या । अत्र त्रीन्द्रियतुल्या । |

क्षायिकसम्यक्त्वप्राप्तिः

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ०।०।०। | ०।०।०। | ०।०।०। | ०।०।०। | ०।०।०। | ०।०।०। | ०।०।०। | ०।०।०।०।०।०। | ०।०।०।०।०।०।०।०। | ०।०।०।०।०।०।०।०।०। |
| अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० (उपान्त्यं) | गुणश्रेणिविभाग, १ सख्येयभागो गुणश्रेण्या घातितः | गुणश्रेण्युपरितनविभागः, सख्येया भागा गुणश्रेण्या प्रक्षेपेण घातिता |
| | घात्यमानान्यान्तर्मुहूर्त्तिकानि सहस्राणि स्थितिखण्डानि क्रमेणासख्येयगुणानि | | | | | | | | |
| | क | | | र | | | | ण | म् |

अत्र क्षीण नोक० ६क। पु० स्य वन्धोदयोदीरणाविच्छेदः, समयोनावलिकाद्विकबद्ध च मुक्त्वा शेष सर्वं क्षीण, स-४ कस्योपरि स्थितौ अपूर्वस्पर्धककरणारम्भः। अस्यामद्धाया वर्त्तमान समयोनावलिकाद्विकेन कालेन पुंवेद क्षपयति।

अत्र स० ४कस्योपरिस्थितौ अपू०स्प० करण समाप्तं, अनन्तरतस्तत्रैव किट्टीकरणप्रारम्भ। (ताश्च कल्पनया १२)

अत्र जाता १२ किट्टयः। अत क्रोधस्य प्रथमकिट्टिवेदन, माने गुणसंक्रमण च।

अत्र द्वितीयकिट्टेरपि वेदन, माने गु० स० च।

अत्र प्रथमकिट्टेश्चरमावलिका द्वि०किट्टयन्तर्गतत्वेन वेदिता।

अत ३यकिट्टेरपि वेदन, माने गु० स० च।

अत्र २ यकिट्टेश्चरमावलिका तृ० किट्टयन्तर्गतत्वेन वेदिता।

अत्र क्रोधबन्धोदयोदीरणाविच्छेदः। सत्ता च शेषमात्रा एव तस्याश्च गु० स०। अनन्तरतः मानस्य प्रथमकिट्टिवेदन, मायाया गु० स० च।

अत्र क्रोधतृतीयकिट्टेश्चरमावलिका स्तिबुकेन गता।

अत्र क्रोधशेषस्य गुणसंक्रम समाप्त। अनन्तर सर्वसंक्रम। क्षीण० नं० क्रोध।

अत्र मानस्य २यकि० वे०, गु० स० च।

अत्र मानस्य प्रथमकिट्टेश्चरमावलिका द्वि० किट्ट्यन्तर्गतत्वेन वेदिता।

अत. मानस्य ३ यकि० वे०, गु० स० च।

अत्र द्वि० किट्टिचरमावलिका तृ किट्ट्यन्तर्गतत्वेन वेदिता।

अत्र मानबन्धोदयोदीरणाविच्छेद.। सत्ता च शेषमात्रा। तस्याश्च गु० स०।
अनन्तरतो मायाया प्र० कि० वेदन, लोभे गु० स० च।

अत्र मानतृतीयकिट्टिचरमावलिका स्तिबुकेन गता।
अत्र मानशेषस्य गु० स० समाप्ति। अनन्तरं सर्वसङ्क्रमेण क्षीणो मान.।

अतः मायाद्वि० कि० वे०। गु० स० च।

अत्र प्र० किट्टिचरमाव० द्वि०किट्ट्यन्तर्ग० वेदिता।

अत. मायातृ० कि० वे०, गु० स० च।

अत्र २ यकिट्टिचरमाव० तृ०किट्ट्यन्तर्ग० वेदिता।

अत्र मायाबन्धोदयोदीरणाविच्छेदः। सत्ता च शेषमात्रा तस्याश्च गु० स०।
अनन्तरतो लोभस्य किट्टिवेदनम्।

अत्र माया तृ० कि० चरमाव० स्तिबुकेन गता।


१ मा किट्टिः (लोभस्य)
२ या किट्टिः (लोभस्य)
३ या किट्टि सूक्ष्मा (लोभस्य)
संख्येया भागाः
| स० | स०
१ सख्ये० भागः
१२ मं क्षी ण क षा य-
गु ण स्था न क म्
( अन्तर्मु० )
O | | O.
अ न्त र्मु०
| स० | O
अ न्त र्मु०
स०भागा | १ सख्ये०भा० | O
अ न्त र्मु०
१० म गु०स्थानम्

अत्र मायाशेषस्य गु० स० समाप्ति । अनन्तरं सर्वसंक्रमेण क्षीणा माया ।

अत्र लोभ २ यकि० वे० । तृतीयकिट्टिसूक्ष्मकरणं च ।

अत्र प्र० किट्टेश्चरमाव० द्वि० किट्टयन्तर्ग० वेदिता ।

अत्र तृतीयकिट्टि. सूक्ष्मा जाता । स० लोभबन्धबादरकषायोदयोदीरणा विच्छेद ।

अनन्तरत मू० किट्टे. शेषस्य च वेदनं क्षपण च ।

अत्र २ यकिट्टेश्चरमाव० तृ० किट्टयन्तर्गतत्वेन वेदिता ।

अत स लोभस्य सर्वापवर्त्तनया सू० सम्प० अद्धासमानकरणम् ।

अत्र मोहस्थितिघातादय समाप्ता । अपवर्त्तितस्थितेरुदयोदीरणा च भवत ।

अत्र लोभोदीरणाविच्छेद ।

अत्र ज्ञा०५–द०४–अ०५–यश०–उच्चगो० इति (१६) प्रकृतीना बध-विच्छेद । मोहोदयसत्ताविच्छेद । सर्वथा क्षीण मोहनीयम् ।

अत्र ज्ञा० ५ द० ४–अन्त० ५ निद्रा २ काना सर्वापवर्त्तनया क्षी० क० अद्धासमानकरणम् ।

अत्र निद्राद्विकक्षय ।

अत्र ज्ञा० ५–द ४–अ०५क्षय ।

(जघ. अन्तर्मु० उत्कृष्ट देशोनपूर्वकोटिवर्ष)

| | |
|---|---|
| | अत्र आयोजिकाकरणकरणम्। |
| अन्तर्मु. | अत्र केचित्समुद्घात कुर्वन्ति। (स्थित्यनुभागकण्डकघातन) |
| अन्तर्मु. | अत्र वा कायेन वा वाग्योगरुन्धनम्। |
| अन्तर्मु. | अत्र रुद्धो वा वाग्योग। (अत्र विभागे न किञ्चित् करण) |
| अन्तर्मु. | अत सू. कायेन वा. कायरोधन। यो. गापूर्वस्पर्धककरण च। |
| अन्तर्मु. | अत्र रुद्ध वा. काययोग। योगकिट्टीकरण चातः |
| अन्तर्मु. | अत्र योगकिट्टि सजाता। (अत्र विभागे न किञ्चित्करण) |
| अन्तर्मु. | अतः सू. कायेन सू. वाग्योगरोधनम्। |
| अन्तर्मु. | अत्र रुद्ध सू. वाग्योग। (अत्र विभागे न किञ्चित्करण) |
| अन्तर्मु. | अतः सू० कायेन सू. मनोरुन्धनम्। |
| अन्तर्मु. | अत्र रुद्ध सू. मनोयोग। (अत्र विभागे न किञ्चित्करणं) |
| अन्तर्मु. | अत सू. कायेन सू. कायरोधन। सू. क्रियाप्रतिपातिध्यानारोहण, देहविवरपूरण, योगकिट्टिविनाशन च। |

अत्र सयोगिचरमसमये सर्वा. प्रकृतय'
अयोग्यद्धासमाना जाता.। सू० क्रियाप्रति०
ध्यान-सयोगकिट्टयः-सातबन्ध'-नाम-
गोत्रोदीरणा-योगः शुक्लेश्या-स्थि. अनु.
घात' इति ७ पदार्थाना विच्छेदः ।

( अस्मिन् विभागे व्युपरतक्रियाऽनिवृत्ति-
ध्यानप्रवृत्ति )



अत्र देव २ कादि ७२ प्रकृतिक्षयः ।

अत्र मनु० ३ कादि १३ प्रकृतिक्षय ।

**संज्ञार्थः**

स० =समय.

○¦ =आवलिकान्तरालम्

.¦ =समयान्तरालम्

○¦ =समयाधिकावलिका

शेष —समयोनावलिकाद्विकबद्धदलिकम्

नमोत्थुणं समणस्स भगवओ महावीरस्स।

सिद्धान्तकोविदसुविहिताचार्यश्रीविजयदानसुरीश्वरगुरुभ्यो नमः।

## कर्मप्रकृतौ उदयः।

इयाणिं उदओ भण्णइ—

उदओ उदीरणाए तुल्लो मोत्तूण एकचत्तालं। आवरणविग्घसंजलणलोभवेए य दिठिदुगं ॥१॥

आलिगमहिगं वेएंति आउगाणं पि अप्पमत्ता वि। वेयणियाण य दुसमयतणुपज्जत्ता य निद्दाओ ॥२॥

मणुयगइजाइतसबायरं च पज्जत्तसुभगमाएज्जं। जसकित्तिमुच्चगोयं चाजोगी केइ तित्थयरं ॥३॥

(चू०)—'उदओ उदीरणाए तुल्लो'त्ति–उदीरणाते जे पगतिठ्ठितिअणुभागपदेसमूलपगतिउत्तरपगतिभेया साद्दिअणादिपरूवणा सामित्तं ते चेव उदए वि अणूणमतिरित्ता। कम्हा? जत्थ तु उदओ तत्थ तु उदीरणा जत्थ उदीरणा तत्थ उदतोत्ति। 'मोत्तूण एक्कचत्तालं'ति–मोत्तूण एक्कचत्तालीसं पगतीतो, तासिं उदीरणातो विसेसो अत्थि। कहं? भण्णइ–उदीरणाए विणा वि उदतो लब्भतित्ति काउं। 'आवरणविग्घसंजलणलोभवेदे य दिट्ठिदुगं'ति–पंच नाणावरणं चत्तारि दंसणावरणा पंच अंतरातिय लोभसंजलण तिन्नि वेय सम्मत्तं मिच्छत्तं

एयासिं विसाते कंमाणं 'आलिगमहिगं वेदेति'त्ति–अप्पप्पणो उदयंते आवलिगामेत्तं कालं उदीरणाए विणा उदय एव भवति, तम्हा उदीरणाकालातो उदयकालो आवलिगाहिगो। तिण्ह वेयाणं मिच्छत्तस्स य अंतरकरणद्धाए पढमट्ठितीते आवलियसेसाए उदय एव लब्भति, सेसाणं कम्माणं अप्पप्पणो संतकंमंते चरिमावलिगाए उदय एव भवति। 'आउगाणं पि'त्ति–चउण्हं आउगाणं अप्पप्पणो अंते आवलिगामेत्तं उदय एव उदीरणा नत्थि। 'अप्पमत्ता वि'त्ति–अप्पमत्तसंजया मणुस्साउगस्स सव्वे अणुदीरगा केवलं उदय एव भवतित्ति। 'वेयणीयाए य'त्ति–सायासायाणंपि अप्पमत्तसंजया अणुदीरगा केवलं उदय एव तेसिं। 'दुसमयतणुपज्जत्ता य णिद्दाओ'त्ति–णिद्दापणगस्स सरीरपज्जत्तीए पज्जत्तस्स अणंतरे समते आढत्तं निद्दातित्ति पणगस्स उदय एव भवतीति जाव इंदियपज्जत्ती चरिमसमतो ताव परे न, (परे)दोवि उदतो उदीरणा य भवति। 'मणुयगइजाइतसबायरं च पज्जत्त सुभगमादेज्जं जसकित्तिमुच्चागोयं चाजोगी'त्ति–एएसिं नवण्हं कम्माणं 'अजोगि'त्ति जत्तितो अजोगिकालो तत्तियं कालं उदय एव उदीरणा णत्थि। सेसेसु सजोगिट्ठाणेसु उदतो वि उदीरणावि। 'केइ तित्थयर'त्ति केति अजोगिणो तित्थगरं पि वेयंति अजोगिकाले, सजोगिस्स उदतो उदीरणा य दोवि अत्थि। एस विसेसो पगतिउदीरणुदयाणं ॥१–२–३॥

(मलय०)—तदेवमुक्तानि करणानि, संप्रत्युद्देशक्रमप्राप्तमुदयमभिधित्सुराह—'उदओ'इत्यादि। उदय उदीरणातुल्यः। किमुक्तं भवति? ये उदीरणायाः प्रकृत्यादयो भेदाः प्रागुक्ताः या च साद्यनादिप्ररूपणा यच्च स्वामित्वम्, एतत्सर्वमन्यूनातिरिक्तमुदयेऽपि

द्रष्टव्यम्, उदयोदीरणयोः सहभावित्वात् । तथाहि—यत्रोदयस्तत्रोदीरणा, यत्रोदीरणा तत्रोदयः । किं सर्वत्राप्येवम्? इति चेत्, अत आह—
मुक्त्वा एकचत्वारिंशत्प्रकृतीः । तासामुदीरणामन्तरेणापि कियत्कालमुदयस्य प्राप्यमाणत्वात् । तथाहि—ज्ञानावरणपञ्चकदर्शनावरणचतु-
ष्टयान्तरायपञ्चकसंज्वलनलोभवेदत्रयसम्यक्त्वमिथ्यात्वरूपा विंशतिप्रकृतीः स्वस्वोदयपर्यवसाने आवलिकामात्रं कालमधिकं वेदयन्ति,
उदीरणामन्तरेणापि केवलेनोदयेनावलिकामात्रं कालमनुभवन्तीत्यर्थः । तच्चावलिकामात्रं त्रयाणां वेदानां मिथ्यात्वस्य चान्तरकरणस्य
प्रथमस्थितौ आवलिकाशेषायाम्, शेषाणां तु कर्मणां स्वस्वसत्तापर्यवसाने । तथा चतुर्णामप्यायुषां स्वस्वपर्यवसाने आवलिकामात्र
कालमुदय एव भवति, नोदीरणा । मनुष्यायुर्वेदनीययोर्वाऽप्रमत्ता—अप्रमत्तसंयतप्रभृतय उदीरणामन्तरेण केवलेनैवोदयेन वेदयन्ते ।
तथा तनुपर्याप्ताः शरीरपर्याप्त्या पर्याप्ताः सन्तो द्वितीयसमयादारभ्य शरीरपर्याप्त्यनन्तरसमयादारभ्येन्द्रियपर्याप्तिचरमसमयं यावदुदी-
रणामन्तरेणापि केवलेनैवोदयेन निद्राः पञ्चापि वेदयन्ते । तथा मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्त्युच्चैर्गोत्र-
रूपा नव प्रकृतीरयोगिकेवलिन उदीरणामन्तरेण स्वं कालं यावत् केवलेनैवोदयेन वेदयन्ते, केचित्तीर्थकरमपि ये तीर्थकृतः॥१-२-३॥

(उ०)—तदेवमभिहितानि करणानि । साम्प्रतमुद्देशक्रमप्राप्तमुदयमभिधित्सुराह—उदय उदीरणातुल्यः । उदीरणायाः प्रकृत्यादयो ये
भेदाः प्रागुक्ता या च साद्यादिप्ररूपणा यच्च स्वामित्वं तत्सर्वमन्यूनानतिरिक्तमुदयेऽपि ज्ञातव्यं, उदयोदीरणयोः सहभावित्वात् । तथाहि—
यत्रोदयस्तत्रोदीरणा यत्रोदीरणा तत्रोदय इति, तत्किं सर्वत्राप्ययं नियम? इति चेत्, प्रायो नियम एवेत्याशयं हृदि व्यवस्थाप्य व्यभि-
चारस्थानव्यवच्छेदं विवक्षुराह—'मोत्तूण पगचत्ताल' इत्यादि, मुक्त्वा एकचत्वारिंशत्प्रकृतीरुक्तनियमो द्रष्टव्यः, तासामुदीरणामन्तरे-
णापि कियत्कालमुदयस्य प्राप्यमाणत्वात् । तथाहि—आवरणानि ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयरूपाणि, 'विग्घ' त्ति—अन्तराय-

पञ्चकं सञ्ज्वलनलोभं वेदत्रयं दृष्टियुगं–सम्यक्त्वमिथ्यात्वरूपं, सर्वसङ्ख्यया विंशतिप्रकृतिः स्वस्वोदयपर्यवसाने आवलिकामात्रं कालमधिकं वेदयन्ते, एतासामावलिकामात्रं कालमुदीरणयाऽसंवलितेन केवलेनैवोदयेनानुभवन्तीत्यर्थः। तच्चावलिकामात्रं वेदानां मिथ्यात्वस्य चान्तरकरणे कृते प्रथमस्थितावावलिकाशेषायां शेषाणां तु कर्मणां स्वस्वसत्तापर्यवसाने। तथा चतुर्णामप्यायुषां स्वस्वपर्यवसाने आवलिकामात्रं कालमुदय एव भवति नोदीरणा, आवलिकान्तर्गतस्य कर्मणः सर्वस्याप्युदीरणाऽनर्हत्वात्। तथा वेदनीये सातासातलक्षणे मनुजायुश्चाप्रमत्ता–अप्रमत्तसंयतप्रभृतय उदीरणामन्तरेण केवलेनैवोदयेन वेदयन्ते। तथा तनुपर्याप्त्या पर्याप्ताः सन्तो 'दुसमय' त्ति–द्वितीयसमयादारभ्य शरीरपर्याप्त्यनन्तरसमयादारभ्येन्द्रियपर्याप्तिचरमसमयं यावदित्यर्थः, तथास्वाभाव्यादुदीरणामन्तरेण केवलेनैवोदयेन निद्राः पञ्चापि वेदयन्ते। तथा मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्त्युच्चैर्गोत्ररूपा नव प्रकृतीरयोगिकेवलिन उदीरणामन्तरेण स्वकालं यावत्केवलेनैवोदयेन वेदयन्ते। केचित्तीर्थकृतः तीर्थकरनामाप्ययोगिनः सन्त उदीरणां विनैवोदयेन वेदयन्ते ॥ १–२–३ ॥

पगति उदयो भणितो, इयाणिं ट्ठितिउदतो भन्नति—

**ठिइउदओ वि ठिइक्खयपओगसा ठिइउदीरणा अहिगो। उदयठिईए हस्सो छत्तीसा एगउदयठिई ॥४॥**

(चू०)—'ट्ठिइउदओ वि ठिइक्खयपओगस' त्ति–ट्ठित्ति उदतो दुविहो–ट्ठितिक्खएण पओगसा य। ट्ठितिक्खओ णाम ट्ठितिक्खतेण वेदिज्जतित्ति सभावोदतो जं भणियं होति। पओगसा उदओ सेवीकातो, सेवीकातो णाम संपयसमये पदेसग्गं अणुदिन्नं जासु ट्ठितिसु उदीरणाते आणेउं उदयसमये दिज्जति तातो ट्ठितीतो सेवीकातो

भन्नई॥ ॥४॥

(मलय०)—तदेवमुक्तः प्रकृत्युदयः, सम्प्रति स्थित्युदयमाह–'ठिइउदउ'त्ति। इह द्विविध उदयः–स्थितिक्षयेण प्रयोगेण च। तत्र स्थितिस्थितिरबाधाकालरूपा तस्याः क्षयेण द्रव्यक्षेत्रकालभवभावरूपाणामुदयहेतूनां सम्प्राप्तौ सत्यां यः स्वभावत उदयः प्रवर्तते स स्थितिक्षयेणोदयः। यः पुनस्तस्मिन्नुदये प्रवर्तमाने सति उदीरणाकरणरूपेण प्रयोगेण दलिकमाकृष्यानुभवति स प्रयोगोदयः। तथा चाह–स्थित्युदयोऽपि स्थितिक्षयात् प्रयोगतश्च भवति। स च द्विधा उत्कृष्टो जघन्यश्च। तत्रोत्कृष्टः स्थित्युदीरणात उदयस्थित्याऽभ्यधिकः। तथाहि–उत्कृष्टायां स्थितौ बध्यमानायामबाधाकालेऽपि प्राग्बद्धं दलिकमस्तीति कृत्वा बन्धावलिकायामतीतायामनन्तरस्थितौ विपाकोदयेन वर्त्तमान उदयावलिकात उपरितनीः सर्वा अपि स्थितीरुदीरयति, उदीर्य च वेदयते, ततो बन्धावलिकोदयावलिकाहीनायाः शेषायाः सर्वस्या अपि स्थितेरुदयोदीरणे तुल्ये, वेद्यमानायां च स्थितावुदीरणा न प्रवर्तते, किन्तूदय एव केवलः, ततो वेद्यमानया समयमात्रस्थित्याऽभ्यधिकः स्थित्युदीरणात उत्कृष्टस्थित्युदयः। बन्धावलिकोदयावलिकाहीनश्च उत्कृष्टः स्थित्युदयः उदयोत्कृष्टबन्धानां वेदितव्यः। शेषाणां तु यथायोग्यम्। तत्राप्युक्तनीत्या उदयस्थित्याभ्यधिकोऽवगन्तव्यः। तथा ह्रस्वो–जघन्यः स्थित्युदयः षट्त्रिंशत्प्रकृतीनामेका समयमात्रा उदयस्थितिः। एतदुक्तं भवति–षट्त्रिंशत्प्रकृतीनां जघन्यः स्थित्युदयः समयमात्रैकस्थित्युदयप्रमाणो वेदितव्यः, समयमात्रा चैका स्थितिः चरमसमयस्थितिरवसेया। षट्त्रिंशत्प्रकृतयश्च प्रागुक्ता एवैकचत्वारिंशत्प्रकृतयो निद्रापञ्चकव्यतिरिक्ता वेदितव्याः। निद्रापञ्चकस्य ह्युदीरणाया अभावेऽपि शरीरपर्याप्त्यनन्तरं केवलोदयकालेऽप्यवर्तनाऽपि प्रवर्तते, तत एका स्थि-

---

इतोऽग्रया. पश्चात्तनीगाथायाश्च चूर्णिपाठो न विद्यते अस्मत्पार्श्ववर्तिनीषु प्रतीषु।

तिर्न प्राप्यते इति तद्वर्जनम्। शेषं जघन्योदीरणातुल्यं निरवशेषमवगन्तव्यम् ॥ ४ ॥

(उ०)—उक्तः प्रकृत्युदयः, अथ स्थित्युदयमाह–स्थित्युदयोऽपि स्थितिक्षयात्प्रयोगतश्च भवति। तत्र स्थितिरबाधाकालरूपा, तस्याः क्षयेण द्रव्यक्षेत्रकालभवभावरूपोदयहेतुसंप्राप्तौ सत्यां यः स्वभावत उदयो भवति स स्थितिक्षयनिष्पन्न उदयः। यस्तु तस्मिन्नुदये प्रवर्तमाने सत्युदीरणाकरणरूपेण प्रयोगेणाकृष्यमाणस्य दलिकस्यानुभवः स प्रयोगोदयः। अपिरत्रानुक्तविशेषांशे उदीरणासाम्यं प्रागुक्तं समुच्चिनोति। योऽयमुदयः सामान्यतो द्विधा–उत्कृष्टो जघन्यश्च। तत्रोत्कृष्टस्थित्युदय उत्कृष्टस्थित्युदीरणात उदयस्थित्याऽभ्यधिकः। तथाहि–उत्कृष्टायां स्थितौ बध्यमानायामबाधाकालमध्येऽपि प्राग्बद्धं दलिकमस्तीति कृत्वा बन्धावलिकायामतीतायामनन्तरस्थितौ विपाकोदयेन वर्तमान उदयावलिकात उपरितनीः स्थितीः सर्वा अप्युदीरयति, उदीर्य च वेदयते। ततो बन्धावलिकोदयावलिकाहीनायाः शेषायाः सर्वस्या अपि स्थितेरुदयोदीरणे तुल्ये। वेद्यमानायां च स्थितावुदीरणा न प्रवर्तते, किंतूदय एव केवलः। ततो वेद्यमानया समयमात्रया स्थित्योत्कृष्टस्थित्युदीरणात उत्कृष्टस्थित्युदयोऽभ्यधिकः। बन्धोदयावलिकाद्वयहीनश्चोत्कृष्टस्थित्युदय उदयोत्कृष्टबन्धानां वेदितव्यः। शेषाणां तु यथासंभवं, तत्राप्युक्तनीत्योदयस्थित्याऽभ्यधिको वक्तव्यः। तथा ह्रस्वो–जघन्यः स्थित्युदयः षट्त्रिंशत्प्रकृतीनां प्रागुक्ताया एकचत्वारिंशतो निद्रापञ्चकवर्जनेन निष्पन्नानामेका समयमात्रोदयस्थितिः समयमात्रैकस्थित्युदयप्रमाणो ज्ञातव्यः, समयमात्रा चैका स्थितिश्चरमस्थितिरवसेया। निद्रापञ्चकस्य तूदीरणाया अभावेऽपि शरीरपर्याप्त्यनन्तरं केवलोदयकालेऽपवर्तनाया अपि प्रवृत्तावेका स्थितिर्न प्राप्यत इति तद्वर्जनम्। शेषं जघन्योदीरणातुल्यं निरवशेषमवगन्तव्यम् ॥४॥




अत्र उत्कृष्टस्थित्युदीरणातः उत्कृष्टस्थित्युदय. (एकया) उदयस्थित्या अभ्यधिको ज्ञेयः

**अणुभागुदओ वि जहण्ण नवरि आवरणविग्घवेयाणं । संजलणलोभसम्मत्ताण य गंतूणमावलिगं ॥५॥**

(मलय०)—तदेवमुक्तः स्थित्युदयः । सम्प्रत्यनुभागोदयमाह—'अनुभाग'त्ति—यथाऽनुभागोदीरणा प्राक् सप्रपञ्चमभिहिता—तथाऽनुभागोदयोऽपि वक्तव्यः । नवर ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयवेदत्रयसंज्वलनलोभसम्यक्त्वानामुदीरणाव्यवच्छेदे सति परत आवलिकां गत्वा—अतिक्रम्य तस्या आवलिकायाश्चरमसमये जघन्यानुभागोदयो वाच्यः ॥५॥

(उ०)—उक्तः स्थित्युदयः, अथानुभागोदयमाह–अनुभागोदयोऽप्यनुभागोदीरणातुल्यो वक्तव्यः। नवरं ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयवेदत्रयसंज्वलनलोभसम्यक्त्वानामुदीरणाव्यवच्छेदे सति परत आवलिकां गत्वाऽतिक्रम्य तस्या आवलिकायाश्चरमसमये जघन्यानुभागोदयो वाच्यः ॥५॥

इयाणिं पदेसुदओ। तस्स इमे अत्थाहिगारा। तं जहा–सातिअणातिपरूवणा, सामित्तं। तत्थ सातिअणातिपरूवणा दुविहा–मूलपगतिसातिअणातिपरूवणा य, (उत्तरपगतिसातिअणाति परूवणा) य। तत्थ मूलपगति भन्नति—

**अजहण्णाणुक्कोसा चउत्तिहा छण्ह चउविहा मोहे। आउस्स साइअधुवा सेसविगप्पा य सव्वेसिं ॥६॥**

(चू०)—'अजहण्णाणुक्कोसा चउत्तिहा छण्ह'त्ति–मोहणियाउगवज्जाणं छण्हं कम्माणं अजहण्णो पदेसुदओ सातियादि चउव्विहो। कहं? भण्णइ–एयासिं छण्ह खवियकम्मंसियस्स देवस्सइंकिलिट्ठस्स उक्कोसं ठितिं बंधेउमाढत्तस्स उक्कोसं पदेसग्गं उवट्टियं भवति तओ बंधावसाणे कालं काउं एगिंदिएसु उववन्नस्स पढमसमते जहन्नपदेसुदओ भवति, सो य एगसमतितो साति य अधुवो य। तं मोत्तूण सेसो अजहन्नो। ततो बितियसमते अजहन्नस्स सातितो, तं ठाण(म)संपत्तपुव्वस्स अणासंतो(इओ), धुवाधुवो पुव्वुत्तो। तेसिं चेव छण्हं कम्माणं तिविहो अणुक्कसो। तं जहा–अणादिग धुवअधुवो य। कहं? भण्णइ–एतेसिं छण्हं कम्माणं गुणियकंमंसिगं पडुच्च अप्पप्पणो उदयंते गुणसेढीसीसगे वट्टमाणाणं उक्कोसो पदेसुदतो। सो य एक्कसमतितो साति य अधुवो य।

तं मोत्तूण सेसो सव्वो अणुक्कोसो। अणुक्कोसस्स आदि णत्थि धुवोदयत्तातो। धुवाधुवा पुव्वुत्ता। 'चउविहो मोहे'त्ति–मोहणिज्जस्स अजहण्णो वि अणुक्कोसो वि सातियाति चउव्विहो उदओ। कहं? भन्नति–मोहणिज्जस्स जहण्णतो खवियकम्मंसिगो अंतरकरणे करेतु पुणो वेदेंतस्स उदीरणोदयंमि आवलि गंतूण जहन्नतो पदेसुदतो भवति। सो य एगसमतितो साति य अधुवो य। तं मोत्तूण सेसो अजहन्नो। ततो बितियसमते पदेसुदओ अजहन्नो सातितो। अहवा उदए फेट्टे सेढीओ परिवडंतस्स सातितो, तं ट्ठाणमपत्तपुव्वस्स अणातितो, धुवाधुवा पुव्वुत्ता। इयाणिं अणुक्कसो भन्नति–मोहस्स उक्कोसतो पदेसुदओ गुणियकम्मंसिगं पडुच्च अप्पणो उदयंते उक्कोसपदेसुदतो। सो य एग समतितो साति य अधुवो य। तं मोत्तूण सेसा अणुक्कोसा। उवसमसेढीतो उदतो वोच्छिण्णे पुणो परिवडंतस्स अणुक्कोसो पदेसुदतो सातितो। तं ट्ठाणमपत्तपुव्वस्स अणातितो। धुवाधुवा पुव्वुत्ता। 'आउस्स साति अधुव'त्ति–आउयस्स उक्कोसाणुक्कोसजहण्णाजहण्णा सव्वे विगप्पा साति अधुवा सामन्नग्गहणा। 'सेसविगप्पा य सव्वासिं'ति–छण्हं कम्माणं मोहणिज्जस्स य भणियसेसा विगप्पा सव्वे सातिअ अधुवा, के ते? भण्णइ–उक्कोसा जहन्ना य। ते य पुव्वुत्ता ॥६॥

(मलय०)—तदेवमुक्तोऽनुभागोदयः, सम्प्रति प्रदेशोदयाभिधानावसरः। तत्र चेमौ अर्थाधिकारौ, तद्यथा–साद्यनादिप्ररूपणा स्वामित्वं च। साद्यनादिप्ररूपणा द्विविधा–मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषयसाद्यनादिप्ररूपणार्थमाह— 'अजहण्ण'त्ति–मोहनीयायुर्वर्जानां षण्णां कर्मणामजघन्यः प्रदेशोदयश्चतुर्विधः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–कश्चित् क्षपि-

तकमाशो देवलोके देवो जातः, स च तत्र संक्लिष्टो भूत्वा उत्कृष्टां स्थितिं बध्नन् उत्कृष्टं प्रदेशाग्रमुद्वर्तयति, ततो बन्धावसाने कालं कृत्वा एकेन्द्रियेषूत्पन्नः, तस्य प्रथमसमये प्रागुक्तानां षण्णां कर्मणां जघन्यः प्रदेशोदयः, स चैकसामयिक इति कृत्वा सादिरध्रुवश्च, ततोऽन्यः सर्वोऽप्यजघन्यः , सोऽपि तस्य द्वितीयसमये भवन् सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ पूर्ववत् । तथा तेषामेव षण्णां कर्मणामनुत्कृष्टः प्रदेशोदयस्त्रिधा त्रिप्रकारः, तद्यथा–अनादिर्ध्रुवोऽध्रुवश्च । तथाहि–अमीषां षण्णां कर्मणामुत्कृष्टः प्रदेशोदयः प्रागुक्तस्वरूपस्य गुणितकर्मांशस्य स्वस्वोदयान्ते गुणश्रेणीशिरसि वर्तमानस्य प्राप्यते । स चैकसामयिक इति कृत्वा सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः, स चानादिः, सदैव भावात्, ध्रुवाध्रुवौ पूर्ववत् । तथा 'मोहे'–मोहनीयेऽजघन्योऽनुत्कृष्टश्च प्रदेशोदयश्चतुर्विधः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि–क्षपितकर्मांशस्यान्तरकरणे कृतेऽन्तरकरणपर्यन्तभाविगोपुच्छाकारसंस्थितावलिकामात्रदलिकान्तसमये मोहनीयस्य जघन्यः प्रदेशोदयः । स चैकसामयिक इति कृत्वा सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यजघन्यः । सोऽपि ततो द्वितीयसमये भवन् सादिः । तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ पूर्ववत् । तथा गुणितकर्मांशस्य सूक्ष्मसंपरायगुणस्थानकान्तसमये उत्कृष्टः प्रदेशोदयः, स चैकसामयिक इति कृत्वा सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः । स चोपशमश्रेणीतः प्रतिपततो भवन् सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, ध्रुवाध्रुवौ पूर्ववत् । तथा आयुषश्चत्वारोऽपि भेदा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपाः साद्यध्रुवाः, चतुर्णामपि भेदानां यथायोगं नियतकाल भावात् । तथा सर्वेषां कर्मणां प्रागुक्तानां षण्णां मोहनीयस्य चोक्तशेषौ विकल्पौ उत्कृष्टजघन्यरूपौ साद्यध्रुवौ, तौ च प्रागेव भावितौ ॥६॥

(उ०)—उक्तोऽनुभागोदयः,अथ प्रदेशोदयो वक्तुमवसरप्राप्तः । तत्र चेमानर्थाधिकारौ–साद्यनादिप्ररूपणा स्वामित्वं चेति । तत्र

साधनादिप्ररूपणा द्विविधा—मूलप्रकृतिविषयोत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषयसाद्यनादिप्ररूपणार्थमाह—मोहनीयायुर्वर्जानां षण्णां कर्मणामजघन्यः प्रदेशोदयश्चतुर्विधः। तथाहि—सादिरनादिर्ध्रुवोऽध्रुवश्च। तत्र कश्चित् क्षपितकर्मांशो दिवि देवो जातस्तत्र च संक्लिष्टो भूत्वोत्कृष्टां स्थितिं बध्नन्नुत्कृष्टं प्रदेशाग्रमुद्वर्तयति, ततो बन्धावसाने कालं कृत्वा एकेन्द्रियेषूत्पन्नः, तस्य प्रथमसमये प्रागुक्तानां षण्णां कर्मणां जघन्यः प्रदेशोदयः, स चैकसामयिक इति सादिरध्रुवश्च, ततोऽन्यः सर्वोऽप्यजघन्यः, सोऽपि तद्द्वितीयसमये भवन् सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ पूर्ववत्। तथा तेषामेव षण्णां कर्मणामनुत्कृष्टः प्रदेशोदयस्त्रिधा—अनादिर्ध्रुवोऽध्रुवश्चेति। तथाहि—अमीषां षण्णां कर्मणामुत्कृष्टप्रदेशोदयो गुणितकर्मांशस्य स्वस्वोदयान्ते गुणश्रेणीशिरसि वर्तमानस्य लभ्यते, स चैकसामयिक इति सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्टः, स चानादिः सदैव भावात्, ध्रुवाध्रुवौ प्राग्वत्। तथा मोहे—मोहनीयेऽजघन्योऽनुत्कृष्टश्च प्रदेशोदयश्चतुर्विधः साद्यनादिध्रुवाध्रुवभेदात्, तथाहि—क्षपितकर्मांशस्यान्तरकरणे कृतेऽन्तरकरणपर्यन्तभाविगोपुच्छाकारसंस्थितावलिकामात्रदलिकान्तसमये मोहनीयस्य जघन्यः प्रदेशोदयः, स चैकसामयिक इति सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः, सोऽपि ततो द्वितीयसमये भवन् सादिः, तत्स्थानमप्राप्तस्य त्वनादिः, ध्रुवाध्रुवौ प्राग्वत्। तथा गुणितकर्मांशस्य सूक्ष्मसम्परायगुणस्थानकान्तसमये उत्कृष्टः प्रदेशोदयः, स चैकसामयिक इति सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्टः, स चोपशमश्रेणीतः प्रतिपततो भवन् सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत्। तथाऽऽयुषश्चत्वारोऽपि भेदा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपाः साद्यध्रुवाः, चतुर्णामप्येतद्भेदानां यथायोगं प्रतिनियतकाल एव भावात्। तथा प्रागुक्तानां षण्णां मोहनीयस्य चेति सर्वेषां कर्मणामुक्तशेषौ विकल्पावुत्कृष्टजघन्यरूपौ साद्यध्रुवौ, तौ च प्रागेव भावितौ ॥ ६ ॥

भणिया मूलपगतिसातिअणाइपरूवणा। इयाणिं–उत्तरपगतिणं भन्नति—

**अजहण्णाणुक्कोसो सगयालाए चउत्तिहा चउहा। मिच्छत्ते सेसासिं दुविहा सव्वे य सेसाणं ॥७॥**

(चू०)—'अजहन्नाणुक्कोसो सगयालाए चउत्तिहा'त्ति–अजहन्नो उदओ सत्तचत्तालीसाए कम्माणं सातियाति चउव्विहो, मिच्छत्तरहिया धुवोदयअडयालीसा सत्तचत्तालीसा भवंति। एएसिं सत्तचत्तालीसाते कंमाणं खवियकम्मंसिगो देवो संकिलिट्ठो उक्कोसट्ठितिं वंधिउमाढत्तो उव्वट्टियदलितो बंधावसाणे कालं करेउं एगिंदिओ उववन्नो, तस्स पढमसमते वट्टमाणस्स जहन्नतो पदेसुदओ सामन्नेणं। ओहीदुगस्स देवस्स उक्कोसठिइं वंधिउमाढत्तस्स बंधावलियाए चरिमसमते जहन्नओ पएसुदओ एक्कं समयं। सो सातिय अधुवो। तस्सेव पुणो जहन्नातो अजहन्नगं गयस्स अजहन्नस्स सातितो, तं ट्ठाणमपत्तपुव्वस्स अणातितो धुवोदयत्तातो, धुवाधुवा पुव्वुत्ता। एएसिं चेव सत्तचत्तालीसाते कम्माणं गुणियकम्मंसिगं पडुच्च उक्कोसओ पदेसुदतो अप्पप्पणो उदयंते भवति। सो य साति अधुवो। तं मोत्तूण सेसोणुक्कोसो, तस्स आदी नत्थि धुवोदयत्तातो, धुवाधुवो पुव्वुत्तो। 'चउहा भिच्छत्त'त्ति–अजहण्णमणुक्कसावि उदया मिच्छत्तस्स सादियादि चउव्विहा। कहं? भण्णति–मिच्छदिट्ठिस्स खवियकम्मंसिगस्स पढमं संमतं उप्पाएमाणस्स अंतरकरणे कते उवसमसंमत्तातो मिच्छत्तं गयस्स उदीरणुदयस्स अंते वट्टमाणस्स जहन्नओ पदेसुदओ भवति, सो य सादि य अधुवो। तं मोत्तूण सेसो अजहन्नो। तस्सेव वितियसमते मिच्छत्तं वेतेमाणस्स जहण्णोदयस्स आदि भवति। वेयगसंमत्ततो वा परिवडंतस्स

अजहन्नस्स सातितो भवति, तं ट्ठाणमपत्तपुव्वस्स अणाइतो, धुवाधुवा पुव्वुत्ता। इयाणिं अणुक्कोसो चउव्विहो, कहं? भन्नति–पुव्वसंजमासंजमगुणसेढीए वट्टमाणा संजमगुणसेढीं करेति, दोण्ह वि गुणसेढीण सीसं एक्कसि भवति। ट्ठावणा गुणसेढी। ततो मिच्छत्तं गतो गुणसेढी सीसे वट्टमाणस्स मिच्छत्तस्स उक्कोसो पदेसुदयो, सो सातियअधुवो, तं मोत्तूण सेसो सव्वो अणुक्कोसो। संमत्तातो मिच्छत्तं [सीसमील]गयस्स अणुक्कोसस्स सातितो, तं ट्ठाणमपत्तपुव्वस्स अणातितो, धुवाधुवा पुव्वुत्ता। 'सेसासिं दुविह'त्ति–भणियसेसा विकप्पा सव्वेसिं भणियकम्माणं सातिय अधुवा [बहुयवा]के ते? भन्नति–जहण्णुक्कोसा। एम्मि कारणं पुव्वुत्तं। 'सव्वे य सेसाणं' नि–सव्वे विकप्पा उक्कोसाणुक्कोसजहन्नाजहन्ना सेसाणं कम्माणं अधुवोदयाणं दसुत्तरसयस्ससातिय-अधुवा, अधुवोदयत्ता चेव। भणिता सातिय अणाति परूवणा ॥७॥

(मलय०)—कृता मूलप्रकृतीनां साद्यनादिरूपणा, संप्रत्युत्तरप्रकृतीनां तां चिकीर्षुराह–'अजहण्ण'त्ति। तैजससप्तकवर्णादिविंशतिस्थिरास्थिरनिर्माणागुरुलघुशुभाशुभज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाणां सप्तचत्वारिंशत्प्रकृतीनामजघन्यः प्रदेशोदयश्चतुर्विधः। तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–कश्चित् क्षपितकर्मांशो देव उत्कृष्टे संक्लेशे वर्तमान उत्कृष्टां स्थितिं बध्नन् उत्कृष्टं प्रदेशाग्रमुद्वर्तयति। ततो बन्धावसाने कालं कृत्वा एकेन्द्रियेषूत्पद्यते, तस्य प्रथमसमये प्रागुक्तानां सप्तचत्वारिंशत्प्रकृतीनां जघन्यः प्रदेशोदयः। नवरमवधिज्ञानावरणावधिदर्शनावरणयोर्बन्धावलिकाचरमसमये देवस्य जघन्यः प्रदेशोदयो वेदितव्यः। स चैकसामयिक इति कृत्वा सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः। स च द्वितीयसमये भवन् सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः,

ध्रुवाध्रुवौ पूर्ववत् । तथाऽमूषामेव सप्तचत्वारिंशत्प्रकृतीनामनुत्कृष्टः प्रदेशोदयस्त्रिप्रकारस्तद्यथा—अनादिर्ध्रुवोऽध्रुवश्च । तथाहि—गुणितकर्मांशस्य स्वस्वोदयान्ते गुणश्रेणीशिरसि वर्तमानस्योत्कृष्टः प्रदेशोदयः । स चैकसामयिक इति कृत्वा सादिरध्रुवश्च । ततोऽन्यः सर्वोप्यनुत्कृष्टः । स चानादिः, सदैव भावात् । ध्रुवाध्रुवौ पूर्ववत् । तथा 'मिथ्यात्वे'—मिथ्यात्वस्याजघन्योऽनुत्कृष्टश्च प्रदेशोदयश्चतुर्विधः, तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—क्षपितकर्मांशस्य प्रथमसम्यक्त्वमुत्पादयतः कृतान्तरकरणस्यौपशमिकसम्यक्त्वात्प्रच्युत्य मिथ्यात्वं गतस्यान्तरकरणपर्यन्तभाविगोपुच्छाकारसंस्थितावलिकामात्रदलिकान्तसमये वर्तमानस्य जघन्यः प्रदेशोदयः । स चैकसामयिक इति कृत्वा सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यजघन्यः । सोऽपि द्वितीयसमये भवन् सादिः । वेदकसम्यक्त्वाद्वा प्रतिपततः सादिः । तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवौ पूर्ववत् । तथा कश्चिद्गुणितकर्मांशो यदा देशविरतिगुणश्रेण्यां वर्तमानः सर्वविरतिं प्रतिपद्यते । ततस्तन्निमित्तां गुणश्रेणिं करोति । कृत्वा च तावद्गतो यावत् द्वयोरपि गुणश्रेण्योर्मस्तके । तदानीं च कश्चिन्मिथ्यात्वं गच्छति । ततस्तस्य मिथ्यात्वस्योत्कृष्टः प्रदेशोदयः, स चैकसामयिक इति कृत्वा सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः । सोऽपि ततो द्वितीयसमये भवन् सादिः । वेदकसम्यक्त्वाद्वा प्रतिपततः सादिः । तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवौ पूर्ववत् । एतासां च सप्तचत्वारिंशत्प्रकृतीनां मिथ्यात्वस्य चोक्तशेषौ विकल्पौ जघन्योत्कृष्टरूपौ 'द्विधा'—द्विप्रकारौ । तद्यथा—सादी अध्रुवौ च । तौ च भावितावेव । 'शेषाणां'—अध्रुवोदयानां प्रकृतीनां दशोत्तरशतसंख्यानां सर्वे विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टरूपा द्विधा ज्ञातव्याः, तद्यथा—सादयोऽध्रुवाश्च । सा च साद्यध्रुवताऽध्रुवोदयत्वादवसेया ॥७॥

(उ०)—कृता मूलप्रकृतीनां साद्यादिप्ररूपणा, अथोत्तरप्रकृतीनां तां चिकीर्षुराह—तैजससप्तकवर्णादिविंशतिस्थिरास्थिरनिर्मा-

णागुरुलघुशुभाशुभज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाणां सप्तचत्वारिंशत्प्रकृतीनामजघन्यः प्रदेशोदयश्चतुर्विधः साधनादिध्रुवाध्रुवभेदात्, तथाहि—कश्चित्क्षपितकर्मांशो देव उत्कृष्टे संक्लेशे वर्तमान उत्कृष्टां स्थितिं बध्नन्नुत्कृष्टं प्रदेशाग्रमुद्वर्तयति, ततो बन्धावसाने कालं कृत्वा एकेन्द्रियेषूत्पद्यते, तस्य प्रथमसमये प्रागुक्तानां सप्तचत्वारिंशत्प्रकृतीनां जघन्यः प्रदेशोदयः, नवरमवधिज्ञानावरणावधिदर्शनावरणयोर्बन्धावलिकाचरमसमये देवस्य जघन्यः प्रदेशोदयो ज्ञातव्यः, स चैकसामयिक इति सादिरध्रुवश्च । ततोऽन्यः सर्वोऽप्यजघन्यः, स च द्वितीयसमये भवन् सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । अमूषामेव सप्तचत्वारिंशत्प्रकृतीनामनुत्कृष्टः प्रदेशोदयस्त्रिप्रकारः, तथाहि—अनादिर्ध्रुवोऽध्रुवश्चेति । तत्र गुणितकर्मांशस्य स्वस्वोदयान्ते गुणश्रेणीशिरसि वर्तमानस्योत्कृष्टः प्रदेशोदयः, स चैकसामयिक इति साद्यध्रुवः । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः स चानादिः सदाभावात्, ध्रुवाध्रुवौ प्राग्वत् । तथा मिथ्यात्वे मिथ्यात्वस्याजघन्योऽनुत्कृष्टश्च प्रदेशोदयश्चतुर्धा, साद्यनादिध्रुवाध्रुवभेदात् । तथाहि—क्षपितकर्मांशस्य प्रथमसम्यक्त्वमुत्पादयतः कृतान्तरकरणस्यौपशमिकसम्यक्त्वात्प्रच्युत्य मिथ्यात्वं गतस्यान्तरकरणपर्यन्तभाविगोपुच्छाकारसंस्थितावलिकामात्रदलिकान्तसमये वर्तमानस्य जघन्यः प्रदेशोदयः, स चैकसामयिक इति साद्यध्रुवः । ततोऽन्यः सर्वोऽप्यजघन्यः, सोऽपि ततो द्वितीयसमये भवन् सादिः, वेदकसम्यक्त्वाद्वा प्रच्यवमानस्य सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । तथा मिथ्यात्वस्योत्कृष्टः प्रदेशोदयस्तदा भवति यदा कश्चिद्गुणितकर्मांशो देशविरतिगुणश्रेण्यां वर्तमान एव सर्वविरतिं प्रतिपद्य सर्वविरतिनिमित्तां गुणश्रेणिं करोति, तां च कृत्वा तानघाति यावद्द्वयोरपि गुणश्रेण्योर्मस्तके, तत्समये च मिथ्यात्वं गच्छतीति, स चैकसामयिक इति साद्यध्रुवः । ततोऽन्यः सर्वोऽप्यनुत्कृष्टः, सोऽपि ततो द्वितीयसमये भवन् सादिः । वेदकसम्यक्त्वाद्वा प्रतिपततः सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ प्राग्वत् । तथै-

तासां सप्तचत्वारिंशत्प्रकृतीनां मिथ्यात्वस्य चोक्तशेषौ विकल्पौ जघन्योत्कृष्टरूपौ द्विविधौ साद्यध्रुवभेदात्, तौ च भावितावेव । शेषाणामध्रुवोदयानां प्रकृतीनां दशोत्तरशतसंख्यानां सर्वे विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टरूपा द्विविधाः, तद्यथा–सादयोऽध्रुवाश्च। सा च साद्यध्रुवताऽध्रुवोदयत्वादवसेया ॥७॥

इयाणिं सामित्तं भन्नति। तं दुविहं–उक्कोसपदेसुदयसाभित्तं, जहन्नपदेसुदयसाभित्तं च। तत्थ पुव्वं उक्कोसपदेसुदयसामित्तं [चरिथोव] भन्नति। उक्कोससाभित्तपरूवणेति एक्कारसगुणसेढीओ परूवेयव्वातो–

सम्मत्तुप्पतिसावयविरए संजोयणाविणासे य। दंसणमोहक्खवगे कसायउवसामगुवसंते ॥८॥

खवगे य खीणमोहे जिणे य दुविहे असंखगुणसेढी। उदओ तव्विवरीओ कालो संखेज्जगुणसेढी ॥९॥

(चू०)—संमत्तुप्पत्तिगुणसेढी, सावयगुणसेढी, संजयगुणसेढी य, अणंताणुबंधिविसंजोयणागुणसेढी, दंसणमोहक्खयगुणसेढी, चरित्तमोहउवसामणगुणसेढी, उवसंतकसायगुणसेढी, खवगगुणसेढी, खीणमोहस्स गुणसेढी, सजोगिकेवलिगुणसेढी, अजोगिकेवलीगुणसेढि।'असंखगुणसेढी उदतो'त्ति–सव्वत्थोवं संमत्तुप्पायसेढीते दलियं, सावगगुणसेढीते असंखेज्जगुणं, जाव सजोगिकेवलीगुणसेढीतो अजोगिकेवलीगुणसेढीते दलियं असंखेज्जगुणं, तम्हा उदयंपि पडुच्च असंखेज्जगुणा एव। 'तव्विवरीओ कालो संखेज्जगुणसेढी'त्ति–कालं पडुच्च विवरीयातो। सव्वत्थोवो अजोगिकेवलीगुणसेढीकालो, सजोगिकेवलीगुणसेढीकालो संखेज्जगुणो। एवं जाव सम्मत्तुप्पत्तिगुण-

सेढीकालो संखेज्जगुणो। ठवणाए एसा पढमा, सेसातो एत्तो उच्चत्तेण संखेज्जगुणहीणातो संखेज्जगुणहीणातो, उवरि पोहल्लेण (पोग्गलेण) विसालातो विसालयराओ कायव्वाओ, जाव अजोगिस्स। ठवणा। कहं असंखेज्जगुणं दलियं? भण्णइ–संमत्तं उप्पाएतो मिच्छदिट्ठी सो कम्मदव्व थोवं खवेति, संमत्तनिमित्तं [संमत्त]पडिवन्नतानो असंखेज्जगुणा गुणसेढी भवति। ततो देसविरयस्स गुणसेढी असंखेज्जगुणा देसोवरमत्तातो। ततो संजयगुणसेढी असंखेज्जगुणा सव्वोवरमत्तातो। अणंताणुवंधि विसंजोयणागुणसेढी असंखेज्जगुणा हेट्ठिल्लाण तिण्हं अणंताणुवंधिणो खवेंताणं, तत्थ संजयपड्डुच्चतिकरणसहितो अणंताणुवंधिणो खवेतित्ति काउं। ततो दंसणमोहखवगसेढी असंखेज्जगुणा, जेणं अणंताणुवंधिणो खवेत्तु विसुद्धतरो दंसणतिगं खवेति। एए सव्वे असेढिगया लब्भंति। उवसामगस्स गुणसेढी असंखेज्जगुणा, जेण सेढिपडिवन्ना समते समते अणंतगुणाए विसोहिए वड्ढंति। उवसंतगुणसेढी असंखेज्जगुणा जेण मोहस्स सव्वोवसमे वट्टमाणो। ततो विसुद्धयरो खवगगुणसेढी, संजएण उवसंतातो खवगो विसुद्धयरो। खीणमोहगुणसेढी असंखेज्जगुणा, जेण मोहसव्वक्खए वट्टमाणो अच्चंतविसुद्धो। सजोगिकेवली गुणसेढी असंखेज्जगुणा, घातिकंमापगमत्तातो। अजोगिकेवली गुणसेढी असंखेज्जगुणा, सव्वट्ठितिलोवट्टणाते लद्धमिति काउं ॥८-९॥

## ॥ ११ गुणश्रेणीनां चित्रं कालापेक्षया ॥

उदयः एकादशगुणश्रेणयः



॥ प्रदेशापेक्षया ११ गुणश्रेणीनां चित्रम् ॥

अयोगितः सर्वा गुणश्रेणयः प्रदेशापेक्षया क्रमेणाऽसंख्येयगुणहीना हीनतराः इति हीना हीनतरा स्थापना




( प्रथमा उदयावलिकायां )

सम्यक्त्वगुणश्रेणितः सर्वाः गुणश्रेणयः प्रदेशापेक्षयाऽसंख्येयगुणविशेषविशेषाधिकतरा इति स्थापनापि स्थूला स्थूलतरा ॥

(मलय०)—कृता साद्यनादिप्ररूपणा। सम्प्रति स्वामित्वमभिधानीयम्। तच्च द्विधा—उत्कृष्टप्रदेशोदयस्वामित्वं, जघन्यप्रदेशोदयस्वामित्वं च। तत्रोत्कृष्टप्रदेशोदयस्वामित्वप्रतिपादनार्थं संभवन्तीर्गुणश्रेणीः सर्वा अपि प्ररूपयति—'सम्मत्तुप्प'इत्यादि। इहैकादश गुणश्रेणयः। तद्यथा—सम्यक्त्वोत्पादे प्रथमा। द्वितीया 'श्रावके'—देशविरते। तृतीया विरते—सर्वविरते प्रमत्तेऽप्रमत्ते च। चतुर्थी संयोजनानामनन्तानुबन्धिनां विसंयोजने। पञ्चमी दर्शनमोहनीयत्रितयक्षपणे। षष्ठी चारित्रमोहनीयोपशमके। सप्तमी उपशान्तमोहनीये। अष्टमी मोहनीयक्षपके। नवमी क्षीणमोहे। दशमी सयोगिकेवलिनि। अयोगिकेवलिनि त्वेकादशीति। 'असंखगुणसेढी उदउ' त्ति—सर्वस्तोकं सम्यक्त्वोत्पादगुणश्रेण्यां दलिकम्। ततोऽपि देशविरतिगुणश्रेण्यामसंख्येयगुणम्, ततोऽपि सर्वविरतिगुणश्रेण्यामसंख्येयगुणम्। एवं तावद्वाच्यं यावदयोगिकेवलिगुणश्रेण्यां दलिकमसंख्येयगुणम्, तस्मात् प्रदेशोदयमप्याश्रित्य एता गुणश्रेणयो यथाक्रममसंख्येयगुणा वक्तव्याः। 'तव्विवरीओ कालो संखिज्जगुणसेढि'त्ति—सर्वास्वप्येतासु गुणश्रेणिषु कालस्तद्विपरीत उदयविपरीतः संख्येयगुणश्रेण्या। तद्यथा—अयोगिकेवलिगुणश्रेणिकालः सर्वस्तोकः। सयोगिकेवलिगुणश्रेणिकालः संख्येयगुणः। ततोऽपि क्षीणमोहगुणश्रेणिकालः संख्येयगुणः। एवं तावद्वाच्यं यावत्सम्यक्त्वोत्पादगुणश्रेणिकालः संख्येयगुणः। स्थापना। एषा सम्यक्त्वोत्पादगुणश्रेणिः पुनर्यथोत्तरमसंख्येयगुणदलिकाः कालतश्च संख्येयगुणहीनाः उपरिष्टाच्च पृथक्त्वेन यथोत्तरं विशाला विशालतराः। अथोच्येत—कथं दलिकं यथोत्तरमसंख्येयगुणं प्राप्यते ? उच्यते—सम्यक्त्वं ह्युत्पादयन् मिथ्यादृष्टिर्भवति, ततस्तस्य स्तोकं गुणश्रेणिदलिकम्। सम्यक्त्वोत्पत्तौ सत्यां पुनः प्राक्तनगुणश्रेण्यपेक्षयाऽसंख्येयगुणदलिका गुणश्रेणिः, विशुद्धत्वात्। ततो देशविरतस्य गुणश्रेणिरसंख्येयगुणदलिका, सम्यग्दृष्ट्यपेक्षया देशविरतस्यातिविशुद्धत्वात्। ततोऽपि सर्वविरतस्य गुणश्रेणिरसंख्येयगुणदलिका, देशविरतात्सर्वविरतस्य विशुद्धतरत्वात्।

उदयः
एकादशगुणश्रेणयः

ततोऽपि संयतस्यानन्तानुबन्धिनां विसंयोजने गुणश्रेणिरसंख्येयगुणदलिका, तस्यातिविशुद्धतरत्वात्। एवमुत्तरोत्तरविशुद्धिप्रकर्षवशाद्यथोत्तरमसंख्येयगुणदलिका भावनीया ॥८-९॥

(उ०)--कृता साधनादिप्ररूपणा। अथ स्वामित्वमभिधेयं। तच्च द्विधा-उत्कृष्टप्रदेशोदयस्वामित्वं,जघन्यप्रदेशोदयस्वामित्वं च। तत्रोत्कृष्टप्रदेशोदयं (प्रदेशोदयस्वामित्वं) प्रतिपिपादयिषुस्तदौपयिकीः संभवतीर्गुणश्रेणीः सर्वा अपि निरूपयति-इहैकादश गुणश्रेणयः। तद्यथा-सम्यक्त्वोत्पादे प्रथमा गुणश्रेणिः १। द्वितीया श्रावके देशविरते २। तृतीया विरते सर्वविरते प्रमत्तेऽप्रमत्ते च ३। चतुर्थी संयोजनाविनाशेऽनन्तानुबन्धिनां विसंयोजने ४। पञ्चमी दर्शनमोहनीयत्रितयक्षपके ५। षष्ठी चारित्रमोहनीयोपशमके ६। सप्तमी उपशान्तमोहे ७। अष्टमी मोहनीयक्षपके ८। नवमी क्षीणमोहे ९। दशमी सयोगिकेवलिनि १०। एकादशी त्वयोगिकेवलिनीति ११। अत्र यथोत्तर प्रदेशतः श्रेणिरसङ्ख्येयगुणा। तथाहि-सर्वस्तोकं सम्यक्त्वोत्पादगुणश्रेण्यां दलिकं, ततोऽपि देशविरतिगुणश्रेण्यामसङ्ख्येयगुणं, ततोऽपि सर्वविरतिगुणश्रेण्यामसंख्येयगुणं, एवं तावद्वाच्यं यावदयोगिकेवलिगुणश्रेण्यां दलिकमसंख्येयगुणम्। अत एवोदयः प्रदेशोदयोऽप्येतासु गुणश्रेणिषु यथोत्तरमसंख्येयगुणो वाच्यः। तथा सर्वास्वप्येतासु गुणश्रेणिषु कालस्तद्विपरीतः-उदयक्रमविपरीतः 'संखिज्जगुणसेढि' त्ति-संख्येयगुणश्रेण्या वाच्यः। तथाहि-अयोगिकेवलिगुणश्रेणिकालः सर्वस्तोकः, ततः सयोगिकेवलिगुणश्रेणिकालः संख्येयगुणः, ततोऽपि क्षीणमोहगुणश्रेणिकालः संख्येयगुणः, एवं तावत्पश्चानुपूर्व्या वक्तव्यं यावत्सम्यक्त्वोत्पादगुणश्रेणिकालः संख्येयगुणः। स्थापना। एषा सम्यक्त्वोत्पादगुणश्रेणिः शेषाश्च यथोत्तरमसंख्येयगुणदलिकाः कालतश्च संख्येयगुणहीना उपरिष्टाच्च पृथुत्वेन यथोत्तर विशाला विशालतरा हृदि व्यवस्थाप्य भावनीयाः। स्यादेतत्, कथं दलिकं यथोत्तरमसंख्येयगुणं प्राप्यते? उच्यते-

सम्यक्त्वमुत्पादयन्मिथ्यादृष्टिर्भवति, ततस्तस्य मन्दविशुद्धिकत्वात्स्तोकं गुणश्रेणिदलिकं, सम्यक्त्वोत्पत्तौ सत्यां पुनर्विशुद्धत्वात्माक्तनगुणश्रेण्यपेक्षयाऽसंख्येयगुणदलिका गुणश्रेणिः। ततो देशविरतस्य गुणश्रेणिरसंख्येयगुणदलिका, सम्यग्दृष्ट्यपेक्षया देशविरतस्यातिविशुद्धत्वात्। ततोऽपि सर्वविरतस्य गुणश्रेणिरसंख्येयगुणदलिका, देशविरतात्सर्वविरतस्य विशुद्धतरत्वात्। ततोऽपि संयतस्य सतोऽनन्तानुबन्धिनां विसंयोजने गुणश्रेणिरसंख्येयगुणदलिका, तस्यातिविशुद्धतरत्वात्। एवमुत्तरोत्तरविशुद्धिप्रकर्षवशाद्यथोत्तरमसंख्येयगुणदलिकता भावनीया। यथाक्रमं विशुद्धिप्रकर्षादेव क्रमशः संख्येयगुणहीनान्तर्मुहूर्त्तवेद्यास्वेतासु जीवाः क्रमेणासंख्यगुणनिर्जरा उच्यन्ते॥

गुणसेढीणं परूवणा कया। इयाणिं का गुणसेढी काते गतीते भवती तं निरूवणत्थं भण्णति—

**तिन्नि वि पढमिल्लाओ मिच्छत्तगए वि होज्ज अन्नभवे। पगयं तु गुणियकम्मे, गुणसेढीसीसगाणुदये ॥१०॥**

(चू०)—'तिन्नि वि पढमिल्लाओ मिच्छत्तगए वि हुज्ज अन्नभवे'त्ति—संमत्तुप्पादगुणसेढी देसविरयगुणसेढी अहापमत्तसंजयगुणसेढी य एया तिन्निवि पढमिल्लीओ गुणसेढीतो 'मिच्छत्तगए वि होज्ज अन्नभवे'त्ति—मिच्छत्तं गंतूण अप्पसत्थं मरणेण मओ गुणसेढिरतियदलियं परभवगतो वि किंचिकालं वेतिज्जा। सेसासु गुणसेढीसु खीणासु केसिं व अपसत्थमरणं होज्जा, अज्झीणे णत्थि। 'पगयं तु गुणियकम्मे गुणसेढीसीसगाणुदए'त्ति—उक्कोसपदेसुदयसामित्ते गुणियकम्मंसिगेण गुणसेढीसीसोदए वट्टमाणेणं अहिगारो ॥१०॥

(मलय०)—संप्रति का गुणश्रेणिः कस्यां गतौ प्राप्यत इत्येतन्निरूपणार्थमाह—'तिन्नि'त्ति—आद्यास्तिस्रो गुणश्रेणयः सम्यक्त्वोत्पाददेशविरतिसर्वविरतिनिमित्ता झटित्येव मिथ्यात्वं गतस्य अप्रशस्तेन च मरणेन झटित्येव मृतस्य अन्यभवे नारकादिरूपपरभवे कि-

श्चित्कालमुदयमाश्रित्य प्राप्यन्ते। शेषास्तु गुणश्रेणयः परभवे नारकादिरूपे न प्राप्यन्ते। नारकादिभवो हि अप्रशस्तमरणेन प्राप्यते। न च शेषासु गुणश्रेणिषु सर्वास्वप्रशस्तमरणसंभवः, किंतु क्षीणास्वेव। तथा चोक्तं—"जत्ति गुणाओ पडिए मिच्छत्तगयम्मि आइमा तिन्नि। लब्भंति न सेसाओ, जं क्षीणासु असुभमरणं" ॥ तथा प्रकृतमत्र उत्कृष्टप्रदेशोदयस्वामित्वे गुणितकर्मांशेन गुणश्रेणीशिरसामुदये वर्तमानेन ॥१०॥

(उ०)—अथ का गुणश्रेणिः कस्यां गतौ प्राप्यत इत्येतन्निरूपयिषुराह--आद्यास्तिस्रो गुणश्रेणयः सम्यक्त्वोत्पाददेशविरतिसर्वविरतिनिमित्ता झटित्येव मिथ्यात्वं गतस्याप्रशस्तमरणेन च झटित्येव मृतस्यान्यभवेऽपि नारकादिरूपपरभवेऽपि किञ्चित्कालमुदयमाश्रित्य लभ्येयुः। शेषास्तु गुणश्रेणयो नारकादिरूपपरभवे न प्राप्यन्ते, नारकादिभवप्राप्तेरप्रशस्तमरणेनैव संभवात्, न च शेषासु गुणश्रेणिषु सर्वास्वप्रशस्तमरणसंभवः किं तु क्षीणास्वेव। तथा चोक्तं चन्द्रर्षिपूज्यैः पञ्चसंग्रहे—"जत्ति गुणाओ पडिए मिच्छत्तगयम्मि आइमा तिन्नि। लब्भन्ति न सेसाओ जं क्षीणासु असुभमरणं" ॥ तथाऽत्र तूत्कृष्टप्रदेशोदयस्वामित्वे प्रकृतं गुणितकर्मांशेन गुणश्रेणीशिरसामुदये वर्तमानेन ॥ १० ॥

आवरणविग्घमोहाण, जिणोदइयाण वावि नियगंते। लहुखवणाए ओही-णणोहिलद्धिस्स उक्कस्सो ॥११॥

(चू०)—'आवरणविग्घमोहाण जिणोदइयाण वा वि नियगंते लहुखवणाए'त्ति—णाणंतरायदसगं दंसणचउक्कं एएसिं चउद्दसण्हं कम्माणं गुणियकंमंसिगो मणुस्सो लहुखवणाए'त्ति—लहुमेव खवणाते अब्भुट्ठितो। कहं? भण्णइ—अट्ठवरिसगो संजमं पडिवन्नो ततो अंतोमुहुत्तेण खवणाए अब्भुट्ठितो तस्स छउमत्थचरिमसमते गुणसेढीसीसए

वट्टमाणस्स उक्कोसपदेसुदतो। 'ओहीणणोहिलद्धिस्स उक्कसो'त्ति–ओहिदुगस्स जस्स ओहिणाणलद्धी णत्थि तस्सुक्कोसगो पदेसुदतो भवति, ओहिनाणं उप्पाएतस्स बहुगा पोग्गला खिज्जंतित्ति काउं, लहुखवगग्गहणं चिरं अच्छंतस्स पोग्गला खिज्जंतित्ति। 'मोहाणं'ति–संमत्तस्स चउण्हं संजलणाणं तिण्हं वेयाणं तेसिं अट्ठण्हं खवगस्स गुणियकंमंसिगस्स अप्पप्पणो उदयचरिमसमते वट्टमाणस्स उक्कोसतो पदेसुदओ। 'जिणोदयिगाण वा वि'त्ति–उरालियसत्तगतेजतिगसत्तगछसंट्ठाणपढमसंघयणं वन्नादी वीसा अगुरुलहुगउवघाय (पराघाय) विहायगतिदुगं पत्तेयं थिराथिरसुभासुभणिमिणमिति एएसि बावन्नाए कम्माणं गुणियकंमंसिगस्स सजोगिकेवलिचरिमसमए वट्टमाणस्स उक्कोसतो पदेसुदओ। वेयणियमणुयगतिमणुयाउपंचेंदियजातितसबायरपज्जत्तगसुभगआएज्जजसकित्तितित्थकरणामउच्चागोयाणं एएसिं बारसण्हं कम्माणं अजोगिचरिमसमते उक्कोसओ पदेसुदतो, णियग्गंतसद्दो लहुखवणासद्दो य सव्वेसिं सामन्नं अप्पप्पणो अंते गुणसेढी सीसं ति काउं अंतग्गहणे ॥११॥

(मलय०)—'आवरण'त्ति–आवरणं–पञ्चप्रकारं ज्ञानावरणं, चतुष्प्रकारं दर्शनारणं, 'विग्घ'त्ति पञ्चप्रकारमन्तरायं। एतासां चतुर्दशप्रकृतीनां लघुक्षपणया शीघ्रक्षपणार्थं, अभ्युद्यतस्य। द्विविधा हि क्षपणा–लघुक्षपणा, चिरक्षपणा च। तत्र योऽष्टवार्षिक एव सप्तमासाभ्यधिकः संयमं प्रतिपन्नः, तत्प्रतिपत्त्यनन्तरं चान्तर्मुहूर्तेन क्षपकश्रेणिमारभते, तस्य या क्षपणा सा लघुक्षपणा। यस्तु प्रभूतेन कालेन संयमं प्रतिपद्यते। संयमप्रतिपत्तेरप्यूर्ध्वं प्रभूतेन कालेन क्षपकश्रेणिमारभते, तस्य या क्षपणा सा चिरक्षपणा। तया च प्रभूताः पुद्गलाः

परिसटन्ति, स्तोका एव च शेषीभवन्ति, ततो न तया उत्कृष्टः प्रदेशोदयो लभ्यते, तत उक्तं लघुक्षपणयाऽभ्युत्थितस्येति । तस्य गुणितकर्मांशस्य क्षीणमोहगुणस्थानकचरमसमये गुणश्रेणीशिरसि वर्तमानस्योत्कृष्टः प्रदेशोदयो भवति । नवरं 'ओहीणाणोहिलद्धिस्स' त्ति-अवध्योरवधिज्ञानावरणावधिदर्शनावरणयोरनवधिलब्धिकस्यावधिलब्धिरहितस्य क्षपणायोत्थितस्योत्कृष्टः प्रदेशोदयो वाच्यः । अवधिज्ञानं ह्युत्पादयतो बहवः पुद्गलाः परिसटन्ति-क्षीयन्ते ततो नावधियुक्तस्योत्कृष्टप्रदेशोदयलाभ इत्यनवधिलब्धियुक्तस्येत्युक्तम्। तथा मोहानां-मोहनीयप्रकृतीनां सम्यक्त्वसंज्वलनचतुष्टयवेदत्रयाख्यानामष्टानां गुणितकर्मांशस्य क्षपकस्य स्वस्वोदयचरमसमये उत्कृष्टः प्रदेशोदयः । तथा जिने केवलिनि उदयो यासां ता जिनोदयिकास्तासां मध्ये औदारिकसप्तकतैजससप्तकसंस्थानषट्कप्रथमसंहननवर्णादि-विंशतिपराघातोपघातागुरुलघुविहायोगतिद्विकप्रत्येकस्थिरास्थिरशुभाशुभनिर्माणरूपाणां द्विपञ्चाशत्प्रकृतीनां गुणितकर्मांशस्य सयोगि-केवलिगुणस्थानकचरमसमये उत्कृष्टः प्रदेशोदयः । सुस्वरदुःस्वरयोः स्वरनिरोधकाले, उच्छ्वासनाम्नः पुनरुच्छ्वासनिरोधकाले, तथा-ऽन्यतरवेदनीयमनुष्यगतिमनुष्यायुःपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरोच्चैर्गोत्राणां द्वादशप्रकृतीनां गुणितकर्मांशस्यायोगिकेवलिनश्चरमसमये उत्कृष्टः प्रदेशोदयः ॥११॥

(उ०)—उत्कृष्टप्रदेशोदयस्वामित्व एव विवेकमाह--आवरणस्य पञ्चप्रकारस्य ज्ञानावरणस्य चतुष्प्रकारस्य च दर्शनावरणस्य विघ्नस्य पञ्चप्रकारस्यान्तरायस्य सर्वसंख्ययाऽऽसां चतुर्दशप्रकृतीनां लघुक्षपणयाऽभ्युत्थितस्य तस्य गुणितकर्मांशस्य क्षीणमोहगुणस्थानकचरमसमये गुणश्रेणीशिरसि वर्तमानस्योत्कृष्टः प्रदेशोदयः । इह द्विधा क्षपणा--लघुक्षपणा चिरक्षपणा च । तत्र योऽष्टवार्षिक एव सप्तमासाभ्यधिकः संयमं प्रतिपन्नस्तत्प्रतिपत्त्यनन्तरं चान्तर्मुहूर्तेन क्षपकश्रेणिमारभते तस्य या क्षपणा सा लघुक्षपणा । यस्तु प्रभूतकालं गृह-

वासमनुभूय संयमं प्रतिपद्यते, संयमप्रतिपत्तेरप्यूर्ध्वं प्रभूतेन कालेन क्षपकश्रेणिं करोति तस्य या क्षपणा सा चिरक्षपणा। तया च बहवः पुद्गलाः परिशटन्ति, स्तोका एव चावशिष्यन्ते, ततो न तयोरुत्कृष्टः प्रदेशोदयो लभ्यते, ततो लघुक्षपणयाऽभ्युत्थितस्येत्युक्तम्। अत्र चायं विशेषो ज्ञेयः—अवध्योरवधिज्ञानावरणावधिदर्शनावरणयोरनवधिलब्धिकस्यावधिलब्धिरहितस्य लघुक्षपणयाऽभ्युत्थितस्योत्कृष्टः प्रदेशोदयः। अवधिज्ञानं ह्युत्पादयतो बहवः पुद्गलाः परिक्षीयन्ते ततो नावधियुक्तस्योत्कृष्टप्रदेशोदयलाभ इत्यनवधिलब्धिकस्येत्युक्तम्। तथा मोहानां—मोहनीयप्रकृतीनां सम्यक्त्वमोहनीयसंज्वलनचतुष्टयवेदत्रयरूपाणामष्टानां लघुक्षपणयोत्थितस्य गुणितकर्मांशस्य क्षपकस्य स्वस्वोदयचरमसमये उत्कृष्टः प्रदेशोदयः। तथा जिने केवलिन्युदयो यासां ता जिनोदयिकास्तासु मध्ये औदारिकसप्तकतैजससप्तक-संस्थानषट्कप्रथमसंहननवर्णादिविंशतिपराघातोपघातागुरुलघुविहायोगतिद्विकप्रत्येकस्थिरास्थिरशुभाशुभनिर्माणरूपाणां द्विपञ्चाशत्प्रकृतीनां गुणितकर्मांशस्य सयोगिकेवलिगुणस्थानकचरमसमये उत्कृष्टः प्रदेशोदयः। सुस्वरदुःस्वरयोः स्वरनिरोधकाले, उच्छ्वासनाम्न उच्छ्वासनिरोधकाले, तथाऽन्यतरवेदनीयमनुष्यगतिमनुष्यायुःपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरोच्चैर्गोत्राणां द्वादशप्रकृतीनां गुणितकर्मांशस्यायोगिकेवलिनश्चरमसमये उत्कृष्टः प्रदेशोदयः ॥११॥

**उवसंतपढमगुणसेढीए निद्दादुगस्स तस्सेव। पावइ सीसगमुदयं ति जायदेवस्स सुरनवगे ॥१२॥**

(चू०)—'उवसंतपढमगुणसेढीए निद्दादुगस्स'त्ति—उवसंतकसायस्स अप्पप्पणो गुणसेढीए सीसे वट्टमाणस्स निद्दापयलाणं उक्कोसपदेसुदतो, 'तस्सेव पावति सीसगमुदयं ति जायदेवस्स सुरणवगे'त्ति-तस्सेव उवसंतस्स, पावति सीसगमुदयं ति अप्पप्पणो पढमगुणसेढीए सीसगं से काले पावतित्ति, जायदेवस्सत्ति उप्पन्नदेवस्स सुरन-

॥१३॥

वगत्ति वेउव्वियसत्तगं देवगतिदेवाणुपुव्वीगं उक्कोसतो पएसउदओ ॥१२॥

(मलय०)—'उवसंत'त्ति–उपशान्तकपायस्यात्मीयप्रथमगुणश्रेणीशिरसि वर्तमानस्य गुणितकर्मांशस्य निद्राद्विकस्य–निद्राप्रचलयो-
रुत्कृष्टः प्रदेशोदयः । तथा तस्यैवोपशान्तकपायस्यात्मीयप्रथमगुणश्रेणीशिर्षकोदयमनन्तरसमये प्राप्स्यतीति तस्मिन् पाश्चात्ये समये
जातदेवस्य, ततः स्वप्रथमगुणश्रेणीशिरसि वर्तमानस्य सुरनवकस्य–वैक्रियसप्तकदेवद्विकरूपस्योत्कृष्टः प्रदेशोदयः ॥१२॥

(उ०)—उपशान्तकपायस्य स्वप्रथमगुणश्रेणीशिरसि वर्तमानस्य गुणितकर्मांशस्य निद्राद्विकस्य निद्राप्रचलालक्षणस्योत्कृष्टः प्रदेशोदयः । तथा तस्यैवोपशान्तकपायस्य 'पावइ' त्ति–प्राप्स्यति, 'सीसगमुदयं ति' मकारो लाक्षणिकः, स्वप्रथमगुणश्रेणीशीर्षकोदयं यदव्यवहितोत्तरसमये तत्समय इत्यर्थः, जातदेवस्य देवत्वेनोत्पन्नस्य, स्वप्रथमगुणश्रेणीशिरसि वर्तमानस्य सुरनवकस्य–वैक्रियसप्तकदेव-द्विकरूपस्योत्कृष्टः प्रदेशोदयः ॥१२॥

मिच्छत्तमीसणंताणुवंधिअसमत्तथीणगिद्धीणं । तिरिउदएगंताण य बिइया तइया य गुणसेढी ॥१३॥

(चू०)—'मिच्छत्तमीसणंताणुवंधिअसमत्तथीणगिद्धिणं तिरिउदएगंताण य वितिया ततिया य गुणसेढी'त्ति । मिच्छत्तमीसअणंताणुवंधीणं थीणगिद्धितिग एएसिं कंमाणं वितिया ततिया य गुणसेढीत्ति देसविरयगुणसेढी संजयगुणसेढी य, कहं ? भण्णइ–देसविरएण गुणसेढी कया पुणो सो चेव संजमं पडिवन्नो पुणो संजमं पडुच्च संजयगुणसेढी देसविरयगुणसेढीए उवरि कया, दोण्हं पि गुणसेढीसीसगाइं एत्थ जंमि समए मिलिताणि, ठवणा, तत्थ दलियं सव्वबहुयं हेट्ठुवरि थोवं, ततो मिच्छत्तं गयस्स मिच्छत्तअणंताणुवंधीणं तस्स देसविरतिवि-

रतिगुणसेढीणं सीसगार्तिं(गं)पत्तस्स उक्कोसो पदेसुदओ। सम्मामिच्छत्तस्स सम्मामिच्छत्तगयस्स गुणसेढीणं सीसे वट्टमाणस्स उक्कोसो पदेसुदनो। थीणगिद्धितिगस्स मिच्छत्तं गयस्स अगयस्स वा, पमत्तसंजते वि लब्भतित्ति वयणातो। 'तिरिउदएगंताण य'त्ति–एगिंदियबितिचउजातीते थावरसुहुमसाहारणाणि एयाणि सत्त एगंततिरियग्गहणेण गहियाणि, अपज्जत्तगणामाए य, एएसिं अट्ठण्हं कम्माणं जहा मिच्छत्तस्स भणितो तहा भाणियव्वो। नवरिं मिच्छत्तं गंतूण मरित्तु तं नामधियगेसु उप्पन्नस्स देसविरयविरतीगुणसेढीसीसगे वट्टमाणस्स उक्कोसो पदेसुदतो ॥१३॥

(मलय०)—'मिच्छत्त'त्ति–इह केनचिद्देशविरतेन सता देशविरतिप्रत्यया गुणश्रेणिः कृता। ततः स संयमं प्रतिपन्नः। ततः संयमप्रत्यया गुणश्रेणिः कृता। ततो यस्मिन् काले द्वयोरपि गुणश्रेण्योः शिरसी एकत्र मिलिते तस्मिन् काले वर्तमानो गुणितकर्मांशः कश्चिन्मिथ्यात्वं प्रतिपद्यते तस्य तदा मिथ्यात्वानन्तानुबन्धिनामुत्कृष्टः प्रदेशोदयः। यदि पुनः सम्यग्मिथ्यात्वं प्रतिपन्नस्तर्हि सम्यग्मिथ्यात्वस्य। स्त्यानर्द्धित्रिकस्य पुनर्मिथ्यात्वं गतस्याऽगतस्य वा उत्कृष्टः प्रदेशोदयो वाच्यः, यतः स्त्यानर्द्धित्रिकस्य प्रमत्तसंयतेऽप्युदयः प्राप्यते। तथा तिर्यक्ष्वेव उदय एकान्तेन यासां तास्तिर्यगुदयैकान्ताः–एकद्वित्रिचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणनामानस्तासां, अपर्याप्तनाम्नश्च, तिर्यग्भवप्राप्तौ सत्यां देशविरतिसर्वविरतिगुणश्रेणीशिरसोरेकत्र योगे वर्तमानस्य मिथ्यादृष्टेः स्वस्वोदये वर्तमानस्योत्कृष्टः प्रदेशोदयः ॥१३॥

(उ०)—मिथ्यात्वमिश्रानन्तानुबन्धिनां 'असमत्त' त्ति–अपर्याप्तकनाम्नः स्त्यानगृद्धित्रिकस्य तथा तिर्यक्ष्वेवोदय एकान्तेन

यासा नास्तिर्यगेकान्तोदयाः एकद्वित्रिचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणाख्याः प्रकृतयस्तासां सर्वसङ्ख्यया सप्तदशप्रकृतीनां द्वितीया तृतीया च गुणश्रेणिर्यदा शिरसा मिथो मिलति तदा तयोर्द्वयोर्गुणश्रेणीशिरसोरेकत्र योगे वर्तमानस्य मिथ्यादृष्टेः स्वस्वोदये उत्कृष्टः प्रदेशोदयः । इयमत्र भावना—इह केनचिद्देशविरतेन सता देशविरतिप्रत्यया गुणश्रेणिः कृता, ततः स संयमं प्रतिपेदे, ततः संयमप्रत्यया गुणश्रेणिः कृता, ततो यस्मिन् काले द्वयोरपि गुणश्रेण्योः शिरसी एकत्र मिलिते तस्मिन् काले वर्तमानो गुणितकर्मांशः कश्चिन्मिथ्यात्वं गतस्तदा तस्य मिथ्यात्वानन्तानुबन्धिनामुत्कृष्टः प्रदेशोदयः, यदि पुनः सम्यग्मिथ्यात्वं गतस्तदा सम्यग्मिथ्यात्वस्य । स्त्यानर्द्धित्रिकस्य तु मिथ्यात्वं गतस्यागतस्य वोत्कृष्टः प्रदेशोदयो वाच्यः, प्रमत्तसंयतेऽपि तत्रयोदयः प्राप्यत इति कृत्वा । तिर्यगुदयैकान्तानामपर्याप्तकनाम्नश्च प्राक् प्रवर्तितगुणश्रेणिद्वयस्य सम्यक्त्वादिगुणेभ्यः प्रतिपत्य मिथ्यात्वं गत्वाऽप्रशस्तमरणेन मृत्वा तिर्यग्भवप्राप्तौ सत्या देशविरतिसर्वविरतिगुणश्रेणीशिरसोरेकत्र योगे स्वस्वोदये यथायोगं वर्तमानस्योत्कृष्टः प्रदेशोदयः ॥१३॥

**अंतरकरणं होहित्ति जायदेवस्स तं मुहुत्तंतो । अट्ठण्हकसायाणं छण्हं पि य नोकसायाणं ॥१४॥**

(चू०)—उवसमसेढी पडिवन्नस्स से य काले 'अंतरकरणं होहित्ति जायदेवस्स'त्ति उप्पन्नदेवस्स 'तं मुहुत्तंतो'-त्ति—कालगयसमयातो अंतोमुहुत्तं गंतूण, कहं ? भन्नइ—ततो कालं करेत्तु अंतोमुहुत्तेण गुणसेढीसीसपत्तस्स अप्पचक्खाणावरण४पच्चक्खाणावरणस्स४ वेयतिगवज्जाणं छण्हं णोकसायाणं एएसिं चोद्दसण्हं कंमाणं अप्पप्पणो गुणसेढीसीसवट्टमाणस्स उक्कोसपदेसुदओ ॥१४॥

(मलय०)—'अंतरकरणं'ति—इह कश्चित् उपशमश्रेणिं प्रतिपन्नोऽनन्तरसमयेऽन्तरकरणं भविष्यतीति, 'तं' ति—तस्मिन् पाश्चात्ये समये

कालं कृत्वा देवो जातः, तस्य देवस्योत्पत्त्यनन्तरमन्तर्मुहूर्तात्परतो गुणश्रेणीशिरसि वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकवेदत्रिकवर्जषट्नोकषायाणामुत्कृष्टः प्रदेशोदयः ॥१४॥

(उ०)—इह कस्यचिदुपशमश्रेणिं प्रतिपन्नस्यान्तरकरणं भविष्यति यदनन्तरसमये इति 'तं'ति–तस्मिन् पाश्चात्यसमये जातदेवस्य देवत्वेनोत्पन्नस्योत्पत्त्यनन्तरमन्तर्मुहूर्तात्परतो गुणश्रेणिशिरसि वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणाख्यानामष्टानां कषायाणां वेदत्रयवर्जानां षण्णां च नोकषायाणामुत्कृष्टः प्रदेशोदयः। इहान्तर्मुहूर्त्तात्परत एव गुणश्रेणीशिरः प्राप्यत इति 'जायदेवस्स तं मुहुत्तंतो' इत्युक्तम् ॥ १४ ॥

**हस्सठिइं बंधित्ता अद्धाजोगाइठिइनिसेगाणं । उक्कस्सपए पढमोदयम्मि सुरनारगाऊणं ॥१५॥**

(चू०)—'हस्सट्ठिइं' जहन्नट्ठितिं बंधित्ता 'अद्धाजोगादिट्ठितिणिसेगाणं उक्कस्सपएस'त्ति–उक्कोसियाए आउगबंधगद्धाए उक्कोसिएणं जोएणं 'आदिट्ठितिणिसेगं'ति पढमट्ठितिए बहुगा पोग्गला णिक्खिवति, 'उक्कस्सपए' त्ति–तिण्हं पि अद्धाजोगादीणं पत्तेयं पत्तेयं उक्कोससद्दो भाणियव्वो। एएण विहिणा नारयदेवाउयं च बंधित्ता कालगयस्स 'पढमोदयंमि सुरनारयाऊणं'ति पढमसमए वेइतस्स देवनेरइयाउगाणं उक्कोसपदेसुदतो ॥१५॥

(मलय०)—'हस्सठिइ'त्ति। 'अद्धा'–बन्धकालः, 'योगो'–मनोवाक्कायनिमित्तं वीर्यम्, आदिस्थितिः–प्रथमा स्थितिः, तस्यां दलिकनिक्षेपः आदिस्थितिदलिकनिक्षेपः, एतेषामुत्कृष्टे पदे सति, किमुक्तं भवति ? उत्कृष्टेन बन्धकालेन उत्कृष्टे योगे वर्तमानो 'ह्रस्वां' जघन्यां स्थितिं बद्ध्वा, प्रथमस्थितौ च दलिकनिक्षेपमुत्कृष्टं कृत्वा मृतः सन् देवो नारको वा जातः, तस्य 'प्रथमोदये'–प्रथमस्थित्युदये वर्त-

मानस्य देवस्य देवायुषो नारकस्य नारकायुष उत्कृष्टप्रदेशोदयः ॥१५॥

(उ०)—अद्धा बन्धकालः, योगो मनोवाक्कायनिमित्तं वीर्यं, आदिस्थितौ प्रथमस्थितौ निषेको दलिकनिक्षेपः, एतेषामुत्कृष्टपदे सति । किमुक्तं भवति ? उत्कृष्टेन बन्धकालेनोत्कृष्ट योगे वर्तमानो ह्रस्वां जघन्यां स्थितिं बद्ध्वा प्रथमस्थितौ चोत्कृष्टं दलिकनिक्षेपं कृत्वा मृतः सन् देवो नारको वा यो जातस्तस्य प्रथमोदये-प्रथमस्थित्युदये वर्तमानस्य देवस्य देवायुषो नारकस्य च नारकायुष उत्कृष्टः प्रदेशोदयः ॥ १५ ॥

**अद्धाजोगुक्कोसो वंधित्ता भोगभूमिगेसु लहुं। सव्वप्पजीवियं वज्जइत्तु ओवट्टिया दोण्हं ॥१६॥**

(चू०)—अद्धाते उक्कसिगाते आउगवंधगद्धाते जोगुक्कस्सेत्ति उक्कस्सगेण जोगेण मणुयतिरियाउगं वंधित्ता ततो कालं करेउं 'भोगभूमिगेसु'त्ति-तिरिएसु वा मणुएसु वा तिपलिओवमट्ठितितेसु उववण्णो। 'लहुं सव्वप्पजीवियं वज्जति'त्ति-ततो लहुं चेव सव्वप्पजीवियं'ति अंतोमुहुत्तं, अंतोमुहुत्तूणं सेसं सव्वं ओवट्टियं 'दोण्हं' ति-तिरियमणुयाउगाणं, जं समयं ओवट्टिज्जमाणा ओवट्टिता ताहे दोण्हवि उक्कोसतो पदेसुदओ भवति ॥१६॥

(मलय०)—'अद्ध'त्ति-उत्कृष्टे बन्धकाले उत्कृष्टे च योगे वर्तमानो भोगभूमिगेषु तिर्यक्षु मनुष्येषु वा विषये कश्चित्तिर्यगायुः कश्चिन्मनुष्यायुः उत्कृष्टं त्रिपल्योपमस्थितिकं बद्ध्वा, लघु शीघ्रं च मृत्वा त्रिपल्योपमायुष्केष्वेकस्तिर्यक्ष्वपरो मनुष्येषु मध्ये समुत्पन्नः, तत्र च सर्वाल्पजीवितमन्तर्मुहूर्तप्रमाणं वर्जयित्वाऽन्तर्मुहूर्तमेकं धृत्वेत्यर्थः, शेषमशेषमपि स्वस्वायुरपवर्तयतः, ततोऽपवर्तनानन्तरं प्रथमसमये तयोस्तिर्यङ्मनुष्ययोर्यथासंख्यं तिर्यङ्मनुष्यायुषोरुत्कृष्टः प्रदेशोदयः ॥१६॥

(उ०)—उत्कृष्टे बन्धकाले उत्कृष्टे च योगे वर्तमानो भोगभूमिगेषु तिर्यक्षु मनुष्येषु वा विषये कश्चित्तिर्यगायुः कश्चिच्च मनुष्यायुरुत्कृष्टं त्रिपल्योपमस्थितिकं बद्ध्वा लघु शीघ्रं च मृत्वा त्रिपल्योपमायुष्केष्वेकस्तिर्यक्षु परो मनुष्येषु मध्ये समुत्पन्नः, तत्र च सर्वाल्पजीवितमन्तर्मुहूर्त्तप्रमाणं वर्जयित्वाऽन्तर्मुहूर्त्तमेकमायुस्तद्भवभोग्यत्वेन धृत्वेत्यर्थः, शेषमशेषमपि स्वस्वायुरपवर्त्तनाकरणेन तौ द्वावपवर्तयतः, ततोऽपवर्तनानन्तरप्रथमसमये तयोस्तिर्यङ्मनुष्ययोर्यथासंख्यं तिर्यङ्मनुष्यायुषोरुत्कृष्टः प्रदेशोदयः ॥ १६ ॥

**दूभगणाएज्जाजसगइदुगअणुपुव्वितिगसनीयाणं। दंसणमोहक्खवणे देसविरइविरइगुणसेढी ॥१७॥**

(चू०)—दूभगअणाएज्जाजसकित्तिनिरयगतितिरियगति 'अणुपुव्वीतिगं'त्ति–देवाणुपुव्वीरहिया तिन्नि आणुपुव्वीतो णीयागोयाणं एएसिं कम्माणं। असंजयसंमदिट्ठी दंसणमोहं खवेत्तुमाढत्तो गुणसेढिं करेति, ततो सो चेव देसविरतिं पडिवन्नो, ततो सो चेव विरतिं पडिवन्नो, एएसिं तिण्ह वि गुणसेढीतो तंमि अत्थि,ततो करणपरिसमत्तीते संकिलिट्ठो पुणो अविरतो जातो तस्स तिण्ह वि गुणसेढीणं सीसगसमागमे दूभगअणाएज्जअजसणीयागोयाणं एत्थ वि मणुसभवे उक्कोसो पदेसुदतो। अहवा पुव्वं बद्धाउगो णिरयगतीते उप्पन्नो तस्स दुभगअणातेयअजसनिरयदुगणीयागोयाणं उक्कोसतो पदेसुदतो तिण्हवि गुणसेढीणं सीसे वट्टमाणाणं। तिरियगतितिरियाणुपुव्वीणं सो चेव तिरिएसु उववण्णो तस्स वि तहेव उक्कोसओ पदेसुदतो। मणुयाणुपुव्वीते सो चेव मणुस्सेसु उववण्णो तस्स वि तहेव मणुयाणुपुव्वीए उक्कोसपदेसुदतो ॥१७॥

(मलय०)—'दूभग'त्ति। इहाविरतसम्यग्दृष्टिर्दर्शनमोहनीयत्रितयं क्षपयितुमभ्युद्यतो गुणश्रेणिं करोति। ततः स एव देशविरतिं

उदयः उत्कृष्टप्रदेशोदयस्वामित्वं

प्रतिपन्नस्ततः सर्वविरतिनिमित्तां गुणश्रेणिं करोति। ततः करण-
प्रतिपन्नस्ततः तन्निमित्तां गुणश्रेणिं करोति। ततः स एव सर्वविरतिं प्रतिपन्नस्ततः सर्वविरतिनिमित्तां गुणश्रेणिं करोति। ततः करणपरिसमाप्तौ सत्यां संक्लिष्टो भूत्वा पुनरप्यविरतो जातः। तस्य तिसृणामपि गुणश्रेणीनां शिरस्सु वर्तमानस्य तस्मिन्नेव भवे स्थितस्य दुर्भगानादेयायशःकीर्तिनीचैर्गोत्राणामुत्कृष्टः प्रदेशोदयः। अथ नरकेषु बद्धायुष्कत्वान्नारको जातस्तर्हि तस्य पूर्वोक्तानां नरकद्विकस-हितानामुत्कृष्टः प्रदेशोदयः। अथ तिर्यक्षूत्पन्नस्तर्हि तस्य पूर्वोक्तानां तिर्यग्द्विकसहितानामुत्कृष्टः प्रदेशोदयः। अथ मनुष्यो जातस्तर्हि मनुष्यानुपूर्वीसहितानामिति ॥१७॥

(उ०)—इहाविरतसम्यग्दृष्टिर्दर्शनमोहनीयत्रयं क्षपयितुमभ्युद्यतो गुणश्रेणिं करोति, ततः स एव देशविरतिं प्रपन्नस्तन्निमित्तां गुणश्रेणिं करोति, ततः स एव सर्वविरतिं प्रतिपन्नः सन् सर्वविरतिनिमित्तां गुणश्रेणिं करोति। ततः करणपरिसमाप्तौ सत्यां भूयोऽप्यविरतो जातः, तस्य क्षीणदर्शनमोहनीयत्रयस्य तृतीयस्यां गुणश्रेण्यां कृतायां प्रतिभग्नस्य संक्लेशवशेनाविरतस्य जातस्य तिसृणामपि गुणश्रेणीनां शिरस्सु वर्तमानस्य तस्मिन्नेव भवे स्थितस्य दुर्भगानादेयायशःकीर्तिनीचैर्गोत्राणामुत्कृष्टः प्रदेशोदयः। यदि चासौ नरकेषु बद्धायुष्कत्वान्नारको झटिति जातस्तदा तस्य पूर्वोक्तानां चतसृणां प्रकृतीनां नरकद्विकसहितानामुत्कृष्टः प्रदेशोदयः। अथ तिर्यक्षूत्पन्नस्तदा तस्य पूर्वोक्तानां तिर्यग्द्विकसहितानामुत्कृष्टः प्रदेशोदयः। अथ मनुष्यो जातस्तदा तासां मनुष्यानुपूर्वीसहितानामिति ॥ १७ ॥

**संघयणपंचगस्स य बिइयाईतिन्नि होंति गुणसेढी। आहारगउज्जोयाणुत्तरतणुअप्पमत्तस्स ॥१८॥**

(मू०)—'संघयणपंचगस्स य बिइयादीतिन्नि होंति गुणसेढी'त्ति—आदिमवर्जानां पंचण्हं संघयणाणं, 'बितिया-

तीतिन्नि'त्ति—देसविरयगुणसेढी विरयगुणसेढी अणंताणुबंधिउव्वलणगुणसेढी य देसविरतो सुविसुज्झंतो संजमं पडिवज्जति तस्स पढमा गुणसेढी, बितिया संजमं पडिवन्नस्स गुणसेढी, सो चेव विसुज्झंतो अणंताणुबंधिणो विसंजोएति, तिन्नि वि पूरितातो ततियगुणसेढिए, तातो तिन्नि वि गुणसेढीतो काउं तिण्ह वि गुणसेढीणं सीसगे वट्टमाणस्स पंचण्हं संघयणाणं उक्कोसतो पदेसुदओ। 'आहारगउज्जोयाणुत्तरतणुअप्पमत्तस्स'त्ति—आहारसत्तगउज्जोवाणं उत्तरवेउव्विए वट्टमाणो अपमत्तयं गतो तस्स पढमसेढीए सीसं पत्तस्स उक्कोसओ पदेसुदओ॥

(मलय०)—'संघयण'त्ति। इह कश्चिन्मनुष्यो देशविरतिं प्रतिपन्नः, ततः स देशविरतिप्रत्ययां गुणश्रेणिं करोति। ततः स एव विशुद्धिप्रकर्षवशतः सर्वविरतिं प्रतिपन्नः, ततः सर्वविरतिप्रत्ययां गुणश्रेणिं करोति, ततः स एव तथाविधविशुद्धिवशादनन्तानुबन्धिनां विसंयोजनायोत्थितः, ततस्तन्निमित्तां गुणश्रेणिं करोति। एवं द्वितीयादयस्तिस्रो गुणश्रेणयो भवन्ति। ताश्च कृत्वा तासां शिरस्सु वर्तमानस्य प्रथमसंहननवर्जानां पञ्चानां संहननानां यथायोग्यमुदयप्राप्तानामुत्कृष्टः प्रदेशोदयः। तथोत्तरतनौ उत्तरशरीरे आहारके वर्तमानस्याप्रमत्तभावं गतस्य संयतस्य प्रथमगुणश्रेणीशिरसि वर्तमानस्याहारकसप्तकोद्योतयोरुत्कृष्टः प्रदेशोदयः॥१८॥

(उ०)—प्रथमसंहननवर्जस्य शेषसंहननपञ्चकस्य द्वितीयाद्यास्तिस्रो गुणश्रेणयो मिथो मिलितशीर्षा उत्कृष्टप्रदेशोदयस्थानानि भवन्ति। इयमत्र भावना—इह कश्चिन्मनुष्यो देशविरतिं प्रतिपन्नः, ततः स देशविरतिप्रत्ययां गुणश्रेणिं करोति। ततः स एव विशुद्धिप्रकर्षवशतः सर्वविरतिं प्रतिपन्नः सन् सर्वविरतिप्रत्ययां गुणश्रेणिं करोति। ततः स एव तथाविधविशुद्धिवशादनन्तानुबन्धिनां विसंयोजनायोत्थितः सँस्तन्निमित्तां गुणश्रेणिं करोति। एवं द्वितीयाद्यास्तिस्रो गुणश्रेणयो मिलिता भवन्ति। ताश्च कृत्वा तासां

मस्तकेषु वर्तमानस्याप्रथमानां पञ्चानां संहननानां यथायोगमुदयप्राप्तानामुत्कृष्टः प्रदेशोदयः। तथोत्तरतनावाहारकशरीरे वर्तमानस्याप्रमत्तसंयतस्य प्रथमगुणश्रेणिशिरसि वर्तमानस्याहारकसप्तकोद्योतयोरुत्कृष्टः प्रदेशोदयः। उक्तं चान्यत्र–'आहारुज्जोयाणं अपमत्तो आइगुणसीसे' ॥ १८ ॥

**वेइंदिय थावरगो कम्मं काऊण तस्समं खिप्पं। आयावस्स उ तव्वेइ पढमसमयम्मि वट्टंतो ॥१९॥**

(चू०)—गुणियकंमंसिगो पंचेंदितो बेतिंदिओ जाओ 'कम्म काऊण तस्समं'ति–तस्स तप्पातोग्गं ट्ठितिं मोत्तूणं सेसं कम्मं ओवट्टेति, ओवट्टिता ततो एगिंदितो जातो तत्थ वि एगिंदियसमं ति ट्ठितिं करेति। 'खिप्पं'ति–लहुमेव सरीरपज्जत्तीए पज्जत्तगो जातो तस्स 'आयावस्स उ तव्वेइ'त्ति–आयावनामं जे वेदेति ते तव्वेतिणो वुच्चंति। केति? भण्णइ–खरबायरपुढविकातिया, तत्थ पढमसमयातो चेव आयावनामं वेदेमाणस्स आयावनामाते उक्कोसओ पदेसुदतो भवति। बेतिंदियग्गहणं बेइंदियट्ठितिं लहुगेव एगिंदितो तप्पाउग्गं करेति। तेतिंदियादीणं ट्ठितिं एगिंदितो लहुं तप्पातोग्गं काऊ ण तरति तेण तेइंदियाइणो ण गहिया ॥१९॥

(मलय०)—'वेइंदिय'त्ति–गुणितकर्मांशः पञ्चेन्द्रियः सम्यग्दृष्टिर्जातः, ततः सम्यक्त्वनिमित्तां गुणश्रेणिं कृतवान्। ततस्तस्या गुणश्रेणितः प्रतिपतितो मिथ्यात्वं गतः। गत्वा च द्वीन्द्रियमध्ये समुत्पन्नः। तत्र च द्वीन्द्रियप्रयोग्यां स्थितिं मुक्त्वा शेषां सर्वामप्यपवर्तयति। ततस्ततोऽपि मृत्वा एकेन्द्रियो जातः। तत्रैकेन्द्रियसमां स्थितिं करोति, शीघ्रमेव च शरीरपर्याप्त्या पर्याप्तः, तस्य तद्वेदिनः–आतपवेदिनः खरबादरपृथ्वीकायिकस्य शरीरपर्याप्त्यनन्तरं प्रथमसमये आतपनाम्न उत्कृष्टः प्रदेशोदयः, एकेन्द्रियो द्वीन्द्रियस्थितिं

झटित्येव स्वयोग्यां करोति न त्रीन्द्रियादिस्थितिमिति द्वीन्द्रियग्रहणम् ॥१९॥

(उ०)—द्वीन्द्रियस्थावरो नाम यो गुणितकर्मांशः पञ्चेन्द्रियः सम्यग्दृष्टिः सन् सम्यक्त्वनिमित्तां गुणश्रेणिं कृत्वा तस्या गुणश्रेणीतः प्रतिपत्य मिथ्यात्वं गत्वा द्वीन्द्रियमध्ये समुत्पन्नः, तत्र च द्वीन्द्रियप्रायोग्यां स्थितिं मुक्त्वा शेषां सर्वामपवर्तितवान्, ततोऽपि मृत्वा एकेन्द्रियो जातः, तत्र च कर्मैकेन्द्रियसमस्थितिकं करोति, शीघ्रमेव च शरीरपर्याप्तिं निष्ठां नयति। तस्य तद्वेदिनः—आतपवेदिनः खरबादरपृथ्वीकायिकस्य शरीरपर्याप्त्यनन्तरं प्रथमे समये आतपनाम्न उत्कृष्टः प्रदेशोदयः। एकेन्द्रियो द्वीन्द्रियस्थितिं झटित्येव स्वयोग्यां करोति, न त्रीन्द्रियादिस्थितिमिति द्वीन्द्रियग्रहणम् ॥ १९ ॥

उदयः जघन्यप्रदेशोदयस्वामित्वम्

भणिओ उक्कोसपदेसुदतो, इयाणिं जहन्नपएसुदओ भण्णइ—

**पगयं तु खवियकम्मे जहन्नसामी जहन्नदेवठिइ। भिन्नमुहुत्ते सेसे मिच्छत्तगतो अतिकिलिट्ठो ॥२०॥**

**कालगएगिंदियगो पढमे समये व मइसुयावरणे। केवलदुगमणपज्जवचक्खुअचक्खूण आवरणा ॥२१॥**

(चू०)— 'पगयं'–अहिगारो 'खवियकम्मे'त्ति–खवियकम्मंसिगो, कंमि ? भन्नइ–'जहन्नसामि'त्ति–जहन्नसामित्ते खवियकम्मंसिगेणं अहिगारो। 'जहन्नदेवट्ठिति'त्ति–दसवाससहस्सेसु देवेसु उववन्नो खवियकम्मंसिगो जहन्नट्ठितिगेसु देवेसु उववज्जतित्ति काउं अंतोमुहुत्तेण संमत्तं पडिवन्नो दसवाससहस्साइ देसूणाति संमत्तं अणुपालित्ता 'भिन्नमुहुत्ते सेसे मिच्छत्तं गतो अतिकिलिट्ठो'त्ति–अंतोमुहुत्तावसेसे भिच्छत्तं गतो अच्चंतसंकिलिट्ठो उक्कोस-

कालगतो । 'कालगए एगिं-
दिएसु' त्ति-'मतिसुयावरणे केवलदुगमणपज्जवचक्खु-
दिवट्टिबंधं काउमादत्तो दलियं उक्कड्ढति जाव अंतोमुहुत्तं कालं उक्कड्ढिउं संकिलेसेणेव
दिगगो' त्ति-कालं करेत्तु एगिंदिएसुववन्नो तस्स 'पढमे समतेय' त्ति-'मतिसुयावरणे केवलदुगमणपज्जवचक्खु-
अचक्खुण आयरणे' ति-मतिनाणावरणसुयनाणावरणकेवलनाणावरणकेवलदंसणावरणमणपज्जवनाणावरणच-
क्खुदंसणावरणाचक्खुदंसणावरणाणं पढमसमते चेव जहन्नतो पदेसउदओ भवति । पाएण सव्वं दलियं उव्व-
ट्टियंति काउं, अन्नं च उक्कस्स संकिलिट्ठस्स पदेसुदीरणा थोवा अणुभागुदीरणा यहुगा, जत्थ य यहुगा अणु-
भागुदीरणा तत्थ नाणातिलंभो थोवो भवति, नाणातिलंभथोवागत्तातो पएसुदीरणा थोवा तम्हा एगिंदिएसुं
तेसिं कंमाणं जहन्नो पदेसुदतो ॥२०–२१॥

(मलय०)—तदेवमुक्त उत्कृष्टप्रदेशोदयस्वामी । संप्रति जघन्यप्रदेशोदयस्वाम्यभिधीयते–'पगयं' ति । जघन्यस्वामीति भावप्रधा-
नोऽयं निर्देशः, प्राकृतत्वाच ततः परस्याः सप्तम्या लुक्, ततोऽयमर्थः–जघन्यप्रदेशोदयस्वामित्वे प्रकृतमधिकारः क्षपितकर्मांशेन ।
एवं चात्र सप्तमी तृतीयार्थे वेदितव्या । तत्र कश्चित्क्षपितकर्मांशो देवो जघन्यस्थितिर्दशवर्षसहस्रायुरुत्पद्यनन्तरमन्तर्मुहूर्ते गते सति
सम्यक्त्वं प्रतिपद्यते । तच सम्यक्त्वं दशवर्षसहस्राणि देशोनानि यावत् परिपाल्यान्तर्मुहूर्तावशेषे जीविते मिथ्यात्वं गतः, स चाति-
संक्लिष्टपरिणामो वक्ष्यमाणकर्मणामुत्कृष्टां स्थितिं बद्धुमारभते प्रभूतं च दलिकं तदानीमुद्वर्तयति तावद्यावदन्तर्मुहूर्तम् । ततः संक्लिष्ट-
परिणाम एव कालं कृत्वा एकेन्द्रियो जातः । तस्य प्रथमसमये मतिज्ञानावरणश्रुतज्ञानावरणकेवलज्ञानावरणकेवलदर्शनावरणमनः-
पर्यवज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणानां जघन्यः प्रदेशोदयो भवति । इह हि प्रायेण सर्वं दलिकमुद्वर्तितमिति कृत्वा प्रथम-

समये स्तोकं प्राप्यते, अन्यच्चोत्कृष्टसंक्लेशयुक्तस्य प्रदेशोदीरणा स्तोका भवति। यतस्तस्यानुभागोदीरणा बह्वी प्रवर्तते, यत्र चानुभागोदीरणा बह्वी प्रवर्तते तत्र स्तोका प्रदेशोदीरणा, ततो 'मिच्छत्तगतो अतिकिलिट्ठो' इत्याद्युक्तम् ॥२०-२१॥

(उ०)—तदेवमुक्त उत्कृष्टप्रदेशोदयस्वामी। अथ जघन्यप्रदेशोदयस्वाम्यभिधीयते—जघन्यस्वामीत्ययं भावप्रधानो निर्देशः, प्रथमा च सप्तम्यर्थे, ततोऽयमर्थः—जघन्यप्रदेशोदयस्वामित्वे प्रकृतमधिकारः। क्षपितकर्मांश इत्यत्र सप्तम्यास्तृतीयार्थत्वात्क्षपितकर्मांशेन, तत्र कश्चित्क्षपितकर्मांशो देवो जघन्यस्थितिर्दशवर्षसहस्रायुष्क उत्पत्त्यनन्तरमन्तर्मुहूर्त्ते गते सति सम्यक्त्वं प्रतिपद्यते। तच्च सम्यक्त्वं देशोनानि दशवर्षसहस्राणि यावत्परिपाल्यान्तर्मुहूर्त्तावशेषे जीविते सति मिथ्यात्वं गतः। स चातिसंक्लिष्टपरिणामो वक्ष्यमाणकर्मणामुत्कृष्टां स्थितिं बद्धुमारभते, बहुतरं च दलिकं तदानीमुद्वर्तयति तावद्यावदन्तर्मुहूर्त्तं। ततः संक्लिष्टपरिणाम एव कालं कृत्वैकेन्द्रियो जातः, तज्जन्मप्रथमसमये मतिज्ञानावरणश्रुतज्ञानावरणकेवलज्ञानावरणकेवलदर्शनावरणमनःपर्यायज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणानां जघन्यः प्रदेशोदयो भवति। इह प्रायः सर्वदलिकमुद्वर्तितमिति स्तोकं प्राप्यते प्रथमसमये, किं चोत्कृष्टसंक्लेशवतः प्रदेशोदीरणा स्तोका भवति, तस्यानुभागोदीरणाया एव बह्व्याः प्रवृत्तेः, अनुभागोदीरणायां च बह्व्यां प्रवर्तमानायां प्रदेशोदीरणायाः स्तोकाया एव प्रवृत्तिनियमात्। अनेनैवाशयेन मिथ्यात्वगतोऽतिक्लिष्ट इत्युक्तम् ॥ २०-२१ ॥

**ओहीण संजमाओ देवत्तगए गयस्स मिच्छत्तं। उक्कोसठिईबंधे विकड्ढणा आलिगं गंतुं ॥२२॥**

(चू०)—ओहिनाणओहिदंसणावरणियाणं 'संजमातो'त्ति खवियकम्मंसिगो अपच्छिमे भवग्गहणे संजमं पडिवन्नो अपरिवडिएण 'देवत्तगते गयस्स मिच्छत्तं'ति—देवलोगं गतो ततो अंतोमुहुत्तेण मिच्छत्तं गतो 'उक्कोस-

ट्ठितिबंधं विकड्ढणे'त्ति संकिलिट्ठो उक्कोसट्ठितिं बंधिउमाढत्तो तस्स दलियं उक्कड्ढियं भवति। विकड्ढणं ति उक्कड्ढणं। ततो आवलियं गंतूणं उव्वट्टियं दलियं से काले उव्वट्टियं ति तंमि समते ओहिदुगस्स जहन्नतो पतेसुदओ। ओहिनाणसहियस्स थोवं दलियं भवतित्ति काउं देवलोगे चेव जहन्नतो पदेसुदओ ॥२२॥

(मलय०)—'ओहीण' त्ति–क्षपितकर्मांशः संयमं प्रतिपन्नःसमुत्पन्नावधिज्ञानदर्शनोऽप्रतिपतितावधिज्ञानदर्शन एव देवो जातः, तत्र चान्तर्मुहूर्ते गते मिथ्यात्वं प्रतिपन्नः ततो मिथ्यात्वप्रत्ययेनोत्कृष्टां स्थितिं बद्धुमारभते, प्रभूतं च दलिकं विकर्षयति–उद्वर्तयतीत्यर्थः। तत आवलिकां गत्वाऽतिक्रम्य बन्धावलिकायामतीतायामित्यर्थः अवध्योः–अवधिज्ञानावरणावधिदर्शनावरणयोर्जघन्यः प्रदेशोदयः॥

(उ०)—अवध्योः–अवधिज्ञानावरणावधिदर्शनावरणयोः संयमादिति संयमं प्रतिपद्य क्षपितकर्मांशस्य समुत्पन्नावधिज्ञानदर्शनस्याप्रतिपतितद्भावस्यैव सतो देवत्वं गतस्य, तत्र चान्तर्मुहूर्ते गते सति मिथ्यात्वं प्रतिपन्नस्य, ततो मिथ्यात्वप्रत्ययेनोत्कृष्टे स्थितिबन्धे प्रवर्तमाने प्रभूतदलिकस्य विकर्षणायामुद्वर्तनायां सत्यामावलिकां गत्वा बन्धावलिकामतिक्रम्य स्तोकः प्रदेशोदयः, उक्तक्रमेण तदानीं स्तोकप्रदेशोदीरणोपनीतस्य तस्य स्तोकतरस्यैव लाभात् ॥ २२ ॥

**वेयणियंतरसोगारउच्च ओहि व्व निद्दपयला य। उक्कस्सठिईबंधा पडिभग्गपवेइया नवरं ॥२३॥**

(चू०)—'वेयणियंतरसोगारउच ओहिव्व'त्ति–सायअसाय पंच अंतरातिय अरइसोगुच्चाणं ओहिदुगसरिसं भाणियव्वं। 'णिद्दापयला य उक्कस्स ठिईबंधा पडिभग्गप्पवेइया णवरिं'–निद्दापयलाणं पि ओहिसरिसमेव, णवरिं उक्कोसट्ठितिबंधातो पडिभग्गस्स पवेइउमाढत्तस्स जहन्नतो पदेसुदओ। उक्कोससंकिलिट्ठस्स निद्दादीणं

उदत्तो णत्थित्ति ॥२३॥

(मलय०)—'वेयणियंतर'त्ति–द्वयोर्वेदनीययोः सातासातयोः पञ्चानामन्तरायाणां शोकारत्युच्चैर्गोत्राणां च जघन्यः प्रदेशोदयोऽव-
धिज्ञानावरणस्येव वेदितव्यः। निद्राप्रचलयोरपि तथैव। केवलमुत्कृष्टस्थितिबन्धात् प्रतिभग्नस्य–प्रतिपतितस्य निद्राप्रचलयोरनुभवितुं लग्नस्य चेति द्रष्टव्यम्। उत्कृष्टस्थितिबन्धो हि अतिशयेन संक्लिष्टस्य भवति। न चातिसंक्लेशे वर्तमानस्य निद्रोदयसंभवः, तत उक्तं उत्कृष्टस्थितिबन्धात्प्रतिभग्नस्येति ॥२३॥

(उ०)—वेदनीययोः सातासातयोरन्तरायाणां पञ्चानामन्तरायाणां शोकारत्युच्चैर्गोत्राणां च जघन्यः प्रदेशोदयोऽवधिज्ञानावरणस्येव वक्तव्यः। निद्राप्रचले अपीत्थमेव जघन्यप्रदेशोदयसंभवे वेदितव्ये, केवलमुत्कृष्टस्थितिबन्धात्प्रतिभग्नेन प्रतिपतितेन सता प्रवेदितुमनुभवितुं लग्ने ते तथाभूते द्रष्टव्ये। उत्कृष्टस्थितिबन्धो ह्यतिशयितसंक्लेशवतो भवति। न चातिसंक्लेशे वर्तमानस्य निद्रोदयसंभव इत्युत्कृष्टस्थितिबन्धप्रतिभग्नप्रवेदिते इति विशेषणम् ॥ २३ ॥

**वरिसवरतिरियथावरनीयं पि य मइसमं नवरि तिन्नि। निद्दानिद्दा इंदियपज्जत्ती पढमसमयम्मि ॥२४॥**

(चू०)—'वरिसवरतिरियथावरणीयं पि य मइसमं'ति–नपुंसगवेयतिरियगतिथावरणामणीयागोयाण जहा मतिआवरणस्स तहा भाणियव्वं 'नवरि तिन्नि निद्दानिद्दा इंदियपज्जत्ती पढमसमयंमि'त्ति–थीणगिद्धितिगं पि मतिसरिसमेव नवरि इंदियपज्जत्तगस्स पढमसमयंमि चेव जहन्नतो चेव पदेसुदतो परतो उदीरणा भवति तेण न घेप्पतित्ति। ततो पुव्वं मूलट्ठितिक्खतो लब्भतित्ति न होति थीणगिद्धितिगस्स। देवलोगे ण भवति,

॥२०॥

उदयाभावानो ॥२४॥
(मलय०)—'वरिसवर'त्ति–वर्षवरो नपुंसकवेदः, ततो नपुंसकवेदतिर्यग्गतिस्थावरनीचैर्गोत्राणां जघन्यः प्रदेशोदयो मतिज्ञानाव-
रणस्येवावसेयः। निद्रानिद्रादयोऽपि तिस्रः प्रकृतयो जघन्यप्रदेशोदयविषये मतिज्ञानावरणवद्भावनीयाः, नवरमिन्द्रियपर्याप्त्या पर्या-
प्तस्य प्रथमसमये इति द्रष्टव्यम्। ततोऽनन्तरसमये उदीरणायाः संभवेन जघन्यप्रदेशोदयासंभवात् ॥२४॥
(चू०)—वर्षवरो नपुंसकवेदस्ततो नपुंसकवेदतिर्यग्गतिस्थावरनीचैर्गोत्राणां जघन्यः प्रदेशोदयो मतिज्ञानावरणस्येव ज्ञातव्यः। निद्रा-
निद्रादयोऽपि तिस्रः प्रकृतयो जघन्यप्रदेशोदयविचारे मतिज्ञानावरणवद्भावनीयाः। नवरमिन्द्रियपर्याप्त्या पर्याप्तस्य प्रथमसमय इति
द्रष्टव्यं। द्वितीयादिसमयेषूदीरणायाः संभवाज्जघन्यप्रदेशोदयासंभव इति प्रथमसमयग्रहणम् ॥ २४ ॥

दंसणमोहे तिविहे उदीरणुदए उ आलिगं गंतुं। सत्तरसण्ह वि एवं उवसमइत्ता गए देवं ॥२५॥

(चू०)—'दंसणमोहे तिविहे उदीरणुदए उ आलिगं गंतु'त्ति–खवियकम्मंसिगस्स उवसमसम्मद्दिट्ठिस्स
समए विसेसहीणा, एवं जाव चरिमसमते विसेसहीणा, आवलियाए तिस्से उदीरणुदयस्स चरिमसमते उव-
'उदीरणुदते'त्ति–वितियठितीते दलियं अंतरकरणंमि आवलिगमेत्तं पवेसामिति, तस्स मूले बहुगा पोग्गला, वितिए
समसंमत्तातो परिवडमाणस्स सम्मत्तमीसमिच्छत्ताणं तिण्हं कम्माणं तं तं वेदेमाणस्स जहन्नओ पदेसुदतो।
'सत्तरसण्ह वि एवं'ति–अणंताणुबंधिवज्जा बारसकसाया पुरिसवेयहस्सरतिभयदुगंछाणं एएसिं सत्तरसण्हं कंमा-
णं एवं चेव उदीरणुदयंमि आवलियं गंतूणं भवतित्ति भणियं भवति। 'उवसमइत्ता गते देवे'त्ति–एए उवसामिऊ

देवलोगगयस्स उदीरणुदयस्स अंते जहन्नतो पदेसुदओ। इत्थिवेयणपुंसगअणअरतिसोगाणं उवसमसेढीतो सरिउं देवत्तं गयस्स उदओ नत्थित्ति ण गहिया ॥२५॥

(मलय०)—'दंसणमोहे'त्ति–क्षपितकर्मांशस्य औपशमिकसम्यग्दृष्टेरौपशमिकसम्यक्त्वात् प्रच्यवमानस्य अन्तरकरणे स्थितेन द्वितीयस्थितेः सकाशात् सम्यक्त्वादीनां दलिकानि समाकृष्य यान्यन्तरकरणे चरमे आवलिकामात्रभागे गोपुच्छाकारसंस्थानेन रचितानि, तद्यथा–प्रथमसमये प्रभूतम्, द्वितीयसमये विशेषहीनम्, तृतीयसमये विशेषहीनम्, एवं यावच्चरमसमये विशेषहीनम्, तेषामुदय उदीरणोदय उच्यते। तस्मिन् उदीरणोदये आवलिकामात्रं गत्वा आवलिकायाश्चरमसमये सम्यक्त्वमिश्रमिथ्यात्वानां स्वस्वोदययुक्तस्य जघन्यप्रदेशोदयः। तथाऽनन्तानुबन्धिवर्जद्वादशकषायपुरुषवेदहास्यरतिभयजुगुप्सारूपाः सप्तदश प्रकृतीरुपशमय्य देवलोकं गतस्य एवमेवेति–उदीरणोदयचरमसमये तासां सप्तदशप्रकृतीनां जघन्यः प्रदेशोदयः। आसां हि सप्तदशानामपि प्रकृतीनामन्तरकरणं कृत्वा देवलोकं गतः सन् प्रथमसमये एव द्वितीयस्थितेः सकाशाद्दलिकमाकृष्योदयसमयादारभ्य गोपुच्छाकारेण विरचयति, तद्यथा–उदयसमये प्रभूतम्, द्वितीयसमये विशेषहीनम्, तृतीयसमये विशेषहीनम्, एवं यावदावलिकाचरमसमयः, ततः आवलिकाचरमसमये जघन्यः प्रदेशोदयो लभ्यते ॥२५॥

(उ०)—क्षपितकर्मांशस्यौपशमिकसम्यग्दृष्टेरौपशमिकसम्यक्त्वात्प्रतिपततोऽन्तरकरणे स्थितेन द्वितीयस्थितेः सकाशात्सम्यक्त्वादीनां दलिकानि समाकृष्य यान्यन्तरकरणे चरमे आवलिकाभागमात्रे गोपुच्छाकारसंस्थानेन प्रथमसमये प्रभूतानां द्वितीयादिसमयेषु च क्रमशो विशेषहीनविशेषहीनानां निवेशलक्षणेन रचितानि तेषामुदय उदीरणोदय इत्युच्यते, तस्मिन्नुदीरणोदये आवलिकामात्रं गत्वा-

ऽऽवलिकायाश्चरमसमये सम्यक्त्वमिश्रमिथ्यात्वानां स्वस्योदययुक्तस्य जघन्यः प्रदेशोदयः। तथाऽनन्तानुबन्धिवर्जद्वादशकपायपुरुपवेद-
हास्यरतिभयजुगुप्सारूपाः सप्तदश प्रकृतीरुपशमय्य देवलोकं गतस्य तासां सप्तदशप्रकृतीनामेवमेवोदीरणोदयचरमसमये जघन्यः प्रदे-
शोदयः। आसां हि सप्तदशानामपि प्रकृतीनामन्तरकरणं कृत्वा देवलोकं गतः सन् प्रथमसमय एव द्वितीयस्थितेः सकाशाद्दलिकमा-
कृष्योदयसमयादारभ्य गोपुच्छाकारेण विरचयति। तद्यथा–प्रथमसमये प्रभूतं, द्वितीयसमये विशेपहीनं, तृतीयसमये विशेपहीनं, एवं
यावदावलिकाचरमसमये विशेपहीनम्। एवं दलिकरचनायां कृतायामावलिकायाश्चरमसमये जघन्यः प्रदेशोदयो लभ्यते। उपशान्तकषाय
उपशामको वा कालगतः सन् सर्वार्थसिद्धे महाविमाने यातीति भगवत्यादौ सिद्धम्, तत्र च नपुंसकवेदस्त्रीवेदशोकमोहनीयानन्तानुबन्ध्य-
रतिमोहनीयप्रकृतीनामुदयो नास्तीति तत्प्रतिषेधः कृतः॥ २५॥

**चउरुवसमित्तु पच्छा संजोइय दीहकालसम्मत्ता। मिच्छत्तगए आवलिगाए संजोयणाणं तु॥२६॥**

(चू०)—चत्तारि वारे उवसामणं करेंतस्स बहुगा पोग्गला गुणसेढीए सेसमोहकंमाणं खिज्जंति खीणसेसा
घज्झमाणासु थोवा संकमिस्संति पच्छा 'संजोजिय'त्ति–पच्छा अणंताणुबंधिणो बंधित्तु अंतोमुहुत्तं दीहकालं 'संम-
त्तं'ति–पुणो संमत्तं पडिवन्नो सागरोवमाणं वे छावट्ठीतो संमत्तं अणुपालेत्तु अंते मिच्छत्तं गयस्स आवलियाए
गयाते से काले पढमसमयबद्धस्स उदीरणुदेनित्ति 'संजोयणाण'त्ति–अणंताणुबंधीणं जहन्नतो पदेसुदओ भवति॥

(मलय०)—'चउरुवसमित्तु'त्ति–चतुरो वारान् मोहनीयमुपशमय्य पश्चादन्तर्मुहूर्ते गते सति मिथ्यात्वं गतः। ततोऽपि मिथ्यात्वप्रत्य-
येन 'संयोजनान्' अनन्तानुबन्धिनो वध्नाति। ततः सम्यक्त्वं गतः। तच्च दीर्घकालं द्वात्रिंशं सागरोपमाणां शतं यावत् अनुपालयन्

सम्यक्त्वप्रभावतः प्रभूतान् पुद्गलान् अनन्तानुबन्धिनां संबन्धिनः प्रदेशसंक्रमतः परिशाटयति। ततः पुनरपि मिथ्यात्वं गतः मिथ्यात्वप्रत्ययेन च भूयोऽप्यनन्तानुबन्धिनो बध्नाति । तस्य आवलिकाया बन्धावलिकायाश्चरमसमये पूर्वबद्धानामनन्तानुबन्धिनां जघन्यः प्रदेशोदयः। आवलिकाया अनन्तरसमये हि प्रथमसमयबद्धस्य दलिकस्योदयो भवति, ततो जघन्यः प्रदेशोदयो न लभ्यते इति कृत्वा आवलिकायाश्चरमसमये इत्युक्तम्। संसारे चैकजीवस्य चतुष्कृत्व एव मोहनीयस्योपशमो भवति न पञ्चकृत्व इति चतुष्कृत्वो ग्रहणम्। मोहोपशमनेन किं प्रयोजनम्? इति चेत्, उच्यते–इह मोहोपशमं कुर्वन्नप्रत्याख्यानादिकषायाणां दलिकमन्यत्र गुणसंक्रमेण प्रभूतं संक्रमयति, ततः क्षीणशेषाणां तेषां अनन्तानुबन्धिषु बन्धकाले स्तोकमेव संक्रामति, ततो मोहोपशमग्रहणम् ॥२६॥

(उ०)—चतुरो वारान् मोहनीयमुपशमय्य पश्चादन्तर्मुहूर्त्ते गते सति मिथ्यात्वं गतः सन् मिथ्यात्वप्रत्ययेन संयोजयत्यनन्तानुबन्धिनो बध्नाति, तान् बद्ध्वा परिणामपरावृत्त्या सम्यक्त्वं गतः, तच्च दीर्घकालं द्वात्रिंशं सागरोपमशतं यावदनुपालयति, सम्यक्त्वप्रभावतश्च तावता कालेन प्रभूताननन्तानुबन्धिनां सम्बन्धिनः पुद्गलान् प्रदेशसंक्रमद्वारेण परिशाटयति। ततः पुनरपि मिथ्यात्वं गत्वा मिथ्यात्वप्रत्ययेन भूयोऽप्यनन्तानुबन्धिनो बध्नाति, तस्यावलिकाया बन्धावलिकायाश्चरमसमये पूर्वबद्धानामनन्तानुबन्धिनां जघन्यः प्रदेशोदयः। आवलिकाया अनन्तरसमये हि प्रथमसमयबद्धस्य दलिकस्योदीरणानिष्पन्न उदयो भवति ततो जघन्यः प्रदेशोदयो न लभ्यत इत्यावलिकायाश्चरमसमय इत्युक्तम्। संसारे चैकजीवस्य चतुर्वारमेव मोहोपशमो भवति न पञ्चवारमिति चतुर्वारग्रहणम्। मोहोपशमग्रहणस्य किं प्रयोजनम्? इति चेत्,उच्यते–इह मोहोपशमं कुर्वन्नप्रत्याख्यानादिकषायाणां दलिकमन्यत्र गुणसंक्रमेण प्रभूतं संक्रमयति, ततोऽन्यत्र संक्रमद्वारा क्षीणशेषाणां तेषामनन्तानुबन्धिषु बन्धकाले स्तोकमेव दलिकं संक्रामतीति-मोहोपशमग्रहणम् ॥२६॥

इत्थीए संजमभवे सव्वनिरुद्धम्मि गंतु मिच्छत्तं । देवीए लहुमित्थी जेट्ठठिई आलिगं गंतुं ॥२७॥

(चू०)—'इत्थि'त्ति-इत्थिवेयस्स 'संजमभवे'त्ति-खवियकम्मंसिगो अपच्छिमे भवग्गहणे देसूणं पुव्वकोडिं संजमं अणुपालेऊण 'सव्वनिरुद्धंमि गंतु मिच्छत्तं'ति-सव्वखुड्डले अंतोमुहुत्ते सेसे मिच्छत्तं गतो 'देवीए'त्ति-ततो देवी उववन्नो 'लहु'त्ति लहुमेव सव्वाहिं पज्जत्तीहिं पज्जत्तिगा जाया, लहुमेव संकिलिट्ठा तं 'इत्थीजेट्ठट्ठिनी'त्ति-इत्थिवेयस्स उक्कोसा ठिति (बंधइ, पुव्वबद्धं) च दलियं उवट्टेति, ततो उक्कोसबंधाढवणातो आवलियं गंतूणं सेय काले उव्वट्टियं उदिरिज्जतित्ति तंमि समते इत्थिवेयस्स जहन्नतो पदेसुदतो ॥२७॥

(मलय०)—'इत्थीए' त्ति-संयमेनोपलक्षितो भवः संयमभवस्तस्मिन् सर्वनिरुद्धेऽन्तर्मुहूर्तावशेषे स्त्रिया मिथ्यात्वं गतायाः, ततोऽनन्तरभवे देवीभूतायाः शीघ्रमेव च पर्याप्ताया उत्कृष्टस्थितिबन्धानन्तरमावलिकां गत्वा आवलिकायाश्चरमसमये स्त्रीवेदस्य जघन्यः प्रदेशोदयः । इयमत्र भावना-क्षपितकर्मांशा काचित् स्त्री देशोनां पूर्वकोटिं यावत्संयममनुपाल्यान्तर्मुहूर्ते आयुषोऽवशेषे मिथ्यात्वं गत्वा अनन्तरभवे देवी समुत्पन्ना, शीघ्रमेव च पर्याप्ता । तत उत्कृष्टे संक्लेशे वर्तमाना स्त्रीवेदस्योत्कृष्टां स्थितिं बध्नाति, पूर्वबद्धां चोद्वर्तयति । तत उत्कृष्टबन्धारम्भात् परत आवलिकायाश्चरमसमये तस्याः स्त्रीवेदस्य जघन्यः प्रदेशोदयो भवति ॥२७॥

(उ०)—संयमेनोपलक्षितो भवः संयमभवः, तस्मिन् सर्वनिरुद्धेऽन्तर्मुहूर्तावशेषे सति स्त्रिया मिथ्यात्वं गतायास्ततोऽनन्तरभवे देवीभूताया 'लहुं' ति-शीघ्रमेव पर्याप्ताया ज्येष्ठस्थितिबन्धानन्तरमावलिकां गत्वाऽऽवलिकायाश्चरमसमये स्त्रीवेदस्य जघन्यः प्रदेशोदयः । इयमिह भावना-क्षपितकर्मांशा काचिद्देशोनां पूर्वकोटिं संयममनुपाल्यान्तर्मुहूर्त्ते शेषे जीविते मिथ्यात्वं गत्वाऽनन्तरभवे देवी

समुत्पन्ना, शीघ्रमेव च पर्याप्ता, ततः उत्कृष्टसंक्लेशे वर्तमाना स्त्रीवेदस्योत्कृष्टां स्थितिं बध्नाति, पूर्वबद्धां चोद्वर्त्तयति, उत्कृष्टस्थितिबन्धात्परत आवलिकायाश्चरमसमये तस्याः ततः स्त्रीवेदस्य जघन्यः प्रदेशोदयो भवति, तदैवोद्वर्त्तनादिविरलीकृतत्वादनन्तरसमयभाव्युदीरणाद्यभावाच्च स्तोकप्रदेशप्राप्तेः ॥ २७ ॥

अप्पद्धाजोगचियाणाऊणुक्कस्सगट्ठिईणंते । उवरिं थोवनिसेगे चिरतिव्वासायवेईणं ॥२८॥

(चू०)—अप्पाते बंधगद्धाए अप्पेणं जोगेणं 'चियाणं'ति–बद्धाण 'आऊणुक्कस्सगट्ठितीणंति'त्ति–चउण्हं आउगाणं अप्पप्पणो उक्कोसट्ठितीणं अंतिमे समए जहन्नओ पदेसुदओ। 'उवरिं थोवणिसेगे'त्ति–उपरिल्लीसु ट्ठितीसु दलियस्स जहन्नगं निक्खेवं करेंति। 'चिरतिव्वासायवेईणं'ति–दीहं कालं तिव्वं असातं अप्पप्पणो पाउग्गं वेदेताणं। एते विसेसा आउगाणं, कहं ? भण्णति–अप्पाते अप्पाते आउगबंधगद्धाए अप्पेणं जोगेणं उपरिल्लीसु ट्ठितिसु निसेगस्स जहन्नं निक्खेवयं करेति, ततो उप्पन्नस्स दीहकालं तीव्वं असायं वेदेमाणस्स बहुगा पोग्गला सडिया भवंति, ततो चउण्हं आउगाणं चरिमसमते जहन्नगो पदेसुदओ ॥२८॥

(मलय०)—'अप्पद्ध'त्ति–अल्पया बन्धाद्धया अल्पेन च योगेन 'चितानां' बद्धानां चतुर्णामप्यायुषां 'ज्येष्ठस्थितीनां'–उत्कृष्टस्थितीनां 'अन्ते'–अन्तिमे 'उपरि'–सर्वोपरितने समये सर्वस्तोकदलिकनिक्षेपे चिरकालं तीव्रासातवेदनाभिभूतानां क्षपितकर्मांशानां तत्तदायुर्वेदिनां जघन्यः प्रदेशोदयः। तीव्रासातवेदनया ह्यभिभूतानां बहवः पुद्गलाः परिसटन्तीति कृत्वा तीव्रासातवेदिग्रहणम् ॥२८॥

(उ०)– अल्पया बन्धाद्धयाऽल्पेन च योगेन चितानां बद्धानां चतुर्णामप्यायुषां ज्येष्ठस्थितीनामन्तेऽन्तिमे उपरि सर्वोपरितने समये

सर्वस्तोकदलिकनिक्षेपे चिरकालं तीव्रासातवेदनाऽभिभूतानां क्षपितकर्मांशानां तत्तदायुर्वेदिनां जघन्यः प्रदेशोदयः। तीव्रासातवेदनाभिभवेन हि प्रभूता आयुःपुद्गलाः परिसटन्तीत्यभिसंधाय तीव्रासातवेदिनामिति विशेषणं कृतम् ॥ २८ ॥

संजोयणा विजोजिय देवभवजहन्नगे अइनिरुद्धे । बंधिय उक्कस्सठिई गंतूणेगिंदिया सन्नी ॥२९॥

सव्वलहुं नरयगए निरयगई तम्मि सव्वपज्जत्ते । अणुपुव्वीओ य गईतुल्ला नेया भवादिम्मि ॥३०॥

(चू०)—खवियकम्मंसिगस्स परिभासा सव्वा भाणियव्वा जाव दसवाससहस्सिगेसु उप्पन्नो। तत्थ पुणो संमत्तलंभो, संजोयणा विजोजिय। देवभवजहन्नगे वट्टमाणो अणंताणुबंधिणो विसंजोजेति, 'अतिनिरुद्धे बंधिय उक्कस्सट्ठिति'त्ति–ततो अइनिरुद्धेत्ति अइखुड्डले अंतोमुहुत्ते सेसे मिच्छत्तं गतो बंधिय उक्कस्सट्ठिईत्ति उक्कोससंकिलिट्ठो उक्कोसट्ठितिं बंधिऊ दलियं उवट्टेति तेणेव भावेण कालगतो। 'गंतूणेगिंदियासन्नी'त्ति–ततो एगिंदिएसुप्पन्नो, ततो अंतोमुहुत्तेण कालं करेत्तु असंनिपंचिंदिएसु उववन्नो। 'सव्वलहुं नरयगए'त्ति–ततो विलहुं चेव कालं करेत्तु णेरतितेसु उववन्नो सव्वाहिं पज्जत्तीहिं पज्जत्तो, तस्स निरयगतीते जहन्नतो पदेसुदओ। संजोयणाविसंजोजंतस्स बहुगा पोग्गला सडंति, असन्निपंचिंदितो थोवगं बंधति तेण असन्निपंचिंदियग्गहणं। सव्वपज्जत्तगस्स केसिंचि कम्माणं थिवुगसंकमो न होइ, अप्पप्पणो उदएण वि पच्चति। 'अणुपुव्वीओय गईतुल्ला नेया भवादिम्मि'ति–चत्तारि आणुपुव्वीतो सगगतिणामसरिसातो णवरि भवादिम्मि कायव्वं। कहं? भण्णइ–

तत्तियसमते आवलियातीयं उदयं आगच्छति तेण पढमसमयग्गहणं ॥२९-३०॥

(मलय०)—'संजोयणा'इत्यादि-'संयोजनान्' अनन्तानुबन्धिनो विसंयोज्य, तद्विसंयोजने हि शेषाणामपि कर्मणां भूयांसः पुद्गलाः परिसटन्ति इति तदुपादानम्। ततो जघन्यं देवत्वं प्राप्तः, तत्र चातिनिरुद्धे पश्चिमेऽन्तर्मुहूर्ते प्रतिपन्नमिथ्यात्व एकेन्द्रियप्रायोग्याणां प्रकृतीनामुत्कृष्टां स्थितिं बद्धा सर्वसंक्लिष्ट एकेन्द्रियेषूत्पन्नस्तत्र चान्तर्मुहूर्तं स्थित्वाऽसंज्ञिषु मध्ये समायातः। देवो हि मृत्वा नासंज्ञिषु मध्ये गच्छतीति कृत्वा एकेन्द्रियग्रहणम्। ततोऽसंज्ञिभवाल्लघु शीघ्रं मृत्वा नारको जातः, सर्वपर्याप्तिभिश्च शीघ्रं पर्याप्तः। तस्मिन् सर्वपर्याप्तिपर्याप्ते नारके नरकगतेर्जघन्यः प्रदेशोदयः। पर्याप्तस्य हि प्रभूताः प्रकृतयो विपाकोदयमायान्ति, उदयगताश्च स्तिबुकसंक्रमेण न संक्रामन्ति, तेन प्रकृत्यन्तरदलिकसंक्रमाभावात् जघन्यः प्रदेशोदयः प्राप्यत इति 'सव्वपज्जत्ते' इत्युक्तम्। आनुपूर्व्यश्चतस्रोऽपि 'गति तुल्याः'-स्वस्वगतितुल्या ज्ञेया ज्ञातव्याः। केवलं 'भवादौ'-भवप्रथमसमये वेदितव्याः। तृतीये हि समयेऽन्या अपि बन्धावलिकातीताः कर्मलता उदयमागच्छन्ति ततो भवप्रथमसमयग्रहणम् ॥२९-३०॥

(उ०)—संयोजनानन्तानुबन्धिनो विसंयोज्य तद्विसंयोजने शेषाणामपि कर्मणां भूयः पुद्गलपरिशाटो भवतीति तदुपादानम्। (ततो जघन्यं देवत्वं प्राप्तः) तत्र चातिनिरुद्धे पश्चिमेऽन्तर्मुहूर्त्ते प्रतिपन्नमिथ्यात्व एकेन्द्रियप्रायोग्याणां प्रकृतीनामुत्कृष्टां स्थितिं बद्धा सर्वसंक्लिष्ट एकेन्द्रियेषु मध्ये समुत्पन्नः। तत्र चान्तर्मुहूर्त्तं स्थित्वाऽसंज्ञिषु मध्ये समागतः। देवो हि मृत्वाऽऽनन्तर्येण नासंज्ञिषु गच्छतीत्यनन्तरैकेन्द्रियभवग्रहणम्। ततोऽसंज्ञिभवाद् शेषासंज्ञिसर्वजीवापेक्षया लघु-शीघ्रं मृत्वा नारको जातः, सर्वपर्याप्तिभिश्च शीघ्रं पर्याप्तस्तस्मिन् सर्वपर्याप्तिपर्याप्ते नारके नरकगतेर्जघन्यः प्रदेशोदयः। पर्याप्तस्य प्रभूताः प्रकृतयो विपाकोदयमायान्ति, उदयप्राप्ताश्च स्तिबुक-

उदयः जघन्यप्रदेशोदयस्वामित्वं

संक्रमेण न संक्रामन्ति । एवं च प्रकृत्यन्तरदलिकसंक्रमाभावाज्जघन्यः प्रदेशोदयः प्राप्यत इति सर्वपर्याप्तिपर्याप्तत्वग्रहणम् । आनुपूर्व्यश्चत-
स्रोऽपि गतितुल्याः स्वस्वगतिसमानवक्तव्यता ज्ञेयाः, केवलं भवादौ भवप्रथमसमये, तृतीये हि समये प्रथमद्वितीयसमयनिष्ठितबन्धावलिका
अन्या अपि कर्मलता उदयमायान्तीति भवप्रथमसमयग्रहणम् ॥ २९-३० ॥

देवगई ओहिसमा नवरिं उज्जोयवेयगो ताहे । आहारि जाय अइचिरसंजममणुपालिऊणंते ॥३१॥

(चू०)—'देवगई ओहिसम'त्ति-देवगइ जहा ओहिनाणावरणस्स तहा, किं कारणं ? भण्णति-उक्कसं ठिति
बंधमाणस्स बहुगं दलियं उव्वट्टिज्जति अन्नं च संकिलिट्ठस्स पदेसा थोवा उदीरिज्जंति, 'णवरिं उज्जोयवेयगो ताहे'
त्ति-स देवो उज्जोवं वेदेति । किं कारणं ? उज्जोयवेयगस्स जहन्नतो पदेसुदतो भवति । जति उज्जोवस्स उदओ
न होति तो थिवुगसंकमेण देवगतीते संकमेति, तं निवारणत्थं उज्जोयवेयस्स उदतो । 'आहारि जाय अतिचिर-
संजममणुपालिऊणंते'त्ति-आहारसत्तगाणं अतिचिरसंजममणुपालिऊणं ति देसूणं पुव्वकोडिं संजममणुपालेउं
अंतनि अंतिमकाले आहारसरीरी जातो उज्जोवं वेएत्ति तस्स जहन्नतो पदेसुदओ ॥३१॥

(मलय०)—'देवगइ'त्ति-देवगतिः 'अवधिसमा'-अवधिज्ञानावरणस्येव देवगतेरपि जघन्यः प्रदेशोदयो भावनीय इत्यर्थः । नवरं यदा
उद्योतवेदको भवति 'ताहे'-तदा देवगतेर्जघन्यः प्रदेशोदयो द्रष्टव्यः । किं कारणम् ? इति चेत्, उच्यते-यावदुद्योतस्योदयो न भवति ताव-
देवगतौ स्तिबुकसंक्रमेण तं संक्रमयति । ततो जघन्यः प्रदेशोदयो न लभ्यते । उदयप्राप्तस्य पुनरुद्योतस्य स्तिबुकसंक्रमो न भवति,
तत उद्योतवेदकग्रहणम् । उद्योतवेदकत्वं च पर्याप्तस्य भवति नापर्याप्तस्येति पर्याप्तावस्थायां देवगतेर्जघन्यः प्रदेशोदयः । तथा यश्चिर-

कालं देशोनपूर्वकोटिरूपं यावत्संयममनुपाल्यान्तिमे काले आहारकशरीरी जातः, उद्योतं च वेदयते, तस्याहारकसप्तकस्य जघन्यः प्रदेशोदयः । चिरकालसंयमपरिपालने हि भूयांसः कर्मपुद्गलाः परिसटिता भवन्तीति कृत्वा चिरकालसंयमग्रहणम् । उद्योतग्रहणे च कारणं प्रागुक्तमेवानुसर्तव्यम् ॥३१॥

(उ०)—देवगतिरवधिसमाऽवधिज्ञानावरणस्येव देवगतेरपि जघन्यः प्रदेशोदयो भावनीय इत्यर्थः । नवरं यदोद्योतवेदको भवति 'ताहे'–तदा देवगतेर्जघन्यः प्रदेशोदयो वाच्यः । कोऽत्र हेतुः ? इति चेत्, उच्यते–यावदुद्योतनाम नोदयमास्कन्दति तावत्तद्देवगतौ स्तिबुकसंक्रमेण संक्रम्यते । ततः संक्रमोपनीततद्दलिकानुप्रवेशात्तस्या जघन्यः प्रदेशोदयो नावाप्यते । उदयप्राप्तस्य तूद्योतनाम्नः स्तिबुकसंक्रमो न भवतीत्युद्योतवेदकग्रहणम् । उद्योतवेदकत्वं च पर्याप्तस्य भवति नापर्याप्तस्येति, पर्याप्तावस्थायां देवगतेर्जघन्यः प्रदेशोदय इति सर्त्तव्यम् । तथा यश्चिरकालं देशोनपूर्वकोटिरूपं यावत्संयममनुपाल्यान्तेऽन्तिमकाले आहारकशरीरी जात उद्योतं च वेदयते स्म, तस्याहारकसप्तकस्य जघन्यः प्रदेशोदयः । चिरकालसंयमानुपालने हि भूयांसः कर्मपुद्गलाः परिशटन्तीति चिरकालसंयमग्रहणं, उद्योतग्रहणे च हेतुः प्रागभिहित एवानुसर्तव्यः ॥ ३१ ॥

**सेसाणं चक्खुसमं तंमि व अन्नंमि वा भवे अचिरा । तज्जोगा बहुगीओ पवेययंतस्स ता ताओ ॥३२॥**

(चू०)—'सेसाणं चक्खुसमं'ति–मणुयगतिवज्जातो तिन्नि गतीते आहारसत्तगं चत्तारि आणुपुव्वीतो थावरं तित्थकरनामं एते सोलसकंमा मोत्तूण अवसेसा णामस्स सत्तासीति कंमा तेसिं सत्तासीते कंमाणं 'चक्खुसमं' ति–चक्खुदंसणावरणसरिसा भाणियव्वा जाव एगिंदिएसु उप्पन्नो 'तंमि व अन्नंमि व भवे अचिरा'त्ति–तंमि

जहन्नतो पदेसुदतो, जेसिं तहिं उदतो नत्थि, के ते ?
एगेंदियभवे जेसिं कम्माणं उदतो अत्थि तेसिं तहिं चेव जहन्नतो पदेसुदतो, जेसिं तहिं उदतो नत्थि, के ते ? भण्णइ–मणुयगति एगेंदियजातिवज्जातो चत्तारि जातितो आदिमा पंच संठाणा बेअंगोवंगाणि छ संघयणा विहायगतिदुगं तसं सुभगसुस्सरदुस्सरआदेयज्जणामाणं एएसिं कम्माणं, ततो अचिरादेव उवट्टित्तु। तज्जोगेसु उप्पन्नस्स 'तज्जोगा बहुगीतो पवेययंतस्स'त्ति–अप्पप्पणो पाउग्गा बहुगीयो पगतीतो वेयंतस्स जहन्नतो पदेसुदओ। फहं ? भण्णइ–सव्वाहिं पज्जत्तीहिं पज्जत्तगस्स बहुगाणं पगतीणं उदतो भवति, बहुगा पगतीतो वेदेंतस्स थिवुगसंकमो ण लब्भति तम्हा बहुगपगतिगहणं। 'तातो'त्ति–तातो पगतीतो जहन्नगातो भवंतित्ति। तित्थगरनामाते स्वविपर्कमंसिगस्स पढमोदते चेव, उप्परिं गुणसेढीए बहुगं भवतित्ति काउं ॥३२॥

॥ कम्मप्पयडिचूण्णीए उदयाहिगारो समत्तो ॥

(मलय०)—'समाणं'ति–उक्तशेषाणां प्रकृतीनां चक्षुःसमं चक्षुर्दर्शनावरणसमं वक्तव्यं तावद्यावदेकेन्द्रियो जातः, ततो येषां कर्मणां तस्मिन्नेव एकेन्द्रियभवे उदयो विद्यते तेषां तत्रैव जघन्यः प्रदेशोदयो वाच्यः। येषां तु कर्मणां मनुजगतिद्वीन्द्रियादिजातिचतुष्टयाद्यसंस्थानपञ्चकौदारिकाङ्गोपाङ्गवैक्रियाङ्गोपाङ्गसंहननषट्कविहायोगतिद्विकत्रससुभगसुस्वरदुःस्वरादेयरूपाणां न तत्रोदयसंभवः तेषामेकेन्द्रियभवादुद्वृत्य तत्तदुदययोग्येषु भवेषूत्पन्नस्य तास्तास्तद्भवयोग्या बह्वीः प्रकृतीर्वेदयमानस्य, तत्तद्भवयोग्यबहुप्रकृतिवेदनं च पर्याप्तस्योपपद्यते, ततः सर्वाभिः पर्याप्तिभिः पर्याप्तस्य जघन्यः प्रदेशोदयः, पर्याप्तस्य बह्वयः प्रकृतय उदयमागच्छन्ति उदयप्राप्तानां च प्रकृतीनां स्तिबुकसंक्रमो न भवति। तथा च सति विवक्षितप्रकृतीनां जघन्यः प्रदेशोदयो लभ्यते इति पर्याप्तस्येति विवृतम्।

तीर्थकरनाम्नस्तु क्षपितकर्मांशस्योदयप्रथमसमये जघन्यः प्रदेशोदयो ज्ञेयः, परतो गुणश्रेणिदलिकं प्रभूतमवाप्यते इति स न भवति ॥३२॥

॥ इति श्रीमलयगिरिविरचितायां कर्मप्रकृतिटीकायामुदयः समाप्तः ॥

(उ०)—उक्तशेषाणां प्रकृतीनां चक्षुःसमं चक्षुर्दर्शनावरणसमं वाच्यं तावद्यावदेकेन्द्रियो जातः, ततो येषां कर्मणां तस्मिन्नेवैकेन्द्रियभवे उदयोऽस्ति तेषां तत्रैव भवेऽचिरादुदये जघन्यः प्रदेशोदयो वाच्यः। येषां तु कर्मणां मनुजगतिद्वीन्द्रियादिजातिचतुष्टयप्रथमसंस्थानपञ्चकौदारिकाङ्गोपाङ्गवैक्रियांगोपांगसंहननषट्कविहायोगतिद्विकत्रससुभगसुस्वरदुःस्वरादेयरूपाणां तत्रोदयासंभवस्तेषामेकेन्द्रियभवादुद्धृत्य तत्तदुदययोग्येषु भवेषूत्पन्नस्य तत्तद्भवयोग्यास्तास्ता बह्वीः प्रकृतीर्वेदयमानस्य सर्वपर्याप्तिभिः पर्याप्तस्य जघन्यः प्रदेशोदयः, तत्तद्भवयोग्यबहुप्रकृतिवेदनं हि पर्याप्तस्योपपद्यते। उदयप्राप्तानां च बह्वीनां प्रकृतीनां स्तिबुकसङ्क्रमो न भवति। तथा च सति विवक्षितप्रकृतीनां जघन्यः प्रदेशोदयः संभवतीत्यभिसंधाय सामर्थ्यात् पर्याप्तस्येति विवृतम्। तीर्थकरनाम्नस्तु क्षपितकर्मांशस्योदयप्रथमसमये जघन्यः प्रदेशोदयो ज्ञेयः, परतो गुणश्रेणीदलिकस्य प्रभूतस्यावाप्तेस्तदसंभव इति ॥३२॥

॥ इति उपाध्यायश्रीयशोविजयगणिविरचितायां कर्मप्रकृतिटीकायामुदयाधिकारः ॥

उदयः जघन्यप्रदेशोदयस्वामित्वं

उदओ भणितो, इयाणिं संतकम्मं भन्नति। तस्स इमे अत्थाहिगारा, तं जहा-भेदो सादिअणादिपरूवणा सामित्ति। तत्थ भेयनिरूवणत्थं भण्णति-

**मूलुत्तरपगइगयं चउव्विहं संतकम्ममवि नेयं। धुवमद्धुवणाईयं अट्ठण्हं मूलपगईणं ॥१॥**

(चू०)—'मूलुत्तरपगतिगयं चउव्विहं संतकम्ममवि णेयं'ति-दुविहं संतकम्मं-मूलपगतिसंतकम्मं उत्तरपगतिसंतकम्मं च। एक्केक्कं चउव्विहं-पगतिसंतकम्मं, ट्ठितिसंतकम्मं, अणुभागसंतकम्मं, पदेससंतकम्मं च। मूलपगतिसंतकम्मं अट्ठविहं-नाणावरणाति। उत्तरपगतिसंतकम्मं अट्ठावन्नसयंविहं-आभिणिबोहियनाणावरणादि। ट्ठितिअणुभागपदेसाणं भेओ सट्ठाणे भन्नहित्ति। कंमतया विज्जमाणं दलियं संतकम्मं वुच्चति। इयाणिं सातिअणातिपरूवणा दुविहा-मूलपगतिसातियाइ उत्तरपगतिसातियाइ य। तत्थ मूलपगतीणं सादियाइपरूवणा भण्णइ-'धुवमद्धुवणाईयं अट्ठण्हं मूलपगतीणं'। मूलपगतीणं संतकम्मं तिविहं-अणादियधुवअधुवं। कहं? धुवसंतकम्मत्तादेवादी णत्थि तम्हा अणादियं, धुवाधुवा पुव्वुत्ता॥१॥

(मलय०)—तदेवमुक्त उदयः, सम्प्रति सत्ताभिधानावसरः। तत्र चेमेऽर्थाधिकाराः, तद्यथा-भेदः साद्यनादिप्ररूपणा स्वामित्व चेति। तत्र भेदनिरूपणार्थमाह—'मूलुत्तर' त्ति। सत्कर्म द्विधा-मूलप्रकृतिगतं उत्तरप्रकृतिगतं च। तत्र मूलप्रकृतिगतमष्टप्रकारम्,

तद्यथा–ज्ञानावरणीयं दर्शनावरणीयमित्यादि । उत्तरप्रकृतिगतमष्टपञ्चाशदधिकशतप्रकारं, तद्यथा–मतिज्ञानावरणीयमित्यादि । पुनरेकैकं चतुर्विधम्, तद्यथा–प्रकृतिसत्कर्म, स्थितिसत्कर्म, अनुभागसत्कर्म, प्रदेशसत्कर्म च । तदेवमुक्तो भेदः । सम्प्रति साद्यनादिप्ररूपणार्थमाह–'धुव'इत्यादि । अष्टानां मूलप्रकृतीनां सत्कर्म त्रिधा, तद्यथा–ध्रुवमध्रुवमनादि च । तत्रानादित्वं सदैव भावात् । ध्रुवाध्रुवताऽभव्यभव्यापेक्षया ॥१॥

(उ०)—तदेवमभिहित उदयः । अथ सत्ताऽभिधेया, तत्र चेमेऽर्थाधिकाराः—भेदः, साद्यनादिप्ररूपणा, स्वामित्वं चेति । तत्र भेदनिरूपणं तावदाह—मूलप्रकृतिगतमुत्तरप्रकृतिगतं चेति सत्कर्म द्विविधम् । तत्र मूलप्रकृतिगतमष्टप्रकारमुत्तरप्रकृतिगतं चाष्टपञ्चाशदधिकशतप्रकारम् । पुनरेकैकं चतुर्विधं–प्रकृतिसत्कर्म, स्थितिसत्कर्म, अनुभागसत्कर्म, प्रदेशसत्कर्म चेति ज्ञेयम् । अथ साद्यनादिप्ररूपणां कुर्वन् मूलप्रकृतिविषयां तामाह–'धुव'इत्यादि, अष्टानां मूलप्रकृतीनां सत्कर्म त्रिधा–ध्रुवमध्रुवमनादि चेति । तत्रानादित्वं सदैव भावात् । ध्रुवाध्रुवताऽभव्यभव्यापेक्षया ॥१॥

इयाणिं उत्तरपगतीणं भन्नति—

**दिट्ठिदुगाउग छग्गति तणुचोद्दसगं च तित्थगरमुच्चं । दुविहं पढमकसाया होंति चउद्धा तिहा सेसा ॥२॥**

(चू०)—'दिट्ठिदुगाउग छग्गइ तणुचोद्दसगं च तित्थगरमुच्च'ति–दिट्ठिदुगं संमत्तमीसाणि आउगाणि चत्तारि छग्गतित्ति निरयदुगं मणुयदुगं देवदुगं तणुचउद्दसगंति वेउव्वियआहारसत्तग तित्थकरउच्चागोयाणं एएसिं अट्ठावीसाते कम्माणं संतकम्मं दुविहं–साति-य अधुवं च । कहं ? भण्णइ–अधुवसंतकम्माओ चेव । 'पढम-

कसाया होंति चउद्ध'त्ति-अणंताणुबंधिणो संतकम्मं पडुच्च चउव्विहा-सादियाइ। कहं ? भन्नति-सम्मद्दिट्ठिणा उव्वलियं तं पुणो मिच्छत्तं गतो बंधति तं पडुच्च साइयं संतकम्मं, तं ट्ठाणमपत्तपुव्वस्स अणादियं, धुवाधुवा पुव्वुत्ता। 'निद्दा सेस'त्ति-छव्वीसुत्तरस्स पगतिसयस्स संतकम्मं तिविहं-अणातियधुवाधुवमिति। कहं ? भण्णइ-धुवसंतकम्मत्तातो आदी नत्थि तम्हा अणाईयं, धुवाधुवं पुव्वुत्तं। सादिअणातिपरूवणा भणिया ॥२॥

(मलय०)—सम्प्रत्युत्तरप्रकृतीनां साधनादिप्ररूपणार्थमाह-'दिट्ठिदुग'त्ति। 'दृष्टिद्विकं' सम्यक्त्वसम्यग्मिथ्यात्वरूपं, आयूंपि चत्वारि, 'छगइ' त्ति-मनुष्यद्विकं देवद्विकं नरकद्विकं च, 'तनुचतुर्दशकं'-वैक्रियसप्तकाहारकसप्तकरूपं, तथा तीर्थकरनामोच्चैर्गोत्रं च, एतासाम ष्टाविंशतिप्रकृतीनां सत्कर्म द्विविधं-द्विप्रकारम्, तद्यथा-सादि अध्रुवं च। साद्यध्रुवता चाध्रुवसत्कर्मत्वादवसेया। तथा प्रथमकषाया अनन्तानुबन्धिनः सत्कर्मापेक्षया चतुर्विधाः, तद्यथा-सादयोऽनादयो ध्रुवा अध्रुवाश्च। तथाहि-ते सम्यग्दृष्टिना प्रथममुद्वालिताः, ततो मिथ्यात्वं गतेन यदा भूयोऽपि मिथ्यात्वप्रत्ययेन बध्यन्ते तदा सादयः, तत्स्थानमप्राप्तस्य पुनरनादयः, ध्रुवाध्रुवता पूर्ववत्। तथा शेषाः षड्विंशतिशतसंख्याः प्रकृतयः सत्कर्मापेक्षया त्रिधा-त्रिप्रकाराः, तद्यथा-अनादयो ध्रुवा अध्रुवाश्च। तत्रानादित्वं ध्रुवसत्कर्मत्वात्, ध्रुवाध्रुवता पूर्ववत् ॥२॥

(उ०)— सम्प्रत्युत्तरप्रकृतीनां साधनादिप्ररूपणामाह-दृष्टिद्विकं सम्यक्त्वसम्यग्मिथ्यात्वरूपं, आयूंपि चत्वार्यपि, 'छगइ' त्ति-मनुष्यद्विकं देवद्विकं नरकद्विकं च, तनुचतुर्दशकं-वैक्रियसप्तकाहारकसप्तके, तीर्थकरनाम, उच्चैर्गोत्रं च, एता अष्टाविंशतिप्रकृतयः सत्कर्म प्रतीत्य द्विविधाः-सादयोऽध्रुवाश्चेति। साद्यध्रुवभावश्चासामध्रुवसत्कर्मत्वादेवावसेयः। तथा प्रथमकषाया अनन्तानुबन्धिनः

सत्कर्मापेक्षया चतुर्विधाः साद्यनादिध्रुवाध्रुवभेदात् । तथाहि–सम्यग्दृष्टिना सता प्रथमत उद्वलिताः सन्तस्ते यदा मिथ्यात्वप्रत्ययतो भूयोऽपि बध्यन्ते तदा सादयः, तत्स्थानमप्राप्तस्यानादयः, ध्रुवाध्रुवता प्राग्वत् । तथा शेषाः षड्विंशतिशतसङ्ख्याः प्रकृतयः सत्कर्मापेक्षया त्रिधा–अनादिध्रुवाध्रुवभेदात् । तत्रानादित्वं ध्रुवसत्कर्मत्वात् । ध्रुवाध्रुवता प्राग्वत् ॥२॥

इयाणिं सामित्तं भन्नति । तं दुविहं–एक्केकपगतिसंतसामित्तं पगतिट्ठाणसंतसामित्तं च । एगेगपगतिसंतसामित्तं पुव्वं भन्नति—

**छउमत्थंता चउदस दुचरमसमयंमि अत्थि दो निद्दा । बद्धाणि ताव आऊणि वेइयाइं ति जा कसिणं ॥३॥**

(चू०)—'छउमत्थंता चोद्दस'ति–नाणंतरायदसगं दंसणचउण्हं एते चउद्दस, एएसिं छउमत्थे अंतो, केवलिस्स एए णत्थि कम्मा । 'दुचरिमसमयंमि अत्थि दो निद्द'त्ति–तस्सेव छउमत्थस्स जाव दुचरिमो समतो ताव निद्दा पयला हेट्ठिल्लाणं सव्वेसिं अत्थि । 'बद्धाणि ताव आऊणि वेइयाइं ति जा कसिणं'ति–चत्तारि वि आउगाणि बद्धाणि ताव अत्थि जाव निरवसेसाणि वेइयाणि, परतो नत्थि ॥३॥

(मलय०)—तदेवं कृता साद्यनादिप्ररूपणा । सम्प्रति स्वामित्वं वक्तव्यम् । तच्च द्विधा–एकैकप्रकृतिगतं प्रकृतिस्थानगतं च । तत्रैकैकप्रकृतिगतं स्वामित्वमभिधित्सुराह–'छउमत्थंत'त्ति । ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाश्चतुर्दश प्रकृतयः 'छद्मस्थान्ताः'–क्षीणकषायवीतरागच्छद्मस्थगुणस्थानपर्यवसानाः क्षीणकषायवीतरागच्छद्मस्थगुणस्थानकं यावत्सत्यो भवन्तीत्यर्थः । परतस्तासामभावः । एवमुत्तरत्राप्युक्तगुणस्थानकात्परतोऽभावो वेदितव्यः । तथा द्वे निद्रे क्षीणकषायवीतरागच्छद्मस्थगुणस्थानकद्विचरमसमयं

वहानि तावत्सन्ति यावत् 'कृत्स्नं'–निरवशेषं वेदितानि न भवन्ति ॥२॥

यावत्सत्यौ स्तः। आयूंषि चत्वार्यपि बद्धानि तावत्सन्ति यावत् 'कृत्स्नं'–निरवशेषं वेदितानि न भवन्ति ॥२॥ तत्रैकैकप्रकृति-

(उ०)—तदेवं कृता साधनादिप्ररूपणा, सम्प्रति स्वामित्वं वाच्यं, तच्च द्विधा–एकैकप्रकृतिगतं प्रकृतिस्थानगतं च। तत्रैकैकप्रकृति-
गतं स्वामित्वं प्रतिपिपादयिषुराह–चतुर्दश प्रकृतयो ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाः छद्मस्थान्ताः–क्षीणकषाय-
वीतरागच्छद्मस्थगुणस्थानकं यावत्सत्यो भवन्तीत्यर्थः, परतस्तासामभावः, एवमुत्तरत्रापि यासां सत्ता यद्गुणस्थानपर्यन्ता वक्ष्यते ततः
परतस्तदभावोऽवधारणीयः। तथा द्वे निद्रे क्षीणकषायवीतरागच्छद्मस्थगुणस्थानकद्विचरमसमयं यावत्सत्यौ स्तः। आयूंषि चत्वार्यपि
बद्धानि तावत्सन्ति यावत्कृत्स्नं निरवशेषं वेदितानि सन्ति–स्वस्वभवपर्यन्तमनुभूयमानानि भवन्तीत्यर्थः ॥३॥

**तिसु मिच्छत्तं नियमा अट्ठसु ठाणेसु होइ भइयव्वं। आसाणे सम्मत्तं नियमा सम्मं दससु भज्जं ॥४॥**

(चू०)—'तिसु मिच्छत्तं नियम'त्ति–तिसु गुणट्ठाणेसु मिच्छत्तं नियमात्थि, तं जहा–मिच्छदिट्ठिसासायण-
संमामिच्छदिट्ठिसु। 'अट्ठसु ट्ठाणेसु होइ भइयव्वं'–असंजयाति जाव उवसंतकसातो ता होज्ज वा ण वा।
खातियसंमद्दिट्ठिं पडुच्च नत्थि, सेसेसु अत्थि। 'आसाणे संमत्तं णियम'त्ति–सासायणसम्मदिट्ठिमि समत्तं
नियमा अत्थि जेण उवसमसंमत्तद्धाते सासायणो भवति। 'भज्जं दससु होति'त्ति–आइमेसु सासायणवज्जेसु
जाव उवसंतकसातो एएसु दससु सम्मत्तं भइयव्वं। कहं? भन्नति–मिच्छादिट्ठिंमि उव्वलियं य ण उप्पातियं
वा तं पडुच्च नत्थि, अट्ठावीसं संतकंमिगस्स अत्थि। सम्मामिच्छदिट्ठिम्मि उव्वलियं पडुच्च णत्थि, संमत्ते
उव्वलिए वि समामिच्छदिट्ठी लब्भति, अणुव्वलियसंमत्तस्स अत्थि। सेसेसु खातियं सम्मदिट्ठिं पडुच्च णत्थि,

इहरहा अत्थि ॥४॥

(मलय०)— 'तिसु' त्ति–त्रिषु गुणस्थानकेषु मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टिलक्षणेषु नियमादवश्यन्तया मिथ्यात्वं सत् विद्यमानम्, शेषेषु पुनरष्टसु गुणस्थानकेषु उपशान्तमोहगुणस्थानकपर्यवसानेषु भाज्यम्। तथाहि–अविरतसम्यग्दृष्ट्यादिना क्षपिते न भवति, उपशान्ते तु भवति। क्षीणमोहादिषु पुनस्तस्यावश्यमभावः। तथा 'आसादने'–सासादने सम्यक्त्वं नियमादस्ति। दशसु पुनर्गुणस्थानकेषु मिथ्यादृष्ट्याद्युपशान्तमोहगुणस्थानकपर्यवसानेषु भाज्यम्, कदाचिद्भवति कदाचिन्न भवतीत्यर्थः। तथाहि–मिथ्यादृष्टावभव्ये न भवति, भव्येऽपि कदाचिद्भवति कदाचिन्न। तथा सम्यग्मिथ्यादृष्टित्वं कियत्कालं सम्यक्त्वे उद्वलितेऽपि भवति, ततस्तत्रापि तद्भाज्यम्। अविरतादिषु पुनः क्षपकेषु न भवति, उपशमकेषु तु भवति, अतस्तत्रापि तद्भाज्यम् ॥४॥

(उ०)—त्रिषु गुणस्थानकेषु मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टिलक्षणेषु नियमादवश्यंभावेन मिथ्यात्वं सत् विद्यमानम्। शेषेषु पुनरष्टसु गुणस्थानकेषूपशान्तमोहपर्यवसानेषु भाज्यं विकल्पनीयं कदाचित्सत्तायां भवति कदाचिन्नेत्यर्थः। तथाहि–अविरतसम्यग्दृष्ट्यादिना क्षपिते नास्ति, उपशमिते त्वस्ति। क्षीणमोहादिषु पुनस्तस्यावश्यमभावः। तथा 'आसाणे' त्ति–सासादने सम्यक्त्वं सम्यक्त्वमोहनीयं नियमादस्ति, यत औपशमिकसम्यक्त्वाद्धायां जघन्यतः समयमात्रशेषायामुत्कर्षतः षडावलिकाशेषायां सासादनो लभ्यते। तत्र च नियमादष्टाविंशतिसत्कर्मैवासौ भवतीति भावः। दशसु पुनर्गुणस्थानकेषु मिथ्यादृष्ट्याद्युपशान्तमोहान्तेषु भाज्यं भवति, कदाचिद्भवति, कदाचिन्न भवतीत्यर्थः। तथाहि–मिथ्यादृष्टौ जीवेऽनादिषड्विंशतिसत्कर्मण्युद्वलितसम्यक्त्वपुञ्जे मिश्रेऽपि सम्यक्त्वपुञ्जोद्वलनानन्तरं कियत्कालमवतिष्ठमानमिश्रभावेऽविरतादौ चोपशान्तमोहान्ते क्षीणसप्तके सम्यक्त्वमोहनीयं सत्तायां न प्राप्यते-

न्यादशे च प्राप्यत इति ॥४॥

बिइयतइएसु मिस्सं नियमा ठाणनवगम्मि भयणिज्जं। संजोयणा उ नियमा दुसु पंचसु होइ भइयव्वं ॥५॥

(चू०)—'बितियततिएसु मीसं णियम'त्ति–सासायणमीसेसु सम्मामिच्छत्तेण विणा ण होतित्ति काउं। 'ठाणणवगंमि भयणिज्जं'ति–मिच्छादिट्ठी असंजयसमदीट्ठी जाव उवसंतकसायो एएसु नवसु होज्जा वा ण वा। कहं? भन्नति–मिच्छदिट्ठिस्स अट्ठावीसा सत्तावीसा संतकंमंसिगस्स अत्थि छव्वीससंतकम्मंसिगस्स णत्थि। सेसेसु खातियसंमद्दिट्ठिं पडुच्च णत्थि, ईयरहा अत्थि। 'संजोयणा उ णियमा दुसु'त्ति–अणंताणुवंधिणो मिच्छादिट्ठिसासायणेसु अत्थि णियमा जेण एए अणंताणुवंधिणो णियमा बंधंति। 'पंचसु होइ भइयव्वं'ति–संमामिच्छद्दिट्ठि जाव अप्पमत्तसंजतो एएसु पंचट्ठाणेसु अणंताणुवंधिसत्तं भइयव्वं। कहं? भन्नति–उव्वलियं पडुच्च य णत्थि, अन्नहा अत्थि ॥५॥

(मलय०)—'बिइय'त्ति–द्वितीये तृतीये च गुणस्थानके मिश्रं सम्यग्मिथ्यात्वं नियमादस्ति। यतः सासादनो नियमादष्टाविंशतिसत्कर्मैव भवति, सम्यग्मिथ्यादृष्टिश्च सम्यग्मिथ्यात्वं विना न भवति, ततः सासादने सम्यग्मिथ्यादृष्टौ च सम्यङ्मिथ्यात्वमवश्यमस्ति। 'स्थाननवके' गुणस्थानकनवके मिथ्यादृष्ट्यादौ उपशान्तगुणस्थानकान्ते 'भजनीयं'–विकल्पनीयं कदाचिद्भवति कदाचिन्न भवति। भावना च प्रागुक्तप्रकारेण स्वयमेव कर्तव्या, सुगमत्वात्। तथा 'संयोजना' अनन्तानुबन्धिनो द्वयोर्मिथ्यादृष्टिसासादनयोर्नियमाद्भवन्ति। यत एतावद्द्वयमनन्तानुबन्धिनो बध्नीतः। पञ्चसु पुनर्गुणस्थानकेषु सम्यग्मिथ्यादृष्ट्यादिष्वप्रमत्तसंयतपर्यन्तेषु भज-

नीयाः । यदि उद्वलितास्ततो न सन्ति, इतरथा तु सन्तीत्यर्थः ॥५॥

(उ०)—द्वितीये तृतीये च गुणस्थाने मिश्रं सम्यग्मिथ्यात्वं नियमादस्ति, यतः सासादनो नियमादष्टाविंशतिसत्कर्मैव भवति, मिश्रस्त्वष्टाविंशतिसत्कर्मा विसंयोजितसम्यक्त्वः सप्तविंशतिसत्कर्मोद्वलितानन्तानुबन्धिचतुष्कश्चतुर्विंशतिसत्कर्मा वा भवतीत्येतेषु च सत्तास्थानेषु मिश्रसत्ताऽवश्यं लभ्यते । षड्विंशतिसत्कर्मा तु मिश्रो न संभवत्येव, मिश्रपुञ्जस्य सत्तोदयाभ्यां विना मिश्रगुणस्थानाप्राप्तेः । 'स्थाननवके'–गुणस्थाननवके मिथ्यादृष्ट्यविरतसम्यग्दृष्ट्यादावुपशान्तमोहान्ते भजनीयं मिश्रं विकल्पनीयम् । यो मिथ्यादृष्टिः षड्विंशतिसत्कर्मा ये चाविरतसम्यग्दृष्ट्यादय उपशान्तमोहान्ताः क्षायिकसम्यग्दृष्टयस्तेषु मिश्रं सत्तायां न प्राप्यतेऽन्यत्र च प्राप्यत इत्यर्थः । तथा संयोजना–अनन्तानुबन्धिनो द्वयोर्मिथ्यादृष्टिसासादनयोर्नियमाद्भवन्ति, यत एताववश्यमनन्तानुबन्धिनो बध्नतः, पञ्चसु पुनर्गुणस्थानेषु सम्यग्मिथ्यादृष्ट्यादिष्वप्रमत्तसंयतपर्यन्तेषु भजनीयाः, विसंयोजितानन्तानुबन्धिनश्चतुर्विंशतिसत्कर्मणः सम्यग्मिथ्यादृष्टेः, क्षीणसप्तकतयैकविंशतिसत्कर्मणोऽनन्तानुबन्धिराहित्येन चतुर्विंशतिसत्कर्मणो वाऽविरतसम्यग्दृष्ट्यादेरनन्तानुबन्धिनः सत्तायां न सन्ति, तदितरस्य तु सन्तीति । अत्र गुणस्थानपञ्चक एवानन्तानुबन्धिनां भजनीयत्वं यदुक्तं–"तद्विसंयोजितानन्तानुबन्धिकषाय एवोपशमश्रेणिमपि प्रतिपद्यते" इति स्वमताभिप्रायेण । कर्मग्रन्थान्तरे तु "आइदुगे अण नियमा भइया मीसाइ णवगम्मि" इत्युक्तमिति ध्येयम् ॥५॥

**खवगानियट्टिअद्धा संखिज्जा होंति अट्ठ वि कसाया । निरयतिरियतेरसगं निद्दानिद्दातिगेणुवरिं ॥६॥**

(चू०)—'खवगानियट्टिअद्धा संखेज्जा होंति अट्ठ वि कसाय'त्ति–खवगअणियट्टिअद्धाते 'संखेज्जा होंति' जाव

संखेज्ञा भागा ताव मज्झिमा अट्ट वि कसाया अत्थि, परतो नत्थि । उवसमसेढिं पडुच्च जाव उवसंतकसायाते ताव अत्थि । 'निरयनिरियतेरसगं णिद्दाणिद्दातिगेणुवरि'त्ति–निरयतिरियएगंतपातोग्गाति तेरस नामाति, तं जहा–निरयगति तिरियगति एगिंदियजाति जाव चोरिंदिजाति णरयाणुपुव्वि तिरियाणुपुव्वि आयावं उज्जोवं थावरं सुहुमं साहारणं एए तेरस, थीणगिद्धितिगेण सह सोलस 'उवरिं'ति अट्टसु कसातेसु खविएसुवरि संखेज्जेसु ट्ठितिखंडेसु गतेसु सोलस वि जुगवं णस्संति, जाव अविणट्ठा ताव अत्थि परतो णत्थि । उवसमसेढीए उवसंतस्स वि अत्थि । ६॥

(मलय०)—'खवग' त्ति–क्षपकस्य अनिवृत्तिवादरसंपरायाद्धाया यावत् संख्येया भागास्तावत् अष्टावपि अप्रत्याख्यानप्रत्याख्यान-संज्ञाः कषायाः सन्ति । परतो न विद्यन्ते, क्षीणत्वात् । उपशमश्रेणिमधिकृत्य पुनरुपशान्तमोहगुणस्थानकं यावत् सन्तो वेदितव्याः । निरयतिर्यगेकान्तप्रायोग्यं यन्नामत्रयोदशकं नरकद्विकतिर्यग्द्विकैकद्वित्रिचतुरिन्द्रियजातिस्थावरातपोद्योतसूक्ष्मसाधारणरूपं निद्रानिद्रात्रिकेण सह संयुक्तं कषायाष्टकक्षयादुपरि स्थितिखंडेषु सहस्रेषु गतेषु सत्सु युगपत्क्षयमेति । ततो यावन्न क्षयं याति तावत् सत्, क्षये च सति असत् । उपशमश्रेण्यां पुनरेताः षोडशापि प्रकृतय उपशान्तमोहगुणस्थानकं यावत् सत्यो वेदितव्याः ॥६॥

(उ०)—क्षपितस्यानिवृत्तिवादरसम्परायाद्धाया यावत्सङ्ख्येया भागास्तावदष्टावपि कषाया अप्रत्याख्यानप्रत्याख्यानावरणसंज्ञाः सन्ति, परतो न विद्यन्ते, क्षीणत्वात् । उपशमश्रेणिमधिकृत्य पुनरुपशान्तमोहगुणस्थानं यावत्सन्तो वेदितव्याः । तथा निरयतिर्यगेकान्तप्रायोग्यं यन्नामत्रयोदशकं–नरकद्विकतिर्यग्द्विकैकद्वित्रिचतुरिन्द्रियजातिस्थावरातपोद्योतसूक्ष्मसाधारणरूपं निद्रात्रिकेण संयुक्तं कषा-

याष्टकक्षयादुपरि सङ्ख्येयेषु स्थितिखण्डेषु गतेषु सत्सु युगपत्क्षयमुपयाति, ततो यावन्न क्षयमेति तावत्सत्, क्षये च सत्यसत्। उपशमश्रेण्यां त्वेताः षोडशापि प्रकृतय उपशान्तमोहगुणस्थानं यावत्सत्यो ज्ञेयाः ॥६॥

**अपुमित्थीय समं वा हासच्छक्कं च पुरिस संजलणा। पत्तेगं तस्स कमा तणुरागंतो त्ति लोभो य ॥७॥**

(चू०)—'अपुमित्थीय समं व'त्ति-ततो संखेज्जेसु ट्ठितिखंडगेसु (गतेसु) नपुंसगवेओ खिज्जति। ततो इत्थिवेतो। एवं ताविवित्थिपुरिसलिंगेणं पडिवन्नस्स। नपुंसगलिंगेण पडिवन्नस्स इत्थिनपुंसगवेतो जुगवं खिज्जंति, ततो परं नत्थि। उवसमसेढीते उवसंतकसायस्स वि अत्थि। 'हासछक्कं च पुरिस'त्ति-ततो संखेज्जेसु ट्ठितिखंडगेसु गतेसु छक्कं जुगवं खिज्जति। ततो समऊणासु दोसु आवलियासु पुरिसवेदो खिज्जति। एवं पुरिसवेएण पडिवण्णस्स। इत्थिनपुंसगवेयपडिवन्ना (पु)णो छन्नोकसाया पुरिसवेदो य सत्त वि जुगवं खिज्जंति। 'संजलणा पत्तेग तस्स कम'त्ति-ततो संखेज्जेसु ट्ठितिखंडगेसु गतेसु कोहसंजलणा खिज्जति। ततो संखेज्जेसु ट्ठितिखंडगेसु माणसंजलणा खिज्जति। ततो संखेज्जेसु ट्ठितिखंडेसु माया संजलणा खिज्जनि। 'तणुरागंतो त्ति लोभो य'त्ति-लोभसंजलणा जाव सुहुमरागस्स चरिमसमते तावत्थि। उवसमसेढीए उवसंतकसायस्स वि य अत्थि ॥७॥

(मलय०)—'अपुमित्थीए'त्ति-पूर्वोक्तप्रकृतिषोडशकक्षयादनन्तरं संख्येयेषु स्थितिखंडेषु गतेषु सत्सु नपुंसकवेदः क्षीयते, यावच्च न क्षीयते तावत् सन्। ततः पुनरपि स्थितिखंडेषु संख्येयेषु गतेषु सत्सु स्त्रीवेदः क्षीयते, सोऽपि यावत्क्षयं न याति तावत्सन्। एवं स्त्रीवेदेन पुरुषवेदेन वा क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम्। नपुंसकवेदेन प्रतिपन्नस्य तु स्त्रीवेदनपुंसकवेदौ युगपत्क्षयमुपगच्छतः, यावच्च

न क्षयमुपगच्छतस्तावत्सन्तौ । उपशमश्रेणिमधिकृत्य पुनरुपशान्तमोहगुणस्थानकं यावत्सन्तौ । ततः स्त्रीवेदक्षयानन्तरं संख्येयेषु
स्थितिखंडेषु गतेषु सत्सु हास्यादिषट्कं युगपत्क्षयमुपयाति, ततः समयोनावलिकाद्विकातिक्रमे पुरुषवेदः । एवं पुरुषवेदेन क्षपकश्रेणिं
प्रतिपन्नस्य द्रष्टव्यम् । स्त्रीवेदेन नपुंसकवेदेन वा क्षपकश्रेणिं प्रतिपन्नस्य पुनः पुरुषवेदो हास्यादिषट्कं च युगपत्क्षीयते । ततः पुरुषवे-
दक्षयानन्तर संख्येयेषु स्थितिखंडेषु गतेषु सत्सु संज्वलनक्रोधः क्षयमुपयाति । ततः पुनरपि संख्येयेषु स्थितिखंडेषु गतेषु सत्सु संज्व-
लनमानः । ततोऽपि संख्येयेषु स्थितिखंडेषु गतेषु संज्वलनमाया । यावच्च हास्यादिप्रकृतयः क्षयं नोपयान्ति तावत्सत्यः । 'तणुरागंतो
त्ति लोभो य'त्ति-लोभः संज्वलनलोभो यावत्तनुरागान्तः सूक्ष्मसंपरायगुणस्थानकान्तः तावत् सन् वेदितव्यः, परतोऽसन् । उपशम-
श्रेणिमधिकृत्य पुनर्हास्यादिप्रकृतयः सर्वा अपि उपशान्तमोहगुणस्थानकं यावत् सत्योऽवसेयाः ॥७॥

(३०)—माणत्तप्रकृतिषोडशकक्षयानन्तरं सङ्ख्येयेषु स्थितिखण्डेषु गतेषु नपुंसकवेदः क्षीयते, यावच्च न क्षीयते तावत्सन् । ततः
पुनरपि स्थितिखण्डेषु सङ्ख्येयेषु गतेषु स्त्रीवेदः क्षीयते, सोऽपि यावन्न क्षयं याति तावत्सन् । एवं स्त्रीवेदेन पुरुषवेदेन वा क्षपकश्रेणिं
प्रतिपन्नस्य द्रष्टव्यं, नपुंसकवेदेन प्रतिपन्नस्य तु स्त्रीवेदनपुंसकवेदौ युगपत्क्षयमुपगच्छतः, यावच्च न क्षयमुपगच्छतस्तावत्सन्तौ, उपश-
मश्रेणिमधिकृत्य तूपशान्तमोहगुणस्थानकं यावत्सन्तौ । ततः स्त्रीवेदक्षयानन्तरं सङ्ख्येयेषु स्थितिखण्डेषु हास्यादिषट्कं युगपत्क्षीयते,
ततः समयोनावलिकाद्विकातिक्रमे पुरुषवेदः । एवं पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम् । स्त्रीवेदेन नपुंसकवेदेन वा क्षपकश्रेणिं
प्रतिपन्नस्य तु पुरुषवेदो हास्यादिषट्कं च युगपत्क्षीयते । ततः पुरुषवेदक्षयानन्तरं सङ्ख्येयेषु स्थितिखण्डेषु गतेषु संज्वलनक्रोधः क्षीयते ।
ततो भूयोऽपि सङ्ख्येयेषु स्थितिखण्डेषु गतेषु संज्वलनमानः । ततोऽपि सङ्ख्येयेषु स्थितिखण्डेषु गतेषु संज्वलनी माया । यावच्च हास्या-

दिप्रकृतयो न क्षीयन्ते तावत्सत्यः। तनुरागान्त इति लोभश्चेत्यत्रेतिर्यावदर्थः-यावत्तनुरागस्य सूक्ष्मसम्परायगुणस्थानकस्यान्तस्तावल्लोभश्च संज्वलनलोभश्च सन् ज्ञातव्यः, परतोऽसन्। उपशमश्रेणिमधिकृत्य तु हास्यादिप्रकृतयः सर्वा अप्युपशान्तमोहगुणस्थानं यावत्सत्यो वेदितव्याः ॥७॥

**मणुयगइजाइतसबायरं च पज्जत्तसुभगआएज्जं। जसकित्ती तित्थयरं वेयणिउच्चं च मणुयाउं ॥८॥**
**भवचरिमस्समयम्मि उ तम्मग्गिल्लसमयम्मि सेसा उ। आहारगतित्थयरा भज्जा दुसु नत्थि तित्थयरं ॥९॥**

(चू०)—'मणुयगइजातितसबायरं च पज्जत्तसुभगमादेज्जं जसकित्ती तित्थयरं वेयणिउच्चं च मणुयाउं' एए बारसं कमा 'भवचरिमस्समयम्मि' त्ति-जाव अजोगिचरिमसमतो ताव एए अत्थि, 'तम्मग्गिल्लसमयम्मि सेसा उ' त्ति-णव णाम तेरस णामरहिया णामकंमजा एक्कासीति नियागोयअन्नयरवेयणिज्जसहिया जाया तेसीती ते सेसा वुच्चंति, 'तम्मग्गिल्लसमयम्मि' त्ति-अजोगिचरिमसमयस्स जो दुचरिमो समतो ताव अत्थि, चरिमसमते खिज्जंति। 'आहारगतित्थगरा भज्ज' त्ति-सव्वेसु गुणट्ठाणेसु आहारगतित्थगराति भयणिज्जति। 'दुसु णत्थि तित्थगरं' ति-सासायणसम्मामिच्छादिट्ठीणं तित्थगरसंतं नत्थि ॥८-९॥

(मलय०)—'मणुयगइ' इत्यादि-मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरान्यतरवेदनीयोच्चैर्गोत्रमनुष्यायूरूपा द्वादश प्रकृतयो भवचरमसमये सन्ति, अयोगिकेवलिचरमसमयं यावत् विद्यन्ते, परतोऽसत्य इत्यर्थः। शेषाः पुनरुक्तव्यतिरिक्ताः

सर्वा अपि त्र्यशीतिसंख्याः 'तम्मग्गिल्लसमयम्मि' त्ति–भवचरमसमयपाश्चात्यसमयेऽयोगिकेवलिद्विचरमसमये इत्यर्थः, सत्यो भवन्ति, चरमसमये त्वसत्यः । आहारकतीर्थकरनाम्नी सर्वेष्वपि गुणस्थानकेषु भाज्ये । द्वयोः पुनर्गुणस्थानकयोः सासादनसम्यङ्मिथ्यादृष्टिरूपयोस्तीर्थकरनाम नियमान्न विद्यते, तीर्थकरनामसत्कर्मणः स्वभावत एवोक्तरूपे गुणस्थानकद्विके गमनासंभवात् ॥८–९॥

(उ०)—मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरान्यतरवेदनीयोच्चैर्गोत्रमनुष्यायूरूपा द्वादश प्रकृतयो भवचरमसमये सन्ति, अयोगिकेवलिचरमसमयं यावद्विद्यन्ते परतोऽसत्य इत्यर्थः । शेषाः पुनरुक्तव्यतिरिक्ता अन्यतरवेदनीयदेवद्विकौदारिकसप्तकवैक्रियसप्तकाहारकसप्तकतैजसकार्मणसप्तकप्रत्येकसंहननपट्कसंस्थानपट्कवर्णादिविंशतिविहायोगतिद्विकागुरुलघुपराघातोपघातोच्छ्वासस्थिरास्थिरशुभाशुभदुर्भगसुस्वरदुःस्वरायशःकीर्तिमनुष्यानुपूर्वीनिर्माणानादेयापर्याप्तकनीचैर्गोत्ररूपास्त्र्यशीतिसंख्याः 'तम्मग्गिल्लसमयम्मि' त्ति–भवचरमपाश्चात्यसमयेऽयोगिकेवलिद्विचरमसमये सत्यो भवन्तीत्यर्थः, चरमसमये त्वसत्यः । आहारकतीर्थकरनाम्नी सर्वेष्वपि स्वाधारत्वेन संभविषु गुणस्थानेषु भाज्ये । द्वयोः पुनर्गुणस्थानयोः सासादनसम्यग्मिथ्यादृष्टिरूपयोस्तीर्थकरनाम नियमान्न विद्यते, तीर्थकरनामसत्कर्मणः स्वभावत एवोक्तगुणस्थानद्वये गमनासंभवात्, तत इत्थमनयोर्भजना भावनीया । योऽप्रमत्तयत्यादिः संयमप्रत्ययादाहारकसप्तकबन्धं विधाय विशुद्धिवशादुपरितनगुणस्थानेषु समारोहति, यश्च तद्बन्धानन्तरमुपरितनगुणस्थानेभ्योऽविशुद्धाध्यवसायेनाधः पतति तस्याहारकसप्तकं सर्वगुणस्थानेषु सत्तायां प्राप्यते । यस्त्वाहारकसप्तकं न बध्नात्येव, तद्बन्धं विनैव चोपरितनानि गुणस्थानान्यध्यारोहति तस्य तत्तेषु सत्तायां नावाप्यते । तथा यः कश्चिदविरतसम्यग्दृष्ट्यादिरपूर्वकरणभागपट्कं यावत्सम्यक्त्वप्रत्ययात्तीर्थकरनाम बद्ध्वोपरितनगुणस्थानकान्यधिरोहति, कश्चिच्च बद्धतीर्थकरनामाऽविशुद्धिवशान्मिथ्यात्वमपि गच्छति

तदा सासादनमिश्ररहितेषु द्वादशसु गुणस्थानकेषु तीर्थकरनाम सत्तायां प्राप्यते । यस्तु विशुद्धसम्यक्त्वे सत्यपि तन्न बध्नाति तस्य सर्वगुणस्थानकेषु तत्सत्ता न लभ्यते, यदनयोः स्वहेतुसद्भावेऽपि बन्धाध्रौव्यान्नावश्यं सत्तासंभव इति । तथा तीर्थकराहारकद्वयस्य मिथो मिलितस्य सत्ता मिथ्यादृष्टौ नावाप्यते । उक्तं च—"उभए संति न मिच्छो" । केवलतीर्थकरनामसत्ताकोऽपि मिथ्यादृष्टिरन्तर्मुहूर्त्तमात्रं कालं भवेन्नाधिकं, उक्तं च—"तित्थगरे अन्तरमुहुत्तं" । इदमुक्तं भवति—यो नरके बद्धायुष्को वेदकसम्यग्दृष्टिबद्धतीर्थकरनामा सँस्तत्रोत्पित्सुरवश्यं सम्यक्त्वं परित्यज्य तत्रोत्पद्यते, उत्पत्तिसमयानन्तरमन्तर्मुहूर्त्तादूर्ध्वमवश्यं सम्यक्त्वं प्रतिपद्यते, तस्यायमुक्तप्रमाणः कालो लभ्यत इति द्रष्टव्यम् ॥८–९॥

एगेगपगतिसंतं भणियं, इयाणिं पगतिठाणसंतं भण्णति—

**पढमचरिमाणमेगं छन्नवचत्तारि बीयगे तिन्नि । वेयणियाउयगोएसु दोन्नि एगोत्ति दो होंति ॥१०॥**

(चू०)—'पढमचरिमाणमेगं'ति—नाणावरणअंतराइयाणं एगेगं पगतिट्ठाणं पंच चेव जाव खीणकसायचरिमसमतो । 'छन्नवचत्तारि बीयगे तिन्नि'त्ति—नव छ चत्तारि एयाणि दंसणावरणे तिन्नि सत्तट्ठाणाणि—सव्वसमुदतो नव, थीणगिद्धितिगे खविते छ, ततो निद्दादुगे खविए चत्तारि। णव जाव उवसंतकसातो, खवगेसु वि अणियट्टिअद्धाते जाव संखेज्जभागोत्ति । छक्कं ततो आढत्तं जाव खीणकसायस्स दुचरिमसमतोत्ति । चउक्कं तस्सेव चरिमसमते । 'वेयणियाउयगोएसु दोन्नि एगोत्ति दो होंति'त्ति—वेयणियआउगगोएसु दोण्हं पगतीणं समुदतो, दोन्नि आउगस्स अन्नं आउगं बद्धं जाव ण उदेति ताव दोन्नि संतं, उदिन्ने एगं संतं । वेयणिज्जस्स वि एगं जाव न

खीणं ताव दोन्नि संतं। गोयस्स जाव एगं न खीणं उव्वलियं वा ताव दोन्नि संतं, णीयागोते खविते उच्चागोए वा उव्वलीए एगं संतं, तहा दोन्नि एगंति दो संतट्ठाणाणि भवंति ॥१०॥

(मलय०)—तदेवमुक्तमेकैकप्रकृतिसत्कर्म । संप्रति प्रकृतिस्थानसत्कर्मप्ररूपणार्थमाह । 'पढम'त्ति–प्रथमचरमयोर्ज्ञानावरणान्तराययोरेकैकं पञ्चप्रकृत्यात्मकं स्थानम् । तच्च क्षीणकपायचरमसमयं यावत् सत्, परतोऽसत् । तथा द्वितीये दर्शनावरणीये त्रीणि प्रकृतिस्थानानि, तद्यथा–षद् नव चतस्रः । तत्र सकलदर्शनावरणीयप्रकृतिसमुदायो नव । ताश्च नव प्रकृतय उपशमश्रेणिमधिकृत्य उपशान्तमोहगुणस्थानकं यावत् सत्यः । क्षपकश्रेणिमधिकृत्य पुनरनिवृत्तिबादरसंपरायाद्धाया यावत् संख्येया भागास्तावत्सत्यः, परतः स्त्यानर्द्धित्रिकक्षये षद् भवन्ति । ताश्च तावत्सत्यो यावत् क्षीणकपायस्य द्विचरमसमयः । तस्मिन् द्विचरमसमये निद्राप्रचले व्यवच्छिद्येते । ततश्चरमसमये चतस्र एव सत्यः । ता अपि तत्र व्यवच्छिद्यन्ते । तथा वेदनीयायुर्गोत्राणां द्वे प्रकृतिस्थाने, तद्यथा–द्वे एका च । तत्र वेदनीयस्य यावदेकं न क्षीणं तावत् द्वे सत्यौ, एकस्मिंस्तु क्षीणे एका । गोत्रस्य यावदेकं न क्षीणं उद्वलितं वा तावत् द्वे सत्यौ । नीचैर्गोत्रे क्षपिते उच्चैर्गोत्रे वा उद्वलिते पुनरेका सती । आयुषस्तु यावद्बद्धमायुर्नोदेति तावत् द्वे प्रकृती सत्यौ । उदिते तु तस्मिन् प्राक्तन क्षीणमिति एका प्रकृतिः ॥१०॥

(उ०)—तदेवमुक्तमेकैकप्रकृतिसत्कर्म, सम्प्रति प्रकृतिस्थानसत्कर्मप्ररूपणार्थमाह–प्रथमचरमयोर्ज्ञानावरणान्तराययोरेकैकं पञ्चप्रकृत्यात्मकं स्थानं, तच्च क्षीणकपायचरमसमयं यावत्सत्, परतोऽसत् । तथा द्वितीये दर्शनावरणीये त्रीणि प्रकृतिस्थानानि, तद्यथा–षद् नव चतस्रः । तत्र समुदिताः सर्वा दर्शनावरणप्रकृतयो नव, ताश्चोपशमश्रेण्यामुपशान्तमोहं यावत्सत्यः, क्षपकश्रेण्यां त्वनिवृत्तिबा-

दरसम्परायाद्धाया यावत्संख्येया भागास्तावत्सत्यः, परतः स्त्यानर्द्धित्रिकक्षये षड्भवन्ति, ताश्च तावत्सत्यो यावत्क्षीणकषायस्य द्विचरमसमयः, तस्मिन् द्विचरमसमये निद्राप्रचलयोर्व्यवच्छेदः, ततश्चरमसमये चतस्र एव सत्यस्ता अपि तत्र व्यवच्छिद्यन्ते। तथा वेदनीयायुर्गोत्राणां द्वे द्वे प्रकृतिस्थाने, तद्यथा–द्वे एका च। तत्र वेदनीयस्य यावदेका प्रकृतिर्न क्षीणा तावद्द्वे सत्यौ, एकस्यां तु क्षीणायामेका सती। गोत्रस्य यावदेकं न क्षीणमुद्वलितं वा तावद्द्वे सत्यौ। नीचैर्गोत्रे क्षीणे उच्चैर्गोत्रे वोद्वलिते पुनरेका सती। आयुषस्तु यावद्बद्धमायुर्नोदेति तावद्द्वे प्रकृती सत्यौ, उदिते तु तस्मिन् प्राक्तनं क्षीणमित्येका सती ॥१०॥

इयाणि मोहस्स पगतिट्ठाणसंतं भन्नति—

**एगाइ जाव पंचगमेक्कारस बार तेरसिगवीसा। बिय तिय चउरो छस्सत्त अट्ठ वीसा य मोहस्स ॥११॥**

(चू०)—१-२-३-४-५-११-१२-१३-२१-२२-२३-२४-२६-२७-२८ एयाणि मोहणिज्जस्स संतकम्मट्ठाणाणि। सुहगहणनिमित्तं विवरीयाणि वक्खाणिज्जंति। तत्थ अट्ठावीसा सव्वमोहसमुदतो। ततो सम्मत्ते उव्वलिए सत्तावीसा। ततो संमामिच्छत्ते उव्वलिते छव्वीसा, अणादिमिच्छदिट्ठिस्स वा छव्वीसा। अट्ठावीसातो अणंताणुबंधिविसंजोजिए चउवीसा। ततो मिच्छत्ते खविते तेवीसा। ततो संमामिच्छत्ते खविते बावीसा। ततो संमत्ते खविते एक्कवीसा। ततो अट्ठकसाते खविते तेरस। ततो नपुंसगवेदे खविते बारस। ततो इत्थिवेए खविए एक्कारस। ततो छन्नोकसाते खविते पंच। ततो पुरिसवेए खविए चत्तारि। ततो कोहसंजलणे खविते तिन्नि। ततो माणसंजलणे खविते दोन्नि। ततो मायासंजलणाते खविते एको लोभो। संतट्ठाणनिरूवणा कया ॥११॥

(मलय०)—सम्प्रति मोहनीयस्य प्रकृतिसत्कर्मस्थानप्रतिपादनार्थमाह—'एगाइ' त्ति। मोहनीयस्य पञ्चदश प्रकृतिसत्कर्मस्थानानि। तद्यथा—एका, द्वे, तिस्रः, चतस्रः, पञ्च, एकादश, द्वादश, त्रयोदश, एकविंशतिः, द्वाविंशतिः, त्रयोविंशतिः, चतुर्विंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिश्चेति। एतानि सुखावबोधार्थं गाथाक्रमवैपरीत्येन भाव्यन्ते—तत्र मोहनीयस्य सर्वप्रकृतिसमुदायोऽष्टाविंशतिः। सम्यक्त्वे उद्वलिते सप्तविंशतिः। ततोऽपि सम्यग्मिथ्यात्वे उद्वलिते षड्विंशतिः, अथवाऽनादिमिथ्यादृष्टेः षड्विंशतिः। अष्टाविंशतिसत्कर्मणोऽनन्तानुबन्धिचतुष्टये क्षीणे चतुर्विंशतिः। ततो मिथ्यात्वे क्षीणे त्रयोविंशतिः। ततः सम्यग्मिथ्यात्वे क्षीणे द्वाविंशतिः। ततः सम्यक्त्वे क्षीणे एकविंशतिः। ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश। ततो नपुंसकवेदे क्षीणे द्वादश। ततः स्त्रीवेदे क्षीणे एकादश। ततः षट्सु नोकषायेषु क्षीणेषु पञ्च। ततः पुरुषवेदे क्षीणे चतस्रः। ततः संज्वलनक्रोधे क्षीणे तिस्रः। ततः संज्वलनमाने क्षीणे द्वे। संज्वलनमायायां च क्षीणायामेका ॥११॥

(उ०)—अथ मोहनीयस्य प्रकृतिसत्कर्मस्थानप्रतिपादनायाह—मोहनीयस्य पञ्चदश प्रकृतिसत्कर्मस्थानानि। तथाहि—एकाद्याः पञ्च, एका द्वे तिस्रश्चतस्रः पञ्च चेत्यर्थः, तथैकादश द्वादश त्रयोदशैकविंशतिस्त्रयोविंशतिश्चतुर्विंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिश्चेति। एतानि सुखावबोधाय गाथाक्रममुत्सृज्य भाव्यन्ते—तत्र मोहनीयस्य सर्वप्रकृतिसमुदायोऽष्टाविंशतिः। सम्यक्त्वे उद्वलिते सप्तविंशतिः। ततोऽपि सम्यग्मिथ्यात्वे उद्वलिते षड्विंशतिः, यद्वाऽनादिमिथ्यादृष्टेः षड्विंशतिः। अष्टाविंशतेरनन्तानुबन्धिचतुष्टये क्षीणे चतुर्विंशतिः। ततो मिथ्यात्वे क्षीणे त्रयोविंशतिः। ततः सम्यग्मिथ्यात्वे क्षीणे द्वाविंशतिः। ततः सम्यक्त्वे क्षीणे एकविंशतिः। ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश। ततो नपुंसकवेदे क्षीणे द्वादश। ततः स्त्रीवेदे क्षीणे एकादश। ततः षट्सु नोकषायेषु क्षीणेषु पञ्च। ततः पुरुष-

वेदे क्षीणे चतस्रः। ततः संज्वलनक्रोधे क्षीणे तिस्रः। ततः संज्वलने माने क्षीणे द्वे। ततः संज्वलन्यां मायायां क्षीणायामेका॥११॥

इयाणिं गुणट्ठाणेसु कस्स कतिट्ठाणा भवंति तं निरूवणत्थं भन्नति—

**तिन्नेग तिगं पणगं पणगं पणगं च पणगमह दोन्नि। दस तिन्नि दोन्नि मिच्छाइगेसु जावोवसंतो त्ति॥१२॥**

(चू०)—तिन्नि मिच्छादिट्ठिस्स संतट्ठाणाणि। तं जहा–अट्ठावीसा, सत्तावीसा, छव्वीसा। 'एगं'ति–सासायणस्स एगा अट्ठावीसा संतं, कारणं पुव्वुत्तं। तिगं सम्मामिच्छदिट्ठिस्स संतट्ठाणाणि, तं जहा–२८–२७–२४। अट्ठावीससंतकंमिगो सम्मामिच्छत्तं गओ तेण अट्ठावीसा। मिच्छदिट्ठिणा संमत्तं उव्वलियं पच्छा सत्तावीससंतकंमिगो सम्मामिच्छत्तं गतो तं पडुच्च २७। चउव्वीससंतकंमिगो संमदिट्ठि सम्मामिच्छत्तं गतो तं पडुच्च चउवीसा। 'पणगं'ति–असंजयसंमदिट्ठिस्स पंच संतट्ठाणाणि। तं जहा–२८–२४–२३–२२–२१। अट्ठावीसा उवसमसंमदिट्ठिस्स वा वेयगसम्मदिट्ठिस्स वा सव्वमोहसंतकंमिस्स अट्ठावीसा। चउवीसा अणंताणुबंधिअसंतकंमंसिगस्स वेयगसम्मदिट्ठिस्स वा उवसमसम्मदिट्ठिस्स वा भवति। तेवीसा वेयगसम्मदिट्ठिस्स मिच्छत्ते खविए भवइ। सम्मामिच्छत्ते खविए बावीसा। एक्कवीसा खातियसम्मदिट्ठिस्स भवति। पणगानि ते चेव पंच संजयासंजयस्स वि, 'पणगं च'त्ति–ते चेव पमत्तसंजयस्स वि। पुणो 'पणगं'ति–एए चेव अपमत्तसंजयस्स पंचट्ठाणा। ते तेसिं सव्वेसिं जहा असंजयसम्मदिट्ठिस्स भावणा तहा भाणियव्वा। अह दोन्नि'त्ति–अपुव्व'करणस्स दोन्नि ट्ठाणाणि २४–२१। चउवीसा उवसमसम्मदिट्ठिस्स उवसमसेढीते। एक्कवीसा खातियसम्म-

दिट्ठिस्स दोसु वि सेढीसु भवति। 'दस'त्ति अणियट्टिस्स दस संतट्ठाणाणि। तं जहा–२४–२१–१३–१२–११–५–४–३–२–१। तत्थ चउव्वीसा उवसमसेढीए, एक्कवीसा दोसु वि सेढीसु, सेसा खवगसेढीते, तेसिं पुव्वुत्तं कारणं। 'तिन्नि'त्ति–सुहुमसंपरागस्स तिन्नि संतट्ठाणाणि, तं जहा–२४–२१–१। चउव्वीसा एक्कवीसातो उवसमसेढीए, एगो खवगस्स होति। 'दोन्नि' त्ति–उवसंतकसायस्स दो संतट्ठाणाणि २४–२१ उवसमखतीय सम्मदिट्ठीणं जहक्कमं। 'मिच्छाइगेसु जावोवसंतो'त्ति–मिच्छादिट्ठि आदि जाव उवसंतकसातो ताव एए ट्ठाणा परिवाडीए घेत्तव्वा ॥१२॥

यावदुपशान्तमोहगुणस्थानकं तावन्मि-

(मलय०)—सम्प्रत्येतानि प्रकृतिसत्कर्मस्थानानि गुणस्थानकेषु विचिन्तयन्नाह–'तिन्नेग'त्ति। थ्यादृष्ट्यादिषु गुणस्थानकेषु यथासंख्यं त्र्यादीनि प्रकृतिसत्कर्मस्थानानि भवन्ति। तत्र मिथ्यादृष्टिगुणस्थानके त्रीणि प्रकृतिसत्कर्मस्थानानि। तद्यथा–अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिश्च। एतानि च प्रागेव भावितानि। सासादनसम्यग्दृष्टिगुणस्थानके एकं प्रकृतिसत्कर्मस्थानमष्टाविंशतिरूपम्। सम्यङ्मिथ्यादृष्टिगुणस्थानके त्रीणि प्रकृतिसत्कर्मस्थानानि, तद्यथा–अष्टाविंशतिः सप्तविंशतिश्चतुर्विंशतिश्च। इह योऽष्टाविंशतिसत्कर्मा सन् सम्यङ्मिथ्यात्वं गतस्तमाश्रित्याष्टाविंशतिः। येन पुनर्मिथ्यादृष्टिना सता पूर्वं सम्यक्त्वमुद्वलितं ततः सप्तविंशतिसत्कर्मणा सता सम्यङ्मिथ्यात्वमनुभवितुमारब्धं तं प्रति सप्तविंशतिः। चतुर्विंशतिसत्कर्मणां सम्यङ्मिथ्यादृष्टिं प्रतीत्य पुनश्चतुर्विंशतिः प्राप्यते। तथाऽविरतसम्यग्दृष्टिगुणस्थानके पञ्च प्रकृतिसत्कर्मस्थानानि, तद्यथा–अष्टाविंशतिः चतुर्विंशतिः त्रयोविंशतिः द्वाविंशतिः एकविंशतिश्च। तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टेः क्षायोपशमिकसम्यग्दृष्टेर्वा। अष्टाविंशतिसत्कर्मणो-

ऽनन्तानुबन्धिक्षये वेदकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेर्वा चतुर्विंशतिः । वेदकसम्यग्दृष्टेर्मिथ्यात्वे क्षपिते त्रयोविंशतिः । तस्यैव सम्यङ्मिथ्यात्वे क्षपिते द्वाविंशतिः । क्षायिकसम्यग्दृष्टेरेकविंशतिः । तथा देशविरतिगुणस्थानके पञ्च प्रकृतिसत्कर्मस्थानानि, तानि च पूर्वोक्तान्येव । तान्येव प्रमत्तसंयतगुणस्थानके । तान्येव चाप्रमत्तसंयतगुणस्थानके । 'अह दोन्नि'त्ति—अथानन्तरं अपूर्वकरणगुणस्थानके द्वे प्रकृतिस्थाने, तद्यथा—चतुर्विंशतिरेकविंशतिश्च । तत्रोपशमश्रेणिं प्रतिपन्नस्य चतुर्विंशतिः, क्षायिकसम्यग्दृष्टिमधिकृत्य द्वयोरपि श्रेण्योरेकविंशतिः । तथाऽनिवृत्तिबादरसंपरायगुणस्थानके दश प्रकृतिसत्कर्मस्थानानि, तद्यथा—चतुर्विंशतिः, एकविंशतिः, त्रयोदश,द्वादश, एकादश, पञ्च, चतस्रः, तिस्रः, द्वे, एका च । तत्र चतुर्विंशतिरुपशमश्रेणिमधिकृत्य, एकविंशतिः क्षायिकसम्यग्दृष्टेर्द्वयोरपि श्रेण्योः, शेषाणि पुनः क्षपकश्रेण्याम् , तानि च प्रागेव भावितानि । सूक्ष्मसंपरायगुणस्थानके त्रीणि प्रकृतिसत्कर्मस्थानानि, तद्यथा—चतुर्विंशतिः, एकविंशतिः, एका च । तत्र चतुर्विंशतिरौपशमिकसम्यग्दृष्टेः, एकविंशतिश्च क्षायिकसम्यग्दृष्टेः, एते च द्वे अपि प्रकृतिसत्कर्मस्थाने उपशमश्रेण्यां, एका च क्षपकश्रेण्याम् । तथा द्वे प्रकृतिसत्कर्मस्थाने उपशान्तमोहगुणस्थानके, तद्यथा—चतुर्विंशतिरेकविंशतिश्च । एते च द्वे अपि प्रागिव भावनीये ॥१२॥

सत्ता प्रकृतिसत्कर्मस्थान-स्वामित्वं

(उ०)—एतान्येव प्रकृतिसत्कर्मस्थानानि गुणस्थानेषु चिन्तयन्नाह—यावदुपशान्तमोहगुणस्थानकं तावन्मिथ्यादृष्ट्यादिषु गुणस्थानेषु क्रमेण त्र्यादीनि प्रकृतिसत्कर्मस्थानानि भवन्ति । तत्र मिथ्यादृष्टिगुणस्थाने त्रीणि प्रकृतिसत्कर्मस्थानानि—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिश्चेति । एतानि च प्रागेव भावितानि । सासादनगुणस्थाने एकं प्रकृतिसत्कर्मस्थानमष्टाविंशतिरूपम् । सम्यङ्मिथ्यादृष्टिगुणस्थाने त्रीणि प्रकृतिसत्कर्मस्थानानि—अष्टाविंशतिः, सप्तविंशतिः, चतुर्विंशतिश्चेति । तत्र योऽष्टाविंशतिसत्कर्मा सन् सम्यङ्मिथ्यात्वं

गनन्तमाधिन्याष्टाविंशतिः । यस्तु मिथ्यादृष्टिः सन् सम्यक्त्वोद्वलनं कृत्वा सप्तविंशतिसत्कर्मा सन् सम्यङ्मिथ्यात्वमनुभवितुं लग्नस्त- माश्रित्य सप्तविंशतिः । विसंयोजितानन्तानुबन्धिनः सतश्चतुर्विंशतिसत्कर्मणः सम्यङ्मिथ्यादृष्टित्वावस्थामपेक्ष्य पुनश्चतुर्विंशतिः प्राप्यते । तथाऽविरतसम्यग्दृष्टिगुणस्थानके पञ्च प्रकृतिसत्कर्मस्थानानि, तद्यथा-अष्टाविंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविं- शतिश्चेति । तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टेः क्षायोपशमिकसम्यग्दृष्टेर्वा । अष्टाविंशतिसत्कर्मण अनन्तानुबन्धिक्षये द्विविधस्यापि तस्य चतुर्विंशतिः । वेदकसम्यग्दृष्टेर्मिथ्यात्वे क्षपिते त्रयोविंशतिः । तस्यैव सम्यङ्मिथ्यात्वे क्षपिते द्वाविंशतिः । क्षायिकस- म्यग्दृष्टेरेकविंशतिरिति । तथा देशविरतिगुणस्थाने पञ्च प्रकृतिसत्कर्मस्थानानि,तानि चानुपदमभिहितान्येव । एतान्येव पञ्च पष्ठे सप्तमे च गुणस्थाने । अथानन्तरमपूर्वकरणगुणस्थानके द्वे प्रकृतिस्थाने, तद्यथा-चतुर्विंशतिरेकविंशतिश्च । तत्रोपशमश्रेण्यामक्षायिकसम्यग्दृष्टे- श्चतुर्विंशतिः, क्षायिकसम्यग्दृष्टेस्तु द्वयोरपि श्रेण्योरेकविंशतिः । तथाऽनिवृत्तिबादरसम्परायगुणस्थानके दश प्रकृतिसत्कर्मस्थानानि, तद्यथा- चतुर्विंशतिरेकविंशतिस्त्रयोदश द्वादश एकादश पञ्च चतस्रस्तिस्रो द्वे एका च । तत्र चतुर्विंशतिरुपशमश्रेणिमधिकृत्य । एकविंशतिः क्षायिकसम्यग्दृष्टेर्द्वयोरपि श्रेण्योः । शेषाणि तु स्थानानि क्षपकश्रेण्यां, तानि च प्रागेव भावितानि । सूक्ष्मसम्परायगुणस्थानके त्रीणि प्रकृतिसत्कर्मस्थानानि, तद्यथा-चतुर्विंशतिरेकविंशतिरेका च । तत्र चतुर्विंशतिरौपशमिकसम्यग्दृष्टेः, एकविंशतिश्च क्षायिकसम्यग्दृष्टेः, एते द्वे अप्युपशमश्रेण्यां, क्षपकश्रेण्यां त्वेका । तथोपशान्तमोहगुणस्थाने द्वे प्रकृतिसत्कर्मस्थाने चतुर्विंशतिरेकविंशतिश्च, एते द्वे अप्युपशमश्रेण्यां, क्षपकश्रेण्यां त्वेका । तथोपशान्तमोहगुणस्थाने द्वे प्रकृतिसत्कर्मस्थाने चतुर्विंशतिरेकविंशतिश्च, एते द्वे भावनीये ॥१२॥

संखीणदिट्ठिमोहे केई पणवीसइं पि इच्छंति । संजोयणाण पच्छा नासं तेसिं उवसमं च ॥१३॥

(चू०)—दंसणमोहणिज्जे खविते केती पणुवीसंपि संतं इच्छंति, 'संजोयणाण पच्छा णासं तेसिं उवसमं च' त्ति-जे दिट्ठितिगे खविते पणुवीससंतकम्मं इच्छंति ते अणंताणुबंधीणं पच्छा विणासं इच्छंति, ते चेव तेसिं अणंताणुबंधीणं उवसमं पि इच्छंति, तं आरिसे न मिलनित्ति ण इच्छिज्जति ॥१३॥

(मलय०)—सम्प्रति मतान्तरमाह-'संखीण'त्ति। केचिदाचार्याः पञ्चविंशतिलक्षणमपि प्रकृतिसत्कर्मस्थानमिच्छन्ति। ते हि प्रथमतो दृष्टिमोहे दर्शनमोहनीयत्रितये संक्षीणे-क्षयमुपगते सति पश्चादनन्तानुबन्धिनां नाशमिच्छन्ति। ततस्तन्मतेन दर्शनमोहनीयत्रितयक्षये सति पञ्चविंशतिरूपमपि प्रकृतिसत्कर्मस्थानं प्राप्यते। यद्येवं तर्हि तन्मतमिह कस्मान्नाभ्युपगम्यते? उच्यते-आर्षेण विरोधात्। यदाह चूर्णिकृत्-"तं आरिसे न मिलई तेण न इच्छिज्जइ"त्ति। तथा त एवाचार्यास्तेषामनन्तानुबन्धिनामुपशमं चेच्छन्ति, नान्ये परमार्थवेदिनः। अत एव च प्रागनन्तानुबन्धिनामुपशमनाऽस्माभिर्नोपदर्शिता ॥१३॥

(उ०)—अत मतान्तरमाह-केचिदाचार्याः पञ्चविंशतिलक्षणमपि प्रकृतिसत्कर्मस्थानमिच्छन्ति। ते हि दृष्टिमोहे-दर्शनमोहनीयत्रये संक्षीणे सति पश्चात्संयोजनानाम्-अनन्तानुबन्धिनां नाशमिच्छन्ति, ततस्तन्मते दर्शनमोहनीयत्रितयक्षये सति पञ्चविंशतिरूपं प्रकृतिसत्कर्मस्थानं प्राप्यते। यद्येवं तर्हि तन्मतं कस्मान्नाद्रियते? उच्यते-आर्षेण विरोधात्। यदाह चूर्णिकृत्-"तं आरिसे न मिलइ तेण ण इच्छिज्जइ"त्ति। तथा त एवाचार्यास्तेषामनन्तानुबन्धिनामुपशमं चेच्छन्ति, नान्ये पारमर्षवेदिनः। अत एव ग्रन्थकृन्मतेन तदुपशमना नोक्ता ॥१३॥

इयाणिं णामस्स पगतिट्ठाणसंतकम्मं भण्णति—

तिदुगसयं छप्पंचगतिगनउई नउइगुणनउई य। चउतिगदुगाहिगासी नव अट्ठ य नामठाणाइं ॥१४॥

(चू०)—१०३–१०२–९६–९५–९३–९०–८९–८४–८३–८२–९–८। एयाणि बारस नामस्स संतकम्मट्ठाणाणि। तत्थ तिउत्तरसयं सव्वनामसमुदओ। तमेव तित्थगररहियं बिउत्तरसयं। आहारसत्तगरहियं छन्नउई होइ। सो चेव तित्थगररहियं पंचाणउइ होइ। पंचाणउइ देवदुगरहिया अहवा निरयदुगरहिया तेणउती होइ। तिउत्तरसयं तेरसनामे खविते णउती होइ। बिउत्तरसयातो तेरसनामे खविते एगूणणउती होई। तेणउतीतो निरयदुगे वेउव्वियसत्तगे य फिट्टे चउरासीती होई, अहवा देवदुगवेउव्वियसत्तगरहिया चउरासीती होई। छन्नउतीते तेरसनामे खविए तेसिती होति। पंचाणउतीते तेरसनामे खविते बासीती होति। चउरासीइं मणुयदुगरहिया बासीती होईति। मणुयगति पंचेंदियजातितसबायरपज्जत्तगसुभगं आदेज्जं जसकित्ति तित्थयरनामं एते णव। एए चेव तित्थयररहिया अट्ठ होंति ॥१४॥

(मलय०)—सम्प्रति नामकर्मणः प्रकृतिसत्कर्मस्थानानि प्रतिपिपादयिषुराह।'तिदुगसयं'ति–नामकर्मणो द्वादश प्रकृतिसत्कर्मस्थानानि, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, नवतिः, एकोननवतिः, चतुरशीतिः, त्र्यशीतिः, द्व्यशीतिः, नव, अष्टौ चेति। तत्र सर्वनामकर्मप्रकृतिसमुदायस्त्र्युत्तरशतम्। तदेव तीर्थंकररहितं द्व्युत्तरशतम्। द्व्युत्तरशतमेवाहारकसप्तकरहितं षण्णवतिः। सैव तीर्थकररहिता पञ्चनवतिः। पञ्चनवतिरेव देवद्विकरहिता नरकद्विकरहिता वा त्रिनवतिः। तथा त्र्युत्तरशतमेव नामत्रयोदशकरहितं नवतिः। सैव तीर्थकररहिता एकोननवतिः। तथा त्रिनवतिर्नरकद्विकवैक्रियसप्तकरहिता देवद्विकवैक्रियसप्तकरहिता वा चतुर-

शीतिः । षण्णवतिस्त्रयोदशरहिता त्र्यशीतिः । पञ्चनवतिस्त्रयोदशरहिता द्व्यशीतिः, अथवा चतुरशीतिर्मनुजद्विकरहिता द्व्यशीतिः । मनुजगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकररूपा नव । ता एव तीर्थकररहिता अष्टौ ॥१४॥

(उ०)—अथ नामकर्मणः प्रकृतिसत्कर्मस्थानान्यभिधित्सुराह—नाम्नो द्वादश प्रकृतिस्थानानि—त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिस्त्रिनवतिर्नवतिरेकोननवतिश्चतुरशीतिस्त्र्यशीतिद्व्यशीतिर्नवाष्टौ चेति । एतद्भावना चेयं—सर्वनामप्रकृतिसमुदायस्त्र्युत्तरशतं, जिननामरहितं द्व्युत्तरशतं, त्र्युत्तरशतमाहारकसप्तकरहितं षण्णवतिः, सैव जिननामरहिता पञ्चनवतिः, पञ्चनवतिरेव सुरद्विकेन नरकद्विकेन वा वर्जिता त्रिनवतिः । त्र्युत्तरशतमेव नामत्रयोदशकरहितं नवतिः, सैव जिननामरहितैकोननवतिः, तथा त्रिनवतिरेव नरकद्विकवैक्रियसप्तकाभ्यां सुरद्विकवैक्रियसप्तकाभ्यां वा रहिता चतुरशीतिः, षण्णवतिस्त्रयोदशरहिता त्र्यशीतिः । पञ्चनवतिस्त्रयोदशरहिता द्व्यशीतिः, यद्वा चतुरशीतिर्मनुजद्विकरहिता द्व्यशीतिः । मनुजगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकररूपा नव । ता एव जिननामरहिता अष्टौ ॥१४॥

इयाणिं गुणट्ठाणेसु एयाणि ट्ठाणाणि भन्नति, तं निरूवणत्थं भन्नति—

**एगे छ दोसु दुगं पंचसु चत्तारि अट्ठगं दोसु । कमसो तीसु चउक्कं छ त्तु अजोगम्मि ठाणाणि ॥१५॥**

(चू०)—मिच्छादिट्ठिस्स छट्ठाणाणि । तं जहा १०२–९६–९५–९३–८४–८२ । छन्नवति मिच्छादिट्ठिस्स कहं? भण्णति—पुव्वं बद्धाउगो पच्छा संमत्तं लभिय तित्थकरनामं बद्धं, सो य वेयगसम्मदिट्ठी णिरयाभिमुहो तं सम्मत्तं छड्डेति तंमि मिच्छादिट्ठि अंतोमुहुत्तं कालं छन्नउती लब्भति, परतो सम्मदिट्ठी भवति । सेसट्ठाणा

दोन्नि संतट्ठाणा-१०२, ९५। तित्थकरसहियाणि ण
सिद्धा एव। 'दोसु दुगं'ति-सासायणसम्मामिच्छदिट्ठीसु दोन्नि संतट्ठाणा-१०२, ९५। तित्थकरसहियाणि ण
संभवंति। 'पंचसु चत्तारि'-असंजमसम्मदिट्ठिसंजयासंजयपमत्तसंयतअपमत्तसंजयअपुव्वकरणेसु एएसु पंच-
ट्ठाणेसु चत्तारि संतट्ठाणाणि, तं जहा-१०३-१०२-९६-९५। सेसा खवगसेढीए एगिंदियाइसु य संभवंतित्ति
ते ण हुंति। 'अट्ठगं दोसु'त्ति-अणियट्टिसुहुमरागेसु अट्ठसंतट्ठाणाणि, तं जहा-१०३-१०२-९६-९५-९०-८९-
८३-८२। तत्थ अणियट्टिस्स १०३-१०२-९६-९५ एयाणि चत्तारि उवसमसेढीते वा खवगसेढीते वा जाव तेरस-
नामं ण खविज्जति। इमाणि पुण चत्तारि खवगसेढीते भवंति—९०-८९-८३-८२। एयाणि अणियट्टिस्स संतट्ठा-
णाणि। सुहुमरागस्स उवसामगं पडुच्च इमाणि चत्तारि ट्ठाणाणि, तं जहा-१०३-१०२-९६-९५। इमाणि पुण
चत्तारि खवगसेढीए, तं जहा-९०-८९-८३-८२। एयाणि अट्ठ सुहुमरागस्स ट्ठाणाणि संतस्स। 'कमसो तीसु
चउक्कं'ति-परिवाडितो तिसु ट्ठाणेसु चत्तारि संतट्ठाणाणि, उवसंतकसाते ताव १०३-१०२-९६-९५, खीणकसाय-
सजोगिकेवलिस्स ९०-८९-८३-८२ एए चत्तारि ठाणा भवंति। 'छत्तु अजोगम्मि ट्ठाणाणि' त्ति-अजोगिस्स
छ संतट्ठाणाणि ९०-८९-८३-८२-९-८। एएसिं आतिमा चत्तारि अजोगिदुचरिमसमतो जाव ताव होंति। णव
अट्ठ य चरिमसमये भवंति ॥१५॥

(मलय०)—एतान्येव प्रकृतिसत्कर्मस्थानानि गुणस्थानकेषु चिन्तयन्नाह-'एगे'त्ति। एकस्मिन्मिथ्यादृष्टिलक्षणे गुणस्थानके षट्
प्रकृतिसत्कर्मस्थानानि, तद्यथा-द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिः। ननु षण्णवतिस्तीर्थंकर-

नामसहिता भवति ततः सा कथं मिथ्यादृष्टौ प्राप्यते ? उच्यते- इह कश्चित् नरकेषु बद्धायुष्कः पश्चात्सम्यक्त्वं प्राप्य तन्निमित्तं तीर्थकरनामकर्म बद्धा नरकाभिमुखः सन् सम्यक्त्वं त्यक्त्वा मिथ्यादृष्टिर्जातः, ततो नरके उत्पन्नः सन् अन्तर्मुहूर्तानन्तरं पुनरपि सम्यक्त्वं प्रतिपद्यते, ततोऽन्तर्मुहूर्तं कालं यावत् षण्णवतिर्मिथ्यादृष्टौ प्राप्यते, आहारकसप्तकतीर्थकरनामसत्कर्मा च मिथ्यात्वं न प्रतिपद्यते। उक्तं च-"उभए संति न मिच्छो" इति। ततस्त्र्युत्तरशतं मिथ्यादृष्टौ न प्राप्यते। तथा द्वयोः सासादनसम्यङ्मिथ्यादृष्टिगुणस्थानकद्वयोर्द्वे द्वे प्रकृतिसत्कर्मस्थाने, तद्यथा-द्व्युत्तरशतं पञ्चनवतिश्च। तथा पञ्चसु अविरतसम्यग्दृष्टिगुणस्थानकप्रभृतिषु अपूर्वकरणगुणस्थानकान्तेषु चत्वारि चत्वारि प्रकृतिसत्कर्मस्थानानि। तद्यथा-त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः पञ्चनवतिः। शेषाणि क्षपकश्रेण्यामेकेन्द्रियादौ च संभवन्तीति कृत्वा इह न प्राप्यन्ते। तथा द्वयोरनिवृत्तिबादरसूक्ष्मसंपरायलक्षणयोर्गुणस्थानकयोरष्टकं अष्टौ प्रकृतिसत्कर्मस्थानानि। तद्यथा-त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिः, नवतिः, एकोननवतिः, त्र्यशीतिः, द्व्यशीतिश्च। तत्रानिवृत्तिबादरस्यादिमानि चत्वारि उपशमश्रेण्यां क्षपकश्रेण्यां वा यावन्न त्रयोदशकं क्षीयते। शेषाणि पुनः क्षपकश्रेण्यामेव। सूक्ष्मसंपरायस्यादिमानि चत्वारि उपशमश्रेण्याम्, शेषाणि तु क्षपकश्रेण्याम्। तथा त्रिषु उपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणेषु चत्वारि चत्वारि प्रकृतिसत्कर्मस्थानानि भवन्ति। तत्रोपशान्तमोहे इमानि चत्वारि, तद्यथा-त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिः। क्षीणमोहसयोगिकेवलिनोः पुनरमूनि, तद्यथा-नवतिः, एकोननवतिः, त्र्यशीतिः, द्व्यशीतिश्च। 'छ तु अजोगम्मि ठाणाणि' त्ति-अयोगिकेवलिनि षट् प्रकृतिसत्कर्मस्थानानि, तद्यथा-नवतिः, एकोननवतिः, त्र्यशीतिः, द्व्यशीतिः, नव, अष्टौ चेति। एतेषामादिमानि चत्वारि अयोगिकेवलिद्विचरमसमयं यावत्, चरमसमये तु तीर्थकरातीर्थकरौ प्रतीत्य द्वे अन्तिमे प्रकृतिसत्कर्मस्थाने ॥१५॥

(३०)—एतान्येव गुणस्थानेषु चिन्तयन्नाह—एकस्मिन्मिथ्यादृष्टिलक्षणे गुणस्थाने षट् प्रकृतिसत्कर्मस्थानानि, तद्यथा—द्व्युत्तरशतं षण्णवतिः पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्चेति। तत्र षण्णवतिर्बद्धजिननाम्नो मिथ्यादृष्टेरन्तर्मुहूर्तं यावत्प्राप्यते, भावितचरमेतत्, आहारकजिननाम्नोरुभयोः सत्तायां मिथ्यात्वं न प्राप्यत इति त्र्युत्तरशतप्रतिषेधः, शेषं सुगमम्। तथा द्वयोः सासादनसम्यङ्मिथ्यादृष्टिगुणस्थानकयोर्द्वे प्रकृतिसत्कर्मस्थाने—द्व्युत्तरशतं पञ्चनवतिश्चेति। तथा पञ्चसु अविरतसम्यग्दृष्ट्यादिष्वपूर्वकरणान्तेषु गुणस्थानेषु चत्वारि चत्वारि प्रकृतिसत्कर्मस्थानानि, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिश्चेति। शेषाणि तु क्षपकश्रेण्यामेकेन्द्रियादौ च संभवत्प्राप्तिकानीति नेह प्राप्यन्ते। तथा द्वयोरनिवृत्तिबादरसूक्ष्मसम्परराययोरष्टकमष्टौ प्रकृतिसत्कर्मस्थानानि, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, नवतिः, एकोननवतिः, त्र्यशीतिः, द्व्यशीतिश्च। तत्रानिवृत्तिबादरस्यादिमानि चत्वार्युपशमश्रेण्यां क्षपकश्रेण्यां च त्रयोदशकक्षयं यावत्प्राप्यन्ते, शेषाणि तु क्षपकश्रेण्यामेव। सूक्ष्मसम्परायस्यादिमानि चत्वार्युपशमश्रेण्यां, शेषाणि तु क्षपकश्रेण्याम्। तथा त्रिषूपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणेषु गुणस्थानेषु चत्वारि प्रकृतिसत्कर्मस्थानानि भवन्ति। तत्रोपशान्तमोहे त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिलक्षणानि चत्वारि स्थानानि। क्षीणमोहसयोगिकेवलिनोस्तु नवत्येकोननवतित्र्यशीतिद्व्यशीतिलक्षणानि। अयोगिनि तु षट् प्रकृतिसत्कर्मस्थानानि, तद्यथा—नवतिरेकोननवतिस्त्र्यशीतिर्द्व्यशीतिर्नवाष्टौ चेति। एतेष्वाद्यानि चत्वार्ययोगिकेवलिद्विचरमसमयं यावत्, चरमसमये तु जिनाजिनावधिकृत्य द्वे अन्त्ये स्थाने प्राप्येते ॥१५॥

भणियं पगतिसंतं, इयाणिं ट्ठितिसंतं वुच्चति। तं दुविहं—मूलपगतिट्ठितिसंतकंमं, उत्तरपगतिट्ठितिसंतकंमं च। भेनो जहा पगतिसंतकंमे। इयाणिं सादिअणादिपरूवणा दुविहा—मूलपगतिट्ठितिसातिअणादिपरूवणा, उत्तर

पगतिट्ठितिसादिअणाईपरूवणा य। तत्थ मूलपगतिट्ठितिसादिअणादिपरूवणा भण्णति—

**मूलठिई अजहन्नं तिहा चउद्धा य पढमगकसाया। तित्थयरुव्वलणायुगवज्जाणि तिहा दुहाणुत्तं ॥१६॥**

(चू०)—'मूलट्ठिई अजहन्नं तिहा' त्ति–मूलपगतिट्ठितिसंतकंमं अजहन्नं तिविहं अणादि धुव अधुवं। कहं? भण्णइ–अट्ठण्हमूलपगतीणं जहन्नट्ठितिसंतकम्मं अप्पप्पणो खवणंते एगट्ठिति अवसेसा भवति। एगा ट्ठिती एगो समतो। तं च सातियअधुवं। तं मोत्तूण सेसमजहन्नं, तस्स आदी णत्थि, अणादियसंतकम्मत्तातो, धुवाधुवा पुव्वुत्ता।

इयाणिं उत्तरपगतीणं भन्नति–'चउद्धा य पढमकसाय' त्ति–अणंताणुबंधीणं अजहन्नं ट्ठितिसंतकम्मं सातियाति चउव्विहं। कहं? भण्णइ–अणंताणुबंधीणं जहन्नट्ठितिसंतकम्मं विसंजोजितस्स आवलियं मोत्तूणं उवरिल्लं संकन्तं, ततो उदयावलियाए एगट्ठितिसेसं दुसमयकालट्ठितियं तंमि समते जहन्नगं ट्ठितिसंतकम्मं। तं च साति अधुवं, तं मोत्तूणं सेसमजहन्नं। सो चेव संमत्तातो मिच्छत्तं गतो तस्स पुणो बंधंतस्स अजहन्नगस्स सातियं, तं ट्ठाणमपत्तपुव्वस्स अणादियं, धुवाधुवा पुव्वुत्ता। 'तित्थयरुव्वलणायुगवज्जाणि तिहा' त्ति–तित्थकरनामं तेवीसं उव्वलमाणीतो चत्तारि आउगाणि च एयाणि अट्ठावीसं कम्माणि मोत्तूण सेसं छव्वीसुत्तरं पगतिसयं तस्स अजहन्नगं ट्ठितिसंतं अणादिधुवअधुवं तिविहं, कहं? भण्णइ–एएसिं जहन्नं ट्ठितिसंतं अप्पप्पणो खवणंते एगट्ठितिसेसे भवति उदयवतीणं, अणुदयवदीणं दुसमतिगं एगट्ठितीयं, तं च सातियअधुवं, तं मोत्तूणं सेसं

अजहन्नं तस्स आदी णत्थि धुवसंतकम्मत्ता, तम्हा अणातियं, धुवाधुवं पुव्वुत्तं । 'दुहाणुत्तं'ति-अभणियाणं मूलपगदीणं उत्तरपगदीणं च उक्कोसणुक्कोसजहन्नविकप्पा, अधुवसंताणं अट्ठावीसाए पगदीणं उक्कोसणुक्कोसजहन्नाजहन्ना चत्तारि विकप्पा सादिया अधुवा, कहं ? भन्नइ-उक्कोसाणुक्कोसादीणं ठितीणं परावत्ती अत्थित्ति तम्हा सादिय अधुवा ॥१६॥

(मलय०)—तदेवमुक्तं प्रकृतिसत्कर्म । सम्प्रति स्थितिसत्कर्म वक्तव्यम्। तत्र त्रयोऽर्थाधिकाराः, तद्यथा-भेदः, साद्यनादिप्ररूपणा, स्वामित्वं चेति। तत्र भेदः प्रागिव। साद्यनादिप्ररूपणा च द्विधा-मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्र प्रथमतो मूलप्रकृतिविषयां साद्यनादिप्ररूपणां चिकीर्षुराह-'मूलठिइ'त्ति । मूलप्रकृतिस्थितिसत्कर्म अजघन्यं'त्रिधा'त्रिप्रकारम्। तद्यथा-अनादि ध्रुवमध्रुवं च। तथाहि-मूलप्रकृतीनां अजघन्यं स्थितिसत्कर्म स्वस्वक्षयपर्यवसाने समयमात्रैकस्थित्यवशेषे भवति, तच्च सादि अध्रुवं च। ततोऽन्यत्सर्वमजघन्यम्, तच्चानादि, सदैव भावात् । ध्रुवाध्रुवता पूर्ववत् । उत्कृष्टमनुत्कृष्टं च साद्यध्रुवं द्वयोरपि पर्यायेणानेकशो भवनात् । कृता मूलप्रकृतीनां साद्यनादिप्ररूपणा । सम्प्रत्युत्तरप्रकृतीनां क्रियते-'चउद्धा य' इत्यादि । अत्र षष्ठ्यर्थे प्रथमा, ततोऽयमर्थः-प्रथमकषायाणामनन्तानुबन्धिनामजघन्यं स्थितिसत्कर्म चतुर्धा चतुष्प्रकारम्, तद्यथा-सादि अनादि ध्रुवमध्रुवं च । तथाहि-एषां जघन्यं स्थितिसत्कर्म स्वक्षयोपान्त्यसमये स्वरूपापेक्षया समयमात्रैकस्थितिरूपम्, अन्यथा तु द्विसमयमानम्, तच्च साद्यध्रुवम्, ततोऽन्यत्सर्वमजघन्यम्, तदपि चोद्वलितानां भूयो बन्धे सादि, तत्स्थानमप्राप्तानां पुनरनादि, ध्रुवाध्रुवता पूर्ववत् । तथा तीर्थकरनामोद्वलनयोग्यत्रयोविंशत्यायुश्चतुष्टयवर्जितानां शेषाणां षड्विंशत्यधिकशतसंख्यानां प्रकृतीनामजघन्यं स्थितिसत्कर्म त्रिधा, तद्यथा-अनादि ध्रुवमध्रुवं च । तथाहि—

एतासां जघन्यं स्थितिसत्कर्म स्वस्वक्षयपर्यवसाने उदयवतीनां समयमात्रैकस्थितिरूपम्, अनुदयवतीनां स्वरूपतःसमयमात्रैकस्थितिकम्, अन्यथा तु द्विसमयमात्रम्। तच्च साद्यध्रुवम्। ततोऽन्यत्सर्वमजघन्यम्। तच्चानादि, सदैव भावात्। ध्रुवाध्रुवता पूर्ववत्। 'दुहाणुत्त'त्ति–अनुक्तं उक्तप्रकृतीनामुत्कृष्टानुत्कृष्टजघन्यरूपं तीर्थकरनामोद्वलनयोग्यदेवद्विकनरकद्विकमनुजद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्रसम्यक्त्वसम्यङ्मिथ्यात्वरूपत्रयोविंशत्यायुश्चतुष्टयानां जघन्याजघन्योत्कृष्टानुत्कृष्टरूपं विकल्पचतुष्टयं 'द्विधा'–द्विप्रकारम्, तद्यथा–सादि अध्रुवं च। तथाहि–उक्तप्रकृतीनामुत्कृष्टमनुत्कृष्टं च स्थितिसत्कर्म पर्यायेणानेकशो भवति। ततो द्वितीयमपीदं साद्यध्रुवम्। जघन्यं च प्रागेव भावितम्। तीर्थकरनामादीनां चाध्रुवसत्कर्मत्वाच्चत्वारोऽपि विकल्पाः साद्यध्रुवा अवसेयाः। मूलप्रकृतीनां चानुक्तं जघन्यमुत्कृष्टमनुत्कृष्टं च द्विप्रकारम् प्रागेव चोक्तम् ॥१६॥

सत्ता स्थितिसत्कर्मणि साद्यादि प्ररूपणा

(उ०)—तदेवमुक्तं प्रकृतिसत्कर्म। सम्प्रति स्थितिसत्कर्म वक्तव्यं, तत्र त्रयोऽर्थाधिकाराः, तद्यथा–भेदः साद्यनादिप्ररूपणा स्वामित्वं चेति। तत्र भेदः प्रागिव। साद्यनादिप्ररूपणाऽपि मूलप्रकृतिविषयोत्तरप्रकृतिविषया चेति द्विविधा। तत्र प्रथमतो मूलप्रकृतिविषयां साद्यनादिप्ररूपणां चिकीर्षुराह–मूलप्रकृतिस्थितिसत्कर्माजघन्यं त्रिधा-त्रिप्रकारं, तद्यथा–अनादि ध्रुवमध्रुवं च। तथाहि–मूलप्रकृतीनां जघन्यं स्थितिसत्कर्म स्वस्वक्षयपर्यवसाने समयमात्रैकस्थित्यवशेषे भवति, तच्च साद्यध्रुवं, ततोऽन्यत्सर्वमजघन्यं स्थितिसत्कर्म, तच्चानादि सदैव भावात्, ध्रुवाध्रुवता पूर्ववत्। उत्कृष्टानुत्कृष्टे तु स्थितिसत्कर्मणी पर्यायेण प्राप्यमाणत्वात्साद्यध्रुवतया द्विविधे एवेत्यर्थाद्भावनीयम्। कृता मूलप्रकृतीनां साद्यनादिप्ररूपणा, सम्प्रत्युत्तरप्रकृतीनां तां चिकीर्षुराह–'चउद्धा य'इत्यादि। प्रथमायाः षष्ठ्यर्थत्वात्प्रथमकषायाणामनन्तानुबन्धिनामजघन्यं स्थितिसत्कर्म चतुर्धा–साद्यनादिध्रुवाध्रुवभेदात्। तथाहि–अमीषां स्थितिसत्कर्म स्वक्षयोपान्त्यसमये स्वरूपा-

पेक्षया समयमात्रैकस्थितिकं, कर्मत्वसामान्यापेक्षया तु द्विसमयमानं, तच्च साद्यध्रुवं, ततोऽन्यत्सर्वमजघन्यं, तदप्युद्वलितानां भूयो
बन्धे सादि, तत्स्थानमप्राप्तानामनादि, ध्रुवाध्रुवता प्राग्वत्। तथा तीर्थकरनामोद्वलनयोग्यत्रयोविंशत्यायुश्चतुष्टयवर्जितानां शेषाणां
पड्विंशत्यधिकशतसङ्ख्यानां प्रकृतीनामजघन्यं स्थितिसत्कर्म त्रिधाऽनादिध्रुवाध्रुवभेदात्। तथाहि–एतासां जघन्यस्थितिसत्कर्म स्वस्व-
क्षयपर्यवसाने उदयवतीनां समयमात्रैकस्थितिरूपं अनुदयवतीनां स्वरूपतः समयमात्रैकस्थितिकं स्तिबुकसंक्रमोपनीतपररूपानुगत-
कर्मत्वसामान्यापेक्षया द्विसमयमात्र, तच्च साद्यध्रुवं, ततोऽन्यत्सर्वमजघन्यं, तच्चानादि सदैव भावात्, ध्रुवाध्रुवता प्राग्वत्। अनुक्तमु-
क्तप्रकृतीनामुत्कृष्टानुत्कृष्टजघन्यरूपं जिननामसुरद्विकनरद्विकनरकद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्रसम्यक्त्वसम्यङ्मिथ्यात्वरूपत्रयो-
विंशत्युद्वलनप्रकृत्यायुश्चतुष्टयानां च जघन्याजघन्योत्कृष्टानुत्कृष्टरूपं भेदचतुष्कं द्विधा साद्यध्रुवं चेति, तथाहि–उक्तप्रकृतीनामुत्कृष्टा-
नुत्कृष्टे स्थितिसत्कर्मणी पर्यायेणानेकशो भवत इति द्वे अप्येते साद्यध्रुवे, जघन्यं च प्रागेव भावितम्। जिननामादीनां चाध्रुवसत्कर्म-
त्वाच्चत्वारोऽपि भेदाः साद्यध्रुवा ज्ञेयाः ॥१६॥

भणिया सादियाणादिपरूवणा। इयाणिं सामित्तं भण्णति। तं दुविहं–उक्कोसट्ठितिसंतसामित्तं जहन्नट्ठिति
संतसामित्तं। तत्थ पुव्वं उक्कोसट्ठितिसंतसामित्तं भण्णइ—

**जेट्ठठिई बंधसमं जेट्ठं बंधोदया उ जासिं सह। अणुदयबंधपराणं समऊणा जट्ठिई जेट्ठं ॥१७॥**

(चू०)—'जेट्ठट्ठिई बंधसमं जेट्ठं बन्धोदया उ जासि सह'त्ति–उक्कोसट्ठितिबंधिणसरिसउक्कोसट्ठितिसंतं, तेसिं
कम्माणं 'बन्धोदयाउ जासि सह'त्ति–जासिं पगतीणं बन्धो वि अत्थि उदओ वि अत्थि, के ते? भण्णइ–पंच-

णाणावरण चउरो दंसणावरण असायवेयणिज्जं मिच्छत्तं सोलसकसाया पंचेंदियजाति वेउव्वियसत्तगं मणुयतिरिय पडुच्च तेजतिगसत्तगं हुंडसंठाणं वन्नातिवीसं अगुरुलहुगं उवघायं पराघायं उस्सास उज्जोवं अपसत्थविहायगतितसबायरपज्जत्तगपत्तेयअथिरअसुभदुभगदुस्सर अणाएज्ज अजसनिमेणणीयागोय पंचण्हं अन्तराइयाणं एयासिं छलसीते पगतीणं उक्कोसट्ठितिसंतकम्मं उक्कोसट्ठितिबन्धेणं तुल्लं। किं कारणं? भन्नति–उक्कोसं ट्ठितिबंधिउमाढत्तो अबाहाए वि पुव्वबद्धं दलियं अत्थि तं वेदिज्जति तम्हा उक्कोसट्ठितिबंधकाले दलियं सव्वत्थ निरंतरं लभति। 'अणुदयबंधपराणं समयूण'त्ति–जे कम्मा अणुदयिणो बंधुक्कसा य तेसिं समऊण त्ति समऊणा उक्कोसट्ठिती ट्ठितिसंतकम्मं भवति। के ते? भण्णइ–णिद्दापंचगं णिरयगति तिरयगति एगिंदियजाति उरालियसत्तगं सेवट्टसंघयणं णिरयतिरियाणुपुव्वीतो आतावं थावरमिति एयासिं वीसाए पगतीणं जम्मि काले उक्कोसतो ट्ठितिबन्धो तंमि काले उदओ णत्थि। कहं? भण्णति–निद्दापणगस्स उक्कस्स संकिलिट्ठस्स उदतो नत्थि। णिरयदुगस्स तिरियमणुया उक्कोसं ट्ठिति बन्धंति तेसु तेसिं उदतो नत्थि। सेसाणं कम्माणं देवा उक्कोसं ट्ठिति बंधंति, केसि वि नेरइया वि,तेसु वि तेसिं उदओ नत्थि त्ति। उक्कोसं ट्ठितिबन्धिउमाढत्तो पुव्वबद्धं संतकम्मं अबाहाते अत्थि उदयट्ठितिदलियं उदयाभावातो उदयवतीसु अप्पप्पणो जातीसु थिवुगसंकमेण संकमंति। तं च संतकम्मं तस्सेव दिस्सइ तम्हा तेण उदयट्ठितीए ऊणं समऊणं वुच्चति। 'जट्ठिई जेट्ठं'ति–जट्ठितिं पडुच्च उक्कोसट्ठिती चेव लब्भति। कहं? भन्नति–तम्मि काले सो समतो अत्थित्ति काउं ॥१७॥

(मलय०)—तदेवं कृता साधनादिप्ररूपणा। सम्प्रति स्वामित्वं वक्तव्यम्। तच्च द्विधा—उत्कृष्टस्थितिसत्कर्मस्वामित्वं, जघन्यस्थितिसत्कर्मस्वामित्वं च। तत्र प्रथमत उत्कृष्टस्थितिसत्कर्मस्वामित्वमाह—'जेट्ठठिइ'त्ति। यासां प्रकृतीनां सह युगपत् बन्धोदयौ भवतः, कासां युगपत् बन्धोदयौ भवतः? इति चेत् उच्यते—ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयासातवेदनीयमिथ्यात्वषोडशकषायपञ्चेन्द्रियजातितैजससप्तकहुण्डसंस्थानवर्णादिविंशत्यगुरुलघुपराघातोपघातोच्छ्वासाप्रशस्तविहायोगत्युद्योतत्रसबादरपर्याप्तप्रत्येकास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनिर्माणनीचैर्गोत्रपञ्चविघान्तरायाणां तिर्यङ्मनुष्यानधिकृत्य वैक्रियसप्तकस्य सर्वसंख्यया षडशीतिप्रकृतीनाम्, तासां 'ज्येष्ठं'—उत्कृष्ट स्थितिसत्कर्म 'ज्येष्ठस्थितिबन्धसमं'—उत्कृष्टस्थितिबन्धप्रमाणं भवति। तासां हि उत्कृष्टस्थितिबन्धारम्भेऽबाधाकालेऽपि प्राग्बद्धं दलिकं प्राप्यते। न च तासां प्रथमस्थितिरन्यत्र स्तिबुकसंक्रमेण संक्रामति, उदयवतीत्वात्। ततस्तासामुत्कृष्टस्थितिबन्धप्रमाणमुत्कृष्टं स्थितिसत्कर्म प्राप्यते। अनुदयबन्धपराणां समयोना ज्येष्ठा स्थितिर्ज्येष्ठमुत्कृष्टं स्थितिसत्कर्म। तत्रानुदये उदयाभावे पर उत्कृष्टः स्थितिबन्धो यासां ता अनुदयबन्धपराः—निद्रापञ्चकनरकद्विकतिर्यग्द्विकौदारिकसप्तकैकेन्द्रियजातिसेवार्तसंहननातपस्थावररूपा विंशतिसंख्यास्तासां समयोना उत्कृष्टा स्थितिरुत्कृष्टं स्थितिसत्कर्म। तथाहि—एतासामुत्कृष्टस्थितिबन्धारम्भे यद्यप्यबाधाकालेऽपि प्राग्बद्धं दलिकमस्ति तथापि प्रथमस्थितिं तासामुदयवतीषु मध्ये स्तिबुकसंक्रमेण संक्रमयति। तेन तया प्रथमस्थित्या समयमात्रया ऊना उत्कृष्टा स्थितिरुत्कृष्टं स्थितिसत्कर्म। अथोच्येत—कथं निद्रादीनामनुदये सति बन्धेनोत्कृष्टा स्थितिः प्राप्यते? उच्यते—उत्कृष्टो हि स्थितिबन्ध उत्कृष्टे संक्लेशे भवति। न चोत्कृष्टे संक्लेशे वर्तमानस्य निद्रापञ्चकोदयसंभवः। नरकद्विकस्य तिर्यञ्चो मनुष्या वा उत्कृष्टस्थितिबन्धकाः। न च तेषां नरकद्विकोदयः संभवतीति। शेषकर्मणां तु देवा नारका वा यथायोगमुत्कृष्टस्थितिबन्धकाः, न च तेषु

तेषामुदयो घटते ॥१७॥

(उ०)—तदेवं कृता साद्यनादिप्ररूपणा, सम्प्रति स्वामित्वं वाच्यं, तच्च द्विधा—उत्कृष्टस्थितिसत्कर्मस्वामित्वं जघन्यस्थितिसत्कर्मस्वामित्वं च, तत्र प्रथमत उत्कृष्टस्थितिसत्कर्म स्वामित्वमाह—यासां प्रकृतीनां सह युगपद्बन्धोदयौ भवतस्तासां ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयासातवेदनीयमिथ्यात्वषोडशकषायपञ्चेन्द्रियजातितैजससप्तकहुण्डसंस्थानवर्णादिविंशत्यगुरुलघुपराघातोपघातोच्छ्वासाप्रशस्तविहायोगत्युद्योतत्रसबादरपर्याप्तप्रत्येकास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तिनिर्माणनीचैर्गोत्रान्तरायपञ्चकतिर्यङ्मनुष्यापेक्षिकवैक्रियसप्तकलक्षणानां उदयबन्धोत्कृष्टानां षडशीतिप्रकृतीनां ज्येष्ठमुत्कृष्टं स्थितिसत्कर्म ज्येष्ठस्थितिबन्धसमं उत्कृष्टस्थितिबन्धप्रमाणं भवति। एतासां ह्युत्कृष्टस्थितिबन्धारम्भेऽबाधाकालमध्ये प्राग्बद्धदलिकमाप्तावप्युदयवतीत्वात्प्रथमस्थितेरन्यत्र स्तिबुकसंक्रमेण न संक्रम इत्युत्कृष्टस्थितिबन्धप्रमाणादुत्कृष्टस्थितिसत्कर्मणो न कोऽपि विशेषः। तथाऽनुदये उदयाभावे पर उत्कृष्टः स्थितिबन्धो यासां ता अनुदयबन्धपराः—निद्रापञ्चकनरकद्विकतिर्यग्द्विकौदारिकसप्तकैकेन्द्रियजातिसेवार्त्तसंहननातपस्थावररूपा विंशतिः, तासां समयोनोत्कृष्टा स्थितिरुत्कृष्टं स्थितिसत्कर्म। तथाहि—एतासामुत्कृष्टस्थितिबन्धारम्भे यद्यप्यबाधाकालमध्येऽपि प्राग्बद्धं दलिकमस्ति, तथापि प्रथमस्थितिं तासामुदयवतीषु मध्ये स्तिबुकसंक्रमेण संक्रमयति, तेन तया समयमात्रया प्रथमस्थित्योनोत्कृष्टा स्थितिः। अथ कथं निद्रादीनामनुदये सति बन्धेनोत्कृष्टस्थितिप्राप्तिः? उच्यते—उत्कृष्टः स्थितिबन्धः उत्कृष्टसंक्लेशाधीनो, न चोत्कृष्टसंक्लेशसत्त्वे निद्रापञ्चकोदयसंभवः, नरकद्विकस्य चोत्कृष्टां स्थितिं तिर्यञ्चो मनुष्या वा बध्नन्ति, न च तेषु नरकद्विकोदयः संभवी। शेषाणां तु देवा नारका वा यथासंभवमुत्कृष्टस्थितिबन्धकाः, न च तेषु तदुदयोपपत्तिरित्येतासामनुदय एवोपपन्न उत्कृष्टस्थितिबन्ध इति ॥१७॥

संकमओ दीहाणं सहालिगाए उ आगमो संतं । समऊणमणुदयाणं उभयासिं जट्ठिई तुल्ला ॥१८॥

(चू०)—'संकमतो दीहाणं सहालिगाए उ आगमो संतं'ति–जेसिं कम्माणं संकमातो उक्कोसट्ठितिसंतं लब्भति उदतो य अत्थि तेसिं आवलिया ऊणा उक्कोसा ट्ठिति संकमति, आगमोत्ति संकमणे लद्धो, तं आवलिगाए सह उक्कोसट्ठितिसंतं गणिज्जति । किं कारणं ? भन्नति–तं तं कम्मं बंधमाणस्स जा बंधुक्कसा ट्ठिती आवलियातीया थज्झमाणं उदयावलियाते उप्परिं संकमंति पुव्वं बद्धं उदयागयं वेदिज्जति तम्हा उदयावलियाए सह उक्कोसट्ठितिसंतकम्मं वुचति । के ते ? भण्णइ–सातावेयणीय संमत्तं णवणोकसाय मणुगति आतिमा संट्ठाणसंघयणा(दस)अपसत्थविहायगतिथिरसुभसुभगसुस्सरआदेज्जजसकित्तिउच्चागोयमिति एतासिं तीसाते पगतीणं आवलिगूणा उक्कोसा ट्ठिती ट्ठितिसंतकम्मं भवति । सम्मतस्स अन्तोमुहूत्तूणा उक्कोसिया ट्ठिती ट्ठितिसंतकम्मं होति । 'समयूणमणुदयाणं'ति–अणुदयिगाणं संकमुक्कस्साणं तमेव समयूणातो उक्कोसा ट्ठिती संतकम्मं वुचति । के ते ? भण्णइ–संमामिच्छत्तं देवगति वेदिंदियतेइंदियचोरिंदियजातीतो आहारसत्तगं मणुयदेवाणुपुव्वीओ सुहुमअपज्जत्तगसाहारणतित्थगरमिति एएसिं अट्ठारसण्हं कम्माणं समऊणं भवति, कहं ? भण्णइ–उक्कोसट्ठितिवन्धति(न्धाओ) परिवडिओ तयणंतरमेव एए बंधतित्ति काउं, तम्मि काले तेसिं उदओ णत्थि, अन्तोमुहुत्तातो परओ उदओ भवतित्ति, आहारगतित्थगरनामाणं बंधकाले उदओ एव णत्थि, सम्मामिच्छत्तस्स सम्मादिट्ठिस्स उक्कोसा ट्ठिति लब्भति । तेसिं उदयाभावातो उदयट्ठितिगयं दलियं सजातिंभि थिवुग-

संकमेण संकमति तेण उदयट्ठितीते समऊणं वुच्चति । 'उभयासिं'ति-उदयवतीणं अणुदयवदीणं च संकमुक्कस्सा-ण जट्ठिती दोण्हवि तुल्ला भन्नति। कहं ? भण्णाति-तम्मि काले उ(अणु)दयवतीणं पि समतो दलियरहिओ अत्थित्ति काउं । उक्कोसं ट्ठितिसंतसामित्तं भणियं ।।१८।।

(मलय०)—'संकमओ'त्ति-यासां प्रकृतिनां संक्रमत उत्कृष्टं स्थितिसत्कर्म प्राप्यते, न बन्धतः, उदयोऽपि च विद्यते तासां संक्रमतो दीर्घाणां संक्रमवशलब्धोत्कृष्टस्थितिकानां य आगमः संक्रमेण आवलिकाद्विकहीनोत्कृष्टस्थितिसमागमः स 'आवलिकया' उदयावलि-कया सह उत्कृष्टं स्थितिसत्कर्म । एतदुक्तं भवति-सातं वेदयमानः कश्चिदसातमुत्कृष्टस्थितिकं बध्नाति, तच्च बद्धा सातं बद्धुं लग्नः, असातवेदनीयं च बन्धावलिकातीतं सत् आवलिकात उपरितनं सकलमपि आवलिकाद्विकहीनं त्रिंशत्सागरोपमकोटीकोटीप्रमाणं स्थिति-सत्कर्म तस्मिन् सातवेदनीये वेद्यमाने बध्यमाने च उदयावलिकाया उपरिष्टात् संक्रमयति, ततस्तया उदयावलिकया सहितः संक्र-मेणावलिकाद्विकहीनोत्कृष्टस्थितिसमागमः सातवेदनीयस्योत्कृष्टं स्थितिसत्कर्म । एवं नवनोकषायमनुजगतिप्रथमसंहननपञ्चकप्रथमसं-स्थानपञ्चकप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्युच्चैर्गोत्राणामष्टाविंशतिप्रकृतीनामावलिकाद्विकहीनः स्वस्वसजातीयोत्कृ-ष्टस्थितिसमागमः उदयावलिकया सहित उत्कृष्टं स्थितिसत्कर्म भावनीयम् । सम्यक्त्वस्य पुनरन्तर्मुहूर्तोन उत्कृष्टस्थितिसमागम उदया-वलिकया सहित उत्कृष्टं स्थितिसत्कर्म । तथाहि-मिथ्यात्वस्योत्कृष्टां स्थितिं बद्धा तत्रैव च मिथ्यात्वेऽन्तर्मुहूर्तं स्थित्वा ततः सम्यक्त्वं प्रतिपद्यते । तस्मिंश्च प्रतिपन्ने सति मिथ्यात्वस्योत्कृष्टां स्थितिं-आवलिकात उपरितनीं स्थितिं-तथापि संख्ययाऽन्तर्मुहूर्तोनसप्तति-सागरोपमकोटीकोटीप्रमाणां सकलामपि सम्यक्त्वे उदयावलिकात उपरि संक्रमयति। ततोऽन्तर्मुहूर्तोन एवोत्कृष्टस्थितिसमागम

संक्रमकाले उदयावलिकया सहितः सम्यक्त्वस्योत्कृष्टं स्थितिसत्कर्म । यासां पुनः प्रकृतीनां संक्रमत उत्कृष्टा स्थितिः प्राप्यते न च संक्रमकाले
उदयावलिकया सहितः सम्यक्त्वस्योत्कृष्टं स्थितिसत्कर्म समयोनमवगन्तव्यम्–आवलिकाद्विकहीनोत्कृष्टस्थितिसमागम
उदयोऽस्ति तासां संक्रमकालेऽनुदयानां तावदेव पूर्वोक्तं स्थितिसत्कर्म समयोनमवगन्तव्यम्–आवलिकाद्विकहीनोत्कृष्टस्थितिसमागम
आवलिकया सहितः समयोनस्तासामुत्कृष्टं स्थितिसत्कर्मेत्यर्थः । तथाहि–कश्चिन्मनुष्य उत्कृष्टसंक्लेशवशादुत्कृष्टां नरकगतिस्थितिं
बद्ध्वा परिणामपरावर्तनेन देवगतिं बध्धुमारब्धवान् । तस्यां च देवगतौ बध्यमानायामावलिकाया उपरि नरकस्थितिं बन्धावलिकातीतां
उदयावलिकाया उपरितनीं सकलामपि विंशतिसागरोपमकोटीकोटीप्रमाणां संक्रमयति । प्रथमा च स्थितिः समयमात्रा देवगतेः सत्का
मनुजगतौ वेद्यमानायां स्तिबुकसंक्रमेण संक्रामति । ततस्तया समयमात्रया स्थित्या ऊन आवलिकयाऽभ्यधिक आवलिकाद्विकहीनो-
त्कृष्टस्थितिसमागमो देवगतेरुत्कृष्टं स्थितिसत्कर्म । एवं द्वित्रिचतुरिन्द्रियजात्याहारकसप्तकमनुजानुपूर्वीदेवानुपूर्वीसूक्ष्मापर्याप्तसाधार-
णतीर्थकराख्यानामपि षोडशप्रकृतीनां यथोक्तमानमुत्कृष्टं स्थितिसत्कर्म भावनीयम् । सम्यग्मिथ्यात्वस्य पुनरन्तर्मुहूर्तोन उत्कृष्टस्थि-
तिसमागम आवलिकयाऽभ्यधिकसमयोन उत्कृष्टं स्थितिसत्कर्म वाच्यम् । तच्च सम्यक्त्वोक्तभावनानुसारेण भावनीयम् । 'उभयासिं
जट्ठिई तुल्ल' त्ति–उभयीषामुदयवतीनामनुदयवतीनां च प्रकृतीनां संक्रमोत्कृष्टस्थितीनां संक्रमकाले 'यत्स्थितिः'–सर्वास्थितिस्तुल्या ।
न हि कालः संक्रमयतोऽनुदयवतीनामपि तदानीं प्रथमस्थितिः स्तिबुकसंक्रमेणोदयवतीषु संक्रम्यमाणापि दलिकरहिता विद्यते एव । न हि कालः संक्र-
यतोऽनुदयवतीनामपि तदानीं प्रथमस्थितिः स्तिबुकसंक्रमेणोदयवतीषु संक्रम्यमाणापि दलिकरहिता विद्यते एव । न हि कालः संक्र-
मयितुं शक्यते, किन्तु तत्स्थं दलिकमेव । ततः प्रथमस्थितिगतदलिकसंक्रान्तावपि दलिकरहिता प्रथमा स्थितिः तदानीं विद्यत
एवेति कृत्वा उभयीषामपि यत्स्थितिः तुल्या । यश्च यासां प्रकृतीनां उत्कृष्टां स्थितिं बध्नाति, यश्च यासामुत्कृष्टां स्थितिं संक्रमयति, स
तासामुत्कृष्टस्थितिसत्कर्मस्वामी ॥१८॥

(३०)—यासां प्रकृतीनां संक्रमकाले उदयोऽपि विद्यते संक्रमत एव चोत्कृष्टं स्थितिसत्कर्म प्राप्यते न बन्धतस्तासां संक्रमतो दीर्घाणामुदयसंक्रमोत्कृष्टानां मनुजगतिसातवेदनीयसम्यक्त्वस्थिरशुभसुभगसुस्वरादेययशःकीर्तिनवनोकषायप्रशस्तविहायोगतिप्रथमसंहननपञ्चकप्रथमसंस्थानपञ्चकोच्चैर्गोत्रलक्षणानां त्रिंशत् प्रकृतीनां य आगमः संक्रमेणावलिकाद्विकहीन उत्कृष्टस्थितिसमागमः स आवलिकयोदयावलिकया सहित उत्कृष्टं स्थितिसत्कर्म। इदमुक्तं भवति–सातं वेदयमानः कश्चिदसातमुत्कृष्टस्थितिकं बध्नाति। तच्च बद्ध्वा सातं बध्धुं लग्नः, असातवेदनीयं च बन्धावलिकातीतं सदावलिकात उपरितनं सकलमप्यावलिकाद्विकहीनत्रिंशत्सागरोपमकोटीकोटीप्रमाणं स्थितिसत्कर्म तस्मिन् सातवेदनीये वेद्यमाने बध्यमाने चोदयावलिकाया उपरिष्टात्संक्रमयति, ततस्तयोदयावलिकया सहितः–संक्रमद्वारकावलिकाद्विकहीनोत्कृष्टस्थितिसमागमः सातवेदनीयस्योत्कृष्टं स्थितिसत्कर्म, एवमन्यासामप्युदयसंक्रमोत्कृष्टानामावलिकाद्विकहीनस्वस्वसजातीयोत्कृष्टस्थितिसमागमप्रमाणमुदयावलिकासहितमुत्कृष्टस्थितिसत्कर्म भावनीयम्। सम्यक्त्वस्य पुनरन्तर्मुहूर्त्तोनोत्कृष्टस्थितिसमागमप्रमाणमुदयावलिकासहितमुत्कृष्टं स्थितिसत्कर्म द्रष्टव्यं, यतो मिथ्यात्वस्योत्कृष्टां स्थितिं बद्ध्वा ततोऽन्तर्मुहूर्त्तं मिथ्यात्व एव स्थित्वा सम्यक्त्वं प्रतिपद्यते, तत्प्रतिपत्तौ च सत्यां मिथ्यात्वस्योत्कृष्टां स्थितिमावलिकात उपरितनीमपि सद्व्ययाऽन्तर्मुहूर्त्तोनसप्ततिसागरोपमकोटाकोटिप्रमाणां सकलामपि सम्यक्त्वे उदयावलिकात उपरि संक्रमयति, ततोऽन्तर्मुहूर्त्तोन एवोत्कृष्टस्थितिसमागम उदयावलिकया सहितः सम्यक्त्वस्योत्कृष्टं स्थितिसत्कर्म।

तथा यासां प्रकृतीनां संक्रमत उत्कृष्टा स्थितिः प्राप्यते न च संक्रमकाले उदयोऽस्ति तासामनुदयानामनुदयसंक्रमोत्कृष्टानां देवगतिदेवानुपूर्वीसम्यङ्मिथ्यात्वाहारकसप्तकमनुजानुपूर्वीद्वित्रिचतुरिन्द्रियजातिसूक्ष्मसाधारणापर्याप्ततीर्थकरलक्षणानामष्टादशानां संक्र-

मद्वारकावलिकाद्विकहीनोत्कृष्टस्थितिसमागमप्रमाणमावलिकासहितं प्रागुक्तमेवोत्कृष्टं स्थितिसत्कर्म समयोनमवगन्तव्यम् । तथाहि—
मनुष्यः कश्चिदुत्कृष्टसंक्लेशपरिणत उत्कृष्टां नरकस्थितिं बद्ध्वा परिणामपरावृत्त्या देवगतिं बद्धुं लग्नः, तस्यां च देवगतौ बध्यमाना
यामावलिकाया उपरिष्टाद्बन्धावलिकातीतां नरकस्थितिमुदयावलिकात उपरितनीं सकलामपि विंशतिसागरोपमकोटाकोटिप्रमाणां संक्र-
मयति, प्रथमां च स्थितिं देवगतेः समयमात्रां मनुजगतौ वेद्यमानायामनुदयवतीत्वेन स्तिबुकसंक्रमेण संक्रमयति । ततस्तया समय-
मात्रया स्थित्योन आवलिकयाऽभ्यधिक आवलिकाद्विकहीन उत्कृष्टस्थितिसमागमो देवगतेरुत्कृष्टं स्थितिसत्कर्म । एवं देवानुपूर्व्यादी
नामपि षोडशप्रकृतीनां यथोक्तमानमुत्कृष्टं स्थितिसत्कर्म भावनीयम्। सम्यग्मिथ्यात्वस्य पुनरन्तर्मुहूर्त्तोन उत्कृष्टस्थितिसमागम आवलि-
कयाऽभ्यधिकः समयोन उत्कृष्टस्थितिसत्कर्म वाच्यम् । तद्भावना च सम्यक्त्वभावनातुल्या विधेया। तथा उभयीषामुदयवतीनामनुद-
यवतीनां च संक्रमोत्कृष्टस्थितिकानां प्रकृतीनां संक्रमकाले यत्स्थितिः—सर्वास्थितिस्तुल्या, यतोऽनुदयवतीनामपि प्रथमा स्थितिः
स्तिबुकसंक्रमेणोदयवतीषु संक्रम्यमाणाऽपि दलिकरहिता तदानीं विद्यत एव, न हि कालः संक्रमयितुं शक्यते किं तु दलिकमेव, ततः
प्रथमस्थितिगतदलिकसंक्रान्तावपि दलिकरहितप्रथमस्थितेर्विद्यमानत्वानपायादुभयीषामपि यत्स्थितेस्तुल्यतेति। संक्रमकृतपरस्वरूपनिरू-
पिततया प्रथमस्थितेः स्वस्थितिबहिर्भाव एव युक्त इति चेन्न तथाप्येकस्थितिसंतत्युपादानत्वेन प्रथमस्थितेः स्वस्थित्यन्तर्भावा-
विरोधादिति युक्तं पश्यामः । यश्च यासां प्रकृतीनामुत्कृष्टां स्थितिं बध्नाति यश्च यासामुत्कृष्टस्थितिं संक्रमयति स तासामुत्कृ-
ष्टस्थितिसत्कर्मस्वामी ॥१८॥

इयाणिं जहन्नट्ठितिसंतकम्मसामित्तं भन्नति—

संजलणातिगे सत्तसु य नोकसाएसु संकमजहन्नो । सेसाण ट्ठिई एगा दुसमयकाला अणुदयाणं ॥१९॥

(चू०)—कोहमाणमायासंजलणा सत्त णोकसाया पुरिसवेयहस्सरतिअरतिसोगभयदुगुंछाणं एएसिं जहन्नगं ट्ठितिसंतकम्मं 'संकमजहन्नो'त्ति—जारिसो जहन्नट्ठितिसंकमो तारिसं जहन्नट्ठितिसंतकम्मंपि । किं कारणं ? भण्णन्ति—एएसिं जंमि काले जहण्णगो ट्ठितिसंकमो तम्मि समते मूलट्ठिती णत्थि, अंतरकरणे वट्टमाणो उवरिल्लट्ठितिं अन्नत्थ संकमेति तम्हा जहन्नट्ठितिसंकमसरिसं जहन्नगट्ठितिसंतकम्मं होति ।'सेसाण ट्ठिती एग'त्ति—सेसाणं उदयवतीणं पगतीणं एगा ट्ठिती अप्पप्पणो संतकम्मस्स अंतिमे समते जहन्नगं ट्ठितिसंतकम्मं भवति । तं जहा—पंच नाणावरण चत्तारि दंसणावरण वेयगसम्मत्तं लोभसंजलणा चत्तारि आउगा नपुंसगवेयइत्थिवेया सायासाय उच्चागोय मणुयगतिजातितसबायरं च पज्जत्तसुभगआदेज्जं जसकित्ति तित्थकरं पंच अंतराइया । एयासिं चोत्तीसाए पगतीणं एगठिति जहन्नगं ट्ठितिसंतकम्मं होति । 'दुसमयकाला अणुदयाणं'ति—संजलणातिगसत्तनोकसायवज्जाणं सेसाण अणुदयवतीणं कम्माणं एगा ट्ठिती जहन्नगं ट्ठितीसंतं, कालं पडुच्च दुसमयइगं । कहं ? भण्णइ—अप्पप्पणो खवणस्स दुचरिमसमते उदयवतीसु उदयगयं दलियं संतकम्मंति काउं तंमि चरिमसमते तं दलियं उदयवतीसु संकंतं सगपगतीते ण दीसइ, तम्हा दुसमयकालं एगठितिगं जहन्नगं ठिति संतकम्मं होति । के ते ? भण्णति—संजलणातिगसत्तनोकसायउदयवतीए मोत्तूणं सेसाणं चोद्दसुतरं सयं भवति ।

सव्वकम्माणं सामन्नेण सामी भन्नति—अणंताणुबंधीणं दिट्ठितिगस्स य एएसिं सत्तण्हं अविरयाति जाव

निरयायुगतिरियायुगदेवाउगाणं अप्पप्पणो अपमत्तो ताव अन्नयरो जहन्नगं ट्ठितिसंतकम्मसामी भण्णति। अट्ठकसायथीणगिद्धितिगं तेरसणामं नवनोकसायं संजलणतिगं एएसिं छत्तीसाए वेयगो चरिमसमये वट्टमाणो। लोभसंजलणाए सुहुमरागो सामी। णाणावरण छदंसणावरण कम्माणं अणियट्टि जहन्नट्ठितिसंतकम्मसामी। सेसाणं अजोगिकेवली पंचण्हं अंतराइयाणं एएसिं सोलसण्हं खीणकसाउ जहन्नगट्ठितिसंतकम्मसामी। जहन्नगट्ठितीसंतसामी ॥१९॥

(मलय०)—तदेवमुक्तमुत्कृष्टस्थितिसत्कर्मस्वामित्वम्, सम्प्रति जघन्यस्थितिसत्कर्मस्वामित्वमाह—'संजलणतिगे' त्ति। संज्वलनत्रिकस्य क्रोधमानमायारूपस्य 'सप्तानां च नोकषायाणां'—पुरुषवेदहास्यादिषट्करूपाणां जघन्यस्थितिसत्कर्म जघन्यस्थितिसंक्रमो वेदितव्यः। एता हि प्रकृतयो बन्धे उदये च व्यवच्छिन्ने सति अन्यत्र संक्रमेण क्षयं नीयन्ते, तेन कारणेन एतासां य एव चरमसंक्रमः स एव जघन्यं स्थितिसत्कर्म। उक्तं च—"हासाइ पुरिस कोहादि तिन्नि संजलण जेण बंधुदये। वोच्छिन्ने संकमइ तेण इहं संकमो चरिमो ॥" जघन्यं स्थितिसत्कर्मेति संबन्धः। शेषाणां पुनरुदयवतीनां ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयवेदकसम्यक्त्वसंज्वलनलोभायुश्चतुष्टयनपुंसकवेदस्त्रीवेदसातासातवेदनीयोच्चगोंत्रमनुजगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरान्तरायपञ्चकरूपाणां प्रकृतीनां चतुस्त्रिंशत्संख्यानां स्वस्वक्षयपर्यवसानसमये या एका समयमात्रा स्थितिः सा जघन्यं स्थितिसत्कर्म। अनुदयवतीनां पुनः प्रकृतीनां स्वक्षयोपान्त्यसमये या स्वरूपापेक्षया समयमात्रा स्थितिरन्यथा तु द्विसमयमात्रकाला, सा जघन्यं स्थितिसत्कर्म। अनुदयवतीनां हि चरमसमये स्तिबुकसंक्रमेणोदयवतीषु प्रकृतिषु मध्ये प्रक्षिपति तत्स्वरूपेण चानुभवति तेन चरमसमये तासां दलिकं स्वरूपेण न

प्राप्यते, किन्तु पररूपेण, अत उक्तं उपान्त्यसमये स्वरूपापेक्षया समयमात्रा अन्यथा तु द्विसमयमात्रकालेति । सम्प्रति सामान्येन सर्वकर्मणां जघन्यस्थितिसत्कर्मस्वामि प्रतिपाद्यते–तत्रानन्तानुबन्धिनां दर्शनमोहनीयत्रिकस्य चाविरतादिरप्रमत्तपर्यन्तो यथासंभवं जघन्यस्थितिसत्कर्मस्वामी । नारकतिर्यग्देवायुषां नारकतिर्यग्देवाः स्वस्वभवचरमसमये वर्तमानाः । कषायाष्टकस्त्यानर्द्धित्रिकनामत्रयोदशकनवनोकषायसंज्वलनत्रिकरूपाणां षट्त्रिंशत्प्रकृतीनामनिवृत्तिबादरसंपरायः । संज्वलनलोभस्य सूक्ष्मसंपरायः । ज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकानां क्षीणकषायः । शेषाणां पञ्चनवतिसंख्यानामयोगिकेवली जघन्यस्थितिसत्कर्मस्वामी ॥१९॥



(उ०)—तदेवमुक्तमुत्कृष्टस्थितिसत्कर्मस्वामित्वं, अथ जघन्यस्थितिसत्कर्मस्वामित्वमाह–संज्वलनत्रिकस्य क्रोधमानमायारूपस्य सप्तानां नोकषायाणां पुरुषवेदहास्यादिषट्करूपाणां जघन्यं स्थितिसत्कर्म जघन्यस्थितिसंक्रमो ज्ञातव्यः, एतासां प्रकृतीनां बन्धस्योदयस्य च व्यवच्छेदे सत्यन्यत्र संक्रमेण क्षयनयनं भवतीति य एवासां चरमः संक्रमः स एव जघन्यस्थितिसत्कर्मेति भावः । शेषाणां पुनरुदयवतीनां ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयवेदकसम्यक्त्वसंज्वलनलोभायुश्चतुष्टयनपुंसकवेदस्त्रीवेदसातासातवेदनीयोच्चैर्गोत्रमनुजगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्त्तितीर्थंकरान्तरायपञ्चकरूपाणां चतुस्त्रिंशत्प्रकृतीनां स्वस्वक्षयचरमसमये यैका समयमात्रा स्थितिः सा जघन्यस्थितिसत्कर्म । अनुदयवतीनां तु स्वस्वक्षयोपान्त्यसमये स्वरूपापेक्षया समयमात्राऽन्यथा तु द्विसमयमात्रा स्थितिर्जघन्यं स्थितिसत्कर्म । अनुदयवतीनां हि चरमसमये स्तिबुकसंक्रमेणोदयवतीषु प्रक्षेपात्तत्स्वरूपेणानुभवाच्च स्वरूपेण दलिकं न प्राप्यते किंतु पररूपेणेत्येवमुक्तम् । अथ सामान्येन सर्वकर्मणां जघन्यस्थितिसत्कर्मस्वामी प्रतिपाद्यते–तत्रानन्तानुबन्धिनां दर्शनमोहनीयत्रयस्य चाविरतादिरप्रमत्तपर्यन्तो यथायोगं जघन्यस्थितिसत्कर्मस्वामी । नारकतिर्यग्देवायुषां नारकतिर्यग्देवाः स्वस्वभवचरमसमये

षट्त्रिंशत्प्रकृतीनामनिवृत्तिबादरसम्परायः, संज्व-
वर्तमानाः, कषायाष्टकस्त्यानर्द्धित्रिकनामत्रयोदशकनोकषायनवकसंज्वलनत्रिकरूपाणां षट्त्रिंशत्प्रकृतीनामनिवृत्तिबादरसम्परायः, संज्व- वर्तमानाः, शेषाणां पञ्चनवतिसंख्यानामयोगिकेवली
लनलोभस्य सूक्ष्मसम्परायः, ज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकानां क्षीणकषायः, शेषाणां पञ्चनवतिसंख्यानामयोगिकेवली
जघन्यस्थितिसत्कर्मस्वामी ॥१९॥

भणियं जहन्नट्ठितिसंतसामीत्तं । इयाणिं ट्ठितिविकप्पदरिसणत्थं भण्णति-

**ठिइसंतट्ठाणाइं णियगुक्कस्सा हि थावरजहन्नं । णेरंतरेण हेट्ठा खवणाइसु संतराइं पि ॥२०॥**

(चू०)—'ठिइसंतट्ठाणाइं नियगुक्कस्सा हि थावरजहन्नं णेरंतरेणं'ति-ट्ठितिए 'संतट्ठाणाइं नियगुक्कस्सा हि' ति सव्वकम्माणं अप्पप्पणो उक्कस्सातो आढवेत्तु जाव 'थावरजहन्नं'ति-एगिंदियजहन्नंति भणियं भवति,एगिंदियस्स जहन्नगं ट्ठितिसंतं ताव 'णेरंतरेणं' ति-निरंतरेणेव जत्तिया तत्थ समयभेया तत्तिया तत्थ ट्ठितिभेया लब्भंति । तं जहा-उक्कस्सिया ट्ठिती, समऊणा उक्कस्सिया ट्ठिति, एवं बिसमऊणा, तिसमऊणा, जाव एगिंदियस्स सव्वज- हन्निया ट्ठितित्ति । 'हेट्ठा खवणाइसु संतराइं पि'त्ति-एगिंदियजहन्नगट्ठितीतो हेट्ठा 'खवणादिसु'त्ति-खवणकरणे आदिसद्देण उव्वलणे वि खवणउव्वलणकिरियं पडुच्च 'संतरातिं पि'त्ति-एगिंदियजहन्नट्ठिति संतराइं पि लब्भंति निरंतराइं पि लब्भंति । कहं ? भण्णइ-एगिंदियजहन्नगट्ठितीतो बितियं ट्ठितिखंडगं पलिओवमस्स संखेज्जति- भागं छिंदति जाव चरिमसमतो, ट्ठितिविसेसा लब्भंति अंतोमुहुत्तं कालं। किं कारणं ? हेट्ठतो खिज्जतित्ति किच्चा। तं ट्ठितिखंडगं उक्किरिज्जमाणं उक्किन्नं भवति पलिओवमस्स संखेज्जतिभागं हेट्ठतो ऊसरइ एक्कसराते । ट्ठवणा । पुणो

## स्थितिभेदनिरुपणायाश्चित्रम्

| प्रथमस्थितिकंडकेन सह क्रमेण स्तिबुकेन त्रुटिता. स्थितयः | द्वि०स्थि०कंडकेन सह क्रमेण स्तिबुकेन त्रुटिता स्थितयः | तृ० स्थि० कंडकेन सह क्रमेण स्तिबुकेन त्रुटिताः स्थितयः | अन्त्यकंडकेन सह क्रमेण स्तिबुकेन त्रुटिताः स्थितयः | | अन्त्यस्थितिकंडकं युगपत् त्रुटितं भवति (अन्तर्मुहूर्त्तेन) | तृतीयस्थितिकंडकं युगपत् त्रुटति ( अन्तर्मुहूर्त्तेन) |
|---|---|---|---|---|---|---|
| ○○○○ | ○○○○ | ○○○○ | ○○○○ | ○○○ | ○○○○○○○○○○○ | ○○○○○○○○○○○ |
| अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | चरमोद यावलि | पल्याऽसं० भा० | प० असं० भा० |

चरमोदयावलिका अत्र स्थितिनैरंतर्येण प्राप्यते

द्वितीयस्थितिकंडकं युगपत् त्रुटति (अन्तर्मुहूर्त्तेन)

प्रथमं स्थितिकंडकं युगपत् त्रुटति (अन्तर्मुहूर्त्तेन)

एकें०प्रायोग्या जघ०स्थितिः

सर्वोत्कृष्टा स्थितिः

OOOOOOOOOO/\OOOOOOOOOOO/\OOOOOOOOOOOOOOOOO/

प० असं० भा०

प०असं० भा० मानं कंडकं घात्यमानमन्तर्मुहूर्त्तेनयुगपत् घातितं भवति

नैरन्तर्येण लभ्यमाना स्थितिः

क्षपकानां क्षपणप्रायोग्योद्वलनप्रायोग्या वा स्थितिः ( एकेन्द्रिय जघन्य स्थितेरधस्तनी ) सान्तरनिरन्तरा

| | | | | | |
|---|---|---|---|---|---|
| अत्र प्रथमस्थितिकंडकघाते | निरन्तरा | ५९ तः ५६ | सान्तरा | ५५ त ४६ |
| द्वि० ,, | ,, | ४५ तः ४२ | ,, | ४१ तः ३२ |
| तृ० ,, | ,, | ३१ तः २८ | ,, | २७ तः १८ |
| च० ,, | ,, | १७ तः १४ | ,, | १३ तः ४ |
| चरमोदयाव० | | ३ तः १ | | |

वि समतं अंतोमुहुत्तकालप्पमाणमेत्तं ट्ठितिविसेसा लब्भंति। हिट्ठिमो वि दुसहितो निरंतरक्खतो, उवरि खंडगं छेउं संतरक्खतो जाव आवलिगा वि समए समए खीयमाणा जाव एगा ट्ठिती। एवं संतट्ठाणाणं भेया जाणियव्वा ॥२०॥

(मलय०)—तदेवमुक्तं जघन्यस्थितिसत्कर्मस्वामित्वम्, सम्प्रति स्थितिभेदप्ररूपणार्थमाह—'ठिइसंतट्ठाणाइं' ति। सर्वेषां कर्मणां स्वकीयात् स्वकीयात् उत्कृष्टात् स्थितिस्थानात् समयमात्रादारभ्याधस्तात्तावदवतरीतव्यं यावत् स्थावरजघन्यं-एकेन्द्रियप्रायोग्यं जघन्यं स्थितिसत्कर्म। एतावता स्थितिकण्डके यावन्तः समयास्तावन्ति स्थितिस्थानानि नानाजीवापेक्षया 'निरन्तरेण' नैरन्तर्येण लभ्यन्ते। तद्यथा—उत्कृष्टा स्थितिरेकं स्थितिस्थानम्, समयोना उत्कृष्टा स्थितिर्द्वितीयं स्थितिस्थानं, द्विसमयोना उत्कृष्टा स्थितिस्तृतीयं स्थितिस्थानम्। एवं तावद्वाच्यं यावदेकेन्द्रियप्रायोग्यं जघन्यं स्थितिसत्कर्म। एकेन्द्रियप्रायोग्याच्च जघन्यस्थितिसत्कर्मणोऽधस्तात् क्षपणादिषु क्षपणे उद्वलने च सान्तराणि स्थितिस्थानानि लभ्यन्ते। अपिशब्दान्निरन्तराणि च। कथमिति चेत्, उच्यते—एकेन्द्रियप्रायोग्यजघन्यस्थितिसत्कर्मण उपरितनाग्रिमभागात्पल्योपमासंख्येयभागमात्रं स्थितिखण्डं खण्डयितुमारभते। खण्डनारम्भप्रथमसमयादारभ्य च समये समयेऽधस्तादुदयवतीनामनुभवेनानुदयवतीनां स्तिबुकसंक्रमेण समयमात्रा समयमात्रा स्थितिः क्षीयते। ततः प्रतिसमयं स्थितिविशेषा लभ्यन्ते। तद्यथा—तत्स्थावरप्रायोग्यं जघन्यं स्थितिसत्कर्म प्रथमसमयेऽतिक्रान्ते समयहीनं, द्वितीये समयेऽतिक्रान्ते द्विसमयहीनम्, तृतीये समयेऽतिक्रान्ते त्रिसमयहीनमित्यादि। अन्तर्मुहूर्तेन च कालेन तत् स्थितिखण्डं खण्डयति। तत एतावती स्थितिर्युगपदेव त्रुटितेति कृत्वाऽन्तर्मुहूर्तादूर्ध्वं निरन्तराणि स्थितिस्थानानि न लभ्यन्ते। ततः पुनरपि द्वितीयं पल्योपमासंख्येयभागमात्रमन्तर्मुहूर्तमात्रेण खण्डयति। तत्रापि प्रतिसमयमधः समयमात्रसमयमात्रस्थितिक्षयापेक्षया निरन्तराणि स्थितिस्थानानि पूर्वप्रकारेण लभ्यन्ते। द्वितीये च स्थितिखण्डे खण्डिते सति पुनरपि पल्योपमासंख्येयभागमात्रा स्थितिर्युगपदेव त्रुटितेति न भूयोऽप्यन्तर्मुहूर्त्तादूर्ध्वं निरन्तराणि स्थितिस्थानानि लभ्यन्ते। एवं तावद्वाच्यं यावदावलिका शेषा भवति। सापि चावलिका उदयवतीनाम-

नुभवेनानुदयवतीनां स्तिबुकसंक्रमेण समये समये क्षयमुपयाति तावद्यावदावलिका स्थितिः । ततोऽमूनि आवलिकामात्रसमयप्रमाणानि स्थितिस्थानानि निरन्तराणि लभ्यन्ते ॥२०॥

(उ०)—तदेवमुक्तं जघन्यस्थितिसत्कर्मस्वामित्वं, अथ स्थितिभेदनिरूपणार्थमाह–सर्वेषां कर्मणां निजनिजादुत्कृष्टात् स्थितिस्थानादारभ्याधस्तादवतरता तावद्गन्तव्यं यावत्स्थावरजघन्यमेकेन्द्रियप्रायोग्यं जघन्यस्थितिसत्कर्म समायाति। एतावति स्थितिकण्डके यावन्तः समयास्तावन्ति स्थितिस्थानानि नानाजीवापेक्षया नैरन्तर्येण लभ्यन्ते । तथाहि–उत्कृष्टा स्थितिरेकं स्थितिस्थानं, सैव समयोना द्वितीयं, द्विसमयोना तृतीयं, एवं तावद्वाच्यं यावदेकेन्द्रियप्रायोग्यं जघन्यं स्थितिसत्कर्म । एकेन्द्रियप्रायोग्याच्च जघन्यस्थितिसत्कर्मणोऽपस्तात्क्षपणादिषु क्षपणे उद्वलने च सान्तराणि स्थितिस्थानानि लभ्यन्ते, अपिशब्दान्निरन्तराणि च । कथमिति चेद्, उच्यते–एकेन्द्रियप्रायोग्यजघन्यस्थितिसत्कर्मण उपरितनाग्रिमभागात्पल्योपमासंख्येयभागमात्रं स्थितिखण्डं खण्डयितुमारभ्यते, खण्डनारम्भप्रथमसमयादारभ्य च समये समयेऽधस्तादुदयवतीनामनुभवेनानुदयवतीनां तु स्तिबुकसंक्रमेण समयमात्रा समयमात्रा स्थितिः क्षीयते, ततः प्रतिसमयं हानिकृताः स्थितिविशेषा लभ्यन्ते । तथाहि–तत्स्थावरप्रायोग्यं जघन्यस्थितिसत्कर्म प्रथमसमयेऽतिक्रान्ते समयहीनं, द्वितीयसमयेऽतिक्रान्ते द्विसमयहीनं, तृतीयसमयेऽतिक्रान्ते त्रिसमयहीनमित्यादि भवति, अन्तर्मुहूर्त्तेन च कालेन तत् स्थितिखण्डं खण्डयतीत्यन्तर्मुहूर्त्तं यावदेते समयसमयहानिकृता विशेषा लभ्यन्ते, तत उक्तस्थितिखण्डप्रमाणा स्थितिर्युगपदेव त्रुटितेति अन्तर्मुहूर्त्तादूर्ध्वं निरन्तराणि स्थितिस्थानानि न लभ्यन्ते, ततः पुनरपि द्वितीयं पल्योपमासंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तमात्रेण खण्डयति, तत्रापि प्रतिसमयमधः समयमात्रसमयमात्रस्थितिक्षयापेक्षया निरन्तराणि स्थितिस्थानानि प्राग्वल्लभ्यन्ते, द्वितीये च स्थितिखण्डे

खण्डिते सति पल्योपमासंख्येयभागमात्रा स्थितिर्युगपदेव त्रुटितेति भूयोऽप्यन्तर्मुहूर्त्तादूर्ध्वं निरन्तराणि स्थितिस्थानानि न लभ्यन्ते, एवं निरन्तरसान्तरस्थितिस्थानलाभक्रमस्तावद्भावनीयो यावदावलिका शेषा भवति। साऽपि चावलिकोदयवतीनामनुभवेनानुदयवतीनां च स्तिवुकसंक्रमेण प्रतिसमयं क्षीयते तावद्यावदेका स्थितिः, ततोऽमून्यावलिकासमयप्रमाणानि स्थितिस्थानानि निरन्तराणि लभ्यन्ते ॥२०॥

भणियं ठ्ठितिसंतं, इयाणिं अणुभागसंतकम्मं भन्नति—

**संकमसमसणुभागे णवरि जहन्नं तु देसघाईणं। छन्नोकसायवज्जं एगट्ठाणंमि देसहरं ॥२१॥**

**मणनाणे दुट्ठाणं देसहरं सामिगो य सम्मत्ते। आवरणविग्घसोलसग किट्टिवेएसु य सगंते ॥२२॥**

(चू०)—'संकमसममणुभागे'त्ति–अणुभागसंकमेण तुल्लं अणुभागसंतकम्मं। कहं ? भण्णइ–ट्ठाणपच्चयविवागसुभासुभातिं भेओ सातियणादियपरूवणा सामित्तं जहा अणुभागसंकमे तहेव अणूणमतिरित्तं भाणियव्वं। नवरि विसेसोत्थ भन्नति–'जहन्नं तु देसघादीणं छन्नोकसायवज्जं एगट्ठाणंमि देसहरं'ति–देसघादीणं छन्नोकसायवज्जाणं जहन्नगं अणुभागसंतकम्मं ट्ठाणसंनाओ एगट्ठाणिसंना घातिसन्नातो देसघाती भवति। के ते ? भण्णति–आतिमा तिन्नि णाणावरण चक्खुदंसणावरण अचक्खुदंसणावरण ओहिदंसणावरण चत्तारिसंजलणा तिन्नि वेदा पंच अंतराईया एएसिं अट्ठारसण्हं कम्माणं जहन्नाणुभागसंतकम्मे एगट्ठाणिगं देसघातिं च भवति।

जहन्नगं अणुभागसंतं ।
'मणनाणे दुट्ठाणं देसहरं'ति-मणपज्जवनाणे दुट्ठाणियं देसघातिं च जहन्नगं अणुभागसंतं।
इयाणिं एएसिं सामित्तं भण्णति-'सामिगो य सम्मत्ते आवरणविग्घसोलसग किट्टीवेदेसु य सगंते'त्ति-
सम्मत्तं पंचनाणावरणा छदंसणावरणा पंचअंतरातिगलोभसंजलण तिण्हं वेयाणं 'सगंते'त्ति-अप्पप्पणो अंते
वट्टमाणो जहन्नाणुभागसंतसामी ॥२१-२२॥

(मलय०)—तदेवं स्थितिस्थानभेदोपदर्शनमपि कृतम्, सम्प्रत्यनुभागसत्कर्मप्ररूणार्थमाह—'संकमसमं'इत्यादि। अनुभागसंक्र-
मेण तुल्यमनुभागसत्कर्म वक्तव्यम्। एतदुक्तं भवति—यथानुभागसंक्रमे स्थानप्रत्ययविपाकशुभाशुभत्वसाधनादित्वस्वामित्वानि प्राक्
प्रतिपादितानि तथैवात्राप्यनुभागसत्कर्मणि वक्तव्यानि। नवरमयं विशेषो यदुत देशघातिनीनां हास्यादिषट्कवर्जितानां मतिश्रुतावधि-
ज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणसंज्वलनचतुष्टयवेदत्रिकान्तरायपञ्चकरूपाणामष्टादशप्रकृतीनां जघन्यानुभागसत्कर्म स्थानमधिकृत्य
एकस्थानीयम्, घातिसंज्ञामधिकृत्य देशहरं—देशघाति वेदितव्यम्। मनःपर्यायज्ञानावरणे पुनर्जघन्यमनुभागसत्कर्म स्थानमधिकृत्य द्विस्था-
नम्, घातिसंज्ञामधिकृत्य देशघाति। इहोत्कृष्टानुभागसत्कर्मस्वामिन उत्कृष्टानुभागसंक्रमस्वामिन एव वेदितव्याः। जघन्यानुभाग-
सत्कर्मस्वामिनः पुनराह—'सामिगो य'इत्यादि। सम्यक्त्वज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकरूपप्रकृतिषोडशककिट्टिरूपसंज्व-
लनलोभवेदत्रयाणां स्वस्वान्तिमसमये वर्तमाना जघन्यानुभागसत्कर्मस्वामिनो वेदितव्याः ॥२१-२२॥

(उ०)—तदेवं स्थितिस्थानभेदोऽप्युपदर्शितः, अथानुभागसत्कर्मप्ररूपणार्थमाह—अनुभागसंक्रमेण तुल्यमनुभागसत्कर्म वाच्यं,
यथानुभागसंक्रमे स्थानप्रत्ययविपाकशुभाशुभत्वसाधनादित्वस्वामित्वान्युक्तानि तथैवात्राप्यनुभागसत्कर्मणि वाच्यानीति भावः। नव-

रमयं विशेषः-यदुत देशघातिनीनां हास्यादिषट्कवर्जितानां मतिश्रुतावधिज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणसंज्वलनचतुष्टयवेदत्रया-
न्तरायपञ्चकरूपाणामष्टादशप्रकृतीनां जघन्यानुभागसत्कर्म स्थानमधिकृत्यैकस्थानीयं, घातिसंज्ञामधिकृत्य देशहरं-देशघाति। मनःप-
र्यायज्ञानावरणे तु जघन्यमनुभागसत्कर्म स्थानचिन्तायां द्विस्थानं, घातिसंज्ञाविचारे च देशघाति ज्ञेयम्। इहोत्कृष्टानुभागसत्कर्मस्वा-
मिनो य एवोत्कृष्टानुभागसंक्रमस्वामिनस्त एवाविशेषेण ज्ञेयाः। जघन्यानुभागसत्कर्मस्वामिनोऽपि कासाञ्चित्प्रकृतीनां जघन्यानुभा-
गसंक्रमस्वामिन एव प्रत्येयाः, कासाञ्चित्त्वस्ति विशेष इति तमाह-'सामिगो य सम्मत्ते' इत्यादि। सम्यक्त्वज्ञानावरणपञ्चकदर्शनावरण-
षट्कान्तरायपञ्चकरूपप्रकृतिषोडशकाकिट्टिरूपसंज्वलनलोभवेदत्रयाणां सर्वसंख्ययैकविंशतिप्रकृतीनां स्वस्वान्तिमसमये वर्तमाना जघ-
न्यानुभागसत्कर्मस्वामिनोऽवसेयाः ॥२१-२२॥

**मइसुयचक्खुअचक्खूण सुयसमत्तस्स जेट्ठलद्धिस्स। परमोहिस्सोहिदुगं मणनाणं विपुलणाणिस्स ॥२३॥**

(चू०)—'मतिसुयचक्खुअचक्खूण सुयसमत्तस्स जेट्ठलद्धिस्स' त्ति-अभिनिबोहियणाणावरणसुयणाणावरण-
चक्खुदंसणावरणअचक्खुदंसणावरणाणं 'सुयसमत्तस्स जेट्ठलद्धिस्स' त्ति-चोद्दसपुव्वि उक्कोसियाते सुतलद्धीते
वट्टमाणस्स एएसिं कम्माणं जहन्नगं अणुभागसंतं भवति। 'परमोहिस्सोहिदुगं' ति-परमोहिणाणिस्स ओहि-
दुगावरणस्स जहन्नगं अणुभागसंतं। 'मणनाणं विउलनाणिस्स' त्ति-मणपज्जवनाणं विउलमणपज्जवनाणिस्स जह-
न्नगं अणुभागसंतं भवति। लद्धिसहियस्स बहुगो अणुभागो खयं जातित्ति काउं। सेसाणं (सम्मत्तं) आवरण-
विग्घसोलसगलोभसंजलणं तिण्हं वेयाणं मोत्तूणं जो अणुभागजहन्नसंकमसामी सो चेव जहन्नाणुभागसंत-

सामी वि ॥२३॥

(मलय०)—अत्रैव विशेषमाह—'मइसुय' त्ति। मतिज्ञानावरणश्रुतज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणानां 'श्रुतसमाप्तस्य'-
इदमत्र
सकलश्रुतपारगामिनश्चतुर्दशपूर्वधरस्येत्यर्थः। 'ज्येष्ठलब्धिकस्य'-उत्कृष्टायां श्रुतार्थलब्धौ वर्तमानस्य जघन्यमनुभागसत्कर्म। तथा
तात्पर्यम्—मतिज्ञानावरणादीनां चतसृणां प्रकृतीनामुत्कृष्टश्रुतार्थसंपन्नश्चतुर्दशपूर्वधरो जघन्यानुभागसत्कर्मस्वामी वेदितव्यः। अवधिज्ञानावरणाव-
परमावधिज्ञानिनोऽवधिद्विकम्—अवधिज्ञानावरणावधिदर्शनावरणरूपं जघन्यानुभागसत्कर्म भवति। एतदुक्तं भवति—
धिदर्शनावरणयोर्जघन्यानुभागसत्कर्मस्वामी परमावधियुक्तो वेदितव्यः। तथा 'मनोज्ञानं'—मनःपर्यायज्ञानावरणं जघन्यानुभागसत्कर्म
विपुलमनःपर्यायज्ञानिनोऽवगन्तव्यम्। स्वामित्वभावनाऽवधिज्ञानावरणवत्। लब्धिसहितस्य हि प्रभूतोऽनुभागः प्रलयमुपयातीति
परमोहिस्सेत्याद्युक्तम्। शेषाणां तु प्रकृतीनां य एव जघन्यानुभागसंक्रमस्वामिनस्त एव जघन्यानुभागसत्कर्मणोऽपि द्रष्टव्याः॥२३॥

(उ०)—अत्रैव विशेषमाह—मतिज्ञानावरणश्रुतज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणानां श्रुतसमाप्तस्य सर्वाक्षरसन्निपातिनश्चतुर्द-
शपूर्वधरस्य ज्येष्ठलब्धिकस्योत्कृष्टायां श्रुतज्ञानलब्धौ वर्तमानस्य जघन्यमनुभागसत्कर्म, मतिज्ञानावरणादीनां सर्वोत्कृष्टश्रुतज्ञानलब्धि-
सम्पन्नश्चतुर्दशपूर्वविज्जघन्यानुभागसत्कर्मस्वामी वेदितव्य इत्यर्थः। तथा परमावधिज्ञानिनोऽवधिद्विकमवधिज्ञानावरणावधिदर्शनावरणरूपं
जघन्यानुभागसत्कर्म भवति, अवधिज्ञानावरणावधिदर्शनावरणयोर्जघन्यानुभागसत्कर्मस्वामी परमावधिसम्पन्नो ज्ञेय इत्यर्थः। तथा
मनोज्ञानं विपुलज्ञानिनः—मनःपर्यायज्ञानावरणस्य जघन्यानुभागसत्कर्मस्वामी विपुलमतिलब्धिसम्पन्नो ज्ञेय इत्यर्थः। लब्धिसहितस्य
प्रभूतोऽनुभागः प्रलयमुपयातीति परमोहिस्सेत्याद्युक्तम् ॥२३॥

भणियं सामित्तं, इयाणिं अणुभागसंतट्ठाणाणि परूवणत्थं भण्णति—

**बंधहयहयहउप्पत्तिगाणि कमसो असंखगुणियाणि। उदयोदीरणवज्जाणि होंति अणुभागट्ठाणाणि ॥२४॥**

(चू०)—जे बंधातो उप्पज्जंति अणुभागट्ठाणा ते बंधुप्पतिगा वुच्चंति, ते असंखेज्जलोगागासपदेसमेत्ता। कहं ? भण्णइ–अणुभागबंधज्झवसाणट्ठाणा असंखेज्जलोगागासपदेसमेत्ताक्ति काउं।'हतुप्पत्तिग'त्ति–किं भणियं होति? उवट्टणातोव्वट्टणाउ वुड्ढिहाणीतो जे उप्पज्जति ते हउप्पत्तिगा वुच्चंति। बंधुप्पत्तीतो हतुप्पत्तीगा असंखेज्जगुणा, एक्केक्कंमि बंधुप्पत्तिम्मि असंखेज्जगुणा लब्भंतित्ति। 'हतहतुप्पत्तिगाणिं'ति–ठितिघायरसघायातो जे उप्पज्जंति ते हयहतुप्पतिगा, हतुप्पतीउ हयहतुप्पत्तिगा असंखेज्जगुणा। कहं भण्णति–संकिलेसविसोही जीवस्स समए समए अन्नन्ना भवति, तमेव अणुभागघायकारणं ति तम्हा असंखेज्जगुणा। 'उदओदीरणावज्जाणि'–उदओदीरणाउ य अणुभागघाओ भवति, तं संतकंमं ण गणिज्जति। कहं ? भण्णति–तंमि समते बंधो वा उव्वट्टणा वा ओव्वट्टणा वा ट्ठितिअणुभागघातो वा एगयरो णियमा भवति तेण तेसु चेव तं गणिज्जति त्ति काउं। अणुभागट्ठाणाणि त्ति अणुभागसंतकंमट्ठाणाणि ॥२४॥

(मलय०)—इदानीमनुभागसत्कर्मस्थानभेदप्ररूपणार्थमाह।'बंध'त्ति–इहानुभागस्थानानि त्रिधा, तद्यथा–बन्धोत्पत्तिकानि, हतोत्पत्तिकानि हतहतोत्पत्तिकानि च। तत्र बन्धादुत्पत्तिर्येषां तानि बन्धोत्पत्तिकानि। तानि चासंख्येयलोकाकाशप्रदेशप्रमाणानि, तद्धेतूनामसंख्येयलोकाकाशप्रदेशप्रमाणत्वात्। तथा उद्वर्तनापवर्तनाकरणवशतो वृद्धिहानिभ्यामन्यथाऽन्यथा यान्यनुभागस्थानानि वैचित्र्यभाञ्जि भवन्ति

तानि हतोत्पत्तिकान्युच्यन्ते । हतात् घातात् पूर्वावस्थाविनाशरूपादुत्पत्तिर्येषां तानि हतोत्पत्तिकानि । तानि च पूर्वेभ्योऽसंख्येयगुणानि, एकैकस्मिन् बन्धोत्पत्तिके स्थाने नानाजीवापेक्षया उद्वर्तनापवर्तनाभ्यामसंख्येयभेदकरणात् । यानि पुनः स्थितिघातेन रसघातेन चान्यथाऽन्यथाभवनादनुभागस्थानानि जायन्ते तानि च हतहतोत्पत्तिकान्युच्यन्ते । हते उद्वर्तनापवर्तनाभ्यां घाते सति भूयोऽपि हतात् स्थितिघातेन रसघातेन वा घातादुत्पत्तिर्येषां तानि हतहतोत्पत्तिकानि । तानि चोद्वर्तनापवर्तनाजन्येभ्योऽसंख्येयगुणानि । संप्रत्यक्षरयोजना क्रियते--यानि उदयत उदीरणातश्च प्रतिसमयं क्षयसंभवात् अन्यथाऽन्यथानुभागस्थानानि जायन्ते तानि वर्जयित्वा शेषाणि बन्धोत्पत्तिकादीनि अनुभागस्थानानि क्रमशोऽसंख्येयगुणानि वक्तव्यानि । उदयोदीरणाजन्यानि कस्माद्वर्ज्यन्त इति चेद्, उच्यते—यस्मादुदयोदीरणयोः प्रवर्तमानयोर्नियमात् बन्धोद्वर्तनापवर्तनास्थितिघातरसघातजन्यानामन्यतमान्यवश्यं संभवन्ति, तत उदयोदीरणाजन्यानि तत्रैवान्तः प्रविशन्तीति न पृथक् क्रियन्ते ॥२४॥

(उ०)—सम्प्रत्यनुभागसत्कर्मस्थानभेदप्ररूपणार्थमाह—इहानुभागस्थानानि त्रिधा—बन्धोत्पत्तिकानि हतोत्पत्तिकानि हतहतोत्पत्तिकानि चेति । तत्र बन्धादुत्पत्तिर्येषां तानि बन्धोत्पत्तिकानि, तानि चासंख्येयलोकाकाशप्रदेशप्रमाणानि तद्धेतूनामध्यवसायानामसंख्येयलोकाकाशप्रदेशप्रमाणत्वात् । तथोद्वर्त्तनापवर्त्तनाकरणवशतोऽन्यथाऽन्यथापरिणामेन यान्यनुभागस्थानानि वैचित्र्यभाञ्जि भवन्ति तानि हतोत्पत्तिकानीत्युच्यन्ते, हतात्पूर्वावस्थाविनाशरूपाद् घातादुत्पत्तिर्येषां तानि हतोत्पत्तिकानीति व्युत्पत्तेः, तानि च पूर्वेभ्योऽसंख्येयगुणानि, एकैकस्मिन् बन्धोत्पत्तिके स्थाने नानाजीवापेक्षयोद्वर्त्तनापवर्त्तनाभ्यामसंख्येयभेदकरणात् । यानि तु स्थितिघातेन रसघातेन चान्यथात्वमापादितानि विलक्षणान्यनुभागस्थानानि जायन्ते तानि च हतहतोत्पत्तिकान्युच्यन्ते, हते उद्वर्त्तनापवर्त्तनाकृतघाते

सति भूयोऽपि हतात् स्थितिघातकृताद्रसघातकृताद्वा घातादुत्पत्तिर्येषां तानि हतहतोत्पत्तिकानीति व्युत्पत्तेः, तानि चोद्वर्त्तनापवर्त्तनाजन्येभ्योऽनुभागस्थानेभ्योऽसंख्येयगुणानि । अक्षरयोजना त्वियं–यान्युदयत उदीरणातश्च प्रतिसमयं क्षयसंभवादन्यथाऽन्यथाऽनुभागस्थानानि जायन्ते तानि वर्जयित्वा शेषाणि बन्धोत्पत्तिकादीन्यनुभागस्थानानि क्रमशोऽसंख्येयगुणानि वाच्यानि । उदयोदीरणाजन्यानि कस्माद्वर्ज्यन्ते ? इति चेत्तत्प्रवृत्तौ बन्धोद्वर्त्तनापवर्त्तनास्थितिघातरसघातजन्यान्यतमावश्यंभावेन तेषां तेष्वेवान्तर्भावेनापृथक्करणादित्याहुः । तुल्यजातीयत्वेऽपि हेतुभेदात्तद्भेद आवश्यक इत्यपि न शङ्कनीयं, बन्धोत्पत्तिकाद्यन्तर्भूतत्वे सति तादृशभेदस्य स्थानभेदानौपयिकत्वेनादूषणत्वादिति दिक् ॥२४॥

भणियं अणुभागसंतं । इयाणिं पदेससंतकम्मं । तस्स इमे अत्थाहिगारा । तं जहा–भेदो सातियणादिपरूवणा सामित्तमिति । भेदो जहा पगतिसंते । इयाणिं सादिअणादिपरूवणा । सा दुविहा–मूलपगतिपदेससंतसादियणादिपरूवणा उत्तरपगतिपदेससंतसादियणादिपरूवणा य । तत्थ मूलपगतिए भण्णति–

सत्तण्हं अजहण्णं तिविहं सेसा दुहा पएसम्मि। मूलपगईसु आउस्स साइ अधुवा य सव्वे वि ॥२५॥

(चू०)— आउगवज्जाणं सत्तण्हं कम्माणं जहन्नयं पदेससंतकम्मं खवियकम्मंसिगस्स अप्पप्पणो पदेससंतचरिमंते वट्टमाणस्स भवति । तं च सातियअधुवं । तं मोत्तूणं सेसमजहण्णं । तस्स आदी नत्थि तम्हा अणादीयं । धुवाधुवा पुव्वुत्तं । 'सेसा दुहा पएसम्मि'त्ति–सेसविकप्पा उक्कोसाणुक्कोसजहण्णा सातियअधुवा । कहं ? भण्णइ–एएसिं उक्कोसगं पदेससंतं गुणियकम्मंसिगस्स मिच्छादिट्ठिस्स लब्भति । तस्सेवणुक्कोसं पि लब्भतित्ति

'मूलपगइसु'त्ति–मूलपगती पडुच्च 'आउस्स सादि अधुवा य
सातियअधुवा ते य। जहन्नगस्स कारणं पुव्वुत्तं। उक्कोसा जहण्णा मिच्छादिट्ठिंमि लब्भतित्ती काउं॥
सव्वे वि'त्ति–आउगस्स सव्वविगप्पा सातियअधुवा एव। तत्र चैतेऽर्थाधिकाराः, तद्यथा–भेदः साद्यनादिप्ररूपणा
(मलय०)—तदेवमुक्तमनुभागसत्कर्म। सम्प्रति प्रदेशसत्कर्म वक्तव्यम्, तत्र चैतेऽर्थाधिकाराः, तद्यथा–भेदः साद्यनादिप्ररूपणा उत्तरप्रकृतिविषया च। तत्र
स्वामित्वं चेति। तत्र भेदः प्राग्वत्, सम्प्रति साद्यनादिप्ररूपणा कर्तव्या, सा च द्विधा–मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्र
मूलप्रकृतिविषयां तां चिकीर्षुराह–'सत्तण्हं'ति। आयुर्वर्जानां सप्तानां मूलप्रकृतीनामजघन्यं प्रदेशसत्कर्म 'त्रिविधं' त्रिप्रकारम्, तद्यथा–
अनादि ध्रुवमध्रुवं च। तत्र क्षपितकर्मांशस्य आयुर्वर्जानां सप्तानां कर्मणां स्वस्वक्षयावसरे चरमस्थितौ वर्तमानस्य जघन्यं प्रदेशसत्कर्म।
तच्च साद्यध्रुवम्। ततोऽन्यत्सर्वमजघन्यम्, तच्चानादि, सदैव सद्भावात्। ध्रुवाध्रुवताऽभव्यभव्यापेक्षया। 'सेसा दुह'त्ति–शेषा विक-
ल्पा उत्कृष्टानुत्कृष्टजघन्यरूपा 'द्विधा' द्विप्रकाराः, तद्यथा–सादयोऽध्रुवाश्च। तत्रोत्कृष्टं प्रदेशसत्कर्म गुणितकर्मांशस्य मिथ्यादृष्टेः सप्तम-
पृथिव्यां वर्तमानस्य प्राप्यते। शेषकालं तु तस्याप्यनुत्कृष्टम्। ततो द्वे अपि साद्यध्रुवे। जघन्यं तु भावितमेव। तथा आयुषः सर्वेऽपि
विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपाः सादयोऽध्रुवाश्च, अध्रुवसत्कर्मत्वात् ॥२५॥

(उ०)—तदेवमुक्तमनुभागसत्कर्म, सम्प्रति प्रदेशसत्कर्म वक्तव्यं, तत्र च त्रयोऽर्थाधिकाराः–भेदः साद्यनादिप्ररूपणा स्वामित्वं
चेति। तत्र भेदः प्राग्वत्। इदानीं साद्यनादिप्ररूपणा कर्तव्या, सा च द्विधा–मूलप्रकृतिविषयोत्तरप्रकृतिविषया च। तत्र मूलप्रकृति-
विषयां ता चिकीर्षुराह–आयुर्वर्जानां सप्तानां मूलपकृतीनामजघन्यं प्रदेशसत्कर्म त्रिविधं–अनादि ध्रुवमध्रुवं चेति। तत्र क्षपितकर्मांश-
स्यायुर्वर्जसप्तकर्मणां स्वस्वक्षयावसरे चरमस्थितौ वर्तमानस्य जघन्यं प्रदेशसत्कर्म, तच्च साद्यध्रुवं, ततोऽन्यत्सर्वमजघन्यं, तच्चानादि सदैव

भावात् , ध्रुवाध्रुवताऽभव्यभव्यापेक्षया । शेषा उद्धरितविकल्पा उत्कृष्टानुत्कृष्टजघन्यरूपा द्विधा सादयोऽध्रुवाश्चेति । तत्रोत्कृष्टं प्रदेशसत्कर्म गुणितकर्मांशस्य मिथ्यादृष्टेः सप्तमपृथिव्यां वर्त्तमानस्य प्राप्यते, शेषकालं तु तस्याप्यनुत्कृष्टं, ततो द्वे अपि साद्यध्रुवे। जघन्यं तु भावितमेव । आयुषस्तु सर्वेऽपि विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपाः सादयोऽध्रुवाश्चाध्रुवसत्कर्मत्वात् ॥२५॥

मूलपगतीणं भणियं, इयाणिं उत्तरपगतीणं भण्णइ सादियणाति परूवणा—

**बायालाणुक्कस्सं चउवीससयाऽजहन्न चउ तिविहं । होइ ह छण्ह चउद्धा अजहण्णमभासियं दुविहं ॥२६॥**

सत्ता प्रदेशसत्कर्मणिसाद्यनादिप्ररूपणा

(चू०)—'बायालाणुक्कस्सं चउव्विहं'ति- सायावेयणिज्ज चत्तारिसंजलणा पुरिसवेतो पंचेंदियजाति तेजतिगसत्तगं पढमसंठ्ठाणसंघयणा सुभवन्नेकारसगं अगुरुलहुगं पराघायं उस्सासं पसत्थविहायगति तसं बायरं पज्जत्तगं पत्तेयं थिरं सुभं सुभगं सुस्सरं आदेज्जं जसं निमेणं एएसिं बायालीसाए कम्माणं अणुक्कस्सं पदेससंतं सातियादि चउव्विहं । कहं ? भण्णइ—वज्जरिसभं मोत्तूणं सेसाणं ४१कम्माणं खवगसेढीए अप्पप्पणो बंधवोच्छेयकालसमयंसि गुणियकम्मंसिगं पडुच्च उक्कोसपदेसं संभवति एक्कं समयं। तं मोत्तूणं सेसमणुक्कोसं, ततो बितियसमते अणुक्कोसस्स सादियं भवति। तं ठ्ठाणमपत्तपुव्वस्स अणादियं, धुवाधुवं पुव्वुत्तं। वज्जरिसभस्स अहे सत्तमापुढवीनेरतिगस्स सम्मदिठ्ठिस्स से काले मिच्छत्तं पडिवज्जंतस्स उक्कोसपदेससंतं भवति, तं च साइअधुवं। तं मोत्तूणं सेसमणुक्कोसं। ततो बीइयसमते अणुक्कोसस्स सातियं। तं ठ्ठाणं अपत्तपुव्वस्स अणादियं, धुवाधुवं पुव्वुत्तं । 'चउवीससयाऽजहन्नं तिविहं'ति-अणंताणुबंधिलोभसंजलणजसकित्तिवज्जाणं धुवसंताणं

चउवीससयस्स अजहन्नं पदेससंतं अणादीयं धुवाधुवं तिविहं। (कहं ?) भण्णति–एएसिं जहण्णं खवियकम्मंसिगं पडुच अप्पप्पणो संतकम्मस्स चरिमसमए एगं समयंसि, तं च सादियधुवं, तं मोत्तूणं सेसमजहन्नं। तस्स आदी णत्थि तम्हा अणाईयं, धुवाधुवं पुव्वुत्तं। 'चउ तिविहं'ति–जहासंखेण णायव्वं। 'होति ह छण्ह चउद्धा अजहन्नं'ति–अणंताणुबंधिलोभसंजलणजसकित्तीणं एएसिं छण्हं कम्माणं अजहन्नपदेससंतं सादियादि चउव्विहं। कहं ? भण्णइ–अणंताणुबंधीणं खवियकम्मंसिगस्स उव्वलंतस्स एगठितिसेसजहन्नगं पदेससंतं एगं समयं होति। तं च सातिय अधुवं। तं मोत्तूणं सेसमजहन्नं। सो चेव सम्मत्तातो परिवडिओ अणंताणुबंधी बंधिउमाढत्तो तस्स अजहन्नस्स सादियं भवति। तं ठाणमपत्तपुव्वस्स अणादियं, धुवाधुवं पुव्वुत्तं। लोभसंजलणजसाणं खवियकम्मंसिगो खवणाए अब्भुट्ठितो तस्स एगठितिसमते जहन्नगं पदेससंतं एगं समयं होति, तं सादियं अधुवं। तं मोत्तूणं सेसं सव्वं अजहन्नं, ततो णियट्टिपढमसमते वट्टमाणस्स सादियं। कहं ? भण्णति–णियट्टिपढमसमते गुणसंकमेण लोभसंजलणजसाणं बहुगं दलियं लब्भतित्ति काउं। तंठाणं अपत्तपुव्वस्स अणादियं, धुवाधुवं पुव्वुत्तं। 'अभासियं दुविहं'ति–बायालाणं जहण्णाजहण्णउक्कोसं, चउवीससयस्स जहण्णउक्कोसणुक्कोसं, अणंताणुबंधिलोभसंजलणजसकित्तीणं जहण्णउक्कोसाणुक्कोसं, अट्ठावीसाए अधुवसंतकम्मियाणं उक्कोसाणुक्कोसजहन्नाजहन्नाति सव्वे एए सादिय अधुवा एव। कारणं पुव्वुत्तं ॥२६॥

(मलय०)—सम्प्रत्युत्तरप्रकृतीरधिकृत्य साद्यनादिप्ररूपणां चिकीर्षुराह–'बायाल'त्ति। सातवेदनीयसंज्वलनचतुष्टयपुरुषवेदपञ्चेन्द्रिय-

जातितैजससप्तकप्रथमसंस्थानप्रथमसंहननशुभवर्णाद्येकादशकागुरुलघुपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिनिर्माणरूपाणां द्विचत्वारिंशत्प्रकृतीनामनुत्कृष्टं प्रदेशसत्कर्म चतुर्विधम् । तद्यथा–साद्यनादि ध्रुवमध्रुवं च । तद्यथा–वज्रर्षभनाराचवर्जानां शेषाणामेकचत्वारिंशत्प्रकृतीनां क्षपकश्रेण्यां स्वस्वबन्धान्तसमये गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्म भवति, तच्चैकसामयिकमिति कृत्वा साद्यध्रुवम् । ततोऽन्यत्सर्वमनुत्कृष्टम् । तदपि च द्वितीये समये भवत्सादि । तत्स्थानमप्राप्तस्य पुनरनादि, ध्रुवाध्रुवे पूर्ववत् । वज्रर्षभनाराचसंहननस्य तु सप्तमपृथिव्यां सम्यग्दृष्टेर्नारकस्य मिथ्यात्वं गन्तुकामस्योत्कृष्टं प्रदेशसत्कर्म, तच्च साद्यध्रुवम्, ततोऽन्यदनुत्कृष्टम्, तदपि च द्वितीये समये भवत् सादि, तत्स्थानमप्राप्तस्य पुनरनादि, ध्रुवाध्रुवे पूर्ववत् । अनन्तानुबन्धियशःकीर्तिसंज्वलनलोभवर्जितानां चतुर्विंशत्यधिकशतसंख्यानां ध्रुवसत्कर्मप्रकृतीनामजघन्यं प्रदेशसत्कर्म त्रिविधम् । तद्यथा–अनादि ध्रुवमध्रुवं च । तथाहि–एतासां क्षपितकर्मांशस्य स्वस्वक्षयचरमसमये जघन्यं प्रदेशसत्कर्म, तच्चैकसामयिकमिति कृत्वा साद्यध्रुवं च । ततोऽन्यदजघन्यम्, तच्चानादि, सदैव सद्भावात् । ध्रुवाध्रुवता पूर्ववत् । 'चउ तिविहं'ति यथासंख्येन योजनीयम्, द्विचत्वारिंशत्प्रकृतीनामनुत्कृष्टं चतुर्विधम्, ध्रुवसत्कर्मणां चाजघन्यं त्रिविधमिति । तथाऽनन्तानुबन्धिचतुष्टयसंज्वलनलोभयशःकीर्तिरूपाणां षण्णां प्रकृतीनामजघन्यं प्रदेशसत्कर्म चतुर्विधम् । तद्यथा–साद्यनादि ध्रुवमध्रुवं च । तथाहि–अनन्तानुबन्धिनामुद्वलके क्षपितकर्मांशे यदा शेषीभूता एका स्थितिर्भवति तदा जघन्यं प्रदेशसत्कर्म । तच्चैकसामयिकमिति कृत्वा साद्यध्रुवं च । ततोऽन्यत्सर्वमजघन्यम् । तच्चोद्वलितानां मिथ्यात्वप्रत्ययेन भूयोऽपि बध्यमानानां सादि, तत्स्थानमप्राप्तस्य पुनरनादि, ध्रुवाध्रुवे पूर्ववत् । यशःकीर्तिसंज्वलनलोभयोः पुनः क्षपितकर्मांशस्य क्षपणायोद्यतस्य यथाप्रवृत्तिकरणस्यान्तिमसमये जघन्यं प्रदेशसत्कर्म । तच्चैकसामयिकमिति कृत्वा

सत्ता प्रदेशसत्कर्मणिसाद्यनादिप्ररूपणा

॥५५॥

सादिध्रुवं च । ततोऽन्यत्सर्वमजघन्यम् । तदपि चापूर्वकरणप्रथमसमये गुणसंक्रमेण प्रभूतस्य दलिकस्य प्राप्यमाणत्वात् अजघन्यं
भवन् सादि, तत्स्थानमप्राप्तस्य पुनरनादि ध्रुवाध्रुवता पूर्ववत् । 'अभासियं दुविहं' ति–अभाषितमनुक्तं सर्वासां प्रकृतीनां
'द्विविधं'–द्विप्रकारमवगन्तव्यम् । तद्यथा–साद्यध्रुवं च । तत्र द्विचत्वारिंशत्प्रकृतीनामभाषितं जघन्यमजघन्यमुत्कृष्टं च । तत्रोत्कृष्टं
द्विप्रकार भावितमेव । जघन्याजघन्यता च वक्ष्यमाणं स्वामित्वमवलोक्य स्वयमेव भावनीया । ध्रुवसत्कर्मणां च चतुर्विंशतिशतसंख्या-
नामभाषितमुत्कृष्टमनुत्कृष्टं जघन्यं च । तत्र जघन्यं भावितमेव । उत्कृष्टानुत्कृष्टे मिथ्यादृष्टौ गुणितकर्मांशे प्राप्येते । ततो द्वे अपि
साद्यध्रुवे । एवमनन्तानुबन्धिसंज्वलनलोभयशःकीर्तीनामपि उत्कृष्टानुत्कृष्टे भावनीये । जघन्यं तु भावितमेव । शेषाणां चाध्रुवसत्कर्मणां
चत्वारोऽपि विकल्पाः साद्यध्रुवा अध्रुवसत्कर्मत्वादवसेयाः ॥२६॥

(३०)—अथोत्तरप्रकृतीरधिकृत्य साद्यनादिप्ररूपणां कुर्वन्नाह–सातवेदनीयसंज्वलनचतुष्टयपुरुषवेदपञ्चेन्द्रियजातितैजससप्तकाद्यसं-
स्थानाद्यसंहननशुभवर्णाद्येकादशकागुरुलघुपराघातोच्छ्वासप्रशस्तविहायोगतित्रसदशकनिर्माणरूपाणां द्विचत्वारिंशत्प्रकृतीनामनुत्कृष्टं प्र
देशसत्कर्म चतुर्विधं–साद्यनादिध्रुवाध्रुवभेदात् । तथाहि–आद्यसंहननवर्जानां शेषाणामेकचत्वारिंशत्प्रकृतीनां क्षपकश्रेण्यां स्वस्वबन्धान्त-
समये गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्म, तच्चैकसामयिकत्वात्साद्यध्रुवं, ततोऽन्यत्सर्वमनुत्कृष्टं, तदपि च द्वितीयसमये भवत्सादि,
तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुवे प्राग्वत् । आद्यसंहननस्य तु सप्तमावनौ सम्यग्दृष्टेर्नारकस्य मिथ्यात्वं यियासोरुत्कृष्टं प्रदेशसत्कर्म,
तच्च साद्यध्रुवं, ततोऽन्यदनुत्कृष्टं, तदपि द्वितीयसमये भवत्सादि, तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुवे प्राग्वत् । तथाऽनन्तानुबन्धियशः-
कीर्तिसंज्वलनलोभवर्जितानां चतुर्विंशत्यधिकशतसंख्यानां ध्रुवसत्कर्मप्रकृतीनामजघन्यं प्रदेशसत्कर्म त्रिविधं, अनादिध्रुवाध्रुवभेदात् ।

तथाहि–एतासां क्षपितकर्मांशस्य स्वस्वक्षयचरमसमये जघन्यं प्रदेशसत्कर्म प्राप्यते, तच्चैकसामयिकमिति साद्यध्रुवं, ततोऽन्यदजघन्यं, तच्चानादि, सदैव भावात्, ध्रुवाध्रुवता प्राग्वत्। 'चउ तिविहं' ति–द्विचत्वारिंशतोऽनुत्कृष्टं चतुर्विधं, चतुर्विंशशतध्रुवसत्कर्मणां चाजघन्यं त्रिविधमिति यथासंख्येन योजनीयम्। तथाऽनन्तानुबन्धिचतुष्टयसंज्वलनलोभयशःकीर्त्तिरूपाणां षण्णां प्रकृतीनामजघन्यं प्रदेशसत्कर्म चतुर्विधं, साद्यनादिध्रुवाध्रुवभेदात्। तथाहि–अनन्तानुबन्धिनामुद्वलके क्षपितकर्मांशे यदा शेषीभूतैका स्थितिर्भवति तदा जघन्यं प्रदेशसत्कर्म, तच्चैकसामयिकमिति साद्यध्रुवं, ततोऽन्यत्सर्वमजघन्यं, तच्चोद्वलितानां तेषां मिथ्यात्वप्रत्ययाद्भूयोऽपि बध्यमानतया सादि, तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुवे प्राग्वत्, यशःकीर्त्तिसंज्वलनलोभयोस्तु क्षपितकर्मांशस्य क्षपणायोत्थितस्य यथाप्रवृत्तकरणस्यान्तिमसमये जघन्यं प्रदेशसत्कर्म, तच्चैकसामयिकत्वात्साद्यध्रुवं, ततोऽन्यत्सर्वमजघन्यं, तदपि चापूर्वकरणगुणस्थानप्रथमसमये गुणसंक्रमेण प्रभूतदलिकोपनयनादजघन्यं भवत्सादि, तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुवता प्राग्वत्। अभाषितमनुक्तं सर्वासामपि प्रकृतीनां द्विविधं साद्यध्रुवं चेति। तत्र द्विचत्वारिंशत्प्रकृतीनामभाषितं जघन्यमजघन्यमुत्कृष्टं च। तत्रोत्कृष्टं द्विविधमनुत्कृष्टप्रसङ्गे भावितमेव, जघन्यमजघन्यं च वक्ष्यमाणं स्वामित्वं मनसिकृत्य स्वयमेव भावनीयम्। चतुर्विंशतिशतसंख्यानामभाषितमुत्कृष्टमनुत्कृष्टं जघन्यं च। तत्र जघन्यमजघन्यप्रसङ्गे भावितमेव, उत्कृष्टानुत्कृष्टे च गुणितकर्मांशे मिथ्यादृष्टौ प्राप्येते इत्येते अपि साद्यध्रुवे। एवमनन्तानुबन्धिसंज्वलनलोभयशःकीर्त्तीनामप्युत्कृष्टानुत्कृष्टे भावनीये, जघन्यं तु भावितमेव। शेषाणां चाध्रुवसत्कर्मणां चत्वारोऽपि भेदा अध्रुवसत्कर्मत्वादेव साद्यध्रुवाः ॥२६॥

भणिया सातियणादिपरूवणा। इयाणिं सामित्तं भण्णति। तं दुविहं–उक्कोसपदेससंतसामित्तं जहण्णपदेस-

संतसामित्तं च । तत्थ पुव्वं उक्कोसपदेससंतसामित्तं भण्णइ—

**संपुन्नगुणियकम्मो पएसउक्कस्ससंतसामी उ । तस्सेव य उप्पि विणिग्गयस्स कासिंचि वन्नेऽहं ॥२७॥**

(चू०)—'संपुन्नगुणियकम्मो' त्ति–संपून्नगुणियकम्मंसिगत्तणं जस्स अत्थि सो संपून्नगुणियकम्मो 'पएस-उक्कस्स संतसामी उ' त्ति–उक्कोसपदेससामी भवति । 'तस्सेव य' त्ति–णेरतियचरमसमते वट्टमाणस्स सामन्नेणं सव्वकम्माणं उक्कोसं पदेससंतकम्मं भवति । 'उप्पि विणिग्गयस्स कासिं चि वण्णे ह' त्ति–जेसिं कम्माणं अतो विसेसो अत्थि तेसिं तओ नियग्गरस जो विसेसो तं भणामि ॥२७॥

(मलय०)—तदेवं कृता साधनादिप्ररूपणा । सम्प्रति स्वामित्वं वक्तव्यम् । तच्च द्विधा–उत्कृष्टप्रदेशसत्कर्मस्वामित्वं जघन्यप्रदेशसत्कर्मस्वामित्वं च । तत्रोत्कृष्टप्रदेशसत्कर्मस्वामित्वमाह–'संपुन्न' त्ति । उत्कृष्टप्रदेशसत्कर्मस्वामी संपूर्णगुणितकर्मांशः सप्तमपृथिव्यां नारकश्चरमसमये वर्तमानः प्रायः सर्वासामपि प्रकृतीनामवगन्तव्यः । कासांचित्पुनः प्रकृतीनां तस्यैव संपूर्णगुणितकर्मांशस्य सप्तमपृथिव्या विनिर्गतस्योपरिष्टात् विशेषोऽस्ति । ततस्तमहं 'वर्णयामि'–वर्णयिष्यामि । 'वर्त्तमानसामीप्ये वर्त्तमानवद्वे' ति (श्रीमलय०–३-४-८४) भविष्यति वर्तमानः ॥२७॥

(उ०)—तदेवं कृता साधनादिप्ररूपणा, अथ स्वामित्वमभिधानीयं, तच्च द्विधा–उत्कृष्टप्रदेशसत्कर्मस्वामित्वं जघन्यप्रदेशसत्कर्मस्वामित्वं चेति । तत्रोत्कृष्टप्रदेशसत्कर्मस्वामित्वमाह–उत्कृष्टप्रदेशसत्कर्मस्वामी सम्पूर्णगुणितकर्मांशः सप्तमावनौ चरमसमये वर्त्तमानो नारकः प्रायः सर्वासामपि प्रकृतीनां ज्ञातव्यः । कासाञ्चित्तु प्रकृतीनां तस्यैव सम्पूर्णगुणितकर्मांशस्य सप्तमावनेर्विनिर्गतस्योपरि विशे-

षोऽस्तीति शेषः । तमहं वर्णयामि वर्णयिष्यामि । "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति भविष्यति वर्त्तमाना ॥२७॥

**मिच्छत्ते मीसम्मि य संपक्खित्तम्मि मीससुद्धाणं। वरिसवरस्स उ ईसाणगस्स चरमम्मि समयम्मि ॥२८॥**

(चू०)—'मिच्छत्ते मीसम्मि य संपक्खित्तम्मि मीससुद्धाणं'ति–ततो उव्वट्टितु तिरिएसु उववण्णो ततो अंतोमुहुत्तेण मणुएसु उप्पन्नो तत्थ सम्मत्तं उप्पाएति । ततो लहुमेव खवणाए अब्भुट्ठिओ जंमि समते मिच्छत्तं सम्मामिच्छत्ते सव्वसंकमेण संकंतं भवति तंमि समते सम्मामिच्छत्तस्स उक्कोसपदेससंतं भवति, (जंमि समते सम्मामिच्छत्तं सम्मत्ते सव्वसंकमेण संकंतं भवइ तंमि समते सम्मत्तस्स उक्कोसपदेससंतं भवति)। 'मीससुद्धाणं'ति–सम्मामिच्छत्तसम्माणं ।'वरिसवरस्स उ ईसाणगयस्स चरमंमि समयंमि' सो चेव गुणियकम्मंसिगो सव्वावासगाणि काउं ईसाणे उप्पन्नो, तत्थ संकिलेसेणं भूयो भूयो नपुंसगवेयमेव बंधति, तत्थ बहुगो पदेस णिचयो भवति, तस्स चरिमसमये वट्टमाणस्स उक्कोसपदेससंतं ॥२८॥

(मलय०)—प्रतिज्ञातमेवाह–'मिच्छत्ते'त्ति। स प्रागभिहितस्वरूपो गुणितकर्मांशः सप्तमपृथिव्या उध्धृत्य तिर्यक्षूत्पन्नः, तत्राप्यन्तर्मुहूर्त्तं स्थित्वा मनुष्येषु मध्ये समुत्पन्नः, तत्र सम्यक्त्वं प्राप्य सप्तकक्षपणाय शीघ्रमभ्युद्यतः । ततो यस्मिन् समये मिथ्यात्वं सम्यङ्मिथ्यात्वे सर्वसंक्रमेण प्रक्षिपति तस्मिन्समये सम्यङ्मिथ्यात्वस्योत्कृष्टं प्रदेशसत्कर्म । तदपि च सम्यङ्मिथ्यात्वं यस्मिन् समये सर्वसंक्रमेण सम्यक्त्वे प्रक्षिपति तस्मिन् समये सम्यक्त्वस्योत्कृष्टं प्रदेशसत्कर्म । अक्षरयोजना त्वियम्–मिथ्यात्वे मिश्रे च यथासंख्यं मिश्रे सम्यक्त्वे च प्रक्षिप्ते सति तयोर्मिश्रशुद्धयोः–मिश्रसम्यक्त्वयोरुत्कृष्टं प्रदेशसत्कर्म भवति । तथा स एव गुणितकर्मांशो नारकस्तिर्य-

र्भूत्वा कश्चिदीशानदेवो जातः, सोऽपि च तत्रातिसंक्लिष्टो भूत्वा भूयोभूयो नपुंसकवेदं बध्नाति, तदानीं च तस्य स्वभवान्तसमये वर्तमानस्य 'वर्षवरस्य' नपुंसकवेदस्योत्कृष्टं प्रदेशसत्कर्म ॥२८॥

(उ०)—प्रतिज्ञातमेवाह—प्रागुक्तस्वरूपो गुणितकर्मांशः सप्तमावनेरुध्धृत्य तिर्यक्षूत्पन्नः, तत्राप्यन्तर्मुहूर्तं स्थित्वा मनुष्येषूत्पन्नः, तत्र सम्यक्त्वं प्राप्य सप्तकक्षपणाय यः शीघ्रमुत्पद्यते तस्य सम्यङ्मिथ्यात्वे मिथ्यात्वस्य सर्वसंक्रमेण प्रक्षेपसमये सम्यङ्मिथ्यात्वस्योत्कृष्टप्रदेशसत्कर्मस्वामित्व लभ्यते, तदपि सम्यङ्मिथ्यात्वं यस्मिन् समये सर्वसंक्रमेण सम्यक्त्वे प्रक्षिपति तस्मिन् समये सम्यक्त्वस्योत्कृष्टप्रदेशसत्कर्मस्वामित्वम्। अक्षरयोजना त्वियम्—मिथ्यात्वे मिश्रे च यथासंख्यं मिश्रे शुद्धे च शुद्धपुञ्जोदयभाविनि सम्यक्त्वे प्रक्षिप्ते सति मिश्रशुद्धयोः सम्यग्मिथ्यात्वसम्यक्त्वयोरुत्कृष्टं प्रदेशसत्कर्म भवति। तथा स एव गुणितकर्मांशो नारकास्तिर्यग्भूत्वा कश्चिदीशानदेवो जातः, सोऽपि च तत्रातिसंक्लिष्टो भूत्वा भूयो भूयो नपुंसकवेदं बध्नाति, तदानीं तस्य भवचरमसमये वर्त्तमानस्य वर्षवरस्य-नपुंसकवेदस्योत्कृष्टप्रदेशसत्कर्म ॥२८॥

ईसाणे पूरित्ता णपुंसगं तो असंखवासीसु। पल्लासंखियभागेण पूरिए इत्थिवेयस्स ॥२९॥

(चू०)—ईसाणे नपुंसगवेयपुव्वपउगेण पूरित्ता ततो उव्वट्टित्तु लहुमेव 'असंखवासीसु' त्ति—भोगभूमिगेसु उप्पन्नो। तत्थ 'पल्लासंखियभागेण पूरिए इत्थिवेयस्स' त्ति—तत्थ संकिलेसेण पलिओवमस्स असंखेज्जेणं कालेणं इत्थिवेउ पूरितो भवति, तंमि समते इत्थिवेयस्स उक्कोसपदेससंतं। कहं ? भण्णइ—पढमसमते बद्धं पलिओवमस्स असंखेज्जतिभागेणं अद्धापवत्तसंकमेण णिट्ठाति ॥२९॥

(मलय०)—'ईसाणे'त्ति—ईशानदेवलोके उक्तप्रकारेण 'नपुंसकवेदमापूर्य'—नपुंसकवेदस्योत्कृष्टं प्रदेशसंचयं कृत्वा ततः संख्येयवर्षायुष्केषु मध्ये समुत्पद्य पुनरसंख्येयवर्षायुष्केषु मध्ये समुत्पन्नः। तत्र च तेन संक्लिष्टेन भूत्वा पल्योपमासंख्येयभागमात्रेण कालेन पूरिते स्त्रीवेदे बन्धेन नपुंसकवेददलिकसंक्रमेण च प्रभूतमापूरिते स्त्रीवेदे सति तदानीं तस्य स्त्रीवेदस्योत्कृष्टं प्रदेशसत्कर्म भवति ॥२९॥

(उ०)—ईशानदेवलोके उक्तप्रकारेण नपुंसकवेदमापूर्य नपुंसकवेदस्योत्कृष्टं प्रदेशसंचयं कृत्वा ततः संख्येयवर्षायुष्केषु मध्ये समुत्पद्य पुनरसंख्येयवर्षायुष्केषु मध्ये यः समुत्पन्नस्तत्र च तेन संक्लिष्टेन भूत्वा पल्योपमासङ्ख्येयभागमात्रेण कालेन स्त्रीवेदे पूरिते सति बन्धेन नपुंसकवेददलिकसंक्रमेण च सुतरां भृते सति तस्य स्त्रीवेदस्योत्कृष्टं प्रदेशसत्कर्म भवति ॥२९॥

**पुरिसस्स पुरिससंकमपएसउक्कस्स सामिगस्सेव। इत्थी जं पुण समयं संपक्खित्ता हवइ ताहे ॥३०॥**

(चू०)—'पुरिसस्स पुरिससंकमपदेसउक्कस्स सामिगस्सेव'त्ति—पुरिसवेयस्स जो पुरिसवेयस्स उक्कोसपदेससंकमसामी भणितो सो चेव। 'इत्थी जं पुण समयं संपक्खित्ता हवइ ताहे'त्ति—इत्थिवेदो जंमि समते पुरिसवेयंमि सव्वसंकमेण संकंतो भवति तंमि समते पुरिसवेयस्स उक्कोसं पदेससंतं ॥३०॥

(मलय०)—'पुरिसस्स'त्ति। 'पुरुषस्य'—पुरुषवेदस्योत्कृष्टं प्रदेशसत्कर्म उत्कृष्टपुरुषवेदसंक्रमस्वामिन एव वेदितव्यम्। एतदुक्तं भवति—य एवोत्कृष्टपुरुषवेदसंक्रमस्वामी स एवोत्कृष्टपुरुषवेदप्रदेशसत्कर्मस्वाम्यपि वेदितव्यः। नवरं 'यं समयं' यस्मिन् समये स्त्रीवेदं पुरुषवेदे संप्रक्षेप्ता भवति संक्रमयति 'ताहे' तदानीं पुरुषवेदस्योत्कृष्टप्रदेशसत्कर्मस्वामी ॥३०॥

(उ०)—पुरुषस्य—पुरुषवेदस्योत्कृष्टं प्रदेशसत्कर्मोत्कृष्टपुरुषवेदसंक्रमस्वामिन एव, य एवोत्कृष्टपुरुषवेदसंक्रमस्वामी स एवोत्कृष्टपुरुष-

वेदप्रदेशसत्कर्मस्वाम्यपि ज्ञेय इत्यर्थः । यं समयं—यस्मिन् समये पुनः स्त्रीवेदं पुरुषवेदे संप्रक्षेप्ता भवति ताहे—तदानीं पुरुषवेदस्योत्कृष्टप्रदेशसत्कर्मस्वामी, गुणितकर्मांशः क्षपकः पुरुषवेदे स्त्रीवेदस्य सर्वसंक्रमसमये तदुत्कृष्टप्रदेशसंक्रमस्वामीति निर्गलितोऽर्थः । उक्तं च पञ्चसंग्रहेऽपि—"जो सव्वसंकमेण इत्थि पुरिसम्मि छुहइ सो सामी" इति ॥२०॥

**तस्सेव उ संजलणा पुरिसाइकमेण सव्वसंच्छोभे । चउरुवसमित्तु खिप्पं रागंते सायउच्चजसा ॥२१॥**

(चू०)—'तस्सेव य संजलण'त्ति–तस्सेवत्ति जो पुरिसवेयस्स उक्कोसपदेससंतसामी सो चेव चउण्हं संजलणाणं उक्कोसपदेससंतसामी ।'पुरिसाति कमेण सव्वसंछोभे'त्ति–जंमि समते पुरिसवेतो सव्वसंकमेण कोहसंजलणाए संकंतो भवति तंमि समते कोहसंजलणाते उक्कोसपदेससंतं भवति । तस्सेव जंमि समते कोहसंजलणा माणसंजलणाए सव्वसंकमेण संकंता तंमि समते माणसंजलणा उक्कोसं पदेससंतं भवति । तस्सेव जंमि समए माणसंजलणा मायासंजलणाए सव्वसंकमेणं संकंता भवति तंमि समते मायासंजलणाए उक्कोसं पदेससंतं । तस्सेव जम्मि समते मायासंजलणा लोभसंजलणाए सव्वसंकमेण संकंता भवति तम्मि समते लोभसंजलणाए से उक्कोसं पदेससंतं । 'चउरुवसमित्तु खिप्पं रागंते सायउच्चजस'त्ति–गुणियकम्मंसिगो चत्तारि वारे कसाते उवसामेति, उवसामेंतस्स बहुगा पुग्गला लब्भंतित्ति काउं ततो खिप्पमेव खवणाए अब्भुट्ठितो, तस्स सुहुमरागस्स सुहुमरागचरिमसमते वट्टमाणस्स सायजसउच्चागोयाणं उक्कोसं पदेससंतं । चरिमसमतो ताव गुणसंकमेणं असुभकम्माइं संकमंतित्ति काउं ॥२१॥

(मलय०)—'तस्सेव'त्ति । य एव पुरुषवेदोत्कृष्टप्रदेशसत्कर्मस्वामी तस्यैव संज्वलनाश्चत्वारः क्रोधादयः क्रमेण पुरुषवेदादिसत्कदलिकसर्वसंच्छोभे उत्कृष्टप्रदेशसत्कर्मणो भवन्ति । इयमत्र भावना—य एव पुरुषवेदोत्कृष्टप्रदेशसत्कर्मस्वामी यदा पुरुषवेदं सर्वसंक्रमेण संज्वलनक्रोधे संक्रमयति तदा संज्वलनक्रोधोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव यदा संज्वलनक्रोधं सर्वसंक्रमेण माने संक्रमयति तदा संज्वलनमानोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव संज्वलनमानं सर्वसंक्रमेण संज्वलनमायायां संक्रमयति तदा संज्वलनमायोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव यदा संज्वलनमायां सर्वसंक्रमेण संज्वलनलोभे संक्रमयमि तदा संज्वलनलोभोत्कृष्टप्रदेशसत्कर्मस्वामी । तथा चतुरो वारान् मोहनीयमुपशमय्य गुणितकर्मांशः शीघ्रं क्षपणायोत्थितस्तस्य सूक्ष्मसंपरायगुणस्थानकचरमसमये वर्तमानस्य सातवेदनीयोच्चैर्गोत्रयशःकीर्तीनामुत्कृष्टं प्रदेशसत्कर्म । यस्मादेतासु प्रकृतिषु श्रेण्यामारूढः सन् गुणसंक्रमेण प्रभूतान्यशुभप्रकृतिदलिकानि संक्रमयति ततः सूक्ष्मसंपरायचरमसमये एतासामुत्कृष्टं प्रदेशसत्कर्म प्राप्यते । उक्तं च—"चउरुवसामिय मोहं जसुच्चसायाण सुहुमखवगंते । जं असुभपगइदलियाण संकमो होइ पयासु" ॥३१॥

(उ०)—य एव पुरुषवेदोत्कृष्टप्रदेशसत्कर्मस्वामी तस्यैव संज्वलनाश्चत्वारः क्रोधादयः क्रमेण पुरुषवेदादिदलिकसर्वसंच्छोभे उत्कृष्टप्रदेशसत्कर्मणो भवन्ति । अयमिह तात्पर्यार्थः—पुरुषवेदोत्कृष्टप्रदेशसत्कर्मस्वामी यदा पुरुषवेदं सर्वसंक्रमेण संज्वलनक्रोधे संक्रमयति तदा संज्वलनक्रोधोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव यदा संज्वलनक्रोधं सर्वसंक्रमेण संज्वलनमाने संक्रमयति तदा संज्वलनमानोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव यदा संज्वलनमानं सर्वसंक्रमेण संज्वलन्यां मायायां संक्रमयति तदा संज्वलनमायोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव यदा संज्वलनमायां संज्वलनलोभे सर्वसंक्रमेण संक्रमयति तदा संज्वलनलोभोत्कृष्टप्रदेशसत्कर्मस्वामी । तथा चतुरो

वारान् मोहनीयमुपशमय्य गुणितकर्मांशस्य शीघ्रं क्षपणायोत्थितस्य रागन्ते–सूक्ष्मसम्परायगुणस्थानचरमसमये वर्तमानस्य सातवेदनीयोच्चगोत्रयशःकीर्त्तिनामुत्कृष्टं प्रदेशसत्कर्म, यत एतासु प्रकृतिषु श्रेण्यारूढः सन् गुणसंक्रमेण प्रभूतान्यशुभप्रकृतिदलिकानि संक्रमयति ततः सूक्ष्मसम्परायचरमसमये एतासामुत्कृष्टप्रदेशसत्कर्म प्राप्यते ॥३१॥

देवणिरयाउगाणं जोगुक्कस्सेहिं जेट्ठगद्धाए। बद्धाणि ताव जावं पढमे समए उइन्नाणि ॥३२॥

(चू०)—देवनिरयाउगाणि उक्कोसतेण जोएणं 'जेट्ठगद्धाए'त्ति–उक्कोसियाए ट्ठितिवंधगद्धाते वद्धाणि, 'ताव जावं पढमे समते उदिन्नाणि'त्ति–जाव तस्स उदयस्स पढमसमतो ताव उक्कोसं पदेससंतं ॥३२॥

(मलय०)—'देवनिरियाउगाणं'ति। देवनारकायुषोरुत्कृष्टैर्योगैरुत्कृष्टया च बन्धाद्धया बद्धयोः सतोस्तावदुत्कृष्ट प्रदेशसत्कर्म प्राप्यते यावत्प्रथमे समये उदीर्णे उदयमाप्ते भवतः। किमुक्तं भवति–बन्धादारभ्योदयप्रथमसमयं यावद्देवनारकायुषोरुक्तप्रकारेण बद्धयोरुत्कृष्टं प्रदेशसत्कर्म भवति ॥३२॥

(उ०)—देवनारकायुषोरुत्कृष्टैर्योगैरुत्कृष्टया च बन्धाद्धया बद्धयोः सतोस्तावदुत्कृष्टं प्रदेशसत्कर्म प्राप्यते यावत् प्रथमे समये उदीर्णे उदयप्राप्ते भवतः। बन्धादारभ्योदयप्रथमसमयं यावद्देवनारकायुषोरुक्तप्रकारेण बद्धयोरुत्कृष्टं प्रदेशसत्कर्म भवति। परतस्तूदयादिनिर्जीर्णप्रदेशहानेनोत्कर्षप्राप्तिरिति भावः ॥३२॥

सेसाउगाणि णियगेसु चेव आगम्म पुव्वकोडीए। सायबहुलस्स अचिरा वंधंते जाव णोवट्टे ॥३३॥

(चू०)—'सेसाउगाणि'त्ति–तिरियमणुयाउगाणं 'णियगेसु चेव आगम्म'त्ति–अप्पप्पणो जातीते पुव्वकोडाउगं

उक्कोसिगाते [आउगं] बंधगद्धाते उक्कस्सगेणं जोगेणं बंधित्तु 'आगऽमपुव्वकोडीए'त्ति-पुव्वकोडायुगेसु अप्पप्पणो जातीसु उप्पन्नो। 'सायबहुलस्स'त्ति-सुहबहुलस्स बहुगा पोग्गला ण सडंतित्ति काउं। 'अचिरातो'त्ति-उप्पायातो अंतोमुहुत्ताउं मरिउ उक्कस्सं अन्नं परभवियं सजातिआउगं बंधंति, 'बंधेते'त्ति-तीसे आउगद्धा अंतिमे समते 'जाव णोवट्टे'ति-जाव उवट्टेतु णाढवेति आउगे बद्धे बितियसमते चेव उव्वट्टेउं आढवेति तंमि समते वट्टमाणस्स तिरियमणुयाउगाणं उक्कोसं पदेससंतं, दोण्हवि आउगाणं किंचूणं दलियं अत्थित्ति काउं ॥३३॥

(मलय०)—'सेसाउगाणि'त्ति शेषायुषी तिर्यङ्मनुष्यायुषी। 'पुव्वकोडीए' त्ति-पूर्वकोटयोपलक्षिते पूर्वकोटिप्रमाणे। उत्कृष्टया बन्धाद्धया उत्कृष्टैर्योगैर्बद्धे। बद्धा च निजकेषु भवेषु निजनिजभवे समागत्य सातबहुलः सन् ते आयुषी यथायोगमनुभवति। सुखितस्य हि न भूयांस आयुःपुद्गलाः परिसटन्तीति कृत्वा सातग्रहणं कृतम्। ततोऽचिरात् बन्धान्ते इति उत्पत्तिसमयादूर्ध्वमन्तर्मुहूर्तमात्रमेव स्थित्वा मर्तुकामो जातः सन् उत्कृष्टया बन्धाद्धया उत्कृष्टैश्च योगैरन्यत् पारभविकं समानजातीयं मनुष्यो मनुष्यायुः, तिर्यङ् च तिर्यगायुर्बध्नाति। ततो बन्धान्तसमये यावन्नाद्याप्यपवर्तयति तावत्तस्य सातबहुलस्य मनुष्यस्य सतो मनुष्यायुषः, तिरश्चः सतस्तिर्यगायुष उत्कृष्टं प्रदेशसत्कर्म भवति। यतस्तस्य तदानीं स्वभवायुः किञ्चिदूनं परभवायुश्च समानजातीयं परिपूर्णदलिकमस्तीति कृत्वा, बन्धानन्तरं चायुर्वेद्यमानं द्वितीये समयेऽपवर्तयिष्यति, तत उक्त बन्धान्ते इति ॥३३॥

(उ०)—शेषायुषी तिर्यङ्मनुष्यायुषी, पूर्वकोटयेत्युपलक्षणे तृतीया, ततः पूर्वकोटिप्रमाणे इत्यर्थः, उत्कृष्टया बन्धाद्धयोत्कृष्टैश्च योगैर्बद्धे सती निजकभवेषु निजनिजभवे समागत्य यः सातबहुलः सन् यथायोगमनुभवति, सुखितस्य न प्रभूता आयुःपुद्गलाः

परिशटन्तीति सातबहुलग्रहणम्, ततोऽचिराद्बन्धान्त इति, उत्पत्तिसमयादूर्ध्वमन्तर्मुहूर्त्तमात्रमेव स्थित्वा मर्तुकामस्य जातस्य सत उत्कृष्टया बन्धाद्धयोत्कृष्टश्च योगैरन्यत्पारभविकं समानजातीयं मनुष्यस्य सतो मनुष्यायुस्तिरश्चः सतस्तिर्यगायुर्बध्नतो बन्धान्तसमय इत्यर्थः, यावन्नाद्याप्यपवर्त्तयति तावत्तस्य सातबहुलस्य मनुष्यस्य सतो मनुष्यायुषस्तिरश्चः सतस्तिर्यगायुष उत्कृष्टं प्रदेशसत्कर्म भवति। यतस्तस्य सातबाहुल्येन निर्जीर्णाल्पप्रदेशान्तर्मुहूर्त्तोनस्वभवायुः सर्वं परभवायुश्च समानजातीयं परिपूर्णदलिकमस्तीति मिलितप्रदेशबाहुल्यं लभ्यते। बन्धानन्तर चायुर्वेद्यमानं द्वितीयसमयेऽपवर्त्तयिष्यतीत्यत उक्तं बन्धान्त इति ॥३३॥

पूरित्तु पुव्वकोडीपुहुत्त नारयदुगस्स वंधंते। एवं पल्लतिगंते वेउव्वियसेसणवगम्मि ॥३४॥

(चू०)—'पुरित्तु पुव्वकोडीपुहुत्तं'ति–सत्तपुव्वकोडीओ णिरयगतिनिरयाणुपुव्वीतो वंधिउं संकिलेसबहुलत्तणेण 'णारगदुगस्स वंधंते'त्ति–णिरयाभिमुहस्स से काले णेरतितो होति तंमि समते उक्कोसं पदेससंतं। 'एवं पल्लतिगंते'त्ति–एवमिति पुव्वुत्तं दरिसेति, सत्तपुव्वकोडीतो देवदुगे वेउव्वियसत्तगाति पूरेत्तु ततो पलिओवमट्ठितितेसु भोगभूमिगेसु उप्पन्नो, तत्थ तिन्नि पलिओवमाणि एतेणेव पूरेत्तु से काले देवो भविस्सतित्ति संगते वेउव्वियसेसणवगाणं उक्कोसं पदेससंतं भवति। सेसग्गहणं निरयदुगपडिसेहणत्थं ॥३४॥

(मलय०)—'पूरित्तु'त्ति। 'पूर्वकोटिपृथक्त्वं' पूर्वकोटिसप्तकं यावत् संक्लिष्टाध्यवसायवशेन 'नरकद्विकं' नरकगतिनरकानुपूर्वीलक्षणं भूयो भूय आपूर्य बन्धेन निचितं कृत्वा नरकाभिमुखो बन्धान्तसमये नरकद्विकस्योत्कृष्टप्रदेशसत्कर्मस्वामी। तथा एवमनेनैव प्रकारेण पूर्वकोटिपृथक्त्वं यावत् भोगभूमिषु मध्ये पल्योपमत्रयं च यावद्विशुद्धाध्यवसायवशेन वैक्रियैकादशकात् नरकद्विकेऽपनीते शेषं यद्

क्रियनवकं देवद्विकं वैक्रियसप्तकं चेत्यर्थः, तत् बन्धेनापूर्य देवत्वाभिमुखस्तासां देवद्विकवैक्रियसप्तकरूपाणां नवप्रकृतीनामुत्कृष्टप्रदेशसत्कर्मस्वामी ॥३४॥

(उ०)—पूर्वकोटिपृथक्त्वं पूर्वकोटिसप्तकं यावत्संक्लिष्टाध्यवसायवशेन निरन्तरमापूर्य नरकद्विकं नरकगतिनरकानुपूर्वीरूपं भूयो भूयो बन्धेन निचितं कृत्वा नरकाभिमुखे बन्धान्तसमये तस्य नरकद्विकस्योत्कृष्टप्रदेशसत्कर्मस्वामी भवति। तथा एवमनेनैव प्रकारेण पूर्वकोटिपृथक्त्वं यावद् भोगभूमिषु च पल्योपमत्रयं यावद्विशुद्धाध्यवसायेन वैक्रियशेषनवकं वैक्रियैकादशकान्नरकद्विकापनयनेन देवद्विकवैक्रियसप्तकलक्षणं बन्धेनापूर्य देवत्वाभिमुखस्तासां देवद्वि वैक्रियसप्तकरूपनवप्रकृतीनामुत्कृष्टप्रदेशसन्कर्मस्वामी भवति ॥३४॥

**तमतमगो सव्वलहुं सम्मत्तं लभिय सव्वचिरमद्धं। पूरित्ता मणुयदुगं सवज्जरिसहं सबंधंते ॥३५॥**

(चू०)—'तमतमगो सव्वलहुं सम्मत्तं लद्धुं'ति–किं?–उप्पन्नो अंतोमुहुत्तेण संमत्तं लद्धुणं 'सव्वचिरमद्धं'ति–इमातो अन्नो दीहो संमत्तकालो न होतित्ति तारिसं सम्मत्तकालं अणुपालिअ 'पूरेत्ता मणुयदुगं सवज्जरिसभं'–तेत्तियं कालं मणुयदुगं वज्जरिसभं च पूरेत्तु 'सबंधंते'त्ति–से काले मिच्छत्तं गहित्ति तम्मि समते मणुयदुगवज्जरिसभाणं उक्कोसं पदेससंतं भवति ॥३५॥

(मलय०)—'तमतमगो'त्ति। 'तमस्तमगः'–सप्तमपृथ्वीनारकः। 'सर्वलघु'–अतिक्षिप्रं जन्मानन्तरमन्तर्मुहूर्ते गते सतीत्यर्थः। सम्यक्त्वं लब्ध्वा। 'सव्वचिरमद्धं' ति–अतिदीर्घं कालं यावत् सम्यक्त्वमनुपालयन्, मनुष्यद्विकं वज्रर्षभनाराचसंहननं च बन्धेनापूर्य, यतोऽनन्तरसमये मिथ्यात्वं यास्यति तस्मिन् समये बन्धाद्धाचरमभूते तयोर्मनुष्यद्विकवज्रर्षभनाराचसंहननयोरुत्कृष्टं प्रदेश-

मत्कर्म भवति ॥३५॥

(उ०)—तमस्तमगः सप्तमपृथ्वीनारकः, सर्वलघु सर्वशब्दोऽत्यर्थे,अतिशीघ्रं जन्मानन्तरमन्तर्मुहूर्तमात्रे गते सतीत्यर्थः, सम्यक्त्वं लब्ध्वा सर्वचिराद्धमतीव दीर्घकालमन्तर्मुहूर्त्तोनत्रयस्त्रिंशत्सागरोपमलक्षणं यावत्सम्यक्त्वमनुपालयंस्तावन्तं कालं मनुजद्विकं—वज्रर्षभना- राचसंहननं च बन्धेनापूर्य यस्मिन् समये मिथ्यात्वं यास्यति तस्मिन् समये बन्धाद्धाचरमभूते तयोर्मनुजद्विकवज्रर्षभनाराचसंहननयो- रुत्कृष्टप्रदेशसत्कर्मस्वामी भवति ॥३५॥

**सम्मदिट्ठिधुवाणं बत्तीसुदहीसयं चउक्खुत्तो । उवसामयित्तु मोहं खवेंतगे णियगबंधंते ॥३६॥**

(चू०)—'सम्मदिट्ठिधुवाणं'ति–से सम्मदिट्ठीणं धुवबंधं पडुच्च, के ते? भन्नति–पंचेंदियजाति समचोरंससंठाणं पराघायं उस्सासं पसत्थविहायगति तसं बायरं पज्जत्तगं पत्तेयं सुस्सरं सुभगं आदेज्जं एएसिं बारसण्हं कम्माणं 'बत्तीसुदहीसयं'ति–बे छावट्ठीतो सागरोवमाणं बंधित्तु 'चउक्खुतो उवसामइत्तु मोह'त्ति चत्तारि वारे चरित्त- मोहं उवसामेत्तु, उवसामणगहणं गुणसंकमेण बहुगा पोग्गला लब्भंतित्ति काउं, 'खवेंतगे'त्ति–खवणाए अब्भुट्टि- यस्स 'णियगबंधंते'ति–अप्पणो बंधवोच्छेदकालसमयम्मि उक्कोसं पदेससंतं भवति ॥३६॥

(मलय०)—'सम्मदिट्ठि'त्ति। याः प्रकृतयः सम्यग्दृष्टीनां बन्धमाश्रित्य ध्रुवाः—पञ्चेन्द्रियजातिसमचतुरस्रसंस्थानपराघातोच्छ्वासप्र- शस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकसुस्वरसुभगादेयरूपा द्वादश तासां द्वात्रिंशदधिकसागरोपमाणां शतं यावद्बन्धेनोपचितानां चतु- ष्कृत्वश्चतुरो वारान् मोहनीयं चोपशमय्य, मोहनीयं हि उपशमयन् प्रभूतानि दलिकानि गुणसंक्रमेण संक्रमयतीति कृत्वा चतु-

ष्कृत्वो मोहोपशमग्रहणम् , ततः क्षपणायोद्यतस्य निजबन्धव्यवच्छेदकाले उत्कृष्टं प्रदेशसत्कर्म भवति ॥३६॥

(उ०)—सम्यक्त्वे सत्यवश्यं बन्धो यासां ताः सम्यग्दृष्टिध्रुवाः—पञ्चेन्द्रियजातिसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसचतुष्कसुस्वरसुभगादेयरूपा द्वादश, तासां द्वात्रिंशदधिकसागरोपमशतं यावद्बन्धेनोपचितानां चतुष्कृत्वो मोहनीयमुपशमय्य क्षपयतः क्षपणायोद्यतस्य निजकबन्धान्ते निजनिजबन्धव्यवच्छेदकाले उत्कृष्टं प्रदेशसत्कर्म भवति। इह मोहनीयमुपशमयन्नशुभप्रकृतीनां प्रभूतानि दलिकानि गुणसंक्रमेणाधिकृतप्रकृतिषु संक्रमयतीति कृत्वा चतुष्कृत्वो मोहोपशमग्रहणम् ॥३६॥

**धुवबंधीण सुभाणं सुभथिराणं च नवरि सिग्घयरं। तित्थयराहारगतणू तेत्तीसुदही चिरचिया य॥३७॥**

(चू०)—'धुवबंधीण सुभाणं'ति—धुवबंधीसु जे सुभा, के ते ? भण्णइ—तेजतिगसत्तगं सुभवण्णेक्कारसगं अगुरुलहुगं णिमेणं एएसिं वीसाते कम्माणं, 'सुभथिराणं च'त्ति—थिरसुभाणं च एवं चेव, चत्तारि वारे कसाते उवसामेउं 'णवरि सिग्घयरं'ति—लहु चेव खवणाए अब्भुट्ठियस्स अप्पणो बंधवोच्छेयकालसमयम्मि उक्कोसं पदेससंतं भवति। एएसिं कम्माणं गुणसेढीए खवगं सेढिं पवन्नस्स पदेसलम्भो बहुगो तेण बंधंतिमग्गहणं। 'तित्थगराहारगतणू तेत्तीसुदही चिरचिया य'त्ति—तित्थगरनामाते गुणियकम्मंसिगस्स दो पुव्वकोडिअहिगाणि तेत्तीसं सागरोवमाणि पूरिय खवणाए अब्भुट्ठियस्स अप्पणो बधवोच्छेयकालसमते उक्कोससंतं भवति। आहारसत्तगाणं 'चिरचिय'त्ति—पुव्वकोडिदेसूणं भूयो भूयो बंधित्तु अंते खवणाए अब्भुट्ठितो बंधवोच्छेयकालसमते उक्कोसपदेससंतं भवति ॥३७॥

(मलय०)—'ध्रुवबंधीण'त्ति। याः शुभध्रुवबन्धिन्यः प्रकृतयस्तैजससप्तकशुभवर्णाद्येकादशकागुरुलघुनिर्माणरूपा विंशतिप्रकृतयः तासां शुभस्थिरयोश्च पूर्वोक्तेन प्रकारेणोत्कृष्टं प्रदेशसत्कर्म भावनीयम्। नवरं चतुष्कृत्वो मोहनीयोपशमानन्तरं शीघ्रतरं क्षपणायोद्यतस्येति वक्तव्यम्। शेषं तथैव। तथा तीर्थकरनाम्नो गुणितकर्मांशेन देशोनपूर्वकोटिद्विकाधिकानि त्रयस्त्रिंशत्सागरोपमाणि यावद्बन्धेन पूरितस्य स्वबन्धान्तसमये उत्कृष्टं प्रदेशसत्कर्म। आहारकतनोराहारकसप्तकस्य तु चिरचितस्य देशोनपूर्वकोटिं यावत् भूयो भूयो बन्धेनोपचितस्य स्वबन्धव्यवच्छेदसमये उत्कृष्टं प्रदेशसत्कर्म ॥३७॥

(उ०)—शुभानां ध्रुवबन्धिनीनां तैजससप्तकशुभवर्णाद्येकादशकागुरुलघुनिर्माणरूपाणां विंशतिसंख्यानां शुभस्थिरयोश्च पूर्वोक्तेन प्रकारेणोत्कृष्टं प्रदेशसत्कर्म भावनीयम्। नवरं चतुष्कृत्वो मोहनीयोपशमनानन्तरं शीघ्रतरं क्षपणाय समुद्यतस्येति वक्तव्यं,शेषं तथैव। तथा तीर्थकरनाम्नो गुणितकर्मांशेन त्रयस्त्रिंशत्सागरोपमाणि पूर्वकोटिद्वयाधिकानि यावदिति पूरयित्वा व्याख्येयम्। बन्धेन पूरितस्य स्वबन्धान्तसमये उत्कृष्टं प्रदेशसत्कर्म। आहारकतनोराहारकसप्तकस्य तु चिरचितस्य—देशोनपूर्वकोटिं यावद्भूयो भूयो बन्धेनोपचितस्य स्वबन्धव्यवच्छेदसमये उत्कृष्टप्रदेशसत्कर्म ॥३७॥

**तुल्ला नपुंसवेएणेगिंदिए य थावरायवुज्जोया। विगलसुहुमतिया वि य नरतिरियचिरज्जिया होंति ॥३८॥**

(चू०)—'तुल्ला नपुंसवेएणेगिंदिए य थावरायवुज्जोय'त्ति—नपुंसगवेदेण तुल्लाणि एगेंदियजाति थावरणामं आतवनामं उज्जोवं ईसाणदेवस्स चरिमसमते उक्कोसं पदेससंतं भवति। 'विगलसुहुमतिया वि य'त्ति—विगलजातितो विगलतिगा वुचंति, सुहुमअपज्जत्तगसाहारणाणि सुहुमतिगं वुचंति। 'नरतिरियचिरज्जिय'त्ति—मणुयतिरिएहिं

चिरं अज्जिणित्तुं । किं भणियं होति ? भण्णइ–पुव्वकोडिपुहुत्तं विगलतिगं सुहुमतिगे बंधितु से काले अन्नहिं उववज्जिहिति तम्मि समए उक्कोसं पदेससंतं भवति। सेसाणं सव्वकम्माणं तमतम्मापुढविनेरतियस्स चेव उक्कोसं पदेससंतं भवति ॥३८॥

(मलय०)—'तुल्ल'त्ति–नपुंसकवेदेन तुल्या एकेन्द्रियजातिस्थावरातपोद्योता वेदितव्याः । यथा नपुंसकवेदस्य ईशानदेवभवचरमसमये उत्कृष्टं प्रदेशसत्कर्मोक्तं तथा एतेषामपि द्रष्टव्यमित्यर्थः । 'विकलत्रिकं' द्वित्रिचतुरिन्द्रियजातिरूपं, 'सूक्ष्मत्रिकं'–सूक्ष्मापर्याप्तसाधारणरूपं, यदा पूर्वकोटिपृथक्त्वं यावत् तिर्यङ्मनुष्यभवैरर्जितं भवति तदा स्वबन्धान्तसमये तेषां तिर्यङ्मनुष्याणां तत् विकलत्रिकादिकमुत्कृष्टप्रदेशसत्कर्म भवति ॥३८॥

(उ०)—नपुंसकवेदेन तुल्या एकेन्द्रियजातिस्थावरातपोद्योता ज्ञेयाः, यथा नपुंसकवेदस्येशानदेवभवचरमसमये भूयो भूयो बन्धेनोपचितस्योत्कृष्टप्रदेशसत्कर्मोक्तं तथैतेषामपि वाच्यमित्यर्थः । तथा विकलत्रिकं द्वित्रिचतुरिन्द्रियजातिरूपं सूक्ष्मत्रिकं च सूक्ष्मापर्याप्तसाधारणरूपं, एताः षट् प्रकृतयो यदा तिर्यङ्मनुष्यभवैश्चिरचिताः पूर्वकोटिपृथक्त्वं यावदुपचिता भवन्ति तदा स्वबन्धान्तसमये तेषां तिर्यङ्मनुष्याणां ता उत्कृष्टप्रदेशसत्कर्माणो भवन्ति ॥३८॥

उक्कोसपदेससंतकम्मसामित्तं भणियं, इयाणिं जहन्नपदेससंतकम्मसामित्तं भण्णइ–

**खवियंसयम्मि पगयं जहन्नगे नियगसंतकम्मंते । खणसंजोइयसंजोयणाण चिरसम्मकालंते ॥३९॥**

(चू०)—'खवियकम्मसिगम्मि'त्ति–खवियकम्मंसिगेण पगयं । कहं ? भण्णइ–जहण्णपदेससंतकम्मसामित्ते।

'जहन्नगं'त्ति–जहन्नगं संतकम्मं 'णियगसंतकम्मंते'त्ति–अप्पप्पणो संतकम्मस्स अंते भवति। एवं ताव सव्वेसिं खवियसाभित्तं भणियं। इयाणिं जेसिं कम्माणं विसेसो अत्थि ते भण्णति–'खवणसंजोजियसंजोयणाणं' ति–खवियकम्मंसिगो सम्मद्दिट्ठी अणंताणुबंधिणो विसंजोजेत्तु पुणो मिच्छत्तं गंतूण अंतोमुहुत्तं अणंताणुबंधी बंधित्तु पुणो सम्मत्तं पडिवन्नो 'चिरसम्मकालंते'त्ति–बे छावट्ठीतो सम्मत्तं अणुपालेत्तु खवणाए अब्भुट्ठियस्स एगट्ठितिसेसे वट्टमाणस्स दुसमयकालट्ठितीयं जहण्णगं अणंताणुबंधीणं पदेससंतं भवति ॥३९॥

(मलय०)—तदेवमुक्तमुत्कृष्टप्रदेशसत्कर्मस्वामित्वम्। सम्प्रति जघन्यप्रदेशसत्कर्मस्वामित्वमाह–'खवियं' ति। जघन्यप्रदेशसत्कर्मस्वामित्वे प्रकृतमधिकारः क्षपितकर्मांशेन। सूत्रे चात्र सप्तमी तृतीयार्थे वेदितव्या। 'नियगसंतकम्मंते'त्ति–स्वस्वसत्ताचरमसमये। एवं तावत्सर्वकर्मणां सामान्येनोक्तम्। सम्प्रति पुनर्येषां कर्मणां विशेषोऽस्ति तानि पृथगेवाह–'खण'इत्यादि। इह क्षपितकर्मांशेन सम्यग्दृष्टिना सता अनन्तानुबन्धिन उद्वलिताः। ततः पुनरपि मिथ्यात्वं गतेनान्तर्मुहूर्त्तं कालं यावदनन्तानुबन्धिनो बद्धाः। ततो भूयोऽपि सम्यक्त्वं प्रतिपन्नः। तच्च सम्यक्त्वं द्वे षट्षष्ठी सागरोपमाणां यावत् अनुपाल्य क्षपणार्थमभ्युद्यतस्तस्यानन्तानुबन्धिनः क्षपयतो यदा एषा स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना, अन्यथा तु द्विसमयावस्थाना, शेषीभवति तदा तेषां जघन्यं प्रदेशसत्कर्म ॥३९॥

(उ०)—तदेवमुक्तमुत्कृष्टप्रदेशसत्कर्मस्वामित्वं, अथ जघन्यप्रदेशसत्कर्मस्वामित्वमाह–'क्षपितांश' इति सूत्रे सप्तम्यास्तृतीयार्थत्वात्क्षपितकर्मांशेन जघन्यके जघन्यप्रदेशसत्कर्मस्वामित्वे प्रकृतमधिकारः निजकसत्कर्मान्त इति स्वसत्ताचरमसमये, एवं तावत्सर्वकर्मणां सामान्येनोक्तम्। अथ येषां कर्मणां विशेषोऽस्ति तानि पृथगेवाह–'खणे'त्यादि। इह क्षपितकर्मांशेन सम्यग्दृष्टिना सताऽनन्तानुबन्धिन

उद्वलितास्ततः पुनरपि मिथ्यात्वं गतेन क्षणमन्तर्मुहूर्त्तकालं यावत्संयोजिता बद्धा ये संयोजना अनन्तानुबन्धिनस्तेषां ततो भूयोऽपि सम्यक्त्वं प्रतिपन्नस्य तत्सम्यक्त्वं चिरं द्वे षट्षष्टी सागरोपमाणां यावदनुपाल्य क्षपणार्थमभ्युद्यतस्य क्षपणकाले यदैका स्थितिः स्वरूपापेक्षया समयमात्रा कर्मत्वसामान्यापेक्षया तु द्विसमयमात्रा शेषा भवति तदा तेषां जघन्यं प्रदेशसत्कर्म ॥३९॥

**उव्वलमाणीण उव्वलणा एगट्ठिई दुसामइगा। दिट्ठिदुगे बत्तीसे उदहिसए पालिए पच्छा ॥४०॥**

**(चू०)—उव्वलमाणीणं तेवीसाए पगतीणं अप्पप्पणो उव्वलणा कालंमि 'एगट्ठिति दुसामइग'त्ति–एगट्ठितिअवसेसे दुसमयकालट्ठितिगे जहन्नगं पदेससंतं भवति । एयं सामन्नेण, विसेसोत्थ भण्णइ–'दिट्ठिदुगे बत्तीसे उदहिसए पालिए पच्छा'ति–सम्मत्तसम्मामिच्छत्ताणं बे छावट्ठीतो सागरोवमाणं सम्मत्तं अणुपालेत्तु पच्छा मिच्छत्तं गतो चिरउव्वलणाए अप्पप्पणो उव्वलणाते आवलिगाते उवरिमं ट्ठितिखण्डगं संकममाणं संकंतं, उदयावलिया खिज्जति जाव एगट्ठितिसेसे दुसमयकालट्ठितिगे जहन्नं पदेससंतं ॥४०॥**

(मलय०)—'उव्वलमाणीण'त्ति । उद्वल्यमानानां त्रयोविंशतिप्रकृतीनामुद्वलनकाले या एका स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना, अन्यथा तु द्विसमयमात्रावस्थाना, सा तासां जघन्यं प्रदेशसत्कर्म । एतच्च सामान्येनोक्तम् । अत्रैव विशेषमाह–'दिट्ठिदुग' इत्यादि, द्वात्रिंशदधिकं सागरोपमाणां शतं यावत् सम्यक्त्वमनुपाल्य पश्चान्मिथ्यात्वं गतो मन्दोद्वलनया च पल्योपमासंख्येयभागमात्रप्रमाणया सम्यक्त्वमिश्रे उद्वलयितुमारभते स्म । उद्वलयंश्च तद्दलिकं मिथ्यात्वे संक्रमयति । सर्वसंक्रमेण चावलिकाया उपरितनं सकलमपि दलिकं संक्रमितम् । आवलिकागतं च दलिकं स्तिबुकसंक्रमेण संक्रमयति । संक्रमयतश्च यदैका स्थितिः स्वरूपापेक्षया समयमा-

त्रावस्थाना, अन्यथा तु द्विसमयमात्रावस्थाना, तदा तयोः सम्यक्त्वमिश्रयोर्जघन्यं प्रदेशसत्कर्म ॥४०॥

(उ०)—उद्वल्यमानानामुद्वलनप्रकृतीनामनन्तानुबन्धिनां प्रागुक्तत्वात्तद्वर्जितानामाहारकसप्तकवैक्रियसप्तकदेवद्विकमनुजद्विकनरकद्विकसम्यक्त्वसम्यङ्मिथ्यात्वोच्चगोत्रलक्षणानां त्रयोविंशतिसंख्यानामुद्वलनकाले यैका स्थितिः स्वरूपापेक्षया समयमात्रा सा तासां जघन्यं प्रदेशसत्कर्म। एतच्च सामान्येनोक्तं, अत्रैव विशेषमाह–'दिढ्ढिदुग'इत्यादि, द्वात्रिंशदधिकं सागरोपमाणां शतं यावत्सम्यक्त्वमनुपाल्य पश्चान्मिथ्यात्वं गतस्ततश्च पल्योपमासंख्येयभागमात्रकालप्रमाणया मन्दोद्वलनया सम्यक्त्वमिश्रे उद्वलयितुं लग्नः, उद्वलयंश्च तद्दलिकं मिथ्यात्वे संक्रमयति, सर्वसंक्रमेण चावलिकाया उपरितनं सकलमपि दलिकं संक्रमितं, आवलिकागतं च दलिकं स्तिबुकसंक्रमेण संक्रमयति, तत्संक्रमव्यापारे च यदैका स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना, कर्मत्वमात्रमधिकृत्य तु द्विसमयमात्रा शेषा भवति, तदा तयोः सम्यक्त्वमिश्रयोर्जघन्यं प्रदेशसत्कर्म ॥४०॥

अंतिमलोभजसाणं मोहं अणुवसमइत्तु खीणाणं । नेयं अहापवत्तकरणस्स चरमम्मि समयम्मि ॥४१॥

(चू०)—'अंतिमलोभजसाणं'-लोभसंजलणजसकित्तीणं, 'मोहं अणुवसमइत्तु'त्ति–चरित्तमोहणिज्ज अणुवसमित्तु सेसिगाहिं खवियकम्मंसिगकिरियाहिं 'खीणाणं'ति–थोगीकयाणं दलियाणं चरित्तमोहं उवसामिंतस्स बहुगा पोग्गला गुणसंकमेण लब्भन्ति तम्हा सेढिवज्जणं [ण] इच्छिज्जति। 'णेयं अहापवत्तकरणस्स चरिमंमि समयम्मि'त्ति–अहापवत्तकरणस्स चरिमसमते च वट्टमाणस्स लोभसंजलणजसाणं जहन्नगं पदेससंतं भवति, परओ दलियं तु गुणसंकमेण वड्ढनित्ति काउं ॥४१॥

(मलय०)—'अंतिम'त्ति। 'अन्तिमलोभः'-संज्वलनलोभः। ततः संज्वलनलोभयशःकीर्त्योश्चतुरो वारान् मोहनीयमनुपशमय्य मोहस्योपशममकृत्वा, उपशमश्रेणिमकृत्वेत्यर्थः, शेषाभिः क्षपितकर्मांशक्रियाभिः क्षीणयोर्यथाप्रवृत्तकरणचरमसमये जघन्यं प्रदेशसत्कर्म ज्ञेयम्। मोहनीयोपशमे हि क्रियमाणे गुणसंक्रमेण प्रभूतं दलिकमवाप्यते, न च तेन प्रयोजनमिति कृत्वा मोहनीयोपशमनप्रतिषेधः॥

(उ०)—अन्तिमलोभयशसोः संज्वलनलोभयशःकीर्त्योः चतुरो वारान्मोहमनुपशमय्योपशमश्रेणिमकृत्वेत्यर्थः, शेषाभिः क्षपितकर्मांशक्रियाभिः क्षीणयोः यथाप्रवृत्तकरणचरमसमये जघन्यं प्रदेशसत्कर्म ज्ञेयम्। मोहनीये उपशम्यमाने हि गुणसंक्रमोपनीतं प्रचुरं दलिकं प्राप्यते, न च तेनेह प्रयोजनमिति कृत्वा मोहनीयोपशमनप्रतिषेधः ॥४१॥

**वेउव्विक्कारसगं खणबंधं गते उ नरयजिट्ठट्ठिइ। उव्वट्टित्तु अबंधिय एगेंदिगए चिरुव्वलणे ॥४२॥**

(चू०)—'विउव्विक्कारसगं'ति-णरयदुगदेवदुगवेउव्वियसत्तगं एए एक्कारस, एसि पुव्वुव्वलियाणं खवियकम्मंसिगेण 'खणबंध'ति-अंतोमुहुत्तं बंधित्तु 'गते उ णिरयजिट्ठट्ठिति'त्ति-उक्कोसट्ठितिएसु णेरतिएसु उववण्णो। 'उव्वट्टित्तु अबंधिय'त्ति-ततो उव्वट्टितु पंचेंदिएसु उपन्नो तहिं पि वेउव्वेक्कारसगं अबंधिय 'एगिंदिगए'त्ति-एगेंदिएसु उप्पन्नो 'चिरुव्वलणे'त्ति-तस्स दीहकालेणं उव्वलेंतस्स एगट्ठितिसेसं जं दुसमयकालट्ठितिगं जहन्नगं पदेससंतं ॥४२॥

(मलय०)—'वेउव्विक्कारसगं'ति। नरकद्विकदेवद्विकवैक्रियसप्तकरूपं वैक्रियैकादशकं पूर्वं क्षपितकर्मांशेनोद्वलितम्। ततो भूयोऽप्यन्तर्मुहूर्तं कालं यावद्बद्धम्। ततो ज्येष्ठस्थितौ नरकेऽप्रतिष्ठानाभिधाने नरको जातः। तत्र च सता तेन तत् वैक्रियैकादशकं त्रयस्त्रिंशत्सा-

गरोपमाणि यावत् विपाकतः संक्रमतश्च यथायोगमनुभूतम् । ततो तिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पन्नः । तत्र च वैक्रियैकादशकस्य चिरोद्वलनया उद्वलयितुं लग्नः । स च तद्वैक्रियैकादशकं चिरोद्वलनया उद्वलयितुं लग्नः । तत एकेन्द्रियो जातः । भूयोऽपि बन्धो न कृतः, तथाविधाध्यवसायाभावात् । अन्यथा तु द्विसमयमात्रावस्थाना शेषीभवति तदा चिरोद्वलनया चोद्वलयतः सतो यदैका स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना, तस्य वैक्रियैकादशकस्य जघन्यं प्रदेशसत्कर्म ॥४२॥

(उ०)—नरकद्विकदेवद्विकवैक्रियसप्तकरूपं वैक्रियैकादशकं पूर्वं क्षपितकर्मांशेनोद्वलितम् ।ततो भूयोऽपि क्षणमन्तर्मुहूर्त्तकालं यावद्बद्धम् । ततो ज्येष्ठस्थितौ नरकेऽप्रतिष्ठानाभिधनरकावासे गतस्तत्र च सता तेन तद्वैक्रियैकादशकं त्रयस्त्रिंशत्सागरोपमाणि यावद्विपाकतः संक्रमतश्च यथायोगमनुभूतम् । ततो नरकादुद्वृत्य-निर्गत्य तिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पन्नस्तत्र च तथाविधाध्यवसायाभावाद्वैक्रियैकादशकस्य भूयो न बन्धं कृतवान्, तत एकेन्द्रियेषु गतस्तत्र च तद्वैक्रियैकादशकं चिरोद्वलनयोद्वलयितुं लग्नस्तस्य चिरोद्वलनया तदुद्वलयतः सतो यदैका स्थितिः स्वरूपापेक्षया समयमात्रावस्थानाऽन्यथा तु द्विसमयमानाऽवशिष्यते तदा तस्य वैक्रियैकादशकस्य जघन्यं प्रदेशसत्कर्म भवति ॥४२॥

**मणुयदुगुच्चागोए सुहुमक्खणबद्धगेसु सुहुमतसे । तित्थयराहारतणू अप्पद्धा बंधिया सुचिरं ॥४३॥**

(चू०)—'मणुयदुगउच्चागोए'त्ति-खवियकम्मंसिगो मणुयदुगं उच्चागोयं च उव्वलिय 'सुहुमखणबद्धगेसु'त्ति-सुहुमेणं अंतोमुहुत्तबद्धाणं, 'सुहुमतसे'त्ति-तेउवाउ गहिया, ततो कालं करेत्तु तेउवाउसु उववन्नस्स अप्पप्पणो चिरउव्वलणे एगट्ठितिसेसे दुसमयकालट्ठितिगं मणुयदुगुच्चागोयाणं जहन्नगं पदेससंतं।'तित्थयराहारतणू अप्पद्धा

बंधिया सुचिर'त्ति–तित्थकरनामस्स खवियकम्मंसिगेण तप्पाउग्गं जहन्नजोगिणा जा पढमसमते लया बद्धा तं जहन्नगपदेससंतं। अन्ने भणंति–तित्थकरनामाते अप्पद्धा बंधियत्ति अप्पकालं चउरासीती वाससहस्साणि सातिरेगाणि बंधिउ केवली जातो पुव्वकोडिदेसूणं केवलपरियागं अणुपालिय अजोगिकेवलिस्स चरिमसमते वट्टमाणस्स खवियकम्मंसिगस्स जहन्नयं पदेससंतं। आहारतणूत्ति आहारगसत्तगं 'अप्पद्धा बंधिया सुचिरं'ति–आहारसत्तगं थोवं कालं बंधित्तु मिच्छत्तं गतो, ततो दीहेण उव्वलणकालेणं उव्वलेंतस्स आवलिया चरिमसमते एगट्ठितिसेसे दुसमयकालट्ठितियं जहन्नयं पदेससंतं। सेसाणं सामन्नेण अप्पप्पणो चरिमसमते जहन्नयं पदेससंतसामित्तं भणियं ॥४३॥

(मलय०)––'मणुय'त्ति। मनुष्यद्विकमुच्चैर्गोत्रं च पूर्वं सूक्ष्मत्रसेन क्षपितकर्मांशेनोद्वलितम्। ततः 'सुहुमखणबद्धगेसु'त्ति–सूक्ष्मेण सूक्ष्मैकेन्द्रियेण पृथिव्यादिना सता क्षणमन्तर्मुहूर्तकालं यावत् भूयोऽपि बद्धम्। ततः सूक्ष्मत्रसेषु तेजोवायुषु मध्ये समुत्पन्नः। तत्र च चिरोद्वलनया उद्वलयितुं लग्नः। उद्वलयतश्च यदा तेषामेका स्थितिर्द्विसमयमात्रावस्थाना शेषीभवति तदा तयोर्मनुष्यद्विकोच्चैर्गोत्रयोः सूक्ष्मक्षणबद्धयोर्जघन्यं प्रदेशसत्कर्म। तथा तीर्थकरनाम 'अप्पद्धा बंधिय' त्ति–अल्पं कालं चतुरशीतिवर्षसहस्राणि सातिरेकाणि यावद्बद्ध्वा केवली जातः, ततः 'सुचिरं' ति–प्रभूतं कालं देशोनपूर्वकोटिरूपं यावत् केवलिपर्यायं परिपाल्यायोगिकेवलिनः सतः क्षपितकर्मांशस्य चरमसमये वर्तमानस्य तीर्थकरनाम्नो जघन्यं प्रदेशसत्कर्म। अन्ये तु ब्रुवते–तीर्थकरनाम्नः क्षपितकर्मांशेन तत्प्रायोग्यजघन्ययोगिना प्रथमसमये या लता बद्धा सा जघन्यं प्रदेशसत्कर्म। 'आहारतणु' त्ति–आहारकतनूपलक्षितमाहारकसप्तकम्। 'अप्पद्धा बंधिय'

त्ति–अल्पकालं बद्ध्वा मिथ्यात्वं गतः, ततः 'सुचिरं'ति–चिरोद्वलनया उद्वलयतः सतो यदा एका स्थितिर्द्विसमयमात्रावस्थाना शेषीभवति तदा तस्य जघन्यं प्रदेशसत्कर्म ॥४३॥

(उ०)—मनुष्यद्विकमुच्चैर्गोत्रं च पूर्वं सूक्ष्मत्रसेन क्षपितकर्मांशेनोद्वलितं ततः सूक्ष्मेण–सूक्ष्मैकेन्द्रियेण पृथिव्यादिना सता क्षणमन्तर्मुहूर्तकालं यावद्भूयोऽपि बद्धं, ततः सूक्ष्मत्रसेषु तेजोवायुषु मध्ये समुत्पन्नस्तत्र च चिरोद्वलनया मनुष्यद्विकोच्चैर्गोत्रे उद्वलयितुं लग्नः, उद्वलयतश्च तयोर्यदैका स्थितिर्द्विसमयमात्राऽवशिष्यते तदा तयोः सूक्ष्मक्षणबद्धयोर्जघन्यं प्रदेशसत्कर्म । तथा तीर्थकरनामाल्पाद्धमल्पकालं चतुरशीतिवर्षसहस्राणि सातिरेकाणि यावद्बद्ध्वा यः केवली जातः, ततः सुचिरमतिप्रभूतं कालं देशोनपूर्वकोटिरूपं यावत्केवलिपर्यायं परिपाल्यायोगिकेवलिभावे वर्तमानस्य क्षपितकर्मांशस्य चरमसमये तीर्थकरनाम्नो जघन्यं प्रदेशसत्कर्म । अन्ये त्वाहुः–तीर्थकरनाम्नः क्षपितकर्मांशेन तत्प्रायोग्यजघन्ययोगिना सता प्रथमसमये बद्धा या लता सा जघन्यं प्रदेशसत्कर्म । आहारकतनुरित्याहारकसप्तकं तदल्पकालं बद्ध्वा मिथ्यात्वं गतस्य सुचिरमिति चिरोद्वलनयोद्वलयतः सतो यदैका स्थितिर्द्विसमयमात्रावस्थाना शेषीभवति तदा तस्य जघन्यं प्रदेशसत्कर्म प्राप्यते ॥४३॥

इयाणिं पदेससंतट्ठाणविगप्पणिरूवणत्थं भण्णति–

**चरमावलियपविट्ठा गुणसेढी जासिमत्थि न य उदओ । आवलिगासमयसमा तासिं खलु फड्डगाइं तु ॥४४॥**

(चू०)—'चरिमावलिय'त्ति–अंतिमावलिगा तं पविट्ठा गुणसेढी जेसिं कम्माणं अत्थि 'ण य उदओ' उदओ वि णत्थि।'आवलियासमयसम'त्ति–आवलियाए जत्तिया समया तत्तिया 'तासिं खलु फड्डगाइं तु'त्ति–तेसिं कम्माणं

फड्डगा भवन्ति । कहं ? भण्णइ– अभवसिद्धियपातोग्गं जहन्नगं पदेससंतकम्मं काऊण तसेसु उववन्नो। तत्थ देशविरतिं विरतिं च बहुयातो वारातो लद्धूण चत्तारि वारे कसाते उवसामेऊण ततो पुणो एगिंदियाएसु उप्पन्नो, तत्थ पलिओवमस्स असंखेज्जतिभाग अत्थिऊणं पुणो तसेसु उप्पन्नो। तत्थ खवणाए अब्भुट्ठितो तस्स चरिमे ट्ठितिखण्डगे अवगते उदयावलियाए गलंतीए एगट्ठितीसेसाए आवलियाए दुसमयकालट्ठितीयं तहिं जहन्नगं पदेससंतं भवति। एयं सव्वजहन्नयं पदेससंतं। सव्वजहन्नतो पदेससंते एगे कम्मखण्डपोग्गले पक्खित्ते अन्नं पदेससंतं तम्मि ठितिविसेसे लब्भति। एवं एक्केक्कं पक्खिवमाणस्स [सुए सुत्तगणिट्ठाणाणि] (पएससंतकम्मट्ठाणाणि) अणंताणि तम्मि ट्ठितिविसेसे लब्भंति जाव गुणियकम्मंसिगस्स तम्मि ट्ठितिविसेसे उक्कोसं पदेससंतं। एत्तो उक्कोसतरं तम्मि ट्ठितिविसेसे अन्नं पदेससंतं नत्थि। एयं एक्कं फड्डगं। दोसु ट्ठितिविसेसेसु एएणेव उवाएण बितियं फड्डगं। तिसु ट्ठितिविसेसेसु ततियं फड्डगं। एवं जाव आवलियाए समऊणाते जतिया समया तत्तिगाणि फड्डगाणि, चरिमस्स ट्ठितिखण्डस्स चरिमसंछोभसमयं आदि काउं जाव अप्पप्पणो उक्कोसगं पदेससंतं ताव एयं पि एगफड्डगं सव्वट्ठितिगयं जहासंभवेण। एएण समं आवलियसमयतुल्ला फड्डगा। एसा फड्डगपरूवणा इमेसिं कम्माणं, तं जहा–थीणगिद्धितिगं मिच्छत्त आतिमा बारस कसाया तेरसणामं एएसिं एगूणतीसाए कम्माणं अंतिमखवणकाले उदयो णत्थि, एएसिं कम्माणं आवलियाए जत्तिया समया तत्तिया समया ततिया फड्डगा ॥

(मलय०)—तदेवमुक्तं जघन्यप्रदेश सत्कर्मस्वामित्वं, संप्रति प्रदेशसत्कर्मस्थानप्ररूपणार्थमाह–'चरमावलिय'त्ति। 'चरमा'–सर्वा-

तासां स्त्यानर्द्धित्रिकमिथ्यात्वाद्यद्वादश-
न्तिमा या क्षपणकाले आवलिका तां प्रविष्टा गुणश्रेणिर्यासां प्रकृतीनां अस्ति, न च उदयः, तासां स्त्यानर्द्धित्रिकमिथ्यात्वाद्यद्वादश-
कषायनरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जजातिचतुष्टयातपोद्योतस्थावरसूक्ष्मसाधारणरूपाणामेकोनत्रिंशत्संख्यानामावलिकायां यावन्तः
समयास्तावन्ति स्पर्धकानि भवन्ति। खलुशब्दो वाक्यालङ्कारे। तुरेवकारार्थः। आवलिकासमयसमान्येवेत्यर्थः। इयमत्र भावना-
अभव्यप्रायोग्यजघन्यप्रदेशसत्कर्मयुक्तस्त्रसेषु मध्ये समुत्पन्नः। तत्र च सर्वविरतिं देशविरतिं चानेकशो लब्ध्वा चतुरश्च वारान्
मोहनीयमुपशमय्य भूयोऽप्येकेन्द्रियेषु मध्ये समुत्पन्नः। तत्र च पल्योपमासंख्येयभागमात्रं कालं यावत् स्थित्वा मनुष्येषु मध्ये
समुत्पन्नः। तत्र च क्षपणायामभ्युद्यतः। तस्य चरमे स्थितिखण्डकेऽपगते सति चरमावलिकायां स्तिबुकसंक्रमेण क्षीयमाणायां यदा
एका स्थितिर्द्विसमयमात्रावस्थाना शेषीभवति तदा सर्वजघन्यं यत् प्रदेशसत्कर्म तत् प्रथमं प्रदेशसत्कर्मस्थानम्। तत एकस्मिन् पर-
माणौ प्रक्षिप्ते सति अन्यत् द्वितीयं प्रदेशसत्कर्मस्थानं भवति। ततो द्वयोः परमाण्वोः प्रक्षिप्तयोरन्यत्तृतीयं प्रदेशसत्कर्मस्थानम्। त्रिषु
परमाणुषु प्रक्षिप्तेषु अन्यत्। एवमेकैकपरमाणुप्रक्षेपेण प्रदेशसत्कर्मस्थानानि नानाजीवापेक्षयाऽनन्तानि तावद्वाच्यानि यावत्तस्मिन्नेव
चरमे स्थितिविशेषे गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानं भवति। अत ऊर्ध्वमन्यत्प्रदेशसत्कर्मस्थानं न प्राप्यते। तत इदमेकं
स्पर्धकम्। इदं तु चरमस्थितिमधिकृत्य। एवं द्वयोश्चरमस्थित्योर्द्वितीयं स्पर्धकं वक्तव्यम्। तिसृषु च स्थितिषु तृतीयम्। एवं ताव-
द्वाच्यं यावत्समयोनावलिकासमयप्रमाणानि स्पर्धकानि भवन्ति। तथा चरमस्थितिघातस्य चरमं प्रक्षेपमादिं कृत्वा पश्चानुपूर्व्या प्रदे-
शसत्कर्मस्थानानि यथोत्तरं वृद्धानि तावद्वक्तव्यानि यावदात्मीयमात्मीयमुत्कृष्टं प्रदेशसत्कर्म, यत एतावदेतदपि सकलस्थितिगतं यथासं-
भवमेकं स्पर्धकं विवक्ष्यते। तत एतेन स्पर्धकेन सहावलिकासमयप्रमाणानि स्पर्धकानि भवन्ति ॥४४॥

(उ०)—तदेवमुक्तं जघन्यप्रदेशसत्कर्मस्वामित्वं, अथ प्रदेशसत्कर्मस्थानप्ररूपणां चिकीर्षुः स्पर्धकप्ररूपणामाह—चरमा सर्वान्तिमा या क्षपणकाले आवलिका तां प्रविष्टा गुणश्रेणिर्यासां प्रकृतीनामस्ति, न चोदयः, तासां स्त्यानर्द्धित्रिकमिथ्यात्वप्रथमद्वादशकषायनरकद्विकतिर्यग्द्विकाद्यजातिचतुष्टयातपोद्योतस्थावरसूक्ष्मसाधारणरूपाणामेकोनत्रिंशत्संख्यानामावलिकायां यावन्तः समयास्तत्समान्येव खलु स्पर्धकानि भवन्ति । तुरेवकारार्थः । खलुर्वाक्यालङ्कारे । अयमिह भावार्थः—अभव्यप्रायोग्यजघन्यप्रदेशसत्कर्मयुक्तस्त्रसेषु मध्ये समुत्पद्य तत्र देशविरतिं सर्वविरतिं वाऽनेकवारं लब्ध्वा चतुरो वारान्मोहनीयमुपशमय्य भूयोऽप्येकेन्द्रियेषु मध्ये समुत्पद्य तत्र च पल्योपमासंख्येयभागमात्रं कालं यावत्स्थित्वा ततो मनुष्येषु मध्ये समुत्पन्नः सन् यः शीघ्रं क्षपणार्थमभ्युद्यतस्तस्य चरमे स्थितिखण्डकेऽपगते सति चरिमावलिकायां स्तिबुकसंक्रमेण क्षीयमाणायां यावदेका स्थितिर्द्विसमयमात्रा शेषीभवति तदा सर्वजघन्यं यत्प्रदेशसत्कर्म तत्प्रथमं प्रदेशसत्कर्मस्थानं, तत एकपरमाणुप्रक्षेपे द्वितीयं, द्विपरमाणुप्रक्षेपे तृतीयं, एवं यथोत्तरमेकैकपरमाणुप्रक्षेपेण नानाजीवापेक्षयाऽनन्तानि प्रदेशसत्कर्मस्थानानि वाच्यानि, यावत्तस्मिन्नेव चरमे स्थितिविशेषे गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानं भवति । तदूर्ध्वमन्यत्प्रदेशसत्कर्मस्थानं न प्राप्यत इतीदमेकं स्पर्धकम् । इदं तु चरमस्थितिमधिकृत्यैकस्थितिकं स्पर्धकम् । एवं द्वयोश्चरमस्थित्योः शेषीभूतयोर्द्विस्थितिकं द्वितीय स्पर्धकं वक्तव्यं, तिसृषु च स्थितिषु त्रिस्थिकं तृतीयं, एवं तावद्वाच्यं यावत्समयोनावलिकासमयप्रमाणानि स्पर्धकानि भवन्ति । अत्र समयोनावलिकाप्रमाणं स्पर्धकं सर्वोत्कृष्टं, एकस्थितिकं सर्वजघन्यं, द्वित्रादिकासु च स्थितिषु शेषीभूतासु मध्यममिति विवेकः । तथा चरमस्थितिघातस्य चरमप्रक्षेपमादिं कृत्वा पश्चानुपूर्व्या यथोत्तरं वृद्धानि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावन्निजनिजमुत्कृष्टप्रदेशसत्कर्म । तत एतावदप्येतन्निखिलस्थितिगतं यथास्वमुक्तप्रकृतीनामेकं स्पर्धकं विवक्ष्यते । तत एतेन स्पर्ध-

केन सहितानि पररूपान्तःप्रवेशगलितकसमयकचरमकस्थितिकादीन्यावलिकासमयप्रमाणानि स्पर्धकानि भवन्ति ॥४४॥

२९ अनुदयवतीनाम्
२३ उद्वलनयोग्यानां च } प्रदेशसत्तास्पर्धकस्य चित्रम्




अत्र आवलिका ४ समयात्मिका
० व्यतीता स्थिति

स्थितिसंपादिका रेखा

एवं चरमावलिकायामेकोनावलिकाप्रमाणानि स्पर्धकानि यथा-३, चरमप्रक्षेपमादौ कृत्वा स्पर्धकमेकं च मिलने संपूर्णावलिका प्रमाणानि (४) स्पर्धकानि जातानि

संजलणतिगे चेवं अहिगाणि य आलिगाए समएहिं। दुसमयहीणेहिं गुणाणिं जोगट्ठाणाणि कसिणाणि ॥

(चू०)--'संजलणतिगे चेवं'ति-कोहमाणमायासंजलणाणं एवं चेव। किं भणियं होति? भण्णइ-जाव पढमट्ठितीते आवलियासेसाए ट्ठितीखण्डगादीणं एगं पि णत्थि सव्वे वोच्छिन्ना, तम्मि वोच्छेयसमते दुसमऊण दुयावलिय बद्धं दलियं अत्थि, उदयावलियागयं च समऊणं अत्थि, अन्नं नत्थि किंचि त्तं,आवलियागयस्स दलियस्स जा भावणा पुव्वुत्तं गाहाते भणिया सा चेव भावणा समऊणावलियापढमट्ठितिगयस्स दलियस्स कायव्वा। अहिगाणि य आवलियाए समएहि 'समयहीणाहिति, कहं? भण्णति-चरिमसमयं कोहवेयगेण सव्वजहन्नगे तप्पाउग्गे जोगे वट्टमाणाणं जं कम्मं बद्धं तं कम्मं आवलियाए गयाते य संकामेति। तं संकामिज्जमाणं२ कसिणाते आवलियाए कसिणं संकामियं होति। दुचरिमसमए कोहवेयगेण जं बद्धं तंपि आवलियातियं अन्नाए आवलियाचरिमसमते अकम्मी होहित्ति, चरिमसमए कोहवेयगेणं बद्धं तंपि आवलियातीयं ततियाते चरिमसमये अकम्मी होति, एवं जाव आवलियामेत्तचरिमकोहवेयगेण बद्धं बितियावलियाचरिमसमते अकम्मी होति, दुचरिमावलियातो चरिमसमते जं बद्धं तंपि आवलियादीतं बितियावलियाए चरिमसमते अकम्मी होति। एवं जाव दुचरिमावलियाए पढमसमये बद्धं आवलियाए गयाए परपगतिं संकामिउं आवलियामेत्तेण कालेण कोहवेयगस्स चरिमसमते अकम्मी होइ, पढमट्ठितीते आवलियावसेसाते कोहस्स बंधवोच्छेओ। अहवा दुचरिमावलियाए बितियसमते बद्धं आवलियावसेसाते पढमट्ठितीते पढमसमते अकम्मी होति। एवं जाव

दुचरिमावलियाए चरिमसमते बद्धं पढमट्ठितीते दुचरिमसमते अकम्मी होति। कोहवेयगचरिमावलियाते पढम-समते बद्धं पढमट्ठितीते चरिमसमए अकम्मी होइ। कोहवेयगचरिमावलियाए बितियसमयबद्धं पढमट्ठितीते गयाए बितियसमते अकम्मी होति। तम्हा दूसमयूणा(वलियं) ततियमेत्तबद्धलयाए पढमट्ठितीते वोच्छिन्नाए अच्छति, लताकालं पडुच समऊणावलियमेत्तो कालो, तं दलियं पडुच पराणुभावे दीसति, अप्पणुभावे णत्थि, तेण दुसमऊणावलियासमयमेत्ता लया अत्थि। 'गुणाणि जोगट्ठाणाणि'त्ति-जं चरिमसमयकोहवेयगेण जहन्न-गजोगेण बद्धं तं आवलियाए गयाते परपगति संकामेति, तं संकामिज्जमाणं संकामिज्जमाणं बितियावलियाए चरिमसमते संकामियं होति, तस्स संकामिज्जमाणस्स जं बितियावलियाए चरिमसमते संकामिजिहिति ण ताव संकामिज्जति तं कोहसंजलणाए जहन्नगं पदेससंतं। एवं बितियजोगट्ठाणेण बद्धं चरिमसमयकोहवेयगेण तं पि तहेव चरिमसमय असंकामियं बितियं संतट्ठाणं। एवं जाव चरिमसमयकोहवेयगेण चेव उक्कस्सजोगेण बद्धं तंपि तहेव चरिमसमयअसंकामियं अंतिमं संतट्ठाणं। एवं जहन्नगजोगट्ठाणं आदि काऊणं जत्तियाणि जोगट्ठाणाणि तत्तियाणि संतकम्मट्ठाणाणि एगंमि ट्ठितिविसेसे लब्भंति। एयं एक्कं फड्डगं। दुचरिमसमयकोहवेयगेण जहन्नजोगिणा बद्धं तं पि जहा चरिमसमयबद्धं तहा भावेयव्वं जाव तत्तियाणि संतकम्मट्ठाणाणि दोसु वि ट्ठितिविसेसेसु लब्भंति। एयं पि एक्कं फड्डगं। एवं तिचरिमसमयकोहवेयगेण बद्धं तहेव भावियव्वं, नवरि तिसु ट्ठितिविसेसेसु लब्भंति, एयं पि एक्कं फड्डगं। एवं आवलियाए दुसमऊणाए जत्तिया समया तेसु जातो लयातो बद्धातो तातो

सव्वातो एवं भावेयव्वाओ। एवं जोगट्ठाणाणि आवलियासमएहि दुसमऊणेहिं पडुपन्नाणि जत्तियाणि तत्तियाणि फड्डगाणि पढमट्ठितीए वोच्छिन्नाए लब्भंति। जोगट्ठाणाणं च एक्कगदुगतिगचउक्कादीहिं संजोगेहिं गुणिया अणेगभेयाउ उप्पज्जंति ।४९॥

(मलय०)—'संजलणतिगे'त्ति। 'संज्वलनत्रिके'–क्रोधमानमायारूपे एवं–पूर्वोक्तेन प्रकारेण स्पर्धकानि वाच्यानि। इयमत्र भावना–क्रोधादीनां प्रथमस्थितिर्यावदावलिकाशेषा न भवति तावत् स्थितिघातरसघातबन्धोदयोदीरणाः प्रवर्तन्ते। आवलिकाशेषायां तु प्रथमस्थितौ व्यवच्छिद्यन्ते। ततोऽनन्तरसमये समयोनावलिकागतं समयद्वयोनावलिकाद्विकबद्धं च सदस्ति, अन्यत् सर्वं क्षीणम्। तत्र समयोनावलिकागतस्य दलिकस्य स्पर्धकभावना यथा प्राक् कृता तथात्रापि कर्तव्या। यच्च समयद्वयोनावलिकाद्विकबद्धं दलिकमस्ति तस्यान्यथा स्पर्धकभावना क्रियते, पूर्वप्रकारेणात्र स्पर्धकस्वरूपस्याप्राप्यमाणत्वात्। अथोच्येत कथं स्थितिघातरसघातबन्धोदयोदीरणाव्यवच्छेदानन्तरसमये समयद्वयोनावलिकाद्विकबद्धमेव दलिकमस्ति न शेषमिति ज्ञायते? उच्यते–इह चरमसमयक्रोधादिवेदकेन यद्बद्धं दलिकं तद्बन्धावलिकातीतमावलिकामात्रेण कालेन निरवशेषं संक्रमयति। तथा च सत्यावलिकाचरमसमये स्वरूपापेक्षयाऽकर्मी भवति। द्विचरमसमयवेदकेन यद्बद्धं तदपि च बन्धावलिकायामतीतायामन्येनावलिकामात्रेण कालेन संक्रमयति। आवलिकायाश्चरमसमये अकर्मीभवति। एवं यत्कर्म यस्मिन् समये बद्धं तत्तस्मात्समयादारभ्य द्वितीयावलिकाचरमसमयेऽकर्मी भवति। तथा च सति बन्धाद्यभावप्रथमसमये समयद्वयोनावलिकाद्विकबद्धमेव सत्प्राप्यते, न शेषम्। तथाहि–तत्त्वतोऽसंख्यातसमयात्मिकाप्यावलिका किलासत्कल्पनया चतुःसमयात्मिका कल्प्यते। ततो बन्धादिव्यवच्छेदचरमसमयादर्वाक् अष्टमे समये यद्बद्धं तद्बन्धावलिकायां

चतुःसमयात्मिकायामतीतायां अन्यया चतुःसमयात्मिकया आवलिकया अन्यत्र संक्रम्यमाणं चरमसमये वन्धादिव्यवच्छेदचरमसम-
यस्मपि सर्वथा स्वरूपेण न प्राप्यते, अन्यत्र सर्वात्मना संक्रमितत्वात्। सप्तमे समये यद्बद्धं तच्चतुःसमयात्मिकायामावलिकायामतिक्रा-
न्तायामन्यया चतुःसमयात्मिकया अन्यत्र संक्रम्यमाणं बन्धादिव्यवच्छेदानन्तरसमये स्वरूपेण न प्राप्यते, सर्वात्मनाऽन्यत्र संक्रमित-
त्वात्। शेषषष्ठादिसमयबद्धं तु प्राप्यते। ततो बन्धादौ व्यवच्छिन्ने सति अनन्तरसमये समयद्वयोनावलिकाद्विकबद्धमेव सत् प्राप्यते,
नान्यदिति। तत्र बन्धादिव्यवच्छेदसमये जघन्ययोगिना सता यद्बद्धं तस्य बन्धावलिकायामतीतायामन्यया आवलिकयाऽन्यत्र संक्र-
म्यमाणस्य चरमसमये यत् संक्रमयिष्यति न तावत्संक्रमयति तत् संज्वलनक्रोधस्य जघन्यं प्रदेशसत्कर्मस्थानम्। एवं द्वितीययोगस्था-
नवर्तिना बन्धादिव्यवच्छेदसमये यद्बद्धं तस्यापि दलिकं चरमसमये द्वितीयं प्रदेशसत्कर्मस्थानम्। एवं तावद्वाच्यं यावदुत्कृष्टयोगस्थान-
वर्तिना सता बन्धादिव्यवच्छेदसमये यद्बद्धं तस्य दलिकं चरमसमये सर्वोत्कृष्टमन्तिमं प्रदेशसत्कर्मस्थानम्। एवं जघन्यं योगस्थान-
मादिं कृत्वा यावन्ति योगस्थानानि भवन्ति तावन्ति प्रदेशसत्कर्मस्थानान्यपि चरमसमये प्राप्यन्ते, इदमेकं स्पर्धकम्। एवं बन्धादि-
व्यवच्छेदद्विचरमसमये जघन्ययोगादिना यद्बध्यते तत्रापि द्वितीयावलिकाचरमसमये प्रागिव तावन्ति प्रदेशसत्कर्मस्थानानि भावनी-
यानि। केवलं स्थितिद्वयभावीनि तानि प्रतिपत्तव्यानि, बन्धादिव्यवच्छेदचरमसमये बद्धस्यापि दलिकस्य तदानीं द्विसमयस्थितिकस्य
प्राप्यमाणत्वात्। इदं द्वितीयं स्पर्धकम्। एवं बन्धादिव्यवच्छेदत्रिचरमसमये जघन्ययोगादिना यद्बध्यते तत्रापि द्वितीयावलिकाचर-
मसमये प्रागिव तावन्ति प्रदेशसत्कर्मस्थानानि भवन्ति। नवरं स्थितित्रयभावीनि तानि भावनीयानि, तदानीं बन्धादिव्यवच्छेदचर-
मसमयबद्धसत्कस्यापि दलिकस्य त्रिसमयस्थितिकस्य द्विचरमसमयबद्धसत्कस्यापि दलिकस्य द्विसमयस्थितिकस्यापि प्राप्यमाणत्वात्।

इदं तृतीयं स्पर्धकम्। एवं समयद्वयोनावलिकाद्विके यावन्तः समयास्तावन्ति स्पर्धकानि भवन्ति। तत आह—'अहिगाणि य आवलि-
गाए' इत्यादि। योगस्थानानि कृत्स्नानि समस्तानि समुदायैकरूपतया विवक्षितानि सकलयोगस्थानसमुदाय इत्यर्थः, आवलिकागतैः
समयैः समयद्वयहीनैर्गुण्यन्ते। गुणिते सति यावन्तः सकलयोगस्थानसमुदायास्तावन्ति प्रथमस्थितौ व्यवच्छिन्नायामधिकानि स्पर्ध-
कानि भवन्ति। तथाहि—बन्धादिव्यवच्छेदानन्तरसमये समयद्वयोनावलिकाद्विकसमयप्रमाणानि स्पर्धकानि प्राप्यन्ते। एतच्चानन्तर-
मेव भावितम्। बन्धादिव्यवच्छेदादूर्ध्वं च प्रथमस्थितिरावलिकामात्रा तिष्ठति। ततस्तस्यामावलिकामात्रायां प्रथमस्थितौ संक्रमेण
व्यवच्छिद्यमानायां परत आवलिकासमयप्रमाणानि स्पर्धकानि अन्यत्र संक्रमेण व्यवच्छिद्यन्ते। अत एव च तानि पृथक् न गुण्य-
न्ते। ततस्तेषु व्यवच्छिन्नेषु प्रथमस्थितौ च व्यवच्छिन्नायां शेषाणि समयद्वयोनावलिकासमयप्रमाणान्येवाधिकानि प्राप्यन्ते, ना-
न्यानीति ॥४५॥

(उ०)—संज्वलनत्रिके क्रोधमानमायारूपे एवं पूर्वोक्तेन प्रकारेण स्पर्धकानि वाच्यानि। अयमिह तात्पर्यार्थः—क्रोधादीनां प्रथम-
स्थितिर्यावदावलिका शेषा न भवति तावत् स्थितिघातरसघातबन्धोदयोदीरणाः प्रवर्तन्ते, आवलिकाशेषायां तु प्रथमस्थितावतिष्ठमा-
नायां ता व्यवच्छिद्यन्ते, ततोऽनन्तरसमये समयोनावलिकागतं समयद्वयोनावलिकाद्विकबद्धं च सदस्ति, अन्यत्सर्वं क्षीणं, तत्र समयो-
नावलिकागतदलिकस्पर्धकभावना प्राग्वदेव कर्तव्या। समयद्वयोनावलिकाद्विकबद्धदलिकस्य पुनरन्यथा स्पर्धकभावना क्रियते, सत्कर्मवृद्धि-
प्रकाराद्बन्धकृतवृद्धिप्रकारस्यान्यथाभावात् प्रागुक्तरीत्याऽत्र स्पर्धकस्वरूपस्याप्राप्यमाणत्वात्। अथ कथं स्थितिघातरसघातबन्धोदयो-
दीरणाव्यवच्छेदानन्तर समयद्वयोनावलिकाद्विकबद्धमेव सदस्ति, न शेषमिति प्रतीतिपथमायाति? उच्यते—इह चरमसमयक्रोधादिवे-

दकेन यद्बद्धं दलिकं तद्बन्धावलिकोत्तीर्णं सदावलिकामात्रेण कालेन निरवशेषं संक्रम्यमाणमावलिकाचरमसमये स्वरूपापेक्षयाऽकर्मतां
नीयते, द्विचरमसमयक्रोधादिवेदकेन च यद्बद्धं तदपि बन्धावलिकायामतीतायामन्येनावलिकामात्रेण कालेन संक्रम्यमाणमावलिकाचर-
मसमयेऽकर्मतां नीयते। एवं यत्कर्म यस्मिन् समये बद्धं तत्तस्माद्द्वितीयसमयादारभ्य द्वितीयावलिकाचरमसमयेऽकर्मा भवति। तथा च
बन्धाद्यभावप्रथमसमये समयद्वयोनावलिकाद्विकबद्धमेव सत्प्राप्यते, न शेषं, यत आवलिकाया असत्कल्पनया चतुःसमयात्मिकायाः
कल्पने बन्धादिव्यवच्छेदसमयादर्वागष्टमे समये बद्धं चतुःसमयात्मिकायां बन्धावलिकायां परिगलितायामन्यया चतुःसमयात्मि-
कयाऽऽवलिकयाऽन्यत्र संक्रम्यमाणं चरमसमये बन्धादिव्यवच्छेदसमयरूपे सर्वात्मनाऽन्यत्र संक्रमितत्वात् स्वरूपेण न प्राप्यते।
सप्तमसमये च यद् बद्धं तच्चतुःसमयात्मिकायामावलिकायां परिक्षीणायामन्यया चतुःसमयात्मिकयाऽऽवलिकयाऽन्यत्र सङ्क्रम्यमाणं
बन्धादिव्यवच्छेदानन्तरसमये सर्वात्मनाऽन्यत्र सङ्क्रमितत्वात् स्वरूपेण न प्राप्यते। षष्ठादिसमयबद्धं तु प्राप्यते। ततो बन्धादौ
व्यवच्छिन्ने सत्यनन्तरसमये समयद्वयोनावलिकाद्विकबद्धमेव सत्, नान्यदिति। तत्र बन्धादिकं यस्मिन् समये भवति तदग्रिम-
समये च न भवति तस्मिन् बन्धादिव्यवच्छेदसमये जघन्ययोगिना सता यद्बद्धं तस्य बन्धावलिकायामतीतायामन्यया आवलिक-
याऽन्यत्र सङ्क्रम्यमाणस्य चरमसमये यद्दलिकं सङ्क्रमयिष्यति तत्संज्वलनक्रोधस्य जघन्यं प्रदेशसत्कर्मस्थानम्। एवं द्वितीययोगस्थान-
वर्तिना बन्धादिव्यवच्छेदसमये यद्बद्धं तद्दलिकं चरमसमये द्वितीयं प्रदेशसत्कर्मस्थानम्। एवमुत्तरोत्तरयोगस्थानानुसरणेन तावद्वाच्यं
यावदुत्कृष्टयोगस्थानवर्तिना सता बन्धादिव्यवच्छेदसमये यद्बद्धं तद्दलिकं चरमसमये सर्वोत्कृष्टमन्तिमं प्रदेशसत्कर्मस्थानम्। एवं जघ-
न्ययोगस्थानादारभ्योत्कृष्टयोगस्थानपर्यन्तं यावन्ति योगस्थानानि भवन्ति तावन्ति बन्धादिव्यवच्छेदसमयबद्धस्य दलिकस्य प्रदेशसत्क-

र्मस्थानान्यपि चरमसमये प्राप्यन्ते, इदमेकं स्पर्धकम् । एवं बन्धादिव्यवच्छेदद्विचरमसमये जघन्ययोगादिना यद्बध्यते तत्रापि द्विती-
यावलिकाचरमसमये प्रागिव तावन्ति प्रदेशसत्कर्मस्थानानि भावनीयानि । केवलं स्थितिद्वयभावीनि तान्यवसेयानि, तदानीं बन्धा-
दिव्यवच्छेदचरमसमयबद्धस्यापि दलिकस्य द्विसमयस्थितिकस्य प्राप्यमाणत्वात्, इदं द्वितीयं स्पर्धकम् । एवं बन्धादिव्यवच्छेदत्रिचरम-
समये जघन्ययोगादिना यद्बद्धं तस्यापि द्वितीयावलिकाचरमसमये प्रागिव तावन्ति प्रदेशसत्कर्मस्थानानि भवन्ति । नवरं तानि
स्थितित्रयभावीन्यवबोद्धव्यानि, तदानीं बन्धादिव्यवच्छेदचरमसमयबद्धस्यापि दलिकस्य त्रिसमयस्थितिकस्य द्विचरमसमयबद्धकर्म-
सत्कस्यापि दलिकस्य द्विसमयस्थितिकस्य प्राप्यमाणत्वात्, इदं तृतीयं स्पर्धकम् । एवं समयद्वयोनावलिकाद्विके यावन्तः समयास्ताव-
न्ति स्पर्धकानि भवन्ति । एवं संज्वलनमानमाययोरपि तावन्ति स्पर्धकानि प्रत्येकं वाच्यानि । तत आह–'अहिगाणीत्यादि' । योग-
स्थानानि योगस्थानकृतप्रदेशसत्कर्मस्पर्धकानि कृत्स्नानि समुदितानि विवक्षितानि आवलिकासमयैर्द्वाभ्यां समयाभ्यामूनैर्गुणानीति
गुणितान्यधिकानि प्राप्यन्ते । तथाहि–बन्धादिव्यवच्छेदानन्तरसमये समयद्वयोनावलिकाद्विकसमयप्रमाणान्यवाप्यन्ते स्पर्धकानि ।
तदा च प्रथमायां स्थितावनुदयावलिकैका शेषीभूताऽवतिष्ठते, द्वितीयस्थितौ च द्विसमयहीनद्व्यावलिकाप्रमाणमुत्कृष्टं स्पर्धकमस्ति ।
यदा तु प्रथमस्थितिसत्कानुदयावलिका प्रकृत्यन्तरेषु सङ्क्रम्यमाणा निःशेषा व्यवच्छिन्ना भवति तदा परतोऽपि द्वितीयस्थितिगता-
वलिकाऽन्यत्र सङ्क्रमेण व्यवच्छिद्यमाना त्रुट्यति । तत एकावलिकाप्रमाणानि स्पर्धकान्यन्यत्र सङ्क्रमद्वारा त्रुटितत्वात् पृथङ् न
गण्यन्त इति तेषु प्रथमस्थितौ च व्यवच्छिन्नायां शेषाणि समयद्वयोनावलिकासमयप्रमाणान्येवाधिकानि प्राप्यन्ते, नान्यानीति ॥४८॥

## संज्वलनक्रोधमानमायानां चरमक्षपणाविधेः प्रदेशसत्ता-स्पर्धकानां च चित्रम्




○ = बंध समय

. आवलिकायां दलिकसंक्रान्तिदर्शिकेयं बिंदुपंक्तिः

दलिकं निःसृत्यावलिकोर्ध्वगमनं करोति

अत्र स्पर्धकानि ६ (=समयद्वयोनाव०लिक प्रमाणानि) (अत्र चरमोदयावलिकासत्कस्पर्ध-कान्यन्तर्गतान्येव)

वेएसु फड्डगदुगं अहिगा पुरिसस्स बे उ आवलिया। दुसमयहीणा गुणिया जोगट्ठाणेहि कसिणाहिं ॥४६॥

(चू०)—'वेएसु फड्डगदुग'ति–नपुंसगवेयइत्थिवेयपुरिसवेएसु दो फड्डगाणि। कहं? भण्णति–अभवसिद्धियपाउग्गेण पदेससंतकम्मेण तसेसु उप्पन्नो। तत्थ देसविरतिं संजयं च त्ति बहुसो बहुसो लद्धूण चत्तारि वारे कसाते उवसामेऊण बे छावट्ठीते सम्मत्तं अणुपालेऊण अपडियसंमत्तो नपुंसगवेएण खवगसेढिं पडिवन्नो, तेण नपुंसगवेयपढमठितिए दुचरिमसमते वट्टमाणेण नपुंसकवेयउवरिमठितीते चरिमठितिखंडगं संछुभमाणं संछुद्धं तं संछुद्धे णपुंसगवेदे पढमट्ठितीते चरिमसमते तस्स नपुंसगस्स जहन्नगं नपुंसगवेयपदेससंतकम्मं। ततो पदेसुत्तरं पदेसुत्तरं निरंतराणि पदेससंतट्ठाणाणि जाव गुणियकम्मंसिगस्स उक्कोसपदेससंतं। एयं एगं फड्डगं। चरिमट्ठितिखंडगस्स चरिमसमते जहन्नगं पदेससंतं आदिं काऊण जाव उक्कोसगं पदेससंतकम्मं णिरंतराणि अणंताणि ट्ठाणाणि, एयं पि एगं फड्डगं। एवं बे फड्डगाणि नपुंसगवेयस्स। अहवा जाव पढमट्ठिति य अत्थि ताव एक्कं फड्डगं, बितियट्ठितीए खीणाए पढमट्ठितीए एगट्ठितिसेसाए बितियं फड्डगं। एए दो फड्डगा। एवं इत्थिवेयस्स वि दो फड्डगा। पुरिसवेयस्स वि एगउदयट्ठितिसेसे बितियट्ठितिगयं दलियं संकामिज्जमाणं संकामियं भवति। तत्थ चरिमसमयपुरिसवेयगस्स पदेसुत्तराणि अणंताणि ट्ठाणाणि निरंतराणि लब्भंति, एयं एगं फड्डगं। दुचरिमसमयपुरिसवेयगस्स अपच्छिमठितिखंडगस्स चरिमसमए जहन्नगं पदेससंतं आदि काऊण जाव अप्पणो उक्कोसं पदेससंतं निरंतराणि ठाणाणि लब्भंति। एयं बीयं फड्डगं। 'अहिगा पुरिसस्स बेउ आवलिया दुसम-

यट्टीण' त्ति एयस्स निदरिसणं भण्णइ–पढमसमयपुरिसवेयअवेयगस्स केवतियातो पुरिसवेयसंतलयातो बद्धातो ? भण्णइ–जावतिया दोण्हं आवलियाणं दुसमयूणाणं समया तावतियातो पढमसमयपुरिसवेयअवेयस्स पुरिसवेयसंतलयातो संतं । कहं ? भण्णइ–चरिमसमयपुरिसवेयगेण बद्धं तं अवेयगस्स वितियातो आवलियातो दुचरिमसमते दीसति, चरिमसमए अकम्मी होइ । जं दुचरिमसमयपुरिसवेयगेण बद्धं तं अवेयगस्स वितियाए आवलियाए तिचरिमसमते दीसति, दुचरिमसमये अकम्मी होइ ण दीसति । एवं एएण कमेण णेयव्वं । जं आवलियापढमसमयसवेयगेण बद्धं तं अवेयगस्स पढमावलियाए चरिमसमते अकम्मी होति । एवं जाव सवेयगस्स दुचरिमाते आवलियाए पढमसमते बद्धं तं चरिमसमयवेयगस्स अकम्मी होति। तीसे चेव दुचरिमाए सवेयगावलियाए वितियसमते बद्धं तं पढमसमयअवेयगस्स अकम्मी होति । एएण हेऊणा पढमसमयगस्स दुसमयूणदुयावलियसमयमेत्ता पुरिसवेयसंतलया लब्भंति । जं चरिमसमयपुरिसवेयगेण जहन्नजोगिणा बद्धं तं आवलियादीयं खविउमाढत्तो, तं खविज्जमाणं वितियावलियाए चरिमसमते खवियं होति, तस्स खविज्जमाणस्स जं वितियावलियाए चरिमसमते खविज्जिहिति न ताव खविज्जति तं पुरिसवेयस्स जहन्नगं पुरिससंतं । एवं वितियजोगट्ठाणेणं बद्धं चरिमसमयपुरिसवेयगेण तं पि तहेव चरिमसमये अखवियं संतट्ठाणं । एवं जाव चरिमसमयपुरिसवेयगेण चेव उक्कस्सजोगिणा बद्धं तं तहेव चरिमसमय अखवियं अंतिमं संतट्ठाणं। एवं जहन्नगजोगट्ठाणं आदि काऊण जत्तियाणि जोगट्ठाणाणि तत्तियाणि पदेससंतट्ठाणाणि। एवं जहा कोहसंजलणाए

विकप्पो दरिसिओ तहा चेव भाणियव्वं । 'गुणिया जोगट्ठाणेहिं कसिणेहिं'ति–एवं जोगट्ठाणाणि दोहिं आवलियाहिं दुसमयऊणाहिं पडुप्पन्नाणि एत्तियाणि अवेयगस्स फड्डगाणि लब्भंति ॥४६॥

(मलय०)—'वेएसु'त्ति। 'वेदेषु' स्त्रीवेदपुरुषवेदनपुंसकवेदेषु प्रत्येकं द्वे द्वे स्पर्धके भवतः। कथमिति चेत्, उच्यते–कश्चिज्जन्तुरभवसिद्धिकप्रायोग्यजघन्यप्रदेशसत्कर्मा त्रसेषु मध्ये समुत्पन्नः। तत्र देशविरतिं सर्वविरतिं च बहुशो लब्ध्वा चतुरश्च वारान् मोहनीयमुपशमय्य द्वात्रिंशदधिकं च सागरोपमाणां शतं यावत्सम्यक्त्वमनुपाल्याप्रतिपतितसम्यक्त्वो नपुंसकवेदेन क्षपकश्रेणिमारूढः। ततो नपुंसकवेदस्य प्रथमस्थितौ द्विचरमसमये वर्तमाने उपरितनस्थितिखण्डमन्यत्र संक्रमितम्। तथा सति उपरितनी स्थितिः सर्वात्मना निर्लेपीकृता। ततः प्रथमस्थितौ चरमसमये सर्वजघन्यं यत् प्रदेशसत्कर्म तत् प्रथमं प्रदेशसत्कर्मस्थानम्। तत एकस्मिन् परमाणौ प्रक्षिप्ते सति द्वितीयं प्रदेशसत्कर्मस्थानम्। परमाणुद्वयप्रक्षेपे च तृतीयम्। एवं नानाजीवापेक्षया एकैकपरमाणुवृद्ध्या प्रदेशसत्कर्मस्थानानि अनन्तानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम्। इदमेकं स्पर्धकम्। ततो द्वितीयस्थितौ चरमखण्डे संक्रम्यमाणे चरमसमये पूर्वोक्तप्रकारेण सर्वजघन्यं यत् प्रदेशसत्कर्मस्थानं तत् आदि कृत्वा नानाजीवापेक्षया यथासंभवमुत्तरोत्तरवृद्ध्या निरन्तरप्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम्। तानि द्वितीयं स्पर्धकम्। अथवा यावत्प्रथमा स्थितिर्द्वितीया च स्थितिर्विद्यते तावदेकं स्पर्धकम्। द्वितीयस्थितौ च क्षीणायां प्रथमस्थितौ शेषीभूतायां समयमात्रायां द्वितीयं स्पर्धकमिति। एवं प्रकारद्वयेन स्त्रीवेदस्यापि स्पर्धकद्वयं भावनीयम्। पुरुषवेदस्य पुनः स्पर्धकद्वयमेवं भावनीयम्–उदयचरमसमये जघन्यं प्रदेशसत्कर्म आदि कृत्वा नानाजीवापेक्षया एकैकपरमाणुवृद्ध्या निरन्तरं प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्यो

रकृष्टं प्रदेशसत्कर्मस्थानम्। एतानि सर्वाण्यनन्तानि। एतान्येकं स्पर्धकम्। उदयचरमसमये च द्वितीयस्थितौ चरमखण्डे संक्रम्यमाणे
सर्वजघन्यं प्रदेशसत्कर्मस्थानमादि कृत्वा प्रागिव द्वितीयं स्पर्धकं वाच्यम्। किं च 'अहिगा पुरिस्स'त्ति-पुरुषवेदस्याधिकान्यपि स्पर्ध-
कानि भवन्ति। कियन्ति भवन्तीति चेत्, उच्यते-'वे उ आवलिया' इत्यादि। अत्र द्वे आवलिके इत्यत्र तृतीयार्थे प्रथमा, 'जोगठाणेहिं
कसिणेहिं' इत्यत्र तु तृतीया प्रथमार्थे। ततोऽयमर्थः-कृत्स्नानि योगस्थानानि सकलयोगस्थानसमुदाय इत्यर्थः, द्वाभ्यामावलिकाभ्यां
द्विसमयहीनाभ्यां आवलिकाद्विसमयद्विरूपहीनैरित्यर्थः, गुण्यन्ते, गुणिते च सति यावन्तः सकलयोगस्थानसमुदायास्तावन्ति स्पर्ध-
कान्यधिकानि भवन्ति, समयद्वयहीनावलिकाद्विकसमयप्रमाणानि अधिकानि भवन्तीत्यर्थः। तथाहि-पुरुषवेदस्य बन्धोदयादिव्यवच्छेदे
सति समयद्वयोनावलिकाद्विकबद्धं पुरुषवेदस्य दलिकं विद्यते, ततोऽवेदकस्य सतः संज्वलनत्रिकोक्तप्रकारेण योगस्थानापेक्षया समयद्व-
यहीनावलिकाद्विकसमयप्रमाणानि स्पर्धकानि वाच्यानि ॥४६॥

(उ०)—वेदेषु स्त्रीवेदपुरुषवेदनपुंसकवेदेषु प्रत्येकं स्पर्धकद्वयं भवति। तथाहि-कश्चिज्जन्तुरभवसिद्धिकप्रायोग्यजघन्यप्रदेशसत्क-
र्मा त्रसेषु समुत्पद्य तत्र देशविरतिं सर्वविरतिं चानेकशः समासाद्य चतुरश्च वारान्मोहनीयमुपशमय्य द्वात्रिंशदधिकं च सागरोपमाणां
शतं यावत्सम्यक्त्वमनुपाल्याप्रतिपतितसम्यक्त्वो नपुंसकवेदेन क्षपकश्रेणिमारूढः, ततो नपुंसकवेदस्य प्रथमस्थितौ द्विचरमसमये वर्त-
मानेनोपरितनस्थितिखण्डमन्यत्र सङ्क्रमं नीतम्। तथा च सत्युपरितनी स्थितिः सर्वात्मना निर्लेपीकृता। ततः प्रथमस्थितौ चरमसमये
सर्वजघन्यं यत्प्रदेशसत्कर्म तत्प्रथमं प्रदेशसत्कर्मस्थानम्। तत एकैकपरमाणुप्रक्षेपेण यथोत्तरं नानाजीवापेक्षयाऽनन्तानि प्रदेशसत्कर्मस्था-
नानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानं, इदमेकं स्पर्धकम्। तथा द्वितीयस्थितौ चरमखण्डे सङ्क्रम्यमाणे

चरमसमये प्रागुक्तक्षपितकर्मांशप्रकारेण सर्वजघन्यं यत्प्रदेशसत्कर्मस्थानं तदादि कृत्वा नानाजीवानपेक्ष्य यथायोगमुत्तरोत्तरवृद्धया निरन्तरं प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम्। तावन्ति तानि द्वितीयं स्पर्धकम्। अथवा यावत्प्रथमा स्थितिर्द्वितीया च स्थितिर्विद्यते तावदेकं स्पर्धकं, द्वितीयस्थितौ च चरमसंछोभेन क्षीणायां प्रथमस्थितौ समयमात्रायां शेषीभूतायां द्वितीयं स्पर्धकम्। एवमेव प्रकारद्वयेन स्त्रीवेदस्यापि स्पर्धकद्वयं भावनीयम्। पुरुषवेदे तु स्पर्धकद्वयमित्थं भावनीयम्–उदयचरमसमये जघन्यं प्रदेशसत्कर्म आदि कृत्वा नानाजीवापेक्षयैकैकपरमाणुवृद्धया निरन्तरं प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम्, एतानि च सर्वाण्यनन्तानि, एतान्येकं स्पर्धकम्। तथोदयचरमसमये द्वितीयस्थितौ चरमखण्डे संक्रम्यमाणे सर्वजघन्यप्रदेशसत्कर्मस्थानमादि कृत्वा प्राग्वद्द्वितीयं स्पर्धकं वाच्यम्। किंच 'अहिगा पुरिसस्सेत्यादि'–पुरुषवेदस्याधिकान्यपि स्पर्धकानि भवन्ति। कियन्तीति चेद्,उच्यते–द्वे आवलिके द्विसमयहीने, प्रथमायास्तृतीयार्थत्वात् द्विसमयहीनाभ्यां द्वाभ्यामावलिकाभ्यां गुणितानि, योगस्थानैः कृत्स्नैः–तृतीयायाः प्रथमार्थत्वात् कृत्स्नानि योगस्थानानि, आवलिकाद्विकसमयैर्द्विरूपहीनैर्गुणिता यावन्तः सकलयोगस्थानसमुदायास्तावन्ति स्पर्धकान्यधिकानि भवन्ति, समयद्वयहीनावलिकाद्विकसमयप्रमाणान्यधिकानि भवन्तीत्यर्थः। तथाहि–पुरुषवेदस्य बन्धोदयादिव्यवच्छेदे जाते सति समयद्वयोनावलिकाद्विकबद्धं दलिकं विद्यते। ततोऽवेदकस्य सतः संज्वलनत्रिकोक्तप्रकारेण योगस्थानान्यपेक्ष्य समयद्वयहीनावलिकाद्वयसमयप्रमाणानि स्पर्धकान्युपपद्यन्ते। इदं च द्वितीयस्थितिप्रकाराभिधानमेव द्रष्टव्यं (इदं च प्रकारान्तराभिधानाभिप्रायेण द्रष्टव्यं), "दो इगि संत हवा पए" इति पञ्चसङ्ग्रहप्रतीकस्य "अथवा एते द्वे स्पर्धके द्रष्टव्ये, यावत्प्रथमा स्थितिर्द्वितीया च स्थितिर्विद्यते तावदेकं स्पर्धकम्, प्रथमस्थितौ द्वितीयस्थितौ वाऽपरस्थितिक्षये शेषी-

द्वितीयस्थितिसत्कचरमदलिकप्रक्षेपे एका स्थितिः प्रथमस्थितेः शेषीभूता
भूतायां द्वितीयं स्पर्धकम्। तत्र स्त्रीवेदस्य नपुंसकवेदस्य तु द्वितीयस्थितिसत्कचरमदलिकप्रक्षेपे एका स्थितिः प्रथमस्थितेः शेषीभूता भवती" त्येवं वृत्तौ
तिष्ठति, पुरुषवेदस्य च प्रथमस्थितावुदयेन क्षीणायां समयद्वयोनावलिकाद्विकबद्धप्रमाणा द्वितीया स्थितिः शेषीभूता भवती" त्येवं वृत्तौ
व्याख्यानात् ॥४६॥

स्त्रीवेद-नपुंसकवेदयोः प्रदेशसत्तास्पर्धकौ २-२



पुंवेदस्य प्रदेशसत्तास्पर्धकचित्रम्



सव्वजहन्नाढत्तं खंधुत्तरओ निरंतरं उप्पिं। एगं उव्वलमाणी लोभजसा नोकसायाणं ॥४७॥

सव्वजहन्नाढत्तं खंधुत्तरओ निरंतरं उप्पिं'त्ति-एवं भणियाण विपक्खमाणाण वि सामन्नं सव्वजह

(चू०)—'सव्वजहन्नाढत्तं खंधुत्तरओ निरंतरं उप्पि'त्ति-एवं भणियाण विपक्खमाणाण वि सामन्नं सव्वजह
न्नाओ आढत्तं एक्केक्कणं कम्मखंधेण उत्तराणि णिरंतराणि अणंताणि ट्ठाणाणि 'उप्पि'त्ति जाव अप्पप्पणो उक्कस्संता
णयव्वाणि। 'एगं उव्वलमाणीणं'ति-एगं फड्डगं उव्वलमाणीण, कहं? भण्णति-सम्मत्तस्स ताव तह चेव सुहुम-
णिओएसु कम्मट्ठितिअणुपालेऊणं तसकातितेसु उप्पन्नो, तत्थ संमत्तं देसविरतिं विरतिं च बहुसो लद्धूण
कसाते उवसामेऊण वे छावट्ठीओ संमत्तं अणुपालेऊण मिच्छत्तं गतो, दीहाए उव्वलणद्धाए उव्वलियं तस्स जाहे
चरिमखंडगं अन्नत्थ संकामिज्जमाणं संकतं भवति, उदयावलिया गलति, दुसमयकालट्ठीइयं एगट्ठितीसेसा, ताहे
जहन्नगं संमत्तस्स पदेससंतकम्मं। ततो पदेसुत्तराणि ट्ठाणाणि जाव उक्कोसगं पदेससंतकम्मं सव्वं पि, तं एगं
फड्डगं। एवं सम्माभिच्छत्तस्स वि। एवं तेवीसाए उव्वलमाणीणं। णवरिं सम्मत्तकालविरहियं भाणियव्वं।
'लोभजसा णोकसायाणं'ति-लोभसंजलणजसाणं पि एगं फड्डगं। कहं? भण्णइ-अभवसिद्धियपाउग्गेण तसो
उप्पन्नो। तत्थ उवसामणकिरियं मोत्तूण सेसाहिं खवियकंमंसिगक्रियाहि दलियं खवेत्तु दीहकालं संजमं अणु-
पालेऊण खवणाए अब्भुट्ठितो तस्स चरिमसमते अहापवत्तकरणस्स जहन्नगं पदेससंतकम्मं। ततो आढत्तं
पदेसुत्तराणि ट्ठाणाणि अणंताणि जाव अप्पप्पणो उक्कोसगं। छण्हं णोकसायाणं कहं? भण्णइ-जहन्न अभव-
सिद्धियं पाउग्गेण तसेसु आगओ। तत्थ सम्मत्तं देसविरतिं विरतिं च बहुसो बहुसो लद्धूण चत्तारि वारे

कसाए उवसामेऊणं इत्थिवेयनपुंसगवेये पूरेऊण मणुस्सो जाओ, तत्थ दीहमद्धं संजमं पालेऊण खवणाए अब्भुट्ठिओ, तस्स चरिमखंडगचरिमसमदो अणिल्लेविए छण्हं कम्माणं जहन्नगं पदेससंतं। जहन्नगे आदि काउं निरंतराणि ट्ठाणाणि अणंताणि जाव अप्पप्पणो उक्कोसगं पदेससंतं एगं फड्डगं ॥४७॥

(मलय०)—संप्रत्युक्तानां वक्ष्यमाणानां च स्पर्धकानां सामान्यरूपं लक्षणमाह–'सव्वजहन्न'त्ति। सर्वजघन्यात् प्रदेशसत्कर्मस्थानादारब्धमेकैकेन कर्मस्कन्धेनोत्तरतः पूर्वस्मात्पूर्वस्मादुत्तरोत्तरेण निरन्तरं प्रदेशसत्कर्मस्थानजालं तावन्नेयं यावत् 'उप्पिं'–उपरितनं सर्वोत्कृष्टं प्रदेशसत्कर्मस्थानं भवति। इयमत्र भावना–सर्वजघन्यप्रदेशसत्कर्मस्थानादारभ्य योगस्थानापेक्षया एकैकेन कर्मस्कन्धेन वृद्धानि प्रदेशसत्कर्मस्थानानि निरन्तराणि तावन्नेतव्यानि यावदुत्कृष्टं प्रदेशसत्कर्मस्थानं भवति। एकैककर्मस्कन्धेनोत्तरत इति चोक्तं योगस्थानवशलब्धस्पर्धकापेक्षया, अन्यथा "चरमावलियपविट्ठेत्यादौ" यानि स्पर्धकान्युक्तानि तेष्वेकैकेन प्रदेशेनैवोत्तरोत्तरा वृद्धिः प्राप्यते इति। तदेवमुक्तं सामान्येन लक्षणं स्पर्धकानाम्। सम्प्रत्युद्वल्यमानप्रकृतीनां स्पर्धकप्ररूपणार्थमाह–'एगं उव्वलमाणी', एकं स्पर्द्धकं उद्वल्यमानप्रकृतीनां त्रयोविंशतिसंख्यानाम्। तत्र सम्यक्त्वस्य भावना क्रियते–अभव्यप्रायोग्यजघन्यस्थितिसत्कर्मा त्रसेषु मध्ये समुत्पन्नस्तत्र सम्यक्त्वं देशविरतिं चानेकवारान् लब्ध्वा चतुरश्च वारान् मोहनीयमुपशमय्य द्वात्रिंशदधिकं च सागरोपमाणां शतं यावत्सम्यक्त्वमनुपाल्य मिथ्यात्वं गतः, ततश्चिरोद्वलनया सम्यक्त्वमुद्वलयतो यदा चरमखंडं संक्रान्तं एका च शेषा उदयावलिका तिष्ठति, तामपि स्तिबुकसंक्रमेण मिथ्यात्वे संक्रमयति। संक्रमयतश्च या एका स्थितिर्द्विसमयमात्रावस्थाना शेषीभूता यदावतिष्ठते तदा सम्यक्त्वस्य सा जघन्यं प्रदेशसत्कर्मस्थानम्। ततो नानाजीवापेक्षया एकैकप्रदेशवृद्ध्या प्रदेशसत्कर्मस्थानानि तावन्नेतव्यानि यावद्गुणित-

एवमेव च शेषाणामप्युद्वलनयोग्यानां कर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानं भवति। इदमेकं स्पर्धकम्। एवं सम्यग्मिथ्यात्वस्यापि। एवमेव च शेषाणामप्युद्वलनयोग्यानां
वैक्रियैकादशकाहारकसप्तकोच्चैर्गोत्रमनुष्यद्विकरूपाणां प्रकृतीनाम्। नवरं तासां द्वात्रिंशदधिकसागरोपमशतप्रमाणः सम्यक्त्वकालो
मूलत एव न वक्तव्यः। 'लोभजसा' इत्यादि–संज्वलनलोभयशःकीर्त्योरपि एकं स्पर्धकम्। तथाहि–स एवाभवसिद्धिकप्रायोग्यजघन्यस्थि-
तिसत्कर्मा त्रसेषु मध्ये समुत्पन्नः। तत्र च चतुष्कृत्वो मोहोपशममन्तरेण शेषाभिः क्षपितकर्मांशक्रियाभिः कर्मदलिकं प्रभूतं क्षपयित्वा
चिरकालं च संयममनुपाल्य क्षपणायोत्थितः। तस्य यथाप्रवृत्तकरणचरमसमये जघन्यं प्रदेशसत्कर्म। ततस्तस्मादारभ्य नानाजीवापेक्षया
एकैकप्रदेशवृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम्। एवमेकं संज्वलन-
लोभयशःकीर्त्योः स्पर्धकम्। षण्णामपि च नोकषायाणां प्रत्येकमेकैकं स्पर्धकम्। तदपि चैवं–स एवाभवसिद्धिकप्रायोग्यजघन्यप्रदेश-
सत्कर्मा त्रसेषु मध्ये समुत्पन्नः। ततः सम्यक्त्वं देशविरतिं चानेकशो लब्ध्वा चतुरश्च वारान्मोहनीयमुपशमय्य स्त्रीवेदनपुंसकवेदौ च
भूयो भूयो बन्धेन हास्यादिदलिकसंक्रमेण च प्रभूतमापूर्य मनुष्यो जातस्तत्र चिरकालं संयममनुपाल्य क्षपणायोत्थितः। तस्य चरम-
खण्डचरमसमये वर्तमानं प्रत्येकं षण्णां नोकषायाणां प्रदेशसत्कर्म तत्सर्वजघन्यम्। ततस्तस्मादारभ्य नानाजीवापेक्षया एकैकप्रदेश-
वृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि अनन्तानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्म। एवमेकं षण्णां नोकषा-
याणां प्रत्येकं स्पर्धकम् ॥४७॥

(उ०)—सम्प्रत्युक्तानां वक्ष्यमाणानां च स्पर्धकानां सामान्यरूपं लक्षणमाह–सर्वजघन्यात्प्रदेशसत्कर्मस्थानादारब्धं स्कन्धेनैकैकेन
परमस्कन्धेनोत्तरतः पूर्वस्मादुत्तरोत्तरेण निरन्तरं प्रदेशसत्कर्मस्थानजालं तावन्नेयं यावत् 'उप्पिं' ति–उपरितनं सर्वोत्कृष्टं प्रदेशसत्कर्म-

स्थानमायाति। इहैकैककर्मस्कन्धोत्तरवृद्ध्यभिधानं योगस्थानवशलब्धस्पर्धकापेक्षया, अन्यथा तु प्रागेकैकप्रदेशोत्तरवृद्धिरेवाभिहितेति द्रष्टव्यम्। तदेवमुक्तं स्पर्धकानां सामान्यलक्षणं, अथोद्वलनप्रकृतीनां स्पर्धकप्ररूपणामाह–'एगं उव्वलमाणी', अत्र प्रथमैकवचनस्य षष्ठीबहुवचनपरत्वादुद्वल्यमानप्रकृतीनां त्रयोविंशतिसंख्यानामेकं स्पर्धकमित्यर्थः। तत्र सम्यक्त्वस्य तावद्भावना विधीयते–अभव्यप्रायोग्यजघन्यस्थितिसत्कर्मा त्रसेषु मध्ये समुत्पद्य तत्र सम्यक्त्वं देशविरतिं चानेकवारान् लब्ध्वा चतुरश्च वारान्मोहनीयमुपशमय्य द्वात्रिंशं सागरोपमशतं च यावत्सम्यक्त्वमनुपाल्य मिथ्यात्वं गतः, ततश्चिरोद्वलनया सम्यक्त्वमुद्वलयतो यदा चरमखण्डं संक्रमेण परिगलितमेका च शेषोदयावलिका तिष्ठति, तामपि च स्तिबुकसंक्रमेण मिथ्यात्वे संक्रमयति, संक्रमयतश्च यदैका स्थितिर्द्विसमयमात्राऽवशिष्यते तदा सम्यक्त्वस्य जघन्यं प्रदेशसत्कर्मस्थानं, ततो नानाजीवापेक्षयैकैकप्रदेशवृद्ध्याऽनन्तानि प्रदेशसत्कर्मस्थानानि तावन्नेतव्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानं भवति, इदमेकं स्पर्धकम्। एवं सम्यग्मिथ्यात्वस्यापि निरवशेषं वाच्यम्। एवमेव च शेषाणामप्युद्वलनयोग्यानां वैक्रियैकादशकाहारकसप्तकोच्चैर्गोत्रमनुष्यद्विकरूपाणां वाच्यम्। नवरं तासां द्वात्रिंशदधिकसागरोपमशतप्रमाणः सम्यक्त्वकालो मूलत एव न वाच्यः। इहोद्वलनप्रकृतीनामेकस्पर्धकाभिधानमुपलक्षणपरं द्रष्टव्यं, न तु शेषनिषेधपरं, यावता प्रागुक्तानामनुदयवतीनामिवासामप्यावलिकासमयसमान्येव स्पर्धकानि लभ्यन्त इति। उक्तं च पञ्चसंग्रहे–"अणुदयतुल्लं उव्वलणियाण जाणिज्ज दीहउव्वलणे त्ति"–उद्वलनप्रकृतीनां दीर्घोद्वलने चिरोद्वलने क्रियमाणे स्पर्द्धकपटलमनुदयतुल्यमनुदयप्रकृतितुल्यं जानीहीत्येतदर्थः। 'लोभजसा णोकसायाणं' ति–प्रथमायाः षष्ठ्यर्थत्वात् संज्वलनलोभयशःकीर्त्योर्नोकषायाणां च षण्णामेकं स्पर्धकम्। तत्राभव्यप्रायोग्यजघन्यस्थितिसत्कर्मा त्रसेषु मध्ये समुत्पन्नः, तत्र चतुष्कृत्वो मोहोपशममन्तरेण शेषाभिः क्षपितकर्मांशक्रियाभिः कर्मदलिकं प्रभूतं क्षपयित्वा

सं० लोभयशसोः प्रदेशसत्तास्पर्धकचित्रम्

चरमा स्थिति
(अत्रारभ्य १ स्प०)

OOOOOOOOOOOOOOOOO/

सं० लोभयशसोर्यथाप्रवृत्तकरणयुक्ता स्थितिः

हास्यषट्कस्य प्रदेशसत्तास्पर्धकचित्रम्

|OOOOO| OOOOOOOOOOOOOOOOOOOO|

चरमखण्डः अस्य चरमसमयावशिष्टप्रदेशाग्रत प्रारभ्य १ स्पर्धकं

क्षपणविधिना क्षीणा स्थितिः (हास्यषट्कस्य)

चिरकालं संयममनुपाल्य क्षपणायोत्थितः, तस्य यथाप्रवृत्तकरणचरमसमये जघन्यं प्रदेशसत्कर्म । ततस्तस्मादारभ्य नानाजीवापेक्षयैकैकप्रदेशवृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम् । एवमेकं संज्वलनलोभयशःकीर्त्योः स्पर्धकमवाप्यते । उपशमश्रेणिकरणे प्रभूतानां प्रकृत्यन्तरदलिकानां गुणसंक्रमेण समागमाज्जघन्यं प्रदेशसत्कर्म न प्राप्यत इति चतुष्कृत्वो मोहोपशममन्तरेणेति व्याकृतम् । हास्यादीनां षण्णां नोकषायाणां प्रत्येकमेकैकस्पर्धकभावना चेयम्—स एवाभव्यसिद्धिकप्रायोग्यजघन्यप्रदेशसत्कर्मा त्रसेषु मध्ये समुत्पन्नः, तत्र सम्यक्त्वं देशविरतिं चानेकशो लब्ध्वा चतुरश्च वारान्मोहनीयमुपशमय्य

स्त्रीवेदनपुंसकवेदौ भूयो भूयो बन्धेन हास्यादिदलिकसंक्रमेण च प्रभूतमापूर्य मनुष्यो जातः, तत्र चिरकालं संयममनुपाल्य क्षपणायोत्थितः, तस्य चरमखण्डचरमसमये यद्विद्यमानं प्रत्येकं षण्णां नोकषायाणां प्रदेशसत्कर्म तत्सर्वजघन्यम् । तत आरभ्य नानाजीवापेक्षया एकैकप्रदेशवृद्ध्याऽनन्तानि निरन्तराणि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम् । एवं षण्णां नोकशायाणां प्रत्येकमेकं स्पर्धकं संभवति ॥४७॥

मोहणिज्जवज्जाणं घातिकम्माणं फड्डुगनिरूवणत्थं भण्णति—

**ठिइखंडगविच्छेया खीणकसायस्स सेसकालसमा । एगहिया घाईणं निद्दापयलाण हिच्चेकं ॥४८॥**

(चू०)—घातीण ट्ठितीखंडगस्स वोच्छेदो खीणकसायद्धाते संखेज्जेसु भागेसु गतेसु भवति । 'खीणकसायस्स सेसकालसमा एगहिया घादीणं'ति—ट्ठितीखंडगवोच्छेयातो परओ खीणकसायस्स जो सेसो कालो तंमि जत्तिया फड्डुगा तत्तिया एगेण अहिगा घातिकम्माणं भवंति । कहं? भण्णति—ट्ठितिखंडगे वोच्छिन्ने अंतोमुहुत्तं खीयमाणं खीयमाणं एगट्ठितिसेसं जातं, तंमि समते पंचण्हं नाणावरण चउण्हं दंसणावरण पंचण्हं अंतरातियाणं, एएसिं खवियकम्मंसिगं पडुच सव्वजहन्नगं पदेससंतं, ततो पदेसुत्तराणि अणंताणि ट्ठाणाणि निरंतराणि लब्भंति । एयं एगं फड्डुगं । दो ट्ठितिविसेसा, तंमि वि तह चेव एगं फड्डुगं । तिन्नि ट्ठितिविसेसा, तंमि वि तह चेव एगं फड्डुगं । एवं निरंतरं ट्ठितिउत्तरं नेयव्वं जाव खीणकसायट्ठितिखंडगवोच्छेयकाले बितियसमतो, ठितीखंडगे वोच्छिन्ने एयाणि फड्डुगाणि लद्धाणि । ट्ठितिखंडगस्स चरिमसमयं जहन्नगं पदेससंतकम्मं आदिं काऊण जाव अप्पप्पणो उक्कोसं

संतकम्मं एगं एगं फड्डगं, तम्हा ट्ठितिखंडवोच्छेयातो खीणकसायसेसकालसमा एगेण अहिगा फड्डगा भवंति घातिकम्माणं। 'णिद्दापयलाण हिच्चेगं'ति–निद्दापयलाणं एवं चेव, णवरि एगेण फड्डगेण ऊणं भवति। कहं? भण्णति–तेसिं उदयाभावातो एगं फड्डगस्स संभवो नत्थि, (अणु)दयट्ठितिगयं उदयट्ठितिसु थिबुगसंकमेण संकमतित्ति काउं ॥४८॥

(मलय०)—सम्प्रति मोहनीयवर्जानां घातिकर्मणां स्पर्द्धकनिरूपणार्थमाह–'ठिइखंडग'त्ति। क्षीणकषायस्य 'स्थितिखण्डव्यवच्छेदात्'–स्थितिघातव्यवच्छेदात् परतो यः शेषकालस्तिष्ठति तत्समानि शेषकालसमयसमानि स्पर्धकानि एकाधिकानि घातिकर्मणां भवन्ति। निद्राप्रचलयोस्तु 'हित्वा'–परित्यज्य एकं चरमं स्थितिगतं स्पर्द्धकं, शेषाणि वाच्यानि, निद्राप्रचलयोर्हि उदयाभावात् स्वस्वरूपेण चरमसमये दलिकं न प्राप्यते किन्तु परप्रकृतिरूपेण, तेन तयोरेकं स्पर्द्धकं चरमस्थितिगतं परित्यज्यते। स्पर्धकानां चेयं भावना–क्षीणकषायाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु एकस्मिंश्च संख्येयतमेऽन्तर्मुहूर्तप्रमाणे भागेऽवतिष्ठमाने ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकानां स्थितिसत्कर्म सर्वापवर्तनयाऽपवर्त्य क्षीणकषायाद्धासमं करोति। निद्राप्रचलयोस्त्वेकसमयहीनम्। अत्र च कारणं प्रागेवोक्तम्। तदानीं च स्थितिघातादयो निवृत्ताः। यदपि च क्षीणकषायाद्धासमं स्थितिसत्कर्म कृतं, तदपि च क्रमेण यथासंभवमुदयोदीरणाभ्यां क्षयमुपगच्छत्तावद्वक्तव्यं यावदेका स्थितिः शेषीभवति। तस्यां च क्षपितकर्मांशस्य सर्वजघन्यं यत्प्रदेशसत्कर्म तत्प्रथमं स्थानम्, तत एकस्मिन् परमाणौ प्रक्षिप्ते सति द्वितीयं प्रदेशसत्कर्मस्थानम्। एवमेकैकपरमाणुवृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्य सर्वोत्कृष्टं प्रदेशसत्कर्मस्थानम्। इदमेकं स्पर्धकम्। द्वयोश्च स्थित्योः शेषीभूतयोरुक्तप्रकारेण

द्वितीयं स्पर्धकम् । तिसृषु स्थितिषु शेषीभूतासु तृतीयं स्पर्धकम् । एवं क्षीणकषायाद्धासमीकृते सत्कर्मणि यावन्तः स्थितिविशेषास्तावन्ति स्पर्धकानि वाच्यानि । चरमस्य च स्थितिघातस्य चरमं प्रक्षेपमादौ कृत्वा पश्चानुपूर्व्या प्रदेशसत्कर्मस्थानानि यथोत्तरं वृद्धानि तावद्वक्तव्यानि यावदात्मीयमात्मीयं सर्वोत्कृष्टं प्रदेशसत्कर्म तावदेतदपि सकलनिजनिजस्थितिगतं यथासंभवमेकैकं स्पर्धकं द्रष्टव्यम् । ततस्तेनाधिकानि स्थितिघातव्यवच्छेदात् परतः क्षीणकषायाद्धासमयसमानि स्पर्धकानि भवन्ति । निद्राप्रचलयोस्तु द्विचरमस्थितिमधिकृत्य स्पर्धकानि वाच्यानि, चरमसमये तद्दलिकस्याप्राप्यमाणत्वाम् । तत एकेन हीनानि तस्य स्पर्धकानि द्रष्टव्यानि ॥४८॥

(उ०)—अथ मोहनीयवर्जानां घातिकर्मणां स्पर्धकनिरूपणार्थमाह—क्षीणकषायस्य स्थितिखण्डव्यवच्छेदात् परतो यः शेषः कालस्तिष्ठति स्वसंख्येयभागलक्षणस्तत्समयसमानि स्पर्धकानि घातिकर्मणामेकाधिकानि भवन्ति। निद्राप्रचलयोस्तु हित्वा परित्यज्यैकं चरमस्थितिगतं स्पर्धकं शेषाणि वाच्यानि, निद्राप्रचलयोर्ह्युदयाभावात् स्वरूपेण चरमसमये दलिकं न प्राप्यते, किं तु परप्रकृतिरूपेण, तेन तयोरेकस्पर्धकं चरमस्थितिगतं त्यज्यते, शेषघातिकर्मणां तूदयवत्वात्तन्न परित्यज्यते । अधिकृतस्पर्धकभावना चेयम्—क्षीणकषायाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वेकस्मिंश्च संख्येयतमेऽन्तर्मुहूर्त्तप्रमाणे भागेऽवतिष्ठमाने ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकानां स्थितिसत्कर्म सर्वापवर्त्तनयाऽपवर्त्य क्षीणकषायाद्धासमं क्रियते, निद्राप्रचलयोस्त्वेकसमयहीनं, तदानीं च स्थितिघातादयो निवर्त्तन्ते, ततः क्षीणकषायाद्धासमीकृतं स्थितिसत्कर्म यथायोगमुदयोदीरणाभ्यां क्षयमुपगच्छत्तावत्स्थितिविशेषतामापद्यते यावदेका स्थितिः शेषीभवति। तस्यां च क्षपितकर्मांशस्य यत्सर्वजघन्यं प्रदेशसत्कर्म तत्प्रथमं प्रदेशसत्कर्मस्थानम्, तत एकस्मिन् परमाणौ प्रक्षिप्ते द्वितीयं, परमाणुद्वयप्रक्षेपे तृतीयं, एवमेकैकपरमाणुवृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्य सर्वो-

## ज्ञानावरणादि १४ प्रकृतीनां प्रदेशसत्तास्पर्धकचित्रम् ( निद्राद्विकस्याऽपि )



...शेषीभूततयोरुक्तप्रकारेण द्वितीयं स्पर्धकम्। तिसृषु च स्थितिषु शेषीभूतासु
त्कृष्टं प्रदेशसत्कर्मस्थानम्, इदमेकं स्पर्धकम्। द्वयोः स्थित्योः शेषीभूतयोरुक्तप्रकारेण द्वितीयं स्पर्धकम्। तिसृषु च स्थितिषु शेषीभूतासु
तृतीयं स्पर्धकम्। एवं क्षीणकषायाद्धासमीकृते स्थितिकर्मणि यावन्तः स्थितिविशेषास्तावन्ति स्पर्धकानि भवन्ति। चरमस्य च स्थिति-
घातस्य चरमं प्रक्षेपमादिं कृत्वा पश्चानुपूर्व्या प्रदेशसत्कर्मस्थानानि यथोत्तरं वृद्धानि तावद्वाच्यानि यावन्निजं निजं सर्वोत्कृष्टं प्रदेश-
सत्कर्म, तत एतदपि सकलस्थितिगतमेकं स्पर्धकं द्रष्टव्यम्। ततस्तेनाधिकानि स्थितिघातव्यवच्छेदात् परतो भाविक्षीणकषायाद्धासमय-
समानि स्पर्धकानि भवन्ति। निद्राप्रचलयोस्तु द्विचरमस्थितिमवधीकृत्य स्पर्धकानि वाच्यानि, चरमसमये तद्दलिकाप्राप्तेः। तत एकेन
हीनानि तयोः स्पर्धकानि द्रष्टव्यानि ॥४८॥

**सेलेसिसंतिगाणं उदयवईणं तु तेण कालेणं। तुल्लाणेगहियाइं सेसाणं एगउणाइं ॥४९॥**

(चू०)—सेलेसो अजोगी, तस्संतकम्मिगसंतिगा उदयवतीणं (अणु)दयवतीणं, कयरासिं? भन्नति—नव नामपगती उच्चागोयं सायासायं मणुयायु एयासिं पगतीण 'तेण कालेण तुल्लाणि' त्ति—अजोगिकालसमयतुल्लाणि फड्डगाणि एगहिगाणित्ति एगेण अहिगाणि। कहं? भण्णइ—अजोगिकेवलिचरिमसमते सव्वजहन्नपदेससंत-कम्मंसियस्स एगं ठाणं, पदेसुत्तराणि अणंतराणि लब्भंति, तत्थ एगं फड्डगं। दोठितिसेसे एवं चेव एगं फड्डगं। एवं चेव निरंतरं णेयव्वं जाव अजोगिपढमसमते एगं फड्डगं। सयोगि केवलि चरिमसमय अंतिमट्ठितिखंडगस्स जहन्नगनाउण (जहण्णगं आदि काऊण जावुक्कसं) एगं फड्डगं। तम्हा अजोगिकेवलिकालसमयातो एक्केण अहि-गाणि फड्डगाणि उदयवतीणं पगतीणं। सेसाणं एगहीणाइं—अणुदयवतीणं उदयाभावातो एगेण फड्डगेण ऊणाणि

ताणि चेव फड्डगाणि तहा चेव णेयव्वाणि। के ते? भण्णति-तेरसनाम णवनामउच्चागोयसातासातविरहिया
णामगोयाकम्मा यासीती, तेसिं कम्माणं एगेण ऊणाणि फड्डगाणि भवंति ॥४९॥

(मलय०)—'सेलेसि'त्ति। शैलेशी अयोग्यवस्था, तस्यां सत्ता यासां प्रकृतीनां ताः शैलेशीसत्ताकाः, ताश्च द्विधा, तद्यथा-उदय-
वत्योऽनुदयवत्यश्च। तत्रोदयवत्यो मनुष्यगतिमनुष्यायुःपञ्चेन्द्रियजातित्रससुभगादेयपर्याप्तबादरयशःकीर्तितीर्थकरोच्चैर्गोत्रसातासाता-
न्यतरवेदनीयरूपा द्वादश। तासां प्रकृतीनां तेनायोगिकालेन तुल्यानि स्पर्धकानि एकैकेनाधिकानि भवन्ति, अयोगिकाले यावन्तः
समयास्तावन्ति स्पर्द्धकानि एकेनाधिकानि भवन्तीत्यर्थः। कथमिति चेद्, उच्यते-अयोगिकेवलिनश्चरमसमये क्षपितकर्म्मांशमधिकृत्य
यत्सर्वजघन्यं प्रदेशसत्कर्मस्थानं तत् प्रथमं स्थानम्। तत एकस्मिन् परमाणौ प्रक्षिप्ते सति द्वितीयं प्रदेशसत्कर्मस्थानम्। एवं नानाजीवापे-
क्षया एकैकप्रदेशवृद्धया तावत्प्रदेशसत्कर्मस्थानानि द्रष्टव्यानि यावद्गुणितकर्मांशस्य सर्वोत्कृष्टं प्रदेशसत्कर्मस्थानं, इदमेकं स्पर्धकम्।
तत एवमेव द्वयोः स्थित्योः शेषीभूतयोर्द्वितीयं स्पर्धकं, तिसृषु स्थितिषु तृतीयम्। एव निरन्तरं तावदवगन्तव्यं यावदयोगिप्रथमसमयः।
तथा सयोगिकेवलिचरमसमये चरमस्थितिखण्डसत्कं चरमप्रक्षेपमादि कृत्वा यावदात्मीयं सर्वोत्कृष्टं प्रदेशसत्कर्म तावदेतदपि सकलस्व-
स्थितिगतमेकं स्पर्धकं द्रष्टव्यम्। ततोऽयोगिकेवलिगुणस्थानके यावन्तः समयास्तावन्ति स्पर्धकानि एकाधिकानि उदयवतीनां
प्रकृतीनां प्रत्येकं भवन्ति। शेषाणां त्वनुदयवतीनां प्रकृतीनां त्र्यशीतिसंख्यानां तावन्ति स्पर्धकान्येकेन हीनानि भवन्ति। यतस्ता
अयोगिकेवलिचरमसमये उदयवतीषु मध्ये स्तिबुकसंक्रमेण संक्रम्यन्ते। ततस्तासां चरमसमयगतं स्पर्धकं न प्राप्यत इति तेन हीनानि
तासां स्पर्धकानि भवन्ति। इह यद्यपि मनुष्यगत्यादीनां 'एगं उव्वलमाणी' इत्यनेन ग्रन्थेन प्रागेव स्पर्धकप्ररूपणा कृता तथापि इहापि

तासां स्पर्धकानि प्राप्यन्त इति भूय उपादानम् । एवं करणेष्वपि बन्धनादिषु यथासंभवं स्पर्धकानि वाच्यानि ॥४९॥

अयोगिन्युदयवतीनां प्रदेशसत्तास्पर्धकचित्रम्



अयोगिन्यनुदयवतीनां प्रदेशसत्तास्पर्धकचित्रकम्




(उ०)—शैलेशी अयोग्यवस्था, तस्यां सत्ता यासां प्रकृतीनां ताः शैलेशीसत्ताकाः, ताश्च द्विधा—उदयवत्योऽनुदयवत्यश्च। तत्रोदयवत्यो मनुजगतिमनुजायुःपञ्चेन्द्रियजातित्रसशुभगादेयपर्याप्तबादरयशःकीर्त्तितीर्थकरोच्चैर्गोत्रान्यतरवेदनीयरूपा द्वादश, तासां तेनायोगिकालेन तुल्यानि अयोगिसमयसमसंख्यानीत्यर्थः, स्पर्धकान्येकेनाधिकानि भवन्ति। तथाहि—अयोगिकेवलिनश्चरमसमये क्षपितकर्मांशमपेक्ष्य यत्सर्वजघन्यं प्रदेशसत्कर्मस्थानं तत्प्रथमं, तत एकैकप्रदेशवृद्ध्या नानाजीवापेक्षयाऽनन्तानि प्रदेशसत्कर्मस्था-

नानि तावद्द्रष्टव्यानि यावद्गुणितकर्मांशस्य सर्वोत्कृष्टं प्रदेशसत्कर्मस्थानं, इदमेकं स्पर्धकम्। एवमेव द्वयोः स्थित्योः शेषीभूतयोर्द्वितीयं स्पर्धकं, तिसृषु स्थितिषु तृतीयम्। एवं निरन्तरं तावद्वाच्यं यावदयोगिप्रथमसमयः। तथा सयोगिकेवलिचरमसमये चरमस्थितिघातस्य यश्चरमः प्रक्षेपस्तत आरभ्य पश्चानुपूर्व्या स्वस्वसर्वोत्कृष्टप्रदेशसत्कर्मस्थानान्तमपि सकलस्वस्वस्थितिगतमेकैकं स्पर्धकं द्रष्टव्यम्। ततोऽयोगिकेवलिगुणस्थाने यावन्तः समयास्तावन्ति स्पर्धकान्येकेनाधिकान्युदयवतीनां प्रत्येकं भवन्ति, शेषाणां त्वनुदयवतीनां त्र्यशीति संख्यानां तावन्ति स्पर्धकान्येकेनोनानि भवन्ति, यतस्तासामयोगिकेवलिचरमसमये उदयवतीषु स्तिबुकसंक्रमेण संक्रम्यमाणानां चरमसमयगतं स्पर्धकं न प्राप्यत इति तेन हीनानि तासां स्पर्धकानि भवन्ति। यद्यपीह मनुष्यगत्यादीनामुद्वलनप्रकृतिषु मध्ये प्रागेव स्पर्धकप्ररूपणा कृता तथापीहापि तासां स्पर्धकानि प्राप्यन्त इति भूय उपादानम् ॥४९॥

**संभवतो ठाणाइं कम्मपएसेहि होंति नेयाइं। करणेसु य उदयम्मि य अणुमाणेणेवमेएणं ॥५०॥**

(चू०)—'संभवतो'त्ति–जत्थ जहा घडति जुज्जति 'ट्ठाणाति'त्ति–पदेससंतट्ठाणाइं कम्मपदेसेहिं होंति 'णेयातिं'–णेयव्वाइं 'करणेसु य उदयंमिय'त्ति–बंधणसंकमणउदीरणाउवसामणनिहत्तिणिकायणाकरणेसु य उदयंमि य पदेससंतट्ठाणाणि एवं चेव णेयव्वातिं ति संबज्झति। 'अणुमाणेणेव मेएणं'ति–एएण संतकम्मभणियाण विहिणा पदेससंतट्ठाणाणि एवं चेव णेयव्वातिं ति संबज्झति। बंधणकरणे जहन्नगं जोगट्ठाणमादिं काऊणं जाव उक्कोसगं जोगट्ठाणं ति एत्तिया पदेसबंधट्ठाणविकप्पा, संकमणे वि जहन्नपदेससंकमणं जाव आतिं काउणं उक्कोसगं पदेससंकमट्ठाणं ति, उदीरणा उवसामणा एवं चेव, निहत्तीणिकायणाउदयट्ठाणेसु वि एमेव ॥५०॥

स्थानानि प्रदेशसत्कर्मस्थानानि । 'करणेषु'–बन्धनादिषु उदये
(मलय०)— तथा चाह–'संभवतो'त्ति । 'संभवतः'–संभवमाश्रित्य स्थानानि प्रदेशसत्कर्मस्थानानि । 'करणेषु'–बन्धनादिषु उदये
च । 'कर्मप्रदेशेभ्यः'–कर्मप्रदेशानधिकृत्य 'ज्ञेयानि'–ज्ञातव्यानि । कथमित्याह–एवमुपदर्शितेन, एतेन प्रागुक्तेन अनुमानेन–प्रकारेण
ज्ञातव्यानि । तथाहि–बन्धनकरणे जघन्यं योगस्थानमादिं कृत्वा यावदुत्कृष्टयोगस्थानमेतावन्ति प्रदेशसत्कर्मस्थानानि बन्धमाश्रित्य
प्राप्यन्ते, तावन्ति चैकं स्पर्धकम् । एवं संक्रमणादिष्वपि प्रत्येकं यथायोगं भावनीयम् ॥५०॥
(उ०)—बन्धनादिकरणेष्वपि यथायोगमित्थंभूतस्पर्धकातिदेशमाह–एवमुपदर्शितेन, एतेन बुद्धिसमीपतरवर्तिनाऽनुमानेन प्रकारेण
संभवतः–संभवमाश्रित्य स्थानानि प्रदेशसत्कर्मस्थानानि करणेषु बन्धनादिषूदये च कर्मप्रदेशेभ्यः कर्मप्रदेशानधिकृत्य ज्ञेयानि–ज्ञात-
व्यानि । तथाहि–बन्धनकरणे जघन्ययोगस्थानादारभ्य यावदुत्कृष्टं योगस्थानं तावन्ति प्रदेशसत्कर्मस्थानानि बन्धमाश्रित्य प्राप्यन्ते,
तावन्ति चैकं स्पर्धकं, एवं संक्रमादिष्वपि प्रत्येकं यथायोगं भावनीयम् ॥५०॥

**करणोदयसंताणं पगइठाणेसु सेसगतिगे य । भूयक्कारप्पयरो अवठिओ तह अवत्तव्वो ॥५१॥**

(चू०)—'करणोदयसंताणं पगतिट्ठाणेसु'त्ति–अट्ठ करणाणं उदयसंताणगपगतिट्ठाणेसु 'सेसतिविहे य'त्ति–
तंमि चेव ठितिअणुभागपदेसट्ठाणेसु य 'भूओगारप्पतरो अवट्ठितो तह अवत्तव्वो'त्ति ॥५१॥
(मलय०)—'करणोदयसंताणं'ति–अष्टानां करणानां उदयसत्तयोश्च प्रकृतिस्थानेषु 'सेसगतिगे य'त्ति–शेषके च त्रिके स्थित्यनुभा-
गप्रदेशरूपे प्रत्येकं चत्वारो विकल्पा ज्ञातव्याः, तद्यथा–भूयस्कारः, अल्पतरः, अवस्थितः, अवक्तव्यश्च ॥५१॥
(उ०)—अष्टानां करणानामुदयसत्तयोश्च प्रकृतिस्थानेषु शेषके च त्रिके स्थित्यनुभागप्रदेशरूपे प्रत्येकं चत्वारो भेदा ज्ञातव्याः,

तथाहि—भूयस्कारोऽल्पतरोऽवस्थितोऽवक्तव्यश्च ॥५१॥

एएसिं चउण्हं लक्खणं भण्णइ—

**एगादहिगे पढमो एगाईऊणगम्मि बिइओ उ । तत्तियमेत्तो तइओ पढमे समये अवत्तव्वो ॥५२॥**

एगादहिगे पढमो एगाईऊणगम्मि बिइओ उ । तत्तियमेत्तो तइओ पढमे समये अवत्तव्वो ॥५२॥

(चू०)—'एगादहिगे पढमो'त्ति–एगेण बिहि तिहि वा एवमादीहिं अहिगं ट्ठाणं संकमंतस्स पढमं ति भूतोक्कारो वुच्चति। 'एगादीऊणगम्मि बिइयो'त्ति–एगादीहिं ऊणगं ट्ठाणं संकमंतस्स 'बिइओ'त्ति–अप्पतरो वुच्चति। 'तत्तिय-मेत्ते'–वट्टमाणस्स 'तइओ'त्ति–अवट्ठितो वुच्चति । 'पढमे समए अवत्तव्वो'त्ति–तं तं भावं पडिवज्जमाणस्स अभावाते अवत्तव्वगं वुच्चति ॥५२॥

(मलय०)—एतेषां चतुर्णां लक्षणमिदम्—'एगादहिगे'त्ति। इह बन्धमाश्रित्य भावना क्रियते । बन्धो द्विधा–मूलप्रकृतीनामुत्तरप्रकृ-तीनां च। तत्र मूलप्रकृतीनां बन्धः कदाचित् अष्टानां, कदाचित् सप्तानां कदाचिद् षण्णां, कदाचिदेकस्याः। तत्र यदा स्तोकाः प्रकृती-राबध्नन् परिणामविशेषतो भूयसीः प्रकृतीर्बन्धाति, यदा सप्त बद्ध्वा अष्टौ बध्नाति, यद्वा षट् एकां च बद्ध्वा सप्त, तदा स बन्धो भूयस्कारः। तथा चाह—'एगादहिगे पढमो', एकादिभिरेकद्वित्र्याभिः प्रकृतिभिरधिके बन्धे प्रथमः प्रकारो भवति, भूयस्कारो बन्धो भवतीत्यर्थः। यदा तु प्रभूताः प्रकृतीर्बध्नन् परिणामविशेषतः स्तोका बद्धुमारभते, यथाऽष्टौ बद्ध्वा सप्त बध्नाति,सप्त वा बद्ध्वा षट्, षड्वा बद्ध्वा एकां, तदानीं स बन्धोऽल्पतरः।तथा चाह—'एगाईऊणगम्मि बिइओ उ',एकादिभिरेकद्वित्र्यादिभिः प्रकृतिभिरूने बन्धे द्वितीयः प्रकारः अल्पतर इत्यर्थः। तथा स एव भूयस्कारो वा द्वितीयादिषु समयेषु तावन्मात्रतया प्रवर्तमानोऽवस्थित इति व्यपदेशं लभते । तथा चाह 'तत्ति-

मेत्तो तइओ', तावन्मात्रस्तृतीयोऽवस्थित इत्यर्थः। एते त्रयोऽपि प्रकारा मूलप्रकृतीनां संभवन्ति । चतुर्थो न संभवति । न हि मूलप्रकृतीनां सर्वासां बन्धव्यवच्छेदे सति भूयोऽपि बन्धः संभवति येन चतुर्थो बन्धः स्यात् । तत उत्तरप्रकृतीरधिकृत्य स वेदितव्यः । यथा मोहनीयस्य तद्गतसर्वोत्तरप्रकृतिबन्धव्यवच्छेदे सति उपशान्तमोहगुणस्थानकात् प्रतिपाते भूयोऽपि बन्धारम्भप्रथमसमये, स हि तदानीं न भूयस्कारो वक्तुं शक्यते, नाप्यल्पतरः, नाप्यवस्थितः, तल्लक्षणायोगात्, ततोऽसाववक्तव्य इत्युच्यते, भूयस्कारादिनाम्ना वक्तुमशक्यत्वात्। एवमुत्तरप्रकृतीरधिकृत्य ज्ञानावरणीयादीनां वेदनीयवर्जानामवक्तव्यो भावनीयः। वेदनीयस्य त्ववक्तव्यो न संभवति, तस्य हि सर्वथा बन्धव्यवच्छेदः सयोगिकेवलिचरमसमये, न च ततः प्रतिपातो येन भूयो बन्धः प्रवर्तमानः प्रथमसमयेऽवक्तव्यः स्यात् । तदेवं मूलप्रकृतीरधिकृत्यावक्तव्यवर्जाः शेषास्त्रयः प्रकाराः, उत्तरप्रकृतीस्त्वधिकृत्य चत्वारोऽपि प्रकाराः संभवन्ति । यथा च बन्धे चत्वारोऽपि प्रकारा भाविता एवं संक्रमे उद्वर्तनायामपवर्तनायामुदीरणायामुपशमनायामुदये सत्तायां च प्रकृतिस्थानेषु स्थित्यनुभागप्रदेशस्थानेषु च यथायोगं स्वयमेव भावनीयाः ॥५२॥

(उ०)—एतेषां चतुर्णां लक्षणमाह–स्तोकप्रकृत्यादिबन्धाद्यनन्तरमेकाद्यधिकप्रकृत्यादिबन्धादिसम्भवे प्रथमो नाम भूयस्कारः । प्रभूतप्रकृत्यादिबन्धाद्यनन्तरमेकाद्यूनबन्धादिसंभवे द्वितीय इत्यल्पतरः । यावन्मात्रः प्रथमे समये बन्धादिस्तावन्मात्र एव द्वितीयादिसमये प्रवर्तमानस्तृतीयो भेदोऽवस्थितः । यदा तु सर्वथैवाबन्धकादिर्भूत्वा भूयोऽपि बन्धादिकमारभते तदा स बन्धादेश्चतुर्थो भेदोऽवक्तव्यनामा, भूयस्कारादिशब्देन वक्तुमशक्यत्वात् । इह प्रकृतिबन्धोदयोदीरणासत्ताश्रितं भूयस्कारादिस्वरूपं पञ्चसंग्रहानुसारेण भाव्यते—

तत्र मूलप्रकृतीनां चत्वारि बन्धस्थानानि एक षट् सप्ताष्टौ च । तत्रैकां प्रकृतिं सातवेदनीयलक्षणां बध्नत एका, सा चोपशान्तमोहादेः।

षट् प्रकृतीर्बध्नतः षट्, ताश्च सूक्ष्मसम्परायस्य। सप्त बध्नतां सप्त, ताश्च मिश्रापूर्वकरणानिवृत्तिबादराणां सदा, शेषाणां चायुर्बन्धाभावे। अष्टौ बध्नतामष्टौ, ताश्च मिश्रवर्जितमिथ्यादृष्ट्याद्यप्रमत्तसंयतान्तानामायुर्बन्धकाले द्रष्टव्याः। अत्र त्रयो भूयस्काराः, तथाहि–उपशान्तमोहगुणस्थानके एकां प्रकृतिं बद्ध्वा ततः प्रतिपत्य सूक्ष्मसम्परायगुणस्थाने षट् प्रकृतीर्बध्नतः प्रथमे समये भूयस्कारः, शेषकालं त्ववस्थितः, एष प्रथमो भूयस्कारः। ततोऽपि प्रतिपततोऽनिवृत्तिबादरसम्पराये सप्त बध्नतः प्रथमसमये द्वितीयो भूयस्कारः, शेषकालं त्ववस्थितः। सप्त बद्ध्वाऽष्टौ प्रमत्तादिगुणस्थानेषु बध्नतः प्रथमसमये तृतीयो भूयस्कारः, शेषकालं त्ववस्थितः। तथा त्रयोऽल्पतराः, ते चैवम्–अष्ट बद्ध्वा सप्त बध्नतः प्रथमे समयेऽल्पतरः, शेषकालं त्ववस्थितः, इत्येष प्रथमोऽल्पतरः। यदा तु सप्त बद्ध्वा सूक्ष्मसम्परायगतः षड् बध्नाति तदा प्रथमसमये द्वितीयोऽल्पतरः, शेषकालं त्ववस्थितः। षड् बद्ध्वोपशान्तमोहे क्षीणमोहे वैकां बध्नतः प्रथमसमये तृतीयोऽल्पतरः, शेषकालं त्ववस्थितः। तदेवं मूलप्रकृतिबन्धस्थानेषु त्रयो भूयस्कारास्त्रयोऽल्पतराश्चत्वारश्चावस्थिता बन्धाश्चतुर्ष्वपि स्थानेष्ववस्थितस्य प्राप्यमाणत्वादिति सिद्धम्। अवक्तव्यबन्धस्तु मूलप्रकृतीनां न संभवति, सर्वमूलप्रकृत्यबन्धकस्यायोगिकेवलिनो भूयोऽपि बन्धकत्वाभावात्।

उदयस्थानानि मूलप्रकृतीनां त्रीणि–अष्टौ सप्त चतस्रश्चेति। तत्राष्टानामुदयः सूक्ष्मसम्परायं यावत्, मोहोदयं विना सप्तानामुपशान्ते क्षीणमोहे वा, चतसृणां घातिवर्जानां केवलिनः, अत्रैक एव भूयस्कारः। उपशान्तमोहे सप्तवेदको भूत्वा ततः प्रतिपाते भूयोऽप्यष्टौ वेदयत इति। चतुर्वेदकस्तु भूत्वा सप्ताष्टौ वा न वेदयते, चतुर्वेदकत्वस्य सयोग्यवस्थायां भावात्, ततश्च प्रतिपाताभावात्, तत एक एवात्र भूयस्कारो, द्वावल्पतरौ, त्रयोऽवस्थिताः, अवक्तव्यस्तु नास्ति, सर्वकर्मावेदकस्य सिद्धस्य भूयोऽपि कर्मवेदकत्वासंभवात्।

बंधस्थानेषु भूयस्कारादयः

उदीरणास्थानानि मूलप्रकृतीनां पञ्च। तथाहि—अष्टौ, सप्त, षट्, पञ्च द्वे चेति। अत्र त्रयो भूयस्काराः, तथाहि—उपशान्तमोहः पञ्चकोदीरको भूत्वा प्रतिपतन् सूक्ष्मसम्पराये समागतः षण्णामुदीरको भवति, ततोऽपि प्रतिपतन् प्रमत्तसंयतगुणस्थानादावागत आयुष्यावलिकाशेषे च सप्तानां, तत ऊर्ध्वं परभवेऽष्टानां, द्विकोदीरकास्तु क्षीणमोहः सयोगिकेवली च, न चानयोरेकतरोऽपि प्रतिपततीत्येतदपेक्षया भूयस्कारो न लभ्यते इति त्रय एव भूयस्काराः, चत्वारोऽल्पतराः, पञ्चावस्थिताः, अवक्तव्यस्त्वत्रापि नास्ति, सर्वमूलप्रकृत्यनुदीरकस्यायोगिकेवलीनो भूयोऽप्युदीरकत्वाभावात्।

सत्तास्थानानि मूलप्रकृतीनां त्रीणि-अष्टौ सप्त चतस्रश्चेति। अत्रैकोऽपि भूयस्कारो न संभवति, सप्तादिसत्ताकस्य क्षीणमोहादेः प्रतिपाताभावेनाष्टादिसत्ताकत्वासंभवात्, द्वावल्पतरौ, त्रयोऽवस्थिताः, अवक्तव्यस्त्वत्रापि नास्ति, क्षीणशेषकर्मणो भूयः कर्मसत्ताया असंभवात्।

तदेवमुक्ता मूलप्रकृतीनां बन्धोदयोदीरणासत्तास्थानेषु भूयस्कारादयः, सम्प्रत्युत्तरप्रकृतीनां तेषु तेऽभिधातव्याः—

तत्र दर्शनावरणीयस्य त्रीणि बन्धस्थानानि—नव षट् चतस्रश्चेति। तत्र सर्वप्रकृतिसमुदायो नव, तद्बन्धश्चाद्यगुणस्थानद्वयं यावत्, ततः परं स्त्यानर्द्धित्रिकबन्धव्यवच्छेदे सम्यग्मिथ्यादृष्ट्यादिषु षड्विधं बध्नतः प्रथमसमये प्रथमोऽल्पतरबन्धः। एतत् षड्विधं बन्धस्थानमपूर्वकरणप्रथमसप्तभागं यावत्, ततः परं निद्राप्रचलाबन्धव्यवच्छेदे चतुर्विधं बध्नत आद्यसमये द्वितीयोऽल्पतरबन्धः। एतच्चतुर्विधं बन्धस्थानं सूक्ष्मसम्परायं यावत्, ततः कस्यचित् प्रतिपत्य षड्विधं बध्नतः प्रथमसमये प्रथमो भूयस्कारबन्धः। ततोऽपि प्रतिपत्य नवविधं बध्नत आद्यसमये द्वितीयो भूयस्कारबन्धः। अत्र नवविधादिषु त्रिष्वपि द्वितीयादिसमयेषु तदेव बध्नतस्त्रयोऽवस्थि-

तबन्धाः। यदा तूपशान्तमोहावस्थायां दर्शनावरणप्रकृतीनां सर्वथाऽबन्धको भूत्वा पुनरद्धाक्षयेण प्रतिपत्य चतुर्विधं बध्नाति तदाऽऽद्यसमये प्रथमोऽवक्तव्यबन्धः, भूयस्कारादिलक्षणैर्वक्तुमशक्यत्वात्, द्वितीयादिसमयेषु त्ववस्थितः। यदा तूपशान्तमोहावस्थात एवायुःक्षयेणानुत्तरसुरेषूपपद्यते तदा तत्राद्यसमय एव षड्विधं बध्नतो द्वितीयोऽवक्तव्यः, द्वितीयादिसमयेषु त्ववस्थितः। तदेवमत्र द्वौ भूयस्कारौ, द्वावल्पतरौ बन्धौ, अवस्थितास्तु गणनया षड् भवतोऽपि बन्धस्थानानि त्रीण्येवेति तद्भेदास्त्रय एव, अवक्तव्यौ तु बन्धौ द्वाविति स्थितम्।

मोहनीयस्य दश बन्धस्थानानि–द्वाविंशतिरेकविंशतिः सप्तदश त्रयोदश नव पञ्च चतस्रः तिस्रो द्वे एका च। तत्र द्वाविंशतिकं बन्धस्थानं मिथ्यादृष्टौ, एकविंशतिकं सासादने, सप्तदशकं मिश्रेऽविरतसम्यग्दृष्टौ (च), त्रयोदशकं देशविरते, नवकं प्रमत्ताप्रमत्तयोरपूर्वकरणे च, पञ्चादीन्येकपर्यन्तानि अनिवृत्तिबादरे प्रथमादिषु पञ्चान्तेषु भागेषु। अत्र भूयस्कारा नव, ते चोपशमश्रेणितः प्रतिपाते संज्वलनलोभरूपैकप्रकृतिबन्धादारभ्य क्रमेण वेदितव्याः। अल्पतरबन्धास्त्वष्टौ, यतो द्वाविंशतिबन्धादेकविंशतिबन्धे, एकविंशतिबन्धाद्वा सप्तदशबन्धे गमनं न संभवति, द्वाविंशतिबन्धकस्य मिथ्यादृष्टेरेकविंशतिबन्धकसासादनभावस्यानन्तर्येणाप्राप्तेः, एकविंशतिबन्धकस्य च सासादनस्य नियमतो मिथ्यात्व एव गमनात् सप्तदशबन्धकमिश्राविरतसम्यग्दृष्टिभावालाभाद्। अवस्थितबन्धा दश "अवस्थितबन्धः सर्वत्रापि बन्धस्थानसम" इतिवचनात्। एकसप्तदशप्रकृत्यात्मकौ द्वाववक्तव्यबन्धौ। तौ चोपशान्तमोहगुणस्थानादद्धाक्षयेण भवक्षयेण च प्रतिपाते भावनीयौ।

नाम्नो बन्धस्थानान्यष्टौ। तथाहि–त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशदेका च। एतानि च नाना-

बंधस्थानेषु भूयस्कारादयः

जीवानपेक्ष्य नानाप्रकाराणीति सप्ततिकार्थसङ्ग्रहाद्भावनीयानि। अत्र भूयस्काराः षट्–त्रयोविंशत्यादेः पञ्चविंशत्यादिषु एकत्रिंशदन्तेषु गमनात्, एकत्रिंशद्बन्धादुत्तीर्यैकप्रकृतिबन्धस्य च क्रियमाणस्य गुरुत्वाभावादष्टान्तरेष्वपि षण्णामेव भूयस्काराणां संभवात्। अथ प्रति-पातकाले एकस्याः प्रकृतेर्बन्धमाधायैकत्रिंशत्प्रकृतिबन्धमपि करोति। एकप्रकृत्यपेक्षया चैकत्रिंशत्प्रकृतिबन्धो भूयस्कार इति सप्त भूयस्काराः प्राप्नुवन्ति। युक्तं चैतत्, सप्तानां भूयस्काराणां शास्त्रान्तरेऽप्यभिधानात्। उक्तं च शतकचूर्णौ–"एकाओ वि एकतीसं जाइ त्ति भूओगारा सत्त" इति। तदयुक्तम्, एकत्रिंशद्बन्धरूपस्य भूयस्कारस्याष्टाविंशत्याद्यपेक्षया प्रागेव गृहीतत्वात् एकापेक्षया तस्य पृथग्भावा-योगात्। न ह्यवधिभेदाद्भूयस्कारभेदो विवक्ष्यते, तथा सति भूयस्काराणामतिबाहुल्यप्रसक्तेः। तथाहि–कदाचिदष्टाविंशतेरेकत्रिंशद्बन्धं गच्छति कदाचिदेकोनत्रिंशतः कदाचिदेकस्याः, तथा कदाचित्त्रयोविंशतेरप्यष्टाविंशतिबन्धं गच्छति कदाचित्पञ्चविंशतेरित्यादि। तदेवं सप्तातिरिक्ता बहवोऽपि भूयस्काराः प्राप्नुवन्ति, न चैतदिष्टं, ततो नावधिभेदाद्भूयस्कारभेद इति षडेव भूयस्कारभेदाः। शास्त्रान्तरे सप्ताभिधानं बन्धादनुत्तीर्णविधिभेदो न भूयस्कारभेदप्रयोजकः, तदुत्तीर्णविधिभेदस्तु भूयस्कारभेदप्रयोजक इति प्रसङ्गाभिप्रायेण, तत्रापि परमार्थतः षडन्तर्भाव एवोन्नेय इति तत्त्वम्। अल्पतराः सप्त, तथाहि–देवत्वं प्राप्तस्यैकत्रिंशतस्त्रिंशति गमनं संभवति, तस्यैव देवभवा-च्च्यवमानस्य त्रिंशत एकोनत्रिंशति, तथा क्षपकश्रेण्यारोहे उपशमश्रेण्यारोहे वाऽष्टाविंशत्यादेरेकस्यां, नानाजीवानां यथायोगं त्रिंशदा-देस्त्रयोविंशत्यन्तेषु गमनं, ततः सप्ताल्पतराः। अवस्थिता अष्टैव, अवक्तव्यास्तु त्रयः, ते पुनरेवम्–उपशान्तमोहावस्थायां नामकर्मणः सर्वथाऽबन्धको भूत्वा इहैवोपशान्ताद्धाक्षयेण यदा पुनरप्येकविधं बध्नाति तदाद्यसमये प्रथमोऽवक्तव्यबन्धः, यदा चोपशान्तमोहाव-स्थायामेवायुःक्षयेणानुत्तरसुरेषु समुत्पद्यते उपात्ततीर्थकरनामा च तदा तस्य प्रथमसमय एव मनुष्यगतिप्रायोग्यां तीर्थकरनामसहितां

त्रिंशतं बध्नतो द्वितीयोऽवक्तव्यबन्धः, यदि चानुपात्ततीर्थकरनामा भवति तदा तस्य तीर्थकरनामरहितां तत्रैव मनुष्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नतः प्रथमसमये तृतीयोऽवक्तव्यबन्धः।

शेषेषु ज्ञानावरणवेदनीयायुर्गोत्रान्तरायलक्षणेषु पञ्चसु कर्मसु बन्धस्थानमेकैकमेव भवति, ज्ञानावरणान्तराययोः प्रकृतिपञ्चकस्य समुदितस्यैव, वेदनीयायुर्गोत्राणां चान्यतरैकप्रकृतेरेव बन्धात्। अवस्थितबन्धश्चैतेषां प्रभूतकालमवस्थितत्वेन बध्यमानत्वादेकैकोऽस्त्येव। अवक्तव्यबन्धोऽपि वेदनीयवर्जानां चतुर्णामेकैकोऽस्ति। तत्र ज्ञानावरणस्यान्तरायस्य चोपशान्तमोहगुणस्थानादद्धाक्षयेण भवक्षयेण वा प्रतिपाते पञ्चपञ्चप्रकृत्यात्मकः प्रथमसमये एकैकोऽवक्तव्यो बन्धः। गोत्रस्य तूपशान्तमोहगुणस्थानादेव द्विधाऽपि प्रतिपतितस्योच्चैर्गोत्रं बध्नतः प्रथमसमये उच्चैर्गोत्रप्रकृत्यात्मक एकोऽवक्तव्यबन्धः। आयुषो बन्धारम्भे तां तामायुःप्रकृतिं बध्नतः प्रथमसमये तत्तदेकप्रकृत्यात्मक एकोऽवक्तव्यबन्धः। वेदनीयस्य त्ववक्तव्यबन्धः सर्वथाऽनुपपन्नः, अयोग्यवस्थायां तद्बन्धे व्यवच्छिन्ने भूयोऽपि बन्धासंभवात्।

तदेवमुक्ताः प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां बन्धस्थानेषु भूयस्कारादयः, सम्प्रति सामान्यतः सर्वोत्तरप्रकृतीनां बन्धस्थानेषु ते वक्तव्याः। तत्र सामान्यतः सर्वोत्तरप्रकृतीनां बन्धस्थानान्येकोनत्रिंशत्, तद्यथा—एका सप्तदश तत ऊर्ध्वमेकोत्तराणि स्थानानि द्वाविंशतिं यावत् ततः षड्विंशतिः ततस्त्रिपञ्चाशदादीनि द्विषष्टिवर्जान्येकोत्तरवृद्धानि स्थानानि चतुःसप्ततिं यावद्वाच्यानि, १–१७–१८–१९–२०–२१–२२–२६–५३–५४–५५–५६–५७–५८–५९–६०–६१–६३–६४–६५–६६–६७–६८–६९–७०–७१–७२–७३–७४। अत्राष्टाविंशतिर्भूयस्काराः, तथाहि—एकप्रकृत्यात्मकं स्थानमुपशान्तमोहगुणस्थानादौ, तत उपशान्तमोहात् परिभ्रंशे सूक्ष्म-

दर्शनावरणचतुष्टययशःकीर्त्युच्चैर्गोत्ररूपाः षोडश प्रकृतीरधिका बध्नतः सप्तदशप्रकृत्या-
सम्परायमागतस्य ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टययशःकीर्त्युच्चैर्गोत्ररूपाः षोडश प्रकृतीरधिका बध्नतोऽष्टादशप्रकृत्यात्मको द्वितीयो भूयस्कारः।
त्मक एको भूयस्कारः। ततोऽनिवृत्तिबादरं प्रविशतः प्रथमतः संज्वलनलोभमेकमधिकं बध्नतोऽष्टादशप्रकृत्यात्मको द्वितीयो भूयस्कारः। ततः संज्वलनक्रोध-
ततो मायामपि बध्नत एकोनविंशतिप्रकृत्यात्मकस्तृतीयः। ततः संज्वलनमानबन्धे विंशतिप्रकृत्यात्मकस्तुरीयः। ततः संज्वलनक्रोध-
स्यापि बन्धे एकविंशतिप्रकृत्यात्मकः पञ्चमः। ततोऽप्यधोऽवतरतः पुरुषवेदमपि बध्नतो द्वाविंशतिप्रकृत्यात्मकः षष्ठः। ततोऽपूर्वकर-
णगुणस्थानकं प्रविशतो भयजुगुप्साहास्यरतिरूपप्रकृतिचतुष्टयमधिकं बध्नतः षड्विंशतिप्रकृत्यात्मकः सप्तमः। ततस्तस्मिन्नेवापूर्वकरण-
गुणस्थानके क्रमेणाधोऽवतरतो नाम्नोऽष्टाविंशतिं बध्नतो यशःकीर्त्तिवर्जाः शेषाः सप्तविंशतिप्रकृतयोऽधिकाः प्राप्यन्त इति त्रिपञ्चा-
शत्प्रकृत्यात्मकोऽष्टमो भूयस्कारः। तस्यैव तीर्थकरनामसहितां देवगतिप्रायोग्यामेकोनत्रिंशतं बध्नतश्चतुष्पञ्चाशत्प्रकृत्यात्मको नवमः।
आहारकद्विकसहितां त्रिंशतं बध्नतः पञ्चपञ्चाशत्प्रकृत्यात्मको दशमः। आहारकद्विकतीर्थकरनामसहितामेकत्रिंशतं बध्नतः षट्पञ्चाश-
त्प्रकृत्यात्मको द्वादशः। एकत्रिंशता सह निद्राद्विकं बध्नतोऽष्टपञ्चाशत्प्रकृत्यात्मकस्त्रयोदशः। ततोऽप्रमत्तगुणस्थाने समागतस्य तामेवा-
ष्टपञ्चाशतं देवायुषा सह बध्नत एकोनषष्टिप्रकृत्यात्मकश्चतुर्दशः। ततो देशविरतगुणस्थानमागतस्य नाम्नोऽष्टाविंशतिबन्धकस्य प्रत्या-
ख्यानावरणकषायचतुष्टयमधिकं बध्नतः षष्टिप्रकृत्यात्मकः पञ्चदशः। तस्यैव नाम्न एकोनत्रिंशतं बध्नत एकषष्टिप्रकृत्यात्मकः षोडशः।
ततोऽविरतसम्यग्दृष्टिगुणस्थानमागतस्य नाम्नोऽष्टाविंशतिबन्धकस्यायुरबन्धेऽप्रत्याख्यानकषायचतुष्टयस्याधिकस्य बन्धे त्रिषष्टिप्रकृत्या-
त्मकः सप्तदशः। इह प्रकारान्तरासंभवात् द्विषष्टिप्रकृत्यात्मकं बन्धस्थानं सर्वथा न संभवति, ततस्तदात्मको भूयस्कारो न लभ्यते।
ततस्तस्यैवाविरतसम्यग्दृष्टेर्नाम्न एकोनत्रिंशतं बध्नतश्चतुःषष्टिप्रकृत्यात्मकोऽष्टादशो भूयस्कारः। तस्यैव मनुष्यगतिप्रायोग्यां त्रिंशतं

वध्नतः पञ्चपष्टिप्रकृत्यात्मक एकोनविंशतितमः। तस्यैवायुर्बन्धकस्य षट्षष्टिप्रकृत्यात्मको विंशतितमः। ततो मिथ्यात्वं गतस्य नाम्न-
स्त्रयोविंशतिं वध्नत आयुर्बन्धकस्य मिथ्यात्वानन्तानुबन्धिचतुष्टयस्त्यानर्द्धित्रिकाणि च बध्नतः सप्तषष्टिप्रकृत्यात्मक एकविंशतितमः।
तस्यैव पञ्चविंशतिबन्धकस्यायुरबन्धेऽष्टषष्टिप्रकृत्यात्मको द्वाविंशतितमः। तस्यैव पञ्चविंशतिबन्धकस्यायुषो बन्धे एकोनसप्ततिप्रकृत्या-
त्मकस्त्रयोविंशतितमः। तस्यैव मिथ्यादृष्टेः षड्विंशतिबन्धकस्यायुषो बन्धे सप्ततिप्रकृत्यात्मकश्चतुर्विंशतितमः। तस्यैव नाम्नोऽष्टाविंश-
तिबन्धकस्यायुरबन्धे एकसप्ततिप्रकृत्यात्मकः पञ्चविंशतितमः। तस्यैवायुर्बन्धकस्य द्वासप्ततिप्रकृत्यात्मकः षड्विंशतितमः। तस्यैव
मिथ्यादृष्टेरेकोनत्रिंशतमायुश्च बध्नतस्त्रिसप्ततिप्रकृत्यात्मकः सप्तविंशतितमः, तस्यैव नाम्नस्त्रिंशतं बध्नत आयुर्बन्धकस्य चतुःसप्ततिप्रकृ-
त्यात्मकोऽष्टाविंशतितमः। इह केचिद्भूयस्कारा अन्यान्यावधिस्थानाद्भूयो भूयः संभवन्तोऽप्येकवारं गृहीतत्वान्न पृथग्गणनायामधि-
क्रियन्ते, ततोऽष्टाविंशतिरेव भूयस्काराः, एतदनुसारेणाल्पतरा अप्यष्टाविंशतिरेव भावनीयाः, अवस्थितबन्धास्तु स्थानसमा इत्येकोन-
त्रिंशत्, अवक्तव्यस्त्वत्रानुपपन्नः, सर्वोत्तरप्रकृत्यबन्धकीभूतस्य भूयो बन्धकत्वानुपपत्तेः।

तदेवमुक्ताः प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां सामान्यतः सर्वोत्तरप्रकृतीनां च बन्धस्थानेषु भूयस्कारादयः, अथोदयस्थानेषु वक्त-
व्याः। तत्र प्रथमतः प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनामुदयस्थानेषु भावनीयाः। ते चैवम्–ज्ञानावरणीयान्तराययोर्वेदनीयायुर्गोत्राणां
चैकैकमुदयस्थानं पञ्चपञ्चप्रकृत्यात्मकमेकैकप्रकृत्यात्मकं च। दर्शनावरणीयस्य द्वे उदयस्थाने–चतस्रः पञ्च चेति। तत्र चक्षुरचक्षुरवधि-
केवलदर्शनावरणरूपाश्चतस्रः, ता एव निद्रापञ्चकान्यतमसहिताः पञ्च, निद्रा हि परावर्त्तमानोदया इति द्वित्रादिका नोदयमायान्ति।
अत्रैको भूयस्कारः, एक एव चाल्पतरः, द्वाववस्थितौ, अवक्तव्यस्तु नास्ति, क्षीणमोहे सर्वदर्शनावरणप्रकृत्युदयव्यवच्छेदे सति भूय

उदयस्था-
नेषु भूय-
स्कारादयः

उदयासंभवात्।

मोहनीयस्य नवोदयस्थानानि–एका द्वे चतस्रः पञ्च षट् सप्ताष्टौ नव दश च। एतानि चाग्रे संवेधे भावयिष्यन्ते। अत्राष्टौ भूयस्काराः, अष्टावल्पतराः, नवावस्थिताः, अवक्तव्या उदयास्तु पञ्च, तथाहि–एका षट् सप्ताष्टौ नव च। तत्र यदोपशान्तमोहादद्धाक्षयेण प्रतिपतति तदा सूक्ष्मसम्परायं प्रविशतः संज्वलनलोभरूपैकप्रकृत्यात्मकोऽवक्तव्योदयः। भवक्षयेण ततः प्रतिपाते चाद्यसमय एव चतुर्थगुणस्थानं गच्छति। स च यदि क्षायिकसम्यग्दृष्टिर्भयस्य जुगुप्सायाश्चावेदकस्तदा तस्यानन्तानुबन्धिवर्जा अन्यतमे त्रयः क्रोधादिकाः पुरुषवेदो हास्यरतियुगलमिति षट् प्रकृतय उदये प्राप्यन्त इत्याद्यसमये षट्प्रकृत्यात्मकोऽवक्तव्योदयः। यदि चाद्यसमय एव क्षायोपशमिकसम्यक्त्वं वेदयते क्षायिकसम्यग्दृष्टिरेव वा सन् भयं जुगुप्सां वाऽनुभवति तदा सप्तप्रकृत्यात्मकः। क्षायोपशमिकसम्यक्त्वभययोस्तज्जुगुप्सयोर्वा क्षायिकसम्यक्त्ववतोऽप्याद्यसमये भयजुगुप्सयोर्युगपदुदये वाऽष्टप्रकृत्यात्मकः। क्षायिकसम्यक्त्वाभावे क्षायोपशमिकसम्यक्त्वभयजुगुप्सानां समुदितानामुदये नवप्रकृत्यात्मकः।

नाम्न उदयस्थानानि द्वादश, तथाहि–विंशतिरेकविंशतिश्चतुर्विंशत्यादीन्येकत्रिंशदन्तानि नवाष्टौ च, २०–२१–२४–२५–२६–२७–२८–२९–३०–३१–९–८, एतान्यप्यग्रे संवेधेऽभिधास्यामः। अत्राष्टौ भूयस्कारोदयाः, अष्टोदयान्नवोदये नवोदयाद्विंशत्युदये विंशत्युदयाधिकविंशत्युदयेऽगमनात्, किं त्वेकविंशत्युदयस्थानादारभ्य यथायोगं संसारे समुद्घाते वा चतुर्विंशत्याद्युदयस्थानेष्वेव गमनसंभवात्। अल्पतरोदया नव, यतो नवकोदयादष्टकोदये एकविंशत्युदयाद्विंशत्युदये पञ्चविंशत्युदयाच्च चतुर्विंशत्युदये गमनं न संभवति, ततो नवैवाल्पतरोदयाः, ते च तीर्थकरातीर्थकरयोः समुद्घातप्रतिपत्तिमयोगित्वप्रतिपत्तिं चाश्रित्य भाव्यन्ते–तत्र स्वभावस्थस्यातीर्थ-

उदयस्थानेषु भूयस्कारादयः

कृतो मनुजगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्त्यगुरुलघुतैजसकार्मणनिर्माणवर्णादिचतुष्टयस्थिरास्थिरशुभाशुभाद्यसंहननोपघातप्रत्येकौदारिकद्विकषडन्यतमसंस्थानपराघातोच्छ्वासान्यतरविहायोगतिसुस्वरदुःस्वरान्यतरलक्षणत्रिंशत्प्रकृत्युदयो भवति। एष एव तीर्थकृतस्तीर्थकरनामान्वित एकत्रिंशदुदयः। ततः समुद्घातं कुर्वतोऽतीर्थकृतो द्वितीयसमये औदारिकमिश्रकाययोगे वर्त्तमानस्य पराघातोच्छ्वासान्यतरविहायोगतिसुस्वरदुःस्वरान्यतरनिरोधे षड्विंशतिः १। पराघातोच्छ्वासप्रशस्तविहायोगतिसुस्वरनिरोधे तीर्थकृतः सप्तविंशतिः २। षड्विंशतिरेवातीर्थकरकेवलिनः समुद्घातं प्रविष्टस्य तृतीयसमये कार्मणकाययोगे वर्त्तमानस्योदितसंस्थानाद्यसंहननौदारिकद्विकोपघातप्रत्येकरूपप्रकृतिषट्कनिरोधे विंशतिः ३। तस्मिन्नेव समये तीर्थकृत उक्तप्रकृतिषट्कनिरोधे एकविंशतिः ४। अयोगित्वं प्रतिपद्यमानस्य तु तीर्थकृत एकत्रिंशतः स्वरनिरोधे त्रिंशद्भवति ५। ततोऽप्युच्छ्वासे निरुद्धे एकोनत्रिंशत्, अतीर्थकृतस्त्रिंशतः स्वरनिरोधे एकोनत्रिंशत् ६। तत उच्छ्वासे निरुद्धेऽष्टाविंशतिः ७। ततोऽष्टाविंशतेरतीर्थकृत्केवलिनोऽयोगित्वप्रतिपत्तिप्रथमसमये पराघातोदितविहायोगतिप्रत्येकोपघातान्यतमसंस्थानाद्यसंहननौदारिकद्विकस्थिरास्थिरागुरुलघुशुभाशुभतैजसकार्मणवर्णादिचतुष्टयनिर्माणलक्षणविंशतिप्रकृत्युदयव्यवच्छेदेऽष्टकोदयः ८। तीर्थकृत्केवलिन एकोनत्रिंशत उक्तविंशतिप्रकृत्युदयव्यवच्छेदे नवकोदयः ९। संसारिणां त्वेकत्रिंशदादेरुदयस्थानादेकविंशत्यन्तेषु कतिपयेष्वेवाल्पतरोदयस्थानेषु संक्रमणम्। तत इत्थं विचार्यमाणमल्पतरोदयस्थानमधिकं न प्राप्यत इति नवैवाल्पतरोदयाः। अवस्थितोदयाः स्थानतुल्याः। अवक्तव्योदयस्त्वसंभवी, यतः सर्वनामोत्तरप्रकृत्युदयव्यवच्छेदोऽयोगिचरमसमये, न च ततः पुनरुदय इति।

तदेवमुक्ताः प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनामुदयस्थानेषु भूयस्कारादयः। सम्प्रति सामान्यतः सर्वोत्तरप्रकृतीनामुदयस्थानेषु वक्त-

च्याः। तत्र सामान्यतः सर्वोत्तरप्रकृतीनामुदयस्थानानि षड्विंशतिः। तद्यथा–एकादश द्वादश त्रयोविंशतिश्चतुर्विंशतिः, तत एकोनत्रिंशदादीनि चतुस्त्रिंशदन्तानि, ततश्चतुश्चत्वारिंशदादीनि एकोनषष्ट्यन्तानि, ११–१२–२३–२४ २९–३०–३१–३२–३३–३४–४४–४५ ४६–४७–४८–४९–५०–५१–५२–५३–५४–५५–५६–५७–५८–५९। तत्र मनुष्यगतिमनुष्यायुःपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्त्योऽन्यतरवेदनीयमुच्चैर्गोत्रं चेत्येकादशप्रकृत्युदयोऽतीर्थकृतोऽयोगित्वावस्थायाम्। एष एव तीर्थकरनामान्वितो द्वादशोदयस्तीर्थकृतः। एतावेव द्वावुदयावगुरुलघुनिर्माणस्थिरास्थिरशुभाशुभतैजसकार्मणवर्णादिचतुष्टयरूपनामध्रुवोदयसहितौ समुद्घाते कार्मणकाययोगे त्रयोविंशतिचतुर्विंशत्युदयौ भवतः। एतेषूदयस्थानेषु न भूयस्कारप्राप्तिः, अयोगिनः सयोगित्वस्य अतीर्थकृतश्च तीर्थकरत्वस्याप्राप्तेः। तावेव त्रयोविंशतिचतुर्विंशत्युदयौ प्रत्येकोपघातौदारिकद्विकान्यतमैकसंभविसंस्थानाद्यसंहननसमेतौ यथासङ्ख्यमेकोनत्रिंशत्त्रिंशदुदयौ भवतः। तथा स्वभावस्थयोस्तीर्थकरातीर्थकरयोर्यावेकत्रिंशत्त्रिंशद्रूपौ नाम्न उदयौ तावन्यतरवेदनीयमनुष्यायुरुच्चैर्गोत्रसमेतौ चतुस्त्रिंशत्त्रयस्त्रिंशदुदयौ भवतः।तयोः स्वरनिरोधे क्रमेण त्रयस्त्रिंशद्द्वात्रिंशदुदयौ। तयोरप्युच्छ्वासनिरोधे द्वात्रिंशदेकत्रिंशदुदयौ। एते दशोदयाः केवलिनाम्। एतेषु दशस्वुदयस्थानेषु षड्भूयस्कारोदयाः। ते चातीर्थकरतीर्थकरावधिकृत्य क्रमेणैकोनत्रिंशत्त्रिंशदादयो द्रष्टव्याः, शेषास्तु न संभवन्ति। तत्र कारणमुक्तमेव। नवाल्पतरोदयाः, ते च चतुस्त्रिंशद्वर्जाः शेषाः सर्वेऽपि। चतुश्चत्वारिंशदुदयः क्षीणसप्तकस्याविरतसम्यग्दृष्टेरन्तरालगतौ वर्त्तमानस्य। तत्र ज्ञानावरणपञ्चकं दर्शनावरणचतुष्कमन्तरायपञ्चकमनन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादयस्त्रयाणां वेदानामन्यतमो वेदः द्वयोर्युगलयोरन्यतरद्युगलमिति षड्मोहनीयप्रकृतयः सर्वसङ्ख्यया विंशतिर्घातिप्रकृतयः। तथा चतसृष्वन्यतमा गतिरन्यतमानुपूर्वी पञ्चेन्द्रियजातिः त्रसबादरपर्याप्तापर्याप्तान्यतरसुभगदुर्भगैकतरादेयानादेयैकतरयशःकीर्त्त्ययशःकीर्त्येकत-

रनिर्माणागुरुलघुस्थिरास्थिरशुभाशुभतैजसकार्मणानि वर्णादिचतुष्टयं चेति नाम्न एकविंशतिरन्यतरदायुरन्यतरद्वेदनीयमन्यतरद्गोत्रमिति सर्वाग्रेणाघातिप्रकृतयश्चतुर्विंशतिरुभयमीलनेन च चतुश्चत्वारिंशदुदयः। भवस्थस्य क्षायिकसम्यग्दृष्टेर्देवस्य नारकस्य वा प्रागुक्ता चतुश्चत्वारिंशत् आनुपूर्वीरहिता शरीरस्थस्य वैक्रियद्विकोपघातप्रत्येकसमचतुरस्रप्रक्षेपेऽष्टचत्वारिंशदुदयमायाति। ततो वेदकसम्यक्त्वभयजुगुप्सानामन्यतमैकप्रक्षेपे एकोनपञ्चाशत्। अन्यतमद्वयप्रक्षेपे पञ्चाशत्। युगपत्त्रयप्रक्षेपे एकपञ्चाशत्। यद्वा प्रागुक्तैव चतुश्चत्वारिंशदानुपूर्वीरहिता भवस्थस्य तिरश्चो मनुष्यस्य वा क्षायिकसम्यग्दृष्टेरौदारिकद्विकाद्यसंस्थानसंहननोपघातप्रत्येकलक्षणप्रकृतिषट्कप्रक्षेपे पञ्चाशत्। सैव वेदकसम्यक्त्वभयजुगुप्सानामन्यतमैकप्रकृतिप्रक्षेपे एकपञ्चाशत्। अथवा भवस्थदेवनारकयोग्याऽष्टचत्वारिंशत् शरीरपर्याप्त्या पर्याप्तस्य देवस्य नारकस्य वा क्षायिकसम्यग्दृष्टेः पराघातान्यतरविहायोगतिप्रक्षेपे पञ्चाशत्। ततो वेदकसम्यक्त्वभयजुगुप्सानामन्यतमैकप्रकृतिप्रक्षेपे एकपञ्चाशत्। अन्यतमद्वयप्रक्षेपे द्विपञ्चाशत्। त्रयस्यापि प्रक्षेपे त्रिपञ्चाशत्। यद्वा तिरश्चो मनुष्यस्य वा शरीरस्थस्य क्षायिकसम्यग्दृष्टेः प्रागुक्तैकोनपञ्चाशच्छरीरपर्याप्त्या पर्याप्तस्य पराघातप्रशस्तविहायोगत्यन्वितैकपञ्चाशत्। ततो वेदकसम्यक्त्वभयजुगुप्सानिद्राणामन्यतमैकप्रकृतिप्रक्षेपे द्विपञ्चाशत्, अन्यतमद्वयप्रक्षेपे त्रिपञ्चाशद्। अन्यतमत्रयप्रक्षेपे चतुःपञ्चाशत्। चतुष्टयप्रक्षेपे पञ्चपञ्चाशत्। यद्वा तिर्यङ्मनुष्ययोरेव क्षायिकसम्यग्दृष्ट्योरनन्तरोक्तैकपञ्चाशत्प्राणापानपर्याप्तिसमाप्त्यनन्तरमुच्छ्वासोदयेन मीलिता द्विपञ्चाशत्। ततो वेदकसम्यक्त्वभयजुगुप्सानिद्राणामन्यतमैकद्वयत्रयचतुष्टयप्रक्षेपैः क्रमात्त्रिपञ्चाशच्चतुःपञ्चाशत्पञ्चपञ्चाशत् षट्पञ्चाशच्च। यद्वा प्रागुक्ता प्राणापानपर्याप्तिपर्याप्तयोग्या द्विपञ्चाशद् भाषापर्याप्त्या-

उदयस्थानेषु भूयस्कारादयः

॥९०॥

मिश्रोऽधिकृत्योद्योत सप्तपञ्चाशदन्ताः । तिरश्चोऽधिकृत्योद्यो-
पर्याप्तस्य स्वरे प्रक्षिप्ते त्रिपञ्चाशत् । ततो वेदकसम्यक्त्वभयजुगुप्सानिद्राणामुक्तनीत्या प्रक्षेपे सप्तपञ्चाशदन्ताः । तिरश्चोऽधिकृत्योद्यो-
तनाम्नि प्रक्षिप्तेऽष्टपञ्चाशत् । एते चाविरतोदयाः, सर्वेऽपि भूयस्कारा अल्पतराश्च संभवन्ति । निद्राभयजुगुप्सोद्योतानामध्रुवोदयत्वात् ।
मिथ्यादृष्टेः षट्चत्वारिंशत्प्रभृतीन्येकोनषष्टिपर्यन्तान्युदयस्थानानि । तानि च सप्ततिकार्थं परिभाव्य निद्राभयजुगुप्सोद्योतानां संचारणेन
स्वयमेव ज्ञातव्यानि । अथ मिथ्यादृष्टेः सप्तकोदये नाम्न एकविंशत्युदयस्थस्य पञ्चचत्वारिंशद्रूपमुदयस्थानं कुतो न भवतीति चेदन्तरा-
लगतौ मिथ्यादृष्टेरनन्तानुबन्धिसहितस्यैव प्राप्तेः,अनन्तानुबन्धिरहितस्य तस्य मरणनिषेधात् । तथा च सत्यष्टकोदय इति षट्चत्वारिंश-
दादीन्येव तस्योदयस्थानानि । एकोनषष्टिरूपं तु तस्योदयस्थानमन्यतमक्रोधादिचतुष्टयान्यतमवेदान्यतमयुगलभयजुगुप्सामिथ्यात्वरूप-
मोहनीयदशकोदये वर्त्तमानस्य तिर्यग्गतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगदुर्भगैकतरादेयानादेयैकतरयशःकीर्त्त्ययशःकीर्त्त्येकतरवर्णा-
दिचतुष्टयागुरुलघुस्थिरास्थिरशुभाशुभतैजसकार्मणनिर्माणौदारिकद्विकान्यतमसंस्थानान्यतमसंहननप्रत्येकोपघातपराघातान्यतरविहायो-
गतिसुस्वरदुःस्वरान्यतरोच्छ्वासोद्योतरूपनामसत्कैकत्रिंशत्प्रकृत्युदयवतो ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयान्यतमनिद्रोदय-
वतोऽन्यतरवेदनीयान्यतमायुरन्यतरगोत्राण्यनुभवतो द्रष्टव्यम् । अत्रावक्तव्योदयो न घटते सर्वप्रकृत्युदयव्यवच्छेदे भूय उदयासंभवात् ।
अवस्थितोदयाः षड्विंशतिः, स्थानसमत्वात्तेषाम् । अथान्तरालगतौ समुद्घाते च संभवीनि यान्युदयस्थानानि तेषु कथमवस्थितत्वं ?,
सत्यं, तत्रापि समयद्वयत्रयावस्थानोपपत्तेः । भूयस्कारोदया एकविंशतिः, यतो न छद्मस्थोदयेषु केवली याति, नाप्यतीर्थकरस्तीर्थकरोदयं,
नाप्ययोगी सयोगिकेवल्युदयमित्येकादशद्वादशत्रयोविंशतिचतुर्विंशतिचतुश्चत्वारिंशल्लक्षणानि पञ्चोदयस्थानानि भूयस्कारतया न
प्राप्यन्ते । अल्पतरोदयाश्चतुर्विंशतिः, यतोऽविरतसम्यग्दृष्टिर्मिथ्यादृष्टिर्वा न केवल्युदयस्थानमारोहतीति चतुस्त्रिंशल्लक्षणोऽल्पतरोदयो

न लभ्यते । अथ स्वभावस्थे तीर्थकरे संभविनि चतुस्त्रिंशदुदये चतुश्चत्वारिंशदादीनामन्यतमस्मादुदयस्थानात्संक्रमे चतुस्त्रिंशदुदयोऽल्पतरो भवतीति चेन्न, गुणस्थानक्रमारोहं विना केवलित्वाप्राप्तेः, क्रमानुसरणे च क्षीणमोहगुणस्थाने त्रयस्त्रिंशत्प्रकृत्यात्मकमेकमेवोदयस्थानं मनुजगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितैजसकार्मणस्थिरास्थिरशुभाशुभवर्णादिचतुष्टयागुरुलघुनिर्माणौदारिकद्विकप्रत्येकोपघातान्यतरविहायोगतिपराघातसुस्वरदुःस्वरान्यतरोच्छ्वासान्यतमसंस्थानाद्यसंहनननान्यतरवेदनीयमनुष्यायुरुच्चैर्गोत्रलक्षणं प्राप्यते । ततः केवलज्ञानोत्पत्तौ तीर्थकरनामोदये चतुस्त्रिंशल्लक्षणमुदयस्थानं भूयस्कारतयैव प्राप्यते, नाल्पतरतयेति । यदपि चैकोनषष्टिरूपमुदयस्थानं तदपि ततोऽन्यस्य महत उदयस्थानस्याभावान्नाल्पतरत्वमास्कन्दतीति द्वयापगमाच्चतुर्विंशतिरेवाल्पतराः । तदेवमुक्ताः सामान्यतः सर्वोत्तरप्रकृतीनामुदयस्थानेषु भूयस्कारादयः । उदीरणाधिकारोऽपि प्राय उदयसम एव द्रष्टव्यः । नवरं नाम्नोऽष्टनवोदयस्थानयोरुदीरणाभावः सामान्यतः सर्वोत्तरप्रकृतिसमुदाये चाप्रमत्तादौ वेदनीयायुर्वर्जनमित्यादिरूपो यो विशेषस्तमुदीरणाप्रस्थानतः सम्यक् परिभाव्य तद्गता भूयस्कारादयो निरूपणीयाः ।

सम्प्रति प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां सामान्यतः सर्वोत्तरप्रकृतीनां च सत्तास्थानेषु भूयस्कारादयो वाच्याः । तत्र प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां ते भाव्यन्ते—ज्ञानावरणीयस्यान्तरायस्य च प्रत्येकं पञ्चपञ्चप्रकृत्यात्मकमेकं सत्तास्थानमवस्थितम् । अत्रान्यस्य महतोऽल्पस्य वा स्थानस्याभावाद्भूयस्काराल्पतरासंभवः, अवक्तव्योऽप्यत्र नास्ति, सकलैतदुत्तरप्रकृतिसत्ताव्यवच्छेदे भूयः सत्ताऽसंभवात् । वेदनीयस्य द्वे सत्तास्थाने, तद्यथा—द्वे एका च । तत्र द्वे अयोग्यवस्थाद्विचरमसमयं यावत्, एका चरमसमये । अत्र न भूयस्कारसत्कर्मता, एकप्रकृत्यात्मकसत्तास्थानाद्द्विप्रकृत्यात्मकसत्तास्थाने संक्रमाभावात् । एकमल्पतरं, तच्चैकप्रकृत्यात्मकम् । एकं

द्विप्रकृत्यात्मकमवस्थितम्, एकप्रकृत्यात्मकस्य स्थानस्यैकसामयिकत्वेनावस्थितत्वाभावात्। गोत्रायुषोर्द्वे द्वे सत्तास्थाने, तद्यथा—द्वे एका च। तत्र गोत्रप्रकृत्योरन्यतरानपगमे द्वे। यदा तु तेजोवायुभवगतेनोच्चैर्गोत्रमुद्वलितं भवति नीचैर्गोत्रं वाऽयोग्यवस्थाद्विचरमसमये क्षीणं तदैका। आयुषः परभवायुरबन्धं यावदेका, तद्बन्धे च द्वे सत्यौ। तत्र गोत्रस्यैकं द्विप्रकृत्यात्मकं भूयस्कारसत्कर्म, यदोद्वलितो-च्चगोत्रो नीचैर्गोत्रैकसत्कर्मा सन् भूय उच्चगोत्रं बध्नाति तदाऽवसेयं, एकमेकप्रकृत्यात्मकमल्पतरं, तदपि चोच्चैर्गोत्रे उद्वलिते नीचैर्गोत्रे वा क्षीणे, द्वे अवस्थितसत्कर्मणी, द्वयोरपि चिरकालमवस्थानात्, नवरमेकप्रकृत्यात्मके सत्तास्थाने चिरमवस्थानमुद्वलितोच्चगोत्रस्य नीचगोत्ररूपे द्रष्टव्यं, नोच्चैर्गोत्ररूपे, तस्य द्वितीयसमय एव क्षयात्। आयुषोऽप्येकं द्विप्रकृत्यात्मकं भूयस्कारसत्कर्म, तच्च परभवायु-र्बन्धे, एकमेकप्रकृत्यात्मकमल्पतरसत्कर्म, तच्चानुभूयमानभवायुषः सत्ताव्यवच्छेदे परभवायुष उदयसमये। द्वे अवस्थितसत्कर्मणी, द्वयोरपि सत्तास्थानयोश्चिरकालमवस्थानात्। यत्त्ववक्तव्यं तदुभयत्रापि नास्ति, उभयोरपि सर्वस्वस्वोत्तरप्रकृतिसत्ताव्यवच्छेदे भूयः सत्ताया अयोगात्।

दर्शनावरणीयस्य त्रीणि सत्कर्मस्थानानि—नव षट् चतस्रश्चेति। तत्र क्षपकश्रेण्यामनिवृत्तिबादराद्धायाः संख्येयान् भागान् यावदुप-शमश्रेण्यामुपशान्तमोहगुणस्थानं यावन्नव। क्षपकश्रेण्यामनिवृत्तिबादरसम्परायाद्धायाः संख्येयेभ्यो भागेभ्यः परतः क्षीणमोहगुणस्थानस्य द्विचरमसमयं यावत् षट्, चरमसमये चतस्रः। अत्र द्वे अल्पतरे—षट् चतस्रश्चेति। नवषडात्मके द्वे अवस्थितसत्कर्मणी, चतुष्प्र-कृत्यात्मकस्य सत्तास्थानस्यैकसामयिकत्वेनावस्थितत्वासंभवात्। भूयस्कारमवक्तव्यं चात्र नास्ति, चतुरादिप्रकृतिसत्ताव्यवच्छेदे भूयः सत्ताऽसंभवात्।

मोहनीयस्य पञ्चदश सत्तास्थानानि, तद्यथा–अष्टविंशतिः सप्तविंशतिः षड्विंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिस्त्रयोदश द्वादशैकादश पञ्च चतस्रस्तिस्रो द्वे एका च। तत्र सर्वप्रकृतिसमुदायोऽष्टाविंशतिः। ततः सम्यक्त्वे उद्वलिते सप्तविंशतिः। सम्यङ्मिथ्यात्वेऽप्युद्वलिते षड्विंशतिः, अनादिमिथ्यादृष्टेर्वा षड्विंशतिः। अष्टाविंशतेरनन्तानुबन्धिचतुष्टये क्षीणे चतुर्विंशतिः। ततो मिथ्यात्वे क्षीणे त्रयोविंशतिः। ततः सम्यङ्मिथ्यात्वे क्षीणे द्वाविंशतिः। ततः सम्यक्त्वे क्षीणे एकविंशतिः। ततः कषायाष्टकक्षये त्रयोदश। ततो नपुंसकवेदे क्षीणे द्वादश। ततोऽपि स्त्रीवेदे क्षीणे एकादश। ततो नोकषायषट्कक्षये पञ्च। ततः पुरुषवेदे क्षीणे चतस्रः। ततः संज्वलनक्रोधे क्षीणे तिस्रः। ततः संज्वलमाने क्षीणे द्वे। ततः संज्वलनमायायामपि क्षीणायामेकेति। अत्र पञ्चदशावस्थितसत्कर्माणि, सर्वषामपि जघन्यतोऽप्यन्तर्मुहूर्त्तमवस्थानसंभवात्। चतुर्दशाल्पतराणि, तानि चाष्टाविंशतिविनिर्मुक्तानि सर्वाण्यपि द्रष्टव्यानि। एकं भूयस्कारसत्कर्म, तच्चाष्टाविंशतिलक्षणं, चतुर्विंशतिसत्तास्थानात् षड्विंशतिसत्तास्थानाद्वाऽष्टाविंशतिरूपे सत्तास्थाने संक्रमणसंभवात्, शेषाणि सत्तास्थानानि भूयस्कारतया न प्राप्यन्ते, अनन्तानुबन्धिसम्यक्त्वसम्यङ्मिथ्यात्वव्यतिरेकेणान्यस्याः प्रकृतेः सत्ताव्यवच्छेदे भूयः सत्ताया अयोगात्। अवक्तव्यं तु सत्कर्मात्र नास्ति, मोहनीयस्य सर्वोत्तरप्रकृतिसत्ताव्यवच्छेदे भूयः सत्ताया असंभवात्।

नाम्नो द्वादश सत्कर्मस्थानानि–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरेकोनाशीतिः अष्टसप्ततिः षट्सप्ततिः पञ्चसप्ततिर्नवाष्टौ चेति। तत्र सर्वप्रकृतिसमुदायस्त्रिनवतिः। सा तीर्थकररहिता द्विनवतिः। त्रिनवतिराहारकचतुष्टयरहितैकोननवतिः। द्विनवतिराहारकचतुष्कहीनाऽष्टाशीतिः। इदं प्रथमसत्तास्थानचतुष्कम्। अस्मान्नामत्रयोदशके क्षीणेऽशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्चेति द्वितीयसत्तास्थानचतुष्कं भवति। अष्टाशीतेर्देवद्विके नरकद्विके वोद्वलिते षडशीतिः। ततोऽपि देवद्विकसहिते नरकद्विक-

सत्तास्थानेषु भूयस्कारादयः

सहिते वा वैक्रियचतुष्टये उद्वलितेऽशीतिः। ततोऽपि मनुष्यद्विके उद्वलितेऽष्टसप्ततिः। एतानि त्रीणि सत्तास्थानान्यध्रुवसंज्ञान्याहुः। नव प्रकृत्यात्मकं तीर्थकृतोऽष्टप्रकृत्यात्मकमतीर्थकृतोऽयोग्यवस्थाचरमसमये सुप्रसिद्धम्। अत्र दशावस्थितसत्कर्माणि, नवाष्टरूपसत्तास्थानयोरेकसामयिकतयाऽवस्थितत्वायोगात्। दशाल्पतरस्थानानि, तथाहि-प्रथमचतुष्काद्द्वितीयचतुष्कगमने चत्वारि, द्वितीयचतुष्कान्नवाष्टगमने च द्वे, प्रथमसत्तास्थानचतुष्कसत्कचतुर्थसत्तास्थानात् प्रथमाध्रुवसंज्ञषडशीतिसत्तास्थानगमने, ततोऽपि तृतीयाध्रुवसत्तास्थानगमने द्वे, त्रिनवतिद्विनवतिभ्यामाहारकचतुष्टयोद्वलने एकोननवत्यष्टाशीतिसंक्रान्तौ द्वे। तदेवं सर्वसंख्यया दशाल्पतरसत्तास्थानानि। भूयस्कारसत्तास्थानानि षट्, तथाहि-भूयो मनुष्यद्विकबन्धेनाष्टसप्ततेरशीतौ गमनं, ततोऽपि नरकद्विके देवद्विके वा वैक्रियचतुष्टयसहिते भूयोऽपि बध्यमाने षडशीतौ, ततोऽपि देवद्विके नरकद्विके वा पुनरपि बध्यमानेऽष्टाशीतौ, ततोऽपि तीर्थकरनामबन्धे एकोननवत्यां गमनमिति चत्वारि। अष्टाशीतेरेवाहारकद्विक(चतुष्टय)बन्धेन द्विनवतौ गमनं, ततोऽपि तीर्थकरनामबन्धे त्रिनवतौ, एवं सर्वसंख्या षडेव भूयस्कारसत्कर्माणि, नाधिकानि, शेषात्सत्तास्थानात्प्रभृतेऽन्यस्मिन् सत्तास्थाने गमनासंभवात्। यदवक्तव्यं तदिह न भवति, नाम्नः सर्वोत्तरप्रकृतिसत्ताव्यवच्छेदे भूयः सत्त्वोपादानासंभवात्।

तदेवमुक्ताः प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां सत्तास्थानेषु भूयस्कारादयः। सम्प्रति सामान्यतः सर्वोत्तरप्रकृतीनां तेऽभिधेयाः। तत्र सामान्यतः सर्वोत्तरप्रकृतीनां सत्तास्थानान्यष्टचत्वारिंशत्। तथाहि-एकादश द्वादशाशीतिरेकाशीतिश्चतुरशीतिः पञ्चाशीतिः, ततश्चतुर्नवत्यादीनि चतुर्दशाधिकशतान्तानि, ततः पञ्चविंशाच्छतादारभ्य षट्चत्वारिंशच्छतपर्यन्तानि स्थानानि द्वात्रिंशच्छतवर्जानि निरन्तर वाच्यानि-११-१२-८०-८१-८४-८५-९४-९५-९६-९७-९८-९९-१००-१०१-१०२-१०३-१०४-१०५-१०६-

१३५–
१०७–१०८–१०९–११०–१११–११२–११३–११४–१२५–१२६–१२७–१२८–१२९–१३०–१३१–१३३–१३४–१३५–१३६–१३७–१३८–१३९–१४०–१४१–१४२–१४३–१४४–१४५–१४६। तत्रातीर्थकरकेवलिनोऽयोग्यवस्थाचरमसमये एकादशप्रकृत्यात्मकं सत्तास्थानम्, तस्मिन्नेव समये तीर्थकृतो द्वादशप्रकृत्यात्मकं, ताश्च द्वादश मनुष्यायुर्मनुष्यगतिपञ्चेन्द्रियजातित्रसवादरपर्याप्तसुभगादेययशःकीर्त्तितीर्थकरनामान्यतरवेदनीयोच्चैर्गोत्रलक्षणाः। एता एव जिननामरहिता एकादश। सयोगिकेवल्यवस्थायामशीत्यादीनि चत्वारि सत्तास्थानानि ८०–८१–८४–८५। तत्राशीतिरियं–देवद्विकमौदारिकचतुष्टयं वैक्रियचतुष्टयं तैजसकार्मणशरीरे तैजसकार्मणवन्धने तैजसकार्मणसङ्घाते संस्थानषट्कं संहननषट्कं वर्णादिविंशतिरगुरुलघुपराघातोपघातोच्छ्वासविहायोगतिद्विकानि स्थिरास्थिरे शुभाशुभे सुस्वरदुःस्वरे दुर्भगमयशःकीर्त्तिरनादेयं निर्माणं प्रत्येकमपर्याप्तं मनुष्यानुपूर्वी नीचैर्गोत्रमन्यतरवेदनीयमित्येकोनसप्ततिरेकादश च प्रागुक्ता इति। सैवाशीतिर्जिननामसहितैकाशीतिः। अशीतिरेवाहारकचतुष्टयान्विता चतुरशीतिः। सैव जिननामान्विता पञ्चाशीतिः। एतान्येवाशीत्यादीनि चत्वारि सत्तास्थानानि ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकसहितानि चतुर्नवत्यादीनि चत्वारि सत्तास्थानानि भवन्ति ९४–९५–९८–९९। एतानि च क्षीणकषायचरमसमये नानाजीवानधिकृत्य प्राप्यन्ते। एतान्येव निद्राप्रचलासहितानि यथाक्रमं षण्णवत्यादीनि चत्वारि सत्तास्थानानि भवन्ति ९६–९७–१००–१०१। एतानि क्षीणकषायगुणस्थानके द्विचरमसमयं यावन्नानाजीवापेक्षया प्राप्यन्ते। एतेष्वेव संज्वलनलोभप्रक्षेपे सप्तनवत्यादीनि चत्वारि भवन्ति ९७–९८–१०१–१०२। एतानि सूक्ष्मसम्पराये लभ्यन्ते। एतेष्वेव संज्वलनमायाप्रक्षेपेऽष्टनवत्यादीनि चत्वारि भवन्ति ९८–९९–१०२–१०३। एतान्यनिवृत्तिबादरसम्परायगुणस्थानपर्यन्ते लभ्यन्ते। तस्मिन्नेव गुणस्थाने तेष्वेव चतुर्षु सत्तास्थानेषु संज्वलनमानप्रक्षेपे नवनवत्यादीनि चत्वारि

भवन्ति ९९-१००-१०३-१०४। तस्मिन्नेव गुणस्थाने तेष्वेव चतुर्षु संज्वलनक्रोधप्रक्षेपे शतादीनि चत्वारि भवन्ति १००-१०१-
१०४-१०५। तस्मिन्नेव गुणस्थाने पुरुषवेदप्रक्षेपे एकोत्तरशतादीनि चत्वारि १०१-१०२-१०५-१०६। ततस्तस्मिन्नेव गुणस्थाने
हास्यादिषट्कप्रक्षेपे सप्तोत्तरशतादीनि चत्वारि १०७-१०८-१११-११२। ततस्तस्मिन्नेव गुणस्थाने स्त्रीवेदप्रक्षेपेऽष्टोत्तरशतादीनि
चत्वारि १०८-१०९-११२-११३। ततस्तस्मिन्नेव गुणस्थाने नपुंसकवेदप्रक्षेपे नवोत्तरशतादीनि चत्वारि १०९-११०-११३-
११४। तस्मिन्नेव गुणस्थाने तेष्वेव चतुर्षु नामत्रयोदशकस्त्यानर्द्धित्रिकरूपप्रकृतिषोडशकप्रक्षेपे पञ्चविंशत्युत्तरशतादीनि चत्वारि
१२५-१२६-१२९-१३०। ततोऽपि तस्मिन्नेव गुणस्थाने मध्यमकषायाष्टकप्रक्षेपे त्रयस्त्रिंशच्छतादीनि चत्वारि १३३-१३४-१३७-
१३८। तथा यानि क्षीणमोहसत्कानि पण्णवतिसप्तनवतिशतैकोत्तरशतात्मकानि चत्वारि सत्तास्थानानि तेषु मोहनीयद्वाविंशतिस्त्या-
नर्द्धित्रिकनामत्रयोदशकप्रक्षेपादिमानि चत्वारि सत्तास्थानानि भवन्ति—चतुस्त्रिंशं शतं, पञ्चत्रिंशं शतं, अष्टत्रिंश शतं, एकोनचत्वारिंशं
शतं, १३४-१३५-१३८-१३९ चेति। तेष्वेव पण्णवत्यादिषु चतुर्षु मोहनीयत्रयोविंशतिनामत्रयोदशकस्त्यानर्द्धित्रिकप्रक्षेपे पञ्च
त्रिंशच्छतादीनि चत्वारि १३५-१३६-१३९-१४०। मोहनीयचतुर्विंशतिप्रक्षेपे चैतानि षट्त्रिंशच्छतादीनि चत्वारि सत्तास्थानानि
भवन्ति १३६-१३७-१४०-१४१। मोहनीयषड्विंशतिप्रक्षेपे चाष्टत्रिंशच्छतादीनि चत्वारि १३८-१३९-१४२-१४३। मोहनीय-
सप्तविंशतिप्रक्षेपे चैतान्येकोनचत्वारिंशच्छतादीनि चत्वारि भवन्ति १३९-१४०-१४३-१४४। मोहनीयाष्टाविंशतिप्रक्षेपाच्चैतानि
चत्वारिंशच्छतादीनि चत्वारि भवन्ति १४०-१४१-१४४-१४५। अमूनि च मोहनीयद्वाविंशत्यादिप्रकृतिप्रक्षेपभावीनि चतुस्त्रिंशच्छ-
तादीनि पञ्चचत्वारिंशच्छतपर्यन्तानि सत्तास्थानान्यविरतसम्यग्दृष्ट्यादीनामप्रमत्तान्तानामवसेयानि। यच्चानन्तरं पञ्चचत्वारिंशच्छतल-

क्षणं सत्तास्थानं तदेव परभवायुर्बन्धे षट्चत्वारिंशच्छतात्मकसत्तास्थानं (१४६) भवति। तथा यदा जन्तोस्तेजोवायुभवे वर्त्तमानस्य नाम्नोऽष्टसप्ततिरेकमेव च नीचैर्गोत्रलक्षणं गोत्रं सत्तदा तस्य ज्ञानावरणपञ्चकदर्शनावरणनवकवेदनीयद्विकमोहनीयषड्विंशत्यन्तरायपञ्चकतिर्यगायुषां मीलनेन सप्तविंशं शतं (१२७) सत्तास्थानं भवति, तदेव पारभविकतिर्यगायुर्बन्धेऽष्टाविंशत्यधिकं शतं (१२८)। तथा वनस्पतिकायिकेषु यदा स्थितिक्षयाद्देवद्विकनरकद्विकवैक्रियचतुष्टयरूपास्वष्टासु प्रकृतिषु क्षीणासु नाम्नोऽशीतिप्रकृतयः सत्तायां लभ्यन्ते तदा नाम्नोऽशीतिर्द्वे वेदनीये द्वे गोत्रे अनुभूयमानं तिर्यगायुरावरणचतुर्दशकं मोहनीयषड्विंशतिरन्तरायपञ्चकं चेति त्रिंशच्छतात्मकं (१३०) सत्तास्थानं, तदेव परभवायुर्बन्धे एकत्रिंशच्छतात्मकं (१३१) सत्तास्थानम्। तदेवं परिभाव्यमान द्वात्रिंशच्छतात्मकं सत्तास्थानं न प्राप्यत इति तद्वर्जनं कृतम्। इह यद्यपि सप्तनवत्यादीनि तत्तत्प्रकृतिप्रक्षेपादन्यथाऽन्यथाऽनेकधा लभ्यन्ते तथापि संख्यया तुल्यानीति न पृथग्विवक्ष्यन्ते। ततोऽष्टचत्वारिंशदेव सत्तास्थानानि, नोनाधिकानि। अत्रावक्तव्यं सत्कर्म नास्ति, सर्वप्रकृतिसत्ताव्यवच्छेदे भूयः सत्ताया अयोगात्। अवस्थितानि चतुश्चत्वारिंशत्, एकादशद्वादशचतुर्नवतिपञ्चनवतिरूपाणां चतुर्णां सत्तास्थानानामेकसामयिकतयाऽवस्थितत्वायोगात्। सप्तचत्वारिंशदल्पतराणि। सप्तदश भूयस्काराणि, यतस्तानि सप्तविंशतिशतादारभ्य परत एव प्राप्यन्ते, नार्वाक्, परतोऽपि यत्त्रयस्त्रिंशच्छतात्मकं सत्तास्थानं तदपि भूयस्कारतया न लभ्यते, सप्तविंशतिशतादर्वाक्तनानां सत्तास्थानानां परतोऽपि त्रयस्त्रिंशच्छतात्मकस्य सत्तास्थानस्य क्षपकश्रेण्यामेव प्राप्तिसंभवात्। ततश्च प्रतिपाताभावेन तेषां भूयस्कारत्वायोगात्, ततः सप्तदशैव भूयस्काराणि। तदेवमुक्ताः उत्तरप्रकृतिमाश्रित्य बन्धादिषु भूयस्कारादयः। एवं बन्धादीनां स्थित्यादित्रये संक्रमादीनां चतुर्षु चागमानुसारेण स्वयमेव भावना विधेया ॥५२॥

सत्तास्थानेषु भूयस्कारादयः

करणोदयसंताणं सामित्तोघेहिं सेसगं णेयं । गइआइमग्गणासुं संभवओ सुट्ठु आगमिय ॥५३॥

करणोदयसंताणं सामित्तोघेहिं'ति–अट्टण्हं क(रणाणं उद)य संताण य 'सामित्तोघेहिं'ति–एए भणि-
(चू०)—'करणोदयसंताणं समित्तोघेहिं'ति–अट्टण्हं क(रणाणं उद)य संताण य 'सामित्तोघेहिं'ति–एए भणि-
या ओघसामित्तं वुच्चति, तेहिं सामित्तोघेहिं 'सेसकं'ति–आतेसो णेयंति, कत्थ णेयव्वं ? भण्णति–'गइयाइ-
मग्गणासुं संभवओ'त्ति–(गइ)याईसु चोद्दससु मग्गणट्ठाणेसु 'संभवओ'त्ति–जत्थ जहा घडति 'सुट्ठुआगमिय'
त्ति–अचंत पुव्वावरउवओगं काउं ॥५३॥

(मलय०)—'करणोदयसंताणं'ति–अष्टानां करणानामुदयसत्तयोश्च यदुक्तं प्रत्येकं सप्रपञ्चं स्वरूपं तत् ओघस्वामित्वमुच्यते । 'सा-
मित्तोघेहिं'ति द्वितीयार्थे तृतीया, व्यक्त्यपेक्षया च बहुवचनम् । ततश्च तानि ओघस्वामित्वानि यथोक्तकरणाष्टकोदयसत्तास्वरूपरू-
पाणि सुष्ठु आगम्य परिभाव्य शेषकमपि ज्ञातव्यं, क्व ज्ञातव्यमित्याह–गत्यादिषु चतुर्दशसु मार्गणास्थानेषु, कथमित्याह–'संभवतो',
यथा संभवति यथा घटते तथैव, नान्यथा ॥५३॥

(उ०)–अष्टानां करणानामुदयसत्तयोश्च यदुक्तं प्रत्येकं स्वरूपं तत्स्वामित्वौघैरिति द्वितीयार्थे तृतीया व्यक्त्यपेक्षया बहुवचनं उत्त-
राभिधेयस्य च प्राग्निपातः, ततश्च तान्योघस्वामित्वानि यथोक्तकरणाष्टकोदयसत्तारूपाणीत्यर्थः । सुष्ठु आगम्य परिभाव्य शेषकमपि
ज्ञातव्यम् । क्वेत्याह–गत्यादिषु चतुर्दशसु मार्गणास्थानेषु । कथमित्याह–'संभवतः', शास्त्रानुसारेण, नान्यथा ॥५३॥

बंधोदीरणसंकमसंतुदयाणं जहन्नयाईहिं । संवेहो पगइट्ठिइअणुभागपएसओ णेओ ॥५४॥

क्षणं सत्तास्थानं तदेव परभवायुर्बन्धे षट्चत्वारिंशच्छतात्मकसत्तास्थानं (१४६) भवति। तथा यदा जन्तोस्तेजोवायुभवे वर्त्तमानस्य नाम्नोऽष्टसप्ततिरेकमेव च नीचैर्गोत्रलक्षणं गोत्रं सत्तदा तस्य ज्ञानावरणपञ्चकदर्शनावरणनवकवेदनीयद्विकमोहनीयषड्विंशत्यन्तरायपञ्च कतिर्यगायुषां मीलनेन सप्तविंशं शतं (१२७) सत्तास्थानं भवति, तदेव पारभविकतिर्यगायुर्बन्धेऽष्टाविंशत्यधिकं शतं (१२८)। तथा वनस्पतिकायिकेषु यदा स्थितिक्षयाद्देवद्विकनरकद्विकवैक्रियचतुष्टयरूपास्वष्टासु प्रकृतिषु क्षीणासु नाम्नोऽशीतिप्रकृतयः सत्तायां लभ्यन्ते तदा नाम्नोऽशीतिर्द्वे वेदनीये द्वे गोत्रे अनुभूयमानं तिर्यगायुरावरणचतुर्दशकं मोहनीयषड्विंशतिरन्तरायपञ्चकं चेति त्रिंशच्छतात्मकं (१३०) सत्तास्थानं, तदेव परभवायुर्बन्धे एकत्रिंशच्छतात्मकं (१३१) सत्तास्थानम्। तदेवं परिभाव्यमान द्वात्रिंशच्छतात्मकं सत्तास्थानं न प्राप्यत इति तद्वर्जनं कृतम्। इह यद्यपि सप्तनवत्यादीनि तत्तत्प्रकृतिप्रक्षेपादन्यथाऽन्यथाऽनेकधा लभ्यन्ते तथापि संख्यया तुल्यानीति न पृथग्विवक्ष्यन्ते। ततोऽष्टचत्वारिंशदेव सत्तास्थानानि, नोनाधिकानि। अत्रावक्तव्यं सत्कर्म नास्ति, सर्वप्रकृतिसत्ताव्यवच्छेदे भूयः सत्ताया अयोगात्। अवस्थितानि चतुश्चत्वारिंशत्, एकादशद्वादशचतुर्नवतिपञ्चनवतिरूपाणां चतुर्णां सत्तास्थानानामेकसामयिकतयाऽवस्थितत्वायोगात्। सप्तचत्वारिंशदल्पतराणि। सप्तदश भूयस्काराणि, यतस्तानि सप्तविंशतिशतादारभ्य परत एव प्राप्यन्ते, नार्वाक्, सप्तविंशतिशतादर्वाक्तनानां सत्तास्थानानां परतोऽपि त्रयपरतोऽपि यत्त्रयस्त्रिंशच्छतात्मकं सत्तास्थानं तदपि भूयस्कारतया न लभ्यते, त्रिंशच्छतात्मकस्य सत्तास्थानस्य क्षपकश्रेण्यामेव प्राप्तिसंभवात्। ततश्च प्रतिपाताभावेन तेषां भूयस्कारत्वायोगात्, ततः सप्तदशैव भूयस्काराणि। तदेवमुक्ताः उत्तरप्रकृतिमाश्रित्य बन्धादिषु भूयस्कारादयः। एवं बन्धादीनां स्थित्यादित्रये संक्रमादीनां चतुर्षु चागमानुसारेण स्वयमेव भावना विधेया ॥५२॥

**करणोदयसंताणं सामित्तोघेहिं सेसगं णेयं । गइआइमग्गणासुं संभवओ सुट्ठु आगमिय ॥५३॥**

(चू०)— 'करणोदयसंताणं समित्तोघेहिं'ति–अट्ठण्हं क(रणाणं उद)य संताण य 'सामित्तोघेहिं'ति–एए भणिया ओघसामित्त वुच्चति, तेहिं सामित्तोघेहिं 'सेसकं'ति–आतेसो णेयंति, कत्थ णेयव्वं ? भण्णति–'गइयाइमग्गणासुं संभवओ'त्ति–(गइ)याईसु चोद्दससु मग्गणट्ठाणेसु 'संभवओ'त्ति–जत्थ जहा घडति 'सुट्ठुआगमिय' त्ति–अचंत पुव्वावरउवओगं काउं ॥५३॥

(मलय०)—'करणोदयसंताणं'ति–अष्टानां करणानामुदयसत्तयोश्च यदुक्तं प्रत्येकं सप्रपञ्चं स्वरूपं तत् ओघस्वामित्वमुच्यते । 'सामित्तोघेहिं'ति द्वितीयार्थे तृतीया, व्यक्त्यपेक्षया च बहुवचनम् । ततश्च तानि ओघस्वामित्वानि यथोक्तकरणाष्टकोदयसत्तास्वरूपरूपाणि सुष्ठु आगम्य परिभाव्य शेपकमपि ज्ञातव्यं, क्व ज्ञातव्यमित्याह–गत्यादिषु चतुर्दशसु मार्गणास्थानेषु, कथमित्याह–'संभवतो', यथा संभवति यथा घटते तथैव, नान्यथा ॥५३॥

(उ०)–अष्टानां करणानामुदयसत्तयोश्च यदुक्तं प्रत्येकं स्वरूपं तत्स्वामित्वौघैरिति द्वितीयार्थे तृतीया व्यक्त्यपेक्षया बहुवचनं उत्तराभिधेयस्य च प्राग्निपातः, ततश्च तान्योघस्वामित्वानि यथोक्तकरणाष्टकोदयसत्तारूपाणीत्यर्थः । सुष्ठु आगम्य परिभाव्य शेपकमपि ज्ञातव्यम् । क्वेत्याह–गत्यादिषु चतुर्दशसु मार्गणास्थानेषु । कथमित्याह–'संभवतः', शास्त्रानुसारेण, नान्यथा ॥५३॥

**बंधोदीरणसंकमसंतुदयाणं जहन्नयाईहिं । संवेहो पगइट्ठिइअणुभागपएसओ णेओ ॥५४॥**

(चू०)—'बन्धोदीरणसंकमसंतुदयाणं'ति–एएसिं पंचण्हं पदाणं 'जहन्नगाईहिं'ति–जहन्नउक्कोसेणं 'संवेहो'त्ति–परोप्परमेलवणं 'पगतिट्ठितिअणुभागपदेसतो णेओ'त्ति–एएहिं णेयव्वा ॥५४॥

(मलय०)—'बंधोदीरण'त्ति–बन्धोदीरणासंक्रमसत्तोदयरूपाणां पञ्चानां पदार्थानां 'प्रकृतिस्थित्यनुभागप्रदेशतः' प्रकृतिस्थित्यनुभागप्रदेशानधिकृत्य जघन्याजघन्योत्कृष्टानुत्कृष्टैः संवेधः–परस्परमेककालमागमाविरोधेन मीलनम्। यथा ज्ञानावरणीयस्य जघन्ये स्थितिबन्धे जघन्योऽनुभागबन्धः, जघन्यः प्रदेशबन्धः, अजघन्याः स्थित्युदीरणासंक्रमसत्तोदया इत्यादिरूपं, तत्पूर्वापरौ सुष्ठु परिभाव्य ज्ञातव्यम् ॥५४॥

(उ०)–बन्धोदीरणासंक्रमसत्तोदयरूपाणां पञ्चानां पदार्थानां प्रकृतिस्थित्यनुभागप्रदेशतः प्रकृतिस्थित्यनुभागप्रदेशानधिकृत्य जघन्याजघन्योत्कृष्टानुत्कृष्टैः संवेधो–मिथः शास्त्राविरोधेनैककालं मीलनं, यथा ज्ञानावरणीयस्य जघन्ये स्थितिबन्धे जघन्योऽनुभागबन्धो जघन्यः प्रदेशबन्धः अजघन्याः स्थित्युदीरणासंक्रमोदया इत्यादिरूपं, तत्पूर्वापरविचारं सुष्ठु परिभाव्य ज्ञातव्यम् ॥५४॥

तदेवमुक्ता सत्ता। समाप्तः प्रकृतग्रन्थार्थः। अथ संवेधप्रसङ्गाद्बन्धोदयसत्तासंवेधप्रतिपादकसप्ततिकार्थो महोपयोगीत्यत्रैवायं दिङ्मात्रेणोपदर्श्यते तत्र प्रथमतो। मूलप्रकृतिषु बन्धस्य बन्धेन संवेध उच्यते–

आयुषि बध्यमानेऽष्टापि कर्माणि नियमाद्बध्यन्ते आप्रमत्तगुणस्थानं, शेषेषु गुणस्थानेषु सप्तबन्धेऽप्यायुषो न बन्ध इति। मोहनीये बध्यमाने सप्तानामष्टानां वा बन्धः। तद्बन्धो ह्यनिवृत्तिबादरान्तः। तत्र मिश्रापूर्वकरणानिवृत्तिबादरेषु सप्तानामेव, शेषेषु त्वप्रमत्तान्तेष्वायुर्बन्धाभावे सप्तानां तद्बन्धे त्वष्टानां बन्धः। वेदनीये बध्यमाने एकस्य षण्णां सप्तानामष्टानां वा बन्धः, तत्रोपशान्तमोहादौ

बंधोदय सत्ता संवेधः

ज्ञानावरणदर्शनावरणनामगोत्रान्तरायेषु
वेदनीये वध्यमाने तदेवैकं वध्यते, सूक्ष्मसम्पराये मोहायुर्वर्जानि षट्, सप्ताष्टभावना प्राग्वत्। तदेवं चिन्तितो बन्धस्य बन्धेन संवेधः। अथोदयस्योदय-
वध्यमानेषु षट् सप्ताष्टौ च, तत्र षट् सूक्ष्मसम्पराये, सप्ताष्टभावना प्राग्वत्। सत्ताभ्यां सह चिन्त्यते—

मोहस्योदये नियमादष्टावप्युदये सत्तायां च लभ्यन्ते। तदुदयो हि सूक्ष्मसम्परायान्तः। सूक्ष्मसम्परायं यावच्च सर्वाण्यपि कर्मा-
ण्युदये सत्तायां च प्राप्यन्त इति। ज्ञानावरणदर्शनावरणान्तरायाणामुदये सति सप्ताष्टौ च सत्तायामुदये च लभ्यन्ते। तत्राष्टावुदये सूक्ष्मसम्परायं यावत्, सत्तायां तूपशान्तमोहेऽपि। सप्त तूदयमाश्रित्योपशान्तमोहे क्षीणमोहे वा सत्तामधिकृत्य तु क्षीणमोहे एव। वेदनीयायुर्नामगोत्राणामुदये सत्यष्टौ सप्त चत्वारि वा सन्त्युदयवन्ति च प्राप्यन्ते। तत्राष्टावुदयमधिकृत्य सूक्ष्मसम्परायं, सत्तामधिकृत्य तूपशान्तमोहं यावत्। सप्तोदयमधिकृत्योपशान्तमोहे क्षीणमोहे वा सत्तामधिकृत्य तु क्षीणमोह एव। चत्वारि त्रयोदशे चतुर्दशे वा गुणस्थाने तान्येव। तदेवमुक्त उदयस्योदयसत्ताभ्यां संवेधः। अथ सत्ताया उदयसत्ताभ्यां चिन्त्यते—

तत्र मोहनीयस्य सत्तायामुदयोऽष्टानां सप्तानां वा। तत्राष्टानां सूक्ष्मसम्परायं यावत्, सप्तानां तूपशान्तमोहे, सत्ता पुनरष्टानामेव, मोहनीयसत्तायाः शेषसर्वसत्तानान्तरीयकत्वात्। ज्ञानावरणदर्शनावरणान्तरायाणां सत्तायां सप्तानामष्टानां वोदयः। तत्राष्टानामुदयः सूक्ष्मसम्परायं यावत्, सप्तानामुपशान्तमोहे क्षीणमोहे वा। सत्ताऽप्यष्टानां सप्तानां वा, अष्टानामुपशान्तमोहं यावत्, सप्तानां क्षीणमोहे। वेदनीयायुर्नामगोत्राणां सत्तायां सप्तानामष्टानां चतुर्णां वा सत्तोदयौ। तत्र सप्तानामष्टानां वा सत्तोदयौ प्राग्वत्। चतुर्णां त्रयोदशे चतुर्दशे च गुणस्थाने। तदेवमुक्तः सत्ताया उदयसत्ताभ्यां संवेधः। अथोदयस्य बन्धेन सह संवेध उच्यते—

## मूलप्रकृतीनां बंधोदयोदीरणासत्तानां संवेधयन्त्रम्

| बंधे | बंधः | उदयः | उदीरणा | सत्ता | उदये | बंधः | उदयः | उदीरणा | सत्ता |
|---|---|---|---|---|---|---|---|---|---|
| ज्ञानावरणीयस्य | ८–७–६ | ८ | ८–७–६–५ | ८ | ज्ञानावरणीयस्य | ८–७–६–१ | ८–७ | ८–७–६–५–२ | ८–७ |
| दर्शनावरणीयस्य | ,, | ८ | ,, | ,, | दर्शनावरणीयस्य | ,, | ,, | ,, | ,, |
| वेदनीयस्य | ८–७–६–१ | ८–७–४ | ८–७–६–५–२ | ८–७–४ | वेदनीयस्य | ,, | ८–७–४ | ,, | ८–७–४ |
| मोहनीयस्य | ८–७ | ८ | ८–७–६ | ८ | मोहनीयस्य | ८–७–६ | ८ | ८–७–६–५ | ८ |
| आयुषः | ८ | ,, | ८ | ,, | आयुष | ८–७–६–१ | ८–७–४ | ८–७–६–५–२ | ८–७–४ |
| नाम्नः | ८–७–६ | ,, | ८–७–६–५ | ,, | नाम्नः | ,, | ,, | ,, | ,, |
| गोत्रस्य | ,, | ,, | , | ,, | गोत्रस्य | ,, | ,, | ,, | ,, |
| अन्तरायस्य | ,, | ,, | ,, | ,, | अंतरायस्य | ,, | ८–७ | ,, | ८–७ |

| उदीरणायां | | | | | सत्तायां | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ज्ञानावरणीयस्य | ८-७-६-१ | ८-७ | ८-७-६-५ | ८-७ | ज्ञानावरणीयस्य | ८-७-६-१ | ८-७ | ८-७-६-५-२ | ८-७ |
| दर्शनावरणीयस्य | ,, | ,, | ,, | ,, | दर्शनावरणीयस्य | ,, | ,, | ,, | ,, |
| वेदनीयस्य | ८-७ | ८ | ८-७ | ८ | वेदनीयस्य | ,, | ८-७-४ | ,, | ८-७-४ |
| मोहनीयस्य | ८-७-६ | ,, | ८-७-६ | ,, | मोहनीयस्य | ,, | ८-७ | ८-७-६-५ | ८ |
| आयुषः | ८-७ | ,, | ८ | ,, | आयुषः | ,, | ८-७-४ | ८-७-६-५-२ | ८-७-४ |
| नाम्नः | ८-७-६-१ | ८-७-४ | ८-७-६-५-२ | ८-७-४ | नाम्न | ,, | ,, | ,, | ,, |
| गोत्रस्य | ,, | ,, | ,, | ,, | गोत्रस्य | ,, | ,, | ,, | ,, |
| अन्तरायस्य | ,, | ८-७ | ८-७-६-५ | ८-७ | अंतरायस्य | ,, | ८-७ | ,, | ८-७ |

मोहनीयस्योदये षट् सप्ताष्टौ वा बध्यन्ते। तत्राष्टावायुर्बन्धकाले, तदभावे तु सप्त, तानि चानिवृत्तिबादरं यावत्, षट् सूक्ष्मसम्पराये। मोहनीयवर्जानां शेषाणामुदये एकं षट् सप्ताष्टौ च बध्यन्ते। तत्र षट्सप्ताष्टभावना प्राग्वत्। एकं ज्ञानावरणदर्शनावरणान्तरायाणामुदये उपशान्तमोहे क्षीणमोहे वा, वेदनीयायुर्नामगोत्राणामुदये सयोगिकेवलिन्यपि, तच्चैकं सातवेदनीयरूपं द्रष्टव्यम्। तदेवमुक्त उदयस्य बन्धेन सह सवेधः। अथ बन्धस्योदयेन सहोच्यते—

षण्णां सप्तानामष्टानां वा बन्धे मोहस्योदयो भवति, अष्टसप्तषड्बन्धानां क्रमेणाप्रमत्तानिवृत्तिबादरसूक्ष्मसम्परायान्तत्वात्, मोहोदयस्य चावश्यं सूक्ष्मसम्परायान्तत्वात्। शेषाणां तूदयोऽष्टानां सप्तानां षण्णामेकस्य च बन्धे भवति। तथाहि—ज्ञानावरणदर्शनावरणान्तरायाणामुदयः क्षीणमोहं यावत्, वेदनीयायुर्नामगोत्राणामयोगिकेवलिनं यावत् एकस्य बन्ध उपशान्तमोहादौ। ततः शेषाणामुदयः सप्ताष्टषडेकबन्धेऽपि भवति। तदेवमुक्तो बन्धस्योदयेन सह संवेधः। अथ सत्ताया बन्धेन सहोच्यते—

एकैकस्यापि कर्मणः सत्तायामेकषट्सप्ताष्टभेदैश्चतुर्विधोऽपि बन्धः संभवति। मोहनीयस्य सत्ताया उपशान्तमोहं शेषघातिनां क्षीणमोहं अघातिनां चतुर्णामयोगिकेवलिनं यावत्प्राप्तेः, अष्टसप्तषडेकबन्धानां च यथासंक्रमं, अप्रमत्तमनिवृत्तिबादरं सूक्ष्मसम्परायमुपशान्तमोहादिकं च यावत्प्राप्तेः। तदेवमुक्तः सत्ताया बन्धेन संवेधः। अथ बन्धस्य सत्तया सहोच्यते—

अष्टबन्धे सप्तबन्धे षड्बन्धे च नियमादष्टानां सत्ता, एकस्य च बन्धेऽष्टानां सप्तानां चतुर्णां च क्रमेणोपशान्तमोहे क्षीणमोहे सयोगिकेवलिनि च। उक्तो बन्धस्य सत्तया संवेधः। सम्प्रत्युदयेन सहाभिधीयते—

सप्तानामष्टानां षण्णां वा बन्धे नियमादष्टानामपि प्रकृतीनामुदयो भवति। सातवेदनीयस्यैवैकस्य बन्धे सप्तानां चतुर्णां वोदयः।

तत्र सप्तानामुपशान्तमोहे क्षीणमोहे वा । चतुर्णां सयोगिकेवलिनि । तदेवमुक्तो मूलप्रकृतीरधिकृत्य बन्धोदयसत्तानां संवेधः । अथै-
तासामेव स्थानान्युच्यन्ते—

स्थानं नाम द्वित्र्यादिप्रकृतिसमुदायः । तत्र वेदनीयायुर्गोत्राणां प्रत्येकं द्वे द्वे सत्तास्थाने—द्वे एका चेति । तत्र वेदनीयस्यायोगि-
केवलिद्विचरमसमयं यावद्द्वे अपि सत्यौ, एकतरस्य व्यवच्छेदे चरमसमये एका । गोत्रस्योच्चैर्गोत्रे उद्वलिते नीचैर्गोत्रे वाऽयोगिद्वि-
चरमसमये क्षीणे एका सती, शेषकाले तु द्वे । बन्धे उदये च वेदनीयायुर्गोत्राणामेकमेवैकप्रकृतिरूपं स्थानम् । न ह्यमीषां द्वित्रादिप्रकृ-
तयो युगपद्बन्धमुदयं वा गच्छन्ति । तथा ज्ञानावरणान्तराययोः प्रत्येकं बन्धोदयसत्तास्वेकैकं पञ्चपञ्चप्रकृत्यात्मकं स्थानम् ।

अथायुषो गुणस्थानेषु बन्धोदयसत्ताश्चिन्त्यन्ते—आद्यं गुणस्थानं यावन्नरकायुषो द्वितीयं यावत्तिर्यगायुषश्चतुर्थं यावन्मनुष्यायुषः
सप्तमं यावद्देवायुषो बन्धः । तथा चतुर्थं यावन्नरकायुषो देवायुषश्चोदयः, पञ्चमं यावत्तिर्यगायुषश्चतुर्दशं यावन्मनुष्यायुषः । तथा सप्तमं
यावन्नरकायुषः सत्ता, सप्तमं यावत्तिर्यगायुषोऽयोगिकेवलिनं यावन्मनुष्यायुषः, देवायुषस्तूपशान्तमोहगुणस्थानकं यावत्, यतो देवा-
युष्यपि बद्धेऽप्युपशमश्रेणिमारभते, सा चोपशान्तमोहगुणस्थानं यावद्भवति । सम्प्रत्यायुषो बन्धोदयसत्तासंवेध उच्यते—तत्र तिर्यञ्चो
मनुष्याश्च सर्वत्रोत्पद्यन्त इति तेषां चतुर्णामप्यायुषां बन्धसंभवः, देवा नारकाश्च तिर्यङ्मनुष्यगत्योरेवोत्पद्यन्त इति तेषां द्वयोरेवायुषो-
र्बन्धः । ततस्तिर्यङ्मनुष्यगत्योर्नव नव, देवनारकयोश्च पञ्च पञ्च भङ्गाः सम्भवन्तीति सर्वसंख्ययाऽष्टाविंशतिर्भङ्गाः । तथाहि—नैरयि-
कस्य परभवायुर्बन्धकालात् पूर्वं नारकायुष उदयो नारकायुषः सत्ता १, एष भङ्ग आद्येषु चतुर्षु गुणस्थानेषु प्राप्यते, शेषगुणस्थानस्य
नरकेऽसम्भवात् । परभवायुर्बन्धकाले तिर्यगायुषो बन्धो नारकायुष उदयो नारकतिर्यगायुषी सती २, एष भङ्गो मिथ्यादृष्टेः सासादनस्य

वा । अथवा मनुष्यायुषो बन्धो नारकायुष उदयो मनुष्यनारकायुषी सती ३, एष भङ्गो मिथ्यादृष्टेः सासादनस्याविरतसम्यग्दृष्टेर्वा । बन्धोपरमे नारकायुष उदयो नारकतिर्यगायुषी सती ४, एष भङ्ग आद्येषु चतुर्ष्वपि गुणस्थानेषु, तिर्यगायुर्बन्धानन्तरं कस्यचिन्नारकस्य सम्यङ्मिथ्यात्वे सम्यक्त्वे वा गमनसंभवात् । अथवा नारकायुष उदयो मनुष्यनारकायुषी सती ५, एषोऽपि भङ्ग आद्येषु चतुर्ष्वपि गुणस्थानेषु, मनुष्यायुर्बन्धानन्तरं मिश्रे सम्यक्त्वे च संक्रमसम्भवात् । एवं देवानामपि पञ्च भङ्गा भावनीयाः । नवरं नारकायुषः स्थाने देवायुरुच्चारणीयम् । तिरश्चां परभवायुर्बन्धकालात् पूर्वं तिर्यगायुष उदयस्तिर्यगायुषः सत्ता १, एष भङ्ग आद्येषु पञ्चसु गुणस्थानेषु, शेषगुणस्थानस्य तिर्यक्ष्वसम्भवात् । बन्धकाले नारकायुषो बन्धस्तिर्यगायुष उदयो नारकतिर्यगायुषी सती २, एष भङ्गो मिथ्यादृष्टेः, अन्यस्य नारकायुरबन्धकत्वात् । अथवा तिर्यगायुषो बन्धस्तिर्यगायुष उदयो द्वे तिर्यगायुषी सती ३, एष भङ्गो मिथ्यादृष्टेः सासादनस्य वा । यद्वा मनुष्यायुषो बन्धस्तिर्यगायुष उदयो मनुष्यतिर्यगायुषी सती ४, एषोऽपि भङ्गो मिथ्यादृष्टेः सासादनस्य वा, तिरश्चोऽविरतसम्यग्दृष्टेर्देशविरतस्य वा देवायुष एव बन्धसम्भवात् । यद्वा देवायुषो बन्धस्तिर्यगायुष उदयो देवतिर्यगायुषी सती ५, एष भङ्गो मिश्रवर्जितेष्वाद्येषु पञ्चस्वपि गुणस्थानेषु, मिश्रस्यायुर्बन्धायोगात्तद्वर्जनम् । बन्धोपरमे तु तिर्यगायुष उदयो नरकतिर्यगायुषी सती ६, एष भङ्ग आद्येषु पञ्चसु गुणस्थानेषु, नरकायुर्बन्धानन्तरं मिश्रसम्यक्त्वादावपि गमनसंभवात् । अथवा तिर्यगायुष उदयो द्वे तिर्यगायुषी सती ७, अथवा तिर्यगायुष उदयो मनुष्यतिर्यगायुषी सती ८, अथवा तिर्यगायुष उदयो देवतिर्यगायुषी सती ९, एते त्रयोऽपि भङ्गा आद्येषु पञ्चसु गुणस्थानेषु । तदेवं सर्वसंख्यया तिरश्चां नव भङ्गाः । मनुष्याणामप्येवं नवैव । तत्र मनुष्यायुष उदयो मनुष्यायुषः सत्तेत्येष भङ्गोऽयोगिकेवलिनं यावत् १ । परभवायुर्बन्धकाले नरकायुषो बन्धो मनुष्यायुष उदयो नारकमनुष्या-

## आयुपो बंधोदयसत्तासंवेधभङ्गाः २८

| | भंग संख्या | बंध. | उदय | सत्ता | गुणस्थानप्राप्ति. |
|---|---|---|---|---|---|
| नारक | १ | | न० | न० | ४ या० (आयुर्वंधकालादर्वाग्) |
| | २ | ति० | ,, | ति० न० | १–२ (आयुर्वंधकाले) |
| | ३ | म० | ,, | म० न० | १–२–४ ( ,, ) |
| | ४ | | ,, | ति० न० | ४ या० (वंधोपरमे) |
| | ५ | | ,, | म० न० | ,, ( ,, ) |
| देव | ६ | | दे० | दे० | ,, (आयुर्वंधकालादर्वाग्) |
| | ७ | ति० | ,, | ति० दे० | १–२ (आयुर्वंधकाले) |
| | ८ | म० | ,, | म० दे० | १–२–४ (आयुर्वंधकाले) |
| | ९ | | ,, | ति० दे० | ४ या० (वंधोपरमे) |
| | १० | | ,, | म० दे० | ,, ( ,, ) |

| | भंग संख्या | बंधः | उदयः | सत्ता | गुणस्थानप्राप्तिः |
|---|---|---|---|---|---|
| तिर्यक् | ११ | | ति० | ति० | ५ या० (आयुर्वंधादर्वाग्) |
| | १२ | न० | ,, | न० ति० | १ मे (बंधकाले) |
| | १३ | ति० | ,, | ति० ति० | १–२ ( ,, ) |
| | १४ | म० | ,, | म० ति० | ,, ( ,, ) |
| | १५ | दे० | ,, | दे० ति० | १–२–४–५ ( ,, ) |
| | १६ | | ,, | न० ति० | ५ या० (वंधोपरमे) |
| | १७ | | ,, | ति० ति० | ,, ,, |
| | १८ | | ,, | म० ति० | ,, ,, |
| | १९ | | ,, | दे० ति० | ,, ,, |

| | | | | | |
|---|---|---|---|---|---|
| मनुष्य | २० | | म० | म० | १४ या० (आयुर्बंधादर्वाग्) |
| | २१ | न० | „ | न० म० | १ मे (आयुर्बंधकाले) |
| | २२ | ति० | „ | ति० म० | १-२ ( „ ) |
| | २३ | म० | „ | म० म० | १-२ ( „ ) |
| | २४ | दे० | „ | दे० म० | ७ या० ( „ ) |
| | २५ | | „ | न० म० | „ (बंधोपरमे) |
| | २६ | | „ | ति० म० | „ „ |
| | २७ | | „ | म० म० | „ „ |
| | २८ | | „ | दे० म० | ११ या० ( „ ) |

युषी सती २, एष भङ्गो मिथ्यादृष्टेः, अन्यस्य नरकायुरबन्धकत्वात्। तिर्यगायुषो बन्धो मनुष्यायुष उदयस्तिर्यङ्मनुष्यायुषी सती ३, एष विकल्पो मिथ्यादृष्टेः सासादनस्य वा. मनुष्यायुषो बन्धो मनुष्यायुष उदयो द्वे मनुष्यायुषी सती ४, एष भङ्गो मिथ्यादृष्टेः सासादनस्य वा, देवायुषो बन्धो मनुष्यायुष उदयो देवमनुष्यायुषी सती, एष भङ्गोऽप्रमत्तगुणस्थानं यावत् ५। बन्धोपरमे तु मनुष्यायुष उदयो नरकमनुष्यायुषी सती ६, मनुष्यायुष उदयस्तिर्यङ्मनुष्यायुषी सती ७, मनुष्यायुष उदयो द्वे मनुष्यायुषी सती ८, एते त्रयोऽपि भङ्गा अप्रमत्तगुणस्थानं यावत्, नरकतिर्यङ्मनुष्यायुर्बन्धानन्तरं कस्यचित्संयमप्रतिपत्तेरपि भावात्। मनुष्यायुष उदयो देवमनुष्यायुषी सती ९, एष भङ्ग उपशान्तमोहगुणस्थानं यावत्, देवायुषि बद्धेऽप्युपशमश्रेण्यारोहसंभवात्।

दर्शनावरणस्य संवेध भंगाः

अथ दर्शनावरणस्य बन्धोदयसत्तास्थानान्युच्यन्ते—अस्य त्रीणि बन्धस्थानानि, नव षड् चतस्रश्चेति। तत्र सर्वप्रकृतिसमुदायो नव,

तद्बन्धश्चाद्यगुणस्थानद्वयं यावत्। ता एव नव प्रकृतयः स्त्यानर्द्धित्रिकरहिताः षड् भवन्ति, तद्बन्धश्च मिश्रगुणस्थानादारभ्यापूर्वकरणगुणस्थानस्य प्रथमभागं यावत्। ता एव षट् प्रकृतयो निद्राप्रचलाहीनाश्चतस्रः, तद्बन्धश्चापूर्वकरणगुणस्थानप्रथमभागादूर्ध्वं सूक्ष्मसम्परायं यावत्। सत्तास्थानान्यपि दर्शनावरणस्य त्रीणि, नव षट् चतस्रश्चेति। तत्र क्षपकश्रेणिमधिकृत्यानिवृत्तिबादरसम्परायाद्यभागं यावन्नव सत्यः। तत ऊर्ध्वं तु स्त्यानर्द्धित्रिके क्षीणे षट् प्रकृतयः, ताश्च क्षीणमोहद्विचरमसमयं यावत्सत्यः। द्विचरमसमये निद्राप्रचलयोः सत्ताव्यवच्छेदे चतस्रः सत्यः, ताश्च क्षीणमोहचरमसमय एव क्षीयन्ते। उपशमश्रेण्यां तु नवापि प्रकृतय उपशान्तमोहगुणस्थानं यावत्सत्यः। अत्र नवबन्धस्थाने कालमधिकृत्य भङ्गत्रयं, तथाहि–तदनाद्यनन्तमनादिसान्तं सादिसान्तं चेति। तत्रानाद्यनन्तमभव्यानां, तेषां कदापि नवविधबन्धव्यवच्छेदासंभवात्। अनादिसान्तं भव्यानां, तेषां कालान्तरे नवविधबन्धव्यवच्छेदसंभवात्। सादिसान्तं सम्यक्त्वात्पतितानां द्रष्टव्यं, तच्च जघन्येनान्तर्मुहूर्त्तं कालं यावत् उत्कर्षतो देशोनार्धपुद्गलपरावर्त्तं यावत्। तथा षट्प्रकृत्यात्मकस्य बन्धस्थानस्य निरन्तरं बध्यमानत्वेनावस्थानमुत्कर्षतो द्वे षट्षष्टी सागरोपमाणां, अन्तरा सम्यङ्मिथ्यात्वान्तरितस्य सम्यक्त्वस्यैतावन्तं कालं यावदवस्थानसंभवात्, तत ऊर्ध्वं तु कश्चित् क्षपकश्रेणिं प्रतिपद्यते, कश्चित्तु मिथ्यात्वं, मिथ्यात्वप्रतिपत्तौ चावश्यं नवविधो बन्ध इति, जघन्येन चान्तर्मुहूर्त्तम्। चतुर्विधबन्धस्थानं जघन्येनैकं समयं उत्कर्षतोऽन्तर्मुहूर्त्तम्। तत्रोपशमश्रेण्यामपूर्वकरणद्वितीयभागे चतुर्विधबन्धमारभ्यानन्तरसमये कश्चित्कालं करोति, कालं च कृत्वा दिवं गतः सन्नविरतो भवति, अविरतत्वे च षड्विधबन्ध इति चतुर्विधबन्धस्थानस्यैकसामयिकी स्थितिरुत्कर्षेण त्वान्तर्मौहूर्तिकी, अपूर्वकरणद्वितीयभागादारभ्य सूक्ष्मसम्परायान्तस्यापि कालस्यान्तर्मुहूर्त्तप्रमाणत्वात्। तथा नवप्रकृत्यात्मकं दर्शनावरणस्य सत्तास्थानं कालमधिकृत्य द्विधा–अनाद्यनन्तमनादिसान्तं च। अनाद्यनन्तमभव्यानां, कदा-

दर्शनावरण-
स्य संवेध
भंगाः

प्यव्यवच्छेदात् ,अनादिसान्तं भव्यानां, कालान्तरे व्यवच्छेदात् । सादिसान्तं तु न भवति, नवात्मकसत्तास्थानव्यवच्छेदस्य क्षपकश्रेण्यां भावात् , ततश्च प्रतिपाताभावात् । षट्प्रकृत्यात्मकं तु सत्तास्थानमजघन्योत्कृष्टमन्तर्मुहूर्त्तप्रमाणम् । चतुष्प्रकृत्यात्मकं त्वेकसामयिकम् । उदयस्थाने दर्शनावरणस्य द्वे, तद्यथा–चतस्रः पञ्च च । तत्र दर्शनावरणचतुष्कस्य केवलस्योदये चतुष्प्रकृत्यात्मकमुदयस्थानं, अन्यतमनिद्रोदयसाहित्ये च पञ्चप्रकृत्यात्मकं, एते द्वे अप्युदयस्थाने क्षीणमोहगुणस्थानं यावद्द्रष्टव्ये । अयं च चतसृणां पञ्चानां वा प्रकृतीनामुदय एकत्र युगपद्भावापेक्षया द्रष्टव्यः, सामान्यचिन्तायां तु प्रमत्तसंयतं यावन्नवानामप्युदयः, ततः परं स्त्यानर्द्धित्रिकस्योदयाभावात् षण्णामुदयः । स च तावद्यावत्क्षीणमोहस्योपान्त्यसमयः । तत्र च निद्राप्रचलयोरपि व्यवच्छेदाच्चरमसमये चतसृणामुदयः । अथ बन्धोदयसत्तास्थानानां परस्परं संवेध उच्यते–नवविधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, एष भङ्गो निद्रोदयाभावे द्रष्टव्यः, निद्रोदये तु नवविधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एतौ द्वावपि भङ्गौ मिथ्यादृष्टिसासादनानां । तथा षड्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, अथवा षड्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एतौ द्वावपि मिश्रगुणस्थानादारभ्यापूर्वकरणगुणस्थानाद्यभागं यावद्वेदितव्यौ । तथा चतुर्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, अथवा चतुर्विधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एतौ द्वावुपशमश्रेण्यामपूर्वकरणद्वितीयभागादारभ्य सूक्ष्मसम्परायचरमसमयं यावत्, उपशान्ते तु बन्धाभावाच्चतुर्विध उदयो नवविधा सत्ता अथवा पञ्चविध उदयो नवविधा सत्ता इति द्वौ भङ्गौ । क्षीणमोहचरमसमये च चतुर्विध उदयश्चतुर्विधा सत्ता इत्येष नवमो भङ्गः । तथा चतुर्विधो बन्धश्चतुर्विध उदयः षड्विधा सत्तेत्येष विकल्पः स्त्यानर्द्धित्रिकक्षयानन्तरं सूक्ष्मसम्परायचरमसमयं यावत् । तथाऽबन्धश्चतुर्विध उदयः षड्विधा सत्तेत्येष विकल्पः क्षीणमोहे द्विचरमसमयं यावत् । तदेवं सर्वसंख्यया दर्शनावरणस्य सप्ततिकाकार-

## दर्शनावरणे बंधोदयसत्तासंवेधः (भंगाः ११-१३ वा)

| संख्या | बंध | उदय | सत्ता | प्राप्तिस्थानं | संख्या | बंध | उदयः | सत्ता | प्राप्तिस्थानं |
|---|---|---|---|---|---|---|---|---|---|
| १ | ९ | ४ | ९ | निद्रोदयाभावे ( १-२ गु० ) | ८ | ० | ५ | ९ | ,, ,, |
| २ | ९ | ५ | ९ | निद्रोदये ( ,, ) | ९ | ० | ४ | ४ | १२शस्य चरमसमये |
| ३ | ६ | ४ | ९ | ३ त. ८ मस्याद्यभागं यावत् | १० | ४ | ४ | ६ | स्त्या० ३क्षयानंतरं १०मंयावत् |
| ४ | ६ | ५ | ९ | ,, ,, | ११ | ० | ४ | ६ | १२शे उपान्त्यसमयं यावत् |
| ५ | ४ | ४ | ९ | उप०श्रेण्यां ८मस्य द्वितीय | १२ | क्षपकेण ४ | ५ | ६ | स्त्या० ३ क्षयानंतरं १०मं या० |
| ६ | ४ | ५ | ९ | भागादारभ्य १०मपर्यंतं | १३ | | ५ | ६ | १२शे उपान्त्यसमयं या० |
| ७ | ० | ४ | ९ | ११शे बंधाभावात् | | | | | |

मतेनैकादश भङ्गा उक्ताः। केचिदाचार्याः कर्मस्तवकारादयः क्षपके क्षीणमोहे च द्विचरमसमयं यावत् पञ्चानामप्युदयमिच्छन्ति, तन्मतेनान्यौ द्वौ भङ्गौ भवतः, तद्यथा—चतुर्विधो बन्धः पञ्चविध उदयः पड्विधा सत्ता, एप भङ्गः स्त्यानर्द्धित्रिकक्षयानन्तरं सूक्ष्मसंपरायं यावत्। बन्धाभावे पञ्चविध उदयः पड्विधा सत्ता, एप भङ्गः क्षीणमोहे द्विचरमसमयं यावत्। तदेवं सर्वसंख्यया त्रयोदश भङ्गाः।

अथ गोत्रस्य प्रागुक्तानां बन्धोदयसत्तास्थानानां संवेध उच्यते—तत्र नीचैर्गोत्रस्य सासादनगुणस्थानं यावद्बन्धो देशविरतिगुणस्थानं यावदुदयः। उच्चैर्गोत्रस्य तु सूक्ष्मसम्परायं यावद्बन्धोऽयोगिकेवलिनं यावदुदयः। सत्कर्मता तु द्वयोरपि सर्वेष्वपि गुणस्थानेपु। एवं चात्र सप्त भङ्गाः संभवन्ति, तथाहि-नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयो नीचैर्गोत्रं सत् १, एप भङ्गस्तेजोवायुकायिकेपु लभ्यते, तत्रोच्चैर्गोत्रोद्वलनात्तद्भवादुद्वृत्तेपु च शेपजीवेपु कियत्कालं लभ्यते। नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदय उच्चैर्नीचैर्गोत्रे सती २। अथवा नीचैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदयो द्वे सती ३, एतौ भङ्गौ मिथ्यादृष्टिपु सासादनेपु वा, अग्रे तु बन्धो नीचैर्गोत्रस्य नास्तीत्येतदसंभवः। तथोच्चैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयो द्वे सती ४, एप भङ्गो मिथ्यादृष्टेरारभ्य देशविरतिं यावत्, न परतः, परतो नीचैर्गोत्रोदयाभावात्। तथोच्चैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदयो द्वे सती, एप भङ्गः सूक्ष्मसंपरायं यावत्, न परतः, परतो गोत्रबन्धाभावात् ५। अबन्धे उच्चैर्गोत्रस्योदयो द्वे सती, एप विकल्प उपशान्तमोहादारभ्यायोगिद्विचरमसमयं यावत् ६। चरमसमये उच्चैर्गोत्रस्योदय उच्चैर्गोत्रं सत् ७।

अथ वेदनीयस्य प्रागुक्तानां बन्धोदयसत्तास्थानानां संवेध उच्यते—असातस्य बन्धोऽसातस्योदयः सातासाते सती १, अथवाऽसातस्य बन्धः सातस्य उदयो द्वे सती २, एतौ द्वौ भङ्गौ मिथ्यदृष्टेरारभ्य प्रमत्तसंयतं यावत् प्राप्येते, न परतः, परतोऽसातस्य

## गोत्रस्य बंधोदयसत्तासंवेधः (भंगाः ७)

| भं० | बं० | उ० | स० | प्राप्तिस्थानं |
|---|---|---|---|---|
| १ | नी० | नी० | नी० | तेजोवायुकायिकेषु ( कियत्कालमन्येष्वपि ) |
| २ | ,, | ,, | उ० नी० | १–२ गुणयोः |
| ३ | ,, | उ० | नी० उ० | १–२ गुणयोः |
| ४ | उ० | नी० | उ० नी० | ५मं यावत् |
| ५ | ,, | उ० | ,, | १०मं यावत् |
| ६ | ,, | ,, | ,, | ११त १४स्योपान्त्यसमयं या. |
| ७ | ० | ,, | उ० | १४स्य चरमसमये |

## वेदनीयस्य बंधोदयसत्तासंवेधः(भंगाः ८)

| भं० सं० | बंधः | उदयः | सत्ता | प्राप्तिस्थानं |
|---|---|---|---|---|
| १ | असा० | असा० | सा० असा० | ६ यावत् |
| २ | ,, | सा० | ,, | ,, |
| ३ | सा० | असा० | ,, | १३ यावत् |
| ४ | ,, | सा० | ,, | ,, |
| ५ | ० | असा० | ,, | १४स्य द्विचरमसमयं या० |
| ६ | ० | सा० | ,, | १४स्य द्विचरमसमयं या० |
| ७ | ० | असा० | असा० | १४स्य चरमसमये |
| ८ | ० | सा० | सा० | ,, |

बन्धाभावात् । सातस्य बन्धोऽसातस्योदयो द्वे सती ३, यद्वा सातस्य बन्धः सातस्योदयो द्वे सती ४, इमौ द्वौ भङ्गौ मिथ्यादृष्टेरारभ्य सयोगिकेवलिचरमसमयं यावत् । परतो बन्धाभावेऽसातस्योदयः सातासाते सती ५, अथवा सातस्योदयः सातासाते सती ६, एतौ द्वौ भङ्गौ अयोगिकेवलिद्विचरमसमयं यावत् । चरमसमयेऽसातस्योदयोऽसातं सत्, यस्य द्विचरमसमये सातं क्षीणं ७, यस्य त्वसातं द्विचरमसमये क्षीणं तस्य सातस्योदयः सातस्य सत्ता ८ । सर्वसंख्यया वेदनीयाः सांवेधिका अष्टौ भङ्गाः ।

ज्ञानावरणे विघ्ने च संवेधभंगाः २

| | | | | | |
|---|---|---|---|---|---|
| १ | ५ | ५ | ५ | बंधकाले | १० यावत् |
| २ | ० | ५ | ५ | अबंधकाले | १२ यावत् |

ज्ञानावरणान्तराययोश्च पञ्चानामेव बन्ध उदयः सत्ता च, बन्धोपरमेऽपि पञ्चानामेवोदयः सत्ता चेति द्वौ भङ्गौ । तदेवमल्पवक्तव्यत्वादुक्तानि प्रथमतः षट् कर्माणि ।

अथ मोहनीयस्य बन्धोदयसत्तास्थानान्युच्यन्ते–मोहनीयस्य दश बन्धस्थानानि, तद्यथा–प्रथमं बन्धस्थानं द्वाविंशतिः, सा चाद्यगुणस्थाने । द्वितीयमेकविंशतिः, सा च द्वितीयगुणस्थाने । तृतीयं सप्तदश, तत्तृतीयतुरीयगुणस्थानयोः । चतुर्थं त्रयोदश, तच्च पञ्चमे गुणस्थाने । पञ्चमं नव, तच्च षष्ठसप्तमाष्टमगुणस्थानेषु । षष्ठं पञ्चप्रकृत्यात्मकं, सप्तमं चतुष्प्रकृत्यात्मकं, अष्टमं त्रिप्रकृत्यात्मकं, नवमं द्विप्रकृत्यात्मकं, दशममेकप्रकृत्यात्मकं, इमानि पञ्चादीनि पञ्च बन्धस्थानानि नवमगुणस्थाने द्रष्टव्यानि । अत्र मिथ्यात्वं षोडश कषाया अन्यतमो वेदोऽन्यतरद्युगलं भयं जुगुप्सा चेति द्वाविंशतिः । एषा च हास्यरतियुगलेऽरतिशोकयुगले च पर्यायेण

प्राप्यत इति द्विधा, नवकबन्धं यावत्सर्वेषामपि हास्यरत्योररतिशोकयोश्च विकल्पेन बन्धकत्वात्। भूयः सा त्रिष्वपि वेदेषु प्रत्येकं विकल्पेन प्राप्यत इति षोढा। सैव द्वाविंशतिर्मिथ्यात्वाबन्धे एकविंशतिः, नवरमत्र द्वयोर्वेदयोरन्यतरो वेद इति वाच्यं। एकविंशतिबन्धकानां सासादनानां नपुंसकवेदाबन्धकत्वात्तद्बन्धस्य मिथ्यात्वोदयहेतुकत्वात्सासादनानां च तदुदयाभावात्ततो द्वयोर्युगलयोर्द्वयोश्च वेदयोः संचारणया चतुर्धैकविंशतिः। प्रथमकषायाबन्धे सप्तदशको बन्धः, द्वितीयकषायाबन्धे त्रयोदशकः, तृतीयकषायाबन्धे नवकः, एतेषु सप्तदशादिषु अनन्तानुबन्ध्युदयाभावात् स्त्रीवेदस्य न बन्ध इति पुरुषवेद एक एव बध्यते इति द्वावेव भङ्गौ युगलद्विकेन लभ्येते। तत्रापि नवकबन्धे प्रमत्तगुणस्थाने युगलविकल्पः प्राप्यते, अप्रमत्तापूर्वकरणयोश्च हास्यरतिरूपमेकमेव युगलं प्राप्यते, अरतिशोकयुगलस्य प्रमत्तगुणस्थान एव स्थितत्वादित्येतद्गुणस्थानद्वये नवकबन्ध एकरूप एव। तथा हास्यरतिभयजुगुप्सा अपूर्वकरण एव तिष्ठन्ति, परतो नानुवर्त्तन्ते। ततोऽनिवृत्तिबादरे प्रथमसमयादारभ्य पञ्चको बन्धः, स चानिवृत्तिबादराद्धायाः प्रथमपञ्चमभागान्तं यावत्। ततः परतः पुरुषवेदस्य बन्धाभावाच्चतुर्विधो बन्धः, सोऽप्यनिवृत्तिबादरसम्परायाद्धाया द्वितीयपञ्चमभागान्तं यावत्। ततः परतः संज्वलनक्रोधस्य बन्धाभावात्त्रिको बन्धः, सोऽपि तृतीयपञ्चमभागान्तं यावत्। ततः परतः संज्वलनमानस्य बन्धाभावाद्द्विको बन्धः, सोऽपि चतुर्थपञ्चमभागान्तं यावत्। ततः परतः संज्वलनमायाया बन्धाभावात्संज्वलनलोभस्यैकस्य बन्धः, स चानिवृत्तिबादरसम्परायगुणस्थानचरमसमयं यावत्। अमीषामेव बन्धस्थानानां कालप्रमाणमभिधास्यामः—तत्र द्वाविंशतिबन्धे कालमधिकृत्य भङ्गत्रयं, तथाहि—अभव्यानामेष बन्धोऽनाद्यपर्यवसितः, भव्यानामनादिसपर्यवसितः, सम्यक्त्वपरिभ्रष्टानां सादिसपर्यवसानः, स च जघन्येनान्तर्मुहूर्त्तप्रमाण उत्कर्षेण देशोनपुद्गलपरावर्त्तार्द्धमानः। एकविंशतिबन्धस्तु सासादनभावे लभ्यते, ततो यावानेव

## मोहनीयस्य बंधस्थानानां यंत्रं (बंधस्थानानि १०)

| स्थानं | स्थानगतप्रकृतयः | क्व गुणस्थाने | (मोहस्य वंधस्थानं) कतिविधं | काल प्रमाणं जघन्यं | काल प्रमाणं उत्कृष्टं |
|---|---|---|---|---|---|
| २२ | मिथ्या० १६क० १वे० २युग० भ० कु० | १ मे | ६ विधं (२ युगलेन) (३ वेदेन च) | अन्तर्मु० | देशोनार्धपुद्गलपरावर्त्तः अनाद्यनंत-अनादिसान्तमपि |
| २१ | ,, ,, ,, ,, ,, | २ ये | ४ ,, (वे० २×यु० २) | १ समयं | ६ आवलिका |
| १७ | १२ क० ,, ,, ,, ,, | ३-४ र्थ गुणे | २ ,, (युगलेन) | अन्तर्मु० | साधिकं ३३ सागरं |
| १३ | ८ क० ,, ,, ,, ,, | ५ मे | ,, ,, ( ,, ) | ,, | देशोनपूर्वकोटिवर्षाणि |
| ९ | ४ क० ,, ,, ,, ,, | ६-७-८ गुणे | १ ,, षष्ठे २ | ,, | ,, ,, |
| ५ | ४ क० पुं० | ९ मे १ भाग पर्यंत | ,, | १ समयं | अन्तर्मुहूर्त्त |
| ४ | ,, | ,, २ ,, | ,, | ,, | ,, |
| ३ | सं० मान सं० माया सं० लोभ इति | ,, ३ ,, | ,, | ,, | ,, |
| २ | ,, ,, | ,, ४ ,, | ,, | ,, | ,, |
| १ | ,, | ,, ९म भाग पर्यंतं | ,, | ,, | ,, |

सासादनभावस्य कालस्तावानेवास्य द्रष्टव्यः, स च जघन्यत एकः समय उत्कर्षतः षडावलिकाः । सप्तदशबन्धे चोत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि किञ्चित्समधिकानि । त्रयस्त्रिंशत्सागरोपमाणि हि अनुत्तरसुरेषु प्राप्यन्ते, ततश्च्युत्वेहागत्य यावदद्यापि देशविरतिं सर्वविरतिं वा न प्रतिपद्यन्ते तावत्सप्तदशबन्ध इति किञ्चित्समधिकानीत्युच्यन्ते, जघन्यतस्त्वन्तर्मुहूर्त्तम् । त्रयोदशबन्धे नवकबन्धे चोत्कृष्टा स्थितिर्देशोना पूर्वकोटी, यतस्त्रयोदशबन्धो देशविरतौ, नवकबन्धश्च सर्वविरतौ, देशविरतेः सर्वविरतेश्चोत्कर्षतोऽपि देशोनपूर्वकोटिरेवकाल इति, जघन्यतस्त्वनयोः स्थितिरान्तर्मौहूर्त्तिकी । शेषेषु तु पञ्चादिषूत्कर्षतोऽन्तर्मुहूर्त्तप्रमाणा स्थितिः, जघन्यतस्तु समयमात्रा । तद्भावना चैवं—उपशमश्रेण्यां पञ्चविधबन्धमारभ्य द्वितीयसमये कश्चित् कालं कृत्वा देवलोकं याति, तत्र च गतः सन्नविरतो भवति, अविरतत्वे च सप्तदशबन्ध इत्येकसमयता । एवं चतुर्विधादिष्वपि भावनीयम् । तदेवमुक्तानि मोहनीयस्य बन्धस्थानानि ।

अथोदयस्थानान्युच्यन्ते—नव मोहनीयस्योदयस्थानानि, तद्यथा—एकं द्वे चत्वारि पञ्च षट् सप्ताष्टौ नव दश च । तत्र चतुर्णां संज्वलनानामेकतमस्योदये एकमुदयस्थानं, तदेव त्रयान्यतमवेदप्रक्षेपे द्विकं, तत्रापि हास्यरतिरूपयुगलप्रक्षेपे चतुष्कं, तत्रैव भयप्रक्षेपे पञ्चकं, ततो जुगुप्साप्रक्षेपात् षट्कं, तत्रैव चतुर्णां प्रत्याख्यानावरणानामन्यतमोदयप्रक्षेपे सप्तकं, तत्रैवाप्रत्याख्यानानां चतुर्णामन्यतमप्रक्षेपेऽष्टकं, तत्रैव चतुर्णामनन्तानुबन्धिनामन्यतमप्रक्षेपे नवकं, तत्रैव मिथ्यात्वप्रक्षेपे दशकमिति । तत्र द्विकादयो दशान्ता उदयाः प्रत्येकं क्रोधे माने मायायां लोभे च प्राप्यन्त इति चतुर्विधा भवन्ति । ते च चतुर्विधाः सन्तः प्रत्येकमेकैकस्मिन् वेदे प्राप्यन्त इति वेदत्रयवशाद्द्वादशधा भवन्ति । द्वादशधा च सन्तो द्विकोदयरहिताः शेषा उदयाः प्रत्येकमेकैकस्मिन् युगले प्राप्यन्त इति युगलसंचारणया द्विगुणा भवन्ति, ततो द्विकोदये द्वादशैव भङ्गाः, शेषेषु तूदयेषु प्रत्येकं चतुर्विंशतिः । ते चैकैकस्मिन् गुणस्थानेऽनेकधा प्राप्यन्ते,

## मोहनीयस्योदयस्थानानि(९)

| उदयस्थानानि | स्थानान्तर्गतप्रकृतयः | उदयस्थानं कतिविधं | | जघन्य कालमानं | उत्कृष्ट कालमानं |
|---|---|---|---|---|---|
| १ | संज्वलनानां अन्यतमा | ४ विधं ( क्रोधादिभि॰ ) | कषाय४ वेद३ युगल२ गुणनेन भङ्गा भवन्ति | १ समयं | अन्तर्मु० |
| २ | अन्यतमवेदप्रक्षेपे | १२ ,, ( ४ कषाय ३ वेदैः ) | | ,, | ,, |
| ४ | हास्यरतिप्रक्षेपे ( कुयुगल प्र० ) | २४ विधं ( क॰४+वे॰३×यु॰२ इति ) | | ,, | ,, |
| ५ | भयप्रक्षेपे | ,, ,, | | ,, | ,, |
| ६ | कुत्सा ,, | ,, ,, | | ,, | ,, |
| ७ | अन्यतमप्रत्याख्यानप्रक्षेपे | ,, ,, | | ,, | ,, |
| ८ | ,, अप्रत्या० ,, | ,, ,, | | ,, | ,, |
| ९ | ,, अनंता० ,, | ,, ,, | | ,, | ,, |
| १० | मिथ्यात्वप्रक्षेपे | ,, ,, | | ,, | ,, |

तथाहि—अनन्तानुबन्धिनां वेदकसम्यक्त्वस्य भयजुगुप्सयोश्च कादाचित्क उदयो भवति, यतः सम्यक्त्वप्रभावेणोद्वलितानामनन्तानुबन्धिनां भूयोऽपि मिथ्यात्वप्रतिपत्तौ तन्महिम्नोपचितानामावलिकामात्रमुदयो न भवति, शेषकाले तु भवति। अविरतसम्यग्दृष्ट्यादीनामप्यौपशमिकसम्यक्त्ववतां क्षायिकसम्यक्त्ववतां वा वेदकसम्यक्त्वस्योदयो न भवति, शेषाणां तु भवति। भयजुगुप्सयोस्त्वध्रुवोदयत्वादेव मिथ्यादृष्ट्यादिष्वपूर्वकरणान्तेषु कदाचिदुदयो भवति कदाचिन्नेत्येकैकस्मिन् गुणस्थाने उदयास्तद्भाविभङ्गचतुर्विंशतयश्च बहुधा भवन्ति। तत्र मिथ्यादृष्टौ सप्ताष्टौ नव दश चेति चत्वार उदया भवन्ति। तत्र मिथ्यात्वमनन्तानुबन्धिवर्जा अन्यतमे त्रयः क्रोधादिकाः त्रयाणां वेदानामन्यतमो वेदो द्वयोर्युगलयोरन्यतरद्युगलमित्येतासां सप्तानां नियमादुदयो भवति। अत्र द्वाभ्यां युगलाभ्यां त्रिभिर्वेदैश्चतुर्भिश्च क्रोधादिभिः परस्पर ताडने भङ्गाश्चतुर्विंशतिः। तस्मिन्नेव सप्तके भये वा जुगुप्सायां वाऽनन्तानुबन्धिनि वा प्रक्षिप्तेऽष्टानामुदयः, अत्र भयादौ प्रत्येकमेकैका चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयः। ननु सप्तोदयेऽष्टकोदये वा क्वचिन्मिथ्यादृष्टिरनन्तानुबन्ध्युदयरहितः कथं प्राप्यते इति चेद्, उच्यते—यः कश्चित्सम्यग्दृष्टिः सन्ननन्तानुबन्धिविसंयोजनयैव विश्रान्तो मिथ्यात्वादिक्षयाय नोद्युक्तवान् तस्य कालान्तरे मिथ्यात्वं गतस्य तत्प्रत्ययतो भूयोऽप्यनन्तानुबन्धिनां बन्धे प्रवर्त्तमाने बन्धावलिका यावन्नातिक्रामति तावदुदयो न भवति, बन्धावलिकायां त्वतिक्रान्तायां भवेदपि। अथ कथं बन्धावलिकातिक्रमेऽप्युदयः संभवी? जघन्यतोऽप्यनन्तानुबन्धिनामबाधाकालस्यान्तर्मुहूर्त्तमानत्वात्, नैष दोषः, यतो बन्धसमयादारभ्य तेषां सत्ता भवति, सत्तायां च सत्यां बन्धकालं यावत् पतद्ग्रहता, पतद्ग्रहतायां च सत्यां शेषसजातीयप्रकृतिदलिकसंक्रान्तिः, संक्रान्तं च पतद्ग्रहप्रकृतिरूपतया परिणमते। ततः संक्रमावलिकायामतीतायामुदयो भवतीति बन्धावलिकायामतीतायां तदभिधानमविरुद्धम्। तथा तस्मिन्नेव सप्तके भयजुगुप्सयोरथवा भयानन्तानुबन्धिनो-

र्यद्वा जुगुप्साऽनन्तानुबन्धिनोः प्रक्षिप्तयोर्नवानामुदयः। तत्राप्येकैकस्मिन् विकल्पे भङ्गानां चतुर्विंशतिः प्राप्यत इति तिस्रश्चतुर्विंशतयः। तथा तस्मिन्नेव सप्तके भयजुगुप्सानन्तानुबन्धिषु युगपत्प्रक्षिप्तेषु दशानामुदयः। अत्रैकैव भङ्गानां चतुर्विंशतिः। सर्वसङ्ख्यया मिथ्यादृष्टावष्टौ चतुर्विंशतयः। सासादने मिश्रे च सप्ताष्टनवलक्षणास्त्रय उदयाः। तत्रानन्तानुबन्ध्यादीनामन्यतमे चत्वारः क्रोधादिकास्त्रयाणां वेदानामन्यतमो वेदो द्वयोर्युगलयोरन्यतरद्युगलमित्येतासां सप्तानां प्रकृतीनामुदयः सासादने ध्रुवः। अत्र प्रागुक्तरीत्या भङ्गानामेका चतुर्विंशतिः। तथा तस्मिन्नेव सप्तके भये वा जुगुप्सायां वा क्षिप्तायामष्टानामुदयः, अत्र द्वे चतुर्विंशती भङ्गानां। भयजुगुप्सयोर्युगपत्क्षिप्तयोर्नवानामुदयः, अत्रैका भङ्गानां चतुर्विंशतिः। सर्वसङ्ख्यया सासादने चतस्रश्चतुर्विंशतयः। तथा सम्यग्मिथ्यादृष्टावनन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादयः त्रयाणां वेदानामन्यतमो वेदो द्वयोर्युगलयोरन्यतरद्युगलं सम्यग्मिथ्यात्वं चेति सप्तानां प्रकृतीनामुदयो ध्रुवः। अत्र प्रागुक्तरीत्या भङ्गानामेका चतुर्विंशतिः। अस्मिन्नेव सप्तके भये जुगुप्सायां वा क्षिप्तायामष्टानामुदयः, अत्र द्वे चतुर्विंशती। भयजुगुप्सयोर्युगपत्क्षिप्तयोर्नवानामुदयः, अत्रैका चतुर्विंशतिः। सर्वसंख्यया सम्यग्मिथ्यादृष्टौ चतस्रश्चतुर्विंशतयः। अविरतसम्यग्दृष्टौ षट् सप्ताष्टौ नव चेति चत्वार उदयाः। तत्रौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा अस्यानन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादिका अन्यतमो वेदोऽन्यतरच्च युगलमिति षण्णामुदयो ध्रुवः, अत्रापि प्राग्वद्भङ्गानामेका चतुर्विंशतिः। अस्मिन्नेव षट्के भये जुगुप्सायां वा वेदकसम्यक्त्वे वा क्षिप्ते सप्तानामुदयः, अत्र भयादिषु प्रत्येकमेकैकचतुर्विंशतिप्राप्तेस्तिस्रश्चतुर्विंशतयः। तस्मिन्नेव षट्के भयजुगुप्सयोर्वा भयवेदकयोर्वा जुगुप्सावेदकयोर्वा क्षिप्तयोरष्टानामुदयः, अत्रापि तिस्रश्चतुर्विंशतयः। युगपत्त्रयप्रक्षेपे नवानामुदयः, अत्रैका चतुर्विंशतिः। सर्वसङ्ख्ययाऽविरतसम्यग्दृष्टावष्टौ। देशविरते पञ्च षट् सप्ताष्टौ चेति चत्वार उदयाः। तत्रौ-

पशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा देशविरतस्य तृतीयचतुर्थकषायाणामन्यतमौ द्वौ क्रोधादिकावन्यतमो वेदोऽन्यतरद्युगलं चेति पञ्चानामुदयो ध्रुवः, अत्रैका चतुर्विंशतिः । भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते षण्णामुदयः, अत्र तिस्रश्चतुर्विंशतयः । अन्यतरद्वयप्रक्षेपे सप्तानामुदयः, अत्रापि तिस्रश्चतुर्विंशतयः । युगपत्त्रयप्रक्षेपेऽष्टानामुदयः, अत्रैका चतुर्विंशतिः । सर्वसङ्ख्यया देशविरतेऽष्टौ । प्रमत्तसंयते चतस्रः पञ्च षट् सप्त चेति चत्वार उदयाः । तत्र संज्वलनानामन्यतम एकः क्रोधादिरन्यतमो वेदोऽन्यतरच्च युगलमित्येतासां चतसृणामुदयः प्रमत्तसंयते ध्रुवः, अत्रैका चतुर्विंशतिः । ततो भयजुगुप्सावेदकसम्यक्त्वानामन्यतमैकप्रक्षेपे पञ्चानामुदयः, तत्र तिस्रश्चतुर्विंशतयः, अन्यतरद्वयप्रक्षेपे षण्णामुदयः ,तत्रापि तिस्रश्चतुर्विंशतयः, युगपत्त्रयप्रक्षेपे सप्तानामुदयः, तत्रैका चतुर्विंशतिः । सर्वसङ्ख्यया प्रमत्तेऽष्टौ । एवमेवाप्रमत्तेऽपि चतुर्षूदयेष्वष्टौ भावनीयाः । अपूर्वकरणे चतस्रः पञ्च षट् चेति त्रय उदयाः । तत्र चतस्रः प्राग्वत् , अत्रैका चतुर्विंशतिः । अस्मिन्नेव चतुष्के भये वा जुगुप्सायां वा क्षिप्तायां पञ्चानामुदयः, अत्र द्वे चतुर्विंशती । भयजुगुप्सयोस्तु युगपत् क्षिप्तयोः षण्णामुदयः, अत्रैका चतुर्विंशतिः । सर्वसङ्ख्ययाऽपूर्वकरणे चतस्रश्चतुर्विंशतयः । इहाप्रमत्तापूर्वकरणयोरुदयाः प्रमत्तोदयापेक्षया गुणस्थानभेदमात्रेणैव भिन्ना न परमार्थत इति प्रमत्तोदयग्रहणेनैव ते गृहीता द्रष्टव्याः । अत एवाग्रे तयोश्चतुर्विंशतयः पृथग् न गणयिष्यन्ते । अथ दशोदयादिषु यावत्यश्चतुर्विंशतयो भवन्ति तावत्यो निर्दिश्यन्ते—तत्र दशकोदये एका चतुर्विंशतिर्मिथ्यादृष्टौ । नवोदये षट्, तत्र तिस्रो मिथ्यादृष्टौ, सासादने मिश्रेऽविरते चैकैका । अष्टोदये एकादश, तथाहि—तिस्रो मिथ्यादृष्टौ, द्वे सासादने, द्वे मिश्रे, तिस्रोऽविरतसम्यग्दृष्टौ, देशविरते चैका । सप्तोदये दश, तद्यथा—मिथ्यादृष्टिसासादनमिश्रप्रमत्तसंयतेष्वेकैका, अविरतसम्यग्दृष्टौ देशविरते च तिस्रस्तिस्रः । षडुदये सप्त, तथाहि—अविरतसम्यग्दृष्टावेका, देशविरते

पृथग्गण्यन्ते, तत्प्रक्षेपादुदयविकल्पानां नव शतानि पञ्चनवत्यधिकानि भवन्ति। यदि तु बन्धकभेदेन भङ्गानां भेदो न विवक्ष्यते तदा पञ्चविधबन्धे चतुर्विधबन्धे च ये द्विकोदयभङ्गास्ते एकरूपा एवेति द्वादशैव। ये चैककोदयभङ्गास्ते चत्वार एवेति षोडशैव, एतेषां प्रागुक्तोदयभङ्गराशौ षष्ट्यधिकनवशतप्रमाणे प्रक्षेपे षट्सप्तत्यधिकानि नवशतान्युदयविकल्पानां भवन्ति। अथ मोहनीयोदया एते गुणस्थानेषु चिन्त्यन्ते–तत्र मिथ्यादृष्ट्यविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तानामष्टावष्टौ चतुर्विंशतयो भवन्ति, सासादनमिश्रापूर्वकरणेषु चतस्रश्चतस्रः, भावितचरा एता इति न भूयो भाव्यन्ते, सर्वसङ्ख्ययाऽष्टपञ्चाशत्, तस्याश्चतुर्विंशत्या गुणने जातानि द्वादश शतान्यष्टचत्वारिंशदधिकानि। अन्ये चानिवृत्तिबादरसम्पराये पञ्चविधबन्धादौ षोडश सूक्ष्मसम्पराये चैक इति सप्तदश भङ्गा अधिकाः क्षिप्यन्ते। ततः सर्वेष्वपि गुणस्थानेषु सर्वसङ्ख्यया मोहनीयस्योदयाः पञ्चषष्ट्यधिकानि द्वादश शतानि। एत एव च भङ्गा उदीरणायामपि द्रष्टव्याः, उदयोदीरणयोः सहभावित्वात्। यद्यपि वेदत्रयसंज्वलनानां पर्यन्तावलिकायामुदीरणा न भवति, किं तु केवल एवोदयः, तथापि शेषकालमुदीरणा लभ्यत इति भङ्गसङ्ख्या न व्याहन्यते। एते चैकादयो दशान्ता उदयास्तदन्तर्गता भङ्गाश्च जघन्यत एकसामयिका उत्कर्षत आन्तर्मौहूर्त्तिकाः, तथाहि–चतुरुदयादिषु दशोदयपर्यन्तेष्ववश्यमन्यतमो वेदोऽन्यतरच्च युगलं विद्यते, युगलेन वेदेन वाऽवश्य मुहूर्त्तादारतः परावर्त्तते। तदुक्तं पञ्चसंग्रहमूलटीकायां–"युगलेन वेदेन वाऽवश्य मुहूर्त्तादारतः परा वेदयुगलयोश्च मध्येऽवश्यमन्यतरन्मुहूर्त्तादारतः परावर्त्तते। द्विकोदयैककोदयानां चान्तर्मौहूर्त्तिकत्वं सुप्रसिद्धमेव। एकसामयिकता त्वेवंभावनीयेति"। तत एते उत्कर्षत आन्तर्मौहूर्त्तिकाः, यदा विवक्षिते उदये भङ्गे वा समयमेकं वर्त्तित्वा गुणस्थानान्तरं गच्छति तदाऽवश्यं बन्धस्थानभेदाद्गुणस्थानभेदात्स्वरूपतो वा भिन्नमुदयान्तरं भङ्गान्तरं वा यातीति सर्वेऽप्युदया भङ्गाश्च जघन्यत एकसामयिकाः।

कषाय ४ वेद ३ युगल २ गुणनेन भङ्गा भवन्ति

| उदय स्थानानि | प्रकृतयः मिथ्या० अनं० ४ अप्र० ४ प्र० ४ सं० ४ वे० ३ युग० ४ भयं कुत्सा | चतुर्विंशतिभंगा | उदय स्थानानि | प्रकृतयः मिथ्या० अनं० ४ अप्र० ४ प्र० ४ सं० ४ वे० ३ युग० ४ भ० कुत्सा | चतुर्विंशतिभंगाः |
|---|---|---|---|---|---|
| ७ | १-०-१-१-१-१-२-०-० | २४ | ७ | ०-१-१-१-१-१-२-०-० | २४ |
| ८ | १-०-१-१-१-१-२-१-० | २४ | ८ | ०-१-१-१-१-१-२-०-१ | २४ |
| ८ | १-०-१-१-१-१-२-०-१ | २४ | ८ | ०-१-१-१-१-१-२-१-० | २४ |
| ८ | १-१-१-१-१-१-२-०-० | २४ | ९ | ०-१-१-१-१-१-२-१-१ | २४ |
| ९ | १-०-१-१-१-१-२-१-१ | २४ | | इति सास्वादने ४ चतुर्विंशतयः | ९६ भंगाः |
| ९ | १-१-१-१-१-१-२-१-० | २४ | ७ | मिश्रं-०-१-१-१-१-२-०-० | २४ |
| ९ | १-१-१-१-१-१-२-०-१ | २४ | ८ | ,,-०-१-१-१-१-२-१-० | २४ |
| १० | १-१-१-१-१-१-२-१-१ | २४ | ८ | ,,-०-१-१-१-१-२-०-१ | २४ |
| | | | ९ | ,,-०-१-१-१-१-२-१-१ | २४ |
| | इति मिथ्यात्वे ८ चतुर्विंशतयः | १९२ भंगाः | | इति मिश्रे ४ चतुर्विंशतय | ९६ भंगा |

| | | | |
|---|---|---|---|
| ६ | ०-०-१-१-१-१-२-०-० | २४ | औप० क्षायि० सम्यग्दृशां |
| ७ | ०-०-१-१-१-१-२-१-० | २४ | ,, ,, |
| ७ | ०-०-१-१-१-१-२-०-१ | २४ | ,, ,, |
| ७ | स०-०-१-१-१-१-२-०-० | २४ | क्षयोपशमसम्यग्दृशां |
| ८ | ,,-०-१-१-१-१-२-१-० | २४ | ,, |
| ८ | ,,-०-१-१-१-१-२-०-१ | २४ | ,, |
| ८ | ०-०-१-१-१-१-२-१-१ | २४ | औप० क्षा० सम्यग्दृशां |
| ९ | स०-०-१-१-१-१-२-१-१ | २४ | क्षयोपशमसम्यग्दृशां |
| | इति सम्यक्त्वे ८ चतुर्विंशतयः | १९२ | |
| ५ | ०-०-०-१-१-१-२-०-० | २४ | औप० क्षा० सम्यग्दृशां |
| ६ | ०-०-०-१-१-१-२-१-० | २४ | ,, ,, ,, |
| ६ | ०-०-०-१-१-१-२-०-१ | २४ | ,, ,, ,, |
| ६ | स०-०-०-१-१-१-२-०-० | २४ | क्षयोप० ,, |
| ७ | ,,-०-०-१-१-१-२-१-० | २४ | ,, ,, |
| ७ | ,,-०-०-१-१-१-२-०-१ | २४ | ,, ,, |
| ७ | ०-०-०-१-१-१-२-१-१ | २४ | औप० क्षा० ,, |
| ८ | स०-०-०-१-१-१-२-१-१ | २४ | क्षयोप० ,, |
| | इति देशविरते ८ चतुर्विंशतय. | १९२ | |

| | | | |
|---|---|---|---|
| ४ | ०-०-०-०-१-१-२-०-० | २४ | औप० क्षा० सम्यग्दृशां |
| ५ | ०-०-०-०-१-१-२-१-० | २४ | ,, ,, ,, |
| ५ | ०-०-०-०-१-१-२-०-१ | २४ | ,, ,, ,, |
| ५ | स०-०-०-०-१-१-२-०-० | २३ | क्षयोप० ,, |
| ६ | ,,-०-०-०-१-१-२-१-० | २४ | ,, ,, |
| ६ | ,,-०-०-०-१-१-२-०-१ | २४ | ,, ,, |
| ६ | ०-०-०-०-१-१-२-१-१ | २४ | औप० क्षा० ,, |
| ७ | स०-०-०-०-१-१-२-१-१ | २४ | क्षयोप० ,, |
| | इति प्रमत्ते ८ चतुर्विंशतयः | १९२ भं० | |
| | अप्रमत्ते चापि ता एव | ,, | |
| ४ | ०-०-०-०-१-१-२-०-० | २४ | औप० क्षा० ,, |
| ५ | ०-०-०-०-१-१-२-१-० | २४ | ,, ,, ,, |
| ५ | ०-०-०-०-१-१-२-०-१ | २४ | ,, ,, ,, |
| ६ | ०-०-०-०-१-१-२-१-१ | २४ | ,, ,, ,, |
| | इति अपूर्वकरणे ४ चतुर्विंशतयः | ९६ | |

अत्र अप्रमत्ताऽपूर्वकरणयोः चतुर्विंशतयः प्रमत्तात् पृथक् नावसेयाः, तदंतर्गतत्वात् । अग्रे चतुर्विं० न प्राप्यन्ते

पूर्वोक्ताः चतुर्विंशतयः क्व प्राप्यन्ते तन्निरूप्यन्ते

| उदयस्थाने | चतुर्विंशतय. | मिथ्यात्वे चतु० | सास्वादने ,, | मिश्रे ,, | सम्यक्त्वे ,, | देशविरते ,, | प्रमत्ते ,, | भंगाः |
|---|---|---|---|---|---|---|---|---|
| १०प्र० | १ | १ | ० | ० | ० | ० | ० | २४ |
| ९ ,, | ६ | ३ | १ | १ | १ | ० | ० | १४४ |
| ८ ,, | ११ | ३ | २ | २ | ३ | १ | ० | २६४ |
| ७ ,, | १० | १ | १ | १ | ३ | ३ | १ | २४० |
| ६ ,, | ७ | ० | ० | ० | १ | ३ | ३ | १६८ |
| ५ | ४ | ० | ० | ० | ० | १ | ३ | ९६ |
| ४ | १ | ० | ० | ० | ० | ० | १ | २४ |
| | ४० चतुर्विं० | | | | | | | ९६० भंगाः |

प्रमत्तान्तर्गतत्वात् अप्रमत्तापूर्वकरणयोः न भिन्नाः चतुर्विंशतयः

(बंधकाले) उदयविकल्पाः (भंगाः) २३

| बंधे | उदयप्रकृतय. संज्व० | उदयप्रकृतय. वेद० | भंगाः | भंगोत्पत्ति. |
|---|---|---|---|---|
| ५ | १ | १ | १२ | क०४×वे०३=१२ |
| ४ | १ | (१मतांतरे) | ४(१२म) | संज्व० अन्यतमेन (सं०४× वे०३=१२मता०) |
| ३ | १ | | ३ | संज्व०त्रिकेन (मान मा०-लो०) |
| २ | १ | | २ | सं० माया-लोभेन |
| १ | १ | | १ | सं० लोभेन |
| ० | १ | | १ | ,, |
| | | | २३ | पूर्वोक्त ९६०मिलने९८३ सर्वभं |

## मोहनीयस्य सत्तास्थानानि (१५)

| स० स्था० | प्रकृतयः | जघन्यं कालमानं | उत्कृष्ट कालमानं |
|---|---|---|---|
| २८ | सर्वप्रकृतिरूपं | अन्तर्मु० | पल्यो० असं० भागाधिक० ६६ सागराणि |
| २७ | सम्यक्त्वे उद्वलिते | प०असं०भा० | प० असं० भाग |
| २६ | मिश्रे उद्वलिते अनादिमिथ्यादृशां वा | अन्तर्मु० | देशोनार्ध पुद्ग०परा० (अना०सांत–अनाद्यनंतं च) |
| २४ | अनन्तानुबन्धीनामुद्वलने क्षपणे वा | ,, | ६६ सागराणि |
| २३ | मिथ्यात्वस्य क्षये | ,, | अन्तर्मुहूर्त्त |
| २२ | मिश्रस्य ,, | ,, | ,, |
| २१ | सम्यक्त्वस्य ,, | ,, | नरभवद्वयाधिक३३सागराणि |
| १३ | कषायाष्टक० ,, | ,, | अन्तर्मुहूर्त्त |
| १२ | नपुं० क्षये | ,, | ,, |
| ११ | स्त्री० ,, | ,, | ,, |
| ५ | हास्यषट्कक्षये | ,, | ,, |
| ४ | पुं० क्षये | ,, | ,, |
| ३ | सं० क्रोधक्षये | ,, | ,, |
| २ | ,, मान ,, | ,, | ,, |
| १ | ,, माया ,, | ,, | ,, |

गुणस्थानेषु मोहस्य सत्तास्थानानि

| गुणस्थाने | सत्तास्थानानि |
|---|---|
| १मे | २८-२७-२६ |
| २ये | २८ |
| ३ये | २८-२७-२४ |
| ४र्थे | २८-२४-२३-२२-२१ |
| ५मे | " " " " " |
| ६ष्ठे | " " " " " |
| ७मे | " " " " " |
| ८मे | " " २१ |
| ९मे | २८-२४-२१-१३-१२-११-५-४-३-२-१ |
| १०मे | " " " १ |
| ११मे | " " " |
| १२मे | ० |
| १३मे | ० |
| १४मे | ० |

तदेवमुक्तानि मोहनीयस्योदयस्थानानि। अथ सत्तास्थानान्यु-
च्यन्ते-मोहनीयस्य सत्तास्थानानि पञ्चदश, तथाहि-अष्टाविंशतिः
सप्तविंशतिः षड्विंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशति-
स्त्रयोदश द्वादशैकादश पञ्च चतस्रस्तिस्रो द्वे एका चेति। एतेषामेव
सत्तास्थानानां गुणस्थानेषु व्यवच्छेदश्चिन्त्यते-अविरतादयोऽप्रम-
त्तान्ता अनन्तानुबन्धिमिथ्यात्वमिश्रसम्यक्त्वानां क्षपका भवन्ति
ततस्तेषु सप्तकं कियत्कालं प्राप्यते, परतः सर्वथा न भवति। तथा-
ऽनिवृत्तिबादरसम्परायः प्रथमं युगपन्मध्यमाष्टकषायान् विनाश-
यति, ततो नपुंसकवेदं, ततः स्त्रीवेदं, ततो हास्यादिषट्कं, ततः
पुरुषवेदं, ततः क्रमेण त्रीन् क्रोधमानमायारूपान् संज्वलनान्, सू-
क्ष्मसम्परायस्तु किट्टीकृतं लोभं विनाशयति। अनेन व्यवच्छेद-
क्रमेण चतुर्विंशत्यादीनि द्वादश सत्तास्थानानि व्याख्यातानि भव-
न्ति। त्रीणि चैवं भाव्यानि-सर्वप्रकृतिसमुदायोऽष्टाविंशतिः, ततः
सम्यक्त्वे उद्वलिते सप्तविंशतिः, ततः सम्यङ्मिथ्यात्वे उद्वलिते षड्-

विंशतिः, अनादिमिथ्यादृष्टेर्वा षड्विंशतिरिति। अथ गुणस्थानेषु सत्तास्थानानि चिन्त्यन्ते-मिथ्यादृष्टिगुणस्थाने त्रीणि सत्तास्थानानि—अष्टाविंशतिः सप्तविंशतिः षड्विंशतिश्च, यतो मिथ्यादृष्टिः सम्यक्त्वमिश्रयोरुद्वलको भवति। सस्वादने एकं सत्तास्थानमष्टाविंशतिः। मिश्रे त्रीणि सत्तास्थानानि-अष्टाविंशतिश्चतुर्विंशतिः सप्तविंशतिश्च, तत्र चतुर्विंशतिर्विसंयोजितानन्तानुबन्धिनि सम्यग्दृष्टौ मिश्रत्वं प्रपन्ने, सप्तविंशतिश्चोद्वलितसम्यक्त्वपुञ्जे मिथ्यादृष्टौ तद्भावं प्रपन्ने द्रष्टव्या। तथाऽविरतदेशविरतप्रमत्ताप्रमत्तेषु प्रत्येकं पञ्च सत्तास्थानानि—अष्टाविंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिश्च। अपूर्वकरणे त्रीणि, तद्यथा-अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिश्च। अनिवृत्तिबादरसम्पराये एकादश सत्तास्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिस्त्रयोदश द्वादशैकादश पञ्च चतस्रस्तिस्रो द्वे एका च। सूक्ष्मसम्पराये चत्वारि सत्तास्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिरेका च। उपशान्तमोहगुणस्थानके त्रीणि सत्तास्थानानि, तद्यथा—अष्टाविंशतिः चतुर्विंशतिरेकविंशतिश्च। तदेवमुक्तानि सप्रपञ्चं मोहनीयस्य सत्तास्थानानि।

अथ बन्धोदयसत्तास्थानानां संवेधश्चिन्त्यते-तत्र द्वाविंशतिबन्धे मिथ्यादृष्टेः सप्तोदयेऽष्टाविंशतिलक्षणमेकमेव सत्तास्थानं भवति। कथमिदं प्रत्येयमिति चेत्,उच्यते—सप्तोदयोऽनन्तानुबन्धिराहित्ये संभवति, तद्रहितश्च मिथ्यादृष्टिरवश्यमष्टाविंशतिसत्कर्मा, येन हि पूर्वं सम्यग्दृष्टिना सताऽनन्तानुबन्धिन उद्वलिताः ततश्च स कालान्तरे परिणामवशान्मिथ्यात्वं गतः तत्प्रत्ययेन चानन्तानुबन्धिनो बध्नाति तदाऽसौ मिथ्यादृष्टिर्बन्धावलिकामात्रं कालं यावदनन्तानुबन्ध्युदयरहितः प्राप्यते, नान्यः, स चाष्टाविंशतिसत्कर्मेति तस्य सत्तास्थानमष्टाविंशतिरेव। अष्टनवदशकोदये चाष्टाविंशतिसप्तविंशतिषड्विंशतिलक्षणानि त्रीणि सत्तास्थानानि, तथाहि—अष्टोदयो द्विधाऽनन्तानुबन्ध्युदयरहितस्तत्सहितश्च, तत्रानन्तानुबन्ध्युदयरहिते प्रागुक्तयुक्तेरष्टाविंशतिरेव सत्तास्थानं, तत्सहिते तु त्रीण्यपि सत्तास्थानानि।

तत्र मिथ्यादृष्टिसम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलको भवति, स च यावन्नाद्यापि सम्यक्त्वमुद्वलयति तावदष्टाविंशतिः, तस्मिन्नुद्वलिते सप्तविंशतिः, सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशतिरनादिमिथ्यादृष्टेर्वा। एवं नवोदयेऽपि द्रष्टव्यम्। दशोदयस्त्वनन्तानुबन्धिसहित एव भवतीति तत्रापि त्रीणि सत्तास्थानानि भावनीयानि। सासादने त्वेकविंशतिबन्धे त्रिष्वपि सप्ताष्टनवरूपेषूदयेष्वष्टाविंशतिरेवैकं सत्तास्थानम्। तथाहि—सासादनत्वमौपशमिकसम्यक्त्वात्प्रच्यवमानस्योपजायते, सम्यक्त्वगुणेन च तेन मिथ्यात्वं त्रिधा कृतं— सम्यक्त्वं सम्यग्मिथ्यात्वं मिथ्यात्वं चेति। ततो दर्शनत्रिकस्यापि सत्कर्मतया प्राप्तेः सासादने त्रिष्वप्युदयस्थानेष्वष्टाविंशतिरेवैकं सत्तास्थानम्। सप्तदशबन्धो द्वयानां सम्यग्मिथ्यादृष्टीनामविरतसम्यग्दृष्टीनां च। तत्र सम्यग्मिथ्यादृष्टीनां त्रीण्युदयस्थानानि—सप्ताष्टौ नव चेति। अविरतसम्यग्दृष्टीनां चत्वारि, तद्यथा—षट् सप्ताष्टौ नव। तत्र षडुदयोऽविरतानामौपशमिकसम्यग्दृष्टीनां क्षायिकसम्यग्दृष्टीनां वा प्राप्यते। तत्रौपशमिकसम्यग्दृष्टीनां द्वे सत्तास्थाने अष्टाविंशतिश्चतुर्विंशतिश्च। तत्राष्टाविंशतिः प्रथमसम्यक्त्वोत्पादकाले, उपशमश्रेणिप्रतिपाते तूपशान्तानन्तानुबन्धिनामष्टाविंशतिः, उद्वलितानन्तानुबन्धिनां चतुर्विंशतिः, क्षायिकसम्यग्दृष्टीनां तु सप्तकक्षयादेकविंशतिरेव। सप्तोदये मिश्रदृष्टीनां त्रीणि सत्तास्थानानि—अष्टाविंशतिः सप्तविंशतिश्चतुर्विंशतिश्च। तत्राष्टाविंशतिसत्कर्मणः सतो मिश्रभावं प्रपन्नस्याष्टाविंशतिः, यस्तु मिथ्यादृष्टिः सम्यक्त्वोद्वलनं कृत्वा मिश्रं नाद्याप्युद्वलयितुं लग्नोऽत्रान्तरे च परिणाममहिम्ना मिथ्यात्वान्निवृत्य मिश्रभावं प्रपन्नः, तस्य सप्तविंशतिः। यश्च विसंयोजितानन्तानुबन्धिचतुष्कः सम्यग्दृष्टिर्मिश्रभावं प्रपद्यते तस्य चतुर्विंशतिः, सा च चतसृषु गतिषु प्राप्यते, चतुर्गतिकानामपि सम्यग्दृशामनन्तानुबन्धिविसंयोजकत्वात्तद्विसंयोजनानन्तरं च केषाञ्चित् परिणामवशेन मिश्रभावप्राप्तिसंभवात्, ततश्च चतसृष्वपि गतिषु मिश्रदृष्टीनां चतुर्विंशतिः संभवति। अविरतसम्यग्दृष्टीनां सप्तोदये

पञ्च सत्तास्थानानि—अष्टाविंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिश्च । तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां च, चतुर्विंशतिरप्युभयेषां, नवरं विसंयोजितानन्तानुबन्धिनां, त्रयोविंशतिर्वेदकसम्यग्दृष्टीनामेव क्षपणायोद्यतानामनन्तानुबन्धिषु मिथ्यात्वे च क्षपिते सति, द्वाविंशतिरपि तेषामेव सम्यग्मिथ्यात्वे क्षपिते, स च द्वाविंशतिसत्कर्मा सम्यक्त्वं क्षपयंस्तच्चरमग्रासे वर्त्तमानः कश्चित्पूर्वबद्धायुष्कः कालमपि करोति, कालं च कृत्वा चतसृणां गतीनामन्यतमस्यां गतावुत्पद्यते । उक्तं च—“पट्ठवगो उ मणुस्सो णिट्ठवगो चउसु वि गइसु” । ततो द्वाविंशतिश्चतसृष्वपि गतिषु प्राप्यते । एकविंशतिः क्षायिकसम्यग्दृष्टीनाम् । एवमष्टोदयेऽपि मिश्रदृष्टीनामविरतसम्यग्दृष्टीनां चोक्तरूपाण्यन्यूनानतिरिक्तानि सत्तास्थानानि भावनीयानि । एवं नवोदयेऽपि, नवरं नवोदयोऽविरतानां वेदकसम्यग्दृष्टीनामेवेति । तत्राष्टाविंशतिचतुर्विंशतित्रयोविंशतिद्वाविंशतिलक्षणानि चत्वारि सत्तास्थानानि वाच्यानि । त्रयोदशबन्धकानां देशविरतानां चत्वार्युदयस्थानानि, तद्यथा—पञ्च षट् सप्ताष्ट । तत्र देशविरता द्विधा तिर्यञ्चो मनुष्याश्च । तत्र तिरश्चां चतुर्ष्वप्युदयेषु द्वे द्वे सत्तास्थाने अष्टाविंशतिश्चतुर्विंशतिश्च । तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा । तत्रौपशमिकसम्यग्दृष्टीनां प्रथमसम्यक्त्वेन सह देशविरतिप्रतिपत्तिकाले, वेदकसम्यग्दृष्टीनां त्वष्टाविंशतिः सुप्रतीता । चतुर्विंशतिरनन्तानुबन्धिषु विसंयोजितेषु वेदकसम्यग्दृष्टीनामवगन्तव्या । शेषाणि तु त्रयोविंशत्यादीनि सत्तास्थानानि तिरश्चां न संभवति, तानि हि क्षायिकसम्यक्त्वमुत्पादयतः प्राप्यन्ते, न च तिर्यञ्चः क्षायिकसम्यक्त्वमुत्पादयन्ति, किन्तु मनुष्या एव । अथ मनुष्यः क्षायिकसम्यक्त्वमुत्पाद्य यदा तिर्यक्षूत्पद्यते तदा तिरश्चोऽप्येकविंशतिः कथं न प्राप्यते ? मैवं, क्षायिकसम्यग्दृष्टेस्तिर्यक्षूत्पित्सोरसंख्येयवर्षायुष्केष्वेव समुत्पादात्, तत्र च देशविरत्यभावाद्देशविरतेषु तिर्यक्षु त्रयोविंशत्यादिप्रतिषेधस्य युक्तत्वात् । उक्तं च सप्ततिकाचूर्णौ—“एगवीसा तिरिक्खेसु संजया-

संजएसु न लब्भइ, कहं ? भण्णइ—संखेज्जवासाउएसु खाइगसम्मद्दिट्ठी न उववज्जइ, असंखेज्जवासाउएसु उववज्जेज्जा, तस्स देसविरई
णत्थि त्ति" । ये तु मनुष्या देशविरतास्तेषां पञ्चकोदये त्रीणि सत्तास्थानानि एकविंशतिचतुर्विंशत्यष्टाविंशतिरूपाणि । षट्कोदये सप्तो-
दये च प्रत्येकं पञ्चापि सत्तास्थानानि । अष्टकोदये चैकविंशतिवर्जानि शेषाणि चत्वारि सत्तास्थानानि भवन्ति, तानि चाविरतसम्य-
शत्युक्तया दिशा भावनीयानि । एवं नवकवन्धे प्रमत्तेऽप्रमत्ते च प्रत्येकं चतुष्कोदये त्रीणि त्रीणि सत्तास्थानान्यष्टाविंशतिचतुर्विंश-
त्येकविंशतिलक्षणानि । पञ्चकोदये षट्कोदये च पञ्च पञ्च सत्तास्थानान्यष्टाविंशतिचतुर्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतिलक्षणानि ।
एतान्येवैकविंशतिवर्जानि शेषाणि चत्वारि सप्तकोदये प्रागुक्तदिशा भावनीयानि । अपूर्वकरणस्य तु नववन्धकस्य त्रीण्युदयस्थानानि
चत्वारि पञ्च षट् चेति । एतेषु च त्रिष्वपि प्रत्येक त्रीणि त्रीणि सत्तास्थानान्यष्टाविंशतिचतुर्विंशत्येकविंशतिलक्षणानि द्रष्टव्यानि ।
अपूर्वकरणो हि वेदकसम्यग्दृष्टिर्न भवति किं त्वौपशमिकसम्यग्दृष्टिः क्षायिकसम्यग्दृष्टिर्वा । तत्रौपशमिकसम्यग्दृष्टेरष्टाविंशतिचतुर्विंशती
एव प्रागुक्तायनीये, क्षायिकसम्यग्दृष्टेस्त्वेकविंशतिः । पञ्चचतुस्त्रिद्व्येकवन्धकेऽवन्धके च सूक्ष्मसम्पराये उपशान्तमोहे च प्रत्येकं त्रीणि
त्रीणि सत्तास्थानान्यष्टाविंशतिचतुर्विंशत्येकविंशतिलक्षणान्युपशान्तसप्तकमुद्वलितानन्तानुवन्धिनं क्षीणसप्तकं चाधिकृत्य यथायोगं द्विको-
दये एककोदयेऽनुदये चोपशमश्रेण्यां भवन्ति । तथा पञ्चविधवन्धकस्यानिवृत्तिवादरक्षपकस्य प्रागुक्ताया एकविंशतेरष्टसु कषायेषु क्षीणेषु
त्रयोदशकं सत्तास्थानं, ततो नपुंसकवेदे क्षपिते द्वादशकं, ततः स्त्रीवेदे क्षपिते एकादशकमिति, एतान्यन्यान्यपि त्रीणि सत्तास्थानानि
त्रीणि च प्रागुक्तानीति सर्वसंख्यया पञ्चवन्धकस्य षट् सत्तास्थानानि । तथेह यः कश्चिन्नपुंसकवेदेन क्षपकश्रेणिं प्रतिपन्नः, स स्त्रीवेद-
नपुंसकवेदौ युगपत् क्षपयति, तयोर्युगपत्क्षयसमकालमेव च पुरुषवेदस्य वन्धो व्यवच्छिद्यते, तदनन्तरं पुरुषवेदहास्यादिषट्के युगपत्

क्षपयति । यदि तु स्त्रीवेदेन क्षपकश्रेणिं प्रतिपन्नस्तदादौ नपुंसकवेदं क्षपयति, ततोऽन्तर्मुहूर्त्तेन स्त्रीवेदं, स्त्रीवेदक्षयसमकालमेव च पुरुषवेदस्य बन्धव्यवच्छेदः, तदनन्तरं पुरुषवेदहास्यादिषट्के युगपत्क्षपयति, यावच्चोभयत्रापि पुरुषवेदहास्यादिषट्के न क्षीयेते तावच्चतुर्विधबन्धकस्य वेदोदयरहितस्यैकोदये वर्त्तमानस्यैकादशकं सत्तास्थानं लभ्यते, तयोस्तु क्षीणयोश्चतुष्प्रकृत्यात्मकम्, इत्थं च स्त्रीवेदेन नपुंसकवेदेन वा क्षपकश्रेणिं प्रतिपन्नस्य पञ्चप्रकृत्यात्मकं सत्तास्थानं न प्राप्यते । यस्तु पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नस्तस्य नोकषायषट्कक्षयसमकालं पुरुषवेदस्य बन्धव्यवच्छेद इति तस्य चतुर्विधबन्धकाले एकादशप्रकृत्यात्मकं सत्तास्थानं न प्राप्यते, किं तु पञ्चप्रकृत्यात्मकं, द्वे च प्रागुक्ते, त्रीणि चोपशमश्रेण्याश्रितानीति सर्वसंख्यया चतुर्विधबन्धकस्य षट् सत्तास्थानानि । तथा संज्वलनक्रोधस्य प्रथमस्थितावावलिकाशेषायां बन्धोदयोदीरणा युगपद्व्यवच्छिद्यन्ते, तासु च व्यवच्छिन्नासु बन्धस्त्रिविधो भवति, तदानीं च संज्वलनक्रोधस्य प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च दलिकं मुक्त्वाऽन्यत्सर्वं क्षीणं, तदपि च सत् समयद्वयोनावलिकाद्विकमात्रेण कालेन क्षयमुपयास्यति, यावच्च न याति तावच्चतस्रः प्रकृतयस्त्रिविधबन्धे सत्यः, क्षीणे तु तस्मिंस्तिस्रः, तदेवं त्रिविधबन्धकस्यैते द्वे त्रीणि चोपशमश्रेण्याश्रितानीति सर्वसंख्यया पञ्च सत्तास्थानानि । तथा संज्वलनमानस्य प्रथमस्थितावावलिकाशेषायां बन्धोदयोदीरणानां युगपद्व्यवच्छेदे द्विविधो बन्धो भवति, तदानीं च संज्वलनमानस्य प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च दलिकं मुक्त्वाऽन्यत् सर्वं क्षीणं, तदपि सत् समयद्वयोनावलिकाद्विकमात्रेण कालेन क्षयं यास्यति, यावच्च न याति तावत्तिस्रः सत्यः, क्षीणे तु तस्मिन् द्वे, तदेवं द्विविधबन्धकस्यैते द्वे त्रीणि चोपशमश्रेण्याश्रितानीति सर्वसंख्यया पञ्च सत्तास्थानानि । तथा संज्वलनमायायाः प्रथमस्थितावावलिकाशेषायां बन्धोदयोदीरणानां युगपद्व्यवच्छेदे एकविधबन्धो भवति, तदानीं च संज्वलन-

मोहस्य सत्तास्थानानि

## मोहस्यबंधोदयसत्तासंवेधयन्त्रम्

| बंधे | उदय स्थानं | सत्तास्थानं | प्राप्तिस्थानं | बंधे | उदय-स्थानं | सत्तास्थानं | प्राप्तिस्थानं |
|---|---|---|---|---|---|---|---|
| २२ | ७ | २८ | मिथ्यात्वस्य | १३ | ८ | २८-२४-२३-२२ | क्षयोप०देशवि० मनुष्यानां |
| ,, | ८-९-१० | ,, २७-२६ | ,, | ९ | ४ | ,, ,, २१ | प्रमत्ताप्रमत्तानां |
| २१ | ७-८-९ | २८ | सास्वादनस्य | ,, | ५-६ | ,, ,, २३-२२-२१ | ,, |
| १७ | ६ | ,, २४ | औप०सम्यग्दृशां ४र्थस्य | ,, | ७ | ,, ,, ,, ,, | ,, |
| ,, | ,, | २१ | क्षायिक ,, ,, | ,, | ४-५-६ | ,, ,, २१ | अपूर्वकरणस्थानां |
| ,, | ७-८ | २८-२४-२३-२२-२१ | सम्यग्दृशां ४र्थे | ५ | २ | २८-२४-२१-१३-१२-११ | अनिवृ० करणगुणस्थानां |
| ,, | ७-८-९ | ,, २७-२४ | मिश्रसम्यग्दृशां | ४ | २-१ | ,, ,, ,, ११-४-५ | ,, |
| ,, | ९ | ,, २४-२३-२२ | क्षयोप० ,, ४र्थे गुणे | ३ | १ | ,, ,, ,, ४-३ | ,, |
| १३ | ५ ६ ७ ८ | २८ | औप० सम्य०तिरश्चां ५मेगुणे | २ | १ | ,, ,, ,, ३-२ | ,, |
| ,, | ,, | २४ | क्षयोप० ,, ,, ,, | १ | १ | ,, ,, ,, २-१ | ,, |
| ,, | ५ | २१-२४-२८ | देशवि० मनुष्याणां | अबंधे | १ | ,, ,, ,, १ | सूक्ष्मसंपराये |
| ,, | ६-७ | २८-२४-२३-२२-२१ | ,, ,, | | | | |

मोहस्य-सत्तास्था-नानि

माथायाः प्रथमस्थितिगतमावलिकामात्रं समयद्वयोनावलिकाद्विकबद्धं च सदस्ति, अन्यत्समस्तं क्षीणं, तदपि च सत् समयद्वयोनावलि-
काद्विकेन कालेन क्षयं यास्यति, यावच्च न याति तावद्द्वे सती, क्षीणे तस्मिन्नेका, तदेवमेकविधबन्धकस्येमे द्वे त्रीणि चोपशमश्रेण्या-
श्रितानीति सर्वसंख्यया पञ्च। अबन्धके च सूक्ष्मसम्पराये क्षपके एकं सत्तास्थानमेकप्रकृत्यात्मकं, त्रीणि चोपशमश्रेण्याश्रितानीति चत्वारि।
एतेषामेव सत्तास्थानानामवस्थानकालमानमुच्यते–सप्तविंशतिसत्तास्थानस्याजघन्योत्कर्षमवस्थानकालः पल्योपमासंख्येयभागः ।
तथाहि–अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेः सम्यक्त्वे उद्वलिते सप्तविंशतिः सत्तास्थानमवाप्यते । तदनन्तरं यावन्नाद्यापि सम्यङ्मि-
थ्यात्वमुद्वलयितुमारभते तावत्सम्यग्मिथ्यात्वोदयमपि गच्छति । उक्तं च पञ्चसंग्रहमूलटीकायां–"उद्वलनाया अप्रारम्भे तस्य सम्यग्मि-
थ्यात्वोदयो भवति" इति । ततः सम्यग्मिथ्यादृष्टेरप्यन्तर्मुहूर्त्तं यावत्सप्तविंशतिसत्तास्थानं प्राप्यते, अन्तर्मुहूर्त्तानन्तरं च सोऽप्यवश्यं
मिथ्यात्वं गच्छति । मिथ्यात्वं गतश्च सन् सम्यङ्मिथ्यात्वमुद्वलयितुमारभते, पल्योपमासंख्येयभागमात्रेण च कालेन तन्निःशेषमुद्व
लयति, यावच्च न निःशेषमुद्वलयति तावत्सदित्यजघन्योत्कर्षं सप्तविंशतिसत्तास्थानस्य पल्योपमासंख्येयभागः कालः । सम्यग्मिथ्यात्वे
चोद्वलिते षड्विंशतिः सत्तास्थानं, तस्य चावस्थानमुत्कर्षतो देशोनपुद्गलपरावर्त्तार्धकालं, ततः परमवश्यमौपशमिकं सम्यक्त्वं करण-
त्रयपूर्वमासादयति, ततश्च भूयोऽप्यष्टाविंशतिसत्कर्मा भवति, जघन्यतस्तु षड्विंशतिसत्तास्थानमन्तर्मुहूर्त्तम् । तथाऽष्टाविंशतिचतुर्विंश-
तिसत्तास्थानयोरवस्थानकालो द्वे षट्षष्टी सागरोपमाणां,तथाहि–वेदकसम्यक्त्वान्वितस्याष्टाविंशतिसत्कर्मण एकां षट्षष्टिं सागरोपमाणां
संपूर्य ततोऽन्तर्मुहूर्त्तं सम्यग्मिथ्यात्वे स्थित्वा ततो भूयोऽपि सम्यक्त्वसहितामेकां षट्षष्टिं सागरोपमाणां संपूर्य स्थितस्य तस्य ततः
परमवश्यं क्षपकश्रेणेर्मिथ्यात्वस्य वा प्रतिपत्तिर्भवति, तत्र क्षपकश्रेणिप्रतिपत्तौ मिथ्यात्वादिक्षयादष्टाविंशतिसत्तास्थानमपैति, आन्त-

शलिकं मिश्रसत्कमन्तर्मुहूर्त्तं च स्तोकत्वान्न विवक्षितं, ततः क्षपकश्रेणिप्रतिपत्त्यपेक्षयाऽष्टाविंशतिसत्तास्थानस्यावस्थानकालो द्वे पट्षष्टी
सागरोपमाणां, यस्तु मिथ्यात्वं प्रतिपद्यते स पल्योपमासंख्येयभागमात्रेण कालेन सम्यक्त्वं निःशेषमुद्वलयति, तावच्च तत्सदिति तस्य
पल्योपमासंख्येयभागमात्राधिके द्वे पट्षष्टी सागरोपमाणामष्टाविंशतिसत्तास्थानस्यावस्थानकालः। एवं चतुर्विंशतिसत्तास्थानस्यापि
भावनीयम्। नवरं योऽपि सागरोपमपट्षष्टिद्वयानन्तरं मिथ्यात्वं प्रतिपद्यते तस्यापि प्रथमसमय एवानन्तानुबन्धिबन्धसंभवाच्चतुर्विंश-
तिसत्तास्थानमपयातीति परिपूर्णे द्वे पट्षष्टी सागरोपमाणां चतुर्विंशतिसत्तास्थानस्यावस्थानकालः। जघन्यतस्तु द्वे अप्यान्तर्मौ-
हूर्त्तिके। तथाहि—अष्टाविंशतिसत्कर्मा वेदकसम्यक्त्वोपेतः सप्तक्षपणमारभमाणो यावन्नानन्तानुबन्धिनः क्षपयति तावदष्टाविंशतिरेव स-
त्तास्थानं, अनन्तानुबन्धिषु क्षपितेषु तु चतुर्विंशतिः, साऽपि तावद्यावन्मिथ्यात्वं न क्षपयति, क्षपिते तु तस्मिंस्त्रयोविंशतिः। तदेवं
चतुर्विंशत्यष्टाविंशती जघन्यत आन्तर्मौहूर्त्तिके। एकविंशतिसत्तास्थानमुत्कर्पतः साधिकत्रयस्त्रिंशत्सागरोपमस्थितिकम्। तथाहि—इह
मनुष्यभवे सप्तकक्षयं कृत्वा सर्वार्थसिद्धे महाविमाने देवो जातः, तत्र च त्रयस्त्रिंशत्सागरोपमाण्यनुभूय पुनरपीह मनुष्यभवे समायातः,
ततो यावन्नाद्यापि क्षपकश्रेणिमारभते तावत्तस्यैकविंशतिरेव सत्तास्थानम्। जघन्यतस्त्वेतदप्यान्तर्मौहूर्त्तिकं, तच्च सप्तकक्षयानन्तरं क्षप-
कश्रेणिमारोहतो द्रष्टव्यम्। शेषाणां सत्तास्थानानां जघन्यत उत्कर्पतश्चान्तर्मुहूर्त्तमेव सत्तास्थानं प्राप्यते, तच्च सुप्रतीतमेव। तथाऽना-
दिमिथ्यादृष्टीनां पट्विंशतिसत्तास्थानमभव्यापेक्षयाऽनाद्यपर्यवसानं, भव्यापेक्षयाऽनादिसपर्यवसानं च द्रष्टव्यम्। तदेवं कृता कालप्र-
रूपणा, तत्करणाच्च समाप्तं मोहनीयम्।

अथ नामकर्मणो बन्धादिस्थानानि वाच्यानि—तत्र याभिः प्रकृतिभिः सहिता नामकर्मणो बह्वयः प्रकृतयो बन्धमुदयं वा गच्छन्ति

ता आदौ निर्दिश्यन्ते–अपर्याप्तकजातिपर्याप्तकगतिनामकर्मभिः प्रेरिता इव बह्वयः शेषप्रकृतयो बन्धमुदयं वोपयान्ति। तथाहि–अपर्याप्तकनाम्नि बध्यमाने उदयप्राप्ते वा मनुष्यगतिप्रायोग्यास्तिर्यग्गतिप्रायोग्या वा बह्वयो नाम्नः प्रकृतयो बन्धमुदयं वोपयान्ति। जातिनाम्नि चैकेन्द्रियादिजातिरूपे बादरसूक्ष्मादयः, पर्याप्तकनाम्नि च यशःकीर्त्यादयः, देवादिगतौ च वैक्रियद्विकादय इति। अत्रोदयस्थितेरियं वक्तव्यता–उदयसमयप्राप्तानामबाधाकालक्षयेणोदयो भवति, स च द्विधा प्रदेशतोऽनुभागतश्च। तत्रानुदयवतीनां प्रकृतीनां दलिकमबाधाकालक्षये प्रतिसमयमुदयवतीषु स्तिबुकसंक्रमेण संक्रमय्य यदनुभूयते स प्रदेशोदयः, स चानुपशान्तानामवसेयः, उपशान्तानां तु न भवति। अनुभागोदयश्च विपाकोदयः, स च नित्योदयानां सदा प्रवर्त्तते, शेषाणां तु भजनीयः। यस्तु प्रयोगोदय उदीरणापरनामा स विपाकोदये प्रवर्त्तमान एव प्रवर्त्तते इति न पृथग्विवक्ष्यते। अथ याः प्रकृतयो देवगत्या सह बन्धमुदयं वा गच्छन्ति ता उच्यन्ते–अशुभास्थिरसमचतुरस्रपराघातोच्छ्वासत्रसदशकवर्णगन्धरसस्पर्शतैजसकार्मणागुरुलघुनिर्माणोपघातायशःकीर्त्तिपञ्चेन्द्रियजातिवैक्रियद्विकाहारकद्विकशुभविहायोगतिदेवानुपूर्वीलक्षणा द्वात्रिंशत्प्रकृतयो देवगत्या सह बन्धमुदयं वा गच्छन्ति। यदा तु तीर्थकरनामापि बध्यते तदा तत्सहितास्त्रयस्त्रिंशत्प्रकृतयो वेदितव्याः। तथा यदा देवगतौ स्थितः सँस्तीर्थकरनाम बध्नाति तदा तीर्थकरनामसहिता देवद्विकवैक्रियद्विकाहारकद्विकरहिताः शेषा देवगतिप्रायोग्याः अष्टाविंशतिर्बध्यन्ते, मनुजद्विकौदारिकद्विकाद्यसंहननलक्षणाश्च पञ्चेति सर्वसंख्यया त्रयस्त्रिंशद्बध्यन्ते। तथा सूक्ष्मेण साधारणेनापर्याप्तेन वा सह न यशःकीर्त्तिं बध्नाति, नाप्युदयेनानुभवति, न चाहारकद्विके बध्यमाने उदयप्राप्ते वाऽयशःकीर्त्यस्थिराशुभरूपास्तिस्रः प्रकृतयो बन्धमुदयं वाऽऽयान्ति। अथ बन्धमधिकृत्य नरकगतिसहचराः प्रकृतय उपदर्श्यन्ते–हुण्डं वर्णगन्धरसस्पर्शा अगुरुलघुतैजसकार्मणोपघातनिर्माणान्यस्थिराशुभदुर्भगानादेयाय-

शःकीर्त्तयःपञ्चेन्द्रियजातिर्वादरप्रत्येकनामनी दुःस्वरपराघातोच्छ्वासपर्याप्तकनामानि त्रसनामाप्रशस्तविहायोगतिर्वैक्रियद्विकमानुपूर्वी चेति सप्तविंशतिर्नरकगतया सह बन्धमायान्ति। हुण्डाद्या पञ्चदश मनुजद्विकतिर्यग्द्विकयोरन्यतरद्द्विकं अन्यतरा जातिर्वादरसूक्ष्मयोरन्यतरत् प्रत्येकसाधारणयोश्चान्यतरत् एवं विंशतिरौदारिकशरीरापर्याप्तकनामसहिता द्वाविंशतिरपर्याप्तकबन्धसंज्ञाः,पर्याप्तकनाम्ना सहतासां मिलितानां बन्धे उदये वाऽसंभवात् । एता अपर्याप्तकबन्धसंज्ञाः प्रकृतीर्वध्नन् यदैकेन्द्रियप्रायोग्या वध्नाति तदाऽन्या अपि स्थावरसूक्ष्मसाधारणरूपास्तिस्रः प्रकृतयो बन्धे प्रविशन्तीत्यपर्याप्तैकेन्द्रियप्रायोग्याः पञ्चविंशतिः, त्रसप्रायोग्याश्च ता बध्नंस्त्रसनामौदारिकाङ्गोपाङ्गसेवार्त्तसंहनननाम्न्या अन्या अपि तिस्रः प्रकृतीर्वध्नातीत्यपर्याप्तकत्रसप्रायोग्या अपि पञ्चविंशतिरवसेया । पर्याप्तकनाम्नि बध्यमानेऽपर्याप्तस्थाने पर्याप्तामिषेकेण स्थिरशुभयशःकीर्त्युच्छ्वासोद्योतपराघाताख्यानां षण्णां च प्रकृतीनामधिकानां प्रक्षेपेणैकत्रिंशज्ज्ञातव्या । एषा च पर्याप्तस्थावरैकेन्द्रियप्रायोग्ये पर्याप्तत्रसप्रायोग्ये च बन्धे प्रत्येकं संभवतो ज्ञातव्या । तथा यदा खरबादरपर्याप्तैकेन्द्रियप्रायोग्यं बध्नाति तदा द्वात्रिंशत्समातपनामापि द्रष्टव्यम् । यदा तु विकलेन्द्रियप्रायोग्यं बध्नाति तदाऽप्रशस्तविहायोगतिदुःस्वरनाम्नोरधिकयोर्बन्धात् पर्याप्तविकलेन्द्रियप्रायोग्ये बन्धे त्रयस्त्रिंशत् । पर्याप्ततिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यबन्धारम्भे च सुस्वरसुभगादेयप्रशस्तविहायोगतिसंहननपञ्चकसंस्थानपञ्चकलक्षणाश्चतुर्दश प्रकृतयोऽधिकाः प्रविशन्तीति सप्तचत्वारिंशत् । तदेवं पर्याप्तापर्याप्तस्थावरत्रसप्रायोग्यबन्धेषु यावत्यः प्रकृतयो यथा संभवन्ति तावत्यस्तथा प्ररूपिताः ।

नामकर्मणो बंधस्थानानि २३-२५-२६-२८-२९-३०-३१-१ इति ८ तानि गतिषु भाव्यन्ते

मनुष्यस्य बंध प्रा० सर्वाण्यपि तत्प्रदर्श्यंते
एकेंद्रियोत्पित्सोः २३-२५-२६
विकलेंद्रियतिर्यग्पञ्चेन्द्रियोत्पित्सो: २५-२९-३०
नरकोत्पित्सोः २८
देवोत्पित्सो २८-२९-३०-३१
नरेषूत्पित्सोः २५-२९
क्ष० उ० श्रेण्यां १

तिरश्चो बंध प्रा० २३-२५-२६-२८-२९-३० इति ६
एकें० २३-२५-२६
विक० ति० प० २५-२९-३०
नरको० २८
देवो० २८
नरेषूत्पित्सोः २५-२९

नारकस्य बंध प्रा० २९-३० इति २
तिर्यगु० २९-३०
मनुष्यो० २९-३०

देवस्य बंध प्रा० २५-२६-२९-३० इति ४
२५ पृथिव्यम्बुवनस्पतिषूत्पित्सोः
२६ खरबादरपृथ्वीषूत्पित्सोः
२९ तिर्यग्नरेषूत्पित्सोः
३० „

कस्या गतेः प्रायोग्यं बध्नतः
कतिबंधस्थानानि ? तत् प्ररूप्यन्ते
नरकगतौ बध्यमाने २८
देवगतौ „ २८-२९-३०-३१
एकेंद्रिये „ २३-२५-२६
द्वीन्द्रियादौ „ २५-२९-३०
पञ्चे० तिर्यग्नरेषु „ „ „

# गुणस्थानेषु नाम्नो बंधस्थानानि

| गुणस्थानानि | बंधस्थानानि | बंधकजीवा | गतिप्रायोग्यानि |
|---|---|---|---|
| १ मे | २३ | तिर्यग्मनुष्याः | एकेन्द्रिय प्रा० |
| ,, | २५-२६ | विनानारकं सर्वं | ,, |
| ,, | २५ | तिर्यग्मनुष्याः | तिर्यग्मनुष्य प्रा० |
| ,, | २८ | ,, | देवनरक प्रा० |
| ,, | २९-३० | चातुर्गतिकाः | तिर्यग्मनुष्य प्रा० |
| २ ये | २८ | तिर्यग्नरा | देव प्रा० |
| ,, | २९ | देवनारकाः | ति० मनु० प्रा० |
| ,, | ३० | ,, | तिर्य० प्रा० |
| ३ ये | २८ | तिर्यग्नराः | देव प्रा० |
| ,, | २९ | देवनारकाः | मनु० प्रा० |
| ४ थे | २८ | तिर्यग्नराः | देव प्रायो० |
| ,, | २९ | मनुष्या. | ,, |

| गुणस्थानानि | बंधस्थानानि | बंधकजीवाः | गतिप्रायोग्यानि |
|---|---|---|---|
| ४ थे | २९ | देवनारकाः | मनुष्य प्रा० |
| ,, | ३० | देवनारकाः | मनुष्य प्रा० |
| ५ मे | २८ | तिर्यग्नराः | देव प्रायो० |
| ,, | २९ | नराः | ,, |
| ६ ठे | २८-२९ | ,, | ,, |
| ७ मे | २८-२९<br>३०-३१ | ,, | ,, |
| ८ मे | २८-२९<br>३०-३१<br>१ | ,, | ,, |
| ९ मे | १ | ,, | |
| १० मे | १ | ,, | |

अथ बन्धस्थानानि नाम्न विव्रियन्ते। तत्राष्टौ बन्धस्थानानि—त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत् त्रिंशदेकत्रिंशदेका चेति। एतेषां मध्ये यति यस्यां गतौ वर्तमानो बध्नाति तस्यां गतौ तति बन्धस्थानानि प्ररूप्यन्ते—तत्र मनुजगतौ वर्त्तमानो जीवः सर्वाण्यपि नाम्नो बन्धस्थानानि यथासंभवं बध्नाति। तथाहि—मनुष्यः सर्वास्वपि गतिषूत्पद्यते, तत्रैकेन्द्रियेषु मध्ये उत्पित्सुस्त्रयोविंशतिं पञ्चविंशतिं षड्विंशतिं वा बध्नाति, विकलेन्द्रियेषूत्पित्सुः पञ्चविंशतिमेकोनत्रिंशतं त्रिंशतं वा, नरकेषूत्पित्सुरष्टाविंशतिं, देवगतावुत्पित्सुरष्टाविंशतिमेकोनत्रिंशतं त्रिंशतमेकत्रिंशतं च, क्षपकश्रेण्यामुपशमश्रेण्यां च वर्त्तमान एकामिति। तथा तिर्यग्गतौ वर्त्तमान आद्यानि षट् बन्धस्थानानि यथायोगं बध्नाति, तिरश्चोऽपि यथायोगं चतसृष्वपि गतिषु गमनसंभवात्, यस्तु देवगतिप्रायोग्य एकत्रिंशद्बन्धः स तीर्थकराहारकबन्धसहितः एकविधबन्धश्च श्रेणिगतस्येति तौ निषिध्येते तिरश्चः। तथा नरकगतौ वर्त्तमान एकोनत्रिंशतं त्रिंशतं वा बध्नाति, यतोऽवश्यं नारकः पर्याप्तेषु तिर्यक्षु मनुष्येषु वा मध्ये समुत्पद्यते, तत्प्रायोग्यश्चैकोनत्रिंशद्बन्धः, यस्तु नारकः श्रेणिकादिवद्भावितीर्थंकरः स मनुष्यगतिप्रायोग्यं बध्नंस्त्रिंशतं बध्नाति। तथा देवगतौ वर्त्तमानः पञ्चविंशतिं षड्विंशतिमेकोनत्रिंशतं त्रिंशतं वा बध्नाति, तत्र पञ्चविंशतिं पृथिव्यम्बुवनस्पतिषु मध्ये समुत्पित्सुः, तामेव पञ्चविंशतिमातपप्रक्षेपेण षड्विंशतिं खरबादरपृथिवीकायिकेषु समुत्पद्यमानः। एकोनत्रिंशत्त्रिंशद्भावना च नारकवत्। तदेवं नाम्नो बन्धस्थानानां गतिभेदेन बन्धका उक्ताः। अथ कस्या गतेः प्रायोग्यं बध्नतः कति बन्धस्थानानि प्रायोग्यानि भवन्तीत्येतन्निरूप्यते—नारकगतिप्रायोग्यं बध्नत एकमेवाष्टाविंशतिरूपं बन्धस्थानं, देवगतिप्रायोग्यं बध्नतोऽष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशल्लक्षणानि चत्वारि, एकेन्द्रियप्रायोग्यं बध्नतस्त्रयोविंशतिपञ्चविंशतिषड्विंशतिलक्षणानि त्रीणि, द्वीन्द्रियादितिर्यग्गतिमनुष्यगतिगमनप्रायोग्यं बध्नतः पञ्चविंशत्येकोनत्रिंशत्त्रिंशल्लक्षणं बन्धस्थानत्रयमत्राप्यते।

मिथ्यादृष्टौ षड् नामबन्धाः—त्रयोविं-
एतानि सर्वाण्यपि बन्धस्थानान्यदूर एवाग्रे भावयिष्यन्ते । सम्प्रति गुणस्थानानि चिन्त्यते—तत्र मिथ्यादृष्टौ षड् नामबन्धाः—त्रयोविं-
शतिपञ्चविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशल्लक्षणाः, ते च चतुर्गतिप्रायोग्यबन्धसंभवेन भावनीयाः । सासादनेऽष्टाविंशत्येकोन-
त्रिंशत्त्रिंशल्लक्षणानि त्रीणि बन्धस्थानानि, तत्र तिरश्चो मनुष्यस्य वा सासादनस्य देवगतिप्रायोग्यं बध्नतोऽष्टाविंशतिः, देवस्य नारकस्य
वा सासादनस्य तिर्यग्मनुष्यप्रायोग्यं बध्नत एकोनत्रिंशत्, तिर्यक्प्रायोग्यं बध्नतस्त्रिंशत् । सम्यग्मिथ्यादृष्टौ द्वे बन्धस्थाने—अष्टाविंश-
तिरेकोनत्रिंशच्च, तत्र तिरश्चो मनुष्यस्य वा देवगतिप्रायोग्यं बध्नतोऽष्टाविंशतिः, देवस्य नारकस्य वा नृगतिप्रायोग्यं बध्नत एकोनत्रिंशत् ।
अविरतसम्यग्दृष्टावष्टाविंशत्येकोनत्रिंशत्त्रिंशल्लक्षणानि त्रीणि बन्धस्थानानि, तत्र तिर्यग्मनुष्याणां देवगतिप्रायोग्यं बध्नतामष्टाविंशतिः,
मनुष्याणां देवगतिप्रायोग्यं बध्नतामेकोनत्रिंशत्, देवनारकाणां मनुष्यगतिप्रायोग्यं बध्नतामेकोनत्रिंशत्त्रिंशच्च । देशविरते प्रमत्ते च द्वे द्वे
बन्धस्थाने अष्टाविंशत्येकोनत्रिंशल्लक्षणे । एते च द्वे अपि देवगतिप्रायोग्यं बध्नतो वेदितव्ये । तत्रापि देशविरतस्य तिरश्चोऽष्टाविंशतिरेव,
मनुष्यस्य तु द्विविधस्यापि द्वे अपि । अथ प्रमत्तसंयते आहारकद्विकस्य कथं न बन्धः तद्बन्धस्य संयमप्रत्ययत्वात्, नैवं, तद्बन्धस्य विशि-
ष्टसंयमप्रत्ययत्वात्तादृशस्य च विशिष्टसंयमस्याप्रमत्तादिगुणस्थान एव भावात् । अप्रमत्तेऽष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशल्लक्षणानि चत्वा-
रि बन्धस्थानानि । अपूर्वकरणेऽष्टाविंशत्यादीनि पञ्च बन्धस्थानानि, तत्र चत्वारि प्रागुक्तान्येव, पञ्चमं तु यशःकीर्तिरूपैकप्रकृत्यात्मक-
मिति । नवमदशमयोस्तु गुणस्थानयोर्यशःकीर्तेरेकस्या एव बन्धः । तदेवं गुणस्थानेषु बन्धस्थानान्युक्तानि । अथैकेन्द्रियादिप्रायो-
ग्याणि यानि त्रयोविंशत्यादीनि स्थानानि प्रागुक्तानि तानि भावयितुमुपक्रम्यते—तत्र तिर्यग्गतिस्तिर्यगानुपूर्वी एकेन्द्रियजातिर्दुःस्वर-
पञ्चं स्थावरदशकं तैजसकार्मणवर्णादिचतुष्टयागुरुलघूपघातनिर्माणाख्या नामध्रुवबन्धिन्य औदारिकशरीरं हुण्डसंस्थानं चेत्येषा त्रयोविंश-

तिरपर्याप्तकैकेन्द्रियस्य प्रायोग्या द्रष्टव्या। इहापर्याप्तकैकेन्द्रियप्रायोग्याः पञ्चविंशतिप्रकृतयः प्राक् संभवत उपात्तास्ततो बादरप्रत्येकरू-
पाभ्यां द्वाभ्यामुद्धरिताभ्यां प्रकृतिभ्यां प्रक्षिप्ताभ्यां सूक्ष्मसाधारणयोः प्रतिपक्षभूतयोः संचारणे त्रयोविंशतौ चत्वारो भङ्गा भवन्ति।
तथाहि—बादरनाम्नि बध्यमाने एका त्रयोविंशतिः प्रत्येकनाम्ना सह प्राप्यते, द्वितीया साधारणनाम्ना। एवं सूक्ष्मनाम्न्यपि बध्यमाने द्वे
त्रयोविंशती इति। तदेवमुक्तमपर्याप्तकैकेन्द्रियप्रायोग्यवक्तव्यम्। पर्याप्तकैकेन्द्रियप्रायोग्यबन्धस्थानचिन्तायामपर्याप्तकमपनीय पर्याप्तकं
प्रक्षेप्यम्। सैव च त्रयोविंशतिः पराघातोच्छ्वाससहिता पञ्चविंशतिर्भवति, सा च पर्याप्तकैकेन्द्रियप्रायोग्यं बध्नतो मिथ्यादृष्टेरवगन्तव्या।
इह पर्याप्तैकेन्द्रियप्रायोग्याः प्रागातपेन सह द्वात्रिंशत्प्रकृतयः संभविन्य उक्तास्तत्र पञ्चविंशतिबन्धे आतपमुद्योतं वा न संभवति
उच्छ्वासपराघाते च प्रक्षिप्ते इति, स्थिरशुभयशःकीर्त्तिरूपास्तिस्रः प्रकृतय उद्धरितास्तिष्ठन्ति, ताश्चास्थिराशुभायशःकीर्त्तिप्रतिपक्षभूताः,
ततो विकल्पेन तासामेव स्थाने प्रक्षेप्तव्याः। तथा च सत्येवमभिलापः—तिर्यग्गतिस्तिर्यगानुपूर्वी एकेन्द्रियजातिरौदारिकतैजसकार्म-
णानि हुण्डं वर्णादिचतुष्टयमगुरुलघूपघातोच्छ्वासस्थावरपराघातनामानि पर्याप्तं बादरसूक्ष्मयोरेकतरं प्रत्येकसाधारणयोरेकतरं स्थिरा-
स्थिरयोरेकतरं शुभाशुभयोरेकतरं यशःकीर्त्त्ययशःकीर्त्त्योरेकतरा दुर्भगमनादेयं निर्माणं चेति। अत्र विंशतिर्भङ्गाः, तत्र बादरपर्याप्त-
प्रत्येकस्थिरशुभेषु बध्यमानेषु यशःकीर्त्त्या सहैको द्वितीयश्चायशःकीर्त्त्या, एतौ च द्वौ शुभेन लब्धौ, एवमशुभेनापि द्वौ लब्धौ, ततो
जाताश्चत्वारः, एते चत्वार स्थिरेण लब्धाः, एवमस्थिरेणापि चत्वारो लभ्यन्ते, जाता अष्टौ, ते च बादरपर्याप्तप्रत्येकैः सह लब्धाः। यदा तु
प्रत्येकस्थाने साधारणमभिषिच्यते तदा स्थिरास्थिरशुभाशुभायशःकीर्त्तिभिश्चत्वारः, साधारणेन सह यशःकीर्त्तिबन्धप्रतिषेधात्तदाश्रित-
भङ्गाप्राप्तेः। सूक्ष्मपर्याप्तनाम्नोरतु बध्यमानयोः प्रत्येकसाधारणस्थिरास्थिरशुभाशुभायशःकीर्त्तिभिरष्टौ। सूक्ष्मेणापि सह यशःकीर्त्तेर्बन्धा-

भावादत्रापि तदाश्रिता भङ्गा न प्राप्यन्ते । तदेवं सर्वसङ्ख्यया पञ्चविंशतिबन्धे विंशतिर्भङ्गाः । सैव पञ्चविंशतिरातपसहिता षड्विंश-
तिर्भवति । नवरमिहातपस्थाने उद्योतमपि विकल्पेन प्रक्षेप्यं, पर्याप्तैकेन्द्रियप्रायोग्यबन्धे उद्योतस्यापि बन्धसंभवात् । अत्र भङ्गाः षोडश,
ते चातपोद्योतस्थिरास्थिरशुभाशुभयशःकीर्त्त्ययशःकीर्त्तिपदैरवसेयाः । आतपोद्योताभ्यां च सह सूक्ष्मसाधारणयोर्बन्धो न भवति, ततस्त-
दाश्रिता विकल्पा नोपजायन्ते । तदेवमेकेन्द्रियप्रायोग्यबन्धस्थानत्रये सर्वसङ्ख्यया चत्वारिंशद्भङ्गाः ।

अथ द्वीन्द्रियप्रायोग्यबन्धस्थानवक्तव्यमुच्यते—तत्र प्रागुक्ता त्रयोविंशतिः स्थावरनामापनयनात्ततश्चावश्यं सूक्ष्मसाधारणयोः स्थाने
बादरप्रत्येकनामप्रक्षेपात्सेवार्त्तसंहननत्रसनामौदारिकाङ्गोपाङ्गनाम्नां चाधिकानां प्रक्षेपाद्द्वीन्द्रियस्य प्रायोग्या पञ्चविंशतिर्भवति । सा चैव
मभिलाप्या तिर्यग्गतिस्तिर्यगानुपूर्वी द्वीन्द्रियजातिरौदारिकतैजसकार्मणानि हुण्डसंस्थानं सेवार्त्तसंहननमौदारिकाङ्गोपाङ्गं वर्णादिचतुष्टय-
मगुरुलघूपघातत्रसबादरापर्याप्तप्रत्येकास्थिराशुभदुर्भगानादेयायशःकीर्त्तिनिर्माणानि चेति । एषा चापर्याप्तद्वीन्द्रियप्रायोग्यं बध्नतो मिथ्या-
दृष्टेरवसेया । अत्र प्रतिपक्षभूता परावर्त्तमाना प्रकृतिरेकापि न बन्धमेतीत्येक एव भङ्गः । एषैव पञ्चविंशतिर्दुःस्वरपराघातोच्छ्वासाशुभविहा-
योगतियुक्ता एकोनत्रिंशद् भवति । एषा च पर्याप्तद्वीन्द्रियप्रायोग्यं बध्नतो मिथ्यादृष्टेर्ज्ञेया । अत एवापर्याप्तकस्थाने पर्याप्तकं प्रक्षिप्यते,
पर्याप्तकबन्धे च स्थिरशुभयशःकीर्त्तयोऽपि बन्धमायान्तीति ता अप्यस्थिराशुभायशःकीर्त्तिस्थाने विकल्पेन प्रक्षेप्तव्याः । अत्र स्थिरास्थिर-
शुभाशुभयशःकीर्त्त्ययशःकीर्त्तिपदैरष्टौ भङ्गाः । सैवैकोनत्रिंशदुद्योतसहिता त्रिंशत् । अत्रापि त एवाष्टौ भङ्गाः । सर्वसङ्ख्यया सप्तदश ।
एवं त्रीन्द्रियप्रायोग्याणि चतुरिन्द्रियप्रायोग्याणि च त्रीणि त्रीणि बन्धस्थानानि । तेषु च प्रत्येकं सप्तदश सप्तदश भङ्गा वाच्याः । नवरं
त्रीन्द्रियाणां त्रीन्द्रियजातिश्चतुरिन्द्रियाणां चतुरिन्द्रियजातिरभिलाप्या ।

गतिप्रायोग्याणि नाम्नो बन्धस्थानानि

तिर्यक्पञ्चेन्द्रियप्रायोग्यमपि बध्नतस्त्रीणि बन्धस्थानानि, तद्यथा–पञ्चविंशतिरेकोनत्रिंशत्त्रिंशत् । तत्र पञ्चविंशतिर्द्वीन्द्रियप्रायोग्यं बध्नत इव ज्ञेया, नवरं द्वीन्द्रियजातिस्थाने पञ्चेन्द्रियजातिरभिलाप्या । सैव पञ्चविंशतिः पराघातोच्छ्वासदुःस्वराप्रशस्तविहायोगतिभिः सहैकोनत्रिंशद्भवति । सा च पर्याप्ततिर्यक्पञ्चेन्द्रियप्रायोग्यं बध्नतोऽवसेया, तत्प्रायोग्यबन्धारम्भे च सुस्वरसुभगादेयप्रशस्तविहायोगत्याद्यसंहननपञ्चकाद्यसंस्थानपञ्चकलक्षणाश्चतुर्दश प्रकृतयोऽन्या अपि बन्धमाश्रित्य संभवन्ति, ताश्च दुःस्वरादीनां प्रतिपक्षभूताः, ततो विकल्पेन दुःस्वरदुर्भगानादेयानां स्थाने सुस्वरसुभगादेयानामप्रशस्तविहायोगतिस्थाने प्रशस्तविहायोगतेर्हुण्डसंस्थानस्य स्थाने विकल्पेन पञ्चसंस्थानानां सेवार्त्तसंहननस्थाने पञ्चसंहननानां प्रक्षेपे षड्भिः संस्थानैः षड्भिः संहननैः प्रशस्ताप्रशस्तविहायोगतिभ्यां स्थिरास्थिराभ्यां शुभाशुभाभ्यां सुभगदुर्भगाभ्यां सुस्वरदुःस्वराभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां भङ्गा अष्टाधिकषट्चत्वारिंशत्शतसङ्ख्या भवन्ति । सैवैकोनत्रिंशदुद्योतसहिता त्रिंशद् भवति । अत्रापि भङ्गाः प्राग्वदष्टाधिकानि षट्चत्वारिंशच्छतानि । सर्वसङ्ख्यया तिर्यक्पञ्चेन्द्रियप्रायोग्यबन्धस्थानेषु भङ्गा द्विनवतिशतानि सप्तदशाधिकानि ९२१७ । सर्वस्यां तिर्यग्गतौ सर्वसङ्ख्यया भङ्गास्त्रिनवतिशतान्यष्टाधिकानि ९३०८ । तदेवं व्याख्यातानि तिर्यग्गतिप्रायोग्याणि बन्धस्थानानि ।

अथ मनुष्यगतिप्रायोग्याण्युच्यन्ते–तत्र यान्येव तिर्यक्पञ्चेन्द्रियप्रायोग्याणि बन्धस्थानानि तान्येव मनुष्याणां प्रायोग्याणि द्रष्टव्यानि, नवरं तिर्यग्गतितिर्यगानुपूर्वीस्थाने मनुष्यगतिमनुष्यानुपूर्व्यौ वक्तव्ये । तथा त्रिंशद्बन्धस्थाने त्रिंशत्तमं तीर्थकरनाम वक्तव्यमिति विशेषः । तत्र पञ्चविंशतिबन्धस्थाने प्राग्वदेको भङ्गः । एकोनत्रिंशद्बन्धस्थानेऽष्टाधिकानि षट्चत्वारिंशच्छतानि, सैवैकोनत्रिंशत्तीर्थकरनामसहिता त्रिंशद्भवति, परमस्यां संस्थानं समचतुरस्रमेव संहननं वज्रर्षभनाराचमेव विहायोगतिः प्रशस्तैव वाच्या,

पघातं पराघातमुच्छ्वासं सुखगतिस्त्रसदशकं निर्माणं चेति, एतद्बन्धस्थानं देवगतिप्रायोग्यं बध्नतोऽप्रमत्तस्यापूर्वकरणस्य चावगन्तव्यम्। अत्र सर्वाण्यपि कर्माणि शुभान्येवेत्येक एव भङ्गः। एषैव त्रिंशज्जिननामसहिता एकत्रिंशद्भवति, इयमपि त्रिंशदिवैकान्तशुभपदा द्रष्टव्येत्यत्राप्येक एव भङ्गः। सर्वसंख्यया देवगतिप्रायोग्येषु बन्धस्थानेष्वष्टादश भङ्गाः।

एकं तु बन्धस्थानं यशःकीर्त्तिलक्षणं देवगतिप्रायोग्ये बन्धे व्युच्छिन्नेऽनिवृत्तिबादरसूक्ष्मसम्पराययोरवसेयम्। सर्वसङ्ख्यया बन्धस्थानेषु भङ्गास्त्रयोदश सहस्राणि नव शतानि पञ्चचत्वारिंशच्च १३९४५।

अथ नामप्रकृतीनां गुणस्थानेषु बन्धव्यवच्छेद उच्यते—साधारणसूक्ष्मातपस्थावरनरकद्विकैकद्वित्रिचतुरिन्द्रियजातिहुण्डापर्याप्तसेवार्त्तलक्षणानां त्रयोदशप्रकृतीनां मिथ्यादृष्टिगुणस्थाने बन्धव्यवच्छेदः, मिथ्यादृष्टय एवैतासां बन्धका न सासादनादय इत्यर्थः। एवमेवाग्रेऽपि व्यवच्छेदार्थोऽभ्यूह्यः। अप्रशस्तविहायोगतिदुःस्वरदुर्भगोद्योतानादेयतिर्यग्द्विकाद्यन्तवर्जसंहननसंस्थानरूपाणां पञ्चदशप्रकृतीनां सासादने बन्धव्यवच्छेदः। औदारिकद्विकमनुष्यद्विकाद्यसंहननलक्षणानां पञ्चानां प्रकृतीनामविरतसम्यग्दृष्टिगुणस्थाने बन्धव्यवच्छेदः, मिथ्यादृष्ट्यादयोऽविरतसम्यग्दृष्टय एवासां बन्धका न देशविरतादय इतियावत्। अस्थिराशुभायशःकीर्त्तीनां प्रमत्तसंयते बन्धव्यवच्छेदः। सुरद्विकवैक्रियद्विकाहारकद्विकतैजसकार्मणवर्णचतुष्टयागुरुलघूपघातनिर्माणपराघातोच्छ्वासप्रशस्तविहायोगतित्रसनवकसमचतुरस्रपञ्चेन्द्रियजातितीर्थकरनामरूपाणां त्रिंशत्प्रकृतीनामपूर्वकरणे बन्धव्यवच्छेदः। तथा प्रमत्तेऽप्रमत्ते चाहारकद्विकस्योदयो भवति, बन्धस्त्वप्रमत्तादारभ्य यावदपूर्वकरणस्तावत्। तीर्थकरनाम्न उदयः सयोगिकेवलिन्ययोगिकेवलिनि च, बन्धस्त्वविरतसम्यग्दृष्टेरारभ्य यावदपूर्वकरणमध्यभागस्तावत्। यशःकीर्त्तेस्तु मिथ्यादृष्टेरारभ्य यावत्सूक्ष्मसंपरायस्तावद्बन्धः। तदेवमुक्तं नाम्नो बन्धवक्तव्यम्।

अधुनोदयेऽपि यद्वक्तव्यं तदुच्यते–एकेन्द्रियानधिकृत्योच्छ्वासात् द्वीन्द्रियादीनधिकृत्योच्छ्वासस्वराभ्यां पूर्वं पश्चाद्वोद्योतातपयोर्यथायोगमुदयो भवति, तथैव चाग्रे भावयिष्यामः। तथा सूक्ष्मस्यापर्याप्तस्य साधारणस्य चोदयेन सह नातपमुद्योतं चोदयमेति। तथोद्योतेन सहातपं न बध्यते, नापि सूक्ष्मापर्याप्तसाधारणरूपेण त्रिकेण सहातपोद्योतोभयम्। अयं बन्धविषयोऽपवादः, अथोदयविषयेऽयमभिधीयते-साधारणोदयेऽप्युद्योतयशःकीर्त्योरुदयो भवति,दुर्भगानादेयायशःकीर्त्तीनामुदये बादरपवनः पर्याप्तो वैक्रियशरीरमारभ्य तदुदयभाग्भवति, बादरपर्याप्तग्रहणात् पर्याप्तापर्याप्तसूक्ष्मापर्याप्तबादरव्युदासः, तेषां वैक्रियलब्धेरेवाभावात्। उक्तं च प्रज्ञापनाचूर्णौ–"तिण्हं रासीणं वेउव्वियलद्धी चेव णत्थि, बायरपज्जत्ताणं संखेज्जइमे भागे तस्स त्ति"। तथा दुर्भगानादेययोरुदयेऽपि देवगत्युदयो न विरुध्यते। तथाऽऽहारकद्विकस्योदयो दुर्भगानादेयायशःकीर्त्त्युदयविरुद्धः अस्थिराशुभोदयेन चाविरुद्धः, तयोर्ध्रुवोदयत्वात्। तथा विकलेन्द्रियेषु सुस्वरोदयोऽप्यविरुद्धः। तथा मनुष्याणां देशविरतानां सर्वविरतानां वा यथायोगं वैक्रियाहारककरणाद्धायां वर्त्तमानानामुद्योतोदयो भवति, न शेषाणाम्। तदेवमुदयविषयसंभवचिन्तां विधायोदयस्थानान्यभिधीयन्ते–तत्र चतुर्गतिकान् प्राणिनोऽधिकृत्य सर्वसंख्यया नाम्नो द्वादशोदयस्थानानि। तथाहि–विंशतिरेकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशन्नवाष्टौ च। एतान्येवोदयस्थानानि गतिषु चिन्त्यन्ते–मनुष्येषु चतुर्विंशतिवर्जानि शेषाण्येकादशाप्युदयस्थानानि संभवन्ति, चतुर्विंशतिस्तु न संभवति, तस्या एकेन्द्रियेष्वेव संभवात्। विंशत्यष्टनवोदयवर्जिताः शेषा नवोदयास्तिर्यक्षु संभवन्ति, नवाष्टोदयावयोगिकेवलिनि प्राप्येते, विंशत्युदयस्तु केवलिसमुद्घातावस्थायामिति तिर्यक्ष्वेतत्त्रयवर्जनम्। तथा नरकगतौ पञ्चोदयाः, तद्यथा–एकविंशतिः पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशच्च। एत एव च पञ्चोदयाः सुरगतौ त्रिंशत्सहिताः षड् वेदितव्याः।

तत्र तत्र गतिप्रायोग्यबन्धेषु नाम्नः भङ्गाः (१३९४५)

| वन्धस्थानं | भङ्गाः | भङ्गोत्पत्तिः | प्रायोग्यवन्धे |
|---|---|---|---|
| | | एकेन्द्रिय प्रा० बन्धे (४०) | |
| २३ | ४ | वा० सु०/२ × साधा० प्र०/२ = ४ | अपर्याप्त एकेन्द्रियप्रा० वन्धे |
| २५ | २० | { य० अय०/२ × शु० अशु०/२ × स्थि० अस्थि०/२ = ८ | पर्या० बा० प्रत्येक० ,, |
| | | अयशसा स्थि० अस्थि०/२ × शु० अशु०/२ = ४ | ,, ,, साधारण० |
| | | ,, स्थि० अस्थि०/२ × शु० अशु०/२ × सा० प्र०सूक्ष्म०/२ = ८ } | सूक्ष्मसाधारण सू०प्र०प्रा०वन्धे |
| २६ | १६<br>४० | आत० उद्यो०/२ × स्थि० अस्थि०/२ × शु० अशु०/२ × य० अय०/२ = १६ | पर्या० प्रत्ये० वाद० प्रा० |
| | | विकलेन्द्रिय प्रा० वन्धे ५१ ( १७-१७-१७ इति) | |
| २५ | १ | प्रतिपक्षप्रकृत्यभावात् | अपर्या० विकले० प्रा०वन्धे |
| २९ | ८ | स्थि०अस्थि०/२ × शु० अशु०/२ × य० अय०/२ = ८ | पर्या ,, ,, |
| ३० | ८<br>१७+ | ,, ,, ,, = ८ | ,, ,, ,, |

+ १७ भङ्गा द्वीन्द्रियप्रायोग्ये ज्ञेया, एवं त्रीन्द्रियचतुरिन्द्रियप्रायोग्यबन्धेऽपि सर्वमिलने जाता ५१

| | | | |
|---|---|---|---|
| | | देवप्रायो० वन्धे भंगाः (१८) | |
| २८ | ८ | स्थि० शु० यशः सेतरैः | देवप्रा० वन्धे |
| २९ | ८ | ,, | ,, |
| ३० | १ | सर्वशुभपदत्वात् | ,, |
| ३१ | १ | ,, | ,, |
| | १८ | | |
| | | सूक्ष्मसंपराये भंगः १ | |
| १ | १ | यशोमात्रपदेन | यशोमात्रबंधेन |

अथ गुणस्थानेषूदयस्थानानि चिन्त्यन्ते-मिथ्यादृष्टिगुणस्थाने एकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशल्लक्षणा नवोदया भवन्ति, मिथ्यादृष्टेः सर्वजीवयोनिषु संभवात्, विंशत्यष्टनवोदयास्तु केवल्यवस्थाभाविनो न संभवन्ति। एत एव नवोदयाः सप्तविंशत्यष्टाविंशतिहीनाः शेषाः सप्त सासादने संभवन्ति, तत्रैकविंशत्युदयो भवान्तरे, चतुर्विंशत्युदयः पर्याप्तप्रत्येकबादरैकेन्द्रियस्य जन्माद्यसमये, षड्विंशतिर्द्वीन्द्रियादिषूत्पद्यमानस्य, पञ्चविंशतिरुत्तरवैक्रियकरणप्रथमकाले, एकोनत्रिंशत्पर्याप्तनारकाणां, त्रिंशत्पर्याप्तमनुष्यदेवानां, एकत्रिंशत्पञ्चेन्द्रियतिरश्चामुद्योतवेदकानां, सप्तविंशत्यष्टाविंशत्युदयाभ्यां तु किञ्चिदूनपर्याप्तावस्थायां भवितव्यं, तदानीं च सासादनत्वं न लभ्यत इति तयोरत्रासंभवः। त एवैकविंशत्यादयो नवोदयाश्चतुर्विंशत्यूनाः शेषा अष्टावविरतसम्यग्दृष्टौ, तस्य चतसृष्वपि गतिषूत्पत्त्यवस्थायां पर्याप्तावस्थायां वा प्राप्यमाणत्वात्, चतुर्विंशत्युदयस्तु तस्य न संभवति, एकेन्द्रियेष्वेव

चतुर्विंशत्युदयप्राप्तेः। एत एवाष्टौ पञ्चविंशत्यूना विंशत्युदयसहिताः सयोगिकेवलिन्यष्टावेव भवन्ति, तत्र विंशत्येकविंशतिषड्विंशतिसप्तविंशत्युदयाः समुद्घातावस्थायां, अष्टाविंशत्येकोनत्रिंशदुदयौ योगनिरोधावस्थायां, त्रिंशदुदयः सामान्यकेवलिनः स्वभावस्थस्य तीर्थकृतो वा कृतवाग्निरोधस्य, एकत्रिंशदुदयस्तीर्थकरस्य। तथा पञ्चविंशत्यादयः सप्तोदयाः षड्विंशत्यूनाः षड् देशविरते भवन्ति, तत्र पञ्चविंशतिसप्तविंशत्यष्टाविंशतिनवविंशत्युदया उत्तरवैक्रियं कुर्वतो वेदितव्याः, त्रिंशदुदयः तिर्यङ्मनुष्ययोः पर्याप्तयोः, एकत्रिंशदुदय उद्योतमनुभवतस्तिरश्च इति। तथा प्रमत्तसंयते पञ्चविंशत्यादयः षड्विंशतिहीनाः पञ्चोदया भवन्ति, तत्र पञ्चविंशतिसप्तविंशत्यष्टाविंशतिनवविंशत्युदया वैक्रियमाहारकं वा कुर्वतः संयतस्य वेदितव्याः, त्रिंशदुदयस्तु सामान्यसंयतस्य, यस्त्वेकत्रिंशदुदयः स तिरश्चामेव भवतीत्यत्र न संभवति। तथा एकोनत्रिंशदादयस्त्रय उदयाः सम्यग्मिथ्यादृष्टौ भवन्ति, तत्रैकोनत्रिंशन्नारकाणां, त्रिंशद्देवमनुष्यतिरश्चां, एकत्रिंशत्तिरश्चाम्। तथाऽप्रमत्ते द्वे उदयस्थाने एकोनत्रिंशत्त्रिंशच्च, तत्रैकोनत्रिंशद्वैक्रिये आहारके वा व्यवस्थिते ज्ञेया, त्रिंशत्सामान्यमनुष्ये। अपूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशान्तमोहक्षीणमोहेष्वपि त्रिंशदेवोदयस्थानम्। तथाऽयोगिकेवलिन्यष्टकोदयो नवोदयो वा, तत्राष्टकोदयोऽतीर्थकृतः नवोदयस्तीर्थकृतः।

अथेन्द्रियेषूदयस्थानानि चिन्त्यन्ते—तत्रैकेन्द्रियाणामुदयस्थानानि पञ्च—एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिश्चेति। तत्र तैजसकार्मणे अगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णचतुष्कं निर्माणं चेत्येता द्वादश प्रकृतय उदयमाश्रित्य ध्रुवाः, तिर्यग्द्विकं स्थावरमेकेन्द्रियजातिर्बादरसूक्ष्मयोरेकतरं पर्याप्तापर्याप्तयोरेकतरं दुर्भगमनादेयं यशःकीर्त्ययशःकीर्त्योरेकतरा चेत्येतन्नवकसहिता एकविंशतिः। अत्र भङ्गाः पञ्च—बादरसूक्ष्माभ्यां प्रत्येकं पर्याप्तापर्याप्ताभ्यामयशःकीर्त्या सह चत्वारः, बादरपर्याप्तयशःकीर्त्तिभिः

सह चैक इति। सूक्ष्मापर्याप्ताभ्यां सह यशःकीर्त्तेरुदयो न स्यादिति तदाश्रिता विकल्पा न प्राप्यन्ते। एषा चैकविंशतिर्योऽग्रे सर्वा अपि स्वपर्याप्तीः पूरयिष्यति तस्य योग्यतया लब्धिमाश्रित्य भवान्तरालादावपि पर्याप्तिरस्तीति लब्धिपर्याप्त्यपेक्षया एकेन्द्रियस्य भवान्तरालगतौ वर्तमानस्यावगन्तव्या, अन्तराले बादरपर्याप्तयशःकीर्त्तीनामप्युदयसंभवात्, ततः शरीरस्थस्यौदारिकं हुण्डमुपघातं प्रत्येकसाधारणयोरेकतरमिति चतस्रः प्रकृतयः क्षिप्यन्ते, प्रागुक्तैकविंशतिमध्याच्च तिर्यगानुपूर्व्यपनीयते, ततश्चतुर्विंशतिः स्यात्। इह च भङ्गा दश तद्यथा—बादरपर्याप्तस्य प्रत्येकसाधारणयशःकीर्त्त्ययशःकीर्त्तिपदैर्भङ्गाश्चत्वारः, बादरापर्याप्तस्य प्रत्येकसाधारणाभ्यामयशःकीर्त्तिनियन्त्रिताभ्यां सह द्वौ, सूक्ष्मस्य पर्याप्तापर्याप्तप्रत्येकसाधारणैरयशःकीर्त्तिनियन्त्रितैः सह चत्वार इति। तथा बादरवायुकायिकस्य वैक्रियं कुर्वत औदारिकस्थाने वैक्रियं वक्तव्यं, ततश्च तस्यापि चतुर्विंशतिरुदये प्राप्यते, केवलमिह बादरपर्याप्तप्रत्येकायशःकीर्त्तिपदैरेक एव भङ्गः, तेजस्कायिकवायुकायिकयोर्यशःकीर्त्तिसाधारणयोरुदयो न स्यादिति तदाश्रिता भङ्गा न प्राप्यन्ते। सर्वसंख्यया चतुर्विंशतौ भङ्गा एकादश। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, सा च पर्याप्तकस्यैवेत्यपर्याप्तकमपसार्यते, अत्र भङ्गाः षट्, तद्यथा—बादरपर्याप्तस्य प्रत्येकसाधारणयशःकीर्त्त्ययशःकीर्त्तिपदैश्चत्वारः, सूक्ष्मस्य च प्रत्येकसाधारणाभ्यामयशःकीर्त्त्या सह द्वाविति। तथा बादरवायुकायिकस्य वैक्रियं कुर्वतः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, अत्र च प्राग्वदेक एव भङ्गः। सर्वसङ्ख्यया पञ्चविंशतौ सप्त भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते षड्विंशतिः। अत्रापि भङ्गाः प्रागिव षट्। अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते आतपोद्योतयोरन्यतरस्मिन्नुदिते षड्विंशतिर्भवति, अत्रापि भङ्गाः षट्, तद्यथा—बादरस्योद्योतेन सहितस्य प्रत्येकसाधारणयशःकीर्त्त्ययशःकीर्त्तिभिश्चत्वारः, आतपसहितस्य प्रत्येकयशःकीर्त्त्ययशःकीर्त्तिपदैश्च द्वाविति। तथा बादरवायुकायिकस्य

यशःकीर्त्तिभ्यां द्वौ भङ्गौ, एवं त्रिंशति षड्भङ्गाः। ततो भाषापर्याप्त्या पर्याप्तस्य स्वरसहितायां त्रिंशत्युद्योतनाम्नि क्षिप्ते एकत्रिंशत्, तत्र सुस्वरदुःस्वरयशःकीर्त्त्ययशःकीर्त्तिभिश्चत्वारो भङ्गाः। सर्वसङ्ख्यया द्वीन्द्रियाणां द्वाविंशतिर्भङ्गाः। एवं त्रीन्द्रियाणां चतुरिन्द्रियाणां च प्रत्येकं षट् षडुदयस्थानानि सभङ्गानि भावनीयानि, नवरं स्वस्वजातिरुच्चारणीया। सर्वसंख्यया विकलेन्द्रियाणां भङ्गाः षट्षष्टिः।

अथ तिर्यक्पञ्चेन्द्रियाणामुदयस्थानान्युच्यन्ते। तत्र प्राकृततिर्यक्पञ्चेन्द्रियाणामुदयस्थानानि षट्, तथाहि—एकविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च। तत्र तिर्यग्द्विकं पञ्चेन्द्रियजातिस्त्रसं बादरं पर्याप्तापर्याप्तयोरेकतरं सुभगदुर्भगयोरेकतरं आदेयानादेययोरेकतरं यशःकीर्त्त्ययशःकीर्त्त्योरेकतरेत्येता नव प्रकृतयो द्वादशध्रुवोदयप्रकृतिभिः सहिता एकविंशतिः, एषा च भवान्तरालगतौ वर्त्तमानस्य तिर्यक्पञ्चेन्द्रियस्य ज्ञेया, अत्र भङ्गा नव, तत्र पर्याप्तनामोदये वर्त्तमानस्य सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्त्ययशःकीर्त्तिभ्यां चाष्टौ भङ्गाः, अपर्याप्तकनामोदये वर्त्तमानस्य तु दुर्भगानादेयायशःकीर्त्तिभिरेक इति। अपरे त्वाहुः—सुभगादेये युगपदुदयमागच्छतो दुर्भगानादेये च, न तु पर्यायेण, ततः पर्याप्तस्य सुभगादेययुगलदुर्भगानादेययुगलाभ्यां यशःकीर्त्त्ययशःकीर्त्तिभ्यां च चत्वारो भङ्गाः, अपर्याप्तस्य त्वेक इति सर्वसङ्ख्यया पञ्च, एवमुत्तरत्रापि मतान्तरेण भङ्गवैषम्यं स्वधियाऽभ्यूह्यम्। ततः शरीरस्थस्यानुपूर्वीमपनीयौदारिकद्विकषडन्यतमसंस्थानषडन्यतमसंहननोपघातप्रत्येकरूपप्रकृतिषट्कप्रक्षेपे कृते षड्विंशतिर्भवति। अत्र भङ्गानां द्वे शते एकोननवत्यधिके। तत्र पर्याप्तस्य षड्भिः संस्थानैः षड्भिः संहननैः सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्त्ययशःकीर्त्तिभ्यां च द्वे शते भङ्गानामष्टाशीत्यधिके, अपर्याप्तकस्य तु हुण्डसेवार्त्तदुर्भगानादेयायशःकीर्त्तिभिरेक इति। तस्यामेव षड्विंशतौ शरीरपर्याप्त्या पर्याप्तस्य पराघातेऽन्यतरविहायोगतौ च प्रक्षिप्तायामष्टाविंशतिः। तत्र ये प्राक् पर्याप्तानां द्वे शते भङ्गानामष्टाशीत्यधिके

उक्ते ते अत्र विहायोगतिद्विकेन गुणिते अवगन्तव्ये, तथा च सत्यत्र भङ्गानां पञ्च शतानि षट्सप्तत्यधिकानि भवन्ति । ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते एकोनत्रिंशत् । अत्रापि भङ्गाः प्राग्वत् पञ्च शतानि षट्सप्तत्यधिकानि, अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योतनाम्नि तूदिते एकोनत्रिंशत्, अत्रापि भङ्गाः पञ्च शतानि षट्सप्तत्यधिकानि, सर्वसंख्यया भङ्गानामेकोनत्रिंशति द्विपञ्चाशदधिकान्येकादश शतानि । ततो भाषापर्याप्त्या पर्याप्तस्य सुस्वरदुःस्वरयोरन्यतरस्मिन् प्रक्षिप्ते त्रिंशद्भवति । अत्र ये प्राणापानोच्छ्वासेन षट्सप्तत्यधिकपञ्चशतप्रमाणा भङ्गा उक्तास्ते स्वरद्विकेन गुण्यन्ते, जातान्येकादश शतानि द्विपञ्चाशदधिकानि, अथवा प्राणापानपर्याप्तस्य स्वरेऽनुदिते उद्योतनाम्नि तूदिते त्रिंशद्भवति । अत्र भङ्गानां पञ्च शतानि षट्सप्तत्यधिकानि, सर्वसंख्यया त्रिंशति भङ्गानां सप्तदश शतान्यष्टाविंशत्यधिकानि । ततः स्वरसहितायां त्रिंशत्युद्योतनाम्नि प्रक्षिप्ते एकत्रिंशद्भवति, तत्र ये स्वरसहितायां त्रिंशति द्विपञ्चाशदधिकैकादशशतसंख्या भङ्गा उक्तास्त एवात्रापि द्रष्टव्याः । सर्वसंख्यया प्राकृतपञ्चेन्द्रियतिरश्चां भङ्गाश्चत्वारि सहस्राणि नव शतानि षट् च । अथ वैक्रियं कुर्वतां तिर्यक्पञ्चेन्द्रियाणामुदयस्थानानि वाच्यानि, तानि च पञ्च, तथाहि–पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्च । तत्र वैक्रियद्विकं समचतुरस्रमुपघातं प्रत्येकमिति पञ्च प्रकृतयः प्रागुक्तायां तिर्यक्पञ्चेन्द्रियप्रायोग्यायामेकविंशतौ प्रक्षिप्यन्ते, तिर्यगानुपूर्वी चापनीयते, ततः पञ्चविंशतिः स्यात् , इह सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्तिभ्यां च भङ्गा अष्टौ । ततः शरीरेण पर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च क्षिप्तायां सप्तविंशतिः, तत्रापि भङ्गाः प्राग्वदष्टौ । ततः प्राणापानेन पर्याप्तस्योच्छ्वासे क्षिप्तेऽष्टाविंशतिः, अत्रापि भङ्गाः प्राग्वदष्टौ, अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते उद्योते तूदितेऽष्टाविंशतिः, अत्रापि भङ्गाः प्राग्वदष्टौ, सर्वसंख्ययाऽष्टाविंशतौ भङ्गाः षोडश । ततो भाषया पर्याप्तस्योच्छ्वासस-

हितायामष्टाविंशतौ सुस्वरे क्षिप्ते एकोनत्रिंशत् , अत्रापि प्राग्वद्भङ्गा अष्टौ, अथवा प्राणापानेन पर्याप्तस्य स्वरेऽनुदिते उद्योते तूदिते एकोनत्रिंशत् , अत्रापि प्राग्वद्भङ्गा अष्टौ, सर्वसंख्ययैकोनत्रिंशति भङ्गाः पोडश । ततः सुस्वरसहितायामेकोनत्रिंशत्युद्योते क्षिप्ते त्रिंशत् , अत्रापि भङ्गाः प्राग्वदष्टौ । सर्वसंख्यया वैक्रियं कुर्वतां तिरश्चां भङ्गाः पट्पञ्चाशत् । सर्वेषां तिर्यक्पञ्चेन्द्रियाणां सर्वमीलनेन भङ्गाश्चत्वारि सहस्राणि नव शतानि द्विषष्टिश्च ।

अथ मनुष्याणामुदयस्थानानि वाच्यानि, तत्र सामान्यमनुष्याणामुदयस्थानानि पञ्च, तद्यथा–एकविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्च । एतानि सर्वाण्यपि यथा प्राक् तिर्यक्पञ्चेन्द्रियाणामुक्तानि तथाऽत्रापि वक्तव्यानि, नवरमेकोनत्रिंशत्त्रिंशच्चोद्योतरहिता वक्तव्या, वैक्रियाहारकसंयतान्मुक्त्वा शेषमनुष्याणामुद्योतोदयाभावात् , तत एकोनत्रिंशति भङ्गाः पञ्च शतानि षट्सप्तत्यधिकानि । त्रिंशति चैकादश शतानि द्विपञ्चाशदधिकान्येवेति, सर्वसंख्यया प्राकृतमनुष्याणां भङ्गाः षड्विंशतिशतानि द्विकाधिकानि । वैक्रियमनुष्याणामुदयस्थानानि पञ्च, तद्यथा–पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्च । तत्र मनुष्यगतिः पञ्चेन्द्रियजातिर्वैक्रियद्विकं समचतुरस्रमुपघातत्रसबादरपर्याप्तप्रत्येकानि सुभगदुर्भगयोरेकतरं आदेयानादेययोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरेति त्रयोदश द्वादशभिर्ध्रुवोदयिनीभिः सहिता पञ्चविंशतिः, अत्र सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्त्तिभ्यां चाष्टौ भङ्गाः । देशविरतानां सर्वविरतानां वा वैक्रियं कुर्वतां सर्वप्रशस्त एव भङ्गोऽवधारणीयः । ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते प्रशस्तखगतौ च क्षिप्तायां सप्तविंशतिः, अत्रापि प्राग्वदष्टौ भङ्गाः । ततः प्राणापानेन पर्याप्तस्योच्छ्वासे क्षिप्तेऽष्टाविंशतिः अत्रापि भङ्गाः प्राग्वदष्टौ, अथवा संयतानामुत्तरवैक्रियं कुर्वतां शरीरेण पर्याप्तानामुच्छ्वासेऽनुदिते उद्योते तूदितेऽष्टाविंशतिः, अत्रैक एव प्रशस्तपदो भङ्गः, संयतानां दुर्भगा-

नादेयायशःकीर्त्त्यनुदयात्, सर्वसंख्ययाऽष्टाविंशतौ भङ्गा नव। ततो भाषया पर्याप्तस्योच्छ्वाससहितायामष्टाविंशतौ सुस्वरे क्षिप्ते एकोनत्रिंशत्, इहापि भङ्गाः प्रागवदष्टौ, अथवा संयतानां स्वरेऽनुदिते उद्योते तूदिते एकोनत्रिंशत्, इहापि प्रागवदेक एव भङ्गः, सर्वसंख्ययैकोनत्रिंशति नव भङ्गाः। सुस्वरसहितायामेकोनत्रिंशत्युद्योते क्षिप्ते संयतानां त्रिंशदुदयः, अत्रैक एव भङ्गः। सर्वसंख्यया वैक्रियमनुष्याणां पञ्चत्रिंशद्भङ्गाः। आहारकसंयतानामुदयस्थानानि पञ्च, तद्यथा—पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्च। तत्राहारकद्विकं समचतुरस्रमुपघातं प्रत्येकं चेति पञ्च प्रकृतयः प्रागुक्तायां मनुष्यगतिप्रायोग्यायामेकविंशतौ प्रक्षिप्यन्ते ततो मनुष्यानुपूर्वी चापनीयते जाता पञ्चविंशतिः, केवलमियं सर्वप्रशस्तपदा, संयतानां दुर्भगानादेयायशःकीर्त्त्युदयाभावात्, इत्यत्रैक एव भङ्गः। ततः शरीरेण पर्याप्तस्य पराघाते प्रशस्तखगतौ च क्षिप्तायां सप्तविंशतिः, अत्राप्येक एव भङ्गः। ततः प्राणापानेन पर्याप्तस्योच्छ्वासे क्षिप्तेऽष्टाविंशतिः, इहाप्येको भङ्गः, अथवा शरीरेण पर्याप्तस्योच्छ्वासेऽनुदिते उद्योते तूदितेऽष्टाविंशतिः, इहापि भङ्गः एकः। सर्वसङ्ख्ययाऽष्टाविंशतौ द्वौ भङ्गौ। ततो भाषया पर्याप्तस्योच्छ्वाससहितायामष्टाविंशतौ सुस्वरे क्षिप्ते एकोनत्रिंशत्, इहाप्येक एव भङ्गः, अथवा प्राणापानेन पर्याप्तस्य स्वरेऽनुदिते उद्योते तूदिते एकोनत्रिंशत्, इहाप्येक एव भङ्गः, सर्वसङ्ख्ययैकोनत्रिंशति द्वौ। ततो भाषापर्याप्तस्य सुस्वरसहितायामेकोनत्रिंशत्युद्योते क्षिप्ते त्रिंशत्, इहैको भङ्गः। सर्वसङ्ख्ययाऽऽहारकशरीरिणां सप्त भङ्गाः। केवलिनामुदयस्थानानि दश, तद्यथा—विंशतिरेकविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशन्नवाष्टौ च। तत्र मनुष्यगतिः पञ्चेन्द्रियजातिस्त्रसं बादरं पर्याप्तं सुभगमादेयं यशःकीर्त्तिरित्येता अष्ट ध्रुवोदयिनीभिर्द्वादशभिः सह विंशतिः, इहाप्येक एव भङ्गः, एषा चातीर्थकृत्केवलिनः समुद्घातगतस्य कार्मणयोगे वर्त्तमानस्यावसेया। सैव विंशतिस्तीर्थकरसहितैकविंशतिः, इहाप्येको भङ्गः, एषा च तीर्थकृत्केवलिनः

समुद्घातगतस्य कार्मणकाययोगवर्तिनो द्रष्टव्या। तस्यामेव विंशतौ औदारिकद्विकं षण्णामेकतमं संस्थानमाद्यसंहननं प्रत्येकमुपघातमिति षट्कं प्रक्षिप्यते, ततः षड्विंशतिर्भवति, एषा चातीर्थकृत्केवलिन औदारिकमिश्रकाययोगे वर्त्तमानस्यावसेया, अत्र षड्भिः संस्थानैः षड्भङ्गाः स्युः, परं सामान्यमनुष्योदयस्थानेष्वपि संभवन्तीति पृथग् न गण्यन्ते। एषैव षड्विंशतिस्तीर्थकरसहिता सप्तविंशतिः स्यात्, एषा तीर्थकृत औदारिकमिश्रकाययोगस्थस्यावसेया, अत्र संस्थानं समचतुरस्रमेवेत्येक एव भङ्गः। सैव षड्विंशतिः पराघातोच्छ्वासान्यतरगत्यन्यतरस्वरसहिता त्रिंशत्, एषा चातीर्थकरस्य सयोगिकेवलिन औदारिककाययोगवर्त्तिनोऽवगन्तव्या, अत्र संस्थानषट्कप्रशस्ताप्रशस्तखगतिसुस्वरदुःस्वरैर्भङ्गाश्चतुर्विंशतिः, ते च सामान्यमनुष्योदयस्थानेष्वपि लभ्यन्ते इति पृथङ्न गण्यन्ते। एषैव त्रिंशत्तीर्थकरनामसहितैकत्रिंशद्भवति, सा च सयोगिकेवलिनस्तीर्थकरस्यौदारिककाययोगवर्त्तिन एकभङ्गाऽवधारणीया। एषैवैकत्रिंशद्वाग्योगे निरुद्धे त्रिंशत्, तत उच्छ्वासे निरुद्धे एकोनत्रिंशत्। अतीर्थकरकेवलिनः प्रागुक्ता त्रिंशद्वाग्योगे निरुद्धे एकोनत्रिंशत्। अत्र षड्भिः संस्थानैः प्रशस्ताप्रशस्तविहायोगतिभ्यां च द्वादश भङ्गाः, परं प्राग्वत् पृथङ्न गण्यन्ते। तत उच्छ्वासे निरुद्धेऽष्टाविंशतिः, अत्रापि द्वादश भङ्गाः प्राग्वत्, प्राग्देव च सामान्यमनुष्योदयस्थानग्रहणगृहीतत्वात् पृथङ्न गण्यन्ते। तथा मनुष्यगतिः पञ्चेन्द्रियजातिस्त्रसबादरपर्याप्तसुभगादेयानि यशःकीर्त्तिस्तीर्थकरं चेति नव, एतदुदयस्थानं तीर्थकृदयोगिकेवलिनश्चरमसमयवर्त्तिनो लभ्यते। तथा स एव नवोदयोऽतीर्थकरकेवलिनस्तीर्थकरनामरहितोऽष्टोदयः। सर्वसङ्ख्यया सामान्यतीर्थकरसयोग्ययोगिकेवलिभङ्गा द्विषष्टिः, किन्तु ये सामान्यकेवलिनो भङ्गाः षड्विंशतौ षट्, अष्टाविंशतौ द्वादश, एकोनत्रिंशति द्वादश, त्रिंशति चतुर्विंशतिः, सर्वसङ्ख्यया चतुःपञ्चाशत्, ते सामान्यमनुष्योदयस्थानान्तःपातित्वात् पृथङ्न गण्यन्ते इति। शेषा अष्टावेवोदयभङ्गाः परमार्थतः केवलिनां द्रष्टव्याः। तत्र विंशत्य-

द्वयोर्भङ्गावतीर्थकृतः, एकविंशतिसप्तविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशन्नवगताश्च षड्भङ्गास्तीर्थकृत इति विवेकः। सर्वसङ्ख्यया मनुष्याणामुदयस्थानभङ्गाः द्वे सहस्रे षट् शतानि द्विपञ्चाशच्च। तदेवमुक्तानि मनुष्याणामुदयस्थानानि।

अथ देवानामुच्यन्ते–देवानामुदयस्थानानि षट्, तद्यथा–एकविंशतिः पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्च। तत्र देवद्विकं पञ्चेन्द्रियजातिस्त्रसं बादरं पर्याप्तं सुभगदुर्भगयोरेकतरं आदेयानादेययोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरेति नव प्रागुक्ताभिर्द्वादशभिर्ध्रुवोदयिनीभिः सहितैकविंशतिः, अत्र सुभगदुर्भगादेयानादेययशःकीर्त्ययशःकीर्त्तिभिरष्टौ भङ्गाः, इह च दुर्भगानादेयायशःकीर्त्तीनामुदयः पिशाचादीनामवसेयः। ततः शरीरस्थस्य वैक्रियद्विकमुपघातं प्रत्येकं समचतुरस्रमिति पञ्च प्रकृतयः क्षिप्यन्ते देवानुपूर्वी चापनीयते, ततो जाता पञ्चविंशतिः, अत्रापि भङ्गास्तथैवाष्टौ। ततः शरीरेण पर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च क्षिप्तायां सप्तविंशतिः, अत्रापि भङ्गाः प्राग्वदष्टौ। देवानामप्रशस्तविहायोगतेरुदयो न भवतीति तदाश्रिता विकल्पा न लभ्यन्ते। ततः प्राणापानेन पर्याप्तस्योच्छ्वासे क्षिप्तेऽष्टाविंशतिः, अत्रापि प्राग्वदष्टौ भङ्गाः, अथवा शरीरेण पर्याप्तस्योच्छ्वासेऽनुदिते उद्योते तूदितेऽष्टाविंशतिः, अत्रापि भङ्गाः प्राग्वदष्टौ,, सर्वसङ्ख्ययाऽष्टाविंशतौ भङ्गाः षोडश। ततो भाषापर्याप्तस्य सुस्वरे क्षिप्ते एकोनत्रिंशत्, अत्रापि भङ्गाः प्राग्वदष्टौ। दुःस्वरोदया देवा न भवन्तीति तदाश्रितविकल्पा न भवन्ति, अथवा प्राणापानेन पर्याप्तस्य सुस्वरेऽनुदिते उद्योते तूदिते एकोनत्रिंशत्, उत्तरवैक्रियं हि कुर्वतो देवस्योद्योतोदयो लभ्यते, अत्रापि प्राग्वदष्टौ भङ्गाः, सर्वसंख्ययैकोनत्रिंशति षोडश भङ्गाः। ततो भाषापर्याप्तस्य सुस्वरसहितायामेकोनत्रिंशत्युद्योते क्षिप्ते त्रिंशत्, अत्रापि भङ्गाः प्राग्वदष्टौ। सर्वसंख्यया देवानां भङ्गाश्चतुःषष्टिः। तदेवमुक्तानि देवानामुदयस्थानानि।

अथ नैरयिकाणामुच्यन्ते–तत्र नैरयिकाणामुदयस्थानानि पञ्च, तद्यथा–एकविंशतिः पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत् । तत्र नरकद्विकं पञ्चेन्द्रियजातिस्त्रसबादरपर्याप्तानि दुर्भगमनादेयमयशःकीर्त्तिश्चेत्येता नव द्वादशसंख्ययाभिर्ध्रुवोदयिनीभिः सहिता एकविंशतिः, अत्र सर्वाण्यपि पदान्यप्रशस्तान्येवेत्येक एव भङ्गः, एवमन्यत्रापि ज्ञेयम् । ततः शरीरस्थस्य वैक्रियद्विकं प्रत्येकं हुण्डमुपघातमिति पञ्च प्रकृतयः क्षिप्यन्ते नरकानुपूर्वी चापनीयते, ततो जाता पञ्चविंशतिः । ततः शरीरेण पर्याप्तस्य पराघातेऽप्रशस्तखगतौ च प्रक्षिप्तायां सप्तविंशतिः । ततः प्राणापानेन पर्याप्तस्योच्छ्वासे क्षिप्तेऽष्टाविंशतिः । ततो भाषापर्याप्तस्य दुःस्वरे क्षिप्ते एकोनत्रिंशत् । सर्वसङ्ख्यया नैरयिकेषु भङ्गाः पञ्च । समग्रोदयस्थानभङ्गाः पुनः सप्तसप्ततिशतान्येकनवत्यधिकानि ।

अथ नामप्रकृतीनामेव गुणस्थानके उदयव्यवच्छेदश्चिन्त्यते–इह मिथ्यादृष्टिगुणस्थाने नानाजीवानपेक्ष्य तीर्थंकराहारकद्विकवर्जितानां सर्वासामपि नामप्रकृतीनां चतुःषष्टिसंख्यानामुदयः संभवति । तत्र साधारणसूक्ष्मापर्याप्तातपानां मिथ्यादृष्टावुदयो व्यवच्छिद्यते । व्यवच्छेदो नाम तत्र भाव उत्तरत्राभावः । तथा सासादने स्थावरैकेन्द्रियविकलेन्द्रियजातीनामुदयव्यवच्छेदः, इह पूर्वोक्तानां साधारणादीनामुदयासंभवात् षष्टिप्रकृतीनामुदयः । सम्यग्मिथ्यादृष्टौ च स्थावरादिपञ्चप्रकृतीनां सासादने व्यवच्छिन्नानामुदयो न भवति, तथा तस्य कालकरणाभावेनानुपूर्वीणामप्युदयो न भवतीत्येकपञ्चाशत्प्रकृतीनामुदयः । अविरतसम्यग्दृष्टिस्त्वपान्तरालगतावपि प्राप्यत इति तत्र चतसृणामप्यानुपूर्वीणामुदयः सम्भवतीति ततस्तत्र पञ्चपञ्चाशत्प्रकृतीनामुदयः । देवद्विकनरकद्विकवैक्रियद्विकदुर्भगानादेयायशःकीर्त्तितिर्यङ्मनुष्यानुपूर्वीणां सर्वसंख्ययैकादशप्रकृतीनामत्रोदयव्यवच्छेदः । अत्र च वैक्रियद्विकस्य निषेधः कर्मस्तवस्याभिप्रायेण, न तु पञ्चसंग्रहस्य, तन्मते देशविरतप्रमत्ताप्रमत्तेषु तदुदयाभ्युपगमादिति स्मर्त्तव्यम् । ततो देशविरते चतुश्चत्वारिंशत्प्रकृतीनामुदयः ।

अत्र तिर्यग्गत्युद्योतनाम्नोरुदयव्यवच्छेदः । ततः प्रमत्तसंयतेऽप्रमत्तसंयते च द्विचत्वारिंशत्प्रकृतीनामाहारकद्विकस्य चाधिकस्योदयो द्रष्टव्यः । इहान्तिमानां त्रयाणां संहननानामुदयव्यवच्छेदः, तथाऽऽहारकद्विकमपि श्रेण्यामुदये न प्राप्यत इत्यपूर्वकरणादिषूपशान्तमोहपर्यन्तेष्वेकोनचत्वारिंशत्प्रकृतीनामुदयोऽवगन्तव्यः । उपशान्तमोहे द्वितीयतृतीयसंहननयोरुदयव्यवच्छेदः, तेन क्षीणकषाये सयोगिकेवलिनि च शेषाणां सप्तत्रिंशत्प्रकृतीनामेवोदयो भवति, क्वचित् सयोगिकेवलिनि तीर्थकरनाम्नोऽपि, तत्र च नामध्रुवोदयद्वादशकन्यगद्विकखगतिद्विकौदारिकद्विकप्रत्येकोपघातपराघातोच्छ्वाससंस्थानषट्काद्यसंहननलक्षणानामेकोनत्रिंशत्प्रकृतीनामुदयव्यवच्छेदः । ततोऽयोगिकेवलिनि अष्टानां नवानां वोदयः, ताश्चोक्ता एव । तदेवं चिन्तितो गुणस्थानेषु नामोदयव्यवच्छेदः, तच्चिन्तनाच्चाभिहितः सप्रपञ्चमुदयः ।

## अथ जीवस्थानेषु नाम्न उदयस्थानानि भङ्गाश्च (तत्र प्रथममेकेन्द्रियाणां)

| उदय स्थान | उदयस्थानगतप्रकृतयः | भङ्गाः | भङ्गोत्पत्तिः | कस्य जीवस्य |
|---|---|---|---|---|
| | ॥ एकेन्द्रियेपु उदय स्थानानि ५ भंगाः ४२ ॥ | | | |
| २१ | तै०-का०-अगु०-स्थि०-अस्थि०-शु०-अशु०— वर्णादि ४-निर्माण इति १२ ध्रुवोदयाः। पुनः तिर्य० २-स्था०-एके०-[1]बा० सू०-पर्या० अप०-दुर्भ०-अना०-यशः अयश वा-इति ९ सहिता २१ | ५ | $\frac{\text{बा०सू०}}{२} \times \frac{\text{पर्या०अप०}}{२} = ४$ अयशसा<br>बाद०पर्या० यशसा १ बा० पर्या० एके० | पर्याप्तापर्याप्तैकेन्द्रियाणां |
| २४ | औ०-हुं०-उप०-प्रत्ये०-साधा०-सहिता तिर्यगानुपूर्वीरहिता पूर्वोक्ता | १० | $\frac{\text{प्र०सा०}}{२} \times \frac{\text{यशः०अयशः०}}{२} = ४$<br>$\frac{\text{प्र०सा०}}{२} =$ अयशसा<br>$\frac{\text{पर्या०अप०}}{२} \times \frac{\text{प्र०सा०}}{२} =$ अयशसा सह | बा०पर्या० देहस्थानां<br>बा० अप० ,,<br>सूक्ष्माणां ,, |
| २५ | वैक्रियद्विकसहिता औदा० द्विकरहिता पूर्वोक्ता | १ | बा० पर्या० प्र० अयशःपदेन १ | वैक्रियस्थ बा०वायूनां |

१ अत्र द्वाभ्या एका ग्राह्या, एव यत्र यत्र परस्परविरुद्धा प्रकृतय तत्र तत्र एका ग्राह्या

| | | | | |
|---|---|---|---|---|
| २९ | उच्छ्वासाधिका २८ | २ | यशोऽयशोभ्याम् प्रर्याप्तानां | उच्छवासपर्याप्तानां |
| २९ | उद्योतसहिता २८ उच्छ्वासात् प्राक् | २ | ,, ,, | देहपर्याप्तानां |
| ३० | स्वरसहिता २९ | ४ | $\frac{\text{सुस्व० दुःस्व०}}{२} \times \frac{\text{य०अय०}}{२} = ४$ | भाषापर्याप्तानां |
| ३० | उद्योतसहिता २९ स्वरात् प्राक् | २ | यशोऽयशोभ्यां | उच्छवासपर्याप्तानां |
| ३१ | उद्योतसहिता ३० | ४ | $\frac{\text{य०अय०}}{२} \times \frac{\text{स्वराभ्यां}}{२} = ४$ | भाषापर्याप्तानां |

एवं २२ द्वीन्द्रियाणां २२ त्रीन्द्रियाणां २२ चतुरिन्द्रिणां च=६६विकलेन्द्रियाणां भंगाः

प्राकृततिर्यक्पञ्चेन्द्रिणामुदयस्थानेषु भङ्गाः (४९०६)
,, मनुष्याणां ,, ,, (२६०२) (मनुष्यस्योद्यतसत्का भङ्गा न भवन्ति)

| | | | | |
|---|---|---|---|---|
| २१ | गति०२-पंचे०-त्र०-बा० पर्या०अपर्या०सुभ० आदे०-यशः-अयशः० १२ ध्रुवोदयाः | ९ | $\frac{\text{सुभ०दुर्भ०}}{२} \times \frac{\text{आदे०अना०}}{२} \times \frac{\text{य०अय०}}{२}$=८पर्याप्त० | गत्यन्तराले ति०नराणां |
| | | (मतांतरेण ५) | दुर्भगानादेयायशोभि· १ अपर्याप्तस्य | ,, ,, ,, |
| | | | वा $\frac{\text{सुभगादेय-दुर्भगाना०}}{२} \times \frac{\text{य०अय०}}{२}$=४पर्याप्तस्य | ,, ,, ,, |
| | | | दुर्भगानादेयायशोभिः १=अपर्याप्तस्य | ,, ,, ,, |

| | | | | |
|---|---|---|---|---|
| २६ | औ०२-संघ०-संस्था०-उप--प्र०-सहिता आनुपूर्वी यतां मा पच २१ | २८९ | $\frac{\text{सं०}}{६}\times\frac{\text{सं०}}{६}\times\frac{\text{सुभ०दुर्भ०}}{२}\times\frac{\text{आदे०अना०}}{२}$ | देहस्थानानां ,, ,, |
| | | | $\frac{\text{य०अय०}}{२}$=२८८ पर्याप्तस्य | |
| | | | हुंडसेवार्त्तदुर्भगानादेयायशोभिः १ अपर्याप्तस्य | ,, ,, ,, |
| २८ | पराघातखगतियुक्ता २६ | ५७६ | पूर्वोक्त २८८×२ खगति=५७६ पर्याप्तस्य | देहपर्याप्तानां ,, ,, |
| २९ | उच्छ्वासयुक्ता २८ | ५७६ | पूर्ववत् | उच्छ्वा०पर्या०नां ,, |
| २९ | उद्योतयुक्ता वा २८ | ५७६ | ,, | देहपर्याप्तानां ,, |
| ३० | स्वरयुक्ता २९ ( सोच्छ्वासा ) | ११५२ | ५७६×२ स्वराभ्यां=११५२ | भाषापर्याप्तानां ,, ,, |
| ३० | उद्योतयुक्ता वा २९ ( ,, ) | ५७६ | पूर्वोक्तपङ्क्त्या | उच्छ्वा० प० ति० |
| ३१ | ,, ३० ( स्वरगा ) | ११५२ | ,, | भाषा०पर्या०तिरश्चां |
| | एवं सामान्यतिर्य० पंचे०षु | ४९०६ | भंगाः | |
| | ,, ,, मनुष्येषु | २६०२ | भंगाः (उद्योतसत्कानां ३१स्थानसत्कानां चाभावात्) | |

| | वैक्रियतिर्यक्पंचेन्द्रियाणां | | उदयस्थानेषु भंगाः | |
|---|---|---|---|---|
| २५ | वै०२-समच०-उप०-प्रत्येकयुक्ता तिर्यगानु०वर्जा ति०पं० प्रायोग्या २१ | ८ | $\frac{\text{सुभ०दुर्भ०}}{२} \times \frac{\text{आदे०अनादे०}}{२} \times \frac{\text{य०अ०}}{२} = ८$ | देहस्थानां |
| २७ | परा०सुखग० युक्ता २५ | ८ | पूर्ववत् | देहपर्याप्तानां |
| २८ | उच्छ्वासयुक्ता २७ | ८ | ,, | उच्छ्वासपर्याप्तानां |
| २८ | उद्योतयुक्ता वा २७ | ८ | ,, | देहपर्याप्तानां |
| २९ | सुस्वरसहिता २८ ( सोच्छ्वासा ) | ८ | ,, | भाषापर्याप्तानां |
| २९ | उद्योतयुक्ता वा २८ ( ,, ) | ८ | ,, | उच्छ्वासपर्याप्तानां |
| ३० | ,, २९ ( सस्वरा ) | ८ | ,, | भाषापर्याप्तानां |
| | | ५६ | | |

| | | | | |
|---|---|---|---|---|
| | वैक्रियनराणां उदयस्थानेषु भंगाः (३५) | | | |
| २५ | नृग०-पंचें०-वै०२-समच०-उप०-त्रसादि ४-सुभ०-आदे०-यश० -१२ ध्रुवोदया | ८ | $\frac{\text{सुभ०दुर्भ०}}{२} \times \frac{\text{आदे०अना०}}{२} \times \frac{\text{य०अय०}}{२} = ८$ | वै०देहस्थानां |
| २७ | परा०-सुरगतिसहिता २५ | ८ | पूर्ववत् | वै०देहपर्याप्तानां |
| २८ | उच्छ्वाससहिता २७ | ८ | ,, | वै०उच्छ्वासपर्याप्तानां |
| २८ | उद्योतसहिता वा २७ | १ | सुभगादेययशोभिः १ (संयतानां) | वै०देहपर्याप्तानां |
| २९ | सुस्वरसहिता २८ ( सोच्छ्वासा ) | ८ | पूर्वोक्तपद्धत्या | वै०भाषापर्याप्तानां |
| २९ | उद्योतसहिता वा २८ ( ,, ) स्वरात् प्राक् | १ | प्रशस्तत्रिपदैः (संयतानां) | वै०उच्छ्वासपर्याप्ताना |
| ३० | ,, २९ ( ससुस्वरा ) | १ | ,, ,, | वै०भाषापर्याप्तानां |
| | | ३५ | | |
| | आहारकनराणामुदयस्थानेषु भंगाः (७) | | | |
| २५ | आहा०२-समच०-उप०-प्र० युक्ता नरानुपूर्वी-वर्जा सामान्यनरप्रायोग्या २१ | १ | सर्वप्रशस्तपदैः १ | आहारकदेहस्थानां |

| | | | | |
|---|---|---|---|---|
| २७ | परा०-सुखगतिसहिता २५ | १ | ,, | आहा०देहपर्याप्तानां |
| २८ | उच्छ्वास०सहिता २७ | १ | ,, | उच्छ्वास०पर्याप्तानां |
| २८ | उद्योतसहिता वा २७ | १ | ,, | आ०देहपर्याप्तानां |
| २९ | सुस्वरयुक्ता २८ (सोच्छ्वासा) | १ | ,, | भाषापर्याप्तानां |
| २९ | उद्योतयुक्ता वा २८ ( ,, ) | १ | ,, | उश्वा०पर्याप्तानां |
| ३० | ,, २९ (ससुस्वरा) | १ | ,, | भाषापर्याप्ताना |
| | | ७ | | |
| | केवलिनामुदयस्थानेषु भगाः (६२) | | | |
| २० | नृग०-पंचे०-त्र०-बा०-पर्या०-सुभ०-आदे०-यशः० १२ ध्रुवाः | १ | सर्वप्रशस्तपदैः (समुद्घातेकार्मणयोगिनां) | अजिनानां |
| २१ | जिननामसहिता २० | १ | ,, ( ,, ) | जिनानां |
| २६ | औ०२-संस्था०१-वज्रर्ष-प्र०-उप० युक्ता २० | ६ | ६संस्थानै ६ (समुद्घाते औदा०मिश्रयोगिनां) | अजिनानां |
| २७ | जिननामसहिता २६ | १ | समच० संस्थानेन ( ,, ) | जिनानां |

| | | | | |
|---|---|---|---|---|
| ३० | पराघा०-उच्छ्वास०-खग०२-स्वर-२-युक्ता २९ | २४ | $\frac{\text{संस्था०}}{६} \times \frac{\text{खग०}}{२} \times \frac{\text{स्व०}}{२}$ = २४ (औ०काययोगिना) | अजिनानां |
| ३१ | जिननामयुक्ता ३० | १ | सर्वप्रशस्तपदैः ( „ ) | जिनाना |
| ३० | स्वरवर्जा ३१ ( जिनयुक्ता ) | १ | „ ( निरुद्धवाग्योगिनां ) | „ |
| २९ | उच्छ्वास० वर्जा ३० ( „ „ ) | १ | „ ( निरुद्धोच्छ्वासानां ) | „ |
| २९ | स्वरवर्जा ३० ( जिनवर्जा ) | १२ | $\frac{\text{संस्था०}}{६} \times \frac{\text{खग०}}{२}$ = १२ ( निरुद्धवाग्योगिनां ) | अजिनानां |
| २८ | स्वरवर्जा २९ | १२ | पूर्ववत् ( निरुद्धोच्छ्वासानां ) | „ |
| ९ | मनु०-पंचे०-त्रसादि ३-सुभ०-आदे०-य०-जिन. | १ | प्रशस्तपदत्वात् ( अयोगिचरमसमये ) | जिनानां |
| ८ | जिनवर्जा ९. | १ / ६२ | „ ( „ ) | अजिनानां |
| | देवानामुदयस्थानेषु भंगाः (६४) | | | |
| २१ | देवग०-पंचे०-त्रसादि३-सुभग०-आदे०-यशः-१२ध्रुवा | ८ | $\frac{\text{सुभ०दुर्भ०}}{२} \times \frac{\text{आदे०अना०}}{२} \times \frac{\text{यशः अयशः}}{२}$ = ८ | गत्यन्तराले |

* [illegible]

| | | | | |
|---|---|---|---|---|
| २५ | वै०२-उप०-प्र०-समच०युक्ता आनुपूर्वी वर्जाच२१ | ८ | पूर्ववत् | देहस्थानां |
| २७ | परा०-सुखग०युक्ता २५ | ८ | ,, | देहपर्याप्तानां |
| २८ | उच्छ्वासयुक्ता २७ | ८ | ,, | उच्छ्वासपर्याप्तानां |
| २८ | उद्योतयुक्ता वा २७ | ८ | ,, | देहपर्याप्तानां |
| २९ | सुस्वरयुक्ता २८ ( सोच्छ्वासा ) | ८ | ,, | भाषापर्याप्तानां |
| २९ | उद्योतयुक्ता वा २८ ( ,, ) | ८ | ,, | उच्छ्वासपर्याप्तानां |
| ३० | ,, २९ ( ससुस्वरा ) | ८ | ,, | भाषापर्याप्तानां |
| | | ६४ | | |
| | नारकाणामुदयस्थानेषु भंगाः (५) | | | |
| २१ | नरक०२-पं०-त्रसादि३-दुर्भ०-अना०-अय०-१२ध्रु० | १ | सर्वाप्रशस्तपदैः | गत्यन्तराले |
| २५ | वै० २-हु०-उप--प्र०-युक्ता आनु० वर्जा २१ | १ | ,, | देहस्थानां |
| २७ | परा०-कुखगतियुक्ता २५ | १ | ,, | देहपर्याप्तानां |
| २८ | उच्छ्वासयुक्ता २७ | १ | ,, | उच्छ्वासपर्याप्तानां |
| २९ | दु स्वरयुक्ता २८ | १ | ,, | भाषापर्याप्तानां |
| | | ५ | | |

अथ नाम्नः सत्तास्थानान्युच्यन्ते, तानि च द्वादश, तत्र सर्वनामप्रकृतिसमुदायः पिण्डः, स त्रिनवतिप्रमाण इहाधिक्रियते, तथाविवक्षणात्, तत्प्रथमं सत्तास्थानम्। तस्मिँस्तीर्थकरोने द्विनवतिप्रकृत्यात्मकं द्वितीयम्। आहारकशरीराहारकोपाङ्गाहारकबन्धनाहारकसङ्घातरूपप्रकृतिचतुष्टयहीने च तस्मिँस्तृतीयमेकोननवतिप्रकृत्यात्मकम्। तीर्थकराहारकचतुष्टयोभयविहीने च तस्मिन्नष्टाशीतिप्रकृत्यात्मकं चतुर्थम्। इदं प्रथमं सत्तास्थानचतुष्कम्। तस्मात्प्रकृतित्रयोदशके क्षीणेऽशीत्येकोनाशीतिषट्सप्ततिपञ्चसप्ततिलक्षणं द्वितीयं सत्तास्थानचतुष्कं भवति। ततोऽष्टाशीतेः सुरद्विके नरकद्विके चोद्वलिते षडशीतिः। अष्टाशीतेर्वैक्रियचतुष्टयदेवद्विकनरकद्विकेषूद्वलितेष्वशीतिः। ततो मनुष्यद्विके उद्वलितेऽष्टसप्ततिः। एतानि त्रीण्यपि सत्तास्थानानि अध्रुवसंज्ञानि। तथा नवकं सत्तास्थानमष्टकं च। यद्यप्येवं गणनया त्रयोदश सत्तास्थानानि प्राप्नुवन्ति तथाप्यशीत्यात्मकं सत्तास्थानं द्विप्रकारमपि तुल्यसंख्यत्वादेकमेव विवक्ष्यत इत्यदोषः। तदेवं द्वादशापि सत्तास्थानानि सप्ततिकाभिप्रायेण व्याख्यातानि, प्रकृतग्रन्थाद्यभिप्रायेण तु त्र्युत्तरशतादीनि व्याख्येयानि। अत्र यास्त्रयोदश प्रकृतयः क्षीणाः सत्यो द्वितीयचतुष्कनिष्पादिकास्ता इमाः—स्थावरद्विकं तिर्यग्द्विकमातपमेकद्वित्रिचतुरिन्द्रियजातयः साधारणं नरकद्विकमुद्योतं चेति, एतास्त्वाद्या दश एकान्ततिर्यग्योग्या इष्यन्ते, तथात्वं चोदयमुदीरणां चाश्रित्य द्रष्टव्यं, बन्धसत्तापेक्षया तासामन्येषामपि योग्यत्वात्। एतेऽध्रुवसत्तास्थानस्वामिन उच्यन्ते—पृथिव्यम्बुवनस्पतिषु षडशीत्यशीत्यात्मके द्वे अध्रुवसत्तास्थाने प्राप्येते, तृतीयं त्वष्टसप्तत्यात्मकं तेजोवायुषु प्राप्यते, नान्येषु, तेषामेव मनुष्यद्विकोद्वलकत्वात्, अथवा तेजोवायुभ्य उद्धृत्यैकेन्द्रियादिषु तिर्यक्पञ्चेन्द्रियपर्यन्तेषु समागतस्य कियत्कालं लभ्यते यावन्नाद्यापि मनुष्यद्विकं बध्नाति, तेजोवायुभ्य उद्धृत्य मनुष्यादिषु गमनाभावात् तिर्यक्पञ्चेन्द्रियपर्यवसानानुधावनम्। अथ गतिषु सत्तास्थानानि प्ररूप्यन्ते, तत्र नरकगतौ त्रीणि सत्तास्थानानि—द्विनवतिरेको-

नवनवतिरष्टाशीतिश्च, त्रिनवतिस्तु न प्राप्यते, तस्यास्तीर्थकराहारकद्विकसहितत्वात्, तदुभयसत्कर्मणश्च नरकेषूत्पादप्रतिषेधात्। देवगतौ प्रथमसत्तास्थानचतुष्कं प्राप्यते, न शेषाणि, शेषाणामेकेन्द्रियादिषु क्षपकश्रेण्यां वा सम्भवात्। तिर्यक्षु यानि मिथ्यादृष्टौ वक्ष्यन्ते तान्येव तीर्थकररहितानि प्राप्यन्ते, एकोननवतिरहितानीतियावत्। मनुष्यगतौ त्वष्टसप्ततिस्थानं वर्जयित्वा शेषाणि सर्वाण्यपि द्रष्टव्यानि।

गुणस्थानेषु नाम्नः सत्तास्थानानि

| गुणस्थाने | नाम्नः सत्तास्थानानि |
|---|---|
| १ मे | ९२-८९-८८-८६-८०-७८ |
| २ ये | ९२-८८ |
| ३ ये | ९२-८८ |
| ४र्थात् ८मान्तयावत् | ९३-९२-८९-८८ |
| ९-१० मयो॰ | ९३-९२-८९-८८, ८०-७९-७६-७५ |
| उपशान्तमोहे | ९३-९२-८९-८८ |
| १२-१३ शयो॰ | ८०-७९-७६-७५ |
| १४ दशे | ८०-७९-७६-७५-९-८ |

अथ गुणस्थानेषु चिन्त्यन्ते-मिथ्यादृष्टिगुणस्थाने प्रथमसत्तास्थानहीनप्रथमचतुष्काध्रुवसंज्ञकत्रिकलक्षणानि ९२-८९-८८-८६-८०-७८ षट् सत्तास्थानानि, त्रिनवतिस्तु तीर्थकराहारकसत्कर्मणो मिथ्यात्वगमनप्रतिषेधान्न भवति। सासादने मिश्रे च द्विनवत्यष्टाशीतिलक्षणे द्वे सत्तास्थाने। अविरतसम्यग्दृष्टौ देशविरतप्रमत्ताप्रमत्तापूर्वकरणेषु प्रथमसत्तास्थानचतुष्कं भवति। अनिवृत्तिबादरसम्पराये सूक्ष्मसम्पराये च प्रथमसत्तास्थानचतुष्कं द्वितीयसत्तास्थानचतुष्कं चेति प्रत्येकमष्टावष्टौ सत्तास्थानानि, तत्राद्यानि चत्वार्युपशमश्रेण्यां, उत्तराणि तु

चत्वारि क्षपकश्रेण्यां प्रकृतित्रयोदशकक्षये । उपशान्तमोहे तु प्रथमसत्तास्थानचतुष्कमेव । क्षीणमोहे सयोगिकेवलिनि च द्वितीयसत्तास्थानचतुष्कमेव । अयोगिकेवलिनि च षट् सत्तास्थानानि द्वितीयसत्तास्थानचतुष्कं नवाष्टौ च, तत्र द्वितीयसत्तास्थनचतुष्कं नानाजीवापेक्षया द्विचरमसमयं यावत्, चरमसमये तु तीर्थकरातीर्थकरावधिकृत्य नवाष्टाविति । तदेवं गुणस्थानेष्वभिहितानि सत्तास्थानानि ।

अथ बन्धोदयसत्तास्थानानां परस्परं संवेध उच्यते–तत्र त्रयोविंशतिबन्धे पञ्चविंशतिबन्धे षड्विंशतिबन्धे च प्रत्येकं नव नवोदयस्थानानि पञ्च पञ्च सत्तास्थानानि । तत्र त्रयोविंशतिबन्धोऽपर्याप्तैकेन्द्रियप्रायोग्य एव, तद्बन्धकाश्चैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रिया मनुष्याश्च । एतेषां त्रयोविंशतिबन्धकानां यथायोगं सामान्येन नवोदयस्थानानि, तद्यथा–एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशत् । तत्रैकविंशत्युदयोऽपान्तरालगतौ वर्त्तमानानामेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां ज्ञेयः, तेषामपर्याप्तैकेन्द्रियप्रायोग्यबन्धसंभवात् । चतुर्विंशत्युदयोऽपर्याप्तपर्याप्तैकेन्द्रियाणाम्, अन्यत्र चतुर्विंशत्युदयस्याप्राप्यमाणत्वात् । पञ्चविंशत्युदयः पर्याप्तैकेन्द्रियाणां वैक्रियतिर्यङ्मनुष्याणां च मिथ्यादृष्टीनाम् । षड्विंशत्युदयः पर्याप्तैकेन्द्रियाणां पर्याप्तापर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां च मिथ्यादृष्टीनाम् । सप्तविंशत्युदयः पर्याप्तैकेन्द्रियाणां वैक्रियतिर्यग्मनुष्याणां च मिथ्यादृष्टीनाम् । अष्टाविंशत्येकोनत्रिंशत्त्रिंशदुदयाः पर्याप्तद्वित्रिचतुरिन्द्रियाणां तिर्यक्पञ्चेन्द्रियमनुष्याणां च मिथ्यादृष्टीनाम् । एकत्रिंशदुदयो विकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणां मिथ्यादृष्टीनाम् । उक्तशेषास्त्रयोविंशतिबन्धका न भवन्ति । तेषां त्रयोविंशतिबन्धकानां सामान्येन पञ्च सत्तास्थानानि, तद्यथा–द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च । तत्रैकविंशत्युदये वर्त्तमानानां सर्वेषामपि पञ्चापि सत्तास्थानानि । नवरं मनुष्याणामष्टसप्ततिवर्जानि चत्वारि, यतोऽष्टसप्ततिर्मनुष्यद्विके उद्वलिते प्राप्यते, न च मनुष्याणां तदु-

द्वलनसंभवः। चतुर्विंशत्युदयेऽपि पञ्च सत्तास्थानानि, केवलं वायुकायिकस्य वैक्रियं कुर्वतश्चतुर्विंशत्युदये वर्त्तमानस्याशीत्यष्टसप्ततिवर्जानि त्रीणि वाच्यानि, यतस्तस्य वैक्रियषट्कं मनुष्यद्विकं च नियमादस्ति, यतोऽसौ वैक्रियद्विकं साक्षादनुभवत्येवेति न तदुद्वलयति, तदभावादेवद्विकनरकद्विके अपि नोद्वलयति, तथास्वाभाव्येन वैक्रियषट्कस्य समकालमुद्वलनसंभवात्, वैक्रियषट्के चोद्वलिते सति पश्चान्मनुष्यद्विकमुद्वलयति, न पूर्वं, ततोऽष्टसप्तत्यशीतिसत्तास्थानासंभवः। पञ्चविंशत्युदये पञ्चापि सत्तास्थानानि, तत्राष्टसप्ततिरवैक्रियवायुकायिकतेजस्कायिकानधिकृत्य प्राप्यते, नान्यान्, यतस्तेजस्कायिकवायुकायिकवर्जोऽन्यः सर्वोऽपि पर्याप्तको नियमान्मनुष्यगतिमनुष्यानुपूर्व्यौ बध्नाति, ततोऽन्यत्राष्टसप्ततिर्न प्राप्यते। षड्विंशत्युदयेऽपि पञ्चापि सत्तास्थानानि, तत्राष्टासप्ततिरवैक्रियवायुकायिकतैजसकायिकानां द्वित्रिचतुःपञ्चेन्द्रियाणां वा तेजोवायुभवादनन्तरमागतानां पर्याप्तापर्याप्तानां, ते हि यावन्मनुष्यगतिमनुष्यानुपूर्व्यौ न बध्नन्ति तावत्तेषामष्टसप्ततिः प्राप्यते, नान्येषाम्। सप्तविंशत्युदयेऽष्टसप्ततिवर्जानि चत्वारि सत्तास्थानानि, सप्तविंशत्युदयो हि तेजोवायुवर्जपर्याप्तबादरैकेन्द्रियवैक्रियतिर्यङ्मनुष्याणां, तेषु चावश्यं मनुष्यद्विकसंभवादष्टसप्ततिर्नात्राप्यते। अथ कथं तेजोवायूनां सप्तविंशत्युदयो न भवति येन तद्वर्जनं क्रियते? उच्यते—सप्तविंशत्युदय एकेन्द्रियाणामातपोद्योतान्यतरप्रक्षेपे भवति, न च तेजोवायुष्वातपोद्योतोदयसंभव इति तद्वर्जनम्। अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदुदयेषु नियमादष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि, अष्टाविंशत्याद्युदया हि पर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां, एकत्रिंशदुदयश्च पर्याप्तविकलेन्द्रियाणां पञ्चेन्द्रियतिरश्चां च, ते चावश्यं मनुजद्विकसत्कर्माण इति। तदेवं त्रयोविंशतिबन्धकानां यथायोगं नवाप्युदयस्थानान्यधिकृत्य चत्वारिंशत्सत्तास्थानानि भवन्ति। पञ्चविंशतिषड्विंशतिबन्धकानामप्येवमेव, नवरं पर्याप्तैकेन्द्रियपञ्चेन्द्रियप्रायोग्यपञ्चविंशतिषड्विंशतिबन्धकानां देवानामेकविंशतिपञ्च-

त्रिंशन्निसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपेषु षडुदयस्थानेषु द्विनवतिरष्टाशीतिश्चेति द्वे द्वे सत्तास्थाने वाच्ये। अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यां तु पञ्चविंशतिं देवा न बध्नन्ति, अपर्याप्तेषु विकलेन्द्रियेषु च मध्ये देवानामनुत्पादात्। सामान्येन पञ्चविंशतिबन्धे षड्विंशतिबन्धे च प्रत्येकं नवाप्युदयस्थानानि प्रतीत्य चत्वारिंशच्चत्वारिंशत्सत्तास्थानानि। तथाऽष्टाविंशतौ बध्यमानायामष्टावुदयस्थानानि, तद्यथा—एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च। इहाष्टाविंशतिर्द्वेधा—देवगतिप्रायोग्या नरकगतिप्रायोग्या च, तत्र देवगतिप्रायोग्यायां बन्धेऽष्टावप्युदयस्थानानि नानाजीवापेक्षया प्राप्यन्ते, नरकगतिप्रायोग्यायास्तु बन्धे त्रिंशदेकत्रिंशच्चेति द्वे। तत्र देवगतिप्रायोग्याष्टाविंशतिबन्धकानामेकविंशत्युदयः क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा पञ्चेन्द्रियतिर्यङ्मनुष्याणामपान्तरालगतौ वर्त्तमानानामवसेयः, न मिथ्यादृष्टेः, यतो भवादौ सर्वपर्याप्तिपर्याप्त एव मिथ्यादृष्टिर्देवगतिप्रायोग्याऽष्टाविंशतिबन्धकः। एकविंशतिपञ्चविंशतिषड्विंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशदुदयवर्ती चापर्याप्त एवेति। वैक्रियतिर्यङ्मनुष्याणां च पञ्चविंशत्याद्युदये वर्त्तमानानां मिथ्यादृष्टीनां यद्देवगतिप्रायोग्याष्टाविंशतिबन्धकत्वं तदुच्यते तद्भवादौ पूरितपर्याप्तिकस्यापि पश्चाद्वैक्रियाङ्गनिष्पत्तिकाले औदारिकादितनुनिवृत्तौ पर्याप्त्युदयनिवृत्तिमभिप्रेत्येत्यदोष इति मन्तव्यम्। पञ्चविंशत्युदय आहारकसंयतानां वैक्रियतिर्यङ्मनुष्याणां च सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा। षड्विंशत्युदयः क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा पञ्चेन्द्रियतिर्यङ्मनुष्याणां शरीरस्थानाम्। सप्तविंशत्युदय आहारकसंयतानां वैक्रियतिर्यङ्मनुष्याणां च सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा। अष्टाविंशत्येकोनत्रिंशदुदयावपि यथाक्रमं शरीरपर्याप्त्या पर्याप्तानां तिर्यङ्मनुष्याणां क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा, तथाऽऽहारकसंयतानां, वैक्रियतिर्यङ्मनुष्याणां तु सम्यग्दृष्टीनां

मिथ्यादृष्टीनां चावसेयौ। त्रिंशदुदयस्तिर्यङ्मनुष्याणां सम्यग्दृष्टीनां मिथ्यादृष्टीनां सम्यङ्मिथ्यादृष्टीनां च, तथाऽऽहारकसंयतानां वैक्रियसंयतानां च। एकत्रिंशदुदयः पञ्चेन्द्रियतिरश्चां सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा। नरकगतिप्रायोग्यां त्वष्टाविंशतिं बध्नतां त्रिंशदुदयः पञ्चेन्द्रियतिर्यङ्मनुष्याणां मिथ्यादृष्टीनां, एकत्रिंशदुदयः पञ्चेन्द्रियतिरश्चां मिथ्यादृशाम्। अष्टाविंशतिबन्धकानां सामान्येन चत्वारि सत्तास्थानानि—द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिश्च। तत्रैकविंशत्युदये वर्त्तमानानां देवगतिप्रायोग्याष्टाविंशतिबन्धकानां द्विनवत्यष्टाशीतिलक्षणे द्वे सत्तास्थाने, एकविंशत्युदयस्थस्य तीर्थकरनामसत्कर्मणस्तद्बन्धोऽप्यवश्यं भावीत्येकोनत्रिंशद्बन्धकता स्यादिति। देवगतिप्रायोग्याष्टाविंशतिबन्धकस्यैकविंशत्युदये न त्रिनवतिसत्ता। पञ्चविंशत्युदयेऽप्यष्टाविंशतिबन्धकानामाहारकसंयत-वैक्रियतिर्यङ्मनुष्याणां सामान्येन ते एव द्वे सत्तास्थाने, तत्राहारकसंयतो नियमादाहारकसत्कर्मेति तस्य द्विनवतिरेव सत्तास्थानं, शेषाश्च तिर्यञ्चो मनुष्या वाऽऽहारकसत्कर्माणस्तद्रहिताश्च भवन्ति, ततस्तेषां द्वे अपि सत्तास्थाने। षड्विंशतिसप्तविंशत्यष्टाविंशत्येकोन-त्रिंशदुदयेष्वप्येते एव द्वे सत्तास्थाने। त्रिंशदुदये देवगतिनरकगतिप्रायोग्याष्टाविंशतिबन्धकानां सामान्येन चत्वारि सत्तास्थानानि, तद्यथा—द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिश्च। तत्र द्विनवतिरष्टाशीतिश्च प्राग्वद्भावनीया। एकोननवतिस्त्वेवं—कश्चिन्मनुष्यस्ती-र्थकरनामसत्कर्मा वेदकसम्यग्दृष्टिः प्राग्बद्धनरकायुष्को नरकगमनाभिमुखः सम्यक्त्वात् प्रच्युत्य मिथ्यात्वं गतः, तस्य तदा तीर्थक-रनामबन्धाभावात् नरकगतिप्रायोग्यामष्टाविंशतिं बध्नत एकोननवतिः। षडशीतिश्चैवं—इह तीर्थकराहारकचतुष्टयदेवद्विकनरकद्विकवै-क्रियचतुष्टयरहिता त्रिनवतिरशीतिर्भवति, ततस्तावत्सत्कर्मा पञ्चेन्द्रियतिर्यङ्मनुष्यो वा जातः सन् सर्वाभिः पर्याप्तिभिः पर्याप्तो यदि विशुद्धस्ततो देवगतिप्रायोग्यामष्टाविंशतिं बध्नाति तद्बन्धे च देवद्विकं वैक्रियचतुष्टयं च सत्तायां प्राप्यत इति तस्य षडशीतिः।

अथ सर्वसंक्लिष्टस्ततो नरकगतिप्रायोग्यामष्टाविंशतिं बध्नाति. तद्बन्धे च नरकद्विकं वैक्रियचतुष्टयं चावश्यं सत्तायां प्राप्यत
न्येनमपि तस्य षडशीतिः। एकत्रिंशदुदये द्विनवतिरष्टाशीतिः षडशीतिश्चेति त्रीणि सत्तास्थानानि, एकोननवतिरिह न प्राप्यते, एक-
त्रिंशदुदयस्य पञ्चेन्द्रियतिर्यक्षु प्राप्तेस्तत्र च तीर्थकरनामसत्ताप्रतिषेधात्। षडशीतिस्थानभावना तु प्राग्वदेव। तदेवमष्टाविंशतिबन्धका-
नामष्टस्वप्युदयस्थानेष्वेकोनविंशतिः सत्तास्थानानि।

एकोनत्रिंशतिं त्रिंशतिं च बध्यमानायां प्रत्येकं नव नवोदयस्थानानि सप्त सप्त च सत्तास्थानानि। तत्रोदयस्थानान्यमूनि—
एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च। तत्रैकविंशत्युदयस्तिर्यग्मनुष्य-
प्रायोग्यामेकोनत्रिंशतं बध्नतां पर्याप्तापर्याप्तैकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियतिर्यग्मनुष्याणां देवनैरयिकाणां च। चतुर्विंशत्युदयः पर्याप्ता-
पर्याप्तैकेन्द्रियाणाम्। पञ्चविंशत्युदयः पर्याप्तैकेन्द्रियाणां देवनैरयिकाणां वैक्रियतिर्यग्मनुष्याणां च मिथ्यादृष्टीनां। षड्विंशत्युदयः
पर्याप्तैकेन्द्रियाणां पर्याप्तापर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां च। सप्तविंशत्युदयः पर्याप्तैकेन्द्रियाणां देवनैरयिकाणां वैक्रिय
तिर्यग्मनुष्याणां च मिथ्यादृष्टीनां। अष्टाविंशत्युदय एकोनत्रिंशदुदयश्च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां वैक्रियपञ्चेन्द्रिय-
तिर्यग्मनुष्यदेवनैरयिकाणां च। त्रिंशदुदयो विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां देवानां चोद्योतवेदकानाम्। एकत्रिंशदुदयः
पर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणामुद्योतवेदकानाम्। तथा देवगतिप्रायोग्यामेकोनत्रिंशतं बध्नतो मनुष्यस्याविरतसम्यग्दृष्टेरुदयस्था-
नानि सप्त, तद्यथा—एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्च। आहारकसंयतानां वैक्रियसंय-
तानां चेमानि पञ्चोदयस्थानानि, तद्यथा—पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशत्। असंयतानां संयतासंयतानां च

वैक्रियं कुर्वतां मनुष्याणां त्रिंशद्वर्जानि चत्वार्युदयस्थानानि। त्रिंशद्वर्जनं च संयतान्मुक्त्वाऽन्येषां मनुष्याणां वैक्रियमपि कुर्वतामुद्योतोदयाभावात्। सामान्येनैकोनत्रिंशद्बन्धे सप्त सत्तास्थानानि—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च। तत्र विकलेन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यामेकोनत्रिंशतं बध्नतां पर्याप्तापर्याप्तैकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणामेकत्रिंशत्युदये वर्त्तमानानां पञ्च पञ्च सत्तास्थानानि—द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च। एवं चतुर्विंशतिपञ्चविंशतिषड्विंशत्युदयेष्वपि वक्तव्यम्। सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशदुदयेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि, भावना त्रयोविंशतिबन्धकानां प्राग्यथा कृता तथाऽत्रापि कार्या। मनुजगतिप्रायोग्यामेकोनत्रिंशतं बध्नतामेकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियाणां, तिर्यग्गतिमनुष्यगतिप्रायोग्यां पुनर्बध्नतां मनुष्याणां च स्वस्वोदयस्थानेषु यथायोगं वर्त्तमानानामष्टसप्ततिवर्जानि तान्येव चत्वारि चत्वारि सत्तास्थानानि। देवनैरयिकाणां तिर्यक्पञ्चेन्द्रियमनुष्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नतां स्वस्वोदयेषु वर्त्तमानानां द्वे द्वे सत्तास्थाने द्विनवतिरष्टाशीतिश्चेति। केवलं नैरयिकस्य मिथ्यादृष्टेस्तीर्थकरसत्कर्मणो मनुष्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नतः स्वोदयेषु पञ्चसु यथायोगं वर्त्तमानस्यैकोननवतिरेवैका वक्तव्या, तीर्थकरनामसहितस्याहारकचतुष्टयरहितस्यैव मिथ्यात्वगमनसंभवात् त्रिनवतेराहारकचतुष्टयेऽपनीते एकोननवतेरेव संभवात्। देवगतिप्रायोग्यामेकोनत्रिंशतं तीर्थकरनामसहितां बध्नतः पुनरविरतसम्यग्दृष्टेर्मनुष्यस्यैकविंशत्युदये वर्त्तमानस्य द्वे सत्तास्थाने त्रिनवतिरेकोननवतिश्च। एवं पञ्चविंशतिषड्विंशतिसप्तविंशत्यष्टाविशत्येकोनत्रिंशत्त्रिंशदुदयेष्वपि एते एव द्वे सत्तास्थाने वाच्ये। आहारकसंयतानां तु स्वस्वोदये वर्त्तमानानामेकमेव त्रिनवतिरूपं सत्तास्थानं ज्ञेयम्। तदेवं सामान्येनैकोनत्रिंशद्बन्धे एकविंशत्युदये सत्तास्थानानि पञ्च(सप्त), चतुर्विंशत्युदये पञ्च, पञ्चविंशत्युदये सप्त, षड्विंशत्युदये सप्त, सप्तविंश

न्युदये षट्, अष्टाविंशत्युदये षट्, एकोनत्रिंशदुदये षट्, त्रिंशदुदये षट्, एकत्रिंशदुदये चत्वारि, सर्वसंख्यया चतुःपञ्चाशत्सत्तास्थानानि। तथा यथा तिर्यग्गतिप्रायोग्यामेकोनत्रिंशतं बध्नतामेकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजदेवनैरयिकाणामुदयसत्तास्थानानि भावितानि तथा त्रिंशतमप्युद्योतसहितां तिर्यग्गतिप्रायोग्यां बध्नतामेकेन्द्रियादीनामुदयसत्तास्थानानि भावनीयानि। मनुष्यगतिप्रायोग्यां तीर्थकरसहितां त्रिंशतं बध्नतां देवनैरयिकाणामुदयसत्तास्थानान्युच्यन्ते—तत्र देवस्य यथोक्तां त्रिंशतं बध्नत एकविंशत्युदये वर्तमानस्य द्वे सत्तास्थाने त्रिनवतिरेकोननवतिश्च। एकविंशत्युदय एव वर्तमानस्य नैरयिकस्यैकं सत्तास्थानमेकोननवतिलक्षणम्। त्रिनवतिस्तु न भवति, तीर्थकराहारकसत्कर्मणो नरकेषूत्पादाभावात्। उक्तं च सप्ततिकाचूर्णौ—"जस्स तित्थगराहारगाणि जुगवं संति सो नरएसु न उववज्जइ त्ति"। एवं पञ्चविंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदुदयेष्वपि भावनीयम्। नवरं नैरयिकस्य त्रिंशदुदयो नास्ति, त्रिंशदुदयस्योद्योतान्वितत्वान्नैरयिकस्य चोद्योतोदयाभावात्। तदेवं सामान्येन त्रिंशद्बन्धकानामेकविंशत्युदये सप्त, चतुर्विंशत्युदये पञ्च, पञ्चविंशत्युदये सप्त, षड्विंशत्युदये पञ्च, सप्तविंशत्युदये षट्, अष्टाविंशत्युदये षट्, एकोनत्रिंशदुदये षट्, त्रिंशदुदये षट्, एकत्रिंशदुदये चत्वारि, सर्वसंख्यया द्विपञ्चाशत्।

एकत्रिंशति बध्यमानायामेकमुदयस्थानं त्रिंशल्लक्षणं, यत एकत्रिंशद्देवगतिप्रायोग्यं तीर्थकराहारकसहितं बध्नतोऽप्रमत्तसंयतस्यापूर्वकरणस्य वा प्राप्यते, न च ते वैक्रियमाहारकं वा कुर्वन्ति, ततः पञ्चविंशत्यादय उदया न प्राप्यन्ते। एकं सत्तास्थानं—त्रिनवतिस्तीर्थकराहारकचतुष्टययोरपि सत्तासंभवात्।

एकस्मिन् यशःकीर्तिरूपे कर्मणि बध्यमाने एकं त्रिंशदुदयस्थानं, एकबन्धका ह्यपूर्वकरणादयोऽतिशुद्धत्वाद्वैक्रियमाहारकं वा नारभन्त

इति तत्र पञ्चविंशत्याद्युदयस्थानाप्राप्तिः। अष्टौ सत्तांशाः–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च। तत्राद्यानि चत्वारि सत्तास्थानानि उपशमश्रेण्यां, क्षपकश्रेण्यामपि तावद्यावदनिवृत्तिबादरगुणस्थानं गत्वा त्रयोदश नामानि न क्षिप्यन्ते, क्षीणेषु च त्रयोदशनामसु नानाजीवापेक्षयोपरितनानि चत्वारि सूक्ष्मसंपरायं यावल्लभ्यन्ते। परतो बन्धाभावे दशोदयस्थानानि, तद्यथा–विंशतिरेकविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशन्नवाष्टौ चेति। तत्र विंशत्येकविंशती यथासंख्यं तीर्थकृदतीर्थकृतोः सयोगिकेवलिनोः कार्मणकाययोगे वर्त्तमानयोः, षड्विंशतिसप्तविंशती तयोरेवौदारिकमिश्रकाययोगे वर्त्तमानयोः, अतीर्थकृतः स्वभावस्थस्य त्रिंशत्, तस्यैव स्वरे निरुद्धे एकोनत्रिंशत्, तस्यैवोच्छ्वासेऽपि निरुद्धेऽष्टाविंशतिः, तीर्थकृतः स्वभावस्थस्यैकत्रिंशत्, तस्यैव स्वरे निरुद्धे त्रिंशत्, उच्छ्वासेऽपि निरुद्धे एकोनत्रिंशत्, अयोगिनस्तीर्थकृतो नवोदयोऽतीर्थकृतोऽष्टोदयः। दश सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिर्नवाष्टौ च। विंशत्युदये द्वे सत्तास्थाने–एकोनाशीतिः पञ्चसप्ततिश्च। एवं षड्विंशत्युदयेऽष्टाविंशत्युदयेऽपि च द्रष्टव्यम्। एकविंशत्युदये अशीतिषट्सप्ततिलक्षणे द्वे सत्तास्थाने, एवं सप्तविंशत्युदयेऽपि। एकोनत्रिंशति चत्वारि सत्तास्थानानि, तद्यथा–अशीतिः षट्सप्ततिरेकोनाशीतिः पञ्चसप्ततिश्च। यत एकोनत्रिंशत्तीर्थकरस्यातीर्थकरस्य च स्यात्। तत्राद्ये द्वे तीर्थकरमधिकृत्य, अन्त्ये च द्वे अतीर्थकरमधिकृत्य। त्रिंशदुदयेऽष्टौ सत्तास्थानानि, तद्यथा–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च। तत्राद्यानि चत्वार्युपशान्तकषायस्य, अशीतिः क्षीणकषायस्य सयोगिकेवलिनो वा तीर्थकृत आहारकसत्कर्मणोऽतीर्थकृतस्तु तादृशस्यैकोनाशीतिः। आहारकचतुष्टयरहितयोस्तीर्थकृदतीर्थकृतोः क्षीणमोहयोः सयोगिकेवलिनोर्वा षट्सप्ततिपञ्चसप्तती। एकत्रिंशदुदयेऽशीतिषट्सप्तत्यात्मके द्वे

नाम्नः बन्धोदयसत्तास्थानानां संवेधः

सत्तास्थाने तीर्थकरस्येतरस्य वेद्ये, अतीर्थकृत्यैकत्रिंशदुदयाभावात्। नवोदयेऽशीतिषट्सप्ततिनवलक्षणानि त्रीणि सत्तास्थानानि, तत्राद्ये द्वे अयोगिकेवलिद्विचरमसमयं यावत्, तीर्थकरस्य चरमसमये तु नव। अष्टोदये त्रीणि सत्तास्थानानि–एकोनाशीतिः पञ्चसप्ततिरष्टौ च, तत्राद्ये द्वे अयोगिकेवलिनोऽतीर्थकृतो द्विचरमसमयं यावत्, चरमसमये त्वष्टाविति। एवमबन्धकस्य दशस्वप्युदयस्थानेषु त्रिंशत्सत्तास्थानानि भवन्ति। तदेवं सर्वेषामपि कर्मणां प्रत्येकं बन्धोदयसत्तास्थानानि सामान्यतो मिथः संवेधतश्च चिन्तितानि।

अथ सर्वेषामपि कर्मणां (गुणस्थाने) बन्धोदयसत्ताः प्रत्येकं संवेधतश्चिन्त्यन्ते–तत्र ज्ञानावरणान्तराययोर्मिथ्यादृष्टेरारभ्य सूक्ष्मसंपरायं यावत् पञ्च प्रकृतयो बन्धे उदये सत्तायां च लभ्यन्ते, उपशान्तमोहे (क्षीणमोहे) च द्वयोरपि पञ्च पञ्च प्रकृतय उदयवत्यः सत्यश्च, सयोगिकेवल्यादौ त्वनयोरेकापि नास्ति। दर्शनावरणस्य मिथ्यादृष्टौ सासादने च द्वौ भङ्गौ, नवविधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, एष विकल्पो निद्रोदयाभावे, नवविधो बन्धः पञ्चविध उदयो नवविधा सत्ता, एष विकल्पो निद्रोदयकाले। मिश्रादारभ्यापूर्वकरणप्रथमभागं यावत् इमौ द्वौ भङ्गौ, षड्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, यद्वा षड्विधो बन्धः पञ्चविध उदयो नवविधा सत्तेति। अपूर्वकरणे निद्राप्रचलयोर्बन्धव्यवच्छेदादूर्ध्वमारभ्योपशमश्रेण्यां सूक्ष्मसंपरायं यावत् चतुर्विधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, यद्वा चतुर्विधो बन्धः पञ्चविध उदयो नवविधा सत्तेति द्वौ भङ्गौ। बन्धाभावेऽप्युपशान्तमोहे बन्धाभिलापनिर्मुक्तावेतावेव द्वौ भङ्गौ। अनिवृत्तिबादरस्य सूक्ष्मसंपरायस्य च क्षपकस्य चतुर्विधे बन्धे षट्कसत्तायामतिविशुद्धत्वेन निद्रोदयाभावाच्चतुर्विध एवोदय इत्येक एव भङ्गः। क्षीणमोहस्य बन्धाभावे द्वौ भङ्गौ–चतुर्विध उदयः षड्विधा सत्ता इत्येष भङ्गः क्षीणमोहस्य द्विचरमसमयं यावत्, चरमसमये तु चतुर्विध उदयश्चतुर्विधा सत्तेति। उक्ता गुणस्थानेषु दर्शनावरणीयस्य भङ्गाः। अथ वेदनीयस्योच्यन्ते–वेदनीयस्याद्या-

श्चत्वारो भङ्गाः—असातस्य बन्धः सातस्योदयो द्वे सती, यद्वाऽसातस्य बन्धोऽसातस्योदयो द्वे सती, (यद्वा) सातस्य बन्धः सातस्योदयो द्वे सती, यद्वा सातस्य बन्धोऽसातस्योदयो द्वे सती इत्येते मिथ्यादृष्टेरारभ्य यावत्प्रमत्तसंयतस्तावन्नानाजीवापेक्षया कालभेदेनैकजीवापेक्षया च भावनीयाः। सातस्य बन्धः सातस्योदयो द्वे सती, सातस्य बन्धोऽसातस्योदयो द्वे सती इत्येतौ द्वौ प्रमत्तसंयतादारभ्य यावत्सयोगिकेवली तावत्। बन्धाभावेऽयोगिकेवलिनि चत्वारो विकल्पाः, तत्रासातस्योदयः सातासाते सती, यद्वा सातस्योदयः सातासाते सती, एतौ द्वौ द्विचरमसमयं यावत्, चरमसमये त्वन्यतरस्मिन् सति द्वौ भङ्गौ, तत्रासातस्योदयोऽसातस्य सत्त्वेत्येष भङ्गो यस्य द्विचरमसमये सातं क्षीणं तस्य, यस्य तु द्विचरमसमयेऽसातं क्षीणं तस्य सातस्योदयः सातस्य सत्त्वेत्येष भङ्गः। भाविता गुणस्थानेषु वेदनीयस्य भङ्गाः। अथायुषो भाव्यन्ते—आयुषो मिथ्यादृष्टिगुणस्थानेऽष्टाविंशतिरपि भङ्गा नैरयिकान् देवाँश्चाधिकृत्य पञ्च पञ्च, तिरश्चो मनुष्याँश्चाधिकृत्य नव नवेति। सासादनस्य षड्विंशतिः, यतस्तिर्यञ्चो मनुष्या वा सासादनभावे वर्त्तमाना नरकायुर्न बध्नन्तीति परभवायुर्बन्धकाले तिरश्चां नृणां चैकैको भङ्गो न प्राप्यते। सम्यग्मिथ्यादृष्टेः षोडश, तस्य हि नायुर्बन्धारम्भ इति आयुर्बन्धकालीना द्वादश भङ्गा अपयान्तीति षोडश भवन्ति। अविरतसम्यग्दृष्टेर्विंशतिर्भङ्गाः, कथमिति चेद्, उच्यते—तिर्यङ्मनुष्याणां प्रत्येकमायुर्बन्धकाले ये नरकतिर्यङ्मनुष्यगतिविषयास्त्रयस्त्रयो भङ्गाः देवनैरयिकाणां च तिर्यग्गतिविषय एकैकभङ्गः ते सर्वसंख्ययाऽष्टौ अविरतसम्यग्दृष्टेर्न भवन्तीति शेषा विंशतिरेव भवन्तीति। देशविरते द्वादश भङ्गाः, यतो देशविरतिर्देवानां नारकाणां च न संभवतीति तदाश्रिता दश भङ्गा अपयान्ति। तिर्यङ्मनुष्या अपि देशविरता देवायुरेव बध्नन्ति, न नरकतिर्यङ्मनुष्यायूंषि, ततस्तिर्यङ्मनुष्याणामायुर्बन्धकालीनास्त्रयस्त्रयो भङ्गा न प्राप्यन्ते इति षडप्येतेऽपगच्छन्ति इत्यष्टाविंशतेः षोडशस्वपनीतेष्ववशिष्टा द्वादशैव भवन्ति। प्रमत्ताप्रमत्तयोर्य

एव मनुष्ये नव भङ्गाः एव परभवायुर्बन्धकालीननारकतिर्यङ्मनुष्यायुर्बन्धघटितभङ्गत्रयहीनाः पड् द्रष्टव्याः, प्रमत्ताप्रमत्ता हि देवायु-
र्गकं बध्नन्ति न शेषं, बन्धोत्तरकालं चरणप्रतिपत्त्या सत्ता तु चतुर्णामप्यायुषां संभवत्येव । अपूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोप-
शान्तमोहेषूपशमश्रेण्यां द्वौ भङ्गौ, तद्यथा—मनुष्यायुष उदयो मनुष्यायुषः सत्ता, एष भङ्गः परभवायुर्बन्धकालात्पूर्वं, यद्वा मनुष्यायुष
उदयो देवमनुष्यायुषी सती, एष भङ्गः परभवायुर्बन्धोत्तरं पूर्वबद्धदेवायुष उपशमश्रेणिप्रतिपत्तिसंभवात् , क्षपकश्रेण्यां त्वेतेषां मनुष्यायुष
उदयो मनुष्यायुषः सत्तेत्येष एक एव भङ्गः, पूर्वबद्धायुषां क्षपकश्रेण्यप्रतिपत्तेः । क्षीणमोहादिगुणस्थानत्रयेऽप्येष एवैको भङ्गो द्रष्टव्यः ।
उक्ता गुणस्थानेष्वायुषो भङ्गाः । अथ गोत्रस्योच्यन्ते—मिथ्यादृष्टौ गोत्रस्यादिमाः पञ्च भङ्गाः, तद्यथा—नीचैर्गोत्रस्य बन्धो नीचैर्गोत्र-
स्योदयो नीचैर्गोत्रं सत्, एष तेजोवायुषु तद्भवादुद्वृत्तेषु वा कियत्कालम् । नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयो द्वे सती, यद्वा
नीचैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदयो द्वे सती, यद्वोच्चैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयो द्वे सती, यद्वोच्चैर्गोत्रस्य बन्ध उच्चैर्गोत्र-
स्योदयो द्वे सती, एते चत्वारोऽपि यथायोगं मिथ्यादृशां संभवन्ति । एत एवादिमहीनाश्चत्वारः सासादने संभवन्ति, आद्यभङ्गस्थानेषु
तेजोवायुषु सासादनभावो न लभ्यते, नापि तद्भवादुद्वृत्तेषु तदात्वे इति तत्प्रतिषेधः । मिश्रादारभ्य देशविरतिं यावदुच्चैर्गोत्रबन्धो-
पलक्षितौ प्रत्येकं द्वौ भङ्गौ भवतः । प्रमत्तसंयतादारभ्य सूक्ष्मसम्परायं यावन्नीचैर्गोत्रोदयाभावादुच्चैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदयो
द्वे सती इत्येक एव भङ्गः । अबन्धेऽयोगिद्विचरमसमयं यावदुच्चैर्गोत्रस्योदयो द्वे सती इति षष्ठ एव, चरमसमये तूच्चैर्गोत्रस्योदय
उच्चैर्गोत्रमेव च सदिति सप्तम एव भङ्गः । उक्ता गुणस्थानेषु गोत्रभङ्गाः । अथ मोहनीये गुणस्थानेष्वपि बन्धोदयसत्त्वस्थानान्युक्तान्येवेति
न भूय उच्यन्ते ।

सम्प्रत्युद्धरितं पदसमूहविषयं यद्वक्तव्यं तदुच्यते—तत्र पदसमूहो द्विविधः–अव्यक्तोदयसम्बन्धी गुणस्थानकोदयस-
म्बन्धी च। तत्राव्यक्तोदया गुणस्थानकविनिर्मुक्तसामान्योदयास्तत्सम्बन्धिपदसमूहपरिमाणं तावदुच्यते–तत्र दशकोदये एका चतु-
र्विंशतिः। नवोदये षट्–तिस्रो मिथ्यादृष्टौ, सासादनमिश्राविरतसम्यग्दृष्टिषु चैकैकेति। अष्टोदये एकादश–तिस्रो मिथ्यादृष्टौ,
सासादनमिश्रयोर्द्वे द्वे, तिस्रोऽविरतसम्यग्दृष्टौ, देशविरते चैकेति। सप्तोदये दश–मिथ्यादृष्टिसासादनमिश्रेष्वेकैका, अविरतसम्यग्दृष्टि-
देशविरतयोस्तिस्रस्तिस्रः, प्रमत्ताप्रमत्तयोर्मिलितयोः स्वरूपेण भेदाभावादेका चेति। षडुदये सप्त–एकाऽविरतसम्यग्दृष्टौ, देशविरते
प्रमत्ताप्रमत्तयोश्च तिस्रस्तिस्र इति। अपूर्वकरणसत्कानि षट्कादीन्युदयस्थानानि तु प्रमत्ताप्रमत्तसत्केभ्यः स्वरूपभेदाभावात् पृथङ्न
गण्यन्ते। पञ्चकोदये चतस्रः- एका देशविरते, तिस्रश्च प्रमत्ताप्रमत्तयोरिति। एका चतुष्कोदये, सा च प्रमत्ताप्रमत्तयोः। स्थापना—
१–६–११–१०–७–४–१। एताश्चतुर्विंशतयस्तेन तेनोदयेन दशकादिना गुण्यन्ते। तथाहि–दशकोदये एका चतुर्विंशतिः, सा दश-
केन गुण्यते, जाता दश। नवकोदये षट् चतुर्विंशतय इति षड् नवकेन गुण्यन्ते, जाताश्चतुःपञ्चाशत्। अष्टोदये एकादश चतुर्विंशतय
इत्येकादश अष्टभिर्गुण्यन्ते, जाता अष्टाशीतिः। सप्तोदये दश चतुर्विंशतय इति दश सप्तकेन गुण्यन्ते, जाता सप्ततिः। षडुदये सप्त
चतुर्विंशतय इति सप्त षड्भिर्गुण्यन्ते, जाता द्विचत्वारिंशत्। पञ्चोदये चतस्रश्चतुर्विंशतय इति चतस्रः पञ्चभिर्गुण्यन्ते जाता विंशतिः।
चतुरुदये एका चतुर्विंशतिरित्येका चतुर्भिर्गुण्यते, जाताश्चत्वारः। स्थापना–१०–५४–८८–७०–४२–२०–४। इत्थं गुणित्वा
चतुर्विंशतय एकत्र मील्यन्ते, जातं शतद्वयमष्टाशीतं २८८। तत एतच्चतुर्विंशत्या गुण्यते, जातानि द्वादशोत्तराण्येकोनसप्ततिशतानि
६९१२। तत्र द्विकोदयभङ्गा द्वादश, तेषां द्विकसंज्ञेनोदयेन गुणितानि पदानि चतुर्विंशतिः, एकोदयभङ्गाश्चत्वारः, तेषां चैकोदयगुणितानि

पदान्यपि चत्वार्येवेति सर्वसंख्ययाऽष्टाविंशतिपदान्यधिकानि प्रक्षिप्यन्ते, ततो जातानि षष्टिहीनानि सप्त सहस्राणि ६९४०। यद्वा पञ्चकबन्धे चतुर्विंशतिपदानि, चतुष्कबन्धे चत्वारि, त्रिकबन्धे त्रीणि, द्विकबन्धे द्वे, एककबन्धे एकं, अबन्धेऽप्येकमिति बन्धकभेदेन सर्वसंख्यया पञ्चत्रिंशत्पदानि, तानि पूर्वराशौ प्रक्षिप्यन्ते, जातानि त्रिपञ्चाशद्धीनानि सप्त सहस्राणि ६९४७। यद्वा मतान्तरेण चतुर्बन्धे द्वादश द्विकोदयभङ्गा लभ्यन्ते, पदानि च तत्र सर्वसंख्यया चतुर्विंशतिः, तत्प्रक्षेपादेकोनसप्ततिशतान्येकसप्तत्यधिकानि भवन्ति ६९७१। एतदव्यक्तोदयपदसंख्यायां मतत्रयं द्रष्टव्यम्।

अथ गुणस्थानोदयपदसंख्याऽभिधीयते–मिथ्यादृष्टावष्टषष्टिः पदध्रुवका–चतुर्विंशतिगुणनयोग्यानि पदानीत्यर्थः, तथाहि–दशोदये एका चतुर्विंशतिः, तत एको दशकेन गुण्यते, जाता दश। नवोदये तिस्रश्चतुर्विंशतय इति त्रयो नवभिर्गुण्यन्ते, जाता सप्तविंशतिः। अष्टोदये तिस्रश्चतुर्विंशतयस्ततस्त्रयोऽष्टभिर्गुण्यन्ते, जाता चतुर्विंशतिः। सप्तोदये एका चतुर्विंशतिस्तत एकः सप्तभिर्गुण्यते, जाताः सप्त। सर्वसंख्यया मिथ्यादृष्टौ पदध्रुवका अष्टषष्टिः। एवं सासादने द्वात्रिंशत्। मिश्रे द्वात्रिंशत्। अविरतसम्यग्दृष्टौ षष्टिः। देशविरते द्विपञ्चाशत्। प्रमत्ते चतुश्चत्वारिंशत्। अप्रमत्ते चतुश्चत्वारिंशत्। अपूर्वकरणे विंशतिः। सर्वसंख्यया त्रीणि शतानि द्विपञ्चाशदधिकानि पदध्रुवकाः। एते चतुर्विंशत्या गुण्यन्ते, जातानि चतुरशीतिशतान्यष्टचत्वारिंशदधिकानि। ततोऽनिवृत्तिबादरोदयपदानि प्रागुक्तान्यष्टाविंशतिसंख्यानि प्रक्षिप्यन्ते, सूक्ष्मसम्परायगतं चैकमबन्धकपदं तत्सहिता पूर्णा पदसंख्या भवति। सा च त्रयोविंशत्यूनानि पञ्चाशीतिशतानि ८४७७। अथवा पञ्चविधबन्धके चतुर्विंशतिः पदानि, चतुष्कबन्धे चत्वारि, त्रिकबन्धे त्रीणि, द्विकबन्धे द्वे, एककबन्धे एकं, अबन्धके च सूक्ष्मसम्पराये एकमित्येवं बन्धभेदेन सर्वसंख्यया पञ्चत्रिंशत्पदानि, तानि पूर्वराशौ प्रक्षिप्यन्ते, ततस्त्र्यशीत्यधि-

कानि चतुरशीतिशतानि पदानां भवन्ति ८४८३। यद्वा चतुर्विधबन्धकस्य मतान्तरेण द्वादश द्विकोदयभङ्गाः प्राप्यन्ते, तेषां पदानि च चतुर्विंशतिः, ततस्तेषामप्यधिकानां क्षेपे सप्तोत्तराणि पञ्चाशीतिशतानि पदानां भवन्ति ८५०७।

एवं योगोपयोगलेश्यादिभेदतोऽपि बहवो भेदा भवन्ति, तत्र योगानां बहुवक्तव्यत्वात्तान् विहाय प्रथमत उपयोगभेदतो भेदा भाव्यन्ते—इह मिथ्यादृष्टावष्टौ चतुर्विंशतयः, सासादने चतस्रः, मिश्रे चतस्रः, अविरतसम्यग्दृष्टेरष्टौ, देशविरतस्याष्टौ, प्रमत्तसंयतस्याष्टौ, अप्रमत्तसंयतस्याष्टौ, अपूर्वकरणस्य चतस्रः। तथा मिथ्यादृष्टौ सासादने सम्यग्मिथ्यादृष्टौ च प्रत्येकं मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानचक्षुरचक्षुर्दर्शनरूपाः पञ्चोपयोगाः। अविरतसम्यग्दृष्टिदेशविरतयोर्मतिश्रुतावधिज्ञानचक्षुरचक्षुरवधिदर्शनरूपाः प्रत्येकं षट्। प्रमत्तादीनां सूक्ष्मसम्परायान्तानां त एव षट् मनःपर्यवज्ञानसहिताः सप्त सप्त। तत्र मिथ्यादृष्ट्यादिषु चतुर्विंशतिगता अष्टाद्य उदयस्थानभङ्गा यथायोगमुपयोगैर्गुण्यन्ते, तद्यथा—मिथ्यादृष्टेरष्टौ, सासादने चत्वारः, मिश्रे चत्वारः, मिलिताः षोडश, पञ्चभिरुपयोगैर्गुण्यन्ते, अशीतिर्भवति ८०। अविरतसम्यग्दृष्टेरष्टौ, देशविरतस्याष्टौ, मिलिताः षोडश चतुर्विंशतिभङ्गाः, षड्भिरुपयोगैर्गुण्यन्ते षण्णवतिः स्यात् ९६। प्रमत्तस्याष्टावप्रमत्तस्याप्यष्टौ, अपूर्वकरणस्य चत्वारः, मिलिता विंशतिः, सप्तभिरुपयोगैर्गुण्यन्ते, चत्वारिंशं शतं स्यात् १४०। सर्वसंख्यया त्रीणि शतानि षोडशोत्तराणि ३१६, एतानि चतुर्विंशत्या गुण्यन्ते, पञ्चसप्ततिशतानि चतुरशीत्यधिकानि स्युः ७५८४। ततो द्विकोदयभङ्गा द्वादश, एकोदयभङ्गाः पञ्च, मिलिताः सप्तदश, सप्तभिरुपयोगैर्गुण्यन्ते, जातमेकोनविंशं शतं ११९। तत् पूर्वराशौ प्रक्षिप्यते, ततः सप्तसप्ततिशतानि त्र्युत्तराण्युदयभङ्गाः स्युः ७७०३।

अथ पदसंख्या समानीयते—तत्र मिथ्यादृष्टावष्टषष्टिः पदध्रुवकाः, सासादने द्वात्रिंशत्, मिश्रे द्वात्रिंशत्, अविरतसम्यग्दृष्टौ

पष्टिः, देशविरते द्विपञ्चाशत् , प्रमत्ते चतुश्चत्वारिंशत् , अप्रमत्तेऽपि चतुश्चत्वारिंशत् , अपूर्वकरणे विंशतिः। एते पदध्रुवका यथायोगमुपयोगैर्गुण्यन्ते, तथाहि–मिथ्यादृष्टेरष्टपष्टिः, सासादने द्वात्रिंशत् , मिश्रे द्वाविंशत् , मिलिता द्वात्रिंशं शतं, तत्पञ्चभिरुपयोगैर्गुण्यते, पट्शती पष्ट्यधिका स्यात् ६६०। तथाऽविरतसम्यग्दृष्टेः पष्टिर्देशविरतस्य द्विपञ्चाशत् , मिलिता द्वादशोत्तरं शतं, तत् पड्भिरुपयोगैर्गुण्यते, पट्शती द्विसप्तत्यधिका स्यात् ६७२। तथा प्रमत्तस्य चतुश्चत्वारिंशत् , अप्रमत्तस्य चतुश्चत्वारिंशत् , अपूर्वकरणस्य विंशतिः, सर्वसंख्ययाऽष्टाधिकं शतं १०८, तत्सप्तभिरुपयोगैर्गुण्यते, सप्तशती पट्पञ्चाशदधिका स्यात् ७५६। सर्वसंख्यया विंशतिशतान्यष्टाशीत्यधिकानि २०८८। एतानि चतुर्विंशत्या गुण्यन्ते, ततः पञ्चाशत्सहस्राणि द्वादशोत्तरशताधिकानि स्युः ५०११२। ततो द्विकोदयपदानि चतुर्विंशतिः एकोदयपदानि पञ्च, सर्वमीलने एकोनत्रिंशत् , सा सप्तभिरुपयोगैर्गुण्यते, जाते त्र्युत्तरे द्वे शते, ते पूर्वराशौ प्रक्षिप्यन्ते, ततो जातः पूर्वराशिः पञ्चाशत्सहस्राणि शतत्रयं च पञ्चदशोत्तरं ५०३१५। एतावन्त्युपयोगगुणितान्युदयपदानि भवन्ति।

अथ लेश्यागुणिता उदयभङ्गा उदयपदानि च भाव्यन्ते–तत्र मिथ्यादृष्ट्यादिष्वविरतसम्यग्दृष्ट्यन्तेषु प्रत्येकं पड् लेश्याः, देशविरतप्रमत्ताप्रमत्तेषु तेजःपद्मशुक्लरूपास्तिस्रस्तिस्रः, कृष्णादिलेश्यासु देशविरत्यादिप्रतिपत्तेरभावात् , अपूर्वकरणादौ चैका शुक्ललेश्या। मिथ्यादृष्ट्यादिषु चाष्टचतुरादिकाश्चतुर्विंशतयो यथायोगं लेश्याभिर्गुण्यन्ते। तथाहि–मिथ्यादृष्टेरष्टौ, सासादनमिश्रयोश्चतस्रश्चतस्रः, अविरतसम्यग्दृष्टेरष्टौ, मिलिताश्चतुर्विंशतिः, सा पड्भिर्लेश्याभिर्गुण्यते, जातं चतुश्चत्वारिंशं शतं १४४। तथा देशविरतप्रमत्ताप्रमत्तानां प्रत्येकमष्टौ, मिलिताश्चतुर्विंशतिः, तस्यास्तिसृभिर्लेश्याभिर्गुणने द्विसप्ततिः ७२। अपूर्वकरणे चतस्रश्चतुर्विंशतयः, ता एकया लेश्यया गुणिताश्चतस्र एव ४। सर्वे मिलिता द्वे शते विंशत्यधिके २२०, ते चतुर्विंशत्या गुण्यन्ते, जातान्यशीत्यधिकानि द्विपञ्चाशच्छतानि।

ततो द्विकोदया द्वादश, एकोदयाः पञ्च, मिलिताः सप्तदश. ते पूर्वराशौ प्रक्षिप्यन्ते, ततः सप्तनवत्यधिकानि द्विपञ्चाशच्छतानि स्युः ५२९७, इयन्तो लेश्यागुणिता उदयभङ्गाः। उक्तं च–"तिगहीणा तेवन्ना सया उ उदयाण हुंति लेसाण"। अथैतत्पदसंख्या समानीयते–मिथ्यादृष्टौ पदध्रुवका अष्टषष्टिः, सासादने मिश्रे च द्वात्रिंशत्, अविरतसम्यग्दृष्टौ षष्टिः, सर्वसंख्यया द्विनवत्यधिकं शतम्। एते षड्भिर्लेश्याभिर्गुण्यन्ते, ततो द्विपञ्चाशदधिकान्येकादश शतानि स्युः ११५२। तथा देशविरते द्विपञ्चाशत्, प्रमत्तेऽप्रमत्ते च चतुश्चत्वारिंशत्, सर्वसंख्यया चत्वारिंशं शतं जातं १४०, तच्च तिसृभिर्लेश्याभिर्गुण्यते, ततो जाता विंशत्यधिका चतुःशती ४२०। सर्वसंख्यया जातानि द्विनवत्यधिकानि पञ्चदश शतानि, एतानि चतुर्विंशतिगतानीति चतुर्विंशत्या गुण्यन्ते, जातान्यष्टात्रिंशत्सहस्राणि द्वे शते चाष्टाधिके ३८२०८। ततो द्विकोदयैकोदयपदान्येकोनत्रिंशत्प्रक्षिप्यन्ते, ततो जातान्यष्टात्रिंशत्सहस्राणि शतद्वयं च सप्तत्रिंशदधिकं ३८२३७। उक्तं च–"अडतीससहस्साइं पयाण सय दो य सगतीसा"।

अथ योगैः सह गुणनयोदयभङ्गा उदयपदानि च भाव्यन्ते–इह मिथ्यादृष्ट्यादिषु सूक्ष्मसम्परायान्तेषु द्विपञ्चाशच्चतुर्विंशतीनां (८–४–४–८–८–८–८–४) द्वादशानां (१२) चानिवृत्तौ द्विकोदयभङ्गानां पञ्चानां (५) चैकोदयभङ्गानां मीलने द्वादश शतानि पञ्चषष्टिश्चोदयभङ्गा भवन्ति १२६५। तत्र वाग्योगचतुष्टयमनोयोगचतुष्टयौदारिककाययोगाः सर्वेष्वपि मिथ्यादृष्ट्यादिगुणस्थानेषु संभवन्तीति प्रागुक्तभङ्गा नवभिर्गुण्यन्ते, जातान्येकादश सहस्राणि त्रीणि शतानि पञ्चाशीतिश्च ११३८५। तथा मिथ्यादृष्टेर्वैक्रियकाययोगेऽष्टापि चतुर्विंशतयः प्राप्यन्ते। वैक्रियमिश्रे औदारिकमिश्रे कार्मणकाययोगे च प्रत्येकं चतस्रश्चतस्रः, यतः सप्तोदय एका, अष्टोदये द्वे, नवोदये चैकेति चतस्रः, अनन्तानुबन्ध्युदयरहिता इह न प्राप्यन्ते, पूर्वं हि वेदकसम्यग्दृष्टिना सताऽनन्तानुबन्धिनो विसंयोज्य

परिणामपरावृत्त्या मिथ्यात्वं गतेन भूयस्ते बद्धुमारभ्यन्ते, तस्यैव मिथ्यादृष्टेर्बन्धावलिकामात्रं कालं यावदनन्तानुबन्ध्युदयो न प्राप्यते, अनन्तानुबन्धिनश्च विसंयोज्य भूयोऽपि मिथ्यात्वं प्रतिपद्यते, जघन्यतोऽप्यन्तर्मुहूर्त्तावशेषायुष्क एवानन्तानुबन्ध्युदयरहितस्य मिथ्यादृष्टेः कालकरणप्रतिषेधात्, ततोऽपान्तरालगतौ वर्त्तमानस्य भवान्तरे वा प्रथमत एवोत्पन्नस्य मिथ्यादृष्टेः सतोऽनन्तानुबन्ध्युदयरहिता उदयविकल्पा न प्राप्यन्ते। अत्र च कार्मणकाययोगोऽपान्तरालगतौ औदारिकमिश्रवैक्रियमिश्रकाययोगौ च भवान्तरे उत्पद्यमानस्य, एतच्च बाहुल्यमाश्रित्योक्तं, अन्यथा तिर्यङ्मनुष्याणामपि मिथ्यादृशां वैक्रियकारिणां वैक्रियमिश्रमवाप्यत एव, परं चूर्णिकृता तन्नात्र विवक्षितं, ततः कार्मणकाययोगादौ प्रत्येकं चतस्रश्चतुर्विंशतयोऽनन्तानुबन्ध्युदयरहिता न प्राप्यन्ते। तथा सासादनस्य कार्मणकाययोगे वैक्रियकाययोगे औदारिकमिश्रकाययोगे च प्रत्येकं चतस्रश्चतुर्विंशतयः। सम्यग्मिथ्यादृष्टेर्वैक्रियकाययोगे चतस्रः। अविरतसम्यग्दृष्टेर्वैक्रिय(काय)योगेऽष्टौ। देशविरतस्य वैक्रिये वैक्रियमिश्रे च प्रत्येकमष्टावष्टौ। प्रमत्तसंयतस्यापि वैक्रिये वैक्रियमिश्रे च प्रत्येकमष्टावष्टौ। अप्रमत्तसंयतस्य वैक्रियकाययोगेऽष्टौ। सर्वसङ्ख्यया चतुरशीतिश्चतुर्विंशतयः। एताश्चतुर्विंशत्या गुणिता द्वे सहस्रे षोडशोत्तरे भवन्ति, तानि पूर्वराशौ प्रक्षिप्यन्ते। तथा सासादनस्य वैक्रियमिश्रे वर्त्तमानस्य ये चत्वारोऽमी उदयस्थानविकल्पाः—सप्तोदय एकविधः, द्विविधोऽष्टोदये, एकविधश्च नवोदये इति, एषु नपुंसकवेदो न लभ्यते, वैक्रियमिश्रकाययोगिषु नपुंसकवेदिषु नारकेषु मध्ये सासादनस्योत्पादाभावात्। ये चाविरतसम्यग्दृष्टेर्वैक्रियमिश्रे कार्मणकाययोगे च प्रत्येकमष्टावष्टावुदयस्थानविकल्पास्तेषु स्त्रीवेदो न लभ्यते, वैक्रियकाययोगिषु स्त्रीवेदिषु मध्येऽविरतसम्यग्दृष्टेरुत्पादाभावात्। एतच्च प्रायोवृत्त्योक्तम्, अन्यथा कदाचित् स्त्रीवेदिष्वपि मध्ये तदुत्पादो द्रष्टव्यः, उक्तं च सप्ततिकाचूर्णौ—"कयाइ होज्ज इत्थिवेयगेसु त्ति", ततश्चतुर्विंशत्यष्टकस्य द्विनवत्यधिकशतप्रमाणस्य १९२ त्रिभागश्चतुःषष्टि-

रूपः स्त्रीवेदोदयलभ्यः प्रत्येकं कार्मणकाययोगे च न संभवति, सर्वसङ्ख्ययाऽष्टाविंशत्यधिकं शतं १२८,तथाऽविरतिसम्यग्दृष्टेरौदारिकमिश्रकाययोगे वर्त्तमानस्य पुंवेद एवैको भवति, न स्त्रीवेदनपुंसकवेदौ, तिर्यग्मनुष्येषु स्त्रीवेदनपुंमकवेदिषु मध्येऽविरतसम्यग्दृष्टेरुत्पादाभावात्। एतच्च प्राचुर्यमधिकृत्योक्तं, तेन मल्लिस्वामिन्यादिभिर्न व्यभिचारः। तथा प्रमत्तसंयतस्याहारककाययोगे आहारकमिश्रे चाप्रमत्तस्याहारककाययोगे च ये प्रत्येकमुदयस्थानविकल्पा अष्टौ तेऽपि स्त्रीवेदरहिता द्रष्टव्याः। आहारकं हि चतुर्दशपूर्विणामेव स्यात्, स्त्रीणां च पूर्वाधिगमलब्ध्यभाव इति। एते च सर्वेऽप्युदयस्थानविकल्पाश्चतुश्चत्वारिंशत्, एतेषु चोक्तप्रकारेण द्वौ द्वावेव वेदौ लब्धौ, ततः प्रत्येकं षोडश भङ्गाः, ततश्चतुश्चत्वारिंशत् षोडशभिर्गुणिताः सप्त शतानि चतुरुत्तराणि भवन्ति, तानि सर्वाणि पूर्वराशौ प्रक्षिप्यन्ते। तथाऽविरतसम्यग्दृष्टेरौदारिकमिश्रे येऽष्टोदयस्थानविकल्पास्ते पुंवेदसहिता एव प्राप्यन्ते, तिर्यङ्मनुष्येषु स्त्रीवेदनपुंसकवेदिषु मध्येऽविरतसम्यग्दृष्टेरनुत्पादात्। एतेषु चैकेन वेदेन प्रत्येकमष्टावेव लभ्यन्ते, ततोऽष्टावष्टभिर्गुणयित्वा पूर्वराशौ प्रक्षिप्यन्ते, ततो जातानि चतुर्दशसहस्राणि शतमेकं चैकोनसप्तत्यधिकं १४१६९, एतावन्तो मिथ्यादृष्ट्यादिषु सूक्ष्मसम्परायान्तेषु गुणस्थानेषूदयभङ्गा योगगुणिताः प्राप्यन्ते। प्रतिगुणस्थानं पुनरेवं–मिथ्यादृष्टावुदयस्थानभङ्गा अष्टौ, ते चतुर्विंशत्या गुण्यन्ते, जातं द्विनवत्युत्तरं शतं। तत्र नव योगाः प्राग्वत्, दशमश्च वैक्रियकाययोग इत्येतैर्दशभिर्गुणने जातान्येकोनविंशतिशतानि विंशत्युत्तराणि। तथा वैक्रियमिश्रादियोगत्रये प्रत्येकं चतस्रश्चतुर्विंशतयश्चतुर्विंशत्या गुण्यन्ते, षण्णवतिर्भवति, वैक्रियमिश्रादित्रयेण गुणने जाते द्वे शते अष्टाशीत्युत्तरे, तयोः पूर्वराशौ प्रक्षेपे द्वाविंशतिशतान्यष्टोत्तराणि स्युः। सासादने चत्वारो भङ्गाश्चतुर्विंशतिगुणिताः षण्णवतिः स्युः, ते द्वादशयोगैर्गुण्यन्ते, जातान्येकादशशतानि द्विपञ्चाशदुत्तराणि। सासादनस्य वैक्रियमिश्रस्थस्य चत्वारो भङ्गाः, तत्र नपुंसकवेदो न स्यात्, ततः प्रत्येकं षोडश भङ्गाः,

तेश्चत्वारो गुणिता जाताश्चतुःषष्टिः, ते पूर्वराशौ क्षिप्यन्ते, जातानि द्वादश शतानि षोडशोत्तराणि । एवं मिश्रादिष्वपि पूर्वोक्तानुसारेणावगन्तव्यम् । अथ पदसङ्ख्या योगगुणिता भाव्यते—तत्र मिथ्यादृष्टेरष्टषष्टिः पदध्रुवकाः, ते त्रयोदशभिर्योगैर्गुण्यन्ते, जातान्यष्टौ शतानि चतुरशीत्यधिकानि ८८४ । सासादने द्वात्रिंशत् पदध्रुवकाः, तेऽपि त्रयोदशभिर्योगैर्गुण्यन्ते, जातानि षोडशाधिकानि चत्वारि शतानि ४१६ । मिश्रे द्वात्रिंशत् पदध्रुवकाः, ते दशभिर्योगैर्गुण्यन्ते, जातानि विंशानि त्रीणि शतानि ३२० । अविरतसम्यग्दृष्टौ षष्टिः पदध्रुवकाः, ते त्रयोदशभिर्योगैर्गुण्यन्ते, जातानि सप्त शतान्यशीत्यधिकानि ७८० । देशविरते द्विपञ्चाशत्पदध्रुवकाः, ते चैकादशभिर्योगैर्गुण्यन्ते, जातानि पञ्च शतानि द्विसप्तत्यधिकानि ५७२ । प्रमत्तसंयतेऽपि चतुश्चत्वारिंशत्पदध्रुवकाः, ते त्रयोदशभिर्योगैर्गुण्यन्ते, जातानि पञ्च शतानि द्विसप्तत्यधिकानि ५७२ । अप्रमत्तसंयतेऽपि चतुश्चत्वारिंशत्पदध्रुवकाः, ते चैकादशभिर्योगैर्गुण्यन्ते जातानि चत्वारि शतानि चतुरशीत्यधिकानि ४८४ । अपूर्वकरणे विंशतिः पदध्रुवकाः, ते नवभिर्योगैर्गुण्यन्ते, जातमशीत्यधिकं शतं १८० । सर्वसङ्ख्यया द्विचत्वारिंशच्छतान्यष्टाधिकानि ४२०८ । एतानि चतुर्विंशत्या गुण्यन्ते, जातं द्विनवत्यधिकनवशतोत्तरं लक्षं १००९९२ । तथा द्विकोदयपदानि चतुर्विंशतिः, एकोदयपदानि च पञ्च, सर्वमीलने एकोनत्रिंशत्, ते नवभिर्योगैर्गुण्यन्ते, जातमेकषष्ट्यधिकं शतद्वयं, तच्च पूर्वराशौ क्षिप्यते, ततो जातमेकं लक्षं द्वादश च शतानि त्रिपञ्चाशदधिकानि १०१२५३ । अस्माच्च राशेरसंभवीनि पदानि शोध्यन्ते, तद्यथा—सप्तोदय एकः अष्टोदयौ द्वौ नवोदयश्चैक इत्येतेऽनन्तानुबन्ध्युदयरहिताः । तत्र सर्वसङ्ख्यया द्वात्रिंशत्पदध्रुवकाः, ते वैक्रियमिश्रादियोगत्रये न संभवन्ति, हेतुः प्रागेवोक्तः, ततो द्वात्रिंशत्त्रिभिर्गुणिता जाता षण्णवतिः, ते चतुर्विंशत्या गुण्यन्ते, जातानि त्रयोविंशतिशतानि चतुरुत्तराणि २३०४ । एतावन्ति पदानि मिथ्यादृष्टेरसंभवीनि । तथा सासादनस्य वैक्रि-

यमिश्रकाययोगे वर्त्तमानस्य नपुंसकवेदोदयो न घटते, हेतुस्तूक्त एव, नपुंसकवेदेन चाष्टौ भङ्गा लभ्यन्ते, ते द्वात्रिंशता पदध्रुवकैर्गुण्यन्ते, जाते द्वे शते षट्पञ्चाशदधिके २५६ । इयन्ति पदानि सासादने न संभवन्ति । तथाऽविरतसम्यग्दृष्टेः कार्मणकाययोगिनो वैक्रियमिश्रकाययोगिनो वा स्त्रीवेदोदयो नोपपद्यते, अष्टषष्टिश्च तत्र पदध्रुवकाः, स्त्रीवेदेन चाष्टौ भङ्गा लभ्यन्ते, ततः षष्टिरष्टभिर्गुणिताश्चत्वारि शतान्यशीत्यधिकानि भवन्ति ४८० । एतानि च प्रत्येकं कार्मणे वैक्रियमिश्रे च न संभवन्तीति नव शतानि षष्ट्यधिकानि भवन्ति ९६० । तथाऽविरतसम्यग्दृष्टेरौदारिकमिश्रकाययोगे वर्त्तमानस्य स्त्रीनपुंसकवेदौ न भवतः, ताभ्यां च षोडश भङ्गा लभ्यन्ते, ततः षष्टिः षोडशभिर्गुणिता जातानि नव शतानि षष्ट्यधिकानि ९६० । सर्वसङ्ख्ययाऽविरतसम्यग्दृष्टावसंभवीनि पदानि विंशान्येकोनविंशतिशतानि १९२० । तथा प्रमत्तसंयतस्याहारके आहारकमिश्रे च स्त्रीवेदो न लभ्यते, प्रमत्तसंयते च पदध्रुवकाश्चतुश्चत्वारिंशत्, स्त्रीवेदेन चाष्टौ भङ्गा लभ्यन्ते, ततश्चतुश्चत्वारिंशदष्टगुणितास्त्रीणि शतानि द्विपञ्चाशदधिकानि ३५२ स्युः, तानि चाहारकद्विकेन गुणितानि, सर्वसंख्यया प्रमत्तसंयतस्यासंभवीनि पदानि सप्त शतानि चतुरुत्तराणि ७०४ । अप्रमत्तसंयतस्याप्युक्तरीत्याऽऽहारककाययोगे त्रीणि शतानि द्विपञ्चाशदधिकानि ३५२ पदान्यसंभवीनि । सर्वसंख्ययाऽसंभवीनि पदानि पञ्चपञ्चाशच्छतानि षट्त्रिंशदुत्तराणि, एतानि पूर्वराशेः शोध्यन्ते, ततो भवन्ति पञ्चनवतिसहस्राणि सप्त शतानि च सप्तदशोत्तराणि । एतावन्ति योगगुणितानि पदानि मोहनीयस्य सकलगुणस्थानकेषु भवन्ति । तदेवमुक्तो मोहनीयस्य प्रागनुक्तो विशेषः ।

अथ नामकर्मणो विशेष उच्यते–तत्र नाम्नोऽव्यक्तबन्धोदयसत्तास्थानाभिधानप्रस्तावे गुणस्थानेषु गतिषु च बन्धोदयसत्तास्थानानि यद्यपि सामान्यतः कथितानि तथापि नाप्रपञ्चितज्ञैः सामान्यतःकथितान्यवगन्तुं शक्यन्ते इति तेषामवबोधाय तानि प्रपञ्चतः कथ्यन्ते–

योगगुणितोदयपदानि

तत्र मिथ्यादृष्टौ नामः षट् बन्धस्थानानि-त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्चेति । तत्रापर्याप्तैकेन्द्रियप्रायोग्यं बध्नतस्त्रयोविंशतिः, तस्यां च बध्यमानायां बादरसूक्ष्मप्रत्येकसाधारणैश्चत्वारो भङ्गाः । पर्याप्तैकेन्द्रियप्रायोग्यमपर्याप्तद्वित्रिचतुःपञ्चेन्द्रियतिर्यग्मनुष्यप्रायोग्यं च बध्नतः पञ्चविंशतिः । तत्र पर्याप्तैकेन्द्रियप्रायोग्यायां पञ्चविंशतौ बध्यमानायां भङ्गा विंशतिः । अपर्याप्तद्वीन्द्रियादिप्रायोग्यायां तु बध्यमानायां प्रत्येकमेकैको भङ्ग इति सर्वसंख्यया पञ्चविंशतिः । पर्याप्तैकेन्द्रियप्रायोग्यं बध्नतः षड्विंशतिः, तस्यां च बध्यमानायां भङ्गाः षोडश । देवगतिप्रायोग्यं नरकगतिप्रायोग्यं च बध्नतोऽष्टाविंशतिः, तत्र देवगतिप्रायोग्यायामष्टाविंशतावष्टौ भङ्गाः, नरकगतिप्रायोग्यायां चैक इति सर्वसंख्यया नव । पर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्यं बध्नत एकोनत्रिंशत् । तत्र पर्याप्तद्वित्रिचतुरिन्द्रियप्रायोग्यायामेकोनत्रिंशति बध्यमानायां प्रत्येकमष्टौ भङ्गाः । तिर्यक्पञ्चेन्द्रियप्रायोग्यायां षट्चत्वारिंशच्छतान्यष्टाधिकानि ४६०८ । मनुष्यगतिप्रायोग्यायामप्येतावन्त एव भङ्गाः । सर्वसंख्यया चत्वारिंशदधिकानि द्विनवतिशतानि ९२४० । देवगतिप्रायोग्या त्वेकोनत्रिंशत्तीर्थकरनामसहितेति मिथ्यादृष्टेर्न बन्धमायाति । पर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यं बध्नतस्त्रिंशत्, तत्र पर्याप्तद्वित्रिचतुरिन्द्रियप्रायोग्यायां त्रिंशति बध्यमानायां प्रत्येकमष्टौ भङ्गाः । तिर्यक्पञ्चेन्द्रियप्रायोग्यायां त्वष्टाधिकानि षट्चत्वारिंशच्छतानि ४६०८ । सर्वसंख्यया द्वात्रिंशदुत्तराणि षट्चत्वारिंशच्छतानि ४६३२ । या च मनुष्यगतिप्रायोग्या जिननामसहिता त्रिंशत्, या च देवगतिप्रायोग्याऽऽहारकद्विकसहिता ते उभे अपि मिथ्यादृष्टेर्न बन्धमायातः ।

तथा मिथ्यादृष्टेर्नामोदयस्थानानि, तद्यथा-एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशत् । एतानि सर्वाण्यपि नानाजीवापेक्षया यथा प्रागुक्तानि तथाऽत्रापि वाच्यानि, केवलमाहारकसंयतानां वैक्रियसंयतानां केव-

लिनां च सम्बन्धीनि न वाच्यानि, तेषाममिथ्यादृष्टित्वात् , सर्वसंख्यया मिथ्यादृष्टावुदयस्थानभङ्गाः सप्त सहस्राणि सप्त शतानि त्रिसप्तत्यधिकानि ७७७३ ।

तथा मिथ्यादृष्टेः षट् सत्तास्थानानि, तद्यथा–द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च । तत्र द्विनवतिश्चतुर्गतिकानामपि मिथ्यादृष्टीनां, एकोननवतिः प्राग्बद्धनरकायुष्कस्य वेदकसम्यग्दृष्टेस्तीर्थंकरनाम बध्ध्वा परिणामपरावृत्त्या मिथ्यात्वं गतस्य नरकेषु समुत्पद्यमानस्यान्तर्मुहूर्तं यावदुत्पत्तेरूर्ध्वमन्तर्मुहूर्त्तानन्तरं तु सोऽपि सम्यक्त्वं प्रतिपद्यते, अष्टाशीतिश्चतुर्गतिकानामपि मिथ्यादृष्टीनां, षडशीतिरशीतिश्चैकेन्द्रियेषु यथायोगं देवगतिप्रायोग्ये नरकगतिप्रायोग्ये चोद्वलिते सति लभ्यते, एकेन्द्रियभवादुद्धृत्य विकलेन्द्रियेषु तिर्यक्पञ्चेन्द्रियेषु मनुष्येषु वा समुत्पन्नानां सर्वपर्याप्तिभावादूर्ध्वमप्यन्तर्मुहूर्त्तं यावल्लभ्यते, अष्टसप्ततिस्तेजोवायूनां मनुष्यद्विके उद्वलितेऽवसेया, तद्भवादुद्धृत्योत्पन्नानामन्तर्मुहूर्त्तं यावत्, परतो नियमेन मनुष्यद्विकबन्धसंभवात् । तदेवं सामान्येन मिथ्यादृष्टेर्बन्धोदयसत्तास्थानान्युक्तानि । अथ संवेध उच्यते–तत्र मिथ्यादृष्टेस्त्रयोविंशतिं बध्नतः प्रागुक्तानि नवाप्युदयस्थानानि ज्ञेयानि । नवरमेकविंशतिपञ्चविंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपेषु षट्स्वुदयस्थानेषु देवनैरयिकाश्रिता भङ्गा न प्राप्यन्ते, तेषां त्रयोविंशत्यबन्धकत्वात् तस्या अपर्याप्तैकेन्द्रियप्रायोग्यत्वात् । सत्तास्थानानि पञ्च–द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्चेति । तत्रैकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशत्युदयेषु पञ्च सत्तास्थानानि । नवरं पञ्चविंशत्युदये तेजोवायुकायिकानधिकृत्याष्टसप्ततिः प्राप्यते । षड्विंशत्युदये तेजोवायुकायिकान् तद्भवादुद्धृत्य विकलेन्द्रियतिर्यक्पञ्चेन्द्रियेषु चोत्पन्नानाश्रित्य प्राप्यते । सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपेषूदयेषु अष्टसप्ततिवर्जानि चत्वारि । सर्वसंख्यया त्रयोविंशतिबन्धके चत्वारिंशत्सत्तास्थानानि । एवं

पञ्चविंशतिपड्विंशतिबन्धकानामपि वाच्यम् । केवलमिह देवोऽप्यात्मीयेषु सर्वेष्वप्युदयस्थानेषु वर्त्तमानः पर्याप्तैकेन्द्रियप्रायोग्यां पञ्च-विंशतिं न बध्नन् संग्राह्यः । नवरं पञ्चविंशतिबन्धे बादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभदुर्भगानादेययशःकीर्त्ययशःकीर्त्तिपदैरष्टौ भङ्गाः, न शेषाः, सूक्ष्मसाधारणपर्याप्तेषु देवस्यानुत्पादात् । सत्तास्थानभावना पञ्चविंशतिबन्धे षड्विंशतिबन्धे च प्राग्वत् । सर्वसंख्यया चत्वारिंशत् प्रत्येकं सत्तास्थानानि । अष्टाविंशतिबन्धकस्य मिथ्यादृष्टेर्द्वे उदयस्थाने त्रिंशदेकत्रिंशच्चेति, तत्र त्रिंशत्तिर्यक्पञ्चेन्द्रिय-मनुष्यानधिकृत्य, एकत्रिंशत्तिर्यक्पञ्चेन्द्रियानेव । सत्तास्थानानि चत्वारि-द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिश्च । तत्र त्रिंशदुदये चत्वार्यपि, तत्राप्येकोननवतिर्बद्धजिननाम्नो वेदकसम्यग्दृष्टेः परिणामपरावृत्त्या मिथ्यात्वं गतस्य नरकाभिमुखस्य तद्योग्यामष्टाविंशतिं बध्नतोऽवसेया । शेषाणि तु त्रीण्यविशेषेण तिर्यङ्मनुष्याणाम् । एकत्रिंशदुदये एकोननवतिवर्जानि त्रीणि, एकोननवतिस्तु जिननाम-सहितेति तिर्यक्षु न संभवति । सर्वसंख्ययाऽष्टाविंशतिबन्धे सत्तास्थानानि सप्त । देवगतिप्रायोग्यवर्जां शेषामेकोनत्रिंशतं विकलेन्द्रिय-तिर्यक्पञ्चेन्द्रियप्रायोग्यां मनुष्यगतिप्रायोग्यां च बध्नतो मिथ्यादृष्टेः सामान्येन नवापि प्राक्तनान्युदयस्थानानि, षट् च सत्तास्था-नानि-द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च । तत्रैकविंशत्युदये सर्वाण्यपीमानि प्राप्यन्ते, तत्राप्येकोननवतिर्बद्ध-तीर्थकरनाम्नो मिथ्यात्वगतं नैरयिकमधिकृत्य ज्ञेया, द्विनवतिरष्टाशीतिश्च देवनैरयिकमनुजविकलेन्द्रियतिर्यक्पञ्चेन्द्रियैकेन्द्रियानपेक्ष्य, षडशीतिश्च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजकेन्द्रियानधिकृत्य, अष्टसप्ततिरेकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य । चतुर्विंश-त्युदये एकोननवतिवर्जानि शेषाणि पञ्च सत्तास्थानानि, तानि चैकेन्द्रियानेवाधिकृत्य ज्ञेयानि, अन्यत्र चतुर्विंशत्युदयाभावात् । पञ्च-विंशत्युदये षडपि सत्तास्थानानि यथैकविंशत्युदये भावितानि तथा भावनीयानि । षड्विंशत्युदये एकोननवतिवर्जानि पञ्च प्राग्वद्भाव्यानि

एकोननवतिश्च नरकेषूत्पित्सोः संभविनी, न च नैरयिकस्य षड्विंशत्युदय इति तद्वर्जनम् । सप्तविंशत्युदयेऽष्टसप्ततिवर्जानि पञ्च, तत्रैकोननवतिः प्रागुक्तस्वरूपं नैरयिकमधिकृत्य, द्विनवतिरष्टाशीतिश्च देवनैरयिकमनुजविकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य, षडशीतिरशीतिश्चैकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य, अष्टसप्ततिस्तु न संभवति, तेजोवायुवर्जानामातपोद्योतान्यतरसहितानां नारकादीनां वा सप्तविंशत्युदयस्य भावात्, तेषां चाष्टसप्ततेर्मनुष्यद्विकबन्धावश्यकत्वेनासंभवात् । एतान्येव पञ्चाष्टाविंशत्युदयेऽपि द्रष्टव्यानि, तत्रैकोननवतिद्विनवत्यष्टाशीतिभावना प्राग्वदेव, षडशीतिरशीतिश्च विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्यावसेया । एवमेकोनत्रिंशदुदयेऽप्येतान्येव सत्तास्थानानि भावनीयानि । त्रिंशदुदये चत्वारि–द्विनवतिरष्टाशीतिः षडशीतिरशीतिश्चेति । एतानि विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यानधिकृत्य ज्ञेयानि । एकत्रिंशदुदयेऽप्येतान्येव चत्वारि, तानि विकलेन्द्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य द्रष्टव्यानि। सर्वसंख्यया मिथ्यादृष्टेरेकोनत्रिंशतं बध्नतः पञ्चचत्वारिंशत्सत्तास्थानानि। देवगतिप्रायोग्या या त्वेकोनत्रिंशत्सा मिथ्यादृशा न बध्यते, हेतुस्तत्रोक्त एव। तथा मनुष्यगतिदेवगतिप्रायोग्यवर्जां शेषां त्रिंशतं विकलेन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यां बध्नतः सामान्येन प्रागुक्तानि नवोदयस्थानानि, पञ्च च सत्तास्थानानि एकोननवतिवर्जानि एकोननवतिस्त्वेकोननवतिसत्कर्मणस्तिर्यग्गतिप्रायोग्यबन्धारम्भासंभवान्न संभवति, तानि च पञ्च सत्तास्थानान्येकविंशतिचतुर्विंशतिपञ्चविंशतिषड्विंशत्युदयेषु प्राग्वद्भावनीयानि । सप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपेषु पञ्चसूदयस्थानेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि । अष्टसप्ततिनिषेधहेतुश्च प्रागुक्त एव स्मर्त्तव्यः। सर्वसंख्यया मिथ्यादृष्टेस्त्रिंशतं बध्नतश्चत्वारिंशत्सत्तास्थानानि । मनुजगतिदेवगतिप्रायोग्या च त्रिंशन्मिथ्यादृष्टेर्न बन्धमायाति, मनुजगतिप्रायोग्यायास्त्रिंशतो जिननाम्ना देवगतिप्रायोग्यायाश्चाहारकद्विकेन सहितत्वात्, जिननामाहारकद्विकयोश्च मिथ्यादृष्टे-

संभवात् । तदेवमुक्तो मिथ्यादृष्टेर्बन्धोदयसत्तासंवेधः । सम्प्रति सासादनस्य बन्धोदयसत्तास्थानान्युच्यन्ते -सासादनस्य त्रीणि बन्धस्था-
नानि-अष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्चेति । तत्राष्टाविंशतिर्द्विधा–देवगतियोग्या नरकगतियोग्या (च)। तत्र द्वितीया सासादनस्य बन्धाऽनर्हा,
आद्यायाश्च बन्धकास्तिर्यक्पञ्चेन्द्रिया मनुष्याश्च। तस्यां च बध्यमानायामष्टौ भङ्गाः। एकोनत्रिंशतं तिर्यक्पञ्चेन्द्रियप्रायोग्यां मनु-
ष्यप्रायोग्यां वा सासादना एकेन्द्रिया विकलेन्द्रिया तिर्यक्पञ्चेन्द्रिया मनुष्या देवा नैरयिकाश्च बध्नन्ति, न शेषाम्, अत्र भङ्गाश्चतुःषष्टि
शतानि. तथाहि–द्विविधामप्येकोनत्रिंशतं बध्नतः सासादना हुण्डं सेवार्त्तं च न बध्नन्ति, मिथ्यात्वोदयाभावात्। ततस्तिर्यक्पञ्चेन्द्रिय-
प्रायोग्यामेकोनत्रिंशतं बध्नतः पञ्चभिः संस्थानैः पञ्चभिः संहननैः शुभाशुभखगतिभ्यां स्थिरास्थिराभ्यां शुभाशुभाभ्यां सुभगदुर्भगाभ्यां
सुस्वरदुःस्वराभ्यामादेयानादेयाभ्यां यशःकीर्त्ययशःकीर्त्तिभ्यां च भङ्गा द्वात्रिंशच्छतानि ३२००। इयन्त एवेत्थं मनुष्यगतिप्रायोग्यामपि
बध्नतः ३२००। सर्वसंख्यया चतुःषष्टिशतानि। त्रिंशतं च तिर्यक्पञ्चेन्द्रियप्रायोग्यामेव सोद्योतां सासादना एकेन्द्रिया विकलेन्द्रिया-
स्तिर्यक्पञ्चेन्द्रिया मनुष्या देवा नैरयिका वा बध्नन्ति, न शेषां, तां च बध्नतां भङ्गाः प्राग्वत् द्वात्रिंशच्छतानि। सर्वबन्धस्थानभङ्गा
अष्टोत्तराणि षण्णवतिशतानि ९६०८। सासादनस्योदयस्थानानि सप्त, तथाहि–एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिरेकोन-
त्रिंशत्त्रिंशदेकत्रिंशच्च। तत्रैकविंशत्युदय एकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य, नरकेषु सासादनानुत्पत्तेस्तद्विपर्यक-
विंशत्युदयालाभः। तत्रैकेन्द्रियाणामेकविंशत्युदये बादरपर्याप्तेन सह यशःकीर्त्ययशःकीर्त्तिभ्यां द्वावेव भङ्गौ, न शेषाः, सूक्ष्मेष्वपर्याप्तेषु
मध्ये सासादनस्यानुत्पादात्। अत एव विकलेन्द्रियाणां तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च प्रत्येकमपर्याप्तेन सह य एकको भङ्गः
स इह न भवति, किं तु शेषा एव। ते च विकलेन्द्रियाणां प्रतिभेदं द्वौ द्वाविति षट्, तिर्यक्पञ्चेन्द्रियाणामष्टौ, मनुष्याणामष्टौ,

देवानामष्टौ, सर्वसंख्ययैकविंशत्युदये द्वात्रिंशत्। चतुर्विंशत्युदय एकेन्द्रियेषूत्पन्नमात्रस्य, अत्रापि बादरपर्याप्तेन सह यशःकीर्त्त्ययशःकीर्त्तिभ्यां द्वावेव भङ्गौ संभवतः, न शेषाः, सूक्ष्मेषु साधारणेषु तेजोवायुषु च मध्ये सासादनस्यानुत्पादात्। पञ्चविंशत्युदयो देवेषूत्पन्नमात्रस्य, तत्राष्टौ भङ्गाः, ते च स्थिरास्थिरशुभाशुभयशःकीर्त्त्ययशःकीर्तिपदैः प्रत्येयाः। षड्विंशत्युदयो विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्येषु मध्ये उत्पन्नमात्रस्य, अत्राप्यपर्याप्तकसहित एकैको भङ्गोऽसंभवी, अपर्याप्तकमध्ये सासादनस्यानुत्पादात्, शेषास्तु सर्वेऽपि संभविनः, ते च विकलेन्द्रियाणां प्रत्येकं द्वाविति षट्, तिर्यक्पञ्चेन्द्रियाणां द्वे शते अष्टाशीत्यधिके २८८, मनुष्याणामपि ते एव २८८, सर्वसंख्यया षड्विंशत्युदये पञ्च शतानि द्व्यशीत्यधिकानि। सप्तविंशत्युदयाष्टाविंशत्युदयौ उत्पत्त्यनन्तरमन्तर्मुहूर्त्तानन्तरभाविनावुत्पत्त्यन्तरमुत्कर्षतः किञ्चिदूनषडावलिकामात्रकालभाविनि सासादने न घटेते। एकोनत्रिंशदुदयो देवनैरयिकाणां स्वस्थानगतानां प्रथमसम्यक्त्वात्प्रच्यवमानानामाप्यते, तत्र देवस्याष्टौ नैरयिकस्य चैक इति सर्वसंख्यया नव भङ्गाः। त्रिंशदुदयस्तिर्यग्मनुष्याणां पर्याप्तानां प्रथमसम्यक्त्वात्प्रच्यवमानानां देवानां चोत्तरवैक्रियस्थानां सासादनानां, तत्र तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च प्रत्येकं द्विपञ्चाशदधिकान्येकादश शतानि ११५२, देवस्याष्टाविति सर्वसंख्यया द्वादशाधिकानि त्रयोविंशतिशतानि भङ्गाः २३१२। एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणां पर्याप्तानां प्रथमसम्यक्त्वात्प्रच्यवमानानां, अत्र भङ्गा एकादश शतानि द्विपञ्चाशदधिकानि ११५२, सर्वसंख्यया सप्तनवत्यधिकानि चत्वारिंशच्छतानि सासादनस्योदयभङ्गाः। सत्तास्थाने द्वे–द्विनवतिरष्टाशीतिश्च, तत्र द्विनवतिराहारकचतुष्टयं बद्ध्वोपशमश्रेणिमारुह्य प्रतिपततः सासादनभावमुपगतस्य, न शेषस्य, अष्टाशीतिश्चतुर्गतिकानामपि सासादनानाम्।

सासादने नाम्नो बन्धोदयसत्तास्थानानि संवेधश्च

अथ संवेध उच्यते–तत्राष्टाविंशतिं बध्नतः सासादनस्य द्वे उदयस्थाने–त्रिंशदेकत्रिंशच्च। अष्टाविंशतिर्हि सासादनस्य बन्धयोग्या

तत: शेषा उदया नोपपद्यन्ते । तत्र मनुष्यमधिकृत्य
देवगतिप्रायोग्या, न च करणापर्याप्तः सासादनो देवगतिप्रायोग्यां बध्नाति, तत: शेषा उदया नोपपद्यन्ते । तत्र मनुष्यमधिकृत्य
त्रिंशदुदये द्वे अपि ९२–८८ सत्तास्थाने । तिर्यक्पञ्चेन्द्रियानधिकृत्याष्टाशीतिरेव, द्विनवतेरुपशमश्रेणीतः प्रतिपात एव लाभात् , तिरश्चां
चोपशमश्रेण्यसंभवात् । एकत्रिंशदुदये त्वष्टाशीतिरेव, यतोऽसौ तिर्यक्पञ्चेन्द्रियाणामेव, न च तेषां द्विनवतिर्घटते । एकोनत्रिंशतं तिर्य-
क्पञ्चेन्द्रियमनुष्यप्रायोग्यां बध्नतः सप्ताप्युदयस्थानानि, तत्रैकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवनैरयिकाणां सासादनानां
स्वस्वोदयस्थानेषु वर्त्तमानानामेकमेव सत्तास्थानमष्टाशीतिः । नवरं मनुष्यस्य त्रिंशदुदये वर्त्तमानस्योपशमश्रेणीतः प्रतिपततः सासाद-
नस्य द्विनवतिः । एवं त्रिंशद्बन्धकस्यापि वाच्यम् ।

अथ सम्यग्मिथ्यादृष्टेर्बन्धोदयसत्तास्थानान्यभिधीयन्ते–तत्र सम्यग्मिथ्यादृष्टेर्द्वे बन्धस्थाने अष्टाविंशतिरेकोनत्रिंशच्च । तत्र तिर्यग्म-
नुष्याणां सम्यग्मिथ्यादृष्टीनां देवगतिप्रायोग्यमेव बन्धमायाति, ततस्तेषामष्टाविंशतिः, तत्र भङ्गा अष्टौ । एकोनत्रिंशन्मनुष्यगतिप्रा-
योग्यं बध्नतां देवनैरयिकाणां, तत्राप्यष्टौ भङ्गाः । ते चोभयत्रापि स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैः, शेषास्तु परावर्त्तमानाः
प्रकृतयः शुभा एव सम्यग्मिथ्यादृष्टीनां बन्धमायान्ति, ततः शेषभङ्गा न प्राप्यन्ते । त्रीण्युदयस्थानानि–एकोनत्रिंशत्त्रिंशदेकत्रिंशच्च ।
तत्रैकोनत्रिंशति देवानधिकृत्याष्टौ, नैरयिकानधिकृत्य चैक इति सर्वसंख्यया नव भङ्गाः । त्रिंशति तिर्यक्पञ्चेन्द्रियानधिकृत्य सर्व
पर्याप्तिपर्याप्तयोग्यानि द्विपञ्चाशदधिकान्येकादश शतानि ११५२ । मनुष्यानधिकृत्यापि तावन्त्येव ११५२ भङ्गाः । सर्वसंख्यया त्रयो-
विंशतिशतानि चतुरुत्तराणि २३०४ । एकत्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियानधिकृत्य, तत्र भङ्गा द्विपञ्चाशदधिकान्येकादश शतानि ११५२ ।
सर्वोदयस्थानभङ्गाश्चतुस्त्रिंशच्छतानि पञ्चषष्ट्यधिकानि ३४६५ । द्वे सत्तास्थाने–द्विनवतिरष्टाशीतिश्चेति । अथ संवेध उच्यते–सम्य-

अविरतौ नाम्नो बन्धोदय-सत्तास्था-नानि संवे-धश्च

ग्मिथ्यादृष्टेरष्टाविंशतिबन्धकस्य द्वे उदयस्थाने त्रिंशदेकत्रिंशच्चेति। एकैकस्मिन्नुदयस्थाने द्वे द्वे सत्तास्थाने–द्विनवतिरष्टाशीतिश्च। एकोनत्रिंशद्बन्धकस्यैकोनत्रिंशदात्मकमेकमुदयस्थान, अत्रापि ते एव द्वे सत्तास्थाने। तदेवमेकैकस्मिन्नुदयस्थाने द्वे द्वे सत्तास्थाने इति सर्वसंख्यया षट्।

सम्प्रत्यविरतसम्यग्दृष्टेर्बन्धोदयसत्तास्थानानि वाच्यानि। तत्राविरतसम्यग्दृष्टेस्त्रीणि बन्धस्थानानि–अष्टाविंशतिरेकोनत्रिंशत्त्रिंशच्च। तत्र तिर्यग्मनुष्याणामविरतसम्यग्दृष्टीनां देवगतिप्रायोग्यं बध्नतामष्टाविंशतिः, अत्राष्टौ भङ्गाः, ते हि न शेषगतिप्रायोग्यं बध्नन्ति, तेन नरकगतिप्रायोग्याऽष्टाविंशतिर्न लभ्यते। मनुष्याणां देवगतिप्रायोग्यं जिननामसहितं बध्नतामेकोनत्रिंशत्, अत्राप्यष्टौ भङ्गाः। देवनैरयिकाणां मनुष्यगतिप्रायोग्यं बध्नतामेकोनत्रिंशत्, अत्रापि त एवाष्टौ भङ्गाः। तेषामेव मनुष्यगतिप्रायोग्यं जिननामसहितं बध्नतां त्रिंशत्, अत्रापि त एवाष्टौ भङ्गाः। अष्टावुदयस्थानानि–एकविंशतिः पञ्चविंशत्यादीन्येकत्रिंशदन्तानि च। तत्रैकविंशत्युदयो नैरयिकतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य क्षायिकसम्यग्दृष्टेः प्राग्बद्धायुष्कस्यैतेषु सर्वेषूत्पादसंभवात्। अविरतसम्यग्दृष्टिरपर्याप्तेषु नोत्पद्यते, तेनापर्याप्तोदयवर्जाः शेषाः सर्वेऽपि भङ्गा ज्ञेयाः, ते च पञ्चविंशतिः, तत्र तिर्यक्पञ्चेन्द्रियान्मनुष्यान् देवांश्चाधिकृत्य प्रत्येकमष्टौ नैरयिकानधिकृत्य चैक इति। पञ्चविंशतिसप्तविंशत्युदयौ देवनैरयिकान् वैक्रियतिर्यङ्मनुष्यांश्चाधिकृत्यावसेयौ। तत्र नैरयिकः क्षायिकसम्यग्दृष्टिर्वेदकसम्यग्दृष्टिर्वा, देवस्त्रिविधसम्यग्दृष्टिरपि। उक्तं च सप्ततिकाचूर्णौ–"पणवीससत्तावीसोदया देवनेरइए वेउव्वियतिरिमणुए य पडुच्च, णेरइगा खइगवेयगसम्मद्दिट्ठी देवो तिविहसम्मद्दिट्ठी वि त्ति"। भङ्गा अत्र सर्वेऽप्यात्मीया द्रष्टव्याः। शतकबृहच्चूर्ण्यनुसारेण तु देवोऽपि द्विविधसम्यग्दृष्टिरेव ग्राह्यो भवति, तस्यापर्याप्तस्यौपशमिकसम्यक्त्वनिषेधात्। तथा च

॥१४६॥

सो पढमसमए चेव सम्मत्तपुंजं उदयावलिआए छोढूण सम्मत्तपोग्गले
तत्रोक्तं—"जो उवसमसम्मद्दिट्ठी उवसमसेढीए कालं करेइ
वेएइ, तेण न उवसमसम्मद्दिट्ठी अपज्जत्तगो लब्भइ त्ति" । तत्त्वमत्रत्यं केवलिगम्यम् । षड्विंशत्युदयस्तिर्यङ्मनुष्याणां क्षायिकवेदक-
सम्यग्दृष्टीनां, औपशमिकसम्यग्दृष्टिश्च तिर्यङ्मनुष्येषु नोत्पद्यते इति त्रिविधदृष्टीनामिति नोक्तं, वेदकसम्यग्दृष्टिता च तिरश्चो द्वाविंश-
तिसत्कर्मणो ज्ञेया । अष्टाविंशत्येकोनत्रिंशदुदयौ नैरयिकतिर्यङ्मनुष्यदेवानाम् । त्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियमनुष्यदेवानाम्, एक-
त्रिंशदुदयस्तिर्यक्पञ्चेन्द्रियाणाम् । भङ्गाः स्वीयस्वीयाः सर्वेऽपि द्रष्टव्याः । चत्वारि सत्तास्थानानि त्रिनवतिर्द्विनवतिरेकोननवतिरष्टा-
शीतिश्च । तत्र योऽप्रमत्तसंयतोऽपूर्वकरणो वा तीर्थकराहारकसहितामेकत्रिंशतं बद्ध्वा पश्चादविरतसम्यग्दृष्टिर्देवो वा जातः तमधिकृत्य
त्रिनवतिः । यस्त्वाहारकं बद्ध्वा परिणामपरावृत्त्या मिथ्यात्वं गत्वा चतसृणामन्यतमस्यां गतावुत्पन्नस्तस्य तत्र गतौ भूयोऽपि सम्यक्त्वं
प्रतिपन्नस्य द्विनवतिः । देवमनुष्येषु मध्ये मिथ्यात्वमप्रतिपन्नस्यापि द्विनवतिः प्राप्यते । एकोननवतिर्देवनैरयिकमनुष्याणामविरतसम्य-
ग्दृष्टीनाम् । ते हि त्रयोऽपि तीर्थकरनामार्जयन्ति, तिर्यक्षु तीर्थकरनामसत्कर्मा नोत्पद्यत इति तद्ग्रहणम् । अष्टाशीतिश्चतुर्गतिकानामविरत-
सम्यग्दृष्टीनाम् । अथ संवेध उच्यते—तत्राविरतसम्यग्दृष्टेरष्टाविंशतिबन्धकस्याष्टावप्युदयस्थानानि, तानि तिर्यङ्मनुष्यानधिकृत्य । तत्रापि
पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियतिर्यङ्मनुष्यानधिकृत्य, एकैकस्मिन्नुदयस्थाने द्विनवत्यष्टाशीत्यात्मके द्वे द्वे सत्तास्थाने । एकोनत्रिंशद्द्विधा
देवगतियोग्या नरकगतियोग्या च । तत्र देवगतियोग्या जिननामसहिता, तां च मनुष्या एव बध्नन्ति । तेषामुदयस्थानानि सप्त,
तद्यथा—एकविंशतिः पञ्चविंशत्यादीनि त्रिंशदन्तानि च, मनुष्याणामेकत्रिंशन्न संभवति । एकैकस्मिन्नुदयस्थाने त्रिनवत्येकोननवत्यात्मके
द्वे द्वे सत्तास्थाने । मनुष्यगतिप्रायोग्यां त्वेकोनत्रिंशतं बध्नन्ति देवनैरयिकाः । तत्र नैरयिकाणामुदयस्थानानि पञ्च, तद्यथा—एकविंशतिः

पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशच्च,देवानां पञ्च तान्येतान्येव, षष्ठं तु त्रिंशत्, सा चोद्योतवेदकानामवसेया। एकैकस्मिन् द्वे द्वे सत्तास्थाने द्विनवतिरष्टाशीतिश्च । मनुष्यगतिप्रायोग्यां त्रिंशतमविरतसम्यग्दृष्टयो देवा नैरयिकाश्च बध्नन्ति । तत्र देवानामुदयस्थानानि षट्, तानि चानन्तरोक्तान्येव, तेषु प्रत्येकं द्वे द्वे सत्तास्थाने त्रिनवतिरेकोननवतिश्च । नैरयिकाणामुदयस्थानानि पञ्च, तेषु प्रत्येकं सत्तास्थानमेकोननवतिरेवैकं, तीर्थकराहारकसत्कर्मणो नरकेष्वनुत्पादात् । तदेवं सामान्येनैकत्रिंशत्यादिषु त्रिंशदन्तेषूदयस्थानेषु सत्तास्थानानि प्रत्येकं चत्वारि–९३–९२–८९–८८ । एकत्रिंशदुदये द्वे–९२–८८ इति, सर्वसङ्ख्यया त्रिंशत् ।

अथ देशविरतस्य बन्धादिस्थानान्युच्यन्ते–देशविरतस्य द्वे बन्धस्थाने अष्टाविंशतिरेकोनत्रिंशच्च । तत्राष्टाविंशतिर्मनुष्यस्य तिर्यक्पञ्चेन्द्रियस्य वा देशविरतस्य देवगतिप्रायोग्यं बध्नतो वेदितव्या । तत्राष्टौ भङ्गाः । सैव तीर्थकरसहितैकोनत्रिंशत्, सा च मनुष्यस्यैव, तिरश्चस्तीर्थकरनामकर्मबन्धाभावात्, अत्राप्यष्टौ भङ्गाः । षडुदयस्थानानि, तद्यथा–पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च । तत्राद्यानि चत्वारि वैक्रियतिर्यग्मनुष्याणां, अत्रैकैक एव भङ्गः, सर्वपदानां प्रशस्तत्वात् । त्रिंशत्स्वभावस्थानामपि तिर्यग्मनुष्याणां, अत्र भङ्गानां चतुश्चत्वारिंशं शतं १४४ । तच्च षड्भिः संस्थानैः षड्भिः संहननैः सुस्वरदुःस्वराभ्यां प्रशस्ताप्रशस्तविहायोगतिभ्यां च जायते । दुर्भगानादेयायशःकीर्त्तीनामुदयो गुणप्रत्ययादेव न भवतीति तदाश्रिता विकल्पा न प्राप्यन्ते । एकत्रिंशत्तिरश्चां, तत्रापि त एव भङ्गाः । चत्वारि सत्तास्थानानि–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च । तत्र योऽप्रमत्तोऽपूर्वकरणो वा तीर्थकराहारकनाम्नी बद्ध्वा परिणामह्रासेन देशविरतो जातस्तस्य त्रिनवतिः, शेषाणां भावनाऽविरतसम्यग्दृष्टेरिव कर्त्तव्या । सम्प्रति संवेध उच्यते–तत्र मनुष्यस्य देशविरतस्याष्टाविंशतिबन्धकस्य पञ्चोदयस्थानानि, तद्यथा–पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिं-

यत् । एतेषु प्रत्येकं द्वे द्वे सत्तास्थाने–द्विनवतिरष्टाशीतिश्च । एवं तिरश्चोऽपि, नवरं तस्यैकत्रिंशदुदयोऽपि वाच्यः, तत्रापि चैते एव द्वे सत्तास्थाने । एकोनत्रिंशद्बन्धो मनुष्यस्य देशविरतस्य, तस्योदयस्थानान्यनन्तरोक्तान्येव पञ्च, तेषु प्रत्येकं द्वे द्वे सत्तास्थाने–त्रिनवतिरेकोननवतिश्च । तदेवं देशविरतस्य पञ्चविंशत्यादिषु त्रिंशदन्तेषूदयेषु चत्वारि चत्वारि सत्तास्थानानि, एकत्रिंशदुदये च द्वे इति सर्वसङ्ख्यया द्वाविंशतिः ।

अथ प्रमत्तसंयतस्य बन्धादिस्थानान्यभिधेयानि–तत्र प्रमत्तसंयतस्य द्वे बन्धस्थाने–अष्टाविंशतिरेकोनत्रिंशच्च, ते च देशविरतस्येव भावनीये । पञ्चोदयस्थानानि, तद्यथा–पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशत् । एतानि सर्वाण्यप्याहारकसंयतस्य वैक्रियसंयतस्य वा ज्ञातव्यानि । त्रिंशत्स्वभावस्थसंयतस्यापि । तत्र वैक्रियसंयतानामाहारकसंयतानां च पञ्चविंशतिसप्तविंशत्युदययोः प्रत्येकमेकैको भङ्गः, अष्टाविंशतावेकोनत्रिंशति च द्वौ द्वौ, त्रिंशति चैकः, सर्वसङ्ख्यया चतुर्दश । त्रिंशदुदयः स्वभावस्थस्यापीति, तत्र चतुश्चत्वारिंशं शतं भङ्गानां १४४ । तच्च देशविरतस्येव भावनीयम् । सर्वसङ्ख्ययाऽष्टपञ्चाशं शतं १५८ । चत्वारि सत्तास्थानानि–त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च । सम्प्रति संवेध उच्यते–अष्टाविंशतिबन्धकस्य पञ्चस्वप्युदयस्थानेषु प्रत्येकं द्विनवत्यष्टाशीत्यात्मके द्वे द्वे सत्तास्थाने । तत्राहारकसंयतस्य द्विनवतिरेव, आहारकप्रमत्तकर्मा ह्याहारकशरीरमुत्पादयतीति, वैक्रियसंयतस्य तु द्वे अपि । तीर्थकरनामसत्कर्मा नाष्टाविंशतिं न बध्नातीति त्रिनवतिरेकोननवतिश्च न प्राप्यते । एकोनत्रिंशद्बन्धकस्य पञ्चस्वप्युदयस्थानेषु प्रत्येकं द्वे द्वे सत्तास्थाने–त्रिनवतिरेकोननवतिश्च । तत्राहारकसंयतस्य त्रिनवतिरेव, तस्यैकोनत्रिंशद्बन्धकस्य नियमतस्तीर्थकराहारकसद्भावात्, वैक्रियसंयतस्य तु द्वे अपि । तदेवं प्रमत्तसंयतस्य सर्वेष्वप्युदयस्थानेषु प्रत्येकं चत्वारि चत्वारि सत्तास्थानानि प्राप्यन्ते इति

सर्वसङ्ख्यया त्रिंशतिः ।

अधुनाऽप्रमत्तसंयतस्य बन्धादीन्युच्यन्ते। अस्य चत्वारि बन्धस्थानानि—अष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च। तत्राद्ये द्वे प्रमत्तस्येव भाव्ये । सैवाष्टाविंशतिराहारकद्विकसहिता त्रिंशत्, तीर्थकराहारकद्विकसहिता त्वेकत्रिंशत्। एतेषु चतुर्ष्वपि बन्धस्थानेषु भङ्ग एकैक एव वेदितव्यः, अस्थिराशुभायशःकीर्त्तिनामप्रमत्ते बन्धाभावात्। द्वे उदयस्थाने—एकोनत्रिंशत्त्रिंशच्च। तत्रैकोनत्रिंशत्तस्य प्राप्यते यो नाम पूर्वं संयतः सन्नाहारकं वैक्रियं वा निर्वर्त्त्य पश्चादप्रमत्तभावं याति । अत्र द्वौ भङ्गौ—एको वैक्रियस्यापर आहारकस्य । त्रिंशदुदयेऽपि प्राग्वद् द्वौ भङ्गौ । तथास्वभावस्थस्याप्यप्रमत्तसंयतस्य त्रिंशदुदयो भवति । अत्र भङ्गाश्चतुश्चत्वारिंशं शतं १४४ । सर्वसंख्ययाऽष्टचत्वारिंशं शतं १४८ । सत्तास्थानानि चत्वारि—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च । अथ संवेध उच्यते—अष्टाविंशतिबन्धकस्य द्वयोरप्युदयस्थानयोरेकैकं सत्कर्म—अष्टाशीतिः। एकोनत्रिंशद्बन्धकस्यापि द्वयोरप्युदयस्थानयोरेकैकं सत्तास्थानं—त्रिनवतिः। यस्य हि तीर्थकरमाहारकं वा सत् स नियमात्तद् बध्नातीत्येकैकस्मिन् बन्धे एकैकमेव सत्तास्थानम् । सर्वसंख्ययाऽष्टौ ।

अथापूर्वकरणस्य बन्धादीन्युच्यन्ते—अस्य पञ्च बन्धस्थानानि अष्टाविंशत्यादीन्येकत्रिंशदन्तान्येका च । तत्राद्यानि चत्वार्यप्रमत्तसंयतवद् ज्ञेयानि, एका तु यशःकीर्त्तिः, सा च देवगतिप्रायोग्यबन्धव्यच्छेदे । एकमुदयस्थानं त्रिंशत् । अत्राद्यसंहननसंस्थानषट्कस्वरद्विकखगतिद्विकैर्भङ्गाश्चतुर्विंशतिः । अन्ये त्वाचार्या ब्रुवते—आद्यसंहननत्रयान्यतमसंहननयुक्ता अप्युपशमश्रेणिं प्रतिपद्यन्ते । तन्मतेन भङ्गा द्विसप्ततिः ७२ । एवमनिवृत्तिबादरसूक्ष्मसम्परायोपशान्तमोहेष्वपि द्रष्टव्यम् । चत्वारि सत्तास्थानानि—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिश्च । अथ संवेध उच्यते—अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्बन्धकानां त्रिंशदुदये सत्तास्थानानि यथाक्रममष्टाशीतिरेको-

प्रमत्ते नाम्नो बन्धोदयसत्तास्थानानि संवेधश्च

नवतिर्द्विनवतिस्त्रिनवतिश्च। एकविधबन्धकस्यापि त्रिंशदुदये चत्वार्यपि सत्तास्थानानि, अष्टाविंशत्यादि २८–२९–३०–३१ बन्धकानां प्रत्येकं देवगतियोग्यबन्धव्यवच्छेदे सत्येकविधबन्धकभावात्, अष्टाविंशत्यादिबन्धकानां च यथाक्रममष्टाशीत्यादिस्थानसद्भावात्, एकविधबन्धे चतुर्णामपि प्राप्तेः ।

अथानिवृत्तिबादरस्य बन्धादिस्थानान्युच्यन्ते—अस्यैकं यशःकीर्त्याख्यं बन्धस्थानम्, एकत्रिंशदात्मकमुदयस्थानम्, अष्टौ सत्तास्थानानि—त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च । तत्राद्यानि चत्वार्युपशमश्रेण्यां, क्षपकश्रेण्यामपि नामत्रयोदशकक्षयपर्यन्तं, क्षीणे च तस्मिन्नुपरितनानि चत्वार्येव भवन्ति । अत्र बन्धोदयस्थानभेदाभावात्संवेधाभावः । सूक्ष्मसम्परायस्य बन्धादिस्थानान्यनिवृत्तिबादरवज्ज्ञेयानि, अत ऊर्ध्वं बन्धाभावः । तत्रोपशान्तमोहे उदयस्थानं त्रिंशदात्मकमेकं, सत्तास्थानानि च त्रिनवत्यादीनि ९३–९२–८९–८८ चत्वारि । क्षीणकषायस्यैकमुदयस्थानं त्रिंशत् । अत्र भङ्गाश्चतुर्विंशतिरेव, आद्यसंहननेन एव क्षपकश्रेण्यारंभसंभवात् । तत्रापि तीर्थकरनामसत्कर्मणः क्षीणमोहस्य सर्वं संस्थानादि प्रशस्तमेव । सत्तास्थानान्यशीत्यादीनि ८०–७९–७६–७५ चत्वारि । तत्रैकोनाशीतिः पञ्चसप्ततिश्चातीर्थकरसत्कर्मणो, अशीतिः षट्सप्ततिश्च तीर्थकरसत्कर्मणः ।

सयोगिकेवलिनोऽष्टावुदयस्थानानि—विंशतिरेकविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च । एतानि सामान्यचिन्तायां सप्रपञ्चं विवृतानीति न भूयो विव्रियन्ते । चत्वारि सत्तास्थानानि—अशीतिः षट्सप्ततिरेकोनाशीतिः पञ्चसप्ततिः । अत्र संवेधो वाच्यः, स च प्राग्वज्ज्ञेयः । अयोगिकेवलिनो द्वे उदयस्थाने—नवाष्टौ च । तत्राष्टोदयोऽतीर्थकृदयोगिनः, नवोदयश्च तीर्थकृदयोगिनः । षट् सत्तास्थानानि—अशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिर्नवाष्टौ च । तत्राष्टोदये त्रीणि सत्तास्थानानि—

एकोनाशीतिः पञ्चसप्ततिरष्टौ च । तत्राद्ये द्वे द्विचरमसमयं यावल्लभ्येते, चरमसमयेऽष्टौ । नवोदये त्रीणि सत्तास्थानानि-अशीतिः षट्सप्ततिर्नव च । तत्राद्ये द्वे द्विचरमसमयं यावत्, चरमसमये नव । तदेवं गुणस्थानेषु नाम्नो बन्धोदयसत्तास्थानानि प्रपञ्चितानि ।

अथ गतिषु प्रपञ्च्यते-तत्र नैरयिकाणां द्वे बन्धस्थाने-एकोनत्रिंशत्त्रिंशच्च । तत्रैकोनत्रिंशन्मनुष्यगतिप्रायोग्या तिर्यक्पञ्चेन्द्रियप्रायोग्या वा, त्रिंशत्तिर्यक्पञ्चेन्द्रियप्रायोग्या सोद्योता, मनुष्यगतिप्रायोग्या तु जिननामसहिता । भङ्गाश्च प्रागुक्ताः सर्वेऽपि द्रष्टव्याः । उदयस्थानानि पञ्च-एकविंशतिः पञ्चविंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत् । एतानि सप्रभेदानि प्राग्वद्वाच्यानि । त्रीणि सत्तास्थानानि-द्विनवतिरेकोननवतिरष्टाशीतिश्च । एकोननवतिर्बद्धजिननाम्नो मिथ्यात्वगतस्य नरकाभिमुखस्यावसेया । त्रिनवतिस्तु न संभवति, जिनाहारकसत्कर्मणो नरकेष्वनुत्पादात् । अथ संवेध उच्यते-नैरयिकस्य तिर्यग्गतिप्रायोग्यामेकोनत्रिंशतं बध्नतः पञ्चोदयस्थानानि, तानि चानन्तरमेवोक्तानि । तेषु प्रत्येकं द्वे सत्तास्थाने-द्विनवतिरष्टाशीतिश्च । तीर्थकरसत्कर्मणस्तिर्यग्गतिप्रायोग्यबन्धासंभवादेकोननवतिर्न लभ्यते । मनुष्यगतिप्रायोग्यामेकोनत्रिंशतं बध्नतः पञ्चस्वप्युदयस्थानेषु त्रीण्यपि ९२-८९-८८ सत्तास्थानानि भवन्ति । जिननामसत्कर्मा नरकेषूत्पन्नो यावन्मिथ्यादृष्टिस्तावदेकोनत्रिंशतं, सम्यक्त्वं तु प्रतिपन्नस्त्रिंशतं बध्नाति, जिननाम्नोऽपि बन्धात् । तिर्यग्गतिप्रायोग्यां सोद्योतां त्रिंशतं बध्नतः पञ्चस्वप्युदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने-द्विनवतिरष्टाशीतिश्च । एकोननवत्यभावभावना प्राग्वत् । मनुष्यगतिप्रायोग्यां जिननामसहितां बध्नतः पञ्चस्वप्युदयस्थानेषु प्रत्येकमेकं सत्तास्थानं-एकोननवतिः । सर्वबन्धोदयस्थानापेक्षया सत्तास्थानानि त्रिंशत् ।

तिरश्चां बन्धादिस्थानानि संवेधश्च

अथ तिरश्चां बन्धादिस्थानान्युच्यन्ते तत्र । तिरश्चां षट् बन्धस्थानानि-त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंश-

त्रिंशच्च । एतानि प्रागुक्तभेदानि वाच्यानि । केवलमेकोनत्रिंशत्त्रिंशच्च तीर्थकराहारकद्विकसहिता न वाच्या, तिरश्चां तद्बन्धासंभवात्। नवोदयस्थानानि-एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च । एतान्येकेन्द्रिय-विकलेन्द्रियसर्ववैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य सभेदानि प्राग्वद्वाच्यानि । पञ्च सत्तास्थानानि, तद्यथा-द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च । तीर्थकरसम्बन्धीनि क्षपकसम्बन्धीनि च सत्तास्थानानि न संभवन्ति, तीर्थकरनाम्नः क्षपकश्रेण्याश्च तिर्यक्ष्वभावात्। सम्प्रति संवेध उच्यते-त्रयोविंशतिबन्धकस्य तिरश्च एकविंशत्यादीनि नवोदयस्थानानि, तानि चानन्तरमेवोक्तानि । तत्राद्येषु चतुर्षु २१-२४-२५-२६ प्रत्येकं पञ्च सत्तास्थानानि-नवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्चेति । इहाष्टसप्ततिस्तेजोवायूंस्तद्भवादुद्वृत्तान् वाऽधिकृत्य ज्ञेया । शेषेषु तु सप्तविंशत्यादिषु पञ्चसूदयस्थानेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि, सप्तविंशत्याद्युदयेषु हि नियमेन मनुष्यद्विकसंभवात् अष्टसप्ततिर्नावाप्यते । एवं पञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धकानामपि वाच्यं, नवरमेकोनत्रिंशतं मनुष्यगतिप्रायोग्यां बध्नतः सर्वेष्वप्युदयस्थानेष्वष्टसप्ततिवर्जानि चत्वारि चत्वारि सत्तास्थानानि । अष्टाविंशतिबन्धकस्याष्टावुदयस्थानानि, तद्यथा-एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्च । तत्रैकविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशद्रूपाः पञ्चोदयाः क्षायिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा द्वाविंशतिसत्कर्मणां पूर्वबद्धायुषामवगन्तव्याः । एकैकस्मिंश्च द्वे द्वे सत्तास्थाने-द्विनवतिरष्टाशीतिश्चेति। पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियतिरश्चां ज्ञेयौ, तत्रापि ते एव द्वे द्वे सत्तास्थाने। त्रिंशदेकत्रिंशदुदयौ सर्वपर्याप्तिपर्याप्तानां सम्यग्दृष्टीनां मिथ्यादृष्टीनां वाऽवसेयौ । एकैकस्मिंश्च त्रीणि त्रीणि सत्तास्थानानि-द्विनवतिरष्टाशीतिः षडशीतिश्च । षडशीतिर्मिथ्यादृष्टीनां ज्ञेया, सम्यग्दृष्टीनामसंभवात्, तेषामवश्यं देवद्विकादिबन्धभावात् । तदेवं सर्वबन्धोदयस्था-

नापेक्षया सत्तास्थानानां द्वे शते अष्टादशाधिके २१८। तथाहि–त्रयोविंशतिपञ्चविंशतिषड्विंशत्येकोनत्रिंशत्त्रिंशद्बन्धेषु चत्वारिंशत्स-
त्तास्थानानि, अष्टाविंशतिबन्धे चाष्टादश।

अथ मनुष्यगतौ बन्धादिस्थानान्युच्यन्ते। मनुष्याणामष्टौ बन्धस्थानानि–त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोन-
त्रिंशत्त्रिंशदेकत्रिंशदेका च। सर्वाण्यप्येतानि प्राग्वत्सभेदानि वाच्यानि, मनुष्याणां चतुर्गतिकप्रायोग्यबन्धसंभवात्। एकादशोदयस्था
नानि–विंशतिरेकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशन्नवाष्टौ च। एतानि च स्वभावस्थम-
नुष्यवैक्रियमनुष्याहारकसंयततीर्थकरातीर्थकरसयोगिकेवलिनोऽधिकृत्य प्राग्वद्भावनीयानि। एकादश सत्तास्थानानि–त्रिनवतिर्द्विनवति-
रेकोननवतिरष्टाशीतिः षडशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिर्नवाष्टौ च। अष्टसप्ततिस्तु न संभवति, मनुष्याणामवश्यं
मनुष्यद्विकसंभवात्।

अथ संवेध उच्यते। तत्र मनुष्यस्य त्रयोविंशतिबन्धकस्य सप्तोदयस्थानानि–एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टा-
विंशतिरेकोनत्रिंशत्त्रिंशत् (च), शेषाः केवल्युदया इति न घटन्ते। पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियकारिणो वेदितव्यौ। एकैकस्मिं-
श्चत्वारि सत्तास्थानानि–द्विनवतिरष्टाशीतिः षडशीतिरशीतिश्च, नवरं पञ्चविंशत्युदये सप्तविंशत्युदये च द्वे द्वे सत्तास्थाने–द्विनवतिरष्टा-
शीतिश्च। शेषाणि तु सत्तास्थानानि तीर्थकरक्षपकश्रेणिकेवलिशेषगतिप्रायोग्यानीति न संभवन्ति, सर्वसंख्यया चतुर्विंशतिः। एवं
पञ्चविंशतिषड्विंशतिबन्धकानामपि वाच्यम्। मनुजगतिप्रायोग्यां तिर्यग्गतिप्रायोग्यां चैकोनत्रिंशतं त्रिंशतं च बध्नतामप्येवमेव। अष्टा-
विंशतिबन्धकानां सप्तोदयाः–एकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत् त्रिंशत् (च)। तत्रैकविंशतिषड्-

करणापर्याप्तस्य। पञ्चविंशतिसप्तविंशत्युदयौ वैक्रियसंयतस्याहारकसंयतस्य वा। अष्टाविंशत्येकोनत्रिंशता-
त्रिंशदुदयानविरतसम्यग्दृष्टेः। एकैकस्मिन् द्वे द्वे सत्तास्थाने-द्विन-
वविरतसम्यग्दृष्टीनां वैक्रियकारिणामाहारकसंयतानां च। त्रिंशत्सम्यग्दृष्टीनां मिथ्यादृष्टीनां वा। एकैकस्मिन् द्वे द्वे सत्तास्थाने-द्विन-
वतिरष्टाशीतिश्च, आहारकसंयतस्य द्विनवतिरेव। त्रिंशदुदये चत्वारि सत्तास्थानानि-द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिश्च। तत्र-
कोननवतिर्नरकगतिप्रायोग्यामष्टाविंशतिं बध्नतो मिथ्यादृष्टेरवसेया। सर्वसंख्ययाऽष्टाविंशतिबन्धे षोडश सत्तास्थानानि। देवगतिप्रा-
योग्यामेकोनत्रिंशतं तीर्थकरसहितां बध्नतः सप्तोदयस्थानानि, तानि चाष्टाविंशतिबन्धकानामिव ज्ञेयानि। नवरमिह त्रिंशदुदयः सम्यग्दृ-
ष्टीनामेव वाच्यः। सर्वेष्वपि चोदयस्थानेषु द्वे द्वे सत्तास्थाने-त्रिनवतिरेकोननवतिश्च, तत्राहारकसंयतस्य त्रिनवतिरेव। सर्वसंख्यया
चतुर्दश। आहारकसहितां त्रिंशतं बध्नतो द्वे उदयस्थाने-एकोनत्रिंशत्त्रिंशच्च। तत्र यो नामाहारकसंयतोऽन्तिमकालेऽप्रमत्तस्तं प्रतीत्य-
कोनत्रिंशत, (अन्यथैकोनत्रिंशति) आहारकबन्धहेतोर्विशिष्टसंयमस्याभावात्। द्वयोरप्युदयस्थानयोः प्रत्येकमेकं सत्तास्थानं द्विनवतिः।
एकविंशद्बन्धकस्यैकमुदयस्थानं त्रिंशत्, एकं सत्तास्थानं त्रिनवतिः। एकविधबन्धकस्यैकमुदयस्थानं त्रिंशत्। अष्टौ सत्तास्थानानि-
त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिश्च। सर्वबन्धोदयस्थानापेक्षया सत्तास्थानानि शतमेकोन
(एक.१०२)पञ्चाशदधिकम्। अबन्धे उदयसत्तास्थानयोर्मिथः संवेधः सामान्यसंवेधचिन्तायामिव ज्ञेयः।

अथ देवानां बन्धादिस्थानानि वाच्यानि। तत्र तेषां चत्वारि बन्धस्थानानि-पञ्चविंशतिः षड्विंशतिरेकोनत्रिंशत्त्रिंशत्। तत्र पञ्च-
विंशतिः षड्विंशतिश्च पर्याप्तबादरप्रत्येकसहितामेकेन्द्रियप्रायोग्यां बध्नतो ज्ञेया। अत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्त्तिभिरष्टौ
भङ्गाः। षड्विंशतिगतपोद्योतान्यतरसहिता भवति, ततोऽत्र भङ्गाः षोडश। एकोनत्रिंशन्मनुष्यगतिप्रायोग्या तिर्यग्गतिप्रायोग्या च

सप्रभेदाऽवसेया। त्रिंशत्पुनस्तिर्यक्पञ्चेन्द्रियप्रायोग्या सोद्योताऽष्टोतरषट्चत्वारिंशच्छत(४६०८)संख्यभेदोपेता प्राग्वद्वाच्या। या तु मनुष्यगतिप्रायोग्या तीर्थकरनामसहिता तत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्त्तिभिरष्टौ भङ्गाः। षडुदयस्थानानि-एकविंशतिः पञ्चविंशतिः सप्तविंशतिरष्टाविशतिरेकोनत्रिंशत्त्रिंशत्। एतानि प्रागेव सप्रपञ्चमुक्तानीति न भूय उच्यन्ते। चत्वारि सत्तास्थानानि-त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिः। शेषाणि तु कानिचिदेकेन्द्रियसम्बन्धीनि कानिचित्क्षपकसम्बन्धीनीति देवानां न सम्भवन्ति।

अथ संवेध उच्यते-देवानां पञ्चविंशतिबन्धकानां षट्स्वप्युदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने-द्विनवतिरष्टाशीतिश्च। एवं षड्विंशत्येकोनत्रिंशद्बन्धकानामपि ज्ञेयम्। सोद्योतां तिर्यक्पञ्चेन्द्रियप्रायोग्यां त्रिंशतमपि बध्नतामेवमेव, तीर्थकरसहितां पुनस्त्रिंशतं मनुष्यगतिप्रायोग्यां बध्नतः षट्स्वप्युदयस्थानेषु प्रत्येकं द्वे सत्तास्थाने-त्रिनवतिरेकोननवतिश्च। सर्वसंख्यया सत्तास्थानानि षष्टिरिति।

अथेन्द्रियेषु विचार्यते-एकेन्द्रियविकलेन्द्रियेषु प्रत्येकं त्रयोविंशत्यादीन्यष्टाविंशतिहीनानि पञ्च पञ्च बन्धस्थानानि २३-२५-२६-२९-३०। तत्र देवगतिप्रायोग्यामेकोनत्रिंशतं त्रिंशतं च वर्जयित्वा शेषाणि सर्वाण्यपि सर्वगतिप्रायोग्यानि सप्रभेदानि वाच्यानि। पञ्चेन्द्रिये त्रयोविंशत्यादीन्यष्टावुदयस्थानानि २३-२५-२६-२८-२९-३०-३१-१। एतानि सर्वाण्यपि सर्वगतिप्रायोग्यानि सप्रभेदानि वाच्यानि। उदयस्थानान्येकेन्द्रियाणामेकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिश्चेति पञ्च। एतानि च सप्रभेदानि प्राग्वद्वाच्यानि। विकलेन्द्रियाणां षट्, तद्यथा-एकविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशच्चेति। एतान्यपि यथाऽधस्तादुक्तानि तथैव वाच्यानि। पञ्चेन्द्रियाणामेकादश, तद्यथा-विंशतिरेकविंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिरेकोनत्रिंशत्त्रिंशदेकत्रिंशन्नवाष्टौ च। एकेन्द्रियविकलेन्द्रियसंबन्धीन्युदयस्थानानि मुक्त्वा शेषाणि सर्वाण्यपि पञ्चेन्द्रियाणां सप्रभेदानि

स्थानानि। सत्तास्थानान्येकेन्द्रियविकलेन्द्रियाणां पञ्च, तद्यथा—द्विनवतिरष्टाशीतिः षडशीतिरशीतिरष्टसप्ततिश्च। पञ्चेन्द्रियाणां च द्वादशापि सत्तास्थानानि।

अथ जीवस्थानेषु बन्धोदयसत्तास्थानानि प्रतिपाद्यन्ते—तत्र ज्ञानावरणान्तरायदर्शनावरणानां बन्धोदयसत्तास्थानेषु ये भङ्गा मिथ्यादृष्टौ भवन्ति त एव पर्याप्तसंज्ञिपञ्चेन्द्रियवर्जेषु शेषेषु त्रयोदशसु जीवस्थानेषु ज्ञेयाः। तत्र ज्ञानावरणस्यान्तरायस्य च प्रत्येकं पञ्चविधो बन्धः, पञ्चविध उदयः, पञ्चविधा सत्ता। दर्शनावरणस्य नवविधो बन्धश्चतुर्विध उदयो नवविधा सत्ता, यद्वा नवविधो बन्धः पञ्चविध उदयो नवविधा सत्ता। संज्ञिपर्याप्ते तु ये गुणस्थानोक्ता भङ्गास्त एवान्यूनानतिरिक्ता वेदितव्याः। वेदनीयस्याद्येषु त्रयोदशसु जीवस्थानेष्वादिमाश्चत्वारो भङ्गाः, तद्यथा—असातस्य बन्धोऽसातस्योदयो द्वे सती, यद्वाऽसातस्य बन्धः सातस्योदयो द्वे सती, यद्वा सातस्य बन्धोऽसातस्योदयो द्वे सती, यद्वा सातस्य बन्धः सातस्योदयो द्वे सती इति। गोत्रस्य त्रयो भङ्गाः, तद्यथा—नीचैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयो नीचैर्गोत्रं सत्, एष विकल्पस्तेजोवायुकायिकेषु लभ्यते। तद्भवादुद्वृत्तेष्वपि कियत्कालं नीचैर्गोत्रस्य बन्धः नीचैर्गोत्रस्योदयो द्वे सती, यद्वोच्चैर्गोत्रस्य बन्धो नीचैर्गोत्रस्योदयो द्वे सती। शेषास्तु भङ्गा न भवन्ति, तेषूच्चैर्गोत्रस्योदयाभावात्। आयुषि नारकतिर्यगायुरुदये ये नव भङ्गास्ते सर्वेऽप्यसंज्ञिपर्याप्ते द्रष्टव्याः, तेषां सर्वेषामपि तस्मिन् संभवात्। एकेन्द्रियाणां विकलेन्द्रियाणां च पर्याप्तापर्याप्तानां त एव सुरनारकाश्रितभङ्गचतुष्टयरहिताः पञ्च भङ्गा द्रष्टव्याः, तेषां देवनारकायुर्बन्धाभावात्। असंज्ञिन्यपर्याप्ते तिरश्चि मनुष्ये चैत एव पञ्च पञ्च भङ्गा अन्यूनानतिरिक्ता द्रष्टव्याः। तथा मनसा पर्याप्तेऽष्टाविंशतिरप्यायुषो भङ्गा ज्ञेयाः। मनसाऽपर्याप्ते संज्ञिनि पञ्च मनुष्ये पञ्च तिरश्चीति सर्वसंख्यया दश भङ्गाः, एते लब्ध्यपर्याप्तके। तथा देवनारकाणां करणापर्याप्ता-

नामेकैको भङ्गः। सर्वसंख्ययाऽपर्याप्ते संज्ञिनि द्वादश। मोहनीयस्य बन्धोदयसत्तास्थानानि संज्ञिनः पर्याप्तस्य सर्वाण्यपि सप्रभे-
दानि यथाऽधस्तादुक्तानि तथा वाच्यानि। बादरैकेन्द्रियविकलेन्द्रियासंज्ञिपञ्चेन्द्रियेष्वादिमौ द्वौ बन्धौ—द्वाविंशतिरेकविंशतिश्च।
इमौ च यथाऽधस्तादुक्तौ तथा ज्ञेयौ। नवरमेकविंशतिः करणापर्याप्तावस्थायां द्रष्टव्या। पर्याप्तापर्याप्तसूक्ष्मापर्याप्तबादरद्वीन्द्रियत्रीन्द्रि-
यचतुरिन्द्रियासंज्ञिसंज्ञिरूपेष्वष्टसु जीवस्थानेषु द्वाविंशतिरेवैको बन्धः। स च सप्रभेदः प्राग्वद्वाच्यः। एतेष्वेवाष्टसु त्रीण्युदयस्थानानि
भवन्ति, तद्यथा—अष्ट नव दश चेति। यस्तु सप्तकमुदयस्थानमनन्तानुबन्ध्युदयरहितं तन्न प्राप्यते, तेषामवश्यमनन्तानुबन्ध्युदयसहि-
तत्वात्। वेदश्च तेषामुदयागतो नपुंसकवेद एव, न स्त्रीनृवेदौ। ततोऽष्टोदयेऽष्टौ भङ्गाः, नवोदये षोडश, दशोदयेऽष्टौ, सर्वसंख्यया
प्रत्येकं द्वात्रिंशद्भङ्गाः। एतान्येव त्रीणि सप्तकयुतानि पर्याप्तबादरैकेन्द्रियविकलेन्द्रियासंज्ञिरूपेषु पञ्चसु चत्वार्युदयस्थानानि ७–८–९
–१०। तत्र सासादने सप्ताष्टौ नव चेति त्रीणि। मिथ्यादृष्टावष्टादीनि त्रीणि। वेदश्चैतेषामुदयप्राप्तो नपुंसकवेद एव। ततश्चतुर्विंश-
तिस्थाने भङ्गानामष्टकं द्रष्टव्यं, तेन सासादने मिथ्यादृष्टौ च प्रत्येकं द्वात्रिंशद्भङ्गाः। एतेषु पञ्चकाष्टकरूपेषु त्रयोदशसु जीवस्थानेषु
त्रीणि त्रीणि सत्तास्थानानि—अष्टाविंशतिः सप्तविंशतिः षड्विंशतिश्च। तत्रापि बादरैकेन्द्रियादिषु पञ्चसु सासादनभावापन्नेषु अष्टा-
विंशतिरेवैकं सत्तास्थानम्। संज्ञिनि तु करणापर्याप्ते कस्मिंश्चित्सप्तदशबन्धोऽपि षडादीनि च चत्वार्युदयस्थानानि चतुर्विंशत्येकविंशति-
रूपाण्यपि च सत्तास्थानानि ज्ञेयानि। नामकर्मणः संज्ञिनि पर्याप्तेऽष्टावपि बन्धस्थानानि, तानि च प्राग्वाच्यानि। असंज्ञिनि पर्याप्ते
आदिमानि षड् बन्धस्थानानि २३–२५–२६–२८–२९–३०। असंज्ञिपञ्चेन्द्रियाणां पर्याप्तानां हि नरकगतिदेवगतिप्रायोग्यबन्धोऽपि
भवतीत्यष्टाविंशतिरपि बन्धस्थानं लभ्यते। तान्येवाष्टाविंशतिहीनानि २३–२५–२६–२९–३० पञ्च पर्याप्तापर्याप्तविकलेन्द्रियबादर-

सूक्ष्मैकेन्द्रियेषु भवन्ति । असंज्ञिसंज्ञिनोरपि लब्ध्यपर्याप्तयोरेतान्येव पञ्च बन्धस्थानानि, अपर्याप्तानां सर्वेषां तिर्यग्मनुष्यप्रायोग्यस्यैव बन्धात् । तानि च पञ्च बन्धस्थानानि तिर्यग्मनुष्यप्रायोग्याणि यथाऽधस्तादुक्तानि तथा भाव्यानि । सूक्ष्मबादरैकेन्द्रिययोरपर्याप्तयो-रेकविंशतिश्चतुर्विंशतिश्चेति द्वावुदयौ । तत्र सूक्ष्मापर्याप्तस्यैकविंशतिरियं—तिर्यग्द्विकं तैजसकार्मणे अगुरुलघु वर्णचतुष्टयमेकेन्द्रियजातिः स्थावरसूक्ष्मापर्याप्तानि स्थिरास्थिरे शुभाशुभे दुर्भगमनादेयमयशःकीर्त्तिर्निर्माणमिति । एषा चान्तरालगतिस्थस्याप्यते । अत्र चैक एव भङ्गः, अपर्याप्तस्य परावर्त्तमानशुभप्रकृतीनामनुदयात् । बादरापर्याप्तस्याप्येवमेकविंशतिः, नवरं सूक्ष्मस्थाने बादरं वाच्यं, तत्राप्येक एव भङ्गः । उभयोरपि तस्यामेकविंशतौ औदारिकशरीरहुण्डोपघातप्रत्येकसाधारणैकतररूपप्रकृतिचतुष्टयप्रक्षेपे तिर्यगानुपूर्व्याश्चापनयने चतुर्विंशतिः । अत्र प्रत्येकसाधारणाभ्यां सूक्ष्मापर्याप्तस्य बादरापर्याप्तस्य च प्रत्येकं द्वौ भङ्गौ । विकलेन्द्रियसंज्ञ्यसंज्ञिनां चापर्याप्ताना-मिमे द्वे उदयस्थाने—एकविंशतिः षड्विंशतिश्च । तत्रैकविंशतिरपर्याप्तद्वीन्द्रियाणामियं—तैजसं कार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयं निर्माणं तिर्यग्द्विकं द्वीन्द्रियजातिस्त्रसबादरापर्याप्तानि दुर्भगानादेयायशःकीर्त्तय इति । एषा चैकविंशतिरन्तरालगति स्थानां ज्ञेया । इयं च सर्वाऽप्रशस्तपदेत्येक एव भङ्गः । ततः शरीरस्थस्यौदारिकद्विकहुण्डसेवार्त्तोपघातप्रत्येकलक्षणप्रकृतिषट्कप्रक्षेपे तिर्यगानुपूर्व्याश्चापनयने षड्विंशतिः । अत्राप्येक एव भङ्गः । एवं त्रीन्द्रियादीनामपि वाच्यम् । तदेवमपर्याप्तद्वीन्द्रियादीनामुदयस्थाना-भिर्द्वौ द्वौ भङ्गौ, केवलमपर्याप्तसंज्ञिनश्चत्वारः, यतो ह्यपर्याप्तसंज्ञिनस्तिरश्चो द्वौ च मनुष्यस्येति । तथा पर्याप्तसूक्ष्मैकेन्द्रियाणां चत्वार्युदयस्थानानि—एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिश्च । तत्रैकविंशतिरियं—तैजसं कार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयं निर्माणं तिर्यग्द्विकं एकेन्द्रियजातिः स्थावरसूक्ष्मपर्याप्तदुर्भगानादेयायशःकीर्त्तय इति । एषा चैकविंशतिः सूक्ष्मपर्याप्त-

स्यापान्तरालस्थस्य, अत्रैको भङ्गः, प्रतिपक्षपदविकल्पाभावात्। अस्यां हुण्डोपघातौदारिकशरीरप्रत्येकसाधारणैकतरलक्षणप्रकृतिचतुष्टयक्षेपे तिर्यगानुपूर्व्यपनयने चतुर्विंशतिः, सा च शरीरस्थस्य, अत्र प्रत्येकसाधारणाभ्यां द्वौ भङ्गौ। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, अत्रापि तावेव द्वौ भङ्गौ। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते षड्विंशतिः, अत्रापि तावेव द्वौ भङ्गौ। सर्वसंख्यया सूक्ष्मपर्याप्तस्य सप्त भङ्गाः। पर्याप्तबादरैकेन्द्रियाणामुदयस्थानान्येकविंशत्यादीनि पञ्च २१–२४–२५–२६–२७। तत्रैकविंशतिरियं–तैजसं कार्मणमगुरुलघु स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयं निर्माणं तिर्यग्द्विकमेकेन्द्रियजातिः स्थावरबादरपर्याप्तदुर्भगानादेयानि यशःकीर्त्ययशःकीर्त्योरेकतरेति। एषा चैकविंशतिरपान्तरालस्थस्य, अत्र यशःकीर्त्ययशःकीर्त्तिभ्यां द्वौ भङ्गौ। ततः शरीरस्थस्यौदारिकहुण्डोपघातप्रत्येकसाधारणैकतरलक्षणप्रकृतिचतुष्टयक्षेपे तिर्यगानुपूर्व्यपनयने चतुर्विंशतिः। अत्र प्रत्येकसाधारणयशःकीर्त्ययशःकीर्त्तिभिश्चत्वारो भङ्गाः। वैक्रियं कुर्वतस्तु बादरवायुकायिकस्यैकः, यतस्तस्य साधारणयशःकीर्त्ती उदये नागच्छतः। अन्यच्च वैक्रियवायुकायिकचतुर्विंशतावौदारिकशरीरस्थाने वैक्रियशरीरं वाच्यं, शेषं तथैव। सर्वसंख्यया चतुर्विंशतौ पञ्च भङ्गाः। ततः शरीरपर्याप्त्या पर्याप्तस्य पराघाते क्षिप्ते पञ्चविंशतिः, अत्रापि तथैव पञ्च भङ्गाः। ततः प्राणपानपर्याप्त्या पर्याप्तस्योच्छ्वासे क्षिप्ते षड्विंशतिः, अत्रापि तथैव पञ्च भङ्गाः। अथवा शरीरपर्याप्त्या पर्याप्तस्योच्छ्वासेऽनुदिते आतपोद्योतान्यतरस्मिँस्तूदिते षड्विंशतिः, अत्रातपेन प्रत्येकयशःकीर्त्ययशःकीर्त्तिपदैर्द्वौ भङ्गौ। साधारणस्यातपोदयाभावात्तदाश्रितविकल्पाभावः। उद्योतेन प्रत्येकसाधारणयशःकीर्त्ययशःकीर्त्तिपदैश्चत्वारः। सर्वसंख्यया षड्विंशतावेकादश भङ्गाः। ततः प्राणापानपर्याप्त्या पर्याप्तस्योच्छ्वाससहितायां षड्विंशतावातपोद्योतयोरन्यतरस्मिन् क्षिप्ते सप्तविंशतिः। अत्राप्यातपेन द्वौ उद्योतेन सह चत्वार इति सर्वसंख्यया सप्तविंशतौ षट्।

बादरपर्याप्तस्य सर्वे भङ्गा एकोनत्रिंशत्। संज्ञिपर्याप्तस्य चतुर्विंशतिवर्जानि सर्वाण्यप्युदयस्थानानि। चतुर्विंशत्युदय एकेन्द्रियाणामेवेति न्त्रविशेषः। उदयस्थानभङ्गाश्च देवनारकतिर्यग्मनुष्यानधिकृत्य यथाऽधस्तादुक्तास्तथैवात्रापि भाव्याः। पर्याप्तद्वित्रिचतुरिन्द्रियासंज्ञिना-मेकविंशतिषड्विंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्रूपाः षडुदया भवन्ति। तत्र द्वित्रिचतुरिन्द्रियाणां यथाऽधस्ताद्भङ्गास्तथात्रापि वाच्याः। यथा च सामान्यतिर्यक्पञ्चेन्द्रियाणामधस्तादुक्तास्तथाऽसंज्ञिनामपि। नवरं सर्वेषामप्येकविंशतौ षड्विंशतौ च प्रत्येकमपर्या-प्तकाश्रितो य एकैको भङ्गः स इह न वाच्यः, पर्याप्तानामेवेह चिन्त्यमानत्वात्। सत्तास्थानान्याद्येषु त्रयोदशसु जीवस्थानेषु पञ्च पञ्च, तत्र [illegible]संज्ञानि द्विनवतिरष्टाशीतिश्च। तत्राष्टसप्ततिः सूक्ष्मबादरैकेन्द्रियेषु तेजोवायुवर्ज्याद्येषु चतुर्षूदयेषु, तेजोवायुभवादुद्वृत्तेषु चैकविंशतिचतुर्विंशत्युदययोः, द्वीन्द्रियादिषु तु तेजोवायुभवादुद्वृत्तेषु एकविंशतिचतुर्विंशत्युदययोः प्राप्यते, न शेषेषूदयेषु। संज्ञिनस्तु गुणस्थानक्रमेण आद्यान्यपि सत्तास्थानानि नाम्नः प्रागुक्तदिशा भावनीयानि।

अथ गत्यादिषु बन्धादिस्थानविषयसत्पदप्ररूपणा क्रियते। तत्र नारकतिर्यक्सुरगतिषु कर्माणि बध्यन्ते सप्ताष्टौ वा, तत्रायुर्बन्ध-कालेऽष्टौ, शेषकाले सप्त। उदये च अष्टावेव। उदीर्यन्ते सप्ताष्टौ वा, तत्र स्वस्वायुःपर्यन्तावलिकायां नोदीर्यत इति सप्त, शेषकालं त्वष्ट उदीरणानि। सन्ति चैता तिसृषु गतिष्वष्टैव प्राप्यन्ते, न तु कदापि सप्त चत्वारि वा, तत्र श्रेण्यादिप्रतिपत्त्यभावात्, मनुष्यगतावि-न्द्रियद्वारे पञ्चेन्द्रियाणां कायद्वारे त्रसानां गुणस्थानाभिहितं द्रष्टव्यं, तच्चेदं—मिश्रं वर्जयित्वा सप्तमगुणस्थानं यावत्सप्तानामष्टानां वा बन्धः। तत्रायुर्बन्धकाले सप्तानां, शेषकालं त्वष्टानाम्। मिश्रापूर्वकरणानिवृत्तिबादरेषु सप्तानामेव, तेषामतिविशुद्धत्वेनायुर्बन्धासंभवात्। सू-क्ष्मसम्पराये षण्णां बन्धः, तत्र मोहस्याप्यबन्धात्। ततः परं त्रिषु गुणस्थानेष्वेकस्यैव वेदनीयस्य बन्धः। तथा सूक्ष्मसम्परायं यावदष्टाना-

मुदयसत्ते, उपशान्तमोहे सप्तानामुदयोऽष्टानां सत्ता। क्षीणमोहे सप्तानामेवोदयः सत्ता च । सयोगिकेवलिनोश्चतुर्णामुदयसत्ते ।
तथा षष्ठं गुणस्थानं यावत्सप्तानामष्टानां वोदीरणा । तत्र यदायुः पर्यन्तावलिकाप्राप्तं भवति तदा तस्योदीरणाऽभावात्सप्तानामुदीरणा,
शेषकालं त्वष्टानाम्। मिश्रगुणस्थाने तु सदैवाष्टानामेव, आयुःपर्यन्तावलिकायां वर्त्तमानस्य मिश्रगुणस्थानासंभवात्। अप्रमत्तापूर्वकरणा-
निवृत्तिबादरेषु वेदनीयायुर्वर्जानां षण्णामुदीरणा, तेषु वेदनीयायुषोरुदीरणाभावात् तद्योग्याध्यवसायस्थानासंभवात् । सूक्ष्मसम्पराये
षण्णां पञ्चानां वोदीरणा, तत्र प्रथमतः षण्णां, सा च तावद्यावदावलिका गुणस्थानस्य शेषा न भवति, आवलिकायां तु शेषीभूतायां
मोहनीयमप्यावलिकाप्रविष्टमिति तस्योदीरणाया अभावात्पञ्चानामुदीरणा। एतेषामेव पञ्चानामुपशान्तमोहेऽपि । क्षीणमोहे पञ्चानां
तावदुदीरणा यावत्स्वावलिका शेषा न भवति । आवलिकायां तु शेषीभूतायां ज्ञानावरणदर्शनावरणान्तरायाणामप्यावलिकाप्रविष्टत्वे-
नोदीरणाया अभावात् द्वयोर्नामगोत्रयोरुदीरणा । सयोगिकेवलिन्यपि तयोरेव द्वयोरुदीरणा । अयोगी तु योगाभावादेव न किंचिदु-
दीरयति । एकद्वित्रिचतुरिन्द्रियाणां कायद्वारे स्थावरकायानां सप्तानामष्टानां वा बन्धोदीरणे, अष्टानामुदयसत्ते । तथा योगद्वारे मनो-
योगिनो वीतरागच्छद्मस्थपर्यवसाना इव वेदितव्याः, मनोयोगिनां क्षीणमोहगुणस्थानकं यावत्संभवात्। काययोगिनो वाग्योगिनश्च
सयोगिकेवलिपर्यन्ता इव द्रष्टव्याः, काययोगवाग्योगयोः सयोगिकेवलिगुणस्थानं यावत्संभवात् । वेदद्वारे त्रिवेदाः, कषायद्वारे त्रिक-
षाया नवगुणस्थानतुल्याः, वेदत्रयस्य कषायत्रयस्य चानिवृत्तिबादरसम्परायं यावत्संभवात । लोभे सूक्ष्मसम्परायान्ता इव वाच्याः,
लोभस्य सूक्ष्मसम्परायं यावत्संभवात् । ज्ञानद्वारे मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानेषु मिथ्यादृष्ट्यादिषु सम्यङ्मिथ्यादृष्टिपर्यन्तेष्विव ।
मतिश्रुतावधिज्ञानेष्वविरतसम्यग्दृष्ट्यादिषु क्षीणमोहपर्यन्तेष्विव । मनःपर्यवज्ञाने प्रमत्तसंयतादिषु क्षीणमोहपर्यन्तेष्विव । केवलज्ञाने

सयोग्ययोगिकेवलिनोरिव । संयमद्वारे सामायिकच्छेदोपस्थापनयोः प्रमत्तसंयतादिष्वनिवृत्तिबादरपर्यन्तेष्विव । परिहारविशुद्धिके प्रमत्ताप्रमत्तयोरिव । सूक्ष्मसम्पराये सूक्ष्मसम्परायगुणस्थान इव । यथाख्यातसंयमे उपशान्तमोहक्षीणमोहसयोग्ययोगिकेवलिनामिव । देशसंयमे देशविरतगुणस्थान इव । असंयमे प्रथमगुणस्थानचतुष्टयस्थानामिव । दर्शनद्वारे चक्षुरचक्षुर्दर्शनयोर्मिथ्यादृष्ट्यादीनां क्षीणमोहान्तानामिव । अवधिदर्शनेऽविरतसम्यग्दृष्ट्यादीना क्षीणमोहान्तानामिव । केवलदर्शने सयोग्ययोगिकेवलिनोरिव । लेश्याद्वारे आद्यासु पञ्चसु लेश्यासु मिथ्यादृष्ट्यादीनामप्रमत्तसंयतान्तानामिव । शुक्ललेश्यायां मिथ्यादृष्ट्यादीनां सयोगिकेवलिपर्यन्तानामिव वाच्यम् । भव्यद्वारे भव्येषु सर्वगुणस्थानतुल्यम् । अभव्येषु मिथ्यादृष्टेरिव । सम्यक्त्वद्वारे क्षायोपशमिकसम्यक्त्वेऽविरतसम्यग्दृष्ट्यादीनामप्रमत्तसंयतान्तानामिव । औपशमिकसम्यक्त्वेऽविरतसम्यग्दृष्ट्यादीनामुपशान्तमोहान्तानामिव । क्षायिकसम्यक्त्वेऽविरतसम्यग्दृष्ट्यादीनामयोगिकेवलिपर्यन्तानामिव । मिथ्यात्वे मिथ्यादृष्टेरिव । सासादने सासादनस्येव । मिश्रे मिश्रस्येव । संज्ञिद्वारे संज्ञिषु मनुष्यगताविव। असंज्ञिषु मिथ्यादृष्टिसासादनयोरिव । आहारकद्वारेऽनाहारके मिथ्यादृष्टिसासादनाविरतसम्यग्दृष्टययोगिकेवलिनामिव । आहारके मिथ्यादृष्ट्यादीनां सयोगिकेवलिपर्यन्तानामिव सत्पदप्ररूपणा कर्तव्या । तदेवं सप्ततिकार्थोऽपि सम्बन्धाधिकारे प्रसक्तानुप्रसक्तः प्ररूपितः । तदेवं ग्रन्थकर्त्ता यत् पूर्वं प्रतिज्ञातं कर्माष्टकस्य करणाष्टकमुदयसत्त्वे च वक्ष्यामीति तत्समर्थितम् ॥५४॥

करणोदयसंतविऊ तन्निज्जरकरणसंजमुज्जोगा । कम्मट्ठगुदयनिट्ठाजणियसणिट्ठं सुहमुवेंति ॥५५॥

१ कर्मग्रन्थे गाथासु तिसृषु लेश्यासु चत्वारि षट् वा गुणस्थानान्युक्तानि, अत्र गाथासु पञ्चसु लेश्यासु अप्रमत्तपर्यन्तानि सप्त गुणस्थानानि प्रतिपादितानि तत् मतान्तरेणावसेयम् ।

(चू०)—'करणोदयसत्तविदु'त्ति–अट्ठण्हं करणाणं उदयसंताण य (विऊ–नाणवंता) जा (जो) करणउदयसंताणं, णिज्जरकरणं करेति संजमो तंमि उज्जोगवंता, 'कंमट्ठगुदयणिट्ठाजणिय'त्ति–अट्ठण्हं कंमाणं 'उदयनिट्ठा' अत्रोदयग्गहणं बंधसत्तोवलक्खणं, तओ बंधुदयसत्ताखयेण जणियं उप्पातियं(जं) मणिट्ठं सुहमुवेंति' त्ति–मणइट्ठं मोक्खसुहं पावेंति ॥

(मलय०)—संप्रति प्रकरणपरिज्ञाननिबन्धनां विशिष्टफलसंप्राप्तिमाह–'करणोदय'त्ति। करणानामुक्तस्वरूपाणामुदयसत्तयोश्च सम्यक् परिज्ञानयुक्ताः, 'तन्निज्जरकरणमंजमुज्जोग' त्ति–तासां करणोदयसत्तानां या निर्जरा तस्याः करणं निर्वर्तनं तदर्थं संयमं प्रति उद्योग-उद्यमो येषां ते तन्निर्जराकरणसंयमोद्योगाः। ते इत्थंभूताः सन्तः किमित्याह–'कर्माष्टकोदयनिष्ठाजनितं', कर्माष्टकस्याष्टानां कर्मणामुदयनिष्ठया, उदयग्रहणं बन्धसत्ताद्युपलक्षणं, ततोऽयमर्थः–बन्धोदयसत्ताक्षयेण जनितमुत्पादितं यत् 'मणिट्ठं' ति–मनस इष्टम्। अथवा 'अणिट्ठं' ति–न विद्यते निष्ठा पर्यवसानं यस्य तदनिष्ठ अपर्यवसानं सुखं, उभयत्रापि मोक्षसुखं, तत् उपयन्ति–प्राप्नुवन्ति। तस्मादवश्यमिह प्रकरणे प्रेक्षावद्भिर्निरन्तरमभ्यासः करणीयः, कृत्वा च यथाशक्ति संयमाध्वनि प्रवर्तितव्यं, प्रवृत्तेन च सता संक्लिष्टाध्यवसायरूपकुपथपरिहारे यत्न आस्थेय इति ॥७५॥

(उ०)—सम्प्रति प्रकरणपरिज्ञानस्य विशिष्टफलमाह–करणोदयसत्ताविदः, करणानामुक्तस्वरूपाणां बन्धादीनामुदयसत्तयोश्च समयपरिज्ञानयुक्ताः, तन्निर्जराकरणसंयमोद्योगा इति–तासां करणोदयसत्तानां या निर्जरा तस्याः करणं निर्वर्त्तनं तदर्थं संयमोद्योगश्चारित्राभ्यासो येषां ते तथा। करणाष्टकस्योदयनिष्ठया, उदयग्रहणं बन्धसत्तोपलक्षणं, ततो बन्धोदयसत्ताक्षयेणेत्यर्थः, तेन जनितमुत्पादितं

यत्र 'मणिट्ठं' ति–मनस इष्टं, यद्वा 'अणिट्ठं'–ति निष्ठा पर्यवसानं तद्रहितं सुखं परमपदप्राप्तिभाव्यव्याबाधलक्षणमुपयन्ति प्राप्नुवन्ति । तथाहि कर्माष्टकादिपरिज्ञानतत्त्वस्तथातथापरिणामयुक्तं कर्मजालमेव दुरन्तदुःखज्वलनज्वालावलीढसंसारकारणं निश्चिन्वन्तस्तत्क्षयाय [illegible] समभ्यस्यमाना इच्छायोगशास्त्रयोगपरिपाकोपनतशुद्धात्मस्वभावलाभास्तदनन्तरप्रसृमरसामर्थ्ययोगातिशयदहनदग्धविशेषान्तरगताः परमधर्ममन्न्यामपवित्रा महात्मानः क्षपकश्रेणिमपि प्रारभन्ते । तत्र चायं क्रमः—

इह यः क्षपकश्रेणिप्रस्थापकः सोऽवश्यं मनुष्यो वर्षाष्टकस्योपरि वर्त्तमानः उत्तमसंहननी शुभध्यानोऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमः, केवलं यद्यप्रमत्तसंयतः पूर्ववित्तदा शुक्लध्यानोपगतः, शेषस्तु सर्वोऽपि धर्मध्यानोपगतः । तत्र क्षपकश्रेणिमारोहन् प्रथमतोऽनन्तानुबन्धिनः क्षपयति, तद्विधिश्च निःशेषः प्रागुक्त एवेति न भूय उच्यते । क्षीणसप्तकश्चाबद्धायुश्चारित्रमोहनीयक्षपणाय यतमानो यथाप्रवृत्तादिकरणत्रयं करोति । तत्र यथाप्रवृत्तकरणमप्रमत्तगुणस्थाने, अपूर्वकरणमपूर्वकरणगुणस्थाने, अनिवृत्तिकरणमनिवृत्तिबादरसम्परायगुणस्थाने । तत्रापूर्वकरणे स्थितिघातादिभिर्मध्यमकषायाष्टकं तथा क्षपयति यथाऽनिवृत्तिकरणाद्धाप्रथमसमये तत्पल्योपमासङ्ख्येयभागमात्रस्थितिकं भवति, अनिवृत्तिकरणाद्धायाश्च सङ्ख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिकनरकद्विकतिर्यग्द्विकाद्यजातिचतुष्कानुपूर्व्यातपोद्योतसूक्ष्मसाधारणानां षोडशप्रकृतीनामुद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासङ्ख्येयभागमात्रा स्थितिर्भवति । ततो [illegible] प्रकृतिषु तानि षोडशापि कर्माणि गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि निःशेषतोऽपि क्षीणानि भवन्ति । इह मध्यमकषायाष्टकं प्रागेव क्षपयितुमारब्धं परं तन्नाद्यापि क्षीणं, केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषोडशकं क्षपितं, ततः पश्चात्तदपि कषायाष्टकं [illegible] क्षपयति, एष सूत्रादेशः । अन्ये त्वाहुः–षोडशकर्माण्येव पूर्वं क्षपयितुमारभते, केवलमपान्तरालेऽष्टौ कषायान्

क्षपयति, पश्चात् षोडश कर्माणीति । ततोऽन्तर्मुहूर्त्तमात्रेण नवानां नोकषायाणां चतुर्णां च संज्वलनानामन्तरकरणं करोति । अन्तरकरणं च कृत्वा नपुंसकवेददलिकमुपरितनस्थितिगतमुद्वलनविधिना क्षपयितुमारभते, तच्चान्तर्मुहूर्त्तमात्रेण पल्योपमासंख्येयभागमात्रं भवति । ततः प्रभृति बध्यमानासु प्रकृतिषु गुणसंक्रमेण तद्दलिकं प्रक्षिपति । तच्चैवं प्रक्षिप्यमाणं प्रक्षिप्यमाणमन्तर्मुहूर्त्तमात्रेण निःशेषं क्षीयते, अधस्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति, अन्यथा त्वावलिकामात्रं तत्, तच्च वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति । तदेवं क्षपितो नपुंसकवेदः । ततोऽन्तर्मुहूर्त्तेन कालेन स्त्रीवेदोऽप्यनेनैव क्रमेण क्षप्यते, ततः षड् नोकषायान् युगपत्क्षपयितुमारभते । ततः प्रभृति तेषामुपरितनस्थितिगतं दलिकं पुंवेदे न संक्रमयति, अपि तु संज्वलनक्रोधे । एवं चान्तर्मुहूर्त्तेन नोकषायषट्कोपरितनदलिकं निःशेषतः क्षीणं, तत्समय एव च पुंवेदस्य बन्धोदयोदीरणोच्छेदः समयोनावलिकाद्वयबद्धं मुक्त्वा शेषदलिकक्षयश्च, इदं च पुंवेदिनः प्रारम्भकस्य ज्ञेयम् । यदा तु नपुंसकवेदी प्रारम्भकस्तदा प्रथमं स्त्रीवेदनपुंसकवेदौ युगपत्क्षपयति, तत्क्षयसमय एव च पुंवेदबन्धव्यवच्छेदः । ततः पुंवेदहास्यषट्के युगपत्क्षपयति । यदा तु स्त्रीवेदी क्षपकश्रेणिप्रारम्भकस्तदा प्रथमं नपुंसकवेदं ततः स्त्रीवेदं क्षपयति, तत्क्षयसमकालमेव च पुंवेदबन्धव्युच्छेदः, ततः पुंवेदहास्यषट्कयोर्युगपत्क्षयः । अथ पुंवेदिनः प्रस्तुतमभिधीयते—क्रोधं वेदयमानस्य पुंवेदिनः क्रोधाद्धाया भागत्रयं भवेत्—अश्वकर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च । तत्राश्वकर्णकरणाद्धायां वर्त्तमानः प्रतिसमयमनन्तान्यपूर्वस्पर्धकानि संज्वलनचतुष्कस्याप्यन्तरकरणेनोपरितनस्थितौ करोति । अस्यां चाद्धायां वर्त्तमानः पुंवेदमपि समयोनद्व्यावलिकारूपेण कालेन क्रोधे गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयति । एवं क्षीणपुरुषवेदः अश्वकर्णकरणाद्धासमाप्त्यनन्तरं किट्टिकरणाद्धायां प्रविष्टः सन् संज्वलनचतु-

[illegible]ोपरितनस्थितिगतदलिकस्य किट्टीः करोति, ताश्च परमार्थतोऽनन्ता अपि स्थूरजातिभेदापेक्षया द्वादश कल्प्यन्ते, एकैकस्य कषायस्य त्रिस्त्रिस्रः प्रथमा द्वितीया तृतीया चेति । इदं च क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम् । मानेन तु तां प्रतिपद्यमानस्य प्रागुक्तोद्वलनविधिना क्रोधे क्षपिते सति शेषत्रयस्य प्राग्वत् नव किट्टीः करोति । मायया तु प्रतिपन्नस्य पूर्वं क्रोधमानयोरुद्वलनविधिना क्षयं कृत्वा शेषद्विकस्य प्राग्वत् षट् किट्टीः करोति । लोभेन तु प्रतिपन्नस्योद्वलनविधिना क्रोधादित्रिकक्षयं कृत्वा लोभस्य किट्टित्रिकं करोति । एष किट्टीकरणविधिः । किट्टिकरणाद्धायां निष्ठितायां क्रोधेन प्रतिपन्नः क्रोधस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । तिसृष्वपि चामूषु किट्टिवेदनाद्धासूपरितनस्थितिगतं दलिकं गुणसंक्रमेणापि प्रतिसमयमसंख्येयगुणवृद्धिलक्षणेन संज्वलनमाने प्रक्षिपति । तृतीयकिट्टिवेदनाद्धायाश्चरमसमये संज्वलनक्रोधस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धं मुक्त्वाऽन्यन्नास्ति, सर्वस्य माने प्रक्षिप्तत्वात् । ततोऽनन्तरसमये मानस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं, क्रोधस्यापि च तस्मादौ व्यवच्छिन्ने सति तस्य सम्बन्धिदलिकं समयोनावलिकाद्विकमात्रेण कालेन गुणसंक्रमेण संक्रमयन् चरमसमये सर्वं संक्रमयति । मानस्यापि च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातम् । ततोऽनन्तरसमये मानस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः ।

ततोऽनन्तरसमये तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव च समये मानस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धमेव, शेषस्य मायायां प्रक्षिप्तत्वात् । ततो मायायाः प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य. प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्त्तमात्रम् । संज्वलनमानस्य च बन्धादौ व्यवच्छिन्ने तस्य सम्बन्धि दलिकं समयोनावलिकाद्विकमात्रेण कालेन गुणसंक्रमेण मायायां सर्वं प्रक्षिपति । मायाया अपि च प्रथमकिट्टिदलिकं द्वितीयस्थितिगतं प्रथमस्थितिकृतं वेद्यमानं समयाधिकावलिकाशेषं जातम् । ततोऽनन्तरसमये मायाया द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव च समये मायाया बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्याः समयोनावलिकाद्विकबद्धमात्रमेव, शेषस्य गुणसंक्रमेण लोभे प्रक्षिप्तत्वात् । ततोऽनन्तरसमये लोभस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्त्तम् । सञ्ज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने तत्सम्बन्धि दलिकं समयोनावलिकाद्विकमात्रेण कालेन गुणसंक्रमेण सर्वं लोभे सक्रमयति । सञ्ज्वलनलोभस्य च प्रथमकिट्टिदलिकं प्रथमस्थितिकृतं वेद्यमानं समयाधिकावलिकामात्रशेषं जातम् । ततोऽनन्तरसमये लोभस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितीं करोति वेदयते च, तां च वेदयमानस्तृतीयकिट्टिदलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति तावद्यावत् द्वितीयकिट्टिदलिकस्य प्रथमस्थितीकृत्य वेद्यमानस्य समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव च समये संज्वलनलोभस्य बन्धबादरकपायोदीरणानवमगुणस्थानकालानां युगपद्व्यवच्छेदो जायते । ततो-

तदानीमसौ सूक्ष्मसम्पराय उच्यते । ततस्तत्समये सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च, तदानीमसौ सूक्ष्मसम्पराय उच्यते । प्रथमद्वितीयकिट्टिगताश्च प्रागुक्ताश्चावलिकान्तर्गततृतीयकिट्टिगताः शेषीभूताः सर्वा अपि वेद्यमानासु परप्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति, प्रथमद्वितीयकिट्टिगताश्च यथास्वं द्वितीयतृतीयकिट्ट्यन्तर्गता वेद्यन्ते । सूक्ष्मसम्परायश्च लोभस्य सूक्ष्मकिट्टीर्वेदयमानः सूक्ष्मकिट्टिदलिकं समयोनावलिकाद्विकबद्धं न प्रतिसमयं स्थितिघातादिभिस्तावत् क्षपयति यावत्सूक्ष्मसम्परायाद्धायाः संख्येया भागा गता भवन्ति, एकोऽवशिष्यते. ततस्तस्मिन् संख्येयभागे संज्वलनलोभं सर्वापवर्त्तनयाऽपवर्त्य सूक्ष्मसम्परायाद्धासमं करोति, सा चाद्याप्यन्तर्मुहूर्त्तमाना. ततः प्रभृति च मोहस्य स्थितिघातादयो निवृत्ताः, शेषकर्मणां तु प्रवर्त्तन्त एव, तां च लोभस्यापवर्त्तितां स्थितिमुदयोदीरणाभ्यां वेदयमानस्तावद्गतो यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये उदीरणा स्थिता । तत उदयेनैव केवलेन तां वेदयते यावच्चरमसमयः । तस्मिंश्च चरमसमये ज्ञानावरणपञ्चकदर्शनावरणचतुष्कयशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकरूपाणां षोडशकर्मणां बन्धव्यवच्छेदो मोहनीयस्योदयसत्ताव्यवच्छेदश्च भवति । ततोऽनन्तरसमये क्षीणकषायो जायते । तस्य च शेषकर्मणां स्थितिघातादयः प्राग्वत् प्रवर्त्तन्ते यावत् क्षीणकषायाद्धायाः संख्येया भागा गता भवन्ति, एकः संख्येयो भागोऽवतिष्ठते । तस्मिंश्च ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्कनिद्राद्विकरूपाणां षोडशकर्मणां स्थितिसत्कर्म सर्वापवर्त्तनयाऽपवर्त्य क्षीणकषायाद्धासमं करोति, केवलं निद्राद्विकस्य स्वरूपापेक्षया समयन्यूनं सामान्यतः कर्मरूपतया तु तुल्यम् । ततो द्विचरमसमये निद्राद्विकस्य स्वरूपसत्तापेक्षया क्षयश्चतुर्दशानां प्रकृतीनां चरमसमये क्षयः । ततोऽनन्तरसमये केवली जायते, स च भगवान् जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतश्च देशोनपूर्वकोटिं यावद्विहृत्य सर्वोऽपि समुद्घातादर्वागायोजिकाकरणमारभते । तत्करणानन्तरं च कश्चित् कर्मणां समीकरणार्थं समुद्घातं गच्छति, यस्य वेदनीयादि कर्म

आयुषः सकाशादधिकतरं भवति, अन्यस्तु न करोत्येव । अथ कुतोऽयं नियमो यद्वेदनीयाद्येवायुषः सकाशादधिकस्थितिकं भवति, न तु कदाचिदपि वेदनीयादेरायुरिति ? उच्यते–तथारूपजीवपरिणामस्वाभाव्यात् । इत्थंभूत एव ह्यात्मनः परिणामो येनास्यायुर्वेदनीयादेः समं भवति न्यूनं वा, न तु कदाचनाप्यधिकं, यथा तस्यैवायुषोऽध्रुवबन्धस्वभावः, शेषकर्माणि हि सर्वदैव बध्यते, आयुस्तु प्रतिनियत एव काले स्वभवत्रिभागादिरूपे, न चेदृग्बन्धवैचित्र्ये स्वभावादृतेऽपरः कश्चिदस्ति हेतुः । एवमायुषो वेदनीयादेराधिक्याभावेऽपि स्वभावविशेष एव नियामको द्रष्टव्यः ।

अथ समुद्घात इति कः शब्दार्थः ? उच्यते–सम्यक् अपुनर्भावेन उत्प्राबल्येन घातो वेदनीयादिकर्मणां विनाशो यस्मिन् क्रियाविशेषे स समुद्घातः, तं च कुर्वन् केवली प्रथमसमये बाहल्यतः स्वशरीरप्रमाणमूर्ध्वमधश्च लोकान्तपर्यन्तमात्मप्रदेशानां दण्डमारचयति, द्वितीये समये पूर्वापरं दक्षिणोत्तरं वा कपाटं, तृतीये मन्थानं, चतुर्थेऽवकाशान्तरपूरणं, पञ्चमेऽवकाशान्तराणां संहारं, षष्ठे मथः, सप्तमे कपाटस्य, अष्टमे स्वशरीरस्थो भवति। तत्र दण्डसमयात्प्राग् या पल्योपमासंख्येयभागमात्रा वेदनीयनामगोत्राणां स्थितिरासीत्तस्या बुद्ध्याऽसंख्येया भागाः क्रियन्ते । ततो दण्डसमये दण्डं कुर्वन्नसंख्येयान् भागान् हन्ति, एकोऽसंख्येयो भागोऽवतिष्ठते । यश्च प्राक् कर्मत्रयस्यापि रस आसीत्तस्याप्यनन्ता भागाः क्रियन्ते, ततस्तस्मिन् दण्डसमयेऽसातवेदनीयाद्यवर्जसंस्थानपञ्चकाद्यवर्जसंहननपञ्चकाप्रशस्तवर्णादिचतुष्कोपघाताप्रशस्तविहायोगत्यपर्याप्तकास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तिनीचैर्गोत्राणां पञ्चविंशतिप्रकृतीनामनन्तान् भागान् हन्ति, एकोऽनन्तभागोऽवशिष्यते । तस्मिन्नेव च समये सातवेदनीयदेवद्विकमनुजद्विकपञ्चेन्द्रियजातिशरीरपञ्चकाङ्गोपाङ्गत्रयप्रथमसंस्थानप्रथमसंहननप्रशस्तवर्णादिचतुष्टयागुरुलघुपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकातपोद्योतस्थिरशुभसु-

अगुरुलघ्वादियशःकीर्तिनिर्माणतीर्थंकरोच्चैर्गोत्ररूपाणामेकोनचत्वारिंशतः प्रकृतीनामनुभागोऽप्रशस्तप्रकृत्यनुभागमध्ये प्रवेशनेनोपहन्यते। समुद्घातमाहात्म्यमेतत्। तस्य चोद्धरितस्य स्थितेरसंख्येयभागस्यानुभागस्य चानन्ततमभागस्य पुनर्बुद्ध्या यथाक्रममसंख्येया अनन्ताश्च भागाः क्रियन्ते। ततो द्वितीये कपाटसमये स्थितेरसंख्येयान् भागान् हन्ति, एकोऽवशिष्यते, अनुभागस्य चानन्तान् भागान् हन्ति, एकं मुञ्चति। अत्राप्यप्रशस्तप्रकृत्यनुभागमध्यप्रवेशनेन प्रशस्तप्रकृत्यनुभागघातो द्रष्टव्यः। पुनरप्येतस्मिन् समयेऽवशिष्टस्य स्थितेरसंख्येयभागस्यानुभागस्य चानन्ततमभागस्य बुद्ध्या यथाक्रममसंख्येया अनन्ताश्च भागाः क्रियन्ते। ततस्तृतीये समये स्थितेरसंख्येयान् भागान् हन्ति, एकं मुञ्चति, अनुभागस्य चानन्तान् भागान् हन्ति, एकमनन्ततमभागं मुञ्चति। अत्रापि प्रशस्तप्रकृत्यनुभागघातोऽप्रशस्तप्रकृत्यनुभागमध्यप्रवेशनेनावसेयः। ततः पुनरपि तृतीयसमयावशिष्टस्य स्थितेरसंख्येयभागस्यानुभागस्य चानन्ततमभागस्य बुद्ध्या यथाक्रममसंख्येया अनन्ताश्च भागाः क्रियन्ते। ततश्चतुर्थसमये स्थितेरसंख्येयान् भागान् हन्ति, एकस्तिष्ठति, अनुभागस्याप्यनन्तान् भागान् हन्ति, एकोऽवशिष्यते। प्रशस्तप्रकृत्यनुभागघातश्च पूर्ववदवसेयः। एवं स्थितिघातादि कुर्वन्चतुर्थसमये स्वप्रदेशापूरितसमस्तलोकस्य भगवतो वेदनीयादिकर्मत्रयस्थितिरायुषः संख्येयगुणा जाता, अनुभागस्त्वद्याप्यनन्तगुणः। चतुर्थसमयावशिष्टस्य च स्थितेरसंख्येयभागस्यानुभागस्य चानन्ततमभागस्य भूयोऽपि बुद्ध्या यथाक्रमं संख्येया अनन्ताश्च भागाः क्रियन्ते। ततोऽवकाशान्तरसंहारसमये स्थितेः संख्येयान् भागान् हन्ति, एकं संख्येयभागं शेषीकरोति, अनुभागस्य चानन्तान् भागान् हन्ति, एकं मुञ्चति। एवमेतेषु पञ्चसु दण्डादिसमयेषु प्रत्येकं सामयिकं कण्डकमुत्कीर्णं, समये समये स्थितिकण्डकानुभागकण्डकघातनात्।

तावदुत्किरति यावदन्तर्मुहूर्त्तचरमसमये सकलमपि तत्कण्डकमुत्कीर्णं भवति। एवमान्तर्मौहूर्त्तिकानि स्थितिकण्डकान्यनुभागकण्डकानि च तावद्घातयति यावत्सयोग्यवस्थाचरमसमयः। सर्वाण्यपि चामूनि स्थित्यनुभागकण्डकान्यसंख्येयान्यवगन्तव्यानि। अयं च समुद्घातविधिरावश्यकचूर्ण्यनुसारेणाभिहितः। यस्य तु केवलिनो वेदनीयादिकर्मत्रयमायुषा सह समस्थितिकं स समुद्घातं न गच्छति। गत्वाऽगत्वा वा समुद्घातं लेश्यानिरोधार्थं योगनिमित्तबन्धनिरोधार्थं च योगनिरोधमवश्यं कुरुते। उक्तं च—"स ततो योगनिरोधं करोति लेश्यानिरोधमभिकाङ्क्षन्। समयस्थितिकं च बन्धं योगनिमित्तं विनिरुरुत्सन् ॥१॥ समये समये कर्मादाने सति संततेर्न मोक्षः स्यात्। यद्यपि हि विमुच्यन्ते स्थितिक्षयात् पूर्वकर्माणि ॥२॥ नोकर्मणा हि वीर्यं योगद्रव्येण भवति जीवस्य। तस्यावस्थानेन तु सिद्धः समयस्थितिर्बन्धः ॥३॥" अत्र बन्धस्य समयमात्रस्थितिकता बन्धसमयबहिर्भावेन द्रष्टव्या। योगनिरोधं कुर्वन् प्रथमतो बादरकाययोगबलादन्तर्मुहूर्त्तमात्रेण वाग्योगं निरुणद्धि। तन्निरोधानन्तरं चान्तर्मुहूर्त्तं स्थित्वा बादरकाययोगोपष्टम्भादेव बादरमनोयोगमन्तर्मुहूर्त्तमात्रेण निरुणद्धि। उक्तं च—"बादरतन्वा पूर्वं वाङ्मनसे निरुणद्धि। आलम्बनाय करणं तदिष्यते तत्र वीर्यवतः ॥१॥" बादरमनोयोगनिरोधानन्तरं च पुनरप्यन्तर्मुहूर्त्तं स्थित्वोच्छ्वासनिःश्वासावन्तर्मुहूर्त्तमात्रेण निरुणद्धि। ततः पुनरप्यन्तर्मुहूर्त्तं स्थित्वा सूक्ष्मकाययोगबलाद्बादरकाययोगं निरुणद्धि, सति बादरयोगे सूक्ष्मयोगस्य निरोद्धुमशक्यत्वात्। आह च—"बादरतनुमपि निरुणद्धि ततः सूक्ष्मेण काययोगेन। न निरुध्यते हि सूक्ष्मो योगः सति बादरे योगे ॥१॥" केचिदाहुः—"बादरकाययोगबलाद्बादरकाययोगं निरुणद्धि, यथा कारपत्रिकः स्तम्भे स्थितस्तमेव स्तम्भं छिनत्ति"। तदत्र तन्नमतिशायिनो विदन्ति। बादरं च काययोगं निरुन्धानः पूर्वस्पर्धकानामधस्तादपूर्वस्पर्धकानि करोति। तत्र यानि तस्मिन् भवे पर्याप्तिपर्यायपरिणतेन सता जीवेन पूर्वं कायादिव्यापारनिष्पा-

र्दनार्थं कृतानि तानि पूर्वस्पर्धकान्यभिधीयन्ते। तानि च स्थूलानि। यानि पुनरधुना कर्तुमारभते तानि सूक्ष्माणि। न चैवंभूतान्यनादौ संसारे कृतानि, ततोऽपूर्वाणीत्युच्यन्ते। तत्र पूर्वस्पर्धकानामधस्तन्यो याः प्रथमादिवर्गणाः सन्ति तासां ये वीर्याविभागपलिच्छेदास्तेषामसंख्येयान् भागानाकर्षति, एकमसंख्येयं भागं मुञ्चति। जीवप्रदेशानामपि चैकमसंख्येयं भागमाकर्षति, शेषं सर्वं स्थापयति। एष बादरकाययोगनिरोधप्रथमसमयव्यापारः। तथा च कर्मप्रकृतिप्राभृतं–"पढमसमए अपुव्वफड्डगाणि करेइ पुव्वफड्डगाणं हेट्ठा आइवग्गणाण अविभागपलिच्छेयाणमसंखेज्जे भागे ऊकड्ढइ जीवपएसाणं च असंखेज्जइमं भागमोकड्ढइ त्ति"। ततो द्वितीयसमये प्रथमसमयाकृष्टजीवप्रदेशासंख्येयभागादसंख्येयगुणं भागं जीवप्रदेशानामाकर्षति तावतोऽसंख्येयान् भागानाकर्षतीत्यर्थः। वीर्याविभागपरिच्छेदानामपि प्रथमसमयाकृष्टाद्भागात्संख्येयगुणहीनं भागमाकर्षति। एवं प्रतिसमयं समाकृष्य समाकृष्य तावदपूर्वस्पर्धकानि करोति यावदन्तर्मुहूर्त्तचरमसमयः। कियन्ति पुनः स्पर्धकानि करोतीति चेदुच्यते–श्रेणिवर्गमूलस्यासंख्येयभागमात्राणि। अपूर्वस्पर्धककरणान्तर्मुहूर्त्तानन्तरसमय एव च किट्टीः कर्तुमारभते। ताश्चान्तर्मुहूर्त्तं यावत्करोति। उक्तं च–"नाशयति काययोगं स्थूलं सोऽपूर्वकरणेनाऽस्य। सोऽस्य काययोगस्य तथा किट्टीश्च स करोति॥१॥" अथ किट्टिरिति कः पदार्थः? उच्यते–एकोत्तरवृद्धिं त्यक्त्वाऽनन्तगुणहीनैकैकवर्गणास्थापनेन योगस्याल्पीकरणं। तत्र पूर्वस्पर्धकानामपूर्वस्पर्धकानां च याः प्रथमादिवर्गणास्तासां वीर्याविभागपरिच्छेदास्तेषामसंख्येयान् भागानाकर्षति एकमसंख्येयभागं स्थापयति। जीवप्रदेशानामपि चैकमसंख्येयभागमाकर्षति, शेषं सर्वं स्थापयति। एष किट्टीकरणप्रथमसमयव्यापारः। ततो द्वितीयसमये प्रथमसमयाकृष्टवीर्याविभागपरिच्छेदभागादसंख्येयगुणहीनं वीर्याविभागपरिच्छेदानां भागमाकर्षति। जीवप्रदेशानां तु प्रथमसमयाकृष्टजीवप्रदेशासंख्येयभागादसंख्येयगुणभागं तावतोऽसंख्येयान्

भागानाकर्षतीत्यर्थः। एवं तावत् किट्टीः करोति यावदन्तर्मुहूर्त्तचरमसमयः। तत्र प्रथमसमयकृताभ्यः किट्टिभ्यो द्वितीयसमयकृताः किट्टयोऽसंख्येयगुणहीनाः। गुणकारश्च पल्योपमासंख्येयभागः। एवं शेषेष्वपि समयेषु भावनीयम्। तथा चोक्तं कर्मप्रकृतिप्राभृते—"इत्थ अंतोमुहुत्तं किट्टीओ करेइ असंखेज्जगुणहीणाए सेढीए जीवपएसे य असंखेज्जगुणाए सेढीए ऊकड्ढइ, किट्टीगुणकारो पलिऊवमस्स असंखेज्जइभागो त्ति"। प्रथमसमयकृताश्च किट्टयः श्रेण्यसंख्येयभागप्रमाणाः। एवं द्वितीयादिसमयेष्वपि प्रत्येकमवगन्तव्याः। सर्वा अपि च किट्टयः श्रेण्यसंख्येयभागप्रमाणाः पूर्वस्पर्धकानामपूर्वस्पर्धकानां चासंख्येयभागमात्राः। किट्टिकरणावसानानन्तरं च पूर्वस्पर्धकान्यपूर्वस्पर्धकानि च नाशयति। तत्समयादारभ्य चान्तर्मुहूर्त्तं यावत् किट्टिगतयोगो भवति। तथा चोक्तं—"किट्टिकरणे णिट्ठिए तओ से काले पुव्वफड्डगाणि अपुव्वफड्डगाणि च णासेइ अंतोमुहुत्तं किट्टिगयजोगो भवइ त्ति"। न चात्र किञ्चिदपि करोति। ततोऽनन्तरसमये सूक्ष्मकाययोगोपष्टम्भादन्तर्मुहूर्त्तमात्रेण सूक्ष्मवाग्योगं निरुणद्धि। ततो निरुद्धसूक्ष्मवाग्योगोऽन्तर्मुहूर्त्तमात्रं नान्यसूक्ष्मयोगनिरोधं प्रति प्रयत्नवान् भवति। ततोऽनन्तरसमये सूक्ष्मकाययोगोपष्टम्भात् सूक्ष्ममनोयोगमन्तर्मुहूर्त्तमात्रेण निरुणद्धि। ततः पुनरप्यन्तर्मुहूर्त्तमात्रमास्ते। ततः सूक्ष्मकाययोगबलात्सूक्ष्मकाययोगमन्तर्मुहूर्त्तेन निरुणद्धि। त च निरुन्धानः सूक्ष्मक्रियाप्रतिपातिध्यानमारोहति, तत्सामर्थ्याच्च वदनोदरादिविवरपूरणेन संकुचितदेहत्रिभागवर्तिप्रदेशो भवति। आह च—"सूक्ष्मेण काययोगेन ततो निरुणद्धि सूक्ष्मवाङ्मनसे। भवति ततोऽसौ सूक्ष्मक्रियस्तदा किट्टिगतयोग ॥१॥" तमपि स योग सूक्ष्मं निरुरुत्सन् सर्वपर्ययानुगतम्। सूक्ष्मक्रियमप्रतिपात्युपयाति ध्यानममनस्कम् ॥२॥" इत्यादि। सूक्ष्मकाययोगं च निरुन्धानः प्रथमसमये किट्टीनामसंख्येयान् भागान्नाशयति, एकस्तिष्ठति। द्वितीयसमये तस्यैवैकस्य भागस्योद्धरितस्य सम्बन्धिनोऽसंख्येयान् भागान्नाशयति एक उद्धरति। एवं समये समये किट्टीस्ता-

न्तावयति यावदयोग्यवस्थाचरमसमयः । तस्मिँश्च चरमसमये सर्वाण्यपि कर्माण्ययोग्यवस्थासमस्थितिकानि जातानि। येषां च कर्मणामयोग्यवस्थायामुदयाभावस्तेषां स्थितिं स्वरूपं प्रतीत्य समयोनां विधत्ते सामान्यतः सत्ताकालं प्रतीत्यायोग्यवस्थासमानामिति । तस्मिँश्चायोग्यवस्थाचरमसमये सूक्ष्मक्रियाप्रतिपातिध्यानं, सर्वाः किट्टयः, सद्वेद्यबन्धो, नामगोत्रयोरुदीरणा, योगः, शुक्ललेश्या, स्थित्यनुभागघातश्चेति सप्त पदार्था युगपद्व्यवच्छिद्यन्ते । ततोऽनन्तरसमयेऽयोगिकेवली भवति । स च कर्मक्षपणाय व्युपरतक्रियमनिवृत्तिध्यानमारोहति । अत्रायोगिकेवली स्थितिघातादिरहितो यान्युदयवर्त्तीनि कर्माणि तानि स्थितिक्षयेणानुभवन् क्षपयति । यानि तु तदानीमनुदयवन्ति तानि वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयन् वेद्यमानप्रकृतिरूपतया च वेदयमानस्तावद्याति यावदयोग्यवस्थाद्विचरमसमयः । तस्मिँश्च द्विचरमसमये देवद्विकशरीरपञ्चकबन्धनपञ्चकसङ्घातपञ्चकसंस्थानषट्काङ्गोपाङ्गत्रयसंहननषट्कवर्णादिविंशतिपराघातोपघातागुरुलघूच्छ्वासविहायोगतिद्विकस्थिरास्थिरशुभाशुभसुस्वरदुःस्वरदुर्भगप्रत्येकानादेयायशःकीर्त्तिनिर्माणापर्याप्तकनीचैर्गोत्रसातासातान्यतरानुदितवेदनीयरूपाणि द्विसप्ततिः कर्माणि स्वरूपसत्तामधिकृत्य क्षयमुपगच्छन्ति, चरमसमये स्तिबुकसंक्रमेणोदयवतीषु मध्ये संक्रम्यमाणत्वात्। चरमसमये चान्यतरवेदनीयमनुष्यत्रिकपञ्चेन्द्रियजातित्रससुभगादेययशःकीर्त्तिपर्याप्तबादरतीर्थकरोच्चैर्गोत्ररूपाणां त्रयोदशप्रकृतीनां सत्ताव्यवच्छेदः । अन्ये त्वाहुः-मनुष्यानुपूर्व्या द्विचरमसमये व्यवच्छेद उदयाभावात्, उदयवतीनां हि स्तिबुकसंक्रमाभावात् स्वरूपेण चरमसमये दलिकं दृश्यत एवेति युक्तस्तासां चरमसमये सत्ताव्यवच्छेदः, आनुपूर्वीणां च चतसृणामपि क्षेत्रविपाकतयाऽपान्तरालगतावेवोदय इति न भवस्थस्य तदुदयसंभव इत्ययोग्यवस्थाद्विचरमसमय एव मनुष्यानुपूर्व्याः सत्ताव्यवच्छेदः । तन्मते द्विचरमसमये त्रिसप्ततेः, चरमसमये च द्वादशानां सत्ताव्यवच्छेदः । ततोऽनन्तरसमये कर्मबन्धविमोक्षलक्षणसहकारिसमुत्थस्व-

भावविशेषादस्पृशद्गत्योर्ध्वलोकान्तं गच्छति। तत्र च गतः सन् भगवान् परमानन्दमयः शाश्वतं कालमवतिष्ठते। तदेवमनया प्रणाल्याऽस्य शास्त्रस्य मोक्षजनकत्वादस्मिन् शास्त्रे निरन्तरमभ्यासः कार्यः, कृत्वा च यथाशक्ति संयममार्गे यतितव्यं, तत्र यतमानेन च यथोपायं संक्लिष्टाध्यवसायपरिहारः कार्य इति तात्पर्यम् ॥५५॥

**इय कम्मप्पगडीओ जहा सुयं नीयमप्पमइणा वि । सोहियणाभोगकयं कहंतु वरदिट्ठिवायन्नू ॥५६॥**

(चू०)—'इय कम्मप्पगडीओ जहा सुयं णीत' त्ति-एवं कम्मपगडीण दु(द)हाउ जहा सुयं तहा णीयं (उद्धरियं म) य (ए) संतेसु 'अप्पमइण'त्ति-अप्पवुद्धि(वुद्धि)णा 'सोहियणाभोगकयं'ति-अणाभोगेण जं भगियं तं सोहेतु 'कहंतुं वेग(वर)दिट्ठिवायन्नु' त्ति-वरम(स)दो पहा...दु(दिट्ठि)वायस्स संजाणगा कहिंतु ॥५६॥

(मलय०)—सम्प्रत्याचार्य आत्मन औद्धत्यं परिहरन्नन्येषां बहुश्रुतानां प्रकरणार्थपरिभावनाविषये प्रार्थनां च कुर्वन् प्रेक्षावतां प्रकरणविषये उपादेयबुद्धिपरिग्रहार्थं प्रकरणस्य परम्परया सर्वविन्मूलतां ख्यापयति-'इय'त्ति। 'अल्पमतिनापि'-अल्पबुद्धिनापि सता 'इति'-एवमुक्तेन प्रकारेण गुरुचरणकमलपर्युपासनां कुर्वता गुरुपादमूले यथा मया श्रुतं तथा 'कर्मप्रकृतेः'-कर्मप्रकृतिनामकात्प्राभृतात्। दृष्टिवादे हि चतुर्दश पूर्वाणि-तत्र च द्वितीयेऽग्रायणीयाभिधानेऽनेकवस्तुसमन्विते पूर्वे पञ्चमं वस्तु विंशतिप्राभृतपरिमाणम्, तत्र कर्मप्रकृत्याख्यं चतुर्थं प्राभृतं चतुर्विंशत्यनुयोगद्वारमयम्, तस्मादिदं प्रकरणं 'नीतं'-आकृष्टमित्यर्थः। अस्मिंश्च प्रकरणे यत्किमपि स्खलितमनाभोगकृतं-अनाभोगजनितम्। छद्मस्थस्य हि कृतप्रयत्नस्याप्यावरणसामर्थ्यतोऽनाभोगः संभवति। ततोऽनाभोगजनितं यत्किमपि स्खलितं तत् 'शोधयित्वा'-अपनीय ये 'वरा'-उत्कलितबुद्ध्यतिशयसंपन्ना 'दृष्टिवादज्ञा'-द्वादशकाङ्गविदस्ते। ममोपरि

महतीमनुग्रहबुद्धिमास्थाय तत्रान्यत् पदमागमानुसारि प्रक्षिप्य कथयन्तु यथेदमत्र पदं समीचीनं नेदमिति, न पुनरुपेक्षारूपोऽप्रमादस्तैः कर्त्तव्यः। अत्र 'इय कम्मपयडीओ' इत्यादिना ग्रन्थेन प्रकरणस्य सर्वविन्मूलता ख्यापिता द्रष्टव्या। दृष्टिवादो हि भगवता साक्षादर्थतोऽभिहितः, सूत्रतस्तु सुधर्मस्वामिना, दृष्टिवादान्तर्गतं च कर्मप्रकृतिप्राभृतम्, तस्माच्चेदं प्रकरणमुद्धृतमिति परम्परया सर्वविन्मूलम् ॥५६॥

(उ०)—अथाचार्य औद्धत्यं परिहरन् बहुश्रुतानां प्रकरणार्थपरिभावने प्रार्थनां च कुर्वन्नत्र प्रकरणे उपादेयताबुद्धिमाधातुं परम्परया सर्वविन्मूलकतामाह—अल्पमतिनाऽपि मयैवमुक्तप्रकारेण गुरुचरणकमलं पर्युपासमानेन मया यथा श्रुतं तथा कर्मप्रकृतेर्दृष्टिवादैकदेशचतुर्दशपूर्वस्थानेकवस्तुसमन्विताग्रायणीयाभिधद्वितीयपूर्वस्थविंशतिप्राभृतपरिमाणपञ्चमवस्त्वेकदेशं चतुर्विंशत्यनुयोगद्वारमयकर्मप्रकृत्याख्यचतुर्थप्राभृतादिदं प्रकरणं नीतमाकृष्टं, तदत्र यत्किमपि स्खलितमनाभोगकृतं भवेत् कृतप्रयत्नस्यापि छद्मस्थस्यावरणसामर्थ्यादनाभोगसंभवात्, तच्छोधयित्वाऽपनीय ये वरा उत्कलितबुद्ध्यतिशया दृष्टिवादज्ञास्ते प्रसादमास्थाय श्रुतानुसारि पदान्तरं प्रक्षिप्य कथयन्तु 'यथेदमत्र पदं सम्यक्, न तिदमिति,' न पुनरुपेक्षारूपोऽप्रसादस्तैः कर्त्तव्य इति प्रार्थना ॥५६॥

**जस्स वरसासणावयवफरिसपविकासियविमलमइकिरणा। विमलेंति कम्ममइले सो मे सरणं महावीरो॥**

(चू०)–'जस्से'इ–महावीरो(र)स(स्स) 'वज्ज(र)'त्ति–वरं पहाणं सासणं तस्स अवयवेहिं पुट्ठा गमिया(पविगमिया) विमलमतिकिरणा होंति (ते)विमला(ली)करेंति कम्मेण मतिलिया कम्ममइला ते कम्ममइले पाद्र(ज्ज)ति मं सासणं जस्स 'मे'(मे)त्ति–मज्झं 'सरणं'ति आहारे महावीरो त्ति ॥५७॥

(मलय०)—इह शास्त्रस्यादौ मध्येऽवसाने च मङ्गलमवश्यमभिधातव्यम् । आदिमङ्गलाभिधाने हि शास्त्रमविघ्नेन परिसमाप्तिमियर्ति, मध्यमङ्गलाभिधानतश्च शिष्यप्रशिष्यादिपरम्परागमनेन स्थैर्यमाधत्ते, पर्यन्तमङ्गलाभिधानप्रभावतः पुनः शिष्यप्रशिष्यादिभिरवधार्यमाणं तेषां चेतसि सुप्रतिष्ठितं भवति । तत्रादिमङ्गलं 'सिद्धं सिद्धत्थसुयं' इत्याद्युक्तं, मध्यमङ्गलं तु 'अकरणअणुइन्नाए अणुयोगधरे पणिवयामि' इति, सम्प्रति पुनः पर्यवसानमङ्गलमाह–'जस्स'त्ति । यस्य–भगवतो महावीरस्य 'वरम्'–अनुत्तरं यच्छासनं तदवयवसंस्पर्शात् ये प्रकर्षेण 'विकसिता'–उद्बोधं गता 'विमला'–अपगतमिथ्याज्ञानत्वरूपमला 'मतिकिरणा'–मतिरश्मयः ते 'कर्ममलिनान्'-कर्मतमोमलीमसान् असुमतो 'विमलयन्ति'–विमलीकुर्वन्ति । 'स'–भगवान् महावीरो वर्धमानस्वामी 'मे'–मम संसारभयभीतस्य 'शरणं'–परित्राणहेतुः, नान्य इति ॥५७॥

## ॥ अथ टीकाकृत्प्रशस्तिः ॥

कर्मप्रपञ्चं जगतोऽनुबन्धक्लेशावहं वीक्ष्य कृपापरीतः । क्षयाय तस्योपदिदेश रत्नत्रयं स जीयाज्जिनवर्धमानः ॥१॥

निरस्तकुमतध्वान्तं सत्पदार्थप्रकाशकम् । नित्योदयं नमस्कुर्मो जैनसिद्धान्तभास्करम् ॥२॥

पूर्वान्तर्गतकर्मप्रकृतिप्राभृतसमुद्धृता येन । कर्मप्रकृतिरियमतः श्रुतकेवलिगम्यभावार्था ॥३॥

ततः क्व चैषा विषमार्थयुक्ता, क्व चाल्पशास्त्रार्थकृतश्रमोऽहम् । तथापि सम्यग्गुरुसंप्रदायात्, किञ्चित्स्फुटार्था विवृता मयैषा ॥४॥युग्मम् ।

कर्मप्रकृतिनिधानं बह्वर्थं येन मादृशां योग्यम् । चक्रे परोपकृतये श्रीचूर्णिकृते नमस्तस्मै ॥५॥

एनामतिगभीरां कर्मप्रकृतिं विवृण्वता कुशलम् । यदवापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः ॥६॥

अर्हन्तो मङ्गलं मे स्युः सिद्धाश्च मम मङ्गलम् । मङ्गलं साधवः सम्यग् जैनो धर्मश्च मङ्गलम् ॥७॥

॥ इति श्रीमलयगिरिविरचिता कर्मप्रकृतिटीका ॥

(उ०)—इह शास्त्रस्यादावविघ्नपरिसमाप्तये, मध्ये शिष्यप्रशिष्यादिपरम्परागमानयनस्थैर्याय, आगन्तुकविघ्नविनाशायेत्यन्ये, पर्यन्ते च शिष्यादिभिरवधार्यमाणस्य शास्त्रस्य तच्चेतसि सुप्रतिष्ठितत्वभावनायाविच्छेदायेत्यन्ये, मङ्गलमवश्यमभिधातव्यम् । तत्रादिमङ्गलं 'सिद्धं सिद्धत्थसुयं' इत्याद्युक्तं, मध्यमङ्गलं तु 'अकरणअणुइन्नाए अणुओगधरे पणिवयामि' इति, संप्रति पुनः पर्यवसानमङ्गलमाह—यस्य समनुत्तरं यच्छासनं तदेवायवस्योदयगिरिशिखररूपस्य स्पर्शात् प्रकर्षेण विकसिता उद्बोधमापन्ना विमला मिथ्यात्वतमोमलरहिता मतिकिरणा ज्ञानसूर्याः कर्ममलिनान् जीवान् विमलयन्ति अविद्यारजनीविनाशनेन स्फुटप्रकाशान् कुर्वन्ति स भगवान् महावीरो वर्धमाननामी स्वप्रणीतशासनायवस्पर्शनमात्रेण लोकानामनन्तज्ञानसूर्योत्पादकत्वेनाचिन्त्यातिशयः परमब्रह्मा मे मम संसारभयभीतस्य शरणं परित्राणहेतुः ॥५७॥

## ॥ अथ टीकाकृत्प्रशस्तिः ॥

ज्ञात्वा कर्मप्रपञ्चं निखिलतनुभृतां दुःखसंदोहबीजं, तद्विध्वंसाय रत्नत्रयमयसमयं यो हितार्थी दिदेश ।
अन्तः संक्रान्तनिःश्यतिकरविलसत्केवलैकात्मदर्शः, स श्रीमान् विश्वरूपः प्रतिहतकुमतः पातु वो वर्द्धमानः ॥१॥
सूरिश्रीविजयादिदेवसुगुरोः पट्टाम्बरद्युमणौ, सूरिश्रीविजयादिसिंहसुगुरौ शक्रासने सेदुषि ।

सूरिश्रीविजयप्रभे श्रितवति प्राज्यं च राज्यं कृतो, ग्रन्थोऽयं वितनोतु कोविदकुले मोदं विनोदं तथा ॥२॥
सूरिश्रीगुरुहीरशिष्यपरिषत्कोटीरहीरप्रभाः, कल्याणाद्विजयाभिधाः समभवँस्तेजस्विनो वाचकाः।
तेषामन्तिषदश्च लाभविजयप्राज्ञोत्तमाः शाब्दिक–श्रेणिकीर्त्तितकार्तिकीविधुरुचिप्रस्पर्द्धिकीर्त्तिप्रथाः ॥३॥
तच्छिष्याः स्म भवन्ति जीतविजयाः सौभाग्यभाजो बुधा, भ्राजन्ते सनया नयादिविजयास्तेषां सतीर्थ्या बुधाः।
तत्पादाम्बुजभृङ्गपद्मविजयप्राज्ञानुजन्मा बुध–स्तत्त्वं किञ्चिदिदं यशोविजय इत्याख्याभृदाख्यातवान् ॥४॥

इदं हि शास्त्रं श्रुतकेवलिस्फुटाधिगम्यपूर्वोद्धृतभावपावनम्।
ममेह धीर्वामनयष्टिवद्ययौ तथापि शक्त्यैव विभोरियद्ध्रुवम् ॥५॥

प्राक्तनार्थलिखनाद्वितन्वतो नेह कश्चिदधिको मम श्रमः।
वीतरागवचनानुरागतः पुष्टमेव सुकृतं तथाप्यतः ॥६॥

॥ इति काशीविबुधविजयावाप्तन्यायविशारदपद–अपूर्वग्रन्थशतग्रथनप्रभाववितीर्णन्यायाचार्यपदधारक-श्रीमद्यशोविजयवाचकपुङ्गवविरचिता कर्मप्रकृतिवृत्तिः ॥

# संपादकीया प्रशस्तिः ।

आसीज्जगति विख्यातो, विजयानन्दसूरिराट् । कुमतकण्टकोद्धारैः, शासनं योऽत्यदीपयत् ॥१॥
तस्य पट्टधरो जातः, सूरिश्रीकमलप्रभुः । दम्भिदम्भविनाशेन, योऽरक्षज्जिनशासनम् ॥२॥
सर्वागमरहस्यज्ञा दयज्ञा दानसूरीशाः । शास्त्राज्ञास्थापकत्वेन तेषां पट्टमशोभि यैः ॥३॥
तत्पट्टशोदिताचार्य-विजयप्रेमसूरिणा । संशोधितमिदं शास्त्रं क्षाम्यन्तु स्खलितं बुधाः ॥४॥
जम्बूविजयस्तच्छिष्यो वाचकपदभूषितः । निजगुरुप्रसादेन साहाय्यं सुष्ठु दत्तवान् ॥५॥
गगनाङ्कनिधिभूवर्षे पञ्चशिष्यसमन्वितः । सागरसङ्घविज्ञप्तः *स्वजन्तुर्नगरीस्थितः ॥६॥
ग्रन्थसमाप्तिहर्षेण प्रशस्तिं कृतवानिमाम् । आदिजिनकथायुक्तं यथा पण्णत्तिवाचनाम् ॥७॥ युग्मम् ।

* स्वर्णनगरी-'उमोई' इति प्रसिद्धनाम ।

प्रकाशक

श्री मुक्ताबाइ ज्ञानमंदिर

सागरनो उपाश्रय डभोई ( गूजरात )